हे यजमाना वो युष्मदर्थमग्निं हुवे। आह्वयामि। कीदृशं तं। सुद्योत्मानं सुष्ठु द्योतमानं। सुवृक्तिं सुवर्जितं पापैः शोभनस्तुतिं वा। विशां यजमानानामतिथिमतिथिवत्सदा पूज्यं। सुप्रयसं शोभनहविर्लक्षणान्नं। किंच जातवेदा जातानां वेदिता यो देवोऽग्निर्मित्र इव सखेव आदित्य इव वा दिधिषाय्यो धारयिता भुत। भवति। कृत्येति उच्यते। आदेवे देवपर्यंते जने। मनुष्यप्रभृतिदेवपर्यंतेषु। तेषां धारकोऽभवदित्यर्थः॥

इमं विधंतो अपां सधस्थे द्विताद॑धुर्भृग॑वो विक्ष्वा३॒॑योः।
एष विश्वा॑न्यभ्य॑स्तु भूमा॑ देवानाम॒ग्निर॑रतिर्जी॒राश्वः॥२॥
इमं। विधंतः। अपां। सधऽस्थे। द्विता। अदधुः। भृगवः। विक्षु। आयोः।
एषः। विश्वानि। अभि। अस्तु। भूम। देवानां। अग्निः। अरतिः। जीरऽअश्वः॥२॥

इममग्निं विधंतः परिचरंतो भृगवोऽस्मत्पूर्वं महर्षयोऽपां सधस्थे सहस्थानेऽतरिक्ष आयोर्मनुष्यस्य यजमानस्य स्वभूतासु विक्षु प्रजास्वृत्विक्षु तेषां मध्ये च द्विता द्वयोः स्थानयोरदधुः। अधारयन्॥ दधातेर्लिङि रूपं॥ एषोऽग्निर्भूम भूम्नात्यर्थं विश्वानि भूतजातान्यस्मद्विरोधीन्यभ्यस्तु। अभिभवतु। स कीदृशः। देवानामरतिरीश्वरः। तेषां मध्ये शीघ्रमरणशीलो वास्मद्यागं प्रति। तथा जीराश्वः क्षिप्राश्वः॥

अ॒ग्निं देवासो॒ मानु॑षीषु वि॒क्षु प्रि॒यं धुः क्षे॒ष्यंतो॒ न मि॒त्रं।
स दी॑दयदुश॒तीरूर्म्या॒ आ द॒क्षाय्यो॒ यो दास्व॑ते दम॒ आ॥३॥
अ॒ग्निं। दे॒वासः। मानु॑षीषु। वि॒क्षु। प्रि॒यं। धुः। क्षे॒ष्यंतः। न। मि॒त्रं।
सः। दी॒द॒यत्। उ॒श॒तीः। ऊर्म्याः। आ। द॒क्षाय्यः। यः। दास्व॑ते। दमे॑। आ॥३॥

देवासो देवाः क्षेष्यंतः स्वर्गं प्रति गच्छंतः संतः पूर्वं मानुषीषु मनुष्यसंबंधिनीषु विक्षु प्रजासु प्रियं देवानां प्रीणयितारमग्निं धुः। अधुः स्थापितवंतः। तत्र दृष्टांतः। क्षेष्यंतो मित्रं न। रायं प्रति गच्छंतो नरा मित्रं प्रियं सखायं स्वगृहरक्षार्थं स्थापयंति। तद्वत्। स एवं देवैः स्थापितो योऽग्निर्दाश्वते हविर्दत्तवते यजमानाय तदर्थं दमे तदीये यागगृह आ आहितः स्थापितो दक्षाय्यः समर्धयिता दाता वा सोऽग्निरुशतीः कामयमाना ऊर्म्या रात्रीः सर्वासु रात्रिष्वादीदयत्। दीप्यते सर्वतः। सर्वरात्रीरादीपयति वा॥

अ॒स्य र॒ण्वा स्वस्ये॑व पु॒ष्टिः संदृ॑ष्टिरस्य हिया॒नस्य॒ द॒क्षोः।
वि यो भरि॑भ्र॒दोष॑धीषु जि॒ह्वामत्यो॒ न रथ्यो॑ दोधवीति॒ वारा॑न्॥४॥
अ॒स्य। र॒ण्वा। स्वस्य॑ऽइव। पु॒ष्टिः। सं॒ऽदृ॑ष्टिः। अ॒स्य। हि॒या॒नस्य॑। धक्षोः।
वि। यः। भरि॑भ्रत्। ओष॑धीषु। जि॒ह्वां। अत्यः। न। रथ्यः। दो॒ध॒वी॒ति॒। वारा॑न्॥४॥

अस्याग्नेः पुष्टिः शरीरवृद्धी रण्वा रमणीया शब्दयुक्ता वा। तत्र दृष्टांतः। स्वस्य पुष्टिरिव। यथा लोके स्वकीया पुष्टिः स्वस्मै रमणीया भवति तद्वत्। यद्वास्याग्नेः संबंधिनी पुष्टिर्यथा यजमानविषया रण्वा तद्वत्। किंच हियानस्य समृद्धिं गच्छतो व्याप्नुवतो दक्षोः काष्ठानि दिधक्षोर्दग्धुमिच्छोरस्याग्नेः संदृष्टिः संदर्शनाविर्भावोऽपि रण्वा। योऽग्निरोषधीषु काष्ठेषु जिह्वां ज्वालां। जात्येकवचनं। ज्वाला विभरिभ्रत्। अत्यर्थं विहरति। कंपयतीत्यर्थः॥ हरतेर्यङ्लुगंतस्येम दाधर्त्यादिषु। पा० ७. ४. ६५। निपातिताद्भेत्यङागमः। यद्योगादनिघातः॥ तत्र दृष्टांतः। रथ्यो रथार्होऽत्यो न वाजी यथा वारान् दंशवारणसाधनान्वालान् दोधवीति। कंपयति तद्वत्। योऽग्निर्ज्वालाः कंपयति अस्याग्नेः पुष्टी रण्वेति॥

आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णं ।
स चित्रेण चिकिते रंसु भासा जुजुर्वाँ यो मुहुरा युवा भूत् ॥५॥

आ । यत् । मे । अभ्वं । वनदः । पनन्त । उशिक्ऽभ्यः । न । अमिमीत । वर्णं ।
सः । चित्रेण । चिकिते । रंऽसु । भासा । जुजुर्वान् । यः । मुहुः । आ । युवा । भूत् ॥५॥

यत् यस्याभ्वं महत्त्वं मे मम संबधिनो वनदो वनंतः संभक्तारः । यद्वा वनदोऽवनदो भृशं शब्दयंतः स्तोतारः ॥ अवशब्दो भृशार्थवाची । तत्पूर्वान्नदेः क्विप् । अवाप्योरित्यकारलोपः ॥ आपनंत । समंतात् स्तुवंति । सोऽग्निरुशिग्भ्योऽस्मदीयं रूपं कामयमानेभ्य ऋत्विग्भ्यो वर्णं स्वसदृशं रूपं नामिमीत ॥ नशब्दश्चार्थे ॥ निर्मिमीते च । स च रंसु रमणीयेष्वाज्यादिहविःषु निमित्तेषु चित्रेण भासा हिरण्यकनकादिनानावर्णया दीप्त्या चिकिते । विज्ञायते । किंच योऽग्निर्जुजुर्वान् जीर्णः सन् ज्वालोपशमे स एव मुहुः पुनःपुनरा युवा सर्वतो मिश्रयिता तरुणो वाभूत् । आभवति पुनराज्यादिसंयोगात् ॥ ॥२४॥

आ यो वना तातृषाणो न भाति वार्ण पथा रथ्येव स्वानीत् ।
कृष्णाध्वा तपू रण्वश्चिकेत द्यौरिव स्मयमानो नभोभिः ॥६॥

आ । यः । वना । ततृषाणः । न । भाति । वाः । न । पथा । रथ्याऽइव । स्वानीत् ।
कृष्णऽअध्वा । तपुः । रण्वः । चिकेत । द्यौःऽइव । स्मयमानः । नभःऽभिः ॥६॥

योऽग्निर्वना वनानि वृक्षसमूहान् ततृषाणो न तृषित इव । त्वरमाण इत्यर्थः । आभाति । आभासयति । दहतीत्यर्थः । यद्वा वना वने आभाति । किंच वार्ण उदकमिव पथा प्रवणेन मार्गेण गच्छति । तद्वत् इतस्ततो गच्छति । रथ्येव रथस्य वोढाश्व इव स्वानीत् । शब्दयति । यद्वा रथशब्दात् सोढ्रादेशः । यथा रथो युद्धमार्गेण गच्छन् स्वनति तद्वत् । किंच कृष्णाध्वा कृष्णवर्त्मा तपुस्तापको रण्वो रमणीय एवंभूतः सन् चिकेत । ज्ञायते । प्रकाशत इत्यर्थः । क इव । नभोभिर्नक्षत्रैः स्मयमानः प्रकाशमानो द्यौरिव द्युलोक इव । यद्वा नभोभिरंतरिक्षप्रदेशविशेषैः स्मयमानः शोभमानो द्यौरादित्य इव । नीलवर्णांतरिक्षचार्यादित्यो यथा ज्ञायते तद्वत् स्वसंचारेण कृष्णीभूते मार्गे ज्ञायते । प्रकाशत इत्यर्थः ॥

स यो व्यस्थादभि दक्षदुर्वीं पशुर्नैति स्वयुरगोपाः ।
अग्निः शोचिष्माँ अतसान्युष्णन्कृष्णव्यथिरस्वदयन्न भूम ॥७॥

सः । यः । वि । अस्थात् । अभि । धक्षत् । उर्वीं । पशुः । न । एति । स्वऽयुः । अगोपाः ।
अग्निः । शोचिष्मान् । अतसानि । उष्णन् । कृष्णऽव्यथिः । अस्वदयत् । न । भूम ॥७॥

योऽग्निर्व्यस्थात् । विविधं तिष्ठति । व्याप्नोति विश्वं । तथा योऽग्निरुर्वीं विस्तृतां पृथिवीं सर्वां । यद्वाभिदक्षत् । आभिमुख्येन प्रवर्धमानो भवति ॥ उभे अपि यच्छब्दयोगान्न निहन्येते ॥ सोऽग्निः पशुर्न पशुरिव । यथा जातः पशुः स्वच्छंदेन चरति तथा स्वयुः स्वयमेव गच्छन् अगोपा गोपरहितः । नियामकवर्जित इत्यर्थः । एति । गच्छति । किं कुर्वन् । शोचिष्मान् प्रकृष्टदीप्तिः कृष्णव्यथिः कृष्णवर्णं प्राप्ता दग्धा व्यथकाः कंटकादयो येन तादृशः सन् भूमात्यधिकमस्वदयन्न । आस्वादयतीव वृक्षगतान् रसान् । अतसानि सततानि नीरसानि वा तरुगुल्मादीन्युष्णन् दहन्निति ॥

नू ते पूर्वस्यावसो अधीतौ तृतीये विदथे मन्म शंसि ।
अस्मे अग्ने संयद्वीरं बृहन्तं क्षुमन्तं वाजं स्वपत्यं रयिं दाः ॥८॥

नु । ते । पूर्वस्य । अवसः । अधिऽइतौ । तृतीये । विदथे । मन्म । शंसि ।
अस्मे इति । अग्ने । संयतऽवीरं । बृहंतं । द्युऽमंतं । वाजं । सुऽअपत्यं । रयिं । दाः ॥८॥

हे अग्ने ते तव संबंधिनः पूर्वस्य पूर्वं यागसमये कृतस्यावसोऽभिमततर्पणस्याधीतौ स्मरणे सति तत्स्मृत्या नु अद्यापि तृतीये विदथे यागे तृतीयसवने । यद्वा प्रातरनुवाकसंबंधिनामाग्नेयोषस्याश्विनानां मध्येऽन्यतमे तृतीये क्रतौ मन्म मननीयं स्तोत्रं शंसि । अशंसि । शस्यतेऽस्माभिः । हे अग्ने त्वं चास्मे अस्मभ्यं संयद्वीरं संयतो वीरा यस्मिन् तादृशं बृहंतं महांतं द्युमंतं शब्दवंतं कीर्तिमंतं वाजमुक्तलक्षणमन्नं स्वपत्यं रयिं च दाः । देहि ॥

त्वया यथा गृत्समदासो अग्ने गुहा वन्वंत उपराँ अभि ष्युः ।
सुवीरासो अभिमातिषाहः स्मत्सूरिभ्यो गृणते तद्वयो धाः ॥९॥
त्वया । यथा । गृत्सऽमदासः । अग्ने । गुहा । वन्वंतः । उपरान् । अभि । स्युरिति स्युः ।
सुऽवीरासः । अभिमातिऽसहः । स्मत् । सूरिऽभ्यः । गृणते । तत् । वयः । धाः ॥९॥

हे अग्ने त्वया रक्षकेण वन्वंतश्छांदसं भजंतो गृत्समदा ऋषयः । आत्मनि परोक्षेण वचनं । यथा गुहा गुहाया वर्तमानानुपरान् उपरमणसाधनान् उपरि उत्कृष्टं वर्तमानान्वा धनादीन्पाषाणानभिस्युः । अभिभवेयुः । स्वाधीनान् कुर्युः । यद्वा गूढानुपरान् उपरेऽधिकत्वेन वर्तमानान्पापानभिस्युः । अभिभवेयुः । तथा कुर्वित्यर्थः । कीदृशाः । सुवीरासः । शोभनपुत्राद्युपेताः । अभिमातिसहः । वैरिणां पापादीनां सोढारः । किंच सूरिभ्यो मेधाविभ्यो यजमानेभ्यो गृणते ॥ व्यत्ययेनैकवचनं ॥ शब्दयद्भ्यः स्तोतृभ्यः । यद्वा सूरिभ्यो यजमानेभ्यो गृणते स्तोत्रे च स्मत् सुमत् अतिप्रभूतं तत् तादृशं प्रसिद्धं वयोऽन्नं धाः । धेहि ॥ ॥२५॥

होताजनिष्टेत्यष्टर्चं पंचमं सूक्तं सोमाहुतेरार्षमाग्नेयमानुष्टुभं । होताष्टावानुष्टुभमित्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतावस्य विनियोगः । सूत्रितं च । अग्नायो होताजनिष्ट । आ॰ ४. १३. । इति ॥ चतुर्विंशेऽहन्यपीदमेवाज्यं । चतुर्विंशे होताजनिष्टेत्याज्यं । आ॰ ७. २. । इति ॥ आभिप्लविके द्वितीयेऽहनीदमेवाज्यं । द्वितीयस्य चतुर्विंशेनाज्यं । आ॰ ७ ६ । इत्यतिदिष्टत्वात् ॥

होताजनिष्ट चेतनः पिता पितृभ्य ऊतये ।
प्रयक्षञ्जेन्यं वसु शकेम वाजिनो यमं ॥१॥
होता । अजनिष्ट । चेतनः । पिता । पितृऽभ्यः । ऊतये ।
प्रऽयक्षन् । जेन्यं । वसु । शकेम । वाजिनः । यमं ॥१॥

होता होमनिष्पादकश्चेतनश्चेतयितास्मदनुष्ठितस्य पिता पालकोऽस्मद्यज्ञस्य ईदृशोऽग्निरजनिष्ट । उत्पन्नः । किमर्थं । पितृभ्यः पालकेभ्यो यजमानेभ्यः ॥ षष्ठ्यर्थे चतुर्थी ॥ तेषामूतये रक्षणाय च । वयं च वाजिनो हविर्लक्षणान्नवंतः सतः प्रयक्षं प्रकर्षेण पूज्यं जेन्यं जेतव्यं यमं यमयितव्यं वसु धनं शकेम । शक्ता भूयास्म लब्धुमिति शेषः । यद्वा वाजिनोऽन्नस्य यमं यमनं कर्तुं शकेम । प्रयक्षं जेन्यं वसु धनमित्युपमानं । उक्तलक्षणं धनमिव । तद्यथावरोद्धुं शक्नुमस्तद्वत् ॥

आ यस्मिन्त्सप्त रश्मयस्तता यज्ञस्य नेतरि ।
मनुष्वद्दैव्यमष्टमं पोता विश्वं तदिन्वति ॥२॥
आ । यस्मिन् । सप्त । रश्मयः । तताः । यज्ञस्य । नेतरि ।
मनुष्वत् । दैव्यं । अष्टमं । पोता । विश्वं । तत् । इन्वति ॥२॥

यज्ञस्य नेतरि यागस्य निर्वाहके यस्मिन्नग्नौ सप्त रश्मयः सप्तसंख्याका रश्मिवद्व्याप्ता होत्रका आतताः। स्वस्वकर्मभिः सर्वतो व्याप्ता भवंति। स पोता पावको देवानां पोत्राख्य ऋत्विग्रूपो वाग्निर्मनुष्वत मनुष्यपोतृवत दैव्यं। दैवो यज्ञः। तत्संबंध्यष्टममष्टर्त्विकसंबंधि तद्विश्व कर्तव्यजात सप्तहोत्रकैः सह स्वयमष्टमः सन् इन्वति। व्याप्नोति। यद्वा तदित्यस्य लिंगव्यत्ययः। स पोतेति संबंधः। सप्तहोत्रकैः सहाष्टमो भूत्वा तद्यज्ञं निर्वहतीत्यर्थः॥

दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत्।
परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् ॥३॥
दधन्वे। वा। यत्। ई। अनु। वोचत्। ब्रह्माणि। वेः। ऊं इति। तत्।
परि। विश्वानि। काव्या। नेमिः। चक्रंऽइव। अभवत् ॥३॥

पूर्व मंत्रे होत्रादिवत स्वयमपि यज्ञं निर्वहतीत्युक्तं। अत्र तु सर्व तत्तदात्मना स्थित्वा स्वयमेव निर्वहतीत्याह। वा अथवा ईमिनं यज्ञमनुलक्षीकृत्य यद्धविरादिकं दधन्वे धारयत्यध्वर्य्वादिरूपः। यानि ब्रह्माणि शस्त्रादीन्यनुवोचत। अनुवक्ति होत्रादिरूपः। अत्र वान्वित्यतद्योज्यं। तत्सर्व वेरु। वेरव। कामयते जानाति वा वयमनुष्ठातुं। अयमग्निर्विश्वानि सर्वाणि काव्यानि। कवयो मेधाविन ऋत्विजः। तत्संबधीनि कर्माणि पर्यभवत। परिभवति। स्वायत्तानि करोति। व्याप्नोतीत्यर्थः। व्याप्तौ दृष्टांतः। नेमिः वहिर्वेष्टनवलयश्चक्रं रथांग यथा कार्त्स्न्येन व्याप्नोति तद्वत॥

साकं हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि।
विद्वाँ अस्य व्रता ध्रुवा वया इवानु रोहते ॥४॥
साकं। हि। शुचिना। शुचिः। प्रऽशास्ता। क्रतुना। अजनि।
विद्वान्। अस्य। व्रता। ध्रुवा। वयाःऽइव। अनु। रोहते ॥४॥

शुचिः स्वयं शोधकः प्रशास्ता देवाना एतन्नामक ऋत्विक प्रशासिता वा यज्ञविधाना शुचिना क्रतुना शोधकेनाग्निहोत्रादिकर्मणा साकं हि सहैवाजनि। उत्पन्नः। जातमात्र एव शुद्धः सर्वस्य प्रशास्ता च सन्नग्निहोत्रादिनिर्वोढाभवदित्यर्थः। अस्याग्नेर्ध्रुवा ध्रुवाणि फलपर्यवसायीनि व्रतानि कर्माणि विद्वान जानन यजमानो वया इव विस्तृताः शाखा इवानुरोहति। क्रमेणानुतिष्ठति॥

ता अस्य वर्णमायुवो नेष्टुः सचंत धेनवः।
कुविन्तिसृभ्य आ वरं स्वसारो या इदं ययुः ॥५॥
ताः। अस्य। वर्णं। आयुवः। नेष्टुः। सचंत। धेनवः।
कुवित्। तिसृऽभ्यः। आ। वरं। स्वसारः। याः। इदं। ययुः ॥५॥

या वक्ष्यमाणलक्षणा या अंगुल्य इदमनुष्ठीयमानं कर्म ययुः। प्राप्नुवंति। अनुतिष्ठंति। ता आयुवो गंत्र्यो व्याप्ता धेनवः प्रीणयित्र्यः स्वसारः स्वयं सारिण्योऽगुल्यो नेष्टुर्होविर्याचितुर्भक्षयितुः शोधयितुः पोषयितुर्नेतुर्वास्याग्नेः। यद्वैतन्नामकऋत्विग्रूपस्य। तिसृभ्य आ गार्हपत्यादिमूर्तीनामपि वरं वर्णं कुवित बहुशस्त्वः सचंत। सेवंते। परिचरंति॥

यदी मातुरुप स्वसा घृतं भरंत्यस्थित।
तासामध्वर्युरागतौ यवो वृष्टीव मोदते ॥६॥

यदि । मातुः । उप । स्वसा । घृतं । भरंती । अस्थित ।
तासां । अध्वर्युः । आऽगतौ । यवः । वृष्टीऽइव । मोदते ॥ ६॥

यदि यदा मातुः सर्वस्य निर्मातुर्भूम्या वेदिलक्षणायाः स्वसा स्वसृस्थानीया जुहूर्घृतं भरंती सत्युपास्थित, उपतिष्ठदपि । एकवचनमविवक्षितं । जुहूपभृद्ध्रुवा घृतं भरंत्यस्तिष्ठंतीत्यर्थः । तदा तासां जुह्वादीनामागतौ यागाय प्राप्तौ सत्यामध्वर्युरेतन्नामक ऋत्विग्रूपोऽध्वरं कामयमानो वायमग्निर्मोदते । हृष्यति । यवो वृष्टीव वृष्ट्या यथा मोदते तद्वत् ॥

स्वः स्वाय धायसे कृणुतामृत्विगृत्विजं ।
स्तोमं यज्ञं चादरं वनेमा ररिमा वयं ॥ ७॥
स्वः । स्वाय । धायसे । कृणुतां । ऋत्विक् । ऋत्विजं ।
स्तोमं । यज्ञं । च । आत् । अरं । वनेम । ररिम । वयं ॥ ७॥

अयमग्निः स्वः स्वयमेव स्वाय स्वकीयाय धायसे कर्मणे हविषां धारणाय वा ऋत्विक् होताजनिष्टेत्यादिनोक्तलक्षणो होतृपोतृप्रशास्त्रादृत्विग्रूपः सन् ऋत्विजमार्त्विज्य ॥ भावप्रधानोऽयं निर्देशः ॥ देवार्त्विग्रूपः सन् ऋत्विजं मानुषमार्त्विज्यं कृणुतां । करोतु । वयं च तदनुग्रहात् आदनंतरमेव स्तोमं स्तोत्रं यज्ञं च तदाश्रयं यागमप्यरमलमत्यर्थं वनेम । संभजेमहि । ररिम ददेमहि च हविः । यद्वा स्तोमं वनेम यज्ञं यथायोग्य हवी ररिम ॥

यथा विद्वाँ अरं करद्विश्वेभ्यो यजतेभ्यः ।
अयमग्ने त्वे अपि यं यज्ञं चकृमा वयं ॥ ८॥
यथा । विद्वान् । अरं । करत् । विश्वेभ्यः । यजतेभ्यः ।
अयं । अग्ने । त्वे इति । अपि । यं । यज्ञं । चकृम । वयं ॥ ८॥

हे अग्ने विद्वान् त्वन्माहात्म्याभिज्ञः प्रयोगज्ञो वा यजमानो यथा विश्वेभ्यो यजतेभ्यः सर्वेभ्यो यजनीयेभ्यो देवेभ्योऽरं पर्याप्तं करत् कुर्यात् तथा त्वमनुगृहाणेत्यर्थः । वयमपि यं यज्ञं यागविशेषं चकृम कुर्महे स यागस्त्वे अपि ॥ अपिरेवार्थे ॥ त्वय्येव त्वत्प्रीत्यर्थः । त्वमेव तस्मात्तं सर्वदेवार्थयागं तत्तदृत्विग्रूपः सन् निर्वहेत्यर्थः ॥ ॥२६॥

इमां म इत्यष्टर्चं षष्ठं सूक्तं सोमाहुत्यार्षमाग्नेयं गायत्रं । इमां मे गायत्रं हीत्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छंदस्यस्य विनियोगः । सूत्रितं च । इमां मे अग्ने समिधमिमामिति त्रयाणामुत्तमामुद्धरेत ।आ० ४. १३.। इति ॥ अपराह्णिक्यामुपसदीमां मे अग्ने समिधमिति तिस्र ऋचस्त्रिरभ्यस्ता सव सामिधेन्यः कृत्वा विनियोक्तव्याः । अथोपसदिति खंडे सूत्रितं । इमां मे अग्ने समिधमिमामिति तु सामिधेन्यः ।आ० ४. ८ । इति ॥

इमां मे अग्ने समिधमिमामुपसदं वनेः । इमा उ षु श्रुधी गिरः ॥ १॥
इमां । मे । अग्ने । संऽइधं । इमां । उपऽसदं । वनेरिति वनेः । इमाः । ऊं इति । सु ।
श्रुधि । गिरः ॥ १॥

हे अग्ने मे मदीयामिमामाधीयमानां समिधं इमामुपसदमुपसदनसाधनामाहुतिमुपसद्यागे क्रियमाणां वा वनेः । संभजेथाः । तथेमा उ इमा अपि गिरः स्तुतीः सु सुष्ठु श्रुधि । शृणु ॥

अया ते अग्ने विधेमोर्जो नपादश्वमिष्टे । एना सूक्तेन सुजात ॥२॥
अया । ते । अग्ने । विधेम । ऊर्जः । नपात् । अश्वंऽइष्टे । एना । सुऽउक्तेन । सुऽजात ॥२॥

हे अग्ने ते त्वामयानयाहुत्या विधेम । परिचरेम । हे ऊर्जो नपात् बलस्य नप्तः तस्य नपातयितर्वा हे अश्वमिष्टे व्यापकयज्ञ । यद्वा आशु क्रियमाणं कर्माश्वं । तदिच्छतीत्यश्वमिष्टिः । संत्वरमाणा ह्युपसदमाचरंति । तैः कर्मभिः समत्वरंत ते तिस्रः सामिधेनीरनूच्य तिस्रो देवता अयजन्निति ब्राह्मणं । ऐ॰ ब्रा॰ ३ ४५ । तादृशाग्ने ते त्वामयानयाहुत्या विधेम । परिचरेम । तथा हे सुजात शोभनजनन एना एतेन सूक्तेन स्तोत्रेण प्रीणयेमेति शेषः । यद्वा स्तुत्युपबृंहितेन विधेम ॥

तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः । सपर्येम सपर्यवः ॥३॥
तं । त्वा । गीःऽभिः । गिर्वणसं । द्रविणस्युं । द्रविणःऽदः । सपर्येम । सपर्यवः ॥३॥

हे द्रविणोदो धनस्य दातरग्ने तं तादृशं गिर्वणसं गीर्भिः स्तुतिभिर्वननीयं द्रविणस्युं हविर्लक्षणधनेच्छुं त्वा त्वां सपर्यवः परिचरणकर्तारो वयं गीर्भिः स्तुतिभिः सपर्येम । परिचरेम ॥

स बोधि सूरिर्मघवा वसुपते वसुदावन् । युयोध्य१स्मद्द्वेषांसि ॥४॥
सः । बोधि । सूरिः । मघऽवा । वसुऽपते । वसुऽदावन् । युयोधि । अस्मत् । द्वेषांसि ॥४॥

मघवान्धनवान् सूरिर्विद्वान् प्रेरको वा स उक्तलक्षणकस्त्वं बोधि । बुध्यस्वास्मदीयं स्तोत्रं । किंच हे अग्ने द्वेषांसि द्वेष्टॄनस्मदस्मत्तो युयोधि । पृथक्कुरु ॥

स नो वृष्टिं दिवस्परि स नो वाजमनर्वाणं । स नः सहस्रिणीरिषः ॥५॥
सः । नः । वृष्टिं । दिवः । परि । सः । नः । वाजं । अनर्वाणं । सः । नः । सहस्रिणीः । इषः ॥५॥

सः स एवाग्निर्नोऽस्मदर्थं दिवस्परि द्युलोकादंतरिक्षात् ॥ परीति पंचम्यर्थानुवादी ॥ वृष्टिं करोतीति च शेषः । स एव नोऽस्मदर्थमनर्वाणमविचलनमनल्पं वाजं बलं ददातु । तथा सहस्रिणीरपरिमितप्रकाराणीषोऽन्नानि स एवाग्निर्ददातु ॥

ईळानायावस्यवे यविष्ठ दूत नो गिरा । यजिष्ठ होतरा गहि ॥६॥
ईळानाय । अवस्यवे । यविष्ठ । दूत । नः । गिरा । यजिष्ठ । होतः । आ । गहि ॥६॥

हे यविष्ठ युवतम दूत देवानां यज्ञादिसूचक यजिष्ठातिशयेन यष्टव्य होतर्देवानामाह्वातरग्ने नो गिरास्मदीयया स्तुत्येळानाय पूजयित्रेऽवस्यवे स्वरक्षणमिच्छते मदर्थमागहि । आगच्छ ॥

अंतर्ह्यग्न ईयसे विद्वान् जन्मोभया कवे । दूतो जन्येव मित्र्यः ॥७॥
अंतः । हि । अग्ने । ईयसे । विद्वान् । जन्म । उभया । कवे । दूतः । जन्याऽइव । मित्र्यः ॥७॥

हे कवे मेधाविन्नग्ने अंतर्जनानां हृदय ईयसे हि । गच्छसि जानासि वा । हिः स होता सेदु दूत्यं चिकित्वाँ अंतरीयते । ४. ८. ४. । इत्यादिमंत्रांतरप्रसिद्धिद्योतनार्थः । कीदृशस्त्वं । उभया उभयविधानि जन्म जन्मानि यष्टॄणां यजमानानां यष्टव्यानां देवानां च संबंधीनि विद्वान् जानन् सन् । ईयस इति संबंधः । तत्र दृष्टांतः । जन्यो जनेभ्यो हितो मित्र्यो विशेषेण मित्रेभ्यो हितो दूत इव । स यथा प्रजानां चित्तवृत्तिज्ञानाय राज्ञा प्रेरितस्तासां मनो जानाति तद्वत् त्वमप्यस्माकमंतरीयस इत्यर्थः ॥

स विद्वाँ आ च पिप्रयो यक्षि चिकित्व आनुषक्। आ चास्मिन्त्सत्सि बर्हिषि ॥८॥

सः। विद्वान्। आ। च। पिप्रयः। यक्षि। चिकित्वः। आनुषक्। आ। च। अस्मिन्। सत्सि। बर्हिषि ॥८॥

हे अग्ने स त्वं विद्वान् विशेषाभिज्ञः सन् आ च पिप्रयः। सर्वतोऽस्मान्पूरय च कामैः। हे चिकित्वश्चेतनावन् आनुषक् अनुक्रमेण यक्षि। यज देवान्। आसत्सि। आसीद चास्मिन् स्तीर्णे बर्हिषि ॥ ॥२७॥

श्रेष्ठं यविष्ठेति षडृचं सप्तमं सूक्तं सोमाहुत्यार्षमाग्नेयं गायत्रं ॥ प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छंदस्यस्य विनियोगः पूर्वसूक्त एवोक्तः ॥ अवणाकर्मण्याद्या विनियुक्ता ॥

श्रेष्ठं यविष्ठ भारताग्ने द्युमंतमा भर। वसो पुरुस्पृहं रयिं ॥१॥

श्रेष्ठं। यविष्ठ। भारत। अग्ने। द्युऽमंतं। आ। भर। वसो इति। पुरुऽस्पृहं। रयिं ॥१॥

हे अग्ने यविष्ठ युवत्तम हे भारत। भरता ऋत्विजः। तेषां संबंधी भारतः। तेऽध्वर्य्वादिभिर्मंथनहविःस्तोत्रादिना व्याप्रियमाणत्वात्। तादृश हे वसो वासक व्याप्त वा एवंरूपाग्ने श्रेष्ठमतिप्रशस्यं द्युमंतं दीप्तिमंतं पुरुस्पृहं बहुभिरर्थिभिः स्पृहणीयं रयिमाभर। आहर ॥

मा नो अरातिरीशत देवस्य मर्त्यस्य च। पर्षि तस्या उत द्विषः ॥२॥

मा। नः। अरातिः। ईशत। देवस्य। मर्त्यस्य। च। पर्षि। तस्याः। उत। द्विषः ॥२॥

हे अग्ने त्वदनुग्रहान्नोऽस्मानरातिरदानं शत्रुत्वं। यद्वा छंदस्यरातिशब्दः शत्रुवाची स्त्रीलिंगो भवति। अदाता शत्रुर्मेशत। पराभवितुं शक्तो मा भूत्। मा विषयीकुर्यात्। अरातिर्विशेष्यते। देवस्य च मर्त्यस्य च संबंधिनी तैः कारिता। उत अपि च तस्या उभयविधाया द्विषोऽस्मदरातेः पर्षि। पारय ॥

विश्वा उत त्वया वयं धारा उदन्या इव। अति गाहेमहि द्विषः ॥३॥

विश्वाः। उत। त्वया। वयं। धाराः। उदन्याःऽइव। अति। गाहेमहि। द्विषः ॥३॥

उत अपि च हे अग्ने वयं त्वदनुग्रहाद्विश्वा द्विषः सर्वानपि द्वेष्टॄन् उदन्या धारा इव उदकसंबंधिनीर्धारा अल्पस्रुतीरिव त्वमात्मनैवान्यनिरपेक्षेणातिगाहेमहि। अतिक्रम्य गच्छेम ॥

शुचिः पावक वंद्योऽग्ने बृहद्वि रोचसे। त्वं घृतेभिराहुतः ॥४॥

शुचिः। पावक। वंद्यः। अग्ने। बृहत्। वि। रोचसे। त्वं। घृतेभिः। आऽहुतः ॥४॥

हे पावक शोधकाग्ने शुचिः शुद्धो वंद्यो नमस्कार्यः सन् बृहत् महत् अत्यधिकं विरोचसे। विविधं दीप्यसे। यतस्त्वं घृतेभिर्घृतैराहुतः। समंतात्सिक्तः। अतो विरोचसे ॥

त्वं नो असि भारताग्ने वशाभिरुक्षभिः। अष्टापदीभिराहुतः ॥५॥

त्वं। नः। असि। भारत। अग्ने। वशाभिः। उक्षऽभिः। अष्टाऽपदीभिः। आऽहुतः ॥५॥

हे भारत ऋत्विजां पुत्रस्थानीयाग्ने नोऽस्मदीयस्त्वं वशाभिर्वंध्याभिर्गोभिः उक्षभिः सेक्तृभिर्बलीवर्दैः अष्टापदीभिर्गर्भिणीभिश्चाहुत आराधितोऽसि ॥

द्र्वन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः। सहसस्पुत्रो अद्भुतः ॥६॥

द्रुऽअन्नः। सर्पिःऽआसुतिः। प्रत्नः। होता। वरेण्यः। सहसः। पुत्रः। अद्भुतः ॥६॥

हुतः समिद्रूपान्नः सर्पिरासुतिः सर्पिरासूयत आसिच्यते यस्मिन् तादृशः प्रत्नः पुरातनो होता होमनिष्पादको वरेण्यो वरणीयः सहसस्पुत्रः सहसो बलस्य पुत्रस्थानीयः। बलेनोत्पन्नत्वात्। अद्भुत आश्चर्यभूतः। रमणीय इत्यर्थः। एवंमहानुभावोऽग्निर्मामनुजानात्वित्यर्थः॥ ॥२८॥

वाजयन्निवेति षडृचमष्टमं सूक्तं। सोमाहुतिर्हशब्दानुवृत्तस्याभावान्मंडलद्रष्टा गृत्समद ऋषिः। अग्निर्देवता। हिशब्दाद्गायत्री छंदः। अंत्यानुष्टुप्। वाजयन्निवांत्यानुष्टुबित्यनुक्रांतं॥ प्रातरनुवाकाश्विनशस्त्रयोस्तृतीयसूक्तत्वेनास्योत्तमावर्जितस्य विनियोग उक्तः॥

वाजयन्निव नू रथान्योगाँ अग्नेरुप स्तुहि। यशस्तमस्य मीळ्हुषः ॥१॥
वाजयन्ऽइव। नु। रथान्। योगान्। अग्नेः। उप। स्तुहि। यशःऽतमस्य। मीळ्हुषः॥१॥

हे अंतरात्मन् नु क्षिप्रमग्नेर्योगानश्वानुपस्तुहि। कीदृशस्याग्नेः। यशस्तमस्य प्रवृद्धयशसः॥ मत्वर्थो लुप्यते॥ मीळ्हुषः सेक्तुः फलस्य। ईदृशस्य योगान् स्तुहि। होतरिति वा संबोध्यं। स्तुतौ दृष्टांतः। वाजयन्निव। अन्नमिच्छन् पुरुष इव। स यथाश्वान् गमनाय स्तौति तद्वत्। यद्वोक्तलक्षणस्याग्नेर्गमनसाधनान्रथान् स्तुहि॥

यः सुनीथो ददाशुषेऽजुर्यो जरयन्नरिं। चारुप्रतीक आहुतः ॥२॥
यः। सुऽनीथः। ददाशुषे। अजुर्यः। जरयन्। अरिं। चारुऽप्रतीकः। आऽहुतः॥२॥

सुनीथः शोभननयनोऽजुर्योऽजरणीयोऽनभिभाव्यः चारुप्रतीकः शोभनोपक्रमो योऽस्ति सोऽग्निर्ददाशुषे हविर्दत्तवते यजमानाय तदर्थमरिं तस्य शत्रुं जरयन् नाशयन् आहुतः। समंतादाराधितो भवति॥

य उ श्रिया दमेष्वा दोषोषसि प्रशस्यते। यस्य व्रतं न मीयते ॥३॥
यः। ऊं इति। श्रिया। दमेषु। आ। दोषा। उषसि। प्रऽशस्यते। यस्य। व्रतं। न।
मीयते ॥३॥

योऽग्निः श्रिया ज्वालया युक्तः सन् दमेषु आ आगत्य दोषा रात्रिषु उषस्यहःसु च प्रशस्यते। स्तूयते। यस्याग्नेर्व्रतं कर्म न मीयते। न हिंस्यते न क्षीयते वा॥

आ यः स्व१र्ण भानुना चित्रो विभात्यर्चिषा। अंजानो अजरैरभि ॥४॥
आ। यः। स्वः। न। भानुना। चित्रः। विऽभाति। अर्चिषा। अंजानः। अजरैः। अभि॥४॥

योऽग्निश्चित्रश्चायनीयो नानावर्णो वार्चिषा ज्वालया रश्मिसमूहेनाविभाति। सर्वतो भासते। तत्र दृष्टांतः। स्वर्भानुना। किरणेन सूर्य इव। स यथा विभाति तद्वत्। किं कुर्वन्। अजरैर्नित्यैर्ज्वालासमूहैरभि सर्वतोऽंजानो व्यंजयन् प्रकाशयन्॥

अत्रिमनु स्वराज्यमग्निमुक्थानि वावृधुः। विश्वा अधि श्रियो दधे ॥५॥
अत्रिं। अनु। स्वऽराज्यं। अग्निं। उक्थानि। ववृधुः। विश्वाः। अधि। श्रियः। दधे ॥५॥

अत्रिं शत्रूणामत्तारं वा भक्षकं स्वराज्यं स्वयमेव राजमानं स्वराज्यमनु अभिलक्ष्य वाग्निमुक्थानि शस्त्राणि ववृधुः। वर्धयंति। स चाग्निर्विश्वाः सर्वाः श्रियोऽधि दधे। धारयति॥

अग्नेरिंद्रस्य सोमस्य देवानामूतिभिर्वयं।
अरिष्यंतः सचेमह्यभि ष्याम पृतन्यतः ॥६॥

अग्नेः । इंद्रस्य । सोमस्य । देवानां । ऊतिऽभिः । वयं ।
अरिष्यंतः । सचेमहि । अभि । स्याम । पृतन्यतः ॥६॥

अरिष्यंतः केनाप्यहिंस्यमाना वयमग्नेरिंद्रस्य सोमस्य देवानामन्येषामप्यूतिभी रक्षणाभिः सचेमहि । युक्ता भवेम । तथा रक्षायुक्ता वयं पृतन्यतः पृतनामात्मन इच्छतः शत्रूनभिष्याम । अभिभवेम ॥ पृतनाशब्दात्क्यचि कव्यध्वरपृतनस्यर्चि लोप इत्यवर्णलोपः ॥ ॥२९॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके पंचमोऽध्यायः समाप्तः ॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

नि होतेति षडृचं नवमं सूक्तं गृत्समदस्यार्षं नि होतेत्यनुक्रांतत्वात् । अनुक्तत्वात् त्रिष्टुप् । मंडलादिपरिभाषयाग्निर्देवता ॥ प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छंदस्यस्य विनियोगः । अथैतस्या इति खंडे सूत्रितं । नि होता होतृषदन इति सूक्तं । आ० ४ १३ । इति ॥ अग्निप्रणयन आदौ ऋचो विनियुक्तिः । पंचन्या पौर्णमास्यामिति खंडे सूत्रितं । नि होता होतृषदन इति द्वे । आ० २. १७. ॥

नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत्सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रंभरः शुचिजिह्वो अग्निः ॥१॥
नि । होता । होतृऽसदने । विदानः । त्वेषः । दीदिऽवान् । असदत् । सुऽदक्षः ।
अदब्धव्रतऽप्रमतिः । वसिष्ठः । सहस्रंऽभरः । शुचिऽजिह्वः । अग्निः ॥१॥

गृत्समदः स्तौति । होता देवानामाह्वाता विदानो विद्वान् त्वेषः प्रवृद्धो दीदिवान् दीप्यमानः सुदक्षः शोभनबलोऽदब्धव्रतप्रमतिः । अदब्धान्यहिंसितानि व्रतानि कर्माणि यस्याः साऽदब्धव्रता प्रमतिः प्रकृष्टा बुद्धिर्यस्य स तथोक्तः । वसिष्ठः सर्वस्य वासयितृतमः ॥ वासयतेस्तृजंतस्येष्ठनि रूपं ॥ सहस्रंभरः सहस्रस्यानेकविधस्य भर्ता । विहरणेन नानाविधरूपस्य धारक इत्यर्थः । यद्वा सहस्रस्य सर्वस्य भर्ता । तथा च वाजसनेयं । सर्वं वै सहस्रं सर्वंभर इत्येव तदाहेति । शुचिजिह्वः । शुचिर्दीप्ता जिह्वा ज्वाला यस्य स तथोक्तः । एवंभूतोऽग्निर्होतृषदने । होतात्र सीदतीति होतृषदनमुत्तरा वेदी ॥ अधिकरणे ल्युट् ॥ तत्र न्यसदत् । नितरां सीदतु ॥ उक्तार्थे ब्राह्मणं । नि होता होतृषदने विदान इत्यग्निर्वै देवानां होता तस्यैतद्धोतृषदनं यदुत्तरवेदीनाभिस्त्वेषो दीदिवाँ असदत्सुदक्ष इत्यासन्नो हि स तर्हि भवत्यदब्धव्रतप्रमतिर्वसिष्ठ इत्यग्निर्वै देवानां वसिष्ठः सहस्रंभरः शुचिजिह्वो अग्निरित्येषा ह वा अस्य सहस्रंभरता यदेनमेकं संतं बहुधा विहरंति । ऐ० ब्रा० १. २८. । इति ॥

त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।
अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः ॥२॥

त्वं। दूतः। त्वं। ऊं इति। नः। परःऽपाः। त्वं। वस्यः। आ। वृषभ। प्रऽनेता।
अग्ने। तोकस्य। नः। तने। तनूनां। अप्रंऽयुच्छन। दीद्यंत्। बोधि। गोपाः ॥२॥

हे वृषभ अभिमतफलवर्षक हे अग्ने त्वं दूतोऽस्मदीये यज्ञे देवाह्वानार्थं दूतो भव। त्वम् त्वमेव नोऽस्माकं परस्पा आपद्भ्यः पारयिता पाता च भव। किंच त्वं वस्यो वसुनो धनस्य आ प्रणेतास्मदाभिमुख्येन प्रापयिता भव। अप्रयुच्छन् अप्रमाद्यन। दीद्यत् ॥ दीदयतिर्दीप्तिकर्मा ॥ शोभमानः। त्वं नोऽस्माकं तोकस्य पुत्रस्य तने। तनोति विस्तारयति कुलमिति तनः पौत्रः। तस्मिन अस्मदीयानां तनूनां गोपा गोपायिता। तथा च ब्राह्मणं। अग्निर्वै देवानां गोपा अग्निमेव तत्सर्वतो गोप्तारं परिदत्त आत्मने च यजमानाय च। ऐ॰ ब्रा॰ १ २८। इति। तादृशस्त्वं च गोपायिता भवामीति बोधि। बुध्यस्व ॥

विधेमं ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे।
यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवींषि जुहुरे समिंद्धे ॥३॥
विधेमं। ते। परमे। जन्मन्। अग्ने। विधेमं। स्तोमैः। अवरे। सधऽस्थे।
यस्मात्। योनेः। उत्ऽआरिथ। यजे। तं। प्र। त्वे इति। हवींषि। जुहुरे। संऽइंद्धे ॥३॥

हे अग्ने परमे उत्कृष्टे जन्मन। जायते प्रादुर्भवत्यस्मिन्निति जन्मस्थानं द्यौः। तस्मिन द्युलोकेऽवस्थिताय ते तुभ्यं विधेम। स्तुतिभिः परिचरेम। अवरे द्युलोकादधस्तने सधस्थेऽन्तरिक्षे स्थिताय तुभ्यं स्तोमैः स्तोत्रैर्विधेम। परिचरेम। यस्माद्योनेः पृथिवीरूपात्स्थानात त्वमुदारिथ उद्गतोऽसि प्रादुर्भूतोऽसि तं पृथिवीप्रदेशं यजे। पूजयामि। तत्र हि समिद्धे समिद्भिः समिध्यमाने त्वे त्वयि हवींषि पुरोडाशादीनि प्रजुहुरे। अध्वर्य्वादयः प्रजुह्वति ॥ जुहोतेर्लिटि रूपं ॥

अग्ने यजस्व हविषा यजीयाञ्छ्रुष्टी देष्णमभि गृणीहि राधः।
त्वं ह्यसि रयिपती रयीणां त्वं शुक्रस्य वचसो मनोता ॥४॥
अग्ने। यजस्व। हविषा। यजीयान। श्रुष्टी। देष्णं। अभि। गृणीहि। राधः।
त्वं। हि। असि। रयिऽपतिः। रयीणां। त्वं। शुक्रस्य। वचसः। मनोता ॥४॥

हे अग्ने यजीयान यष्टृतमस्त्वं हविषास्मद्दत्तेन यजस्व। देवान संयोजय। देष्णं देयं राधोऽन्नं श्रुष्टी ॥ श्रुष्टीति क्षिप्रनाम ॥ क्षिप्रमभिगृणीहि। देवानां पुरत इदं स्वादुतरमिदं स्वादुतरमिति ब्रूहि। यद्वा श्रुष्टी क्षिप्रकारी त्वं देष्णं देयं राधो धनमभिगृणीहि। अस्मदाभिमुख्येन ब्रूहि। प्रयच्छेत्यर्थः। दानसामर्थ्यं दर्शयति। त्वं रयीणां धनानां मध्ये रयिपतिरुत्तमस्य धनस्य पतिरसि हि। यद्वा रयीणां रयिपतिरित्यत्रैको रयिशब्दोऽनुवादः। त्वं शुक्रस्य दीप्तस्य वचसोऽस्मदीयस्य स्तोत्रस्य मनोता प्रज्ञाता भवसि। यद्वा मानयिता ॥

उभयं ते न क्षीयते वसव्यं दिवेदिवे जायमानस्य दस्म।
कृधि क्षुमंतं जरितारमग्ने कृधि पतिं स्वपत्यस्य रायः ॥५॥
उभयं। ते। न। क्षीयते। वसव्यं। दिवेऽदिवे। जायमानस्य। दस्म।
कृधि। क्षुऽमंतं। जरितारं। अग्ने। कृधि। पतिं। सुऽअपत्यस्य। रायः ॥५॥

दस्म दर्शनीय हे अग्ने दिवेदिवे प्रतिदिनमग्निहोत्रकाले जायमानस्य ते तवोभयं वसव्यं दिव्यं भौमं च वसु ॥ वस्वादिभ्यःस्वार्थिको यत्प्रत्ययः। पा॰ ५ ४ ३०.४ ॥ तादृशमुभयं वसु न क्षीयते। न हीयते। अस्योभयविधधनसद्भावे मंत्रवर्णः त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्येत्यत्रोक्तः। अतस्त्वं जरितारं तव स्तोत्रं कृत्वा

णमिमं यजमानं द्युमंतमन्नवंतं कीर्तिमंतं वा कृधि। कुरु। किंच स्वपत्यस्य शोभनापत्ययुक्तस्य रायो धनस्य पतिं स्वामिनं कुरु ॥

साकमेधे पर्वणि पूर्वेद्युरनुसवनं तिस्र इष्टयः कर्तव्याः। प्रथमायामग्नेरनीकवतः सैनानीकेनेति याज्या। तथा ततः साकमेधा इति खंडे सूत्रितं। सैनानीकेन सुविदत्रो अस्मे। आ० २.१८.। इति ॥

सैनानीकेन सुविदत्रो अस्मे यष्टा देवाँ आयजिष्ठः स्वस्ति।
अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥६॥

सः। एना। अनीकेन। सुऽविदत्रः। अस्मे इति। यष्टा। देवान्। आऽयजिष्ठः। स्वस्ति।
अदब्धः। गोपाः। उत। नः। परःऽपाः। अग्ने। द्युऽमत्। उत। रेवत्। दिदीहि ॥६॥

हे अग्ने स तादृशस्त्वमेनानेनानीकेन युक्तस्त्वं सुविदत्रः सुप्रतिज्ञः सुधनो वास्मे अस्माकं भव। देवान्यष्टा देवानां हविष्प्रदानेन पूजक आयजिष्ठो यष्टृतमोऽदब्धः केनाप्यतिरस्कृतो गोपा देवानां गोपायिता। उत अपि च नोऽस्माकं परस्पा दुरितेभ्यः पारयिता पाता च त्वं द्युमत् कांतियुक्तं उत अपि च रेवत् धनयुक्तं यथा भवति तथा स्वस्ति दिदीहि। क्षेमेण सर्वतो दिदीहि। क्षेमेण सर्वतो दीप्यस्व ॥ ॥१॥

जोहूत्र इति षडृचं दशमं सूक्तं गार्त्समदं त्रैष्टुभमाग्नेयं जोहूत्र इत्यनुक्रांतत्वात्। सूक्तविनियोगः पूर्वेण सहोक्तः ॥

जोहूत्रो अग्निः प्रथमः पितेवेळस्पदे मनुषा यत्समिद्धः।
श्रियं वसानो अमृतो विचेता मर्मृजेन्यः श्रवस्य१ः स वाजी ॥१॥

जोहूत्रः। अग्निः। प्रथमः। पिताऽइव। इळः। पदे। मनुषा। यत्। संऽइद्धः।
श्रियं। वसानः। अमृतः। विऽचेताः। मर्मृजेन्यः। श्रवस्यः। सः। वाजी ॥१॥

जोहूत्रः सर्वैर्यज्ञार्थं ह्वातव्यो होतव्यो वा ॥ ह्वयतेर्जुहोतेर्वा रूपं ॥ तादृशः प्रथमः। अग्निर्वै देवानामवम इत्याम्नानात्। मुख्यो योऽग्निः। यत् यदेळ इळायाः पदे उत्तरवेद्यात्मके स्थाने मनुषा मनुष्येण यजमानेन समिद्धः सोऽग्निः पितेव देवानां हविष्प्रापणेन पालको भवति। श्रियं दीप्तिं वसान आच्छादयन् अमृतो मरणधर्मरहितो विचेता विविधप्रज्ञः श्रवस्यः। श्रव इत्यन्ननाम। तस्मै हितः। वाजी बलवान्। सोऽग्निर्मर्मृजेन्यः सर्वैः परिचरणीयो भवति ॥ यङ्लुगंतात्केन्यप्रत्ययः ॥

श्रूया अग्निश्चित्रभानुर्हवं मे विश्वाभिर्गीर्भिरमृतो विचेताः।
श्यावा रथं वहतो रोहिता वोतारुषाह चक्रे विभृत्रः ॥२॥

श्रुयाः। अग्निः। चित्रऽभानुः। हवं। मे। विश्वाभिः। गीःऽभिः। अमृतः। विऽचेताः।
श्यावा। रथं। वहतः। रोहिता। वा। उत। अरुषा। अह। चक्रे। विऽभृत्रः ॥२॥

अमृतो मरणधर्मरहितो विचेता विशिष्टप्रज्ञश्चित्रभानुर्विचित्रदीप्तिश्चायनीयदीप्तिर्वा सोऽग्निर्विश्वाभिर्गीर्भिः स्तुतिसाधनभूतैः सर्वैर्वाक्यैः क्रियमाणं मे मम हवं स्तोत्रं श्रूयाः। शृणोतु। तस्याग्ने रथं श्यावा श्याववर्णावश्वौ वहतः। वा अपि वा रोहिता रोहिद्वर्णावश्वौ रथं वहतः। रोहिद्वर्णयोरश्वयोः श्यावादिवर्णपरिग्रहः वैकल्पिका भवति। विभृत्रो नानास्थानेषु विहृतश्चक्रे। ऋत्विग्भिरकारि खलु ॥ करोतेः कर्मणि लिट् ॥

उत्तानायामजनयन्त्सुषूतं भुवदग्निः पुरुपेशासु गर्भः।
शिरिणायां चिदक्तुना महोभिरपरीवृतो वसति प्रचेताः ॥३॥

उत्तानायां। अजनयन्। सुऽसूतं। भुवत्। अग्निः। पुरुऽपेशासु। गर्भः।
शिरिणायां। चित्। अक्तुना। महःऽभिः। अपरिऽवृतः। वसति। प्रऽचेताः ॥३॥

उत्तानायामुत्तानशयायामरण्यां सुपूतमग्निहोत्रार्थं सुष्ठु प्रेरितमग्निमजनयन्। अध्वर्य्वादय उदपादयन्। सोऽग्निः पुरुपेशासु। पेश इति रूपनाम। बहुरूपास्वोषधीषु गर्भो भुवत्। अन्तर्वर्तमानतया गर्भ इव भवेत्॥ भवतेर्लेटि रूपं॥ शिरिणायां। शीर्यतेऽस्यां भूतानीति शिरिणा रात्रिः। तस्यामप्यक्तुना। अंजनात्तमसा। तेन तमसापरीवृतोऽसंस्पृष्टः अत एव महोभिस्तेजोभिर्युक्तः प्रचेताः प्रकृष्टप्रज्ञः सन् वसति। दीप्यमानो वर्तते॥

जिघर्म्यग्निं हविषा घृतेन प्रतिक्षियंतं भुवनानि विश्वा।
पृथुं तिरश्चा वयसा बृहंतं व्यचिष्ठमन्नै रभसं दृशानं ॥४॥

जिघर्मि। अग्निं। हविषा। घृतेन। प्रतिऽक्षियंतं। भुवनानि। विश्वा।
पृथुं। तिरश्चा। वयसा। बृहंतं। व्यचिष्ठं। अन्नैः। रभसं। दृशानं ॥४॥

विश्वा सर्वाणि भुवनानि प्रतिक्षियंतं वैश्वानरात्मनाधितिष्ठंतं पृथुं महांतं तिरश्चा सर्वतः प्रवर्तमानेन वयसा पेशसा बृहंतं प्रवृद्धमन्नैर्हविर्लक्षणैर्व्यचिष्ठं व्याप्तं रभसं बलवंतं दृशानमेवंगुणवत्तया दृश्यमानमग्निं पुरोडाशादिलक्षणेन हविषा घृतेन च जिघर्मि॥ प्रति क्षियंत सर्वाणि भूतानि वर्तते पृथुं तिरश्चा वयसा धूमेन बृहंतं व्यचिष्ठमन्नै रभसं दृशानमित्यवकाशनवंतमन्नैरन्नाद्यैः दीप्यमानमित्येतदा विश्वत इत्या सर्वतः प्रत्यंचं जुहोमीत्येतदरक्षसेत्यहेळमानेन मनसेदं जुषतेत्येतन्मर्यश्रीरिति मर्यश्रीरित्येष स्पृहयद्वर्णो अग्निर्नाभिमृश इति न ह्येष मृशेत दीप्यमानो भवतीति॥

आ विश्वतः प्रत्यंचं जिघर्म्यरक्षसा मनसा तज्जुषेत।
मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा३ जर्भुराणः ॥५॥

आ। विश्वतः। प्रत्यंचं। जिघर्मि। अरक्षसा। मनसा। तत्। जुषेत।
मर्यऽश्रीः। स्पृहयत्ऽवर्णः। अग्निः। न। अभिऽमृशे। तन्वा। जर्भुराणः ॥५॥

विश्वतः सर्वत्र व्याप्य वर्तमानं प्रत्यंचं यज्ञं प्रत्यागच्छंतमग्निं येन घृतेनाजिघर्मि। आसिंचामि। अरक्षसा बाधकरहितेन मनसा स्तोत्रेण सह तदाज्यं जुषेत। भवान् सेवेत। मर्यश्रीः। मर्यैर्मर्त्यैः श्रयणीयो भजनीयः। स्पृहयद्वर्णः। यादृशं वर्णं यजमानः स्पृहयति तादृशवर्णोपेतः। तन्वा तेजसा जर्भुराणः पूर्यमाणोऽग्निर्नाभिमृशे। अतितेजस्वितयाभिमर्शनीयो न भवति॥ अभिपूर्वान्मृशेः कृत्यार्थे केन्प्रत्ययः॥

ज्ञेया भागं सहसानो वरेण त्वादूतासो मनुवद्वदेम।
अनूनमग्निं जुह्वा वचस्या मधुपृचं धनसा जोहवीमि ॥६॥

ज्ञेयाः। भागं। सहसानः। वरेण। त्वाऽदूतासः। मनुऽवत्। वदेम।
अनूनं। अग्निं। जुह्वा। वचस्या। मधुऽपृचं। धनऽसाः। जोहवीमि ॥६॥

वरेण। वारयत्यनेन शत्रूनिति वरं तेजः। तेन सहसानः शत्रूनभिभवन् त्वं भागं भजनीयं स्तोत्रं ज्ञेयाः। जानीहि॥ आशीर्लिङि वान्यस्य संयोगादेः। पा॰ ६. ४. ६८.। इत्येत्वं॥ त्वादूतासः। त्वं दूतो येषामसि ते त्वादूतासः। यद्वा त्वया प्रेरिता वयं मनुवत् मनुरिव वदेम। स्तोत्रं ब्रूयामः। जुह्वा। हूयतेऽस्यामिति जुहूर्ज्वाला पात्रविशेषो वा। तयानूनं संपूर्णं मधुपृचं मधुना कर्मफलेन यजमानं संयोजयंतमग्निं धनसा धनस्य संभक्ताहं वचस्या स्तुतिकामनया जोहवीमि। आह्वयामि॥ ॥२॥

श्रुधी हवमित्येकविंशत्यृचमेकादशं सूक्तं गार्त्समदं । अत्रानुक्रमणिका । श्रुधि सैकेंद्रं विराट्स्थानमृते ऽत्यामिति । विराट्स्थाना त्रिष्टुप् । तल्लक्षणमनुक्रमण्यामुक्तं । नवकौ वैराजस्त्रैष्टुभश्च द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थानेति । अन्या त्रिष्टुप् विशेषस्यानुक्तत्वात् । इंद्रो देवता ॥ पृष्ठ्यस्य चतुर्थेऽहनि मरुत्वतीयशस्त्रे इदं सूक्तं निविद्धानं । तत्रेदं तृतीयं सूक्तं । चतुर्थेऽहनीति खंडे सूचितं । श्रुधी हवमिंद्र मरुत्वाँ इंद्रेति मरुत्वतीय । आ० ७ ११ । इति ॥

श्रुधी हवमिंद्र मा रिषण्यः स्याम ते दावने वसूनां ।
इमा हि त्वामूर्जो वर्धयंति वसूयवः सिंधवो न क्षरंतः ॥१॥
श्रुधि । हवं । इंद्र । मा । रिषण्यः । स्याम । ते । दावने । वसूनां ।
इमाः । हि । त्वां । ऊर्जः । वर्धयंति । वसुऽयवः । सिंधवः । न । क्षरंतः ॥१॥

गृत्समदः स्तौति । हे इंद्र मे हवं मदीयमिदं स्तोत्रं श्रुधि । शृणु । मा रिषण्यः । मा हिंसीः । इदमल्पं न माधीय इति मा निराकार्षीः ॥ दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यतीति निपातितः ॥ वयं ते तव वसूनां दावने दानाय स्याम । पात्रभूता भवेम । इमा अस्माभिर्दत्ता ऽन्न वसूयवो दातुर्यजमानस्य धनमिच्छंति ॥ छंदसि परेच्छायां क्यच ॥ तादृशानि क्षरंतः स्रवंतः सिंधव इव घृतक्षरणोपेतान्यूर्जो हविर्लक्षणान्यन्नानि त्वां वर्धयंति हि ॥

सृजो महीरिंद्र या अपिन्वः परिष्ठिता अहिना शूर पूर्वीः ।
अमर्त्यं चिद्दासं मन्यमानमवाभिनदुक्थैर्वावृधानः ॥२॥
सृजः । महीः । इंद्र । याः । अपिन्वः । परिऽस्थिताः । अहिना । शूर । पूर्वीः ।
अमर्त्यं । चित् । दासं । मन्यमानं । अव । अभिनत् । उक्थैः । ववृधानः ॥२॥

शूर शत्रूणां हिंसक हे इंद्र या अपोऽपिन्वः । अवर्धयः । पूर्वीः प्रभूतास्ता अहिना मेघेन वृत्रेण वा परिष्ठिताः । अधिष्ठिता आक्रांताः । ततस्त्वं तस्मादहेः सकाशात् महीर्महतीरपः सृजः । व्यसृजः । उक्थैः शस्त्रैर्वावृधानो वर्धमानस्त्वं दासं सर्वस्योपक्षपयितारममर्त्यं चित् मरणधर्मरहितमेवात्मानं मन्यमानं तमसुरमवाभिनत् । अवाङ्मुखं यथा भवति तथा ॥ भिदिर् विदारणे । लङि सिपि रूपं ॥

उक्थेष्विन्नु शूर येषु चाकन्स्तोमेष्विंद्र रुद्रियेषु च ।
तुभ्येदेता यासु मंदसानः प्र वायवे सिस्रते न शुभ्राः ॥३॥
उक्थेषु । इत् । नु । शूर । येषु । चाकन् । स्तोमेषु । इंद्र । रुद्रियेषु । च ।
तुभ्यं । इत् । एताः । यासु । मंदसानः । प्र । वायवे । सिस्रते । न । शुभ्राः ॥३॥

हे शूरेंद्र येषूक्थेषु होत्रादिभिः क्रियमाणेषु शस्त्रेषु रुद्रियेषु । रुद्रियं सुखं । तत्साधनभूतेषु । यद्वा रुद्राः स्तोतारः । तत्कृतेषु उद्गातृणा स्तोमेषु च नु क्षिप्रं चाकन् । स्तुतीः कामयसे ॥ कमतेः कनतेर्वा यङ्लुकि रूपं ॥ यासु स्तोत्रशस्त्ररूपासु स्तुतिषु मंदसानो हृष्यन् भवसि ता एताः शुभ्रा दीप्यमानाः स्तुतयो वायवेऽस्मदीयं यज्ञं प्रत्यागच्छते तुभ्येत् तुभ्यमेव प्रसिस्रते । त्वदर्थमेव प्रसरंति । न संप्रत्यर्थे । ता अधुना सेवस्व ॥

शुभ्रं नु ते शुष्मं वर्धयंतः शुभ्रं वज्रं बाह्वोर्दधानाः ।
शुभ्रस्त्वमिंद्र वावृधानो अस्मे दासीर्विशः सूर्येण सह्याः ॥४॥

शुभ्रं। नु। ते। शुष्मं। वर्धयंतः। शुभ्रं। वज्रं। बाह्वोः। दधानाः।
शुभ्रः। त्वं। इंद्र। ववृधानः। अस्मे इति। दासीः। विशः। सूर्येण। सह्याः ॥४॥

हे इंद्र ते तव शुभ्रं शोभनं शुष्मं बलं स्तोत्रैर्वर्धयंतः शुभ्रं दीप्तं वज्रमायुधं नु क्षिप्रं तव बाह्वोर्दधाना निदधानाः। स्तूयमानो हींद्रोऽसुरवधाय वज्रमादत्त इतीत्थंरूपेणायुधं निदधाना भवामः। वावृधानः स्तोत्रैर्वर्धमानः शुभ्रस्तेजसा युक्तस्त्वमस्मे अस्माकं दासीरुपक्षपयित्रीर्विश आसुरीः प्रजाः सूर्येण सुष्ठु प्रेरकेण। आयुधं हि प्रेरयति त्वं युध्यस्वेति। एवंरूपेण बाह्वोर्निहितेन वज्रेण सह्याः। अभिभव॥ सहतेर्व्यत्ययेन लिङि परस्मैपदं॥

गुहा हितं गुह्यं गूळ्हमप्स्वपीवृतं मायिनं क्षियंतं।
उतो अपो द्यां तस्तभ्वांसमहन्नहिं शूर वीर्येण ॥५॥
गुहा। हितं। गुह्यं। गूळ्हं। अप्ऽसु। अपिऽवृतं। मायिनं। क्षियंतं।
उतो इति। अपः। द्यां। तस्तभ्वांसं। अहन्। अहिं। शूर। वीर्येण ॥५॥

हे शूरेंद्र गुहा गुहायां हितं निहितं अत एव गुह्यमप्रकाश्यं गूळ्हं गूढमपीवृतं तिरोहितं। अत्रैकस्मिंस्तिरोधानरूपेऽर्थे पुनरुक्तयस्तिरोधानभूयस्त्वप्रतिपादनपराः। अभ्यासे हि भूयानर्थो भवति। यथाहो दर्शनीयाहो दर्शनीयेति। तादृशं मायिनं मायाविनमसुरं क्षियंतं निवसंतं उतो अपि चापो या दिवं च तस्तभ्वांसं स्वसामर्थ्येन स्तभयंतं इत्थंभूतमहिमसुरं मेघं वा वीर्येण सामर्थ्यभूतेन वज्रेणाहन। हतवानसि॥ हन हिंसागत्योरित्यस्य लङि रूपं॥ ॥३॥

स्तवा नु त इंद्र पूर्व्या महान्युत स्तवाम नूतना कृतानि।
स्तवा वज्रं बाह्वोरुशंतं स्तवा हरी सूर्यस्य केतू ॥६॥
स्तव। नु। ते। इंद्र। पूर्व्या। महानि। उत। स्तवाम। नूतना। कृतानि।
स्तव। वज्रं। बाह्वोः। उशंतं। स्तव। हरी इति। सूर्यस्य। केतू इति ॥६॥

हे इंद्र पूर्व्या पुरातनानि महानि महांति ते तव कर्माणि नु क्षिप्रं स्तव। स्तवाम। उत अपि च नूतनाधुनातनानि कृतानि कर्माणि स्तवाम। बाह्वोरुशंतं दीप्यमानं वज्रं स्तव। स्तवाम। किंच सूर्यस्य सुष्ठु प्रेरकस्य सुवीर्यस्य वा सूर्यात्मनो वेंद्रस्य केतू प्रज्ञापकौ हरी एतन्नामकावश्वौ स्तव। स्तवाम॥ ष्टुञ् स्तुतौ। तिङां तिङो भवंतीत्युत्तमबहुवचनस्य मध्यमैकवचनादेशः। बहुलं छंदसीति शपो लुगभावः॥

हरी नु त इंद्र वाजयंता घृतश्चुतं स्वारमस्वार्ष्टां।
वि समना भूमिरप्रथिष्टारंस्त पर्वतश्चित्सरिष्यन् ॥७॥
हरी इति। नु। ते। इंद्र। वाजयंता। घृतऽश्चुतं। स्वारं। अस्वार्ष्टां।
वि। समना। भूमिः। अप्रथिष्ट। अरंस्त। पर्वतः। चित्। सरिष्यन् ॥७॥

हे इंद्र वाजयंता वेगं कुर्वंतौ॥ तत्करोतीति णिच॥ ते तव हरी एतन्नामकावश्वौ घृतश्चुतं घृतस्योदकस्य च्यावयितारं स्वारं मेघध्वनिं नु क्षिप्रमस्वार्ष्टां॥ स्वरतिः शब्दकर्मा। पाकं पचतीतिवदेकधातोरनुवादः। लङि रूपं॥ समना समस्थला यद्वा समना सर्वतो व्यप्रथिष्ट। गर्जनं श्रुत्वा ममोपरि वृष्टिर्भवतीति प्रथिताभूत। तथा पर्वतश्चित् मेघोऽपि सरिष्यन् वर्षणार्थमितस्ततो गमिष्यन् अरंस्त। अरमत॥ रमतेर्लुङि रूपं॥

नि पर्वतः साद्यप्रयुच्छन्त्सं मातृभिर्वावशानो अक्रान् ।
दूरे पारे वाणीं वर्धयंत इंद्रेषितां धमनिं पप्रथन्नि ॥ ८॥
नि । पर्वतः । सादि । अप्रऽयुच्छन् । सं । मातृऽभिः । वावशानः । अक्रान् ।
दूरे । पारे । वाणीं । वर्धयंतः । इंद्रऽइषितां । धमनिं । पप्रथन् । नि ॥ ८॥

अप्रयुच्छन् अप्रमाद्यन् वर्षणे सावधानः पर्वतो मेघो निषादि । नभसि निषण्ण आसीत् । मातृभिरद्भिर्माध्यमिकाभिर्वाग्भिर्वा संवावशानः सह शब्दं कुर्वाणोऽक्रान् । अक्रमीत् । इतस्ततः संचारमकरोत् ॥ क्रमतेर्लुङि बहुलं छंदसीति विकरणस्य लुक् ॥ दूरे पारेऽतिदूरेऽंतरिक्षे स्थितां वाणीं माध्यमिकां वाचं वर्धयंतः स्तोत्रैः समृद्धां कुर्वंतः स्तोतारो मरुतो वेंद्रेषितामिंद्रेण प्रेरितां धमनिं शब्दं कुर्वाणां तां वाचं नितरां पप्रथन् । अप्रथयन् ॥

इंद्रो महां सिंधुमाशयानं मायाविनं वृत्रमस्फुरन्निः ।
अरेजेतां रोदसी भियाने कनिक्रदतो वृष्णो अस्य वज्रात् ॥ ९॥
इंद्रः । महां । सिंधुं । आऽशयानं । मायाऽविनं । वृत्रं । अस्फुरत् । निः ।
अरेजेतां । रोदसी इति । भियाने इति । कनिक्रदतः । वृष्णः । अस्य । वज्रात् ॥ ९॥

बलवानिंद्रो महां सिंधुं । स्यंदत इतस्ततः संचरतीति सिंधुर्मेघः । तमाशयानं तमधिष्ठाय शयानं मायाविनं वृत्रमसुरं । यद्वा सिंधुरुदकं । तदधिष्ठाय शयानं वृत्रं । वृणोत्याकाशमिति वृत्रो मेघः । तं निरस्फुरत् । निरहन् । वृष्णो वर्षकस्यास्येंद्रस्य कनिक्रदतः शब्दं कुर्वाणाद्वज्राद्भियाने भयं प्राप्ते रोदसी द्यावापृथिव्याव रेजेतां । अकंपेतां ॥ दाधर्तिदर्धर्तीत्यादिना कनिक्रदतशब्दो निपातितः ॥

अरोरवीद्वृष्णो अस्य वज्रोऽमानुषं यन्मानुषो निजूर्वात् ।
नि मायिनो दानवस्य माया अपादयत्पपिवान्त्सुतस्य ॥ १०॥
अरोरवीत् । वृष्णः । अस्य । वज्रः । अमानुषं । यत् । मानुषः । निऽजूर्वात् ।
नि । मायिनः । दानवस्य । मायाः । अपादयत् । पपिऽवान् । सुतस्य ॥ १०॥

वृष्णः कामानां वर्षकस्यास्येंद्रस्य वज्रोऽरोरवीत् । भृशं शब्दमकरोत् । कदेत्यपेक्षायामाह । यद्यदा अमानुषं मनुष्याणां रहितं । यद्वा मानुषोऽहं न भवामीत्येवं मन्यमानं तमसुरं मानुषो मनुष्याणां हितकारी यद्वा मतिमानिंद्रो निजूर्वात् । नितरां हिंस्यात् । जिघांसतीत्यर्थः ॥ जूर्वतेर्हिंसाकर्मणो लेटि रूपं ॥ सुतस्याभिषुतं सोमं पपिवान् पीतवान् मायिनो मायाविनो दानवस्य । दानुर्नाम वृत्रमाता दानुः शय इत्यादिषु दृष्टत्वात् । तस्याः पुत्रस्य वृत्रस्य माया वचनानि न्यपादयत् । न्यपातयत् । बबाधेति यावत् ॥ ॥ ४॥

पिबापिबेदिंद्र शूर सोमं मंदंतु त्वा मंदिनः सुतासः ।
पृणंतस्ते कुक्षी वर्धयंत्वित्था सुतः पौर इंद्रमाव ॥ ११॥
पिबऽपिब । इत् । इंद्र । शूर । सोमं । मंदंतु । त्वा । मंदिनः । सुतासः ।
पृणंतः । ते । कुक्षी इति । वर्धयंतु । इत्था । सुतः । पौरः । इंद्रं । आव ॥ ११॥

शूर बलवन् हे इंद्र पिब पिबेत । अभिषुतमिमं सोमं पिबेव । आदरार्थैषा वीप्सा । मंदिनो मदकराः सुतास्तेऽभिषुताः सोमास्त्वा मंदंतु । त्वां मादयंतु ॥ मदि स्तुत्यादिषु । व्यत्ययेन परस्मैपदं ॥ ते सोमास्ते तव कुक्षी उदरस्योभौ पार्श्वौ पृणंतः पूरयंतः संतस्त्वां वर्धयंतु । इत्थानेन प्रकारेण परि उदरपूरकः सुतोऽभिषुतः सोम इंद्रं त्वामीव । तर्पयतु ॥ अवतेस्तर्पणार्थस्य लिटि रूपं ॥

त्वे इंद्राप्यभूम विप्रा धियं वनेम ऋतया सपंतः ।
अवस्यवो धीमहि प्रशस्तिं सद्यस्ते रायो दावने स्याम ॥१२॥
त्वे इति । इंद्र । अपि । अभूम । विप्राः । धियं । वनेम । ऋतऽया । सपंतः ।
अवस्यवः । धीमहि । प्रऽशंस्तिं । सद्यः । ते । रायः । दावने । स्याम ॥१२॥

हे इंद्र विप्रा मेधाविनो वयं त्वे त्वयि त्वद्हृदयेऽभूम । अपि सानुनयप्रश्ने वर्तते । ते तव हृदये किं वर्तामह इति । ऋतया । ऋतं कर्मफलं । तत्कामनया सपंतस्त्वा परिचरणाख्येन कर्मणा स्पृशंतो वयं धियं त्वदुद्देशेन क्रियमाणं कर्म वनेम । संभजेमहि ॥ वन षण संभक्तौ । आशीर्लिङि लिङ्याशिष्यङित्यङ्प्रत्ययः ॥ किंच अवस्यवस्त्वत्तो रक्षणमिच्छंतः प्रशस्तिं । शस्तिः शंसनं । प्रकृष्टशंसनं स्तोत्रं धीमहि । त्वयि निदधीमहि । ततस्ते त्वदीयस्य रायो धनस्य दावने दानाय पात्रभूताः सद्यः स्याम । इदानीं भवेम ॥

स्याम ते त इंद्र ये त ऊती अवस्यव ऊर्जं वर्धयंतः ।
शुष्मिंतम यं चाकनाम देवास्मे रयिं रासि वीरवंतं ॥१३॥
स्याम । ते । ते । इंद्र । ये । ते । ऊती । अवस्यवः । ऊर्जं । वर्धयंतः ।
शुष्मिन्ऽतम । यं । चाकनाम । देव । अस्मे इति । रयिं । रासि । वीरऽवंतं ॥१३॥

हे इंद्र ते तवोती ऊत्या प्रणयनेन ॥ अवतेः प्राप्त्यर्थस्य क्तिनि रूपं ॥ ये ते तवावस्यवो रक्षाकामा ऊर्जं हविर्लक्षणमन्नं वर्धयंतो भवंति ते तव वयं ते स्याम । त्वदधीना भवेम । देव द्योतमान हे इंद्र शुष्मिंतम दानभागायार्हतया बलवत्तम यद्वा शत्रूणां शोषयितृतम यं रयिं चाकनाम । कामयामहे ॥ कनतः कान्त्यर्थस्य यङ्लुगंतस्य लोटि रूपं ॥ वीरवत् पुत्रपौत्रैः सहितं तादृशं रयिमस्मे अस्मभ्यं रासि । देहि ॥

रासि क्षयं रासि मित्रमस्मे रासि शर्ध इंद्र मारुतं नः ।
सजोषसो ये च मंदसानाः प्र वायवः पांत्यग्रणीतिं ॥१४॥
रासि । क्षयं । रासि । मित्रं । अस्मे इति । रासि । शर्धः । इंद्र । मारुतं । नः ।
सऽजोषसः । ये । च । मंदसानाः । प्र । वायवः । पांति । अग्रंऽनीतिं ॥१४॥

हे इंद्र क्षयं । क्षियंति निवसंत्यत्रेति क्षयो गृहं । तदस्मभ्यं रासि । देहि । तथा मित्रं सखायमस्मे अस्मभ्यं रासि ॥ वाक्यभेदादनिघातः ॥ मारुतं मरुतां देवविशां संबंधि शर्धो बलं नोऽस्मभ्यं रासि । एतेन मरुतामभ्यागमनं प्रार्थ्यते । ये मरुतः सजोषसः सह प्रीयमाणा मदंतो मोदमाना वायवो यज्ञं प्रति गंतारः संतोऽग्रणीतिमग्रे नीयमानं सोमं प्रपांति । प्रकर्षेण पिबंति तेषां शर्ध इति समन्वयः । यद्वा ये च वायवोऽग्रे नीयमानं सोमं पिबंति तेषां वायूनां बलं रासि ॥ वायव इति पूजाया बहुवचनं । वायुर्हि सोमस्याग्रपातेति ॥

व्यंतिन्नु येषु मंदसानस्तृपत्सोमं पाहि द्रह्यदिंद्र ।
अस्मान्त्सु पृत्स्वा तरुत्रावर्धयो द्यां बृहद्भिरर्कैः ॥१५॥

व्यंतु । इत् । नु । येषु । मंदसानः । तृपत् । सोमं । पाहि । द्रह्यत् । इंद्र ।
अस्मान् । सु । पृत्ऽसु । आ । तरुत्र । अवर्धयः । द्यां । बृहत्ऽभिः । अर्कैः ॥१५॥

हे इंद्र येषु तव सहायभूतेषु मरुत्सु मंदसानो मादयन्भवसि ते मरुतो नु क्षिप्रं व्यंतु । सोमं भक्षयंतु । इत् एवार्थे । द्रह्यत ॥ दृहतेरिदं रूपं ॥ आत्मानं दृढीकुर्वन् त्वं तृपत तर्पयंतमिमं सोमं पाहि । पिब । तरुत्र शत्रूणां हिंसक हे इंद्र बृहद्भिर्बलवद्भिरर्कैरर्चनीयैर्मरुद्भिः सहितस्त्वं । आ इति चार्थे । तेनास्मान् द्यां च सु सुष्ठु पृत्सु पशुपुत्रादिभिरस्मान् अस्मत्पालनेन च दिवमवर्धयः । यद्वा येषु सोमेषु मंदसानो मोदमानो भवसि ते सोमा व्यंतु । त्वा गच्छंतु । शेषं पूर्ववत् ॥ ॥५॥

बृहंत इन्नु ये ते तरुत्रोक्थेभिर्वा सुम्नमाविवासान् ।
स्तृणानासो बर्हिः पस्त्यावत्त्वोता इदिंद्र वाजमग्मन् ॥१६॥
बृहंतः । इत् । नु । ये । ते । तरुत्र । उक्थेभिः । वा । सुम्नं । आऽविवासान् ।
स्तृणानासः । बर्हिः । पस्त्यऽवत् । त्वाऽऊताः । इत् । इंद्र । वाजं । अग्मन् ॥१६॥

तरुत्र आपद्भ्यस्तारक हे इंद्र ये पुमांसः सुम्नं सुखकरं त्वामुक्थैः शस्त्रैराविवासान् । परिचरेयुः ॥ विवासतेर्लेट्यडागमः ॥ त एव पुमांसो नु क्षिप्रमविलंबेन बृहंतो महांतो भवंतीति पूरणः । किंच बर्हिः स्तृणानासो वेद्यां बर्हिराच्छादयंतो ये त्वा परिचरंति ते त्वोता इत त्वया रक्षिताः संत एव पस्त्यावत् गृहसहितं वाजमन्नमग्मन् । गच्छंति ॥

उग्रेष्विन्नु शूर मंदसानस्त्रिकद्रुकेषु पाहि सोममिंद्र ।
प्रदोधुवच्छ्मश्रुषु प्रीणानो याहि हरिभ्यां सुतस्य पीतिं ॥१७॥
उग्रेषु । इत् । नु । शूर । मंदसानः । त्रिऽकद्रुकेषु । पाहि । सोमं । इंद्र ।
प्रऽदोधुवत् । श्मश्रुषु । प्रीणानः । याहि । हरिऽभ्यां । सुतस्य । पीतिं ॥१७॥

हे शूर बलवन्निंद्र उग्रेषूद्गूर्णेषु बहुस्तोत्रशस्त्रवत्सु त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतन्नामकेष्वाभिप्लविकेष्वहःसु मंदसानो हृष्यन् सोमं पाहि । पिब । ततः प्रीणानः सोमपानेन प्रीतो भवन् श्मश्रुषु लिप्तं सोमं प्रदोधुवत् ॥ धूञ् कंपने । यङ्लुगंतस्य शतरि रूपं ॥ पुनःपुनर्धुन्वन् सुतस्याभिषुतस्य पीतिं पानमुद्दिश्य हरिभ्यामश्वाभ्यां युक्तः सन् याहि । गच्छ ॥

धिष्वा शवः शूर येन वृत्रमवाभिनद्दानुमौर्णवाभं ।
अपावृणोर्ज्योतिरार्याय नि सव्यतः सादि दस्युरिंद्र ॥१८॥
धिष्व । शवः । शूर । येन । वृत्रं । अवऽअभिनत् । दानुं । और्णऽवाभं ।
अप । अवृणोः । ज्योतिः । आर्याय । नि । सव्यतः । सादि । दस्युः । इंद्र ॥१८॥

शूर हे इंद्र शवस्तादृशं बलं धिष्व । धारय ॥ दधातेर्लोटि बहुलं छंदसीति शपो लुक् । छंदस्युभयथेति वा स आर्द्धधातुकत्वादिडागमः ॥ येन बलेन दानुं दानोः पुत्रं वृत्रमौर्णवाभं । ऊर्णनाभिः कीटविशेष और्णवाभ इत्युच्यते । तमिवावाभिनत् । बिभेदिथ । यद्वा और्णं ऊर्णनाभिः । तदाभं तत्सदृशमित्यर्थः । ततस्तमोरूपस्य हननादार्याय कर्मणामनुष्ठात्रे अमानुष्यं कुत्साय राजर्षये वा ज्योतिः प्रकाशकमादित्यमपावृणोः ।

उद्घाटितवानसि । दस्युः कर्मणामुपक्षपयिता स वृत्रः सव्यतस्तव सव्यपार्श्वे निषादि । त्वया नितरां सन्नो बाधितो वर्तते ॥

सनेम ये त ऊतिभिस्तरंतो विश्वाः स्पृध आर्येण दस्यून् ।
अस्मभ्यं तत्त्वाष्ट्रं विश्वरूपमरंधयः साख्यस्य त्रिताय ॥१९॥

सनेम । ये । ते । ऊतिऽभिः । तरंतः । विश्वाः । स्पृधः । आर्येण । दस्यून् ।
अस्मभ्यं । तत् । त्वाष्ट्रं । विश्वऽरूपं । अरंधयः । साख्यस्य । त्रिताय ॥१९॥

सनेम तान्पुरुषान् संभजेम ये ते तवोतिभिः पालनैर्विश्वाः स्पृधः स्पर्धमानाः सर्वा विशस्तरंतो हिंसंतः तथार्येणार्यभावेन दस्यूनुपक्षपयितॄन् हिंसंतो भवंति । तदस्मभ्यं वशमानय । किं तत् । तदाह । त्वाष्ट्रं त्वष्टुः सुतं विश्वरूपमेतन्नामकमसुरमरंधयः ॥ रध्यतिर्वशगमने ॥ वशमानयः । यद्वा तमसुरमवधीः ॥ रध हिंसासंराद्ध्योः । रधिजभोरचीति नुम् ॥ इंद्रस्त्वाष्ट्रमवधीदित्ययमर्थस्तैत्तिरीयके विश्वरूपो वै त्वाष्ट्रः । तै० २ ५ १ । इत्यत्र महता प्रबंधेन प्रपंचितः । किंच साख्यस्य सखिभावस्यानुपालनाय त्रिताय महर्षये वशमानयः । यद्वा सनेम ते वयं प्रवृद्धा भवेम ये वयं तव रक्षाभिः स्पर्धमानाः प्रजा दस्यूंश्च तरंतोऽतिक्रामंतो भवेम ॥ सनेमेति वृद्ध्यर्थ आद्युदात्तः । यथा सनेम मित्रावरुणा सनंतः । ७ ५२ १ । इति । सकर्मकश्चेत् मध्योदात्तः । सनेम वाजं तव । ८ ६१ ४ । इति । तरंतः । तॄ प्लवनतरणयोः । शतरि रूपं । संज्ञावचनश्चेदंतोदात्तः । यथा तरंत इव मंहना । ५ ६१ १० । इति ॥

अस्य सुवानस्य मंदिनस्त्रितस्य न्यर्बुदं वावृधानो अस्तः ।
अवर्तयत्सूर्यो न चक्रं भिनद्वलमिंद्रो अंगिरस्वान् ॥२०॥

अस्य । सुवानस्य । मंदिनः । त्रितस्य । नि । अर्बुदं । ववृधानः । अस्तरित्यस्तः ।
अवर्तयत् । सूर्यः । न । चक्रं । भिनत् । वलं । इंद्रः । अंगिरस्वान् ॥२०॥

मंदिनोऽस्य मदकरमिमं सुवानस्य सुतवतस्त्रितस्य तीर्णतमस्कस्य महर्षेरर्थं वावृधानः सोमेन वर्धमान इंद्रोऽर्बुदं । अंबूनि ददातीत्यर्बुदो मेघः । अनुस्वारस्य रेफश्छांदसः । यद्वा नामैतत् । अर्बुदाख्यमसुरं न्यस्तः ॥ स्तृ हिंसायामित्यस्य लङि तिपि बहुलं छंदसीति विकरणस्य लुक् । गुणे कृते हल्ङ्यादिना तिलोपः ॥ नितरामवधीत् । महांतं चिदर्बुदं नि क्रमीः पदा । १ ५१ ६ । इत्यादिष्वर्बुदवधः स्पष्टमुक्तः । किंच अंगिरस्वान् अंगिरोभिः सहित इंद्रोऽवर्तयत् असुरहननार्थं वज्रमभ्रामयत् । सूर्यो न । यथा सूर्यश्चक्रं भ्रामयति तद्वत् । यद्वा यस्मादसुराद्भिया सूर्यः स्वकीयं रथचक्रं नावर्तयत् । निषेधार्थीयोऽत्र नकारः । वर्तयितुं नाशक्नोत् तं वलं पणीनां प्रभुमसुरं भिनत् । वज्रेणाभिनत् । यद्वा द्विचक्रो हि पूर्वं सूर्यस्य रथः । तस्यैकं चक्रमिंद्रेणापहृतं । सूर्य इति सुपां सुलुगिति षष्ठ्येकवचनस्य सुः । सूर्यस्य संबंध्यपहृतं तदेकं चक्रमवर्तयत् । रक्षोहननार्थमभ्रामयत् । तेन चक्रेण वलमभिनच्च । नश्चार्थे ॥

अहर्गणेषु माध्यंदिनसवनेषु तायमानरूपेष्वच्छावाकस्याहरहः शस्यमस्त्रकमभितः प्रवेति सूक्तं । नूनं सा त इत्येषा तस्याने शंसनीया । सूत्रितं च । नूनं सा त इत्युत्तमं । आ० ७ ४ । इति ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिंद्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥२१॥

नूनं । सा । ते । प्रति । वरं । जरित्रे । दुहीयत् । इंद्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥२१॥

हे इंद्र या दक्षिणा दक्षमुत्साहनं करोतीति दक्षिणा स्तोतृभ्यो देया ते त्वत्संबंधिनी मघोनी धनवती

जरित्रे स्तोत्रे वरं श्रेष्ठमभिमतमर्थं नूनं प्रतिदुहीयत। इदानीं प्रतिदोग्धि। संपादयतीत्यर्थः। तादृशीं दक्षिणां स्तोतृभ्योऽस्मभ्यं शिक्ष। प्रयच्छ। किंच भगो भजनीयस्त्वं माति धक्॥ दहेर्दानार्थस्य लुङि मंत्रे घसेत्यादिना च्लेर्लुक्॥ नोऽस्मानतिक्रम्यान्येभ्यो दक्षिणां मा दाः। प्रथममस्मभ्यं दत्त्वा पश्चादन्येभ्यो दीयतामित्यर्थः। यद्वा नोऽस्माकं कामान् मा धक्। मा धाक्षीः। अपेक्षितफलदानेन पूरयेत्यर्थः। सुवीराः शोभनपुत्रपौत्राः संतो वय विदथेऽस्मिन्यज्ञे बृहत् प्रभूतं स्तोत्रं वदेम। त्वामुद्दिश्य ब्रवाम॥ अत्र सा ते प्रतिदुग्धामिति प्रकृत्य वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वेत्यंतं निरुक्तमनुसंधेयं। नि० १. ७.॥ ॥६॥ ॥१॥

द्वितीयेऽनुवाक एकादश सूक्तानि। तत्र यो जात इति पंचदशर्चं प्रथमं सूक्तं गार्त्समदं त्रैष्टुभमैंद्रं॥ संस्थे निष्केवल्ये निविद्धानीयस्य पुरस्ताद्यो जात एवेति शंस्येत्। यदि पर्यायानिति खंडे सूत्रितं। यो जात एवेति निष्केवल्यं। आ० ६ ६.। इति॥ आभिप्लविके तृतीयेऽहनि निष्केवल्ये यो जात एवेति निविद्धानीयं। सूत्रितं च। तृतीयस्य त्र्यर्यमा यो जात एवेति मध्यंदिनः। आ० ७. ७.। इति॥ विश्वजिति माध्यंदिनसवने मैत्रावरुणः स्वशस्त्रे प्राकृतात्सूक्तात्पूर्वं यो जात इति साममूक्तं शंसेत। विश्वजितोऽपिं नर इति खंडे सूत्रितं। सत्रा मदासो यो जात एवाभूरक इति साममूक्तानि। आ० ८. ७.। इति॥ अग्निष्टुन्निष्केवल्ये निविद्धानमिदं। श्येनाजिराभ्यामिति खंडे सूत्रितं। तिष्ठा हरी इति यो जात एवेति मध्यंदिनः। आ० ९. ७.। इति॥ महाव्रते निष्केवल्ये यो जात एवेति सूक्तं। ऊरू इति खंडे सूत्रितं। वने न वा यो न्यधायि चाकन् यो जात एव प्रथमो मनस्वान्। ऐ० आ० ५ ३ १.। इति॥ अत्रेतिहासो बृहद्देवतायामुक्तः। संयुज्य तपसात्मानमिंद्रं बिभ्रन्महद्वपुः। अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च॥ तमिंद्र इति मत्वा तु दैत्यौ भीमपराक्रमौ। धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः॥ विदित्वा स तयोर्भावमृषिः पापं चिकीर्षतोः। यो जात इति सूक्तेन कर्माणींद्राण्यकीर्तयत॥ अन्ये त्वन्यथा वर्णयंति। पुरा किलेंद्रादयो वैन्ययज्ञं समाजग्मुः। गृत्समदोऽपि तत्रागत्य सदस्यासीत्। दैत्याश्चेंद्रजिघांसया तत्र समागमन्। तान् दृष्ट्वा निर्जगामेंद्रो यज्ञाद्गृत्समदाकृतिः। स च गृत्समदो वैन्येन पूजितो यज्ञवाटान्निरगच्छत। निर्गच्छंतं तमृषिं दृष्ट्वा अयमेवेंद्र इति मन्यमानास्तमसुराः परिवव्रुः। नाहमिंद्रस्त्वच्छः किंत्वेवंगुणोपेतः स इत्यनेन सूक्तेन तान्प्रत्युवाच॥ अपरे त्वेवं कथयंति। गृत्समदस्य यज्ञे प्रविष्टमेकाकिनमिंद्रं ज्ञात्वासुराः परिवव्रुः। स इंद्रो गृत्समदरूपेण यज्ञवाटान्निर्गत्य स्वर्गं जगाम। ततोऽसुरा इंद्रो विलंबित इत्यंतःप्रविश्य गृत्समदं दृष्ट्वा पूर्वमेव गृत्समदो गतः अयं त्विंद्रोऽस्मद्भयाद्गृत्समदरूपेणास्त इति तं जगृहुः। स तान् नाहमिंद्रोऽयमित्यनेन सूक्तेन प्रत्युवाच। अयमेवार्थो महाभारते प्रपंचितः॥

यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत्।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इंद्रः॥१॥

यः। जातः। एव। प्रथमः। मनस्वान्। देवः। देवान्। क्रतुना। परिऽअभूषत्।
यस्य। शुष्मात्। रोदसी इति। अभ्यसेतां। नृम्णस्य। मह्ना। सः। जनासः। इंद्रः॥१॥

गृत्समदो ब्रूते। जनासो जना हे असुराः यो जात एव जायमान एव सन् प्रथमो देवानां प्रधानभूतो मनस्वान् मनस्विनामग्रगण्यो देवो द्योतमानः सन् क्रतुना वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा देवान् सर्वान्यागदेवान्पर्यभूषत। रक्षकत्वेन पर्यगृह्णीत॥ भूष अलंकारे भ्वादिः। लङि रूपं॥ यद्वा सर्वानन्यान्देवान्पर्यभूषत पर्यभवत्। अत्यक्रामत॥ अस्मिन्पक्षे भवतेर्व्यत्ययेन क्सः। श्र्युकः किति इतीट्प्रतिषेधः॥ यस्येंद्रस्य शुष्मात् शरीरात् बलात् रोदसी द्यावापृथिव्यावभ्यसेतां। अबिभीतां॥ भ्यस भये। अनुदात्तेत्। भ्यस भयवेपनयोरिति नैरुक्ताः। नि० ३. २१.॥ अभ्यसेतामवेपतां वा। तथा च मंत्रांतरं। इमे चित्तव मन्यवे वेपेते भियसा मही। १. ८०. ११.। इति। नृम्णस्य सेनालक्षणस्य बलस्य मह्ना महत्त्वेन युक्तः स इंद्रो नाहमिति॥ अत्र निरुक्तं। यो जायमान एव प्रथमो मनस्वी देवो देवान्क्रतुना कर्मणा पर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदिति वा यस्य बलाद्द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इंद्र इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता। नि० १०. १०। इति॥

यः पृथिवीं व्यथमानामदृंहद्यः पर्वतान्प्रकुपिताँ अरम्णात् ।
यो अंतरिक्षं विममे वरीयो यो द्यामस्तभ्नात्स जनास इंद्रः ॥२॥
यः । पृथिवीं । व्यथमानां । अदृंहत् । यः । पर्वतान् । प्रऽकुपितान् । अरम्णात् ।
यः । अंतरिक्षं । विऽममे । वरीयः । यः । द्यां । अस्तभ्नात् । सः । जनासः । इंद्रः ॥२॥

हे जनाः य इंद्रो व्यथमानां चलंतीं पृथिवीमदृंहत । शर्करादिभिर्दृढामकरोत ॥ दृह दृहि वृद्धौ ॥ यश्च प्रकुपितान् इतस्ततश्चलितान्पक्षयुक्तान्पर्वतानरम्णात । नियमितवान् । स्वे स्वे स्थाने स्थापितवान ॥ अरम्णात रमु क्रीडायां । अंतर्भावितण्यर्थस्य व्यत्ययेन श्नाप्रत्ययः ॥ यश्च वरीय उरुतममंतरिक्षं विममे । निर्ममे । विस्तीर्णं चकारेत्यर्थः । यश्च द्यां दिवमस्तभ्नात । स्तंभनेन दृढामकरोत ॥ स्तभु रोधन इति सौत्रो धातुः ॥ स एवेंद्रो नाहमिति ॥

यो हत्वाहिमरिणात्सप्त सिंधून्यो गा उदाजदपधा वलस्य ।
यो अश्मनोरंतरग्निं जजान संवृक्समत्सु स जनास इंद्रः ॥३॥
यः । हत्वा । अहिं । अरिणात् । सप्त । सिंधून् । यः । गाः । उत्ऽआजत् । अपऽधा । वलस्य ।
यः । अश्मनोः । अंतः । अग्निं । जजान । संऽवृक् । समत्ऽसु । सः । जनासः । इंद्रः ॥३॥

योऽहिं मेघं हत्वा मेघहननं कृत्वा सप्त सर्पणशीलाः सिंधून स्यदनशीला अपोऽरिणात । प्रेरयत । यद्वा सप्त गंगायमुनाद्या मुख्या नदीररिणात ॥ रीङ् स्रवणे क्र्यादिः ॥ यश्च वलस्य वलनामकस्यासुरस्यापधा तत्कर्तृकान्निरोधान्निरुद्धा गा उदाजत । निरगमयत ॥ अपधा । अपपूर्वाद्दधातेरातश्चोपसर्गे । पा० ३ ३ १०६ । इति भावेऽङ्प्रत्ययः । सुपां सुलुगिति पंचम्या आकारः ॥ यश्चाश्मनोः । अश्नुते व्याप्नोत्यंतरिक्षमित्यश्मा मेघः । अत्यंतमृदुरूपयोर्मेघयोरंतर्मध्ये वैद्युतमग्निं जजान । उत्पादयामास । यश्च समत्सु । संमदंति योद्धृणामायुधानीति समदः संग्रामाः । तेषु संवृक् भवति ॥ वृजी वर्जने हिंसार्थस्य क्विपि रूप ॥ स इंद्रो नाहमिति ॥

येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः ।
श्वघ्नीव यो जिगीवां लक्षमाददर्यः पुष्टानि स जनास इंद्रः ॥४॥
येन । इमा । विश्वा । च्यवना । कृतानि । यः । दासं । वर्णं । अधरं । गुहा । अकरित्यकः ।
श्वघ्नीऽइव । यः । जिगीवान् । लक्षं । आदत् । अर्यः । पुष्टानि । सः । जनासः । इंद्रः ॥४॥

येनेंद्रेणेमानि विश्वा च्यवना नश्वराणि भुवनानि कृतानि । स्थिरीकृतानि । यश्च दासं वर्णं शूद्रादिकं । यद्वा दासमुपक्षपयितारमधरं निकृष्टमसुरं गुहा गुहायां गूढस्थाने नरके वाकः । अकार्षीत ॥ करोतेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुकि रूपं ॥ लक्षं लक्ष्यं जिगीवान ॥ जि जये । क्रसौ सनलिटोर्जेरित्यभ्यासादुत्तरस्य कुत्व । दीर्घश्छांदसः ॥ जितवान योऽर्योऽरिः ॥ षष्ठ्येकवचने छांदसो यणादेशः ॥ शत्रोः सबधीनि पुष्टानि समृद्धान्यादत आदत्ते । तत्र दृष्टांतः । श्वघ्नीव । श्वभिर्मृगान हंतीति श्वघ्नी व्याधः । यथा व्याधो जिघृक्षन्मृगं परिगृह्णाति तद्वत् ॥

यं स्मा पृच्छंति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनं ।
सो अर्यः पुष्टीर्विज इवा मिनाति श्रदस्मै धत्त स जनास इंद्रः ॥५॥
यं । स्म । पृच्छंति । कुह । सः । इति । घोरं । उत । ईं । आहुः । न । एषः । अस्ति । इति । एनं ।
सः । अर्यः । पुष्टीः । विजःऽइव । आ । मिनाति । श्रत् । अस्मै । धत्त । सः । जनासः । इंद्रः ॥५॥

अपश्यंतो जना घोरं शत्रूणां घातकं यं पृच्छंति स्म कुह सेति। स इंद्रः कुत्र वर्तत इति॥ सेति। सोऽचि लोपे चेत्पादपूरणमिति सोर्लोपे गुणः॥ न क्वचिदसौ तिष्ठतीति मन्यमाना जना एनमिंद्रमाहुः एष इंद्रो नास्तीति। तथा च मंत्रांतरं नेंद्रो अस्तीति नेम उ त्व आह। ८.१००.३। इति। ईमिति पूरणः। स इंद्रो विज इव। इवशब्द एवार्थे। उद्वेजक एव सन् अर्यो अरेः संबंधीनि पुष्टीः पोषकाणि गवाश्वादीनि धनान्यामिनाति। सर्वतो हिनस्ति॥ मीङ् हिंसायां। मीनातेर्निगम इति ह्रस्वः॥ तस्मात् श्रदस्मै इंद्राय धत्त। स इंद्रोऽस्तीति विश्वासमत्र कुरुत। यद्यप्यसौ विशेषतोऽस्माभिर्न दृश्यते तथापि अस्तीति विश्वासं कुरुत। एवं निर्धारणमहिमोपेतः स इंद्रो नाहमिति॥ ॥ ५॥

यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः।
युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इंद्रः॥ ६॥
यः। रध्रस्य। चोदिता। यः। कृशस्य। यः। ब्रह्मणः। नाधमानस्य। कीरेः।
युक्तऽग्राव्णः। यः। अविता। सुऽशिप्रः। सुतऽसोमस्य। सः। जनासः। इंद्रः॥ ६॥

यो रध्रस्य॥ रध हिंसासंराद्ध्योः॥ समृद्धस्य चोदिता धनानां प्रेरयिता भवति। यश्च कृशस्य च दरिद्रस्य च यश्च नाधमानस्य॥ नाधृ णाधृ याच्ञोपतापैश्वर्याशीःषु॥ याचमानस्य कीरेः॥ करोतेः कीर्तयतेर्वा॥ स्तोतुर्ब्रह्मणो ब्राह्मणस्य च धनानां प्रेरयिता। यश्च सुशिप्रः शोभनहनुः सुशीर्षको वा सन् युक्तग्राव्णोऽभिषवार्थमुद्यतग्राव्णः सुतसोमस्याभिषुतसोमस्य यजमानस्याविता रक्षिता भवति स एवेंद्रो नाहमिति। ब्रह्मशब्दस्य त्वन्नपरत्वे ह्याद्युदात्तता स्यात् यथा ब्रह्म वन्वानो अजरं सुवीरं। ३.८.२। इति। अयं त्वंतोदात्तः पठ्यत इति नान्नपरः॥

यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः।
यः सूर्यं य उषसं जजान यो अपां नेता स जनास इंद्रः॥ ७॥
यस्य। अश्वासः। प्रऽदिशि। यस्य। गावः। यस्य। ग्रामाः। यस्य। विश्वे। रथासः।
यः। सूर्यं। यः। उषसं। जजान। यः। अपां। नेता। सः। जनासः। इंद्रः॥ ७॥

यस्य सर्वांतर्यामितया वर्तमानस्य प्रदिशि प्रदेशनेऽनुशासनेऽश्वासोऽश्वा वर्तंते। यस्यानुशासने गावः। यस्यानुशासने ग्रामाः। ग्रसंतेऽत्रेति ग्रामा जनपदाः। यस्याज्ञाया विश्वे सर्वे रथासो रथा वर्तंते। यश्च वृत्रं हत्वा सूर्यं जजान। जनयामास। यश्चोषसं। तथा मंत्रः जजान सूर्यमुषसं सुदंसाः। ३.३२.८। इति। यश्च मेघभेदनद्वारापां नेता प्रेरकः स इंद्र इत्यादि प्रसिद्धं॥

यं क्रंदसी संयती विह्वयेते परेऽवर उभया अमित्राः।
समानं चिद्रथमातस्थिवांसा नाना हवेते स जनास इंद्रः॥ ८॥
यं। क्रंदसी इति। संयती इति संऽयती। विह्वयेते इति विऽह्वयेते। परे। अवरे।
उभयाः। अमित्राः।
समानं। चित्। रथं। आतस्थिऽवांसा। नाना। हवेते इति। सः। जनासः। इंद्रः॥ ८॥

यं क्रंदसी रोदसी शब्दं कुर्वाणे मानुषी दैवी च द्वे सेने वा संयती परस्परं संगच्छंत्यौ यमिंद्रं विह्वयेते। स्वरक्षार्थं विविधमाह्वयतः। परे उत्कृष्टा अवरेऽधमाश्चोभया उभयविधा उभयमाह्वयंति। समानमिंद्ररथसदृशं रथमातस्थिवांसा आस्थितौ द्वौ रथिनौ तमेवेंद्रं नाना पृथक् पृथक् हवेते। आह्वयेते। यद्वा समानमेकं रथमारूढाविंद्राग्नी हवेते। यज्ञार्थं यजमानैः पृथगाहूयेते। तयोरन्यतरः स इंद्रो नाहमिति॥

यस्मान्न ऋते विजयंते जनासो यं युध्यमाना अवसे हवंते।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत्स जनास इंद्रः ॥९॥
यस्मात्। न। ऋते। विऽजयंते। जनासः। यं। युध्यमानाः। अवसे। हवंते।
यः। विश्वस्य। प्रतिऽमानं। बभूव। यः। अच्युतऽच्युत्। सः। जनासः। इंद्रः ॥९॥

यस्मादृते जनासो जना न विजयंते। विजयं न प्राप्नुवंति। अतो युध्यमाना युद्धं कुर्वाणा जना अवसे स्वरक्षणाय यमिंद्रं हवंते। आह्वयंति। यश्च विश्वस्य सर्वस्य जगतः प्रतिमानं प्रतिनिधिर्बभूव। यश्चाच्युतच्युत् अच्युतानां क्षयरहितानां पर्वतादीनां च्यावयिता स इंद्र इत्यादि प्रसिद्धं ॥

यः शश्वतो मह्येनो दधानानमन्यमानाञ्छर्वा जघान।
यः शर्धते नानुददाति शृध्यां यो दस्योर्हंता स जनास इंद्रः ॥१०॥
यः। शश्वतः। महि। एनः। दधानान। अमन्यमानान। शर्वा। जघान।
यः। शर्धते। न। अनुऽददाति। शृध्यां। यः। दस्योः। हंता। सः। जनासः। इंद्रः ॥१०॥

यो महि महदेनः पापं दधानान शश्वतो बहूनमन्यमानान आत्मानमजानत इंद्रमपूजयतो वा जनान शर्वा। शृणाति शत्रूनननेति शरुर्वज्रः। तेनायुधेन जघान ॥ हंतेर्लिटि रूपं ॥ यश्च शर्धत उत्साहं कुर्वतेऽनात्मज्ञाय जनाय शृध्यामुत्साहनीयं कर्म नानुददाति। न प्रयच्छति ॥ अनुपूर्वात् डुदाञ् दाने जौहोत्यादिकः। अभ्यस्तानामादिरिति तिङि चोदात्तवतीति गतेर्निघातः ॥ यश्च दस्योरुपक्षपयितुः शत्रोर्हंता घातकः स इंद्र इत्यादि पूर्ववत ॥ ॥८॥

यः शंबरं पर्वतेषु क्षियंतं चत्वारिंश्यां शरद्यन्वविंदत।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इंद्रः ॥११॥
यः। शंबरं। पर्वतेषु। क्षियंतं। चत्वारिंश्यां। शरदि। अनुऽअविंदत्।
ओजायमानं। यः। अहिं। जघान। दानुं। शयानं। सः। जनासः। इंद्रः ॥११॥

यः पर्वतेषु क्षियंतमिंद्रभिया बहून संवत्सरान्प्रच्छन्नो भूत्वा पर्वतगुहासु निवसंत शंबरमेतन्नामकं मायाविनमसुर चत्वारिंश्यां शरदि चत्वारिंशे संवत्सरेऽन्वविंदत। अन्विष्यालभत। लब्ध्वा च य ओजायमानं ॥ कर्तुः क्यङ् सलोपश्च ओजसोऽप्सरसो नित्यं। पा० ३ १ ११. २.। इति सकारलोपः ॥ बलमाचरंतमहिमाहंतारं दानुं दानवं शयानं शंबरमसुर जघान हतवान स इंद्रो नाहमिति ॥

यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिंधून।
यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहंतं स जनास इंद्रः ॥१२॥
यः। सप्तऽरश्मिः। वृषभः। तुविष्मान। अवऽअसृजत्। सर्तवे। सप्त। सिंधून।
यः। रौहिणं। अस्फुरत्। वज्रऽबाहुः। द्यां। आऽरोहंतं। सः। जनासः। इंद्रः ॥१२॥

यः सप्तरश्मिः सप्तसंख्याकाः पर्जन्या रश्मयो यस्य। ते च रश्मयो वराहव स्वतपसो विद्युन्महसो धूपयः श्वापयो गृहमेधाश्चेतीति ये चेमेऽशिमिविद्विषः पर्जन्याः सप्त पृथिवीमभिवर्षंति वृष्टिभिः। तै० आ० १. ९ ४ ५.। इति तैत्तिरीयारण्यके ह्याम्नाताः। वृषभो वर्षकस्तुविष्मान वृद्धिमान्बलवान्वा सप्त सर्पणस्वभावान्सिंधूनपः

सर्तवे सरणायावासृजत। अवसृष्टवान। यद्वा गंगाद्याः सप्त मुख्या नदीरसृजत्। यश्च वज्रबाहुः सन् द्यां दिवमारोहंतं रौहिणमसुरमस्फुरत्। जघान॥ स्फुर स्फुरणे तुदादिः॥

द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयंते।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इंद्रः॥१३॥
द्यावा। चित्। अस्मै। पृथिवी इति। नमेते इति। शुष्मात्। चित्। अस्य। पर्वताः। भयंते।
यः। सोमऽपाः। निऽचितः। वज्रऽबाहुः। यः। वज्रऽहस्तः। सः। जनासः। इंद्रः॥१३॥

अस्मा इंद्राय द्यावा पृथिवी॥ इतरेतरापेक्षया द्विवचनं प्र मित्रयोर्वरुणयोः। १.६६.१। इतिवत॥ नमेते। स्वयमेव प्रह्वीभवतः॥ णमु प्रह्वत्वे। कर्मकर्तरि न दुहस्नुनमां यक्चिणाविति यकः प्रतिषेधः॥ चिदपि च अस्येंद्रस्य शुष्माद्बलात्पर्वता भयंते। बिभ्यति। यः सोमपाः सोमस्य पाता निचितः सर्वैः। यद्वा अन्येभ्योऽपि देवेभ्यो दृढागः। वज्रबाहुर्वज्रसदृशबाहुः। यश्च वज्रहस्तो वज्रयुक्तः स इंद्र इत्यादि प्रसिद्धं॥

यः सुन्वंतमवति यः पचंतं यः शंसंतं यः शशमानमूती।
यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इंद्रः॥१४॥
यः। सुन्वंतं। अवति। यः। पचंतं। यः। शंसंतं। यः। शशमानं। ऊती।
यस्य। ब्रह्म। वर्धनं। यस्य। सोमः। यस्य। इदं। राधः। सः। जनासः। इंद्रः॥१४॥

यः सुन्वंतं सोमाभिषवं कुर्वंतं यजमानमवति। रक्षति। यश्च पुरोडाशादीनि हवींषि पचंतं। यश्चोती ऊतये॥ सुपां सुलुगिति चतुर्थ्याः पूर्वसवर्णदीर्घः॥ स्वरक्षार्थे शस्त्राणि शंसंतं यश्च शशमानमवति। स्तोत्रं कुर्वाणं रक्षति। ब्रह्म परिवृढं स्तोत्रं यस्य वर्धनं वृद्धिकरं भवति। तथा यस्य सोमो वृद्धिहेतुर्भवति। यस्य चेदमस्मदीयं राधः पुरोडाशादिलक्षणमन्नं वृद्धिकरं भवति। स इंद्र इत्यादि प्रसिद्धं॥

यः सुन्वते पचते दुध्र आ चिद्वाजं दर्दर्षि स किलासि सत्यः।
वयं त इंद्र विश्वह प्रियासः सुवीरासो विदथमा वदेम॥१५॥
यः। सुन्वते। पचते। दुध्रः। आ। चित्। वाजं। दर्दर्षि। सः। किल। असि। सत्यः।
वयं। ते। इंद्र। विश्वह। प्रियासः। सुऽवीरासः। विदथं। आ। वदेम॥१५॥

इदानीमृषिः साक्षात्कृतमिंद्रं प्रति प्रब्रूते। हे इंद्र. यो दुध्रो दुर्धरः सन् सुन्वते सोमाभिषवं कुर्वते पुरोडाशादिहवींषि पचते यजमानाय वाजमन्नं बलं वादर्दर्षि। भृशं प्रापयसि स तादृशस्त्वं सत्यो यथार्थभूतोऽसि। न पुनर्नास्तीति बुद्धियोग्योऽसि। किलेति प्रसिद्धौ। ते तव प्रियासः सुवीरासः कल्याणपुत्रपौत्राः संतो वयं विश्वह सर्वेष्वहःसु विदथं स्तोत्रमावदेम। ब्रूयाम॥ ॥९॥

ऋतुर्जनित्रीति त्रयोदशर्चं द्वितीयं सूक्तं गार्त्समदं। ऋतुः सप्तोनांत्या त्रिष्टुबित्यनुक्रमणिका। अस्मभ्य तद्वसो इति त्रयोदशी त्रिष्टुप्। शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः। इंद्रो देवता॥ उक्थ्ये तृतीयसवनेऽच्छावाकशस्त्रेऽस्य सूक्तस्य विनियोगः। सूत्रित च। ऋतुर्जनित्री नू मर्तो भवा मित्रः। आ० ६.१.। इति॥ दशरात्रे षष्ठेऽहन्यपि तृतीयसवनेऽच्छावाकशस्त्र एतत्सूक्तं। ऋतुर्जनित्रीति नित्यान्यैकाहिकानि। आ० ८.४.। इति सूत्रितं॥

ऋतुर्जनित्री तस्या अपस्परि मक्षू जात आविशद्यासु वर्धते ।
तदाहना अभवत्पिप्युषी पयोंऽशोः पीयूषं प्रथमं तदुक्थ्यं ॥१॥
ऋतुः । जनित्री । तस्याः । अपः । परि । मक्षु । जातः । आ । अविशत् । यासु । वर्धते ।
तत् । आहनाः । अभवत् । पिप्युषी । पयः । अंशोः । पीयूषं । प्रथमं । तत् । उक्थ्यं ॥१॥

ऋतुर्वर्षाख्यः कालो जनित्री सोमस्य जनयित्री जननी भवति । तस्याः परि तस्या जनन्याः सकाशाज्जातः सोमोऽप उदकानि मक्षु शीघ्रमाविशत । यास्वप्सु सोमो वर्धते ता अविशदित्यन्वयः । तस्मादप्सु प्रविष्टत्वात् सोम आहना आहंतव्योऽभिषोतव्यो भवति । आहना इति सकारांतमिदं पदं । तथा च मंत्रवर्णः । ये ते मदा आहनसो विहायसः । ९. ७५. ५. । इति । या चांशुरूपा सोमलता पयः सारभूतं पिप्युषी वर्धयंत्यभवत ॥ प्यायतेर्लिटि क्वसौ लिड्यङोश्चेति पीभावः । वसोः संप्रसारणं । उगितश्चेति ङीप ॥ अंशोस्तस्याः सोमलतायाः पीयूष रसभूतं पय उक्थ्यं प्रशस्य हविरिंद्रस्य भवति ॥

सध्रीमा यंति परि बिभ्रतीः पयो विश्वप्स्न्याय प्र भरंत भोजनं ।
समानो अध्वा प्रवतामनुष्यदे यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥२॥
सध्री । ईं । आ । यंति । परि । बिभ्रतीः । पयः । विश्वऽप्स्न्याय । प्र । भरंत । भोजनं ।
समानः । अध्वा । प्रऽवतां । अनुऽस्यदे । यः । ता । अकृणोः । प्रथमं । सः । असि ।
उक्थ्यः ॥२॥

सध्री । अंचतेर्लुक छांदसः । सहस्य सध्रिरिति सध्र्यादेशोंऽतोदात्तत्वेन निपातितः । सध्रीचीनाः पय उदकं परि परितो बिभ्रतीर्बिभ्राणा ईमेता नद्य आयंति । सर्वतो गच्छंति । ता नद्यो विश्वप्स्न्याय विश्वासामपामाश्रयभूताय समुद्राय भोजनं ॥ भुज्यत इति भोजनं पयः ॥ प्रभरत । प्रकर्षेण संपादयंति । कुत एतत तदाह । प्रवतां प्रवणवतां निम्नगानां पयसामनुष्यदे ॥ कृत्यार्थे तवैकेन्केन्यत्वन इति केन्प्रत्ययः ॥ अनुष्यदनीयोऽध्वा मार्गः समान एको हि । यस्ता तानि सोमोत्पादननदीप्रवर्तनादीनि कर्माणि प्रथमं पूर्वमकृणोः । अकरोः । स तादृशमहिमोपेतस्त्वमुक्थ्योऽसि । सर्वैः प्रशस्यो भवसि ॥

अन्वेको वदति यद्ददाति तद्रूपा मिनन्तदपा एक ईयते ।
विश्वा एकस्य विनुदस्तितिक्षते यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥३॥
अनु । एकः । वदति । यत् । ददाति । तत् । रूपा । मिनन् । तत्ऽअपाः । एकः । ईयते ।
विश्वाः । एकस्य । विऽनुदः । तितिक्षते । यः । ता । अकृणोः । प्रथमं । सः । असि ।
उक्थ्यः ॥३॥

यजमानो यद्धविर्देवेभ्यो ददाति तदेको होतानुवदति । याज्यापुरोनुवाक्याभ्यां देवताः स्मारयति । एकोऽध्वर्यू रूपा पश्वादीनां रूपाणि मिनन् हिंसन तदपास्तद्विशसनाख्यमपः कर्म यस्य तादृशः सन ईयते । देवयजने सर्वत्र गच्छति । एकस्याध्वर्योर्विश्वा विनुदः सर्वाणि तत्कर्तृकाणि विक्षेपणरूपाणि कर्मवैगुण्यानि तितिक्षते । तद्योग्यप्रायश्चित्तकरणेन ब्रह्मा सहते ॥ गुप्तिज्किद्भ्यः सन क्षमायामिष्यते ॥ तानि हविष्प्रदानादीनि कर्माणि यस्त्वमकृणोः । अकारयः सः त्वमुक्थ्योऽसि ॥

प्रजाभ्यः पुष्टिं विभजंत आसते रयिमिव पृष्ठं प्रभवंतमायते ।
असिन्वन्दंष्ट्रैः पितुरत्ति भोजनं यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥४॥

प्रऽजाभ्यः। पुष्टिं। विऽभजंतः। आसते। रयिंऽइव। पृष्ठं। प्रऽभवंतं। आऽयते।
असिन्वन्। दंष्ट्रैः। पितुः। अत्ति। भोजनं। यः। ता। अकृणोः। प्रथमं। सः। असि।
उक्थ्यः ॥४॥

हे इंद्र पुष्टिं त्वया दत्तं पोषकं धनं स्वकीयाभ्यः प्रजाभ्यो विभजंतोऽस्यैतावदस्यैतावदिति विभागं कुर्वंतो गृहमेधिन आसते। स्वस्वगृहेषु निवसंति। तत्र दृष्टांतः। आयते गृहं प्रत्यागच्छतेऽतिथये पृष्ठं धारकं प्रभवंतं बहुभरणसमर्थं रयिं धनं यथा विभज्य प्रयच्छंति तद्वत्। असिन्वन् सेतुबंधादिकं कर्म कुर्वन् लोकः पितुः पालयित्र्या दिवः सकाशादागतं भोजनमुदकं तत्कार्या ओषधीर्दंष्ट्रैर्दंतैरत्ति। भक्षयति। यद्वा असिन्वन् अव्याप्रियमाणोऽग्निः पितुः पालकस्य यजमानस्य संबंधि भोजनं हविर्लक्षणमन्नं दंष्ट्रैर्दंतरूपैर्ज्वालैरत्ति। यस्तान्यकृणोरित्यादि सिद्धं ॥

अधाकृणोः पृथिवीं संदृशे दिवे यो धौतीनामहिहन्नारिणक्पथः।
तं त्वा स्तोमेभिरुदभिर्न वाजिनं देवं देवा अजनन्त्सास्युक्थ्यः ॥५॥
अध। अकृणोः। पृथिवीं। संऽदृशे। दिवे। यः। धौतीनां। अहिऽहन्। अरिणक्। पथः।
तं। त्वा। स्तोमेभिः। उदऽभिः। न। वाजिनं। देवं। देवाः। अजनन्। सः। असि।
उक्थ्यः ॥५॥

हे इंद्र अध अपि च त्वं दिवे द्योतमानाय सूर्याय पृथिवीं चलितां सतीं दृढीकृत्य संदृशे संदर्शनीयामकृणोः। अकरोः ॥ दृशे विख्ये चेति केन्प्रत्ययांतत्वेन निपातितः ॥ यश्च त्वं धौतीनां चलंतीनां नदीनां पथो मार्गानरिणक्। अरचयः। गंतुं योग्यानकरोरित्यर्थः ॥ रिचिर् विरेचने। लङि सिप्। तस्य हल्ङ्यादिना लोपः ॥ अहिहन् अहेर्वृत्रस्य मेघस्य वा हंतर्हे इंद्र देवाः स्तोतारस्तं तादृशं देवं त्वां स्तोमेभिः स्तोत्रैरजनन्। तत्र दृष्टांतः। उदभिर्न वाजिनं। यथा वाजिनमश्वमुदभिरुदकैर्वर्धयंति तद्वत् ॥ पद्दन्नोमासित्यादिनोदकस्योदन्भावः ॥ शेषं सिद्धं ॥ ॥१०॥

यो भोजनं च दयसे च वर्धनमार्द्रादा शुष्कं मधुमद्दुदोहिथ।
सः शेवधिं नि दधिषे विवस्वति विश्वस्यैक ईशिषे सास्युक्थ्यः ॥६॥
यः। भोजनं। च। दयसे। च। वर्धनं। आर्द्रात्। आ। शुष्कं। मधुऽमत्। दुदोहिथ।
सः। शेवऽधिं। नि। दधिषे। विवस्वति। विश्वस्य। एकः। ईशिषे। सः। असि।
उक्थ्यः ॥६॥

हे इंद्र यस्त्वं भोजनं। भुज्यत इति भोजनमन्नादि। च दयसे। यजमानेभ्यः प्रयच्छसि ॥ दय दानगतिरक्षणहिंसादानेषु आत्मनेपदी ॥ किंच वर्धनं वृद्धिकरं धनं बलं वा दयसे। तथार्द्रात्कांडात् शुष्कमनार्द्रं व्रीह्यादिकं मधुमत् मधुररसोपेतं दुदोहिथ। दुग्धवानसि ॥ दुहेर्लिटि क्रादिनियमादिडागमः ॥ स तादृशस्त्वं विवस्वति ते परिचरणं कुर्वाणे यजमाने शेवधिं धनसदनं निदधिषे। निदधासि। किं बहुना। विश्वस्य सर्वस्य जगत एकोऽद्वितीय एव सन् ईशिषे। स्वामी भवसि ॥ ईश ऐश्वर्ये। ईशः स इतीडागमः ॥ स इत्यादि सिद्धं ॥

यः पुष्पिणीश्च प्रस्वश्च धर्मणाधि दाने व्य१वनीरधारयः।
यश्चासमा अजनो दिद्युतो दिव उरुरूर्वाँ अभितः सास्युक्थ्यः ॥७॥

यः । पुष्पिणीः । च । प्रऽस्वः । च । धर्मणा । अधि । दाने । वि । अवनीः । अधारयः ।
यः । च । असमाः । अजनः । दिद्युतः । दिवः । उरुः । ऊर्वान् । अभितः । सः ।
असि । उक्थ्यः ॥७॥

हे इंद्र यस्त्वं पुष्पिणीः पुष्पवतीश्च प्रस्वः प्रसूताः प्रसूयमाना वावनीरवनीरोषधीर्दानेऽधि ॥ उपभुज्यंते सर्वाण्यन्नेति दानं क्षेत्रं । अधिकरणे ल्युट् ॥ तस्मिन् क्षेत्रे धर्मणा सकललक्षणेन कर्मणा व्यधारयः । न्यदधाः । यश्च त्वं दिवो द्योतमानस्य सूर्यस्यासमा विषमा नानाप्रकारा दिद्युतो दीप्तीरजनः । अजनयः । यद्वा दिवो नक्षत्राणि ॥ जनेर्लङि व्यत्ययेन शप् ॥ यश्चोरुर्महांस्त्वमभितः सर्वत ऊर्वान् महतः प्राणिनिकायान् पर्वतान्वा जनयः । शिष्टं स्पष्टं ॥

यो नार्मरं सहवसुं निहंतवे पृक्षाय च दासवेशाय चावहः ।
ऊर्जयंत्या अपरिविष्टमास्यमुतैवाद्य पुरुकृत्सास्युक्थ्यः ॥८॥

यः । नार्मरं । सहऽवसुं । निऽहंतवे । पृक्षाय । च । दासऽवेशाय । च । अवहः ।
ऊर्जयंत्याः । अपरिऽविष्टं । आस्यं । उत । एव । अद्य । पुरुऽकृत् । सः । असि । उक्थ्यः ॥८॥

पुरुकृत् पुरूणां कर्मणां कर्ता हे इंद्र यस्त्वं नार्मरं । नॄन् मनुष्यान्मारयतीति नृमरः कश्चिदसुरः । तस्यापत्यं नार्मरः । तं सहवसुं । वसुना सह वर्तत इति सहवसुः । असुरनामैतत् । एतन्नामकमसुरं निहंतवे ॥ हंतेस्तुमर्थे तवेन्प्रत्ययः । तादौ च निति कृत्यतौ इति गतेः प्रकृतिस्वरत्वं ॥ निहंतुं ऊर्जयंत्या बलवत्या वज्रधारया अपरिविष्टं मल्लादिभिरव्याप्तमास्यमग्रदेशमावहः । तमसुरं प्रापयः । यद्वा ऊर्जयंत्याः पिशाचिकाया आस्य प्रापयः । किमर्थं । पृक्षाय । तव हविर्लक्षणान्नलाभाय । दासवेशाय । दासानां दस्यूनां वेशाय विनाशाय च । यद्वा अस्माकमन्नलाभाय दस्युविनाशाय च ॥

शतं वा यस्य दश साकमाद्य एकस्य श्रुष्टौ यद्ध चोदमाविथ ।
अरज्जौ दस्यून्त्समुनब्दभीतये सुप्राव्यो अभवः सास्युक्थ्यः ॥९॥

शतं । वा । यस्य । दश । साकं । आ । अद्यः । एकस्य । श्रुष्टौ । यत् । ह । चोदं । आविथ ।
अरज्जौ । दस्यून् । सं । उनप् । दभीतये । सुप्रऽअव्यः । अभवः । सः । असि । उक्थ्यः ॥९॥

हे इंद्र एकस्यैकाकिनः श्रेष्ठस्य वा यस्य ते श्रुष्टौ सुखनिमित्ते तदर्थं शतं दश दश शतानि हरयो वाहनार्थं भवंति । तथा च मंत्रवर्णः । इंद्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश । ६ ४७ १८ । इति । अपि च यश्च आ अद्यः सर्वेषां सर्वत उपजीव्यः । न तस्येशे यं नाद्यादग्निनेन नाद्युरिति हि श्रुतिः । यद् यश्च त्वं चोदं स्तोत्राणां प्रेरकं यजमानमाविथ । रक्षितवानसि । किंच यस्त्वमरज्जौ रज्जुवर्जिते बधनागारे दस्यूनुपक्षपयितॄन् दभीतये । दभीतिर्नाम कश्चिदृषिः । तदर्थं समुनप् । हिंसितवानसि ॥ उभतेर्हिंसाकर्मणो लङि व्यत्ययेन शम् । हल्ङ्यादिना सिपो लोपः । अडभावश्छांदसः ॥ किंच सुप्राव्यः सुखेन सर्वैरुपसर्पणीयोऽभवः । शिष्टं सिद्धं ॥

विश्वेदनु रोधना अस्य पौंस्यं ददुरस्मै दधिरे कृत्नवे धनं ।
षळस्तभ्ना विष्टिरः पंच संदृशः परि परो अभवः सास्युक्थ्यः ॥१०॥

विश्वाः । इत् । अनु । रोधनाः । अस्य । पौंस्यं । ददुः । अस्मै । दधिरे । कृत्नवे । धनं ।
षट् । अस्तभ्नाः । विऽस्तिरः । पंच । संऽदृशः । परि । परः । अभवः । सः । असि ।
उक्थ्यः ॥१०॥

त्रिश्वित ॥ सुपां सुलुगिति जस आकारः ॥ सर्वा एव रोधना रोधस्वत्यो नद्योऽस्येंद्रस्य पौंस्यं । पुंसो भावः पौंस्यं । वीर्यमिति यावत । अनु तद्वीर्यमनु वर्तते । अस्मा इंद्राय ददुः । हविर्लक्षणमन्नं यजमानाः प्रयच्छंति । किंच क्षत्रेव कर्मणां कर्त्रे इंद्राय धनं दधिरे । सर्वे जना धारयंति । तथा च मंत्रः । इंद्राय द्याव ओषधीरुतापो रयिं रक्षंति जीरयो वनानि । ३ ५१.५. । इति । विष्टिरो विस्तीर्णाः षट षट्संख्याका उर्वीः । ताश्च द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधय इत्येवंरूपाः । ता अस्तभ्नाः । नियमितवानसि । संदृशः । सम्यक् पश्यंतीति संदृशो जनाः । पंच संदृशः पंच जनान परि सर्वतः परः पारयिता पालयिता वाभवः । भवसि । गतमन्यत ॥ ॥११॥

सुप्रवाचनं तव वीर वीर्यं१ यदेकेन क्रतुना विंदसे वसु ।
जातूष्ठिरस्य प्र वयः सहस्वतो या चकर्थ सेंद्र विश्वास्युक्थ्यः ॥११॥
सुऽप्रवाचनं । तव । वीर । वीर्यं । यत् । एकेन । क्रतुना । विंदसे । वसु ।
जातूऽस्थिरस्य । प्र । वयः । सहस्वतः । या । चकर्थ । सः । इंद्र । विश्वा । असि । उक्थ्यः ॥११॥

वीर बलवन हे इंद्र तव वीर्यं सामर्थ्यं सुप्रवाचनं । सुष्ठु प्रवचनीयं । सर्वैः श्लाघनीयमित्यर्थः । किं तत । एकेन क्रतुना कर्मणा वसु विंदसे । शत्रूणां धनं लभसे ॥ विद्लृ लाभे । तुदादिः स्वरितेत ॥ यद्वा तदीयं धनं स्तोतॄन्प्रापयसीति यत तत्प्रशस्यमित्यर्थः । सहस्वतो बलवतो जातूष्ठिरस्य । एतन्नामकः कश्चित । तस्य वयोऽन्नं प्रादाः । यद्वा जातूष्ठिरस्य । जातु कदाचित सर्वदा स्थिरस्य सहस्वतो बलवतो यष्टादेः कर्मणः संबंधि वयो हविर्लक्षणमन्नं प्र विदस इति समन्वयः । या यानीमान्यन्यानि विश्वा सर्वाणि कर्माणि चकर्थ कृतवानसि । स तादृशस्त्वमुक्थ्यः । सर्वैः प्रशंसनीयो भवसि ॥

अरमयः सरपसस्तराय कं तुर्वीतये च वय्याय च स्रुतिं ।
नीचा संतमुदनयः परावृजं प्रांधं श्रोणं श्रवयन्त्सास्युक्थ्यः ॥१२॥
अरमयः । सरऽअपसः । तराय । कं । तुर्वीतये । च । वय्याय । च । स्रुतिं ।
नीचा । संतं । उत् । अनयः । पराऽवृजं । प्र । अंधं । श्रोणं । श्रवयन् । सः । असि ।
उक्थ्यः ॥१२॥

हे इंद्र सरपसः । सरणमपः कर्म यासां ताः सरपसः ॥ शकंध्वादित्वात्पररूपत्वं ॥ ता अपः कं सुखेन तराय तरणायारमयः । अक्रीडयः । किंच तुर्वीतये । तुर्वीतिर्नाम कश्चिद्राजर्षिः । तस्मै वय्याय च । वय्यो नाम कश्चित तस्मै । ताभ्यां स्रुतिं सरणं प्रत्यरमयः । तौ हि जलपूर्णां महानदीं दृष्ट्वा तरीतुमसमर्थावास्तां । तौ च त्वया तारितौ । परावृजं । परितः पापानि वृणक्ति दहतीति परावृक कश्चिदृषिः । तमप्सु मग्नं तथा नीचा नीचं संतमुदनयः । आपद्य ऊर्ध्वं नीतवानसि । किंच अंधं संतं श्रोणं पंगुं संतं चक्षुर्दानादपंगुकरणाच्चोदनयः । किं कुर्वन । प्रकर्षेण श्रवयन । आत्मानं कीर्तिमंतं कुर्वन । उदनय इति समन्वयः । स इत्यादि सिद्धं ॥

अस्मभ्यं तद्वसो दानाय राधः समर्थयस्व बहु ते वसव्यं ।
इंद्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवीराः ॥१३॥
अस्मभ्यं । तत् । वसो इति । दानाय । राधः । सं । अर्थयस्व । बहु । ते । वसव्यं ।
इंद्र । यत् । चित्रं । श्रवस्याः । अनु । द्यून् । बृहत् । वदेम । विदथे । सुऽवीराः ॥१३॥

वसो सर्वस्य वासक वसुमन्वा हे इंद्र स्तोतृभ्योऽस्मभ्यं तद्राधो धनं दानाय । उपलक्षणमेतत । भोगाय च समर्थयस्व । देहि । अस्मान् संगमयेत्यर्थः ॥ अर्थ याचने चुरादिरदंत आत्मनेपदी ॥ ते तव तद्धनं प्रभूतं वसव्यं ॥

वस्विव वसव्यं। वस्वादित्वात् स्वार्थिको यत् ॥ तादृशं प्रभूतं धनमस्ति खलु। चित्रं चायनीयं यद्धनमनु द्यून् अन्वहं ॥ कालाध्वनोरिति द्वितीया ॥ श्रवस्याः। भोग्यमिच्छुः ॥ अंतर्णीतण्यर्थत्वादकर्मकत्वं। यथा रोदितीति। सं स्वन्यः। द्वे ह्यत्र कर्मणी उद्देश्यकर्म च विधेयकर्मांतर्भूतं। उद्देश्यकर्मणा सकर्मको भविष्यति। यथा माणवकं पुत्रीयतीति भाष्ये उदाहृतं। पा० ३. १. ८. २.। श्रवःशब्दाक्कर्दमि परेच्छायां क्यच्। तदंतस्य निष्ठड्यागमे रूपं ॥ सुवीराः कल्याणपुत्रपौत्राः संतो वयं विदथेऽस्मिन्यज्ञे बृहत् प्रभूतं शस्त्रादिकं वाक्यं वदेम ॥ ॥१२॥

॰अध्वर्यवो भरतेति द्वादशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभमैंद्रं। अध्वर्यवो द्वादशेत्यनुक्रांतं ॥ सूक्तविनियोगो लैंगिकः। अतिरात्रे प्रथमे पर्याये होतुः शस्त्रयाज्याध्वर्यव इत्येषा। अध्वर्यवो भरतेंद्राय सोममिति याज्या। आ० ६. ४.। इति सूत्रितं ॥

अध्वर्यवो भरतेंद्राय सोममामत्रेभिः सिंचता मद्यमंधः।
कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि ॥१॥

अध्वर्यवः। भरत। इंद्राय। सोमं। आ। अमत्रेभिः। सिंचत। मद्यं। अंधः।
कामी। हि। वीरः। सदं। अस्य। पीतिं। जुहोत। वृष्णे। तत्। इत्। एषः। वष्टि ॥१॥

गृत्समदो ब्रूते। अध्वर्यवः अध्वरस्य नेतारः। अध्वरं यजमानायेच्छंतः ॥ क्यध्वरपृतनस्यर्चि लोप इत्यकारलोपः ॥ अत्र यास्कः। अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताध्वरं कामयत इति। नि० १ ८ ॥ हे अध्वर्यवः इंद्राय देवाय सोमं हविर्धानादुत्तरवेदिं प्रति भरत। हरत॥ आमंत्रितस्याविद्यमानत्वादनिघातः ॥ हुत्वामत्रेभिः। अमा सहादंत्यत्र होत्रादय इत्यमत्राणि चमसाः। तैर्मद्यं मदकरमंधः सोमलक्षणमन्नमासिंचत। अग्नौ प्रक्षिपत। अत्र यास्कः। आ सिंचतामत्रैर्मदनीयमंधोऽमत्रं पात्रममा अस्मिन्नदंति। नि० ५. १। इति। वीरः स इंद्रोऽस्य सोमस्य पीतिं पानं प्रति सदं सदैव कामी हि। कामयमानो हि। तस्माद्वृष्णे वर्षित्र इंद्राय सोमं जुहोत। जुहुत ॥ हु दानादनयोः। लोटि तप्तनप्तनथनाश्चेति तबादेशः ॥ एष इंद्रस्तदित तदेव सोमद्रव्यं वष्टि। कामयते ॥

अध्वर्यवो यो अपो वव्रिवांसं वृत्रं जघानाशन्येव वृक्षं।
तस्मा एतं भरत तद्वशायँ एष इंद्रो अर्हति पीतिमस्य ॥२॥

अध्वर्यवः। यः। अपः। वव्रिऽवांसं। वृत्रं। जघान। अशन्याऽइव। वृक्षं।
तस्मै। एतं। भरत। तत्ऽवशाय। एषः। इंद्रः। अर्हति। पीतिं। अस्य ॥२॥

हे अध्वर्यवः य इंद्रोऽप उदकानि वव्रिवांसमावृत्य स्थितं वृत्रं। वृणोत्याकाशमिति वृत्रो मेघः। तं मेघं वज्रेण जघान। हतवान्। अशन्येव। यथाशन्या वैद्युताग्निना वृक्षं दहति तद्वत्। तस्मै तद्वशाय सोमकामाय तस्मा इंद्रायैतं सोमं भरत। उत्तरवेदिं प्रति हरत। एष इंद्रोऽस्य सोमस्य पीतिं पानमर्हति ॥

अध्वर्यवो यो दृभीकं जघान यो गा उदाजदप हि वलं वः।
तस्मा एतमंतरिक्षे न वातमिंद्रं सोमैरोर्णुत जूर्न वस्त्रैः ॥३॥

अध्वर्यवः। यः। दृभीकं। जघान। यः। गाः। उत्ऽआजत्। अप। हि। वलं। वरिति वः।
तस्मै। एतं। अंतरिक्षे। न। वातं। इंद्रं। सोमैः। आ। ऊर्णुत। जूः। न। वस्त्रैः ॥३॥

हे अध्वर्यवः य इंद्रो दृभीकं। सर्वान्विदारयति भियं करोतीति दृभीको नामासुरः। तमसुरं जघान। यश्च वलासुरेण निरुद्धा गा उदाजत्। निरगमयत्। ततश्च तमेव वलमसुरमपवः। अपावृणोत्। हिंसितवा-

नित्यर्थः ॥ वृणोतेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक् । हल्ङ्यादिना तिपो लोपः ॥ तस्मा इंद्रायैतं सोममंतरिक्षे वात न वातमिव धाराभिर्व्याप्तं कुरुत । तदेवाह सोममिंद्रमा ऊर्णुत । सर्वत आच्छादयत ॥ ऊर्णुञ् आच्छादने । अदादिकः । लोटि रूपं ॥ तत्र दृष्टांतः । जूर्न जीर्णो यथा वस्त्रैरंगमाच्छादयति तद्वत् ॥

अध्वर्यवो य उरणं जघान नव चख्वांसं नवतिं च बाहून् ।
यो अर्बुदमव नीचा बबाधे तमिंद्रं सोमस्य भृथे हिनोत ॥४॥

अध्वर्यवः । यः । उरणं । जघान । नव । चख्वांसं । नवतिं । च । बाहून् ।
यः । अर्बुदं । अव । नीचा । बबाधे । तं । इंद्रं । सोमस्य । भृथे । हिनोत ॥४॥

हे अध्वर्यवः य इंद्रो नव नवतिं च एकोनशतं बाहून चख्वांसं ॥ चष्टेरिदं रूपं । यद्वा खनतेः क्वसौ रूपं । निलोपः । छांदसं रूपं ॥ सर्वस्य दर्शयंतं । यद्वा आत्मनो देहे निखातवंतमुरणमेतन्नामकमसुरं जघान । यश्चार्बुदमेतन्नामकमसुरं च नीचाधोमुखं कृत्वाववबाधे । तमेनमिंद्रं सोमस्य भृथे सोमं बिभ्रति पात्रे हिनोत । वर्धयत । यद्वा सोमस्य भृथे भरणे संपादने सति हिनोत । स्तोत्रैः प्रीणयत ॥ हि गतिवृद्ध्योः । स्वादिः ॥

अध्वर्यवो यः स्वश्नं जघान यः शुष्णमशुषं यो व्यंसं ।
यः पिप्रुं नमुचिं यो रुधिक्रां तस्मा इंद्रायांधसो जुहोत ॥५॥

अध्वर्यवः । यः । सु । अश्नं । जघान । यः । शुष्णं । अशुषं । यः । विऽअंसं ।
यः । पिप्रुं । नमुचिं । यः । रुधिऽक्रां । तस्मै । इंद्राय । अंधसः । जुहोत ॥५॥

हे अध्वर्यवः य इंद्रोऽश्नं । अश्नाति भक्षयति प्राणिजातमिति । यद्वा अश्नुते स्वतेजसा सर्वं व्याप्नोतीत्यश्नः कश्चिदसुरः । तमसुरं सु सुष्ठु जघान । अशुषं केनाप्यशोषणीयं शुष्णमसुरं यश्च तमसुरं व्यंसमंसहीनं कृत्वा जघान । यश्च पिप्रुं तेजसा जगद्व्याप्य वर्तमानमेतन्नामकमसुरं नमुचिमसुरं जघान यश्च । तैत्तिरीयके नमुचिमसुरं नालभतेति प्रकृत्य फेनेन शिर उदवर्तयदित्यंतेन वाक्यसंदर्भेण नमुचिवधः प्रपंचितः । तथा मंत्रश्च । अपां फेनेन नमुचेः शिर इंद्रोदवर्तयः । ८. १४. १३. । इति । रुधिक्रामेतन्नामकमसुरं यश्च जघान । तस्मा इंद्रायांधसो हविर्लक्षणान्यन्नानि जुहोत । जुहुत ॥

अध्वर्यवो यः शतं शंबरस्य पुरो बिभेदाश्मनेव पूर्वीः ।
यो वर्चिनः शतमिंद्रः सहस्रमपावपद्भरता सोममस्मै ॥६॥

अध्वर्यवः । यः । शतं । शंबरस्य । पुरः । बिभेद । अश्मनाऽइव । पूर्वीः ।
यः । वर्चिनः । शतं । इंद्रः । सहस्रं । अपऽअवपत् । भरत । सोमं । अस्मै ॥६॥

हे अध्वर्यवः य इंद्रः शंबरस्य मायाविनोऽसुरस्य पूर्वीः पुरातनीः शतं पुरः पुरीरश्मनेव अश्मसदृशेन वज्रेण बिभेद । यश्चेंद्रो वर्चिनः ॥ वर्च दीप्तौ । सर्वधातुभ्य इन् । उ० ४ ६. । इति विधीयमान इनिर्बहुलवचनाद्भवति ॥ यद्वा मार्मितत । तस्यासुरस्य शतं सहस्रमेतत्संख्याकामपरिमितान्वीरान पुत्रानपावपत् । युगपदेव भूम्यामपातयत् । तथा च मंत्रवर्णः । शत वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् । ७. ९९. ५. । इति । अस्मा इंद्राय सोमं भरत ॥ ॥१३॥

अध्वर्यवो यः शतमा सहस्रं भूम्या उपस्थेऽवपज्जघन्वान् ।
कुत्सस्यायोरतिथिग्वस्य वीरान्न्यवृणग्भरता सोममस्मै ॥७॥

अध्वर्यवः। यः। शतं। आ। सहस्रं। भूम्याः। उपऽस्थे। अवपत्। जघन्वान्।
कुत्सस्य। आयोः। अतिथिऽग्वस्य। वीरान्। नि। अवृणक्। भरत। सोमं। अस्मै ॥ ७॥

हे अध्वर्यवो जघन्वान् पूर्वं शत्रून् हतवान् य इंद्रः शतं सहस्रमसुरान् भूम्या उपस्थ उत्संगेऽवपत। एकैकेन प्रकारेणापातयत। किंच यः कुत्सस्यैतन्नामकस्य राजर्षेः। आयोः पौरूरवसस्य राजर्षेः। अतिथिग्वस्य दिवोदासस्य। एतेषां त्रयाणां वीरानभिगंतृन्प्रति द्वेष्टृन् शुष्णादीनसुरान् न्यवृणक्। वृणक्तिर्हिंसाकर्मा। अवधीत्। तथा च मंत्रवर्णः। त्वं कुत्सं शुष्णहत्येष्वाविथारंधयोऽतिथिग्वाय शंबरं। १ ५१ ६। इति। तादृशायेंद्राय सोमं भरत॥

अध्वर्यवो यन्नरः कामयाध्वे श्रुष्टी वहंतो नशथा तदिंद्रे।
गभस्तिपूतं भरत श्रुतायेंद्राय सोमं यज्यवो जुहोत ॥ ८॥
अध्वर्यवः। यत्। नरः। कामयाध्वे। श्रुष्टी। वहंतः। नशथ। तत्। इंद्रे।
गभस्तिऽपूतं। भरत। श्रुताय। इंद्राय। सोमं। यज्यवः। जुहोत ॥ ८॥

नरः कर्मणां नेतारो हे अध्वर्यवः यदभिलषितमर्थं कामयाध्वे॥ कामयतेर्लेट्याडागमः॥ श्रुष्टी क्षिप्रमिंद्रे सोमं वहंतः प्रापयंतो यूयं तदभिलषितं फलं नशथ। प्राप्नुत। श्रुताय लोके प्रसिद्धायेंद्राय गभस्तिपूतं हस्ताभ्यां मंजनदोहनादिभिः शोधितं सोमं भरत। उत्तरवेदिं प्रति हरत। ततो यज्यवो यागं कुर्वाणा हे अध्वर्यव आहृतं सोममिंद्राय जुहोत। जुहुत। अग्नौ प्रक्षिपत॥

अध्वर्यवः कर्तना श्रुष्टिमस्मै वने निपूतं वन उन्नयध्वं।
जुषाणो हस्त्यमभि वावशे व इंद्राय सोमं मदिरं जुहोत ॥ ९॥
अध्वर्यवः। कर्तन। श्रुष्टिं। अस्मै। वने। निऽपूतं। वने। उत्। नयध्वं।
जुषाणः। हस्त्यं। अभि। वावशे। वः। इंद्राय। सोमं। मदिरं। जुहोत ॥ ९॥

हे अध्वर्यवः अस्मा इंद्राय सोमं श्रुष्टिं सुखकरं कर्तन। कुरुत॥ करोतेर्लोटि बहुलं छंदसीति विकरणस्य लुक्। तप्तनप्तनथनाश्चेति तनबादेशः। आमंत्रितस्याविद्यमानत्वान्न निघातः॥ किंच वने संभजनीये वस उदके निपूतमाप्यायनेन शोधितं सोममुन्नयध्वं। ऊर्ध्वं नयत। यद्वा वने तद्विकारे चमसे निपूतं दशापवित्रेण शोधितं सोमं वने चमस उन्नयध्वं। जुषाणः प्रीयमाणः स इंद्रो वो युष्माकं हस्त्यं हस्ताभ्यामभिपूतं सोममभिवावशे। कामयते॥ वश कांतौ। यङ्लुगंतस्य लिटि व्यत्ययेनात्मनेपदं। लोपस्त आत्मनेपदेष्विति तलोपः॥ मदिरं मदकरमिमं सोममिंद्राय जुहोत। इंद्रोद्देशेनाग्नौ प्रक्षिपत॥

अध्वर्यवः पयसोधर्यथा गोः सोमेभिरीं पृणता भोजमिंद्रं।
वेदाहमस्य निभृतं म एतद्दित्संतं भूयो यजतश्चिकेत ॥ १०॥
अध्वर्यवः। पयसा। ऊधः। यथा। गोः। सोमेभिः। ईं। पृणत। भोजं। इंद्रं।
वेद। अहं। अस्य। निऽभृतं। मे। एतत्। दित्संतं। भूयः। यजतः। चिकेत ॥ १०॥

हे अध्वर्यवः यथा गोरूधः पयसा पूर्णं तद्वदीमेनं भोजं फलस्य दातारं रक्षितारं चेंद्रं सोमेभिः सोमैः पृणत। पूरयत। मे मदीयस्य सोमस्य निभृतं गूढं सुखसाधनस्वभावमहमेव वेद। जानामि। इति पूर्वं न परस्मै कथितं। तथापि युष्मभ्यं ब्रवीमीत्येवं। दित्संतं सोमं दातुमिच्छंतं यजमानं यजतो यष्टव्य इंद्रो भूयो

ऽतिशयेन चिकेत ॥ दित्संतं । डुदाञ् दाने । इच्छायां सन् । सनि मीमाघुरित्याकारस्य इसादेशः । अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः । सः स्यार्धधातुक इति सकारस्य तत्वं ॥

अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा ।
तमूर्दरं न पृणता यवेनेंद्रं सोमेभिस्तदपो वो अस्तु ॥११॥
अध्वर्यवः । यः । दिव्यस्य । वस्वः । यः । पार्थिवस्य । क्षम्यस्य । राजा ।
तं । ऊर्दरं । न । पृणत । यवेन । इंद्रं । सोमेभिः । तत् । अपः । वः । अस्तु ॥११॥

हे अध्वर्यवः य इंद्रो दिव्यस्य द्युलोकार्हस्य वस्वो वसुनो राजा भवति । यश्च पार्थिवस्य । पृथिवीशब्देन विस्तीर्णमंतरिक्षमुच्यते । तत्रत्यं धनं पार्थिवं । तस्य राजा । यश्च क्षम्यस्य । क्षमा भूमिः । तत्रत्यं धनं क्षम्यं । तस्य च राजा भवति । तमेवंविधमिंद्रं सोमेभिः सोमैः पृणत । पूरयत । तत्र दृष्टांतः । ऊर्दरं न । ऊर्ध्वं दीर्णमूर्दरं कुसूलं । यथा यवेन तत्पूर्णं तद्वदिंद्रं पूरयतेति । तादृशं सोमादिनेंद्रोदरपूरणलक्षणमपः कर्म वो युष्माकमस्तु ॥

अस्मभ्यं तद्वसो दानाय राधः समर्थयस्व बहु ते वसव्यं ।
इंद्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवीराः ॥१२॥
अस्मभ्यं । तत् । वसो इति । दानाय । राधः । सं । अर्थयस्व । बहु । ते । वसव्यं ।
इंद्र । यत् । चित्रं । श्रवस्याः । अनु । द्यून् । बृहत् । वदेम । विदथे । सुऽवीराः ॥१२॥

एषा ऋग्व्याख्याता ॥ ॥१४॥

प्र घा न्वस्येति दशर्चं चतुर्थं सूक्तं गार्त्समदं त्रैष्टुभमैंद्रं । अत्रानुक्रमणिका प्र घ दशेति ॥ दशरात्रे षष्ठेऽहनि निष्केवल्ये त्रीणि सूक्तानि । तत्रेदं द्वितीयं । षष्ठस्येति खंडे सूत्रितं । ऐंद्र याह्युप नः प्र घा न्वस्याभूरेक इति निष्केवल्यं । आ० ८. ९. । इति ॥ त्र्यकमासके निष्केवल्ये प्र घा न्वस्येत्येषा सूक्तमुखीया । उशनःस्तोमे सूत्रितं । अर्यमा मनुषो देवताता प्र घा न्वस्य महतो महानि । आ० ९. ५. । इति ॥

प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचं ।
त्रिकद्रुकेष्वपिबत्सुतस्यास्य मदे अहिमिंद्रो जघान ॥१॥
प्र । घ । नु । अस्य । महतः । महानि । सत्या । सत्यस्य । करणानि । वोचं ।
त्रिऽकद्रुकेषु । अपिबत् । सुतस्य । अस्य । मदे । अहिं । इंद्रः । जघान ॥१॥

गृत्समदो ब्रूते । महतो बलवतः सत्यस्य सत्यसंकल्पस्यास्येंद्रस्य सत्यानि यथार्थानि महानि महांति करणान्यस्मिन् सूक्ते वक्ष्यमाणानि कर्माणि नु अद्य प्रवोचं । प्रकर्षेण ब्रवीमि ॥ वच परिभाषणे । छंदसि लुङ्लङ्लिट इति वर्तमाने लुङि अस्यतिवक्तिख्यातिभ्योऽङ् । वच उम ॥ घेति प्रसिद्धौ । कानि तानि उच्यंते । त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येवंरूपेष्वाभिप्लविकेष्वहःसु सुतस्याभिषुतं सोममिंद्रोऽपिबत् । ततः पीतस्यास्य सोमस्य मदे हर्षे संजाते सतींद्रोऽहिं वृत्रमसुरं जघान । हतवान् ॥

अवंशे द्यामस्तभायद्बृहंतमा रोदसी अपृणदंतरिक्षं ।
स धारयत्पृथिवीं पप्रथच्च सोमस्य ता मद इंद्रश्चकार ॥२॥

अवंशे। द्यां। अस्तभायत्। बृहंतं। आ। रोदंसी इति। अपृणत्। अंतरिक्षं।
सः। धारयत्। पृथिवीं। पप्रथत्। च। सोमंस्य। ता। मदें। इंद्रः। चकार ॥२॥

अवंशे आकाशे द्यां द्योतमानं सूर्यं द्युलोकं वास्तभायत। इंद्रोऽस्तभ्नात। अनवलंबनस्य तस्यावस्थापनम करोदित्यर्थः ॥ स्तंभु इति सौत्रो धातुः क्र्यादिः। लङि व्यत्ययो बहुलमित्यहावपि शायजादेशः ॥ बृहंत महदंतरिक्षं रोदसी द्यावापृथिव्यौ चापृणत। स्वतेजसा पूरितवान। किंच स इंद्रः पृथिवीं विस्तीर्णां भूमिं धारयत। अधारयत। तथा पप्रथच्च। एनां भूमिमप्रथयत ॥ प्रथ प्रख्याने। ण्यंतस्य लुङि चङि रूपं। चङ्यन्यतरस्यामिति मध्योदात्तत्व ॥ सोमस्य मदे हर्षे संजाते सति तानीमानि कर्माणीद्रश्चकार ॥

सद्मेव प्राचो वि मिंमाय मानैर्वज्रेण खान्यंतृणन्नदीनां।
वृथांसृजत्पथिभिर्दीर्घयाथैः सोमंस्य ता मद इंद्रश्चकार ॥३॥
सद्मंऽइव। प्राचंः। वि। मिंमाय। मानैः। वज्रेण। खानिं। अतृणत्। नदीनां।
वृथा। असृजत्। पथिऽभिः। दीर्घऽयाथैः। सोमंस्य। ता। मदें। इंद्रः। चकार ॥३॥

सद्मेव यथा यज्ञगृहान्मानैः षट्त्रिंशत्प्रक्रमप्राचीत्येवंरूपैः परिमाणैः प्राक्प्रवणान कुर्वंति तद्वत सिंधुन लोकान्वानृजून्वा मानैः परिमाणैः प्राचः प्राङ्मुखान्विममाय। इंद्रो विशेषेण निर्मितवान। तथा नदीनां खानि निर्गमनद्वाराणि वज्रेण चातृणत। अखनत ॥ तृदिर् हिंसानादरयोः। रुधादि। लङ् ॥ तथा च मंत्रः। इंद्रो अस्माँ अरदद्वज्रबाहुः। ३. ३३. ६। इति। तथा दीर्घयाथैर्बहुकालं गतव्यैः पथिभिर्मार्गैर्वृथासृजत। अनायासेन ता नदीः सृष्टवान। सोमस्येति सिद्धार्थ इति ॥

स प्रवोळ्हॄन्परिगत्यां दभीतेर्विश्वंमधागायुंधमिद्धे अग्नौ।
सं गोभिरश्वैरसृजद्रथेभिः सोमंस्य ता मद इंद्रश्चकार ॥४॥
सः। प्रऽवोळ्हॄन। परिऽगत्यं। दभीतेः। विश्वं। अधाक्। आयुधं। इद्धे। अग्नौ।
सं। गोभिः। अश्वैः। असृजत्। रथेभिः। सोमंस्य। ता। मदें। इंद्रः। चकार ॥४॥

प्राक्किल चुमुरिधुनिप्रभृतयोऽसुरा दभीतेः पुरं संरुध्य परिगृह्य तस्मात्पुरान्निरगुरिति कथा। स इंद्रो दभीतेः। दभीतिर्नाम कश्चिद्राजर्षिः। तस्य प्रवोळ्हॄन प्रवोढॄन ॥ सहिवहोरोदवर्णस्येत्योत्वं ॥ प्रकर्षेण तं दभीतिं वहतस्तानसुरान मध्ये मार्गे परिगत्य तेषां विश्वं सर्वमायुधमिद्धेऽग्नौ दीप्यमाने वह्नावधाक। अधाक्षीत ॥ दहेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक ॥ पश्चात्तं दभीतिं गोभिरश्वै रथेभी रथैश्च समसृजत। संयोजितवान। सोमस्यादि सिद्धमिति ॥

अतिमूर्तिनाम्न्येकाहे मरुत्वतीये सूक्तमुखीया। अतिमूर्तिनेति खंडे सूचित। स ईं महीं धुनिमेतोररम्णात। आ॰ ९. ८.। इति ॥

स ईं महीं धुनिमेतोररम्णात्सो अस्नातॄनंपारयत्स्वस्ति।
त उत्स्नायं रयिमभि प्र तंस्थुः सोमंस्य ता मद इंद्रश्चकार ॥५॥
सः। ईं। महीं। धुनिं। एतोः। अरम्णात्। सः। अस्नातॄन। अपारयत्। स्वस्ति।
ते। उत्ऽस्नायं। रयिं। अभि। प्र। तस्थुः। सोमंस्य। ता। मदें। इंद्रः। चकार ॥५॥

स इंद्र ईमिमां महीं महतीं धुनिं। धुनोति स्तोतॄणां पापानीति धुनिः परुष्णी नदी। तामेतोः॥ ईश्वरपदार्थसंनिधानेऽपि तोसुन्प्रत्ययः। पा० ३ ४. १३.॥ ऋषीणां गमनार्थमरम्णात्। उपाशमयत्। महाजलां नदीमल्पोदकामकरोदित्यर्थः। ततः स इंद्रोऽस्नातॄन् स्नातुमशक्तान् तरणासमर्थानृषीन् स्वस्ति क्षेमेणापारयत्। ते महर्षय उत्स्नाय तां नदीमुत्तीर्य यं रयिमर्पच्य गच्छंति तं रयिमभिलक्ष्य प्रतस्थुः। प्रतस्थिरे। शिष्टं सिद्धं॥ ॥१५॥

सोदंचं सिंधुमरिणान्महित्वा वज्रेणान उषसः सं पिपेष।
अजवसो जविनीभिर्विवृश्चन्त्सोमस्य ता मद इंद्रश्चकार ॥६॥
सः। उदंचं। सिंधुं। अरिणात्। महिऽत्वा। वज्रेण। अनः। उषसः। सं। पिपेष।
अजवसः। जविनीभिः। विऽवृश्चन्। सोमस्य। ता। मदे। इंद्रः। चकार ॥६॥

स इंद्रः सिंधुं प्रांचं संतं महित्वा स्वकीयेन महिम्नोदंचमरिणात्। उदङ्मुखमकरोत्॥ सिंधुशब्दश्छंदसि पुल्लिंगः॥ उषस उषोदेव्या अनः शकटं वज्रेण संपिपेष। चूर्णीचकार। एतच्च दिवश्चिद्घा दुहितरं।४ ३० ९.। इत्यत्र स्पष्टं वक्ष्यते। किं कुर्वन्। अजवसो जवहीना दुर्बलाः सेना जविनीभिर्जवयुक्ताभिः सेनाभिर्विवृश्चन्। विशेषेण भिंदन्। पिपेषेति समन्वयः॥ ओव्रश्चू छेदने। शतरि ग्रहिज्यादिना संप्रसारणं। शिष्टं स्पष्टं॥

स विद्वाँ अपगोहं कनीनामाविर्भवन्नुदतिष्ठत्परावृक्।
प्रति श्रोणः स्थाद्व्यनगचष्ट सोमस्य ता मद इंद्रश्चकार ॥७॥
सः। विद्वान्। अपऽगोहं। कनीनां। आविः। भवन्। उत्। अतिष्ठत्। पराऽवृक्।
प्रति। श्रोणः। स्थात्। वि। अनक्। अचष्ट। सोमस्य। ता। मदे। इंद्रः। चकार ॥७॥

पुरा किल कन्यकाश्चक्षुर्हीनं पादहीनं परावृजं जिघृक्षुमृषिं दृष्ट्वाभिदुद्रुवुः। ततः स ऋषिरिंद्रं स्तुत्वा चक्षुः पादं च लेभे। तदेतदाह। कनीनां कन्यकानामपगोहमपगोहनं तिरोभावं विद्वान् परावृगृषिराविर्भवन् सर्वेषां प्रत्यक्षो भवन् उदतिष्ठत्। श्रोणः पूर्वं पंगुरिदानीमिंद्रस्य प्रसादाद्विभग्नजानुस्ताः कन्याः प्रति स्थात्। पूर्वमंधोऽधुना चक्षुर्लाभाद्व्यचष्ट। ताः कन्यका विशेषेण पश्यति स्म। तानीमानि कर्माणि स इंद्रश्चकार॥

भिनद्वलमंगिरोभिर्गृणानो वि पर्वतस्य दृंहितान्यैरत्।
रिणग्रोधांसि कृत्रिमाण्येषां सोमस्य ता मद इंद्रश्चकार ॥८॥
भिनत्। वलं। अंगिरःऽभिः। गृणानः। वि। पर्वतस्य। दृंहितानि। ऐरत्।
रिणक्। रोधांसि। कृत्रिमाणि। एषां। सोमस्य। ता। मदे। इंद्रः। चकार ॥८॥

अंगिरोभिर्गृणानः स्तूयमानः स इंद्रो वलं वलनामकमसुरं भिनत्। अभिनत्। तथा गवां निरोधकस्य पर्वतस्य दृंहितानि शिलाभिर्दृढीकृतानि द्वाराणि व्यैरत्। उद्घाटितवान्। तदेवाह। एषां पर्वतानां कृत्रिमाणि क्रियया निर्वृत्तानि रोधांसि निरुद्धानि द्वाराणि रिणक्। उदघाटयत्। गतमन्यत्॥

आतिमर्तिनाम्न्येकाह निष्केवल्ये सूक्तमुखीया स्वप्नेनेत्येषा। सूत्रितं। स्वप्नेनाभ्युप्या चुमुरिं धुनिं चेति सूक्तमुखीया। आ० ९. ८। इति॥

स्वप्नेनाभ्युप्या चुमुरिं धुनिं च जघंथ दस्युं प्र दभीतिमावः।
रंभी चिदत्र विविदे हिरण्यं सोमस्य ता मद इंद्रश्चकार ॥९॥
स्वप्नेन। अभिऽउप्य। चुमुरिं। धुनिं। च। जघंथ। दस्युं। प्र। दभीतिं। आवः।
रंभी। चित्। अत्र। विविदे। हिरण्यं। सोमस्य। ता। मदे। इंद्रः। चकार ॥९॥

स त्वं दस्युं सर्वस्योपक्षपयितारं चुमुरिं धुनिं च एतन्नामानावसुरौ स्वप्नेन दीर्घनिद्रयाभ्युष्य सद्योऽप्यवधीः। हतवानसि। ततस्ताभ्यां युध्यमानं दभीतिं राजर्षिं प्रावः। रक्षितवानसि। तथा च मंत्रवर्णः। त्वं नि दस्युं चुमुरिं धुनिं चास्वापयो दभीतये सुहंतु। ७ १९ ४। इति॥ आवः। अवतेः रक्षणार्थस्य लङि सिपि रूपं॥ दभीतिश्च वेत्रधारी चास्य दौवारिकोऽत्रास्मिन्युद्धे तयोरसुरयोर्हिरण्यं धनं विविदे। लेभे॥ विद्लृ लाभे स्वरितेत्। एतानीमानि कर्माणि सोमस्य मदे सति चकारेति॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिंद्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः॥१०॥
नूनं। सा। ते। प्रति। वरं। जरित्रे। दुहीयत्। इंद्र। दक्षिणा। मघोनी।
शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्। भगः। नः। बृहत्। वदेम। विदथे। सुवीराः॥१०॥

एषा व्याख्याता॥ ॥१६॥

प्र वः सतामिति नवर्चं पंचमं सूक्तं गार्त्समदमैंद्रं। अत्रानुक्रमणिका। प्र वो नवाद्या त्रिष्टुबिति। नवमी त्रिष्टुप् शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः॥ तृतीये पर्याये ऽच्छावाकशस्त्रे प्र वः सतामिति सूक्तं। अतिरात्र इति खंडे सूत्रितं। प्र वः सतां प्रो द्रोणे हरयः कर्मागमन्निति याज्या। आ° ६. ४। इति॥

प्र वः सतां ज्येष्ठतमाय सुष्टुतिमग्नाविव समिधाने हविर्भरे।
इंद्रमजुर्यं जरयंतमुक्षितं सनाद्युवानमवसे हवामहे॥१॥
प्र। वः। सतां। ज्येष्ठऽतमाय। सुऽस्तुतिं। अग्नौऽइव। संऽइधाने। हविः। भर।
इंद्रं। अजुर्यं। जरयंतं। उक्षितं। सनात्। युवानं। अवसे। हवामहे॥१॥

गृत्समदो ब्रूते। हे यजमाना वो युष्मदर्थं सतां महतां देवानां ज्येष्ठतमायातिशयेन श्रेष्ठायेंद्राय तदर्थं। अग्नाविव समिधाने। इवशब्द एवार्थः। दीप्यमान एवाग्नौ हविः प्रभरे। संपादयामि। ततः परं सुष्टुतिं शोभनां स्तुतिं करोमि॥ भर इति भृञ् भरणे जित्त्वादुभयपदी। लटि रूपं॥ अजुर्यमजरणीयं जरयंतं सर्वमन्यज्जरयंतमुक्षितं सोमेन सिक्तं सनात्सनातनं युवानं नित्यतरुणं तादृशमिंद्रमवसेऽस्माकं रक्षणाय तस्य तर्पणाय वा हवामहे। आह्वयामः॥

यस्मादिंद्राद्बृहतः किं चनेमृते विश्वान्यस्मिन्त्संभृताधि वीर्या।
जठरे सोमं तन्वी३ सहो महो हस्ते वज्रं भरति शीर्षणि क्रतुं॥२॥
यस्मात्। इंद्रात्। बृहतः। किं। चन। ईं। ऋते। विश्वानि। अस्मिन्। संऽभृता। अधि। वीर्या।
जठरे। सोमं। तन्वि। सहः। महः। हस्ते। वज्रं। भरति। शीर्षणि। क्रतुं॥२॥

बृहतो महतो यस्मादिंद्रादृते किमपीमिदं जगच्चन। नास्तीत्यर्थः॥ चेति नेति निपातद्वयसमुदायश्चनेति। चेति चिदित्यर्थे नेति निषेधार्थे। एकपदं तु सांप्रदायिकं॥ उक्तार्थे मंत्रः। मद्रादृते पवते धाम किं चनेति। यद्वा इंद्रादृते ईमिदं जगत् किं। न किंचिदपि भवतीत्यर्थः। कुत एतत् तदुच्यते। अस्मिन्निंद्रे विश्वानि सर्वाणि वीर्याणि सामर्थ्यान्यधि संभृता। अधिकं संभृतान्यासन्। यश्चेंद्रो जठरे सोदरे सोममभिषुतं सोमरसं भरति। बिभर्ति। किंच तन्वि तन्वां स्वकीये सर्वस्मिन् शरीरे महो बहु सहस्तेजश्च बिभर्ति। हस्ते वज्रमायुधं बिभर्ति। शीर्षणि शिरसि क्रतुं विज्ञानं भरति। बिभर्ति॥ यद्वृत्तयोगादनिघातः। वाक्यभेदाद्वा निघाताभावः। शीर्षणि। शीर्षन् छंदसीति॥

न क्षोणीभ्यां परिभ्वे त इंद्रियं न समुद्रैः पर्वतैरिंद्र ते रथः।
न ते वज्रमन्वश्नोति कश्चन यदाशुभिः पतसि योजना पुरु ॥३॥
न। क्षोणीभ्यां। परिऽभ्वे। ते। इंद्रियं। न। समुद्रैः। पर्वतैः। इंद्र। ते। रथः।
न। ते। वज्रं। अनु। अश्नोति। कः। चन। यत्। आशुऽभिः। पतसि। योजना। पुरु॥३॥

हे इंद्र ते तवेंद्रियं बलं क्षोणीभ्यां द्यावापृथिवीभ्यां न परिभ्वे। न परिभवनीयं ॥ कृत्यार्थे तवैकेन्केन्यत्वन इति केन्प्रत्ययः। उदात्तस्वरितयोरिति स्वरितत्वं ॥ किंच ते रथः समुद्रैः पर्वतैश्च न परिभवनीयः। ते वज्रमायुध कश्चन पुमान नान्वश्नोति। न व्याप्नोति परिभवितुं ॥ अशू व्याप्तौ। व्यत्ययेन परस्मैपदं ॥ यद्यदासुरवधार्थं दिग्विजयकाले पुरु पुरूणि बहूनि योजना योजनानि पतसि। गच्छसि। तदा तव बलादि न परिभवनीयमिति समन्वयः ॥

विश्वे ह्यस्मै यजताय धृष्णवे क्रतुं भरंति वृषभाय सश्चते।
वृषा यजस्व हविषा विदुष्टरः पिबेंद्र सोमं वृषभेण भानुना ॥४॥
विश्वे। हि। अस्मै। यजताय। धृष्णवे। क्रतुं। भरंति। वृषभाय। सश्चते।
वृषा। यजस्व। हविषा। विदुःऽतरः। पिब। इंद्र। सोमं। वृषभेण। भानुना ॥४॥

हे यजमान विश्वे सर्वे जना यजताय सर्वैर्यजनीयाय धृष्णवे शत्रूणां धर्षणशीलाय वृषभाय कामानां वर्षित्रे सश्चते सज्जमानाय स्तुत्यादिकर्मवत्सु स्तोतृषु एतादृशायेंद्राय क्रतुं यज्ञादिलक्षणं कर्म भरंति हि। हरंति खलु। प्रणयंतीत्यर्थः ॥ भरंति। हियोगादनिघातः ॥ यस्मादेवं तस्माद्वृषा सोमरससेचनसमर्थो विदुष्टरः ॥ विद्वच्छब्दात्तरपि छांदसं संप्रसारणं। शासिवसिघसीनां चेति संहितायां षत्वं ॥ विद्वत्तरस्त्वं हविषा तमिंद्रं यजस्व। इदानीमिंद्रं संबोध्याह। हे इंद्र वृषभेण कामानां वर्षकेण भानुना दीप्यमानेनाग्निना सह सोमं पिब ॥

वृष्णः कोशः पवते मध्व ऊर्मिर्वृषभान्नाय वृषभाय पातवे।
वृषणाध्वर्यू वृषभासो अद्रयो वृषणं सोमं वृषभाय सुष्वति ॥५॥
वृष्णः। कोशः। पवते। मध्वः। ऊर्मिः। वृषभऽअन्नाय। वृषभाय। पातवे।
वृषणा। अध्वर्यू इति। वृषभासः। अद्रयः। वृषणं। सोमं। वृषभाय। सुस्वति ॥५॥

हे इंद्र वृष्णः फलस्य वर्षितुर्मध्वो मदकरस्य सोमस्य कोशो रस ऊर्मिरनुष्ठातॄणां पातॄणां च प्रेरकः सन पवते। गच्छति ॥ पव गतौ। अनुदात्तेत ॥ किमर्थं। वृषभान्नाय। बलवर्षकाण्यन्नानि यस्य स तथोक्तः। तादृशाय वृषभाय कामानां वर्षित्र इंद्राय पातवे। पानार्थं पवत इति समन्वयः। किंच वृषणा सोमरससेचनसमर्थावध्वर्यू अध्वर्युप्रतिप्रस्थातारौ वृषभासो वर्षका अद्रयोऽभिषवग्रावाणश्च वृषणं स्वर्गादिफलस्य सेक्तारं सोमं वृषभाय देवानां श्रेष्ठाय तुभ्यं सुष्वति। सुन्वंति ॥ सुनोतेर्लटि बहुलं छंदसीति विकरणस्य श्लुः। अदभ्यस्तादिति झोऽदादेशः ॥ ॥१७॥

वृषा ते वज्र उत ते वृषा रथो वृषणा हरी वृषभाण्यायुधा।
वृष्णो मदस्य वृषभ त्वमीशिष इंद्र सोमस्य वृषभस्य तृष्णुहि ॥६॥
वृषा। ते। वज्रः। उत। ते। वृषा। रथः। वृषणा। हरी इति। वृषभाणि। आयुधा।
वृष्णः। मदस्य। वृषभ। त्वं। ईशिषे। इंद्र। सोमस्य। वृषभस्य। तृष्णुहि ॥६॥

वृषभ कामानां वर्षक हे इंद्र ते तव वज्रो वृषा कामवर्षकः । तथा ते रथोऽपि वृषा । ते हरी एतन्नामकावश्वौ वृषणा वर्षकौ । तवायुधा वज्रव्यतिरिक्तान्यायुधान्यपि वृषभाणि । वृष्णो वर्षकस्य मदस्य मदकरस्य सोमस्य त्वमीशिषे । स्वामी भवसि । हे इंद्र वृषभस्य वर्षकेण सोमस्य सोमेन तृप्णुहि । तृप्तो भव ॥ तृप प्रीणने स्वादिः ॥ क्षुभ्नादिषु । पा० ८. ४. ३९ । नृमनतृप्नोतीति पठित । तथापि सर्वविधीनां छंदसि विकल्पितत्वादत्र णत्वप्रतिषेधो न भवति ॥

प्र ते नावं न समने वचस्युवं ब्रह्मणा यामि सवनेषु दाधृषिः ।
कुविन्नो अस्य वचसो निबोधिषदिंद्रमुत्सं न वसुनः सिचामहे ॥७॥
प्र । ते । नावं । न । समने । वचस्युवं । ब्रह्मणा । यामि । सवनेषु । दधृषिः ।
कुवित् । नः । अस्य । वचसः । निऽबोधिषत् । इंद्रं । उत्सं । न । वसुनः । सिचामहे ॥७॥

दाधृषिस्त्वत्प्रसादाच्छत्रूणां धर्षकोऽहं समने संग्रामे वचस्युव ॥ अमि तन्वादित्वादुवङादेशः ॥ स्तोत्रमिच्छंतं नावं न नावमिवापद्भ्यस्तारकं ते त्वा सवनेषु त्रिषु ब्रह्मणा स्तोत्रेण प्रयामि । प्राप्नोमि । किंच अस्य वचसः । स्तुतिलक्षणमेतद्वाक्यं । कुविद्बहु निबोधिषत । इंद्रो नितरां बुध्यता ॥ बुध अवगमने । लेटि सिब्बहुलमिति सिप । कुविद्योगादनिघातः । तिङि चोदात्तवतीति गतेर्निघातः ॥ वयं चोत्सं न जलस्य निधानभूतं कूपमिव वसुनो निधानभूतमिंद्रं सिचामहे । सोमेन सिंचामः ॥ सिचिर क्षरणे स्वरितेत । आगमानुशासनस्यानित्यत्वान्नुमभावः ॥

पुरा संबाधादभ्या ववृत्स्व नो धेनुर्न वत्सं यवसस्य पिप्युषी ।
सकृत्सु ते सुमतिभिः शतक्रतो सं पत्नीभिर्न वृषणो नसीमहि ॥८॥
पुरा । संऽबाधात् । अभि । आ । ववृत्स्व । नः । धेनुः । न । वत्सं । यवसस्य । पिप्युषी ।
सकृत् । सु । ते । सुमतिऽभिः । शतक्रतो इति शतऽक्रतो । सं । पत्नीभिः । न ।
वृषणः । नसीमहि ॥८॥

हे इंद्र संबाधात शत्रुजन्यात्सबाधात पुरा नोऽस्मानभ्याववृत्स्व । आवर्तय । यथा संबाधोऽस्मान न स्पृशति तथा कुर्वित्यर्थः । तत्र दृष्टांतः । धेनुर्न वत्सं । यथा यवसस्य घासेन पिप्युष्याप्यायिता धेनुर्वत्सं शुद्धाधात्परावर्तयति तद्वत । हे शतक्रतो वयं सुमतिभिस्त्वद्विषयैः शोभनैः स्तोत्रैः सकृत सकृदपि सु नसीमहि । सुष्ठु व्याप्नुमहि । तत्र दृष्टांतः । वृषणो न । सेक्तारो युवानो यथा पत्नीभिर्व्याप्यंते तद्वत ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिंद्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥
नूनं । सा । ते । प्रति । वरं । जरित्रे । दुहीयत् । इंद्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुवीराः ॥९॥

नूनं सा त इति व्याख्याता ॥ ॥१८॥

तदस्मा इति नवर्चं षष्ठं सूक्तं गार्त्समदमैंद्रं । अत्रानुक्रमणिका । तदस्मै त्रिर्जगत्यंतमिति । अंत्ये द्वे त्रिष्टुभौ शिष्टाः सप्त जगत्यः ॥ अतिरात्रे द्वितीये पर्यायेऽच्छावाकशस्त्रे तदस्मा इति सूक्तं । अतिरात्रे पर्यायाणामिति खंडे सूचितं । तदस्मै नव्यमस्य पिब यस्य जघान इंद्रेति याज्या । आ० ६. ४. । इति ॥

तदस्मै नव्यमंगिरस्वदर्चत शुष्मा यदस्य प्रत्नथोदीरते ।
विश्वा यद्गोत्रा सहसा परीवृता मदे सोमस्य दृंहितान्यैरयत् ॥१

तत् । अस्मै । नव्यं । अंगिरस्वत् । अर्चत । शुष्माः । यत् । अस्य । प्रत्नऽथा । उत्ऽईरते ।
विश्वा । यत् । गोत्रा । सहसा । परिऽवृता । मदे । सोमस्य । दृंहितानि । ऐरयत् ॥१॥

गृत्समदो ब्रूते । हे स्तोतारः नव्यं नवतरमन्येष्वदृष्टपूर्वं तत्तादृशं स्तोत्रमंगिरस्वदंगिरस इवास्मा. इंद्रायार्चत । ब्रूत । यद्यस्माज्जातमात्रस्यास्येंद्रस्य शुष्माः शत्रूणां शोषकाणि तेजांसि प्रत्नथा ॥ प्रत्नपूर्वविश्वेमात्थाल् छंदसीतीवार्थे थाल्प्रत्ययः ॥ प्रत्नानि पुरातनानीवोदीरते । उद्गच्छंति ॥ ईर गतौ अनुदात्तेत् । तिङि चोदात्तवतीति गतेर्निघातः ॥ यद्यस्माच्च विश्वा सर्वान् गोत्रा मेघान् । गा उदकानि त्रायंते रक्षंतीति गोत्रा मेघाः । परीवृता वृत्रेणाक्रांतान् ॥ सर्वत्र सुपां सुलुगिति डादेशः ॥ तान् दृंहितानि तेन दृढीकृतान् मेघान् सोमस्य मदे हर्षे संजाते सति सहसा बलेनैरयत । उदघाटयत् । मेघभेदनेनापः प्रेरयामासेत्यर्थः । यद्वा विश्वा सर्वाणि परीवृता वलासुरेणाक्रांतानि दृंहितानि पर्वतबिले निरुद्धानि गोत्रा ॥ इनित्रकट्यचश्चेति समूहार्थे त्रप्रत्ययः ॥ गवां वृंदानि सहसैरयत । तस्माद्बिलान्निरगमयत । तस्मादर्चतेति समन्वयः ॥ ऐरयत् । ईर गतौ । ण्यंतस्य लङि रूपं । यद्वृत्तयोगादनिघातः ॥

स भूतु यो ह प्रथमाय धायस ओजो मिमानो महिमानमातिरत् ।
शूरो यो युत्सु तन्वं परिव्यत शीर्षणि द्यां महिना प्रत्यमुंचत ॥२॥

सः । भूतु । यः । ह । प्रथमाय । धायसे । ओजः । मिमानः । महिमानं । आ । अतिरत् ।
शूरः । यः । युत्ऽसु । तन्वं । परिऽव्यत । शीर्षणि । द्यां । महिना । प्रति । अमुंचत ॥२॥

स इंद्रो भूतु । भवतु । वर्धतामित्यर्थः । य इंद्र ओजस्तेजो बलं मिमानः कुर्वाणः सन् प्रथमाय प्राथमिकाय धायसे ॥ धेट् पाने ॥ सोमपानाय महिमानमातिरत । अवर्धयत ॥ तिरतेर्व्यत्ययेन शः । यद्योगादनिघातः ॥ शूरः शत्रूणां शातयिता य इंद्रो युत्सु युद्धेषु तन्वं स्वकीयं शरीरं परिव्यत । कर्मणा परिवीतमकरोत् । स इंद्रो महिना स्वकीयेन महिम्ना शीर्षणि स्वशिरसि द्यां प्रत्यमुंचत । अधारयत ॥

अधाकृणोः प्रथमं वीर्यं महद्यदस्याग्रे ब्रह्मणा शुष्ममैरयः ।
रथेष्ठेन हर्यश्वेन विच्युताः प्र जीरयः सिस्रते सध्र्यक् पृथक् ॥३॥

अध । अकृणोः । प्रथमं । वीर्यं । महत् । यत् । अस्य । अग्रे । ब्रह्मणा । शुष्मं । ऐरयः ।
रथेऽस्थेन । हरिऽअश्वेन । विऽच्युताः । प्र । जीरयः । सिस्रते । सध्र्यक् । पृथक् ॥३॥

अध अपि च हे इंद्र त्वं प्रथमं मुख्यं तद्वीर्यं सामर्थ्यमकृणोः । अकरोः । किं तत् । ब्रह्मणा स्तोत्रेण स्तुतिसाधनभूतेन वेदवाक्येनास्य वीर्यस्य स्तोतुर्जनस्याग्रे पुरतो यच्छुष्मं शत्रूणां शोषकं बलमैरयः । उदगमयः । जीरयो जरयितारो बाधका असुरा रथेष्ठेन रथस्थितेन हर्यश्वेन त्वया विच्युताः स्वस्थानाच्च्याविताः संतः सध्र्यक् सध्रीचीनाः परस्परं संगताः पृथक् भीत्या वियुक्ताः संतः प्रसिस्रते । प्रकर्षेण धावंति ॥ सृ गतौ । जुहोत्यादिः । बहुलं छंदसीत्यभ्यासस्येत्वं ॥ सध्र्यगिति सहस्य सध्रिरिति सध्र्यादेशः । अद्रिसध्र्योरंतोदात्तत्वेन निपातनादुदात्तस्वरितयोरिति यणः स्वरितत्वं ॥

अधा यो विश्वा भुवनाभि मज्मनेशानकृत्प्रवया अभ्यवर्धत ।
आद्रोदसी ज्योतिषा वह्निरातनोत्सीव्यन्तमांसि दुधिता समव्ययत् ॥४॥

अध। यः। विश्वा। भुवना। अभि। मज्मना। ईशानऽकृत्। प्रऽवयाः। अभि। अवर्धत।
आत्। रोदसी इति। ज्योतिषा। वह्निः। आ। अतनोत्। सीव्यन्। तमांसि। दुधिता।
सं। अव्ययत् ॥४॥

अध अपि च प्रवयाः प्रवृद्धान्नः पुरातनो वा य इंद्रो विश्वा भुवना सर्वान् लोकान् मज्मना बलेनाभि भूयेशानकृत् आत्मानं सर्वस्याधिपतिं कुर्वन्। यद्वा अग्न्यादीन्देवान् तत्तल्लोकाधिपतीन्कुर्वन् अभ्यवर्धत। सर्वतः प्रवृद्धोऽभवत। आदनंतरं वह्निर्जगतां वोढा स इंद्रो ज्योतिषा स्वीयेन तेजसा रोदसी द्यावापृथिव्यावातनोत। व्याप्नोत। किंच तमांसि तमोरूपाणि रक्षांसि दुधिता दुःस्थितानि दुर्गतानि सीव्यन् विस्तारयन् समव्ययत। आवृणोत्। जगद्व्याप्य वर्तत इत्यर्थः ॥

स प्राचीनान्पर्वतान्दृंहदोजसाधराचीनमकृणोदपामपः।
अधारयत्पृथिवीं विश्वधायसमस्तभ्नान्मायया द्यामवस्रसः ॥५॥

सः। प्राचीनान्। पर्वतान्। दृंहत्। ओजसा। अधराचीनं। अकृणोत्। अपां। अपः।
अधारयत्। पृथिवीं। विश्वऽधायसं। अस्तभ्नात्। मायया। द्यां। अवऽस्रसः ॥५॥

स इंद्रः प्राचीनान् इतस्ततः प्रकर्षेणांचतो गच्छतः सपक्षान् पर्वतान् ओजसा बलेन दृंहत्। पक्षच्छेदं कृत्वा भूमौ दृढीचकार। अचलानकरोदित्यर्थः। अपां मेघस्थितानामुदकानामपः स्यंदनलक्षणं कर्माधराचीनं। अधःप्रदेशमंचति गच्छतीत्यधराचीनं। तादृशमकृणोत। मेघभेदनं कृत्वापो भूमावपातयदित्यर्थः। किंच विश्वधायसं विश्वस्य धात्रीं पृथिवीं बलेनाधारयत। मायया प्रज्ञयोपायेन द्यां द्युलोकमवस्रसः ॥ स्रंसु गतौ। संपदादिलक्षणो भावे क्विप् ॥ अवपतनादस्तभ्नात ॥ ॥१९॥

सास्मा अरं बाहुभ्यां यं पिताकृणोद्विश्वस्मादा जनुषो वेदसस्परि।
येना पृथिव्यां नि क्रिविं शयध्यै वज्रेण हत्व्यवृणक्तुविष्वणिः ॥६॥

सः। अस्मै। अरं। बाहुऽभ्यां। यं। पिता। अकृणोत्। विश्वस्मात्। आ। जनुषः। वेदसः। परि।
येन। पृथिव्यां। नि। क्रिविं। शयध्यै। वज्रेण। हत्वी। अवृणक्। तुविऽस्वनिः ॥६॥

स तादृश इंद्रोऽस्मै जगतेऽरमलं पर्याप्तो बभूव। रक्षकत्वेन स्वामी बभूवेत्यर्थः। पिता सर्वस्य पालकः प्रजापतिर्विश्वस्मात्सर्वस्माज्जनुषो जन्मात परि ततोऽप्युत्कृष्टाद्वेदसो ज्ञानात तद्विशिष्टं बाहुभ्यां स्वकीयाभ्यां बाहुभ्यां यमाकृणोत। तुविष्वणिर्बहुकीर्तिर्महास्वनो वा स इंद्रो येन ज्ञानेन क्रिविमेतन्नामानमसुरं वज्रेण हत्वी ॥ स्नात्व्यादयश्चेति त्वी ॥ हत्वा ताडयित्वा पृथिव्यां भूमौ शयध्यै शयनाय दीर्घनिद्रार्थं न्यवृणक् ॥ वृणक्तिर्हिंसाकर्मा ॥ न्यवधीत् ॥

अमाजूरिव पित्रोः सचा सती समानादा सदसस्त्वामिये भगं।
कृधि प्रकेतमुप मास्या भर दद्धि भागं तन्वो३येन मामहः ॥७॥

अमाजूःऽइव। पित्रोः। सचा। सती। समानात्। आ। सदसः। त्वां। इये। भगं।
कृधि। प्रऽकेतं। उप। मासि। आ। भर। दद्धि। भागं। तन्वः। येन। ममहः ॥७॥

हे इंद्र अमाजूर्यावज्जीवं गृह एव जीर्यंती पित्रोः सचा मातापितृभ्यां सह भवंती तयोः शुश्रूषणपरा पतिमलभमाना सती दुहिता समानादात्मनः पित्रोश्च साधारणात्सदसो गृहात ॥ अधिकरणे चोपसंख्यान-

मिति पंचमी ॥ गृह उपस्थायीव यथा भागं याचति तथा स्तोताहं भगं भजनीयं धनं त्वामिये ॥ ई गत्यादिषु । लिङ्युत्तम इति व्यत्ययेनात्मनेपदं । इयङादेशः ॥ त्वां याचे । तत्र देयं धनं प्रकेतं प्रकर्षेण ज्ञातव्यं विश्वजनीयं कृधि । कुरु । तत्रोपमासि । एतावदिदं धनमिति कुरु । आभर । तत्र धनं संपादय । भागं भजनीयं धनं तन्वः शरीराय महामिति यावत् दद्धि । देहि । येन धनेन ममहः । स्तोतॄनिमान्पूजयसि ॥

भोजं त्वामिंद्र वयं हुवेम ददिष्ट्वमिंद्रापांसि वाजान् ।
अविड्ढींद्र चित्रया न ऊती कृधि वृषन्निंद्र वस्यसो नः ॥८॥
भोजं । त्वां । इंद्र । वयं । हुवेम । ददिः । त्वं । इंद्र । अपांसि । वाजान् ।
अविड्ढि । इंद्र । चित्रया । नः । ऊती । कृधि । वृषन् । इंद्र । वस्यसः । नः ॥८॥

हे इंद्र भोजं पालयितारं भोजयितारं वा त्वां वयं हुवेम ॥ ह्वयतेर्लिङि बहुलं छंदसीति संप्रसारणं ॥ हे इंद्र त्वमपांसि कर्माणि वाजानन्नानि ददिः ॥ दाण् दाने । आदृगमहनजन इति किप्रत्ययः । लिड्वद्भावा-दभ्यासादिकार्यं । न लोकाव्ययनिष्ठेति षष्ठीप्रतिषेधः ॥ दाता खलु । हे इंद्र चित्रया नानाप्रकारयोती ऊत्या पालनेन नोऽस्मानविड्ढि । रक्ष । वृषन कामानां वर्षक हे इंद्र नोऽस्मान्वस्यसोऽतिशयेन वसुमतः कृधि । कुरु ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिंद्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥
नूनं । सा । ते । प्रति । वरं । जरित्रे । दुहीयत् । इंद्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुवीराः ॥९॥

नूनं सा त इति व्याख्याता ॥ ॥२०॥

प्राता रथ इति नवर्चं सप्तमं सूक्तं गार्त्समदं त्रैष्टुभमैंद्रं । प्रातरित्यनुक्रांतं । लैंगिको विनियोगः ॥

प्राता रथो नवो योजि सस्निश्चतुर्युगस्त्रिकशः सप्तरश्मिः ।
दशारित्रो मनुष्यः स्वर्षाः स इष्टिभिर्मतिभी रंह्यो भूत् ॥१॥
प्रातरिति । रथः । नवः । योजि । सस्निः । चतुःऽयुगः । त्रिऽकशः । सप्तऽरश्मिः ।
दशऽअरित्रः । मनुष्यः । स्वःऽसाः । सः । इष्टिऽभिः । मतिऽभिः । रंह्यः । भूत् ॥१॥

रथो रंहणाद्रथो यज्ञः । स च नवः । नूयते स्तूयतेऽनेति नवः स्तुतिमान । सस्निः ॥ ष्णा शौचे । आदृग-महनेति किप्रत्ययः ॥ शुद्धः । एवंविधो यज्ञः प्रातः प्रातःकाले योजि । अयोज्यस्माभिः । चतुर्युगः । युज्यंत इति युगानि ग्रावाणः । चत्वारि युगानि यस्य स तथोक्तः । अध्वर्य्वाद्यृत्विगभिप्रायं वा । त्रिकशः । तिस्रः कशा वाचो मंद्रमध्यमोत्कृष्टरूपा यस्य स तथोक्तः । सवनत्रयाभिप्रायं वा । सप्तरश्मिः । अश्नुवते व्याप्नुवति कर्माणीति रश्मयश्छंदांसि । सप्तसंख्याकानि गायत्र्यादीनि छंदांसि यस्य स तथोक्तः । दशारित्रः । अरिभ्यः पापेभ्यस्त्रायंत इत्यरित्रा ग्रहाः । दशसंख्याका ग्रहा यस्य स तादृशः । चमसाध्वर्य्वभिप्रायं वा । मनुष्यो मनुष्याणां हितः । स्वर्षाः स्वर्गस्य दाता । स एवंविधो यज्ञ इष्टिभिः प्रायणीयातिथ्यादिभिर्मतिभिर्मननीयैः स्तोत्रै रंह्यः शब्दनीयो भूत् । अभूत् । यद्वा नवोऽभिनवः सस्निः ॥ सनोतेर्द्विवचनादि ॥ कामानां दाता रथो ॥ रमंतेऽस्मिन्निति रथः स्यंदनः प्रातःसवने च सोमपानार्थं योजि । अश्वैरयोजि । कीदृशः । चतुर्युगः । त्रिकशः । तिस्रः कशा यस्य स तथोक्तः । सप्तरश्मिः सप्तरज्जुः । दशारित्रो दशचक्रः । मनुष्यो मनुष्यहितः स्वर्षाः स्वर्गस्य संगमयितेंद्ररथ इष्टिभिर्यागैर्मतिभिः स्तोत्रैश्च व्याप्तव्यो भवति ॥

सास्मा अरं प्रथमं स द्वितीयमुतो तृतीयं मनुषः स होता ।
अन्यस्या गर्भमन्य ऊं जनंत सो अन्येभिः सचते जेन्यो वृषा ॥२॥
सः । अस्मै । अरं । प्रथमं । सः । द्वितीयं । उतो इति । तृतीयं । मनुषः । सः । होता ।
अन्यस्याः । गर्भं । अन्ये । ऊं इति । जनंत । सः । अन्येभिः । सचते । जेन्यः । वृषा ॥२॥

स यज्ञः सोमो वास्मा इंद्राय प्रथमं प्रातःसवनेऽरं । पर्याप्तोऽभूत । स च द्वितीयं माध्यंदिने सवने पर्याप्तोऽभूत् । उतो अपि च स तृतीयं तृतीये सवने पर्याप्तोऽभूत् ॥ सर्वत्र कालाध्वनोरिति द्वितीया ॥ स यज्ञः सोमो वा मनुषो मनुष्यस्य होता शुभानां वोढा भवति । किंच अन्ये ऋत्विजोऽन्यस्याः पृथिव्या वेदात्मिकाया वाचो वा गर्भं संतं सोमं यज्ञं वा जनंत । अजनयंत ॥ उ प्रसिद्ध्यर्थः ॥ वृषाभिमतफलवर्षको जेन्यो जयसमर्थः स यज्ञः सोमो वान्येभिरन्यैरिंद्रादिभिर्देवैः सचते । संगच्छते ॥ सच समवाये । अनुदात्तेत ॥

हरी नु कं रथ इंद्रस्य योजमायै सूक्तेन वचसा नवेन ।
मो षु त्वामत्र बहवो हि विप्रा नि रीरमन्यजमानासो अन्ये ॥३॥
हरी इति । नु । कं । रथे । इंद्रस्य । योजं । आऽयै । सुऽउक्तेन । वचसा । नवेन ।
मो इति । सु । त्वां । अत्र । बहवः । हि । विप्राः । नि । रीरमन् । यजमानासः । अन्ये ॥३॥

इंद्रस्य संबंधिनि रथे हरी एतन्नामकावश्वौ नु क्षिप्रं कं सुखेनायै गमनाय नवेनान्यैरकृतपूर्वेण वचसा वेदात्मकेन सूक्तेन साधनेन योजं । युनज्मि ॥ युजिर् योगे । लुङि इरितो वेति च्लेरङादेशः ॥ अत्रास्मिन्यज्ञे बहवो विप्रा मेधाविनः स्तोतारो भवंति हि । तथाप्यन्ये मद्व्यतिरिक्ता यजमानासो यजमानास्त्वा सु सुष्ठु मो निरीरमन् । नितरां मा रमयंतु । अतोऽस्मदीयं यज्ञमागत्य सोमं पिबेति भावः ॥ रीरमन् । रमतेर्ण्यंतस्य लुङि चङि सन्वद्भावादभ्यासस्येत्वदीर्घौ । वाक्यभेदादत्र हियोगाभावेन निघातः ॥

आ द्वाभ्यां हरिभ्यामिंद्र याह्या चतुर्भिरा षड्भिर्हूयमानः ।
आष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः ॥४॥
आ । द्वाभ्यां । हरिऽभ्यां । इंद्र । याहि । आ । चतुःऽभिः । आ । षट्ऽभिः । हूयमानः ।
आ । अष्टाभिः । दशऽभिः । सोमऽपेयं । अयं । सुतः । सुऽमख । मा । मृधः । करिति कः ॥४॥

हे इंद्र होतृभिराहूयमानस्त्वं द्वाभ्यां हरिभ्यामश्वाभ्यामिमं यज्ञं प्रति सोमपानार्थमायाहि । चतुर्भिर्हरिभिरायाहि । तथा षड्भिरागच्छ सोमपेय ॥ पा पाने । कर्मण्यचो यत् । ईद्यतीतीत्वं ॥ पातव्यं सोमं प्रत्यष्टाभिरश्वैरायाहि ॥ अष्टनो दीर्घात् । पा० ६. १. १७२ । इति विभक्तेरुदात्तत्वं ॥ दशभिर्हरिभिरागच्छ । सुमख सुयज्ञ सुधन वा हे इंद्र अयं सोमस्त्वदर्थमभिषुतः । अतो यज्ञस्य मृधो हिंसां मा कः । मा कार्षीः ॥ करोतेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक् । गुणे कृते हल्ङ्यादिना सिपो लोपः ॥ यद्यपींद्रस्य द्वावेव हरी तथापि तयोर्विभूतिभेदान्नानात्वं । अतोऽश्वबहुत्वमविरुद्धं ॥

आ विंशत्या त्रिंशता याह्यर्वाङा चत्वारिंशता हरिभिर्युजानः ।
आ पंचाशता सुरथेभिरिंद्रा षष्ट्या सप्तत्या सोमपेयं ॥५॥
आ । विंशत्या । त्रिंशता । याहि । अर्वाङ् । आ । चत्वारिंशता । हरिऽभिः । युजानः ।
आ । पंचाशता । सुऽरथेभिः । इंद्र । आ । षष्ट्या । सप्तत्या । सोमऽपेयं ॥५॥

हे इंद्र सोमपेयं पातव्यं सोमं प्रत्यर्वाङ् अस्मदभिमुखः सन विंशत्या विंशतिसंख्याकैरश्वैरायाहि। त्रिंशता त्रिंशत्संख्याकैर्हरिभिरागच्छ । चत्वारिंशता चत्वारिंशत्संख्याकैर्हरिभिर्युजानो युज्यमानस्त्वं सोमपानं प्रत्यायाहि सुरथेभिः सुरंहणैः सुगमनैः पंचाशता हरिभिरायाहि । तथा षष्ट्या षष्टिसंख्याकैर्हरिभिः सप्तत्या एतत्संख्याकैर्हरिभिः सोमपानं प्रत्यागच्छ ॥ ॥२१॥

आशीत्या नवत्या याह्यर्वाङा शतेन हरिभिरुह्यमानः ।
अयं हि ते शुनहोत्रेषु सोम इंद्र त्वाया परिषिक्तो मदाय ॥६॥
आ। अशीत्या। नवत्या। याहि। अर्वाङ्। आ। शतेन। हरिऽभिः। उह्यमानः।
अयं। हि। ते। शुनऽहोत्रेषु। सोमः। इंद्र। त्वाऽया। परिऽसिक्तः। मदाय ॥६॥

अशीत्याशीतिसंख्याकैरश्वैः सोमपानार्थमर्वाङ् अस्मदभिमुखः सन आयाहि । नवत्या एतत्संख्याकैरश्वैरागच्छ । शतेन शतसंख्याकैर्हरिभिरुह्यमानो धार्यमाणस्त्वमायाहि । हे इंद्र हि यस्मात्ते मदाय हर्षाय शुनहोत्रेषु। सुखेन हूयते सोमो यैरिति शुनहोत्राः पात्रविशेषाः। तेष्वयं सोमस्त्वाया त्वत्कामनया परिषिक्तः।

मम ब्रह्मेंद्र याह्यच्छा विश्वा हरी धुरि धिष्वा रथस्य ।
पुरुत्रा हि विहव्यो बभूथास्मिञ्छूर सवने मादयस्व ॥७॥
मम। ब्रह्म। इंद्र। याहि। अच्छ। विश्वा। हरी इति। धुरि। धिष्व। रथस्य।
पुरुऽत्रा। हि। विऽहव्यः। बभूथ। अस्मिन। शूर। सवने। मादयस्व ॥७॥

हे इंद्र मम ब्रह्मास्मदीयामेव स्तुतिमच्छाभिलक्ष्य याहि। विश्वा व्याप्तौ हरी रथस्य धुरि युगप्रांते धिष्व। संयोजय। पुरुत्रा पुरुभिर्बहुभिर्यजमानैस्त्वं विहव्यो विविधं ह्वातव्यो बभूथ। बभूविथ ॥ बभूथाततंथ जगृभ्म ववर्थेति निपातनादिडभावः ॥ हे शूर अस्मिन्सवने यज्ञे मादयस्व। सोमपानेन हृष्टो भव ॥

न म इंद्रेण सख्यं वि योषदस्मभ्यमस्य दक्षिणा दुहीत ।
उप ज्येष्ठे वरूथे गभस्तौ प्रायेप्राये जिगीवांसः स्याम ॥८॥
न। मे। इंद्रेण। सख्यं। वि। योषत्। अस्मभ्यं। अस्य। दक्षिणा। दुहीत।
उप। ज्येष्ठे। वरूथे। गभस्तौ। प्रायेऽप्राये। जिगीवांसः। स्याम ॥८॥

इंद्रेण सह मे मम सख्यं यष्टव्यं यष्टृत्वलक्षणं सख्यं न वि योषत। कदाचिदपि न वियुज्यतां ॥ यौतेर्लेटि सिब्बहुलंमिति सिप । अडागमः ॥ अस्येंद्रस्य दक्षिणेंद्रकर्तृकं दानमस्मभ्यं दुहीत । अभिमतफलं दुग्धां ॥ दुहेर्लिङि रूपं ॥ ज्येष्ठेऽतिशयेन प्रशस्ये वरूथ आपदां वारके वरणीये वा गभस्तौ बाहावुप समीपे वर्तिनः स्याम। इंद्रस्य हस्तस्पर्शयोग्या भवेमेत्यर्थः। किंच प्राये प्राये सोमपानार्थमिंद्रस्य यज्ञशालायां प्रवेशे प्रवेशे जिगीवांसः शत्रूणां जेतारो भवेम। यद्वा प्राये प्राये। प्रकर्षेणेयते गम्यते योद्धृभिरिति प्रायं युद्धं। तस्मिन्युद्धे जिगीवांसः शत्रून् जितवंतो भवेम ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिंद्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥

नूनं। सा। ते। प्रति। वरं। जरित्रे। दुहीयत्। इंद्र। दक्षिणा। मघोनी।
शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्। भगः। नः। बृहत्। वदेम। विदथे। सुवीराः ॥९॥

नूनं सा त इति व्याख्याता ॥ ॥२२॥

अपाय्यस्येति नवर्चमष्टमं सूक्तं गार्त्समदं त्रैष्टुभमैंद्रं। अपायीत्यनुक्रांत। लैंगिकः सूक्तविनियोगः। द्वितीये पर्याये होतृशस्त्रयाज्यापायीत्येषा। आ० ६ ४॥

अपाय्यस्यांधसो मदाय मनीषिणः सुवानस्य प्रयसः।
यस्मिन्निंद्रः प्रदिवि वावृधान ओको दधे ब्रह्मण्यंतश्च नरः ॥१॥
अपायि। अस्य। अंधसः। मदाय। मनीषिणः। सुवानस्य। प्रयसः।
यस्मिन्। इंद्रः। प्रऽदिवि। ववृधानः। ओकः। दधे। ब्रह्मण्यंतः। च। नरः ॥१॥

सुवानस्य सोमाभिषवं कुर्वाणस्य मनीषिणः प्राज्ञस्य यजमानस्य संबंधिनः प्रयसः॥ प्रीङ् तर्पणे। असुन्॥ प्रीतिकरस्यास्य सोमलक्षणस्यांधसो मदायापायि। एतदन्नमिंद्रेण पीतमित्यर्थः॥ यद्वा अपायीति पातर्व्यत्ययो बहुलमिति चिण् कर्तरि भवति। छंदसि लुङ्लङ्लिट इति लोडर्थे लुङ्॥ प्रीतिकरस्याधसो मदायापायि॥ शेषविवक्षयो कर्मणि षष्ठी॥ इंद्रः सोमं पिबतु। प्रदिवि पुराणे यस्मिन्सोमलक्षणेऽधसि वावृधानो वर्धमान इंद्र ओको दधे। सेव्यतया निवासं चकार।,किंच ब्रह्मण्यंत इंद्राय स्तोत्रमिच्छंतो नरः कर्मणां नेतार ऋत्विजो यस्मिन्निवासं दधिरे। तदेतदपायीति पूर्वेणान्वयः॥

अस्य मंदानो मध्वो वज्रहस्तोऽहिमिंद्रो अर्णोवृतं वि वृश्चत्।
प्र यद्वयो न स्वसराण्यच्छा प्रयांसि च नदीनां चक्रमंत ॥२॥
अस्य। मंदानः। मध्वः। वज्रऽहस्तः। अहिं। इंद्रः। अर्णःऽवृतं। वि। वृश्चत।
प्र। यत्। वयः। न। स्वसराणि। अच्छ। प्रयांसि। च। नदीनां। चक्रमंत ॥२॥

अस्य मध्वः॥ तृतीयार्थे षष्ठी॥ अनेन मदकरेण सोमेन मंदानो हृष्यन् वज्रहस्तो वज्रयुक्तो हस्तो यस्य स इंद्रोऽर्णोवृतमुदकस्यावरकमुदकेनावृतं वाहिं वृत्रं मेघं वा विवृश्चत। विशेषेणाच्छिनत॥ ओव्रश्चू छेदने। तौदादिकः। लङि ग्रहिज्यादिना संप्रसारणं॥ यद्यदाहिभेदने जाते नदीनां प्रयांसि प्रीणयितॄणि जलान्यच्छ समुद्रमभिलक्ष्य प्रचक्रमंत। गंतुमुपाक्रमन। तत्र दृष्टांतः। वयो न। यथा पक्षिणः स्वसराणि। सुष्ठ्वस्यंते प्राप्यंत इति स्वराणि स्वसराणि कुलायाः। तानभिलक्ष्य गच्छंति तद्वत्॥

स माहिन इंद्रो अर्णो अपां प्रैरयदहिहाच्छा समुद्रं।
अजनयत्सूर्यं विदद्गा अक्तुनाह्नां वयुनानि साधत् ॥३॥
सः। माहिनः। इंद्रः। अर्णः। अपां। प्र। ऐरयत्। अहिऽहा। अच्छ। समुद्रं।
अजनयत्। सूर्यं। विदत्। गाः। अक्तुना। अह्नां। वयुनानि। साधत ॥३॥

माहिनो महनीयः पूजनीयो यद्वा महिमोपेतः। अहिहाहिं मेघं हतवानिंद्रः॥ ब्रह्मभ्रूणवृत्रेषु क्विप्। बहुलं छंदसीति भूतकाले क्विप्॥ स इंद्रोऽपामर्णः॥ ऋ गतौ॥ स्रोतोलक्षणं प्रवाहं समुद्रमच्छाभिलक्ष्य प्रैरयत्। किंच स इंद्रोऽगिरसां बिलांतर्वर्तिनामावृतानां गवां लाभाय सूर्यमजनयत। ततो गाः पणिभिर-

पह्वता गा विदत । अलभत ॥ विदिर् लाभे । लुङ्गीरितो वेति च्लेरङादेशः । वाक्यभेदादनिघातः ॥ तथाकृणा तेजसाह्नां दिवसानां वयुनानि प्रज्ञानानि प्रकाशान् साधत् । असाधयत् ॥

सो अ॑प्रती॒नि॒ मन॑वे पु॒रू॒णींद्रो॑ दा॒शद्दा॒शुषे॑ हंति॑ वृ॒त्रं ।
स॒द्यो यो नृ॒भ्यो॑ अ॒तसा॒य्यो॑ भूत्प॑स्पृधा॒नेभ्यः॒ सूर्य॑स्य सा॒तौ ॥४॥
सः । अ॒प्र॒ती॒नि॑ । मन॑वे । पु॒रूणि॑ । इंद्रः॑ । दा॒श॒त् । दा॒शुषे॑ । हंति॑ । वृ॒त्रं ।
स॒द्यः । यः । नृ॒ऽभ्यः॑ । अ॒त॒सा॒य्यः॑ । भूत् । प॒स्पृ॒धा॒नेभ्यः॑ । सूर्य॑स्य । सा॒तौ ॥४॥

स इंद्रो दाशुषे हविर्दत्तवते मनवे मनुष्याय यजमानाय पुरूणि बहून्यप्रतीन्युत्कृष्टानि धनानि दाशत् । ददाति । किंच वृत्रमसुरं हंति । कीदृशः । य इंद्रः सूर्यस्य सातौ । सातिः संभजनं । सूर्यसंभजनविषये भूते पस्पृधानेभ्यः अहमेव प्रथमं सूर्यं प्राप्नुयामहमेव प्रथमं सूर्यं प्राप्नुयामिति स्पर्धमानेभ्यः स्तोतृभ्यः सद्यस्तदानीमेवातसाय्यस्तत्प्राप्तिहेतुभूतः सन् समाश्रयणीयो भूत् । अभूत् । यद्वा सूर्यस्य सातौ ॥ षोऽंतकर्मणि । अधिकरणे क्तिन् ॥ सूर्यस्य संबंधिनि युद्धे पस्पृधानेभ्यः सूर्येण सह स्पर्धमानेभ्योऽतसाय्योऽभूत् ॥

स सु॑न्व॒त इंद्रः॒ सूर्य॒मा दे॒वो रि॑ण॒ङ्मर्त्या॑य स्त॒वान् ।
आ यद्र॒यिं गु॒हद॑वद्यमस्मै॒ भर॒दंशं॒ नैत॑शो दश॒स्यन् ॥५॥
सः । सु॒न्व॒ते । इंद्रः॑ । सूर्यं॑ । आ । दे॒वः । रि॒ण॒क् । मर्त्या॑य । स्त॒वान् ।
आ । यत् । र॒यिं । गु॒हत्ऽअ॑वद्यं । अ॒स्मै॒ । भर॑त् । अंशं॑ । न । एत॑शः । द॒श॒स्यन् ॥५॥

स्तवान एतशेन स्तूयमानो देवो द्योतमानः स इंद्रः सुन्वते सोमाभिषवं कुर्वते मर्त्याय मनुष्यायैतशाय सूर्यमारिणक् । एतशेन स्पर्धमानं सूर्यं बहिर्निरचयत् । तथा च निगमः । प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिंद्र इति । यद्यस्मादेतशः सौवश्व्यो राजा दशस्यन् यजमानोऽस्मा इंद्राय गुहदवद्यं प्रच्छन्नावद्यं रयिं सोमरूपमभरत् । संपादयामास । तत्र दृष्टांतः । अंशं न । यथा पितांशं भागं पुत्राय भरति तद्वत् ॥ ॥२३॥

स रं॑धयत्स॒दिवः॒ सार॑थये॒ शुष्ण॑मशु॒षं कुय॑वं॒ कुत्सा॑य ।
दिवो॑दासाय नव॒तिं च॒ नवेंद्रः॒ पुरो॒ व्यैर॒च्छंब॑रस्य ॥६॥
सः । रं॒ध॒य॒त् । स॒ऽदिवः॑ । सार॑थये । शुष्णं॑ । अ॒शुषं॑ । कुय॑वं । कुत्सा॑य ।
दिवः॑ऽदासाय । न॒व॒तिं । च॒ । नव॑ । इंद्रः॑ । पुरः॑ । वि । ऐ॒र॒त् । शंब॑रस्य ॥६॥

सदिवो दीप्तियुक्तः स इंद्रः सारथय आत्मनः सारथ्यं कुर्वते कुत्साय राजर्षये शुष्णं । शोषयति सर्वमिति शुष्णः कश्चिदसुरः । तमशुषं न केनापि शोषणीयं । कुयवमेतन्नामानमसुरं रंधयत् ॥ रध्यतिर्वशगमने ॥ वशमनयत् ॥ यद्वा रध हिंसासंराध्योरित्यस्य ण्यंतस्य रधिजभोरचीति नुम् ॥ अवधीत् । किंच स इंद्रो दिवोदासायैतन्नामकाय राज्ञे शंबरस्यासुरस्य नव नवतिं पुरो व्यैरत् । विदारितवान् ॥

ए॒वा त॑ इंद्रो॒चथ॑महेम श्र॒वस्या॒ न त्मना॑ वा॒जयं॑तः ।
अ॒श्याम॒ तत्सा॒प्तमा॑शुषा॒णा न॒नमो॒ वध॒रदे॑वस्य पी॒योः ॥७॥
ए॒व । ते॒ । इं॒द्र॒ । उ॒चथं॑ । अ॒हे॒म॒ । श्र॒व॒स्या । न । त्मना॑ । वा॒जयं॑तः ।
अ॒श्याम॑ । तत् । साप्तं॑ । आ॒शु॒षा॒णाः । न॒नमः॑ । वधः॑ । अदे॑वस्य । पी॒योः ॥७॥

हे इंद्र श्रवस्या ॥ सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घः ॥ अन्नेच्छया वाजयंतस्त्वां बलिनं कुर्वंत । यद्वा श्रवस्या यशःकामनया वाजयंतोऽन्नमिच्छंतः ॥ इच्छायामपि णिच् दृश्यते । अश्वायंतो गव्यंतो वाजयंत इति क्यजंतत्वे चित्प्रातिपदिकस्यांतोदात्तत्वं स्यात् वाजयतः शतक्रतुमिति यथा ॥ तादृशा वयं ते तुभ्यमेवोचथ स्तोत्रं त्मना आत्मना स्वयमेव नाहेम । इदानीं प्रापयेम ॥ नह गतौ । न संप्रत्यर्थे ॥ आशुषाणाः ॥ अशोतेः कानचि व्यत्ययो बहुलमिति लिट्यपि विकरणद्वय उप्रत्ययः स च ॥ त्वामश्नुवाना वयं यदभिलषितं तत्साप्तसप्तपुरुषसंबंधि साप्तपदीनं सख्यमश्याम । व्याप्नुयाम । अदेवस्य देवानिंद्रादीनजानतः पीयोः ॥ पीयतिर्हिंसाकर्मा ॥ हिंसकस्यासुरस्य वधः ॥ वध्यंते शत्रवोऽनेनेति वधरायुधं ॥ ननमः । तदधो नमय ॥ ननमः । णमु प्रह्वत्वे । ण्यंतस्य लुङि चङि रूपं । मितां ह्रस्व इति ह्रस्वः ॥

एवा ते गृत्समदाः शूर मन्मावस्यवो न वयुनानि तक्षुः ।
ब्रह्मण्यंत इंद्र ते नवीय इषमूर्जं सुक्षितिं सुम्नमश्युः ॥८॥

एव । ते । गृत्सऽमदाः । शूर । मन्म । अवस्यवः । न । वयुनानि । तक्षुः ।
ब्रह्मण्यंतः । इंद्र । ते । नवीयः । इषं । ऊर्जं । सुऽक्षितिं । सुम्नं । अश्युः ॥८॥

शूर बलवन् हे इंद्र ते तुभ्यं गृत्समदाः । अत्र यास्कः । गृत्समदो गृत्समदनो गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणः । नि॰ ९ ५ । इति । तथाविधा मन्म मननीयं स्तोत्रं ते तुभ्यमेव तक्षुः । ततक्षुः । चक्रुः । तत्र दृष्टांतः । अवस्यवो न ॥ अवः । गत्यर्थादवतेरसुनि रूपमेव इति ॥ अवो गमनमिच्छंतः पुमांसो वयुनानि मार्गान् यथा कुर्वंति तद्वत् । किंच नवीयः ॥ सुपां सुलुगिति षष्ठ्या लुक् ॥ नवीयसो नवतरस्य ते तव ब्रह्मण्यंतः स्तोत्रं कर्तुमिच्छंतो गृत्समदाः सुक्षितिमिषं शोभननिवासोपेतमन्नमूर्जं बलं सुम्नं सुखं चाश्युः । प्राप्नुयुः । एकस्मिन् गृत्समदे बहुवचनं पूजार्थं निर्देशश्च ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिंद्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥

नूनं । सा । ते । प्रति । वरं । जरित्रे । दुहीयत् । इंद्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥९॥

नूनं सा त इति सिद्धार्थेति ॥ ॥२४॥

वयं ते वय इति नवर्चं नवमं सूक्तं गार्त्समदं त्रैष्टुभमैंद्रं । वयं त इत्यनुक्रांतं । सूक्तविनियोगो लिंगाद्बोधयितव्यः ॥

वयं ते वय इंद्र विद्धि षु णः प्र भरामहे वाजयुर्न रथं ।
विपन्यवो दीध्यतो मनीषा सुम्नमियक्षंतस्त्वावतो नॄन् ॥१॥

वयं । ते । वयः । इंद्र । विद्धि । सु । नः । प्र । भरामहे । वाजऽयुः । न । रथं ।
विपन्यवः । दीध्यतः । मनीषा । सुम्नं । इयक्षंतः । त्वाऽवतः । नॄन् ॥१॥

हे इंद्र ते तुभ्यं वयं वयः सोमलक्षणमन्नं प्रभरामहे । प्रकर्षेण संपादयामः । तत्र दृष्टांतः । वाजयुर्न । यथान्नमात्मन इच्छन् पुमान् रथं शकटं संपादयति तद्वत् । एवं हविःसंपादकान् नोऽस्मान् सु सुष्ठु विद्धि । जानीहि ॥ विद ज्ञानार्थस्य लोटि रूपं । वाक्यादित्वादनिघातः ॥ किं कुर्वंतो वयं । विपन्यवः । तव स्तोत्रं कुर्वाणाः । मनीषा मनस ईषया स्तुत्या दीध्यतो दीप्यमानाः ॥ दीधीङ् दीप्तिदेवनयोः । व्यत्ययेन शतृ ॥

त्वावतः ॥ युष्मदस्मदोः छंदसि सादृश्य उपसंख्यानमिति वतुप् ॥ त्वत्सदृशान् नृन् नेतृन् अग्न्यादीन् सुम्नं सुखमियक्षंतः । याचमानाः । यद्वा सुम्नं सुखेन नृन् नेतृन् अग्न्यादीन्देवानियक्षंतः ॥ इयक्षतिर्गतिकर्मा ॥ हविषा तान् प्राप्नुवंतो वयं भरामह इति समन्वयः ॥

त्वं नं इंद्र त्वाभिरूती त्वायतो अभिष्टिपासि जनान् ।
त्वमिनो दाशुषो वरूतेत्थाधीरभि यो नक्षति त्वा ॥२॥
त्वं । नः । इंद्र । त्वाभिः । ऊती । त्वाऽयतः । अभिष्टिऽपा । असि । जनान् ।
त्वं । इनः । दाशुषः । वरूता । इत्थाऽधीः । अभि । यः । नक्षति । त्वा ॥२॥

हे इंद्र त्वं त्वाभिस्त्वदीयाभिरूती ऊतिभिः पालनादिभिर्नोऽस्मान् पाहि । किंच त्वायतः ॥ सुप आत्मनः क्यच् । शतुरनुम इति विभक्तेरुदात्तत्वं ॥ त्वत्कामान् जनान् अभिष्टिपा ॥ सुपां सुलुगिति सोराकारः ॥ अभिष्टयोऽभिगंतारः शत्रवः । तेभ्यः पाता रक्षकोऽसि । भवसि । दाशुषो हविर्दत्तवतो यजमानस्य त्वमिनः । ईश्वरः खलु । वरूता ॥ ग्रसितस्कभितस्तभितेति निपातनादीकारस्य ऊकारः ॥ बाधकानां निवारकोऽसि । किंच त्वं तस्य स्तोतुरित्थाधीरेवंविधोपद्रवोपशमरूपकर्मासि । यस्त्वा त्वामभिनक्षति हविषा परिचरति ॥

स नो युवेंद्रो जोहूत्रः सखा शिवो नरामस्तु पाता ।
यः शंसंतं यः शशमानमूती पचंतं च स्तुवंतं च प्रणेषत् ॥३॥
सः । नः । युवा । इंद्रः । जोहूत्रः । सखा । शिवः । नरां । अस्तु । पाता ।
यः । शंसंतं । यः । शशमानं । ऊती । पचंतं । च । स्तुवंतं । च । प्रऽनेषत् ॥३॥

युवा तरुणो यष्टॄणां फलस्य शमयिता वा जोहूत्रः स्तोतृभिराह्वातव्यो होतव्यो वा सखा सखिभूतः शिवः सुखकरः स इंद्रो नरां ॥ नृशब्दस्यामि छादसो गुणः नरशब्दस्य वाम्यागमानुशासनस्यानित्यत्वान्नुडभावः ॥ कर्मनेतॄणामस्माकं पाता पालको भवति । यः शस्त्राणि शंसंतं यश्च शशमानं ॥ शश प्लुतगतौ ॥ क्रियाः कुर्वाणं पुरोडाशादिकं हवींषि पचंतं स्तुवंतं सामभिः स्तोत्रं कुर्वाणं । स्तुतशस्त्रयोः प्रगीताप्रगीतमंत्रसाध्यत्वेन भेदस्य प्रतिपादितत्वात् अत्र पृथङ्निर्देशः । एवमय यजमानमूती ऊत्या रक्षणेन प्रनेषत् ॥ नयतेर्लेटि सिब्बहुलमिति सिप । अडागमः । तिङि चोदात्तवतीति गतेर्निघातः ॥ कर्मणां पारं प्रापयेत ॥

तमु स्तुष इंद्रं तं गृणीषे यस्मिन्पुरा वावृधुः शाशदुश्च ।
स वस्वः कामं पीपरदियानो ब्रह्मण्यतो नूतनस्यायोः ॥४॥
तं । ऊं इति । स्तुषे । इंद्रं । तं । गृणीषे । यस्मिन् । पुरा । ववृधुः । शाशदुः । च ।
सः । वस्वः । कामं । पीपरत् । इयानः । ब्रह्मण्यतः । नूतनस्य । आयोः ॥४॥

तमु तमेवेंद्रं स्तुषे । स्तौमि । तथा तमिंद्रं गृणीषे । शंसामि ॥ उभयत्र पुरुषव्यत्ययः ॥ यस्मिन्निंद्रे पुरा पूर्वं स्तोतारो वावृधुः । प्रवृद्धा अभवन् । शाशदुश्च । शत्रून् हिंसितवंतश्च ॥ शद्लृ शातने । लिटि तुजादीनामित्यभ्यासस्य दीर्घः ॥ इयानः स्तोतृभिर्याच्यमानः स इंद्रो ब्रह्मण्यतः स्तोत्रमिच्छतो नूतनस्यायोर्मनुष्यस्य यजमानस्य वस्वो वसुनः काममभिलाषं पीपरत् । अभिलषितफलदानेन पूरयतु ॥

सो अंगिरसामुचथा जुजुष्वान्ब्रह्मा तूतोदिंद्रो गातुमिष्णन् ।
मुष्णन्नुषसः सूर्येण स्तवानश्नस्य चिच्छिश्नथत्पूर्व्याणि ॥५॥

सः। अंगिरसां। उचथा। जुजुष्वान्। ब्रह्म। तूतोत्। इंद्रः। गातुं। इष्णन्।
मुष्णन्। उषसः। सूर्येण। स्तवान्। अश्नस्य। चित्। शिश्नथत्। पूर्व्याणि ॥५॥

अंगिरसां संबंधीन्युचथोक्थानि जुजुष्वान् ॥ जुषी प्रीतिसेवनयोरित्यस्य लिटि क्वसौ रूपं ॥ सेवमानः स इंद्रो गातुं पणिभिरपहृतानामंगिरसां मार्गमिष्णन् प्रेरयन् ब्रह्म तेषां स्तोत्रं कामप्रदानेन तूतोत् ॥ तु वृद्धावित्यस्य लङि बहुलं छंदसीति विकरणस्य श्लुः ॥ अवर्धयत्। किंच स्तवान् स्तोतृभिः स्तूयमानः सूर्येण स्वात्मभूतेनोषसो मुष्णन् अपहरन्। उदिते हि सूर्य उषसो व्यावर्तंते। तादृशः स इंद्रोऽश्नस्य। अश्नुते स्वतेजसा सर्वं जगदित्यश्नः कश्चिदसुरः। तस्य पूर्व्याणि पुरातनानि पुराणि बलानि वा शिश्नथत्। अश्नथयत्। शिथिलीचकार ॥ ॥२५॥

स ह श्रुत इंद्रो नाम देव ऊर्ध्वो भुवन्मनुषे दस्मतमः।
अव प्रियमर्शसानस्य साह्वाञ्छिरो भरद्दासस्य स्वधावान् ॥६॥
सः। ह। श्रुतः। इंद्रः। नाम। देवः। ऊर्ध्वः। भुवत्। मनुषे। दस्मऽतमः।
अव। प्रियं। अर्शसानस्य। सह्वान्। शिरः। भरत्। दासस्य। स्वधाऽवान् ॥६॥

देवो द्योतमानः श्रुतः कीर्तिमान् अत एव दस्मतमः सर्वैरतिशयेन दर्शनीयः स इंद्रो मनुषे मनोरर्थमूर्ध्वो भुवत्। कामप्रदाने प्रवृत्त उन्मुखो भवतु ॥ नाम प्रसिद्धौ। हेति पूरणः ॥ तदुच्यते। साह्वान् शत्रूनभिभवन् स्वधावान् बलवानिंद्रोऽर्शसानस्य लोकं बाधमानस्य दासस्यैतन्नामकस्यासुरस्य प्रियं शिरोऽवभरत्। अवपातयत् ॥ हरतेर्लेट्यडागमः। हृग्रहोर्भः ॥

स वृत्रहेंद्रः कृष्णयोनीः पुरंदरो दासीरैरयद्वि।
अजनयन्मनवे क्षामपश्च सत्रा शंसं यजमानस्य तूतोत् ॥७॥
सः। वृत्रऽहा। इंद्रः। कृष्णऽयोनीः। पुरंऽदरः। दासीः। ऐरयत्। वि।
अजनयत्। मनवे। क्षां। अपः। च। सत्रा। शंसं। यजमानस्य। तूतोत् ॥७॥

वृत्रहा वृत्रस्य हंता पुरंदरः शत्रुपुरां दारयिता स इंद्रः कृष्णयोनीर्निकृष्टजातीर्दासीरुपक्षपयित्रीरासुरीः सेना व्यैरयत्। व्यनुदत्। किंच मनवे मनोरर्थं क्षां पृथिवीमप उदकानि चाजनयत्। यजमानस्य सत्रा महांतं शंसमभिलाषं तूतोत्। कामप्रदानेन पूरयतु ॥ तु वृद्धाविति सौत्रो धातुः। शपः श्लुः। तुजादित्वाद्दीर्घः ॥ यद्वा सत्रा महत् शंसं शंसनीयं शस्त्रं कामप्रदानेन वर्धयतु। यद्वा कृष्णयोनीः कृष्णाख्येनासुरेण निषिक्तास्तस्य दासीर्भार्या व्यैरयत्। व्यनुदत्। तथा मंत्रः। यः कृष्णगर्भा निरहन्नृजिश्वना। १.१०१.१. इति ॥

तस्मै तवस्य१मनु दायि सत्रेंद्राय देवेभिरर्णसातौ।
प्रति यदस्य वज्रं बाह्वोर्धुर्हत्वी दस्यून्पुर आयसीर्नि तारीत् ॥८॥
तस्मै। तवस्यं। अनु। दायि। सत्रा। इंद्राय। देवेभिः। अर्णऽसातौ।
प्रति। यत्। अस्य। वज्रं। बाह्वोः। धुः। हत्वी। दस्यून्। पुरः। आयसीः। नि। तारीत् ॥८॥

देवेभिर्देवनशीलैः स्तोतृभिरर्णसातावुदकलाभनिमित्तं तस्मा इंद्राय तवस्यं तवसे बलाय हितं बलवर्धनं हविः सत्रा संततं सर्वेष्वहःसु अनु अनुक्रमेण सवनत्रये दायि। अदायि। यद्वा तवस्यं। यद्बलं प्रवृद्धाय दीयते तत्तवस्यं। देवेभिर्देवैरुदकभजनेऽनुक्रमेण तद्बलं तस्मा इंद्रायादायि। तथा मंत्रः। अनु ते दायि मह इंद्रियायेति। यद्यदास्येंद्रस्य बाह्वोर्वज्रं प्रति धुः। स्तोतारोऽसुरवधमुत्तेजकेन स्तोत्रेण प्रतिनिदधुः। स्तूयमानो

हींद्रो दस्युवधार्थं वज्रमादत्ते ॥ दधः। दधातेर्लुङि गातिस्थेति सिचो लुक्। आत इति झेर्जुस ॥ ततस्तेन वज्रेण दस्यूनसुरान् हत्वी हत्वा तदीया आयसीरयोमयीः पुरो नितारीत। नितरामनाशयत ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिंद्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥
नूनं। सा। ते। प्रति। वरं। जरित्रे। दुहीयत्। इंद्र। दक्षिणा। मघोनी।
शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्। भगः। नः। बृहत्। वदेम। विदथे। सुवीराः ॥९॥

नूनं सा त इति व्याख्याता ॥ ॥ २६ ॥

विश्वजित इति षड्च दशमं सूक्तं गार्त्समदमैंद्रं। अंत्या त्रिष्टुप्। शिष्टाः पंच जगत्यः ॥ तृतीये पर्याये होतृशस्त्र एतत्सूक्तं। सूचितं च। विश्वजिते तिष्ठा हरी रथ आयुज्यमानेति याज्या। आ० ६ ४। इति ॥

विश्वजिते धनजिते स्वर्जिते सत्राजिते नृजित उर्वराजिते।
अश्वजिते गोजिते अब्जिते भरेंद्राय सोमं यजताय हर्यतं ॥१॥
विश्वऽजिते। धनऽजिते। स्वःऽजिते। सत्राऽजिते। नृऽजिते। उर्वराऽजिते।
अश्वऽजिते। गोऽजिते। अपऽजिते। भर। इंद्राय। सोमं। यजताय। हर्यतं ॥१॥

हे अध्वर्यो इंद्राय सोमं भर। संपादय। कीदृशाय। विश्वजिते। सर्वस्य जेत्रे। तदेव प्रपंचयति। धनजिते शत्रुविजयेन तदीयधनानां जेत्रे। स्वर्जिते स्वर्गस्य जेत्रेऽधिपतये। सत्राजिते सत्रा संततं जयशीलाय महतो जेत्रे वा। नृजिते नृणां नायकानां जेत्रे। उर्वराजिते। उर्वरा सर्वसस्याढ्या भूः। तस्या जेत्रे। अश्वजिते गोजिते बलेनापहृतानां गवां जेत्रे। अब्जिते वृत्रेणाक्रांतानामपां जेत्रे। यजताय यजनीयाय। तस्मा इंद्राय हर्यतं ॥ हर्य गतिकांत्योः। भृमृदृशीत्यादिना कर्मण्यतच् ॥ कमनीयं स्पृहणीयं वा सोमं भरेति समन्वयः ॥

अभिभुवेऽभिभंगाय वन्वतेऽषाळ्हाय सहमानाय वेधसे।
तुविग्रये वह्नये दुष्टरीतवे सत्रासाहे नम इंद्राय वोचत ॥२॥
अभिऽभुवे। अभिऽभंगाय। वन्वते। अषाळ्हाय। सहमानाय। वेधसे।
तुविऽग्रये। वह्नये। दुस्तरीतवे। सत्राऽसहे। नमः। इंद्राय। वोचत ॥२॥

अभिभुवे सर्वस्याभिभवित्रेऽभिभंगायासुराणां भंजकाय वन्वते ॥ वन षण संभक्तौ। व्यत्ययेन उप्रत्ययः ॥ शत्रूणां धनानां संभजकाय। अषाळ्हाय ॥ सहेः कर्मणि निष्ठा। उत्वाभावश्छांदसः ॥ शत्रुभिरनभिभूताय। सहमानाय सर्वसहाय वेधसे सर्वस्य विधात्रे। तुविग्रये पूर्णग्रीवाय ॥ यद्वा गॄ शब्दे। औणादिकः कर्मणि कप्रत्ययः ॥ तुविभिर्बहुभिः स्तोतव्याय। वह्नये सर्वस्य वोढ्रे दुष्टरीतवेऽन्यैर्दुस्तराय दुर्हिंसाय। सत्रासहे सर्वदाभिभवित्रे महतोऽभिभवित्रे वा एवंविधायेंद्राय नमो नमःशब्दपूर्वकं स्तोत्रं वोचत। हे स्तोतारो यूयं ब्रूत ॥ ब्रूञो लुङि ब्रुवो वचिः। अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङादेशः। वच उमित्युम्। गुणः ॥

सत्रासाहो जनभक्षो जनंसहश्च्यवनो युध्मो अनु जोषमुक्षितः।
वृतंचयः सहुरिर्विक्ष्वारित इंद्रस्य वोचं प्र कृतानि वीर्या ॥३॥
सत्राऽसहः। जनऽभक्षः। जनंऽसहः। च्यवनः। युध्मः। अनु। जोषं। उक्षितः।
वृतंऽचयः। सहुरिः। विक्षु। आरितः। इंद्रस्य। वोचं। प्र। कृतानि। वीर्या ॥३॥

सत्रासहो बहूनामभिभविता जनभक्षो जनानां यजमानानां कामप्रदानेन संभक्ता तैः सभजनीय इति वा। जनंसहो बलिनां जनानामभिभविता च्यवनः शत्रूणां च्यावयिता स्वस्थानात्। युध्मो योद्धा जोषमनु प्रीतिमनु उक्षितः सिक्तः सोमेन। वृतंचयो वृतस्याभीष्टस्याचिता संचेता दातेत्यर्थः। यद्वा वर्तते पुनःपुनरभिमुखमागच्छतीति वृतं शत्रुः। तं चयते हिनस्तीति वृतंचयः। चयतिर्हिंसाकर्मा। तथा च ब्राह्मणं। यो वै भागिन भागान्नुदते चयते वैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रं चयते त्वेवैन। ऐ०ब्रा० २ १। इति। सहेरिः॥ जसिसहोर्सरिन्नित्युरिन्प्रत्ययः॥ अभिभविता शत्रूणां विद्य प्रजास्वारितः पालकत्वेन प्रापितो भवति। तादृशस्येंद्रस्य कृतानि वृत्रहननादिरूपाणि वीर्या सामर्थ्यानि प्रवोच। प्रकर्षेण वदामि॥

अनानुदो वृषभो दोधतो वधो गंभीर ऋष्वो असमष्टकाव्यः।
रध्रचोदः श्नथनो वीळितस्पृथुरिंद्रः सुयज्ञ उषसः स्वर्जनत॥४॥
अननुऽदः। वृषभः। दोधतः। वधः। गंभीरः। ऋष्वः। असमष्टऽकाव्यः।
रध्रऽचोदः। श्नथनः। वीळितः। पृथुः। इंद्रः। सुऽयज्ञः। उषसः। स्वः। जनत॥४॥

अनानुदः। अनु पश्चाद्ददातीत्यनुदः। आतश्चोपसर्ग इति कर्तरि कः। स नास्ति यस्य स तथोक्तः। प्रभूतधनदानेन समानो नास्तीत्यर्थः। अत एव वृषभः कामानां वर्षिता। दोधतः॥ दुधिर्हिंसाकर्मा॥ हिंसकस्यासुरस्य वधो हंता गंभीरो महत्त्वेन गाम्भीर्योपेतः। ऋष्वो महान् यद्वा दर्शनीयः सर्वैः। असमष्टकाव्यः॥ अशू व्याप्तौ। कर्मणि निष्ठा। उदित्त्वादिड्विकल्पः। नञ्समासः॥ अस्थिरव्याप्तकर्मा। रध्रचोदः॥ रध हिंसासंराद्ध्योः॥ रधाणां समृद्धानां प्रेरकः। यद्वा हिंसकानां शत्रूणां चोदकः। श्नथनः शत्रूणां बलापहारेण शातयिता। वीळितो दृढांगः पृथुः स्वतेजसा जगद्व्याप्य वर्तमानः सुयज्ञः सुकर्मा। एतादृश इंद्र उषसः स्वः सूर्यं ज्योतिः। स्वः सूर्य इति हि ब्राह्मणं। सूर्यं च जनत। प्रादुश्चकार॥

यज्ञेनं गातुमप्तुरो विविद्रिरे धियो हिन्वाना उशिजो मनीषिणः।
अभिस्वरा निषदा गा अवस्यव इंद्रे हिन्वाना द्रविणान्याशत॥५॥
यज्ञेनं। गातुं। अपऽतुरः। विविद्रिरे। धियः। हिन्वानाः। उशिजः। मनीषिणः।
अभिऽस्वरा। निऽसदा। गाः। अवस्यवः। इंद्रे। हिन्वानाः। द्रविणानि। आशत॥५॥

धियो हिन्वानाः स्तुतीरिंद्रे प्रेरयंत उशिजः इंद्रं कामयमाना मनीषिणो मेधाविनोऽगिरसोऽप्तुरोऽपां प्रेरकादिंद्राज्ज्ञातुं गवां मार्गं यज्ञेन तपसा विविद्रिरे। लेभिरे। ततोऽवस्यवो रक्षणमिच्छंत इंद्रे गाः स्तुतीर्हिन्वानाः॥ हि गतिवृद्ध्योः स्वादिः॥ प्रेरयंतस्तेऽगिरसोऽभिस्वरा अभितः स्वरः स्वरणं शब्दनं यस्य तेन सोमेण निषदोपसदनेन च द्रविणानि गोधनान्याशत। प्राप्नुवन्॥ अश्नोतेर्लुङि बहुलं छंदसीति विकरणस्य लुक्॥

इंद्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे।
पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नां॥६॥
इंद्र। श्रेष्ठानि। द्रविणानि। धेहि। चित्तिं। दक्षस्य। सुभगऽत्वं। अस्मे इति।
पोषं। रयीणां। अरिष्टिं। तनूनां। स्वाद्मानं। वाचः। सुदिनऽत्वं। अह्नां॥६॥

हे इंद्र श्रेष्ठान्युत्तमानि द्रविणानि धनान्यस्मभ्यं धेहि। निधेहि। दक्षस्य॥ दक्षेर्भावे घञ्॥ कर्मकरणसामर्थ्यस्य चित्तिं ख्यातिं धेहि। अस्मे अस्मभ्यं सुभगत्वं शोभनधनवत्त्वं सौभाग्यं वा निधेहि। रयीणां त्वया दत्तानां धनानां पोषं समृद्धिं धेहि। तनूनामंगानां। यद्वा तायंत एभिः कुलमिति तन्वः पुत्राः। तनोतेः करण

उप्रत्ययः ॥ तेषामरिष्टिमहिंसां धेहि । तथास्मदीयाया वाचः स्वाद्मानं स्वादुतां । अह्नां सुदिनत्वं शोभनदिनत्वं च धेहि । येषु हींद्रादयो देवा इज्यंते तानि सुदिनानि । तेषां भावः सुदिनत्वं ॥ ॥२१॥

त्रिकद्रुकेष्वित चतुर्ऋचमेकादशं सूक्तं गार्त्समदमैंद्रं । अत्रेयमनुक्रमणिका । त्रिकद्रुकेषु चतुष्कमष्ट्याद्यतिशाक्वरमंत्याष्टिर्वेति । आद्यायामष्टिश्छंदश्चतुःपथ्याचरा । अवशिष्टाः पथ्याचरा अतिशक्वर्यः । अंत्याष्टिर्वा ॥ षोडशिशस्त्रे त्रिकद्रुकेष्विति तृचः । सूत्रितं । त्रिकद्रुकेषु महिषो यवाशिरं प्रो ष्वस्मै पुरोरथमिति तृचावातिच्छंदसौ । आ० ६.२ । इति ॥ अविवाक्येऽहनि मरुत्वतीये प्रतिपत्तृचस्य त्रिकद्रुकेष्विति प्रथमा । दशमेऽहनीति खंडे सूत्रितं । आ त्वा रथं यथोतय इत्येतस्याः स्थाने त्रिकद्रुकेषु महिषो यवाशिरमिति । आ० ८.१२. । इति ॥ आश्वमेधिके मध्यमेऽहनि मरुत्वतीये आद्या । तस्य विशेषान्वच्याम इति खंडे सूत्रितं । त्रिकद्रुकेषु महिषो यवाशिरमिति मरुत्वतीयस्य प्रतिपत् । आ० १०.१० । इति ॥ महाव्रतेऽपि माध्यंदिने सवने ब्राह्मणाच्छंसिनः स्तोत्रियस्तृचः । त्रिकद्रुकेषु महिषो यवाशिरमिति स्तोत्रियः । ऐ० आ० ५.१ । इति सूत्रितं ॥

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत्सोममपिबद्विष्णुना सुतं यथावशत् ।
स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद्देवो देवं सत्यमिंद्रं सत्य इंदुः ॥१॥
त्रिऽकद्रुकेषु । महिषः । यवऽआशिरं । तुविऽशुष्मः । तृपत् । सोमं । अपिबत् ।
विष्णुना । सुतं । यथा । अवशत् ।
सः । ईं । ममाद । महि । कर्म । कर्तवे । महां । उरुं । सः । एनं । सश्चत् । देवः । देवं ।
सत्यं । इंद्रं । सत्यः । इंदुः ॥१॥

गृत्समदो ब्रूते । महिषो महान् पूज्यस्तुविशुष्मो बहुबलस्तृपत् ॥ तृप प्रीणने तुदादिः । आगमानुशासनस्यानित्यत्वान्नुमभावः ॥ तृप्यन् इंद्रस्त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतन्नामकेष्वाभिप्लविकेष्वहःसु सुतमभिषुतं यवाशिरं यवमयैः सक्तुभिर्मिश्रितं ॥ आङ्पूर्वस्य श्रीणातेः क्विपि अपस्पृधेथामित्यादिना शिर इत्यादेशः ॥ तं सोमं विष्णुना सहापिबत् । यथावशत् । पूर्वं यथा तं सोममकामयत तथापिबत् ॥ वश कांतौ । बहुलं छंदसीति शपो लुगभावः ॥ पीतः स सोमो महां महांतमुरुं तेजसा विस्तीर्णमीमेनमिंद्रं ममाद । अमादयत् । किमर्थं । महि महद्वृत्रहननादिलक्षणं कर्म कर्तवे कर्तुं । सत्य इंदुः स्रवन् देवो दीप्यमानः स सोमः सत्यं यथार्थभूतं देवं सोमं कामयमानमिंद्रं सश्चत ॥ सश्चतिर्व्याप्तिकर्मा ॥ व्याप्नोतु ॥

अध त्विषीमाँ अभ्योजसा क्रिविं युधाभवदा रोदसी अपृणदस्य मज्मना प्र वावृधे ।
अधत्तान्यं जठरे प्रेमरिच्यत सैनं सश्चद्देवो देवं सत्यमिंद्रं सत्य इंदुः ॥२॥
अध । त्विषिऽमान् । अभि । ओजसा । क्रिविं । युधा । अभवत् । आ । रोदसी इति ।
अपृणत् । अस्य । मज्मना । प्र । ववृधे ।
अधत्त । अन्यं । जठरे । प्र । ईं । अरिच्यत । सः । एनं । सश्चत् । देवः । देवं । सत्यं ।
इंद्रं । सत्यः । इंदुः ॥२॥

अध अथ सोमपानानंतरं त्विषीमान् दीप्तिमानिंद्र ओजसा बलेन क्रिविं नामासुरं युधा युद्धेनाभ्यभवत् । अभिभूतवान् । किंच स इंद्रो रोदसी द्यावापृथिव्यावापृणत् । स्वतेजसा समंतात्पूरयामास । तथास्य पीतस्य सोमस्य मज्मना बलेन प्रवावृधे । प्रकर्षेण वर्धते । यद्वा अस्य क्रिवेरसुरस्य मज्मना सारेण रोदसी अपूरयत् ।

स इंद्रः सोमं द्वेधा विभज्यान्यं भागं स्वकीये जठरेऽधत्त । ईमेनमपरं भागं देवेभ्यः प्रारिरेचत । प्रारेचयत । एतेनार्धमिंद्राय अर्धमन्येभ्यो देवेभ्य इत्युक्तं भवति । तथा तैत्तिरीयकं । यत्सर्वेषामर्धमिंद्रः प्रति तस्मादिंद्रो देवतानां भूयिष्ठभाक्तमः । तै० सं० ५. ४. ८. ३ । इति ॥

साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।
दाता राधः स्तुवते काम्यं वसु सैनं सश्चद्देवो देवं सत्यमिंद्रं सत्य इंदुः ॥३॥

साकं । जातः । क्रतुना । साकं । ओजसा । ववक्षिथ । साकं । वृद्धः । वीर्यैः । ससहिः । मृधः । विऽचर्षणिः ।
दाता । राधः । स्तुवते । काम्यं । वसु । सः । एनं । सश्चत । देवः । देवं । सत्यं । इंद्रं । सत्यः । इंदुः ॥३॥

क्रतुना कर्मणा प्रज्ञया वा साकं सह जातः साकमोजसा बलेन सह ववक्षिथ । वोढुमिच्छसि ॥ वहेः सनंतस्य लिटि सत्वादाम्न भवति ॥ किंच त्वं वीर्यैः शत्रुहननादिलक्षणैः पराक्रमैः साकं सह वृद्धः प्रवृद्धो मृधो हिंसकान् संग्रामान्वा सासहिः ॥ न लोकाव्ययेति षष्ठीप्रतिषेधः ॥ तेषामभिभविता । विचर्षणिः पुण्यकृतोऽपुण्यकृतश्च विशेषेण द्रष्टा स्तुवते स्तोत्रं कुर्वाणाय यजमानाय राधः साधकं काम्यं प्रार्थनीयं वसु धनं दाता सन् ववक्षिथेति समन्वयः । सैनमिति परोक्षनिर्देशः सिद्धार्थश्च ॥

तव त्यन्नर्यं नृतोऽप इंद्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतं ।
यद्देवस्य शवसा प्रारिणा असुं रिणन्नपः ।
भुवद्विश्वमभ्यादेवमोजसा विदादूर्जं शतक्रतुर्विदादिषं ॥४॥

तव । त्यत् । नर्यं । नृतो इति । अपः । इंद्र । प्रथमं । पूर्व्यं । दिवि । प्रऽवाच्यं । कृतं ।
यत् । देवस्य । शवसा । प्र । अरिणाः । असुं । रिणन् । अपः ।
भुवत् । विश्वं । अभि । अदेवं । ओजसा । विदात् । ऊर्जं । शतऽक्रतुः । विदात् । इषं ॥४॥

नृतो सर्वेषां नर्तयितः हे इंद्र नर्यं नराणां हितकरं प्रथमं प्रततं ॥ प्रथमं प्रततमिति यास्कः ॥ पूर्व्यं पूर्वकालभवं त्वया कृतं । तव त्यत् तदपः कर्म दिवि स्वर्गलोके प्रवाच्यं । प्रकर्षेण वक्तव्यं । श्लाघनीयमित्यर्थः । किं तत् । देवस्य विजिगीषोरसुरस्यासुं प्राणं रिणन् हिंसन् त्वमपस्तेन निरुद्धान्युदकानि प्रारिणाः । प्रैरयः । इति यदेतत्कर्म तत्प्रवाच्यमिति समन्वयः । परोक्षनिर्देशोऽवशिष्टः । स इंद्रो विश्वं व्याप्तमदेवं तमोरूपमसुरमोजसा बलेनाभिभुवत् । अभिभवतु । किंच शतक्रतुरिंद्र ऊर्जं बलं विदात् । इषं हविर्लक्षणमन्नं च विदात् ॥ विदिर् लाभे शविकरणो । लेट्यडागमः ॥ ॥२८॥ ॥२॥

तृतीयेऽनुवाके दश सूक्तानि । तत्रेदमेकोनविंशत्यृचं गार्त्समदं प्रथमं सूक्तं । अत्रेयमनुक्रमणिका । गणा नवैकोना ब्राह्मणस्पत्यं ह बार्हस्पत्यास्तु दृष्टलिंगाः पंचदश्यन्त्ये त्रिष्टुभाविति । पंचदश्येकोनविंशी च त्रिष्टुभौ । शिष्टा जगत्यः । यासु बृहस्पतिशब्दः श्रूयते ता बार्हस्पत्याः । शिष्टा ब्राह्मणस्पत्याः ॥ प्रवर्ग्येऽभिष्टव एतत्सूक्तं । स्पृष्टोदकमिति खंडे सूत्रितं । गणानां त्वा प्रथश्च यस्य । आ० ४. ६ । इति ॥

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमं ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनं ॥१॥

गणानां । त्वा । गणऽपतिं । हवामहे । कविं । कवीनां । उपमश्रवःऽतमं ।
ज्येष्ठऽराजं । ब्रह्मणां । ब्रह्मणः । पते । आ । नः । शृण्वन् । ऊतिऽभिः । सीद । सदनं ॥१॥

हे ब्रह्मणस्पते ब्रह्मणोऽन्नस्य परिवृढस्य कर्मणो वा पते पालयितः गणानां देवादिगणानां संबंधिनं गणपतिं स्वीयानां पतिं । कवीनां क्रांतदर्शिनां कविं । उपमश्रवस्तमं । उपमीयतेऽनयेत्युपमा । सर्वेषामन्नानामुपमानं श्रवोऽन्नं यस्य स तथोक्तः । अतिशयेनोपमश्रवा उपमश्रवस्तमः ॥ उपमः माङ् माने । आतश्चोपसर्गे करणेऽङ्प्रत्ययः । ङ्यापोः संज्ञाछंदसोरिति ह्रस्वत्वं ॥ ज्येष्ठराजं । ज्येष्ठाः प्रशस्यतमाः । तेषां मध्ये राजंतं ब्रह्मणां मंत्राणां स्वामिनं त्वा त्वां हवामहे । अस्मिन्कर्मण्याह्वयामः । किंच नोऽस्माकं स्तुतीः शृण्वन् स्वमूतिभिः पालनैर्हेतुभूतैः सादनं । सीदंत्यस्मिन्निति सदनं । यज्ञगृहमासीद । उपविश ॥

देवाश्चित्ते असुर्य प्रचेतसो बृहस्पते यज्ञियं भागमानशुः ।
उस्रा इव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसि ॥२॥
देवाः । चित् । ते । असुर्य । प्रऽचेतसः । बृहस्पते । यज्ञियं । भागं । आनशुः ।
उस्राःऽइव । सूर्यः । ज्योतिषा । महः । विश्वेषां । इत् । जनिता । ब्रह्मणां । असि ॥२॥

असुर्य असुराणां हंतः हे बृहस्पते प्रचेतसः प्रकृष्टज्ञानास्ते त्वदीया देवाश्चित् देवा अपि यज्ञियं यज्ञार्हं भागमानशुः । प्राप्नुवन् । यद्वा प्रचेतस इति बृहस्पतेर्विशेषणं । प्रकृष्टज्ञानवतस्ते तव संबंधिनो देवा इति योजनीयं । यद्वा प्रचेतसः । विभक्तिपरिणामः । प्रचेतसि त्वयि सति देवा यज्ञियं भागमानशिरे । कर्मविघ्नकारिणामसुराणां रक्षोघ्नमंत्रैरपाकरणात् । न वै ब्रह्मण्वद्रिष्यति । ऐ॰ ब्रा॰ १. १३. । इति श्रवणात् । ज्योतिषा तेजसा महो महनीयः सूर्य उस्रा इव । उस्राः किरणाः ॥ स्फायितंचीत्यादिना रक्प्रत्ययः ॥ यथा किरणाञ्जनयति तथा विश्वेषां सर्वेषां ब्रह्मणां मंत्राणां जनिता जनयितेवासि ॥ जनिता मंत्र इति निपातनाणिलोपः ॥

आ विबाध्या परिरापस्तमांसि च ज्योतिष्मंतं रथमृतस्य तिष्ठसि ।
बृहस्पते भीममित्रदंभनं रक्षोहणं गोत्रभिदं स्वर्विदं ॥३॥
आ । विऽबाध्य । परिऽरपः । तमांसि । च । ज्योतिष्मंतं । रथं । ऋतस्य । तिष्ठसि ।
बृहस्पते । भीमं । अमित्रऽदंभनं । रक्षःऽहनं । गोत्रऽभिदं । स्वःऽविदं ॥३॥

हे बृहस्पते परिरपः । परितो रपः पापरूपं रक्षः ॥ यद्वा रप लप व्यक्तायां वाचि । क्विप् ॥ परिवदतो निंदकान् तमांसि च विबाध्य तेजसा निराकृत्य ज्योतिष्मंतं ज्योतिषा तद्वंतमृतस्य यज्ञस्य प्रापकं भीमं शत्रूणां भयकरममित्रदंभनं शत्रूणां हिंसकं । तदेवाह रक्षोहणं रक्षसां हंतारं गोत्रभिदं मेघानां भेत्तारं स्वर्विदं स्वर्गस्य लंभकं रथमातिष्ठसि । अधितिष्ठसि ॥

सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत् ।
ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत्ते महित्वनं ॥४॥
सुनीतिऽभिः । नयसि । त्रायसे । जनं । यः । तुभ्यं । दाशात् । न । तं । अंहः । अश्नवत् ।
ब्रह्मऽद्विषः । तपनः । मन्युऽमीः । असि । बृहस्पते । महि । तत् । ते । महिऽत्वनं ॥४॥

हे बृहस्पते सुनीतिभिः । शोभनं नीतयो येषु ते सुनीतयः सन्मार्गाः । तैर्जनं नयसि । अपेक्षितफलं प्रापयसि । त्रायसे । जनमापन्नो रक्षसि च । यो यजमानस्तुभ्यं हविर्लक्षणमन्नं दाशात् प्रयच्छेत् ॥ दाशृ दाने ।

त्यडागमः ॥ तमंहः पापं पापरूपं दारिद्र्यं वा नाश्नवत् । न प्राप्नुयात् ॥ अश्नोतेर्लेटि व्यत्ययेन परस्मैपदं । अडागमः ॥ ब्रह्मद्विषो ब्राह्मणानां मंत्राणां वा द्वेष्टुस्तपनस्तापकोऽसि । किंच मन्युमीर्मन्योः क्रोधस्य परपापानस्य वा हिंसकोऽसि ॥ मीङ् हिंसायां । क्विप् ॥ ते तव तत्तादृशं महि महत् प्रभूतं महित्वनं माहात्म्यमस्ति ॥

न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः ।
विश्वा इदस्माद्ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते ॥५॥
न । तं । अंहः । न । दुःऽइतं । कुतः । चन । न । अरातयः । तितिरुः । न । द्वयाविनः ।
विश्वाः । इत् । अस्मात् । ध्वरसः । वि । बाधसे । यं । सुऽगोपाः । रक्षसि । ब्रह्मणः । पते ॥५॥

हे ब्रह्मणस्पते सुगोपाः सुष्ठु पालयिता त्वं यं जनं रक्षसि पालयसि तं जनमंहः आहंतव्यं दुःखं न बाधते । दुरितं तत्कारणं पापं च न बाधते । अरातयो हिंसकास्तं जनं कुतश्चन सर्वासु दिक्षु न तितिरुः ॥ तिरतिर्हिंसाकर्मा । लिट् ॥ न हिंसंति । तथा द्वयाविनः । मनस्यन्यत्क्रियाया चान्यदित्येतद्द्वयं येषामस्ति ते द्वयाविनो वंचकाः । तेऽपि तं जनं न बाधते । किंच ध्वरसो हिंसिका विश्वाः सर्वाः सेनास्तदर्थं विबाधसे । विशेषेण बाधस एव ॥ ॥२९॥

त्वं नो गोपाः पथिकृद्विचक्षणस्तव व्रताय मतिभिर्जरामहे ।
बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना हरस्वती ॥६॥
त्वं । नः । गोपाः । पथिऽकृत् । विऽचक्षणः । तव । व्रताय । मतिऽभिः । जरामहे ।
बृहस्पते । यः । नः । अभि । ह्वरः । दधे । स्वा । तं । मर्मर्तु । दुच्छुना । हरस्वती ॥६॥

हे बृहस्पते त्वं नोऽस्माकं गोपाः पालयिता पथिकृत् सन्मार्गस्य कर्तासि । विचक्षणो विशेषेण द्रष्टा सर्वज्ञस्त्वं । तव व्रताय त्वत्संबंधिने यज्ञाय मतिभिः स्तोत्रैर्जरामहे । स्तुमः ॥ जरतिः स्तुतिकर्मा ॥ यः पुमान् नोऽस्मानभि अभिलक्ष्य ह्वरः ॥ ह्वृ कौटिल्ये । भावेऽसुन् ॥ कौटिल्यं दधे विदधाति तं स्वा स्वीया दुच्छुना दुर्बुद्धिर्हरस्वती वेगवती सती मर्मर्तु । मोचयतु ॥ मृङ् प्राणत्यागे । अंतर्भावितण्यर्थस्य यङ्लुकि लोटि रूपं ॥

उत वा यो नो मर्चयादनागसोऽरातीवा मर्तः सानुको वृकः ।
बृहस्पते अप तं वर्तया पथः सुगं नो अस्यै देववीतये कृधि ॥७॥
उत । वा । यः । नः । मर्चयात् । अनागसः । अरातिऽवा । मर्तः । सानुकः । वृकः ।
बृहस्पते । अप । तं । वर्तय । पथः । सुऽगं । नः । अस्यै । देवऽवीतये । कृधि ॥७॥

उत वा अपि च हे बृहस्पते अरातीवाभिमुखमागमनवान् सानुकः समुच्छ्रितः ॥ सानु समुच्छ्रितमिति यास्कः । नि॰ २. २४ ॥ वृकः ॥ वृक आदाने ॥ धनादीनामादाता यो मर्तो मनुष्योऽनागसोऽपराधरहितानस्मान् मर्चयात् ॥ मर्चयतिर्हिंसाकर्मा ॥ हिंस्यात् । तं मर्तं पथो वैदिकान्मार्गादपवर्तय । निवर्तय । नोऽस्माकमस्यै देववीतये । देवानां वीतिं सोमभक्षणमर्चयतीति देववीतिर्यज्ञः । अस्यै देववीतयेऽस्मै यज्ञाय नोऽस्माकं सुगं सुष्ठु गंतव्यं मार्गं कृधि । कुरु । यज्ञानुष्ठानाय सुमतिं देहीत्यर्थः ॥

त्रातारं त्वा तनूनां हवामहेऽवस्पर्तरधिवक्तारमस्मयुं ।
बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशन् ॥८॥

त्रातारं। त्वा। तनूनां। हवामहे। अवंऽस्पर्तः। अधिऽवक्तारं। अस्मऽयुं।
बृहस्पते। देवऽनिदः। नि। बर्हय। मा। दुःऽएवाः। उत्ऽतरं। सुम्नं। उत्। नशन् ॥८॥

अवस्पर्तः उपद्रवेभ्यः पारयितः। यद्वा अवसा रक्षणेनापद्भ्यः पारयितः हे बृहस्पते तनूनामंगानां पुत्रादीनां वा त्रातारं पालयितारमधिवक्तारमस्मासु पक्षपातेनाधिकं वक्तारमस्मयुं हविष्प्रदानेऽस्मान् कामयमानं त्वां हवामहे। अस्मिन्कर्मण्याह्वयामः। किंच देवनिदो देवनिंदकानसुरान् निबर्हय। विनाशय। दुरेवा दुष्टगमना दुर्बुद्धयः शत्रव उत्तरमुत्कृष्टतरं सुम्नं सुखं मा उन्नशन्। मा व्याप्नुवंतु ॥

त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि ।
या नो दूरे तळितो या अरातयोऽभि संति जंभया ता अनप्नसः ॥९॥
त्वया। वयं। सुऽवृधा। ब्रह्मणः। पते। स्पार्हा। वसु। मनुष्या। आ। ददीमहि।
याः। नः। दूरे। तळितः। याः। अरातयः। अभि। संति। जंभय। ताः। अनप्नसः ॥९॥

हे ब्रह्मणस्पते सुवृधा सुष्ठु वर्धयित्रा त्वया हेतुना वयं स्पार्हा स्पृहणीयानि वसु धनानि मनुष्या ॥ सुपां सुलुगिति चतुर्थीबहुवचनस्याकारः ॥ मनुष्येभ्यो दातृभ्य आददीमहि। गृह्णीमहे ॥ आङो दोऽनास्यविहरण इत्यात्मनेपदं ॥ दूरे दूरदेशे या अरातयः याश्च तळितोऽंतिकेऽरातयो नोऽस्मानभि संति। अभि भवंति अनप्नसः कर्महीनान् ता अरातीस्तान् शत्रून् जंभय। नाशय ॥ जभि नाशने चुरादिः ॥ अत्र निरुक्तं। त्वया वयं सुवर्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि याश्च नो दूरे तळितो याश्चांतिकेऽरातयोऽदानकर्माणो वादानप्रज्ञा वा जंभय ता अनप्नसोऽप्न इति रूपनाम। नि॰ ३. ११.। इति ॥

त्वया वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा सस्निना युजा ।
मा नो दुःशंसो अभिदिप्सुरीशत प्र सुशंसा मतिभिस्तारिषीमहि ॥१०॥
त्वया। वयं। उत्ऽतमं। धीमहे। वयः। बृहस्पते। पप्रिणा। सस्निना। युजा।
मा। नः। दुःऽशंसः। अभिऽदिप्सुः। ईशत। प्र। सुऽशंसाः। मतिऽभिः। तारिषीमहि ॥१०॥

हे बृहस्पते पप्रिणा ॥ पॄ पालनपूरणयोः। आदृगमहनेति किन्प्रत्ययः। छांदसो यणादेशः ॥ कामानां पूरकेण सस्निना शुद्धेन युजा सहायेन त्वया हेतुनोत्तमं वयो हविर्लक्षणमन्नं वयं धीमहे। धारयामः ॥ धी धारणे। दैवादिकः ॥ दुःशंसो दुःशंसनीयोऽभिदिप्सुरभिदंभितुमभिभवितुमिच्छुः पुरुषो नोऽस्माकं मा ईशत। मा ईशिष्ट। ईश्वरो मा भवतु ॥ ईश ऐश्वर्ये। लेट्यडागमः ॥ वयं मतिभिः स्तोत्रैः सुशंसाः शोभनशंसनोपेताः संतः प्रतारिषीमहि। प्रकर्षेण वर्धमहि ॥ ॥३०॥

अनानुदो वृषभो जग्मिराहवं निष्टप्ता शत्रुं पृतनासु सासहिः ।
असि सत्य ऋणया ब्रह्मणस्पत उग्रस्य चिद्दमिता वीळुहर्षिणः ॥११॥
अननुऽदः। वृषभः। जग्मिः। आऽहवं। निःऽतप्ता। शत्रुं। पृतनासु। ससहिः।
असि। सत्यः। ऋणऽयाः। ब्रह्मणः। पते। उग्रस्य। चित्। दमिता। वीळुऽहर्षिणः ॥११॥

हे ब्रह्मणस्पते अनानुदः। अनु पश्चाद्ददातीत्यनुदः। स यस्य नास्तीत्यननुदः। दातृतरमुख्य इत्यर्थः। अत एव वृषभः कामानां वर्षिता। आहवं ॥ आहूयंतेऽस्मिन्नित्याहवो युद्धं। आङि युद्धे। पा॰ ३. ३. ७३.। इत्यप्प्रत्ययः संप्रसारणं च ॥ तद्युद्धं जग्मिर्गंता ॥ आदृगमहनेति किन्प्रत्ययः। लिड्वद्भावादाहवमित्यत्र षष्ठीप्रतिषेधः ॥ शत्रुं

शातयितारं निष्टप्ता। नितरां तस्य तापकः ॥ तृन्नंतत्वात्षष्ठीप्रतिषेधः। निसस्तपतावनासेवने। पा० ८ ३ १०२। इति षत्वं। तादौ च निती इति गतेः स्वरः ॥ पृतनासु संग्रामेषु सासहिः शत्रूणामभिभविता। एतादृशस्त्वं सत्य. सत्यपराक्रमः सत्यप्रज्ञो वासि। ऋणया ऋणस्य यावयितासि ॥ यु मिश्रणामिश्रणयोः। ण्यंतस्य क्विपि णिलोपे लोपो व्योर्वलीति वलोपः ॥ किंच उग्रस्य चित् ओजस्विनोऽपि दमितोपशमयिता वीळुहर्षिणो दृढहर्षस्य कामुकस्य नास्तिकस्य चिद्दमितासि ॥

अदे॑वेन॒ मन॑सा॒ यो रि॑षण्यति॑ शा॒सामु॒ग्रो मन्य॑मानो॒ जिघां॑सति ।
बृह॑स्पते॒ मा प्रण॒क्तस्य॑ नो व॒धो नि क॑र्म म॒न्युं दु॒रेव॑स्य॒ शर्ध॑तः ॥१२॥

अदे॑वेन । मन॑सा । यः । रि॒ष॒ण्यति॑ । शा॒सां । उ॒ग्रः । मन्य॑मानः । जिघां॑सति ।
बृह॑स्पते । मा । प्रण॑क् । तस्य॑ । नः॒ । व॒धः । नि । क॒र्म॒ । म॒न्युं । दुः॒ऽएव॑स्य । शर्ध॑तः ॥१२॥

यः पुमान् अदेवेन देवानमन्यमानेन यद्वा आसुरवृत्तिविशिष्टेन मनसास्मान् रिषण्यति। हिनस्ति ॥ दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यतीति निपातितः ॥ यश्चायं पापचित्तो मन्यमान आत्मानं बहु मन्यमानः पुमान् शासामुक्थस्य शंसितारं। यद्वा अस्माकमाशंसां। शासितॄणामुग्र इति वा योजनीयं। अस्मान् जिघांसति हंतुमिच्छति ॥ हंतेः सन्यज्झनगमां सनीति दीर्घः ॥ हे बृहस्पते तस्य वधः ॥ वध्यतेऽनेनेति वध आयुधं ॥ नोऽस्मान् मा प्रणक् ॥ पृची संपर्के श्नमविकरणो। व्यत्ययेनामागमः। चादिलोपे इति न निघातः। व्यत्ययेनाद्युदात्तः ॥ किंच दुरेवस्य दुष्टगमनस्य शर्धतो बलवतः। यद्वा दुष्टाभिसंधेर्वेग कुर्वतस्तस्य मन्युं क्रोधं ज्ञानं वा नि कर्म। त्वत्प्रसादान्निराकुर्मश्च ॥

भरे॑षु॒ हव्यो॒ नम॑सोपस॒द्यो॒ गंता॒ वाजे॑षु॒ सनि॑ता॒ धनं॑धनं । .
विश्वा॒ इद॒र्यो अ॑भिदि॒प्स्वो॒३॒॑मृधो॒ बृह॒स्पति॒र्वि व॑वर्हा॒ रथाँ॑ इव ॥१३॥

भरे॑षु । हव्यः॑ । नम॑सा । उप॒ऽसद्यः॑ । गंता॑ । वाजे॑षु । सनि॑ता । धन॑ऽधनं ।
विश्वाः॑ । इत् । अ॒र्यः । अ॒भि॒ऽदि॒प्स्वः॑ । मृधः॑ । बृह॒स्पतिः॑ । वि । व॒व॒र्ह॒ । रथा॑न्ऽइव ॥१३॥

स बृहस्पतिर्भरेषु संग्रामेषु हव्यो योद्धृभिः स्वरक्षणार्थमाह्वातव्यो नमसोपसद्यः सर्वैर्नमसोपसदनीयः किंच वाजेषु गंता। संग्रामेषु रक्षार्थं गमनशीलः। तथा धनं धनं सनिता संभक्ता दाता ॥ तृन्नंतत्वात्षष्ठीप्रतिषेध. तथार्यः स्वामी बृहस्पतिरभिदिप्स्वोऽभिभवनेच्छावतीर्विश्वा इत सर्वा एव मृधो हिंसिकाः सेना रथानिव युद्धे वेगेन परकीयान्रथानिव विववर्ह। विशेषेण शिथिलीचकार। यद्वा इवशब्दश्चार्थे। रथांश्च विववर्ह लडर्थे लिट् ॥

तेजि॑ष्ठया तप॒नी र॒क्षस॑स्तप॒ ये त्वा॑ नि॒दे द॑धि॒रे दृ॒ष्टवी॑र्यं ।
आ॒विस्तत्कृ॑ष्व॒ यदस॑त्त उ॒क्थ्यं१॒॑ बृह॑स्पते॒ वि प॑रि॒रापो॑ अर्दय ॥१४॥

तेजि॑ष्ठया । त॒प॒नी । र॒क्षसः॑ । त॒प॒ । ये । त्वा॒ । नि॒दे । द॒धि॒रे । दृ॒ष्टऽवी॑र्यं ।
आ॒विः । तत् । कृ॒ष्व॒ । यत् । अस॑त् । ते॒ । उ॒क्थ्यं॑ । बृह॑स्पते । वि । प॒रि॒ऽरपः॑ । अ॒र्द॒य ॥१४॥

हे बृहस्पते तेजिष्ठयातिशयेन तिग्मया तपनी तापकारिण्या हेत्या रक्षसो राक्षसांस्तप। तापय। ये राक्षसा दृष्टवीर्यं युद्धेषु दृष्टपराक्रमं त्वां निदे निंदाया विषये दधिरे। कृतवंतः। तान् तापयेति समन्वयः ते तवोक्थ्यं सर्वैः प्रशंसनीयं यद्वीर्यमसत् पूर्वमासीत् तदधुनाविष्कृष्व। प्रकटीकुरु। तेन च वीर्येण परिराप परिवदतो निंदकानसुरान् व्यर्दय। विशेषेण बाधस्व ॥

बार्हस्पत्ये पशावेषा हविषोऽनुवाक्या। प्रदानामामिति खंडे सूचितं। बृहस्पते अति यदर्यो अर्हात्तमृत्विया उप वाचः सचंते। आ॰ ३.७.। इति ॥ एषैवाश्विनशस्त्रे परिधानीया। सूचितं। बृहस्पते अति यदर्यो अर्हादिति परिधानीया। आ॰ ६.५.। इति ॥

बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रं ॥१५॥
बृहस्पते। अति। यत्। अर्यः। अर्हात्। द्युऽमत्। विऽभाति। क्रतुऽमत्। जनेषु।
यत्। दीदयत्। शवसा। ऋतऽप्रजात। तत्। अस्मासु। द्रविणं। धेहि। चित्रं ॥१५॥

ऋतप्रजात सत्येनोत्पन्न हे बृहस्पते अर्यः श्रेष्ठो ब्राह्मणः सर्वान् कामानतीत्य यद्ब्रह्मवर्चसं तेजोऽर्हात्। पूजयेत ॥ अर्ह पूजायां। लिङ्यडागमः ॥ जनेषु ब्राह्मणेषु द्युमत दीप्तियुक्तं क्रतुमत ज्ञानोपेतं यद्ब्रह्मवर्चसं विभाति। विशेषेण दीप्यते। यच्च शवसा बलेन स्वाश्रयं जनं दीदयत ॥ दीदयतिर्दीप्तिकर्मा ॥ दीपयति। चित्रं चायनीयं तद्ब्रह्मवर्चसरूपं द्रविणमस्मासु धेहि। निधेहि ॥ यद्वा अर्य उदारोऽपि त्वया दत्तं धनमतीवार्हात्। अद्धीत। यच्च त्वद्दत्तं धनं जनेषु तव स्तोत्रं कुर्वाणेषु दीप्तियुक्तं कर्मसाधनं च विभाति यच्च धनं शवसान्नादिसमृद्ध्या दीदयत स्वाश्रयं दीपयति तादृशं धनमस्मासु धेहि ॥ तथा च ब्राह्मणं। बृहस्पते अति यदर्यो अर्हादित्येतया परिदध्यात्तेजस्कामो ब्रह्मवर्चसकामोऽतीव वान्यान्ब्रह्मवर्चसमर्हति द्युमदिति द्युमद्दिव वै ब्रह्मवर्चसं विभातीति वीव वै ब्रह्मवर्चसं भाति यद्दीदयच्छवस ऋतप्रजातेति दीदायेव वै ब्रह्मवर्चसं तदस्मासु द्रविणं धेहि चित्रमिति चित्रमिव वै ब्रह्मवर्चसं ब्रह्मवर्चसी ब्रह्मयशसी भवति। ऐ॰ ब्रा॰ ४.११.। इति ॥ ॥३१॥

मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः।
आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः ॥१६॥
मा। नः। स्तेनेभ्यः। ये। अभि। द्रुहः। पदे। निरामिणः। रिपवः। अन्नेषु। जगृधुः।
आ। देवानां। ओहते। वि। व्रयः। हृदि। बृहस्पते। न। परः। साम्नः। विदुः ॥१६॥

हे बृहस्पते नोऽस्मान स्तेनेभ्यः। स्त्यानमस्ति येष्विति स्तेनाश्चौराः। तेभ्यो मा दाः। तान दर्शयति। ये चौरा द्रुहः प्राणद्रोहस्य पदे स्थाने निरामिणो नितरां रमणशीला रिपवो हिंसकाः संतोऽन्नेषु परकीयेष्वभिजागृधुः। अभिकांक्षंति ॥ गृधु अभिकांक्षायां। लिटि रूपं ॥ ये च देवानां वि व्रयो विशेषेण वर्जनं ॥ व्री व्ली इति धातू वर्जने वर्तेते। य एवं विद्वान दक्षिणां प्रतिगृह्णाति नैनं दक्षिणा व्लीनाति। तै॰ ब्रा॰ २ २.५.१। इत्येकस्य वर्जनार्थे दृष्टस्यापि वर्जनार्थत्वं ॥ तत हृदि स्वकीये हृदय आ ओहते। आवहंति। देवानां यागान् स्तुतीश्च न करवामेति मन्यंत इति यावत। तेभ्योऽस्मान मा दा इति समन्वयः। ये पुमांसः साम्नः सामयास्त्वत्तः परः परस्तादन्यदुत्कृष्टं साम यद्रक्षोघ्नं। साम वै रक्षोहेति। न विदुः। न जानंति। किंतु सर्वसाधकं साम त्वामेव विदुषोऽस्मान स्तेनेभ्यो मा दाः ॥

विश्वेभ्यो हि त्वा भुवनेभ्यस्परि त्वष्टाजनत्साम्नःसाम्नः कविः।
स ऋणचिदृणया ब्रह्मणस्पतिर्द्रुहो हंता मह ऋतस्य धर्तरि ॥१७॥
विश्वेभ्यः। हि। त्वा। भुवनेभ्यः। परि। त्वष्टा। अजनत्। साम्नःऽसाम्नः। कविः।
सः। ऋणऽचित्। ऋणऽयाः। ब्रह्मणः। पतिः। द्रुहः। हंता। महः। ऋतस्य। धर्तरि ॥१७॥

हे ब्रह्मणस्पते त्वष्टा प्रजापतिर्विश्वेभ्यो भुवनेभ्यस्परि सर्वेभ्यो भूतजातेभ्य उत्कृष्टं त्वामजनयिद्ध। अजीजनत खलु। ततस्त्वं साम्नः साम्नः सर्वस्यापि साम्नः कविः ॥ कु शब्दे। अच इरिति इप्रत्ययः ॥ उच्चारयिता कर्तासि।

यद्वा कविः क्रांतदर्शी त्वष्टा साम्नः साम्नः सर्वस्यापि साम्नः सारेण त्वामजीजनत । किंच स ब्रह्मणस्पतिर्महो महत ऋतस्य यज्ञस्य धर्तरि धारके यजमाने ऋणचित स्तोतृकाममृणमिव चिनोतीति ऋणचित । किंच ऋणयाः पापरूपस्य ऋणस्य यावयिता पृथक्कर्ता च द्रुहः कर्मणो द्रोग्धुरसुरस्य हता भवति ॥

तव॑ श्रि॒ये व्य॑जिहीत॒ पर्व॑तो॒ गवां॑ गो॒त्रमु॒दसृ॑जो॒ यदं॑गिरः ।
इंद्रे॑ण यु॒जा तम॑सा॒ परी॑वृतं॒ बृह॑स्पते॒ निर॒पामौ॑ब्जो अर्ण॒वं ॥१८॥

तव॑ । श्रि॒ये । वि । अ॒जि॒हो॒त॒ । पर्व॑तः । गवां॑ । गो॒त्रं । उ॒त्ऽअसृ॑जः । यत् । अं॒गि॒रः ।
इंद्रे॑ण । यु॒जा । तम॑सा । परि॑ऽवृतं । बृह॑स्पते । निः । अ॒पां । औ॒ब्जः । अ॒र्ण॒वं ॥१८॥

अंगिर आंगिरस हे बृहस्पते गवामावारको वलेनाधिष्ठितः पर्वतस्तव श्रिये आश्रयणार्थं व्यजिहीत । विवृतद्वारतामगच्छत् । ततस्त्वं यद्यदा गोत्रं ॥ इनित्रकत्यचश्चेति समूहार्थे त्रप्रत्ययः ॥ गवां समूहमुदसृजः । निरगमयः । तदेंद्रेण युजा सहायेन युक्तस्त्वं तमसा वृत्रासुरेण परीवृतं परित आक्रांतमपामर्णवं स्थानभूतं मेघं निरौब्जः । नितरामधोमुखमकार्षीः ॥

ब्रह्म॑णस्पते॒ त्वम॒स्य यं॒ता सू॒क्तस्य॑ बोधि॒ तन॑यं च जिन्व ।
विश्वं॒ तद्भ॒द्रं यदवं॑ति दे॒वा बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥१९॥

ब्रह्म॑णः । प॒ते॒ । त्वं । अ॒स्य । यं॒ता । सु॒ऽउ॒क्तस्य॑ । बो॒धि॒ । तन॑यं । च॒ । जि॒न्व॒ ।
विश्वं॑ । तत् । भ॒द्रं । यत् । अ॒वं॑ति । दे॒वाः । बृ॒हत् । व॒दे॒म । वि॒दथे॑ । सु॒वीराः॑ ॥१९॥

हे ब्रह्मणस्पते ब्रह्मणां स्तोत्राणामधिपते अस्य जगतो यंता नियामकस्त्वं सूक्तस्यास्मदीयमिदं ब्राह्मणस्पत्यं सूक्तं बोधि । बुध्यस्व । त्वं तनयं पुत्रपौत्रादिलक्षणं संतानं जिन्व ॥ जिविः प्रीणनार्थः । लोटि रूपं ॥ प्रीणय । भवादृशा देवा यदवंति रक्षंति तत्तादृशं विश्वं सर्वं भद्रं कल्याणं भवति । अतो वयं विदथेऽस्मिन्यज्ञे सुवीराः शोभनपुत्रपौत्राः संतो बृहत्प्रभूतमिदं स्तोत्रं वदेम । ब्रूयाम ॥ ॥ ३२ ॥ ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके षष्ठोऽध्यायः समाप्तः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथ ऋषिच्छंदोदेवताविनियोगपुरःसरं सप्तमो व्याख्यायते ॥ गार्त्समदस्य द्वितीयमंडलस्य तृतीयेऽनुवाके दश सूक्तानि । तत्रैकं सूक्तं व्याकृतं । सेमामिति षोडशर्चं द्वितीयं सूक्तं । अत्रानुक्रम्यते । सेमां षोडशाद्या त्रिष्टुप् द्वादशी च सैंद्री चेति । मंडलद्रष्टा गृत्समद ऋषिः । द्वादशीषोडश्यौ त्रिष्टुभौ । शिष्टाश्चतुर्दश जगत्यः । ब्राह्मणस्पत्यं हीत्युक्तत्वात् तुभ्यादिपरिभाषयेदमादीनि त्रीणि सूक्तानि ब्राह्मणस्पत्यानि । अस्य सूक्तस्य द्वादश्यैंद्री इंद्रदेवत्या । चशब्दाद्ब्राह्मणस्पत्या च ॥ सामान्यविनियोगः पूर्वमेवोक्तः । विशेषतस्तु लिंगादवगंतव्यः ॥

सेमाम॑विड्ढि॒ प्रभृ॑तिं॒ य ईशि॑षे॒ऽया वि॑धेम॒ नव॑या म॒हा गि॒रा ।
यथा॑ नो मी॒ढ्वान्स्तव॑ते॒ सखा॒ तव॒ बृह॑स्पते॒ सीष॑धः॒ सोत नो॑ म॒तिं ॥१॥

सः। इमां। अविड्ढि। प्रऽभृतिं। यः। ईशिषे। अया। विधेम। नवया। महा। गिरा।
यथा। नः। मीढ्वान्। स्तवते। सखा। तव। बृहस्पते। सीसधः। सः। उत। नः। मतिं ॥१॥

हे ब्रह्मणस्पते यस्त्वमीशिषे सर्वस्य जगत ईश्वरो भवसि स त्वमिमामस्मदीयां प्रभृतिं प्रकर्षेण भृतां स्तुतिमविड्ढि। प्राप्नुहि ॥ अवतेः प्राप्त्यर्थस्य लोट्येतद्रूपं ॥ वयं च त्वामया अनया ॥ छांदसो वर्णलोपः ॥ नवया नूतनया प्रत्यग्रया महा महत्या गिरा वेदरूपया स्तुतिलक्षणया वाचा विधेम। परिचरेम ॥ विधतिः परिचरणकर्मा ॥ उत अपि च नोऽस्माकं मध्ये मीढ्वान् सेक्ता स्तुतेर्वर्षिता। कर्तेति यावत्। तव सखा मित्रभूतः सन् यथा येन प्रकारेण यत्कामनया स्तवते। त्वां स्तौति। हे बृहस्पते बृहतो ब्रह्मणो मंत्रस्य स्वामिन् स त्वं नोऽस्माकं मतिं तदभिमतं फलं सीषधः। साधय ॥ छांदसे लुङि चङ्येतद्रूपं ॥

यो नंत्वान्यनमन्न्योजसोतादर्दर्मन्युना शंबराणि वि।
प्राच्यावयदच्युता ब्रह्मणस्पतिरा चाविशद्वसुमंतं वि पर्वतं ॥२॥

यः। नंत्वानि। अनमत्। नि। ओजसा। उत। अदर्दः। मन्युना। शंबराणि। वि।
प्र। अच्यवयत्। अच्युता। ब्रह्मणः। पतिः। आ। च। अविशत्। वसुऽमंतं। वि। पर्वतं ॥२॥

यो ब्रह्मणस्पतिर्नंत्वानि नमनीयानि राक्षसादीन्योजसा बलेन न्यनमत्। नितरामनमयत्। प्रह्वीभूतान्यकरोत्। उत अपि च स ब्रह्मणस्पतिर्मन्युना मननेन क्रोधेन वा ॥ मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा। नि० १०. २९.। इति यास्कः ॥ शंबराणि ॥ मेघनामैतत् ॥ मेघान् व्यदर्दः। वर्षणार्थं विदारितवान् ॥ दॄ विदारण इत्यस्माद्यङ्लुगंताल्लङ्येतद्रूपं ॥ तदनंतरमच्युता अच्युतानि नैश्चल्येन मेघेऽवस्थितान्युदकानि प्राच्यावयत्। प्रकर्षेणागमयत्। मेघान्निरगमयदित्यर्थः। तथा वसुमंतं गोरूपधनवंतं पर्वतं बलनाम्नासुरेण बिलद्वारे पिधानार्थं निहितं शिलोच्चयं आ च आभिमुख्येन चेत् ॥ चशब्दश्चेदर्थः। समुच्चयार्थत्वे तु चवायोगे प्रथमेति पूर्वस्याच्यावयदित्यस्याद्युदात्तत्वं स्यात् अस्य च सर्वानुदात्तत्वं। चेदर्थे तु निपातैर्यद्यदिहंतेति निघातप्रतिषेधः सिध्यति ॥ व्यविशत्। विशेषेण प्रविशति। तदानीं तन्नोरूपं धनं प्राप्नोदित्यर्थः ॥

तद्देवानां देवतमाय कर्त्वमश्रथ्नन्दृळ्हाव्रदंत वीळिता।
उद्गा आजदभिनद्ब्रह्मणा वलमगूहत्तमो व्यचक्षयत्स्वः ॥३॥

तत्। देवानां। देवऽतमाय। कर्त्वं। अश्रथ्नन्। दृळ्हा। अव्रदंत। वीळिता।
उत्। गाः। आजत्। अभिनत्। ब्रह्मणा। वलं। अगूहत्। तमः। वि। अचक्षयत्।
स्व१रिति स्वः ॥३॥

देवानामिंद्रादीनां मध्ये देवतमायातिशयेन दानादिगुणयुक्ताय ॥ षष्ठ्यर्थे चतुर्थी ॥ ईदृशस्य ब्रह्मणस्पतेस्तत्कर्त्वं कर्तव्यं कर्म। किं पुनस्तदिति चेदुच्यते। दृळ्हा दृढानि पर्वतादीन्यश्रथ्नन् ॥ श्रंथ विमोचनप्रतिहर्षणयोः ॥ अस्य बलेन श्रथितानि विश्लिष्टान्यभवन्। तथा वीळिता संस्तंभितानि दृढीकृतानि वृक्षादीनि ॥ वीळयतिश्च व्रीळयतिश्च संस्तंभकर्माणाविति यास्कः। नि० ५. १६.॥ अव्रदंत। मृदून्यभवन् ॥ व्रदतिर्मृदुभावकर्मा ॥ अपि च स ब्रह्मणस्पतिर्बलेनापहृता गा उदाजत् ॥ अज गतिक्षेपणयोः ॥ देवान्प्रत्युदगमयत्। तथा ब्रह्मणात्मीयेन मंत्रेण वलं सर्वस्यावारकमसुरमभिनत्। मंत्रस्य सामर्थ्येनाभैत्सीत्। तदनंतरं बलेनोत्पादितं तमो ध्वांतमगूहत् ॥ गुहू संवरणे ॥ गूढमदृश्यमकरोत्। तदनंतरं स्वरादित्यं व्यचक्षयत्। तमसो निराकरणेन तत्स्थमदर्शयत् ॥ चष्टिः पश्यतिकर्मा ॥

अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत्।
तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणं ॥४॥

अश्मऽआस्यं। अवतं। ब्रह्मणः। पतिः। मधुऽधारं। अभि। यं। ओजसा। अतृणत्।
तं। एव। विश्वे। पपिरे। स्वःऽदृशः। बहु। साकं। सिसिचुः। उत्सं। उद्रिणं ॥४॥

ब्रह्मणस्पतिर्ब्रह्मणो मंत्रस्य पतिः पालयिता देवोऽश्मास्यमश्मवद्दृढतरास्यं। यास्कस्त्वाह। अश्नुवत-मास्यंदनवंतं। नि० १०. १३.। इति व्यापनवंतमासेचनवंतमिति तस्यार्थः। मधुधारं मधुर्मादयित्री उदकधारा यस्य तादृशमवतमवस्तात्ततं विस्तृतं यं मेघमोजसा बलेनाभ्यतृणत ॥ उतृदिर हिंसानादरयोः ॥ अहिंसीत। वर्षणार्थमवधीदित्यर्थः। तमेव मेघं विश्वे सर्वे स्वर्दृशः। स्वरादित्यः। तस्य सर्वाधिनो द्रष्टारो रश्मयः पपिरे। घर्मकाले पिबंति। मेघेन वृष्टस्योदकस्य पानात्तमेव पिबतीत्युच्यते। ते च रश्मयो वर्षासूत्समुत्सेचनवंतमुद्रिणमुदकवंतं मेघं साकं सह युगपदेव बहु सिसिचुः। घर्मकाले यत्पीतं ततोऽपि बहुतरं सहस्रगुणितं सिंचंतीत्यर्थः ॥

सना ता का चिद्भुवना भवीत्वा माद्भिः शरद्भिर्दुरो वरंत वः।
अयतंता चरतो अन्यदन्यदिद्या चकार वयुना ब्रह्मणस्पतिः ॥५॥

सना। ता। का। चित्। भुवना। भवीत्वा। मातऽभिः। शरत्ऽभिः। दुरः। वरंत। वः।
अयतंता। चरतः। अन्यत्ऽअन्यत्। इत्। या। चकार। वयुना। ब्रह्मणः। पतिः ॥५॥

हे ऋत्विग्यजमाना वो युष्मदर्थं सना सनातनानि ता तानि का चित् कानि चित् ब्रह्मणस्पतेः प्रज्ञानानि भुवना भुवनानां ॥ सुपां सुलुगिति षष्ठ्या लुक् ॥ भुवनानामुदकानां भवीत्वा भाव्यानि दुरो द्वाराणि माद्भिर्मासैः ॥ पद्दन्नित्यादिना मासशब्दस्य मास्भावः। स्वतवस्पासोरुपमां च त इष्यते। पा० ७ ४ ४८. १। इति तत्वं ॥ शरद्भिः संवत्सरैश्च वरंत। विवृण्वंति। तत्काले वर्षणार्थं मेघद्वाराण्युद्घाटयंतीत्यर्थः। कानि पुनस्तानि। ब्रह्मणस्पतिर्या यानि वयुना ॥ ज्ञाननामैतत् ॥ ज्ञानानि मंत्रविषयाणि चकार। कृतवान्। तदनंतरमयतंता अयतमानावप्रयत्नावुभौ लोकौ द्यौश्च पृथिवी च अन्यदन्यदित्। अन्यदन्यदेव पृथिवी वृष्टिजलं दिव्यमुदकं द्यौरुदककार्यं हविर्लक्षणं पार्थिवमन्नं एव परस्परव्यतिहारेण चरतः। भुंक्ते ॥ चर गतिभक्षणयोः ॥ ॥१॥

अभिनक्षंतो अभि ये तमानशुर्निधिं पणीनां परमं गुहा हितं।
ते विद्वांसः प्रतिचक्ष्यानृता पुनर्यत उ आयन्तदुदीयुराविशं ॥६॥

अभिऽनक्षंतः। अभि। ये। तं। आनशुः। निऽधिं। पणीनां। परमं। गुहा। हितं।
ते। विद्वांसः। प्रतिऽचक्ष्य। अनृता। पुनः। यतः। ऊं इति। आयन्। तत्। उत्।
ईयुः। आऽविशं ॥६॥

गोसमूहे पणिभिरसुरैरपहृते सति पणीनां स्थानं सरमाख्यया देवशुन्या ज्ञात्वा ब्रह्मणस्पतिना सहांगिरसस्तत्स्थानं प्राप्य गोसमूहं पणिभिर्निर्मिता मायाश्च दृष्ट्वा असुरनिवासस्थानं स्वहस्तोद्धृतेनाग्निना दग्ध्वा प्रत्यागच्छन्। तदेतदृचनेोच्यते। अभिनक्षंतोऽभितो गच्छंतो ये ऽंगिरसस्तं निधिं गोसमूहरूपं निधानं धनं परममुत्कृष्टं पणीनां ॥ तृतीयार्थे षष्ठी ॥ पणिभिर्गुहायां निहितं स्थापितमभ्यानशुः। अभिलक्ष्यानशिरे। प्राप्तवंतः। विद्वांसोऽभिज्ञास्तेऽंगिरसोऽनृता अनृतान्यसुरैः कृता मायाः प्रतिचक्ष्य दृष्ट्वा आविशमाविष्टुं प्रवेष्टुं यत उ यत एव स्थानादायन् आगच्छन् तत्स्थानं पुनरुदीयुः। उदगच्छन्। उत्कर्षेण प्राप्ताः ॥

ऋतावानः प्रतिचक्ष्यानृता पुनरात आ तस्थुः कवयो महस्पथः।
ते बाहुभ्यां धमितमग्निमश्मनि नकिः षो अस्त्यरणो जहुर्हि तं ॥७॥

ऋतऽवानः । प्रतिऽचक्ष्य । अनृता । पुनः । आ । अतः । आ । तस्थुः । कवयः । महः । पथः ।
ते । बाहुऽभ्यां । धमितं । अग्निं । अश्मनि । नकिः । सः । अस्ति । अरणः । जहुः । हि । तं ॥७॥

ऋतावानः । ऋतमिति सत्यनामधेयं । तद्वंतः कवयः क्रांतदर्शिनः सर्वज्ञा अंगिरसोऽनृता अनृतानि प्रतिचक्ष्य पूर्वोक्तप्रकारेण दृष्ट्वा अतोऽस्मात्स्थानात पुनराजिगमिषवो महस्पथो महतो मार्गान प्रति आतस्थुः । अवतस्थिरे । अवतिष्ठमानाश्च ते बाहुभ्यां हस्ताभ्यां धमितं मंथनोत्पादितं प्रज्वालितमग्निमश्मनि पणीनां निवासभूते शिलोच्चये जहुर्हि । दग्धुं त्यक्तवंतः खलु । अरणोऽरमयिता दाहेन दुःखकारी सोऽग्निः पूर्वं तत्र नकिरस्ति । न विद्यते । अविद्यमानमग्निं स्वसामर्थ्यादुत्पाद्य तत्र प्रचिक्षिपुरित्यर्थः ॥

ऋतज्येन क्षिप्रेण ब्रह्मणस्पतिर्यत्र वष्टि प्र तदश्नोति धन्वना ।
तस्य साध्वीरिषवो याभिरस्यति नृचक्षसो दृशये कर्णयोनयः ॥८॥
ऋतऽज्येन । क्षिप्रेण । ब्रह्मणः । पतिः । यत्र । वष्टि । प्र । तत् । अश्नोति । धन्वना ।
तस्य । साध्वीः । इषवः । याभिः । अस्यति । नृऽचक्षसः । दृशये । कर्णऽयोनयः ॥८॥

ऋतं सत्यमेव ज्या यस्य तेन क्षिप्रेणेषूणां क्षेपकेण धन्वना धरणभूतेन धनुषा ब्रह्मणस्पतिर्ब्रह्मणो मंत्रस्य पालयिता देवो यत्र यस्मिन्विषये वष्टि कामयते तत्प्राश्नोति । प्रकर्षेण व्याप्नोति ॥ अश्नोतेर्व्यत्ययेन परस्मैपदं ॥ तस्य धनुषः साध्वीः साधिकास्ता इषवो भवंति याभिरिषुभिर्ब्रह्मणस्पतिरस्यति । राक्षसादीन् क्षिपति । कीदृश्यस्ताः । नृचक्षसो नॄन पश्यतः । उपलक्षणमेतत । सर्वज्ञस्य ब्रह्मणस्पतेर्दृशये दर्शनाय ज्ञानाय जाताः कर्णयोनयः श्रोत्रेंद्रियेण ग्राह्या मंत्रभूता आकर्णकृष्टा वा बाणाः । ब्रह्मणस्पतिर्मंत्रैरेव सर्वं साधयतीति भावः ॥

स संनयः स विनयः पुरोहितः स सुष्टुतः स युधि ब्रह्मणस्पतिः ।
चाक्ष्मो यद्वाजं भरते मती धनादित्सूर्यस्तपति तप्यतुर्वृथा ॥९॥
सः । संऽनयः । सः । विऽनयः । पुरःऽहितः । सः । सुऽस्तुतः । सः । युधि । ब्रह्मणः । पतिः ।
चाक्ष्मः । यत् । वाजं । भरते । मती । धना । आत् । इत् । सूर्यः । तपति । तप्यतुः । वृथा ॥९॥

पुरोहितो देवैः पुरतोऽत्र स्थापितः स ब्रह्मणस्पतिः संनयः विश्लिष्टानां मंत्रैः संगमयिता भवति । विनयः संगतानां विविधं नेता पृथक्कर्तापि स एव । तथा सुष्टुतः शोभनं स्तोतृभिः स्तुतश्च भवति । तथा युधि संग्रामे स स्तोतॄणामनुग्रहाय प्रादुर्भवतीति शेषः । यद्यदा चाक्ष्मः ॥ चष्टेः क्षमतेर्वा ॥ सर्वस्य द्रष्टा सर्वसहो वा ब्रह्मणस्पतिर्वाजमन्नं मती मननीयं प्रशस्तं धना धनं च स्तोतॄणामर्थाय भरते । बिभर्ति । वृष्टिद्वारा पोषयति । आदित अनंतरमेव तप्यतुस्तापकः सूर्यो वृथा । अनायासवचनमेतत । अनायासेन तपति । दीप्यते । ब्रह्मणस्पतिना दत्तैरन्नैर्धनैश्च यज्ञस्य सिद्धत्वात स्वयं केवलं हवींषि भुंजान एव वर्तत इत्यर्थः ॥

विभु प्रभु प्रथमं मेहनावतो बृहस्पतेः सुविदत्राणि राध्या ।
इमा सातानि वेन्यस्य वाजिनो येन जना उभये भुंजते विशः ॥१०॥
विऽभु । प्रऽभु । प्रथमं । मेहनाऽवतः । बृहस्पतेः । सुऽविदत्राणि । राध्या ।
इमा । सातानि । वेन्यस्य । वाजिनः । येन । जनाः । उभये । भुंजते । विशः ॥१०॥

विभु विभूनि व्याप्तानि प्रभु प्रभूणि प्रौढानि प्रथमं प्रथमानि मुख्यानि । एवंभूतानि मेहनावतो वर्षणवतो वृष्टिप्रदस्य बृहस्पतेर्बृहतो मंत्रस्य पालयितुः संबंधीनि सुविदत्राणि ॥ विद्लृ लाभे । सुविदेः कत्रन । उ० ३. १०८. ॥

सुष्ठु लब्धव्यानि ॥ सुविदत्रं धनं भवतीति यास्कः ॥ राध्या राध्यानि सम्यक् साधनीयानि । प्राप्तव्यानीति यावत् । इमा सातानीमानि धनानि वेन्यस्य कमनीयस्य वाजिनोऽन्नवतो ब्रह्मणस्पतेः ॥ तृतीयार्थे षष्ठी ॥ ब्रह्मणस्पतिना दत्तानि । येन धनेनोभये उभयविधा जनाः स्तोतारो यजमानाश्च देवा मनुष्याश्च वा विशो निविष्टाः संतो भुंजते । भोगान् लभंते । तत्सर्वं ब्रह्मणस्पतिना दत्तमित्यर्थः ॥ ॥ २ ॥

योऽवरे वृजने विश्वथा विभुर्महामु रण्वः शवसा ववक्षिथ ।

स देवो देवान्प्रति पप्रथे पृथु विश्वेदु ता परिभूर्ब्रह्मणस्पतिः ॥११॥

यः । अवरे । वृजने । विश्वऽथा । विऽभुः । महां । ऊं इति । रण्वः । शवसा । ववक्षिथ ।

सः । देवः । देवान् । प्रति । पप्रथे । पृथु । विश्वा । इत् । ऊं इति । ता । परिऽभूः ।

ब्रह्मणः । पतिः ॥११॥

विश्वथा सर्वप्रकारेण विभुर्व्याप्तो रण्वो रमयिता स्तोतव्यो वा यो ब्रह्मणस्पतिरवरे निकृष्टे वृजने वर्जन-हेतुभूते बले वर्तमानं । दुर्बलमिति यावत् । महामु महांतं च ॥ छांदसो वर्णलोपः ॥ उभयविधं स्तोतारं शवसात्मीयेन बलेन ववक्षिथ । वोढुमिच्छति । सर्वदा वहतीति यावत् ॥ वहतेः सनंतस्य लिट्येतद्रूपं । पुरुष-व्यत्ययः ॥ स देवो दानादिगुणयुक्तो देवान् प्रति सर्वेषां देवानां प्रतिनिधिः सन् पृथु पप्रथे । अत्यंतं प्रथते । यशसा विस्तीर्णो भवतीति यावत् । यस्मादेवं तस्माद्विश्वेदु सर्वाण्येव ता तानि सर्वाणि भूतजातानि परिभूः परिभवन् अभिभवन् वर्तत इति शेषः ॥

विश्वं सत्यं मघवाना युवोरिदापश्चन प्र मिनंति व्रतं वां ।

अच्छेंद्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातं ॥१२॥

विश्वं । सत्यं । मघऽवाना । युवोः । इत् । आपः । चन । प्र । मिनंति । व्रतं । वां ।

अच्छ । इंद्राब्रह्मणस्पती इति । हविः । नः । अन्नं । युजाऽइव । वाजिना । जिगातं ॥१२॥

हे मघवाना । मघमिति धननाम । तद्वंताविंद्राब्रह्मणस्पती युवोरित् युवयोरेव विश्वं सर्वं स्तोत्रं सत्यं यथार्थं । स्तुत्या यद्यद्गुणजातं प्रतिपाद्यते तत्सर्वं युवयोर्विद्यमानमेव न त्वारोपितमित्यर्थः । तथा चनेत्येतत्पद-द्वयसमुदायः । एकपदं त्वध्यापकसांप्रदायिकं यदीव शब्दस्य पूर्वपदे न । आपश्च आपोऽपि । उपलक्षणमेतत् । एतदुपलक्षितानि सर्वाण्यपि भूतानि वां युवयोर्व्रतं कर्म न प्रमिनंति । न हिंसंति ॥ मीङ् हिंसायां क्र्यादिकः । मीनातेर्निगम इति ह्रस्वत्वं ॥ हे इंद्राब्रह्मणस्पती नोऽस्माकं हविरच्छाभिमुख्येन जिगातं । गच्छतं । आगच्छ-तमिति यावत् ॥ जिगातिर्गतिकर्मा । जौहोत्यादिकः ॥ तत्र दृष्टांतः । युजेव वाजिना । युजा रथे नियुक्तौ वाजिनौ वेजनवंतावश्वाविव घासं प्रति यथा स्वयमेव शीघ्रं गच्छतस्तद्वत् शीघ्रमागच्छतमित्यर्थः ॥ युजेवेत्यत्र सुपां सुलुगिति प्रथमाद्विवचनस्याकारः । तृतीयायां हि मांधकाच इति विभक्तिकृदात्तत्वं ॥

उताशिष्ठा अनु शृण्वंति वह्नयः सभेयो विप्रो भरते मती धना ।

वीळुद्वेषा अनु वश ऋणमाददिः स ह वाजी समिथे ब्रह्मणस्पतिः ॥१३॥

उत । आशिष्ठाः । अनु । शृण्वंति । वह्नयः । सभेयः । विप्रः । भरते । मती । धना ।

वीळुऽद्वेषाः । अनु । वशा । ऋणं । आऽददिः । सः । ह । वाजी । समऽइथे । ब्रह्मणः ।

पतिः ॥१३॥

उत अपि च आशिष्ठा आशुतराः शीघ्रगामिनो वह्नयः ॥ अश्वनामैतत् ॥ वोढारो ब्रह्मणस्पतेरश्वा अनु

शृण्वंति । अस्माभिः कृतं स्तोत्रमनुक्रमेण शृण्वंति । यद्वा ब्रह्मणस्पतिना कृतमनुशासनं शृण्वंति । अतस्ते तमस्मदीयं यज्ञं प्रापयंत्विति शेषः । सभेयः सभायां साधुः ॥ ढश्छंदसीति ढः ॥ विप्रो मेधावी अध्वर्युर्होता वा मती मत्या मननीयेन स्तोत्रेण ॥ सुपां सुलुगिति पूर्वसवर्णदीर्घः ॥ धना हविर्लक्षणानि धनानि तस्मै ब्रह्मणस्पतये भरते । बिभर्ति । संपादयतीति यावत् । यद्वा स्तोत्रेण धनानि भरते । बिभर्ति पोषयति । अतो वीळुद्वेषाः । वीळून् दृढान् प्रबलान् राक्षसादीन् द्वेष्टीति तादृशो ब्रह्मणस्पतिर्वशा वशाया गोः ॥ सुपां सुलुगिति षष्ठ्या लुक् । ऋत्यक इति प्रकृतिभावः ॥ ऋणमस्माभिर्यज्वभिः प्रदेयमवदानात्मकमनुक्रमेणाददिरा दाता भवत्विति शेषः । अवदानस्य ऋणत्वं च तैत्तिरीये त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यः ।६.३.१०.५। इत्यादिना स्पष्टमाम्नातं । यद्वा अनुरागानुगुण्ये । वशा वशस्य कामस्याभिलाषस्यानुगुणमाददाता भवत्विति योज्यं । हशब्दः प्रसिद्धौ । स खलु ब्रह्मणस्पतिः समिथे । संयंति संगच्छंतेऽस्मिन्नाहुतिभिर्देवा इति समिथो यज्ञः । तस्मिन्वाजी अन्नवान् । तस्माद्धविष आदाता भवत्वित्यर्थः ॥

ब्रह्मणस्पतेरभवद्यथावशं सत्यो मन्युर्महि कर्मा करिष्यतः ।
यो गा उदाजत्स दिवे वि चाभजन्महीव रीतिः शवसासरत्पृथक् ॥१४॥
ब्रह्मणः । पतेः । अभवत् । यथाऽवशं । सत्यः । मन्युः । महि । कर्म । करिष्यतः ।
यः । गाः । उत्ऽआजत् । सः । दिवे । वि । च । अभजत् । महीऽइव । रीतिः ।
शवसा । असरत् । पृथक् ॥१४॥

महि महत्कर्म करिष्यतो ब्रह्मणस्पतेर्मन्युर्मननसाधनो मंत्रः क्रोधो वा यथावशं यथाकामं सत्योऽवितथोऽभवत् । स यथा कामयते तथा करोतीत्यर्थः । यो ब्रह्मणस्पतिः पणिभिरपहृता गा उदाजत् । उदगमयत् गुहाया निरगमयदित्यर्थः । स ब्रह्मणस्पतिर्दिवे द्युलोकाय तत्रत्येभ्यो देवेभ्य इत्यर्थः । व्यभजत् । ता गा विभक्ताश्चाकरोत् । स च गोसमूहो महीव रीतिः । महती स्रुतिरिव ॥ रीङ् स्रवणे ॥ यथा गंगादीनां स्रोतो विभक्तं सत् निम्नदेशाभिमुखं प्रसरति तथा शवसात्मीयेन बलेन तत्तद्देवगृहं पृथक् विभिन्नोऽसरत् । अगच्छत् ॥

ब्रह्मणस्पते सुयमस्य विश्वहा रायः स्याम रथ्यो३ वयस्वतः ।
वीरेषु वीराँ उप पृङ्धि नस्त्वं यदीशानो ब्रह्मणा वेषि मे हवं ॥१५॥
ब्रह्मणः । पते । सुऽयमस्य । विश्वहा । रायः । स्याम । रथ्यः । वयस्वतः ।
वीरेषु । वीरान् । उप । पृङ्धि । नः । त्वं । यत् । ईशानः । ब्रह्मणा । वेषि । मे । हवं ॥१५॥

हे ब्रह्मणस्पते मंत्राधिपते सुयमस्य सुष्ठु नियंतव्यस्य वयस्वतोऽन्नयुक्तस्य रायो धनस्य विश्वहा विश्वेषु सर्वेष्वहःसु रथ्योऽधिपतयः स्याम । भूयास्म । रथा एषां संतीति रथ्यः ॥ छंदसीवनिपाविति मत्वर्थीय ईकारः ॥ अपि च सोऽस्माकं वीरेषु वीर्याज्जातेष्वस्मदीयेषु पुत्रेषु वीरान् पुत्रान् त्वमुप पृङ्धि । संपृक्तान् कुरु । उत्पादय ॥ पृची संपर्के । रौधादिकं ॥ वयं पौत्रानपि लभेमहीति यावत् । ईशानः सर्वस्येश्वरस्त्वं ब्रह्मणा ॥ अन्ननामैतत् ॥ हविर्लक्षणेनान्नेन सह मे हवं मदीयं स्तुतिलक्षणमाह्वानं वेषि । कामयसे ॥ वी गतिप्रजननकांत्यसनखादनेषु ॥ अतो मयोक्तं कुर्वित्यर्थः ॥

ब्रह्मणस्पते त्वमस्य यंता सूक्तस्य बोधि तनयं च जिन्व ।
विश्वं तद्भद्रं यदवंति देवा बृहद्वदेम विदथे सुवीराः ॥१६॥
ब्रह्मणः । पते । त्वं । अस्य । यंता । सुऽउक्तस्य । बोधि । तनयं । च । जिन्व ।
विश्वं । तत् । भद्रं । यत् । अवंति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥१६॥

हे ब्रह्मणस्पते यंता सर्वस्य जगतो नियंता त्वमस्य सूक्तस्येदं सूक्तं ॥ क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥ बोधि । बुध्यस्व । बुद्ध्वा तनयं पुत्रं चास्मभ्यं जिन्व । प्रेरय ॥ जिविः प्रीणनार्थः । अत्र प्रेरणे वर्तते धातूनामनेकार्थत्वात् ॥ यद्भद्रं कल्याणं देवाः सर्वेऽवंति रक्षंति विश्वं सर्वं तद्भद्रं च जिन्वति शेषः । वयं च सुवीराः शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेताः संतो बृहत् प्रौढं स्तोत्रं विदथे । विदंति यष्टव्यतयास्मिन्देवान् जानंतीति विदथो यज्ञः । तस्मिन् वदेम । ब्रूयाम ॥ ॥ ३ ॥

इंधान इति पंचर्चं तृतीयं सूक्तं गार्त्समदं जागतं ब्राह्मणस्पत्यं । तथा चानुक्रांतं । इंधानः पंच जागतं त्विति । लैंगिको विनियोगः ॥

इं॒धा॒नो अ॒ग्निं व॑नवद्वनुष्य॒तः कृ॒तब्र॑ह्मा शूशुव॒द्रा॒तह॑व्य॒ इत् ।
जा॒तेन॑ जा॒तमति॒ स प्र स॑र्सृते॒ यंयं॒ युजं॑ कृणु॒ते ब्रह्म॑ण॒स्पतिः॑ ॥ १ ॥
इं॒धा॒नः । अ॒ग्निं । व॒न॒व॒त् । व॒नु॒ष्य॒तः । कृ॒तऽब्र॑ह्मा । शू॒शु॒व॒त् । रा॒तऽह॑व्यः । इत् ।
जा॒तेन॑ । जा॒तं । अति॑ । सः । प्र । स॒र्सृ॒ते॒ । यंऽयं॑ । युजं॑ । कृ॒णु॒ते । ब्रह्म॑णः । पतिः॑ ॥ १ ॥

अग्निमिंधानो ब्रह्मणस्पतेर्यागार्थमग्निं प्रज्वलयन्यजमानो वनुष्यतो हिंसिष्यतो हिंसां कुर्वतो वा शत्रून् वनवत् । वनुयात् हिंस्यात् ॥ वनुष्यतिर्हंतिकर्मेति यास्कः । इदिति चार्थे ॥ कृतब्रह्मा । ब्रह्म स्तोत्रं कृतं येन स तथोक्तः । रातहव्यः । रातं दत्तं हव्यं हविर्येन । एवंभूतः सन् शूशुवत् । वर्धते ॥ टुओश्वि गतिवृद्ध्योः । अस्माल्लेटि लुङि रूपं ॥ तथा यजमानो जातेन पुत्रेण जातं जनितमुत्पादितं स्वस्य पौत्रमति प्रसर्सृते । अतीत्य भृशं प्रसरति । पौत्रमपि पश्यन् चिरकालं जीवेदित्यर्थः ॥ सर्तेर्यङ्लुगंताद्व्यत्ययेनात्मनेपदं ॥ यं यं यजमानं ब्रह्मणस्पतिः स्तोत्रहविषोः स्वीकरणेन युजं सखायं कृणुते । कुरुते । स समान एव भवतीत्यर्थः ॥

वी॒रेभि॑र्वी॒रान्व॑नवद्वनुष्य॒तो गोभी॑ र॒यिं प॑प्रथ॒द्बोध॑ति॒ त्मना॑ ।
तो॒कं च॒ तस्य॒ तन॑यं च व॒र्धते॒ यंयं॒ युजं॑ कृणु॒ते ब्रह्म॑ण॒स्पतिः॑ ॥ २ ॥
वी॒रेभिः॑ । वी॒रान् । व॒न॒व॒त् । व॒नु॒ष्य॒तः । गोभिः॑ । र॒यिं । प॒प्र॒थ॒त् । बोध॑ति । त्मना॑ ।
तो॒कं । च॒ । तस्य॑ । तन॑यं । च॒ । व॒र्धते॒ । यंऽयं॑ । युजं॑ । कृ॒णु॒ते । ब्रह्म॑णः । पतिः॑ ॥ २ ॥

स यजमानो वीरेभिर्वीरैरात्मीयैः पुत्रैर्वनुष्यतो हिंसतो वीरान् शत्रुपुत्रान् वनवत् । वनुयात् हिंस्यात् । अपि च गोभिः सहितं धनं पप्रथत् । प्रथयति विस्तारयति ॥ प्रथयतेर्लुङि चङ्युतद्रूपं ॥ तथा त्मना आत्मनैव बोधति । सर्वं जानाति । अनन्याधीनज्ञानो भवतीत्यर्थः । किंच तस्य यजमानस्य तोकं पुत्रस्तनयं ॥ विभक्तिव्यत्ययः ॥ तनयस्तत्पुत्रश्च वर्धते । प्रवृद्धो भवति । यद्वा तोकं तनयं पुत्रं पौत्रं च ब्रह्मणस्पतिर्वर्धयति ॥ वृधिरंतर्भावितण्यर्थो द्रष्टव्यः । अन्यद्गतं ॥

सिंधु॒र्न क्षो॒दः शिमी॑वाँ ऋघाय॒तो वृषे॑व॒ वध्रीँ॑र॒भि व॑ष्ट्योज॑सा ।
अ॒ग्नेरि॑व॒ प्रसि॑ति॒र्नाह॒ वर्त॑वे॒ यंयं॒ युजं॑ कृणु॒ते ब्रह्म॑ण॒स्पतिः॑ ॥ ३ ॥
सिंधुः॑ । न । क्षो॒दः । शिमी॑ऽवान् । ऋ॒घा॒य॒तः । वृषा॑ऽइव । वध्री॑न् । अ॒भि । व॒ष्टि॒ । ओज॑सा ।
अ॒ग्नेःऽइ॑व । प्रऽसि॑तिः । न । अह॑ । वर्त॑वे । यंऽयं॑ । युजं॑ । कृ॒णु॒ते । ब्रह्म॑णः । पतिः॑ ॥ ३ ॥

सिंधुः स्यंदनशीला नदी क्षोदो न क्षुद्यमानं कूलं यथा भिनत्ति तथा शिमीवान् । शिमीति कर्मनाम । ब्रह्मणस्पतेः परिचरणात्मना कर्मणा युक्तो यजमान ऋघायतो हिंसतः शत्रून् ओजसा बलेनाभिवष्टि । हंतुमभितः कामयते ॥ वश कांतौ ॥ इदमपरं निदर्शनं । वृषेव वध्रीन् । वध्रयो निष्पिष्टमुष्का निर्वीर्या

बलीवर्दाः । तान् यथा वृषा सेचनसमर्थः सवीर्यो वृषभोऽभिभवति तद्वच्छत्रूनभिभवतीत्यर्थः । अपि चास्य वग्नेरिव प्रसितिः । प्रसीयंते बध्यंतेऽनयेति प्रसितिर्ज्वाला ॥ षिञ् बंधने । करणे क्तिन् ॥ यथाग्नेर्ज्वालाप्रसिद्धप्रसरा एवमपि न वर्तवे । वारयितुं निवर्तयितुं वा नैव शक्यते ॥ अहशब्दोऽवधारणे । वृणोतेरंतर्भावितण्यर्थात् वर्ततेर्वा तुमर्थे तवेन्प्रत्ययः । अन्यद्गतं ॥

तस्मा अर्षंति दिव्या असश्चतः स सत्वभिः प्रथमो गोषु गच्छति ।
अनिभृष्टतविषिर्हंत्योजसा यंयं युजं कृणुते ब्रह्मणस्पतिः ॥४॥
तस्मै । अर्षंति । दिव्याः । असश्चतः । सः । सत्वऽभिः । प्रथमः । गोषु । गच्छति ।
अनिभृष्टऽतविषिः । हंति । ओजसा । यंऽयं । युजं । कृणुते । ब्रह्मणः । पतिः ॥४॥

तस्मै यजमानाय दिव्या दिवि भवा वृष्टिलक्षणा आपोऽसश्चतोऽसज्यमाना अनिरुद्धाः सत्योऽर्षंति । गच्छंति प्राप्नुवंति ॥ अर्तेर्लेटि रूपं ॥ तथा स यजमानः सत्वभिः । सत्वानः साधकाः परिचारकाः । तैः सहितः प्रथमोऽन्येभ्यो यजमानेभ्यः पूर्वभावी सन् गोषु गच्छति । गवादिधनं प्राप्नोतीत्यर्थः । किंच अनिभृष्टतविषिः । तविषीति बलनाम । अनिभृष्टा परैरबाधिता तविषी बलं यस्य तादृशः सन् ओजसा बलेन हंति शत्रून् ॥

तस्मा इद्विश्वे धुनयंत सिंधवोऽच्छिद्रा शर्म दधिरे पुरूणि ।
देवानां सुम्ने सुभगः स एधते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥५॥
तस्मै । इत् । विश्वे । धुनयंत । सिंधवः । अच्छिद्रा । शर्म । दधिरे । पुरूणि ।
देवानां । सुम्ने । सुऽभगः । सः । एधते । यंऽयं । युजं । कृणुते । ब्रह्मणः । पतिः ॥५॥

तस्मा इत तस्मा एव यजमानाय विश्वे सिंधवः सर्वाः स्यंदनशीला नद्यो धुनयंत । चलयंति । एतदभीष्टफलसिद्ध्यर्थं प्रवहंतीत्यर्थः । तथा अच्छिद्रा अच्छिद्राणि छिद्ररहितानि संततानि पुरूणि बहूनि शर्म शर्माणि सुखानि दधिरे । तस्मा एव धारयंते । यद्वा शर्मेति गृहनाम । छिद्ररहितानि बहूनि सदनानि धारयंते । सुभगः शोभनधनो देवानां सुम्ने देवैः प्रत्ते सुखे वर्तमानः सन् एधते । वर्धते । शिष्टं स्पष्टं ॥ ॥४॥

ऋजुरिति चतुर्ऋचं चतुर्थं सूक्तं गृत्समदस्यार्षं जागतं ब्राह्मणस्पत्यं । तथा चानुक्रांतं । ऋजुश्चतुष्कमिति । गतो विनियोगः ॥

ऋजुरिच्छंसो वनवद्वनुष्यतो देवयन्निददेवयंतमभ्यसत् ।
सुप्रावीरिद्वनवत्पृत्सु दुष्टरं यज्वेदयज्योर्वि भजाति भोजनं ॥१॥
ऋजुः । इत् । शंसः । वनवत् । वनुष्यतः । देवऽयन् । इत् । अदेवऽयंतं । अभि । असत् ।
सुप्रऽअवीः । इत् । वनवत् । पृत्ऽसु । दुस्तरं । यज्वा । इत् । अयज्योः । वि । भजाति ।
भोजनं ॥१॥

ऋजुरित आर्जवयुक्त एव । यद्वा ऋंजतिः प्रसाधनकर्मा । स्तोत्राणां प्रसाधक एव शंसो ब्रह्मणस्पतेः स्तोता वनुष्यतो हिंसतः शत्रून् वनवत् । वनुयात् हिंस्यात् ॥ वनोतेर्हिंसाकर्मण एतद्रूपं ॥ तथा देवयन्नित् देवं दानादिगुणयुक्तं ब्रह्मणस्पतिमात्मन इच्छन्नेव अदेवयंतं तद्विपरीतं पुरुषमभ्यसत् । अभिभवेत् ॥ अस्तेर्लेट्येतद्रूपं ॥ तथा सुप्रावीरित् ॥ अवतेस्तृप्त्यर्थादौणादिक ईकारप्रत्ययः ॥ सुष्ठु प्रकर्षेण ब्रह्मणस्पतेस्तर्पयितैव पृत्सु पृतनासु संग्रामेषु दुस्तरं तरीतुमशक्यं वनवत् । हिंस्यात् । तथा यज्वेत् ब्रह्मणस्पतिं हविर्भिरिष्टवानेव अयज्योरयज्वनो भोजनं भोगसाधनं विभजाति । विशेषेण भजतेत्यर्थः ॥

यजस्व वीर प्र विहि मनायतो भद्रं मनः कृणुष्व वृत्रतूर्ये।
हविष्कृणुष्व सुभगो यथाससि ब्रह्मणस्पतेरव आ वृणीमहे ॥२॥
यजस्व। वीर। प्र। विहि। मनायतः। भद्रं। मनः। कृणुष्व। वृत्रऽतूर्ये।
हविः। कृणुष्व। सुऽभगः। यथा। अससि। ब्रह्मणः। पतेः। अवः। आ। वृणीमहे ॥२॥

ऋषिरात्मीयं पुरुषं शास्ति। हे वीर विशेषेण स्तुतीनां प्रेरक सर्वं यजस्व। ब्रह्मणस्पतिं स्तुत्या पूजय। मनायतो मन इव शीघ्रं प्रवर्तमानान् हिंसकान् यद्वा अभिमन्यमानान् शत्रून्प्रति प्रविहि। प्रकर्षेण युद्धार्थं गच्छ॥ वी गत्यादिषु। छांदसो ह्रस्वः॥ वृत्रतूर्ये वृत्राणामावारकाणां शत्रूणां हिंसाहेतुभूते संग्रामे भद्रं कल्याणं धार्ष्ट्योपेतं मनः कृणुष्व। कुरुष्व। ब्रह्मणस्पतेरनुग्रहात्तवैव जयो भविष्यति। तथा ब्रह्मणस्पतये हविश्चरुपुरोडाशादिकं कृणुष्व। कुरु। यथा त्वं सुभगः शोभनधनोऽससि। भवेः॥ असेर्लेट्यडागमः॥ ब्रह्मणस्पतेर्योगेन त्वं शोभनधनो भविष्यसीति यावत्। अपि च वयं ब्रह्मणस्पतेरवो रक्षणमाभिमुख्येन वृणीमहे। प्रार्थयामहे॥

स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः।
देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिं ॥३॥
सः। इत्। जनेन। सः। विशा। सः। जन्मना। सः। पुत्रैः। वाजं। भरते। धना। नृऽभिः।
देवानां। यः। पितरं। आऽविवासति। श्रद्धाऽमनाः। हविषा। ब्रह्मणः। पतिं ॥३॥

यो यजमानः श्रद्धामनाः श्रद्धा मनसि यस्य तादृशः सन् देवानां पितरं पालयितारं ब्रह्मणस्पतिं हविषा चरुपुरोडाशादिनाविवासति। परिचरति॥ विवासतिः परिचरणकर्मा॥ स इत्स एव यजमानो जनेन जातेन सर्वेण लोकेन वाजमन्नं भरते। बिभर्ति संभरति वा। स एव विशा प्रजया जन्मनात्मीयेन बंधुजनेन वाजं भरते। स एव पुत्रैरात्मीयैरपत्यैर्वाजं भरते। तथा नृभिर्नेतृभिरन्यैः परिचारकैर्धना धनानि भरते। बिभर्ति संपादयति वा। ब्रह्मणस्पतिमिष्टवतो यजमानस्य सर्वतो जना अन्नधनयोः साधका भवंतीति यावत्॥

यो अस्मै हव्यैर्घृतवद्भिरविधत्प्र तं प्राचा नयति ब्रह्मणस्पतिः।
उरुष्यतीमंहसो रक्षती रिषो३ंहोश्चिदस्मा उरुचक्रिरद्भुतः ॥४॥
यः। अस्मै। हव्यैः। घृतवत्ऽभिः। अविधत्। प्र। तं। प्राचा। नयति। ब्रह्मणः। पतिः।
उरुष्यति। ईं। अंहसः। रक्षति। रिषः। अंहोः। चित्। अस्मै। उरुऽचक्रिः। अद्भुतः ॥४॥

यो यजमानोऽस्मै ब्रह्मणस्पतये॥ क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी॥ इमं ब्रह्मणस्पतिं घृतवद्भिरुपस्तरणाभिघारणात्मकेनाज्येनोपेतैर्हव्यैर्हविर्भिरविधत्। परिचरति॥ विध विधाने तौदादिकः। अयं परिचरणकर्मसु पठितः॥ तं यजमानं ब्रह्मणस्पतिः प्राचा प्राचीनेन ऋजुना मार्गेण प्रणयति। प्रकृष्टफलं प्रापयति। अपि च ईमेनमंहसः पापादुरुष्यति। रक्षति॥ उरुष्यती रक्षाकर्मेति यास्कः॥ तथा रिषो हिंसकादेनं रक्षति। अंहोश्चित्। अवृत्तेर्दारिद्र्यात्। यद्वा आगत्य हंतुरपि रक्षति। अपि चास्मै यजमानायाद्भुतः। महन्नामैतत्। आश्चर्यभूतो महान् ब्रह्मणस्पतिरुरुचक्रिरुरोर्विस्तीर्णस्योपकारस्य कर्ता भवति॥ ॥५॥

इमा गिर इति सप्तदशर्चं पंचमं सूक्तं गृत्समदपुत्रस्य कूर्मस्यार्षं गृत्समदस्यैव वा त्रैष्टुभमादित्यदेवताकं। तथा चानुक्रांतं। इमा गिरस्त्र्यूना कूर्मो गार्त्समदो ह वादित्यमिति॥ सूक्तविनियोगो लैंगिकः। आदित्यदेवताके पशौ पुरोडाशस्येमा गिर इत्येषानुवाक्या। अग्नीषोमाविति खंडे सूत्रितं। इमा गिर आदित्येभ्यो घृतस्नूस्त आदित्यास उरवो गभीराः। आ० ३.८। इति॥

इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥१॥
इमाः । गिरः । आदित्येभ्यः । घृतऽस्नूः । सनात् । राजऽभ्यः । जुह्वा । जुहोमि ।
शृणोतु । मित्रः । अर्यमा । भगः । नः । तुविऽजातः । वरुणः । दक्षः । अंशः ॥१॥

आदित्येभ्योऽदितेः पुत्रेभ्यो राजभ्यो राजमानेभ्य ईश्वरेभ्यो वा मित्रादिभ्यो घृतस्नूर्घृतप्रस्राविणीर्घृतं क्षरंतीरिमा गिरः स्तुतिलक्षणा वाचः सनात्सर्वदा जुह्वा । वाङ्नामैतत् । वागिंद्रियेण जुहोमि । प्रयच्छामि । करोमीति यावत् । यद्वा जुहूस्थानीयेन घृतं क्षरंति वाग्रूपाणि हवींषि जुहोमि । आदित्यानुद्दिश्य त्यजामि । मंत्राणां पयोघृतादिक्षरणहेतुत्वं च य ऋचोऽधीते पयसः कूल्या अस्येत्यादिना तैत्तिरीये स्पष्टमाम्नातं । तै० आ० २. १०. ७. । नोऽस्मदीयास्ता गिरो मित्रादयः प्रत्येकं शृणोतु । ते च तैत्तिरीयेऽष्टौ पुत्रासो अदितेरित्युपक्रम्य स्पष्टमनुक्रांताः । मित्रश्च वरुणश्च धाता चार्यमा च अंशुश्च भगश्च इंद्रश्च विवस्वाँश्चेत्येत इति । मित्रः प्रमीतेस्त्रायकः । यद्वा सर्वेषां स्निग्धः । अरीन् यच्छति नियच्छतीत्यर्यमा । भगो भजनीयो देवः । तुवीति बहुनाम । बहुषु देशेष्वनुग्रहार्थं प्रादुर्भूतः । वरुणविशेषणमेतत् । पापस्य निवारणाद्वरुणः । दक्षः समर्थः । एतच्चांशस्य विशेषणं । एते प्रत्येकं शृण्वंतु ॥

पूर्वोक्त एव पशाविमं स्तोममित्येषा वपाया याज्या । सूत्रितं च । इमं स्तोमं सक्रतवो मे अद्य तिस्रो भूमीर्धारयन् त्रीँरुत द्यून् । आ० ३. ८. । इति ॥

इमं स्तोमं सक्रतवो मे अद्य मित्रो अर्यमा वरुणो जुषंत ।
आदित्यासः शुचयो धारपूता अवृजिना अनवद्या अरिष्टाः ॥२॥
इमं । स्तोमं । सऽक्रतवः । मे । अद्य । मित्रः । अर्यमा । वरुणः । जुषंत ।
आदित्यासः । शुचयः । धारऽपूताः । अवृजिनाः । अनवद्याः । अरिष्टाः ॥२॥

इमं मेऽस्मदीयं स्तोमं स्तोत्रं सक्रतवः समानकर्माणः समानप्रज्ञा वा मित्रादयोऽद्येदानीं जुषंत । जुषंतां सेवंतां । कीदृशास्ते । आदित्यासोऽदितेः पुत्राः शुचयो दीप्यमानाः । धारपूता उदकधाराभिरिव पूताः । निर्मला इत्यर्थः । अवृजिनाः । वृजी वर्जने । अवर्जितारः । सर्वानुग्राहका इत्यर्थः । अनवद्याः । अवद्येन गर्ह्येण पापेन रहिताः । अरिष्टाः केनाप्यहिंसिताः ॥

तस्मिन्नेव पशौ त आदित्यास इति हविषोऽनुवाक्या । सूत्रं तु पूर्वमेवोदाहृतं ॥

त आदित्यास उरवो गभीरा अदब्धासो दिप्संतो भूर्यक्षाः ।
अंतः पश्यंति वृजिनोत साधु सर्वं राजभ्यः परमा चिदंति ॥३॥
ते । आदित्यासः । उरवः । गभीराः । अदब्धासः । दिप्संतः । भूरिऽअक्षाः ।
अंतरिति । पश्यंति । वृजिना । उत । साधु । सर्वं । राजऽभ्यः । परमा । चित् । अंति ॥३॥

त आदित्यासोऽदितेः पुत्रा उरवो महांतो गभीरा गांभीर्योपेता अदब्धासः शत्रुभिरहिंसिताः संतो दिप्संतः शत्रून्दंभितुं हिंसितुमिच्छंतः ॥ दंभु दंभे । अस्मादिच्छार्थे सनीवंतर्धेतीडभावपक्षे दंभ इच्चेतीकारः । दंभेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धमिति सनः कित्त्वेऽनुनासिकलोपः ॥ तथा भूर्यक्षाः । भूरीणि बहून्यक्षीणि चक्षूंषि येषां ते तथोक्ताः । बहुतेजसो वा ॥ बहुव्रीहौ सक्थ्यक्ष्णोरिति षचसमासांतः ॥ एवंभूता आदित्या अंतर्मध्ये प्राणिनां हृदि प्रेरकतया वर्तमानाः संतो वृजिना वृजिनानि पापानि उत अपि च साधु साधूनि

पुण्यानि च प्राणिभिः कृतानि पश्यंति । जानंति । परमा चित् परमाणि दूरदेशावस्थितान्यपि सर्वं सर्वाणि दृश्यमानानि राजभ्यो राज्ञामीश्वराणामादित्यानामत्यंतिकं समीपे वर्तत इति शेषः ॥ कादिलोपो बहुलमित्यंतिकशब्दस्य कादिलोपः ॥

साग्निचित्ये क्रतौ दीक्षणीयायामादित्ययागस्य धारयंत इत्यादिके द्वे याज्यानुवाक्ये । अत एव भुवद्वद्भुवनपतिविशेषणविशिष्टादित्ययागेऽपि । तथा च दीक्षणीयायामिति खंडे सूत्रितं । धारयंत आदित्यासो जगत्स्था इति द्वे एते एव भुवद्वद्भ्यो भुवनपतिभ्यो वा । आ० ४. २. । इति ॥

धारयंत आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः ।
दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि ॥४॥
धारयंतः । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य । भुवनस्य । गोपाः ।
दीर्घऽधियः । रक्षमाणाः । असुर्यं । ऋतऽवानः । चयमानाः । ऋणानि ॥४॥

जगज्जंगमं स्थाः स्थावरं च ॥ तिष्ठतेः कर्तर्यसुन् ॥ एतदुभयविधं भूतजातं धारयंतोऽवस्थापयंतो देवा दानादिगुणयुक्ता विश्वस्य भुवनस्य सर्वस्य लोकस्य गोपा गोपयितारो रक्षका दीर्घाधियो दीर्घाणि धियः कर्माणि ज्ञानानि वा येषां तादृशाः ॥ अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घः ॥ असुर्यं । असवः प्राणाः । तेन च तद्धेतुभूता आपो लक्ष्यंते । अपां तद्धेतुत्वं च छांदोग्ये स्पष्टमाम्नातं । आपोमयः प्राणः । छा० उप० ६. ५. ४ । इति । असुमुदकं ददातीत्यसुरो मेघः । तत्र भवं मेघांतर्वर्तमानमुदकं रक्षमाणाः । तत्तत्कालं वृष्ट्युत्पादनाय रक्षंतः ॥ असुरशब्दाद्भवे छंदसीति यत् ॥ ऋतावानः सत्यवंतो यज्ञवंतो वा ॥ छंदसीवनिपाविति मत्वर्थीयो वनिप् । पूर्ववद्दीर्घः ॥ ऋणानि स्तोतृभिरन्येभ्यः प्रदेयानि चयमाना अपगमयंतः ॥ चय गतौ । भौवादिकोऽनुदात्तेत् ॥ एवंगुणविशिष्टानुग्रहा वा अस्मदधीना भवत्विति शेषः ॥

विद्यामादित्या अवसो वो अस्य यदर्यमन्भय आ चिन्मयोभु ।
युष्माकं मित्रावरुणा प्रणीतौ परि श्वभ्रेव दुरितानि वृज्यां ॥५॥
विद्यां । आदित्याः । अवसः । वः । अस्य । यत् । अर्यमन् । भये । आ । चित् । मयःऽभु ।
युष्माकं । मित्रावरुणा । प्रऽनीतौ । परि । श्वभ्राऽइव । दुःऽइतानि । वृज्यां ॥५॥

हे आदित्याः अदितेः पुत्रा वो युष्माकमस्यावसः ॥ कर्मणि षष्ठी ॥ इदं रक्षणं विद्यां । लभेय । भये राक्षसादिभ्य आगते सति यद्युष्मदीयं रक्षणं । चिच्छब्दश्चार्थे । मयोभु मयसः सुखस्य भावयितृ च तदिदं लभेयेत्यन्वयः । हे अर्यमन् हे मित्रावरुणा युष्माकं प्रणीतावस्मद्विषये प्रकृष्टे नयने सति श्वभ्रेव श्वभ्राणीव स्थातुमयोग्यानि गर्तवंति स्थलानीव दुरितानि पापानि परिवृज्यां । परित्यजेयं ॥ वृजी वर्जने । बहुलं छंदसीति विकरणस्य लुक् ॥ ॥६॥

सुगो हि वो अर्यमन्मित्र पंथा अनृक्षरो वरुण साधुरस्ति ।
तेनादित्या अधि वोचता नो यच्छता नो दुष्परिहंतु शर्म ॥६॥
सुऽगः । हि । वः । अर्यमन् । मित्र । पंथाः । अनृक्षरः । वरुण । साधुः । अस्ति ।
तेन । आदित्याः । अधि । वोचत । नः । यच्छत । नः । दुःऽपरिहंतु । शर्म ॥६॥

हे अर्यमन् मित्र वरुण वो युष्माकं सुगः सुखेन गंतव्योऽनृक्षरः । ऋक्षरः कंटक ऋच्छतेररिति । तद्रहितः साधुः साधकः शोभनो वा । एवंगुणविशिष्टः पंथा मार्गोऽस्ति । विद्यते खलु । अतस्तेन पथास्मान् शोभन

नयंतेति शेषः। हे आदित्या नोऽस्माकमधिवोचत। अधिवचनं पक्षपातेन वचनं कुरुत। अपि च नोऽस्मभ्यं दुष्परिहंतु परिहंतुं विनाशयितुमशक्यं शर्म सुखं यच्छत। दत्त॥ दाण् दाने। शपि पाघ्रेत्यादिना यच्छादेशः॥

पिपर्तु नो अदिती राजपुत्राति द्वेषांस्यर्यमा सुगेभिः।
बृहन्मित्रस्य वरुणस्य शर्मोप स्याम पुरुवीरा अरिष्टाः॥७॥
पिपर्तु। नः। अदितिः। राजऽपुत्रा। अति। द्वेषांसि। अर्यमा। सुऽगेभिः।
बृहत्। मित्रस्य। वरुणस्य। शर्म। उप। स्याम। पुरुऽवीराः। अरिष्टाः॥७॥

राजपुत्रा राजानो राजमाना मित्रादयः पुत्रा यस्यास्तादृश्यदितिरदीना अखंडनीया वा देवी नोऽस्मान् द्वेषांसि द्वेष्टॄणि रक्षांस्यति पिपर्तु। अति पारयतु। अतिक्रम्य तद्रहितं देशं प्रापयत्वित्यर्थः। अर्यमा च सुगेभिः सुष्ठु गतव्यैर्मार्गैरस्मान्पारयतु। अपि च वयं पुरुवीरा बहुभिर्वीरैः पुत्रादिभिरुपेता अरिष्टाः केनाप्यहिंसिताश्च संतो मित्रस्य वरुणस्य च बृहत्परिवृढं शर्म सुखमुपस्याम। उपगता भवेम॥

पूर्वोक्ते पशौ तिस्रो भूमीरिति पुरोडाशस्य याज्या। सूत्रं पूर्वमेवोदाहृतं॥

तिस्रो भूमीर्धारयन्त्रीँरुत द्यून्त्रीणि व्रता विदथे अंतरेषां।
ऋतेनादित्या महि वो महित्वं तदर्यमन्वरुण मित्र चारु॥८॥
तिस्रः। भूमीः। धारयन्। त्रीन्। उत। द्यून्। त्रीणि। व्रता। विदथे। अंतः। एषां।
ऋतेन। आदित्याः। महि। वः। महिऽत्वं। तत्। अर्यमन्। वरुण। मित्र। चारु॥८॥

तिस्रो भूमीः। अत्र भूमीशब्दो लोकत्रये वर्तते। यो द्वितीयस्यां तृतीयस्यां पृथिव्यामित्यत्र यथा पृथिवीशब्दः। भूम्यंतरिक्षस्वर्गाख्यांस्त्रीन् लोकान् आदित्या धारयन्। वृष्टिप्रदानादिना धारयंति। उत अपि च द्यून् दीप्तान् तत उपरितनान् महरादिकानपि त्रीन् लोकान् धारयंति। यद्वा दीप्तान् अग्निं वायुं सूर्यं च धारयंति। अपि चैषामादित्यानां विदथे यज्ञेऽतर्मध्ये त्रीणि व्रता सवनत्रयनिष्पाद्यानि त्रीणि कर्माणि संति। यद्वा एषां लोकानामंतर्मध्ये विदथे यज्ञे निमित्तभूते सति एषामादित्यानां त्रीणि कर्माणि रसादानधारणविसर्जनलक्षणानि संति। उत्तरोऽर्धर्चः प्रत्यक्षकृतः। हे आदित्याः ऋतेन सत्येन यज्ञेन वा महि महत् प्रभूतं वो युष्माकं महित्वं महत्त्वं यन्महाभाग्यं हे अर्यमन् वरुण मित्र तन्महाभाग्यं चारु। शोभनं सर्वोत्कृष्टमित्यर्थः॥

त्री रोचना दिव्या धारयंत हिरण्ययाः शुचयो धारपूताः।
अस्वप्नजो अनिमिषा अदब्धा उरुशंसा ऋजवे मर्त्याय॥९॥
त्री। रोचना। दिव्या। धारयंत। हिरण्ययाः। शुचयः। धारऽपूताः।
अस्वप्नऽजः। अनिऽमिषाः। अदब्धाः। उरुऽशंसाः। ऋजवे। मर्त्याय॥९॥

त्री रोचना त्रीणि रोचनानि रोचमानान्यग्न्यादीनि तेजांसि दिव्या दिव्यानि दिविभवानि धारयंत। आदित्या अवास्थापयन्। किमर्थं। ऋजवे ऋजुकाय स्तोतॄणां मर्त्याय मनुष्याय भोगसिद्ध्यर्थमिति यावत्। कीदृशा आदित्याः। हिरण्ययाः। हिरण्मया हिरण्यालंकृतसर्वांगाः। यद्वा हितरमणीयवेषाः। शुचयो दीप्यमानाः। धारपूता उदकधारया क्षालिता इव निर्मलाः। अस्वप्नजोऽसंजातस्वप्नाः॥ सुपां सुलुगिति जसः सुः॥ अपर आह। अस्वप्नजोऽस्वपंतो विगतनिद्राः॥ स्वपितृषोर्नजिङ्किति नजिङ्प्रत्ययः इति तदेतत्पदकारस्यानभिमतं॥ अनिमिषा निमेषरहिताः। अदब्धा असुरादिभिरहिंसिताः। उरुशंसा उरुभिर्बहुभिः शंसनीयाः स्तोतव्याः। एवंगुणविशिष्टा अधारयंतेत्यन्वयः॥

त्वं विश्वेषां वरुणासि राजा ये च देवा असुर ये च मर्ताः ।
शतं नो रास्व शरदो विचक्षेऽश्यामायूंषि सुधितानि पूर्वा ॥१०॥
त्वं । विश्वेषां । वरुण । असि । राजा । ये । च । देवाः । असुर । ये । च । मर्ताः ।
शतं । नः । रास्व । शरदः । विऽचक्षे । अश्याम । आयूंषि । सुऽधितानि । पूर्वा ॥१०॥

हे असुर शत्रूणां क्षेपक वरुण त्वं विश्वेषां सर्वेषां राजासि । केषां । ये च देवा देवजनाः ये च मर्ता मरणधर्माणो मनुष्याः । तेषामित्यर्थः । अतस्त्वं नोऽस्मभ्यं शतं शरदः शतसंख्याकान् संवत्सरान् विचक्षे विशेषेण दर्शनाय रास्व । प्रयच्छ ॥ रा दाने । व्यत्ययेनात्मनेपदं ॥ वयं च पूर्वा पूर्वैर्देवैः सुधितानि सुष्ठु हितानि शतसंवत्सरलक्षणान्यायूंष्यश्याम । व्याप्नुयाम ॥ सुधितवसुधितनेमधितधिष्वधिषीय चेति निपात्यते । गतिरनन्तर इति गतेः प्रकृतिस्वरत्वं । पूर्वा । सुपां सुलुगिति तृतीयाया डादेशः ॥ ॥ ७ ॥

आदित्यदेवताके पशौ न दक्षिणेत्येषा हविषो याज्या । तिस्रो भूमीर्धारयन्नित्यत ऊर्ध्वं न दक्षिणा वि चिकिते न सव्या । आ० ३. ८ । इति ॥

न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा ।
पाक्या चिद्वसवो धीर्या चिद्युष्मानीतो अभयं ज्योतिरश्यां ॥११॥
न । दक्षिणा । वि । चिकिते । न । सव्या । न । प्राचीनं । आदित्याः । न । उत । पश्चा ।
पाक्या । चित् । वसवः । धीर्या । चित् । युष्माऽनीतः । अभयं । ज्योतिः । अश्यां ॥११॥

हे आदित्याः दक्षिणा दक्षिणो भागो न विचिकिते । मया न विज्ञायते । सव्या सव्यो वामभागोऽपि न ज्ञायते ॥ उभयत्र सुपां सुलुगिति सोराजादेशः । तथा प्राचीनं पुरस्तादपि न ज्ञायते ॥ विभाषाञ्चेरदिक्स्त्रियामिति स्वार्थे खः ॥ उत अपि च पश्चा पश्चात् पृष्ठभागोऽपि न ज्ञायते । नैशेन तमसावृतत्वात् आतरादज्ञानाद्वा ॥ पश्च पश्चा च छन्दसि । पा० ५. ३. ३३ । इति निपात्यते ॥ किं बहुना । पाक्या चित् । पाक्यः पक्तव्योऽपरिपक्वज्ञानोऽपि ॥ डुपचष् पाके । ऋहलोर्ण्यत् । तित्स्वरितं ॥ धीर्या चित् धीरे भवो धीर्यः कातरः ॥ भवे छन्दसीति यत् ॥ कातरोऽपि ॥ उभयत्र सुपां सुलुगित्याकारः ॥ हे वसवो वासयितारः आदित्या युष्मानीतो युष्माभिर्नीतः शोभनेन मार्गेण प्रापितः सन् अभयं भयरहितं ज्योतिः सौरं तेज आतरं वा ज्ञानात्मकमश्यां । प्राप्नुयां ॥

यो राजभ्य ऋतनिभ्यो ददाश यं वर्धयंति पुष्टयश्च नित्याः ।
स रेवान्याति प्रथमो रथेन वसुदावा विदथेषु प्रशस्तः ॥१२॥
यः । राजऽभ्यः । ऋतनिऽभ्यः । ददाश । यं । वर्धयंति । पुष्टयः । च । नित्याः ।
सः । रेवान् । याति । प्रथमः । रथेन । वसुऽदावा । विदथेषु । प्रऽशस्तः ॥१२॥

यो यजमानो राजभ्यो राजमानेभ्य ऋतनिभ्य ऋतस्य सत्यस्य वा नेतृभ्य आदित्येभ्यो ददाश । चरुपुरोडाशादिकं ददाति । यं यजमानं पुष्टयः पोषका नित्याः शाश्वता आदित्याश्च वर्धयन्ति । स यजमानो रेवान् धनवान् प्रथमः प्रथितः प्रख्यातः वसुदावा वसूनां धनानां दाता सन् प्रशस्तः सर्वैः प्रशस्यमानो विदथेषु वेदेषु लब्धव्येषु गृहेषु रथेन वाहनेन याति । गच्छति ॥

शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः ।
नकिष्टं घ्नंत्यंतितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥१३॥

शुचिः । अपः । सुऽयवसाः । अदब्धः । उप । क्षेति । वृद्धऽवयाः । सुऽवीरः ।
नकिः । तं । घ्नंति । अंतितः । न । दूरात् । यः । आदित्यानां । भवति । प्रऽनीतौ ॥१३॥

स यजमानः शुचिर्दीप्यमानः शुद्धो वा अदब्धः सपत्नैरबाधितो वृद्धवयाः प्रभूतान्नः सुवीरः शोभनपुत्रश्च सन् सुयवसाः शोभनसस्यान्यपो वृष्टिलक्षणान्युदकान्युपक्षेति । उपनिवसति । सर्वदा सुसस्यानामपां समीपे निवसतीत्यर्थः । तथा नकिर्न च तं घ्नंति हिंसंत्यंतितो न अंतिकात्समीपदेशाच्च दूराद्विप्रकृष्टाच्च देशादागता बाधकाः ॥ अंतिकस्य तसि कादिलोप इति लोपः ॥ यो यजमान आदित्यानामदितेः पुत्राणां मित्रादीनां प्रणीतौ प्रकृष्टे नयने प्रापणे भवति वर्तते स इति पूर्वत्र संबंधः ॥

अदिते मित्र वरुणोत मृळ यद्वो वयं चकृमा कच्चिदागः ।
उर्वश्यामभयं ज्योतिरिंद्र मा नो दीर्घा अभि नशन्तमिस्राः ॥१४॥
अदिते । मित्र । वरुण । उत । मृळ । यत् । वः । वयं । चकृम । कत् । चित् । आगः ।
उरु । अश्यां । अभयं । ज्योतिः । इंद्र । मा । नः । दीर्घाः । अभि । नशन् । तमिस्राः ॥१४॥

उत अपि च हे अदिते मित्र वरुण ॥ आमंत्रितं पूर्वमविद्यमानवदिति पूर्वपूर्वस्यामंत्रितस्याविद्यमानवद्भावात् सर्वेषां पाष्ठिकमामंत्रितस्येत्याद्युदात्तत्वं ॥ यूयं प्रत्येकं मृळ । अस्माकमुपरि दयां कुरु । रक्षेत्यर्थः । यत् यद्यपि वयं वो युष्माकं कच्चित् किंचिदागोऽपराधं चकृम । अकर्म । तथापि मृळेत्यर्थः । हे इंद्र परमैश्वर्योपेतादित्य उरु विस्तीर्णमभयं भयरहितं ज्योतिस्त्वदीयं प्रकाशं ज्ञानात्मकं वाश्यां । अहं प्राप्नुयां । दीर्घा विस्तृतास्तमिस्रास्तमसा युक्ता निशाः ॥ ज्योत्स्नातमिस्राशृंगिण । पा० ५. २. ११४. । इति निपात्यते ॥ ता नोऽस्मान् माभिनशन् । माभिमुख्येन व्याप्नुवंतु ॥

उभे अस्मै पीपयतः समीची दिवो वृष्टिं सुभगो नाम पुष्यन् ।
उभा क्षयावाजयन्याति पृत्सूभावर्धौ भवतः साधू अस्मै ॥१५॥
उभे इति । अस्मै । पीपयतः । समीची इति संऽईची । दिवः । वृष्टिं । सुऽभगः । नाम । पुष्यन् ।
उभा । क्षयौ । आऽजयन् । याति । पृत्ऽसु । उभौ । अर्धौ । भवतः । साधू इति । अस्मै ॥१५॥

य आदित्यानां भवति प्रणीतावित्ति व्यवहितोऽप्यत्रेदंशब्देन परामृश्यते । अस्मै यजमानाय समीची संगच्छमाने उभे द्यावापृथिव्यौ पीपयतः । प्याययतः । कामान्वर्धयतः ॥ प्यायी वृद्धौ । अस्माण्ण्यंताच्छांदसो लुङ् । व्यत्ययेन तसस्तामादेशाभावो धातोः पीभावश्च ॥ स च सुभगः शोभनधनो दिवो द्युलोकादागतां वृष्टिं पुष्यन् वर्धयन् भवति । नामेति प्रसिद्धिर्द्योत्यते । किंच पृत्सु पृतनासु संग्रामेष्वाजयन् शत्रूनाभिमुख्येनाभिभवन् उभा क्षयावुभौ निवासौ ॥ क्षियंति निवसंत्यस्मिन्निति क्षयो निवासस्थानं । पुंसि संज्ञायां घः प्रायेणेत्यधिकरणे घः । क्षयो निवास इत्याद्युदात्तत्वं ॥ तौ परैरनाक्रांतं स्वकीयं निवासस्थानं आत्मनापहृतं परकीयं निवासस्थानं च याति । गच्छति । तथास्मै यजमानायोभावर्धौ जगतो भागौ चराचरात्मकौ मर्त्यामर्त्यात्मकौ वा साधू साधकौ भवतः ॥

या वो माया अभिद्रुहे यजत्राः पाशा आदित्या रिपवे विचृत्ताः ।
अश्वीव ताँ अति येषं रथेनारिष्टा उरावा शर्मन्त्स्याम ॥१६॥
याः । वः । मायाः । अभिऽद्रुहे । यजत्राः । पाशाः । आदित्याः । रिपवे । विऽचृत्ताः ।
अश्वीऽइव । तान् । अति । येषं । रथेन । अरिष्टाः । उरौ । आ । शर्मन् । स्याम ॥१६॥

हे यजत्रा यष्टव्या आदित्या वो युष्माकं या माया अभिद्रुहेऽभिद्रोहं कुर्वते राक्षसादये निर्मिताः ये च पाशा रिपवे शत्रवे विचृत्ताः ॥ चृती हिंसासंग्रंथनयोः । प्रसारिता इत्यर्थः । तान्पाशान् मायाश्च रथमतियेय । अतीत्य प्रयतेयं । अतितरेयमित्यर्थः । तत्र दृष्टांतः । अश्वीव । यथा शोभनाश्वः कश्चित्पुरुषो दुस्तरान्मार्गान् शीघ्रमतिक्रामति तद्वत् ॥ येषृ प्रयत्ने भौवादिकोऽनुदात्तेत् । छांदसो लङ् । व्यत्ययेन परस्मैपदं ॥ तथा वयमरिष्टाः शत्रुभिरहिंसिताः संत उरौ विस्तीर्णे शर्मन् ॥ शर्मेति गृहनाम ॥ त्वया दत्ते सुखे गृहे वा आ समतात् स्याम । वर्तमाना भवेम ॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥११॥
मा । अहं । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदं । शूनं । आपेः ।
मा । रायः । राजन् । सुऽयमात् । अव । स्थां । बृहत् । वदेम । विदथे । सुऽवीराः ॥११॥

हे वरुण मघोनो धनवतः प्रियस्यानुकूलस्य भूरिदाव्नो भूरेर्बहुलस्य दातुराप्तस्याहं मा आविदं । माविदयानि । आवेदनं विज्ञापनं मा करवाणि । किं तदनाविद्य । आपेर्ज्ञातेः शून शून्यं दारिद्र्यं ॥ वर्णलोपश्छांदसः ॥ यद्वा शूनं गतं प्राप्तं दारिद्र्यं ॥ टुओश्वि गतिवृद्ध्योः । श्वीदितो निष्ठायामितीट्प्रतिषेधः । यजादित्वात्संप्रसारणं । ओदितश्चेति नकारः । वृषादित्वादाद्युदात्तत्वं ॥ एतदुक्तं भवति अस्मदीयाः पुत्रादयः बाधिता इति प्रभुप्रभुसमीपेऽभिधाय याचमानो मा भूवमिति । हे राजन् सुयमात् । सुष्ठु नियम्यतेऽनेन पुरुषो गृह इति सुयमः ॥ ईषद्दुःसुष्विति खल् ॥ तादृशाद्रायो धनादवस्था । अवयुत्य स्थितो मा भूव । वय सुवीराः शोभनपुत्रा विदथे यज्ञे गृहे वर्तमानाः संतो बृहत् प्रौढं स्तोत्रं वदेम । उच्चारयाम ॥ ॥ ८ ॥

इदमित्येकादशर्चं षष्ठं सूक्तं । अत्रानुक्रम्यते । इदमेकादश वारुणमिति । पूर्वसूक्ते कूर्मो गार्त्समदो हि वेत्युक्तत्वादस्योत्तरस्य च कूर्मो गृत्समदो वा ऋषिः । त्रिष्टुप् छंदः । वरुणो देवता । विनियोगो लैंगिकः । अत्र कश्चिदाह । इदमेकादशर्चं तु वारुणं भयपापनुत् । ऋणादारिद्र्यदुःस्वप्ननाशनं चेति शुश्रुम । ऋग्विधा० १ २५. १. । इति ॥

इदं कवेरादित्यस्य स्वराजो विश्वानि सांत्यभ्यस्तु मह्ना ।
अति यो मंद्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः ॥१॥
इदं । कवेः । आदित्यस्य । स्वऽराजः । विश्वानि । संति । अभि । अस्तु । मह्ना ।
अति । यः । मंद्रः । यजथाय । देवः । सुऽकीर्तिं । भिक्षे । वरुणस्य । भूरेः ॥१॥

कवेः क्रांतदर्शिन आदित्यस्यादितेः पुत्रस्य स्वराजः स्वयमेव राजमानस्येश्वरस्य वा वरुणस्येदं हविः स्तोत्रं वा यजमानः करोतीति शेषः । स च विश्वानि सर्वाणि संति द्वितीयभावविकारभाञ्जि भूतजातानि मह्ना महिम्ना वरुणप्रसादालब्धेनास्मत्सु । अभिभवतु । यो देवो द्योतमानो वरुणो यजथाय यज्ञे पुरुषाय अति अतिशयेन मंद्रः स्तुत्यो हर्षयिता वा भवति तस्य भूरेर्भर्तुर्वरुणस्य सुकीर्तिं शोभनां स्तुतिं भिक्षे । प्रार्थये । यद्वा वरुणस्येति तृतीयार्थे षष्ठी । तेन वरुणेन दातव्यां शोभनां कीर्तिमहं याचे ॥

तव व्रते सुभगासः स्याम स्वाध्यो वरुण तुष्टुवांसः ।
उपायन उषसां गोमतीनामग्नयो न जरमाणा अनु द्यून् ॥२॥
तव । व्रते । सुऽभगासः । स्याम । सुऽआध्यः । वरुण । तुस्तुऽवांसः ।
उपऽअयने । उषसां । गोऽमतीनां । अग्नयः । न । जरमाणाः । अनु । द्यून् ॥२॥

हे वरुण स्वाध्यः शोभनाध्यानास्तुष्टुवांसः स्तुतवंतो वयं तव व्रते त्वदीये परिचरणाख्ये कर्मणि वर्तमानाः सुभगासः स्याम। शोभनधना भवेम। अपि च गोमतीनां रश्मिभिर्युक्तानामुषसामुपायन उपागमने सत्यग्नयो न यथाग्नयोऽग्निहोत्रादिकर्मार्थं समिध्यंते एवमनु द्यून् अनुदिनं जरमाणास्त्वां स्तुवंतो वयं दीप्यमाना भवेम॥

तव स्याम पुरुवीरस्य शर्मन्नुरुशंसस्य वरुण प्रणेतः।
यूयं नः पुत्रा अदितेरदब्धा अभि क्षमध्वं युज्याय देवाः॥३॥

तव। स्याम। पुरुऽवीरस्य। शर्मन्। उरुऽशंसस्य। वरुण। प्रनेतरिति प्रऽनेतः।
यूयं। नः। पुत्राः। अदितेः। अदब्धाः। अभि। क्षमध्वं। युज्याय। देवाः॥३॥

हे प्रणेतः सर्वस्य जगतः प्रकर्षेण नेतर्वरुण पुरुवीरस्य पुरुभिर्बहुभिर्वीरैरुपेतस्य यद्वा पुरूणां बहूनां शत्रूणां विशेषेण प्रेरकस्योरुशंसस्योरुभिर्बहुभिः स्तूयमानस्य तव शर्मन् शर्मणि सुखे गृहे वा स्याम। अदितेः पुत्रा मित्रादयः॥ परमपि छंदसीति परस्य षष्ठ्यंतस्य पूर्वामंत्रितांगवद्भावेनानुप्रवेशात् पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वं॥ अदब्धाः शत्रुभिरहिंसिताः। एवंभूता हे देवा यूयं नोऽस्मान् कृतापराधान् युज्याय सख्याय अभिक्षमध्व। अस्माभिः कृतमपराधं सहध्वं॥

प्र सीमादित्यो असृजद्विधर्ता ऋतं सिंधवो वरुणस्य यंति।
न श्राम्यंति न वि मुचंत्येते वयो न पप्तू रघुया परिज्मन्॥४॥

प्र। सीं। आदित्यः। असृजत्। विऽधर्ता। ऋतं। सिंधवः। वरुणस्य। यंति।
न। श्राम्यंति। न। वि। मुचंति। एते। वयः। न। पप्तुः। रघुऽया। परिऽज्मन्॥४॥

विधर्ता सेतुरिव जलस्य विधारयितादित्योऽदितेः पुत्रो वरुण ऋतं विधारणहेतुभूतं सत्यं यद्वा नदीनामुपादानभूतमुदकं सीं सर्वतः प्रासृजत। प्रकर्षेण सृष्टवान्॥ अणोऽप्रगृह्यस्यानुनासिक इत्याकारः सानुनासिकः॥ तेन वरुणस्यर्तेन सिंधवः स्यंदनशीला नद्यो यंति। गच्छंति प्रवहंति। एते सिंधवो न श्राम्यंति। श्रांतिं न प्राप्नुवंति। न विमुचंति। उपरता न भवंति। अनलसाः सर्वदैकरूप्येण प्रवहंतीत्यर्थः। एतदेवोच्यते। वयो न। वयः पक्षिण इव रघुया रघवः शीघ्रगामिनः परिज्मन् परिज्मनि भूम्यां पप्तुः। पतंति गच्छंति॥ पत गतौ। लिट्युसि तनिपत्योश्छंदसीत्युपधालोपः। स्थानिवद्भावाद्द्विर्वचनादि। रघुया इत्यत्र सुपां सुलुगिति जसो याजादेशः॥

वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य।
मा तंतुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः॥५॥

वि। मत्। श्रथय। रशनांऽइव। आगः। ऋध्याम। ते। वरुण। खां। ऋतस्य।
मा। तंतुः। छेदि। वयतः। धियं। मे। मा। मात्रा। शारि। अपसः। पुरा। ऋतोः॥५॥

हे वरुण मत् मत्सकाशात् रशनामिव रज्जुमिवागो विहिताननुष्ठानजनितं पापं विश्रथय। शिथिलीकुरु। विमोचयेत्यर्थः। ते त्वत्संबंधिन ऋतस्योदकस्य पूर्णां खां नदीं॥ खा इति नदीनाम॥ तामृध्याम। लभेमहि। अपि च धियं कर्म वयतः संतन्वतो मे मम तंतुः कर्मसंततिर्मा छेदि। छिन्नो मा भूत। नैरंतर्येणेत्यर्थः। तथा ऋतोः समाप्तिकालात्पुरा पूर्वमपसः कर्मणो मात्रा शरीरं प्राच्योदीच्यांगलक्षणं मा शारि। शीर्णं विकलं मा भूत॥ शॄ हिंसायां। कर्मणि लुङ्॥ पुर ऋतोरित्यत्र ऋत्यक इति प्रकृतिभावः॥ ॥९॥

अपो सु म्यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय।
दामेव वत्साद्वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्चनेशे॥६॥

अपो इति॑ । सु । म्य॒क्ष॒ । व॒रु॒ण॒ । भि॒यस॑म् । मत् । सम्ऽरा॒ट् । ऋत॑ऽवः । अनु॑ । मा॒ । गृ॒भा॒य॒ ।
दाम॑ऽइव । व॒त्सात् । वि । मु॒मु॒ग्धि॒ । अंहः॑ । न॒हि । त्वत् । आ॒रे । नि॒ऽमिषः॑ । च॒न । ई॒शे ॥ ६ ॥

हे वरुण भियसं भयं मत् मत्तः सु सुष्ठु अपो म्यक्ष । अपगमय । हे सम्राट् सम्यग्राजमान हे ऋताव सत्यवन् यज्ञवन्वा वरुण मा मामनुगृभाय । अनुगृहाण ॥ छंदसि शायजपीति श्नः शायजादेशः । हृग्रहोर्भ इति भत्वं ॥ अपि च दामेव वत्सात् यथा दोग्धा वत्ससकाशाद्बंधनीं रज्जुं विमुंचति तथांहः पापं मत्सकाशाद्विमुमुग्धि । विमुंच ॥ छांदसः शपः श्लुः ॥ पृथक्कुरु । त्वदारे त्वत्तो दूरदेशे वर्तमानः । त्वदन्य इत्यर्थः । त्वत्तोऽन्यः कश्चित् निमिषश्चन निमेषस्यापि अक्षिपक्ष्मचलनस्यापि नहीशे । नेष्टे । त्वमेवेश्वर इत्यर्थः ॥ लोपस्त आत्मनेपदेष्विति तलोपः ॥

मा नो॑ व॒धैर्व॑रुण॒ ये त॑ इ॒ष्टावेनः॑ कृ॒ण्वन्त॑मसुर भ्री॒णन्ति॑ ।
मा ज्योति॑षः प्रवस॒थानि॑ गन्म॒ वि षू मृधः॑ शिश्रथो जी॒वसे॑ नः ॥ ७ ॥
मा । नः॒ । व॒धैः । व॒रु॒ण॒ । ये । ते॒ । इ॒ष्टौ । एनः॑ । कृ॒ण्वन्त॑म् । अ॒सु॒र॒ । भ्री॒णन्ति॑ ।
मा । ज्योति॑षः । प्र॒ऽव॒स॒थानि॑ । ग॒न्म॒ । वि । सु । मृधः॑ । शि॒श्र॒थः॒ । जी॒वसे॑ । नः॒ ॥ ७ ॥

हे वरुण नोऽस्मान् वधैर्हननसाधनैरायुधैर्मा हिंसीरिति शेषः । हे असुर पापकृतां निरसितः ते त्वदीय इष्टौ यज्ञे एनो विहिताननुष्ठानेन जनितं पापं कृण्वंतं कुर्वंतं पुरुषं ये वधा भ्रीणंति हिंसंति तैरिति पूर्वेण संबंधः ॥ भ्रीष हिंसायां क्र्यादिकः ॥ अपि च ज्योतिषो गृहे वर्तमानादस्मः सौरप्रकाशाद्वा प्रवसथानि प्रवासान्मा गन्म । मा गच्छाम । सर्वदा गृहे वर्तमानः सूर्यं पश्यंश्चिरकालं जीवेयमित्यर्थः ॥ गमेर्लुङि मंत्रे घसेति च्लेर्लुक् ॥ तथा नोऽस्माकं जीवसे जीवनाय मृधो हिंसकान् सुष्ठु विशिश्रथः । विश्लेषय । बाधस्वेत्यर्थः ॥

नमः॑ पु॒रा ते॑ वरुणो॒त नू॒नमु॒ताप॒रं तु॑विजात ब्रवाम ।
त्वे हि कं॑ पर्व॑ते॒ न श्रि॒तान्यप्र॑च्युतानि दूळभ व्र॒तानि॑ ॥ ८ ॥
नमः॑ । पु॒रा । ते॒ । व॒रु॒ण॒ । उ॒त । नू॒नम् । उ॒त । अ॒प॒रम् । तु॒वि॒ऽजा॒त॒ । ब्र॒वा॒म॒ ।
त्वे इति॑ । हि । क॒म् । पर्व॑ते । न । श्रि॒तानि॑ । अप्र॑ऽच्युतानि । दुः॒ऽद॒भ॒ । व्र॒तानि॑ ॥ ८ ॥

हे वरुण पुरा पूर्वस्मिन्काले ते तुभ्यं नमो नमस्कारप्रतिपादकं नम इति शब्दमवादिष्म । उत अपि च नूनमद्यापि ब्रवाम । उत अपि च हे तुविजात बहुषु प्रदेशेषु प्रादुर्भूत वरुणापरमागामिन्यपि काले नम शब्दं ब्रवाम । उच्चारयाम । कस्मादिति चेदुच्यते । दूळभ दुर्दभ दंभितुं हिंसितुमशक्य ॥ दुरो दाशनाशदभध्येषु । पा० ६. ३. १०९. ५ । इति रेफस्योत्वमुत्तरपदादेः ष्टुत्वं च ॥ कमित्येतत्पादपूरणं ॥ हि यस्मात् त्वे त्वयि पर्वते न शिलोच्चय इवाप्रच्युतान्यन्यैः प्रच्यावयितुमशक्यानि व्रतानि कर्माणि विधरणानि श्रितानि । आश्रितानि । तस्मादित्यर्थः ॥

पर॑ ऋ॒णा सा॑वीर॒ध मत्कृ॑तानि॒ माहं रा॑जन्न॒न्यकृ॑तेन भोजम् ।
अव्यु॑ष्टा॒ इन्नु भूय॑सीरु॒षास॒ आ नो॑ जी॒वान्व॑रुण॒ तासु॑ शाधि ॥ ९ ॥
परा॑ । ऋ॒णा । सा॒वीः॒ । अध॑ । मत्ऽकृ॑तानि । मा । अ॒हम् । रा॒ज॒न् । अ॒न्यऽकृ॑तेन । भो॒ज॒म् ।
अवि॑ऽउष्टाः । इत् । नु । भूय॑सीः । उ॒षसः॑ । आ । नः॒ । जी॒वान् । व॒रु॒ण॒ । तासु॑ । शा॒धि॒ ॥ ९ ॥

हे वरुण ऋणा ऋणानि पित्रादिभिः कृतान्यस्माभिर्देयानि परा सावीः । परा सुव । पराचीनं प्रेरय ॥

षू प्रेरणे । छांदसो लुङ् ॥ अध अधुना मत्कृतानि मया निष्पादितानि ऋणानि परा सुव । अपि च हे राजन् स्वामिन् वरुण अहमन्यकृतेनान्यैरर्जितेन धनेन मा भोजं । भोगं मा लभेयं । किं कारणमिति चेदुच्यते । भूयसीर्भूयस्यो बहुतरा उषसोऽव्युष्टा इन्नु । सत्यमव्युष्टा एव । अपररात्रेपूत्थाय ऋणानि चिंतयतो जाग्रतो मम व्युष्टा अप्यव्युष्टकल्पा आसन् । हे वरुण तासूषःसु नोऽस्मान् जीवान् जीवनवत आशाधि । आ समंतादनुशिष्टान् कुरु । ऋणान्यपकृत्य भोगपर्याप्तं धनं प्रयच्छेत्यर्थः ॥

यो मे राजन्युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।
स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान् ॥१०॥
यः । मे । राजन् । युज्यः । वा । सखा । वा । स्वप्ने । भयं । भीरवे । मह्यं । आह ।
स्तेनः । वा । यः । दिप्सति । नः । वृकः । वा । त्वं । तस्मात् । वरुण । पाहि । अस्मान् ॥१०॥

हे राजन् वरुण मे मदीयो युज्यो योजनसमर्थः पित्रादिर्वा सखा समानख्यानोऽन्यो बांधवो वा स्वप्ने दृष्टं त्वद्विषयं भयं भीरवे भयशीलाय मह्यं य आह ब्रूते । तथा स्तेनश्चोरो वा वृकोऽरण्यश्वा वा यो नोऽस्मान् दिप्सति । जिघांसति ॥ सनीवंतर्धेति विकल्पनादिड़भावः । दंभ इत्वेतीत्वं ॥ हे वरुण त्वं तस्मात्सर्वस्मादस्मान्पाहि । रक्ष ॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥११॥
मा । अहं । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदं । शूनं । आपेः ।
मा । रायः । राजन् । सुऽयमात् । अव । स्थां । बृहत् । वदेम । विदथे । सुऽवीराः ॥११॥

हे वरुण प्रियस्य भूरिदाव्नो भूरेर्धनस्य दातुर्धनवत आढ्यस्य पुरतः पुत्रादेर्दारिद्र्यमहं मा आविदं । आवेदयानि ज्ञापयानि । हे राजन् सुष्ठु नियामकाद्धनादवयुत्य स्थितो मा भूवं । शोभनपुत्रा यज्ञे गृहे वा वर्तमानाः प्रौढं स्तोत्रमुच्चारयाम ॥ ॥१०॥

धृतव्रता इति सप्तर्चं सप्तमं सूक्तं गार्त्समदस्य कूर्मस्य गृत्समदस्य वार्षं त्रैष्टुभं वैश्वदेवं । तथा चानुक्रांतं । धृतव्रताः सप्त वैश्वदेवमिति । गतो विनियोगः ॥

धृतव्रता आदित्या इषिरा आरे मत्कर्त रहसूरिवागः ।
शृण्वतो वो वरुण मित्र देवा भद्रस्य विद्वाँ अवसे हुवे वः ॥१॥
धृतऽव्रताः । आदित्याः । इषिराः । आरे । मत् । कर्त । रहसूःऽइव । आगः ।
शृण्वतः । वः । वरुण । मित्र । देवाः । भद्रस्य । विद्वान् । अवसे । हुवे । वः ॥१॥

हे धृतव्रता धृतकर्माण आदित्या अदितेः पुत्रा इषिरा गमनशीलाः सर्वैरभ्येषणीयाः प्रार्थनीया वा हे विश्वे देवा मदारे मत्तो दूरदेश आगो विहिताननुष्ठानादिजनितं पापं कर्त । कुरुत ॥ करोतेश्छांदसो विकरणस्य लुक् । तप्तनप्तनथनाश्चेति तबादेशः ॥ तत्र दृष्टांतः । रहसूरिव । रहस्यन्यैरज्ञाते प्रदेशे सूयत इति रहसूर्व्यभिचारिणी । सा यथा गर्भं पातयित्वा दूरदेशे परित्यजति तद्वत् । हे वरुण मित्र देवाश्च वो युष्मदीयस्य भद्रस्य युष्माभिः करणीयं श्रेयो विद्वान् जानन्नहं शृण्वतो मत्कृतानि स्तोत्राणि श्रोत्रेण जानतो वो युष्मान् अवसे रक्षणार्थं हुवे । आह्वयामि ॥

यूयं देवाः प्रमतिर्यूयमोजो यूयं द्वेषांसि सनुतर्युयोत ।
अभिक्षत्तारो अभि च क्षमध्वमद्या च नो मृळयतापरं च ॥२॥
यूयं । देवाः । प्रऽमतिः । यूयं । ओजः । यूयं । द्वेषांसि । सनुतः । युयोत ।
अभिऽक्षत्तारः । अभि । च । क्षमध्वं । अद्य । च । नः । मृळयत । अपरं । च ॥२॥

हे देवाः प्रमतिः प्रकृष्टा मतिर्यस्य पित्रादेस्तादृशा अपि यूयमेव । तथौजो बलमपि यूयमेव । अपि च यूयं द्वेषांसि द्वेष्टॄणि रक्षःपिशाचादीनि । सनुतरित्यव्ययं । अंतर्हितनामैतत् । अंतर्हिते प्रदेशे युयोत । पृथक्कुरुत ॥ यु मिश्रणामिश्रणयोः । छांदसः शपः श्लुः । पूर्ववत्तस्य तबादेशः ॥ अभिक्षत्तारोऽभितः शत्रूणां हिंसितारो यूयमभि च क्षमध्वं । अभिभवत च शत्रून् । अद्यास्मिन्दिने नोऽस्मान् मृळयत । सुखयत । अपरं च अपरस्मिन्नपि काले । आगामिन्यपि कालेऽस्मान् मृळयत ॥

किमू नु वः कृणवामापरेण किं सनेन वसव आप्येन ।
यूयं नो मित्रावरुणादिते च स्वस्तिमिंद्रामरुतो दधात ॥३॥
किं । ऊं इति । नु । वः । कृणवाम । अपरेण । किं । सनेन । वसवः । आप्येन ।
यूयं । नः । मित्रावरुणा । अदिते । च । स्वस्तिं । इंद्रामरुतः । दधात ॥३॥

हे देवा वो युष्माकं नु अद्येदानीं किमु कृणवाम । किं खलु कर्तुं शक्नवाम । न किमपीत्यर्थः । तथापरेणा परकालभाविना कर्मणा किं कर्तुं शक्ताः । तथा हे वसवो वासयितारो देवाः सनेन सनातनेनाप्येनाप्रव्येन कर्मणा युष्माकं किं कर्तुं शक्ताः । सर्वदापि युष्मदनुगुणं परिचरणं कर्तुं न शक्ता इत्यर्थः । हे मित्रावरुणौ हे अदिते हे इंद्रामरुतः ॥ देवताद्वंद्वे चेति पूर्वपदस्यानङ् ॥ ते च सर्वे यूयं स्वस्तिमविनाशं नोऽस्मभ्यं दधात । धत्त । प्रयच्छत ॥ लोटि तस्य तबादेशे ङित्त्वाभावेनातोल्लोपाभावः ॥

हये देवा यूयमिदापयः स्थ ते मृळत नाधमानाय मह्यं ।
मा वो रथो मध्यमवाळृते भून्मा युष्मावत्स्वापिषु श्रमिष्म ॥४॥
हये । देवाः । यूयं । इत् । आपयः । स्थ । ते । मृळत । नाधमानाय । मह्यं ।
मा । वः । रथः । मध्यमऽवाट् । ऋते । भूत् । मा । युष्माऽवत्ऽसु । आपिषु । श्रमिष्म ॥४॥

हये देवाः ॥ छांदसो वर्णोपजनः ॥ हे देवाः यूयमित् यूयमेवापयो धनस्य प्रापयितारो बंधवः स्थ । भवथ । ते यूयं नाधमानायाभिमतं फलं याचमानाय मह्यं स्तोत्रे मृळत । सुखयत । तथा वो युष्माकं रथ ऋतेऽस्मदीये यज्ञे निमित्तभूते मध्यमवाट् मा भूत् । मध्यमेन मदगमनेन वाहको मा भूत् । शीघ्रं युष्मान्वहत्वित्यर्थः । वयं युष्मावत्सु युष्मत्सदृशेष्वापिषु बंधुषु सत्सु मा श्रमिष्म । श्रांता मा भूम ॥ वतुप्प्रकरणे युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानमिति वतुप् । आ सर्वनाम्न इत्यात्वं ॥

प्र व एको मिमय भूर्यागो यन्मा पितेव कितवं शशास ।
आरे पाशा आरे अघानि देवा मा माधि पुत्रे विमिव ग्रभीष्ट ॥५॥
प्र । वः । एकः । मिमय । भूरि । आगः । यत् । मा । पिताऽइव । कितवं । शशास ।
आरे । पाशाः । आरे । अघानि । देवाः । मा । मा । अधि । पुत्रे । विंऽइव । ग्रभीष्ट ॥५॥

हे देवा वो युष्माकं मध्येऽहमेकः मम भूरि बहुलमागः पापं प्रमिमय। अहं प्रकर्षेणाहिंसिषं। कथमस्माकं मध्ये त्वमेव इति चेदुच्यते। यद्यस्मान्मां पितेव कितवं यथापथप्रवृत्तं पुत्रं पितानुशास्ति तथा शशास। अनुशिष्टे चक्रर्द्ध ॥ शासु अनुशिष्टावित्यस्माल्लिटि मध्यमस्य रूपं ॥ अपि च हे देवा युष्मदीयाः पाशा आरेऽस्मत्तो दूरदेशे संतु। अघानि पापानि चारे संतु। मा माधि पुत्रे ॥ अधिः सप्तम्यर्थानुवादी ॥ पुत्रे पश्यति सति पितरमतं विमिव पक्षिणमिव व्याधो मा यभीष्ट। मा गृह्णीध्वं ॥ माङि लुङि ह्ययहोर्भ इति भत्वं ॥

अर्वाचो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयं।
त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥६॥
अर्वाचः। अद्य। भवत। यजत्राः। आ। वः। हार्दि। भयमानः। व्ययेयं।
त्राध्वं। नः। देवाः। निऽजुरः। वृकस्य। त्राध्वं। कर्तात्। अवऽपदः। यजत्राः ॥६॥

हे यजत्रा यष्टव्या देवा अद्येदानीमर्वाचोऽस्मदभिमुखा भवत। वो युष्माकं हार्दि हृदयवस्थितं रक्षणं भयमानो बिभ्यदहमाव्ययेयं। आभिमुख्येन प्राप्नुयां ॥ व्यय गतौ भौवादिकः ॥ हे देवा वृकस्य तस्करस्यारण्यशुनो वा संबाधिनो निजुरो निहननात ॥ जूरी हिंसार्थः। अस्मात्संपदादिलक्षणो भावे क्विप्। छांदसो ह्रस्वः ॥ नोऽस्मान त्राध्वं। त्रायध्वं ॥ तथा हे यजत्रा अवपद आपदः कर्तात्कर्तुः सकाशात त्राध्वं। त्रायध्वं ॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥७॥
मा। अहं। मघोनः। वरुण। प्रियस्य। भूरिऽदाव्नः। आ। विदं। शूनं। आपेः।
मा। रायः। राजन। सुऽयमात्। अव। स्थां। बृहत्। वदेम। विदथे। सुऽवीराः ॥७॥

व्याख्यातेयं ॥ ॥११॥

ऋतं देवायेत्येकादशर्चमष्टमं सूक्तं गार्त्समदं। अंत्या जगती शिष्टास्त्रिष्टुभः। प्र हि क्रतुमित्येषेंद्रासोमदेवताका। सरस्वति त्वमस्मानित्यर्धर्चः सारस्वतः। यो नः सनुत्य इत्येषा बार्हस्पत्या। अंत्या मारुती। शिष्टा ऐंद्र्यः। तथा चानुक्रांतं। ऋतमेकादश जगत्यंतं षष्ठ्यैंद्रासोमी सरस्वति त्वमिति सारस्वतोऽर्धर्चो यो नो बार्हस्पत्या त्वो मारुतीति ॥ गतो विनियोगः ॥

ऋतं देवाय कृण्वते सवित्र इंद्रायाहिघ्ने न रमंत आपः।
अहरहर्यात्यक्तुरपां कियात्या प्रथमः सर्ग आसां ॥१॥
ऋतं। देवाय। कृण्वते। सवित्रे। इंद्राय। अहिऽघ्ने। न। रमंते। आपः।
अहःऽअहः। याति। अक्तुः। अपां। कियति। आ। प्रथमः। सर्गः। आसां ॥१॥

ऋतमुदकं वृष्टिलक्षणं कृण्वते कुर्वते देवाय द्योतमानाय सवित्रे सर्वस्य प्रेरकायाहिघ्नेऽहिं वृत्रं हतवत इंद्राय यागार्थमापो न रमंते। तस्माद्वृत्रतोभीत्या नोपरता भवंति ॥ तस्माद्व्यत्ययेन चतुर्थी ॥ अपि तु तासामपामक्तुः सेचकं स्रोतोऽहरहः प्रत्यहं याति। गच्छति। आसां प्रथमः सर्गः प्राथमिकं जन्म कियात्या। कियति काले निष्पन्नं। आकारः प्रश्ने। किंशब्द आक्षेपे। यावति काले ता अजायंत स कालः कियान्। किं परिमाणं तस्य कालस्य। न किमपि। नित्या एव हि ता इत्यर्थः ॥

यो वृत्राय सिनमत्राभरिष्यत्प्र तं जनित्री विदुष उवाच।
पथो रदंतीरनु जोषमस्मै दिवेदिवे धुनयो यंत्यर्थं ॥२॥

यः । वृत्राय । सिनं । अत्र । अभरिष्यत् । प्र । तं । जनित्री । विदुषे । उवाच ।
पथः । रदंतीः । अनु । जोषं । अस्मै । दिवेऽदिवे । धुनयः । यंति । अर्थं ॥२॥

यः पुरुषो वृत्रायासुराय सिनमन्नमत्र पाकस्थाने आहर्तुमभरिष्यत संपादितवान् तं पुरुषं जनित्री जनयित्रींद्रस्य मातादितिर्विदुषेऽभिज्ञायेंद्राय प्रोवाच । प्रोक्तवती । प्रवचनस्य हननार्थत्वात् तं वृत्रं हतवानिति शेषः ॥ अपि चास्मा अस्मदिंद्रस्यानुजोषमनुकाममिच्छामनुसृत्य पथो मार्गान् रदंतीर्विलिखंत्यो धुनयो नद्यो दिवेदिवे प्रतिदिवसमर्थमर्तव्यं गंतव्यं समुद्रं प्रति यंति । गच्छंति ॥

ऊर्ध्वो ह्यस्थादध्यंतरिक्षेऽधा वृत्राय प्र वधं जभार ।
मिहं वसान उप हीमदुद्रोत्तिग्मायुधो अजयच्छत्रुमिंद्रः ॥३॥
ऊर्ध्वः । हि । अस्थात् । अधि । अंतरिक्षे । अध । वृत्राय । प्र । वधं । जभार ।
मिहं । वसानः । उप । हि । ईं । अदुद्रोत् । तिग्मऽआयुधः । अजयत् । शत्रुं । इंद्रः ॥३॥

हिर्हेतौ । यस्मादयं वृत्रोंऽतरिक्ष ऊर्ध्वः सन् सर्वमावृत्याध्यस्थात् । अधिष्ठितोऽभूत् । अध अत कारणात् वृत्राय वृत्रं प्रति वधं हननसाधनं वज्रमिंद्रः प्रजभार । प्रचिक्षेप ॥ हृग्रहोर्भः ॥ स हि स खलु वृत्रो मिहं वृष्टेः सेक्तारं मेघं वसान आच्छादयन् ईमेनमिंद्रमुपादुद्रोत् । उपागमत् ॥ द्रु द्रु गतौ । लङि कादेशः शप् श्लुः ॥ तिग्मायुधस्तीक्ष्णायुध इंद्रः शत्रुं शातयितारं तं वृत्रमजयत् । जितवान् ॥

बृहस्पते तपुषाश्नेव विध्य वृकद्वरसो असुरस्य वीरान् ।
यथा जघंथ धृषता पुरा चिदेवा जहि शत्रुमस्माकमिंद्र ॥४॥
बृहस्पते । तपुषा । अश्नाऽइव । विध्य । वृकऽद्वरसः । असुरस्य । वीरान् ।
यथा । जघंथ । धृषता । पुरा । चित् । एव । जहि । शत्रुं । अस्माकं । इंद्र ॥४॥

हे बृहस्पते बृहतां परिवृढानां पालयितरिंद्र तपुषा तापकेन दीप्तेन वज्रेणाश्नेव अशन्येव वृकद्वरसः संवृतद्वारस्यासुरस्य वीरान् पुत्रान् । यद्वा संवृतद्वारानसुरस्य वीरान् विध्य । ताडय ॥ वृणोतेः उल्कभूण्यपिसृपिभ्यः किदिति कर्मणि कन्प्रत्ययः । द्रु गतौ । अस्मादौणादिकोऽसुन्प्रत्ययः । वृकाणि संवृतानि द्वरांसि द्वाराणि येषां । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ हे इंद्र पुरा चित् पुरापि धृषता धर्षकेण वज्रेण यथा जघंथ त्वं हतवान् एवमेवास्माकं शत्रुं जहि । नाशय ॥ हंतेर्जः इति हो जादेशः ॥

अव क्षिप दिवो अश्मानमुच्चा येन शत्रुं मंदसानो निजूर्वाः ।
तोकस्य साता तनयस्य भूरेरस्माँ अर्धं कृणुतादिंद्र गोनां ॥५॥
अव । क्षिप । दिवः । अश्मानं । उच्चा । येन । शत्रुं । मंदसानः । निऽजूर्वाः ।
तोकस्य । सातौ । तनयस्य । भूरेः । अस्मान् । अर्धं । कृणुतात् । इंद्र । गोनां ॥५॥

हे इंद्र दिवो नभसः सकाशादश्मानमश्मवत्कठिनं वज्रमुच्चा उच्चैर्वर्तमानस्त्वमवक्षिप । अस्मदीयान् शत्रूनुद्दिश्यावस्तात्क्षिप । येन वज्रेण मंदसानः स्तोतृभिः स्तूयमानः सन् शत्रुं निजूर्वाः । न्यहिंसीः ॥ जुर्वी हिंसार्थः । लेट्यडागमः ॥ तथा तोकस्य भूरेर्भर्तव्यस्य तनयस्य पौत्रस्य सातौ संभजने ॥ निमित्ते सप्तम्येषा ॥ संभजनार्थं । तथा हे इंद्र गोनां गवां संभजनार्थं चास्मान् अस्माकं ॥ विभक्तिव्यत्ययः ॥ अर्धं समृद्धं कृणुतात् । कुरु ॥ गोः पादांते इति गोशब्दस्यामो नुडागमः ॥ ॥१२॥

प्र हि क्रतुं वृहथो यं वनुथो रध्रस्य स्थो यजमानस्य चोदौ।
इंद्रासोमा युवमस्माँ अविष्टमस्मिन्भयस्थे कृणुतमु लोकं ॥६॥
प्र। हि। क्रतुं। वृहथः। यं। वनुथः। रध्रस्य। स्थः। यजमानस्य। चोदौ।
इंद्रासोमा। युवं। अस्मान्। अविष्टं। अस्मिन्। भयऽस्थे। कृणुतं। ऊं इति। लोकं ॥६॥

हे इंद्रासोमौ यं वैरिणं वनुथो हिंसथः ॥ वनुष्यतिर्हंतिकर्मेति यास्कः ॥ तं क्रतुं द्वेषस्य कर्तारं प्र हि वृहथः। प्रकर्षेणोद्यच्छथः खलु। उन्मूलयथ इत्यर्थः ॥ वृहू उद्यमने तौदादिकः ॥ तथा रध्रस्य राधकस्य यजमानस्य चोदौ शत्रूणां प्रेरकौ स्थः। भवथः। तथा हे इंद्रासोमौ युवं युवामस्मानविष्टं। अवतं। अस्मिन्भयस्थे भयस्थाने युद्धे ॥ घञर्थे कविधानमित्यधिकरणे कप्रत्ययः। मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं ॥ तस्मिन्युद्धे लोकं भयरहितं स्थानं कृणुतं। कुरुतं। उ इति पादपूरणः ॥

न मा तमन्न श्रमन्नोत तंद्रन्न वोचाम मा सुनोतेति सोमं।
यो मे पृणाद्यो ददद्यो निबोधाद्यो मा सुन्वंतमुप गोभिरायत् ॥७॥
न। मा। तमत्। न। श्रमत्। न। उत। तंद्रत्। न। वोचाम। मा। सुनोत। इति। सोमं।
यः। मे। पृणात्। यः। ददत्। यः। निऽबोधात्। यः। मा। सुन्वंतं। उप। गोभिः।
आ। अयत् ॥७॥

स इंद्रो मां न तमत। न तमयतु। न ग्लपयतु। तथा न श्रमत। श्रांतं मा करोतु ॥ तमु ग्लानौ श्रमु तपसि खेदे च। अनयोर्हेतुमण्यंतयोर्लेट्यडागमः। छंदस्युभयथेति शप आर्धधातुकत्वाण्णेरनिटीति णिलोपः ॥ उत अपि च मा न तंद्रत। न तंद्रयेत्। तंद्र्यालस्येन युक्तं मा करोतु ॥ तंद्रीशब्दात्तत्करोतीति णिच। णाविष्ठवत्प्रातिपदिकस्येति टिलोपः। अन्यत पूर्ववत ॥ इंद्रयागाय सोमं मा सुनोत माभिषुणुतेत्यन्यान्यजमानान् प्रति न वोचाम। न ब्रवाम ॥ वक्तेश्छांदसो लुङ्। सुनोतेत्यत्र तप्तनप्तनथनाश्चेति तस्य तबादेशः। तस्य पित्त्वेन ङित्त्वाभावाद्गुणः ॥ य इंद्रो मे मम पृणात कामान पूरयेत यश्च ददत् अभीष्टं फलं दद्यात् यश्च निबोधात अस्मदीयं स्तोत्रं यागं वावगच्छेत य इंद्रः सुन्वंतं सोममभिषुण्वंतं मामस्मभ्यं दातव्यैर्गोभिः सहोपायत् उपागच्छेत। स इंद्र इति पूर्वत्रान्वयः ॥ पृणादित्यादिषु लेट्यडागमः ॥

सरस्वति त्वमस्माँ अविड्ढि मरुत्वती धृषती जेषि शत्रून्।
त्यं चिच्छर्धंतं तविषीयमाणमिंद्रो हंति वृषभं शंडिकानां ॥८॥
सरस्वति। त्वं। अस्मान। अविड्ढि। मरुत्वती। धृषती। जेषि। शत्रून्।
त्यं। चित्। शर्धंतं। तविषीऽयमाणं। इंद्रः। हंति। वृषभं। शंडिकानां ॥८॥

हे सरस्वति सरणवति देवि त्वमस्मान् स्तोतॄन् अविड्ढि। रक्ष ॥ रक्षार्थस्यावतेर्लेट्येतद्रूपं ॥ तथा मरुत्वती मरुद्भिर्युक्ता। मध्यमस्थाना हि वाक् सरस्वती मरुतश्च मध्यमस्थानस्थाः। अतस्तद्वती सती धृषती धर्षयंती शत्रून् शातयितॄन् वैरिणो जेषि। जय ॥ जयतेश्छांदसः शपः लुक् ॥ किंचायमिंद्रस्त्यं चित् तमप्यसुरं हंति। हतवान ॥ व्यत्ययेन भूतार्थे लट् ॥ कीदृशं। शर्धंतं। प्रसहनशीलं ॥ शृधु प्रसहने ॥ तविषीयमाणं। तविषी बलमिवाचरंत सर्वस्य भंजने शक्तं। शंडिकानां। शंडामर्कावसुरपुरोहितौ। तै० सं० ६. ४. १०. १.। शंडवंश्यानां मध्ये वृषभं प्रधानं ॥

यो नः सनुत्य उत वा जिघत्नुरभिख्याय तं तिगितेन विध्य ।
बृहस्पत आयुधैर्जेषि शत्रून्द्रुहे रीषंतं परि धेहि राजन् ॥९॥
यः । नः । सनुत्यः । उत । वा । जिघत्नुः । अभिऽख्याय । तं । तिगितेन । विध्य ।
बृहस्पते । आयुधैः । जेषि । शत्रून् । द्रुहे । रिषंतं । परि । धेहि । राजन् ॥९॥

हे बृहस्पते यो नोऽस्माकं सनुत्यः । सनुतरित्यंतर्हितनाम । अंतर्हिते देशे भवश्चोरः ॥ सगर्भसयूथसनुता यत् ॥ उत वा अपि वा यो जिघत्नुर्जिघांसुर्भवति । तमभिख्याय संवीक्ष्य तिगितेन तीक्ष्णेनायुधेन विध्य । ताडय । तथास्मदीयान् शत्रून् आयुधैरायोधनसाधनैरिष्वादिभिर्जेषि । जय । तथा हे राजन् राजमान बृहस्पते द्रुहे द्रोग्ध्रे शत्रवे रिषंतं हिंसंतं वज्रं परिधेहि । परितो धारय । प्रक्षिपेत्यर्थः ॥

अस्माकेभिः सत्वभिः शूर शूरैर्वीर्या कृधि यानि ते कर्त्वानि ।
ज्योगभूवन्ननुधूपितासो हत्वी तेषामा भरा नो वसूनि ॥१०॥
अस्माकेभिः । सत्वऽभिः । शूर । शूरैः । वीर्या । कृधि । यानि । ते । कर्त्वानि ।
ज्योक् । अभूवन् । अनुऽधूपितासः । हत्वी । तेषां । आ । भर । नः । वसूनि ॥१०॥

हे शूर शौर्यवन्निंद्र अस्माकेभिरास्माकीनैः सत्वभिः परेषां सादकैः शूरैः शौर्योपेतैर्भटैस्तानि वीर्या वीरकर्माणि कृधि कुरु यानि ते त्वया कर्त्वानि करणीयानि ॥ कृत्यार्थे तवैकेनिकेन्यत्वन इति करोतेस्त्वन्प्रत्ययः ॥ ज्योक् चिरकालमनुधूपितासो धूपायमानहृदया मदीयाः शत्रवोऽभूवन् । आसन् । हत्वी तान् हत्वा ॥ स्नात्व्यादयश्चेतीकारः ॥ तेषां शत्रूणां वसूनि धनानि नोऽस्मभ्यमाभर । आहर ॥

तं वः शर्धं मारुतं सुम्नयुर्गिरोप ब्रुवे नमसा दैव्यं जनं ।
यथा रयिं सर्ववीरं नशामहा अपत्यसाचं श्रुत्यं दिवेदिवे ॥११॥
तं । वः । शर्धं । मारुतं । सुम्नऽयुः । गिरा । उप । ब्रुवे । नमसा । दैव्यं । जनं ।
यथा । रयिं । सर्वऽवीरं । नशामहै । अपत्यऽसाचं । श्रुत्यं । दिवेऽदिवे ॥११॥

हे मरुतो वो युष्माकं शर्धं बलं मारुतं मरुत्समूहरूपं दैव्यं देवेनेंद्रेण संवद्धं जनं प्रादुर्भूतमेवंगुणविशिष्टं बलं नमसा नमस्कारेण हविषा वा गिरा स्तोत्रेणोपब्रुवे । स्तौमि । यथा येन प्रकारेण वयं सर्ववीरं सर्वैर्वीरैर्विशेषेण शत्रूणां प्रेरकैर्भटैरुपेतमपत्यसाचमपत्यैरपतनहेतुभूतैः पुत्रादिभिरुपेतं श्रुत्यं श्रवणीयं प्रशस्यभूतं रयिं दिवेदिवे प्रतिदिवसं नशामहै । व्याप्नवाम ॥ नशतिर्व्याप्तिकर्मा । लेट्यडागमः । वैतोऽन्यत्रेत्यैकारः ॥ ॥१३॥

अस्माकमिति सप्तर्चं नवमं सूक्तं गृत्समदस्यार्षं वैश्वदेवं । अत्या त्रिष्टुप् । शिष्टा जगत्यः । तथा चानुक्रांतं । अस्माकं सप्त वैश्वदेवं त्रिष्टुबंतमिति ॥ विनियोगो लैंगिकः ॥

अस्माकं मित्रावरुणावतं रथमादित्यै रुद्रैर्वसुभिः सचाभुवा ।
प्र यद्वयो न पप्तन्वस्मनस्परि श्रवस्यवो हृषीवंतो वनर्षदः ॥१॥
अस्माकं । मित्रावरुणा । अवतं । रथं । आदित्यैः । रुद्रैः । वसुऽभिः । सचाऽभुवा ।
प्र । यत् । वयः । न । पप्तन् । वस्मनः । परि । श्रवस्यवः । हृषीऽवंतः । वनऽसदः ॥१॥

हे मित्रावरुणौ आदित्यैर्धात्रर्यमादिभिर्द्वादशभिः रुद्रैरेकादशसंख्याकैः वसुभिर्धरो ध्रुव

इत्यादिभिरष्टसंख्याकैः एवं त्रिभिर्देवगणैः सचाभुवा सह भवंतौ सह वर्तमानौ युवामस्माकं रथमन्नलाभाय प्रवृत्तमवतं । यद्यदास्मदीया रथा वस्मनस्परि ॥ वसंत्यस्मिन्निति वस्म निवासस्थानं । औणादिको मनिन् ॥ तस्मात्स्थानात्परि उपरि देशांतरे ॥ पंचम्याः परावध्यर्थ इति सत्वं । अध्यर्थ उपर्यर्थ इति वृत्तिः ॥ वयो न पक्षिण इव प्रपप्तन । प्रपतंति । प्रकर्षेण गच्छंति ॥ पतेश्छांदसे लुङि लृदित्वात् च्लेरङादेशः । पतः पुमिति पुमागमः ॥ कीदृशा वयः । श्रवस्यवोऽन्नकामाः । हृषीवतः प्राप्तहर्षाः । वनर्षदो वने वृक्षादौ निषण्णाः ॥ सांहितिकश्छांदसो रेफोपजनः ॥

अधं स्मा न उदंवता सजोषसो रथं देवासो अभि विक्षु वाजयुं ।
यदाशवः पद्याभिस्तित्रंतो रजंः पृथिव्याः सानौ जंघनंत पाणिभिः ॥२॥
अधं । स्म । नः । उत । अवत । सऽजोषसः । रथं । देवासः । अभि । विक्षु । वाजऽयुं ।
यत् । आशवः । पद्याभिः । तित्रंतः । रजंः । पृथिव्याः । सानौ । जंघनंत । पाणिऽभिः ॥२॥

हे सजोषसः समानं प्रीयमाणा देवासो देवा अध अधुना नोऽस्माकं वाजयुं वाजमन्नं कामयमानं गति विशेषयुक्तं वा रथं विक्षु प्रजासु जनपदेष्वभिमुखमुदवत । उद्गमयत ॥ अवतिरत्र गत्यर्थः ॥ यद्यदास्मिन्रथे युक्ता आशवो व्यापनशीला अश्वाः पद्याभिः पादसाध्याभिर्गतिभी रजो रजकं मार्गं तित्रतस्तरंतः ॥ तरतेः शतरि बहुलं छंदसीति शपः श्लुः । बहुलं छंदसीत्यभ्यासस्येत्वं । अभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ पृथिव्याः प्रथितायाः भूमेः सानौ समुच्छ्रिते प्रदेशे पाणिभिः पाण्युपलक्षितैः पादैर्जंघनत । अत्यर्थं गच्छंति ॥ हंतेर्यङ्लुगंताच्छांदसो लङ् । व्यत्ययेनात्मनेपदं । बहुलं छंदसीति शपो लुगभावः ॥

उत स्य न इंद्रो विश्वचर्षणिर्दिवः शर्धंन मारुतेन सुक्रतुंः ।
अनु नु स्थात्यवृकाभिंरूतिभी रथं महे सनये वाजंसातये ॥३॥
उत । स्यः । नः । इंद्रः । विश्वऽचर्षणिः । दिवः । शर्धंन । मारुतेन । सुऽक्रतुंः ।
अनुं । नु । स्थाति । अवृकाभिंः । ऊतिऽभिंः । रथं । महे । सनयें । वाजंऽसातये ॥३॥

उत अपि च विश्वचर्षणिर्विश्वस्य सर्वस्य द्रष्टा यद्वा विश्वे चर्षणयो मनुष्या यस्य परिचारकाः । अथवा विश्वं सर्वं लोकाश्चर्षणयो द्रष्टव्या येन ॥ बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं ॥ मारुतेन मरुत्संबंधिना शर्धेन बलेन सह सुक्रतुः शोभनकर्मा शोभनप्रज्ञो वा स्य स इंद्रोऽवृकाभिर्हिंसकरहिताभिरूतिभी रक्षाभिः सहितः सन् दिवो द्युलोकादागत्य नु अद्य नोऽस्माकं रथमनुस्थाति । आनुगुण्येनाधितिष्ठतु ॥ छांदसः शपो लुक् ॥ किमर्थं । महे सनये महते धनाय । तथा वाजसातये वाजस्यान्नस्य सातये संभजनार्थं ॥

उत स्य देवो भुवंनस्य सक्षणिस्त्वष्टा ग्नाभिंः सजोषां जूजुवद्रथं ।
इळा भगो बृहद्दिवोत रोदंसी पूषा पुरंधिरश्विनावधा पती ॥४॥
उत । स्यः । देवः । भुवंनस्य । सक्षणिंः । त्वष्टा । ग्नाभिंः । सऽजोषाः । जूजुवत् । रथं ।
इळा । भगः । बृहत्ऽदिवा । उत । रोदंसी इति । पूषा । पुरंऽधिः । अश्विनौ । अध ।
पती इति ॥४॥

उत अपि च स्य स देवो दानादिगुणयुक्तो भुवनस्य भूतजातस्य सक्षणिः सचनीयः सेव्यो ग्नाभिर्देवपत्नीभिः । छंदांसि वै ग्ना इति तैत्तिरीयकं । गायत्र्यादीनि छंदांसि च देवपत्न्य इत्युक्तं । सजोषाः समानप्रीतिः । एवंगुणविशिष्टस्त्वष्टास्मदीयं रथं जूजुवत् । प्रेरयतु ॥ जु इति सौत्रो धातुर्गत्यर्थः । अस्माण्ण्यंताल्लुङि रूपं ॥

तथेळा तिसृणां देवीनामाद्येडाख्या देवी च रथं प्रेरयतु । बृहद्दिवा बृहन्महद्दीव्यति द्योतत इति बृहद्दिवः ॥ इगुपधालक्षणः कः । सुपां सुलुगिति विभक्तेराकारः ॥ तादृशो भगश्च प्रेरयतु । उत अपि च रोदसी द्यावापृथिव्यौ पुरंधिर्बहुधीः पूषा पोषको देवश्च ॥ अधशब्दश्चार्थे ॥ पत्नी सूर्याया भर्तारावश्विनौ च एते सर्वेऽस्मदीयं रथं प्रेरयन्त्वित्यर्थः ॥

उत त्ये देवी सुभगे मिथूदृशोषासानक्ता जगतामपीजुवा ।
स्तुषे यद्वां पृथिवि नव्यसा वचः स्थातुश्च वयस्त्रिवया उपस्तिरे ॥५॥
उत । त्ये इति । देवी इति । सुभगे इति सुऽभगे । मिथूऽदृशा । उषसानक्ता । जगतां । अपिऽजुवा ।
स्तुषे । यत् । वां । पृथिवि । नव्यसा । वचः । स्थातुः । च । वयः । त्रिऽवयाः । उपऽस्तिरे ॥५॥

उत अपि च त्ये ते प्रसिद्धे देवी देव्यौ देवनशीले सुभगे शोभनधने मिथूदृशा मिथः परस्परं पश्यन्त्यौ एवंभूते उषासानक्ता उषाश्च रात्रिश्च जगतां जङ्गमानामपीजुवा प्रेरयित्र्यौ भवतः । तस्मादस्मदीयमपि रथं प्रेरयतां । उत्तरोऽर्धर्चो द्यावापृथिव्योः प्रत्यक्षकृतः । हे पृथिवि वां युवां त्वां दिवं च नव्यसा नवीयसा नवतरेण प्रशस्येन वचो वचसा ॥ सुपां सुलुगिति तृतीयाया लुक् ॥ यद्यदा स्तुषे स्तौमि ॥ उत्तमस्य व्यत्ययेन मध्यमः ॥ तदानीं स्थातुः स्थावरस्य व्रीह्यादेः संबंधि वयोऽन्नं चरुपुरोडाशादिलक्षणं त्रिवयाः । वय इत्यन्ननाम । ओषधिपशुसोमात्मकानि हविर्लक्षणान्यन्नानि यस्य तादृशोऽहमुपस्तिरे । उपस्तृणामि । आच्छादनोपस्तरणाभिघारणपूर्वकं प्रयच्छामीत्यर्थः ॥ स्तृञ् आच्छादने । लट्युत्तमे छान्दसो विकरणस्य लुक् । चत्वशब्दश्चार्थीति निपातांतरं पादपूरणं । ऋत इद्धातोरितीत्वं । निपातैर्यद्यदिहन्तेति निघातप्रतिषेधः ॥

उत वः शंसमुशिजामिव श्मस्यहिर्बुध्न्योऽज एकपादुत ।
त्रित ऋभुक्षाः सविता चनो दधेऽपां नपादाशुहेमा धिया शमि ॥६॥
उत । वः । शंसं । उशिजांऽइव । श्मसि । अहिः । बुध्न्यः । अजः । एकऽपात् । उत ।
त्रितः । ऋभुक्षाः । सविता । चनः । दधे । अपां । नपात् । आशुऽहेमा । धिया । शमि ॥६॥

उत अपि च हे देवा उशिजामिव । इवेति संप्रत्यर्थीयः । अस्मत्तः स्तुतिं कामयमानानां वो युष्माकं शंसं स्तुतिं संप्रति श्मसि । उश्मसि कामयामहे ॥ वश कान्तौ । इदन्तो मसिः । ग्रहिज्यादिना संप्रसारणं । छान्दसो वर्णलोपः ॥ उत अपि च अहिर्बुध्न्यः । बुध्नमन्तरिक्षं । तत्र भवोऽहिनामा देवः । अज एकपात् । न जायत इत्यजः । एक एव पद्यते गच्छतीत्येकपात् । अज एकपात्संज्ञकः सूर्यः । त्रितस्त्रीणि स्थानानि ऋभुक्षा उरु क्षयन् उरूणि वासन् ऋभुणा निवासयितेन्द्रश्च सविता सर्वस्य प्रसविता चनोऽन्नं दधे । विदधातु । अस्मभ्यं करोतु । तथा आशुहेमा शीघ्रगामी ॥ हि गतावित्यस्मादन्येभ्योऽपि दृश्यन्त इति मनिन् ॥ तादृशोऽपां नपात् अपां पौत्रस्थानीयोऽग्निः ॥ अद्भ्य ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्यश्चायमग्निर्जायत इत्यपां पौत्रत्वं । स च धिया स्तुत्या शमि । शमीति कर्मनाम । यज्ञकर्मणि प्रीतो भवत्विति शेषः ॥

एता वो वश्म्युद्यता यजत्रा अतक्षन्नायवो नव्यसे सं ।
श्रवस्यवो वाजं चकानाः सप्तिर्न रथ्यो अह धीतिमश्याः ॥७॥
एता । वः । वश्मि । उत्ऽयता । यजत्राः । अतक्षन् । आयवः । नव्यसे । सं ।
श्रवस्यवः । वाजं । चकानाः । सप्तिः । न । रथ्यः । अह । धीतिं । अश्याः ॥७॥

हे यजत्रा यजनीया विश्वे देवा वो युष्मदीयान्येतैतान्युद्यतोद्यतानि वचांसि वश्मि । कामये । भवसे भवतराय स्तुत्यतमाय युष्मन्नगायायवो मत्प्रभृतयो मनुष्याः कामितानि स्तोत्राणि समतक्षन् । समस्कुर्वन् । किमिच्छंतः । श्रवस्यवः श्रवणीयं यशोऽन्नं वात्मन इच्छंतः । वाजं बलं चकानाः कामयमानाः ॥ कन दीप्तिकांतिगतिषु । लिटः कानच् ॥ रथ्यो रथसंबंधी सप्तिर्न सर्पणशीलोऽश्व इव युष्मन्नगो धीतिमस्मदीयं कर्माश्याः । प्राप्नोतु ॥ अशू व्याप्तौ । व्यत्ययेन परस्मैपदमधर्मा । बहुलं छंदसीति विकरणस्य लुक् ॥ ॥१४॥

अस्य मे इत्यष्टर्च दशमं सूक्तं गृत्समदस्यार्षं पश्चायास्तिस्रोऽनुष्टुभः । शिष्टाः पंच जगत्यः । प्रथमा द्यावापृथिवीया ततो द्वे ऐंद्र्यौ त्वाष्ट्र्यौ वा । ततो द्वे राकादेवत्ये द्वे सिनीवालीदेवत्ये अंत्या गुंग्वादिपड्देवताका । तथा चानुक्रांतं । अस्य मेऽष्टौ जागतं त्र्यनुष्टुबंतं । द्यावापृथिवीका द्वे ऐंद्र्यौ त्वाष्ट्र्यौ वा द्वे द्वे राकासिनीवाल्योरंत्या लिंगोक्तदेवतेति ॥ आभिप्लविक चतुर्थेऽहनि वैश्वदेवशस्त्र आद्यस्तृचो द्यावापृथिवीयनिविद्धानः । तथा च सूत्रितं । अस्य मे द्यावापृथिवी इति तिस्रस्तत् मे अप इति वैश्वदेवं । आ० ७. ७. । इति ॥

अस्य मे द्यावापृथिवी ऋतायतो भूतमवित्री वचसः सिषासतः ।
ययोरायुः प्रतरं ते इदं पुर उपस्तुते वसूयुर्वां महो दधे ॥१॥
अस्य । मे । द्यावापृथिवी इति । ऋतऽयतः । भूतं । अवित्री इति । वचसः । सिसासतः ।
ययोः । आयुः । प्रऽतरं । ते इति । इदं । पुरः । उपस्तुते इत्युपऽस्तुते । वसुऽयुः । वां ।
महः । दधे ॥१॥

द्यावापृथिवी हे द्यावापृथिव्यौ ऋतायत ऋतं यज्ञमात्मन इच्छतः सिषासतो युवां संभक्तुमिच्छतोऽस्य वचसः ॥ वक्तीति वचाः स्तोता । असुन् ॥ स्तोतुरस्य मे ममावित्री अवित्र्यौ पालयित्र्यौ भूतं । भवतं । ययोर्द्यावापृथिव्योरायुरन्नं प्रतर प्रकृष्टतरमुत्पद्यत इति शेषः । इदमिदानीं ते द्यावापृथिव्यावुपस्तुते तत्र तत्र स्थितैः स्तोतृभिः स्तुते वां युवां वसूयुर्धनकामोऽहं महो महतः ॥ विभक्तिव्यत्ययः ॥ महता स्तोत्रेण पुरो दधे । पुरस्करोमि ॥

मा नो गुह्या रिप आयोरहन्दभन्मा न आभ्यो रीरधो दुच्छुनाभ्यः ।
मा नो वि यौः सख्या विद्धि तस्य नः सुम्नायता मनसा तत्त्वेमहे ॥२॥
मा । नः । गुह्याः । रिपः । आयोः । अहन् । दभन् । मा । नः । आभ्यः । रीरधः । दुच्छुनाभ्यः ।
मा । नः । वि । यौः । सख्या । विद्धि । तस्य । नः । सुम्नऽयता । मनसा । तत् । त्वा । ईमहे ॥२॥

हे इंद्र त्वष्टर्वा आयोर्मनुष्यस्य शत्रुभूतस्य गुह्या गोप्या ज्ञातुमशक्या रिपो हिंसारूपा माया नोऽस्मान् अहन् । उपलक्षणमेतत् । अहनि रात्रौ च मा दभन् । मा हिंसिषुः । तथा नोऽस्मानाभ्यो दुच्छुनाभ्यः । शुनमिति सुखनाम । दुःशुना दुच्छुनाः । दुःखकारिणीभ्यः शत्रुसेनाभ्यो मा रीरधः । वशं मा नैषीः ॥ रध्यतिर्वशगमन इति यास्कः । रध हिंसासंराद्ध्योः । अस्मागयंतात्लुङि चङि रूपं ॥ अपि च नोऽस्माकं सख्या सख्यानि सखित्वानि मा वि यौः । त्वया वियुक्तानि मा कार्षीः । अपि तु नोऽस्माकं तस्य तत् सखित्वं सुम्नायता सुखमस्माकमिच्छता मनसा विद्धि । जानीहि ॥ क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥ तत् त्वा तादृशं त्वामीमहे । अभिमतफलं याचामहे ॥ सुपां सुलुगिति तच्छब्दादुत्तरस्या विभक्तेर्लुक् ॥

अहेळता मनसा श्रुष्टिमा वह दुहानां धेनुं पिप्युषीमसश्चतं ।
पद्याभिराशुं वचसा च वाजिनं त्वां हिनोमि पुरुहूत विश्वहा ॥३॥

अहेळता । मनसा । श्रुष्टिं । आ । वह । दुहानां । धेनुं । पिप्युषीं । असश्चतं ।
पद्याभिः । आशुं । वचसा । च । वाजिनं । त्वां । हिनोमि । पुरुऽहूत । विश्वहा ॥ ३॥

हे इंद्र त्वष्टर्वा अहेळता अक्रुध्यता मनसा श्रुष्टिं सुखकरीं दुहानां दोग्ध्रीं पिप्युषीं प्रवृद्धां पीनां ॥ प्यायी वृद्धौ । लिटः क्वसुः । लिड्यङोश्चेति पीभावः । उगितश्चेति ङीप् । संप्रसारणमिति संप्रसारणं । शासिवसिघसीनां चेति षत्वं ॥ असश्चतमसक्तावयवां एवंभूतां धेनुं गामावह । आभिमुख्येन प्रापय । अपि च हे पुरुहूत बहुभिराहूतेंद्र त्वष्टर्वा पद्याभिः पादगतिभिराशुं व्यापनशीलं वचसा वाचा च वाजिनं वेगवंतं त्वा विश्वहा सर्वेष्वहःसु हिनोमि । स्तुतिभिः प्रेरयामि ॥ हि गतौ वृद्धौ च ॥

पत्नीसंयाजेषु गृहपतेः प्राक् राकासिनीवाल्यौ यष्टव्ये । तत्र राकायागस्य राकामहमित्याद्दिके याज्यानुवाक्ये । सूत्रितं च । राकामहं सिनीवालि कुहूमहमिति द्वे द्वे याज्यानुवाक्ये । आ० १ १०. । इति ॥ तथाग्निमारुतेष्वेति धाय्ये । सूत्रितं च । राकामहमिति द्वे । आ० ५ २०. । इति ॥

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यं ॥४॥

राकां । अहं । सुऽहवां । सुऽस्तुती । हुवे । शृणोतु । नः । सुऽभगा । बोधतु । त्मना ।
सीव्यतु । अपः । सूच्या । अच्छिद्यमानया । ददातु । वीरं । शतऽदायं । उक्थ्यं ॥४॥

संपूर्णचंद्रा पौर्णमासी राका । तां देवीं सुहवां स्वाह्वानामाह्वानप्रयोजनकारिणीं सुष्टुती शोभनया स्तुत्याहं हुवे । आह्वयामि ॥ सुष्टुतिशब्दात्तृतीयैकवचनस्य सुपां सुलुगिति पूर्वसवर्ण ईकारः ॥ सा च सुभगा शोभनधना नोऽस्माकमाह्वानं शृणोतु । श्रुत्वा च त्मना आत्मना स्वयमेव बोधतु । अस्मदभिप्रायं बुध्यतां । बुद्ध्वा चापः कर्म पुत्रोत्पादनलक्षणं सूच्या सूचीस्थानीययाच्छिद्यमानयाविनाशिन्यानुग्रहबुद्ध्या सीव्यतु । संतनोतु । यथा वस्त्रादिकं सूच्या स्यूतं चिरं तिष्ठति एवमिदं करोतु । कृत्वा च वीरं विक्रांतं शतदायं बहुधनं बहुप्रदं वोक्थ्यं प्रशस्यं पुत्रं ददातु ॥

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥५॥

याः । ते । राके । सुऽमतयः । सुऽपेशसः । याभिः । ददासि । दाशुषे । वसूनि ।
ताभिः । नः । अद्य । सुऽमनाः । उपऽआगहि । सहस्रऽपोषं । सुऽभगे । रराणा ॥५॥

हे राके देवि सुपेशसः शोभनरूपास्ते तव याः सुमतयः शोभनबुद्धयः याभिर्मतिभिर्दाशुषे हविर्दत्तवते यजमानाय वसूनि धनानि ददासि । प्रयच्छसि । अद्येदानीं ताभिर्मतिभिः सहिता त्वं सुमनाः शोभनमना भूत्वोपागहि । उपागच्छ ॥ गमेश्छांदसः शपो लुक् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । असिद्धवदत्राभादित्यस्यासिद्धत्वाद्धेर्लुगभावः ॥ किं कुर्वती । हे सुभगे शोभनधने सहस्रपोषं सहस्रसंख्याकस्य धनस्य पुष्टिं रराणा ददती ॥ रा दाने । व्यत्ययेन शानच् । छांदसः शपः श्लुः । अभ्यस्तानामादिरित्याद्युदात्तत्वं ॥

सिनीवाल्या यागे सिनीवालीत्याद्दिके द्वे याज्यानुवाक्ये । सूत्रं पूर्वमुदाहृतं ॥

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥६॥

सिनीवालि । पृथुऽस्तुके । या । देवानां । असि । स्वसा ।
जुषस्व । हव्यं । आऽहुतं । प्रऽजां । देवि । दिदिड्ढि । नः ॥ ६ ॥

दृष्टचंद्रामावास्या सिनीवाली । हे सिनीवालि पृथुष्टुके पृथुजघने पृथुसंहते वा या त्वं देवानां स्वसासि स्वयंसंचारिणी भगिनी वा भवसि सा त्वमाहुतमाभिमुख्येनाग्नौ प्रक्षिप्तं हव्यमस्मदीयं हविर्जुषस्व । सेवस्व । किंच हे देवि सिनीवालि नोऽस्माकं प्रजां पुत्रादिकां दिदिड्ढि । उपचिनु अतिसर्जय वा । देहीत्यर्थः ॥ दिह उपचये । लोटि छांदसः शपः श्लुः । दिश अतिसर्जन इत्यस्माद्वा ॥

या सुबाहुः स्वंगुरिः सुषूमा बहुसूवरी ।
तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ ७ ॥
या । सुऽबाहुः । सुऽअंगुरिः । सुऽसूमा । बहुऽसूवरी ।
तस्यै । विश्पत्न्यै । हविः । सिनीवाल्यै । जुहोतन ॥ ७ ॥

या सिनीवाली सुबाहुः शोभनबाहुः स्वंगुरिः शोभनांगुलिः सुषूमा सुष्ठु प्रसवित्री ॥ षूङ् प्राणिप्रसवे । अन्येभ्योऽपि दृश्यंत इति मनिन । बहुव्रीहौ उत्तरपदप्रकृतिस्वरत्वं ॥ बहुसूवरी बह्वीनां प्रजानां सवित्री ॥ तेनैव सूत्रेण क्वनिप । वनो र चेति ङीब्रेफौ । उत्तरपदप्रकृतिस्वरत्वं ॥ तस्यै सिनीवाल्यै विश्पत्न्यै विशां पालयित्र्यै ॥ विभाषा सपूर्वस्येति पत्युर्नकारांतादेशः । अयस्मयादित्वेन भत्वाद्विशो जश्त्वाभावः । परादिश्छंदसि बहुल-मित्युत्तरपदाद्युदात्तत्वं ॥ हे ऋत्विग्यजमाना हविर्जुहोतन । जुहुत ॥ तप्तनप्तनथनाश्चेति तनबादेशः ॥

या गुंगूर्या सिनीवाली या राका या सरस्वती ।
इंद्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥ ८ ॥
या । गुंगूः । या । सिनीवाली । या । राका । या । सरस्वती ।
इंद्राणीं । अह्वे । ऊतये । वरुणानीं । स्वस्तये ॥ ८ ॥

अत्र गुंगूशब्देन राकासिनीवाल्योः साहचर्यात्कुहूरुच्यते । या गुंगूः कुहूस्तामह्वे । आह्वयामि । एवमुत्तर-त्रापि योज्यं । इंद्राणीमिंद्रस्य पत्नीमूतये रक्षणार्थमह्वे । आह्वयामि । तथा वरुणानीं वरुणस्य पत्नीं स्वस्तयेऽविनाशायाह्वयामि ॥ इंद्रवरुणेत्यादिना ङीप् आनुगागमश्च ॥ ॥ १५ ॥ ॥ ३ ॥

चतुर्थेऽनुवाक एकादश सूक्तानि । तत्रा ते पितरिति पंचदशर्चं प्रथमं सूक्तं गृत्समदस्यार्षं त्रैष्टुभं रौद्रं । अनुक्रांतं च । आ ते पंचोना रौद्रमिति ॥ शूलगवादिरुद्रयज्ञेष्वनेन सूक्तेन प्रतीची दिगुपस्थेया । सूत्रितं च । कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानं । गृ° सू° ४. ८. २३ । इति ॥ रुद्रदेवत्ये पशौ आ ते पितरिति हविषोऽनुवाक्या । सूत्रितं च । आ ते पितर्मरुतां सुम्नमेतु प्र बभ्रवे वृषभाय श्वितीच इति तिस्रः । आ° ३. ८ । इति ॥ अत्र शौनकः । चतुर्दशीमुपोष्यैकां कृष्णस्य जुहुयाच्चरुं । आतेसूक्तेन रौद्रेण प्रत्यृचं वाग्यतः शुचिः ॥ पूर्वमाज्याहुतीर्हुत्वाथोपस्थाय च शंकरं । हविःशेषेण वर्तेतैकांतर-मतंद्रितः । पूर्णमासे जयेन्मृत्युं रोगैश्च परिमुच्यते । ऋग्वि° १. ३०. । इति ॥

आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः ।
अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः ॥ १ ॥
आ । ते । पितः । मरुतां । सुम्नं । एतु । मा । नः । सूर्यस्य । संऽदृशः । युयोथाः ।
अभि । नः । वीरः । अर्वति । क्षमेत । प्र । जायेमहि । रुद्र । प्रऽजाभिः ॥ १ ॥

हे मरुतां पितः मरुत्संज्ञानां देवानामुत्पादक रुद्र ॥ परमपि छंदसीति षष्ठ्यंतस्य पूर्वामंत्रितांगवद्भावात् सर्वानुदात्तत्वं ॥ ते त्वदीयमस्मभ्यं दातव्यं सुम्नं सुखमेतु । आगच्छतु । रुद्रस्य च मरुतां पितृत्वमिदं पितर्मरुतामाख्यायिकामुखेनावादिष्म । ऋग्वे० १ ११४ ६ । तथा त्वं नोऽस्मान् सूर्यस्य संदृशः संदर्शनात्मा युयोथाः । मा पृथक्कार्षीः ॥ यु मिश्रणामिश्रणयोः । लङि छांदसः शपः श्लुः । छंदस्युभयथेत्यार्धधातुकत्वेन ङित्त्वाभावाद्गुणः ॥ अर्वति शत्रौ । भ्रातृव्यो वा अर्वेति श्रुतेः । नोऽस्माकं वीरो वीर्यवान् पुत्रादिरभिक्षमेत । अभिभवतु । यद्वा वीरस्त्वं नोऽस्मानभिक्षमेथाः । अस्मान् कृतापराधानभिक्षमस्व । हे रुद्र प्रजाभिः पुत्रपौत्रादिभिः प्रजायेमहि । प्रभूताः स्याम ॥

त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः ।
व्य१स्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ॥२॥
त्वाऽदत्तेभिः । रुद्र । शंऽतमेभिः । शतं । हिमाः । अशीय । भेषजेभिः ।
वि । अस्मत् । द्वेषः । विऽतरं । वि । अंहः । वि । अमीवाः । चातयस्व । विषूचीः ॥२॥

हे रुद्र त्वादत्तेभिस्त्वया दत्तैः शंतमेभिरतिशयेन सुखकरैर्भेषजेभिर्भेषजैरौषधैः शतं हिमाः शतं हेमंतान् शतं संवत्सरानशीय । व्याप्नुयां ॥ अश्नोतेर्लिङि छांदसो विकरणस्य लुक् ॥ अपि च अस्मदस्मत्तो द्वेषो द्वेष्टॄन् विचातयस्व । विनाशय । तथांहः पापं वितरमत्यंतं विचातयस्व । अमीवा रोगान्विषूचीर्विषु नानांचनीः कृत्स्नशरीरव्यापकान् रोगान्विचातयस्व । अस्मत्तः पृथक्कृत्य विनाशय ॥

श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो ।
पर्षि णः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥३॥
श्रेष्ठः । जातस्य । रुद्र । श्रिया । असि । तवःऽतमः । तवसां । वज्रबाहो इति वज्रऽबाहो ।
पर्षि । नः । पारं । अंहसः । स्वस्ति । विश्वाः । अभिऽइतीः । रपसः । युयोधि ॥३॥

हे रुद्र जातस्योत्पन्नस्य सर्वस्य जगतो मध्ये श्रियैश्वर्येण श्रेष्ठः प्रशस्यतमोऽसि । भवसि । तथा हे वज्रबाहो आयुधहस्त रुद्र तवसां प्रवृद्धानां मध्ये तवस्तमोऽतिशयेन प्रवृद्धोऽसि । स त्वं नोऽस्मानंहसः पापस्य पारं तीरं स्वस्ति क्षेमेण पर्षि । पारय । तथा रपसः पापस्य विश्वाः सर्वा अभीतीरभिगमनानि युयोधि । पृथक्कुरु ॥ यौतेश्छांदसः शपः श्लुः । वा छंदसीत्यपित्त्वस्य विकल्पनात् ङित्त्वाभावेऽङितश्चेति हेर्धिः ॥

मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥४॥
मा । त्वा । रुद्र । चुक्रुधाम । नमःऽभिः । मा । दुःऽस्तुती । वृषभ । मा । सऽहूती ।
उत् । नः । वीरान् । अर्पय । भेषजेभिः । भिषक्ऽतमं । त्वा । भिषजां । शृणोमि ॥४॥

हे रुद्र त्वा त्वां नमोभिरयथाक्रियमाणैर्नमस्कारैर्हविर्भिर्वा मा चुक्रुधाम । मा क्रोधयाम । क्रुद्धं मा कार्ष्म ॥ क्रुध कोपे । अस्माण्ण्यंताल्लुङि चङि रूपं ॥ हे वृषभ कामानां वर्षितर्दुष्टुती दुःस्तुत्याशोभनया स्तुत्या मा चुक्रुधामेत्येव । तथा सहूती सहूत्या विसदृशैरन्यैर्देवैः सहाह्वानेन मा क्रोधयाम । श्रेष्ठो हि स्वस्मादन्येन सहाह्वाने क्रुद्धो भवति । स त्वं नोऽस्माकं वीरान् पुत्रान्भेषजेभिस्त्वदीयैर्भेषजैरौषधैरुदर्पय । उत्कृष्टं संयोजय । हे रुद्र त्वा त्वां भिषजां चिकित्साभिज्ञानां मध्ये भिषक्तममतिशयेन भैषज्यस्य कर्तारं शृणोमि । प्रथमो दैव्यो भिषक् । वा० सं० १६. ५ । इति च मंत्रांतरेऽप्युक्तं ॥

हवीमभिर्हवते यो हविर्भिरव स्तोमेभी रुद्रं दिषीय ।
ऋदूदरः सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै ॥५॥
हवीमऽभिः । हवते । यः । हविःऽभिः । अव । स्तोमेभिः । रुद्रं । दिषीय ।
ऋदूदरः । सुऽहवः । मा । नः । अस्यै । बभ्रुः । सुऽशिप्रः । रीरधत् । मनायै ॥५॥

यो रुद्रो हविर्भिश्चरुपुरोडाशादिभिः सहितैर्हवीमभिराह्वानैः स्तुतिलक्षणैर्हवते । आह्वयते स्तूयते ॥ व्यत्ययेन कर्मणि कर्तृप्रत्ययः । बहुलं छंदसीति ह्वयतेः संप्रसारणं ॥ तं रुद्रं स्तोमेभिः स्तोत्रैरवदिषीय । अवखंडयामि । पृथक्करोमि । अपगतक्रोधं करोमीति यावत् ॥ दो अवखंडने । व्यत्ययेनात्मनेपदं । बहुलं छंदसीतीत्वं ॥ ऋदूदरः । ऋदूदरो मृदूदर इति यास्कः । नि० ६ ४. । सुहवः शोभनाह्वानो बभ्रुर्भर्ता सर्वस्य बभ्रुवर्णो वा । सुशिप्रः । शिप्रे हनू नासिके वा । शोभनशिप्रः । एवंगुणविशिष्टः स रुद्रोऽस्यै मनायै । हन्मीति मन्यमाना बुद्धिर्मना । तस्यै नोऽस्मान्मा रीरधत् । मा वशं नैषीत् ॥ रध हिंसासंराद्ध्योः । अस्मात्ण्यंताल्लुङि चङि रूपं । रध्यतिर्वशगमन इति यास्कः ॥ ॥१६॥

उन्मा ममंद वृषभो मरुत्वान्त्वक्षीयसा वयसा नाधमानं ।
घृणीव छायामरपा अशीया विवासेयं रुद्रस्य सुम्नं ॥६॥
उत् । मा । ममंद । वृषभः । मरुत्वान् । त्वक्षीयसा । वयसा । नाधमानं ।
घृणिऽइव । छायां । अरपाः । अशीय । आ । विवासेयं । रुद्रस्य । सुम्नं ॥६॥

वृषभः कामानां वर्षिता मरुत्वान् मरुद्भिः पुत्रैर्युक्तो रुद्रो नाधमानं याचमानं मा मां त्वक्षीयसा दीप्तेन वयसान्नेनोन्ममंद । उत्कर्षेण तर्पयतु । अपि चाहं घृणीव छायां यथा सूर्यकिरणसंतप्तश्छायां प्रविशति एव रुद्रस्य सुम्नं सुखमरपा अपापः सन् अशीय । व्याप्नुयां । तदर्थं तं रुद्रमाविवासेयं । परिचरेयं ॥ विवासतिः परिचरणकर्मा ॥

क्व१स्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः ।
अपभर्ता रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः ॥७॥
क्व । स्यः । ते । रुद्र । मृळयाकुः । हस्तः । यः । अस्ति । भेषजः । जलाषः ।
अपऽभर्ता । रपसः । दैव्यस्य । अभि । नु । मा । वृषभ । चक्षमीथाः ॥७॥

हे रुद्र ते तव मृळयाकुः सुखयिता स्यः स हस्तः क्व कुत्र वर्तते । यो हस्तो भेषजो भैषज्यकृत् जलाषः सर्वेषां सुखकरोऽस्ति । भवति । स हस्तो विद्यत एव । तेन हस्तेन मां रक्षेति भावः । अपि च हे वृषभ कामानां वर्षितः दैव्यस्य देवकृतस्य रपसः पापस्यापभर्तापहर्ता विनाशयिता भूत्वा कृतापराधं मां नु क्षिप्रमभिचक्षमीथाः । अभिक्षमस्व ॥ क्षमूष सहने । लिङि छांदसः शपः श्लुः । बहुलं छंदसीतीडागमः ॥

रुद्रदेवत्ये पशौ वपापुरोडाशहविषां क्रमेण प्र बभ्रव इत्याद्यास्तिस्रो याज्याः । प्र बभ्रवे वृषभाय श्वितीच इति तिस्र आ पश्चातान्नासत्या पुरस्तात् । आ० ३ ८. । इति ॥

प्र बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि ।
नमस्या कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम ॥८॥

प्र । बभ्रवे । वृषभाय । श्वितीचे । महः । महीं । सुऽस्तुतिं । इरयामि ।
नमस्य । कल्मलीकिनं । नमःऽभिः । गृणीमसि । त्वेषं । रुद्रस्य । नाम ॥ ८ ॥

बभ्रवे विश्वस्य भर्त्रे बभ्रुवर्णाय वा वृषभाय कामानां वर्षित्रे तद्वत्प्रमहाकारिणे वा श्वितीचे श्वैत्यमञ्चते ॥ श्विता वर्णे । औणादिक इन्प्रत्ययः । श्वितिमंचतीत्यचंतेर्ऋत्विगित्यादिना क्विन । चतुर्थ्येकवचनेऽच इत्यकारलोपे चावित दीर्घत्वं । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं ॥ एवगुणविशिष्टाय रुद्राय महो महीं महतोऽपि महतीं सुष्टुतिं शोभनस्तुतिं प्रेरयामि । प्रकर्षेणोच्चारयामि । हे स्तोत. कल्मलीकिनं । ज्वलतो नामधेयमेतत । नैघं° १. १७. । ज्वलंत । कलयत्यपगमयति मलमिति कल्मलीकं तेजः । तद्वत रुद्रं नमोभिर्नमस्कारैर्हविर्भिर्वा नमस्य । पूजय । वय च रुद्रस्य महादेवस्य त्वेषं दीप्तं नाम गृणीमसि । गृणीम. संकीर्तयामः ॥ गॄ शब्दे । क्रैयादिकः । इदंतो मसिः । प्वादीनां ह्रस्वः ॥

स्थिरेभिरङ्गैः पुरुरूपं उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ।
ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्यं ॥ ९ ॥
स्थिरेभिः । अङ्गैः । पुरुऽरूपः । उग्रः । बभ्रुः । शुक्रेभिः । पिपिशे । हिरण्यैः ।
ईशानात् । अस्य । भुवनस्य । भूरेः । न । वै । ऊं इति । योषत । रुद्रात । असुर्यं ॥ ९ ॥

स्थिरेभिः स्थिरैर्दृढैरङ्गैरवयवैर्युक्तः पुरुरूपोऽप्रमुत्यात्मकैर्बहुभी रूपैरूपेत उग्र उद्गूर्णस्तेजस्वी बभ्रुर्भर्ता बभ्रुवर्णो वा रुद्रः शुक्रेभिर्दीप्तैर्हिरण्यैर्हिरण्मयैर्हितरमणीयैर्वालंकारैः पिपिशे । दीप्यते ॥ पिश अवयवे । कर्मणि लिट ॥ ईशानादीश्वरादस्य भुवनस्य भूतजातस्य भूरेर्भर्तृ रुद्रादसुर्यं ॥ असु क्षेपणे । असंकरन । असुर उग्रा । तत्र साधुः ॥ असुर्यं बलं न वा उ योषत । नैव पृथग्भवति ॥ योतेर्लेट्यडागमः । सिब्बहुलं लेटीति सिप ॥

अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपं ।
अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति ॥ १० ॥
अर्हन । बिभर्षि । सायकानि । धन्वं । अर्हन । निष्कं । यजतं । विश्वऽरूपं ।
अर्हन् । इदं । दयसे । विश्वं । अभ्वं । न । वै । ओजीयः । रुद्र । त्वत । अस्ति ॥ १० ॥

हे रुद्र त्वमर्हन अर्हो योग्य एव सन सायकानि शरान धन्व धनुश्च बिभर्षि । धारयसि । तथार्हन्नेव यजत यजनीयं पूजनीयं विश्वरूपं बहुविधरूपयुक्तं निष्कं हारं बिभर्षि । तथार्हन्निदं विश्वं सर्वमभ्वं । महत्परिमितं । अतिविस्तृतं जगद्दयसे । रक्षसि । दय रक्षणे । हे रुद्र त्वत त्वत्तोऽन्यत किंचिदोजीय ओजस्वितरं बलवत्तरं न वा अस्ति । न खलु विद्यते । अतस्त्वमेवोक्तव्यापारेषु योग्य इत्यर्थः ॥ ओज शब्दान्मत्वर्थीयो विनि । तत आतिशायनिक इष्ठन । विन्मतोर्लुक । टेरिति टिलोपः ॥ ॥ १७ ॥

प्रयाणे मृगस्यामनोज्ञवचः श्रुत्वा स्तुहि श्रुतमित्येतां जपेत । सूत्रितं च । स्तुहि श्रुतं गर्तसदं युवानमिति मृगस्य । गृ° ३ १० १० । इति ॥

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रं ।
मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपंतु सेनाः ॥ ११ ॥
स्तुहि । श्रुतं । गर्तऽसदं । युवानं । मृगं । न । भीमं । उपऽहत्नुं । उग्रं ।
मृळ । जरित्रे । रुद्र । स्तवानः । अन्यं । ते । अस्मत । नि । वपंतु । सेनाः ॥ ११ ॥

हे स्तोतः श्रुतं विश्रुतं प्रख्यातं रुद्रं स्तुहि। कीदृशं। गर्तसदं। गर्तो रथः। तत्र सीदंतं युवानं नित्यतरुणं मृगं न भीमं मृगं सिंहमिव भयंकरं। उपहत्नुमुपहंतारं शत्रूणामुग्रमुद्गूर्णं। हे रुद्र त्वं स्तवानोऽस्माभिः स्तूयमानः सन् जरित्रे स्तोत्रे मह्यं मृळ। सुखय। ते त्वदीयाः सेना अस्मदन्यमस्मद्व्यतिरिक्तं पुरुषं निवपंतु। निघ्नंतु॥

कुमारश्चित्पितरं वंदमानं प्रति नानाम रुद्रोपयंतं।
भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥१२॥
कुमारः। चित्। पितरं। वंदमानं। प्रति। ननाम। रुद्र। उपऽयंतं।
भूरेः। दातारं। सतऽपतिं। गृणीषे। स्तुतः। त्वं। भेषजा। रासि। अस्मे इति ॥१२॥

वंदमानं आयुष्मान् भव सौम्येति स्तुवंतं पितरं कुमारश्चित् यथा कुमारः॥ चिदित्येतदुपमार्थे॥ हे रुद्र उपयंतमस्मत्समीपं गच्छंतं त्वां प्रतिननाम। प्रतिनतोऽस्मि। अपि च भूरेर्बहुनो धनस्य दातारं सत्पतिं सतां पालयितारं॥ पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वं॥ हे रुद्र एवंभूतं त्वां गृणीषे। स्तौमि॥ सिपस्तिङां तिङो भवतीति से आदेशः॥ स्तुतश्च त्वमस्मै अस्मभ्यं भेषजा भेषजानि रासि। देहि॥

या वो भेषजा मरुतः शुचीनि या शंतमा वृषणो या मयोभु।
यानि मनुरवृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि ॥१३॥
या। वः। भेषजा। मरुतः। शुचीनि। या। शंऽतमा। वृषणः। या। मयःऽभु।
यानि। मनुः। अवृणीत। पिता। नः। ता। शं। च। योः। च। रुद्रस्य। वश्मि ॥१३॥

हे मरुतो रुद्रपुत्रा वो युष्माकं या यानि भेषजा भेषजान्यस्मदारोग्यहेतुभूतान्यौषधानि शुचीनि शुद्धानि निर्मलानि संति। हे वृषणः कामानां वर्षितारो मरुतो या यानि च युष्मदीयानि भेषजानि शंतमा अतिशयेन सुखकराणि। या यानि च भेषजानि मयोभु मयोभूनि मयसः सुखस्य भावयितॄणि नोऽस्मत्पिता मनुर्यानि भेषजानि युष्मदीयान्यवृणीत वृतवान् ता तानि भेषजानि रुद्रस्य महादेवस्य संबंधि शं च योश्च यच्छमनीयानां रोगाणामुपशमनं यावनीयानां भयानां यद्यावनमस्मत्तः पृथक्करणं तदुभयं च वश्मि। कामये॥ वश कांतौ। आदादिकः॥

परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात्।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ॥१४॥
परि। नः। हेतिः। रुद्रस्य। वृज्याः। परि। त्वेषस्य। दुःऽमतिः। मही। गात्।
अव। स्थिरा। मघवत्ऽभ्यः। तनुष्व। मीढ्वः। तोकाय। तनयाय। मृळ ॥१४॥

रुद्रस्य महादेवस्य हेतिरायुधं नोऽस्मान्परिवृज्याः। परिवर्जयतु। तथा त्वेषस्य दीप्तस्य रुद्रस्य मही महती दुर्मतिर्दुःखकारिणी बुद्धिश्च परिगात। अस्मान्वर्जयित्वान्यत्र गच्छतु॥ अपपरी वर्जने। पा० १ ४. ८८॥ हे मीढ्वः सेचनसमर्थ रुद्र स्थिरा स्थिराणि त्वदीयानि धनूंषि मघवद्भ्यो हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्योऽवतनुष्व। अवततज्यानि कुरु। तथा तोकायास्मत्पुत्राय तनयाय तत्पुत्राय च मृळ। सुखं कुरु॥

एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि।
हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः ॥१५॥
एव। बभ्रो इति। वृषभ। चेकितान। यथा। देव। न। हृणीषे। न। हंसि।
हवनऽश्रुत्। नः। रुद्र। इह। बोधि। बृहत्। वदेम। विदथे। सुऽवीराः ॥१५॥

हे बभ्रो जगतो भर्तर्बभ्रुवर्ण वा वृषभ कामानां वर्षितः चेकितान सर्वं जानन् हे देव द्योतमान रुद्र यथा येन प्रकारेण न हृणीषे न क्रुध्यसि न च हंसि ॥ हृणीङ् लज्जायां अयं क्रुध्यतिकर्मा च ॥ एव हवनश्रुत अस्मदीयमाह्वानं शृण्वन् नोऽस्मान् हे रुद्र इहास्मिन्देशे बोधि। बुध्यस्व। विदथे यज्ञे गृहे वा सुवीराः शोभनपुत्राः संतो बृहत् प्रौढं त्वदीयं स्तोत्रं वदेम। उच्चारयाम ॥ ॥१८॥

धारावरा इति पंचदशर्चं द्वितीयं सूक्तं गार्त्समदं मारुतं। अंत्या त्रिष्टुप् शिष्टा जगत्यः। तथा चानुक्रांतं। धारावरा मारुतं त्रिष्टुबंतमिति ॥ पृष्ठ्याभिप्लवषडहयोस्तृतीयेऽहन्याग्निमारुतशस्त्र इदं मारुतनिविद्धानं। सूत्रितं च। वैश्वानराय धिषणां धारावरा मरुतस्त्वमग्ने प्रथमो अंगिरा इत्याग्निमारुतं। आ० ७. ७। इति ॥

धारावरा मरुतो धृष्ण्वोजसो मृगा न भीमास्तविषीभिरर्चिनः ।
अग्नयो न शुशुचाना ऋजीषिणो भृमिं धमंतो अप गा अवृण्वत ॥१॥

धारावराः। मरुतः। धृष्णुऽओजसः। मृगाः। न। भीमाः। तविषीभिः। अर्चिनः।
अग्नयः। न। शुशुचानाः। ऋजीषिणः। भृमिं। धमंतः। अप। गाः। अवृण्वत ॥१॥

धारावरा उदकधाराभिरत्यर्थमावृण्वंतः। यद्वा धाराणां धृतानां स्थिराणां वृक्षादीनां निवारयितारश्चालयितारः। धृष्ण्वोजसः परेषां धर्षकेण बलेन युक्ताः। अत एव मृगा न भीमाः। सिंहा इव भयकराः। तविषीभिरात्मीयैर्बलैर्वृष्टिप्रदानादिनार्चिनः सर्वं जगत्पूजयंतः। अग्नयो न शुशुचाना दीप्ता वह्नय इव दीप्यमानाः ॥ शुच दीप्तौ। लिटः कानच् ॥ ऋजीषिणः। ऋजीषमुदकं तद्वंतः। यद्वा ऋजीषोऽपगतसारः सोमः। तेन युक्ताः। तृतीयसवने ह्याग्निमारुते मरुतः स्तूयंते। तत्र च सवनद्वयेऽभिषुत गतसारं सोममभिषुण्वंति। अतस्तेषां तद्युक्तत्वं। एवंभूता मरुतो भृमिं भ्राम्यंतं मेघं धमंतो वर्षणार्थमितस्ततः प्रेरयंतो गाः मेघांतर्गता वृष्ट्यपोऽपावृण्वत। अपावृताः कुर्वंति। यथा सर्वैर्दृश्यंते तथा प्रवर्षतीत्यर्थः। यद्वा भृम्याख्यो वीणाविशेषः। तं धमंतो वादयंतो गा वलनाम्नासुरेणापिहिता अपावृण्वत। अपगतावरणा अकुर्वन् ॥

द्यावो न स्तृभिश्चितयंत खादिनो व्य१भ्रिया न द्युतयंत वृष्टयः ।
रुद्रो यद्वो मरुतो रुक्मवक्षसो वृषाजनि पृश्न्याः शुक्र ऊधनि ॥२॥

द्यावः। न। स्तृऽभिः। चितयंत। खादिनः। वि। अभ्रियाः। न। द्युतयंत। वृष्टयः।
रुद्रः। यत्। वः। मरुतः। रुक्मऽवक्षसः। वृषा। अजनि। पृश्न्याः। शुक्रे। ऊधनि ॥२॥

स्तृभिः। नक्षत्रनामैतत्। यदाह यास्कः। स्तृभिरिति नक्षत्राणां। नि० ३. २०। इति। नक्षत्रैर्द्यावो न यथा द्युलोकाश्चितयंत चेतयंति स्वात्मानं ज्ञापयंति ॥ चिती संज्ञाने ॥ प्रकाशंत इत्यर्थः। तथा खादिनः शत्रूणां खादका मरुतः स्वकीयैराभरणैर्ज्ञायंते। यद्वा खादः कटकः। तद्युक्ता मरुतः प्रकाशंते। तथा वृष्टयो वर्षका मरुतोऽभ्रिया न। अभ्रेषु भवा विद्युत इव वि द्युतयंत। सर्वं जगद्विद्योतयंति। प्रकाशयंति ॥ अभ्राद्भवार्थे समुद्राभ्राद्घ इति घप्रत्ययः ॥ शेषः प्रत्यक्षकृतः। रुक्मवक्षसः। रुक्मं रोचमानमाभरणं वक्षस्युरसि येषां तादृशा हे मरुतो यद्यदा वो युष्मान् वृषा सेचनसमर्थो रुद्रो महादेवः पृश्न्याः। पृश्निर्माध्यमिका वाक्। तस्याः संबंधिनि शुक्रे निर्मल ऊधन्युदकं प्रदेशेऽजनि। अजनयत। तदानीमिति पूर्वत्र संबंधः। यद्वा पृश्निर्नानावर्णेयं भूमिः पुरा गोरूपधरासीत् तस्यां महेशो वृषो भूत्वा मरुत उत्पादयामासेत्याख्यायते। तदत्रोच्यते। हे मरुतो यद्यस्माद्वो युष्मान् वृषा वृषरूपो रुद्रः पृश्न्या गोः शुक्रे निर्मल ऊधन्यूधसि पयस उत्पत्तिस्थानेऽजनि। अजीजनत्। तस्माद्यूयमेवंमहानुभावा जाता इत्यर्थः। तथा च तैत्तिरीयके। पृश्न्यै वै पयसो मरुतो जाताः। तै० सं० २. २. ११. ४.। इति ॥

उक्षंते अश्वाँ अत्याँ इवाजिषु नदस्य कर्णैस्तुरयंत आशुभिः ।
हिरण्यशिप्रा मरुतो दविध्वतः पृक्षं याथ पृषतीभिः समन्यवः ॥३॥
उक्षंते । अश्वान् । अत्यान्ऽइव । आजिषु । नदस्य । कर्णैः । तुरयंते । आशुऽभिः ।
हिरण्यऽशिप्राः । मरुतः । दविध्वतः । पृक्षं । याथ । पृषतीभिः । सऽमन्यवः ॥३॥

मरुतोऽश्वान् व्याप्तान् लोकानुक्षंते । सिंचंति ॥ अशू व्याप्तौ । औणादिकः क्वन्प्रत्ययः ॥ आजिषु संग्रामेष्वत्यानिव सततगामिनस्तुरगान् यथा स्वेदापनोदायोदकैः सिंचंति तद्वत् । अपि च ते मरुत आशुभिः शीघ्रगमनैरश्वैर्नदस्य शब्दवतो मेघस्य कर्णैः छिद्रैर्मध्यप्रदेशैस्तुरयंते । वर्षणार्थं वृष्ट्युत्पादनाय त्वरितं गच्छंति ॥ तुर त्वरणे ॥ शपः प्रत्ययलुक्छांदसः । हे हिरण्यशिप्राः । शिप्रं शिरस्त्राणं । सुवर्णमयशिरस्त्राणाः समन्यवः समानमनस्काः समानक्रोधा वा हे मरुतो दविध्वतो महीरुहादिकं कंपयतो यूयं ॥ धूञ् कंपने इत्यस्माद्दाधर्त्यादाविदं रूपं निपात्यते ॥ पृषतीभिर्युष्मद्रथे योजिताभिः श्वेतबिंदूंकिताभिर्मृगीभिर्वडवाभिर्वा पृक्षं । अन्ननामैतत् । हविर्लक्षणान्नवंतं यजमानं ॥ अर्शआदित्वादच् ॥ याथ । गच्छथ ॥

पृक्षे ता विश्वा भुवना ववक्षिरे मित्राय वा सदमा जीरदानवः ।
पृषदश्वासो अनवभ्रराधस ऋजिप्यासो न वयुनेषु धूर्षदः ॥४॥
पृक्षे । ता । विश्वा । भुवना । ववक्षिरे । मित्राय । वा । सदं । आ । जीरऽदानवः ।
पृषत्ऽअश्वासः । अनवभ्रऽराधसः । ऋजिप्यासः । न । वयुनेषु । धूःऽसदः ॥४॥

पृक्षे पृक्षवते हविर्लक्षणान्नयुक्ताय यजमानाय ता तानि विश्वा सर्वाणि भुवनान्युदकानि मित्राय । वाशब्द उपमार्थः । मित्रायेव सदं सदा आ ववक्षिरे । मरुत आवहंति । यद्वा वाशब्दोऽवधारणे । मित्रभूताय यजमानायैव पृक्षेऽन्ने निमित्तभूते सति वृष्ट्युदकान्यावहंति । कीदृशा मरुतः । जीरदानवः । क्षिप्रदानाः । पृषदश्वासः पृषद्भिः श्वेतबिंदुभिर्युक्ता अश्वा येषां ते तथोक्ताः । अनवभ्रराधसः ॥ भृशु भ्रंशु अधःपतने । अवभ्रंशनमवभ्रः । डोऽन्यत्रापि दृश्यते । पा० ६ ३ ४८ ४ । इति डप्रत्ययः । नास्त्यवभ्रो यस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । अनवभ्रं भ्रंशनरहितं राधो धनं येषां ते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ ऋजिप्यासो न । ऋजु अकौटिल्यं प्राप्नुवंतो गच्छंतोऽश्वा इव वयुनेषु गतेषु मध्ये धूर्षदो धुरि मेघस्य वहने सीदंतो निषण्णा इत्यर्थः ॥

इंधन्वभिर्धेनुभी रप्शदूधभिरध्वस्मभिः पथिभिर्भ्राजदृष्टयः ।
आ हंसासो न स्वसराणि गंतन मधोर्मदाय मरुतः समन्यवः ॥५॥
इंधन्वऽभिः । धेनुऽभिः । रप्शदूधऽभिः । अध्वस्मऽभिः । पथिऽभिः । भ्राजत्ऽऋष्टयः ।
आ । हंसासः । न । स्वसराणि । गंतन । मधोः । मदाय । मरुतः । सऽमन्यवः ॥५॥

समन्यवः समानमनस्काः समानक्रोधाः समानतेजसो वा हे मरुतो भ्राजदृष्टयो दीप्यमानायुधा यूयमिंधन्वभिः समिंधनवद्भिः ॥ इंधनशब्दाच्छंदसीवनिपाविति मत्वर्थीयो वनिप् । छांदसो वर्णलोपः ॥ धेनुभिः प्रीणयितृभिश्च रप्शदूधभिः । विरप्शीति महन्नाम । महोधस्कैः । ऊधांसि जलस्रोतोमार्गाः । यद्वा रप लप व्यक्तायां वाचि । शब्दायमानोच्छ्रितप्रदेशैरध्वस्मभिर्ध्वंसनरहितैः पथिभिः । पतंति गच्छंतीति पंथानो मेघाः । एवंभूतैर्मेघैः सह मार्गैरिव वागतन । आगच्छत । किमर्थं । मधोर्मदाय । सोमस्य मदार्थं । तत्र दृष्टांतः । हंसासो न । यथा हंसाः स्वसराणि स्वकीयानि निवासस्थानानि प्राप्नुवंति तद्वत् ॥ ॥१९॥

आ नो ब्रह्माणि मरुतः समन्यवो नरां न शंसः सवनानि गंतन ।
अश्वामिव पिप्यत धेनुमूधनि कर्ता धियं जरित्रे वाजपेशसं ॥६॥

आ। नः। ब्रह्माणि। मरुतः। सऽमन्यवः। नरां। न। शंसः। सवनानि। गंतन।
अश्वांऽइव। पिप्यत। धेनुं। ऊधनि। कर्त। धियं। जरित्रे। वाजऽपेशसं॥६॥

समन्यवः समानमनसः समानक्रोधा वा हे मरुतो नोऽस्माकं ब्रह्माणि॥ अन्ननामैतत्॥ अन्नानि सवनान्यभिषुतसोमलक्षणानि हवींष्यागतन। आगच्छत॥ गमेर्लोटि छांदसः शपो लुक्। तप्तनप्तनथनाश्चेति तस्य तनबादेशः। अत एव ङित्त्वाभावादनुनासिकलोपाभावः॥ तत्र दृष्टांतः। नरां न शंसः। नरामस्माकं शंसः शंसनीयं स्तोत्रं यथागच्छथ तद्वत्॥ नरशब्दात् षष्ठीबहुवचनस्यानित्यमागमशासनमिति नुडभावः। शंसः कर्मणि घञत आद्युदात्तः। सुपां सुलुगित्यमः सुआदेशः॥ आगत्य च धेनुमुदकदानेन प्रीणयितारमश्वामिवोधनि पिप्यत। यथाश्वाः पीनावयवा भवंति तद्वन्मेघं वर्षणसमर्थमाप्यायित कुरुतेत्यर्थः। अपि च जरित्रे स्तोत्रे वाजपेशसं वाजैरन्नैराश्लिष्टं॥ पिश अवयवे॥ धियं कर्म कर्त। कुरुत॥ करोतेश्छांदसः शपो लुक्। पूर्ववत्तशब्दस्य तबादेशः॥

तं नो दात मरुतो वाजिनं रथं आपानं ब्रह्म चितयद्दिवेदिवे।
इषं स्तोतृभ्यो वृजनेषु कारवे सनिं मेधामरिष्टं दुष्टरं सहः॥७॥

तं। नः। दात। मरुतः। वाजिनं। रथे। आपानं। ब्रह्म। चितयत्। दिवेऽदिवे।
इषं। स्तोतृऽभ्यः। वृजनेषु। कारवे। सनिं। मेधां। अरिष्टं। दुस्तरं। सहः॥७॥

हे मरुतः तं पुत्रं नोऽस्मभ्यं दात। दत्त प्रयच्छत॥ छांदसः शपो लुक्॥ कीदृशं। वाजिनमन्नवंतं बलवंतं वा। रथे रहणे युष्मदीय आगमने निमित्तभूते सति दिवेदिवे प्रतिदिवसं चितयत् प्रज्ञापयत् युष्मद्गुणप्रख्यापकं। ब्रह्म स्तोत्रमापानमाप्नुवंतं। अपि च इषमन्नं स्तोतृभ्योऽस्मभ्यं दात। प्रयच्छत। तथा वृजनेषु संग्रामेषु कारवे स्तोत्रे॥ वचनव्यत्ययः॥ मेधां युद्धप्रज्ञानं सनिं धनदातृत्वं चारिष्टं शत्रुभिरहिंसितं दुस्तरं शत्रुभिस्तरीतुमशक्यं सहो बलं च प्रयच्छत॥

यद्युंजते मरुतो रुक्मवक्षसोऽश्वान्रथेषु भग आ सुदानवः।
धेनुर्न शिश्वे स्वसरेषु पिन्वते जनाय रातहविषे महीमिषं॥८॥

यत्। युंजते। मरुतः। रुक्मऽवक्षसः। अश्वान्। रथेषु। भगे। आ। सुऽदानवः।
धेनुः। न। शिश्वे। स्वसरेषु। पिन्वते। जनाय। रातऽहविषे। महीं। इषं॥८॥

रुक्मवक्षसो रोचमानाभरणोरस्काः सुदानवः शोभनदाना मरुतो यद्यदा रथेषु भगे भजनीये स्थाने। धुरीत्यर्थः। अश्वानायुंजते। आभिमुख्येन युक्तान्कुर्वंति। तदानीमेव रातहविषे दत्तहविष्काय यजमानाय महीं महतीमिषमन्नं तत्कारणभूतमुदकं वा स्वसरेषु स्वकीयेषु गृहेषु पिन्वते। सिंचंति किरंति॥ पिवि सेचने॥ तत्र दृष्टांतः। धेनुर्न शिश्वे। यथा धेनुः प्रसूतस्तनी सती स्वकीयाय वत्साय क्षीरं प्रयच्छति तद्वत्॥

यो नो मरुतो वृकताति मर्त्यो रिपुर्दधे वसवो रक्षता रिषः।
वर्तयत तपुषा चक्रियाभि तमव रुद्रा अशसो हंतना वधः॥९॥

यः। नः। मरुतः। वृकऽताति। मर्त्यः। रिपुः। दधे। वसवः। रक्षत। रिषः।
वर्तयत। तपुषा। चक्रिया। अभि। तं। अव। रुद्राः। अशसः। हंतन। वधरिति॥९॥

हे मरुतः यो मर्त्यो मनुष्यो वृकताति आदाता वृकः॥ वृक आदाने। वृकज्येष्ठाभ्यां तिल्तातिलौ च छंदसि। पा० ५.४.४१। इति स्वार्थिकस्तातिल्प्रत्ययः॥ तादृशः सन् नोऽस्माकं रिपुर्दधे। रिपुतयात्मानं धारयति।

हे वसवो वासयितारो मरुतो रिषो हिंसकादस्मान्रक्षत । पालयत । अस्माकं शत्रुभूतं मर्त्यं तपुषा तापयित्र्या चक्रिया चक्राख्यया शक्त्याभिवर्तयत । अभितो निवर्तयत । हे रुद्रा रुद्रपुत्राः । यद्वा रोदयमाणा द्रवंतः अशसो भक्षकस्य ॥ अश भोजन इत्यस्मादौणादिकोऽसिप्रत्ययः ॥ तादृशस्य राक्षसादेर्वधहननसाधनमायुधमवहंतन । अवयुत्यास्मत्तः पृथक्कृत्य नाशयत ॥ हंतेर्लोटि तप्तनप्तनथनाश्चेति तनप ॥

चित्रं तद्वो मरुतो याम चेकिते पृश्न्या यदूधरप्यापयो दुहुः ।
यद्वा निदे नवमानस्य रुद्रियास्त्रितं जराय जुरतामदाभ्याः ॥ १० ॥
चित्रं । तत् । वः । मरुतः । याम । चेकिते । पृश्न्याः । यत् । ऊधः । अपि । आपयः । दुहुः ।
यत् । वा । निदे । नवमानस्य । रुद्रियाः । त्रितं । जराय । जुरतां । अदाभ्याः ॥ १० ॥

हे मरुतो वो युष्माकं चित्रं चायनीयं याम प्रापणं चेकिते । सर्वैर्ज्ञायते । इदानीं परोक्षवदाह । अपि शब्दः प्रसिद्धौ । यद्यदा खलु पृश्न्या माध्यमिकाया वाचः संबंधिनमूधरुदकं मेघमापयः प्रापयितारो मरुतो दुहुः । दुहंति ॥ दुहेश्छांदसो लिट् । छंदसि चेति वक्तव्यमिति द्विर्वचनाभावः ॥ यद्वा यदा च नवमानस्य स्तुवतस्त्रितस्य निदे निंदकाय शत्रवे हिंसां कृतवंत इति शेषः ॥ णिदि कुत्सायां । क्विप चेति क्विप ॥ तदानीं हे अदाभ्या अहिंस्या रुद्रिया रुद्रस्य पुत्रा मरुतस्त्रितमृषिं जुरतां हिंसतां शत्रूणां जराय जरणाय विनाशाय अभूतेति शेषः ॥ ॥ २० ॥

तान्वो महो मरुत एवयाव्नो विष्णोरेषस्य प्रभृथे हवामहे ।
हिरण्यवर्णान्ककुहान्यतस्रुचो ब्रह्मण्यंतः शंस्यं राध ईमहे ॥ ११ ॥
तान् । वः । महः । मरुतः । एवऽयाव्नः । विष्णोः । एषस्य । प्रऽभृथे । हवामहे ।
हिरण्यऽवर्णान् । ककुहान् । यतऽस्रुचः । ब्रह्मण्यंतः । शंस्यं । राधः । ईमहे ॥ ११ ॥

हे मरुत एवयाव्न एवं गंतव्यं स्तोत्रं यज्ञं वा गंतॄन महो महतो महानुभावास्तान्वो युष्मान्विष्णोर्व्यापकस्य यहवनमसादिषु सर्वत्र व्याप्य वर्तमानस्यैषस्यैषणीयस्य प्रार्थनीयस्य सोमस्य प्रभृथे प्रभरणेऽभिषवादिभिः प्रकर्षेण संपादने सति हवामहे । आह्वयामहे । आहूय च हिरण्यवर्णान हितरमणीयवर्णान्वा ककुहान श्रेष्ठान स्तुत्यान्वा एवंभूतांस्तान यतस्रुचो यागायोद्यतस्रुचो ब्रह्मण्यंतः । ब्रह्म स्तोत्रं । तदिच्छंतो वयं शंस्यं प्रशंसनीयं राधो धनमीमहे । याचामहे ॥

ते दशग्वाः प्रथमा यज्ञमूहिरे ते नो हिन्वंतूषसो व्युष्टिषु ।
उषा न रामीररुणैरपोर्णुते महो ज्योतिषा शुचता गोअर्णसा ॥ १२ ॥
ते । दशऽग्वाः । प्रथमाः । यज्ञं । ऊहिरे । ते । नः । हिन्वंतु । उषसः । विऽउष्टिषु ।
उषाः । न । रामीः । अरुणैः । अप । ऊर्णुते । महः । ज्योतिषा । शुचता । गोऽअर्णसा ॥ १२ ॥

ते मरुतो दशग्वाः । ये दशभिर्मासैः सिद्धिं गता अंगिरसस्तद्रूपा भूत्वा प्रथमा आदित्येभ्यः प्रथमभाविनः सतो यज्ञमूहिरे । अवहन । आदित्यानामंगिरसां च स्वर्गगमनं प्रति स्पर्धमानानां मध्ये पूर्वमेवांगिरसो यागाननुष्ठाय स्वर्गं प्राप्ताः । तथा च श्रूयते । आदित्याश्चवाह्वासन्नंगिरसश्च तेऽग्नेऽस्मिन्नासिमयजंतेति । तादृशास्त उषसो व्युष्टिषु विवासेषु प्रभातेषु सत्सु नोऽस्मान हिन्वंतु । प्रेरयंतु ॥ हि गतौ वृद्धौ च ॥ रामीः कृष्णवर्णा रात्रीरूपा न यथोषा अरुणैरारोचमानैः स्वतेजोभिरपोर्णुते । अपवृणोत्यपसारयति । तथा महो महता शुचता दीप्यमानेन गोअर्णसा गच्छदुदकेन ज्योतिषा सूर्याख्येन तमो निवारयंति । सूर्यमंडलमावृण्वतो वृत्रादीन हत्वा सर्वं जगत्प्रकाशयतीत्यर्थः ॥

ते क्षोणीभिररुणेभिर्नाञ्जिभी रुद्रा ऋतस्य सदनेषु वावृधुः।
निमेघमाना अत्येन पाजसा सुश्चंद्रं वर्णं दधिरे सुपेशसं ॥१३॥

ते। क्षोणीभिः। अरुणेभिः। न। अंजिऽभिः। रुद्राः। ऋतस्य। सदनेषु। ववृधुः।
निऽमेघमानाः। अत्येन। पाजसा। सुऽचंद्रं। वर्णं। दधिरे। सुऽपेशसं ॥१३॥

रुद्रा रुद्रपुत्रास्ते मरुतः क्षोणीभिः शब्दकारिभिर्वीणाख्यैर्वीणाविशेषैररुणेभिर्नाञ्जिभिः ॥ नशब्दः समुच्चये ॥ आरोचमानैररुणवर्णैर्वा रूपाभिव्यंजकैरलंकारैश्च समन्विताः संत ऋतस्योदकस्य सदनेषु निवासभूतेषु मेघेषु वावृधुः। वर्धंते। अपि च अत्येन सततगामिना शीघ्रं व्याप्नुवता पाजसात्मीयेन बलेन निमेघमाना नितरां मेघादुदकं सिंचंतस्ते सुश्चंद्रं शोभनाह्लादनं सुपेशसं ॥ पेश इति रूपनाम ॥ शोभनरूपं वर्णं दधिरे। कांतिं धारयंति ॥

ताँ इयानो महि वरूथमूतय उप घेदेना नमसा गृणीमसि।
त्रितो न यान्पंच होतॄनभिष्टय आववर्तदवराञ्चक्रियावसे ॥१४॥

तान्। इयानः। महि। वरूथं। ऊतये। उप। घ। इत। एना। नमसा। गृणीमसि।
त्रितः। न। यान्। पंच। होतॄन्। अभिष्टये। आऽववर्तत्। अवरान्। चक्रिया। अवसे ॥१४॥

तान् मरुतो महि महद्वरूथं वरणीयं प्रशस्तं धनं तन्मरुत ऊतये रक्षणार्थमियानः इयाना याचमाना वयं ॥ सुपां सुलुगिति जसः सुः ॥ एनानेन नमसा नमस्कारेण स्तोत्रेण वोपेत उपेत्य गृणीमसि। स्तुमः ॥ घेति पादपूरणः। एनेत्यत्र सुपां सुलुगिति तृतीयाया आजादेशः। नशब्दः समुच्चये ॥ त्रित ऋषिश्च यानेतान् मरुतः पंच होतॄन् अध्यात्मप्राणापानादिपंचवृत्त्यात्मना वर्तमानान् अत एव होमनिष्पादकान् अवरान् मुख्यानभिष्टये ऽभिलषितसिद्ध्यर्थं चक्रिया नाभिचक्रेणावसे ऽवितुं मरुतमाववर्तत्। स्वस्मान्निर्जिगमिषून्प्राणान् स्वात्माभिमुखमावर्तयत्। यद्वा चक्रिया रथाख्येनायुधेन युक्तान् अवसे स्तुत्यादिभिस्तर्पयितुमावर्तयत्। तान् स्तुम इति संबंधः ॥ ववर्तदिति वृतेर्ण्यंतास्लुङि चङि रूपं ॥

यया रध्रं पारयथात्यंहो यया निदो मुंचथ वंदितारं।
अर्वाची सा मरुतो या व ऊतिरो षु वाश्रेव सुमतिर्जिगातु ॥१५॥

यया। रध्रं। पारयथ। अति। अंहः। यया। निदः। मुंचथ। वंदितारं।
अर्वाची। सा। मरुतः। या। वः। ऊतिः। ओ इति। सु। वाश्राऽइव। सुऽमतिः।
जिगातु ॥१५॥

हे मरुतो ययोत्या रध्रमाराधकं यजमानमंहः पापमति पारयथ। अतिक्रमयथ। ययोत्या वंदितारं स्तोतारं निदो निंदितुः शत्रोः सकाशान्मुंचथ। मोचयथ। हे मरुतो वो युष्मदीया सोतिः सार्वाच्यस्मदभिमुखा भवतु। तथा सुमतिर्युष्मदीया शोभना मतिरनुग्रहात्मिका बुद्धिश्च वाश्रेव हंभारवं कुर्वती धेनुरिव वत्सं सुष्ठु ओ जिगातु। एवं गच्छतु। अस्मान् प्रति सर्वथागच्छत्वित्यर्थः ॥ ॥२१॥

उपेमिति पंचदशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभमपांनपाद्देवताकं। तथा चानुक्रांतं। उपेमपोनप्त्रीयमिति ॥ सूक्तविनियोगो लैंगिकः ॥

उपेमसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे।
अपां नपादाशुहेमा कुवित्स सुपेशसस्करति जोषिषद्धि ॥१॥

उप॑। ई॒। अ॒सृ॒क्षि॒। वा॒ज॒ऽयुः। व॒च॒स्यां। चनः॑। द॒धी॒त॒। ना॒द्यः॑। गिरः॑। मे॒।
अ॒पां। नपा॑त्। आ॒शु॒ऽहे॑मा। कु॒वित्। सः। सु॒ऽपेश॑सः। क॒र॒ति॒। जोषि॑षत्। हि ॥१॥

वाजयुर्वाजमन्नमात्मन इच्छन्नहमीमिनां वचस्यां वचसः स्तोत्रस्येच्छामुपासृक्षि। उपासृजामि। उत्पादयामि। अपां नपातं स्तोतुं प्रवृत्तोऽस्मीत्यर्थः॥ सृजेश्छांदसो लुङ्। लिङ्सिचावात्मनेपदेष्विति सिचः कित्त्वाद्गुणाभावः॥ स च नाद्यो नदीनां शब्दकारिणीनां मेघस्थानामपां संबंधी आशुहेमा आशु शीघ्रं गंता॥ हि गतावित्यस्मादन्येभ्योऽपि दृश्यंत इति मनिन्॥ एवंभूतोऽपां नपात् अपां पौत्रस्थानीयः। अद्भ्य ओषधिवनस्पतयो जायंते ओषधिवनस्पतिभ्य एषोऽग्निर्जायत इति तत्पौत्रत्वं। एतत्संज्ञको देवो गिरः। गृणातीति गीः स्तोता। तस्य मे मम कुवित्। बहुनामैतत्। बहुलं चनोऽन्नं दधीत। दधातु। विदधातु। प्रयच्छत्वित्यर्थः। अपि चास्मान् सुपेशसः शोभनरूपान् शोभनालंकारान्वा करति। करोतु॥ करोतेर्व्यत्ययेन शप्। कःकरत्करतिकृधिकृतेष्वनदितेः। पा० ८ ३ ५०। इति विसर्जनीयस्य सत्वं॥ हि यस्मादयं देवो जोषिषत्। स्तोत्राणि सेवते तस्मादस्मानेवमनुगृह्णात्वित्यर्थः॥ जुषी प्रीतिसेवनयोः। लेट्यडागमः। विकरणः सिप्। इडागमश्च। हि चेति निघातप्रतिषेधः॥

इ॒मं स्व॑स्मै हृ॒द आ सुत॑ष्टं मंत्रं॑ वोचेम कु॒विद॑स्य॒ वेद॑त्।
अ॒पां नपा॑दसु॒र्य॑स्य म॒ह्ना विश्वा॑न्य॒र्यो भुव॑ना जजान ॥२॥
इ॒मं। सु। अ॒स्मै॒। हृ॒दः। आ। सु॒ऽत॑ष्टं। मंत्रं॑। वो॒चे॒म॒। कु॒वित्। अ॒स्य॒। वेद॑त्।
अ॒पां। नपा॑त्। अ॒सु॒र्य॑स्य। म॒ह्ना। विश्वा॑नि। अ॒र्यः। भुव॑ना। ज॒जा॒न॒ ॥२॥

अस्मा अपांनपात्संज्ञकाय देवाय हृदो हृदयात् सुतष्टं सुष्ठु निर्मितमिमं मंत्रं सुष्ठु आभिमुख्येन वोचेम। ब्रवाम। अस्यास्माभिरुक्तमिमं मंत्रं कुविद्वदत्। बहुलं जानातु॥ वेत्तेर्लेट्यडागमः। निपातैर्यद्यदिहंतेति निघातप्रतिषेधः॥ किं स्तोत्रमिति चेदुच्यते। अर्यः स्वाम्यपांनपात्संज्ञको वैद्युतोऽग्निरसुर्यस्य। असुरः शत्रूणां क्षेप्ता। तस्य स्वभूतस्य बलस्य मह्ना महिम्ना महत्त्वेन विश्वानि सर्वाणि भुवना भुवनानि वृष्ट्युदकानि वृष्ट्युत्पादनेन भूतजातानि वा जजान। जनयामास॥

अपोनप्त्रीये वसतीवरीसमीप एकधनासु प्राप्तासु समन्या यंतीत्येषानुवक्तव्या। सूत्रितं च। समन्या यत्युप यत्यन्या इति तीर्थदेशे। आ० ५ १। इति॥ सारस्वते च शस्त्रे यद्यप्सु शम्या निपतेत् तदानीमपोनप्त्रीयश्चरुः कार्यः। तत्रैषैव याज्या। सूत्रितं च। समन्या यंत्युपयत्यन्या इत्यातःसमानं सर्वेषां। आ० १२. ६.। इति॥

सम॒न्या यं॒त्युप॑ यं॒त्यन्याः॑ समा॒नमू॒र्वं न॒द्यः॑ पृणंति।
तमू॒ शुचिं॒ शुच॑यो दीदि॒वांस॑मपां नपा॑तं॒ परि॑ तस्थु॒राप॑ः ॥३॥
सं। अ॒न्याः। यं॒ति॒। उप॑। यं॒ति॒। अ॒न्याः। स॒मा॒नं। ऊ॒र्वं। न॒द्यः॑। पृ॒णं॒ति॒।
तं। ऊं इति॑। शुचिं॑। शुच॑यः। दी॒दि॒ऽवांसं॑। अ॒पां। नपा॑तं। परि॑। त॒स्थुः॒। आपः॑ ॥३॥

अन्या वर्ष्या आपो सं यंति। भूम्या संगच्छंते। अन्याश्च पूर्वं तत्रावस्थिता उपयंति। उपगच्छंति। ताः सर्वा आपः समानं सह नद्यो नदीभूता ऊर्वं समुद्रमध्ये वर्तमानं वडवानलं पृणंति॥ पृण प्रीणने तौदादिकः॥ तमु तमेवापां नपातं शुचिं निर्मलं दीदिवांसं दीप्यमानं॥ दीदेतिश्छांदसो दीप्तिकर्मा। लिटः क्वसुः। वस्वेकाजाद्घसामिति नियमादिडभावः। छंदसि वेति वक्तव्यमिति वचनाद्द्विर्वचनाभावः॥ एवंभूतं शुचयः शुद्धा आपः परितस्थुः। परिवृत्य तिष्ठंति। एष हि वैद्युताग्निरूपेण मेघे वर्तमानोऽस्मान्वीजनदिति बुद्ध्या वडवानलरूपेण वर्तमानं तं पर्युपासत इत्यर्थः। यद्वा अन्या एकधनाख्या आपः संयंति। चात्वालोत्करयोर्मध्ये वसतीवरीभिः संगच्छंते। अन्या वसतीवर्याख्या आपश्चोपयंति। उपगच्छंति। ऐकमत्यं प्राप्ता भवंति। एताश्च

मिलित्वा यज्ञं साधयंत्यसत्साध्यवृष्टिद्वारा नद्यो भूत्वोर्वी पृणंतीत्यादि समानं । एवं हि आपो वा अभ्यर्धत वयं पूर्वं यज्ञं वक्ष्यामः । ऐ॰ ब्रा॰ २. २० । इत्यादिकं ब्राह्मणंविनियोगस्यानुगृह्यते ॥

तम॑स्मेरा युव॒तयो॒ युवा॑नं मर्मृ॒ज्यमा॑नाः॒ परि॑ यं॒त्यापः॑ ।
स शु॒क्रेभिः॒ शिक्व॑भी रे॒वद॒स्मे दी॒दाया॑नि॒ध्मो घृ॒तनि॑र्णिग॒प्सु ॥४॥
तं । अ॒स्मेराः॑ । यु॒वत॑यः । युवा॑नं । म॒र्मृ॒ज्यमा॑नाः । परि॑ । य॒न्ति॒ । आपः॑ ।
सः । शु॒क्रेभिः॑ । शिक्व॑ऽभिः । रे॒वत् । अ॒स्मे इति॑ । दी॒दाय॑ । अ॒नि॒ध्मः । घृ॒तऽनि॑र्निक् ।
अ॒प्ऽसु ॥४॥

तमपां नपातमग्निमस्मेरा अस्मयमाना दर्परहिता युवतयो युवाना युवराजमिव मर्मृज्यमाना अत्यर्थमलंकुर्वाणा आपः ॥ मृजू शौचालंकारयोः ॥ परि यंति । परितो गच्छंति प्राप्नुवंति । घृतनिर्निक् क्षरणशीलोदकनिर्णेजनः । यद्वा निर्णिगिति रूपनाम । दीप्तरूपः सोऽपां नपादग्निरप्सु मेघांतर्गतासु समुद्रगतासु वा मध्येऽनिध्म इंधनरहित एव सन् अस्मे अस्माकं रेवद्धनयुक्तमन्नं यथा भवति तथा शुक्रेभिः शुभ्रैर्निर्मलैः शिक्वभिस्तेजोभिर्दीदाय । दीप्यते ॥

अ॒स्मै ति॒स्रो अ॑व्य॒थ्याय॒ नारी॑र्दे॒वाय॑ दे॒वीर्दि॑धिष॒न्त्यन्न॑म् ।
कृता॑ इ॒वोप॒ हि प्र॑स॒र्स्रे अ॒प्सु स पी॒यूषं॑ धयति पूर्व॒सूना॑म् ॥५॥
अ॒स्मै । ति॒स्रः । अ॒व्य॒थ्याय॑ । नारीः॑ । दे॒वाय॑ । दे॒वीः । दि॒धि॒ष॒न्ति॒ । अन्न॑म् ।
कृताः॑ऽइव । उप॑ । हि । प्र॒ऽस॒र्स्रे । अ॒प्ऽसु । सः । पी॒यूष॑म् । ध॒य॒ति॒ । पू॒र्व॒ऽसूना॑म् ॥५॥

नारीर्नार्यस्तिस्रो देवीर्देव्य इळासरस्वतीभारत्याख्या अव्यथ्यायाव्यथनायास्मै देवायापां नपातेऽन्नं सोमाख्यं दिधिषंति । धारयंति ॥ धिष शब्दे जौहोत्यादिकः । व्यत्ययेनात्र्यादेशः । धातूनामनेकार्थत्वादत्र धारणार्थः ॥ अप्सूदकेषु कृता इवोपप्रसर्स्रे । प्रसरति ॥ सृ गतौ । लिटीरयो रे इति रे आदेशः । छांदसो हलादिशेषाभावः ॥ यस्मादेव तस्मात्पूर्वसूना पूर्वं ब्रह्मणः सकाशादुत्पन्नानामपां पीयूषं सारभूतं सोमाख्यममृतं सोऽपांनपादग्निर्धयति । पिबति ॥ ॥२२॥

अश्व॒स्यात्र॒ जनि॑मा॒स्य च॒ स्व॑र्द्रु॒हो रि॒षः सं॒पृचः॑ पाहि सू॒रीन् ।
आ॒मासु॑ पू॒र्षु प॒रो अ॑प्रमृ॒ष्यं नारा॑तयो॒ वि न॑श॒न्नानृ॑तानि ॥६॥
अश्व॑स्य । अत्र॑ । जनि॑म । अ॒स्य । च॒ । स्वः॑ । द्रु॒हः । रि॒षः । स॒म्ऽपृचः॑ । पा॒हि॒ । सू॒रीन् ।
आ॒मासु॑ । पू॒र्षु । प॒रः । अ॒प्र॒ऽमृ॒ष्यम् । न । अरा॑तयः । वि । न॒श॒न् । न । अनृ॑तानि ॥६॥

अत्रास्मिन्नपांनपात्मके देवेऽश्वस्य जनिम जन्म भवति । अपानप्त्राधिष्ठितात्समुद्रादुच्चैःश्रवसो जातत्वात् । किं बहुना । अस्य च स्वः सुष्ठुरणीयस्य सर्वस्य जगतो जन्मास्मिन्नेव भवति । अयं हि मेघमध्ये वर्तमानो वृष्टिद्वारेण सर्वं जगज्जनयति । तादृशोऽपानपात्त्वं द्रुहो द्रोग्धुरपहर्तुं रिषो हिंसकस्य च संपृचः संपर्कात्सूरीन् स्तोतॄनस्मान्पाहि । रक्ष । आमास्वपरिपक्वासु पूर्षु पूरयितव्यास्वप्सु परः परस्ताद्वर्तमानमप्रमृष्यमप्रधृष्यमाणं देवमरातयोऽदातारः पुरुषा न विनशन् । न प्राप्नुवंति ॥ नशतिर्व्याप्तिकर्मा । लिङ्यडागमः ॥ अनृतानि माया विनो रक्षांसि च न प्राप्नुवंति ॥

स्व आ दमे सुदुघा यस्य धेनुः स्वधां पीपाय सुभ्वन्नमत्ति ।
सो अपां नपादूर्जयन्नप्स्व१ंतर्वसुदेयाय विधते वि भाति ॥७॥
स्वे । आ । दमे । सुऽदुघा । यस्य । धेनुः । स्वधां । पीपाय । सुऽभु । अन्नं । अत्ति ।
सः । अपां । नपात् । ऊर्जयन् । अप्ऽसु । अंतः । वसुऽदेयाय । विधते । वि । भाति ॥७॥

योऽपानपात् स्वे दमे स्वकीये गृहेऽन्तरिक्षलक्षण आसीदति । यस्य च धेनुर्माध्यमिका वाक् सुदुघा सुखेन दोग्धव्या भवति । स देवः स्वधां वृष्ट्युदकं पीपाय । वर्धयति ॥ प्यायी वृद्धौ । लिड्यङोश्चेति पीभावः ॥ सुभु सुष्ठु भूतं वृष्टेः सकाशादुत्पन्नं हविर्लक्षणमन्नं चात्ति । भक्षयति । सोऽपांनपात्संज्ञको देव ऊर्जयन् बलं कुर्वन् अप्स्वंतर्मेघस्थास्वप्सु मध्ये विधते परिचरते यजमानाय वसुदेयाय धनदानार्थं विभाति । विशेषेण दीप्यते ॥

यो अप्स्वा शुचिना दैव्येन ऋतावाजस्र उर्विया विभाति ।
वया इदन्या भुवनान्यस्य प्र जायंते वीरुधश्च प्रजाभिः ॥८॥
यः । अप्ऽसु । आ । शुचिना । दैव्येन । ऋतऽवा । अजस्रः । उर्विया । विऽभाति ।
वयाः । इत् । अन्या । भुवनानि । अस्य । प्र । जायंते । वीरुधः । च । प्रऽजाभिः ॥८॥

योऽपांनपादृतावा । ऋतमित्युदकनाम । तद्वान् सत्यवान्वा अजस्रो नित्य एकरूपेण सदा वर्तमान उर्विया उर्वी विस्तीर्णोऽप्सु मेघस्थासु मध्ये शुचिना शोचकेन दैव्येन देवसंबंधिना तेजसा आ समंताद्विभाति । विशेषेण प्रकाशते । अस्यापांनपातोऽन्या अन्यानि भुवनानि सर्वाणि भूतजातानि वया इत शाखा एव । वीरुध ओषधयः प्रजाभिः स्वकीयाभिः पुष्पफलादिभिः सहास्मादेव प्रजायंते ॥

पूर्वोक्ते सारस्वतसत्रस्यापोनप्त्रीये चरावपां नपादा हीत्येषानुवाक्या । सूत्रितं च । अपां नप्त्रे चरुमपां नपादा ह्यस्थादुपस्थं । आ० १२ ६. । इति ॥

अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः ।
तस्य ज्येष्ठं महिमानं वहंतीर्हिरण्यवर्णाः परि यंति यह्वीः ॥९॥
अपां । नपात् । आ । हि । अस्थात् । उपऽस्थं । जिह्मानां । ऊर्ध्वः । विऽद्युतं । वसानः ।
तस्य । ज्येष्ठं । महिमानं । वहंतीः । हिरण्यऽवर्णाः । परि । यंति । यह्वीः ॥९॥

अपांनपात्संज्ञकोऽग्निरुपस्थमपामुपस्थानमंतरिक्षमा ह्यस्थात् । आस्थितवान् आरूढवान् खलु । किं कुर्वन् । जिह्मानां कुटिलगतीनामपां मध्य ऊर्ध्वः स्वयमूर्ध्वं ज्वलन् विद्युतं विद्योतमानं मेघं वसान आच्छादयन् । अंतरिक्षमास्थाय वर्षणं कृतवान् । तस्य वर्षितुरपांनपातो ज्येष्ठं प्रशस्यतमं महिमानं माहात्म्यं वहंतीर्वहंत्यः सर्वत्र प्रापयंत्यो यह्वीर्यह्व्यो महत्यो हिरण्यवर्णाः । नदीनामैतत् । हिरण्यवन्निर्मलरूपा नद्यः परियंति । परितो गच्छंति । अपांनप्त्रा महती वृष्टिरस्माकं प्रवाहनायोत्पादितेति कृतज्ञतया तदीयं माहात्म्यं सर्वत्र प्रकटयंत्य इव नद्यः प्रवहंतीत्यर्थः ॥

हिरण्यरूपः स हिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः ।
हिरण्ययात्परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥१०॥
हिरण्यऽरूपः । सः । हिरण्यऽसंदृक् । अपां । नपात् । सः । इत् । ऊं इति । हिरण्यऽवर्णः ।
हिरण्ययात् । परि । योनेः । निऽसद्य । हिरण्यऽदाः । ददति । अन्नं । अस्मै ॥१०॥

सोऽपांनपात् हिरण्यरूपः । रूप्यत इति रूपं शरीरं । सुवर्णमयशरीरो हितरमणीयशरीरो वा । तथा हिरण्यसंदृक् । सम्यक् पश्यंतीति संदृश इंद्रियाणि । सुवर्णमयेंद्रियो हितरमणीयेंद्रियो वा । संदु स एवा पांनपात् हिरण्यवर्णो हिरण्यसदृशकांतियुक्तः । एवंभूतः सन् हिरण्ययात्सुवर्णमयाद्योनेः स्थानात् पर्युपरि निषद्योपविश्य राजत इति शेषः । अस्मा ईदृग्विधायापां नपाते हिरण्यदा दक्षिणारूपस्य सुवर्णस्य दातारो यजमाना अन्नं हविर्लक्षणं ददति । प्रयच्छंति ॥ ॥२३॥

तदस्यानीकमुत चारु नामापीच्यं वर्धते नप्तुरपां ।
यमिंधते युवतयः समित्था हिरण्यवर्णं घृतमन्नमस्य ॥११॥
तत् । अस्य । अनीकं । उत । चारु । नाम । अपीच्यं । वर्धते । नप्तुः । अपां ।
यं । इंधते । युवतयः । सं । इत्था । हिरण्यऽवर्णं । घृतं । अन्नं । अस्य ॥११॥

अस्यापांनप्तुर्देवस्यानीकं रश्मिसमूहरूपं शरीरं चारु शोभनं । उत अपि च अस्य नाम संज्ञा च चारु शोभनं न पातयति न विनाशयतीति नपादिति तद्व्युत्पत्तेः । तदुभयमपीच्यं । अंतर्हितनामैतत् । संघातर्हितं सद्वर्धते । युवतयः संगमनस्वभावा आपो हिरण्यवर्णं हिरण्यसमानतेजसं यमपांनपातमित्थामुत्रांतरिक्षे समिंधते । सम्यक् दीपयंति । अस्य च देवस्य घृतं क्षरणशीलमुदकमन्नं भक्ष्यं । अविधनो ह्यसौ वैद्युतोऽग्निः ॥

अस्मै बहूनामवमाय सख्ये यज्ञैर्विधेम नमसा हविर्भिः ।
सं सानु मार्ज्मि दिधिषामि बिल्मैर्दधाम्यन्नैः परि वंद ऋग्भिः ॥१२॥
अस्मै । बहूनां । अवमाय । सख्ये । यज्ञैः । विधेम । नमसा । हविःऽभिः ।
सं । सानु । मार्ज्मि । दिधिषामि । बिल्मैः । दधामि । अन्नैः । परि । वंदे । ऋक्ऽभिः ॥१२॥

अस्मै पुरोवर्तिने बहूनां देवानामवमायान्त्याय सख्येऽस्माभिः समानख्यानायापां नपाते यज्ञैर्यागसाधनैर्हविर्भिश्चरुपुरोडाशादिभिर्नमसा नमस्कारेण च विधेम । परिचरेम । अस्यापांनपातः सानु समुच्छ्रितप्रदेशं संमार्ज्मि । सम्यक् शोधयामि अलंकरोमि वा ॥ मृजू शौचालंकारयोः । चादिलोपे विभाषेत्यस्य निघात प्रतिषेधः ॥ दिधिषामि धारयामि च बिल्मैर्भासनैः काष्ठैरन ॥ धिष शब्दे । अयं धारणार्थोऽपि । जुहोत्यादित्वात् शपः श्लुः । सिपो व्यत्ययेनाडागमः । अभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ दधामि धारयामि चैन गार्हपत्यादिरूपेणान्नैर्हविर्लक्षणैः । तथा ऋग्भिर्मंत्रैः परिवंदे । परितः स्तौमि ॥

स ईं वृषाजनयत्तासु गर्भं स ईं शिशुर्धयति तं रिहंति ।
सो अपां नपादनभिम्लातवर्णोऽन्यस्येवेह तन्वा विवेष ॥१३॥
सः । ईं । वृषा । अजनयत् । तासु । गर्भं । सः । ईं । शिशुः । धयति । तं । रिहंति ।
सः । अपां । नपात् । अनभिम्लातऽवर्णः । अन्यस्यऽइव । इह । तन्वा । विवेष ॥१३॥

स ईं सोऽयमपांनपात्संज्ञको देवो वृषा सेक्ता भूत्वा तासु मेघस्थास्वप्सु गर्भमजनयत् । स्वात्मानमेव गर्भरूपेण वर्षणार्थं कृतवानित्यर्थः । गर्भो भूत्वा च स ईं सोऽयं माध्यमिको वैद्युतोऽग्निस्तासां शिशुः पुत्रः सन् धयति । मेघस्थास्ताः पिबति । अविधनो ह्यसौ । तं पुत्रस्थानीयमग्निं ता आपश्च रिहंति । लिहंति ॥ लिह आस्वादने । कपिलकादित्वाल्लत्वविकल्पः ॥ सोऽयमपांनपात् वृष्ट्या सह भूमौ निपतितोऽनभिम्लातवर्णः । अभितो म्लातो म्लानः क्षीणो वर्णो यस्य तद्विपरीतोऽत्यर्थं दीप्यमानः सन् इहास्मिन् लोकेऽन्यस्येव । इवशब्दोऽवधारणे । अन्यस्य पार्थिवस्यैवाग्नेस्तन्वा शरीरेण काष्ठधनलक्षणेन विवेष । व्याप्तो बभूव ॥ विषॢ व्याप्तौ ॥

अस्मिन्पदे परमे तस्थिवांसमध्वस्मभिर्विश्वहा दीदिवांसं ।
आपो नप्त्रे घृतमन्नं वहंतीः स्वयमत्कैः परि दीयंति यह्वीः ॥१४॥
अस्मिन् । पदे । परमे । तस्थिऽवांसं । अध्वस्मऽभिः । विश्वहा । दीदिऽवांसं ।
आपः । नप्त्रे । घृतं । अन्नं । वहंतीः । स्वयं । अत्कैः । परि । दीयंति । यह्वीः ॥१४॥

परम उत्कृष्टेऽस्मिन्पदेऽंतरिक्षलक्षणे स्थाने तस्थिवांसं स्थितवंतमध्वस्मभिर्ध्वंसनरहितैस्तेजोभिर्विश्वहा सर्वाण्यहानि दीदिवासं दीप्यमानमपां नपातं यह्वीर्यह्व्यो महत्य आपः स्वयमात्मनैवात्कैरततनशीलैः सततगंतृभिः स्वकीयै रूपैः परिदीयंति । परिगच्छंति ॥ दीयतिर्गतिकर्मा । दीङ् क्षये । व्यत्ययेन परस्मैपदं ॥ किं कुर्वत्यः । नप्त्रेऽपां नपाते घृतं क्षरणशीलोदकात्मकमन्नं वहंतीर्वहंत्यः ॥

अयांसमग्ने सुक्षितिं जनायायांसमु मघवद्भ्यः सुवृक्तिं ।
विश्वं तद्भद्रं यदवंति देवा बृहद्वदेम विदथे सुवीराः ॥१५॥
अयांसं । अग्ने । सुऽक्षितिं । जनाय । अयांसं । ऊं इति । मघवत्ऽभ्यः । सुऽवृक्तिं ।
विश्वं । तत् । भद्रं । यत् । अवंति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥१५॥

हे अग्ने सुक्षितिं शोभननिवासं त्वामयांसं । उपागच्छं । किमर्थं । जनाय । अस्मदीयपुत्रादिजननार्थं । तथा मघवद्भ्यो हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यश्च सुवृक्तिं शोभनावर्जकं त्वद्विषयं स्तोत्रमयांसं । उपागच्छं ॥ यम उपरमे ॥ अतः कारणाद्यद्भद्रं सर्वे देवा अवंति रक्षंति विश्वं सर्वं तद्भद्रमस्माकं भवतु । सुवीराः सुपुत्रा वयं विदथे यज्ञे गृहे वा बृहत् प्रौढं स्तोत्रं वदेम । उच्चारयाम ॥ ॥२४॥

तुभ्यमिति षड्टचं चतुर्थं सूक्तं गार्त्समदं जागतं । प्रथमाया इंद्रो मधुश्च देवता । द्वितीयाया मरुतो माधवश्च । तृतीयायास्त्वष्टा शुक्रश्च । चतुर्थ्या अग्निः शुचिश्च । पंचम्या इंद्रो नभश्च । षष्ठ्या मित्रावरुणौ नभस्यश्च ॥ तथा चानुक्रांतं । तुभ्यं षड्टतव्यं तु जागतं त्विति ॥ दशरात्रे पंचमेऽहनि ऋतुयाजेषु ऋत्विग्भिः प्रैषैः प्रेषितव्यं यष्टव्यं च । तत्राद्यानां षण्णां प्रैषाणामुपरिष्टादेव ताः षड्टचोऽहोरात्रादिभिः क्रमेणावपनीयाः । तथा च सूत्रितं । उपरिष्टात्त्वृच ऋतुयाजानामित्युपक्रम्य तुभ्यं हिन्वानो वसिष्ट गा अप इति द्वादशेत्यंतेन । आ० ८. १. ॥

तुभ्यं हिन्वानो वसिष्ट गा अपोऽधुक्षन्त्सीमविभिरद्रिभिर्नरः ।
पिबेंद्र स्वाहा प्रहुतं वषट्कृतं होत्रादा सोमं प्रथमो य ईशिषे ॥१॥
तुभ्यं । हिन्वानः । वसिष्ट । गाः । अपः । अधुक्षन् । सीं । अविऽभिः । अद्रिऽभिः । नरः ।
पिब । इंद्र । स्वाहा । प्रऽहुतं । वषट्ऽकृतं । होत्रात् । आ । सोमं । प्रथमः । यः । ईशिषे ॥१॥

हे इंद्र तुभ्यं त्वदर्थं हिन्वानः प्रेर्यमाणः सोमो गा गोविकाराणि दधिपयःप्रभृतीनि अपणद्रव्याणि वसतीवर्याख्या अपश्च वसिष्ट । वस्ते । आच्छादयति । तैः संयुज्यत इत्यर्थः । नरो यज्ञस्य नेतारोऽध्वर्यवश्च सीमेनं सोममविभिरवैर्वालमयैर्दशापवित्रैरद्रिभिर्ग्रावभिश्चाधुक्षन् । अक्षारयन् । ग्रावभिरभिषुत्य दशापवित्रेण पुनंतीत्यर्थः । हे इंद्र यस्त्वमीशिषे । सर्वस्य जगत ईश्वरो भवसि स त्वं प्रथमोऽन्येभ्यो देवेभ्यः पूर्वभावी सन् स्वाहा स्वाहाकारेण प्रहुतं प्रकर्षेणार्पितं क्षिप्तं वषट्कृतं वषट्कारेण च त्यक्तं तं सोमं होत्राद्धोतुर्यागादा समंतात्पिब ॥

यज्ञैः संमिश्लाः पृषतीभिर्ऋष्टिभिर्यामञ्छुभ्रासो अंजिषु प्रिया उत ।
आसद्या बर्हिर्भरतस्य सूनवः पोत्रादा सोमं पिबता दिवो नरः ॥२॥

यज्ञैः। संऽमिश्लाः। पृषतीभिः। ऋष्टिऽभिः। यामन्। शुभ्रासः। अंजिषु। प्रियाः। उत।
आऽसद्य। बर्हिः। भरतस्य। सूनवः। पोत्रात्। आ। सोमं। पिबत। दिवः। नरः ॥२॥

हे मरुतो यज्ञैर्यागैः संमिश्लाः संयुक्ताः पृषतीभिः स्ववाहनभूताभिः पृषद्वतीभिर्वडवाभिर्युक्ते यामन् यामनि गमनसाधने रथेऽवस्थिता ऋष्टिभिः स्वकीयैरायुधैः शुभ्रासः शुभ्राः शोभमानाः। उतशब्दश्चार्थे। अंजिष्वाभरणेषु प्रियाश्च हे भरतस्य सूनवः सर्वस्य जगतो भर्तू रुद्रस्य पुत्रा दिवो नरो दिवोऽंतरिक्षस्य नेतारः एवंभूता हे मरुतः ते यूयं बर्हिरास्तीर्णं बर्हिष्यासद्योपविश्य पोत्रात् पोतुर्यागात् सोममापिबत ॥

तृतीयसवनेऽमेव न इत्येषा नेष्टुः प्रस्थितयाज्या च। तथा च सूत्रितं। अमेव नः सुहवा आ हि गंतनेंद्राविष्णू पिबतं मध्वो अस्य। आ० ५ ५। इति ॥

अमेव नः सुहवा आ हि गंतन नि बर्हिषि सदतना रणिष्टन।
अथा मंदस्व जुजुषाणो अंधसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः ॥३॥
अमाऽइव। नः। सुऽहवाः। आ। हि। गंतन। नि। बर्हिषि। सदतन। रणिष्टन।
अथ। मंदस्व। जुजुषाणः। अंधसः। त्वष्टः। देवेभिः। जनिऽभिः। सुमतऽगणः ॥३॥

इवशब्दोऽवधारणे। हे सुहवाः शोभनाह्वानास्त्वष्टृप्रभृतयो नोऽस्मान् अमेव सहैवागतन। आगच्छत ॥ गमेश्छांदसः शपो लुक्। तप्तनप्तनथनाश्चेति तनबादेशः। हिशब्दः पूरणः ॥ आगत्य च बर्हिषि वेद्यामास्तीर्णे निषदतन। निषण्णा भवत ॥ सदेश्छांदसः सीदादेशाभावः ॥ उपविश्य च रणिष्टन। रमध्वं ॥ रण शब्दार्थः। अत्र क्रीडायां वर्तते धातूनामनेकार्थत्वात्। अस्माच्छांदसो लुङ्। पूर्ववत्तनबादेशः ॥ अथानंतरं हे त्वष्टः देवेभिरन्यैर्देवैर्जनिभिर्देवपत्नीभिश्च सुमद्गणः शोभनगणस्त्वमंधसः सोमलक्षणस्यान्नस्य ॥ द्वितीयार्थे षष्ठी ॥ सोमलक्षणमन्नं जुजुषाणः सेवमानो मदस्व। तृप्तो भव ॥

आ वक्षि देवाँ इह विप्र यक्षि चोशन्होतर्नि षदा योनिषु त्रिषु।
प्रति वीहि प्रस्थितं सोम्यं मधु पिबाग्नीध्रात्तव भागस्य तृप्णुहि ॥४॥
आ। वक्षि। देवान्। इह। विप्र। यक्षि। च। उशन्। होतः। नि। सद। योनिषु। त्रिषु।
प्रति। वीहि। प्रऽस्थितं। सोम्यं। मधु। पिब। आग्नीध्रात्। तव। भागस्य। तृप्णुहि ॥४॥

हे विप्र मेधाविन्नग्ने देवान् यष्टव्यानिंद्रादीनाविहा। आवह। यक्षि च। तान्यज च। हे होतर्देवानामाह्वातस्त्वं चोशन्नस्मदीयं कामयमानः सन् त्रिषु योनिषु स्थानेषु गार्हपत्यादिलक्षणेषु निषद। उपविश। उपविश्य च प्रस्थितं होमार्थमुत्तरवेदि प्रत्यानीतं सोम्यं सोममयं मधु प्रतिवीहि। प्रतिकामयस्व। कामयित्वा चाग्नीध्रादग्नीध्रयागात्सोमं पिब। पीत्वा च तव भागस्य त्वदीयेन भागेन तृप्णुहि। तृप्तो भव ॥

एष स्य ते तन्वो नृम्णवर्धनः सह ओजः प्रदिवि बाह्वोर्हितः।
तुभ्यं सुतो मघवन्तुभ्यमाभृतस्त्वमस्य ब्राह्मणादा तृपत्पिब ॥५॥
एषः। स्यः। ते। तन्वः। नृम्णऽवर्धनः। सहः। ओजः। प्रऽदिवि। बाह्वोः। हितः।
तुभ्यं। सुतः। मघऽवन्। तुभ्यं। आऽभृतः। त्वं। अस्य। ब्राह्मणात्। आ। तृपत। पिब ॥५॥

हे इंद्र स्यः स एष सोमस्ते तव तन्वः शरीरस्य नृम्णवर्धनः बलस्य वर्धकः। तुभ्यं सुत इत्युत्तरत्र संबंधः। येन सोमेन प्रदिवि पुराणे त्वयि बाह्वोर्हस्तयोः सहः परेषामभिभवनलक्षणं सामर्थ्यमोजस्तत्कारणभूतं बलं च हितः। निहितं भवति ॥ लिंगव्यत्ययः ॥ हे मघवन् धनवन्निंद्र तुभ्यं त्वदर्थं तादृशः सोमः सुतोऽध्वर्युभिरभि

पुतः। तुभ्यं होतुमाभृतः। उत्तरवेद्यां प्रत्याहृतश्च। अस्येमं सोमं ब्राह्मणात् ब्राह्मणाच्छंसिनो यागात्तृपत् तृप्यं-स्त्वमापिब। आभिमुख्येन पिब॥ क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वादस्येति चतुर्थ्यर्थे षष्ठी॥

जुषेथां यज्ञं बोधतं हवस्य मे सत्तो होता निविदः पूर्व्या अनु।
अच्छा राजाना नम एत्यावृतं प्रशास्त्रादा पिबतं सोम्यं मधु॥६॥
जुषेथां। यज्ञं। बोधतं। हवस्य। मे। सत्तः। होता। निऽविदः। पूर्व्याः। अनु।
अच्छ। राजाना। नमः। एति। आऽवृतं। प्रऽशास्त्रात्। आ। पिबतं। सोम्यं। मधु॥६॥

हे मित्रावरुणौ मदीयमिमं यज्ञं जुषेथां। सेवेथां। मे मम हवस्य हवमाह्वानं॥ पूर्ववत्कर्मणि षष्ठी॥ बोधतं। अवगच्छतं। तथा सत्तो निषण्णोऽस्मदीयो होता पूर्व्याश्चिरंतनीर्निविदः॥ वाङ्नामैतत्॥ शस्त्रलक्षणा वाचोऽनु शंसतीति शेषः। उन्नातृभिः कृतस्य स्तोत्रस्यानुगुण्येनाज्यादीनि शस्त्राणि शंसतीत्यर्थः। अपि च नमः सोमलक्षणमन्नमावृतमृत्विग्भिर्वेष्टितं राजाना राजमानौ युवामच्छाभिमुख्येनैति। गच्छति प्राप्नोति। तादृशं सोम्यं सोममयं मधु मादकं हविः प्रशास्त्रात् प्रशास्तुर्यागादापिबतं। आभिमुख्येन पिबतं॥ ॥२५॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके सप्तमोऽध्यायः समाप्तः॥

---

॥ श्रीगणेशाय नमः॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं॥

अथ द्वितीयाष्टकस्याष्टमोऽध्याय आरभ्यते। द्वितीयमंडलस्य चतुर्थानुवाके मंदस्वेति षडृचं पंचमं सूक्तं गार्त्समदं। मदस्वेत्यनुक्रांतं। पूर्वत्र ऋतव्यं तु जागतं त्विति तुशब्दप्रयोगादिदमपि जागतमृतव्यं। तत्राद्यास्तस्र ऋचो द्रविणोदोदेवताकाः पंचम्याश्विनी षष्ठ्याग्नेयी॥ दशरात्रे षष्ठेऽहनि ऋतुयाजेषु प्रैषानुकशिरस्कान् कृत्वा तैः प्रैषैः प्रेषितव्यं यष्टव्यं च। तत्र सप्तमादीनां प्रैषाणामुपरिष्टात् मंदस्वेत्याद्याः षडृचः क्रमेण प्रक्षेपणीयाः। सूत्रं तु पूर्वमेवोदाहृतं॥

मंदस्व होत्रादनु जोषमंधसोऽध्वर्यवः स पूर्णां वष्ट्यासिचं।
तस्मा एतं भरत तद्वशो ददिर्होत्रात्सोमं द्रविणोदः पिब ऋतुभिः॥१॥
मंदस्व। होत्रात्। अनु। जोषं। अंधसः। अध्वर्यवः। सः। पूर्णां। वष्टि। आऽसिचं।
तस्मै। एतं। भरत। तत्ऽवशः। ददिः। होत्रात्। सोमं। द्रविणःऽदः। पिब। ऋतुऽभिः॥१॥

हे द्रविणोदो द्रविणसो धनस्य दातरेतन्नामक देव अंधसो देवानामन्नरूपस्य सोमस्य सोमेन होत्रात् होतृकर्तृकाद्यागादनु जोषं प्रीतिमनु मंदस्व। हे अध्वर्यवः स द्रविणोदाः पूर्णां संपूर्णामासिचं सिच्यमानामाहुतिं वष्टि। कामयते। अतस्तस्मै द्रविणोदसेऽध्वर्य एतं सोमं भरत। प्रापयत। तद्वशस्तत्कामो द्रविणोदा ददिर्दाता युष्माकमभीष्टफलस्य दाता भवतीति शेषः। किंच हे द्रविणोदो होत्रात् होतुर्यागात् ऋतुभिरिषमासाभिमानिभिर्ऋतुदेवैः सह सोमं पिब॥

यमु पूर्वमहुवे तमिदं हुवे सेदु हव्यो ददिर्यो नाम पत्यते ।
अध्वर्युभिः प्रस्थितं सोम्यं मधु पोत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥२॥
यं । ऊं इति । पूर्वं । अहुवे । तं । इदं । हुवे । सः । इत् । ऊं इति । हव्यः । ददिः । यः । नाम । पत्यते ।
अध्वर्युऽभिः । प्रऽस्थितं । सोम्यं । मधु । पोत्रात् । सोमं । द्रविणःऽदः । पिब । ऋतुऽभिः ॥२॥

हे द्रविणोदो यमु यं त्वामेव पूर्वं होतृकर्तृके सोमयागेऽहुवे । आहूतवानस्मि इदं संप्रति तं तमेव पोतृकर्तृके सोमयागे हुवे । आह्वयामि । सेत् स एव द्रविणोदा हव्यो ह्वातव्यः ॥ उ इति पूरणः ॥ ददिरभीष्टफलस्य दाता यो नाम यः खलु पत्यते देवतात्वेनेष्टे तस्मै द्रविणोदसे सोम्यं सोमात्मकं मध्वध्वर्युभिः प्रस्थितं प्रणीतमासीत् । हे द्रविणोदः पोत्रात् पोतुर्यागादृतुभिरृतुदेवताभिः सह सोमं पिब ॥

मेद्यंतु ते वह्नयो येभिरीयसेऽरिषण्यन्वीळयस्वा वनस्पते ।
आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥३॥
मेद्यंतु । ते । वह्नयः । येभिः । ईयसे । अरिषण्यन् । वीळयस्व । वनस्पते ।
आऽयूय । धृष्णो इति । अभिऽगूर्य । त्वं । नेष्ट्रात् । सोमं । द्रविणःऽदः । पिब । ऋतुऽभिः ॥३॥

हे द्रविणोदो येभिर्यैर्वाहैरीयसे प्राप्नोषि ॥ वह्नयो वोढार इति यास्केनोक्तत्वात् । नि० ८. ३ ॥ ते मेद्यंतु । तृप्यंतु । हे वनस्पते वनाना पते अरिषण्यन् अहिंसन् वीळयस्व । दृढीभव । हे धृष्णो धर्षक त्वमायूयागत्य अभिगूर्योद्यम्य नेष्ट्रात् नेष्टुर्यागादृतुभिः सहःसर्त्तकैः सह सोमं पिब ॥

अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितं ।
तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः ॥४॥
अपात् । होत्रात् । उत । पोत्रात् । अमत्त । उत । नेष्ट्रात् । अजुषत । प्रयः । हितं ।
तुरीयं । पात्रं । अमृक्तं । अमर्त्यं । द्रविणःऽदाः । पिबतु । द्राविणःऽदसः ॥४॥

अच्छावाकस्येयं । यो द्रविणोदा होत्राद्धोतुर्यागात् सोममपात् पीतवान् उत किंच पोत्रात्पोतुर्यागादमत्त सोमं पीत्वामाद्यत् । उत अपि च नेष्ट्रात् नेष्टुर्यागाद्धितं दत्तं प्रयो देवानामन्नरूपं सोममजुषत । असेवत । स द्राविणोदसो हवीरूपद्रविणस्य प्रदातृभ्य ऋत्विग्भ्यो हितः ॥ ऋत्विजोऽत्र द्रविणोदस उच्यंते हविषो दातारस्ते चैनं जनयंति । नि० ८. २ । इति यास्केनोक्तत्वात् ॥ तादृशो द्रविणोदा अमृक्तं दशापवित्रेणाशुद्धममर्त्यममरणसाधनं तुरीयं पात्रं चतुर्थपात्रस्थं सोमं पिबतु ॥

अर्वाचमद्य यय्यं नृवाहणं रथं युंजाथामिह वां विमोचनं ।
पृंक्तं हवींषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू ॥५॥
अर्वाचं । अद्य । यय्यं । नृऽवाहनं । रथं । युंजाथां । इह । वां । विऽमोचनं ।
पृंक्तं । हवींषि । मधुना । आ । हि । कं । गतं । अथ । सोमं । पिबतं । वाजिनीवसू
इति वाजिनीऽवसू ॥५॥

हे अश्विनौ अद्यास्मिन्नहनि यय्यं यायि गंतारं नृवाहणं नेत्रोर्युवयोर्वोढारमिह यज्ञे वां युवयोर्विमोचनं विमोचयितारं रथमर्वाचं यथार्वागभवति तथा युंजाथां । किंच मधुना स्वादुरसेन हवींषि पृंक्तं । संयोजयतं ।

अथ चा गतं । आगच्छत ॥ हि कर्मिति पुरणि ॥ अथानंतरं हे वाजिनीवसू । वाज एव वाजिनी । अन्नेन वासयितारौ बलवर्धनौ वा सोम पिबतं ॥

जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जोषि सुष्टुतिं ।
विश्वेभिर्विश्वाँ ऋतुना वसो मह उशन्देवाँ उशतः पायया हविः ॥६॥
जोषि । अग्ने । संऽइधं । जोषि । आऽहुतिं । जोषि । ब्रह्म । जन्यं । जोषि । सुऽस्तुतिं ।
विश्वेभिः । विश्वान् । ऋतुना । वसो इति । महः । उशन् । देवान् । उशतः ।
पायय । हविः ॥६॥

हे अग्ने समिधं जोषि । जुषस्व । आहुतिं जोषि । जुषस्व । ब्रह्म शस्त्रं जन्यं जनेभ्यो हितं जोषि । जुषस्व । सुष्टुतिं शोभनस्तोत्रं जोषि । जुषस्व । किंच वसो सर्वेषामावासभूत हे अग्ने उशतः कामयमानान् महो महतो विश्वान् सर्वान्देवान् उशन् कामयमानस्त्वमृतुना तपस्यसंज्ञकेन सह तथा विश्वेभिः सर्वैर्देवैः सह हविर्हवीरूपं सोम पायय ॥ ॥१॥

उदु ष्य इत्येकादशर्चं षष्ठं सूक्तं गार्त्समदं त्रैष्टुभं सवितृदेवताकं । अत्रानुक्रमणिका । उदु ष्य एकादश सावित्रमिति ॥ व्यूढे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्र एतत्सूक्तं सावित्रनिविद्धानीयं । व्यूळ्हश्चेदिति खंडे सूत्रितं । षष्ठस्योदु ष्य देव इति गार्त्समदं । आ० ८. ८. । इति ॥

उदु ष्य देवः सविता सवाय शश्वत्तमं तदपा वह्निरस्थात् ।
नूनं देवेभ्यो वि हि धाति रत्नमथाभजद्वीतिहोत्रं स्वस्तौ ॥१॥
उत् । ऊं इति । स्यः । देवः । सविता । सवाय । शश्वत्ऽतमं । तत्ऽअपाः । वह्निः । अस्थात् ।
नूनं । देवेभ्यः । वि । हि । धाति । रत्नं । अथ । आ । अभजत् । वीतिऽहोत्रं । स्वस्तौ ॥१॥

स्यः स देवो द्योतमानः सविता सवाय लोकानां प्रसवायानुज्ञायै शश्वत्तमं प्रतिदिनमुदस्थात । उत्तिष्ठति । कीदृशः सविता । तदपाः तत्प्रसवकर्मा ॥ अपः अप्न इति कर्मनामसु पाठात ॥ वह्निर्वोढा जगतां । किंच नूनं संप्रति देवेभ्यः स्तोतृभ्यो रत्नं धनं वि हि धाति । प्रयच्छति ॥ हीति पुरणे ॥ अथ अपि च वीतिहोत्रं कांतयज्ञं यजमानं स्वस्तावविनाशे क्षेमेऽभजत । भागिनं करोतु । यद्यपि स्वस्तिशब्दो विभक्त्यतनिर्दिष्टशब्दपरस्तथाप्य-पर्यवसानादर्थपरो भवति ॥

विश्वस्य हि श्रुष्टये देव ऊर्ध्वः प्र बाहवा पृथुपाणिः सिसर्ति ।
आपश्चिदस्य व्रत आ निमृग्रा अयं चिद्वातो रमते परिज्मन् ॥२॥
विश्वस्य । हि । श्रुष्टये । देवः । ऊर्ध्वः । प्र । बाहवा । पृथुऽपाणिः । सिसर्ति ।
आपः । चित् । अस्य । व्रते । आ । निऽमृग्राः । अयं । चित् । वातः । रमते । परिऽज्मन् ॥२॥

देवो द्योतमानः सविता पृथुपाणिर्महत्करो विश्वस्य श्रुष्टये जगतः सुखायोर्ध्व उन्नतः सन् बाहवा बाहू प्रसिसर्ति । प्रसारयति । आपश्चित् आपोऽप्यस्य व्रते प्रसवाख्ये कर्मणि सति ॥ व्रतं कर्वरमिति तन्नामसु पाठात ॥ आ स्यंदंत इति शेषः । ताश्च निमृग्रा नितरां शोधयित्र्यो गंगादिरूपेण जगत्पावयंतीत्यर्थः । अयं चिद्वातोऽयमपि वायुः परिज्मन् परितो गंते व्याप्तेऽतरिक्षे रमते ॥

आशुभिश्चिद्यान्वि मुचाति नूनमरीरमदतमानं चिदेतोः ।
अह्यर्षूणां चिन्न्ययाँ अविष्यामनु व्रतं सवितुर्मोक्यागात् ॥३॥
आशुऽभिः। चित्। यान्। वि। मुचाति। नूनं। अरीरमत्। अतमानं। चित्। एतोः।
अह्यर्षूणां। चित्। नि। अयान्। अविष्यां। अनु। व्रतं। सवितुः। मोकी। आ। अगात् ॥३॥

यान् गच्छन् सविताशुभिश्चिच्छीघ्रगामिभिरपि रश्मिभिर्विमुचाति। विमुञ्चति। नूनमिति पूरणः। अतमानं चित्सततं गच्छन्तमपि जनमेतोर्गमनादरीरमत्। उपरमयति। किंच अह्यर्षूणाम्। अहिमाहन्तारं शत्रुमर्षन्त्यभिगच्छन्तीत्यह्यर्षवः। तेषामप्यविष्यां गमनेच्छां न्ययान्। नियच्छति। सवितुः प्रेरकस्य सूर्यस्य व्रतं कर्मानु पश्चान्मोकी रात्रिः। मोकी शोकीति रात्रिनामसु पाठात्॥ आगात्। आगच्छति। सवितुश्चेष्टोपरतौ रात्रिरागच्छतीति यावत्॥

पुनः समव्यद्विततं वयंती मध्या कर्तोर्न्यधाच्छक्म धीरः ।
उत्संहायास्थाद्व्यृ१तूँरदर्धररमतिः सविता देव आगात् ॥४॥
पुनरिति। सं। अव्यत्। विऽततं। वयंती। मध्या। कर्तोः। नि। अधात्। शक्म। धीरः।
उत्। संऽहाय। अस्थात्। वि। ऋतून्। अदर्धः। अरमतिः। सविता। देवः। आ।
अगात् ॥४॥

वयंती वस्त्रं वयंती नारीव रात्रिर्विततमाल्लोकं पुनः समव्यत्। संवेष्टयति। पुनःशब्दः पूर्वेद्युरप्येवमकार्षीदिति द्योतयति। धीरः प्रज्ञोऽपि सर्वो लोकः कर्तोः क्रियमाणं कर्म॥ कर्तोः कर्तवा इति तन्नामसु पाठात्॥ शक्म कर्तुं शक्यमपि मध्या मध्य उपक्रान्तं कर्मापरिसमाप्येत्यर्थः। न्यधात्। निहितवान्। सवितर्युपरत इति शेषः। सर्वो लोकः संहाय शय्यां विहायोदस्थात्। अवशिष्टं कर्म कर्तुं पुनरुत्तिष्ठति॥ सपूर्वो जहातिः शय्यापरित्यागे वर्तते। तथा च श्रूयते। कलिः शयानो भवति संजिहानस्तु द्वापरः। ऐ० ब्रा० ७. १५। इति। सविता सर्वस्य प्रसविता सूर्योऽरमतिरनुपरतिर्देवो द्योतमान आगात्। आगच्छति। उदेतीति यावत्। ऋतून् कालान् विभज्याश्व व्यदर्दः। विदारयति॥

नानौकांसि दुर्यो विश्वमायुर्वि तिष्ठते प्रभवः शोको अग्नेः ।
ज्येष्ठं माता सूनवे भागमाधादन्वस्य केतमिषितं सवित्रा ॥५॥
नाना। ओकांसि। दुर्यः। विश्वं। आयुः। वि। तिष्ठते। प्रऽभवः। शोकः। अग्नेः।
ज्येष्ठं। माता। सूनवे। भागं। आ। अधात्। अनु। अस्य। केतं। इषितं। सवित्रा ॥५॥

प्रभवः प्रभूतोऽग्नेः शोकस्तेजो दुर्यो गृह्यो गृहे भवो नानौकांसि यजमानानां पृथग्भूतान्गृहान्वितिष्ठते। अधितिष्ठति। विश्वमायुः सर्वमन्नं चाधितिष्ठति॥ आयुः सूनृतेत्यन्ननामसु पाठात्॥ मातोषाः सवित्रान्विषितं प्रेषितमस्य केतं प्रज्ञापकमग्नेर्ज्येष्ठं प्रथममग्निहोत्राख्यं भागं सूनवेऽग्नय आधात्। आदधाति॥ ॥२॥

समाववर्ति विष्ठितो जिगीषुर्विश्वेषां कामश्चरताममाभूत् ।
शश्वाँ अपो विकृतं हित्व्यागादनु व्रतं सवितुर्दैव्यस्य ॥६॥
संऽआववर्ति। विऽस्थितः। जिगीषुः। विश्वेषां। कामः। चरतां। अमा। अभूत्।
शश्वान्। अपः। विऽकृतं। हित्वी। आ। अगात्। अनु। व्रतं। सवितुः। दैव्यस्य ॥६॥

जिगीषुर्विजयेच्छुर्योद्धा विषितो युद्धार्थं प्रस्थितः समाववर्ति । समावर्तयति । विश्वेषां सर्वेषां चरतां जंगमानाममा । अमा दम इति गृहनामसु पाठात् । गृहं प्रति कामोऽभूत् । भवति । शश्वान् नित्यं कर्मरतोऽपः कर्म विकृतमर्धकृतं हित्वी हित्वागात् । गृहमागच्छति । एतत्सर्वं दैव्यस्य दिवि भवस्य सवितुः प्रेरकस्य सूर्यस्य व्रतमस्तमयाख्यं कर्मानु जायत इत्यर्थः ॥

त्वया हितमप्यमप्सु भागं धन्वान्वा मृगयसो वि तस्थुः ।
वनानि विभ्यो नकिरस्य तानि व्रता देवस्य सवितुर्मिनंति ॥७॥
त्वया । हितं । अप्यं । अपऽसु । भागं । धन्व । अनु । आ । मृगयसः । वि । तस्थुः ।
वनानि । विऽभ्यः । नकिः । अस्य । तानि । व्रता । देवस्य । सवितुः । मिनंति ॥७॥

हे सवितस्त्वयाप्स्वंतरिक्षे ॥ आपः पृथिवीत्यंतरिक्षनामसु पाठात् ॥ जलाधारे वा हितं निहितमप्यमपां संबंधिनं भागं धन्वानु निर्जलप्रदेशेष्वरण्येषु मृगयसो मृगयमाणा मृगा आ समंताद्वितस्थुः । अधितिष्ठंति । किंच वनानि वृक्षा विभ्यः पक्षिभ्य आवासादिरूपेण त्वया भागो दत्तः । अस्य देवस्य सवितुस्तानि तादृशानि व्रता व्रतानि कर्माणि नकिर्मिनंति । कोऽपि न हिंसति ॥

याद्राध्यं१ वरुणो योनिमप्यमनिंशितं निमिषि जर्भुराणः ।
विश्वो मार्तांडो व्रजमा पशुर्गात्स्थशो जन्मानि सविता व्याकः ॥८॥
यात्ऽराध्यं । वरुणः । योनिं । अप्यं । अनिंऽशितं । निऽमिषि । जर्भुराणः ।
विश्वः । मार्तांडः । व्रजं । आ । पशुः । गात् । स्थऽशः । जन्मानि । सविता । वि ।
आ । अकरित्यकः ॥८॥

वरुणो याद्राध्यं यातां गच्छतां राध्यं राधनीयमप्यमाप्तुं योग्यमनिशितमतीक्ष्णं । सुखकरमिति यावत् । योनिं स्थानं निमिषि निमेषे सवितुरस्तमये सति विश्रमार्थं प्राणिभ्यः प्रयच्छति । वरुणस्य रात्रेर्निर्वाहकत्वात् । जर्भुराणो भृशं गच्छन् विश्वः सर्वो मार्तांडो मृताद्भिन्नादंडादुत्पद्यमानः पक्ष्यागात् । आगच्छति । विश्वः पशुरपि व्रजं गोष्ठमागात् । सविता प्रेरकः स्थशः स्थाने स्थाने जन्मानि जातानि भूतानि व्याकः । पृथगकार्षीत् ॥

न यस्येंद्रो वरुणो न मित्रो व्रतमर्यमा न मिनंति रुद्रः ।
नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिः ॥९॥
न । यस्य । इंद्रः । वरुणः । न । मित्रः । व्रतं । अर्यमा । न । मिनंति । रुद्रः ।
न । अरातयः । तं । इदं । स्वस्ति । हुवे । देवं । सवितारं । नमःऽभिः ॥९॥

यस्य सवितुर्देवस्य व्रतं प्रसवाख्यं कर्मेंद्रो न मिनाति । न हिनस्ति । वरुणश्च न मिनाति मित्रश्चार्यमा च न मिनाति रुद्रश्च न मिनाति । अरातयोऽसुराश्च न मिनंति ॥ मिनातीति श्रुतमाख्यातं यथायोगं विपरिणामेन प्रत्येकमभिसंबध्यते ॥ तं सवितारं सर्वस्य प्रेरकं देवं द्योतमानमिदमिदानीं नमोभिरन्नरूपैर्हविर्भिः सह ॥ नम आयुरित्यन्ननामसु पाठात् ॥ स्वस्ति क्षेमाय हुवे । स्तौमि ॥

भगं धियं वाजयंतः पुरंधिं नराशंसो ग्नास्पतिर्नो अव्याः ।
आये वामस्य संगथे रयीणां प्रिया देवस्य सवितुः स्याम ॥१०॥

भगं। धियं। वाजयंतः। पुरंऽधिं। नराशंसः। ग्नाःपतिः। नः। अव्याः।
आऽअये। वामस्यं। संऽगथे। रयीणां। प्रियाः। देवस्यं। सवितुः। स्याम ॥१०॥

भगं भजनीयं धियं ध्यातव्यं पुरंधिं पुरस्य धारयितारं बहुप्रज्ञं वा सवितारं ॥ पुरंधिर्बहुधीरिति यास्कः ॥ वाजयंतो वाजिनं बलिनं कुर्वंतः ॥ विभक्तिव्यत्ययः ॥ नः स्तुवतोऽस्मान् नराशंसो नरैः शंसनीयो ग्नास्पतिर्देवपत्नीनां पतिस्त्वष्टा पतिर्वा ॥ तथा च श्रूयते छंदांसि वै ग्ना इति उत ग्ना व्यंतु देवपत्नीः । ऋग्सं० ५ ४६ ८ । इति च ॥ सविताव्याः । अव्यात् । किंच वामस्य धनस्य रयीणां पशूनां च ॥ तथा च श्रूयते पशवो वै रयिरिति ॥ आये आगमने संगथे संगमने च निमित्ते देवस्य द्योतमानस्य सवितुः प्रेरकस्य वयं प्रियाः स्याम । भवेम ॥

अस्मभ्यं तद्दिवो अद्भ्यः पृथिव्यास्त्वया दत्तं काम्यं राध आ गात् ।
शं यत्स्तोतृभ्य आपये भवात्युरुशंसाय सवितर्जरित्रे ॥११॥
अस्मभ्यं। तत्। दिवः। अतऽभ्यः। पृथिव्याः। त्वया। दत्तं। काम्यं। राधः। आ। गात्।
शं। यत्। स्तोतृऽभ्यः। आपये। भवाति। उरुऽशंसाय। सवितः। जरित्रे ॥११॥

हे सवितः अस्मभ्यं त्वया दत्तं तत् प्रसिद्धं काम्यं कमनीयं राधो धनं दिवो द्युलोकात् अद्भ्योऽन्तरिक्षलोकात् पृथिव्या भूमेश्च आ गात् । आगच्छतु । किंच स्तोतृभ्यः स्तोतृणामापये बंधवे तदुरुशंसाय यद्धनं शं सुखकरं भवाति भवेत् उरुशंसाय बहुस्तुतये जरित्रे स्तोत्रे मह्यं ॥ जरिता कारुरिति स्तोतृनामसु पाठात् ॥ हे सवितः तत्प्रयच्छ ॥ ॥३॥

ग्रावाणेवेत्यष्टर्चं सप्तमं सूक्तं गार्त्समदं त्रैष्टुभमाश्विनं ग्रावाणेवाष्टावाश्विनमित्यनुक्रांतत्वात् ॥ प्रवर्ग्येऽभिष्टवे पूर्वं पटलेऽस्य विनियोगः । सूत्रितं च । ग्रावाणेवेत्युक्त द्यावापृथिवी । आ० ४ ६ । इति ॥ प्रातरनुवाकाश्विनशस्त्रयोरपीदं सूक्तं । सूत्रितं च । ग्रावाणेव नासत्याभ्यामिति त्रीणि । आ० ४ १५ । इति ॥

ग्रावाणेव तदिदर्थं जरेथे गृध्रेव वृक्षं निधिमंतमच्छ ।
ब्रह्माणेव विदथ उक्थशासा दूतेव हव्या जन्या पुरुत्रा ॥१॥
ग्रावाणाऽइव। तत्। इत्। अर्थं। जरेथे इति। गृध्राऽइव। वृक्षं। निधिऽमंतं। अच्छं।
ब्रह्माणाऽइव। विदथे। उक्थऽशसा। दूताऽइव। हव्या। जन्या। पुरुऽत्रा ॥१॥

हे अश्विनौ ग्रावाणेव अरातिं प्रति प्रेषितौ पाषाणाविव तदर्थं ॥ अर्तेर्धातोरर्थशब्दः । अर्थोऽर्तेरिति यास्कः । नि० १. १८ ॥ तमरातिमित्यर्थः । इदिति पूरणः । जरेथे । जरयेथे । अरातिं बाधेथां । यद्वा यथा गृहे ग्रावाणौ क्षिप्तौ तदानीमेव शीघ्रं गच्छतस्तथा तत् तमर्थं गतार जरेथे । शीघ्रं गत्वा स्तुतमित्यर्थः ॥ जरतिः स्तुतिकर्मा ॥ किंच गृध्रेव गृध्राविव पक्षिणाविव वृक्षं फलितं वृक्षं निधिमंतं धनवंतं यजमानमच्छ । आगच्छतमिति शेषः । विदथे यज्ञे ॥ विदथः सवनमिति यज्ञनामसु पाठात् ॥ उक्थशासोक्थशंसितारौ ब्रह्माणेव ब्राह्मणाविव । जन्या जनपदेषु दूतेव राज्ञा प्रेषितौ दूताविव पुरुत्रा बहुभिः पुरुषैर्हव्या ह्वातव्यौ युवां । अत्रोपमेयद्वित्वानुसारेणोपमानद्वित्वं ॥

प्रातर्यावाणा रथ्येव वीराजेव यमा वरमा सचेथे ।
मेने इव तन्वा३ शुंभमाने दंपतीव क्रतुविदा जनेषु ॥२॥

प्रातःऽयावाना। रथ्याऽइव। वीरा। अजाऽइव। यमा। वरं। आ। सचेथे इति।
मेने इवेति मेनेऽइव। तन्वा। शुंभमाने इति। दंपती इवेति दंपतीऽइव।
क्रतुऽविदा। जनेषु ॥२॥

हे अश्विनौ प्रातर्यावाणा प्रातरेव यज्ञार्थं गंतारौ रथ्येव रथिनाविव वीरौ स्वकर्मणि शूरौ। अजेवाजाविव छागाविव यमा यमलौ। मेने इव नार्याविव तन्वा शरीरेण शुंभमाने शोभमानौ। दंपतीव जायापती इव संगतौ जनेषु विषयेषु क्रतुविदा कर्मविदौ युवां वरं संभक्तारमासचेथे। आगच्छथ॥

शृंगेव नः प्रथमा गंतमर्वाक् छफाविव जर्भुराणा तरोभिः।
चक्रवाकेव प्रति वस्तोरुस्रार्वाचा यातं रथ्येव शक्रा ॥३॥

शृंगाऽइव। नः। प्रथमा। गंतं। अर्वाक्। शफाऽइव। जर्भुराणा। तरःऽभिः।
चक्रवाकाऽइव। प्रति। वस्तोः। उस्रा। अर्वाचा। यातं। रथ्याऽइव। शक्रा ॥३॥

हे अश्विनौ शृंगेव पशोः शृंगे इव प्रथमा देवानां प्रथमौ शफाविवाश्वादेः खुराविव तरोभिर्वेगैर्जर्भुराणा भृशं गच्छंतौ युवां नोऽस्मान्प्रत्यर्वागभिमुखमागंतं। आगच्छतं। किंच हे अश्विनौ वस्तोः प्रति अहः प्रति चक्रवाकेव चक्रवाकाविव हे उस्रा शत्रूणामुत्सारकौ गमनशीलौ वा रथ्येव रथिनाविव हे शक्रा स्वकर्मणि शक्तावर्वाचास्मदभिमुखौ यातं। गच्छतं॥

नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव।
श्वानेव नो अरिषण्या तनूनां खृगलेव विस्रसः पातमस्मान् ॥४॥

नावाऽइव। नः। पारयतं। युगाऽइव। नभ्याऽइव। नः। उपधी इवेत्युपधीऽइव।
प्रधी इवेति प्रधीऽइव।
श्वानाऽइव। नः। अरिषण्या। तनूनां। खृगलाऽइव। विऽस्रसः। पातं। अस्मान् ॥४॥

हे अश्विनौ नावेव नावाविव सिंधून् नोऽस्मान् दुर्गाणि पारयतं। युगेव यथा रथस्य युगं नभ्येव यथा च रथचक्रनाभिफलके। उपधी इव यथा तत्पार्श्वस्थे फलके प्रधी इव यथा वा चक्रबाह्यवलयौ रथं पारयतः तथा नोऽस्मान्दुर्गाणि पारयतं। किंच श्वानेव श्वानाविव यथा श्वानौ बाधकेभ्यो रक्षंतौ तनोर्हिंसामपनयतः तथा नोऽस्माकं तनूनामंगानामरिषण्यावहिंसकौ भवतं। खृगलेव यथा तनुत्राणि तनुहिंसाया रक्षतः तथा विस्रसो जराया अस्मान्युवां पातं॥

वातेवाजुर्या नद्येव रीतिरक्षी इव चक्षुषा यातमर्वाक्।
हस्ताविव तन्वे३ शंभविष्ठा पादेव नो नयतं वस्यो अच्छ ॥५॥

वाताऽइव। अजुर्या। नद्याऽइव। रीतिः। अक्षी इवेत्यक्षीऽइव। चक्षुषा। आ। यातं। अर्वाक्।
हस्ताऽइव। तन्वे। शंऽभविष्ठा। पादाऽइव। नः। नयतं। वस्यः। अच्छ ॥५॥

हे अश्विनौ वातेव वाताविवाजुर्या जरयितुमशक्यौ नद्येव नद्याविव रीतिः॥ व्यत्ययेनैकवचनं॥ शीघ्रं गंतारौ युवां। अक्षी इव अक्षिणी इव चक्षुषा दर्शनेनार्वागस्मदभिमुखमायातं। आगच्छतं। किंच हस्तेव हस्ताविव पादेव पादाविव तन्वे शरीराय शंभविष्ठा सुखस्य भावयितृतमौ युवां नोऽस्मान् वस्यो वसीयः श्रेष्ठं धनमच्छ प्रति नयतं। प्रापयतं॥ ॥४॥

ओष्ठाविव मध्वास्ने वदंता स्तनाविव पिप्यतं जीवसे नः ।
नासेव नस्तन्वो रक्षितारा कर्णाविव सुश्रुता भूतमस्मे ॥ ६॥
ओष्ठौऽइव । मधु । आस्ने । वदंता । स्तनौऽइव । पिप्यतं । जीवसे । नः ।
नासाऽइव । नः । तन्वः । रक्षितारा । कर्णौऽइव । सुऽश्रुता । भूतं । अस्मे इति ॥ ६॥

हे अश्विनौ ओष्ठाविवास्ने आस्याय मधुररसवद्वचनं वदंतौ स्तनाविव नोऽस्मान् जीवसे जीवनाय पिप्यतं । प्याययतं । किंच नासेव नासिके इव नोऽस्माकं तन्वस्तनो रक्षितारा रक्षितारौ भूतं । भवतं । अपि च कर्णाविवास्मे अस्माकं सुश्रुता सुश्रवणौ युवां भूतं । भवतं ॥

हस्तेव शक्तिमभि संददी नः क्षामेव नः समजतं रजांसि ।
इमा गिरो अश्विना युष्मयंतीः क्ष्णोत्रेणेव स्वधितिं सं शिशीतं ॥ ७॥
हस्ताऽइव । शक्तिं । अभि । संददी इति संऽददी । नः । क्षामऽइव । नः । सं । अजतं । रजांसि ।
इमाः । गिरः । अश्विना । युष्मऽयंतीः । क्ष्णोत्रेणऽइव । स्वऽधितिं । सं । शिशीतं ॥ ७॥

हे अश्विनौ हस्तेव हस्ताविव शक्तिं सामर्थ्यं नोऽस्माकमभिसंददी आभिमुख्येन सम्यक् प्रयच्छंतौ भवतं । किंच क्षामेव रोदसी इव रजांसि स्थानान्युदकानि वा ॥ उदकं रज उच्यत इति यास्कः ॥ नोऽस्माकं समजतं । प्रेरयतं । अपि च अश्विना हे अश्विनौ इमा गिरोऽस्माभिः कृताः स्तुतीर्युष्मयंतीर्युवामिच्छंतीः स्वधितिमसिं क्ष्णोत्रेणेव तेजनशाणेनेव संशिशीतं । सम्यक् तीक्ष्णीकुरुतं ॥

एतानि वामश्विना वर्धनानि ब्रह्म स्तोमं गृत्समदासो अक्रन् ।
तानि नरा जुजुषाणोप यातं बृहद्वदेम विदथे सुवीराः ॥ ८॥
एतानि । वां । अश्विना । वर्धनानि । ब्रह्म । स्तोमं । गृत्सऽमदासः । अक्रन् ।
तानि । नरा । जुजुषाणा । उप । यातं । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ८॥

अश्विना हे अश्विनौ वां युवयोरेतानि वर्धनानि वृद्धिसाधनानि ब्रह्म ब्रह्माणि मंत्रान् स्तोमं स्तोत्रं च गृत्समदासो गृत्समदा अक्रन् । अकुर्वन् । तानि ब्रह्माणि नरा नेतारौ जुजुषाणा भृशं प्रीयमाणौ युवामुपयातं । उपगच्छतं । किंच सुवीराः शोभनपुत्रा वयं विदथे यज्ञे युवां बृहद्वदेम । प्रभूतं स्तुमः ॥ ॥ ५ ॥

सोमापूषणेति षड्टचमष्टमं सूक्तं गार्त्समदं त्रैष्टुभं सोमापूषदेवताकं । तथा चानुक्रांतं । सोमापूषणा षट् सोमापौष्णमंत्योऽर्धर्चोऽप्यादितेरिति । अंत्यस्य ऋच उत्तरोऽर्धर्चोऽदितिदेवता ॥ सोमापौष्णे पशौ वपापुरोडाशहविषामाद्यास्तिस्रः क्रमेणानुवाक्या उत्तरास्तिस्रो याज्याः । अग्नीषोमाविति खंडे सूत्रितं । सोमापूषणा जनना रयीणां । आ॰ ३ ८ । इति ॥

सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिं ॥ १॥
सोमापूषणा । जनना । रयीणां । जनना । दिवः । जनना । पृथिव्याः ।
जातौ । विश्वस्य । भुवनस्य । गोपौ । देवाः । अकृण्वन् । अमृतस्य । नाभिं ॥ १॥

सोमापूषणा हे सोमापूषणौ युवां रयीणां धनानां जनना जनयितारौ दिवो द्युलोकस्यापि जनना ,

जनयितारौ पृथिव्याः प्रथितायाश्च जनयितारौ भवथः। किंच जातौ जातमात्रावेव युवां विश्वस्य भुवनस्य कृत्स्नस्य जगतो गोपा गोप्तारौ देवा अमृतस्यामरणस्य नाभिं हेतुमकृण्वन्। अकार्षुः॥

इमौ देवौ जायमानौ जुषंतेमौ तमांसि गूहतामजुष्टा।
आभ्यामिंद्रः पक्वमामास्वंतः सोमापूषभ्यां जनदुस्रियासु॥२॥
इमौ। देवौ। जायमानौ। जुषंत। इमौ। तमांसि। गूहतां। अजुष्टा।
आभ्यां। इंद्रः। पक्वं। आमासु। अंतरिति। सोमापूषऽभ्यां। जनत्। उस्रियासु॥२॥

इमौ सोमापूषणौ देवौ द्योतमानौ जायमानावुत्पन्नमात्रावेव जुषंत। सर्वे देवा अजुषंत। सेवितवंत इति यावत्। किंच इमौ सोमापूषणावजुष्टान्यसेव्यानि तमांसि सर्वस्य गूहतां। नाशयतः। किंच आभ्यामेताभ्यां सोमापूषभ्यां सहेंद्र आमासु तरुणीषूस्रियासु गोष्वंतर्मध्य ऊधःप्रदेशे पक्वं परिपक्वं पयो जनत्। जनयति॥

सोमापूषणा रजसो विमानं सप्तचक्रं रथमविश्वमिन्वं।
विषूवृतं मनसा युज्यमानं तं जिन्वथो वृषणा पंचरश्मिं॥३॥
सोमापूषणा। रजसः। विऽमानं। सप्तऽचक्रं। रथं। अविश्वऽमिन्वं।
विषुऽवृतं। मनसा। युज्यमानं। तं। जिन्वथः। वृषणा। पंचऽरश्मिं॥३॥

वृषणा वृषणौ कामानां वर्षितारौ सोमापूषणा हे सोमापूषणौ रजसो लोकस्य। लोका रजांस्युच्यंत इति यास्कः। विमानं परिच्छेदकं। सर्वमानमित्यर्थः। सप्तचक्रं सप्तर्तुचक्रं। त्रयोदशो मासः सप्तम ऋतुः। अस्ति त्रयोदशो मास इति श्रुतेः। अविश्वमिन्वं विश्वस्यापरिच्छेद्यं विषूवृतं विष्वक् सर्वत्र परिवर्तमानं पंचरश्मिं पंचर्तुरश्मिं। हेमंतशिशिरयोः समासेनर्तवः पंच। तथा च श्रूयते। द्वादश मासाः पंचर्तवो हेमंतशिशिरयोः समासेन। ऐ० ब्रा० १. १.। इति। मनसा युज्यमानं मनोमात्रेण युज्यमानं। तं प्रसिद्धं रथं जिन्वथः। अस्मान्प्रति प्रेरयथः॥

दिव्य१न्यः सदनं चक्र उच्चा पृथिव्यामन्यो अध्यंतरिक्षे।
तावस्मभ्यं पुरुवारं पुरुक्षुं रायस्पोषं वि ष्यतां नाभिमस्मे॥४॥
दिवि। अन्यः। सदनं। चक्रे। उच्चा। पृथिव्यां। अन्यः। अधि। अंतरिक्षे।
ता। अस्मभ्यं। पुरुऽवारं। पुरुऽक्षुं। रायः। पोषं। वि। स्यतां। नाभिं। अस्मे इति॥४॥

अन्ययोरेकः पूषोच्चा उच्चैरत्युच्छ्रिते दिवि द्युलोके सदनं स्थानं चक्रे। चकार। अन्योऽपरः सोमः पृथिव्यामोषधिरूपेणाध्यंतरिक्षेऽन्तरिक्षे च चंद्ररूपेण सदनं चक्रे। तौ सोमापूषणौ युवां पुरुवारं बहुभिर्वरणीयं पुरुक्षुं बहुकीर्तिं रायस्पोषं धनस्य पुष्टिं। पश्वात्मकं धनमित्यर्थः। तथा च ब्राह्मणं पशवो वै रायस्पोष इति। अस्मे अस्माकं नाभिं विश्वस्य भोगस्य हेतुभूतमस्मभ्यं विष्यतां। विमुंचतां। प्रयच्छतामित्यर्थः॥

विश्वान्यन्यो भुवना जजान विश्वमन्यो अभिचक्षाण एति।
सोमापूषणाववतं धियं मे युवाभ्यां विश्वाः पृतना जयेम॥५॥
विश्वानि। अन्यः। भुवना। जजान। विश्वं। अन्यः। अभिऽचक्षाणः। एति।
सोमापूषणौ। अवतं। धियं। मे। युवाभ्यां। विश्वाः। पृतनाः। जयेम॥५॥

हे सोमापूषणौ अन्यो युवयोरेकः सोमो विश्वानि भुवना भुवनानि भूतानि जजान। अजनयत्। तथा च मंत्रः। सोमः पवते जनिता मतीनां। ऋग्वे॰ ९. ९६. ५। इति। अन्योऽपरः पूषादित्यो विश्वमभिचक्षाणोऽभिपश्यन्नेति। गच्छति। तौ युवां सोमापूषणौ मे धियं कर्म॥ धीः शचीति कर्मनामसु पाठात्॥ अवतं। रक्षतं। किंच वयं युवाभ्यां हेतुभ्यां विश्वाः पृतनाः सर्वाः शत्रुसेना जयेम। अभिभवेम॥

धियं॑ पू॒षा जि॑न्वतु विश्वमि॒न्वो र॒यिं सोमो॑ रयि॒पति॑र्दधातु।
अव॑तु दे॒व्यदि॑तिरन॒र्वा बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥६॥

धिय॑म्। पू॒षा। जि॒न्व॒तु॒। वि॒श्व॒म्ऽइ॒न्वः। र॒यिम्। सोमः॑। र॒यि॒ऽपतिः॑। द॒धा॒तु॒।
अव॑तु। दे॒वी। अदि॑तिः। अ॒न॒र्वा। बृ॒हत्। व॒दे॒म॒। वि॒दथे॑। सु॒ऽवीराः॑ ॥६॥

पूषादित्यो विश्वमिन्वो विश्वस्य प्रीणयिता धियमस्माकं कर्म जिन्वतु। तर्पयतु। रयिपतिर्धनपतिः सोमो रयिं धनं दधातु। अस्मभ्यं ददातु। किंच देवी द्योतमानानर्वाप्रत्यृता केनापि प्रातिकूल्यमप्रापितादितिरवतु। अस्मान् रक्षतु। अन्यद्गतं॥ ॥६॥

वायो ये त इत्येकविंशत्यृचं नवमं सूक्तं गार्त्समदं गायत्रं। अंबितम इति षोडश्या तृचस्यादितो द्वे अनुष्टुभौ तृतीया बृहती। वायो ये त इत्यादिके द्वे ऋचौ वायव्यौ। शुक्रस्येत्यैंद्रवायवी। अयं वां मित्रावरुणेति पंचानां मित्रावरुणावश्विनाविंद्रो विश्वे देवाः सरस्वतीति क्रमेण देवताः। प्रेता यज्ञस्येत्यंत्यमृचौ ब्राह्मणसूत्रयोर्हविर्धानप्रवर्तने द्यावापृथिव्यभिधानत्वेन च विनियुक्तत्वात् द्यावापृथिव्यौ हविर्धानदेवत्यौ वा। अपि च हव्यवाहनमिति पादोऽग्निदेवत्यो वा। तथा चानुक्रांतं। वायो सैका गायत्रमुक्ता देवताः प्रउगगाथं तु तृचेऽत्यैंद्रवायवी द्यावापृथिव्योऽत्यमृचौ हाविर्धानौ वा तृतीयः पादो वाग्नेयोऽनितमेऽनुष्टुभौ बृहती चेति॥ पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि प्रउगेऽत्यतृचवर्जमेतत्सूक्तं। वायव्यतृचस्य वायो ये ते सहस्रिण इत्याद्ये द्वे ऋचौ ऐंद्रवायवतृचस्य शुक्रस्याद्येत्येषा तृतीया। तथा च सूत्रितं। वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आ गहीत्येकोभा देवा दिविस्पृशेति द्वे शुक्रस्याद्य गवाशिर इत्येकायं वां मित्रावरुणेति पंच तृचाः। आ॰ ७. ६। इति॥ चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणशस्त्रेऽयं वां मित्रावरुणेति पञ्च स्तोत्रियसंज्ञकः। चतुर्विंशे होताजनिष्टेति खंडे सूत्रितं। अयं वां मित्रावरुणा पुरूरुणा चिद्ध्यस्ति। आ॰ ७. २। इति॥ आभिप्लविकेष्वह्ःसु प्रातःसवने मैत्रावरुणशस्त्रेऽयमेव तृचः पंचदशादिस्तोमनिमित्तमावापनीयः। अयं वां मित्रावरुणा नो मित्रावरुणेति तृचाः। आ॰ ७. ५। इति सूत्रितत्वात्॥ आद्या मैत्रावरुणग्रहस्यानुवाक्या। सूत्रितं च। मैत्रावरुणस्य अयं वां मित्रावरुणा। आ॰ ५. ५। इति॥ प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छंदसि गोमदू षु इति तृचो विनियुक्तः। गोमदू षु नासत्येति तृचाः। आ॰ ४. १५. इति सूत्रितत्वात्॥ अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्र इंद्रो अंग महद्भयमिति तृचः। अतिरात्रे पर्यायाणामिति खंडे सूत्रितं। इंद्रो अंग महद्भयमभि ष्वं प्र वाच। आ॰ ६. ४.। इति॥ आग्रयणे वैश्वदेवस्य हविषो विश्वे देवास इत्यनुवाक्या। आग्रयणमिति खंडे सूत्रितं। विश्वे देवास आ गत ये के च ज्मा महिनो अहिमायाः। आ॰ २. ९। इति॥ दशरात्रे प्रथमेऽहनि प्रउगशस्त्रेऽंबितमे नदीतम इति सारस्वतः सप्तमस्तृचः। चतुर्थेऽहनीति खंडे सूत्रितं। अंबितमे नदीतम इत्यानुष्टुभं प्रउगं। आ॰ ७. ११.। इति॥ व्यूढे दशरात्रे प्रथमे छंदोमे वैश्वदेवशस्त्रे प्रेता यज्ञस्य शंभुवेति द्यावापृथिव्यनिविद्धानीयस्तृचः। अथ छंदोमा इति खंडे सूत्रितं। प्रेता यज्ञस्य शंभुवा युवामिदा वृणीमहे इति तृचाः। आ॰ ८. ९। इति॥ हविर्धानप्रवर्तनेऽप्ययं तृचो विनियुक्तः। सूत्रितं च। प्रेता यज्ञस्य शंभुवा यमे इव यतमाने यदैत। आ॰ ४. ९. ऐ॰ ब्रा॰ १. २९.। इति॥

वायो॒ ये ते॑ सह॒स्रिणो॒ रथा॑स॒स्तेभि॒रा ग॑हि। नि॒युत्वा॒न्त्सोम॑पीतये ॥१॥

वायो॒ इति॑। ये। ते॒। स॒ह॒स्रिणः॑। रथा॑सः। तेभिः॑। आ। ग॒हि॒। नि॒युत्वा॑न्। सोम॑ऽपीतये ॥१॥

हे वायो ते त्वदीया ये सहस्रिणः सहस्रसंख्याका रथासो रथाः तेभिस्तैर्नियुत्वान् नियुद्भिर्युक्तस्त्वं सोमपीतये सोमपानार्थमागहि। आगच्छ। नानारूपत्वाद्वायोः सर्वाभिर्विभूतिभिः सहागमनं प्रार्थ्यत इति भावः॥

नियुत्वान्वायवा गह्ययं शुक्रो अयामि ते । गंतासि सुन्वतो गृहं ॥२॥

नियुत्वान् । वायो इति । आ । गहि । अयं । शुक्रः । अयामि । ते । गंता । असि । सुन्वतः । गृहं ॥२॥

हे वायो नियुत्वान् । नियुतो वाहनानि वायोः । तैर्युक्तस्त्वमागहि । आगच्छ । अयं शुक्रो दीप्यमानः सोमस्ते तुभ्यमयामि । नियतो गृहीत आसीत ॥ यमः कर्मणि लुङ् ॥ सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य गृहं गंतासि । याता भवसि ॥

शुक्रस्याद्य गवाशिर इंद्रवायू नियुत्वतः । आ यातं पिबतं नरा ॥३॥

शुक्रस्य । अद्य । गोऽआशिरः । इंद्रवायू इति । नियुत्वंतः । आ । यातं । पिबतं । नरा ॥३॥

हे नरा नेतारौ हे इंद्रवायू अद्यास्मिन्नहनि नियुत्वतः ॥ विभक्तिव्यत्ययः ॥ नियुत्वंतौ युवां गवाशिरः । गव्यं पय आशीराश्रयणसाधनं यस्य तस्य शुक्रस्य दीप्तस्य सोमस्य पानार्थमायातं । आगच्छतं । आगत्य सोमं पिबतं ॥

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतं हवं ॥४॥

अयं । वां । मित्रावरुणा । सुतः । सोमः । ऋतऽवृधा । मम । इत् । इह । श्रुतं । हवं ॥४॥

मित्रावरुणा हे मित्रावरुणौ वां युवाभ्यामयं सोमः सुतः । अभिषुतः । ऋतावृधा हे सत्यस्य यज्ञस्य वा वर्धकौ ममेत ममैव हवमाह्वानं श्रुतं । शृणुतं ॥

राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे । सहस्रस्थूण आसाते ॥५॥

राजानौ । अनभिऽद्रुहा । ध्रुवे । सदसि । उत्ऽतमे । सहस्रऽस्थूणे । आसाते इति ॥५॥

राजानावीश्वरौ दीप्यमानौ वा अनभिद्रुहानभिद्रोग्धारौ यौ मित्रावरुणौ ध्रुवे स्थिर उत्तम उत्कृष्टे सहस्रस्थूणे सदसि स्थाने आसाते उपविशतः तावागच्छतमिति शेषः ॥ ॥ १ ॥

ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरं ॥६॥

ता । संऽराजा । घृतासुती इति घृतऽआसुती । आदित्या । दानुनः । पती इति । सचेते इति । अनवऽह्वरं ॥६॥

सम्राजावात्मयैव सर्वेषां शास्तारौ घृतासुती घृतान्नौ । तद्वां महित्वं घृतान्नावस्त्विति मंत्रांतरात । ऋक्सं० ६. ६७. ८. । आदित्यादितेः पुत्रौ दानुनस्पती दानुनो दानस्य देवस्य वा धनस्य पती स्वामिनौ । ता तौ मित्रावरुणावनवह्वरमकुटिलं यजमानं सचेते । सेवेते ॥

गोमदू षु नासत्याश्वावद्यातमश्विना । वर्ती रुद्रा नृपाय्यं ॥७॥

गोऽमत् । ऊं इति । सु । नासत्या । अश्वऽवत् । यातं । अश्विना । वर्तिः । रुद्रा । नृऽपाय्यं ॥७॥

अश्विना हे अश्विनौ हे नासत्यानृतभाषणरहितौ हे रुद्रा रोरूयमाणौ द्रवंतौ युवां वर्तिर्मार्गः । तेन मार्गेण रथेन वा नृपाय्यं नृभिर्नेतृभिर्देवैः पातव्यं सोमं गोमत गोमद्यथा भवति तथा अश्ववत् अश्ववद्य यथा भवति तथा यातं । गच्छतं । ऊ स्विति पूरणौ ॥

न यत्परो नांतर आदधर्षद्वृषण्वसू । दुःशंसो मर्त्यो रिपुः ॥८॥

न । यत् । परः । न । अंतरः । आऽदधर्षत् । वृषण्वसू इति वृषण्ऽवसू । दुःऽशंसः । मर्त्यः । रिपुः ॥८॥

वृषण्वसू हे धनस्य वर्षितारौ यद्धनं परो दूरस्थो दुःशंसः शंसनायोग्यो मर्त्यो रिपुर्यन्नादधर्षत् तथोक्तलक्षणोऽन्तरोऽन्तरः समीपवर्ती मर्त्यो रिपुरपि यन्नादधर्षत् तद्धनमावोळ्हमिति शेषः ॥

ता न आ वोळ्हमश्विना रयिं पिशंगसंदृशं । धिष्ण्या वरिवोविदं ॥९॥

ता । नः । आ । वोळ्हं । अश्विना । रयिं । पिशंगऽसंदृशं । धिष्ण्या । वरिवःऽविदं ॥९॥

हे धिष्ण्या धिषणार्हावश्विना हे अश्विनौ ता तौ युवां पिशंगसंदृशं नानारूपं वरिवोविदं धनस्य लंभकं रयिं पशुं नोऽस्मभ्यमावोळ्हं । आवहतं ॥

इंद्रो अंग महद्भयमभी षदप चुच्यवत् । स हि स्थिरो विचर्षणिः ॥१०॥

इंद्रः । अंग । महत् । भयं । अभि । सत् । अप । चुच्यवत् । सः । हि । स्थिरः । विऽचर्षणिः ॥१०॥

इंद्रो महदधिकमभीषदभिभवद्भयं भयकारणमपचुच्यवत् । अपच्यावयेत् । हि यस्मात्कारणात् स स्थिरः केनापि चालयितुमशक्यो विचर्षणिर्विश्वस्य द्रष्टा ॥ ॥८॥

इंद्रश्च मृळयाति नो न नः पश्चादघं नशत् । भद्रं भवाति नः पुरः ॥११॥

इंद्रः । च । मृळयाति । नः । न । नः । पश्चात् । अघं । नशत् । भद्रं । भवाति । नः । पुरः ॥११॥

इंद्रश्च परमैश्वर्यवानिंद्रश्चेत् नोऽस्मान् मृळयाति सुखयेत् । पश्चात् पृष्ठतो नोऽस्मानघं दुरितं न नशत् । न प्राप्नोति । नोऽस्माकं पुरः पुरस्ताद्भद्रं कल्याणं च भवाति । भवति ॥

इंद्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून्विचर्षणिः ॥१२॥

इंद्रः । आशाभ्यः । परि । सर्वाभ्यः । अभयं । करत् । जेता । शत्रून् । विऽचर्षणिः ॥१२॥

विचर्षणिर्विविधं द्रष्टा जेता शत्रूनसुरान् जेता ॥ तृन्नतत्वात् षष्ठ्यभावः ॥ इंद्रः परमैश्वर्यवान् सर्वाभ्य आशाभ्यो दिग्भ्योऽस्माकमभयं करत् । करोतु ॥ परीति पंचमीद्योतकः ॥

विश्वे देवास आ गत शृणुता म इमं हवं । एदं बर्हिर्नि षीदत ॥१३॥

विश्वे । देवासः । आ । गत । शृणुत । मे । इमं । हवं । आ । इदं । बर्हिः । नि । सीदत ॥१३॥

हे विश्वे देवा आ गत । इहागच्छत । मे मदीयमिमं हवमाह्वानं शृणुत । इदं बर्हिरस्मिन्बर्हिष्यानिषीदत । उपविशत ॥

तीव्रो वो मधुमाँ अयं शुनहोत्रेषु मत्सरः । एतं पिबत काम्यं ॥१४॥

तीव्रः । वः । मधुऽमान् । अयं । शुनऽहोत्रेषु । मत्सरः । एतं । पिबत । काम्यं ॥१४॥

हे विश्वे देवाः तीव्रस्तीव्रमदो मधुमान् रसवान् मत्सरो मदकरः सोमोऽयं वो युष्मदर्थं शुनहोत्रेषु गृत्समदेष्वस्मासु स्थितः । काम्यं कमनीयमेतं सोमं पिबत ॥

इंद्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवं ॥१५॥

इंद्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः । विश्वे । मम । श्रुत । हवं ॥१५॥

हे इंद्रज्येष्ठा इंद्रपुरोगमा मरुद्गणा मरुत्समूहरूपाः पूषरातयः पूषाख्यो देवो रातिर्दाता येषां ते पूषरातयो देवास हे द्योतमाना देवा विश्वे सर्वे यूयं मम मदीयं हवमाह्वानं श्रुत । शृणुत ॥ इंद्रज्येष्ठादयः संबोधनांताः । ऋग्वे० १ २३ ८. ॥ ॥९॥

अंबितमे नदीतमे देवितमे सरस्वति ।

अप्रशस्ता इव स्मसि प्रशस्तिमंब नस्कृधि ॥१६॥

अंबिऽतमे । नदीऽतमे । देविऽतमे । सरस्वति ।

अप्रशस्ताःऽइव । स्मसि । प्रऽशस्तिं । अंब । नः । कृधि ॥१६॥

अंबितमे मातॄणां श्रेष्ठे नदीतमे नदीनां श्रेष्ठे देवितमे देवीनां श्रेष्ठे हे सरस्वति अप्रशस्ता इव धनाभावादसमृद्धा इव वयं स्मसि । भवामः । अत हे मातः सरस्वति नोऽस्मभ्यं प्रशस्तिं धनसमृद्धिं कृधि । कुरु । प्रयच्छेत्यर्थः ॥

त्वे विश्वा सरस्वति श्रितायूंषि देव्यां ।

शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढि नः ॥१७॥

त्वे इति । विश्वा । सरस्वति । श्रिता । आयूंषि । देव्यां ।

शुनऽहोत्रेषु । मत्स्व । प्रऽजां । देवि । दिदिड्ढि । नः ॥१७॥

हे सरस्वति देव्या द्योतमानायां त्वे त्वयि विश्वा विश्वानि सर्वाण्यायूंष्यन्नानि । आयुः सूनृतेत्यन्ननामसु पाठात । श्रिता । आश्रितानि । सा त्वं शुनहोत्रेषु गृत्समदेष्वस्मासु विषयेषु मत्स्व । सोमपानेन तृप्य । किंच हे देवि सरस्वति नोऽस्मभ्यं प्रजां दिदिड्ढि । पुत्रान्देहि ॥

इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति ।

या ते मन्म गृत्समदा ऋतावरि प्रिया देवेषु जुह्वति ॥१८॥

इमा । ब्रह्म । सरस्वति । जुषस्व । वाजिनीऽवति ।

या । ते । मन्म । गृत्सऽमदाः । ऋतऽवरि । प्रिया । देवेषु । जुह्वति ॥१८॥

वाजिनीवत्यन्नवति ऋतावर्युदकवति हे सरस्वति इमानीमानि ब्रह्म ब्रह्माणि हवींषि जुषस्व । स्वीकुरु । या यानि मन्म मननीयानि देवेषु प्रिया देवानां मध्ये तुभ्यं प्रियाणि देवेषु प्रियाणि वा ते त्वदर्थं गृत्समदा जुह्वति ॥

प्रेतां यज्ञस्य शंभुवा युवामिदा वृणीमहे । अग्निं च हव्यवाहनं ॥१९॥

प्र । इतां । यज्ञस्य । शंऽभुवा । युवां । इत् । आ । वृणीमहे । अग्निं । च । हव्यऽवाहनं ॥१९॥

यज्ञस्य यागस्य शंभुवा सुखसंपादके हविर्धाने अनसी तद्रूपे द्यावापृथिव्यौ वा प्रेतां । उत्तरवेदेः पश्चिमभागं प्रति प्रगच्छतां । अथ प्रत्यक्षकृतः । युवामित् युवामेवावृणीमहे । प्रार्थयामहे । हव्यवाहनमग्निं चावृणीमहे । अपिरत्र निपातभागिति ॥

द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशं । यज्ञं देवेषु यच्छतां ॥२०॥

द्यावा। नः। पृथिवी इति। इमं। सिध्रं। अद्य। दिविऽस्पृशं। यज्ञं। देवेषु। यच्छतां ॥२०॥

द्यावा द्यौः पृथिवी चोभे सिध्रं स्वर्गादेः साधकं दिविस्पृशं देवान् गच्छन्तं नोऽस्माकमिमं यज्ञं देवेषु यच्छतां। नियच्छतां ॥

आ वामुपस्थमद्रुहा देवाः सीदंतु यज्ञियाः। इहाद्य सोमपीतये ॥२१॥

आ। वां। उपऽस्थं। अद्रुहा। देवाः। सीदंतु। यज्ञियाः। इह। अद्य। सोमऽपीतये ॥२१॥

अद्रुहा द्रोहवर्जिते हे हविर्धाने तद्रूपे द्यावापृथिव्यौ वा वां युवयोरुपस्थं समीपं यज्ञिया यज्ञार्हा देवा इह यज्ञेऽद्यास्मिन्नहनि सोमपीतये सोमपानायासीदंतु ॥ ॥१०॥

कनिक्रददिति तृचं दशमं सूक्तं। अत्रेयमनुक्रमणिका। कनिक्रदत्तृचमिति। मडलद्रष्टा गृत्समदोऽस्य ऋषिः। त्रिष्टुप् छंदः। कपिंजलरूपीन्द्रो देवता ॥ वयसाममनोज्ञा वाचं श्रुत्वैतत्सूक्तं जपेत। सूत्रितं च। वयसाममनोज्ञा वाचः श्रुत्वा कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्तं जपेत। आ० गृ० ३ १० ९। इति ॥

कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावं।

सुमंगलश्च शकुने भवासि मा त्वा का चिदभिभा विश्व्या विदत् ॥१॥

कनिक्रदत्। जनुषं। प्रऽब्रुवाणः। इयर्ति। वाचं। अरिताऽइव। नावं।

सुऽमंगलः। च। शकुने। भवासि। मा। त्वा। का। चित्। अभिऽभा। विश्व्या। विदत् ॥१॥

कनिक्रदत् पुनःपुनः शब्दायमानो जनुषं जनिष्यमाणमर्थं प्रब्रुवाणः सूचयन् कपिंजलोऽरितेव कर्णधार इव नावं वाचमियर्ति। प्रेरयति। अथ प्रत्यक्षकृतः। हे शकुने कपिंजल त्वं सुमंगलः प्रकृष्टकल्याणश्च भवासि। भव। किंच काचिदभिभा कोऽप्यभिभवस्त्वा त्वां विश्व्या विश्वतः सर्वासु दिक्षु मा विदत्। मा प्रापत्। शकुनिः शक्नोत्युन्नेतुमात्मानं। न्यक्रदीज्जन्म प्रब्रुवाणो यथास्य शब्दस्तथा नामेरयति वाचमीरयितेव नावं। सुमंगलश्च शकुने भव कल्याणमंगलो मंगलं गिरतेर्गृणात्यर्थे गिरत्यनर्थानिति वेति यास्कः। नि० ९ ४ ॥

मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान्वीरो अस्ता।

पित्र्यामनु प्रदिशं कनिक्रदत्सुमंगलो भद्रवादी वदेह ॥२॥

मा। त्वा। श्येनः। उत्। वधीत्। मा। सुऽपर्णः। मा। त्वा। विदत्। इषुऽमान्। वीरः। अस्ता।

पित्र्यां। अनु। प्रऽदिशं। कनिक्रदत्। सुऽमंगलः। भद्रऽवादी। वद। इह ॥२॥

हे शकुने त्वा त्वां श्येनः प्रबलः पक्षिविशेषो मा वधीत्। मा हिंसीत्। उत अपि च सुपर्णो गरुडः पक्षी मा वधीत्। तथेषुमान् बाणवान्वीरोऽस्ता शराणां क्षेप्ता धन्वी त्वा त्वां मा विदत्। मा प्रापत्। किंच पित्र्यां प्रदिशं दक्षिणां दिशमनु। दक्षिणस्यां दिशीत्यर्थः। कनिक्रदत् पुनःपुनः शब्दं कुर्वन् सुमंगलः कल्याणमंगलो भद्रवादी शोभनवादी सन् इहास्मद्विषये वद। मंगलं सूचय ॥

अव क्रंद दक्षिणतो गृहाणां सुमंगलो भद्रवादी शकुंते।

मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः ॥३॥

अव। क्रंद। दक्षिणतः। गृहाणां। सुऽमंगलः। भद्रऽवादी। शकुंते।

मा। नः। स्तेनः। ईशत। मा। अघऽशंसः। बृहत्। वदेम। विदथे। सुऽवीराः ॥३॥

शकुंते हे कपिंजल त्वं सुमंगलो भद्रवादी च सन् गृहाणां दक्षिणतो दक्षिणस्यां दिश्यवक्रंद । शब्दं कुरु । दक्षिणतः शब्दायमानः शकुंतो मंगलसूचको हि । नोऽस्माकं स्तेनस्तस्करो मेशत । मेशिष्ट । अघशंसोऽनर्थकानां शंसकोऽपि मेशिष्ट । उत्तमः पादो व्याख्यातचरः ॥ ॥११॥

प्रदक्षिणिदिति तृचमेकादशं सूक्तं गार्त्समदं जागतं । तथा चानुक्रांतं । प्रदक्षिणिज्जागतं मध्येऽतिशक्वर्यष्टिर्वेति । द्वितीयातिशक्वरी अष्टिर्वा । इतरे जगत्यौ । कपिंजलरूपींद्रो देवता । वयसाममनोज्ञां वाचं श्रुत्वा प्रदक्षिणिदिति सूक्तं जपेत । सूत्रं प्रागेवोदाहृतं ॥

प्रदक्षिणिदभि गृणंति कारवो वयो वदंत ऋतुथा शकुंतयः ।
उभे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानु राजति ॥१॥
प्रऽदक्षिणित् । अभि । गृणंति । कारवः । वयः । वदंतः । ऋतुऽथा । शकुंतयः ।
उभे इति । वाचौ । वदति । सामगाःऽइव । गायत्रं । च । त्रैस्तुभं । च । अनु । राजति ॥१॥

शकुंतयः कपिंजला ऋतुथा काले काले वयोऽन्नं वदंतः सूचयंतः कारवः स्तोतार इव प्रदक्षिणित् प्रदक्षिणमभिगृणंति । अभिवदंतु ॥ बहुवचनं पूजार्थं ॥ किंच उभे वाचौ गानं च शंसनं च सामगा गायत्रं त्रैष्टुभं च सामनी इव शकुंतिर्वदति । अनुराजति च । शृण्वतोऽनुरक्तान्करोतीत्यर्थः ॥

उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि ।
वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमा वद विश्वतो नः शकुने पुण्यमा वद ॥२॥
उद्गाताऽइव । शकुने । साम । गायसि । ब्रह्मपुत्रःऽइव । सवनेषु । शंससि ।
वृषाऽइव । वाजी । शिशुऽमतीः । अपिऽइत्य । सर्वतः । नः । शकुने । भद्रं । आ । वद । विश्वतः । नः । शकुने । पुण्यं । आ । वद ॥२॥

शकुने हे कपिंजल उद्गातेव साम यथोद्गाता साम गायति तथा त्वं गायसि । गानस्वनं करोषि । ब्रह्मपुत्र इव यथा ब्राह्मणाच्छंसी सवनेषु शस्त्राणि शंसति तथा त्वं कालेषु शंससि । शंसनस्वरं करोषि । वृषेव वाजी सेचनसमर्थोऽश्वः शिशुमतीर्वडवा अपीत्याभिगत्य यथा शब्दं करोति तथा त्वमपि वद । शिष्टं स्पष्टं ॥

आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः ।
यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥३॥
आऽवदन् । त्वं । शकुने । भद्रं । आ । वद । तूष्णीं । आसीनः । सुऽमतिं । चिकिद्धि । नः ।
यत् । उत्ऽपतन् । वदसि । कर्करिः । यथा । बृहत् । वदेम । विदथे । सुऽवीराः ॥३॥

शकुने हे कपिंजल आवदन् शब्दं कुर्वंस्त्वं भद्रमावद । मंगलं वद । तूष्णीमासीनस्तूष्णीं तिष्ठन्नपि नोऽस्माकं सुमतिं चिकिद्धि । बुध्यस्व । यद्यदोत्पतन् वदसि तदा कर्करिर्यथा कर्करिरिव वदसि । कर्करिर्वाद्यविशेषः । अन्यद्व्याख्यातचरं ॥ ॥१२॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वितीयाष्टके द्वितीये मंडले चतुर्थोऽनुवाकः समाप्तं च द्वितीयं मंडलं ॥

## ॥ अथ तृतीयं मंडलं ॥

वैश्वामित्रे तृतीये पंचानुवाकाः। तत्र प्रथमेऽनुवाके द्वादश सूक्तानि। तत्र सोमस्येति त्रयोविंशत्यृचं प्रथमं सूक्तं। तथा चानुक्रांतं। सोमस्य त्र्यधिकेति। अस्य मंडलद्रष्टा विश्वामित्र ऋषिः। अनुक्तत्वात् त्रिष्टुप् छंदः। मंडलादिष्वाग्नेयमिति परिभाषयाग्निर्देवता ॥ प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छंदसि विनियोगः। तथा च सूत्रं। सोमस्य मा तवसं प्रत्यग्निरिति त्रीणि। आ॰ ४ १३। इति ॥

सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै।
देवाँ अच्छा दीद्यद्युंजे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥१॥
सोमस्य। मा। तवसं। वक्षि। अग्ने। वह्निं। चकर्थ। विदथे। यजध्यै।
देवान्। अच्छ। दीद्यत्। युंजे। अद्रिं। शम्ऽआये। अग्ने। तन्वं। जुषस्व ॥१॥

हे अग्ने त्वं विदथे यज्ञे यजध्यै यष्टुं सोमस्य वह्निं वोढारं यं मा चकर्थ कृतवानसि। तं मा तवसं तवस्विनं बलिनं वक्षि। कामयस्व। किंच हे अग्ने देवानच्छाभि दीद्यत् दीप्यमानोऽहमद्रिं ग्रावाणं युंजे। अभिषवणाय युनज्मि। शमाये। शाम्यामि च। तथा च मंत्रांतरं। ऋतेन देवः सविता शमायते। ऋसं॰ ८ ८६ ५। इति। यद्वा शमाये। स्तौमि। शशमानो जरतीति स्तुतिकर्मसु पाठात्। तथा च मंत्रांतरं। सो अग्न ईजे शशमे च मर्तः। ऋसं॰ ६ १ ९। इति। किंच हे अग्ने तन्वं शरीरं जुषस्व। रक्षार्थं सेवस्व। यद्वा कर्माणि तन्वंतं मा सेवस्वेत्यर्थः ॥

प्रांचं यज्ञं चकृम वर्धतां गीः समिद्भिरग्निं नमसा दुवस्यन्।
दिवः शशासुर्विदथा कवीनां गृत्साय चित्तवसे गातुमीयुः ॥२॥
प्रांचं। यज्ञं। चकृम। वर्धतां। गीः। समित्ऽभिः। अग्निं। नमसा। दुवस्यन्।
दिवः। शशासुः। विदथा। कवीनां। गृत्साय। चित्। तवसे। गातुं। ईयुः ॥२॥

हे अग्ने वयं यज्ञं प्रांचं प्रकर्षेण गच्छंतं चकृम। अकार्ष्म। गीर्मदीया स्तुतिर्वर्धतां। एधतां। अग्निं समिद्भिर्नमसा हविषा च दुवस्यन्। अस्मदीयाः परिचरेयुः। किंच दिवो द्युलोकादागत्य देवाः कवीनां स्तोतॄणां विदथा ज्ञानानि स्तोत्राणि वा शशासुः। अन्वशिषन्। अपि च गृत्साय। गृणातिरिह कप्। स्तोतव्यायाग्नये तवसे वृद्धाय गातुं स्तोतुमीयुरिच्छंति। स्तोतार इच्छंति च। चिदिति चार्थे ॥

मयो दधे मेधिरः पूतदक्षो दिवः सुबंधुर्जनुषा पृथिव्याः।
अविंदन्नु दर्शतमप्स्व१ंतर्देवासो अग्निमपसि स्वसॄणां ॥३॥
मयः। दधे। मेधिरः। पूतऽदक्षः। दिवः। सुऽबंधुः। जनुषा। पृथिव्याः।
अविंदन्। ऊं इति। दर्शतं। अपऽसु। अंतः। देवासः। अग्निं। अपसि। स्वसॄणां ॥३॥

मेधिरो मेधावान् प्राज्ञः पूतदक्षः शुद्धबलो जनुषा जन्ममात्रेण सुबंधुः शोभनबंधुः। स्वत एव बंधुरिति यावत्। योऽग्निर्दिवो द्युलोकस्य पृथिव्या भूमेश्च मयः सुखं दधे विदधाति। देवानां मनुष्याणां च सुखं करोतीति यावत्। तं दर्शतं दर्शनीयमग्निं देवासो देवाः स्वसॄणां सरणशीलानां नदीनामप्स्वंतर्गूढं स्थितमपसि यज्ञवहनरूपे कर्मणि निमित्ते ॥ उ इति पूरणः ॥ अविंदन्। लब्धवंतः ॥

अवर्धयन्त्सुभगं सप्त यह्वीः श्वेतं जज्ञानमरुषं महित्वा ।
शिशुं न जातमभ्यारुरश्वा देवासो अग्निं जनिमन्वपुष्यन् ॥४॥
अवर्धयन् । सुऽभगं । सप्त । यह्वीः । श्वेतं । जज्ञानं । अरुषं । महिऽत्वा ।
शिशुं । न । जातं । अभि । आरुः । अश्वाः । देवासः । अग्निं । जनिमन् । वपुष्यन् ॥४॥

सप्त सर्पणशीला यह्वीर्यह्व्यो महत्यो नद्यः सुभगं शोभनधनं श्वेतं शुभ्रं जज्ञानं जातं महित्वा महत्त्वेनारु-पमारोचमानमप्सु स्थितमग्निमवर्धयन् । स्वकार्यभूताभिरोषधीभिर्वृद्धिं प्रापितवत्यः । यद्वा दिव्यमग्निमापो वर्धयन्त्यविंधनत्वात्तस्य । किंच शिशुं न जातं यथा जातं शिशुमश्वा वडवा अभ्यारुः । अभिगच्छंति । तथा नद्य उत्पन्नमग्निमभ्यारुः । अभिजग्मुः । अपि च देवासो देवा अग्निं जनिमन् जन्मन्युदके वा वपुष्यन् । वपु-र्दीप्तमकुर्वन् ॥

शुक्रेभिरंगै रज आततन्वान् क्रतुं पुनानः कविभिः पवित्रैः ।
शोचिर्वसानः पर्यायुरपां श्रियो मिमीते बृहतीरनूनाः ॥५॥
शुक्रेभिः । अंगैः । रजः । आऽततन्वान् । क्रतुं । पुनानः । कविऽभिः । पवित्रैः ।
शोचिः । वसानः । परि । आयुः । अपां । श्रियः । मिमीते । बृहतीः । अनूनाः ॥५॥

अग्निः शुक्रेभिः शुक्रैरंगैस्तेजोभी रजोऽन्तरिक्षमाततन्वान् आतन्वन् व्याप्नुवन् क्रतुं कर्मणां कर्तारं यजमानं कविभिः क्रान्तप्रज्ञैः स्तोतृभिर्वा पवित्रैः शोधकैस्तेजोभिः पुनानः शोधयन् शोचिर्दीप्तिं वस्त्रस्थानीयं परि परितो वसान आच्छादयन् अपामपस्यतां कर्मवतामायुरन्नं बृहतीः प्रभूता अनूनाः संपूर्णाः श्रियः संपदश्च मिमीते । करोति ॥ ॥१३॥

वव्राजा सीमनदतीरदब्धा दिवो यह्वीरवसाना अनग्नाः ।
सना अत्र युवतयः सयोनीरेकं गर्भं दधिरे सप्त वाणीः ॥६॥
वव्राज । सीं । अनदतीः । अदब्धाः । दिवः । यह्वीः । अवसानाः । अनग्नाः ।
सनाः । अत्र । युवतयः । सऽयोनीः । एकं । गर्भं । दधिरे । सप्त । वाणीः ॥६॥

अनदतीरभक्षयतीरदब्धा अहिंसिता मातृभूता अपोऽग्निः सीं सर्वतो वव्राज । व्रजति । अग्निरपां शोषकः न चापः शमयति तदुभयमिह नास्तीत्युक्तं भवति । कीदृश्यस्ताः । दिवो यह्वीः । अंतरिक्षस्यापत्यभूताः । अवसानाः । वस्त्रमनाच्छादयंत्यः । वस्त्रस्थानीयस्य जलस्य विद्यमानत्वात् । अत एवानग्नाः । किंच ता अपि सनाः सनातन्यो युवतयो नित्यतरुण्यः । नित्यवृद्धा इत्यर्थः । सयोनीः समानमंतरिक्षं स्थानं यासां ताः सप्त वाणीर्नद्य एकमग्निं गर्भं गर्भस्थ दधिरे । दधते ॥

स्तीर्णा अस्य संहतो विश्वरूपा घृतस्य योनौ स्रवथे मधूनां ।
अस्थुरत्र धेनवः पिन्वमाना मही दस्मस्य मातरा समीची ॥७॥
स्तीर्णाः । अस्य । सं्ऽहतः । विश्वऽरूपाः । घृतस्य । योनौ । स्रवथे । मधूनां ।
अस्थुः । अत्र । धेनवः । पिन्वमानाः । मही इति । दस्मस्य । मातरा । समीची इति संऽईची ॥७॥

घृतस्योदकस्य योनौ गर्भस्थानेऽन्तरिक्षे संहृतः पुंजीभूताः ॥ हंतेः क्विप ॥ विश्वरूपा नानारूपाः स्तीर्णाः सर्वत्र प्रसृता अस्याग्ने रश्मयो मधूनामुदकानां स्रवथ स्रवणं सत्यस्थुः । तिष्ठंति । पिन्वमानाः पूर्यमाणा अनाप्यावापो धेनवः सर्वेषां प्रीणयित्र्योऽभवन । समीची समंचत्यौ शोभमाने मही महत्यौ द्यावापृथिव्यौ दस्मस्य दर्शनीयस्याग्नेर्मातरा मातरौ भवतः ॥

बभ्राणः सूनो सहसो व्यद्यौद्दधानः शुक्रा रभसा वपूंषि ।
श्च्योतंति धारा मधुनो घृतस्य वृषा यत्र वावृधे काव्येन ॥८॥
बभ्राणः । सूनो इति । सहसः । वि । अद्यौत् । दधानः । शुक्रा । रभसा । वपूंषि ।
श्च्योतंति । धाराः । मधुनः । घृतस्य । वृषा । यत्र । ववृधे । काव्येन ॥८॥

हे सहसः सूनो सहसस्पुत्र बभ्राणः सर्वैर्धार्यमाणस्त्वं शुक्रा शुक्राणि भास्वराणि रभसा वेगवंति वपूंष्यर्चींषि दधानः धारयंस्त्वं व्यद्यौत । विद्योतसे । वृषाग्निर्यत्र यस्मिन्यजमाने काव्येन स्तोत्रेण ववृधे वृद्धिं प्राप्नोति तदानीं मधुनोऽत्यंतं मधुरस्य घृतस्योदकस्य धाराः श्च्योतंति । स्रवंति । यदा यजमानस्तोत्रेणाग्निस्तुष्टो भवति तदानीं वृष्टिर्भवतीत्यर्थः ॥

पितुश्चिदूधर्जनुषा विवेद व्यस्य धारा असृजद्वि धेनाः ।
गुहा चरंतं सखिभिः शिवेभिर्दिवो यह्वीभिर्न गुहा बभूव ॥९॥
पितुः । चित् । ऊधः । जनुषा । विवेद । वि । अस्य । धाराः । असृजत् । वि । धेनाः ।
गुहा । चरंतं । सखिऽभिः । शिवेभिः । दिवः । यह्वीभिः । न । गुहा । बभूव ॥९॥

पितुरंतरिक्षस्योधरूधःस्थानीयं जलप्रदेशमयमग्निर्जनुषा स्वयमेव विवेद । जानाति । किंचायमग्निरस्योधसः संबंधिन्यो धाराः पयोधारा व्यसृजत । धेना माध्यमिका वाचश्च विसृजति । शिवेभिः शिवकरैः सखिभिरात्मनः सखिभूतैर्वायुभिर्दिवो यह्वीभिरंतरिक्षस्यापत्यभूताभिरद्भिश्च सह गुहा गुहाया चरंत वर्तमानमेनमग्निं गुहा चित गुहायां स्थितः कोऽपि न बभूव । प्राप्तुं समर्थो नाभवत ॥

पितुश्च गर्भं जनितुश्च बभ्रे पूर्वीरेको अधयत्पीप्यानाः ।
वृष्णे सपत्नी शुचये सबंधू उभे अस्मै मनुष्ये३नि पाहि ॥१०॥
पितुः । च । गर्भं । जनितुः । च । बभ्रे । पूर्वीः । एकः । अधयत । पीप्यानाः ।
वृष्णे । सपत्नी इति सऽपत्नी । शुचये । सबंधू इति सऽबंधू । उभे इति । अस्मै ।
मनुष्ये३इति । नि । पाहि ॥१०॥

अयमग्निः पितुश्चांतरिक्षस्य गर्भं वृष्टिद्वारा गर्भभूत जनितुः सर्वस्य लोकस्य जनयितुश्च ब्रह्मणश्च लोकसोपध्यादिकं बभ्रे । बिभर्ति । एक एवाग्निः पूर्वीर्बह्वीः पीप्यानाः प्यायमाना वृद्धिं प्राप्ता ओषधीरधयत । धयति । भक्षयति । सपत्नी समान एकः सूर्यः पतिर्ययोस्ते मनुष्ये मनुष्येभ्यो हिते उभे द्यावापृथिव्यौ वृष्णे वर्षित्रेऽस्मै शुचयेऽग्नये सबंधू भवतः । अनयोरग्निरेव बंधुरित्यर्थः । हे अग्ने त्वं ते द्यावापृथिवी नि पाहि । नितरां रक्ष ॥ ॥१४॥

उरौ महाँ अनिबाधे ववर्धापो अग्निं यशसः सं हि पूर्वीः ।
ऋतस्य योनावशयद्दमूना जामीनामग्निरपसि स्वसॄणां ॥११॥

उरौ। महान्। अनिऽबाधे। ववर्ध। आपः। अग्निं। यशसः। सं। हि। पूर्वीः।
ऋतस्य। योनौ। अशयत्। दमूनाः। जामीनां। अग्निः। अपसि। स्वसृणां ॥११॥

महानयमग्निरनिबाधेऽसंबाध उरौ विस्तीर्णेऽतरिक्षे ववर्ध। वर्धते। अस्य वर्धने कारणमाह। हि यस्मात्कारणात्पूर्वीर्बह्व्यो यशसो। यशोऽन्नं। तद्वत्य आपोऽग्निं संवर्धयंति। एवमग्निर्वृद्धिं प्राप्तोऽग्निरृतस्योदकस्य योनौ स्थानेऽतरिक्षे स्थितः स्वसृणां स्वतः सरंतीनां जामीनां भगिनीस्थानीयानां हेतुभूतेऽपसि पयसि दमूना दातमनाः सन् अशयत। शेते ॥

अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः।
उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥१२॥
अक्रः। न। बभ्रिः। सम्ऽइथे। महीनां। दिदृक्षेयः। सूनवे। भाःऽऋजीकः।
उत्। उस्रियाः। जनिता। यः। जजान। अपां। गर्भः। नृऽतमः। यह्वः। अग्निः ॥१२॥

जनिता सर्वस्य लोकस्य जनयिता अपामुदकानां गर्भो गर्भरूपो नृतमो नेतृतमोऽतिशयेन मनुष्याणां रक्षिता यह्वो महान् योऽग्निरक्रः परेषामाक्रमिता परैरनाक्रमणीयो वा ॥ नेति पादपूरणः ॥ समिथे संग्रामे महीनां महतीनां सेनानां बभ्रिर्भर्ता दिदृक्षेयः सर्वदर्शनीयो भाऋजीकः स्वदीप्त्या प्रकाशमानः सोऽग्निः सूनवे हविषां प्रदात्रे यजमानाय तदर्थमुस्रिया अप उज्जजान। उदजनयत ॥ सूनवे। षू प्रेरणे इत्यस्माद्धातोरौणादिको नुप्रत्ययः ॥

अपां गर्भं दर्शतमोषधीनां वना जजान सुभगा विरूपं।
देवासश्चिन्मनसा सं हि जग्मुः पनिष्ठं जातं तवसं दुवस्यन् ॥१३॥
अपां। गर्भं। दर्शतं। ओषधीनां। वना। जजान। सुऽभगा। विऽरूपं।
देवासः। चित्। मनसा। सं। हि। जग्मुः। पनिष्ठं। जातं। तवसं। दुवस्यन् ॥१३॥

सुभगा सुभाग्या वना सर्वैर्वननीयारण्ण्दिर्शत दर्शनीयं विरूपं नानाविधरूपमपामोषधीनां च गर्भमग्निं जजान। अजनयत। देवासश्चित सर्वे देवा अपि पनिष्ठ स्तुत्यं तवसं वृद्धं जातं जातमात्रं तमग्निं मनसा स्तुत्या संजग्मुः। उपागच्छन्। हीति पूरणः। त एव दुवस्यन्। पर्यचरन् ॥

बृहंत इद्भानवो भाऋजीकमग्निं सचंत विद्युतो न शुक्राः।
गुहेव वृद्धं सदसि स्वे अंतरपार ऊर्वे अमृतं दुहानाः ॥१४॥
बृहंतः। इत्। भानवः। भाःऽऋजीकं। अग्निं। सचंत। विऽद्युतः। न। शुक्राः।
गुहाऽइव। वृद्धं। सदसि। स्वे। अंतः। अपारे। ऊर्वे। अमृतं। दुहानाः ॥१४॥

अपारेऽगाध ऊर्वे समुद्रेऽतर्मध्येऽमृतमुदकं दुहानाः क्षरंतो बृहंत इद्भानवो महांतः सूर्या एव शुक्रा दीप्यमाना विद्युतो न विद्युत इव स्वे स्वकीये सदसि सदनेऽतरिक्षे गुहेव गुहायामिव वृद्धं प्रवृद्धं भाऋजीकं प्रभया दीप्यमानमग्निं सचत। आश्रयंति ॥

ईळे च त्वा यजमानो हविर्भिरीळे सखित्वं सुमतिं निकामः।
देवैरवो मिमीहि सं जरित्रे रक्षा च नो दम्येभिरनीकैः ॥१५॥

ईळे । च । त्वा । यजमानः । हविःऽभिः । ईळे । सखिऽत्वं । सुऽमतिं । निऽकामः ।
देवैः । अवः । मिमीहि । सं । जरित्रे । रक्ष । च । नः । दम्येभिः । अनीकैः ॥१५॥

यजमानोऽहं हविर्भिः साधनैस्त्वा त्वामीळे च । पश्चादिलक्षणं धनं च याचे । सुमतिं शोभनां मतिं धर्मविषयां बुद्धिं निकामो नितरां कामयमानस्त्वया सह सखित्वमीळे । याचे । त्वं देवैः सह जरित्रे स्तोत्रे स्तोत्रं कुर्वते मह्यमस्मदर्थमवः पश्वादिविषया रक्षा मिमीहि । कुरु । दम्येभिर्दमनीयैर्नियतव्यैः । प्रयत्ननियंतव्यतयोच्छृंखलतोक्ता । अनीकैस्तेजोभिर्नोऽस्मान् रक्ष च ॥ ॥१५॥

उपक्षेतारस्तव सुप्रणीतेऽग्ने विश्वानि धन्या दधानाः ।
सुरेतसा श्रवसा तुंजमाना अभि ष्याम पृतनायूँरदेवान् ॥१६॥

उपऽक्षेतारः । तव । सुऽप्रनीते । अग्ने । विश्वानि । धन्या । दधानाः ।
सुऽरेतसा । श्रवसा । तुंजमानाः । अभि । स्याम । पृतनाऽयून् । अदेवान् ॥१६॥

हे सुप्रणीते शोभनप्रणयन हे अग्ने तवोपक्षेतार उपगंतारः ॥ अत्र क्षितिर्गत्यर्थे वर्तते ॥ विश्वानि सर्वाणि धन्या धन्यानि पश्वादिधनप्राप्तिहेतुभूतानि कर्माणि दधाना विदधानाः कुर्वतस्तुंजमाना हवींषि प्रयच्छंतो वयं सुरेतसा शोभनवीर्येण श्रवसा त्वत्कृतेनान्नेनादेवान् देवेभ्योऽन्यान् । वाक्यशेषत्वाद्यन राक्षसा एव गृह्यते । यज्ञविघ्नकारिणस्तान्पृतनायूंश्च शरीराद्युपद्रवकारिणः शत्रूंश्चाभिष्याम । अभिभवेम । यद्वा देवान् पूजयतः शत्रूनिति योज्य ॥

आ देवानामभवः केतुरग्ने मंद्रो विश्वानि काव्यानि विद्वान् ।
प्रति मर्ताँ अवासयो दमूना अनु देवान्रथिरो यासि साधन् ॥१७॥

आ । देवानां । अभवः । केतुः । अग्ने । मंद्रः । विश्वानि । काव्यानि । विद्वान् ।
प्रति । मर्तान् । अवासयः । दमूनाः । अनु । देवान् । रथिरः । यासि । साधन् ॥१७॥

हे अग्ने मंद्रः स्तुत्यः केतुर्यज्ञेषु देवानां प्रज्ञापकस्त्वमाभवः । आ समंताद्भवसि । सर्वव्यापको भवसीत्यर्थः । किंच विश्वानि सर्वाणि काव्यानि यजमानादिभिः कृतानि स्तोत्राणि विद्वान् जानन् त्वं मर्तान् मर्त्यान् स्तोतॄन् स्वाभिलषितवस्तुसंपादनेन प्रीतान् विधाय गृहेषु प्रत्यवासयः । प्रतिवासयसि । रथिरो रथी साधन् देवानां हितानि कर्माणि साधयन् देवान् अनु यासि च । अनुगच्छसि च ॥

नि दुरोणे अमृतो मर्त्यानां राजा ससाद विदथानि साधन् ।
घृतप्रतीक उर्विया व्यद्यौदग्निर्विश्वानि काव्यानि विद्वान् ॥१८॥

नि । दुरोणे । अमृतः । मर्त्यानां । राजा । ससाद । विदथानि । साधन् ।
घृतऽप्रतीकः । उर्विया । वि । अद्यौत् । अग्निः । विश्वानि । काव्यानि । विद्वान् ॥१८॥

अमृतो नित्यो राजा राजमानो योऽग्निर्विदथानि यज्ञान् साधन् साधयन् मर्त्यानामग्निहोत्रिणां दुरोणे गृहे निषसाद । निषीदति । विश्वानि काव्यानि विद्वान् जानन् घृतप्रतीको घृतेन संधुक्षितावयव उर्विया विस्तीर्णः सोऽग्निर्व्यद्यौत् । विद्योतते ॥

आ नो गहि सख्येभिः शिवेभिर्महान्महीभिरूतिभिः सरण्यन् ।
अस्मे रयिं बहुलं संतरुत्रं सुवाचं भागं यशसं कृधी नः ॥१९॥

आ। नः। गहि। सख्येभिः। शिवेभिः। महान्। महीभिः। ऊतिऽभिः। सरण्यन्।
अस्मे इति। रयिं। बहुलं। संऽतरुत्रं। सुऽवाचं। भागं। यशसं। कृधि। नः ॥१९॥

सरण्यन् सर्वत्र सरणं गमनमिच्छन् महांस्त्वं शिवेभिः शिवंकरैः सख्येभिः सख्यैः सखिकर्मभिर्महीभिर्महतीभिरूतिभी रक्षाभिश्च नोऽस्मान्प्रति आ गहि। आगच्छ। अस्मे अस्मभ्यं बहुलं विस्तीर्णं संतरुत्रं सर्वेषामुपद्रवाणां संतारकं सुवाचं शोभनवाचं भागं सर्वैर्भजनीयं यशसं यशसा कीर्त्या संयुक्तं रयिं धनं नोऽस्मभ्यं कृधि। देहि। अस्मभ्यमिति पुनर्वचनमादरातिशयार्थं ॥

एता ते अग्ने जनिमा सनानि प्र पूर्व्याय नूतनानि वोचं।
महांति वृष्णे सवना कृतेमा जन्मंजन्मन् निहितो जातवेदाः ॥२०॥
एता। ते। अग्ने। जनिम। सनानि। प्र। पूर्व्याय। नूतनानि। वोचं।
महांति। वृष्णे। सवना। कृता। इमा। जन्मन्ऽजन्मन्। निऽहितः। जातऽवेदाः ॥२०॥

हे अग्ने पूर्व्याय पुरातनाय ते तुभ्यं सनानि सनातनानि महद्भिः संभजनीयानि वा नूतनान्यन्येष्वविद्यमानान्यद्यतनानि वर्तितानि जनिम जन्मानि कर्माणि स्तोत्राणि वा प्रवोचं। जातवेदा जातप्रज्ञो जातधनो वा जन्मन् जन्मन्। जायंत इति जन्मानः। तेषु सर्वेषु मनुष्येषु निहितो यागार्थं। तस्मै वृष्णे संपदां वर्षित्रेऽग्नय इमानि सवना सवनानि कृता। कृतानि ॥

जन्मंजन्मन् निहितो जातवेदा विश्वामित्रेभिरिध्यते अजस्रः।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥२१॥
जन्मन्ऽजन्मन्। निऽहितः। जातऽवेदाः। विश्वामित्रेभिः। इध्यते। अजस्रः।
तस्य। वयं। सुऽमतौ। यज्ञियस्य। अपि। भद्रे। सौमनसे। स्याम ॥२१॥

जन्मन् जन्मन् सर्वेषु मनुष्येषु निहितो जातवेदा विश्वामित्रेभिर्विश्वामित्रैः। पूजायां बहुवचनं। महर्षिणा विश्वामित्रेण यो जातवेदा अजस्रोऽजस्रमनवरतमिध्यते। दीप्यते। सुमतौ वर्तमाना वयं तस्य यज्ञियस्य यज्ञार्हस्याग्नेर्भद्रे भजनीये सौमनसे सुमनोभावेऽनुग्रहबुद्धावपि स्याम। अपि भवेम। प्रार्थनायां लिङ् ॥

इमं यज्ञं सहसावन् त्वं नो देवत्रा धेहि सुक्रतो रराणः।
प्र यंसि होतर्बृहतीरिषो नोऽग्ने महि द्रविणमा यजस्व ॥२२॥
इमं। यज्ञं। सहसाऽवन्। त्वं। नः। देवऽत्रा। धेहि। सुक्रतो इति सुऽक्रतो। रराणः।
प्र। यंसि। होतः। बृहतीः। इषः। नः। अग्ने। महि। द्रविणं। आ। यजस्व ॥२२॥

हे सहसावन् सहस्वन् बलवन् सुक्रतो शोभनकर्मन् हे अग्ने रराणः सर्वदा रममाणः शब्दं कुर्वाणो वा त्वं नोऽस्मदीयमिमं यज्ञं देवत्रा देवेषु धेहि। निधेहि। हे होतर्देवानामाह्वातः बृहतीरिषोऽन्नानि नोऽस्मभ्यं प्रयंसि। प्रयच्छ। हे अग्ने महि महद्द्रविणं पश्वादिलक्षणं धनमायजस्व। प्रयच्छ। अत्र यजिर्दानकर्मा ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥२३॥

इळाम्। अग्ने। पुरुऽदंसम्। सनिम्। गोः। शश्वत्ऽतमम्। हवमानाय। साध।
स्यात्। नः। सूनुः। तनयः। विजाऽवा। अग्ने। सा। ते। सुऽमतिः। भूतु। अस्मे इति॥२३॥

इयं सर्वेषां पशूनां पशुपुरोडाशस्य स्विष्टकृतः पुरोनुवाक्या। सूत्र्यते हि। इळामग्ने पुरुदंसं सनिं गोरिति यत्त्वंदग्ने पुरोळाशस्य स्वदस्व हव्या समिषो दिदीहीति पुरोळाशस्विष्टकृत इति। आ० ३ ५॥

हे अग्ने पुरुदंसं बहुकर्माणं गोर्गवां सनिं प्रदात्रीमिळां भूमिं हवमानाय स्तुवते मह्यं शश्वत्तमं चिरकालं यथा भवति तथा साध। साधय। नोऽस्माकं सूनुः पुत्रस्तनयः संतानस्य विस्तारयिता विजावा पुत्रपौत्रादिरूपेण स्वयं विजायत इति विजावा स्यात्। हे अग्ने सा प्रसिद्धा ते सुमतिस्त्वदीयानुग्रहबुद्धिरस्मे अस्मासु भूतु। भवतु॥ ॥१६॥

वैश्वानरायेति पंचदशर्चं द्वितीयं सूक्तं। तथा चानुक्रमणिका। वैश्वानराय पंचोना वैश्वानरीयं तु जागतमिति। विश्वामित्र ऋषिः। जगती छंदः। वैश्वानरोऽग्निर्देवता॥ पृष्ठ्याभिप्लविकयोस्तृतीयेऽहन्याग्निमारुते वैश्वानराय धिषणामिति वैश्वानरनिविद्धानीयं सूक्तं। तृतीयस्येति खंडे सूत्रितं। वैश्वानराय धिषणां धारा करा मरुतः। आ० ७. ७.। इति॥

वैश्वानराय धिषणामृतावृधे घृतं न पूतमग्नये जनामसि।
द्विता होतारं मनुषश्च वाघतो धिया रथं न कुलिशः समृण्वति॥१॥
वैश्वानराय। धिषणाम्। ऋतऽवृधे। घृतम्। न। पूतम्। अग्नये। जनामसि।
द्विता। होतारम्। मनुषः। च। वाघतः। धिया। रथम्। न। कुलिशः। सम्। ऋण्वति॥१॥

ऋतावृधे ऋतस्योदकस्य यज्ञस्य वा वर्धयित्रे वैश्वानराय। वैश्वानरशब्दो यास्केन व्याख्यातः। वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयंतीति वा। अपि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरस्तस्यैषा भवति। नि० ७ २१.। इति। तस्मै पूतं घृतं न घृतमिव धिषणां स्तुतिं जनामसि। जनयामः। यथा घृतं प्रीतिं जनयति तथा प्रीतिं करोमीत्यर्थः। द्विता द्विधा गार्हपत्याहवनीयरूपाभ्यां युक्तं होतारं देवानामाह्वातारमग्निं मनुषो मनुष्या वाघतश्च ऋत्विजश्च धिया कर्मणा कुलिशो वास्यादी रथं न रथमिव समृण्वति। संस्कुर्वंति॥

स रोचयज्जनुषा रोदसी उभे स मात्रोरभवत्पुत्र ईड्यः।
हव्यवाळग्निरजरश्चनोहितो दूळभो विशामतिथिर्विभावसुः॥२॥
सः। रोचयत्। जनुषा। रोदसी इति। उभे इति। सः। मात्रोः। अभवत्। पुत्रः। ईड्यः।
हव्यऽवाट्। अग्निः। अजरः। चनःऽहितः। दुःऽदभः। विशाम्। अतिथिः। विभाऽवसुः॥२॥

सोऽग्निर्जनुषा जन्मनोभे रोदसी द्यावापृथिव्यौ रोचयत्। अरोचयत्। प्रकाशयति। स मात्रोर्द्यावापृथिव्योरीड्यः स्तुत्यः पुत्रोऽभवत्। हव्यवाट् हव्यानां वोढाग्निरंगनादिगुणयुक्तोऽजरो जरारहितः। चनोऽन्नं हितं यजमाने निहितं येनासौ चनोहितः। दूळभो हिंसितुमशक्यः सोऽयं विभावसुः प्रभाधनो विशां मनुष्याणामतिथिरिव पूज्यो भवति॥

क्रत्वा दक्षस्य तरुषो विधर्मणि देवासो अग्निं जनयंत चित्तिभिः।
रुरुचानं भानुना ज्योतिषा महामत्यं न वाजं सनिष्यन्नुप ब्रुवे॥३॥

क्रत्वा । दक्षस्य । तरुषः । विऽधर्मणि । देवासः । अग्निं । जनयंत । चित्तिऽभिः ।
रुरुचानं । भानुना । ज्योतिषा । महां । अत्यं । न । वाजं । सनिष्यन् । उप । ब्रुवे ॥ ३ ॥

चित्तिभिर्ज्ञानैरुपलक्षिता देवासो देवास्तरुषो व्यसनेभ्यस्तारकस्य दक्षस्य बलस्य क्रत्वा कर्मणा विधर्मणि विधारके यज्ञेऽग्निं जनयंत । अजनयन् । भानुना भासमानेन ज्योतिषा रुरुचानं रोचमानं महां महांतमग्निमत्यं न भारमहमश्वमिव वाजमन्नं सनिष्यन् लिप्समानोऽहमुप ब्रुवे । स्तौमि ॥

आ मंद्रस्य सनिष्यंतो वरेण्यं वृणीमहे अह्रयं वाजमृग्मियं ।
रातिं भृगूणामुशिजं कविक्रतुमग्निं राजंतं दिव्येन शोचिषा ॥ ४ ॥
आ । मंद्रस्य । सनिष्यंतः । वरेण्यं । वृणीमहे । अह्रयं । वाजं । ऋग्मियं ।
रातिं । भृगूणां । उशिजं । कविऽक्रतुं । अग्निं । राजंतं । दिव्येन । शोचिषा ॥ ४ ॥

मंद्रस्य स्तुत्यस्य वैश्वानरस्य संबंधिनं वरेण्यं वरणीयमह्रयमलज्जावहं ऋग्मियं प्रशस्यं वाजमन्नं सनिष्यंतो लिप्समाना वयं भृगूणामृषीणां रातिमभिलषितार्थप्रदातारमुशिजमभिलष्यंतं कविक्रतुं क्रांतप्रज्ञं दिव्येन दिविभवेन शोचिषा रोचिषा राजंतं भ्राजमानमग्निमावृणीमहे । संभजामहे ॥

अग्निं सुम्नाय दधिरे पुरो जना वाजश्रवसमिह वृक्तबर्हिषः ।
यतस्रुचः सुरुचं विश्वदेव्यं रुद्रं यज्ञानां साधदिष्टिमपसां ॥ ५ ॥
अग्निं । सुम्नाय । दधिरे । पुरः । जनाः । वाजऽश्रवसं । इह । वृक्तऽबर्हिषः ।
यतऽस्रुचः । सुऽरुचं । विश्वऽदेव्यं । रुद्रं । यज्ञानां । साधतऽइष्टिं । अपसां ॥ ५ ॥

वृक्तबर्हिषः स्तीर्णबर्हिषो यतस्रुचः प्राप्तस्रुच ऋत्विजः सुम्नाय सुखार्थं वाजश्रवसं मनुष्येभ्यः प्रेरितान्नं सुरुचं प्रशस्तदीप्तिमंतं विश्वदेव्यं विश्वेभ्यो देवेभ्यो हितं रुद्रं दुःखानां द्रावकमपसां कर्मवतां यज्ञानां । यजंतीति यज्ञा यजमानाः । तेषां साधदिष्टिं साधितयज्ञमग्निमिह यज्ञे पुरो दधिरे । स्थापयंति ॥ ॥ १७ ॥

पावकशोचे तव हि क्षयं परि होतर्यज्ञेषु वृक्तबर्हिषो नरः ।
अग्ने दुव इच्छमानास आप्यमुपासते द्रविणं धेहि तेभ्यः ॥ ६ ॥
पावकऽशोचे । तव । हि । क्षयं । परि । होतः । यज्ञेषु । वृक्तऽबर्हिषः । नरः ।
अग्ने । दुवः । इच्छमानासः । आप्यं । उप । आसते । द्रविणं । धेहि । तेभ्यः ॥ ६ ॥

हे पावकशोचे शोधकदीप्ते हे होतर्देवानामाह्वातः यज्ञेषु परि परितो वृक्तबर्हिषः स्तीर्णबर्हिषो दुवः परिचरणमिच्छमानास इच्छतो नरो नेतारो यजमाना आप्यमाप्तुं योग्यं तव त्वत्संबंधिनं क्षयं निवासं यागगृहमुपासते । सेवंते । तेभ्यो द्रविणं धनं धेहि । विधेहि ॥

आ रोदसी अपृणदा स्वर्महज्जातं यदेनमपसो अधारयन् ।
सो अध्वराय परि णीयते कविरत्यो न वाजसातये चनोहितः ॥ ७ ॥
आ । रोदसी इति । अपृणत् । आ । स्वः । महत् । जातं । यत् । एनं । अपसः । अधारयन् ।
सः । अध्वराय । परि । नीयते । कविः । अत्यः । न । वाजऽसातये । चनःऽहितः ॥ ७ ॥

रोदसी द्यावापृथिव्यावापृणत्। आपूरयत। तथा महत्प्रभूतं स्वरंतरिक्षमापृणन्। अपसः कर्मवतो यजमाना जातं यद्यमेनमग्निमधारयन् अत्यो न अश्व इव कविः क्रांतः सर्वत्र व्याप्तः धनोहितो निहितान्नः सोऽयमग्निर्वाजसातये वाजस्यान्नस्य कीर्तेर्वा सातये लाभाय परिणीयते। यज्ञार्थं नीयते ॥

नमस्यत हव्यदातिं स्वध्वरं दुवस्यत दम्यं जातवेदसं।
रथीरृतस्य बृहतो विचर्षणिरग्निर्देवानामभवत्पुरोहितः ॥८॥
नमस्यत। हव्यऽदातिं। सुऽअध्वरं। दुवस्यत। दम्यं। जातऽवेदसं।
रथीः। ऋतस्य। बृहतः। विऽचर्षणिः। अग्निः। देवानां। अभवत्। पुरःऽहितः ॥८॥

रथीर्नेता बृहतो महत ऋतस्य यज्ञस्य विचर्षणिर्द्रष्टा योऽग्निर्देवानां पुरोहितः पुरस्ताद्धव्यतया स्थापितोऽभवत् हव्यदातिं देवेभ्यो हविषां दातारं स्वध्वरं शोभनयज्ञं दम्यं दमेभ्यो गृहेभ्यो हितं जातवेदसं जातप्रज्ञं तमग्निं नमस्यत। पूजयत। दुवस्यत। परिचरत ॥

तिस्रो यह्वस्य समिधः परिज्मनोऽग्नेरपुनन्नुशिजो अमृत्यवः।
तासामेकामदधुर्मर्त्ये भुजमु लोकमु द्वे उप जामिमीयतुः ॥९॥
तिस्रः। यह्वस्य। संऽइधः। परिऽज्मनः। अग्नेः। अपुनन्। उशिजः। अमृत्यवः।
तासां। एकां। अदधुः। मर्त्ये। भुजं। ऊं इति। लोकं। ऊं इति। द्वे इति। उप।
जामिं। ईयतुः ॥९॥

उशिजः कामयमाना अमृत्यवो मृत्युरहिता देवा यह्वस्य महतः परिज्मनः परितो गतः समिधः समिधकाः प्रकाशिकास्तिस्रः पार्थिववैद्युतसूर्यरूपास्तिस्रस्तनूरपुनन्। अशोधयन्। ते देवा भुजं सर्वेषां पालयित्रीं तासां तनूनां मध्य एकां पार्थिवीं तनुं मर्त्ये मर्त्यलोकेऽदधुः। न्यदधुः। उ इति पादपूरणः। इतरे द्वे तनू जामिं लोकमासन्नमंतरिक्षमुपेयतुः। गच्छतः। अथवा तिस्रः समिधः आघारसमिधौ द्वे अनुयाजसमिच्चैकेति। तासां समिधामेकामनुयाजसमिधं मर्त्ये इह लोके भोगहेतुमनुयाजपर्यंतमदधुः। धारयंति। प्रजा वा अनुयाजा इति प्रजात्वेनानुयाजानां संस्तवात् तदाश्रयत्वाच्चानुयाजसमिधः। इतरे द्वे समिधावंतरिक्षे दिव्यभोगहेतू उपेयतुः। उपगच्छतः। त्रीन्परिधींस्तिस्रः समिधः इति हि निगमः ॥

विशां कविं विश्पतिं मानुषीरिषः सं सीमकृण्वन्स्वधितिं न तेजसे।
स उद्वतो निवतो याति वेविषत्स गर्भमेषु भुवनेषु दीधरत् ॥१०॥
विशां। कविं। विश्पतिं। मानुषीः। इषः। सं। सीं। अकृण्वन्। स्वऽधितिं। न। तेजसे।
सः। उत्ऽवतः। निऽवतः। याति। वेविषत्। सः। गर्भं। एषु। भुवनेषु। दीधरत् ॥१०॥

इषः पश्चादिलक्षणं धनमिच्छंत्यो मानुषीर्मनुष्यप्रजा विशां प्रजानां विश्पतिं प्रभुं कविं मेधाविनं सीमेनं स्वधितिं न असिमिव तेजसे तैक्ष्ण्यार्थं समकृण्वन्। समस्कुर्वन्। सोऽग्निरुद्वत उच्छ्रायवतो निवतो नीचैर्भाववतश्च प्रदेशान्वेविषत् व्याप्नुवन् याति। गच्छति। स एषु भुवनेषु गर्भमरण्यां दीधरत्। अधारयत् ॥ ॥१८॥

स जिन्वते जठरेषु प्रजज्ञिवान्वृषा चित्रेषु नानदन्न सिंहः।
वैश्वानरः पृथुपाजा अमर्त्यो वसु रत्ना दयमानो वि दाशुषे ॥११॥

सः। जिन्वते। जठरेषु। प्रजज्ञिऽवान्। वृषा। चित्रेषु। नानदत्। न। सिंहः।
वैश्वानरः। पृथुऽपाजाः। अमर्त्यः। वसु। रत्ना। दयमानः। वि। दाशुषे ॥११॥

प्रजज्ञिवान जातो वृषा वर्षकः स वैश्वानरश्चित्रेषु नानाप्रकारेषु जठरेषु। प्राणिनां भेदाज्जठराणां भेदः। तेषु जिन्वते। वर्धते। चित्रेषु नानाविधेष्वरण्येषु नानदत अत्यर्थं शब्दं कुर्वन सिंहो न। सिंह इव। किंविधो वैश्वानरः। पृथुपाजाः पृथुतेजाः। अथवा पृथुवेगः। अमर्त्यो मरणधर्मरहितो दाशुषे हविषां प्रदात्रे यजमानाय रत्ना रमणीयानि वसु वसूनि धनानि वि विशेषेण दयमानः प्रयच्छन ॥

वैश्वानरः प्रत्नथा नाकमारुहद्दिवस्पृष्ठं भंदमानः सुमन्मभिः।
स पूर्ववज्जनयञ्जंतवे धनं समानमज्मं पर्येति जागृविः ॥१२॥
वैश्वानरः। प्रत्नऽथा। नाकं। आ। अरुहत्। दिवः। पृष्ठं। भंदमानः। सुमन्मऽभिः।
सः। पूर्वऽवत्। जनयन्। जंतवे। धनं। समानं। अज्मं। परि। एति। जागृविः ॥१२॥

सुमन्मभिः स्तोतृभिर्भंदमानः स्तूयमानो वैश्वानरो जातमात्र एव प्रत्नथा प्रत्न इव चिरंतन इव नाकं। कं सुखं। अकं दुःखं। न विद्यतेऽकं यस्मिन तन्नाकं। दिवोऽतरिक्षस्य पृष्ठमुपरितमप्रदेशं स्वरोचिर्भिरारुहत। आरोहति। स वैश्वानरः पूर्ववत पूर्वेभ्य ऋषिभ्य इव जंतवे स्तोत्रे यजमानाय धनं पश्वादिलक्षणं जनयन् संपादयन जागृविः सदा प्रबुद्धः समानं सर्वेषां देवानां साधारणमज्ममाकाशमार्गं पर्येति। सूर्यरूपेण गच्छति॥

ऋतावानं यज्ञियं विप्रमुक्थ्य१मा यं दधे मातरिश्वा दिवि क्षयं।
तं चित्रयामं हरिकेशमीमहे सुदीतिमग्निं सुविताय नव्यसे ॥१३॥
ऋतऽवानं। यज्ञियं। विप्रं। उक्थ्यं। आ। यं। दधे। मातरिश्वा। दिवि। क्षयं।
तं। चित्रऽयामं। हरिऽकेशं। ईमहे। सुऽदीतिं। अग्निं। सुविताय। नव्यसे ॥१३॥

ऋतावानं बलवंतं यज्ञियं यज्ञार्हं विप्रं मेधाविनमुक्थ्यं स्तुत्यं दिवि द्युलोके क्षयं निवसंतं यमग्निं मातरिश्वा वायुर्द्युलोकादाहृत्य पृथिव्यामादधे। आहितवान। चित्रयामं नानाविधगमनं हरिकेशं पिंगलार्चिषं सुदीतिं शोभनदीप्तिं तमग्निं नव्यसे नवतराय सुविताय सुष्ठु प्राप्तव्याय धनाय तदर्थमीमहे। याचामहे॥

शुचिं न यामन्निषिरं स्वर्दृशं केतुं दिवो रोचनस्थामुषर्बुधं।
अग्निं मूर्धानं दिवो अप्रतिष्कुतं तमीमहे नमसा वाजिनं बृहत् ॥१४॥
शुचिं। न। यामन्। इषिरं। स्वःऽदृशं। केतुं। दिवः। रोचनऽस्थां। उषःऽबुधं।
अग्निं। मूर्धानं। दिवः। अप्रतिऽस्कुतं। तं। ईमहे। नमसा। वाजिनं। बृहत् ॥१४॥

नेति संप्रत्यर्थे। शुचिं दीप्तं यामन यामनि यज्ञ इषिरमेषणीयं स्वर्दृशं सर्वदृशं सर्वपदार्थविज्ञानयुक्तं दिवो द्युलोकस्य केतुं प्रज्ञापकं रोचनस्था रोचनस्थं। रोचनः सूर्यः। तस्मिन तिष्ठंतं। उषर्बुधमग्निहोत्रकालरूपेणोषसि प्रबुध्यमानं दिवः स्वर्गस्य मूर्धानं प्रधानमप्रतिष्कुतमप्रतिहतशब्दं वाजिनमन्नवंतं बृहत् महांतं तमग्निं नमसा स्तोत्रेणेमहे। याचामहे॥

मंद्रं होतारं शुचिमद्वयाविनं दमूनसमुक्थ्यं विश्वचर्षणिं।
रथं न चित्रं वपुषाय दर्शतं मनुर्हितं सदमिद्राय ईमहे ॥१५॥

मंद्रं। होतारं। शुचिं। अद्वयाविनं। दमूनसं। उक्थ्यं। विश्वऽचर्षणिं।
रथं। न। चित्रं। वपुषाय। दर्शतं। मनुःऽहितं। सदं। इत्। रायः। ईमहे ॥१५॥

मंद्रं स्तुत्यं होतारं देवानामाह्वातारं शुचिं सर्वदा शुद्धमद्वयाविनमकुटिलं दमूनसं दानमनसमुक्थ्यं श्रेष्ठं विश्वचर्षणिं विश्वस्य द्रष्टारं चित्रं नानाविधवर्णं रथं न रथमिव वपुषाय रूपार्थं दर्शतं दर्शनीयं सदमित् सदैव मनुर्हितं सर्वेभ्यो मनुष्येभ्यो हितं तमग्निं रायो धनानीमहे। याचामहे। अत्र याच्ञार्थत्वादस्य द्विकर्मकत्वं ॥ ॥१९॥

वैश्वानरायेत्येकादशर्चं तृतीयं सूक्तं वैश्वामित्रं। अत्रेयमनुक्रमणिका। वैश्वानरायैकादशेति। पूर्वसूक्ते वैश्वानरीयं तु जागत त्वित्युक्तत्वादस्यापि सूक्तस्य जगती छंदो वैश्वानरोऽग्निर्देवता ॥ अस्य सूक्तस्याग्निष्टोम आग्निमारुते शस्त्रे विनियोगः। सूत्र्यते हि। वैश्वानराय पृथुपाजसे ग्रा नः करत्यवंत। आ० ५ २० । इति ॥

वैश्वानराय. पृथुपाजसे विपो रत्ना विधंत धरुणेषु गातवे।
अग्निर्हि देवाँ अमृतो दुवस्यत्यथा धर्माणि सनता न दूदुषत ॥१॥
वैश्वानराय। पृथुऽपाजसे। विपः। रत्ना। विधंत। धरुणेषु। गातवे।
अग्निः। हि। देवान्। अमृतः। दुवस्यति। अथ। धर्माणि। सनता। न। दूदुषत ॥१॥

विपो मेधाविनः स्तोतारः पृथुपाजसे बहुबलाय बहुन्नाय वा। पाजःशब्दस्य बलान्ननाम्नो: पाठात्। वैश्वानरायाग्नये धरुणेषु धर्मेषु यज्ञेषु रत्ना रमणीयानि स्तोत्राणि गातवे सन्मार्गलाभाय विधंत। परिचरंति। कुर्वंति। अमृतो मरणरहितोऽग्निर्देवान् दुवस्यति। हविषा प्रदानेन परिचरति। हिः प्रसिद्धौ। अथ अत कारणात्कोऽपि सनता सनातनानि धर्माणि यज्ञान् न दूदुषत। न दूषयति ॥

अंतर्दूतो रोदसी दस्म ईयते होता निषत्तो मनुषः पुरोहितः।
क्षयं बृहंतं परि भूषति द्युभिर्देवेभिरग्निरिषितो धियावसुः ॥२॥
अंतः। दूतः। रोदसी इति। दस्मः। ईयते। होता। निऽसत्तः। मनुषः। पुरःऽहितः।
क्षयं। बृहंतं। परि। भूषति। द्युऽभिः। देवेभिः। अग्निः। इषितः। धियाऽवसुः ॥२॥

दस्मो दर्शनीयो होताग्निर्दूतो देवानां दूतः सन् रोदस्योर्द्यावापृथिव्योरंतर्मध्य ईयते। गच्छति। मनुषो मनोर्जातस्य मनुष्यस्य पुरोहित आहवनीयादिरूपेण पुरतः स्थापितो निषत्तो निषण्णः सन् अग्निर्द्युभिर्दीप्तिभिर्बृहंतं महांतं क्षयं यज्ञगृहं परिभूषति। अलंकरोति। देवेभिर्देवैरिषितः प्रेषितो धियावसुः प्रज्ञया व्याप्तः। एते द्वे अग्निविशेषणे ॥

केतुं यज्ञानां विदथस्य साधनं विप्रासो अग्निं महयंत चित्तिभिः।
अपांसि यस्मिन्नधि संदधुर्गिरस्तस्मिन्त्सुम्नानि यजमान आ चके ॥३॥
केतुं। यज्ञानां। विदथस्य। साधनं। विप्रासः। अग्निं। महयंत। चित्तिऽभिः।
अपांसि। यस्मिन्। अधि। संऽदधुः। गिरः। तस्मिन्। सुम्नानि। यजमानः। आ। चके ॥३॥

यज्ञानां केतुं प्रज्ञापकं विदथस्य यज्ञस्य गृहस्य वा साधनं प्राप्तिसाधनमसाधारणकारणं तमग्निं विप्रासो विप्रा ऋत्विजश्चित्तिभिः स्वकर्मभिर्महयंत। पूजयंति। किंच गिरः स्तोतारो यस्मिन्नग्नावपांसि स्वानुष्ठेयानि कर्माण्यधि संदधुः संदधते यजमानस्तस्मिन्नग्नौ सुम्नानि सुखानि प्राप्याचके। कामयते ॥

पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघतां ।
आ विवेश रोदसी भूरिवर्पसा पुरुप्रियो भंदते धामभिः कविः ॥४॥
पिता। यज्ञानां। असुरः। विपःऽचितां। विऽमानं। अग्निः। वयुनं। च। वाघतां।
आ। विवेश। रोदसी इति। भूरिऽवर्पसा। पुरुऽप्रियः। भंदते। धामऽभिः। कविः ॥४॥

यज्ञानां पिता पालयिता विपश्चितां विदुषां स्तोतॄणाममुरो बलप्रदः। वाघतामृत्विजां वयुनं ज्ञानसाधनं। विमानं च। विमीयते फलमिति विमानं यज्ञादिकर्मसाधनं। सोऽग्निर्भूरिवर्पसा पार्थिववैद्युतादिबहुविधरूपेण रोदसी द्यावापृथिव्यावाविवेश। प्रविशति। पुरुप्रियो मनुष्येष्वधिकं प्रियः। अथवा पुरूणां श्रेष्ठानां प्रियः पुरुप्रियः। धामभिस्तेजोभिर्युक्तः कविरग्निर्भंदते। यजमानैः स्तूयते ॥

चंद्रमग्निं चंद्ररथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदं ।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ॥५॥
चंद्रं। अग्निं। चंद्रऽरथं। हरिऽव्रतं। वैश्वानरं। अप्सुऽसदं। स्वःऽविदं।
विऽगाहं। तूर्णिं। तविषीभिः। आऽवृतं। भूर्णिं। देवासः। इह। सुऽश्रियं। दधुः ॥५॥

देवासो देवाश्चंद्रमाह्लादकरं चंद्ररथं। चंद्र आह्लादको रथो यस्येति तं हरिव्रतं पिंगलवर्णं हरित्वचं वा। हरित्वचमिति शाखांतरं। अप्सुषदमप्सु सीदंतं स्वर्विदं सर्वज्ञं विगाहं विगाहमानं सर्वत्र व्याप्तं तूर्णिं क्षिप्रगामिनं शत्रूणां हिंसितारं वा तविषीभिर्बलैरावृतं भूर्णिं भर्तारं सुश्रियं शोभनदीप्तिं वैश्वानरमग्निमिहलोके दधुः। आदधुः ॥ ॥२०॥

अग्निर्देवेभिर्मनुषश्च जंतुभिस्तन्वानो यज्ञं पुरुपेशसं धिया ।
रथीरंतरीयते साधदिष्टिभिर्जीरो दमूना अभिशस्तिचातनः ॥६॥
अग्निः। देवेभिः। मनुषः। च। जंतुऽभिः। तन्वानः। यज्ञं। पुरुऽपेशसं। धिया।
रथीः। अंतः। ईयते। साधदिष्टिऽभिः। जीरः। दमूनाः। अभिशस्तिऽचातनः ॥६॥

देवैः साधदिष्टिभिः साधितयज्ञैर्जंतुभिर्ऋत्विग्भिश्च धिया कर्मणा मनुषो यजमानस्य पुरुपेशसं बहुरूपं। पेश इति रूपनाम। पुरोडाशपशुसोमहविर्भेदैरेकाहाहीनसत्रात्मकभेदैश्च नानाविधरूपं यज्ञं तन्वानः कुर्वन् रथीः सर्वस्य लोकस्य नेता जीरः क्षिप्रकारी दमूना दांतमना दानमना वाभिशस्तिचातनोऽभिशस्तीनामराती-नां यज्ञविघ्नकारिणां रक्षसां चातयिता नाशयिताग्निरंतर्द्यावापृथिव्योर्मध्य ईयते। गच्छति ॥

अग्ने जरस्व स्वपत्य आयुन्यूर्जा पिन्वस्व समिषो दिदीहि नः ।
वयांसि जिन्व बृहतश्च जागृव उशिग्देवानामसि सुक्रतुर्विपां ॥७॥
अग्ने। जरस्व। सुऽअपत्ये। आयुनि। ऊर्जा। पिन्वस्व। सं। इषः। दिदीहि। नः।
वयांसि। जिन्व। बृहतः। च। जागृवे। उशिक्। देवानां। असि। सुऽक्रतुः। विपां ॥७॥

हे अग्ने स्वपत्ये सुपुत्र आयुन्यायुषि ॥ निमित्तसप्तम्येषा ॥ आयुषि निमित्ते जरस्व। देवान् स्तुहि। होतारमधिष्ठायोर्जा रसेनान्नेन वा पिन्वस्व। देवान्प्रीणय। नोऽस्माकमिषः सस्यार्थं वृष्टीः संदिदीहि। संदीपय। वयांस्यन्नानि च ॥ वयः इत्यन्ननामसु पाठात् ॥ जिन्व। देहि। हे जागृवे सर्वदा जागरणशील। बृहतो

महतो यजमानस्य जिन्वेति संबंधः । सुक्रतुः शोभनकर्मा शोभनयज्ञो वा त्वं विप्रां मेधाविनां देवानामुशिक कांतोऽसि ॥

विश्पतिं यह्वमतिथिं नरः सदा यंतारं धीनामुशिजं च वाघतां ।
अध्वराणां चेतनं जातवेदसं प्र शंसंति नमसा जूतिभिर्वृधे ॥८॥
विश्पतिं । यह्वं । अतिथिं । नरः । सदा । यंतारं । धीनां । उशिजं । च । वाघतां ।
अध्वराणां । चेतनं । जातऽवेदसं । प्र । शंसंति । नमसा । जूतिऽभिः । वृधे ॥८॥

नरो नेतारः स्तोतारो वा विश्पतिं विशां मनुष्याणां पतिं विश्वस्य पतिमिति वा यह्वं महांतमतिथिं सर्वस्यातिथिभूतं धीनां बुद्धीनां कर्मणां वा यंतारं नियतारं वाघतामृत्विजां चोशिजं कांतं मनोज्ञमध्वराणां यागानां चेतनं प्रज्ञापकं जूतिभिर्वेगैर्युक्तं जातवेदसमग्निं वृधे वृद्धये समृद्धये नमसा नमस्कारेण स्तुतिभिश्च प्रशंसंति । प्रशंसां कुर्वंति ॥

विभावा देवः सुरणः परि क्षितीरग्निर्बभूव शवसा सुमद्रथः ।
तस्य व्रतानि भूरिपोषिणो वयमुप भूषेम दम आ सुवृक्तिभिः ॥९॥
विभाऽवा । देवः । सुऽरणः । परि । क्षितीः । अग्निः । बभूव । शवसा । सुमतऽरथः ।
तस्य । व्रतानि । भूरिऽपोषिणः । वयं । उप । भूषेम । दमे । आ । सुवृक्तिऽभिः ॥९॥

विभावा दीप्तिमान् देवः स्तूयमानः सुरणः । अत्र वर्णलोपश्छांदसः । शोभनं रमयतीति सुरमणः । सुमद्रथः शोभनरथोऽग्निः शवसा बलेन क्षितीः सर्वाः प्रजाः परि बभूव । परितो गृह्णाति । अत्र भवतेरुपसर्गवशात् परिग्रहार्थत्वं । भूरिपोषिणो बहूनां पोषयितुः पालयितुर्दमे यज्ञगृहे । दम इति गृहनामसु पाठात् । निवसतस्तस्याग्नेर्व्रतानि कर्माणि वयं सुवृक्तिभिः स्तोत्रैरुपभूषेम । उपभूषयामः । प्रकाशयामः ॥

वैश्वानर तव धामान्या चके येभिः स्वर्विदभवो विचक्षण ।
जात आपृणो भुवनानि रोदसी अग्ने ता विश्वा परिभूरसि त्मना ॥१०॥
वैश्वानर । तव । धामानि । आ । चके । येभिः । स्वःऽवित् । अभवः । विऽचक्षण ।
जातः । आ । अपृणः । भुवनानि । रोदसी इति । अग्ने । ता । विश्वा । परिऽभूः ।
अस्ि । त्मना ॥१०॥

हे वैश्वानर तव धामानि त्वत्संबंधीनि तेजांस्याचके । अभिष्टौमि । हे विचक्षण प्राज्ञ । येभिर्यैस्तेजोभिः स्वर्वित् सर्ववित् सर्वज्ञोऽभवः । भवसि । जातमात्रस्त्वं भुवनानि भूतजातानि रोदसी द्यावापृथिव्यावापृणः । आपूरयः । हे अग्ने विश्वा विश्वानि सर्वाणि ता तानि भूतजातानि त्मना आत्मना परिभूरसि । परिगृहीतासि ॥

वैश्वानरस्य दंसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः ।
उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा ॥११॥
वैश्वानरस्य । दंसनाभ्यः । बृहत् । अरिणात् । एकः । सुऽअपस्यया । कविः ।
उभा । पितरा । महयन् । अजायत । अग्निः । द्यावापृथिवी इति । भूरिऽरेतसा ॥११॥

वैश्वानरस्याग्नेर्दंसनाभ्यस्तोपकारीभ्यः क्रियाभ्यो बृहन्महद्धनं भवतीति यत् तदवितथं । यतः कारणादेको

मुख्यः कविरग्निः स्वपस्यया शोभनयज्ञादिकर्मेच्छया यजमानादिभ्यो धनमरिणात्। ददाति। सोऽयमग्निर्भूरितसा वहूंरेतस्कावुभोर्भा पितरा पितरौ मातापितरौ द्यावापृथिव्यौ महयन्पूजयन् अजायत ॥ ॥११॥

समित्समिदित्येकादशर्चं चतुर्थं सूक्तं वैश्वामित्रं त्रैष्टुभं। अत्रानुक्रमणिका। समित्समिदाप्रिय इति। इध्मादिस्वाहाकृत्यंताः पूर्वोक्ताः प्रत्यृचं देवताः। पशौ वैश्वामित्राणामाप्रीसूक्तं। दर्शपूर्णमासयोः पत्नीसंयाजेषु त्वष्टुर्याज्या तन्न इत्येषा। सूत्रितं च। इह त्वष्टारमग्रियं तन्नस्तुरीपमध पोषयित्नु। आ० १. १०.। इति ॥ त्वाष्ट्रे पशौ पुरोडाशस्यानुवाक्या। सूत्रितं च। तन्नस्तुरीपमध पोषयित्नु देवस्त्वष्टा सविता विश्वरूपः। आ० ३ ८। इति ॥

समित्समित्सुमना बोध्यस्मे शुचाशुचा सुमतिं रासि वस्वः।
आ देव देवान्यजथाय वक्षि सखा सखीन्त्सुमना यक्ष्यग्ने ॥१॥
समित्ऽसमित्। सुऽमनाः। बोधि। अस्मे इति। शुचाऽशुचा। सुऽमतिं। रासि। वस्वः।
आ। देव। देवान्। यजथाय। वक्षि। सखा। सखीन्। सुऽमनाः। यक्षि। अग्ने ॥१॥

समित्समित अत्यर्थं समिद्धस्त्वं सुमना बोधि। बुध्यस्व। शुचा शुचात्यर्थं प्रसर्पकेण ज्योतिषा युक्तस्त्वं वस्वो वसुनो धनस्य तद्विषयां सुमतिं शोभनां बुद्धिमस्मे अस्मभ्यं रासि। देहि। हे देव द्योतमान देवान्यजनीयान्यजथाय यज्ञाय तदर्थमावक्षि। आवहसि। हे अग्ने सखा देवानां सखा त्वं सुमनाः सन् सखीन्देवान्यक्षि। यजस्व ॥

यं देवासस्त्रिरहन्नायजंते दिवेदिवे वरुणो मित्रो अग्निः।
सेमं यज्ञं मधुमंतं कृधी नस्तनूनपाद्घृतयोनिं विधंतं ॥२॥
यं। देवासः। त्रिः। अहन्। आऽयजंते। दिवेऽदिवे। वरुणः। मित्रः। अग्निः।
सः। इमं। यज्ञं। मधुऽमंतं। कृधि। नः। तनूऽनपात्। घृतऽयोनिं। विधंतं ॥२॥

वरुणो मित्रोऽग्निः एते त्रयो देवा यमग्निं दिवेदिवे प्रतिदिवसं अहन् अहनि त्रिः प्रातर्मध्याह्नसायंतनेषु सवनेषु त्रिवारमायजंते हे तनूनपात् तनूनां शरीराणां न पातयितः स त्वं घृतयोनिं घृतस्योदकस्य कारणं विधंतं विधीयमानं क्रियमाणं नोऽस्मदीयमिमं यज्ञं मधुमंतं। मध्वित्युदकनाम। वृष्ट्यादिफलयुक्तं कृधि। कुरु ॥

प्र दीधितिर्विश्ववारा जिगाति होतारमिळः प्रथमं यजध्यै।
अच्छा नमोभिर्वृषभं वंदध्यै स देवान्यक्षदिषितो यजीयान् ॥३॥
प्र। दीधितिः। विश्वऽवारा। जिगाति। होतारं। इळः। प्रथमं। यजध्यै।
अच्छ। नमःऽभिः। वृषभं। वंदध्यै। सः। देवान्। यक्षत्। इषितः। यजीयान् ॥३॥

विश्ववारा विश्वैर्जनैर्वरणीया दीधितिः स्तुतिर्दीप्तिर्वा होतारं देवानामाह्वातारमग्निं प्रजिगाति। जिगातु। प्रकर्षेण गच्छतु। प्रथमं मुख्यमच्छाभिमुख्येन वृषभं संपदां वर्षितारं वंदध्यै वंदितुं योग्यमिति शेषः। अपि नमोभिर्नमस्कारैः सहेळः इषो हवीरूपाण्यन्नानि यजध्यै यष्टुं प्रीणयितुं प्रजिगातु। इषितोऽस्माभिः प्रेरितो यजीयान् यष्टृतमः सोऽग्निर्देवान् यक्षत्। यजतु ॥

ऊर्ध्वो वां गातुरध्वरे अकार्यूर्ध्वा शोचींषि प्रस्थिता रजांसि।
दिवो वा नाभा न्यसादि होता स्तृणीमहि देवव्यचा वि बर्हिः ॥४॥

ऊर्ध्वः । वां । गातुः । अध्वरे । अकारि । ऊर्ध्वा । शोचींषि । प्रऽस्थिता । रजांसि ।
दिवः । वा । नाभा । नि । असादि । होता । स्तृणीमहि । देवऽव्यचाः । वि । बर्हिः ॥ ४ ॥

वां युवयोः । अग्निश्च बर्हिश्चोभौ वामित्युच्येते । समिदादिभिः सहितस्यैवाग्नेर्देवतात्वात । ऊर्ध्व उन्नतो गातुर्यज्ञमार्गोऽध्वरे यज्ञेऽकारि । आश्रयः क्रियते । शोचींष्यर्चिष्मन्ति रजांसि हवींष्यूर्ध्वोर्ध्वं प्रस्थिता । होता ग्निर्दिवो दीप्यमानस्य यागगृहस्य नाभा नाभौ मध्यप्रदेशे न्यसादि । निषीदति । देवव्यचा देवैर्व्याप्तं बर्हिश्च । चार्थे वाशब्दः । विस्तृणीमहि । विशेषेण स्तृणीमः ॥

सप्त होत्राणि मनसा वृणाना इन्वंतो विश्वं प्रति यन्नृतेन ।
नृपेशसो विदथेषु प्र जाता अभी३मं यज्ञं वि चरंत पूर्वीः ॥ ५ ॥
सप्त । होत्राणि । मनसा । वृणानाः । इन्वंतः । विश्वं । प्रति । यन । ऋतेन ।
नृऽपेशसः । विदथेषु । प्र । जाताः । अभि । इमं । यज्ञं । वि । चरंत । पूर्वीः ॥ ५ ॥

मनसा वृणानाः प्रार्थ्यमाना ऋतेनोदकेन विश्वमिन्वतः प्रीणयंतो देवाः सप्त होत्राणि होतॄणां वषट्कर्तॄणां कर्माणि प्रतियन । प्रतिगच्छंति । अतः परं द्वारो स्तूयंते । नृपेशसो नररूपा विदथेषु यागेषु जाता उत्पन्नाः पूर्वीर्बह्व्यो विग्रहवत्यो यज्ञद्वाराभिमानिदेवता इममस्मदीयं यज्ञं प्र विचरत । प्रविचरंतु ॥ ॥ २२ ॥

आ भंदमाने उषसा उपाके उत स्मयेते तन्वा३ विरूपे ।
यथा नो मित्रो वरुणो जुजोषदिंद्रो मरुत्वाँ उत वा महोभिः ॥ ६ ॥
आ । भंदमाने इति । उषसौ । उपाके इति । उत । स्मयेते इति । तन्वा । विरूपे इति विऽरूपे ।
यथा । नः । मित्रः । वरुणः । जुजोषत । इंद्रः । मरुत्वान । उत । वा । महःऽभिः ॥ ६ ॥

आ भंदमाने स्तूयमाने उपाके परस्परं संगते ॥ उषसानक्तापेक्षया द्विवचन ॥ नक्तोषसौ रात्र्यहनी आगच्छतां । उत अपि च विरूपे पृथग्रूपे तन्वा प्रकाशरूपेण शरीरेण स्मयेते । प्रकाशेते । मित्रो वरुण उत वा अपि चेंद्रो मरुत्वांश्च नोऽस्मान्यथा जुजोषत यथा सेवेत तथा महोभिस्तेजोभिर्युक्ते इमे द्यावापृथिव्यौ कुरुतां ॥

दैव्या होतारा प्रथमा न्यृंजे सप्त पृक्षासः स्वधया मदंति ।
ऋतं शंसंत ऋतमित्त आहुरनु व्रतं व्रतपा दीध्यानाः ॥ ७ ॥
दैव्या । होतारा । प्रथमा । नि । ऋंजे । सप्त । पृक्षासः । स्वधया । मदंति ।
ऋतं । शंसंतः । ऋतं । इत । ते । आहुः । अनु । व्रतं । व्रतऽपाः । दीध्यानाः ॥ ७ ॥

दैव्या दिव्यौ प्रथमा प्रथमौ मुख्यौ होताराहोतारावग्नी न्यृंजे । प्रसाधयामि । ऋतमुदकं शंसंत आशंसमानाः सप्त पृक्षासः । पृक्षमन्नं । तद्वंत ऋत्विजस्तमग्निं स्वधया सोमेन हविषा मदंति । मादयंति । व्रतपा व्रतानां कर्मणां रक्षितारो दीध्याना दीप्यमानाः अथवा स्वकर्मभिरग्निं दीपयंत ऋत्विजोऽनु व्रतं व्रतेषु ऋतमित् अग्निमेवाहुः । अग्निमेव ऋतभूतमाहुरित्यर्थः । एवकारार्थे इच्छब्दः ॥

आ भारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः ।
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदंतु ॥ ८ ॥

आ। भारती। भारतीभिः। सऽजोषाः। इळा। देवैः। मनुष्येभिः। अग्निः।
सरस्वती। सारस्वतेभिः। अर्वाक्। तिस्रः। देवीः। बर्हिः। आ। इदं। सदंतु ॥८॥

भारतीभिर्भरतस्य सूर्यस्य संबंधिनीभिः सजोषाः संगता भारती वाक् आगच्छतु। देवैर्मनुष्यैर्भिर्मनुष्यैश्च संगतेळा च भूमिश्चागच्छतु अग्निश्च। सारस्वतेभिः सरस्वतीसंबंधिभिर्मध्यमस्थानैः सह सरस्वती माध्यमिका वागागच्छतु। तिस्रो देव्यो वागिळाभारत्य आगच्छंतु। अर्वागाभिमुख्यमेतद्बर्हिरा सदंतु। आसीदंतु ॥

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥९॥
तत्। नः। तुरीपं। अध। पोषयित्नु। देव। त्वष्टः। वि। रराणः। स्यस्वेति स्यस्व।
यतः। वीरः। कर्मण्यः। सुऽदक्षः। युक्तऽग्रावा। जायते। देवऽकामः ॥९॥

हे देव त्वष्टः सृष्टिकर्तः रराणो रममाणस्त्वमध अनंतरं नोऽस्मान तुरीपं तारकं पोषयित्नु पोषकं तत्प्रसिद्धं रेतो विष्यस्व। मोचय। यतो विमोचनाद्वीरः सत्त्ववान् कर्मण्यः कर्मसु कुशलः सुदक्षः सुबलो युक्तग्रावाभिषवार्थग्रावयुक्तः। सोमसुदित्यर्थः। देवकामो देवान् कामयमानः पुत्रो जायते। जायेत ॥

वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति।
सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥१०॥
वनस्पते। अव। सृज। उप। देवान्। अग्निः। हविः। शमिता। सूदयाति।
सः। इत्। ऊं इति। होता। सत्यऽतरः। यजाति। यथा। देवानां। जनिमानि। वेद ॥१०॥

हे वनस्पते देवानुपावसृज। समीपे कुरु। शमिता पशोः संस्कर्ताग्निर्वनस्पतिश्च हविः सूदयाति। देवान्प्रति प्रेरयतु। सत्यतरोऽत्यर्थं सत्यः सत्यस्वरूपः स इत् स एव होता यजाति। यजतु। यथा यतः कारणात्स एवाग्निर्देवानां जनिमानि जन्मानि वेद वेत्ति अतः स एव यजत्वित्यर्थः ॥

आ याह्यग्ने समिधानो अर्वाङिंद्रेण देवैः सरथं तुरेभिः।
बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा देवा अमृता मादयंतां ॥११॥
आ। याहि। अग्ने। संऽइधानः। अर्वाङ्। इंद्रेण। देवैः। सऽरथं। तुरेभिः।
बर्हिः। नः। आस्तां। अदितिः। सुऽपुत्रा। स्वाहा। देवाः। अमृताः। मादयंतां ॥११॥

हे अग्ने अर्वाक् अस्मदभिमुखं समिधानः समिध्यमानो ज्वालारूपेण दीप्यमानस्त्वमायाहि। देवतारूपेणागच्छ। कथमिति उच्यते। नोऽस्माकं यज्ञमिंद्रेण देवैश्च तुरेभिस्त्वरमाणैर्देवैः सरथं समानरथं यथा तथायाहि। किंच सुपुत्रादितिरपि नो बर्हिरास्तां। अध्यास्तां। स्वाहाकारेण युक्ता अमृता नित्या देवा मादयतां। तृप्यतु ॥ ॥२३॥

प्रत्यग्निरुषस इत्येकादशर्चं पंचमं सूक्तं वैश्वामित्रं त्रैष्टुभमाग्नेयं। अत्रानुक्रमणिका। प्रत्यग्निरिति ॥ प्रातरनुवाकाश्विनशस्त्रयोरिदमादिसूक्तत्रयस्य विनियोगः। सूत्रितं च। प्रत्यग्निरुषस इति त्रीणि। आ० ४. १३। इति ॥ इळामग्न इत्यस्योक्तो विनियोगः ॥

प्रत्यग्निरुषसश्चेकितानोऽबोधि विप्रः पदवीः कवीनां।
पृथुपाजा देवयद्भिः समिद्धोऽप द्वारा तमसो वह्निरावः ॥१॥

प्रति । अग्निः । उषसः । चेकितानः । अबोधि । विप्रः । पदऽवीः । कवीनां ।
पृथुऽपाजाः । देवयत्ऽभिः । संऽइद्धः । अप । द्वारा । तमसः । वह्निः । आवरित्यावः ॥१॥

उषसश्चेकितानो जानन् विप्रो मेधावी कवीनां क्रांतदृशां पदवीर्मार्गेण गच्छन् योऽग्निः प्रत्यबोधि प्रतिबुध्यते पृथुपाजाः पृथुतेजा देवयद्भिर्देवकामैः समिद्धः सम्यक् दीप्तः स वह्निस्तमसोऽज्ञानस्य द्वारागमनद्वाराण्यपावः । अपावृणोति ॥

प्रेद्वग्निर्वावृधे स्तोमेभिर्गीर्भिः स्तोतॄणां नमस्य उक्थैः ।
पूर्वीर्ऋतस्य संदृशश्चकानः सं दूतो अद्यौदुषसो विरोके ॥२॥

प्र । इत् । ऊं इति । अग्निः । ववृधे । स्तोमेभिः । गीःऽभिः । स्तोतॄणां । नमस्यः । उक्थैः ।
पूर्वीः । ऋतस्य । संऽदृशः । चकानः । सं । दूतः । अद्यौत् । उषसः । विऽरोके ॥२॥

नमस्यः पूज्यो योऽग्निः स्तोतॄणां स्तोत्रैर्गीर्भिर्वाग्भिरुक्थैः शस्त्रैश्च प्रववृधे वृद्धिं प्राप्नोति दूतो देवानां दूतः सः पूर्वीर्बह्वीर्ऋतस्यादित्यस्य संदृशो दीप्तीश्चकानः कामयमानः सन् उषसो विरोके विरोचने प्रातःकाले समद्यौत । द्योतते । इत उ पूरणौ ॥

अधाय्यग्निर्मानुषीषु विक्ष्व१पां गर्भो मित्र ऋतेन साधन् ।
आ हर्यतो यजतः सान्वस्थादभूदु विप्रो हव्यो मतीनां ॥३॥

अधायि । अग्निः । मानुषीषु । विक्षु । अपां । गर्भः । मित्रः । ऋतेन । साधन् ।
आ । हर्यतः । यजतः । सानु । अस्थात् । अभूत् । ऊं इति । विप्रः । हव्यः । मतीनां ॥३॥

मित्रो यजमानानां मित्रभूत ऋतेन सत्येन साधन् कामान् साधयन् अपां गर्भोऽग्निर्मानुषीषु मनोः संबंधिनीषु विक्षु प्रजास्वधायि । देवैराहितः । किंच हर्यतः स्पृहणीयो यजतो यष्टव्यः स सानून्नतं धिष्ण्यमुत्तरवेद्याख्यमास्थात् । अध्यतिष्ठत् । विप्रः प्राज्ञोऽग्निर्मतीनां मातॄणां स्तोतॄणां हव्यः स्तुत्योऽभूत् ॥

मित्रो अग्निर्भवति यत्समिद्धो मित्रो होता वरुणो जातवेदाः ।
मित्रो अध्वर्युरिषिरो दमूना मित्रः सिंधूनामुत पर्वतानां ॥४॥

मित्रः । अग्निः । भवति । यत् । संऽइद्धः । मित्रः । होता । वरुणः । जातऽवेदाः ।
मित्रः । अध्वर्युः । इषिरः । दमूनाः । मित्रः । सिंधूनां । उत । पर्वतानां ॥४॥

इयमृक् अग्निं सर्वात्मकत्वेन स्तौति । यद्यदा समिद्धोऽग्निः तदा मित्रो भवति । सूर्यो भवति । मित्र एव सन् होता भवति । वरुणो भवति जातवेदा जातप्रज्ञः । स मित्रोऽध्वर्युर्भवति दमूना दानमना दांतमना वा । स एवेषिरः प्रेरको वायुर्भवति । उत अपि च सिंधूनां नदीनां पर्वतानां च मित्रः सहायो भवति ॥

पाति प्रियं रिपो अग्रं पदं वेः पाति यह्वश्चरणं सूर्यस्य ।
पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः ॥५॥

पाति । प्रियं । रिपः । अग्रं । पदं । वेः । पाति । यह्वः । चरणं । सूर्यस्य ।
पाति । नाभा । सप्तऽशीर्षाणं । अग्निः । पाति । देवानां । उपऽमादं । ऋष्वः ॥५॥

ऋष्वो दर्शनीयोऽग्निर्वर्गन्त्याः सर्वव्याप्तायाः रिपो भूम्याः प्रियमग्र्यं प्रथमं पदं स्थानं पाति । रक्षति । यह्वो महान् सूर्यस्य चरणं । चरत्यत्रेति चरणमन्तरिक्षं । पाति । नाभा नाभावन्तरिक्षस्य मध्ये सप्तशीर्षाणं मरुद्गणं पाति । देवानामुपमादमुपमादकं यज्ञं पाति । रक्षति ॥ ॥२४॥

ऋभुश्चक्र ईड्यं चारु नाम विश्वानि देवो वयुनानि विद्वान् ।
ससस्य चर्म घृतवत्पदं वेस्तदिदग्नी रक्षत्यप्रयुच्छन् ॥६॥
ऋभुः । चक्रे । ईड्यं । चारु । नाम । विश्वानि । देवः । वयुनानि । विद्वान् ।
ससस्य । चर्म । घृतऽवत् । पदं । वेः । तत् । इत् । अग्निः । रक्षति । अप्रऽयुच्छन् ॥६॥

ऋभुर्महान् विश्वानि सर्वाणि वयुनानि ज्ञातव्यानि पदार्थानि विद्वान् जानन् देवोऽग्निरीड्यं स्तुत्यं चारु मनोज्ञं नाम जलं चक्रे । करोति । नामेत्युदकनामसु पाठात् । वेर्व्याप्तस्य ससस्य स्वपतः शान्तज्वालस्याप्यग्नेश्चर्म रूपं घृतवद्दीप्तिमद्भवति । सोऽग्निस्तज्जलमप्रयुच्छन् अप्रमाद्यन् रक्षति । पालयति ॥

आ योनिमग्निर्घृतवन्तमस्थात्पृथुप्रगाणमुशन्तमुशानः ।
दीद्यानः शुचिर्ऋष्वः पावकः पुनःपुनर्मातरा नव्यसी कः ॥७॥
आ । योनिं । अग्निः । घृतऽवन्तं । अस्थात् । पृथुऽप्रगानं । उशन्तं । उशानः ।
दीद्यानः । शुचिः । ऋष्वः । पावकः । पुनःऽपुनः । मातरा । नव्यसी इति ।
करिति कः ॥७॥

उशानः कामयमानोऽग्निर्घृतवन्तं दीप्तिमन्तं पृथुप्रगाणं पृथुगीतिमुशन्तं कामयमानं योनिं स्थानमायतनम् आ अस्थात् । आतिष्ठति । दीद्यानो द्योतमानः शुचिर्दर्शनीयः शुद्धो वा ऋष्वो महान् पावकोऽन्येषां शोधयिताग्निर्मातरा मातरौ द्यावापृथिव्यौ पुनःपुनर्नव्यसी नवतरे कः । करोति ॥

सद्यो जात ओषधीभिर्ववक्षे यदी वर्धन्ति प्रस्वो घृतेन ।
आप इव प्रवता शुम्भमाना उरुष्यदग्निः पित्रोरुपस्थे ॥८॥
सद्यः । जातः । ओषधीभिः । ववक्षे । यदि । वर्धन्ति । प्रऽस्वः । घृतेन ।
आपःऽइव । प्रऽवता । शुम्भमानाः । उरुष्यत् । अग्निः । पित्रोः । उपऽस्थे ॥८॥

सद्यो जातोऽग्निर्यदि यदौषधीभिर्ववक्षे उह्यते तदा प्रवता प्रवणेन मार्गेण गच्छन्त्य आप इव शुम्भमानाः शोभमानास्ता ओषध्यः प्रस्वः फलानि प्रसुवाना घृतेनोदकेन वर्धन्ति । वर्धयन्ति । पित्रोर्द्यावापृथिव्योरुपस्थे मध्यप्रदेशे वर्धमानोऽग्निरुरुष्यत् । अस्मान्रक्षतु ॥

उदु ष्टुतः समिधा यह्वो अद्यौद्वर्ष्मन्दिवो अधि नाभा पृथिव्याः ।
मित्रो अग्निरीड्यो मातरिश्वा दूतो वक्षद्यजथाय देवान् ॥९॥
उत् । ऊं इति । स्तुतः । सम्ऽइधा । यह्वः । अद्यौत् । वर्ष्मन् । दिवः । अधि । नाभा । पृथिव्याः ।
मित्रः । अग्निः । ईड्यः । मातरिश्वा । आ । दूतः । वक्षत् । यजथाय । देवान् ॥९॥

उ इति पादपूरणः । स्तुतोऽस्माभिः स्तुतैः समिधा समिन्धनेन यह्वो महान् अग्निः पृथिव्या उत्तरवेद्या

नाभा नाभौ मध्यप्रदेशे स्थितः सन् दिवोऽन्तरिक्षस्य वर्ष्मन् वर्ष्मणि रूपे उदद्योत। द्योतते। मित्रः सर्वेषां मित्रभूत ईड्यः स्तुत्यो मातरिश्वा। मातर्यन्तरिक्षे श्वसिति प्राणिति सूर्यरूपेण चेष्टत इति मातरिश्वा। अथवा मातर्यरण्यां श्वसिति निवसतीति मातरिश्वा। तथाह यास्कः। मातर्यन्तरिक्षे श्वसिति मातर्याश्वनितीति वा। नि० ७.२६। दूतो देवानां दूतः सन् यजथाय यज्ञाय देवानावक्षत। आवहतु॥

उदस्तंभीत्समिधा नाकमृष्वो३ऽग्निर्भवन्नुत्तमो रोचनानां।
यदी भृगुभ्यः परि मातरिश्वा गुहा संतं हव्यवाहं समीधे ॥१०॥
उत्। अस्तंभीत्। संऽइधा। नाकं। ऋष्वः। अग्निः। भवन्। उत्ऽतमः। रोचनानां।
यदि। भृगुऽभ्यः। परि। मातरिश्वा। गुहा। संतं। हव्यऽवाहं। संऽईधे॥१०॥

ऋष्वो महानग्निः समिधा तेजसा नाकं स्वर्गमुदस्तंभीत। उदस्तभ्नात। रोचनानां शोभनानां तेजसां मध्य उत्तमो भवन् उत्कृष्टतमो भवन् मातरिश्वा वायुर्भृगुभ्य आदित्यस्य रश्मिभ्यो गुहा गुहायां सन्तं हव्यवाहं हव्यानां वोढारमग्निं यदि यदा समीधे समैन्धत्तदा नाकमस्तभ्नादिति संबंधः॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥११॥
इळां। अग्ने। पुरुऽदंसं। सनिं। गोः। शश्वत्ऽतमं। हवमानाय। साध।
स्यात्। नः। सूनुः। तनयः। विजाऽवा। अग्ने। सा। ते। सुऽमतिः। भूतु। अस्मे इति॥११॥

पूर्वं व्याख्याता॥ ॥२५॥

प्र कारव इत्येकादशर्चं षष्ठं सूक्तं वैश्वामित्रमाग्नेयं प्र कारव इत्यनुक्रांतत्वात्॥ प्रातरनुवाकाश्विनशस्त्रयोः सूक्तविनियोगः पूर्वसूक्त एव प्रथमाग्निरूपसमस्त्रीणीत्यनेनोक्तः॥ आद्याग्नेये पशौ हविषो याज्या। सूत्रितं च। प्र कारवो मनना वच्यमाना एकाचेतत्सरस्वती नदीनां। आ० ३.७। इति॥ एभिरग्न इति पात्नीवतग्रहस्य याज्या। सूत्रितं च। आग्नीध्रः पात्नीवतस्य यजत्येभिरग्ने सरथं याह्यर्वाङिति। आ० ५.१९। इति॥

प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देवयंतः।
दक्षिणावाड्वाजिनी प्राच्येति हविर्भरंत्यग्नये घृताची ॥१॥
प्र। कारवः। मनना। वच्यमानाः। देवद्रीचीं। नयत। देवऽयंतः।
दक्षिणाऽवाट्। वाजिनी। प्राची। एति। हविः। भरंती। अग्नये। घृताची॥१॥

हे कारवः कर्तारो देवयंतो देवकामा यूयं मनना मननेन मंत्रेण वच्यमाना प्रेर्यमाणाः सन्तो देवद्रीचीं देवानंचतीं स्रुचं प्रणयत। प्रकर्षेण नयत। प्रापयत। दक्षिणावाट् आहवनीयस्य दक्षिणत उह्यमाना वाजिन्यन्नवती प्राची प्रागग्रा अग्नयेऽग्न्यर्थं हविर्भरंती हविर्धारयंती घृताची घृतेनाक्ता स्रुक् एति। गच्छति॥

आ रोदसी अपृणा जायमान उत प्र रिक्था अध नु प्रयज्यो।
दिवश्चिदग्ने महिना पृथिव्या वच्यंतां ते वह्नयः सप्तजिह्वाः ॥२॥

आ। रोदसी इति। अपृणाः। जायमानः। उत। प्र। रिक्थाः। अध। नु। प्रयज्यो इति प्रऽयज्यो।
दिवः। चित्। अग्ने। महिना। पृथिव्याः। वच्यंतां। ते। वह्नयः। सप्तऽजिह्वाः ॥ २ ॥

हे अग्ने जायमानस्त्वं रोदसी द्यावापृथिव्यौ आ अपृणाः। आपूरयः। किंच हे प्रयज्यो यष्टव्य दिवश्चित् दिवश्चांतरिक्षात्पृथिव्याश्च महिना महिम्ना प्ररिक्थाः। अतिरिक्तश्चासि। अनेन वह्नेरतिशय उक्तः। एवंविधस्य ते तव वह्नयोऽग्नयोऽशभूता वह्नय आहवनीयादयो वच्यतां। कीदृशाः। सप्तजिह्वाः। सप्तजिह्वात्मकाः ॥

द्यौश्च त्वा पृथिवी यज्ञियासो नि होतारं सादयंते दमाय।
यदी विशो मानुषीर्देवयंतीः प्रयस्वतीरीळते शुक्रमर्चिः ॥ ३ ॥
द्यौः। च। त्वा। पृथिवी। यज्ञियासः। नि। होतारं। सादयंते। दमाय।
यदि। विशः। मानुषीः। देवऽयंतीः। प्रयस्वतीः। ईळते। शुक्रं। अर्चिः ॥ ३ ॥

द्यौश्चांतरिक्षं पृथिवी च यज्ञियासो यज्ञार्हा देवाश्च होतारं त्वा त्वां दमाय। दमो यज्ञः। तस्मा अर्थं निषादयंते। उपशमयंति। यदि यदा मानुषीर्मनोः संबंधिन्यो देवयंतीर्देवकामाः प्रयस्वतीर्हविष्मत्यो विशः प्रजा होतारः शुक्रं दीप्तमर्चिरीळते। स्तुवंति ॥

महान्त्सधस्थे ध्रुव आ निषत्तोऽंतर्द्यावा माहिने हर्यमाणः।
आस्क्रे सपत्नी अजरे अमृक्ते सबर्दुघे उरुगायस्य धेनू ॥ ४ ॥
महान्। सधऽस्थे। ध्रुवः। आ। निऽसत्तः। अंतः। द्यावा। माहिने इति। हर्यमाणः।
आस्क्रे इति। सपत्नी इति सऽपत्नी। अजरे इति। अमृक्ते इति। सबर्दुघे इति सबःऽदुघे। उरुऽगायस्य। धेनू इति ॥ ४ ॥

महान् अधिको हर्यमाणो यजमानादिभिः काम्यमानः। यद्वा यजमानाय धनं कामयमानोऽग्निर्द्यावांतर्द्युभूम्योर्मध्ये माहिने महिम्ना युक्ते सधस्थे स्वकीये स्थाने ध्रुवोऽचलः सन् आ निषत्तो निषण्णो भवति। आस्क्रे आक्रमणशीले सपत्नी समान एकः सूर्यः पतिर्ययोस्ते सपत्न्यौ अजरे जरारहिते अमृक्ते अन्यैरहिंसिते सबर्दुघे। सबरित्यमृतमुदकं। तस्य दोग्ध्र्यौ द्यावापृथिव्यावुरुगायस्य पृथुगमनस्याधिकस्तुतेर्वाग्नेर्धेनू प्रीणयित्र्यौ भवतः ॥

व्रता ते अग्ने महतो महानि तव क्रत्वा रोदसी आ ततंथ।
त्वं दूतो अभवो जायमानस्त्वं नेता वृषभ चर्षणीनां ॥ ५ ॥
व्रता। ते। अग्ने। महतः। महानि। तव। क्रत्वा। रोदसी इति। आ। ततंथ।
त्वं। दूतः। अभवः। जायमानः। त्वं। नेता। वृषभ। चर्षणीनां ॥ ५ ॥

हे अग्ने महतः सर्वोत्कृष्टस्य ते तव व्रता व्रतानि त्वत्संबंधीनि कर्माणि महानि महांति भवंति। तव क्रत्वा क्रतुना प्रकाशेन रोदसी द्यावापृथिव्यावाततंथ। विस्तृतवानसि। त्वं दूतोऽभवः। भव। हे वृषभ वर्षणशील त्वं जायमानः सन् चर्षणीनां यजमानानां नेतासि। फलप्रापकोऽसि ॥ ॥ २६ ॥

ऋतस्य वा केशिना योग्याभिर्घृतस्नुवा रोहिता धुरि धिष्व ।
अथा वह देवान्देव विश्वान्स्वध्वरा कृणुहि जातवेदः ॥ ६॥
ऋतस्य । वा । केशिना । योग्याभिः । घृतऽस्नुवा । रोहिता । धुरि । धिष्व ।
अथ । आ । वह । देवान । देव । विश्वान् । सुऽअध्वरा । कृणुहि । जातऽवेदः ॥ ६॥

हे देव केशिना प्रशस्तकेशवंतौ योग्याभिर्योजनसाधनभूताभी रज्जुभिर्युक्तौ घृतस्नुवा घृत चरंतौ रोहिता रोहितावश्वौ ऋतस्य यज्ञस्य ॥ वाशब्दश्चार्थे ॥ धुरि च धिष्व । धेहि । योजयेत्यर्थः । अथानंतरं विश्वान सर्वान्देवान रथं समारोप्य आ वह । हे जातवेदः तान स्वध्वरा स्वध्वरान शोभनाध्वरान कृणुहि । कुरु ॥

दिवश्चिदा ते रुचयंत रोका उषो विभातीरनु भासि पूर्वीः ।
अपो यदग्न उशधग्वनेषु होतुर्मंद्रस्य पनयंत देवाः ॥ ७॥
दिवः । चित् । आ । ते । रुचयंत । रोकाः । उषः । विऽभातीः । अनु । भासि । पूर्वीः ।
अपः । यत् । अग्ने । उशधक् । वनेषु । होतुः । मंद्रस्य । पनयंत । देवाः ॥ ७॥

हे अग्ने यत यदा वनेष्वरण्येष्वप उशधक कामयमानो दहंश्च वर्तसे तदा ते रोकाश्च त्वदीया दीप्तयो दिवश्चित सूर्यादप्यारुचयत । आरोचंते । विभातीर्विशेषेण भातीः प्रकाशमानाः पूर्वीः पुराणीरुष उषसोऽन भासि । मंद्रस्य स्तुत्यस्य होतुस्तव रोकान देवाः स्तोतारः पनयंत । स्तुवंति ॥

उरौ वा ये अंतरिक्षे मदंति दिवो वा ये रोचने संति देवाः ।
ऊमा वा ये सुहवासो यजत्रा आयेमिरे रथ्यो अग्ने अश्वाः ॥ ८॥
उरौ । वा । ये । अंतरिक्षे । मदंति । दिवः । वा । ये । रोचने । संति । देवाः ।
ऊमाः । वा । ये । सुऽहवासः । यजत्राः । आऽयेमिरे । रथ्यः । अग्ने । अश्वाः ॥ ८॥

उरौ विस्तीर्णेऽतरिक्षे ये देवा मदंति । हृष्यंति । दिवः सूर्यस्य रोचने प्रकाशने आलोके ये देवाः संति । ऊमाः । ऊमसंज्ञकाः पितरः संति । यजत्रा यष्टव्या ये देवाः सुहवासः शोभनाह्वाना आयेमिरे । आयच्छंति । रथ्यो रथिनस्तव येऽश्वाः संति हे अग्ने तैः सर्वैः सार्धमायाहीत्युत्तरयर्चा संबंधः ॥

ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः ।
पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व ॥ ९॥
आ । एभिः । अग्ने । सऽरथं । याहि । अर्वाङ् । नानाऽरथं । वा । विऽभवः । हि । अश्वाः ।
पत्नीऽवतः । त्रिंशतं । त्रीन् । च । देवान । अनुऽस्वधं । आ । वह । मादयस्व ॥ ९॥

हे अग्ने एभिः पूर्वोक्तैर्देवगणैः सार्धं सरथं समानरथं नानारथं वा त्वद्रथं समारोप्यायाह्यर्वाङ् अस्मदभिमुखमायाहि । यतः कारणात्तेऽश्वा विभवः प्रभवः समर्थाः ॥ हिः प्रसिद्धौ ॥ पत्नीवतः पत्नीभिः सहितान त्रिंशतं त्रींश्च त्रयस्त्रिंशतं देवांश्चानुष्वधं अन्नार्थमन्नार्थं वावह । मादयस्व सोमेनेति विशेषः ॥

स होता यस्य रोदसी चिदुर्वी यज्ञंयज्ञमभि वृधे गृणीतः ।
प्राची अध्वरेव तस्थतुः सुमेके ऋतावरी ऋतजातस्य सत्ये ॥ १०॥

सः। होता। यस्य। रोदसी इति। चित्। उर्वी इति। यज्ञंऽयज्ञं। अभि। वृधे। गृणीतः।
प्राची इति। अध्वराऽइव। तस्थतुः। सुमेके इति सुऽमेके। ऋतवरी इत्यृतऽवरी।
ऋतऽजातस्य। सत्ये इति ॥१०॥

स एव होता भवति उर्वी विस्तीर्णे रोदसी चित द्यावापृथिव्यावपि यस्याग्नेर्यज्ञंयज्ञं सर्वं यज्ञं वृधे ममृद्धयेऽभिगृणीतः। प्रशंसतः। ऋतजातस्य जातसत्यस्य होतुः सुमेके सुरूपे ऋतावरी उदकवत्यौ सत्ये सत्यस्वरूपे प्राची अनुकूले तस्थतुः। तिष्ठतः। कथमिव। अध्वरेव। अध्वराविव। यज्ञाविव ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥११॥
इळां। अग्ने। पुरुऽदंसं। सनिं। गोः। शश्वत्ऽतमं। हवमानाय। साध।
स्यात्। नः। सूनुः। तनयः। विजाऽवा। अग्ने। सा। ते। सुऽमतिः। भूतु। अस्मे इति ॥११॥

इळामग्न इतीयं पूर्वं व्याख्याता ॥ ॥२१॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टकेऽष्टमोऽध्यायः समाप्तः ॥

ओं

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

सोमस्येत्यनुवाके द्वादश सूक्तानि । तत्र प्र य आरुरित्येकादशर्चं सप्तमं सूक्तं । मंडलद्रष्टा विश्वामित्र ऋषिः । अनुक्तत्वात् त्रिष्टुप् छंदः । मंडलादिपरिभाषयाग्निर्देवता ॥ प्रातरनुवाकाश्विनशस्त्रयोः सूक्तत्रयस्य प्रत्यभिरूपस्त्वीणीति विनियोग उक्तः । तत्रेदं तृतीयं सूक्तं ॥

प्र य आरुः शितिपृष्ठस्य धासेरा मातरा विविशुः सप्त वाणीः ।
परिक्षिता पितरा सं चरेते प्र सर्स्राते दीर्घमायुः प्रयक्षे ॥१॥

प्र । ये । आरुः । शितिऽपृष्ठस्य । धासेः । आ । मातरा । विविशुः । सप्त । वाणीः ।
परिऽक्षिता । पितरा । सं । चरेते इति । प्र । सर्स्राते इति । दीर्घं । आयुः । प्रऽयक्षे ॥१॥

शितिपृष्ठस्य नीलपृष्ठस्य धासेः सर्वस्य धारयितुरग्नेर्ये रश्मयः प्रारुः प्रकर्षेणोद्गच्छंति ते रश्मयो मातरा मातरौ द्यावापृथिव्यावाविविशुः । सर्वतः प्रविष्टाः । सप्त सर्पणस्वभावा वाणीर्वननीया नदीश्चाविविशुः । परिक्षिता परितो वर्तमानौ पितरा पितरौ द्यावापृथिव्यौ तेनाग्निना संचरेते । सम्यक् व्यवहरतः । तथा प्रयक्षे प्रकर्षेण यष्टुं दीर्घमायुरग्नेश्चिरं जीवनं प्रभूतमन्नं वा प्रसर्स्राते । प्रसारयतः । संपादयत इत्यर्थः । यद्वा द्यावापृथिव्यौ प्रयक्षे प्रकर्षेण सततं यष्टृ यजमानस्य दीर्घमायुः संपादयतः ॥ प्र । निपातत्वेनाद्युदात्तः । तस्य कृदसि व्यवहितार्थेति आरुरित्यनेन संबंधः । आरुः । ऋ गतौ । लिड्युसि रूपं । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः । शितिपृष्ठस्य । पृष्ठशब्दस्थक्प्रत्ययांतोऽतोदात्तः । शितेर्नित्याबह्वच बहुव्रीहावभसदित्युत्तरपदप्रकृतिस्वरत्वं । धासेः । डुधाञ् धारणपोषणयोः । धेट् पाने वा । तस्मात्कर्तर्यौणादिकः सिः । प्रत्ययस्वरः । मातरा । नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृमातृपितृजामातृदुहितृ । उ॰ २ ९६ । इति तृजंतत्वेन निपातनादंतोदात्तः । ऋतो ङीति गुणः । सुपां सुलुगिति सुपो डादेशः । विविशुः । विश प्रवेशने । लिटि असंयोगाल्लिट् किदिति कित्त्वाद्गुणाभावः । निघातः । सप्त । षप्ऌ गतौ । सप्यशूभ्यां तुट् च । उ॰ १ १५६ । इति संपूर्वविधीयमानः कनिन् तुडागमश्च बाहुलकादितस्यापि भवति । ऋकारस्याकारश्च । प्रत्ययनित्त्वेऽपि व्यत्ययेनांतोदात्तत्वं । परिक्षिता । क्षि निवासगत्योः । क्विप् चेति क्विप् । पित्त्वात्तुगागमः । प्रादिसमासः । कृदुत्तरपदप्रकृतिस्वरत्वं । सुपां सुलुगिति सुपो डादेशः । चरेते । चर गतिभक्षणयोः । संपूर्वाच्चरतेः समस्तृतीयायुक्तात् । पा॰ १ ३ ५४ । इत्यात्मनेपदं । निघातः । सर्स्राते । सृ गतौ । अयमंतर्भावितण्यर्थः । रेफस्यकादेशः । ईदूदेदिति प्रगृह्यसंज्ञा । निघातः । आयुः । इण् गतौ । उसिन्नित्यनुवृत्तौ एतेर्णिच्चेत्युसिन । णित्त्वाद्वृद्धिः । नित्त्वादाद्युदात्तः । प्रयक्षे । यज देवपूजासंगतिकरणदानेष्वित्यस्मात्तुमर्थे सेन्प्रत्ययः । प्रादिसमासः । कृदुत्तरपदप्रकृतिस्वरत्वं । कृन्मेजंत इत्यव्ययसंज्ञायां अव्ययादाप्सुप इति सुपो लुक् ॥

दिवक्षसो धेनवो वृष्णो अश्वा देवीरा तस्थौ मधुमद्वहंतीः ।
ऋतस्य त्वा सदसि क्षेमयंतं पर्येका चरति वर्तनिं गौः ॥२॥

दिवऽक्षसः । धेनवः । वृष्णः । अश्वाः । देवीः । आ । तस्थौ । मधुऽमत् । वहंतीः ।
ऋतस्य । त्वा । सदसि । क्षेमऽयंतं । परि । एका । चरति । वर्तनिं । गौः ॥२॥

वृष्णः कामानां वर्षितुरग्नेरश्वा वाहनरूपा रोहिता दिवक्षसो दिवं व्याप्य वर्तमाना धेनवोऽग्नेः प्रीणयित्र्यो भवंति । सोऽयमग्निर्मधुमत माधुर्योपेतमुदकं वहंतीर्देवीर्द्योतनशीला नदीरातस्थौ । आतिष्ठति । प्राप्नोतीत्यर्थः । गोशब्दो माध्यमिकवाग्वाची माध्यमिकां वाचमिति नैरुक्ता इत्यभिधानात । एका गौः काचिदुक्तविधा वाक् ऋतस्योदकस्य सदसि स्थानेऽंतरिक्षे क्षेमयंत क्षेममावासमिच्छंतं वर्तनिं ज्वालाः प्रवर्तयंत त्वा हे अग्ने त्वां परिचरति । सेवते ॥ दिवक्षसः । अक्षू व्याप्तौ । दिवं व्याप्नुवंतीति दिवक्षसः । वक्ष रोषे । रोषार्थोऽप्ययं धातुरत्र व्याप्तौ वर्तते । दिव वक्षति व्याप्नुवंतीति । असुन्नित्यसुन्प्रत्ययः । लोपो व्योर्वलीति वलोपः । कृदुत्तरपदप्रकृतिस्वरत्वं । धेनवः । नुरित्यनुवृत्तौ धेट इच्चेति नुप्रत्ययः । इकारस्य गुणः । प्रत्ययस्वरः । वृष्णः । वृष सेचने । कनिन्युवृषितक्षिराजीत्यादिना कनिन । कित्त्वाद्गुणाभावः । नित्त्वादाद्युदात्तः । अश्वाः । अशू व्याप्तौ । अशिप्रुषिलटिकणीत्यादिना क्वन । नित्त्वादाद्युदात्तः । तस्थौ । ष्ठा गतिनिवृत्तौ । छंदसि लुङ्लङ्लिट इति वर्तमाने लिट । आत औ णल इत्यौकारः । निघातः । मधुमत । निदित्यनुवृत्तौ फलिपाटिनमिमनिजनामित्यादिना मनेरुप्रत्ययः । तत्संनियोगेन नकारस्य धकारः । नित्त्वादाद्युदात्तः । त्वा । युष्मच्छब्दस्य द्वितीयैकवचनांतस्य त्वामौविति त्वादेशः । अनुदात्तश्च । क्षेमयंतं । क्षि निवासगत्योः । अर्तिस्तुसुहुसृधृक्षीत्यादिना मन । क्षेममावासमात्मन इच्छंत । सुप आत्मनः क्यजिति क्यच । क्यचि चेतीत्वं अकृत्सार्वधातुकयोर्दीर्घ इति दीर्घत्वं च न च्छंदस्यपुत्रस्येति प्रतिषिध्यते । क्यचश्चित्त्वादंतोदात्तः । तदंताच्छतृप्रत्ययः । शप । शपः पित्त्वादनुदात्तत्वं शतुश्च सार्वधातुकस्वरेण । तयोः क्यचा सहैकादेशे कृते एकादेश उदात्तेनोदात्त इत्येकादेश उदात्तः । अम । सुप्त्वादनुदात्तः । उदात्तादनुदात्तस्येत्यमः स्वरितत्वं । एका । इण गतौ । इणभीकापात्यादिना कन । तदंतादाप । नित्स्वरः । वर्तनि । वृतु वर्तने । अंतर्भावितण्यर्थः । वृतेश्च । उ० २. १०१ । इत्यनिः । गुणः । व्यत्ययेनांतोदात्तत्वं । गौः । गम्लृ गतौ । गमेर्डोः । उ० २. ६१. । इति डोप्रत्ययः । डित्त्वाट्टिलोपः । गोतो णिदिति सुपो णित्त्वाद्वृद्धिः । प्रत्ययस्वरः ॥

आ सीमरोहत्सुयमा भवंतीः पतिश्चिकित्वान्रयिविद्रयीणां ।
प्र नीलपृष्ठो अतसस्य धासेस्ता अवासयत्पुरुधप्रतीकः ॥३॥
आ । सीं । अरोहत् । सुऽयमाः । भवंतीः । पतिः । चिकित्वान । रयिऽवित् । रयीणां ।
प्र । नीलऽपृष्ठः । अतसस्य । धासेः । ताः । अवासयत् । पुरुधऽप्रतीकः ॥३॥

रयीणां रयिवित धनानां मध्ये विशिष्टधनस्य लंभयिता चिकित्वान ज्ञानवान पतिरश्वानां पतिरग्निः सीं सर्वतः सुयमाः सुखेन नियंतुं शक्या भवतीर्या वडवा आरोहत आरोहयति स्म नीलपृष्ठः पुरुधप्रतीको बहुधाविक्षिप्तांगः सोऽग्निरतसस्य सततगमनस्य धासेः पोषणार्थं ता अश्वाः प्रावासयत । प्रकर्षेण वासयति स्म । निवासेन अग्नेऽपनीते सततगमनं पोषयितुं शक्यमित्यर्थः ॥ सीं । चादयोऽनुदात्ता इत्यनुदात्तः । अरोहत । रुह प्रादुर्भावे । लङि रूपं । निघातः । सुयमाः । यम उपरमे । अस्मात्कर्मार्थ ईषद्दुःसुष्विति खल । कृदुत्तरपदप्रकृतिस्वरत्वं । पतिः । पा रक्षणे । पातेर्डतिरिति डित्त्वाट्टिलोपः । प्रत्ययस्वरः । चिकित्वान । चिति संज्ञाने । क्वसौ रूपं । रयिवित । विद्लृ लाभे । क्विप । रयीणां । नामन्यतरस्यामिति विभक्तेरुदात्तत्वं । नीलपृष्ठः । नीलशब्दो वृषादित्वादाद्युदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अतसस्य । अत सातत्यगमने इत्यस्मादत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्यः । उ० ३. ११७ । इत्यसच । चित्स्वरः । अवासयत । वस निवासे । हेतुमतीति णिच लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागमः । तिङ्ङतिङ इति निघातः । पुरुधप्रतीकः । पुरुशब्द इह संख्यावाची । संख्याया विधार्थे धेति धाप्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । ह्रस्वश्छांदसः ॥

मह्नि त्वाष्ट्रमूर्जयंतीरजुर्यं स्तभूयमानं वहतो वहंति ।
व्यंगेभिर्दिद्युतानः सधस्थ एकामिव रोदसी आ विवेश ॥४॥
महि । त्वाष्ट्रं । ऊर्जयंतीः । अजुर्यं । स्तभुऽयमानं । वहतः । वहंति ।
वि । अंगेभिः । दिद्युतानः । सधऽस्थे । एकांऽइव । रोदसी इति । आ । विवेश ॥४॥

ऊर्जयंतीरबलं बलिनं कुर्वत्यो वहतो वहनपरा नद्यो महि महांतं त्वाष्ट्रं त्वष्टुः सुतमजुर्यं जरयितृमनर्हं स्तभूयमानं लोकानां स्तभनं धारणमिच्छंतमग्निं वहंति । धारयंति । सधस्थेऽपां समीपेऽगेभिरवयवैर्दिद्युतानो दीप्यमानः सन् अग्नी रोदसी द्यावापृथिव्यौ व्याविवेश । विविध प्रविष्टवान् । रोदस्योर्दृष्टांतः । एकामिव । यथा पुमानेकां स्त्रियं प्रविशति । तद्वत् ॥ त्वाष्ट्रं । त्वष्टुरपत्यमित्यर्थे तस्यापत्यमित्यण् । प्रत्ययस्वरः । स्तभूयमानं । स्तभु स्तंभनं । तदिच्छतं । सुप आत्मनः क्यच् । अकृत्सार्वधातुकयोरिति दीर्घः । तदंताल्लटयेन शानच् । अकारांतत्वादाने मुक् । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे कृते क्यजंतधातुस्वरः शिष्यते । अंगेभिः । बहुलं छंदसीति भिस ऐसादेशाभावः । बहुवचने झल्येदित्येत्वं । दिद्युतानः । द्युत दीप्तौ । छंदसि लिट् । तस्य कानजादेशः । द्विर्वचनं । हलादिशेषे कृते द्युत इत्यस्याभ्यासस्य द्युतिस्वाप्योः संप्रसारणं । पा० ७ ४ ६७ । इति संप्रसारणं । संप्रसारणाच्चेति पूर्वरूपत्वं । चित्त्वादंतोदात्तत्वं । एकामिव । इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चेति वचनात्पूर्वपदप्रकृतिस्वरः । विवेश । विश प्रवेशने इत्यस्माल्लिटि रूपं । निघातः ॥

जानंति वृष्णो अरुपस्य शेवमुत ब्रध्नस्य शासने रणंति ।
दिवोरुचः सुरुचो रोचमाना इळा येषां गण्या माहिना गीः ॥५॥
जानंति । वृष्णः । अरुपस्य । शेवं । उत । ब्रध्नस्य । शासने । रणंति ।
दिवःऽरुचः । सुऽरुचः । रोचमानाः । इळा । येषां । गण्या । माहिना । गीः ॥५॥

वृष्णः कामानां वर्षितुररुपस्य । रुपा हिंसकाः । तद्रहितस्य । शत्रुराहित्येन रोचमानस्येत्यर्थः । तथाविधस्याग्नेः शेवमाश्रयविषयं सुखं जना जानंति । उत अपि च जानंतस्ते ब्रध्नस्य महतोऽग्नेः शासने आज्ञायां सर्वे जना रणंति । रमंते । तथा च मंत्रः । म० १. ६० २ । अस्य शासुरुभयासः सचंते हविष्मंत उशिजो ये च मर्ता इति । अपि च । येषां मनुष्याणामग्निविषया माहिना महतीळा गीः स्तुतिरूपा वाक् गण्या गणनीया पूज्या ते दिवोरुचो द्युलोकस्य रोचकाः सुरुचः शोभनदीप्तयो रोचमाना दीप्यमाना भवंति ॥ जानंति । ज्ञा अवबोधने । क्र्यादित्वात्तस्य ज्ञाजनोर्जेति जादेशः । प्रत्ययस्वरः । अरुपस्य । रुप रिप हिंसार्थाः । रोपतीति रुपा हिंसकाः । इगुपधज्ञेति कः । न संति रुपा यस्यासावरुपः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । शेवं । शीङ् स्वप्ने । इणशीङ्भ्यां वन्निति वन् । नित्स्वरः । शासने । शासु अनुशिष्टौ । अस्मात्सार्वे ल्युट् । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । रणंति । निघातः । दिवोरुचः । रुच दीप्तौ । अस्मात्क्विप् । तत्पुरुषे कृति बहुलमिति षष्ठ्या अलुक् । कृदुत्तरपदप्रकृतिस्वरत्वं । सुरुचः । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । इळा । ईळ स्तुतौ । ह्रस्वश्छांदसः । यथा वाक्शब्दष्टाबंतस्तद्वत् । पित्त्वादनुदात्तत्वे धातुस्वरः । गण्या । गण संख्याने । स्वार्थे ण्यंतादचो यत् । यतोऽनाव इत्याद्युदात्तत्वं । माहिना । महेरिनण् चेति इनण् । णित्त्वादुपधावृद्धिः । व्यत्ययेनाद्युदात्तः । गीः । गॄ शब्दे । अस्मात्क्विप् । ऋत इद्धातोरितीत्वं । र्वोरुपधाया इति दीर्घः । प्रातिपदिकस्वरः ॥ ॥१॥

उतो पितृभ्यां प्रविदानु घोषं महो महद्भ्यामनयंत शूषं ।
उक्षा ह यत्र परि धानमक्तोरनु स्वं धाम जरितुर्ववक्ष ॥६॥
उतो इति । पितृऽभ्यां । प्रऽविदा । अनु । घोषं । महः । महतऽभ्यां । अनयंत । शूषं ।
उक्षा । ह । यत्र । परि । धानं । अक्तोः । अनु । स्वं । धाम । जरितुः । ववक्ष ॥६॥

उतो अपि च महो महद्भ्यां महतो महद्भ्यां पितृभ्यां द्यावापृथिवीभ्यां प्रविदा प्रवेदनेनानु घोषमनु घुष्यमाणं शुषं सुखं। शुषं शुनमिति सुखनामसु पाठात्। तत्सुखं यजमाना अग्निमनयंत। अग्निं प्रापितवंतः। सोऽग्निर्यत्र यजमानेपूक्ता वृष्ट्युत्पादनेनोदकस्य सेक्ताक्तोः। अक्तुशब्दो रात्रिमाचष्टे। शर्वरी अक्तुरिति तन्नामसु पाठात् अज्यते सिच्यते नीहारेण जगदस्यामिति व्युत्पत्तेश्च। तस्या रात्रेः परि धाम परितो धारकं स्वमात्मीयं धाम तेजो जरितुः स्तोतुः स्तुतिश्रवणार्थमनु ववक्ष ह। समीपे वहति खलु। संनिहितं करोतीत्यर्थः॥ उतो। ओदिति प्रगृह्यसंज्ञा। एवमादित्वादंतोदात्तः। घोषं। घुषिर् शब्दे। अस्मात्कर्मणि घञ्। लघूपधगुणः। ञित्स्वरः। महः। अकारतकारयोर्लोपश्छांदसः। बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वं। अनयंत। णीञ् प्रापण इत्यस्य लङि रूपं। निघातः। उक्ता। उक्ष सेचने। श्वन्नुक्षन्नित्यादिना कनिन्प्रत्ययांतत्वेनोक्षन्शब्दो निपातितः। व्यत्ययेनांतोदात्तः। ह। चादित्वादनुदात्तः। यत्र। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। अक्तोः। अञ्जू व्यक्तिम्रक्षणकांतिगतिष्वित्यस्मात् व्याज्यर्तिभ्यः क्तुरिति क्तुः। कित्त्वादनिदितामिति नलोपः। प्रत्ययस्वरः। ववक्ष। वह प्रापणे। छंदसि लुङ्लङ्लिट इति वर्तमाने लिट्। सकारश्छांदसः। तिपो णलादेशः। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं॥

अध्वर्युभिः पंचभिः सप्त विप्राः प्रियं रक्षंते निहितं पदं वेः।
प्रांचो मदंत्युक्षणो अजुर्या देवा देवानामनु हि व्रता गुः॥७॥
अध्वर्युऽभिः। पंचऽभिः। सप्त। विप्राः। प्रियं। रक्षंते। निऽहितं। पदं। वेरिति वेः।
प्रांचः। मदंति। उक्षणः। अजुर्याः। देवाः। देवानां। अनु। हि। व्रता। गुरिति गुः॥७॥

उद्गातृवर्गव्यतिरिक्ता द्वादशर्त्विजो भवंति। तत्र सप्त वषट्कर्तारः। पंचान्येऽध्वरं नयंति। तैः पंचभिरध्वर्युभिः सह सप्त विप्रा मेधाविनो होत्रका वेर्गमनस्वभावस्याग्नेः प्रियं निहितमाहवनीयाख्यं पदं रक्षंते। पालयंति। प्राचः सोमपानार्थं प्राङ्मुखा गच्छंतोऽजुर्या जरयितुमशक्या उक्षणः सोमरसस्य सेक्तारो देवाः स्तोतारो मदंति। हृष्यंति। किंच ते देवा देवानां संबंधीनि व्रता व्रतानि यज्ञाननुगुः। अन्वगच्छन्। हि प्रसिद्धौ। अग्नेः प्रमादाद्देवा यज्ञान् लब्धवंत इत्यर्थः॥ रक्षंते। रक्ष पालने। व्यत्ययेनात्मनेपदं। निघातः। निहितं। डुधाञ् धारणपोषणयोरित्यस्य कर्मणि निष्ठायां दधातेर्हिरिति हिरादेशः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। वेः। वी कांतिगत्यादिषु। अस्मादिञ्च। सार्वधातुकार्धधातुकयोः। पा॰ ७. ३. ८४। इति गुणः। इसिङसोश्चेति पूर्वरूपत्वं। प्रांचः। अनिगंतोंऽचतावप्रत्यय इति पूर्वपदप्रकृतिस्वरत्वं। मदंति। मदी हर्षे। निघातः। गुः। इण् गतावित्यस्माल्लुङि रूपं। इणो गा लुङीति गादेशः। आत इति झेर्जुसादेशः। बहुलं छंदसीत्यड भावः। हिशब्दयोगान्न निहन्यते॥

दैव्या होतारा प्रथमा न्यृंजे सप्त पृक्षासः स्वधया मदंति।
ऋतं शंसंत ऋतमित्त आहुरनु व्रतं व्रतपा दीध्यानाः॥८॥
दैव्या। होतारा। प्रथमा। नि। ऋंजे। सप्त। पृक्षासः। स्वधया। मदंति।
ऋतं। शंसंतः। ऋतं। इत्। ते। आहुः। अनु। व्रतं। व्रतऽपाः। दीध्यानाः॥८॥

दैव्या दैव्यौ देवतारूपौ होतारा होतारौ होमनिष्पादकौ प्रथमा प्रथमौ मुख्याविमं चासुं चाग्नी न्यृंजे। ऋंजतिः प्रसाधनकर्मेति यास्कः। मंत्रद्रष्टा विश्वामित्रोऽहं प्रसाधयामि। सप्त पृक्षासः सप्त होत्रकाः स्वधया सोमेन मदंति। हृष्यंति। ऋतं स्तोत्रं शंसंतो व्रतपा व्रतस्य यज्ञकर्मणो रक्षितारो दीध्याना दीप्यमानास्ते होत्रका अनु व्रतं यज्ञं कर्मणि ऋतमित् सत्यमेवाग्निमाहुः। वदंति॥ ऋंजे। ऋजि भृजी भर्जने। निपूर्वोऽयं धातुः प्रसाधने वर्तते। निघातः। स्वधया। स्वं लोकं यजमानस्य दधाति विदधातीति स्वधा सोमः। आतो ऽनुपसर्गे क इति कः। कृदुत्तरपदप्रकृतिस्वरत्वं। आहुः। ब्रूञ् व्यक्तायां वाचीत्यस्य लटि ब्रुवः पंचानामादित

आहो भुव इति झेरुसादेशो भुवश्च आहादेशः। निघातः। दीध्यानाः। दीधीङ् दीप्तिदेवनयोरित्यस्माच्छानच्। तस्य लित्त्वादंतोदात्तत्वे प्राप्तेऽभ्यस्तानामादिरित्याद्युदात्तत्वं॥

वृषायंते महे अत्याय पूर्वीर्वृष्णे चित्राय रश्मयः सुयामाः।
देव होतर्मंद्रतरश्चिकित्वान्महो देवान्रोदसी एह वक्षि ॥९॥

वृषऽयंते। महे। अत्याय। पूर्वीः। वृष्णे। चित्राय। रश्मयः। सुऽयामाः।
देव। होतः। मंद्रऽतरः। चिकित्वान्। महः। देवान्। रोदसी इति। आ। इह। वक्षि ॥९॥

देव देदीप्यमान होतर्देवानामाह्वातः हे अग्ने महे महतेऽत्याय सर्वानप्यतिक्रम्य वर्तमानाय चित्राय नानाविधवर्णाय। यद्वा चित्राय देवैश्चायनीयाय पूज्याय। वृष्णे कामानां वर्षित्रे तुभ्यं त्वदर्थं पूर्वीः प्रभूताः सुयामाः अतिशयेन विस्तृता रश्मयः सर्वतो व्याप्ता ज्वाला वृषयंते। वृषवाचरंति। सेचका इव भवंति। होतारो ज्वालाभिः समिद्धमग्निं दृष्ट्वा सोमाज्यपयःप्रभृतीनि हवींषि तत्र प्रक्षिपंतीति ज्वालानां वृषत्वं। यद्वा षष्ठ्यर्थे चतुर्थी। तथा च महतोऽत्यस्य चित्रस्य वृष्णोऽग्नेर्बहवो रश्मयो वृषवाचरंति। वृष्ट्युत्पादनद्वारा पर्जन्यवदाचरंतीत्यर्थः। अपि च। मंद्रतरो यजमानस्य मादयितृतमश्चिकित्वान्ज्ञानोपेतः स त्वं महो महतः पूज्यान् यष्टव्यान् देवान् रोदसी द्यावापृथिव्यौ चेह वेदिकेऽस्मिन्कर्मण्यावक्षि। आवह॥ वृषायंते। उपमानादित्यनुवृत्तौ कर्तुः क्यङ् सलोपश्चेति क्यङ्। अकृत्सार्वधातुकयोरिति दीर्घः। पादादित्वान्न निघातः। धातुस्वरः। महे। अकारतकारयोर्लोपश्छांदसः। बृहन्महतोरिति विभक्तेरुदात्तत्वं। पूर्वीः। पॄ पालनपूरणयोरित्यस्मात् कॄरित्यनुवृत्तौ पॄभिदिव्यधिगृधीत्यादिना कुप्रत्ययः। कित्त्वाद्गुणप्रतिषेधे उदोष्ठ्यपूर्वस्येत्युत्वं। उरण्रपरः। तस्माद्वोतो गुणवचनादिति ङीष्। यणादेशे कृते हलि चेति दीर्घः। वा छंदसीति सवर्णदीर्घः। रश्मयः। अशू व्याप्तौ। अश्नुवते सर्वं जगदिति मिरित्यनुवृत्तौ अश्नोते रश्च। उ॰ ४. ४६। इति मिप्रत्ययो रशादेशश्च। प्रत्ययस्वरः। सुयामाः। यमनं यामः। भावे घञ्। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। देव। अपादादावपि पर्यंदाभावात्पाष्ठिकमाद्युदात्तत्वं। होतः। ऋत्विग्वर्तं तृन्। बहुलं छंदसीति संप्रसारणं। अपादादावामंत्रितत्वान्निघातः। मंद्रतरः। मदि स्तुत्यादिषु। स्फायितंचिवंचीत्यादिना रक्। इदित्त्वान्नुम्। तरपः पित्त्वादनुदात्तत्वे रक्प्रत्ययस्वरः। वक्षि। वह प्रापणे इत्यस्य बहुलं छंदसीति शपो लुक्। ढत्वकत्वषत्वानि। निघातः॥

पृक्षप्रयजो द्रविणः सुवाचः सुकेतव उषसो रेवदूषुः।
उतो चिदग्ने महिना पृथिव्याः कृतं चिदेनः सं महे दशस्य ॥१०॥

पृक्षऽप्रयजः। द्रविणः। सुऽवाचः। सुऽकेतवः। उषसः। रेवत्। ऊषुः।
उतो इति। चित्। अग्ने। महिना। पृथिव्याः। कृतं। चित्। एनः। सं। महे। दशस्य ॥१०॥

द्रविणः। द्रवति सततं गच्छतीति द्रविणशब्देनाग्निरभिधीयते। द्रविणः सततगमनस्वभाव हे अग्ने पृक्षप्रयजः पृक्षाणि हविर्लक्षणान्यन्नानि प्रकर्षेण यष्टुं प्रक्रम्यंते यासूषःसु ताः पृक्षप्रयजः। सुवाचः प्रातरनुवाकादिशोभना वाचो यासां ताः। सुकेतवो वयसां मनुष्याणां च शब्दैः सुप्रज्ञानाः। एवंविधा उषसो रेवत् अस्माकं धनयुक्तं यथा भवति तथोषुः। व्युच्छंति। उतो चित् अपि च हे अग्ने पृथिव्या विस्तीर्णाया ज्वालाया महिना महत्त्वेन कृतं संपादितं चित् यत्किंचिदेनः प्राण्युपघातादिलक्षणं पापं महे महते यजमानाय मह्यं मदर्थं संदशस्य। संक्षपय॥ पृक्षप्रयजः। अन्येभ्योऽपि दृश्यत इति कर्मणि विच्। हविर्ग्रहणादधिकृतो भवतीत्युक्तं। बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वं। द्रविणः। द्रु गतावित्यस्मात् द्रुदक्षिभ्यामिननित्तीनप्रत्ययः। गुणावादेशौ। संबुद्धौ सोर्लोपाभावश्छांदसः। आमंत्रितत्वान्निघातः। सुवाचः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। रेवत्। रयिर्धनमस्मिन्विद्यत इति मतुप्। ह्रस्वनुड्भ्यामिति मतुप उदात्तः। छंदसीर इति वत्वं। रयेर्मतौ बहुलं

छंदसीति संप्रसारणं । परपूर्वत्वे गुणः । उषुः । उष दाहे । दाहार्थोऽप्ययं धातुरत्र प्रकाशने वर्तते । छंदसि लुङ्लिङिति वर्तमाने लिट् । उषिः रूपं । निघातः । पृथिव्याः । प्रथ प्रख्याने इत्यस्मात्प्रथेः षिवन् संप्रसारणं चेति षिवन्प्रत्ययः । तत्संनियोगेन धातोः संप्रसारणं । षिद्गौरादिभ्यश्चेति ङीष् । प्रत्ययस्वरेणांतोदात्तः । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं । दशस्य । निघातः ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥११॥
इळां । अग्ने । पुरुऽदंसं । सनिं । गोः । शश्वत्ऽतमं । हवमानाय । साध ।
स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥११॥

हे अग्ने पुरुदंसं । अपोऽप्नो दंसो वेष इति कर्मनामसु पठितत्वाद्दंसःशब्दः कर्मवाची । पुरूणि बहूनि दंसांसि कर्माणि यस्याः सा । तां बहुकर्माणं गोः सनिं गवादिपशून्संपादयित्रीमिळामेतन्नामिकां गोरूपां देवतां शश्वत्तमं निरंतरं हवमानाय यजमानाय मह्यं साध । साधय । किंच नोऽस्माकं सूनुः पुत्रस्तनयः पौत्रः स्यान्नवर्धिष्वेति ते तव या सुमतिः शोभना बुद्धिः सा विजावाबंध्या सत्यस्मे अस्माकं भूतु । भवतु ॥ शश्वत्तमं । उञ्छादिषु पाठादंतोदात्तत्वं । साध । राध साध संसिद्धौ । अंतर्भावितण्यर्थोऽयं । लोटि व्यत्ययेन शप् । सेर्ह्यपिच्चेति हिरादेशः । तस्यातो हेरिति लुक् । निघातः । विजावा । जनी प्रादुर्भावे । अस्मादन्येभ्योऽपि दृश्यंत इति वनिप् । विड्वनोरनुनासिकस्यादित्यात्वं । कृदुत्तरपदप्रकृतिस्वरत्वं । लिंगव्यत्ययः । भूतु । भू सत्तायां । बहुलं छंदसीति शपो लुक् । भूसुवोस्तिङीति गुणप्रतिषेधः ॥ ॥२॥

अंजंतीत्यष्टमं वैश्वामित्रमेकादशर्चं सूक्तं । अत्रानुक्रमणिका । अंजंति यूपस्तुतिः षष्ठ्याद्याभिर्बहवोऽंत्या त्रयस्त्र्यष्टमी वैश्वदेवी वा तृतीयासप्तम्यावनुष्टुभाविति । उच्छ्रयस्व वनस्पत इत्येते तृतीयासप्तम्यावनुष्टुभौ शिष्टास्त्रिष्टुभः । कृत्स्नस्य सूक्तस्य यूपो देवता । वनस्पते शतवल्श इत्यस्याश्छिन्नयूपस्य मूलभूतः स्थाणुर्देवता । आदित्या रुद्रा वसव इत्यष्टमी वैश्वदेवी यौपी वा । अत्र षष्ठ्यादीनां बहवो यूपा देवता बहूनां स्तूयमानत्वात् । शिष्टा एकयूपदेवत्याः ॥ यूपांजनेऽंजंति त्वामित्येषा । प्रैषितो यूपायाज्यमानायांजंति त्वामध्वरे देवयंतः । आ० ३ १ । इति ॥ यूपोच्छ्रयणे समिद्धस्येति द्वे ऋचौ । उच्छ्रयस्व वनस्पते समिद्धस्य श्रयमाणः पुरस्तात् । आ० ३. १. । इति सूत्रितत्वात् ॥ यूपपरिव्ययणे युवा सुवासाः परिवीत आगादिति परिदध्यात् । आ० ३. १. । इति सूत्रितत्वात् ॥ यूपोच्छ्रयणे जातो जायते सुदिनत्वे अह्नामित्यर्धर्चं आरमेदिति सूत्रितं । यूपैकादशिन्यामन्यत्रापि बहुयूपयुक्ते कर्मणि यान्वो नर इत्यादिभिः षड्भिः पंचभिर्वा संस्तुयात् । संस्तुयादनभिहिंकृत्य यान्वो नरो देवयंतो निमिम्युरिति षड्भिः पंचभिर्वा । आ० ३. १. । इति ॥

अंजंति त्वामध्वरे देवयंतो वनस्पते मधुना दैव्येन ।
यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ॥१॥
अंजंति । त्वां । अध्वरे । देवऽयंतः । वनस्पते । मधुना । दैव्येन ।
यत् । ऊर्ध्वः । तिष्ठाः । द्रविणा । इह । धत्तात् । यत् । वा । क्षयः । मातुः । अस्याः । उपऽस्थे ॥१॥

वनस्पते खदिरपलाशादिलक्षण हे यूप अध्वरे यज्ञे देवयंतो देवान् कामयमाना अध्वर्य्वादयो दैव्येन मधुना देवसंबंधिना मधुना घृतेन । एतद्वै मधु दैव्यं यदाज्यमित्याम्नानात् । ऐ० ब्रा० २. २ । तेन घृतेन त्वामंजंति । त्वयि घृतं सिंचंतीत्यर्थः । यत् यदि त्वमूर्ध्वस्तिष्ठाः । उन्नतस्तिष्ठसि । यद्वा यदि वा मातुरस्या मातृभूतायाः पृथिव्या उपस्थ उत्संगे ते क्षयो निवासः । यद्यूर्ध्वस्तिष्ठसि यदि वा भूमौ शयानो वर्तसे उभयथापि त्वमिहास्मासु द्रविणा धनानि धत्तात् । धेहि ॥ ब्राह्मणेनैयमृग्व्याख्याता । अंजंति त्वामध्वरे देवयंत इत्यन्वाहाध्वरे ह्येनं देवयंतोऽंजंति वनस्पते मधुना दैव्येनेत्येतद्वै मधु दैव्यं यदाज्यं यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थ इति यदि च तिष्ठासि यदि च शयासै द्रविणमेवास्मासु धत्तादित्येव तदाह । ऐ० ब्रा० २. २.।

इति ॥ तथा च निरुक्तमपि । अंजंति त्वामध्वरे देवान्कामयमाना वनस्पते मधुना दैव्येन च घृतेन च यदूर्ध्वः स्थास्यसि द्रविणानि च नो दास्यसि यद्वा ते कृतः क्षयो मातुरस्या उपस्थ उपस्थाने । नि॰ ८ १८ । इति ॥ अंजंति । अंजू व्यक्तिम्रक्षणकांतिगतिषु । रुधादित्वात् श्नम् । तस्य लटि श्नान्नलोपः । अनिदितामित्युपधालोपः । श्नसोरल्लोप इत्यल्लोपः । प्रत्ययस्वरेण मध्योदात्तः । त्वा । त्वमावेकवचन इति त्वादेशः । द्वितीयायां चेत्याकारः । एकादेश उदात्तेनोदात्त इत्येकादेशस्योदात्तत्वं । अध्वरे । न विद्यते ध्वरो हिंसा यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । देवयंतः । देवानात्मन इच्छतः । सुप आत्मनः क्यच् । क्यचि चेतीत्वं अकृत्सार्वधातुकयोरिति दीर्घत्वं च न छंदस्यपुत्रस्येत्यनेन प्रतिषिध्यते । तदंताच्छतृप्रत्ययः । शपः पित्त्वादनुदात्तत्वं सार्वधातुकस्वरेण चानुदात्तत्वे कृते तयोरेकादेश उदात्तेनोदात्त इति क्यच एव स्वरः । वनस्पते । आमंत्रितस्य चेत्याद्युदात्तत्वं । मधुना । फलिपाटिनमिमनीत्यादिना उप्रत्ययः । भिदित्यनुवृत्तेराद्युदात्तत्वं । दैव्येन । देवाद्यञञाविति यञ् । ञित्त्वाद्वृद्धिः । यस्येति लोपः । ञित्त्वादाद्युदात्तः । तिष्ठाः । ष्ठा गतिनिवृत्तौ । लेटि सिप् । इतश्च लोप इतीकारलोपः । शपः शित्त्वात् पाघ्रेत्यादिना तिष्ठादेशः । लेटोऽडाटावित्यडागमः । यच्छब्दयोगान्निघाताभावः । तिष्ठादेशस्याद्युदात्तत्वेन निपातितत्वादाद्युदात्तः । द्रविणा । द्रुदक्षिभ्यामिनन्निती नन्प्रत्ययः । सुपां सुलुगिति सुपो डादेशः । नित्त्वादाद्युदात्तः । इह । इदमशब्दात्सप्तम्यर्थे इदमो ह इति हः । इदम इशितीशादेशः । शित्त्वात्सर्वादेशः । प्रत्ययस्वरः । धत्तात् । डुधाञ् धारणपोषणयोरित्यस्य प्रार्थने लोट् । सिप् । तस्य सेर्ह्यपिच्चेति हिरादेशः । तुह्योः । पा॰ ७ १ ३५ । इति तातङादेशः । श्नाभ्यस्तयोरात इत्याकारलोपः । दधस्तथोश्च । पा॰ ८ २ ३८ । इति भषभावः । अपादादित्वान्निघातः । वा । चादित्वादनुदात्तः । क्षयः । क्षियति निवसत्यस्मिन्नित्यधिकरणे घः । क्षयो निवास इत्याद्युदात्तत्वं । मातुः । नप्तृनेष्टृ इत्यादिना तृजंतत्वेन निपातनादंतोदात्तः । ऋत उदिति ङसः पूर्वपरयोरुकारः । अस्याः । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । उपस्थे । ष्ठा गतिनिवृत्तौ । आतश्चोपसर्ग इति कः । तत्पुरुषे तुल्यार्थेति सप्तम्युपमानेत्यादिना... धादित्वात्पूर्वपदांतोदात्तत्वं ॥

समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरं सुवीरं ।
आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभगाय ॥२॥
सम्ऽइद्धस्य । श्रयमाणः । पुरस्तात् । ब्रह्म । वन्वानः । अजरं । सुऽवीरं ।
आरे । अस्मत् । अमतिं । बाधमानः । उत् । श्रयस्व । महते । सौभगाय ॥२॥

हे यूप समिद्धस्य दीप्यमानस्याहवनीयाख्यस्याग्नेः पुरस्तात् प्राच्यां दिशि श्रयमाणस्तत्र वर्तमानो ब्रह्मान्नं । ब्रह्म वर्च इत्यन्ननामसु पाठात् । अजरं जरारहितं समृद्धं सुवीरं शोभनापत्ययुक्तं ब्रह्मान्नं वन्वानः प्रयच्छन् अस्मदमतिमस्माकं शत्रुभूतामशनायां । अशनाया वै पाप्मामतिरिति श्रवणात् । तादृशं शत्रुमारे दूरे बाधमानोऽपनुदंस्त्वं महते सौभगाय धनादिसंपत्त्यर्थमुच्छ्रयस्व । उच्छ्रितो भव । उक्तार्थे ब्राह्मणं । समिद्धस्य श्रयमाणः पुरस्तादिति समिद्धस्य ह्येष एतत्पुरस्ताच्छ्रयते ब्रह्म वन्वानो अजरं सुवीरमित्याशिषमेवाशास्त आरे अस्मदमतिं बाधमान इत्यशनाया वै पाप्मामतिस्तामेव तदारान्नुदते यज्ञाच्च यजमानाच्चोच्छ्रयस्व महते सौभगायेत्याशिषमेवाशास्ते । ऐ॰ ब्रा॰ २ २ । इति ॥ समिद्धस्य । ञिइंधी दीप्तौ । कर्मणि निष्ठाया श्वीदितो निष्ठायामितीट्प्रतिषेधः । समस्यगतिरिति गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वं । श्रयमाणः । श्रिञ् सेवायामित्यस्य लटः शानच् । तस्य लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः शिष्यते । पुरस्तात् । पूर्वशब्दस्य दिक्शब्देभ्यः सप्तमीपंचमीत्यादिना । पा॰ ५ ३ २७ । अस्तातिप्रत्ययः । अस्ताति च । पा॰ ५ ३ ४० । इति पूर्वस्य पुरादेशः । प्रत्ययस्वरः । ब्रह्म । मनिन्प्रत्ययस्यानिमतस्येत्याद्युदात्तः । वन्वानः । वनु याचने । अयमत्र धातुर्दानार्थे वर्तते । लटः शानच्प्रत्ययः । चित्त्वादंतोदात्तः । अजरं । नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं । सुवीरं । वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं । आरे । एवमादित्वादंतोदात्तः । अस्मत् । युष्मदस्मद्भ्यां ङसोऽश् इति मदिक्प्रत्ययः । सुपां सुलुगिति सुपो लुक् । मदिक्प्रत्ययस्वरः । अमतिं । तत्पुरुषे इति पूर्वपदप्रकृतिस्वरत्वं । उत् । निपातत्वेनाद्युदात्तः । श्रयस्व । श्रिञ् सेवायामित्यस्य लोण्मध्यमैकवचने थास् । थासः स

इत्यादेशः । सवाभ्यां वामावित्येकारस्य वकारः । निघातः । महते । वर्तमाने पृषद्बृहन्महदिति निपातनादंतोदात्तः । बृहन्महतोरुपसंख्यानमिति विभक्तिरुदात्तत्वं । सौभगाय । प्राणभृज्जातिवयोवचनेत्यञ् । हृद्भगसिंध्वंते पूर्वपदस्य चेति वृद्धिः । सर्वविधीनां छंदसि विकल्पितत्वादित्युत्तरपदस्य वृद्धिर्न भवति । ञित्स्वरः ॥

उच्छ्रयस्व वनस्पते वर्ष्मन्पृथिव्या अधि ।
सुमिती मीयमानो वर्चो धा यज्ञवाहसे ॥३॥
उत् । श्रयस्व । वनस्पते । वर्ष्मन् । पृथिव्याः । अधि ।
सुऽमिती । मीयमानः । वर्चः । धाः । यज्ञऽवाहसे ॥३॥

हे वनस्पते यूप पृथिव्या अधि पृथिव्यां वर्ष्मन् उत्कृष्टे देवयजनाख्ये देश उच्छ्रयस्व । उच्छ्रितो भव । सुमिती शोभमानया बुद्ध्या अथवा शोभनेन परिमाणेन मीयमान इयत्तया परिच्छिद्यमानस्त्वं यज्ञवाहसे यज्ञनिर्वाहकाय यजमानाय वर्चो धाः । अन्नं धेहि । अयमेवार्थो ब्राह्मणेन दर्शितः । उच्छ्रयस्व वनस्पत इत्युच्छ्रीयमाणायाभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धं । वर्ष्मन्पृथिव्या अधीत्येतद्वै वर्ष्म पृथिव्यै यत्र यूपमुन्मिन्वंति सुमिती मीयमानो वर्चो धा यज्ञवाहस इत्याशिषमाशास्ते । ऐ० ब्रा० २. २. ॥ वनस्पते । आपादादित्वादाष्टमिकमनुदात्तत्वं । पृथिव्याः । उदात्तयणो हल्पूर्वादिति विभक्तिरुदात्तत्वं । सुमिती । माङ् मान इत्यस्य क्तिनि द्यतिस्यतिमास्थेतीकारादेशः । शोभनया मित्या । तादौ च निति कृत्यताविति गतेः प्रकृतिस्वरत्वं । सुपां सुलुगिति सवर्णदीर्घः । मीयमानः । माङ् मान इत्यस्य कर्मणि यक् । घुमास्थेतीत्वं । प्रत्ययस्वरः । धाः । धात्रो लोडर्थे छंदसि लुङ्लङ्लिट इति लुङ् । इतश्चेति सिप इकारलोपः । गातिस्थेति सिचो लोपः । बहुलं छंदसीत्यडभावः । निघातः । यज्ञवाहसे । यज्ञं वहति प्राप्नोति । वह प्रापण इत्यस्य वहिहाधाञ्भ्यश्छंदसीत्यसुन् । णिदित्यनुवृत्तेरुपधावृद्धिः । गतिकारकयोरिति पूर्वपदप्रकृतिस्वरत्वं चेति पूर्वपदप्रकृतिस्वरः । उ० ४. २२६. ॥

युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः ।
तं धीरासः कवय उन्नयंति स्वाध्यो३ मनसा देवयंतः ॥४॥
युवा । सुऽवासाः । परिऽवीतः । आ । अगात् । सः । ऊं इति । श्रेयान् । भवति । जायमानः ।
तं । धीरासः । कवयः । उत् । नयंति । सुऽआध्यः । मनसा । देवऽयंतः ॥४॥

युवा दृढांगोऽष्टाश्र्यादिलक्षणलक्षित इत्यर्थः । सुवासाः शोभनेन वाससा रशनया युक्तः । परिवीतस्तया रशनया वेष्टितः । एवंविधो यूप आगात् । आगच्छति । स उ स एव यूपः श्रेयान् जायमानः सर्वेभ्यो वनस्पतिभ्य उत्कृष्टतया संपद्यमानो भवति । तमेवंविधं यूपं धीरासः प्राज्ञा मनसा देवयंतो देवान् कामयमानाः स्वाध्यः सुष्ठु सर्वतो ध्यानयुक्ताः कवयः क्रांतदर्शिनोऽध्वर्य्वादय उन्नयंति । उन्नतं कुर्वंति । एतस्मिन्नर्थे ब्राह्मणं । युवा सुवासाः परिवीत आगादित्युत्तमया परिदधाति प्राणो वै युवा सुवासाः सोऽयं शरीरैः परिवृतः स उ श्रेयान्भवति जायमान इति श्रेयाञ्छ्रेयान्ह्येष एतद्भवति जायमानस्तं धीरासः कवय उन्नयंति स्वाध्यो मनसा देवयत इति ये वा अनूचानास्ते कवयस्त एवैनं तदुन्नयंति । ऐ० ब्रा० २. २ । इति ॥ युवा । यौतेः कनिन्युवृषितक्षीत्यादिना कनिन्प्रत्ययः । कित्त्वाद्गुणाभावः । उवङादेशः । नित्त्वादाद्युदात्तत्व । सुवासाः । वस आच्छादने । असुन्नित्यनुवृत्तौ वसेर्णिदित्यसुन्प्रत्ययः । णित्त्वादुपधावृद्धिः । सोर्मनसी इत्युत्तरपदाद्युदात्तत्वं । परिवीतः । व्येञ् संवरणे । कर्मणि क्तः । यजादित्वात्संप्रसारणं । गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्व । अगात् । इण् गताविव्यस्य लुङि इणो गा लुङीति गादेशः । गातिस्थेति सिचो लोपः । अडागमः । श्रेयान् । प्रशस्यस्य द्विवचनविभज्योपपदे इतीयसुन्प्रत्ययः । तस्मिन्प्रशस्यस्य श्र इति श्रादेशः । गुणः । नित्त्वादाद्युदात्तत्वं । एकादेश आद्युदात्तः । स्वाध्यः । ध्यै चिंतायां । स्वाङोरुपसर्गयोः प्राक्प्रयोगः । अन्येभ्योऽपि दृश्यंत इति क्विप् । दृशिग्रहणात्संप्रसारणं । संप्रसारणाच्चेति पूर्वरूपत्वं । हल इति दीर्घः । असि एरनेकाच इति यणादेशः । छदुत्त-

रपदप्रकृतिस्वरत्वं । उदात्तस्वरितयोर्यण इति जसः स्वरितत्वं । देवयंतः । सुप आत्मनः क्यजिति क्यच् । चित्त्वादंतोदात्तः ॥

जातो जायते सुदिनत्वे अह्नां समर्य आ विदथे वर्धमानः ।
पुनंति धीरा अपसो मनीषा देवया विप्र उदियर्ति वाचं ॥५॥
जातः । जायते । सुदिनऽत्वे । अह्नां । सऽमर्ये । आ । विदथे । वर्धमानः ।
पुनंति । धीराः । अपसः । मनीषा । देवऽयाः । विप्रः । उत् । इयर्ति । वाचं ॥५॥

जातः पृथिव्यां प्रथममुत्पन्नो यूपः समर्ये । मर्य इति मनुष्यनाम । तैः सहिते विदथे वर्धमानः । विदथ इति यज्ञनाम विदथः सवनमिति यज्ञनामसु पाठात् । तस्मिन्यज्ञ आ वर्धमानो घृताञ्जनरशनापरिव्ययणादिना सर्वतः शोभमानः सन् अह्नां सुदिनत्वे जायते । पशुनियोजनादिद्वारेण यज्ञनिर्वाहकतयाहानि सुदिनानि करोतीत्यर्थः । अपसः कर्मवतो धीराः सुप्रज्ञा अध्वर्य्वादयो मनीषा बुद्ध्या तं यूपं पुनंति । प्रक्षालनादिभिः शोधयंति । देवया देवाना यष्टा देवानां हवींषि प्रापयिता वा विप्रो मेधावी होता च वाचं यूपविषयां स्तुतिलक्षणां वाचमुदियर्ति । प्रेरयति । उच्चारयतीत्यर्थः ॥ उक्तार्थं ब्राह्मणं । जातो जायते सुदिनत्वे अह्नामिति जातो ह्येष एतज्जायते समर्य आ विदथे वर्धमान इति वर्धयंत्येवैनं तत्पुनंति धीरा अपसो मनीषेति पुनंत्येवैनं तद्देवया विप्र उदियर्ति वाचमिति देवेभ्य एवैनं तन्निवेदयति । ऐ० ब्रा० २. २ ॥ सुदिनत्वे । सुदिनानां भाव इति तस्य भावस्त्वतलाविति त्वः । प्रत्ययस्वरः । समर्ये । मृङ् प्राणत्यागे इत्यस्मादौणादिकः स्ऽ ... इति यप्रत्ययांतस्य निपातनाद्गुणः । समासस्यांतोदात्तत्वं । पुनंति । पूञ् पवने । क्र्यादित्वाच्छ्ना । प्वादित्वाद्ध्रस्वः । प्रत्ययस्वरः । देवयाः । या प्रापणे । आतो मनिन्निति विच्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वं । इयर्ति । ऋ गतौ । जुहोत्यादिः । अर्तिपिपर्त्योश्चेतीत्वं । अभ्यासस्यासवर्णे इतीयङादेशः । निघातः ॥ ॥३॥

यान्वो नरो देवयंतो निमिम्युर्वनस्पते स्वधितिर्वा ततक्ष ।
ते देवासः स्वरवस्तस्थिवांसः प्रजावदस्मे दिधिषंतु रत्नं ॥६॥
यान् । वः । नरः । देवऽयंतः । निऽमिम्युः । वनस्पते । स्वऽधितिः । वा । ततक्ष ।
ते । देवासः । स्वरवः । तस्थिऽवांसः । प्रजाऽवत् । अस्मे इति । दिधिषंतु । रत्नं ॥६॥

हे यूपा देवयंतो देवान्कामयमाना नरः कर्मणां नेतारोऽध्वर्य्वादयो यान्वो यान्युष्मान्निमिम्युः । अवटेषु प्रचिक्षिपुः । वा अपि च हे वनस्पते स्वधितिः परशुस्त्वदीयान्यूपांस्ततक्ष चिच्छेद देवासो दीप्यमानाः स्वरवः । स्वरुशब्दः स्वशकलवाची । तद्वंतः । लुप्तमत्वर्थीयः । तस्थिवांसस्तिष्ठंतस्ते तादृशा यूपा अस्मे अस्मै यजमानाय प्रजावत् अपत्यसहितं रत्नमुत्तमं धनं दिधिषंतु । धारयंतु । प्रयच्छंत्वित्यर्थः ॥ निमिम्युः । डुमिञ् प्रक्षेपणे इत्यस्य लिट्युसि असंयोगाल्लिट् किदिति कित्त्वाद्गुणाभावः । यद्वृत्तयोगादनिघातः । सति शिष्टः स्वरो बलीयानिति वचनात्प्रत्ययस्वरः । स्वधितिः । स्वशब्दोपपदाद्धाञ् धारणे इत्यस्मात् क्तिन् । स्वा स्वकीया निशितधारा धीयते प्रक्षिप्यतेऽनेनेति स्वधितिः खड्गः । ततक्ष । तक्षू त्वक्षू तनूकरणे इत्यस्माल्लिट् णलि रूपादनिघातः । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । स्वरवः । स्वृ शब्दोपतापयोरित्यस्माच्छृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबंधिमनिभ्यश्चेत्यादिना उप्रत्ययः । नित्त्वादाद्युदात्तः । तस्थिवांसः । ष्ठा गतिनिवृत्तावित्यस्मादौणादिकः क्वसुः लिट् । तस्य क्वसुः । वस्वेकाजाद्घसामितीडागमः । प्रत्ययस्वरः । प्रजावत् । जनी प्रादुर्भावे इत्यस्मादुपसर्गे च संज्ञायामिति डः । तत्प्राप । तदस्यास्तीति मतुप् । तस्य पित्त्वादनुदात्तत्वं । एकादेशस्वरः । अस्मे । अस्मच्छब्दस्य सुपां सुलुगिति शे आदेशः । दिधिषंतु । धिष धारणे । जुहोत्यादिः । निघातः ॥

ये वृक्णासो अधि क्षमि निमितासो यतस्रुचः ।
ते नो व्यंतु वार्यं देवत्रा क्षेत्रसाधसः ॥७॥

इत्यादेशः । सवाभ्यां वामावित्यैकारस्य वकारः । निघातः । महते । वर्तमाने पृषद्बृहन्महदिति निपातनादंतोदात्तः । बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वं । सौभगाय । प्राणभृज्जातिवयोवचनेत्यञ् । हृद्भगसिंध्वंते पूर्वपदस्य चेति वृद्धिः । सर्वविधीनां छंदसि विकल्पितत्वादित्युत्तरपदस्य वृद्धिर्न भवति । ञित्स्वरः ॥

उच्छ्रयस्व वनस्पते वर्ष्मन्पृथिव्या अधि ।
सुमिती मीयमानो वर्चो धा यज्ञवाहसे ॥३॥
उत् । श्रयस्व । वनस्पते । वर्ष्मन् । पृथिव्याः । अधि ।
सुऽमिती । मीयमानः । वर्चः । धाः । यज्ञऽवाहसे ॥३॥

हे वनस्पते यूप पृथिव्या अधि पृथिव्यां वर्ष्मन् उत्कृष्टे देवयजनाख्ये देश उच्छ्रयस्व । उच्छ्रितो भव । सुमिती शोभमानया वृद्ध्या अथवा शोभनेन परिमाणेन मीयमान इयत्तया परिच्छिद्यमानस्त्वं यज्ञवाहसे यज्ञनिर्वाहकाय यजमानाय वर्चो धाः । अन्नं धेहि । अयमेवार्थो ब्राह्मणेन दर्शितः । उच्छ्रयस्व वनस्पत इत्युच्छ्रीयमाणायाभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धं । वर्ष्मन्पृथिव्या अधीत्येतद्वै वर्ष्म पृथिव्यै यत्र यूपमुन्मिन्वंति सुमिती मीयमानो वर्चो धा यज्ञवाहस इत्याशिषमाशास्ते । ऐ॰ ब्रा॰ २. २. ॥ वनस्पते । अपादादित्वादाष्टमिकमनुदात्तत्वं । पृथिव्याः । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं । सुमिती । माङ् मान इत्यस्य क्तिनि द्यतिस्यतिमास्थामित्तिकारादेशः । शोभनया मित्या । तादौ च निति कृत्यताविति गतेः प्रकृतिस्वरत्वं । सुपां सुलुगिति सवर्णदीर्घः । मीयमानः । माङ् मान इत्यस्य कर्मणि यक् । घुमास्थेतीत्वं । प्रत्ययस्वरः । धाः । धाञो लोडर्थे छंदसि लुङ्लङ्लिट इति लुङ् । इतश्चेति सिप इकारलोपः । गातिस्थेति सिचो लोपः । बहुलं छंदसीत्यडभावः । निघातः । यज्ञवाहसे । यज्ञं वहति प्राप्नोति । वह प्रापण इत्यस्य वहिहाधाञ्भ्यश्छंदसीत्यसुन् । णिदित्यनुवृत्तेरुपधावृद्धिः । गतिकारकयोरिति पूर्वपदप्रकृतिस्वरत्वं चेति पूर्वपदप्रकृतिस्वरः । उ॰ ४. २२६. ॥

युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः ।
तं धीरासः कवय उन्नयंति स्वाध्यो३ मनसा देवयंतः ॥४॥
युवा । सुऽवासाः । परिऽवीतः । आ । अगात् । सः । ऊं इति । श्रेयान् । भवति । जायमानः ।
तं । धीरासः । कवयः । उत् । नयंति । सुऽआध्यः । मनसा । देवऽयंतः ॥४॥

युवा दृढांगोऽप्राश्यादिलक्षणलक्षित इत्यर्थः । सुवासाः शोभनेन वाससा रशनया युक्तः । परिवीतस्तया रशनया वेष्टितः । एवंविधो यूप आगात् । आगच्छति । स उ स एव यूपः श्रेयान् जायमानः सर्वेभ्यो वनस्पतिभ्य उत्कृष्टतया संपद्यमानो भवति । तमेवंविधं यूपं धीरासः प्राज्ञा मनसा देवयंतो देवान् कामयमानाः स्वाध्यः सुष्ठु सर्वतो ध्यानयुक्ताः कवयः क्रांतदर्शिनोऽध्वर्य्वादय उन्नयंति । उन्नतं कुर्वंति । एतस्मिन्नर्थे ब्राह्मणं । युवा सुवासाः परिवीत आगादित्युत्तमया परिदधाति प्राणो वै युवा सुवासाः सोऽयं शरीरैः परिवृतः स उ श्रेयान्भवति जायमान इति श्रेयाञ्छ्रेयान्ह्येष एतद्भवति जायमानस्तं धीरासः कवय उन्नयंति स्वाध्यो मनसा देवयंत इति ये वा अनूचानास्ते कवयस्त एवैनं तदुन्नयंति । ऐ॰ ब्रा॰ २. २ । इति ॥ युवा । यौतेः कनिन्युवृषितक्षीत्यादिना कनिन्प्रत्ययः । कित्त्वाद्गुणाभावः । उवङादेशः । नित्त्वादाद्युदात्तत्वं । सुवासाः । वस आच्छादने । असुन्नित्यनुवृत्तौ वसेर्णिदित्यसुन्प्रत्ययः । णित्त्वादुपधावृद्धिः । सोर्मनसी इत्युत्तरपदाद्युदात्तत्वं । परिवीतः । व्येञ् संवरणे । कर्मणि क्तः । यजादित्वात्संप्रसारणं । गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वं । अगात् । इण् गताविंत्यस्य लुङि इणो गा लुङीति गादेशः । गातिस्थेति सिचो लोपः । अडागमः । श्रेयान् । प्रशस्यस्य द्विवचनविभज्योपपद इतीयसुन्प्रत्ययः । तस्मिन्प्रशस्यस्य श्र इति श्रादेशः । गुणः । नित्त्वादाद्युदात्तत्वं । एकादेश आद्युदात्तः । स्वाध्यः । ध्यै चिंतायां । स्वाङोरुपसर्गयोः प्राक्प्रयोगः । अन्येभ्योऽपि दृश्यंत इति क्विप् । दृशिग्रहणात्संप्रसारणं । संप्रसारणाच्चेति पूर्वरूपत्वं । हल इति दीर्घः । जसि एरनेकाच इति यणादेशः । छंदुत्त-

रपदप्रकृतिस्वरत्वं । उदात्तस्वरितयोर्यणः इति जसः स्वरितत्वं । देवयंतः । सुप आत्मनः क्यजिति क्यच् । चित्त्वादंतोदात्तः ॥

जातो जायते सुदिनत्वे अह्नां समर्य आ विदथे वर्धमानः ।
पुनंति धीरा अपसो मनीषा देवया विप्र उदियर्ति वाचं ॥५॥

जातः । जायते । सुदिनऽत्वे । अह्नां । सऽमर्ये । आ । विदथे । वर्धमानः ।
पुनंति । धीराः । अपसः । मनीषा । देवऽयाः । विप्रः । उत् । इयर्ति । वाचं ॥५॥

जातः पृथिव्यां प्रथममुत्पन्नो यूपः समर्ये । मर्या इति मनुष्यनाम । तैः सहिते विदथे वर्धमानः । विदथ इति यज्ञनाम विदथः सवनमिति यज्ञनामसु पाठात् । तस्मिन्यज्ञ आ वर्धमानो घृताञ्जनरशनापरिव्ययणादिना सर्वतः शोभमानः सन् अह्नां सुदिनत्वे जायते । पशुनियोजनादिद्वारेण यज्ञनिर्वाहकतयाहानि सुदिनानि करोतीत्यर्थः । अपसः कर्मवतो धीराः सुप्रज्ञा अध्वर्य्वादयो मनीषा बुद्ध्या तं यूपं पुनंति । प्रक्षालनादिभिः शोधयंति । देवया देवाना यष्टा देवाना हवींषि प्रापयिता वा विप्रो मेधावी होता च वाचं यूपविषयां स्तुतिलक्षणां वाचमुदियर्ति । प्रेरयति । उच्चारयतीत्यर्थः ॥ उक्तार्थं ब्राह्मणं । जातो जायते सुदिनत्वे अह्नामिति जातो ह्येष एतज्जायते समर्य आ विदथे वर्धमान इति वर्धयंत्येवैनं तत्पुनंति धीरा अपसो मनीषेति पुनंत्येवैनं तद्देवया विप्र उदियर्ति वाचमिति देवेभ्य एवैनं तन्निवेदयति । ऐ० ब्रा० २. २ ॥ सुदिनत्वे । सुदिनानां भाव इति तस्य भावस्त्वतलाविति त्वः । प्रत्ययस्वरः । समर्ये । मृङ् प्राणत्यागे इत्यस्माच्छंदसि निष्टर्क्येति क्यप्प्रत्ययांतत्वेन निपातनाद्गुणः । समासस्येत्यंतोदात्तत्वं । पुनंति । पूञ् पवने । क्र्यादिभ्यः श्ना । प्वादीनां ह्रस्वः । प्रत्ययस्वरः । देवयाः । या प्रापणे । आतो मनिन्निति विच्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वं । इयर्ति । ऋ गतौ । जुहोत्यादिः । अर्तिपिपर्त्योश्चेतीत्वं । अभ्यासस्यासवर्णे इतीयङादेशः । निघातः ॥ ॥३॥

यान्वो नरो देवयंतो निमिम्युर्वनस्पते स्वधितिर्वा ततक्ष ।
ते देवासः स्वरवस्तस्थिवांसः प्रजावदस्मे दिधिषंतु रत्नं ॥६॥

यान् । वः । नरः । देवऽयंतः । निऽमिम्युः । वनस्पते । स्वऽधितिः । वा । ततक्ष ।
ते । देवासः । स्वरवः । तस्थिऽवांसः । प्रजाऽवत् । अस्मे इति । दिधिषंतु । रत्नं ॥६॥

हे यूपा देवयंतो देवान्कामयमाना नरः कर्मणां नेतारोऽध्वर्य्वादयो यान्वो युष्मान्निमिम्युः । अवटेषु प्रक्षिप्तवंतः । वा अपि च हे वनस्पते स्वधितिः परशुस्त्वदीयान्यूपांस्ततक्ष चिच्छेद देवासो दीप्यमानाः स्वरवः । स्वरुशब्दः स्वशकलवाची । तद्वंतः । लुप्तमत्वर्थीयः । तस्थिवांसस्तिष्ठंतस्ते तादृशा यूपा अस्मे अस्मै यजमानाय प्रजावत् अपत्यसहितं रत्नमुत्तमं धनं दिधिषंतु । धारयंतु । प्रयच्छंत्वित्यर्थः ॥ निमिम्युः । डुमिञ् प्रक्षेपणे इत्यस्य लिट्युसि असंयोगाल्लिट् किदिति कित्त्वाद्गुणाभावः । यद्वृत्तयोगादनिघातः । सति शिष्टः स्वरो बलीयानिति वचनात्प्रत्ययस्वरः । स्वधितिः । स्वशब्दोपपदाद्धाञ् धारणे इत्यस्मात् क्तिन् । स्वा स्वकीया निशितधारा धीयते प्रक्षिप्यतेऽनेनेति स्वधितिः खड्गः । ततक्ष । तक्ष त्वक्ष तनूकरणे इत्यस्माल्लिट् णल् । पादादित्वादनिघातः । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । स्वरवः । स्व शब्दोपतापयोरित्यस्माच्छृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबंधिमनिभ्यश्चेत्युप्रत्ययः । नित्त्वादाद्युदात्तः । तस्थिवांसः । ष्ठा गतिनिवृत्तावित्यस्माच्छंदसि लिट् । तस्य क्वसुः । वस्वेकाजाद्घसामितीडागमः । प्रत्ययस्वरः । प्रजावत् । जनी प्रादुर्भावे इत्यस्मादुपसर्गे च संज्ञायामिति डः । ततष्टाप् । तदस्यास्तीति मतुप् । तस्य पित्त्वादनुदात्तत्वं । एकादेशस्वरः । अस्मे । अस्मच्छब्दस्य सुपां सुलुगिति शे आदेशः । दिधिषंतु । धिष धारणे । जुहोत्यादिः । निघातः ॥

ये वृक्णासो अधि क्षमि निमितासो यतस्रुचः ।
ते नो व्यंतु वार्यं देवत्रा क्षेत्रसाधसः ॥७॥

ये । वृक्णासः । अधि । क्षमि । निऽमितासः । यतऽस्रुचः ।
ते । नः । व्यंतु । वार्यं । देवऽत्रा । क्षेत्रऽसाधसः ॥ ७॥

अधि क्षमि क्षमायां भूमौ वृक्णासः परशुना छिन्ना ये यूपाः । यतस्रुच इति ऋत्विग्वाची यतस्रुचो मरुत इति ऋत्विङ्नामसु पठितत्वात् । यताः स्रुचो यैस्ते यतस्रुचः । तैर्ऋत्विग्भिर्निमितासोऽवटेषु नितरां प्रक्षिप्ताः क्षेत्रसाधसः क्षेत्रस्य यज्ञस्य साधकाः । यथा क्षेत्रं सस्यादिद्वारा फलं प्रयच्छति तथा यज्ञोऽप्यपूर्वद्वारा स्वर्गादिफलं ददातीति क्षेत्रं यज्ञः । एवंविधास्ते यूपा नोऽस्मदीयं वार्यं वरणीयं संभजनीयं हविर्देवत्रा देवेषु व्यंतु । गमयंतु । अस्मदीयं हविर्देवाधीनं कुर्वंत्वित्यर्थः ॥ वृक्णासः । ओव्रश्चू छेदन इत्यस्य निष्ठायां यस्य विभाषेतीट्प्रतिषेधः । ग्रहिज्यावयीत्यादिना संप्रसारणं । ओदितश्चेति निष्ठानत्वं । क्षमि । आतो धातोरित्यत्र आत इति योगविभागादाकारलोपः । निमितासः । डुमिञ् प्रक्षेपणे । कर्मणि क्तः । गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वं । यतस्रुचः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । व्यंतु । इण् गतावित्यस्य लोटि रूपं । इकारलोपश्छांदसः । अयमंतर्भावितण्यर्थः । वार्यं । वृङ् संभक्तावित्यस्मादृहलोर्ण्यदिति कर्मणि ण्यत् । ईडवंदवृशंसदुहामित्यादिनाद्युदात्तत्वं । देवत्रा । देवमनुष्यपुरुषपुरुमर्त्येभ्य इत्यादिनाधिकरणे त्राप्रत्ययः । क्षेत्रसाधसः । राध साध संसिद्धावित्यस्मादौणादिकोऽसुन् । कृदुत्तरपदप्रकृतिस्वरः ॥

आदित्या रुद्रा वसवः सुनीथा द्यावाक्षामा पृथिवी अंतरिक्षं ।
सजोषसो यज्ञमवंतु देवा ऊर्ध्वं कृण्वंत्वध्वरस्य केतुं ॥ ८॥
आदित्याः । रुद्राः । वसवः । सुऽनीथाः । द्यावाक्षामा । पृथिवी । अंतरिक्षं ।
सऽजोषसः । यज्ञं । अवंतु । देवाः । ऊर्ध्वं । कृण्वंतु । अध्वरस्य । केतुं ॥ ८॥

सुनीथा यज्ञस्य सुष्ठु नेतार आदित्या द्वादशादित्या रुद्रा एकादश रुद्रा वसवोऽष्टौ वसवः । यद्वा सुष्ठुनीथाः सुष्टुतयः । स्तुतशस्त्राणि नीथानि चोक्थामदानि च । ऐ० ब्रा० ३. ३८. । इति हि श्रूयते । द्यावाक्षामा द्यावापृथिव्यौ । पृथिवी । सुब्व्यत्ययः । पृथु विस्तीर्णमंतरिक्षं च । सजोषस एते सर्वे देवा एकमत्येन परस्परं संगता भूत्वेममस्मदीयं यज्ञमवंतु । रक्षंतु । किंच । अध्वरस्य यज्ञस्य केतुं ध्वजभूतं प्रज्ञापकं वेमं यूपमूर्ध्वं कृण्वंतु । उच्छ्रितं कुर्वंतु ॥ आदित्याः । अदितेरपत्यानि । दित्यदित्यादित्यपत्युत्तरपदाण्ण्य इति ण्यः । णित्त्वादादिवृद्धिः । प्रत्ययस्वरः । रुद्राः । रोदयंति सर्वानंतकाले । रोदेर्णिलुक् चेति रक्प्रत्ययः । तत्संनियोगेन णिलोपः । प्रत्ययस्वरः । जसः सुप्त्वादनुदात्तत्वे एकादेश उदात्तेनोदात्त इत्येकादेशस्याप्युदात्तत्वं । वसवः । वस निवासे । निदित्यनुवृत्तौ शॄस्वृस्निहित्रप्यसिवसीत्यादिनोप्रत्ययः । नित्त्वादाद्युदात्तः । सुनीथाः । णीञ् प्रापणे । हनिकुषिनीरमिकाशिभ्यः क्थन् । कित्त्वादगुणः । थाथघञ्क्तेत्युत्तरपदांतोदात्तत्वं । द्यावाक्षामा । द्यौश्च क्षामा च । दिवो द्यावेति द्यावादेशः । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं । पृथिवी । प्रथ प्रख्याने । प्रथेः षिवन् संप्रसारणं चेति षिवन् संप्रसारणं च । षिद्गौरादिभ्यश्चेति ङीष् । प्रत्ययस्वरेणांतोदात्तः । अवंतु । अव रक्षणे । निघातः । कृण्वंतु । कृवि हिंसाकरणयोरित्यस्माल्लोटि धिन्विकृण्व्योरच्चेत्युप्रत्ययः । अकारश्चांतादेशः । निघातः ॥

हंसा इव श्रेणिशो यतानाः शुक्रा वसानाः स्वरवो न आगुः ।
उन्नीयमानाः कविभिः पुरस्ताद्देवा देवानामपि यंति पाथः ॥ ९॥
हंसाःऽइव । श्रेणिऽशः । यतानाः । शुक्रा । वसानाः । स्वरवः । नः । आ । अगुः ।
उत्ऽनीयमानाः । कविऽभिः । पुरस्तात् । देवाः । देवानां । अपि । यंति । पाथः ॥ ९॥

शुक्रा शुक्राणि दीप्तानि वासांसि वसाना आच्छादयंतः स्वरवः स्वरुमंतः श्रेणिशः पंक्तिशो यतानाः प्रवर्तमानाः । अत्र दृष्टांतः । हंसा इवेति । यथा नभसि पंक्तिशः पतंतो हंसाः शोभंते तद्वत् शोभमानास्ते यूपा

गोऽसमानागुः। प्रापुः। अपि च कविभिर्मेधाविभिरध्वर्य्वादिभिः पुरस्तादाहवनीयस्य पूर्वभाग उन्नीयमाना उत्कीर्यमाणा देवा दीप्यमानास्ते यूपा देवानां पाथो देवानां स्थानमन्तरिक्षं। पाथोऽन्तरिक्षं पथा व्याख्यातमिति यास्कः। पाथोनदीभ्यां ड्यण्। पा० ४. ४. १११। इति सूत्रे पाथोऽन्तरिक्षमिति वृत्तिकारोऽप्यवादीत्। तादृशमंतरिक्षमर्पियंति। प्राप्नुवंति। अध्वर्य्वादिभिरुत्क्षिप्यमाणा यूपा अतिदैर्घ्यादंतरिक्षं व्याप्य वर्तंत इत्यर्थः॥ हंसा इव। इवेन विभक्त्यलोप इति वचनात्पूर्वपदस्वरः। श्रेणिशः। बह्वल्पार्थादिति शस्। प्रत्ययस्वरः। शुक्राः। शुच दीप्तावित्यस्मादृज्रेंद्राग्रेत्यादिना रन्प्रत्ययांतत्वेन निपातनादंतोदात्तः। अगुः। इण् गतौ। अस्माल्लुङि रूपं। निघातः॥

शृंगाणीवेच्छृंगिणां सं ददृश्रे चषालवंतः स्वरवः पृथिव्यां।
वाघद्भिर्वा विहवे श्रोषमाणा अस्माँ अवंतु पृतनाज्येषु ॥१०॥
शृंगाणिऽइव। इत्। शृंगिणां। सं। ददृश्रे। चषालऽवंतः। स्वरवः। पृथिव्यां।
वाघत्ऽभिः। वा। विऽहवे। श्रोषमाणाः। अस्मान्। अवंतु। पृतनाज्येषु ॥१०॥

स्वरवः स्वरुमंतश्चषालवंतः प्रतिमुक्तकटकाः। एवंविधा यूपाः पृथिव्यां शृंगिणां महिषादीनां शृंगाणीव विषाणानीव संददृश्रे। सम्यग्दृश्यंत एव। वा अपि च विहवे। विविधं हूयंते देवा यस्मिन्निति विहवो यज्ञः। तस्मिन्यज्ञे वाघद्भिर्ऋत्विग्भिः। वाघत इति ऋत्विङ्नामसु पाठात्। श्रोषमाणाः क्रियमाणं स्तुतिलक्षणं शब्दं शृण्वंतः। तादृशा यूपाः पृतनाज्येषु। पृतनाज्यशब्दः संग्रामवाची। आजौ पृतनाज्यमिति संग्राम नामसु पठितत्वात्। पृतनाज्येषु संग्रामेषु। वधस्थलेष्विति यावत्। अस्मान्यजमानानवंतु। रक्षंतु॥ शृंगाणि। शृ हिंसायामित्यस्मात्कृणातिर्ह्रस्वश्च। उ० १ १२५। इति गन् नुडागमो धातोर्ह्रस्वश्च। नित्स्वरः। ददृश्रे। छंदसि लुङ्लङ्लिट इति लडर्थे लिट्। इरयो रे इतीरेचो रे इत्यादेशः। निघातः॥

वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयं रुहेम।
यं त्वामयं स्वधितिस्तेजमानः प्रणिनाय महते सौभगाय ॥११॥
वनस्पते। शतऽवल्शः। वि। रोह। सहस्रऽवल्शाः। वि। वयं। रुहेम।
यं। त्वां। अयं। स्वऽधितिः। तेजमानः। प्रऽनिनाय। महते। सौभगाय ॥११॥

हे वनस्पते छिन्नमूल स्थाणो शतवल्शः शतशाखः सन् विरोह। विशेषेण प्रादुर्भूतो भव। वयमपि सहस्रवल्शाः पुत्रपौत्रादिसंतानपरंपरया सहस्रशाखाः संतो विरुहेम। विशेषेण प्रादुर्भूता भवेम। तेजमानो निशितधारोऽयं स्वधितिः परशुः हे स्थाणो यं त्वां महते सौभगाय महत्सौभाग्य बहुशाखत्वलक्षणं प्रणिनाय। प्रकर्षेण प्रापयामास॥ सहस्रवल्शाः। सहस्रशब्दः कर्दमादित्वान्मध्योदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। रुहेम। रुह प्रादुर्भावे इत्यस्मादाशीर्लिङि किदाशिषीति यासुडागमः। स्कोः संयोगाद्योरंते चेति सलोपः। लिङ्याशिष्यङित्यङ्प्रत्ययः। अतो येय इति इयादेशः। लोपो व्योर्वलीति यलोपः। गुणः। प्रणिनाय। णीञ् प्रापणे इत्यस्मात् लिटि णलि रूपं। पादादित्वादनिघातः। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं॥ ॥४॥

सखायस्त्वेति नवर्चं नवमं सूक्तं वैश्वामित्रं। अत्रेयमनुक्रमणिका। सखायो नव बार्हतं त्रिष्टुबंतमिति। अंत्या त्रिष्टुप्। शिष्टा अष्टौ बृहत्यः॥ प्रातरनुवाकाश्विनशस्त्रयोर्बार्हते छंदस्यस्य सूक्तस्य विनियोगः। अथैतस्या इति खंडे सूत्रितं। सखायस्त्वायमग्निरग्न आ याहि। आ० ४. १३.। इति॥

सखायस्त्वा ववृमहे देवं मर्तास ऊतये।
अपां नपातं सुभगं सुदीदितिं सुप्रतूर्तिमनेहसं ॥१॥

सखायः। त्वा। ववृमहे। देवं। मर्तासः। ऊतये।
अपां। नपातं। सुऽभगं। सुऽदीदितिं। सुऽप्रतूर्तिं। अनेहसं ॥१॥

विश्वामित्रः स्तौति। हे अग्ने सखायः सोमाज्यादिहविष्प्रदानेनोपकारकत्वान्मित्राणि मर्तासो मनुष्या ऋत्विजो वयमपां नपातमपां नप्तारं सुभगं शोभनधनयुक्तं सुदीदितिं शोभनदीप्तिं सुप्रतूर्तिं शोभनप्रतरणं कर्मानुष्ठातृभिः सुखेन गतव्यमनेहसमनुपद्रवरहितमेतादृशं देवं त्वामूतये रक्षणाय ववृमहे। वृणीमहे ॥ सखायः। ख्या प्रकथने। समाने ख्यश्चोदात्त इति समान उपपदे डिदित्यनुवृत्तौ ख्यातेरिण्। तस्य डित्त्वाट्टिलोपः। तत्संनियोगेन यलोपः। समानस्य छंदस्यमूर्धेति सभावः। उपपदस्योदात्तत्वं। णिदित्यनुवृत्तौ सख्युरसंबुद्धौ। पा० ७.१.९२। इति णिद्वद्भावः। वृद्ध्यायादेशौ। आद्युदात्तः। ववृमहे। वृङ् संभक्तौ। छंदसि लुङ्लङ्लिट इति वर्तमाने लिट्। क्रादित्वादिडभावः। निघातः। ऊतये। अव रक्षण इत्यस्य उदात्त इत्यनुवृत्तावूतियूतीत्यादिना क्तिनंतत्वेन निपातनादंतोदात्तः। अपां। ऊडिदमिति विभक्तेरुदात्तत्वं। सुभगं। आद्युदात्तं द्व्यच छंदसीत्युत्तरपदाद्युदात्तत्वं। सुप्रतूर्तिं। क्त्वादयश्चेत्युत्तरपदाद्युदात्तत्वं ॥

कायमानो वना त्वं यन्मातॄरजगन्नपः।
न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः ॥२॥
कायमानः। वना। त्वं। यत्। मातॄः। अजगन्। अपः।
न। तत्। ते। अग्ने। प्रऽमृषे। निऽवर्तनं। यत्। दूरे। सन्। इह। अभवः ॥२॥

हे अग्ने वना काननानि कायमानः कामयमानस्त्वं यद्यस्मात्कारणात्तानि विहाय मातॄरपो मातृभूता अपोऽजगन्। अगमः। गतवानसि। अप्सु प्रविष्टत्वाच्छांतो वर्तसे। तत्तस्मात्ते तव निवर्तनं। नितरां तत्रैव वर्तनं। तेन च विनाशो लक्ष्यते। स विनाशो न प्रमृषे। न प्रमृष्यते। न सह्यते। कुत इत्यत आह। यद्यस्मात्कारणाद्दूरे सन् अदृश्यतया वर्तमानस्त्वमिहास्मत्संबंधिष्वरणिरूपेषु काष्ठेष्वभवः। मंथनात् क्षणमात्रेणास्माकं समीपे भवसि। तस्मात्तत्र दूरतो वर्तनमस्मभ्यं न रोचते। अस्मिन्नर्थे यास्कः। कायमानश्चायमानः कामयमान इति वा। वनानि त्वं यन्मातॄरपोऽगम उपशाम्यन्। न तत्ते अग्ने प्रमृष्यते निवर्तनं दूरे यत्सन्निह भवसि जायमानः। नि० ४.१४। इति ॥ कायमानः। कमु कांतौ। कर्मणि ङ्। लटः शानच्। मकारलोपश्छांदसः। अजगन्। गमॢ गतावित्यस्य लङि बहुलं छंदसीति शपः श्लुः। हल्ङ्याब्भ्य इत्यादिना सिलोपः। मो नो धातोरिति नकारः। यच्छब्दयोगादनिघातः। अडागमस्वरः। प्रमृषे। मृष तितिक्षायां। व्यत्ययेन कर्मणि तप्रत्ययः। लोपस्त आत्मनेपदेष्विति तलोपः। धातुस्वरः। अभवः। छंदसि लुङ्लङ्लिट इति लडर्थे लङ्। यद्योगादनिघातः ॥

अति तृष्टं ववक्षिथाथैव सुमना असि।
प्रप्रान्ये यंति पर्यन्य आसते येषां सख्ये असि श्रितः ॥३॥
अति। तृष्टं। ववक्षिथ। अथ। एव। सुऽमनाः। असि।
प्रऽप्र। अन्ये। यंति। परि। अन्ये। आसते। येषां। सख्ये। असि। श्रितः ॥३॥

हे अग्ने तृष्टं स्तोतृस्तृष्णाभिलाषं तदुचितफलप्रदानेन सफलं कर्तुमतिववक्षिथ। अतिशयेन वोढुमिच्छसि। अथैव अथापि त्वं सुमना असि। संतुष्टमनस्को वर्तसे। किंच। त्वं येषां षोडशानामृत्विजां सख्ये मैत्रे श्रितोऽसि वर्तसे तेषां मध्येऽन्येऽध्वर्युप्रभृतयो द्वादशर्त्विजः प्रयंति। प्रकर्षेण होतुं गच्छंति। अन्ये उद्गातृप्रभृतयश्चत्वारः पर्यासते। परित आसीना वर्तंते ॥ ववक्षिथ। वह प्रापणे इत्यस्य सनि रूपं। अभ्यासस्य सन्यत इतीत्वाभावश्छांदसः। तदंताद्वर्तमाने लिट्। थल आर्धधातुकस्येड्वलादेरितीट्। कास्प्रत्ययादाममंत्र इत्याम् न भवति मंत्रत्वात्। निघातः। प्रप्र। प्रसमुपोदः पादपूरण इति द्विर्वचनं। यंति। इण् गतावित्यस्य लटि रूपं। एकान्याभ्यां

समर्थाभ्यामित्यन्यशब्दयोगात्पूर्वस्य निघाताभावः । आसते । आस उपवेशने । उत्तरत्वान्निघातः । असि । अस भुवि । तासस्त्योर्लोप इति सकारलोपः । यद्वृत्तयोगान्न निहन्यते ॥

ईयिवांसमति स्रिधः शश्वतीरति सश्चतः ।
अन्वीमविंदन्निचिरासो अद्रुहोऽप्सु सिंहमिव श्रितं ॥४॥
ईयिऽवांसं । अति । स्रिधः । शश्वतीः । अति । सश्चतः ।
अनु । ईं । अविंदन । निऽचिरासः । अद्रुहः । अपऽसु । सिंहंऽइव । श्रितं ॥४॥

हे अग्ने अद्रुहोऽद्रोहधारो निचिरासो नितरां चिरामश्चिरतना विश्वे देवाः स्रिधः शोषकाञ्च्छत्रूनतिक्रम्येयिवांसं गच्छंतं शश्वतीर्बह्वीः सश्चतः संगतिकारिणीः सेनाश्चात्यतिक्रम्य गच्छंतमप्सु श्रितं तिरोहितमत एव सिंहमिव गुहाप्रविष्टं सिंहमिव भीममभीमेन त्वामन्वविंदन । अनुगम्यालभत ॥ ईयिवांसं । इण गतावित्यस्य क्वसावुपेयिवाननाश्वाननूचानश्च । पा॰ ३ २ १०९ । इति निपातितः । प्रत्ययस्वरः । स्रिधः । स्रिधु क्षयार्थस्य शोषणार्थस्य वा क्विप चेति क्विप । धातुस्वरः । सश्चतः । षस्ज गतौ । जकारस्य व्यत्ययेन चकारः । लटः शत्रादेशः । प्रत्ययस्वरः । अविंदन । विद्लृ लाभ इत्यस्य लङि रूपं । निचिरासः । नितरां चिराः । आज्जसेरसुगित्यसुक् । समासस्वरः । अद्रुहः । द्रुह जिघांसायां । संपदादित्वाद्भावे क्विप । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । श्रितं । श्रिञ सेवायामित्यस्य श्र्युकः किति इतीट्प्रतिषेधः । प्रत्ययस्वरः ॥

ससृवांसमिव त्मनाग्निमित्था तिरोहितं ।
ऐनं नयन्मातरिश्वा परावतो देवेभ्यो मथितं परि ॥५॥
ससृवांसंऽइव । त्मना । अग्निं । इत्था । तिरःऽहितं ।
आ । एनं । नयत । मातरिश्वा । पराऽवतः । देवेभ्यः । मथितं । परि ॥५॥

मातरिश्वा वायुरित्थेत्थं त्मना स्वेच्छयाप्सु प्रवेशेन तिरोहितं निलीनं परि परितो मथितं मथनेन निष्पादितमेनमग्निं देवेभ्यः । तादर्थ्ये चतुर्थी । देवार्थं परावतो दूरदेशादानयत । आनीतवान । तत्र दृष्टांतः । ससृवांसमिव । यथा स्वेच्छयेन ससृवांसं सरंतं गच्छंतं पुत्रं पिता बलादानयति तद्वत ॥ ससृवांसमिव । सृ गतावित्यस्माल्लिट । तस्य क्वसुः । इवेन विभक्त्यलोप इत्युक्तत्वात्प्रत्ययस्वरः । त्मना । आत्मनशब्दस्य मंत्रेष्वाङ्यादेरात्मन इत्याकारलोपः । इत्था । था हेतौ च छंदसीति व्यत्ययेन थाप्रत्ययः । प्रत्ययस्वरः । एनं । अस्मादेशो द्वितीयाटौस्स्वेन इत्येनादेशः । अनुदात्तश्च । नयत । णीञ प्रापणे इत्यस्य लङि रूपं । अडभावश्छांदसः । मातरिश्वा । मातर्यंतरिक्षे श्वसितीति श्वन्नुक्षन्नित्यादिना निपातितः ॥ ॥५॥

तं त्वा मर्ता अगृभ्णत देवेभ्यो हव्यवाहन ।
विश्वान्यद्यज्ञाँ अभिपासि मानुष तव क्रत्वा यविष्ठ्य ॥६॥
तं । त्वा । मर्ताः । अगृभ्णत । देवेभ्यः । हव्यऽवाहन ।
विश्वान । यत । यज्ञान । अभिऽपासि । मानुष । तव । क्रत्वा । यविष्ठ्य ॥६॥

हे हव्यवाहन हव्यानां वोढर्हे अग्ने मर्ता मनुष्या अध्वर्युप्रभृतयस्तं तादृशमप्सु तिरोहितं त्वा त्वां देवेभ्यो यष्टव्यदेवतार्थमगृभ्णत । अगृह्णत । मानुष मनुष्याणां हितकारिन्यविष्ठ्य युवतम हे अग्ने तव क्रत्वा तव कर्मणा माहात्म्येन विश्वान्सर्वानस्माभिः क्रियमाणान्यज्ञान्यद्यस्मात्कारणादभिपासि सर्वतः पालयसि तस्मात्त्वामगृभ्णतेति पूर्वत्रान्वयः ॥ अगृभ्णत । ग्रह उपादाने । क्र्यादिभ्यः श्ना । ग्रहिज्यावयीति संप्रसारणं । हृग्रहोर्भश्छ

दमीति हकारस्य भकारः। तिङ्ङतिङ इति निघातः। हव्यवाहन। वह प्रापण इति धातोर्ण्युडित्यनुवृत्तौ हव्येऽनंतःपादमिति ञ्युट्। उपधावृद्धिः। योरनादेशः। अपादादित्वादाष्टमिकमनुदात्तत्वं। विश्वान। विश प्रवेशन इत्यस्मादशिप्रुपिलटिरशिकणिखटिविशिभ्यः क्वन्निति क्वन। कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तत्वं। अभिपासि। पा रक्षणे। अस्य धातो रक्षणार्थत्वान्न पिबादेशः। यच्छब्दयोगान्न निघातः। धातुस्वरः। क्त्वा। टा। जसादयश्छंदसि विकल्प्यंत इत्यत्र नादेशाभावः। यणादेशः। प्रत्ययस्वरः। यविष्ठ्य। युवशब्दादतिशायने तमबिष्ठनाविती्ष्ठन। स्थूलदूरयुवेति यणादि परं लुप्यते पूर्वस्य च गुणः। वस्वादित्वात्स्वार्थिको यप्रत्ययः॥

तद्भद्रं तव॑ दंसना पाका॑य चिच्छदयति।
त्वां यद॑ग्ने पशवः॑ समासते समि॑द्धमपिशर्वरे ॥७॥
तत्। भद्रं। तव॑। दंसना॑। पाका॑य। चित्। छदयति।
त्वां। यत्। अग्ने। पशवः॑। सम्ऽआसते। सम्ऽइद्धं। अपिऽशर्वरे ॥७॥

हे अग्ने तव संबंधि तदिदं भद्रं शोभनं दंसनाग्निहोत्रादिकं कर्म पाकाय चित। चिच्छब्दोऽप्यर्थे। पाकायेति कर्मणि चतुर्थी। पाकोऽर्भकः। तद्वद्बालमपि यजमानं छदयति। स्वफलप्रदानेन पूजयति। पशुपुत्रादिभिः परिवृतं करोतीत्यर्थः। छदयतिशब्दोऽर्चतिकर्मा छंदयति छदयतीति तन्नामसु पाठात। यद्वा। पाकशब्दः प्रशस्य वक्ति पाको वाम इति प्रशस्यनामसु पठितत्वात। तद्भद्रं प्रशस्यं यजमानमभिमतफलप्रदानेन पूजयतीत्यर्थः। यद्यस्मात्कारणादपिशर्वरे शर्वरीमुखेऽग्निविहरणकाल एव समिद्धं दीप्यमानं त्वा पशवो द्विपदाश्चतुष्पदाश्चोभये पशवः समासते। सम्यगासते। पर्युपासत इत्यर्थः। तदिदं पश्वादिलक्षणं फलं यजमानाय प्रयच्छतीत्यर्थः॥ भद्रं। भदि कल्याण इत्यस्माद्धातोरुपरि रक्प्रत्ययेन निपातनादंतोदात्तत्वं। पाकाय। पा रक्षण इत्यस्मादिणभीकापाशल्यीत्यादिना कन। पायते रक्ष्यते राजादिनेति पाकः। नित्त्वादाद्युदात्तः। छदयति। छद अपवारणे। स्वार्थे णिच। अदंतत्वाद्वृद्ध्यभावः। निघातः। समासते। आस उपवेशने। अदादित्वाच्छपो लुक। अनकारांतत्वाज् झस्यादादेशः। यद्योगादनिघातः। तिङि चोदात्तवतीति गतेर्निघातः। धातुस्वरः॥

आ जु॑होता स्वध्वरं शीरं पा॑वकशो॑चिषं।
आशुं दूतम॑जिरं प्रत्नमीड्यं॑ श्रुष्टी देवं स॑पर्यत ॥८॥
आ। जुहोत। सुऽअध्वरं। शीरं। पावकऽशोचिषं।
आशुं। दूतं। अजिरं। प्रत्नं। ईड्यं। श्रुष्टी। देवं। सपर्यत ॥८॥

ऋत्विजो यजमानः प्रेरयति। हे ऋत्विजः पावकशोचिषं शोधकदीप्तिं शीरं काष्ठेष्वोषधीषु चानुशायिनं स्वध्वरं शोभनयज्ञोपेतमिममग्निमा जुहोत। आहुतिभिरा समंतात्तर्पयत। अपि च। आशुं कर्मणि व्याप्तं दूतमाह्वानकारित्वेन देवानां दूतमजिरं क्षिप्रं गंतारं प्रत्नं पुरातनमीड्यं स्तोतव्यं देवं द्योतमानमिममग्निं श्रुष्टी सपर्यत। श्रुष्टीति क्षिप्रनामेति यास्कः। क्षिप्रं पूजयत॥ जुहोत। हु दानादनयोः। अस्माद्धातोर्लोट्। जुहोत्यादिभ्यः श्लुरिति शपः श्लुः। श्लाविति द्विर्वचनं। लोटो लङ्वदिति लङ्वद्भावे तस्थस्थमिपामिति थस्य तादेशः। छंदसीत्यनुवृत्तौ तस्य तप्तनप्तनथनाश्चेति तबादेशः। पित्त्वाद्गुणः। निघातः। स्वध्वरं। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। शीरं। शीङ् स्वप्ने। अस्माद्धातोः स्फायितंचिवंचीत्यादिना रक्प्रत्ययः। कित्त्वाद्गुणाभावः। प्रत्ययस्वरः। पावकशोचिषमित्यत्र पवनं पावः शुद्धिः। तं कायतीति पावकः। आतोऽनुपसर्गे कः। प्रत्ययस्वरः। बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरत्वं। आशुं। अशू व्याप्तौ। अस्माद्धातोः कृवापाजिमीत्यादिना उण्। उपधावृद्धिः। प्रत्ययस्वरः। अजिरं। अज गतिक्षेपणयोरित्यस्माद्धातोरजिरशिशिरशिथिलेति किरच्प्रत्ययांतत्वेन निपातनादंतोदात्तत्वं। प्रत्नं। प्रगस्य छंदसि गलोपश्च। पा० ४. ३. २३. २.।

इति णलोपः। चकारात् तप्रत्ययः। प्रत्ययस्वरः। ईड्यं। ईड स्तुतौ। ऋहलोर्ण्यत्। ईडवंदेत्यादिनाद्युदात्तत्वं। सपर्यत। सपरशब्दात्कण्ड्वादिभ्यो यक् पूजायां वर्तते। लोण्मध्यमपुरुषबहुवचनं। शप्। अतो गुण इति पूर्वरूपत्वं। निघातः॥

त्रीणि॑ श॒ता त्री स॒हस्रा॑ण्य॒ग्निं त्रिं॒शच्च॑ दे॒वा नव॑ चासपर्यन्।

औक्ष॑न्घृ॒तैरस्तृ॑णन्ब॒र्हिर॑स्मा॒ आदिद्धोता॑रं॒ न्य॑सादयंत ॥९॥

त्रीणि॑। श॒ता। त्री। स॒हस्रा॑णि। अ॒ग्निं। त्रिं॒शत्। च॒। दे॒वाः। नव॑। च॒। अ॒स॒प॒र्य॒न्।

औक्ष॑न्। घृ॒तैः। अस्तृ॑णन्। ब॒र्हिः। अ॒स्मै॒। आत्। इत्। होता॑रं। नि। अ॒सा॒द॒यं॒त॒ ॥९॥

त्रीणि शता त्रीणि शतानि त्री सहस्राणि त्रीणि सहस्राणि त्रिंशच्च नव चैकोनचत्वारिंशदधिकशतत्रयोपेतत्रिसहस्रसंख्याका देवा इममग्निमसपर्यन्। अपूजयन्। किंच ते देवा घृतैरिममग्निमौक्षन्। असिंचन्। तथास्मा अग्नये तदर्थं बर्हिरस्तृणन्। बर्हिषास्तरणं वेद्याच्छादनमकुर्वन्। आदिदनंतरमेव ते देवास्तमग्निमस्मिन्बर्हिष्यनमपि होतारं कृत्वा न्यसादयंत। उपावेशयन्। देवैः पूज्यमिममग्निं सपर्यतेति पूर्वेणान्वयः। देवसंख्या च बृहदारण्यकेऽभिहिता। महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति। कतमे ते त्रयस्त्रिंशदष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिंद्रश्चैव प्रजापतिश्च त्रयस्त्रिंशौ। बृ॰ आ॰ ३ ९.। इति॥ शता। दशानां दशतां शभावश्च तप्रत्ययः। दश दशतः परिमाणमेषां शतानि। सुपां सुलुगित्यादिना सुपो डादेशः। प्रत्ययस्वरः। त्री। सुपां सुलुगिति पूर्वसवर्णदीर्घः। फिट्स्वरः। सहस्राणि। कर्दमादित्वान्मध्योदात्तः। त्रिंशत्। त्रयाणां दशतां त्रिन्भावः शच्च प्रत्ययः। त्रयो दशतः परिमाणमस्य त्रिंशत्। प्रत्ययस्वरः। नव। कनिन्नित्यनुवृत्तौ णु स्तुतावित्यस्माद्धातोर्णुदशोर्नुदश्चेति कनिन्। गुणश्च। नित्त्वादाद्युदात्तः। असपर्यन्। लङि रूपं। निघातः। औक्षन्। उक्ष सेचने। आडजादीनामित्याडागमः। वृद्धिः। पादादित्वान्न निहन्यते। आगमस्वरः। अस्तृणन्। स्तृञ् आच्छादने। लङ्बहुवचने क्र्यादित्वाच्छ्ना। झेरंतादेशः। नित्यं ङित इतीकारलोपः। संयोगांतलोपः। श्नाभ्यस्तयोरात इत्याकारलोपः। लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागमः। स चोदात्तः। आगमस्वरः। चादिष्वित्यनुवृत्तौ चादिलोपे विभाषेति प्रथमायास्तिङ्विभक्तेर्निघातनिषेधः। वर्हिः। इसिमनित्यनुवृत्तौ बृंहेर्नलोपश्चेतीसिः। तत्संनियोगेन नलोपः। प्रत्ययस्वरः। असादयंत। षद्लृ विशरणगत्यवसादनेषु। अस्माद्धेतुमति चेति णिच्। उपधावृद्धिः। णिचश्चेत्यात्मनेपदं। लङि बहुवचने रूपं। निघातः॥ ॥६॥

त्वामग्न इति नवर्चं दशमं सूक्तं वैश्वामित्रमौष्णिहमाग्नेयं। त्वामग्न औष्णिहमित्यनुक्रांतत्वात्॥ प्रातरनुवाकाश्विनशस्त्रयोरौष्णिहे छंदस्यस्य सूक्तस्य विनियोगः। अथैतस्या इति खंडे सूत्रितं। पुरु वा त्वामग्न। आ॰ ४.१३.। इति॥

त्वाम॑ग्ने मनी॒षिणः॑ स॒म्राजं॑ चर्षणी॒नां। दे॒वं मर्ता॑स इंधते॒ सम॑ध्व॒रे ॥१॥

त्वां। अ॒ग्ने॒। म॒नी॒षिणः॑। सं॒ऽराजं॑। च॒र्ष॒णी॒नां। दे॒वं। मर्ता॑सः। इं॒ध॒ते॒। सं। अ॒ध्व॒रे ॥१॥

हे अग्ने मनीषिणो धीमतोऽध्वर्युप्रभृतयो मर्तासो मनुष्याश्चर्षणीनां प्रजानां सम्राजमधिपतिं देवं द्योतमानं त्वामध्वरे यज्ञे समिधते। सोमाज्यपयःप्रभृतिभिराहुतिभिः सम्यग्दीपयंति॥ मनीषिणः। मनीषास्तीति व्रीह्यादिभ्यश्चेति इनिः। यस्येति चेत्यवर्णलोपः। प्रत्ययस्वरः। सम्राजं। राजृ दीप्तौ। सपूर्वादस्माद्धातोः सत्सूद्विषेति क्विप्। क्विलोपः। समो मकारस्य मोऽनुस्वार इत्यनुस्वारे प्राप्ते मो राजि समः क्वाविति समो मकारः। कृदुत्तरपदप्रकृतिस्वरत्वं। चर्षणीनां। नामन्यतरस्यामिति विभक्तेरुदात्तत्वं। इंधते। ञिइंधी दीप्तौ। अस्माद्धातोर्हेतुमति चेति णिच्। लटि झस्यात्मनेपदेष्वनत इत्यदादेशः। छंदस्युभयथेति झस्यार्धधातुकत्वाणेरनिटीति णिलोपः। निघातः॥

त्वां य॒ज्ञेष्वृ॒त्विज॒मग्ने॒ होता॑रमीळते। गो॒पा ऋ॒तस्य॑ दीदिहि॒ स्वे दमे॑ ॥२॥

त्वां। य॒ज्ञेषु॑। ऋ॒त्विजं॑। अ॒ग्ने॒। होता॑रं। ई॒ळ॒ते॒। गो॒पाः। ऋ॒तस्य॑। दी॒दि॒हि॒। स्वे। दमे॑ ॥२॥

हे अग्नेऽध्वर्य्वादयो यज्ञेष्वग्निष्टोमादिषु त्वां होतारमृत्विजं होतृनामकमृत्विजमीळते । स्तुवंति । तादृशस्त्वमृतस्य सत्यस्य यज्ञस्य गोपा गोपायिता सन् स्वे दमे स्वकीये गृहे यज्ञशालायां दीदिहि । दीप्यस्व ॥ दीदिहि । दिवु क्रीडादौ । यङ्लुक् । लोट् । तुजादित्वादभ्यासदीर्घत्वं । संज्ञापूर्वको विधिरनित्य इत्यभ्यासस्य गुणाभावे लोपो व्योर्वलीति वलोपः ॥

स घा यस्ते ददाशति समिधा जातवेदसे । सो अग्ने धत्ते सुवीर्यं स पुष्यति ॥३॥

सः । घ । यः । ते । ददाशति । सम्ऽइधा । जातऽवेदसे । सः । अग्ने । धत्ते । सुऽवीर्यं ।
सः । पुष्यति ॥३॥

हे अग्ने यो यजमानो जातवेदसे जातप्रज्ञाय ते तुभ्यं समिधा समिन्धनकारिण्याज्यपुरोडाशादिहवींषि ददाशति ददाति स घ स खलु सुवीर्यं शोभनसामर्थ्योपेतं पुत्रं धत्ते । धारयति । अपि च सः स एव पुष्यति । पशुपुत्रादिभिः समृद्धो भवति ॥ घ । चादयोऽनुदात्ता इत्यनुदात्तः । ददाशति । दाशृ दाने इत्यस्माद्धातोः कर्तरि शप् । तिप् । द्विर्वचनं छांदसं । यद्वृत्तयोगादनिघातः । अभ्यस्तानामादिरित्युदात्तः । समिधा । ञिइंधी दीप्तौ । अस्मात् क्विप् चेति क्विप् । उपधालोपः । सुपां सुलुगिति शसो डादेशः । कृदुत्तरपदप्रकृतिस्वरत्वं । जातवेदसे । बहुव्रीहौ प्रकृत्या पूर्वपदमिति प्रकृतिस्वरत्वं । सुवीर्यं । वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं । पुष्यति । पुष पुष्टौ । अस्मात् श्यन् । ङित्वाद्गुणाभावः । निघातः ॥

स केतुरध्वराणामग्निर्देवेभिरा गमत् । अंजानः सप्त होतृभिर्हविष्मते ॥४॥

सः । केतुः । अध्वराणां । अग्निः । देवेभिः । आ । गमत् । अंजानः । सप्त । होतृऽभिः ।
हविष्मते ॥४॥

अध्वराणां यज्ञानां केतुः प्रज्ञापकः सोऽग्निः सप्त सप्तभिर्होतृभिर्वषट्कर्तृभिरज्यमानः सोमाज्याहुतिभिरज्यमानः सन् हविष्मते यजमानार्थं देवेभिर्यष्टव्यैर्देवैः सहागमत् । आगच्छतु ॥ गमत् । लोडर्थे छंदसि लुङ्लङ्लिट इति लुङ् । लृदित्त्वादङ् । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । निघातः । अंजानः । अंजू व्यक्तिम्रक्षणगतिषु । व्यत्ययेन कर्मणि शानच् । चित्त्वादंतोदात्तत्वं । हविष्मते । जुहोतेरर्चिशुचीत्यादिना इसिप्रत्ययांतो हविःशब्दोऽन्तोदात्तः । स्वरविधौ व्यंजनमविद्यमानवदिति परिभाषानाश्रयणान्मतुप उदात्तत्वाभावः । इसिप्रत्ययस्वरः ॥

प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् । विपां ज्योतींषि बिभ्रते न वेधसे ॥५॥

प्र । होत्रे । पूर्व्यं । वचः । अग्नये । भरत । बृहत् । विपां । ज्योतींषि । बिभ्रते । न । वेधसे ॥५॥

यजमानो होत्रादीन्प्रति ब्रूते । हे होत्रादयो विपां विप्राणां मेधाविनामध्वर्य्वादीनां ज्योतींषि सत्कर्मानुष्ठानसपाद्यानि तेजांसि बिभ्रते निमित्ततया कुर्वाणाय वेधसे जगतो विधात्रे होत्रे देवानामाह्वात्रेऽग्नये बृहन्महत्पूर्व्यं पूर्वैः कृतं पुरातनं वचः स्तोत्रशस्त्रादिकं वाक्यं प्रभरत । संपादयत । नेत्यय पादपूरणोऽन्वयाभावात् । यद्वा वेधसे न । यथा वेधा जगद्विधाता परमेश्वर आदित्यादीनि ज्योतींषि करोति तद्वदिति ॥ प्रशब्दस्य छंदसि व्यवहिताश्चेति भरतेत्यनेन संबंधः । पूर्व्यं पूर्वैः कृतमित्यर्थः । पूर्वैः कृतमिनियौ चेति यप्रत्ययः । भसंज्ञकत्वादवर्णलोपः । प्रत्ययस्वरः । भरत । भृञ् भरणे भौवादिकः । निघातः । बृहत् । वर्तमाने पृषद्बृहदिति निपातनादंतोदात्तः । बिभ्रते । भृञ् भरणे । जुहोत्यादिभ्यः श्लुः । भृञामिदितीत्वं । अभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ ॥ ७ ॥

अग्निं वर्धतु नो गिरो यतो जायत उक्थ्यः । महे वाजाय द्रविणाय दर्शतः ॥६॥

अग्निं । वर्धतु । नः । गिरः । यतः । जायते । उक्थ्यः । महे । वाजाय । द्रविणाय । दर्शतः ॥६॥

योऽयमग्निर्यतो याभिः स्तुतिरूपाभिर्गीर्भिरुक्थ्यो जायते। उक्थ्यशब्दः प्रशस्यवाची। अनभिशस्त्य उक्थ्य इति तन्नामसु पाठात्। अतिशयेन स्तुत्यो भवतीत्यर्थः। यश्चायमग्निर्महे महते वाजायान्नाय द्रविणाय धनाय च दर्शतो दर्शनीयो भवति तमिममग्निं नो गिरोऽस्माकं स्तुतिरूपास्ता वाचो वर्धन्तु। वर्धयन्तु। पुजयन्त्वित्यर्थः॥ वर्धन्तु। वृधु वर्धने। अस्माण्णिच। लघूपधगुणः। छन्दस्युभयथेत्यार्धधातुकत्वाण्णिलोपः। झेरन्तादेशः। एरुः। पा° ३. ४. ८६.। इत्युकारः। निघातः। उक्थ्यः। वच परिभाषणे। अस्मात्पातॄतुदिवचिरिचिसिचीत्यादिना थक्। किल्वाद्वचिस्वपीत्यादिना संप्रसारणं। उक्थं शस्त्रं। तेन स्तुत्यत्वेन तत्र भव उक्थ्यः। भवे छन्दसीति यत्। यस्येति लोपः। तित्स्वरितमिति स्वरितः। दर्शतः। भृमृदृशियजीत्यतच्प्रत्ययः। चित्त्वादन्तोदात्तः॥

अग्ने यजिष्ठो अध्वरे देवान्देवयते यज। होता मंद्रो वि राजस्यति स्रिधः ॥७॥

अग्ने। यजिष्ठः। अध्वरे। देवान्। देवऽयते। यज। होता। मंद्रः। वि। राजसि। अति। स्रिधः ॥७॥

हे अग्ने यजिष्ठो यष्टृतमस्त्वमध्वरे यज्ञे देवयते देवानात्मन इच्छते यजमानाय देवान्यज। तदर्थं यष्टव्यानग्न्यादीन्देवान्पूजय। किंच। होता देवानामाह्वाता मन्द्रो यजमानस्य मादयिता स त्वं स्रिधः शोषयितॄञ्छत्रूनात् अतिक्रम्य वि राजसि। विशेषेण शोभसे॥ यजिष्ठः। तृन्छन्दसीतीष्ठन्। तुरिष्ठेमेयःस्विति तृचो लोपः। नित्त्वादाद्युदात्तः। देवयते। क्यचश्चित्त्वादन्तोदात्तत्वं। शपः पित्त्वादनुदात्तत्वं। शतुश्च लसार्वधातुकस्वरेण तयोः क्यचा सहैकादेश एकादेश उदात्तेनोदात्त इत्यन्तोदात्तो देवयच्छब्दः। ततः शतुरनुम इति विभक्तेरुदात्तत्वं। यज। यज देवपूजासंगतिकरणदानेषु। अस्माल्लोट्। सिप्। सिपो हिरादेशः। अतो हेरिति हेर्लुक्। निघातः। राजसि। राजृ दीप्तौ। निघातः॥

स नः पावक दीदिहि द्युमदस्मे सुवीर्यं। भवा स्तोतृभ्यो अंतमः स्वस्तये ॥८॥

सः। नः। पावक। दीदिहि। द्युऽमत्। अस्मे इति। सुऽवीर्यं। भव। स्तोतृऽभ्यः। अंतमः। स्वस्तये ॥८॥

नः पावकास्मत्संबन्धिनः पापस्य शोधक हे अग्ने स पूर्वमन्त्रे प्रतिपादितस्त्वं द्युमत्कान्तियुक्तं सुवीर्यं शोभनसामर्थ्योपेतं दानभोगार्हं धनमस्मे अस्मभ्यं दीदिहि। यद्वा द्युमत्तेजोयुक्तं सुवीर्यं शोभनवीर्योपेतं च यथा भवति तथास्मे अस्मदर्थं त्वं दीदिहि। दीप्यस्व। किंच स्तोतृभ्यः। षष्ठ्यर्थे चतुर्थी। त्वद्विषयस्तुतिकारिणां होत्रादीनां स्वस्तयेऽविनाशनाय अमायान्तमोऽन्तिकतमस्तेषामतिशयेन समीपवर्ती भव॥ पावक। पूञ् पवने। अस्माद्धातोर्ण्वुच। णित्त्वाद्वृद्धिः। वोरकादेशः। आमन्त्रितत्वादाष्टमिकमनुदात्तत्वं। दीदिहि। दिवु क्रीडादौ। अस्माद्यङ्। तुजादीनामित्यभ्यासस्य दीर्घत्वं। सन्यङ्पूर्वको विधिरनित्य इत्यभ्यासस्य गुणाभावः। बहुलं छन्दसीति यङो लुक्। लोटि सिप्। चर्करीतं परस्मैपदमदादिवच्चेति वचनाच्छपो लुक्। सिपो हिरादेशः। लोपो व्योर्वलीति वलोपः। हेरपित्त्वादगुणः। निघातः। द्युमत्। दिव उदित्युकारः। ह्रस्वनुड्भ्यामिति मतुप उदात्तत्वं। सुवीर्यं। वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं। अन्तमः। अन्तोऽस्यास्तीत्यन्तिकः। अत इनिठनाविति ठन्। अतिशयेनान्तिक इत्यतिशायने तमबिष्ठनाविति तमप्। तमे तादेश्चेति तादिलोपः। नित्त्वादाद्युदात्तः। स्वस्तये। प्रातिपदिकस्वरः॥

तं त्वा विप्रा विपन्यवो जागृवांसः समिंधते। हव्यवाहममर्त्यं सहोवृधं ॥९॥

तं। त्वा। विप्राः। विपन्यवः। जागृऽवांसः। सं। इंधते। हव्यऽवाहं। अमर्त्यं। सहःऽवृधं ॥९॥

हे अग्ने विप्राः स्तुतीनां प्रेरका जागृवांसोऽग्निहोत्रादिकर्मण्यप्रमत्ततया प्रबुद्धा विपन्यवः। विपन्युशब्दो मेधाविनमाचष्टे। विपश्चिद्विपन्युरिति तन्नामसु पाठात्। विपन्यवो मेधाविनः स्तोतारो हव्यवाहं हव्यानां वो

होतारममर्त्यं मरणधर्मरहितं सहोवृधं सहसा मथनरूपेण बलेन वर्धमानं तादृशं त्वा त्वां समिंधते। सोमाख्या-
हुतिभिः सम्यग्दीपयंति ॥ विप्राः। टुवप बीजसंताने। अस्माद्धातोर्ऋज्रेंद्राग्रवज्रविप्रेति रन्प्रत्ययेत्वयोर्निपात
नादाद्युदात्तत्वं। विपन्यवः। विविधं पनं पननं स्तुतिं यातीति विपन्युः। मृगय्वादयश्चेति कुः। अकारलोप-
श्छांदसः। प्रत्ययस्वरः। जागृवांसः। जागृ निद्राक्षये। अस्माल्लिट्। तस्य क्वसुः। उगिदचामिति नुम्। द्विर्व-
चनाभावश्छांदसः। वस्वेकाजाद्घसामिति नियमादिडभावः। जाग्रोऽविचिण्णल्ङित्सु। पा० ७. ३. ८५.। इति
गुणो न भवति तत्र विरित्यत्र क्वसोरपि गृहीतत्वात्। प्रत्ययस्वरः। इंधते। ञिइंधी दीप्तौ। अंतर्भावितण्य-
र्थोऽयं। निघातः। हव्यवाहं। वह प्रापणे। वहश्चेति ण्विः। उपधावृद्धिः। कृदुत्तरपदप्रकृतिस्वरत्वं। सहोवृधं।
वृधु वर्धने। क्विप् चेति क्विप् ॥ ॥ ८ ॥

अग्निर्होतेति नवर्चमेकादशं सूक्तं वैश्वामित्रं गायत्रमाग्नेयं। अग्निर्होता गायत्रमित्यनुक्रांतत्वात् ॥ प्रातर-
नुवाकाश्विनशस्त्रयोर्गायत्रे छंदसीदं सूक्तं। सूत्रितं हि। अग्निर्होतास इत्यृचि चतस्रः। आ० ४. १३। इति ॥
आधाने प्रथमायां पवमानेष्टौ स्विष्टकृतो याज्याग्निर्होतेत्येषा स हव्यवाळमर्त्य इति पुरोनुवाक्या। द्वितीय-
पवमानेष्टौ स्विष्टकृतोऽनुवाक्या साह्वानिति। सूत्रितं च। साह्वान्विश्वा अभियुजोऽग्निर्मीळे पुरोहितमिति
सयाज्ये। आ० २. १। इति ॥ आभिप्लविकेषूक्थ्येषु तृतीयसवने मैत्रावरुणशस्त्रेऽभि प्रयांसीति वैकल्पिकोऽनुरू-
पस्तृचः। अत्र सूत्रं। प्र वो वाजा अभिद्यवोऽभि प्रयांसि वाहसा। आ० ७. ८। इति ॥

अग्निर्होता पुरोहितोऽध्वरस्य विचर्षणिः। स वेद यज्ञमानुषक् ॥ १ ॥
अग्निः। होता। पुरःऽहितः। अध्वरस्य। विऽचर्षणिः। सः। वेद। यज्ञं। आनुषक् ॥ १ ॥

विश्वामित्रः स्तौति। होता देवानामाह्वाता पुरोहितः पुरत एवाभिमतफलसंपादकत्वेन हितकारी। यद्वा
पुरः पूर्वभाग आहवनीयरूपेण हितो निहित इति पुरोहितः। अध्वरस्य यज्ञस्य विचर्षणिर्विशेषेण द्रष्टा वि-
चर्षणिर्विश्वचर्षणिरिति तन्नामसु पाठात्। स तथाविधोऽग्निरानुषगानुपूर्व्येण सक्तं यज्ञमग्निष्टोमादिकं वेद।
जानाति ॥ वेद। विद ज्ञाने। विदो लटो वेति तिपो णलादेशः। लघूपधगुणः। निघातः। आनुषक्। आ सम-
तादनुषजतीत्यानुषक्। षञ्ज संगे। धातुषकारस्य सकारः। क्विप् चेति क्विप्। अनिदितामित्युपधालोपः।
उपसर्गात्सुनोतीति षत्वं ॥

स हव्यवाळमर्त्य उशिग्दूतश्चनोहितः। अग्निर्धिया समृण्वति ॥ २ ॥
सः। हव्यऽवाट्। अमर्त्यः। उशिक्। दूतः। चनःऽहितः। अग्निः। धिया। सं। ऋण्वति ॥ २ ॥

स हव्यवाड् हविषो वोढामर्त्यो मरणधर्मरहित उशिक् हविः कामयमानो दूतो देवानां दूतश्चनसे
हविर्लक्षणायान्नाय हितो निहितः। यद्वा चनोहितः। चनोऽन्नं हविर्लक्षणं हितमस्येति चनोहितः। स तथा-
विधोऽग्निर्धिया प्रज्ञया समृण्वति। संगच्छते। कर्मविषयप्रज्ञान्वितोऽग्निरस्मानपि तादृक्प्रज्ञान्वितान्करोत्वि-
त्याशास्ते ॥ हव्यवाट्। वह प्रापणे। वहश्चेति ण्विः। ढत्वजश्त्वचर्त्वानि। कृदुत्तरपदप्रकृतिस्वरत्वं। उशिक्।
वश कांतौ। इजिरित्यनुवृत्तौ वशेः किच्चेतीजिप्रत्ययः। तस्य कित्त्वात् ग्रहिज्येति संप्रसारणं। प्रत्ययस्वरः।
चनोहितः। चनःशब्दश्चायतेरन्ने ह्रस्वश्चेत्यसुनंतः। चकारान्नुडागमः। तस्मिन्यलोपः। नित्त्वादाद्युदात्तः।
पुनश्चनसोश्छंदसि गतिसंज्ञा वक्तव्या। पा० १. ४. ६०. २। इति गतिसंज्ञायां गतिरनंतर इति प्रकृतिस्वरत्वं।
बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरत्वं। धिया। सावेकाच इति विभक्तेरुदात्तत्वं। ऋण्वति। ऋणु गतौ। लेटि
तनादित्वादुप्रत्ययः। लेटोऽडाटावित्यडागमः ॥

अग्निर्धिया स चेतति केतुर्यज्ञस्य पूर्व्यः। अर्थं ह्यस्य तरणि ॥ ३ ॥
अग्निः। धिया। सः। चेतति। केतुः। यज्ञस्य। पूर्व्यः। अर्थं। हि। अस्य। तरणि ॥ ३ ॥

यज्ञस्याग्निष्टोमादेः केतुः प्रज्ञापकः पूर्व्यः पूर्वं भवश्चिरंतनः स तथाविधोऽग्निर्धिया प्रज्ञया चेतति। सर्वं

आसीते। अस्यैतादृशस्याग्नेरर्थं गमनस्वभावं तेजोऽस्याकाशे दृश्यमानस्य तमसस्तरणि हि। तारकं खलु। निवर्तकमिति यावत्॥ चेतति। चिती संज्ञाने। निघातः। अर्थं। ऋ गतौ। उषिकुषिगार्तिभ्यस्थन्निति थन्। गुणः। नित्त्वादाद्युदात्तः। तरणि। तॄ प्लवनतरणयोः। अर्तिसृधृधम्यश्यवितॄभ्योऽनिरित्यादिनानिप्रत्ययः। गुणः। प्रत्ययस्वरः॥

अग्निं सूनुं सनश्रुतं सहसो जातवेदसं। वह्निं देवा अकृण्वत ॥४॥

अग्निं। सूनुं। सनऽश्रुतं। सहसः। जातऽवेदसं। वह्निं। देवाः। अकृण्वत ॥४॥

सहसः सूनुं बलस्य पुत्रं मथनरूपेण बलेन निष्पाद्यमानत्वात् सनश्रुतं सनातनत्वेन प्रसिद्धं जातवेदसं जातप्रज्ञं तमिममग्निं देवा हविर्भुजो देवा वह्निं हविषा वोढारमकृण्वत। अकुर्वत॥ सनश्रुतं। श्रु श्रवणे। कर्मणि क्तः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। वह्निं। वह प्रापणे। निरित्यनुवृत्तौ वहिश्रीत्यादिना निप्रत्ययः। अकृण्वत। कृवि हिंसाकरणयोः। इदित्त्वान्नुम्। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। अकारश्चान्तादेशः। लङि व्यत्ययेनात्मनेपदं। निघातः॥

अदाभ्यः पुरएता विशामग्निर्मानुषीणां। तूर्णी रथः सदा नवः ॥५॥

अदाभ्यः। पुरःऽएता। विशां। अग्निः। मानुषीणां। तूर्णिः। रथः। सदा। नवः ॥५॥

मानुषीणां मनोर्जातानां विशां प्रजानां पुरएता सन्मार्गप्रदर्शनेनाग्रतो गन्ता तत एव तूर्णिस्ताः प्रजा वैदिककर्मप्रवर्तकत्वेनानुग्रहीतुं त्वरायुक्त आलस्यरहितो रथो हविषा वहनाद्रथसदृशः सदा सर्वदा तत्कर्मणि नवो नूतनः पुनर्मथनादभिनव एवंविधोऽग्निरदाभ्यः। अहिंस्यः। न केनापि तिरस्कार्य इत्यर्थः॥ अदाभ्यः। दंभु दंभे। दभेश्चेति वक्तव्यमिति कर्मणि ण्यत्। उपधावृद्धिः। न दाभ्योऽदाभ्यः। नञ्समासे तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरत्वं। पुरएता। इण् गतौ। ण्वुल्तृचाविति तृच्। गुणः। चित्त्वादन्तोदात्तः। मानुषीणां। मनोर्जातावञ्यतौ षुक् चेत्यञ्। टिड्ढाणञिति ङीप्। ञित्त्वादाद्युदात्तः। तूर्णिः। ञित्वरा संभ्रमे इति धातोर्निरित्यनुवृत्तौ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्ति निप्रत्ययः। ज्वरत्वरेत्यादिना ऊठ्। तस्य नित्त्वादाद्युदात्तः। संहितायां ढ्रलोपे पूर्वस्येति दीर्घः। रथः। हनिकुषिनीरमिकाशिभ्य इति क्थन्प्रत्ययः। कित्त्वादनुदात्तोपदेशेत्यादिनानुनासिकलोपः। नित्त्वादाद्युदात्तः। सदा। स्वरादिष्वाद्युदात्तत्वेन पठितत्वादाद्युदात्तः॥ ॥ ९॥

साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः। अग्निस्तुविश्रवस्तमः ॥६॥

सह्वान्। विश्वाः। अभिऽयुजः। क्रतुः। देवानां। अमृक्तः। अग्निः। तुविश्रवःऽतमः ॥६॥

अभियुजोऽभियोक्त्रीर्विश्वाः सर्वाः सेनाः साह्वान्सहमानः स्वबलेन तिरस्कुर्वाणोऽत एवामृक्तः शत्रुभिरहिंसितो देवानां क्रतुः कर्ता हविष्प्रदानेन पोषक एवंभूतोऽग्निस्तुविश्रवस्तमः। तुविशब्दो बहुवाची। तुवि पुरु इति तन्नामसु पाठात्। श्रवःशब्दोऽन्नवाची। श्रव इत्यन्ननाम श्रूयते। नि० १० ३। इति निरुक्तेऽभिधानात्। अतिशयेन बहुविधान्नोपेतो वर्तते। यस्मादेवं तस्मादस्मानपि बहुविधान्नोपेतान्करोत्विति भावः॥ साह्वान्। षह मर्षणे इत्यस्य क्वसौ दाश्वान्साह्वान्मीढ्वांश्चेति निपातनाद्द्विर्वचनमिडागमश्च न भवति परस्मैपदं च भवति। क्वसुस्वरः। क्रतुः। कृञः कतुः। कित्त्वाद्गुणाभावः। प्रत्ययस्वरः। तुविश्रवस्तमः। तु वृत्तिहिंसापूर्तिषु। अस्मादौणादिकः किप्रत्ययः। कित्त्वाद्गुणाभावः। उवङादेशः। अन्तोदात्तः। श्रवः। श्रु श्रवणे। श्रूयतेऽन्नमिति कर्मण्यसुन्प्रत्ययः। अतिशयेन तुविश्रवा इत्यातिशायने तमबिष्ठनाविति तमप्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥

अभि प्रयांसि वाहसा दाश्वाँ अश्नोति मर्त्यः। क्षयं पावकशोचिषः ॥७॥

अभि। प्रयांसि। वाहसा। दाश्वान्। अश्नोति। मर्त्यः। क्षयं। पावकऽशोचिषः ॥७॥

दाश्वान् हविषां दाता मर्त्यो मनुष्यो यजमानो वाहसा हविषां वाहकेनाग्निना प्रयांस्यन्नान्यभ्यश्नोति। अभितः सर्वतः प्राप्नोति। किंच पावकशोचिषः शोधकदीप्तेरग्नेः सकाशात् क्षयं गृहं चाभ्यश्नोति॥ प्रयांसि।

प्रीञ् तर्पणे । अस्माद्धातोस्तर्भावितण्यर्थादसुन्प्रत्ययः । प्रीणयंति भक्तमिति प्रयांस्यन्नानि । नित्त्वादाद्युदात्तः । वाहसा । णिदित्यनुवृत्तौ वहिहाधाञ्भ्यश्छंदसीत्यसुन् । णित्त्वादुपधावृद्धिः । नित्स्वरः । दाश्वान् । दाशृ दान इत्यस्य क्वसौ दाश्वान्साह्वान्मीढ्वानिति निपातनादिडागमो द्विर्वचनं च न भवति । क्वसुन्प्रत्ययस्वरः । अश्नोति । अशू व्याप्तौ । व्यत्ययेन परस्मैपदं । निघातः ॥

परि विश्वा॑नि॒ सुधि॑ता॒ग्नेर॑श्याम॒ मन्म॑भिः । विप्रा॑सो जा॒तवे॑दसः ॥८॥

परि॑ । विश्वा॑नि । सु॒ऽधि॑ता । अ॒ग्नेः । अ॒श्याम॒ । मन्म॑ऽभिः । विप्रा॑सः । जा॒तऽवे॑दसः ॥८॥

जातवेदसो जातप्रज्ञा विप्रासो मेधाविनो होत्रादयो वयमग्नेस्तव संबंधिभिर्मन्मभिर्मननीयैः स्तोत्रैर्विश्वानि सर्वाणि सुधिता सुहितानि सुष्ठु हितान्यभिलषितानि वसूनि पर्यश्याम । सर्वतः प्राप्नुयाम । जातवेदस इत्यग्नेर्वा विशेषणं । जातानि सर्वाणि वेत्तीति जातवेदाः सर्वज्ञ इत्यर्थः । एतादृशं जातवेदस्त्वमग्नेरेवोचितमिति तद्विशेषणत्वं युक्तं ॥ सुधिता । डुधाञ् धारणपोषणयोरित्यस्माद्धातोर्निष्ठायां छंदसीत्यनुवृत्तौ सुधितवसुधितेत्यादिना निपातितः । शेश्छंदसि बहुलमिति शेर्लुक् । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । अश्याम । अशू व्याप्तौ । बहुलं छंदसीति श्नुप्रत्ययस्य लुक् । व्यत्ययेन परस्मैपदं । यासुट् परस्मैपदेषूदात्त इति यासुट् । लिङः सलोप इति सलोपः । अदंतत्वाभावादियादेशो न भवति । ससः सकारस्य नित्यं ङित इति लोपः । निघातः । मन्मभिः । मनु अवबोधने । अन्येभ्योऽपि दृश्यत इति मनिन् । नित्स्वरः ॥

अग्ने॒ विश्वा॑नि॒ वार्या॒ वाजे॑षु सनिषामहे । त्वे दे॒वास॒ एरि॑रे ॥९॥

अग्ने॑ । विश्वा॑नि । वार्या॑ । वाजे॑षु । स॒नि॒षा॒म॒हे॒ । त्वे इति॑ । दे॒वासः॑ । आ । ई॒रि॒रे॒ ॥९॥

हे अग्ने वार्या वरणीयानि संभजनीयानि विश्वानि सर्वाणि धनानि वाजेषु युद्धेषु सनिषामहे । वयं संभजामहे । यतः कारणाद्देवासः पूर्वमस्माभिरिष्टा देवा अस्मदभिमतफलप्रदानाय त्वे त्वय्येरिरे । आ समंतादगमन् । त्वयि प्रविष्टा इत्यर्थः । सर्वथापि त्वत्सकाशात् फलं लभामहीति भावः ॥ वार्या । वृङ् संभक्तौ । ऋहलोर्ण्यदिति ण्यत् । शेश्छंदसि बहुलमिति शेर्लुक् । ईड्वंदेत्यादिनाद्युदात्तः । वाजेषु । वृषादित्वादाद्युदात्तः । सनिषामहे । वन षण संभक्तौ । धात्वादेः षः सः । लेटि सिब्बहुलमिति सिप् । सिप आर्धधातुकत्वादिडागमः । लेटोऽडाटावित्यडागमः । व्यत्ययेनात्मनेपदं । निघातः । त्वे । युष्मच्छब्दस्य सप्तम्यां त्वादेशः । सुपां सुलुगिति शे आदेशः । शे । पा० १ १ १३ । इति प्रगृह्यसंज्ञा । ईरिरे । ईर गतावित्यस्मात्परस्य लिटो झस्य इरेजादेशः । इजादेश्च गुरुमत इत्याम्न भवति मंत्रत्वात् । निघातः ॥ ॥१०॥

इंद्राग्नी इति नवर्चं द्वादशं सूक्तं वैश्वामित्रस्यैंद्राग्नं । तथा चानुक्रम्यते । इंद्राग्नी ऐंद्राग्नमिति । गायत्रत्वात् तुह्यादिपरिभाषयेदमपि सूक्तं गायत्रं । इंद्राग्नी देवता ॥ आभिप्लविकेष्वहःसु प्रातःसवनेऽच्छावाकशस्त्र आवापार्थमिदं सूक्तं । अभिप्लवषडहस्याहानीति खंडे सूत्रितं । इंद्राग्नी आ गतं ता हुवे ययोरिदं । आ० ७. ५. । इति ॥ अग्निष्टोमेऽच्छावाकशस्त्र इंद्राग्नी आ गतमिति स्तोत्रियस्तृचः । तस्यैवाच्छावाकस्याद्या शस्त्रयाज्या । इंद्राग्नी आ गतं सुतमिति याज्या । आ० ५ १० । इति सूत्रितत्वात् ॥ चतुर्विंशेऽहनि प्रातःसवनेऽच्छावाकशस्त्र इंद्राग्नी आ गतं सुतमिति पञ्चस्तोत्रियः । इंद्राग्नी आ गतमिंद्रे अग्ना नमो बृहत् । आ० ७. २. । इति सूत्रितं ॥ अग्निष्टोमेऽच्छावाकशस्त्रे तोशा वृत्रहणा हुव इत्याद्यास्तिस्रः । सूत्रितं च । तोशा वृत्रहणा हुव इत्याद्यास्तिस्रः । आ० ५. १० । इति ॥ अग्निष्टोमेऽच्छावाकशस्त्र इंद्राग्नी अपसस्परीत्यनुरूपः । सूत्रितं च । इंद्राग्नी आ गतं सुतमिंद्राग्नी अपसस्परि । आ० ५ १० । इति ॥

इंद्रा॑ग्नी॒ आ ग॑तं सु॒तं गी॒र्भिर्नभो॒ वरे॑ण्यं । अ॒स्य पा॑तं धि॒येषि॒ता ॥१॥

इंद्रा॑ग्नी॒ इति॑ । आ । ग॒तं॒ । सु॒तं । गीः॒ऽभिः । नभः॑ । वरे॑ण्यं । अ॒स्य । पा॒तं॒ । धि॒या । इ॒षि॒ता ॥१॥

इंद्रश्चाग्निश्चेंद्राग्नी हे इंद्राग्नी देवौ सुतमभिषवादिसंस्कारैः संस्कृतमत एव वरेण्यं वरणीयं संभजनीयमिमं सोमं प्रति गीर्भिरस्मदीयाभिः स्तुतिरूपाभिर्वाग्भिराहूतौ संतौ नभो नभसः स्वर्गस्थानादागतं । आगच्छतं ।

आगत्य च धियास्माभिः क्रियमाणे कर्मणीषिता प्रेरितौ युवामस्य पात। इमं सोमं पिबत। यद्वा धियास्मदीयया बुद्ध्येषितौ प्राप्तावस्मत्कृतया प्रेरितौ युवामिमं सोमं पिबतं ॥ इंद्राग्नी। इंद्रश्चाग्निश्च द्वंद्वे घि। पा० २. २. ३२.। इत्यग्निशब्दस्य पूर्वनिपाते प्राप्ते अजाद्यदंतं। पा० २. २. ३३। इतींद्रशब्दस्य पूर्वनिपातः। पादादित्वान्निघातप्रतिषेधः। पाष्ठिकस्वरः। गत। गम्लृ सृप्लृ गतौ। बहुलं छंदसीति शपो लुकि मत्यनुदात्तोपदेशेत्यादिना मकारलोपः। निघातः। वरेण्यं। वृङ् संभक्तौ। वृङ एण्यः। वृषादित्वादाद्युदात्तः। पात। पा पाने। सर्वे विधयश्छंदसि विकल्प्यंत इति न पिबादेशः। इषिता। इष गताविस्यस्मादिषेर्निष्ठायां तीषसहेतीडागमः। आगमा अनुदात्ता इतीटोऽनुदात्तत्वात् कृत्स्वरः शिष्यते ॥

इंद्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः। अया पातमिमं सुतं ॥ २ ॥

इंद्राग्नी इति। जरितुः। सचा। यज्ञः। जिगाति। चेतनः। अया। पातं। इमं। सुतं ॥ २ ॥

हे इंद्राग्नी जरितुः स्तोतुः सचा स्वर्गादिलक्षणफलप्राप्तौ सहायभूतो यज्ञो ज्योतिष्टोमादियज्ञसाधनभूतश्चेतन इंद्रियाणां चेतयिताप्यायनकारी सन् असौ सोमो जिगाति। युवामभिगच्छति। अयास्मदीयया स्तुतिलक्षणयानया वाचाहूतौ सतौ सुतमभिषवादिसंस्कारोपेतमिमं सोमं पात। पिबत ॥ जिगाति। गा स्तुतावित्ययं धातुरत्र गमने वर्तते। छंदसि जुहोत्यादिः। बहुलं छंदसीत्यभ्यासस्येत्वं। निघातः। चेतनः। चिती संज्ञाने। कर्तरि बहुलवचनाल्ल्युट्। लितीत्याद्युदात्तत्वं। अया। इदंशब्दस्य तृतीयायाः सुपां सुलुगिति याजादेशः। अनादेशप्राप्तौ हलि लोपः। पात। पा पाने। निघातः ॥

इंद्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे। ता सोमस्येह तृंपतां ॥ ३ ॥

इंद्रं। अग्निं। कविऽछदा। यज्ञस्य। जूत्या। वृणे। ता। सोमस्य। इह। तृंपतां ॥ ३ ॥

अस्य यज्ञस्य साधनभूतस्य सोमस्य जूत्या। जूतिः प्रेरणं। सोमस्तावद्यजमानं प्रेरयति। साधनमुपलभ्य तत्साध्यकर्ता यजमानः प्रवर्तत इति हि तस्य प्रेरकत्वं। तया प्रेरणरूपया जूत्या प्रेरितोऽहं कविच्छदा कवीनां स्तोतॄणामुचितफलप्रदानेनोपच्छंदकाविंद्रमग्निं च युवां वृणे। सोमपानार्थमिह कर्मण्यागच्छतमिति संभजे। ता आगतौ च ताविंद्राग्नी इह कर्मणि सोमस्य सोमपानेन तृपतां। तृप्यतां ॥ इंद्रं। इदि परमैश्वर्ये इत्यस्मादृज्रेंद्राग्रेति रन्प्रत्ययांतत्वेन निपातनादाद्युदात्तत्वं। कविच्छदा। छदि अपवारणे। अस्माण्णिच्। सुपां सुलुगिति सुपो डादेशः। कृदुत्तरपदप्रकृतिस्वरत्वं। जूत्या। जु इति सौत्रो धातुः। अस्मादुदात्त इत्यनुवृत्तौ ऊतियूतिजूतीत्यादिना निपातनादंतोदात्तत्वं। उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं। वृणे। वृङ् संभक्तौ। श्नाप्रत्ययः। टित आत्मनेपदानामिति टेरेत्वं। निघातः। ता। सुपां सुलुगिति डादेशः। सोमस्य। षुञ् अभिषवे। अस्मादर्तिस्तुसुहुसृधृक्षीत्यादिना मन्प्रत्ययः। नित्स्वरः। तृंपतां। तृप प्रीणने। लोटि मुचादित्वान्नुमागमः। निघातः ॥

तोशा वृत्रहणा हुवे सजित्वानापराजिता। इंद्राग्नी वाजसातमा ॥ ४ ॥

तोशा। वृत्रऽहना। हुवे। सऽजित्वाना। अपराऽजिता। इंद्राग्नी इति। वाजऽसातमा ॥ ४ ॥

तोशा शत्रूणां बाधकौ वृत्रहणा वृत्रस्य पापस्य हंतारौ सजित्वाना समानं जेतारौ परस्परापेक्षया जयशीलावपराजिता केनाप्यतिरस्कृतौ वाजसातमावन्नस्यातिशयेन दाताराविंद्राग्नी युवां हुवे। इह कर्मणि सोमपानार्थमहमाह्वयामि ॥ वृत्रहणा। हन हिंसागत्योः। ब्रह्मभ्रूणवृत्रेषु क्विबिति क्विप्। एकाजुत्तरपदे णः। पा० ८. ४. १२। इति णत्वं। कृदुत्तरपदप्रकृतिस्वरत्वं। हुवे। ह्वयतेर्बहुलं छंदसीति लुकि सति ह्वः संप्रसारणमित्यनुवृत्तौ बहुलं छंदसीति संप्रसारणं। उवङादेशः। व्यत्ययेनात्मनेपदं। निघातः। सजित्वाना। जि जये। शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः। उ० ४. ११३। इति क्वनिप्। कित्त्वाद्गुणाभावः। पित्त्वात्तुगागमः। समानस्य छंदस्यमूर्धेति समानस्य सभावः। कृदुत्तरपदप्रकृतिस्वरत्वं। अपराजिता। नञ्समासे तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरत्वं। इंद्राग्नी। देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वे प्राप्ते नोत्तरपदेऽनुदात्तादाविति प्रतिषेधात्समासस्वरः। वाज

सातमा। षणु दाने। जनसनखनक्रमगम इति विट्। विड्वनोरनुनासिकस्यादित्याकारः। अतिशायने तमबिष्ठनाविति तमप्। कृदुत्तरपदप्रकृतिस्वरत्वं॥

प्र वा॑मर्चन्त्यु॒क्थिनो॑ नीथा॒विदो॑ जरि॒तारः॑। इंद्रा॑ग्नी॒ इष॒ आ वृ॑णे ॥५॥

प्र। वां॒। अ॒र्चं॒ति॒। उ॒क्थिनः॑। नी॒थ॒ऽविदः॑। ज॒रि॒तारः॑। इंद्रा॑ग्नी॒ इति॑। इषः॑। आ। वृ॒णे॒ ॥५॥

हे इंद्राग्नी उक्थिनः। उक्थं शस्त्रं। तद्वंतः शंसिनो होत्रादयो वां युवां प्रार्चंति। इह कर्मणि स्तुतिरूपाभिर्वाग्भिः पूजयंति। तथा नीथाविदः स्तोत्राभिज्ञाः सामगानकुशला जरितारः स्तोतार उद्गात्रादयोऽभिलषितफलावाप्तये युवामर्चंति। अहमपीषेऽन्नस्य लाभार्थमिंद्राग्नी युवामा वृणे। सर्वतः संभजे। पूजयामीत्यर्थः॥ वां। युष्मच्छब्दस्य द्वितीयायां पदात्परत्वाद्युष्मदस्मदोः षष्ठीचतुर्थीद्वितीया इत्यादिना वामित्यादेशोऽनुदात्तश्च। अर्चंति। अर्च पूजायां। निघातः। उक्थिनः। वच परिभाषणे। पातॄतुदिवचिरिचिसिचिभ्यस्थक्। वचिस्वपीत्यादिना संप्रसारणं। उक्थं शस्त्रं। उक्थं येषां ते। अत इनिठनाविति इनिः। यस्येति लोपः। प्रत्ययस्वरः। नीथाविदः। णीञ् प्रापणे। हनिकुषिनीरमीत्यादिना क्थन्। कित्त्वाद्गुणाभावः। विद ज्ञाने। क्विप् चेति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वं। इंद्राग्नी। आमंत्रितत्वादाद्युदात्तत्वं। वृणे। वृङ् संभक्तौ। निघातः॥ ॥११॥

इं॒द्रा॒ग्नी न॑व॒तिं पुरो॑ दा॒सप॑त्नीरधूनुतं। सा॒कमेके॑न॒ कर्म॑णा ॥६॥

इंद्रा॑ग्नी॒ इति॑। न॒व॒तिं। पुरः॑। दा॒सऽप॑त्नीः। अ॒धू॒नु॒तं॒। सा॒कं। एके॑न। कर्म॑णा ॥६॥

हे इंद्राग्नी दासपत्नीः। दासयंत्युपक्षपयंतीति दासा उपक्षपयितारः शत्रवः। ते पतयः पालका यासां ता दासपत्नीः। नवतिं नवतिसंख्याकाः पुर एवंविधाः शत्रूणां पुरीरेकेन कर्मणैकेनैवोद्योगेन युवां साकं सह युगपत् अधूनुतं। अकंपयतं। ताविंद्राग्नी आह्वयामीति शेषः॥ नवतिं। नवानां दशतां नवभावः तिश्च प्रत्ययः। प्रत्ययस्वरेणांतोदात्तः। दासपत्नीः। दसु उपक्षये। दासयतीति दासः। पचाद्यच्। चित्त्वादंतोदात्तः। ते पतयो यासां नित्यं सपत्न्यादिषु दासाद्य। पा० ४. १. ३५. १.। इत्युक्तत्वाद्विभाषा सपूर्वस्येति ङीप्। इकारस्य नकारः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। अधूनुतं। धूञ् कंपने। लङि स्वादिभ्यः श्नुः। निघातः। एकेन। इण् गतौ। इणभीकापाशल्यतिमर्चिभ्यः कन्निति कन्। नित्त्वादाद्युदात्तः॥

इं॒द्रा॒ग्नी अप॑स॒स्पर्युप॒ प्र यं॑ति धी॒तयः॑। ऋ॒तस्य॑ प॒थ्या॒३॒॑ अनु॑ ॥७॥

इंद्रा॑ग्नी॒ इति॑। अप॑सः। परि॑। उप॑। प्र। यं॒ति॒। धी॒तयः॑। ऋ॒तस्य॑। प॒थ्याः॑। अनु॑ ॥७॥

हे इंद्राग्नी धीतयः सोमस्य धातारः पातारो होत्रादय ऋतस्य कर्मफलस्य पथ्याः पथो मार्गाननु लक्षीकृत्यापसोऽस्माभिः क्रियमाणस्य कर्मणः परि सर्वत उप प्र यंति। समीपे प्रकर्षेण वर्तंते। अतः सोमपानार्थं युवामागच्छतमिति भावः। यद्वा। धीतयः स्तुतय ऋतस्य यज्ञस्य मार्गान् लक्षीकृत्य कर्मणः परितः प्रवर्तंते। अतः स्तोतव्यतया युवामागतमिति॥ यंति। इण् गतौ। यणादेशः। निघातः। धीतयः। धेट् पान इत्यस्मात्कर्तरि क्तिच्क्तौ च संज्ञायामिति क्तिच्। घुमास्थेतीत्वं। चित्त्वादंतोदात्तः॥

इं॒द्रा॒ग्नी त॑वि॒षाणि॑ वां स॒धस्था॑नि॒ प्रयां॑सि च। यु॒वोर॒प्तूर्यं॑ हि॒तं ॥८॥

इंद्रा॑ग्नी॒ इति॑। त॒वि॒षाणि॑। वां॒। स॒धऽस्था॑नि। प्रयां॑सि। च॒। यु॒वोः। अ॒प्ऽतूर्यं॑। हि॒तं ॥८॥

हे इंद्राग्नी वां युवयोस्तविषाणि बलानि प्रयांस्यन्नानि च सधस्थानि परस्परमवियुज्य वर्तंते। तथाप्तूर्यं वृष्टिद्वारा प्रेरकत्वं युवोर्युवयोरेव हितं निहितं वर्तते। तस्मात्सोमपानप्रभृतिषु सर्वकर्मस्विंद्राग्न्योः सहैव वर्तमानत्वमिति भावः॥ वां। षष्ठीद्विवचने वामित्यादेशः। सधस्थानि। ष्ठा गतिनिवृत्तौ। आतोऽनुपसर्गे कः। सध मादस्थयोश्छंदसीति सहस्य सधादेशः।

इंद्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यं ॥९॥

इंद्राग्नी इति । रोचना । दिवः । परि । वाजेषु । भूषथः । तत् । वां । चेति । प्र । वीर्यं ॥९॥

हे इंद्राग्नी दिवो रोचना स्वर्गस्य रोचकौ प्रकाशकौ युवां वाजेषु संग्रामेषु परि भूषथः । परितः सर्वतोऽलंकृतौ भवथः । शत्रून्पराजित्य सर्वतो विजयमानौ वर्तेथे । वां युवयोर्वीर्यं सामर्थ्यमेव तत्तादृशं संग्रामविजयं प्र चेति । प्रकर्षेण ज्ञापयति । यद्वा युवां वाजेषु संग्रामेषु परिभूषथः । शत्रून्परिभवथः । शेषं पूर्ववत् ॥ रोचना । रुच दीप्तावित्यस्य अनुदात्तेतश्च हलादेरिति युच् । चित्त्वादंतोदात्तः । भूषथः । भूष भूषणे । निघातः । चेति । चिती संज्ञाने । अयमंतर्भावितण्यर्थः । बहुलं छंदसीति शपो लुक् । तकारलोपश्छांदसः ॥ ॥१२॥ ॥१॥

द्वितीयेऽनुवाके सप्तदश सूक्तानि । तत्र प्र वो देवायेति सप्तर्चमाद्यं सूक्तं वैश्वामित्रऋषभस्यार्षमाग्नेयमानुष्टुभं । अत्रानुक्रमणिका । प्र वः सप्त ऋषभस्त्वानुष्टुभमिति । विश्वामित्रपुत्र ऋषभ ऋषिः । सङ्गादिपरिभाषयाग्निर्देवता ॥ अग्निष्टोम इदं सूक्तमाज्यशस्त्रं । पराङुध्वर्यावावृत्त इति खंडे सूत्रितं । प्र वो देवायेत्याज्यमुपसंतनुयात् । आ० ५. ९. । इति ॥ इदमेव सूक्तं प्रातरनुवाक आश्विनशस्त्रे च विनियुक्तं । सूत्रं च । प्र वो देवायाग्नये कदा त इति पंच । आ० ४. १३ । इति ॥ अभ्युदयेष्टौ स यंतेत्यग्नेः प्रदातुर्याज्या । सूत्रितं च । स यंता विप्र एषां दीर्घस्ते अस्त्वंकुशः । आ० ३. १३. । इति ॥

प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै । गमद्देवेभिरा स नो यजिष्ठो बर्हिरा सदत् ॥१॥

प्र । वः । देवाय । अग्नये । बर्हिष्ठं । अर्च । अस्मै । गमत् । देवेभिः । आ । सः । नः ।
यजिष्ठः । बर्हिः । आ । सदत् ॥१॥

यजमानो होत्रादीन्प्रति ब्रूते । हे होत्रादयो वो युष्मत्संबंधिने देवाय द्योतमानायास्मै अस्मिन्कर्मणि स्तुत्यायाग्नये बर्हिष्ठं वृद्धतमं प्रभूतमिदं स्तुतिरूपं स्तोत्रशस्त्रादि वोकथ्यजातं प्रार्च । उच्चारयत । एवं स्तुतः सोऽग्निर्देवेभिर्यष्टव्यैर्देवैः सहितः सन् नोऽस्मान्प्रति आगमत । आगच्छतु । आगत्य च यजिष्ठो यष्टृतमः सोऽग्निर्बर्हिरस्माभिर्वेद्यां स्तीर्णं बर्हिष्यासदत । आसीदतु । उपविशतु ॥ बर्हिष्ठं । बर्हितृशब्दात्तुश्छंदसीत्यति शायन इष्ठन् । अर्च । अर्च पूजायां । भौवादिकः । बहुवचनस्यैकवचनं । निघातः । गमत् । गमॢ गतौ । अस्य छंदसि लुङ्लङ्लिट इति लोडर्थे लुङ् । लृदित्त्वात् च्लेरङ् । नित्यं ङित इतीकारलोपः । पादादित्वान्न निघातः । यजिष्ठः । यष्टृशब्दात्तुश्छंदसीतीष्ठन् । तुरिष्ठेमेयःस्विति तृचो लोपः । नित्स्वरः । सदत् । पूर्ववल्लोडर्थे लुङ् । षद्लृ विशरणगत्यवसादनेष्वित्यस्य लृदित्त्वादङ् । निघातः ॥

ऋतावा यस्य रोदसी दक्षं सचंत ऊतयः । हविष्मंतस्तमीळते तं सनिष्यंतोऽवसे ॥२॥

ऋतऽवा । यस्य । रोदसी इति । दक्षं । सचंते । ऊतयः । हविष्मंतः । तं । ईळते ।
तं । सनिष्यंतः । अवसे ॥२॥

यस्य पूर्वमंत्रे प्रतिपादितस्याग्ने रोदसी इमे द्यावापृथिव्यौ वशे भवतः । अग्नेः प्रकाशकत्वेन तदधीनप्रकाशके भवत इत्यर्थः । किंच ऊतयो यजमानस्य फलप्रदानेन रक्षितारो देवा दक्षं यस्याग्नेर्बलं सचंत भवंते । सचंते सेवंते । नि० १. २३. । इति यास्कः । अग्नेर्यजमानदत्तहविषा प्रदातृत्वेन तदधीना इत्यर्थः । एवंभूतः सोऽग्निर्ऋतावा सत्यकर्मा । सत्यसंकल्प इत्यर्थः । किंच हविष्मतः संभृतहविष्का यजमाना हविर्वहनार्थं तमेवाग्निमीळते । स्तुतिरूपाभिर्वाग्भिः पूजयंति । किंच सनिष्यंतो धनादिलाभमिच्छंतस्तमवसे रक्षणाय तमेवाग्निमाश्रयंते ॥ ऋतावा । ऋतशब्दात्तदस्यास्तीति छंदसीवनिपौ वक्तव्याविति वनिप् । अन्येषामपि दृश्यत इति दीर्घः । वनिपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः । सचंत । सच समवाये । व्यत्ययेनात्मनेपदं । यद्वृत्तयोगादनिघातः । सनिष्यतः । सनिर्लाभः । तमिच्छतः । सुप आत्मनः क्यच् । सर्वप्रातिपदिकेभ्यो लालसायां सुगस्वक्तव्य इति क्यचि परतः सुगागमः । क्यचः स्वरः ॥

स यंता विप्र एषां स यज्ञानामथा हि षः ।
अग्निं तं वो दुवस्यत दाता यो वनिता मघं ॥३॥
सः । यंता । विप्रः । एषां । सः । यज्ञानां । अथ । हि । सः ।
अग्निं । तं । वः । दुवस्यत । दाता । यः । वनिता । मघं ॥३॥

विप्रो मेधावी कर्माभिज्ञः सोऽग्निरेषां कालापराधेन हविर्निर्वापं कृतवतां यजमानानां यथोक्तकर्मप्रदर्शनेन तत्र प्रवर्तकः । अथ किंच यज्ञानां ज्योतिष्टोमादीनां सोऽग्निर्नियंता फलप्रदानेन नियामकः । हि प्रसिद्धौ । अत एव सर्वस्य नियंता खलु । किंच सोऽग्निर्दाता ज्योतिष्टोमादिकर्मफलदाता मघं महनीयं धनं । मघं रेक्ण इति तन्नामसु पाठात । तद्धनं वनिता प्रयच्छंश्च भवति । वो युष्मत्संबंधिनं तादृशमग्निं हे ऋत्विजो यूयं दुवस्यत । आहुतिप्रदानेन परिचरत । दुवस्यतिः परिचरणकर्मा नमस्यति दुवस्यतीति तन्नामसु पाठात ॥ यंता । यम उपरमे इत्यस्य तृचि रूपं । ऋदुशनसित्यादिना अनङादेशः । चित्स्वरः । अथ । निपातस्य चेति दीर्घः । दुवस्यत । दुवः परिचरणं । तदिच्छतः । सुपः क्यच । तदंतस्य धातोर्लोटि रूपं । दाता । डुदाञ् दाने । ताच्छीलिकस्तृन । नित्त्वादाद्युदात्तः ॥

स नः शर्माणि वीतयेऽग्निर्यच्छतु शंतमा ।
यतो नः प्रुष्णवद्वसु दिवि क्षितिभ्यो अप्स्वा ॥४॥
सः । नः । शर्माणि । वीतये । अग्निः । यच्छतु । शंऽतमा ।
यतः । नः । प्रुष्णवत् । वसु । दिवि । क्षितिऽभ्यः । अपऽसु । आ ॥४॥

सोऽग्निर्नो हविष्प्रदातृभ्योऽस्मभ्यं शंतमा पशुपुत्रादिसमृद्ध्यातिशयेन सुखकराणि । शर्मशब्दो गृहवाची छाया शर्म वर्मेति तन्नामसु पाठात । तथाविधानि गृहाणि वीतये संभजनायाग्निहोत्रादिकर्मप्राप्त्यर्थं यच्छतु । ददातु । यतो यस्मादग्नेः सकाशात प्रुष्णवत्समृद्धिमद्दानभोगादिना व्ययं सत्यप्यतिशयेन वर्धमानं दिवि द्युलोके क्षितिभ्यो भूलोकादप्स्वंतरिक्षे च समुत्पन्नं वसु तत्तल्लोके असाधारण्येन वर्तमानं धनमा समंतादुपनमति । यतोऽग्नेः प्रसादात त्रिषु लोकेषु विद्यमानं धनमस्मानागच्छति सोऽग्निरिति पूर्वेणान्वयः ॥ वीतये । वी गतिकांत्यादिषु । मंत्रे वृषेषपचेत्यादिना क्तिन । उदात्तत्वेन निपातनादाद्युदात्तः । यच्छतु । यम उपरमे । इषुगमियमां छ इति मकारस्य छः । प्रुष्णवत । प्रुष स्नेहनसेचनपूरणेषु । अस्मादौणादिको नक्प्रत्ययः । तदस्यास्तीति मतुप । तस्योदात्तताभावश्छांदसः ॥

दीदिवांसमपूर्व्यं वस्वीभिरस्य धीतिभिः ।
ऋक्वाणो अग्निमिंधते होतारं विश्पतिं विशां ॥५॥
दीदिऽवांसं । अपूर्व्यं । वस्वीभिः । अस्य । धीतिऽभिः ।
ऋक्वाणः । अग्निं । इंधते । होतारं । विश्पतिं । विशां ॥५॥

ऋक्वाणः स्तुतिं कुर्वाणाः शस्त्रिणो होत्रादयो दीदिवांसं दीप्यमानमपूर्व्यं तेजस्वितया प्रतिक्षणमभिनवं होतारं देवानामाह्वातारं विशां विश्पतिं प्रजानामतिशयेन पालयितारं तमग्निं वस्वीभिः प्रशस्ताभिरस्य धीतिभिरग्निविषयस्तुतिलक्षणाभिर्वाग्भिः । यद्वा वस्वीभिर्वसुमतीभिरस्य धीतिभिरेतदुद्देशेन क्रियमाणैः कर्मभिरिंधते । दीपयंति । स्तोत्रकरणहविष्प्रदानादिव्यापारेण समृद्धिं कुर्वंति ॥ दीदिवांसं । दिवु क्रीडादावित्यस्य क्वसौ रूपं । तुजादीनामित्यभ्यासस्य दीर्घः । लोपो व्योरिति लोपः । वस्वीभिः । वसुशब्दान्मत्वर्थीयेन ङीन । नित्स्वरः । धीतिभिः । धेट पाने । क्तिच्क्तौ च संज्ञायामिति क्तिच । कित्त्वाद् घुमास्थेतीत्वं । चित्स्वरः । ऋक्वाणः ।

ऋचशब्दान्मतुबर्थे वनिप्। अयस्मयादित्वाद्भसंज्ञात्वात्कुत्व। पदसंज्ञाभावाज्जश्त्वाभावः। दधते। जिदधी दीप्तौ। विसर्पति। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। विशा। सांवेकाच इति विभक्तिरुदात्तत्व॥

उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः। शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातमः॥६॥
उत। नः। ब्रह्मन्। अविषः। उक्थेषु। देवऽहूतमः। शं। नः। शोच। मरुत्ऽवृधः।
अग्ने। सहस्रऽसातमः॥६॥

उत अपि च हे अग्ने नो यज्ञकारिणोऽस्मान् ब्रह्मन् ब्रह्मण्यस्माभिः क्रियमाणे स्तोत्रेऽविषः। स्तोत्रविषयन्यूनातिरिक्तदोषो यथा न भवति तथा पालय। किंच देवहूतमो देवानामाह्वातृतमस्त्वमुक्थेष्वस्माभिः क्रियमाणेष्वाज्यप्रउगादिशस्त्रेष्वविषः। गोपाय। किंच मरुद्वृधो मरुद्भिर्वर्धमानः सहस्रसातमः सहस्रसंख्याकस्य धनस्यातिशयेन दाता त्वं नोऽस्माकं शं ऐहिकमामुष्मिकं च सुखं शोच। दीपय। वर्धयेत्यर्थः॥ अविषः। अव रक्षणादिष्वित्यस्माल्लेटि सिब्बहुलमिति सिप्। अस्यार्धधातुकत्वादिट्। इतश्च लोप इति सिप इकारलोपः। लेटोऽडाटावित्यडागमः। निघातः। उक्थेषु। वच परिभाषणे। अस्मात्कर्मणि पातॄतुदिवचिरिचीत्यादिना थक्। किच्वात्संप्रसारणं। प्रत्ययस्वरः। देवहूतमः। ह्वयतेः क्विप्। बहुलं छंदसीति संप्रसारणपररूपत्वे। हल इति दीर्घः। कृदुत्तरपदप्रकृतिस्वरत्व। शोच। शुच दीप्तौ। अयमतर्भावितण्यर्थः। निघातः। मरुद्वृधः। वृधु वर्धने। इगुपधलक्षणः कः। मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्व। सहस्रसातमः। षणु दाने। अस्य जनसनखनक्रमगमो विडिति विट्। विड्वनोरनुनासिकस्यात्वाकारः। कृदुत्तरपदप्रकृतिस्वरः॥

नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु। द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितं॥७॥
नु। नः। रास्व। सहस्रऽवत्। तोकऽवत्। पुष्टिऽमत्। वसु। द्युऽमत्। अग्ने।
सुऽवीर्यं। वर्षिष्ठं। अनुपऽक्षितं॥७॥

अस्मिन्सूक्ते स्तूयमान हे अग्ने सहस्रवत्सहस्रसंख्योपेतं तोकवत्पुत्रपौत्रादिसहितं पुष्टिमत्पोषकृतं। अनेन शरीरस्य क्षीरादिद्वारा बलारोग्यप्रदं गवादिकमुपलक्ष्यते। द्युमत् दीप्तिमत्। अनेन रत्नकनकादिकं परिगृह्यते। सुवीर्यं शोभनसामर्थ्योपेतं तत्तत्कार्येषु व्यवहारयोग्यं वर्षिष्ठमतिशयेन वृद्धं प्रभूतमत एवानुपक्षितं व्ययं क्रियमाणेऽप्यनुपक्षीणं। एवंभूतं वसु रत्नकनकपश्वादिलक्षणं धनं नोऽस्मभ्यं नु क्षिप्रमविलंबेन रास्व। देहि॥ नू नः। ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणामिति दीर्घः। रास्व। रा दाने। अस्य लोटि रूपं। व्यत्ययेनात्मनेपदं। अदादित्वाच्छपो लुक्। निघातः। सहस्रवत्। मादुपधायाश्च इति मतुपो वत्वं। कर्दमादित्वान्मध्योदात्तः सहस्रशब्दः। पुष्टिमत्। पुष पुष्टौ। अस्मात् क्तिच्। प्रत्ययस्वरेणान्तोदात्तः। ह्रस्वनुड्भ्यामिति मतुप उदात्तत्वं। वर्षिष्ठं। प्रियस्थिरेत्यादिना वृद्धस्य वर्षि इत्यादेशः। नित्स्वरः। अनुपक्षितं। क्षि क्षये इत्यस्य दीर्घाभावान्निष्ठानत्वं न भवति। तत्पुरुषत्वादव्ययपूर्वपदप्रकृतिस्वरः॥ ॥१३॥

आ होतेति सप्तर्चं द्वितीयं सूक्तं। आ होतेत्यनुक्रमणिका। ऋषभस्त्वित्ति तुशब्दप्रयोगादस्यापि सूक्तस्य ऋषभ ऋषिः। अनुक्तत्वात् त्रिष्टुप्। अग्निर्देवता॥ एतदादीनि दश सूक्तानि तृतीयाष्टमवर्जितानि प्रातरनुवाक आश्विनशस्त्रे त्रैष्टुभे छंदसि विनियुक्तानि। अथैतस्या इति खंडे सूत्रितं। आ होतेति दशाना तृतीयाष्टमे उद्धरेदिति त्रैष्टुभं। आ° ४ १३। इति॥

आ होता मंद्रो विदथान्यस्थात्सत्यो यज्वा कवितमः स वेधाः।
विद्युद्रथः सहसस्पुत्रो अग्निः शोचिष्केशः पृथिव्यां पाजो अश्रेत्॥१॥
आ। होता। मंद्रः। विदथानि। अस्थात्। सत्यः। यज्वा। कविऽतमः। सः। वेधाः।
विद्युत्ऽरथः। सहसः। पुत्रः। अग्निः। शोचिःऽकेशः। पृथिव्यां। पाजः। अश्रेत्॥१॥

ऋषभो ऽग्निं स्तौति। होता देवानामाह्वाता मंद्रः स्तोतॄन्मादयिता सत्यः सत्यकर्मा कवितमो ऽतिशयेन मेधावी यज्वा देवानां यष्टा वेधाः सर्वस्य जगतो विधाता। एवंविधमहिमोपेतः सोऽग्निर्विदथान्यस्माभिः क्रियमाणान्यज्ञानास्थात्। आतिष्ठति। प्राप्नोति। किंच विद्युद्रथो विद्योतमानयानोपेतः शोचिष्केशः। शोचींषि ज्वालाः केशा यस्य सः। ज्वालामयकेशोपेतः सहसस्पुत्रो बलस्य सूनुरत्वंभूतः सोऽग्निः पृथिव्यां विस्तीर्णेऽन्तरिक्षे पाजस्त्यजः स्वकीयां प्रभामश्रेत्। श्रयति। प्रापयति। यद्वा पृथिव्यां भूमौ वर्तमानः पाजो बलं सेवते॥ मंद्रः। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। अस्मात्स्फायितंचीत्यादिना रक्। इदित्त्वान्नुम्। अस्थात्। ष्ठा गतिनिवृत्तौ। छंदसि लुङ्लङ्लिट इति वर्तमाने लुङ्। गातिस्थेति सिचो लोपः। निघातः। यज्वा। यज देवपूजासंगतिकरणदानेषु। सुयजोर्ङ्वनिबिति ङ्वनिप्। तस्य पित्त्वादनुदात्तत्वे धातुस्वरः। कवितमः। कु शब्दे। कौति कूयते वा। अच इरिति कर्तरि भावे वा इप्रत्ययः। तमपः पित्त्वादनुदात्तत्वे प्रत्ययस्वरः। शोचिष्केशः। शुच दीप्तौ। अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिरितीसिः। प्रत्ययस्वरेणान्तोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। अश्रेत्। श्रिञ् सेवायामित्यस्य छंदसि वर्तमाने लङ्। बहुलं छंदसीति शपो लुक्। सार्वधातुकगुणः। निघातः॥

अयामि ते नमउक्तिं जुषस्व ऋतावस्तुभ्यं चेतते सहस्वः।
विद्वाँ आ वक्षि विदुषो नि षत्सि मध्य आ बर्हिरूतये यजत्र॥२॥
अयामि। ते। नमःऽउक्तिं। जुषस्व। ऋतऽवः। तुभ्यं। चेतते। सहस्वः।
विद्वान्। आ। वक्षि। विदुषः। नि। सत्सि। मध्ये। आ। बर्हिः। ऊतये। यजत्र॥२॥

ऋतावः। ऋतं सत्यभूतो यज्ञः। तद्वन् हे अग्ने ते त्वद्विषयां नमउक्तिं नमस्कारवाक्यमहमयामि। प्रेरयामि। उच्चारयामि। हे सहस्वः। सहो बलं। तद्वन्नग्ने चेतते चेतयित्रे कर्मणः प्रज्ञापकाय तुभ्यं नमउक्तिः क्रियते। तां जुषस्व। अस्माभिः क्रियमाणां नमस्कारोक्तिं सेवस्व। किंच विद्वानानुपूर्व्येण देवाह्वानाभिज्ञो विदुषः कर्माभिज्ञानावक्षि। आवह। किंच यजत्र यष्टव्य हे अग्न ऊतयेऽस्माकं रक्षणाय मध्ये बर्हिः स्तीर्णस्य बर्हिषो मध्य आ निषत्सि। आ समन्तान्निषीद॥ अयामि। इण् गतौ। भौवादिकः। पादादित्वादनिघातः। जुषस्व। जुषी प्रीतिसेवनयोः। तुदादिः। लोटि रूपं। निघातः। चेतते। चिती संज्ञाने। शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे ततोऽन्तोदात्तताभावाच्छतुरनुम इति विभक्तेरुदात्तताभावः। धातुस्वरः। सहस्वः। सहोऽस्त्यस्येति मतुप्। सकारस्य तसौ मत्वर्थे इति भसंज्ञकत्वाद्रुर्न भवति। मादुपधाया इति मतुपो वत्वं। उगिदचामिति नुम्। हल्ङ्यादिलोपे नकारस्य मतुवसो रुरिति रुत्वं। आमंत्रितनिघातः। विदुषः। विद ज्ञान इत्येतस्मादुत्तरस्य शतुर्विदेः शतुर्वसुरिति वस्वादेशः। भसंज्ञायां वसोः संप्रसारणं। प्रत्ययस्वरः। सत्सि। षद्लृ विशरणादिषु। लटि बहुलं छंदसीति शपो लुक्। शित्प्रत्ययपरत्वाभावात्सीदादेशाभावः। सदेरप्रतेरिति षत्वं। यजत्र। यज देवपूजादिषु। अमिनक्षियजीत्यादिनात्रन्प्रत्ययः। आमंत्रितनिघातः॥

द्रवतां त उषसा वाजयंती अग्ने वातस्य पथ्याभिरच्छ।
यत्सीमंजंति पूर्व्यं हविर्भिरा वंधुरेव तस्थतुर्दुरोणे॥३॥
द्रवतां। ते। उषसा। वाजयंती इति। अग्ने। वातस्य। पथ्याभिः। अच्छ।
यत्। सीं। अंजंति। पूर्व्यं। हविःऽभिः। आ। वंधुराऽइव। तस्थतुः। दुरोणे॥३॥

हे अग्ने वाजयंती वाजमन्नं कुर्वाणे उषसा उषासानक्ते अहोरात्रौ ते त्वां द्रवतां। अभिगच्छतां। त्वमपि वातस्य वायोः पथ्याभिर्मार्गैरच्छ तावहोरात्रौ शीघ्रमभिगच्छ। यद्यस्मात्कारणादहोरात्राग्न्योः परस्पराभिगमनेनान्योन्यसंबधस्तस्मादहोरात्रयोः सायप्रातःकालयोः पूर्व्यं पुरातनं त्वामृत्विजो हविर्भिराज्यादिभिः सीं सर्वतोऽंजंति। सिंचंति। किंच वंधुरेव। यथा कूवरस्थाने परस्परसंसक्तिपादद्वयोपेतं तद्वत्संसक्तौ तावहोरात्रौ दुरोणेऽस्माकं गृहेऽग्निहोत्रादिकर्मसिद्ध्यर्थमावृत्य पुनःपुनरावर्तमानौ संतौ तस्थतुः। तिष्ठतां॥ द्रवतां। द्रु

गतावित्यस्य लोटि रूपं। पथ्याभिः। पथिषु साधव इत्यर्थे तत्र साधुः। पा० ४. ४ ९८.। इति यत्। नस्तद्धित इति टिलोपः। तित्स्वरित इति स्वरितः। तस्थतुः। तिष्ठतेर्लिट्युसि रूपं। निघातः॥

मित्रश्च तुभ्यं वरुणः सहस्वोऽग्ने विश्वे मरुतः सुम्नमर्चन्।
यच्छोचिषा सहसस्पुत्र तिष्ठा अभि क्षितीः प्रथयन्त्सूर्यो नॄन्॥४॥
मित्रः। च। तुभ्यं। वरुणः। सहस्वः। अग्ने। विश्वे। मरुतः। सुम्नं। अर्चन्।
यत्। शोचिषा। सहसः। पुत्र। तिष्ठाः। अभि। क्षितीः। प्रथयन्। सूर्यः। नॄन्॥४॥

सहस्वो बलवन् हे अग्ने मित्रश्च वरुणश्च मित्रावरुणौ विश्वे मरुतः सर्वे देवाश्च तुभ्यं त्वदर्थं सुम्नं स्तोत्रमर्चन्। वदंति। यद्वा सर्वे देवास्तुभ्यं त्वां सुम्नं सुखेनार्चन्। पूजयंति। यद्यस्मात्कारणात्सहसस्पुत्र हे अग्ने सूर्यः सुष्ठु अर्यः स्वामी यद्वा सर्वांतर्यामितया सुष्ठु प्रेरको यद्वा सूर्यः शोभनवीर्योऽभि क्षितीः। क्षितिशब्दो मनुष्यवाची विशः क्षितय इति तन्नामसु पाठात्। मनुष्यानभिलक्ष्य नॄन् मार्गप्रदर्शकत्वेन नेतॄन् आत्मनो रश्मीन् प्रथयन्सर्वतो विस्तारयंस्त्वं शोचिषा दीप्त्या समानः सन् तिष्ठाः। तिष्ठसि। तस्मादेते देवाः पूजयंतीति॥ अर्चन्। अर्च पूजायामित्यस्य लङि रूपं। अडभावश्छांदसः। तिष्ठाः। ष्ठा गतिनिवृत्तावित्यस्य लेटि रूपं। यद्योगादनिघातः। पाघ्रेत्यादिना तिष्ठादेशस्याद्युदात्तत्वेन निपातनादाद्युदात्तः। सूर्यः। राजसूयसूर्येति क्यबंतत्वेन निपातनात्सर्वार्थाः सिद्धा भवंति॥

वयं ते अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य।
यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने॥५॥
वयं। ते। अद्य। ररिम। हि। कामं। उत्तानऽहस्ताः। नमसा। उपऽसद्य।
यजिष्ठेन। मनसा। यक्षि। देवान्। अस्रेधता। मन्मना। विप्रः। अग्ने॥५॥

हे अग्ने उत्तानहस्ता हविःस्वीकरणादुत्तानपाणयो वयं कामं कमनीयं पुरोडाशादिहविस्ते तुभ्यमद्येदानीमस्मिन्कर्मणि ररिम। दद्मः। नमसा नमस्कारेणोपसद्य प्रसन्नो भूत्वा यजिष्ठेन यष्टृतमेन यागकारिता मनसांतःकरणेन देवान्यक्षि। यजनीयान्देवान्यज। पूजय। किंच विप्रो मेधावी कर्माभिज्ञस्त्वमस्रेधताक्षीणेन प्रभूतेन मन्मना मंतव्येन स्तोत्रेण देवान्पूजय॥ अद्य। सद्यः परुत्परार्यैषम इत्यादिना निपातितः। अंतोदात्तश्च। ररिम। रा दान इत्यस्य वर्तमाने लिटि परस्मैपदानां णलतुः। पा० ३ ४ ८२। इत्यादिना मसो मादेशः। क्रादिनियमादिडागमः। आतो लोप इटि चेत्याकारलोपः। हियोगादनिघातः। आगमा अनुदात्ता इतीटोऽनुदात्तत्वात्प्रत्ययस्वरः। उपसद्य। षद्लृ विशरणगत्यवसादनेषु। अस्य क्त्वा। समासेऽनञ्पूर्वे क्त्वो ल्यबिति ल्यप्। लित्स्वरः। यक्षि। यज देवपूजासंगतिकरणदानेषु। लोटि बहुलं छंदसीति शपो लुक्। षत्वकत्वे। सिपो ह्यादेशाभावश्छांदसः। अस्रेधता। स्रिधिः क्षयार्थः। तत्पुरुष इति नञ्स्वरः॥

त्वं हि पुत्र सहसो वि पूर्वीर्देवस्य यन्त्यूतयो वि वाजाः।
त्वं देहि सहस्रिणं रयिं नोऽद्रोघेण वचसा सत्यमग्ने॥६॥
त्वत्। हि। पुत्र। सहसः। वि। पूर्वीः। देवस्य। यंति। ऊतयः। वि। वाजाः।
त्वं। देहि। सहस्रिणं। रयिं। नः। अद्रोघेण। वचसा। सत्यं। अग्ने॥६॥

सहसः पुत्र बलस्य पुत्र हे अग्ने देवस्य देवनशीलस्य कर्मकरणप्रवृत्तस्य यजमानस्य त्वत् त्वत्तः सकाशात्पूर्वीः प्रभूता ऊतयो विघ्नपरिहारेण कर्मपरिपालनादिरूपा रक्षा वि यंति हि। विविधं गच्छंति खलु। तमिमं यजमानं प्राप्नुवंति। तथा वाजा अन्नानि वियंति। एनं यजमानं प्राप्नुवंति। किंच हे अग्ने त्वं सहस्रिणं

सहस्रसंख्याकं रयिं धनं नोऽस्मभ्यं देहि । तथाद्रोघेण द्रोहरहितेन पापशून्येन वचसा वाक्येन युक्तं सत्यं सत्यशीलं सन्मार्गे प्रवर्तमानं पुत्रं च देहि । प्रयच्छ ॥ त्वत् । युष्मच्छब्दस्य पंचम्येकवचने त्वादेशः । ङसेरेकवचनस्य च । पा॰ ७ १ ३२ । इत्यदादेशः । एकादेशस्वरः । पुत्र सहसः । परमपि छंदसीति पराङ्गवद्भावाद्द्वयोः सर्वानुदात्तत्वं । देहि । डुदाञ् दाने इत्यस्य लोटि घ्वसोरेद्धावभ्यासलोपश्च । निघातः । अद्रोघेण । द्रुह जिघांसायां । घञ् । द्रोघः । घकारश्छांदसः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं ॥

तुभ्यं दक्ष कविक्रतो यानीमा देव मर्तासो अध्वरे अकर्म ।

त्वं विश्वस्य सुरथस्य बोधि सर्वं तदग्ने अमृत स्वदेह ॥ ७ ॥

तुभ्यं । दक्ष । कविक्रतो इति कविऽक्रतो । यानि । इमा । देव । मर्तासः । अध्वरे । अकर्म ।

त्वं । विश्वस्य । सुऽरथस्य । बोधि । सर्वं । तत् । अग्ने । अमृत । स्वद । इह ॥ ७ ॥

दक्ष समृद्धतया सामर्थ्योपेत कविक्रतोऽतीन्द्रियविषयप्रज्ञोपेत सर्वज्ञ देव दीप्यमान हे अग्ने मर्तासो यजमाना वयं तुभ्यं त्वदर्थं यानीमा यानीमानि हवींष्यध्वरे यज्ञेऽकर्म । हविस्त्यागमकार्ष्म । त्वं च सुरथस्य शोभनयानोपेतस्य विश्वस्य सर्वस्य यजमानस्य बोधि । गोपायिता भवामीति बुध्यस्व । हे अमृत मरणधर्मरहिताग्न इहास्मिन्कर्मण्यस्माभिर्दत्तं तत्सर्वं हविः स्वद । आस्वादय ॥ अकर्म । डुकृञ् करणे इत्यस्य लङि छंदस्युभयथेति सम आर्धधातुकत्वेन ङित्त्वाभावाद्गुणः । यद्वृत्तयोगादनिघातः । बोधि । बुध अवगमने । छंदसि लुङ्लङ्लिट इति लोडर्थे लुङ् । तिङां तिङो भवंतीति सिपस्तादेशः । दीपजनबुधेत्यादिना कर्तरि चिण् । चिणो लुगिति तप्रत्ययस्य लोपः । अडभावश्छांदसः । स्वद । स्वद आस्वादने । अंतर्भावितण्यर्थः । लोटि रूपं । निघातः ॥ ॥ १४ ॥

वि पाजसा पृथुनेति सप्तर्चं तृतीयं सूक्तं कतगोत्रोत्पन्नोत्कीलस्यार्षं त्रैष्टुभमाग्नेयं । अत्रेयमनुक्रमणिका । वि पाजसा कात्य उत्कीलस्त्विति । कतगोत्रोत्पन्न उत्कीलो नाम ऋषिः ॥ प्रातरनुवाकाश्विनशस्त्रयोरग्ने होतेत्यादिसूक्तदशकं विनियुक्तं तत्रेदं च द्वितीयं सूक्तं ॥

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।

सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतौ ॥ १ ॥

वि । पाजसा । पृथुना । शोशुचानः । बाधस्व । द्विषः । रक्षसः । अमीवाः ।

सुऽशर्मणः । बृहतः । शर्मणि । स्यां । अग्नेः । अहं । सुऽहवस्य । प्रऽनीतौ ॥ १ ॥

उत्कीलः स्तौति । हे अग्ने पृथुना विस्तीर्णेन पाजसा तेजसा शोशुचानोऽत्यर्थं दीप्यमानस्त्वं द्विषः कर्मानुष्ठानविघ्नकारिणः शत्रून्वि बाधस्व । विशेषेण नाशय । तथामीवा रोगराहित्येन सामर्थ्योपेतानि रक्षसः । उभयत्र सुब्व्यत्ययः । तानि रक्षांसि बाधस्व । कर्मविघ्नकारीणि तान्यपनुदस्व । यद्वामीवा आभिमुख्येन गमनपरागमनपराः पिशाचिकाश्च बाधस्व । सुशर्मणः स्वर्गादिलक्षणशोभनसुखहेतोर्बृहतो महतः शत्रुविजयेन प्राप्तमहिम्नः सुहवस्य सुष्ठाह्वानोपेतस्याग्नेः शर्मण्यस्माकं सुखहेतौ प्रणीतावुत्तरवेद्यादिस्थानेषु प्रणयने । प्रकर्षेण नयनं तत्र तत्रानीय प्रक्षेपः । एवंभूते तव प्रणयनेऽहं स्यां । अग्निप्रणयनपूर्वकं क्रत्वनुष्ठानं भवेय ॥ पाजसा । पा रक्षणे । असुन्नित्यनुवृत्तौ पातेर्बले जुट् चेत्यसुन् । जुडागमः । नित्त्वादाद्युदात्तः । पृथुना । प्रथ प्रख्याने । उदित्यनुवृत्तौ प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्चेति कुप्रत्ययः । तत्संनियोगेन संप्रसारणं । प्रत्ययस्वरः । शोशुचानः । शुच दीप्तावित्यस्य यदंताद्यङ्लुकि गुणो यङ्लुकोरित्यभ्यासस्य गुणः । व्यत्ययेन शानच् । चर्करीतस्यादादिवद्भावाच्छपो लुक् । चित्त्वादंतोदात्तत्वं प्राप्तेऽभ्यस्तानामादिरित्याद्युदात्तत्वं । बाधस्व । बाधृ लोडने इत्यस्य लोटि रूपं । पादादित्वान्निघाताभावः । सुशर्मणः । शॄ हिंसायां । दृशं शृणातेर्यणादिको मनिन् । सोर्मनसी इत्युत्तरपदाद्युदात्तत्वं । स्यां । अस भुवीत्यस्य लिङि यासुट् परस्मैपदेषूदात्तो ङिच्चेत्यादिना यासुट् । लिङः सलोपोऽनंत्यस्येति सलोपः । यासुटो ङित्त्वात् श्नसोरल्लोपः । निघातः ॥

त्वं नो अस्या उषसो व्युष्टौ त्वं सूर उदिते बोधि गोपाः ।
जन्मेव नित्यं तनयं जुषस्व स्तोमं मे अग्ने तन्वा सुजात ॥२॥
त्वं । नः । अस्याः । उषसः । विऽउष्टौ । त्वं । सूरे । उत्ऽइते । बोधि । गोपाः ।
जन्मऽइव । नित्यं । तनयं । जुषस्व । स्तोमं । मे । अग्ने । तन्वा । सुऽजात ॥२॥

हे अग्ने त्वमस्या अद्य वर्तमानाया उषसो व्युष्टौ व्युच्छने प्रकाशने सूरे सूर्य उदिते च सति नोऽग्निहोत्रादिकर्मणि प्रवृत्तानामस्माकं गोपा गोपायिता भवामीति बोधि। बुध्यस्व। केचित्सूर्योदयात्प्रागग्निहोत्रं जुह्वति केचिदुदिते तस्मिञ्जुह्वति। तेषामुभयेषां पालयिता भवेत्यर्थः। तन्वा सुजात ज्वालापरिवृतेन शरीरेण सुष्ठु जात देदीप्यमान। अथवा तन्वा सुजात आत्मनैव सुजातः स्वयंभूरित्यर्थः। तादृशस्त्वं मे मदीयं स्तोमं त्रिवृत्पंचदशादिलक्षणं स्तोत्रं नित्यं जुषस्व। तत्र दृष्टांतः। जन्मेवेति। यथा जन्म जनकः पितारमं तनयं पुत्रं परिष्वंगादिभिः सेवते तद्वदस्माभिः क्रियमाणमिमं सेवस्व ॥ व्युष्टौ। उच्छी विवासे। तमो विवास्यतेऽनयेति करणे क्तिन्। व्रश्चादिना षत्वं। तादौ च निति कृत्यतावेति गतेः प्रकृतिस्वरत्वं। गोपाः। गुपू रक्षणे। गुपूधूपविच्छिपणिपनिभ्य इत्यायप्रत्ययः। तदंताद्धातोः क्विप्। अतो लोप इत्यकारलोपः। लोपो व्योरिति यलोपः। धातुस्वरः। जुषस्व। जुषी प्रीतिसेवनयोरित्यस्य लोटि रूपं। निघातः ॥

त्वं नृचक्षा वृषभानु पूर्वीः कृष्णास्वग्ने अरुषो वि भाहि ।
वसो नेषि च पर्षि चात्यंहः कृधी नो राय उशिजो यविष्ठ ॥३॥
त्वं । नृऽचक्षाः । वृषभ । अनु । पूर्वीः । कृष्णासु । अग्ने । अरुषः । वि । भाहि ।
वसो इति । नेषि । च । पर्षि । च । अति । अंहः । कृधि । नः । राये । उशिजः । यविष्ठ ॥३॥

वृषभ कामानां वर्षितर्हे अग्ने नृचक्षा नृणां मनुष्याणां शुभाशुभकर्मणोर्द्रष्टा कृष्णासु रात्रिष्वरुष आरोचमानस्त्वमनु अनुक्रमेण पूर्वीर्बह्वीर्ज्वाला वि भाहि। विशेषेण प्रकाशय। वसो सर्वस्य प्रकाशप्रदानेन स्वस्वस्थानेषु वासयितरग्ने त्वं नोऽस्मान्नेषि। कर्मानुरूपफलानि च प्रापय। अंहोऽस्माकं दारिद्र्यलक्षणं पापमतिपर्षि च। अतिपारय। निवारयेति यावत्। किंच यविष्ठ युवतम हे अग्ने नोऽस्मान्राये धनायोशिजः कामयमानान्कृधि। कुरु। अभिलषितफलप्रदानेन प्राप्तकामान्कुर्वित्यर्थः ॥ नृचक्षाः। चक्षिङ् व्यक्तायां वाचि। अयमत्र दर्शने वर्तते। असुन्नित्यनुवृत्तौ चक्षेर्बहुलं शिच्चेत्यसुन्। शित्त्वाभावात्ख्याञादेशाभावः। कृदुत्तरपदप्रकृतिस्वरः। वृषभ। वृषु सेचने। अभजित्यनुवृत्तौ ऋषिवृषिभ्यां किदित्यभच्। कित्त्वाद्गुणाभावः। अपादादित्वान्निघातः। पूर्वीः। पुरुशब्दस्य वोतो गुणवचनादिति ङीप्। आद्यस्योकारस्य दीर्घश्छांदसः। प्रत्ययस्वरेणांतोदात्तः। भाहि। भा दीप्तौ। अंतर्भावितण्यर्थः। लोटि रूपं। वसो। वस निवासे। उरित्यनुवृत्तौ शॄस्वृस्निहित्रप्यसिवसीत्यादिना उप्रत्ययः। पादादित्वान्न निघातः। पाष्ठिकमाद्युदात्तत्वं। नेषि। णीञ् प्रापणे। छंदसि लुङ्लङ्लिट इति लडर्थे लट्। बहुलं छंदसीति शपो लुक्। आमंत्रितं पूर्वमविद्यमानवदित्यामंत्रितस्याविद्यमानवत्त्वेन पादादित्वान्न निघातः। पर्षि। पॄ पालनपूरणयोः। चादिषु चेति न निघातः। कृधि। डुकृञ् करणे इत्यस्य लोटि सेर्ह्यपिच्चेति हिरादेशः। तस्य श्रुशृणुपॄकृवृभ्यश्छंदसीति धिरादेशः। बहुलं छंदसीत्युप्रत्ययस्य लुक्। पादादित्वान्न निघातः। राये। रा दाने। रातेर्डैरिति डैप्रत्ययः। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। उशिजः। वश कांतौ। वशेः किदिति इजिप्रत्ययः। कित्त्वात्संप्रसारणं। प्रत्ययस्वरः। यविष्ठ। युवशब्दादतिशायने इष्ठन्प्रत्ययः। स्थूलदूरयुवेत्यादिना यणादेः परस्य लोपः पूर्वस्य च गुणः। आमंत्रितत्वान्निघातः ॥

अषाळ्हो अग्ने वृषभो दिदीहि पुरो विश्वाः सौभगा संजिगीवान् ।
यज्ञस्य नेता प्रथमस्य पायोर्जातवेदो बृहतः सुप्रणीते ॥४॥

अपाळ्हः। अग्ने। वृषभः। दिदीहि। पुरः। विश्वाः। सौभगा। संऽजिगीवान्।
यज्ञस्य। नेता। प्रथमस्य। पायोः। जातऽवेदः। बृहतः। सुऽप्रनीते ॥४॥

हे अग्ने अषाळ्हः शत्रुभिरसोढोऽपराजितः। स्वयं शत्रूञ्जयतीत्यर्थः। वृषभः कामानां वर्षयिता एवंभूतस्त्वं विश्वाः सर्वाः पुरः शत्रूणां पुरीः सौभगा तत्रत्यानि शोभनान्युत्तमानि धनानि च संजिगीवान् सम्यग्जयन् दीदिहि। सर्वतो ऽस्माभिर्दीप्यस्व। सुप्रणीते शोभनप्रणयन जातवेदो जातप्रज्ञ हे अग्ने बृहत उपदिष्टातिदिष्टैर्विधेतिकर्तव्यताकलापेन महतः पायोस्तत्फलप्रदानेन रक्षकस्य प्रथमस्य मुख्यतया प्रथमं क्रियमाणस्य। एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम इति श्रुतेः। तादृशस्य ज्योतिष्टोमाख्यस्य यज्ञस्य नेता हविर्वहनदेवताह्वानादिक्रियाया निर्वाहको भव॥ अषाळ्हः। षह मर्षणे इत्यस्य निष्ठायां हो ढ इति ढकारः। झषस्तथोर्धोऽध इति क्तस्य धकारः। ष्टुत्वेन ढः। ढलोपे कृते ढ्रलोपे पूर्वस्य दीर्घ इति दीर्घः। अोत्वाभावश्छान्दसः। सोढः साडः स इति सकारस्य मूर्धन्यादेशः। अव्ययपूर्वपदप्रकृतिस्वरे नञ्स्वरः। वृषभः। वृष सेचने। ऋषिवृषिभ्यां किदित्यभच्। चित्स्वरः। दीदिहि। दिवु क्रीडादावित्यस्य यङ्लुकि लोटो मध्यमैकवचने संज्ञापूर्वको विधिरनित्य इत्यभ्यासस्य गुणाभावः। सर्वे विधयश्छन्दसि विकल्प्यन्त इति पूर्वत्रासिद्धमित्यस्याप्रवृत्तौ परत्वाद्धलि चेति दीर्घत्वं। पश्चाद्वलोपः। सौभगा। सुभगान्मन्त्र इत्युद्गात्रादिषु पाठाद्भावार्थेऽञ्। हृद्भगसिंध्वन्त इति पूर्वपदस्य वृद्धिः। उत्तरपदस्य वृद्धिर्न भवति सर्वविधीनां छन्दसि विकल्पितत्वात्। सुपां सुलुगिति सुपो डादेशः। तेन च सौभाग्येन धनान्युपलक्ष्यन्ते। ञ्नित्यादिर्नित्यमित्याद्युदात्तः। संजिगीवान्। जि जये। छन्दसि लिट्। तस्य क्वसुः। सन्लिटोर्जेरिति कवर्गादेशः। प्रत्ययस्वरः। दीर्घश्छान्दसः। पायोः। पा रक्षणे। कृवापाजिमीत्यादिना उणप्रत्ययः। आतो युक् चिण्कृतोरिति युगागमः। प्रत्ययस्वरः॥

अच्छिद्रा शर्म जरितः पुरूणि देवाँ अच्छा दीद्यानः सुमेधाः।
रथो न सस्निरभि वक्षि वाजमग्ने त्वं रोदसी नः सुमेके ॥५॥
अच्छिद्रा। शर्म। जरितरिति। पुरूणि। देवान्। अच्छ। दीद्यानः। सुऽमेधाः।
रथः। न। सस्निः। अभि। वक्षि। वाजं। अग्ने। त्वं। रोदसी इति। नः। सुमेके इति सुऽमेके॥५॥

जरितः सर्वस्य जगतोऽन्तकाले जरयितर्हे अग्ने सुमेधाः शोभनप्रज्ञोपेतो दीद्यानः स्वतेजसा प्रकाशमानस्त्वं देवान् यष्टव्यान्देवान् अच्छाभिलक्ष्य तदुद्देशेन क्रियमाणानि पुरूणि शर्म स्वर्गादिसुखसाधनभूतान्यग्निहोत्रादीनि कर्माण्यच्छिद्रा अच्छिद्राणि कुरु। कर्तृकर्मसाधनवैकल्यराहित्येन संपूर्णानि कुरु। किंच हे अग्ने त्वं सस्निः संनिरुद्धः स्वकीयं सततगमनं संनिरुध्य हविष्प्रक्षेपपर्यंतमत्र वर्तमानस्त्वं वाजं नोऽस्माभिर्दीयमानं हविर्लक्षणमन्नमभि देवानभिलक्ष्य वक्षि। वह। प्रापय। तत्र दृष्टान्तः। रथो न रथ इव। यथा रथो धान्यादिकमृद्धा तत्स्वामिनं प्रापयति तद्वत्। किंच त्वमग्ने रोदसी द्यावापृथिव्यौ सुमेके शोभनरूपोपेते स्वकीयप्रभाभिः प्रकाशयुक्ते कुरु॥ दीद्यानः। दीदेतिः दीप्तिकर्मा। तस्माच्छानच्। अभ्यस्तानामादिरित्याद्युदात्तत्वं। सुमेधाः। नित्यमसिच् प्रजामेधयोरित्यसिच्प्रत्ययः। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं। सस्निः। षस स्वप्ने। आदृगमहनजन इति किन्प्रत्ययः। लिड्वद्भावाद्द्विर्वचनादिकं। नित्त्वादाद्युदात्तत्वं। वक्षि। वह प्रापणे। अस्य लोटः सिपि बहुलं छन्दसीति शपो लुक्। ढत्वकत्वे। हिरादेशश्छान्दसत्वान्न भवति। निघातः॥

प्र पीपय वृषभ जिन्व वाजानग्ने त्वं रोदसी नः सुदोघे।
देवेभिर्देव सुरुचा रुचानो मा नो मर्तस्य दुर्मतिः परि ष्ठात् ॥६॥
प्र। पीपय। वृषभ। जिन्व। वाजान्। अग्ने। त्वं। रोदसी इति। नः। सुदोघे इति सुऽदोघे।
देवेभिः। देव। सुऽरुचा। रुचानः। मा। नः। मर्तस्य। दुःऽमतिः। परि। स्थात् ॥६॥

वृषभ कामानां वर्षितरग्ने त्वं नोऽस्माकं प्रपीपय। अभिलषितफलानि वर्धय। वाजानन्नानि च जिन्व। प्रयच्छ। किंच देव दीप्यमान हे अग्ने सुरुचा शोभनदीप्त्या रुचानः शोभमानस्त्वं देवेभिर्यजनीयैर्देवैः सहितोऽस्माकं रोदसी इमे द्यावापृथिव्यौ सुदोघे वृष्टिद्वाराभिमतफलप्रदानेन सुष्ठु दोग्ध्र्यौ कुरु। तथा मर्तस्य शत्रोर्दुर्मतिर्दुष्टबुद्धिप्रयुक्तोऽभिभवो नोऽस्मान् मा परि धात्। परितो मा गच्छतु॥ पीपय। पा पान इत्येतस्य ण्यन्तस्य लुङि चङि द्विर्वचनाभ्यासदीर्घौ। सिपो लोपश्छान्दसः। जिन्व। इवि जिवि धिवि प्रीणनार्थाः। एतस्य लोटि इदित्त्वान्नुम्। शप। अतो हेरिति हेर्लुक्। आमन्त्रितस्याविद्यमानवत्त्वेन अतिङ उत्तरत्वाभावान्न निघातः। सुदोघे। दोहनं दोघः। भावे घञ्। कुत्वं छान्दसं। आद्युदात्तं द्व्यच छन्दसीत्युत्तरपदाद्युदात्तत्व। दुर्मतिः। मनु अवबोधने। मन्यत इति मतिर्बुद्धिः। कर्तरि क्तिच। दुष्टा बुद्धिः। अव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते कृदुत्तरपदप्रकृतिस्वरत्व॥

इळा॑मग्ने पुरु॒दंसं॑ स॒निं गोः श॑श्वत्त॒मं हव॑मानाय साध।
स्यान्नः॑ सू॒नुस्तन॑यो विजा॒वाग्ने॒ सा ते॑ सुम॒तिर्भू॑त्व॒स्मे ॥१॥
इळा॑म्। अ॒ग्ने॒। पु॒रु॒ऽदंस॑म्। स॒निम्। गोः। श॒श्व॒त्ऽत॒मम्। हव॑मानाय। सा॒ध॒।
स्यात्। नः॒। सू॒नुः। तन॑यः। वि॒जाऽवा॑। अग्ने॑। सा। ते॒। सु॒ऽम॒तिः। भू॒तु॒। अ॒स्मे इति॑ ॥१॥

उतो पितृभ्यामित्यस्मिन्वर्गे व्याख्यातियमृक्॥ ॥१५॥

अयमग्निरिति चतुर्थं षडृचं सूक्तमाग्नेयं। अत्रानुक्रमणिका। अयमग्निः षट् प्रागाथमिति। उत्कीलस्त्विति तुशब्दप्रयोगादस्यापि सूक्तस्य स एव ऋषिः। अत्र विषमसंख्यानामृचां बृहती छन्दस्तृतीयपादस्य द्वादशाक्षरत्वात्। समसंख्याना तु सतोबृहती प्रथमतृतीयपादयोर्द्वादशाक्षरत्वात्। उक्तं च। अयुजा जागतौ सतोबृहतीति॥

अ॒यम॒ग्निः सु॒वीर्य॒स्येशे॑ म॒हः सौभ॑गस्य।
रा॒य ई॑शे स्वप॒त्यस्य॒ गोम॑त॒ ईशे॑ वृत्र॒हथा॑नाम् ॥१॥
अ॒यम्। अ॒ग्निः। सु॒ऽवीर्य॑स्य। ईशे॑। म॒हः। सौभ॑गस्य।
रा॒यः। ई॒शे॒। सु॒ऽअ॒प॒त्यस्य॑। गोऽम॑तः। ईशे॑। वृ॒त्र॒ऽहथा॑नाम् ॥१॥

उत्कील ऋषिः। अयं यजनीयत्वेनाग्न्या निर्दिश्यमानोऽग्निः सुवीर्यस्य शोभनसामर्थ्योपेतस्य महो महतः सौभगस्य सौभाग्यस्येशे। ईष्टे। ईश्वरो भवति। सर्वस्य बलारोग्यहेतुतया सौभाग्यकारित्वात्। तथा गोमतो गवादिपशुयुक्तस्य स्वपत्यस्य शोभनापत्यस्य रायो धनस्येशे। ईष्टे। पुत्रपश्वाद्युद्देशेन क्रियमाणकर्मफलसंपादकत्वेन तत्स्वामित्वात्। तथैवभूतोऽग्निर्वृत्रहथानां। हननं हथः। शत्रुभूतपापविनाशनानामपीशे। ईष्टे। त्वयि समर्पितकर्मणामस्माकं त्वत्प्रसादात्पापक्षयो भवतीति तस्यापि स्वामी॥ ईशे। ईश ऐश्वर्ये। अदादित्वाच्छपो लुक्। लोपस्त आत्मनेपदेष्विति तलोपः। पादादित्वादनिघातः। सौभगस्य। सुभगस्य भावः सौभगं। उद्गात्रादित्वादञ्। सर्वविधीनां छन्दसि विकल्पितत्वादत्र हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्यादिना प्राप्ताया उत्तरपदवृद्धेरभावः। रायः। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। ईशे। निघातः। स्वपत्यस्य। नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं। वृत्रहथानां। वृतु वर्तने। अस्मात् स्फायितञ्चिवञ्चीत्यादिना रक्प्रत्ययः। कित्त्वादगुणः। हन हिंसागत्योरित्यस्मात् हनिकुषिनीरमिकाशिभ्य इति क्थन्। कित्त्वादनुनासिकलोपः। कृदुत्तरपदप्रकृतिस्वर॥

इ॒मं न॑रो मरुतः सश्चता॒ वृधं॒ यस्मि॒न्रायः॒ शेवृ॑धासः।
अ॒भि ये सन्ति॒ पृत॑नासु दू॒ढ्यो॑ वि॒श्वाहा॒ शत्रु॑माद॒भुः ॥२॥
इ॒मम्। न॒रः॒। म॒रु॒तः॒। स॒श्च॒त॒। वृध॑म्। यस्मि॑न्। रायः॑। शेऽवृ॑धासः।
अ॒भि। ये। सन्ति॑। पृत॑नासु। दुः॒ऽध्यः॑। वि॒श्वाहा॑। शत्रु॑म्। आ॒ऽद॒भुः ॥२॥

नरः कर्मणां नेतारो हे मरुतो देवा यूयं वृधं पशुपुत्रादिवर्धकमिममस्माभिः स्तूयमानमिममग्निं सश्चत। यस्मिन्देवे रायो धनानि शेवृधासो दानभोगाद्युपयोगेन सुखस्य वर्धकानि संति। ये च देवाः पृतनासु सेनासु तदुपलक्षितेषु संग्रामेषु दृळ्हो दृष्टध्यानोपेतानात्मनो हिंसकाञ्छत्रूनभिसंति। अभिभवंति। ये च विश्वाहा विश्वान्यहानि यस्मिन्नखंडे काले तस्मिन्सर्वदा शत्रुमात्मनो द्वेष्टारमादभुः। आदभ्नुवंति। हिंसंति। एवंभूतास्ते सर्वे मरुतो यूयं तमिममग्निं सेवध्वमिति हविरानयनार्थं सेवध्वं। कीदृशोऽग्निरित्याकांक्षायामाह। पूर्वेणान्वयः॥ सश्चत। षस्ज संग इत्यस्माल्लोटि रूपं। जकारस्य व्यत्ययेन चकारः। निघातः। शेवृधासः। वर्णव्यत्ययः। शं सुखं वर्धयतीति। असुन्नित्यसुन्। गुणाभावश्छांदसः। गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेत्यौणादिकसूत्रात् पूर्वपदप्रकृतिस्वरः। संति। अस भुवि। दृळ्हः। ध्यै चिंतायां। अन्येभ्योऽपि दृश्यत इति क्विप। दृशिग्रहणात्संप्रसारणं। दुरो दाशनाशदभध्येषूत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वमिति उत्वटत्वे। छंदस्युभयथेति शसीयडादेशं बाधित्वा यणादेशः। कृदुत्तरपदप्रकृतिस्वरेणातोदात्तः। शसः सुप्त्वादनुदात्तत्वे कृते उदात्तस्वरितयोर्यण इति शसः स्वरितत्वं। आदभुः। दम्भु दंभे। अस्माल्लिट्युसि रूपं। श्रंथिग्रंथिदंभिस्वंजीनामुपसंख्यानमिति किद्वद्भावादनुनासिकलोपः। द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यमिति द्विर्वचनाभावः। यद्वृत्तयोगादनिघातः। सति शिष्टस्वरो बलीयानिति प्रत्ययस्वरः॥

स त्वं नो रायः शिशीहि मीढ्वो अग्ने सुवीर्यस्य ।
तुविद्युम्न वर्षिष्ठस्य प्रजावतोऽनमीवस्य शुष्मिणः ॥३॥
सः । त्वं । नः । रायः । शिशीहि । मीढ्वः । अग्ने । सुऽवीर्यस्य ।
तुविऽद्युम्न । वर्षिष्ठस्य । प्रजाऽवतः । अनमीवस्य । शुष्मिणः ॥३॥

हे अग्ने स तथाविधस्त्वं नोऽस्मान्रायः। तृतीयार्थे षष्ठी। धनेन शिशीहि। तीक्ष्णान्कुरु। अस्मान्धनसमृद्धान्कुरु। किंच तुविद्युम्न बहुधनोपेत अत एव मीढ्वो मीढ्वन कामानां सेक्तः हे अग्ने त्वं वर्षिष्ठस्य वृद्धतमस्य प्रभूतस्य प्रजावतोऽपत्ययुक्तस्यानमीवस्यारोग्यहेतोरत एव शुष्मिणो बलहेतोः सुवीर्यस्य शोभनसामर्थ्ययुक्तस्यान्नस्य संबंधिनोऽस्मान्कुरु। यद्वा। एतत्सर्वं विशेषणतया योजनीयं। एताः षष्ठ्यस्तृतीयार्थे। एतदुक्तं भवति। धनेनापत्यारोग्यशरीरबलोपेतेनान्नेनास्मान्समृद्धान्कुर्विति॥ शिशीहि। शिञ् निशाने इत्यस्य लोटि बहुलं छंदसीति विकरणस्य श्लुः। वा छंदसीति विकल्पेन ङित्त्वादङितश्चेति हेर्धिरादेशो न भवति। दीर्घश्छांदसः। निघातः। मीढ्वः। मिह सेचन इत्यस्य क्वसौ दाश्वान साह्वान मीढ्वांश्चेति निपातनात् ढत्वं उपधादीर्घश्च। संबुद्धौ नुमि कृते हल्ङ्यादिलोपे संयोगांतलोपे च कृते मतुवसो रुः संबुद्धौ छंदसीति रुः। पादादित्वादाद्युदात्तः॥

चक्रिर्यो विश्वा भुवनाभि सासहिश्चक्रिर्देवेष्वा दुवः ।
आ देवेषु यतत आ सुवीर्य आ शंस उत नृणां ॥४॥
चक्रिः । यः । विश्वा । भुवना । अभि । ससहिः । चक्रिः । देवेषु । आ । दुवः ।
आ । देवेषु । यतते । आ । सुऽवीर्ये । आ । शंसे । उत । नृणां ॥४॥

योऽयमग्निश्चक्रिः सर्वस्य जगतः कर्ता स च विश्वा भुवना विश्वानि भुवनान्यभि अभिविशति। तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः। चक्रिः कर्ता सोऽग्निः सासहिः पुरोडाशादिहविर्भारसहनशीलः सन दुवोऽस्माभिर्दत्तं हविर्देवेषु यजनीयदेवेष्वा। आनयति। स चाग्निर्देवेषु देवनशीलेषु स्तोतृष्वा यतते। आभिमुख्येन गच्छति। यद्वा विश्वानि भुवनानि चक्रिरभिसासहिरभिभवनशीलः। आकारश्चार्थे। देवेषु च दुवः परिचरणं चक्रिः कर्ता। य एवंभूतः स आयतत इत्यादि पूर्ववत्। उत अपि च नृणां यज्ञस्य नेतॄणां शस्त्रिणां शंसे। शंसनं शसः शस्त्रं। तस्मिन सोऽग्निरागच्छति। तथा नृणां मनुष्याणां सुवीर्ये शोभनवीर्योपेतयुद्धे तद्रक्षणार्थमागच्छति। अनेनाग्नेः सर्वव्यापकता प्रतिपादिता भवति॥ चक्रिः। डुकृञ् करणे। आदृगमहनजनः किकिनौ लिट्

चेति क्निप्रत्ययः। लिड्वद्भावाद्द्विर्वचनं। क्नित्वाद्गुणाभावः। नित्स्वरः। सासहिः। षह मर्षणे इत्यस्माद्यङंता त्सहिवहिचलिपतिभ्यो यङंतेभ्यः किकिनौ। पा॰ ३. २. १७१. ४.। इति किः। प्रत्ययस्वरः। यतते। यती प्रयत्ने। यद्वृत्तयोगादनिघातः। शंसे। भावे घञ्। ञित्स्वरः। नृणां। नृ चेति विकल्पेन दीर्घाभावः। नामन्यतरस्यामिति विभक्तेरुदात्तत्वं। विश्वेत्यादिषु न लोकाव्ययेति षष्ठीप्रतिषेधः॥

मा नो॑ अग्नेऽम॑तये मावीर॑ताय रीरधः।
मागो॑ताये सहसस्पुत्र मा नि॒देऽप॒ द्वेषां॒स्या कृ॑धि ॥५॥
मा। नः॒। अ॒ग्ने॒। अम॑तये। मा। अ॒वीर॑ताय। री॒र॒धः॒।
मा। अ॒गोता॑य। स॒ह॒सः॒। पु॒त्र॒। मा। नि॒दे। अप॑। द्वेषां॑सि। आ। कृ॒धि॒ ॥५॥

सहसस्पुत्र बलस्य पुत्र हे अग्ने त्वं नोऽस्मान् अमतये शत्रुभूताय दारिद्र्याय मा रीरधः। संसिद्धान्विषयभूतान्मा कुरु। तथावीरताया अपुत्रतायै। अवीरशब्देन तद्वान् लक्ष्यते। वीरस्य भावो वीरता। न वीरता अवीरता। तस्यै। अस्मानपुत्रताया विषयभूतान्मा कुरु। तथा त्वमस्मानगोतायै गवादिपशुसपत्नभावस्य विषयभूतान्मा कुरु। किंचास्मान्निदे निंदाया विषयभूतान्मा कुरु। मा विधेहि। तथा त्वं द्वेषांसि कर्मापराधनिमित्तान् द्वेषांश्चापाकृधि। अपकुरु। निवारय॥ अवीरताय। वीरा अस्य संतीति वीरः। अर्शआदित्वादच्। तस्य भावो वीरता। तस्य भावस्त्वतलाविति तल्। न वीरता अवीरता। नञः स्वरं प्राप्ते परादिश्छंदसि बहुलमिति नञुत्तरस्यादिरुदात्तता। रीरधः। राध साध संसिद्धौ। अस्मात्प्रयतावाद्ये लुङि णिश्रिद्रुस्रुभ्य इति च्लेश्चङादेशः। णेरनिटीति णिलोपः। णौ चङ्युपधाया ह्रस्व इत्युपधाह्रस्वः। चङीति द्विर्वचनं। सन्वल्लघुनि चङ्परे इति सन्वद्भावः। सन्यत इत्यभ्यासस्येत्वं। तस्य दीर्घो लघोरिति दीर्घः। न माङ्योगे इत्यडभावः। निघातः। अगोताये। गोशब्देन गोमान् लक्ष्यते। न गौरगौः। अगोर्भावोऽगोता। तस्य भाव इति तल्। लित्स्वरः। सहसस्पुत्र। सुबामंत्रिते पराङ्गवत्स्वरे इति पराङ्गवद्भावात्सहसस्पुत्र इत्येतयोः सर्वानुदात्तत्वं। निदे। णिदि कुत्सायां। अस्मात्संपदादित्वाद्भावे क्विप्। अनित्यमागमशासनमिति नुमभावः। सावेकाच इति विभक्तेरुदात्तता॥

श॒ग्धि वाज॑स्य सुभग प्र॒जाव॑तोऽग्ने बृह॒तो अ॑ध्व॒रे।
सं रा॒या भूय॑सा सृज मयो॒भुना॒ तुवि॑द्युम्न॒ यश॑स्वता ॥६॥
श॒ग्धि। वाज॑स्य। सु॒ऽभ॒ग॒। प्र॒जाऽव॑तः। अग्ने॑। बृ॒ह॒तः। अ॒ध्व॒रे।
सं। रा॒या। भूय॑सा। सृ॒ज॒। म॒यः॒ऽभुना॑। तु॒वि॒ऽद्यु॒म्न॒। यश॑स्वता ॥६॥

सुभग शोभनधनोपेत हे अग्ने त्वमध्वरेऽस्माभिः क्रियमाणेऽस्मिन्नग्निष्टोमादिकर्मणि बृहतो महतः प्रभूतस्य प्रजावतोऽपत्योपेतस्य वाजस्यान्नस्य शग्धि। ईशिषे। तादृशमन्नमस्मिन्नध्वरेऽस्मभ्यं देहि। किंच तुविद्युम्न बहुधनयुक्त हे अग्ने मयोभुना। मय इति सुखनाम शेवृध मय इति तन्नामसु पाठात्। तद्दानात्प्रयोगहेतुतया सुखस्य भावकेनात एव यशस्वता कीर्तिमता भूयसातिप्रभूतेन रायैतद्विधेन धनेनास्मान्संसृज। संयोजय॥ शग्धि। शक्लृ शक्ताविस्यस्य लोटि बहुलं छंदसीति विकरणस्य लुक्। हुझल्भ्यो हेर्धिरिति धिरादेशः। ईशिषेत्वादुदात्तता। राया। ऊडिदमिति विभक्तेरुदात्तत्वं। भूयसा। बहुशब्दात् द्विवचनविभज्योपपदे इतीयसुन्। बहोर्लोपो भू च बहोरितीयसुनः सर्वस्य लोपे प्राप्ते आदेः परस्य। पा॰ १. १. ५४। इति प्रत्ययस्यादेर्लोपो बहोर्भूरादेशश्च। नित्स्वरः। सृज। सृज विसर्गे। तुदादिः। लोटि रूपं। निघातः। मयोभुना। भू सत्तायामित्यस्मादौणादिको डुप्रत्ययः। तुविद्युम्न। पादादित्वादनिघातः॥ ॥१८॥

समिध्यमान इति पंचर्चं पंचमं सूक्तमाग्नेयं त्रैष्टुभं वैश्वामित्रस्य कतस्यार्षं। तदुक्तं। समिध्यमानः पंच कतो वैश्वामित्रस्त्विति॥ आ होतेत्यादिसूक्तदशकस्य विनियोग उक्तः प्रातरनुवाकाश्विनशस्त्रयोरिति। तत्रेदं चतुर्थं

वाजपेये बार्हस्पत्ये चरावग्नि सुदीतिमिति स्विष्टकृतो याज्या । वाजपेयेनेत्यादिखंडे सूचितं । अग्निं सुदीतिं सुदृशं गृणंत इति संयाज्ये । आ० ९ ९ । इति ॥

समिध्यमानः प्रथमानु धर्मा समक्तुभिरज्यते विश्ववारः ।
शोचिष्केशो घृतनिर्णिक्पावकः सुयज्ञो अग्निर्यजथाय देवान् ॥१॥

सम्ऽइध्यमानः । प्रथमा । अनु । धर्म । सं । अक्तुऽभिः । अज्यते । विश्वऽवारः ।
शोचिःऽकेशः । घृतऽनिर्निक् । पावकः । सुऽयज्ञः । अग्निः । यजथाय । देवान् ॥१॥

कतः स्तौति । धर्म । धारणाद्धर्म । अग्नेर्यज्ञनिर्वाहकतया तद्धारकत्वाद्धर्माग्निः । तथा च मंत्रः । धर्माणमग्निं विदथस्य साधनं । ऋग्वे० १० ९२.२ । इति । तादृशोऽग्निः प्रथमा प्रथमं यज्ञोपक्रमे अनु अग्न्यायतनेष्वनुक्रमेण समिध्यमानः सम्यक् प्रज्वाल्यमानः । यद्वा । अनु धर्म धर्मसाधनभूतेषु यज्ञेषु प्रथमं समिध्यमानो विश्ववारो विश्वैः सर्वैर्यजमानैर्यष्टव्यतया वरणीयः शोचिष्केशः । शोचींषि ज्वालाः केशा यस्य स तथोक्तः । घृतनिर्णिक् । घृतस्य तापनद्वारा विलापनेन शोधकः । पावकोऽस्मदीयपापशोधकः । सुयज्ञः शोभनयज्ञोपेतः । एवभूतोऽग्निर्देवानस्माभिर्यजनीयान्देवान्यजथाय यष्टुमक्तुभिरंजनसाधनैर्घृतादिभिः समज्यते । सम्यक् सिच्यते ॥ प्रथमा । सुपां सुलुगिति सुपो डादेशः । धर्म । धृञ् धारणे इत्यस्मादन्येभ्योऽपि दृश्यत इति मनिन् । ह्रस्वत्वकादसं । नित्स्वरः । अक्तुभिः । अंजू व्यक्तिगतिम्रक्षणेषु । अज्यत एभिरिति बाहुलकत्वात् क्तुः करणे । कित्त्वादुपधालोपः । प्रत्ययस्वरः । अज्यते । स एव धातुः । कर्मणि यक् । अनिदितामित्युपधालोपः । विश्ववारः । विश्वैर्यजमानैर्होतृद्वारा वारो वारणं यस्येत्यत्र वृञ् वरणे इत्यस्य ण्यतस्य रूपं वारः । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं । घृतनिर्णिक् । णिजिर् शौचपोषणयोः । क्विप् । घृतं नेनेक्तीति द्वितीयातत्पुरुषत्वात्पूर्वपदस्वरः । यजथाय । यज देवपूजासंगतिकरणदानेषु । अस्मादौणादिकोऽथप्रत्ययः । तादर्थ्ये चतुर्थी । प्रत्ययस्वरः ॥

यथायजो होत्रमग्ने पृथिव्या यथा दिवो जातवेदश्चिकित्वान् ।
एवानेन हविषा यक्षि देवान्मनुष्वद्यज्ञं प्र तिरेममद्य ॥२॥

यथा । अयजः । होत्रं । अग्ने । पृथिव्याः । यथा । दिवः । जातऽवेदः । चिकित्वान् ।
एव । अनेन । हविषा । यक्षि । देवान् । मनुष्वत् । यज्ञं । प्र । तिर । इमं । अद्य ॥२॥

हे अग्ने त्वं यथा पृथिव्या यजमानभूतायाः पृथिवीदेवतायाः पूर्वं होता सन् होत्रं होमसाधनं हविरयजोऽयाक्षीः जातवेदो जातप्रज्ञ हे अग्ने चिकित्वान् कर्मविषयज्ञानवान् त्वं यथा च दिवो यजमानभूताया द्युदेवतायाः होता भूत्वा हविरयजः । एव एवं त्वमस्मिन्कर्मणि होता सन् अनेनास्माभिर्दीयमानेन हविषा देवान्यक्षि । यज । किंच त्वमद्येदानीमस्माभिः क्रियमाणमिमं यज्ञं प्र तिर । अनुष्ठानसंपूर्त्या पारं गमय । तत्र दृष्टांतो मनुष्वदिति । यथा मनोर्यज्ञमनुष्ठानसंपूर्त्या पारमनैषीस्तद्वदिमं यज्ञं पारं नयेत्यर्थः ॥ यथा । प्रकारवचने थाल्निति थाल् । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । अयजः । यजेर्लङि रूपं । यच्छब्दयोगादनिघातः । होत्रं । हु दानादनयोः । हुयामाश्रुभसिभ्यस्त्रन्निति त्रन्प्रत्ययेनांतोदात्तः । दिवः । ऊडिदमिति विभक्तेरुदात्तत्वं । चिकित्वान् । कित ज्ञाने इत्यस्य क्वसौ रूपं । प्रत्ययस्वरः । अनेन । इदंशब्दस्य तृतीयैकवचने अनाप्यकः । पा० ७ २ ११२ । इत्यनादेशः । यक्षि । यजेर्लोटि रूपं । मनुष्वत् । तत्र तस्येवेति वतिः । नभोऽङ्गिरोमनुषां वत्युपसंख्यानमिति भसंज्ञात्वाद्रुत्वाभावः । प्रत्ययस्वरः । तिर । तरतेर्लोटि व्यत्ययेन शः । ऋत इद्धातोरितीत्वं । निघातः ॥

धीण्यायूंषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने ।
ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शं योः ॥३॥

त्रीणि । आयूंषि । तव । जातऽवेदः । तिस्रः । आऽजानीः । उषसः । ते । अग्ने ।
ताभिः । देवानां । अवः । यक्षि । विद्वान् । अथ । भव । यजमानाय । शं । योः ॥ ३ ॥

हे जातवेदो जातप्रज्ञ तव त्रीण्यायूंषि त्रिविधान्याज्यौषधसोमात्मकान्यन्नान्याहारतया कल्पितानि हे अग्ने तिस्र उषस एकाहाहीनसत्त्रगता उषस उषोऽभिमानिन्यस्तिस्रो देवतास्ते तवाजानीर्जनयित्र्यो मातरः । यद्वा । उषोऽभिमानिन्यो देवतास्तवाजानीस्त्वामनुजातास्तिस्रः स्वसारः । तथा च स्वसृः प्रकृत्य मंत्रः । प्रजामेका रक्षत्यूर्जमेका राष्ट्रमेका रक्षतीति । ताभिरुषोऽभिमानिनीभिर्देवताभिः सहितस्त्वमस्मोऽस्माभिर्दीयमानं हविर्लक्षणमन्नं देवानां यक्षि । यष्टव्यं देवानां प्रयच्छ । अथ अनंतरं विद्वान् जानंस्त्वं यजमानाय शं भव । सुखहेतुर्भव । योश्च सुखस्य मिश्रयिता च भव ॥ तव । युष्मदस्मदोर्ङसीत्याद्युदात्तः । तिस्रः । त्रिशब्दस्य स्त्रियां त्रिचतुरोः स्त्रियामिति तिसृ इत्यादेशः । अचि र ऋत इति रेफादेशः । तिसृभ्यो जस इति विभक्तिरुदात्तत्वं । आजानीः । जन जनने । जनिघसिभ्यामिण् इति कर्तरि इण् । णित्त्वादुपधावृद्धिः । वा छंदसीति वर्णदीर्घः । कृदुत्तरपदप्रकृतिस्वरः । अवः । अव रक्षणे । असुन्नित्यसुन् । नित्स्वरः । यक्षि । यजेर्दानार्थस्य लोटि रूपं । यजमानाय । पूङ्यजोः शानन् । पा॰ ३ २ १२८ । इति यजेः शानन् । नित्स्वरः । योः । यु मिश्रणे इत्यस्मादन्येभ्योऽपि दृश्यत इति विच् । आर्धधातुकलक्षणो गुणः । कृदुत्तरपदप्रकृतिस्वरः ॥

अग्निं सुदीतिं सुदृशं गृणंतो नमस्यामस्त्वेड्यं जातवेदः ।
त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिं ॥ ४ ॥
अग्निं । सुऽदीतिं । सुऽदृशं । गृणंतः । नमस्यामः । त्वा । ईड्यं । जातऽवेदः ।
त्वां । दूतं । अरतिं । हव्यऽवाहं । देवाः । अकृण्वन् । अमृतस्य । नाभिं ॥ ४ ॥

जातवेदो जातस्य सर्वस्य वेदितर्हे अग्ने गृणंतस्त्वद्विषयां स्तुतिं कुर्वाणा वयमग्निमंगनादिगुणोपेतं सुदीतिं शोभनदीप्तिं अत एव सुदृशं सर्वैः सुदर्शनमीड्यं स्तुत्यं एवंविधं त्वा त्वां नमस्यामः । हविर्भिः पूजयामः । किंच देवा अस्माभिर्यजनीया इंद्रादयो देवा अरतिं । न विद्यते विषयेषु रतिः प्रीतिर्यस्यासावरतिः । विषयेष्वासक्तः अत एवामृतस्य देवान्नभूतायाः सुधाया नाभिं नाभिस्थानं त्वां तादृशं हव्यवाहं दूतमकृण्वन् । हविषां वोढारं दूतमकुर्वन् । दूतो हि द्विविधो वार्त्ताहारी कार्यकारी चेति । तत्र त्वां कार्यकारिणं दूतमकार्षुरिति भावः ॥ सुदीतिं । दीङ् क्षये । दीयंते विनाश्यंते आभिस्तमः इति करणे क्तिन् । दीतयो दीप्तयः । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । सुदृशं । दृशिर् प्रेक्षणे । तस्मात्कर्मार्थे खल् । सत्तापूर्वको विधिरनित्य इति गुणाभावः । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । गृणंतः । गृणातिरर्चतिकर्मा । नमस्यामः । नमस् पूजायां । नमो वरिवश्चित्रङः क्यजिति क्यच् । तदंताल्लटि रूपं । पादादित्वान्न निघातः । दूतं । टुदु उपतापे । दुतनिभ्यां दीर्घश्च । उ॰ ३ ९० । इति क्तः । तत्संनियोगेन धातोर्दीर्घः । दूत इतस्ततः संचारीत्यर्थः । प्रत्ययस्वरः । अरतिं । रमु क्रीडायां । भावे क्तिन् । अकृण्वन् । कृवि हिंसाकरणयोरित्यस्य लङि धिन्विकृण्व्योरच्चेत्युप्रत्ययोऽकारश्चांतादेशः । निघातः ॥

यस्त्वद्धोता पूर्वो अग्ने यजीयान्द्विता च सत्ता स्वधया च शंभुः ।
तस्यानु धर्म प्र यजा चिकित्वोऽथा नो धा अध्वरं देववीतौ ॥ ५ ॥
यः । त्वत् । होता । पूर्वः । अग्ने । यजीयान् । द्विता । च । सत्ता । स्वधया । च । शंऽभुः ।
तस्य । अनु । धर्म । प्र । यज । चिकित्वः । अथ । नः । धाः । अध्वरं । देवऽवीतौ ॥ ५ ॥

हे अग्ने त्वत् त्वत्तोऽपि पूर्वः प्रथमभावी यजीयान् अतिशयेन यष्टा यो यः कश्चिद्धोता होमनिष्पादको द्विता द्वेधं मध्यमे चोत्तमे च स्थाने स्वधया सोमाख्येनान्नेन सह सत्ता निषण्णः सन् शंभुर्यष्टॄणां सुखभूरभूत् ।

द्वितीयपादमेवं यास्को व्याचख्यौ । द्विता च सत्ता स्वधया च शंभुः । द्वैधं सत्ता मध्यमे च स्थान उत्तमे च शंभुः सुखभूः । नि॰ ५ ३ । इति । चिकित्वो धर्मविषयचेतनावन् हे अग्ने तस्य यस्त्वत्तोऽपि पूर्वभावी होता निरूपितस्तस्य होतुरनु धर्म धर्माननु तेनानुष्ठितधर्मानुपलक्ष्य प्र यज । प्रकर्षेण देवान्पूजय । अथ अनंतरं हे अग्ने त्वं नोऽस्माकं संबंधिनमध्वरमिमं यज्ञं देववीतौ देवानां प्रीत्यर्थं धाः । विधेहि ॥ यजीयान् । यष्टृशब्दस्य तुश्छंदसीतीयसुन् । तस्मिन् तुरिष्ठेमेयःस्विति तृचो लोपः । नित्त्वादाद्युदात्तः । द्विता । द्विशब्दात्संख्याया विधार्थे धेति धाप्रत्ययः । धकारस्य तकारश्छांदसः । प्रत्ययस्वरः । सत्ता । षद्लृ विशरणगत्यवसादनेषु । अस्य ताच्छीलिकस्तृन् । नित्स्वरः । स्वधया । स्वर्गं लोकं दधाति यजमानस्येति स्वधा । आतोऽनुपसर्गे क इति कप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वं । शंभुः । शं सुखमस्माद्भवतीति भू सत्तायां विप्रसंभ्यो ड्वसंज्ञायामित्यत्र मितद्र्वादिभ्य उपसंख्यानात् डुप्रत्ययः । डित्त्वाट्टिलोपः । यज । यजेर्लोटि रूपं । चिकित्वः । कित ज्ञाने इत्यस्य क्वसौ रूपं । मतुवसो रुः संबुद्धौ छंदसीति नकारस्य रुः । अथा नः । निपातस्येति दीर्घः । धाः । डुधाञ् धारणपोषणयोरित्यस्य छांदसे लुङि रूपं । अडभावश्छांदसः । देववीतौ । देवानां वीतिरशनं यत्र प्रीतौ सा प्रीतिर्देववीतिः । वी कांत्यादिष्वित्यस्माद्भावे क्तिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥ ॥ १७ ॥

भवा नो अग्न इति पचर्चं षष्ठं सूक्तं । भवा न इत्यनुक्रमणिका । ऋतो वैश्वामित्रस्त्विति तुशब्दप्रयोगादस्यापि वैश्वामित्रः कत ऋषिः । अग्निर्देवता ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः । प्रवर्ग्येऽभिष्टवे भवा नो अग्न इति तृचो विनियुक्तः । सूत्रितं च । भवा नो अग्ने सुमना उपेताविति तृचाः । आ॰ ४ ६. । इति ॥

भवा नो अग्ने सुमना उपेतौ सखेव सख्ये पितरेव साधुः ।
पुरुद्रुहो हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातीः ॥१॥
भव । नः । अग्ने । सुऽमनाः । उपऽइतौ । सखाऽइव । सख्ये । पितराऽइव । साधुः ।
पुरुऽद्रुहः । हि । क्षितयः । जनानां । प्रति । प्रतीचीः । दहतात् । अरातीः ॥१॥

हे अग्ने त्वमुपेतावस्माभिः क्रियमाणस्य प्रवर्ग्याख्यकर्मण आभिमुख्येनागमने सुमनास्तत्कर्मसिद्ध्यर्थमनुकूलमनस्को भूत्वा नः साधुर्भव । अस्मत्संबंधिकर्मसाधको भव । तत्र दृष्टांतद्वयं । सखेव सख्ये पितरेवेति । यथा सखा सुहृत सख्ये मित्राय हितोपदेशेन साधुर्भवति यथा च पितरा मातापितरौ पुत्राय सन्मार्गोपदेशेन साधकौ भवतः । तद्वत् । किंच । जनानां मनुष्याणां क्षितयो मनुष्याः पुरुद्रुहो हि नानाविधद्रोहयुक्ताः । हिशब्दः कारणपरः । यस्माल्लोके परस्परमात्सर्यादिनान्योन्यमसहमाना जना वर्तंते तस्मात्त्वं प्रतीचीः प्रतीचः प्रतिकूलतयास्मदाभिमुख्येनागच्छतोऽरातीररातीन् शत्रून्प्रति दहतात् । त्वं प्रतिकूलः सन् भस्मसात्कुरु ॥ भवा नः । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । उपेतौ । इण् गतौ । अयनमिति भावे क्तिन् । प्रादिसमासः । तादौ च निति कृत्यतावित्विति गतेः प्रकृतिस्वरत्वं । सख्ये । समाने ख्यश्चोदात्त इति इण् । डित्त्वाट्टिलोपः । तत्संनियोगेन यलोपः । समानस्य छंदसीत्यादिना सभावः । उदात्त इत्युक्तत्वादुपपदस्योदात्तता । साधुः । राध साध संसिद्धौ । कृवापाजीत्यादिना उण्प्रत्ययः । प्रत्ययस्वरः । प्रतीचीः । अंचु गतिपूजनयोः । ऋत्विग्दधृगित्यादिना क्विन् । स्त्रियामुगितश्चेति ङीपि प्राप्ते पुनर्धातोरुगितः प्रतिषेध इति प्रतिषिद्धेऽचतेश्चोपसंख्यानमिति प्रतिप्रसवात् ङीप् । तस्मिन्भसंज्ञायामच इत्यकारलोपः । चाविति दीर्घः । दहतात् । दह भस्मीकरण इत्यस्य लोण्मध्यमैकवचने हेस्तुह्योस्तातङ्ङाशिषीति तातङादेशः । निघातः । अरातीः प्रतीचीः । उभयत्र लिंगव्यत्ययः ॥

तपो ष्वग्ने अंतराँ अमित्राँ तपा शंसमररुषः परस्य ।
तपो वसो चिकितानो अचित्तान्वि ते तिष्ठंतामजरा अयासः ॥२॥
तपो इति । सु । अग्ने । अंतरान् । अमित्रान् । तप । शंसं । अररुषः । परस्य ।
तपो इति । वसो इति । चिकितानः । अचित्तान् । वि । ते । तिष्ठंतां । अजराः । अयासः ॥२॥

हे अग्ने अंतरान् अभिभावकानमित्रान्छत्रून् सु सुष्ठु यथा भवति तथा तपो। तपैव। बाधस्व। किंच। अररुषः अप्रयच्छतो हविरप्रयच्छतोऽत एव परस्य शत्रुभूतस्य स्वं शंसमभिलापं तप। क्षपय। वसो सर्वस्य वासयितर्हे अग्ने चिकितानः कर्माभिज्ञस्त्वमचित्तान् सत्कर्मण्यज्ञानामकामनस्कान्पुरुषान् तपो। संतप। यस्मादेवं तस्मात्ते तव रश्मयोऽजरा जरारहिताः प्रतिबंधरहिता अत एव अयासः सर्वत्रगमनस्वभावाः संतो वि तिष्ठता। विशेषेण तिष्ठंतु॥ तपो। तप उ। गुणः। उञमवलंब्य उञ इति प्रगृह्यसंज्ञा। पादादित्वादनिघातः। तपा। तप संताप इत्यस्य लोटि रूपं। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। अररुषः। रा दान इत्यस्य क्वसौ वस्वेकाजाद्घसामिति प्राप्तस्येटः संप्रसारणं संप्रसारणाश्रयं च बलीय इति संप्रसारणबलीयस्त्वान्निवृत्तिः। वसोः संप्रसारणमिति संप्रसारणं। समासे नञ्स्वरः। चिकितानः। कित ज्ञान इत्यस्य छंदसि लिट्। तस्य लिटः कानज्वेति कानजादेशः। द्विर्वचनं। कित्त्वाद्गुणाभावः। चित्त्वादंतोदात्तः। तिष्ठता। ष्ठा गतिनिवृत्तौ। विपूर्वात्तिष्ठतेः समवप्रविभ्यः स्थ इत्यात्मनेपदं। निघातः। अयासः। अय गतौ। पचाद्यच्। चित्स्वरः॥

इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय।
यावदीशे ब्रह्मणा वंदमान इमां धियं शतसेयाय देवीं ॥३॥
इध्मेन। अग्ने। इच्छमानः। घृतेन। जुहोमि। हव्यं। तरसे। बलाय।
यावत्। ईशे। ब्रह्मणा। वंदमानः। इमां। धियं। शतऽसेयाय। देवीं ॥३॥

हे अग्ने इच्छमानो धनं कामयमानोऽहं यजमान इध्मेन समिधनकारिणा समित्समूहेन घृतेनाज्येन सह हव्यं हवनयोग्यं हविः पुरोडाशादिकं जुहोमि। किमर्थं। तरसे वेगाय तव सततगमनसिद्ध्यर्थं बलाय सामर्थ्याय। पुरोडाशादिहविर्भारवहनसिद्ध्यर्थं त्वयि हविः प्रक्षिपामि। किंच ब्रह्मणा स्तोत्रेण वंदमानस्त्वां स्तुवन्नहं यावदीशे यावद्धनं वोढुं शक्नोमि तावद्देहि। त्वं चेमामस्माभिः क्रियमाणां धियं त्वद्विषयां स्तुतिं शतसेयायापरिमितधनपर्यवसानाय देवीं दीप्तामतिप्रभूतां कुरु॥ इध्मेन। ञिइंधी दीप्तौ। इध्यतेऽनेनाग्निरितीध्मः काष्ठविशेषः। इषियुधींधिदसिश्याधूसूभ्यो मगिति करणे मक्। कित्त्वादनुनासिकलोपः। प्रत्ययस्वरः। इच्छमानः। इषु इच्छायां। व्यत्ययेन शानच्। इषुगमियमां छ इति छकारः। जुहोमि। हु दानादनयोरित्यस्य लटि रूपं। पादादित्वादनिघातः। हव्यं। हवमर्हतीति छंदसि चेति यप्रत्ययः। भसंज्ञायां यस्येति लोपः। प्रत्ययस्वरः। यावत्। यच्छब्दात् यत्तदेतेभ्यः परिमाणे वतुबिति वतुप्। आ सर्वनाम्न इत्याकारः। आद्युदात्तः। ईशे। ईश ऐश्वर्ये इत्यस्य लडुत्तमैकवचने इटष्टेरेत्वं। अदादित्वाच्छपो लुक्। शतसेयाय। षो अंतकर्मणि। आदेच उपदेशेऽशितीत्यात्वं। अचो यदिति भावे यत्। ईद्यतीतीत्वं। आर्धधातुकलक्षणो गुणः। कृदुत्तरपदप्रकृतिस्वरः॥

उच्छोचिषा सहसस्पुत्र स्तुतो बृहद्वयः शशमानेषु धेहि।
रेवदग्ने विश्वामित्रेषु शं योर्मर्मृज्मा ते तन्वं१ भूरि कृत्वः ॥४॥
उत्। शोचिषा। सहसः। पुत्र। स्तुतः। बृहत्। वयः। शशमानेषु। धेहि।
रेवत्। अग्ने। विश्वामित्रेषु। शं। योः। मर्मृज्म। ते। तन्वं। भूरि। कृत्वः ॥४॥

सहसस्पुत्र हे अग्ने शोचिषा स्वकीयया दीप्त्या उत्। उद्दीप्यस्व। स्तुतः स्तोत्रशस्त्रसाधनैर्मंत्रैः स्तुतस्त्वं शशमानेषु। शशमानः शंसमानः। नि० ६. ८। इति यास्कः। त्वद्विषयशंसनं कुर्वाणेषु विश्वामित्रेषु विश्वामित्रगोत्रोत्पन्नेषु। विश्वं मित्रमस्येति विश्वामित्र एकः। एकस्मिन्बहुवचनं पूजार्थं। तथाविधेष्वस्मासु रेवद्धनयुक्तं बृहत्प्रभूतं वयः। वयःशब्दोऽन्नवाची। अर्को वयः इत्यन्ननामसु पठितत्वात्। तादृशं प्रभूतमन्नं धेहि। विधेहि। किंच शं रोगाणां शमनं चास्मासु धेहि। योर्भयानां यावनमस्मासु च धेहि। शमनं च रोगाणां यावनं च भयानामिति यास्कः। कृत्वोऽस्माभिः क्रियमाणस्य कर्मणः प्रयोजकत्वेन कर्तर्हे अग्ने ते तव त-

तन् भूरि बहुवारं मर्मृज्म । पुनःपुनः सोमाज्यपयःप्रभृतिभिर्वयं सिंचामः ॥ शशमानेषु । शश प्लुतगताविल्ययं धातुरत्र स्तुत्यर्थः । ताच्छील्यवयोवचनशक्तिष्विति चानश् । चित इत्यंतोदात्तत्वं । धेहि । डुधाञ् धारणपोषणयोरित्यस्य लोटि रूपं । रेवत् । रयिरस्यास्तीति मतुप् । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं । छंदसीर इति तस्य वत्वं । रयेर्मतौ बहुलं छंदसीति संप्रसारणं । परपूर्वत्वं । गुणः । विश्वामित्रेषु । मित्रे चर्षौ । पा० ६. ३ १३०. । इति पूर्वपदस्य दीर्घत्वं । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं । मर्मृज्म । मृजू शुद्धावित्यस्य वर्तमाने लिट्युत्तमबहुवचने मसो मादेशः । अनित्यमागमशासनमितीडभावः । रेफश्छांदसः । पादादित्वादनिघातः । प्रत्ययस्वरः । भूरि । भू सत्तायां । अदिशदिभूशुभिभ्यः क्रिन्निति क्रिन् । कित्त्वाद्गुणाभावः । नित्स्वरः । छत्वः । डुकृञ् करणे । संपदादित्वाद्भावे क्विप् । तदस्यास्तीति मतुप् । झय इति तस्य वत्वं । तसौ मत्वर्थे इति भसंज्ञायां तकारस्य जश्त्वाभावः । मतुवसो रुरिति तकारस्य रुत्वं ॥

कृधि रत्नं सुसनितर्धनानां स घेदग्ने भवसि यत्समिद्धः ।
स्तोतुर्दुरोणे सुभगस्य रेवत्सृप्रा करस्ना दधिषे वपूंषि ॥५॥
कृधि । रत्नं । सुऽसनितः । धनानां । सः । घ । इत् । अग्ने । भवसि । यत् । संऽइद्धः ।
स्तोतुः । दुरोणे । सुऽभगस्य । रेवत् । सृप्रा । करस्ना । दधिषे । वपूंषि ॥५॥

सुसनितरभिलषितधनानां सुष्ठु दातर्हे अग्ने धनानां कनकपश्वादीनां मध्ये रत्नमुत्तमं धनं कृधि । विधेहि । मह्यं दत्स्व । यद्यदा त्वं समिद्धः सोमाज्यादिभिः सम्यगिद्धो दीप्तो वर्तसे तदा स घेत् स तादृश एव त्वं धनस्य दाता खलु भवसि । किंच सुभगस्य त्वद्विषयस्तुत्या शोभनधनयुक्तस्य स्तोतुर्यजमानस्य दुरोणे गृहे सृप्रा प्रसर्पणशीलौ कर्मकरणार्थं प्रसृतौ करस्ना कर्मणा प्रस्नातारौ बाहू । करस्नौ बाहू कर्मणा प्रस्नातारौ । नि० ६.१७ । इति यास्कः । वपूंषि रूपाणि । वर्पो वपुरिति रूपनामसु पठितत्वात् । तादृशौ बाहू भास्वराणि ज्योतींषि च रेवत् धनयुक्तं यथा भवति तथा दधिषे । धारयसि ॥ सुसनितः । षणु दाने इत्यस्य तृचि रूपं । आमंत्रितनिघातः । सृप्रा । सृप्लृ गतौ । अस्मात्स्फायितंचिवंचीत्यादिना रक् । कित्त्वादगुणः । प्रत्ययस्वरः । करस्ना । करोति फलमिति करः कर्म । पचाद्यच् । कर्मणि स्ना शोधनं ययोस्तौ । यद्वा कर्मणा शोधनं याभ्यामिति बहुव्रीहौ पूर्वपदस्वरः । दधिषे । डुधाञ् धारणपोषणयोरित्यस्य लिटि क्रादिनियमात्प्राप्तस्य थास आर्धधातुकत्वादिट् । आतो लोपः । निघातः ॥ ॥१८॥

अग्निं होतारमिति पंचर्चं सप्तमं सूक्तं त्रैष्टुभमाग्नेयं गाथिन आर्षं । तथा चानुक्रांतं । अग्निं होतारं गाथी इति ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

अग्निं होतारं प्र वृणे मियेधे गृत्सं कविं विश्वविदममूरं ।
स नो यक्षद्देवताता यजीयान्राये वाजाय वनते मघानि ॥१॥
अग्निं । होतारं । प्र । वृणे । मियेधे । गृत्सं । कविं । विश्वऽविदं । अमूरं ।
सः । नः । यक्षत् । देवऽताता । यजीयान् । राये । वाजाय । वनते । मघानि ॥१॥

गाथी स्तौति । हे अग्ने गृत्सं गृणंतं देवानां स्तुतिं कुर्वंतं कविं मेधाविनं विश्वविदं सर्वविषयज्ञानोपेतममूरममूढमपिसंगनादिगुणोपेतं त्वां मियेधेऽस्माभिः क्रियमाणेऽस्मिन्यज्ञे होतारं होमनिष्पादकं देवानामाह्वातारं वाहं प्र वृणे । प्रकर्षेण संभजे । स तथाविधोऽग्निर्यजीयान् यष्टृतमः सन् नोऽस्माकं देवताता यष्टव्यतया संबंधिनो देवान्यक्षत् । यजतु । किंच सोऽग्नी राये धनाय वाजायान्नाय च मघानि मंहनीयान्यस्माभिर्दीयमानानि हवींषि वनते । संभजतां ॥ वृणे । वृङ् संभक्तौ । निघातः । मियेधे । मकारेकारयोर्मध्य इयागमश्छांदसः । गृत्सं । गृधु अभिकांक्षायां । गृधिपण्योर्दकौ च । उ० ३. ६९ । इति सप्रत्ययः । अंत्यस्य दकारः । व्यत्ययेनाद्युदात्तत्वं । अमूरं । मुह वैचित्ये इत्यस्य निष्ठायां रूपं । रेफश्छांदसः । नञा समासे तस्य नञ्स्वरः । यक्षत् ।

यजतेर्लेटि सिब्बहुलं लेटीति सिप्। लेटोऽडाटावित्यडागमः। इतश्च लोप इतीकारलोपः। देवताता। देवश-ब्दात्स्वार्थे सर्वदेवात्तातिलिति तातिल्। सुपां सुलुगिति सुपो डादेशः। लित्स्वरः। वनते। वन षण संभक्तावित्यस्य लटि व्यत्ययेनात्मनेपदं। निघातः॥

प्र ते अग्ने हविष्मतीमियर्म्यच्छा सुद्युम्नां रातिनीं घृताचीं।
प्रदक्षिणिद्देवतातिमुराणः सं रातिभिर्वसुभिर्यज्ञमश्रेत् ॥२॥
प्र। ते। अग्ने। हविष्मतीं। इयर्मि। अच्छ। सुऽद्युम्नां। रातिनीं। घृताचीं।
प्रऽदक्षिणित्। देवऽतातिं। उराणः। सं। रातिऽभिः। वसुऽभिः। यज्ञं। अश्रेत् ॥२॥

हे अग्ने सुद्युम्नां सुतेजसं हविष्मतीं पुरोडाशादिहविर्युक्तां रातिनीं हविर्दात्रीं घृताचीं घृतान्वितां जुहूम् अभृतं वा ते तवाच्छ त्वदाभिमुख्येन प्रेयर्मि। प्रेरयामि। देवतातिं देवान् उराणः उरु बहु कुर्वाणः। उराण उरु कुर्वाणः। नि॰ ६ १७। इति यास्कः। तादृशो भवान् रातिभिर्वसुभिरस्मभ्यं देयतया प्राप्तैर्धनैः सह मन प्रदक्षिणित् प्रादक्षिण्येन समश्रेत। तमिमं यज्ञं सम्यक् सेवतां॥ हविष्मतीं। हविरस्यास्तीति मतुप्। तसौ मत्वर्थ इति भसंज्ञायां सकारस्य रुत्वं न भवति। उगितश्चेति ङीप्। स्वरविधौ व्यञ्जनमविद्यमानवदिति परिभाषानाश्रयणान्मतुप उदात्तताभावः। इयर्मि। ऋ गतौ। जुहोत्यादिः। अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं। अभ्यासस्यासवर्णे इतीयङादेशः। सिपः पित्त्वाद्गुणः। निघातः। अच्छ। निपातस्य चेति संहितायां दीर्घः। रातिनीं। रा दाने इत्यस्य नपुंसके भावे क्तः। रातमस्यास्तीत्यत इनिठनाविति इनिः। प्रत्ययस्वरः। घृताचीं। घृतपूर्वादञ्चतेर्ऋत्विग्दधृगित्यादिना क्विन्। अञ्चतेश्चोपसंख्यानमिति ङीप्। भसंज्ञायामचः इत्यकारलोपः। चाविति दीर्घः। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे प्राप्ते चाविति पूर्वपदान्तोदात्तः। प्रदक्षिणित्। प्रदक्षिणं करोतीति तत्करोतीति णिजुत्पद्यमानो दक्षिणशब्दाद्भवति। समासमर्थत्वेनैव सोपसर्गाणिजुत्पत्तिस्तेनान्यस्मादिति तदन्तात् क्विप्। ह्रस्वस्य पिति। पा॰ ६ १ ७१। इति तुक्। णिचो लोपाभावश्छान्दसः। णिच्स्वरः। देवतातिं। देवशब्दात्सर्वदेवात्तातिलिति तातिल्। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। उराणः। उरु करोतीति तत्करोतीति णिच्। तदन्तात् छन्दसि लिट्। मन्त्रत्वादाम् न भवति। तस्य कानच्। णेरनिटीति णिलोपः। वरादेशाभावश्छान्दसः। चित्त्वादन्तोदात्तः। अश्रेत्। श्रिञ् सेवायामित्यस्य छान्दसे लङि बहुलं छन्दसीति शपो लुक्। निघातः॥

स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः।
अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः ॥३॥
सः। तेजीयसा। मनसा। त्वाऽऊतः। उत। शिक्ष। सुऽअपत्यस्य। शिक्षोः।
अग्ने। रायः। नृऽतमस्य। प्रऽभूतौ। भूयाम। ते। सुऽस्तुतयः। च। वस्वः ॥३॥

हे अग्ने त्वोतो यस्त्वया रक्ष्यमाणः स तेजीयसातिशयेन तीक्ष्णेन सत्कर्मविषयतीक्ष्णबुद्धियुक्तेन मनसान्तःकरणेन युक्तो भवति। उत अपि च तस्मै स्वपत्यस्य। द्वितीयार्थे षष्ठी। शोभनापत्योपेतं धनं शिक्ष। प्रयच्छ। शिक्षतिर्दानकर्मा दाश्यादिषु दानकर्मसु पठितत्वात्। हे अग्ने शिक्षोरभिमतफलप्रदानशक्तिमतो रायो नृतमस्य धनस्यातिशयेन नेतुर्दातुस्ते तव प्रभूतौ प्रभावे महिम्नि वयं स्याम। किंच सुष्टुतयस्त्वद्विषयशोभनस्तुतिमन्तो वयं वस्वो वसुनो भाजनं भूयाम। भूयास्म॥ तेजीयसा। तेजितृशब्दादतिशायन ईयसुन्। तुरिष्ठेमेयःस्विति तृचो लोपः। नित्स्वरः। त्वोतः। अव रक्षणादिषु। निष्ठायां ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यूठ्। अल्लोपः। त्वया ऊतः। तृतीयेति योगविभागात्समासः। टेर्लोपश्छान्दसः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः। शिक्ष। शिक्ष विद्योपादाने इत्ययमत्र दानार्थः। अस्माल्लोटि व्यत्ययेन परस्मैपदं। शिक्षोः। शक्ल शक्तावित्यस्य सन्यकाच उपदेश इति इट्प्रतिषेधः। सनि मीमाघुरभलभशकपतपदामच इस्मिति धातोरच

इमादेशः । अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः । सनाशंसभिक्ष उरित्युप्रत्ययः । प्रत्ययस्वरः । प्रभृती । भृ सत्तायामित्यस्य भावे क्तिन् । तादौ च निति कृत्यतावित्ति गतेः प्रकृतिस्वरत्वं । भुयाम । भू सत्तायामित्यस्याशीर्लिङि किदाशिषीति यासुट् । छंदस्युभयथेति तस्य सार्वधातुकत्वात्सलोपः । आगमस्वरः । यद्वा तस्मात्प्रार्थनायां लिङि यासुट् । बहुलं छंदसीति शपो लुक् । अनदंतत्वादियादेशो न भवति । सुष्टुतयः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । वस्वः । आगमानुशासनस्यानित्यत्वान्नुमभावः । संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः । यणादेशः ॥

भूरी॑णि॒ हि त्वे द॑धि॒रे अनी॒काग्ने॑ दे॒वस्य॒ यज्य॑वो॒ जना॑सः ।
स आ व॑ह दे॒वता॑तिं यविष्ठ॒ शर्धो॒ यद॒द्य दि॒व्यं यजा॑सि ॥४॥
भूरी॑णि । हि । त्वे इति॑ । द॒धि॒रे । अनी॑का । अग्ने॑ । दे॒वस्य॑ । यज्य॑वः । जना॑सः ।
सः । आ । व॒ह॒ । दे॒व॒ऽता॑तिं । य॒वि॒ष्ठ॒ । शर्धः॑ । यत् । अ॒द्य । दि॒व्यं । यजा॑सि ॥४॥

हे अग्ने देवस्य द्योतमानस्य तव संबंधिनो यज्यवो यष्टारोऽध्वर्युप्रभृतयो जनासो जना भूरीणि बहून्यनीका अनीकानि सेनारूपतया सर्वत्र प्रसृतानि ज्वालारूपाणि तेजांस्याहुतिप्रक्षेपेण त्वे त्वयि दधिरे हि । विदधिरे खलु । चक्रिरे इति यावत् । स तादृशस्त्वं देवतातिं यष्टव्यान्देवानिह कर्मण्यावह । आह्वय । हे यविष्ठ युवतम यद्यस्मात्कारणादद्यास्मिन्कर्मणि दिव्यं दिवि भवं देवसंबंधि शर्धस्तेजस्त्वं यजासि यजसि तस्माद्देवानाह्वयेति शेषः ॥ दधिरे । दधातेर्लिटि रूपं । हियोगादनिघातः । चित्त्वादंतोदात्तः । यज्यवः । यज देवपूजादिषु । यजिमनिशुंधिदसिजनिभ्यो युजिति युच् । व्यत्ययेनाद्युदात्तत्वं । देवतातिं । देवशब्दात्स्वार्थे सर्वदेवात्तातिलिति तातिल् । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । यजासि । यजेर्लेट्याडागमः । यद्योगादनिघातः ॥

यत्त्वा॒ होता॑रमन॒जन्मि॒येधे॑ निषा॒दय॑न्तो य॒जथा॑य दे॒वाः ।
स त्वं नो॑ अग्नेऽवि॒तेह बो॑ध्य॒धि श्रवां॑सि धेहि नस्त॒नूषु॑ ॥५॥
यत् । त्वा॒ । होता॑रं । अ॒न॒जन् । मि॒येधे॑ । नि॒ऽसा॒दय॑न्तः । य॒जथा॑य । दे॒वाः ।
सः । त्वं । नः॒ । अ॒ग्ने॒ । अ॒वि॒ता । इ॒ह । बो॒धि॒ । अधि॑ । श्रवां॑सि । धे॒हि॒ । नः॒ । त॒नूषु॑ ॥५॥

हे अग्ने यजथाय यजनार्थं निषादयंतो निवसंतो देवा दीप्यमाना ऋत्विजो मियेधे मेधे यज्ञे होतारं देवानामाह्वातारं त्वा त्वां यद्यस्मादनजन् घृताहुतिभिरांजन् । यद्वा निषादयंतो होतारं होमनिष्पादकं त्वा बर्हिष्युपवेशयंत ऋत्विजो घृतैरसिंचन् तस्मात्स तथाविधस्त्वमिहास्मिन्कर्मणि नोऽस्माकमविता पालयिता भवासीति बोधि । बुध्यस्व । किंच नस्तनूष्वस्माकं तनुजेष्वपत्येषु श्रवांस्यन्नान्यधि धेहि । अधिकं निधेहि ॥ अनजन् । अंजू व्यक्तिम्रक्षणकांतिगतिषु । अस्माल्लङि रुधादित्वात् श्नम् । छांदसत्वादल्लोपाभावः । अनिदितामित्युपधालोपः । निषादयंतः । षद्लृ विशरणगत्यवसादनेषु । चुरादिः । सदेरप्रतेरिति षत्वं । यद्वा । हेतुमति णिच् । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते णिचस्स्वरः । बोधि । बुध अवगमने । लोटि बहुलं छंदसीति शपो लुक् । सेर्ह्यपिच्चेति सिपो हिरादेशः । वा छंदसीति विकल्पेन पित्त्वाद्गुणः । हुझल्भ्यो हेर्धिरिति हेर्धिरादेशः । धकारलोपश्छांदसः । निघातः । धेहि । दधातेर्लोटि रूपं ॥ ॥१९॥

अग्निमुपसमिति पंचर्चमष्टमं सूक्तं त्रैष्टुभं । अत्रेयमनुक्रमणिका । अग्निमुपसमाद्याते वैश्वदेव्याविति । गाथी इति हशब्दप्रयोगादस्यापि सूक्तस्य गाथी ऋषिः । प्रथमापंचम्यौ वैश्वदेवताके शिष्टास्तिस्र आग्नेय्यः ॥ अस्य सूक्तस्योक्तो विनियोगः ॥ मरुत्वतीयशस्त्रेऽग्निर्नेतेत्येषा धाय्या । सूत्रितं च । अग्निर्नेता त्वं सोम क्रतुभिः पिन्वंत्यप इति धाय्याः । आ॰ ५ १४ । इति ॥

अ॒ग्निमु॒षसं॑म॒श्विना॑ दधि॒क्रां व्यु॑ष्टिषु हवते॒ वह्नि॑रु॒क्थैः ।
सु॒ज्योति॑षो नः शृण्वन्तु दे॒वाः स॒जोष॑सो अध्व॒रं वा॑वशा॒नाः ॥१॥

अ॒ग्निं । उ॒षसं॑ । अ॒श्विना॑ । द॒धि॒ऽक्रां । वि॒ऽउ॑ष्टिषु । ह॒व॒ते॒ । वह्निः॑ । उ॒क्थैः ।
सु॒ऽज्योति॑षः । नः॒ । शृ॒ण्व॒न्तु॒ । दे॒वाः॒ । स॒ऽजोष॑सः । अ॒ध्व॒रं । वा॒व॒शा॒नाः ॥१॥

गाथी ब्रूते । वह्निर्हविषां प्रापयितामिर्व्युष्टिषूषसां व्युच्छन्तीष्वपि यजनीयं देवमुषसमुषसोऽभिमानिनी देवतामश्विना अश्विनौ देवौ दधिक्रां। दधिक्रावा नाम कश्चिद्देवः तं दधिक्रावाणं। एतान्देवानुक्थैः शस्त्रैः शस्त्रसमाधनैरप्रगीतमंत्रात्मकैः सूक्तैर्हवते। आह्वयति। सुज्योतिषः सुष्ठु द्योतमाना नोऽस्माकमध्वरमस्मत्संबंधिनमिमं यज्ञं वावशानाः कामयमानाः सजोषसः परस्परं संगता भूत्वा सर्वे देवास्मदाह्वानं शृण्वंतु ॥ दधिक्रा । क्रमु पादविक्षेपे । दधीत्युपपदे जनसनखनक्रमगम इति विट् । विड्वनोरनुनासिकस्यादित्याकारः । कृदुत्तरपदप्रकृतिस्वरत्वं । व्युष्टिषु । उच्छी विवासे । भावे क्तिन् । व्रश्चादिना षत्वं । तादौ च निति कृत्यतावित्ति गतेः प्रकृतिस्वरत्वं । हवते । ह्वयतेर्बहुलं छंदसीति संप्रसारणं । सुज्योतिषः । सुष्ठु द्योतमाना इति विग्रहे द्युत दीप्तावित्यस्य द्युतेरिसिन्नादेश्च जः । उ० २ १११ । इतीसिन्प्रत्ययो दकारस्य जकारः । कृदुत्तरपदप्रकृतिस्वरत्वं । बहुव्रीहिपक्षे तु नञ्सुभ्यामित्युत्तरपदांतोदात्तता स्यात् । यथा । सुज्योतिषो नक्षत्रमसौ अभि ष्युः । ऋग्सं० १० ८९ १५ । इत्यत्रांतोदात्तता। तस्मादत्र नायं समासः किंतु तत्पुरुष एव । शृण्वंतु । श्रु श्रवणे इत्यस्माल्लोटि श्रुवः शृ चेति श्नुप्रत्ययः सन्नियोगेन धातोः शृ इत्यादेशः । निघातः । वावशानाः । वश कांतावित्यस्य यङ्लुकि रूपं । अभ्यासस्य दीर्घोऽकित इति दीर्घः । व्यत्ययेन शानच् । चित्स्वरः ॥

अग्ने॒ त्री ते॒ वाजि॑ना॒ त्री ष॒धस्था॑ ति॒स्रस्ते॑ जि॒ह्वा ऋ॑तजात पू॒र्वीः ।
ति॒स्र उ॑ ते त॒न्वो॑ दे॒ववा॑ता॒स्ताभि॑र्नः पाहि॒ गिरो॒ अप्र॑युच्छन् ॥२॥
अग्ने॑ । त्री । ते॒ । वाजि॑ना । त्री । स॒धऽस्था॑ । ति॒स्रः । ते॒ । जि॒ह्वाः । ऋ॒त॒ऽजा॒त॒ । पू॒र्वीः ।
ति॒स्रः । ऊं॒ इति॑ । ते॒ । त॒न्वः॑ । दे॒वऽवा॑ताः । ताभिः॑ । नः॒ । पा॒हि॒ । गिरः॑ । अप्र॑ऽयुच्छन् ॥२॥

हे अग्ने ते तव त्री वाजिना आज्यौषधिसोमात्मकानि त्रीण्यन्नानि त्री षधस्था त्रीण्याग्नीध्रीयादीनि धिष्ण्यानि स्थानानि । यद्वैकाहाहीनसत्राख्यानि त्रीणि स्थानानि । यद्वा त्रयो लोकाः । ऋतजात ऋतेषु सत्यभूतेषु यज्ञेषु समुत्पन्न हे अग्ने ते तव पूर्वीर्देवानामुदरपूरयित्र्यस्तिस्रो गार्हपत्याद्या जिह्वाः । हे अग्ने ते तव देववाता देवैरभिलषितास्तिस्रस्तन्वः पवमानपावकशुच्यात्मकानि त्रीणि शरीराणि । एवंभूतस्त्वमप्रयुच्छन्नप्रमाद्यन् सावधानो भूत्वा ताभिस्तनूभिर्नोऽस्माकं स्तोतॄणां गिरः स्तोत्रशस्त्रादीनि वाक्यानि पाहि। पालय ॥ तिस्रः । तिसृभ्यो जस इति जस उदात्तत्वं । जिह्वाः । लिह आस्वादने । लिहत्यामी रसानिति शेवायह्वजिह्वाग्रीवाप्वामीवा इति निपातनाद्वन् । लकारस्य जकारः । गुणाभावः । व्यत्ययेनांतोदात्तत्वं । देववाताः । वा गतिगंधनयोः । अस्मात्कर्मणि क्तः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । पाहि । पा रक्षणे इत्यस्य लोटि रूपं । निघातः । अप्रयुच्छन् । युच्छ प्रमादे । नञ्स्वरः ॥

अग्ने॑ भू॒रीणि॒ तव॑ जातवेदो॒ देव॑ स्वधावो॒ऽमृत॑स्य॒ नाम॑ ।
याश्च॑ मा॒या मा॒यिनां॑ विश्वमिन्व॒ त्वे पू॒र्वीः सं॑द॒धुः पृ॑ष्टबन्धो ॥३॥
अग्ने॑ । भू॒रीणि॑ । तव॑ । जा॒त॒ऽवे॒दः॒ । देव॑ । स्व॒धा॒ऽवः॒ । अ॒मृत॑स्य । नाम॑ ।
याः । च॒ । मा॒याः । मा॒यिनां॑ । वि॒श्व॒म्ऽइ॒न्व॒ । त्वे इति॑ । पू॒र्वीः । स॒म्ऽद॒धुः । पृ॒ष्ट॒ऽब॒न्धो॒ इति॑ पृष्टऽबन्धो ॥३॥

देव द्योतमान जातवेदो जातप्रज्ञ स्वधावोऽन्नवन्हे अग्नेऽमृतस्य मरणधर्मरहितस्य तव सर्वधिनो देवा भूरीणि बहूनि नाम नामानि तेजांसि त्वे त्वयि संदधुः । संदधिरे । किंच। विश्वमिन्व विश्वस्य संतर्पक पृष्टबंधो अपेक्षितफलप्रश्नविषयाणां स्तोतॄणां बंधो हे अग्ने मायिनामसुराणां पूर्वीर्भूयसीर्या माया देवास्त्वयि संदधुः

संप्रयुयुजिरे तास्त्वयि संति। तस्माद्यज्ञविघ्नकारिणां मायिनां मायाः परिहृत्यास्मदीयं यज्ञं पालयेति भावः॥ स्वधावः। स्वधास्यास्तीति मतुप्। मतुवसो रु संबुद्धौ छंदसीति नकारस्य रुः। अमृतस्य। नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं। नाम। णम प्रह्वत्वे। नामन् सीमन् व्योमन्नित्यादिना मनिन्प्रत्ययांतत्वेन निपातनान्मकारलोपो दीर्घश्च। नमयति सर्वानपि स्वाश्रयभूतान्पुरुषानिति नामानि तेजांसि। सुपां सुलुगिति सुपो लुक्। नित्त्वादाद्युदात्तः। मायिनां। माया एषां संतीति व्रीह्यादित्वादिनिः। यस्येति लोपः। प्रत्ययस्वरः। विश्वमिन्व। इवि व्याप्तिप्रीणनयोरित्यस्माद्विश्वशब्द उपपदे कर्मण्यणित्यण्प्रत्ययः। धातूपदेशावस्थायामिदितो नुमिति नुमि प्राप्ते लघूपधगुणो न भवति। विश्वमिन्वति प्रीणयतीति विश्वमिन्वः। तत्पुरुषे कृति बहुलमिति द्वितीयाया अलुक्। आमंत्रितत्वान्निघातः। संदधुः। डुधाञ् धारणपोषणयोरित्यस्य लिटचुसि रूपं। यद्वृत्तयोगादनिघातः। प्रत्ययस्वरः। पृष्टबधो। प्रच्छ ज्ञीप्सायामित्यस्य कर्मणि निष्ठायां ग्रहिज्यावयीत्यादिना संप्रसारणं। व्रश्चादिना षत्वं। बध बंधने इत्यस्मात् शृस्वृस्निहीत्यादिना उप्रत्ययः। षष्ठीसमासः। आमंत्रितत्वान्निघातः॥

अग्निर्नेता भग इव क्षितीनां दैवीनां देव ऋतुपा ऋतावा।
स वृत्रहा सनयो विश्ववेदाः पर्षद्विश्वाति दुरिता गृणंतं ॥४॥
अग्निः। नेता। भगःऽइव। क्षितीनां। दैवीनां। देवः। ऋतुऽपाः। ऋतऽवा।
सः। वृत्रऽहा। सनयः। विश्वऽवेदाः। पर्षत्। विश्वा। अति। दुःऽइता। गृणंतं ॥४॥

योऽयमग्निः क्षितीनां मनुष्याणां दैवीनां देवसंबंधिनीनां विशां नेतांतर्यामितया नियामकः। तत्र दृष्टांतः। ऋतुपा भग इव। यथा वसंतादृतूनां पालकः सूर्यः सर्वस्य स्वप्रकाशप्रदानेन प्रवर्तकः। तद्वत्। यश्चाग्निर्ऋतावा सत्यकर्मा वृत्रहा वृत्रस्य हंता सनयः सनातनः पुराणो विश्ववेदाः सर्वविषयज्ञानवान्सर्वज्ञो देवो द्योतमानः स तथाविधोऽग्निर्गृणत् तद्विषयां स्तुतिं कुर्वंत स्तोतारं विश्वा दुरिता सर्वाणि दुरितान्यति अतिक्रम्य पर्षत्। पारं नयतु॥ नेता। णीञ् प्रापणे इत्यस्य तृचि रूपं। चित्स्वरः। क्षितीनां। क्षि निवासगत्योः। क्तिच्क्तौ च संज्ञायामिति क्तिच्। नामन्यतरस्यामित्यंतोदात्तत्वं। दैवीनां। देवशब्दात्संबधार्थे देवाद्यञञाविति अञ्। टिड्ढाणञिति ङीप्। ञित्त्वादाद्युदात्तः। ऋतुपाः। पा रक्षणे इत्यस्मादन्येभ्योऽपि दृश्यंत इति विच्। ऋतून्पातीत्युपपदसमासे गतिकारकोपपदात्कृदुत्तरपदप्रकृतिस्वरः॥ पा॰ २. २. १९। इति समासः। कृदुत्तरपदप्रकृतिस्वरः। वृत्रहा। हन हिंसागत्योः। ब्रह्मभ्रूणवृत्रेषु क्विबिति क्विप्। विश्ववेदाः। बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं। पर्षत्। पॄ पालनपूरणयोरित्यस्य लेटि सिब्बहुलमिति सिप्। अडागमः। इतश्च लोप इतीकारलोपः। पादादित्वादनिघातः। गृणत्। गॄ शब्दे। लटः शतृ। क्र्यादित्वात् श्ना। शतृत्वात् श्नाभ्यस्तयोरात इत्याकारलोपः। शतृप्रत्ययस्वरः॥

दधिक्रामग्निमुषसं च देवीं बृहस्पतिं सवितारं च देवं।
अश्विना मित्रावरुणा भगं च वसून्रुद्राँ आदित्याँ इह हुवे ॥५॥
दधिऽक्रां। अग्निं। उषसं। च। देवीं। बृहस्पतिं। सवितारं। च। देवं।
अश्विना। मित्रावरुणा। भगं। च। वसून्। रुद्रान्। आदित्यान्। इह। हुवे ॥५॥

हे दधिक्रावादयः सर्वे देवा होताहं दधिक्रां दधिक्रावाणमग्निमुषसं च देवीमुषोऽभिमानिनीं देवतां च बृहस्पतिं देवं द्योतमानं सवितारं सर्वस्य जगतः प्रेरकं देवं च अश्विना अश्विनौ देवौ मित्रावरुणौ भगं सूर्यं च वसून्नष्टौ वसून् रुद्रानेकादश रुद्रान् आदित्यान् द्वादशादित्यान् एतान्सर्वान् हविर्भुजो युष्मानिहास्मदीये कर्मणि हुवे। हविःस्वीकरणार्थमाह्वयामि॥ दधिक्रा। दधातीति दधिः। आदृगमहनेत्यादिना किप्रत्ययः। दधीत्युपपदे क्रमेर्जनसनेत्यादिना विट्। विड्वनोरित्यात्वं। देवीं। देवस्य पत्नी देवी। पुंयोगादाख्यायामिति ङीष्। यस्येति लोपः। प्रत्ययस्वरेणांतोदात्तः। बृहस्पतिं। तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चेति पतिशब्दे

परतो बृहच्छब्दस्य तलोपः सुडागमश्च। उभे वनस्पत्यादिषु युगपदित्युभयपदाद्युदात्तत्वं। सवितारं। षू प्रेरणे इत्यस्य तृचि आर्धधातुकस्येड्वलादेरितीडागमः। चित्त्वादन्तोदात्तत्वं। रुद्राँ आदित्याँ इत्यत्र संहितायां शमो नकारस्य दीर्घादटि समानपाद इति रुत्वं। ततः पूर्वस्यावर्णस्य आतोऽटि नित्यमित्यनुनासिकत्वं। भो भगो अघो अपूर्वस्य योऽशीति रोर्यादेशः। लोपः शाकल्यस्येति तस्य लोपः। यलोपस्यासिद्धत्वात्स्वरसंधिर्न भवति। अतो रुद्राँ आदित्याँ इति भवति। एवमेकस्मिन्पादे आकारादटि परतो नकारस्य रुत्वयत्वपूर्वसवर्णानुनासिकादेशा उन्नेयाः। हुवे। ह्वयतेर्लटि बहुलं छंदसीति संप्रसारणं। इटोऽत्व आत्मनेपदानामित्येत्वं। उवङादेशः। निघातः॥ ॥२०॥

इमं न इति पंचर्चं नवमं सूक्तं। अत्रेयमनुक्रमणिका। इमं न उपांत्ये अनुष्टुभौ विराड्रूपा सतोबृहती चान्त्येति। द्वितीयातृतीये अनुष्टुभौ पंचमी विराड्रूपा सतोबृहती च। अनुक्तत्वात्प्रथमाचतुर्थ्यौ त्रिष्टुभौ। अस्यापि गाथी ऋषिः॥ पशौ स्तोकानुवचन इदं सूक्तं। सूत्रितं च। जुषस्व सप्रथस्तममिमं नो यज्ञं। आ॰ ३ ४.। इति॥

इमं नो॑ य॒ज्ञम॒मृते॑षु धेही॒मा ह॒व्या जा॑तवेदो जुषस्व।
स्तो॒काना॑मग्ने॒ मेद॑सो घृ॒तस्य॒ होतः॒ प्राशा॑न प्रथ॒मो नि॒षद्य॑॥१॥
इ॒मं। नः॒। य॒ज्ञं। अ॒मृते॑षु। धे॒हि॒। इ॒मा। ह॒व्या। जा॒त॒ऽवे॒दः॒। जु॒ष॒स्व॒।
स्तो॒काना॑ं। अ॒ग्ने॒। मेद॑सः। घृ॒तस्य॑। होतः॑। प्र। अ॒शा॒न॒। प्र॒थ॒मः। नि॒ऽसद्य॑॥१॥

गाथी प्रार्थयते। हे जातवेदो जातप्रज्ञाग्ने नोऽस्माकं संबंधिनमिमं यज्ञं पश्वाख्यममृतेषु मरणधर्मरहितेषु यष्टव्येषु देवेषु धेहि। तदधीनतया समर्पय। त्वं चेमा इमान्यस्माभिर्दीयमानानि हव्या हव्यानि हवींषि जुषस्व। सेवस्व। किंच होतर्देवानामाह्वातः। अग्निर्वै देवानां होतेत्याम्नानात्। तादृश हे अग्ने निषद्य वेद्यामुपविश्य प्रथमः सर्वेषामृत्विजामादिमः सन् मेदसो वपाख्यस्य हविषो घृतस्याज्यस्य च स्तोकानां। द्वितीयार्थे षष्ठी। मेदोघृतयोर्ये स्तोका बिंदवो विद्यंते तान्प्रकर्षेणाशान। भक्षय। पिबेत्यर्थः॥ धेहि। दधातेर्लोटि रूपं। जुषस्व। जुषी प्रीतिसेवनयोरित्यस्य लोट्यात्मनेपदिनो रूपं। अशान। अश भोजन इत्यस्य लोटि हलः श्नः शानज्झौ। पा॰ ३ १ ८३। इति शानजादेशः। पश्चादतो हेरिति हेर्लुक्। निघातः। प्रथमः। प्रथ प्रख्याने। प्रथमं प्रथतेऽस्माद्द्वितीयादय इति। प्रथेरमच्। उ॰ ५ ६८। इत्यमच्। चित्त्वादन्तोदात्तः। निषद्य। षद्लृ विशरणगत्यवसादनेष्वित्यस्य ल्यपि रूपं। सदेरप्रतेरिति षत्वं। ल्यतीति प्रत्ययात्पूर्वस्योदात्तत्वं॥

घृ॒तवं॑तः पावक ते स्तो॒काः श्चो॑तंति॒ मेद॑सः।
स्वध॑र्मन्दे॒ववी॑तये॒ श्रेष्ठं॑ नो धेहि॒ वार्य॑॥२॥
घृ॒त॒ऽवं॑तः। पा॒व॒क॒। ते॒। स्तो॒काः। श्चो॒तं॒ति॒। मेद॑सः।
स्वऽध॑र्मन्। दे॒व॒ऽवी॑तये। श्रेष्ठं॑। नः॒। धे॒हि॒। वार्य॑॥२॥

पावक पापशोधक हे अग्ने स्वधर्मन् स्वायत्तधर्मके मार्गेऽस्मिन्यज्ञे ते तव भक्षणार्थं देववीतये यजनीय देवानां भक्षणार्थं च घृतवंतो घृतोपेता मेदसो मेदोरूपस्य हविषः स्तोका बिंदवः श्चोतंति। क्षरंति। अथवा देववीतये देवस्य तव वीतय इति योजनीयं। तस्माद्वार्यं वरणीयं संभजनीयं श्रेष्ठमुत्तमं धनं नोऽस्मभ्यं धेहि। प्रयच्छ॥ श्चोतंति। श्चुतिर् क्षरणे इत्यस्य लटि रूपं। स्वधर्मन्। स्वेऽङ्गभूता धर्माणो यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। सुपां सुलुगिति सप्तम्या लुक्। देववीतये। देवानां वीतिः प्रीतिर्यस्यां भक्षणक्रियायां सा देववीतिः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। श्रेष्ठं। प्रशस्यशब्दादतिशायन इष्ठन्। प्रशस्यस्य श्र इति श्रादेशः। गुणः। एकादेशस्वरः। धेहि। दधातेर्लोटि। वार्यं। वृङ् संभक्तौ। ऋहलोर्ण्यदिति ण्यत्। ईडवंदेत्यादिनाद्युदात्तत्वं। एतिस्तुशास्वित्यादिना क्यप् वृणोतेरेव न वृङः॥

तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय संत्य ।
ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भव ॥३॥
तुभ्यं । स्तोकाः । घृतऽश्चुतः । अग्ने । विप्राय । संत्य ।
ऋषिः । श्रेष्ठः । सं । इध्यसे । यज्ञस्य । प्रऽअविता । भव ॥३॥

संत्य यष्टृभिः संभजनीय यद्वा यष्टृभ्यः फलप्रद हे अग्ने विप्राय मेधाविने तुभ्यं त्वदर्थं घृतश्चुतः घृतक्षरणयुक्ताः स्तोकाः संति। ऋषिरतीन्द्रियार्थदर्शी अत एव श्रेष्ठः सर्वातिशायी त्वं समिध्यसे। घृतयुक्तमेदोबिंदुभिः सम्यक् प्रज्वाल्यसे। स त्वं यज्ञस्यास्माभिः क्रियमाणस्य पशुयागस्य प्राविता प्रकर्षेण पालको भव॥ तुभ्यं। युष्मच्छब्दस्य ङयि तुभ्यमह्यौ ङयि। पा॰ ७.२.९५। इति तुभ्यादेशः। ङेप्रथमयोरमिति ङेरमादेशः। ङयि चेत्याद्युदात्तत्वं। संत्य। षण संभक्तौ षणु दाने वा। क्तिच्क्तौ च संज्ञायामिति क्तिच्। न क्तिचि दीर्घश्चेति दीर्घनलोपाभावः। संतौ भवो भवे छंदसीति तत्र साधुरिति वा यत्प्रत्ययः। यस्येति लोपः। आमंत्रितत्वान्निघातः। इध्यसे। ञिइन्धी दीप्तौ। कर्मणि यक्। कित्त्वादनुनासिकलोपः। निघातः। प्राविता। अव रक्षणादिषु। तृचि रूपं। समासस्वरः। भव। निघातः॥

तुभ्यं श्चोतंत्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य ।
कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर ॥४॥
तुभ्यं। श्चोतंति। अध्रिगो इत्यध्रिऽगो। शचीऽवः। स्तोकासः। अग्ने। मेदसः। घृतस्य।
कविऽशस्तः। बृहता। भानुना। आ। अगाः। हव्या। जुषस्व। मेधिर ॥४॥

अध्रिगो अधृतगमन सततगमनस्वभाव। अत एव शचीवः शक्तिमन् हे अग्ने तुभ्यं त्वदर्थं मेदसो मेदोरूपस्य हविषो घृतस्य स्तोकासो बिंदवः श्चोतंति। स्रवंति। तस्मात्कविशस्तः कविभिः कर्माभिज्ञैर्होत्रादिभिः स्तुतस्त्वं बृहता प्रभूतेन भानुना तेजसा सहितः सन् आगाः। अस्मदीयं पशुयागमभ्यागच्छ। आगत्य च मेधिर प्रज्ञावन्नग्ने हव्या अस्माभिर्दीयमानानि वपादीनि हवींषि जुषस्व। सेवस्व॥ अध्रिगो। गमनं गौरिति गम्लृ सृप्लृ गतावित्यस्य भावे गमेर्डोरिति डोः। अधृता गौर्यस्येत्यत्र गोस्त्रियोरुपसर्जनस्येति गोशब्दस्य ह्रस्वत्वं। धृतशब्दस्य पृषोदरादित्वात् ध्रिभावः। संबोधने संबुद्धौ च। पा॰ ७.३.१०८। इति गुणः। अपादादित्वान्निघातः। शचीवः। मतुपो मतुवसो रुरिति रुत्वं। कविशस्तः। शंसु स्तुतावित्यस्य निष्ठायामनुनासिकलोपः। यस्य विभाषेतीट्प्रतिषेधः। थाथघञ्क्ताजबित्रकाणामित्यंतोदात्तत्वं। भानुना। भा दीप्तौ। दाभाभ्यां नुरिति कर्तरि नुः। प्रत्ययस्वरः। अगाः। इण् गतावित्यस्य छांदसे लुङि इणो गा लुङीति गादेशः। गातिस्थेति सिचो लोपः। निघातः। मेधिर। मेधारथाभ्यामिरन्निरचौ वक्तव्याविति इरन्। आमंत्रितत्वान्निघातः॥

ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे ।
श्चोतंति ते वसो स्तोका अधि त्वचि प्रति तान्देवशो विहि ॥५॥
ओजिष्ठं । ते । मध्यतः । मेदः । उत्ऽभृतं । प्र । ते । वयं । ददामहे ।
श्चोतंति। ते। वसो इति। स्तोकाः। अधि। त्वचि। प्रति। तान्। देवऽशः। विहि ॥५॥

हे अग्ने ओजिष्ठं अतिशयेन सारयुक्तं मेदो वपाख्यं हविर्मध्यतः पशोर्मध्यभागात्ते त्वदर्थमुद्भृतमुद्धृतं मध्वर्य्वादयो वयमस्मिन्पशौ ते तुभ्यं प्रददामहे। उद्धृतं तद्वपाख्यं हविः प्रयच्छामः। वसो सर्वस्य जगतो वासयितरग्ने त्वच्यधि वपायामुपरि ये स्तोका घृतमिश्रा बिंदवस्ते ते त्वदर्थं श्चोतंति। स्रवंति। यद्वा ते तव त्वच्यधि ज्वालाख्यशरीरस्योपरि श्चोतंति। तान् स्तोकान्देवशो देवेषु प्रति विहि। प्रत्येकं विभजस्व॥ मध्यतः।

मध्यशब्दात् पंचम्यास्तसिः । पा॰ ५ ४ ४४ १ । इति तसिः । प्रत्ययस्वरः । उद्भृतं । हृञ् हरणे । कर्मणि क्तः । हृग्रहोर्भश्छंदसीति हकारस्य भकारः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । ददामहे । दद दाने इत्यस्य लटि ङित्त्वादात्मनेपदं । अतो दीर्घो यञीति दीर्घः । निघातः । शृणोति । श्रुतिर् श्रवणे । पादादित्वा दनिघातः । अंतर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः । त्वचि । तनु विस्तारे । तनोतेरनश्च वः । उ॰ २ ६३ । इति कर्तरि कर्मणि वा चिक् । अकारनकारयोर्वकारादेशः । तनोति तायते वा त्वक् । सावेकाच इति विभक्तेरुदात्तत्वं । विहि । वी कांतिगत्यादिष्वित्यस्य लोण्यदादित्वाच्छपो लुक् । हुश्नुभ्यादयः । निघातः । खिलं ॥ ॥ २१ ॥

अयं स इति पंचर्चं दशमं सूक्तं । अत्रेयमनुक्रमणिका । अयं स उपांत्यानुष्टुप् पुरीष्येभ्योऽग्निभ्य इति । ऋषिः कौशिको गाथी । पंचर्चात्मकपा अग्नयो देवता । चतुर्थ्यनुष्टुप् शिष्टास्त्रिष्टुभः ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः । अग्निचयने इष्टकाप्रणयने पुरीष्यास इत्येषानुवचनीया । प्रेषितः पुरीष्यचितयेऽन्वाहेत्युपक्रम्य पुरीष्यासो अग्नय इति त्रिरूपाशु सप्रणवामिति सूत्रितं । आ॰ ४ ८ ॥

अ॒यं सो अ॒ग्निर्यस्मि॒न्त्सोम॒मिंद्रः॑ सु॒तं द॒धे ज॒ठरे॑ वावशा॒नः ।
स॒ह॒स्रिणं॒ वाज॒मत्यं॒ न सप्ति॑ ससवा॒न्त्सन्त्स्तू॑यसे जातवेदः ॥ १ ॥

अ॒यं । सः । अ॒ग्निः । यस्मि॑न् । सोम॑म् । इंद्रः॑ । सु॒तम् । द॒धे । ज॒ठरे॑ । वा॒व॒शा॒नः ।
स॒ह॒स्रिण॑म् । वाज॑म् । अत्य॑म् । न । सप्ति॑म् । स॒स॒ऽवान् । सन् । स्तू॒य॒से॒ । जा॒त॒ऽवे॒दः॒ ॥ १ ॥

गाथी ब्रूते । अयमुत्तरवेद्यामाहृत्याधिकरणभूताहवनीयरूपतया दृश्यमानोऽग्निः स तथाविधः खलु वावशानः सोमं कामयमान इंद्रो यस्मिन्नग्नौ सुतमभिषवादिसंस्कारोपेतं सोमं जठरे स्वोदरे दधे दधार । तस्मात्तादृशमहिमोपेतः सोऽग्निरिति पूर्वेणान्वयः । किंच । हे जातवेदः सहस्रिणं । सहस्रं नानारूपता यस्य यो भजति स सहस्री । तमत्यं वेगवशादतनशीलं सप्तिं न अश्वमिव वाजं आज्यौषधिसोमादिनानेकप्रकारं हविर्लक्षणमन्नं ससवान् भजिवान् सन् त्वं स्तूयसे । स्तोतृभिरस्माभिः स्तूयमानो वर्तसे ॥ दधे । दधातेर्लिटि लिट स्तझयोरेशिरेजिति तप्रत्ययस्य एशित्यादेशः । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः । वावशानः । वश कांता वित्यस्य यङ्लुकि दीर्घोऽकित इत्यभ्यासस्य दीर्घः । व्यत्ययेन शानच् । चित्स्वरः । ससवान् । षण संभक्तौ । क्रसादिष्वभावः । नलोपः । प्रत्ययस्वरः । स्तूयसे । ष्टुञ् स्तुतौ । कर्मणि यक् । अकृत्सार्वधातुकयोरिति दीर्घः । निघातः ॥

अग्ने॒ यत्ते॑ दि॒वि वर्चः॑ पृथि॒व्यां यदोष॑धीष्व॒प्स्वा य॑जत्र ।
येनां॒तरि॑क्षमु॒र्वा॑त॒तंथ॑ त्वे॒षः स भा॒नुर॑र्ण॒वो नृ॒चक्षाः॑ ॥ २ ॥

अग्ने॑ । यत् । ते॒ । दि॒वि । वर्चः॑ । पृ॒थि॒व्याम् । यत् । ओष॑धीषु । अ॒प्ऽसु । आ । य॒ज॒त्र॒ ।
येन॑ । अं॒तरि॑क्षम् । उ॒रु । आ॒ऽत॒तंथ॑ । त्वे॒षः । सः । भा॒नुः । अ॒र्ण॒वः । नृ॒ऽचक्षाः॑ ॥ २ ॥

यजत्र यजनीय हे अग्ने दिवि द्युलोके यद्वर्च आदित्याख्यं यज्ज्योतिस्तत्तवैव ज्योतिः । पृथिव्यामाहवनीयादिरूपतया वर्तमानं यत्तेजस्तत्त्वदीयमेव । प्रसिद्धं तेजोऽभिधाय गूढं ज्योतिरभिधत्ते । यदोषधीष्वप्स्विति । ओषधीष्वरणिप्रभृतिषु काष्ठेषु यत्तेजः । यद्वा । ओषधीषु वनस्पत्यादिषु सामान्यं यत्तेजोऽप्सु जलेषु यदौर्वाख्यं तेजस्तत्सर्वं आ सर्वत्र वर्तमानं तेजस्त्वावकमेव । किंच येन वायुरूपेण तेजसांतरिक्षमाकाशमुर्वाततंथ आतेनिथ विस्तीर्णं कृतवानसि । त्वेषो दीप्यमानः अत एव भानुर्भासमानो नृचक्षा नृणां साक्षितया द्रष्टार्णवः समुद्रवन्महान् । स तादृशस्त्वमंतरिक्षमाततिनिथेति पूर्वेणान्वयः । सूक्तार्थे वाजसनेयकं । अग्ने यत्ते दिवि वर्च इत्यादित्यो वा अस्य दिवि वर्चः पृथिव्यामित्ययमग्निः पृथिव्यां यदोषधीष्वप्स्वा यजत्रेति य एवौषधिषु चाप्सु चाग्निस्तमेतदाह येनांतरिक्षमुर्वाततंथेति वायुः स त्वेषः स भानुरर्णवो नृचक्षा इति महात्म

भानुरर्णवो नृचक्षा इत्येतत् । शत० ब्रा० ७. १. १. २३ । इति ॥ पृथिव्यां । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं । ओषधीषु । ओषधेश्च विभक्तावप्रथमायामिति दीर्घत्वं । अप्सु । साविकाच इति विभक्तेरुदात्तत्वं । आततंथ । तनु विस्तारे इत्यस्य लिटि थलि बभूथाततंथ जगृम्भ ववर्थेति निपातनादिडभावाभ्यासलोपा न भवंति । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । यद्वृत्तयोगादनिघातः । अर्णवः । अर्णांस्यस्मिन्संतीति मत्वर्थे वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वप्रत्ययः । अर्णसः सलोपश्चेति सलोपः । प्रत्ययस्वरः । नृचक्षाः । चक्षिङ् व्यक्तायां वाचि । अभिव्यक्तवाग्वाच्यय धातुरत्राभिव्यक्तिमात्रे वर्तते । चक्षेर्बहुलं शिच्चेत्यसुन् । कृदुत्तरपदप्रकृतिस्वरः ॥

अग्ने॑ दि॒वो अर्ण॒मच्छा॑ जिगा॒स्यच्छा॑ दे॒वाँ ऊ॑चिषे॒ धिष्ण्या॒ ये ।
या रो॑च॒ने प॒रस्ता॒त्सूर्य॑स्य॒ याश्चा॒वस्ता॑दुप॒तिष्ठ॑न्त॒ आपः॑ ॥३॥
अग्ने॑ । दि॒वः । अर्णं॑ । अच्छ॑ । जि॒गा॒सि॒ । अच्छ॑ । दे॒वान् । ऊ॒चि॒षे॒ । धिष्ण्याः॑ । ये ।
याः । रो॒च॒ने । प॒रस्ता॑त् । सूर्य॑स्य । याः । च॒ । अ॒वस्ता॑त् । उ॒प॒ऽतिष्ठ॑न्ते । आपः॑ ॥३॥

हे अग्ने त्वं दिवोऽर्णं द्युलोके वर्तमानमर्णोऽम्भोऽच्छाभिलक्ष्य जिगासि । धूमद्वारा प्राप्नोषि । किंच । धिष्ण्याः । धिषं वाक्पतित्येतद्देहमुष्णत्वेणीकुर्वतीति धिष्ण्याः प्राणाभिमानिनो देवाः । तान्प्राणाख्यान्देवानच्छानुक्रमेणोचिषे । समवेतान्करोषि । समवेता भवतेत्युक्तवानसीत्यर्थः । सूर्यस्य सूर्यलोकस्य परस्तादुपरि रोचने । रोचनो नामायं लोको यत्रायं ज्योतिस्तपति । तस्मिन्भासमाने रोचनाख्ये लोके या आपो विद्यंते अवस्तात्सूर्यलोकादधस्तादंतरिक्षलोके याश्चाप उपतिष्ठंते वर्तंते ता उभयीरपस्त्वं प्रेरयसि । उक्तार्थो वाजसनेयिभिः स्पष्टमभिहितः । आपो वा अस्य दिवोऽर्णस्ता एष धूमेनाच्छैत्यच्छा देवां ऊचिषे धिष्ण्या ये इति प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इष्णंति या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठंत आप इति रोचनो ह नामैष लोको यत्रैष एतत्तपति तद्याश्चेतं परेणापो याश्चावरेण ता एतदाह । शत० ब्रा० ७. १. १. २४ । इति । ता उभयीरपस्त्वं प्रेरयसीति ॥ अर्णं । ऋ गतावित्यस्मादुदके नुट् चेत्युमुन्नुडागमश्च । अर्यते प्रार्थ्यते तृषितैरिपासुभिरित्यर्णः । सकारलोपश्छांदसः । नित्त्वादाद्युदात्तः । जिगासि । गा स्तुतौ च छंदसीत्ययं धातुश्चकाराद्गमने वर्तमानो जुहोत्यादिः । बहुलं छंदसीत्यभ्यासस्येत्वं । निघातः । ऊचिषे । वच परिभाषणे वृत्र व्यक्तायां वाचीत्येतस्य लिट आर्धधातुकत्वाद्ब्रुवो वचिः । पा० २. ४. ५३ । इति वच्यादेशः । असंयोगाल्लिट् किदिति कित्त्वाद्वचिस्वपीत्यादिना संप्रसारणं । अभ्यासस्य लिट्यभ्यासस्योभयेषामिति संप्रसारणं । आर्धधातुक इट् । निघातः । धिष्ण्याः । उप स्तुप दाहे । धिष उष्णतीति सानसिधर्णसिपर्णसितंडुलांकुशचषालेल्वलपल्वलधिष्ण्यशल्या इति निपातनात् यगुडागमधात्वादिलोपोपपदह्रस्वादयः सर्वे सिद्धा भवंति । नित्त्वादाद्युदात्तः । अवस्तात् । अवरशब्दात् दिक्छब्देभ्यः सप्तमीपंचमीत्यादिना अस्तातिः । तस्मिन्विभाषावरस्य । पा० ५. ३. ४१. । इत्यवादेशः । प्रत्ययस्वरः । उपतिष्ठंते । ष्ठा गतिनिवृत्तौ । उपपूर्वात्तिष्ठतेरकर्मकाच्च । पा० १. ३. २६. । इत्यात्मनेपदं । यद्वृत्तयोगादनिघातः ॥

पु॒री॒ष्या॑सो अ॒ग्नयः॑ प्राव॒णेभिः॑ स॒जोष॑सः ।
जु॒षन्तां॑ य॒ज्ञम॒द्रुहो॑ऽनमी॒वा इषो॑ म॒हीः ॥४॥
पु॒री॒ष्या॑सः । अ॒ग्नयः॑ । प्र॒व॒णेभिः॑ । स॒ऽजोष॑सः ।
जु॒षन्तां॑ । य॒ज्ञं । अ॒द्रुहः॑ । अ॒न॒मी॒वाः । इषः॑ । म॒हीः ॥४॥

पुरीष्यासः सिकतासंमिश्रा अप्सयांश्चत्या अग्नयः प्रवणेभिर्मृत्खननसाधनभूतैरभ्र्यादिभिः सहिताः सजोषसः परस्परसंगताः संतो यज्ञमस्माभिः क्रियमाणमग्निचयनपूर्वकमिमं सोमयागं जुषंतां । सेवंतां । किंच । अद्रुहो ऽद्रोहकारो यूयमनमीवा रोगादिवर्जिता महीर्महत्य इष ऊर्जो रोगादिरहितान्यन्नान्यस्मभ्यं प्रयच्छत । पुरीष्यासः । पॄ पालनपूरणयोः । ईषन्नित्यनुवृत्तौ शॄपॄभ्यां कित् । उ० ४. २७. । इतीषन्प्रत्ययः किच्च । कित्त्वाद्गुणे प्रतिषिद्ध उदोष्ठ्यपूर्वस्येत्युत्वं । रपरः । पृणाति पूर्यते वेति पुरीषं । पुरीषं पृणातेः पूरयतेर्वा । नि० २. २२. । इति यास्कः ।

तदर्हतीति पुरीष्याः। छंदसि चेति यप्रत्ययः। यचि भमिति भसंज्ञायां यस्येति लोपः। प्रत्ययस्वरः। प्रावणेभिः। वन षण संभक्तावित्यस्मात्पुंसि संज्ञायां घः प्रायेणेति करणे घप्रत्ययः। प्रकर्षेण वन्यते सभज्यते संश्लिष्यते मृद्भिरिति प्रावणानि खनित्राणि। प्रनिरतः। पा॰ ८.४.५। इत्यादिना णत्वं। वनं समासे। पा॰ ६.२.१७८। इत्यंतोदात्तत्वं। कृदुत्तरपदप्रकृतिस्वरः। यद्वा। प्रुङ् गतौ। प्रवते गच्छति मृत्खननं प्रतीति चलनशब्दार्थादकर्मकाद्युच। पा॰ ३.२.१४८। इति युच। चित्स्वरः। पूर्वस्मिन्पक्षेऽवग्रहाभावश्छांदस इति वक्तव्य। जुषत। जुषी प्रीतिसेवनयोरित्यस्य लोटि रूप। पादादित्वादनिघातः। महीः। महच्छब्दादुगितश्चेति ङीप। तकारलोपश्छांदसः। प्रत्ययस्वरेणांतोदात्तः॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥५॥
इळां। अग्ने। पुरुऽदंसं। सनिं। गोः। शश्वत्ऽतमं। हवमानाय। साध।
स्यात्। नः। सूनुः। तनयः। विजाऽवा। अग्ने। सा। ते। सुऽमतिः। भूतु। अस्मे इति॥५॥

एषा ऋक् पूर्वमेव व्याख्याता॥ ॥२२॥

निर्मथितः सुधित इति पंचर्चमेकादश सूक्तं। अत्रानुक्रमणिका। निर्मथितो देवश्रवा देववातश्च भारतौ तृतीया सतोबृहतीति। भरतस्य पुत्रौ देवश्रवा देववातश्चोभावस्य ऋषी। तृतीया सतोबृहती। शिष्टास्त्रिष्टुभः। अग्निर्देवता। आ होतेत्यादिसूक्तदशकस्योक्तो विनियोगः प्रातरनुवाकाश्विनशस्त्रयोः। इळामग्न इत्यस्या विनियोगोऽसकृदुपदिष्टः॥

निर्मथितः सुधित आ सधस्थे युवा कविरध्वरस्य प्रणेता।
जूर्यत्स्वग्निरजरो वनेष्वत्रा दधे अमृतं जातवेदाः ॥१॥
निःऽमथितः। सुऽधितः। आ। सधऽस्थे। युवा। कविः। अध्वरस्य। प्रऽनेता।
जूर्यत्ऽसु। अग्निः। अजरः। वनेषु। अत्र। दधे। अमृतं। जातऽवेदाः॥१॥

भारतावृषी स्तोत्रं कुर्वाते। योऽग्निर्निर्मथितोऽग्निष्टोमादिकर्मस्वरण्योर्नितरां मथितः सन सधस्थे यजमानगृहे सुधितो गार्हपत्यादिषु त्रिषु कुंडेषु सुष्ठु निहितः निधाय च काष्ठप्रक्षेपेण प्रज्वाल्यमानो युवा प्रवृद्धः अत एवाध्वरस्य ज्योतिष्टोमादेः प्रणेता प्रकर्षेणानेता निर्वाहको नेतृत्वादेव कविः क्रांतदर्शी। तथाविधो जातवेदाः सर्वविषयाभिज्ञानवान सोऽग्निर्वनेषु महारण्येषु जूर्यत्सु दावाग्निसंबधाज्जूर्यमाणेषु जरां नाशं प्राप्नुवत्स्वपि स्वयमजरो जरारहितः प्रत्युत दीप्यमानः सन अत्र एव स्तुतिं कुर्वाणेषु यजमानेष्वमृतं क्षयरहितं प्रभूतमन्नमादधे। निदधाति॥ सुधितः। दधातेः कर्मणि निष्ठायां सुधितवसुधितनेमधितेत्यादिना निपातनाद्धि इत्यादेशः। गतिरनंतर इति गतेः प्रकृतिस्वरत्व। जूर्यत्सु। जूरी ज्वरी हिंसावयोहान्योः। व्यत्ययेन शतृप्रत्ययः। दिवादित्वाच्छ्यन्। नित्त्वादाद्युदात्तः। अजरः। जॄ वयोहानावित्यस्मात्भाव ऋदोरबित्यप्प्रत्ययः। गुणः। नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं। दधे। दधातेर्वर्तमाने लिटि रूप। जातवेदाः। जनी प्रादुर्भाव इत्यस्य क्ते जनसनखनां सञ्झलोरित्याकारः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्व॥

अमंथिष्टां भारता रेवदग्निं देवश्रवा देववातः सुदक्षं।
अग्ने वि पश्य बृहताभि रायेषां नो नेता भवतादनु द्यून ॥२॥
अमंथिष्टां। भारता। रेवत्। अग्निं। देवऽश्रवाः। देवऽवातः। सुऽदक्षं।
अग्ने। वि। पश्य। बृहता। अभि। राया। इषां। नः। नेता। भवतात्। अनु। द्यून॥२॥

हे अग्ने भारता भारतौ भरतस्य पुत्रौ देवश्रवा देववातश्चेत्युभौ सुदक्षं शोभनसामर्थ्योपेतं रेवतं रयिमंतमग्निमंगनादिगुणोपेतं त्वाममंथिष्टां। अग्निष्टोमादिकर्मप्राप्त्यर्थमरण्योरुदपादयतां। मथनेन त्वामुत्पादितवंतावित्यर्थः। तादृशस्त्वं बृहता प्रभूतेन राया धनेन सहितः सन् अभि अभिमुखो भूत्वा वि पश्य। अस्मान्विशेषेणानुग्रहदृष्ट्या वीक्षस्व। किंच। अनु द्यून्। द्युशब्दोऽहर्वाची वस्तोर्द्युरिति तन्नामसु पाठात्। द्युनन् सर्वेषु दिवसेषु नोऽस्माकमिषामन्नानां नेता आनेता भवतात्। भव॥ अमंथिष्टां। मन्थ विलोडने इत्यस्माल्लुङि सिच्। वदव्रजहलंतस्याचः। पा॰ ७. २. ३। इति वृद्धौ प्राप्तायां नेटीति प्रतिषेधः। तस्थस्थमिपामित्यादिना तसस्तामादेशः। पादादित्वादनिघातः। अटस्वरः। भारता। भरतस्यापत्यमित्यर्थ उत्सादित्वादञ्। तद्धितेष्वचामादेरित्यादिवृद्धिः। ञित्स्वरः। रेवत्। रयिशब्दान्मतुप्। वत्वोदात्तत्वसंप्रसारणपरपूर्वत्वगुणमुब्लोपाः। देवश्रवाः। श्रु श्रवणे। असुन्निति कर्मण्यसुन्। देवैः श्रूयते प्रख्याप्यतेऽसाविति देवश्रवा ऋषिः। कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेत्याणादिकसूत्रात्पूर्वपदस्वरः। देववातः। वा गतिगंधनयोः। अस्मात्कर्मणि क्तः। देवैरिष्यमाणतया प्राप्तो देववात ऋषिः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः। द्यून्। द्यु अभिगमने द्युत दीप्तौ वा। डिद्वेत्यनुवृत्तौ द्युयुभ्यां चेति भोजसूत्रेण डुप्रत्ययो डिच्च। द्युतेरप्यादयश्च। उ॰ ५. २९। इति डुन्प्रत्ययः। अभिगच्छंत्यस्मिन् स्वं स्वमभिमतं देशं प्राणिन इति द्योतते किरणसंबंधादिति वा द्युर्दिवसः। प्रथमयोरिति सवर्णदीर्घः। तस्माच्छसो नः पुंसि। पा॰ ६. १. १०३। इति सकारस्य नकारः। एकादेशस्वरः॥

दश क्षिपः पूर्व्यं सीमजीजनन्त्सुजातं मातृषु प्रियं।
अग्निं स्तुहि दैववातं देवश्रवो यो जनानामसद्वशी ॥३॥
दश। क्षिपः। पूर्व्यं। सीं। अजीजनन्। सुऽजातं। मातृषु। प्रियं।
अग्निं। स्तुहि। दैवऽवातं। देवऽश्रवः। यः। जनानां। असत्। वशी ॥३॥

हे अग्ने देववातस्य क्षिपः। क्षिप्यते कर्मकरणार्थमिति क्षिपोऽङ्गुलयः। ताश्च दश। बाहुद्वयस्य मथनसाधनत्वेन तत्रत्या अङ्गुलयो दशसंख्याकाः। तादृश्योऽङ्गुलयः पूर्व्यं पुरातनं सीमेनं त्वामजीजनन्। उदपीपदन्। हे देवश्रवो मातृषु मातृभूतारण्योः सुजातं सुष्ठूत्पन्नम् अत एव प्रियं कमनीयं दैववातं देववातेन मथितमेनमग्निं स्तुहि। योऽग्निर्जनानां स्तोतॄणां यजमानानां वशी वशवर्ती कर्मणां स्वातंत्र्येण प्रवर्तकोऽसत् भवति तं स्तुहीति पूर्वेणान्वयः॥ दश। दन्श दशने। कनिन्नित्यनुवृत्तौ सृदशोर्गुणश्चेति कनिन्। नित्स्वरः। क्षिपः। क्षिप प्रेरणे। औणादिकः कर्मणि क्विप्। क्षिप्यंते प्रेर्यंते कर्मस्विति क्षिपोऽङ्गुलयः। धातुस्वरः। अजीजनन्। जनी प्रादुर्भावे। हेतुमण्यंतस्य लुङि चङि द्विर्वचनसन्वद्भावाभ्यासेत्वदीर्घाः। निघातः। स्तुहि। ष्टुञ् स्तुतावित्यस्य लोटि रूपं। अदादित्वाच्छपो लुक्। निघातः। दैववातं। देववातेन निर्वृत्तमित्यर्थे तेन निर्वृत्तं। पा॰ ४. २. ६८। इत्यण्। प्रत्ययस्वरः। असत्। अस भुवि। अस्य लेट्यडागमः। यद्वृत्तयोगादनिघातः॥

नि त्वा दधे वर आ पृथिव्या इळायास्पदे सुदिनत्वे अह्नां।
दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि ॥४॥
नि। त्वा। दधे। वरे। आ। पृथिव्याः। इळायाः। पदे। सुदिनऽत्वे। अह्नां।
दृषत्ऽवत्यां। मानुषे। आपयायां। सरस्वत्यां। रेवत्। अग्ने। दिदीहि ॥४॥

हे अग्ने इळाया गोरूपधारिण्याः पृथिव्या भूमेर्वरे वरिष्ठे पदे उत्तरवेद्या अह्नां सुदिनत्वे यजनीयदिवसानां शोभनदिनत्वार्थं। येषु दिनेष्विंद्रादयो वरीयांसो देवा इज्यंते तानि सुदिनानि। तदर्थं त्वा त्वामा निदधे। आ समंतान्निदधामि। उत्तमानि स्थानानि दर्शयति। दृषद्वत्यां। दृषद्वती नाम काचिन्नदी तस्यां। मानुषे मनुष्यसंचारविषये तीरे। आपयायां। आपया नाम काचिन्नदी तस्यां। सरस्वत्यां नद्यां। एतेषु स्थानेषु त्वं रेवत् धनयुक्तं यथा भवति तथा दिदीहि। दीप्यस्व। महर्षयः सरस्वतीतीरे खलु यज्ञादिकर्माण्यकार्षुः। तथा च ब्राह्मणं। ऋषयो वै सरस्वत्यां सत्रमासत। ऐ॰ ब्रा॰ २. १९। इति॥ दधे। दधातेर्लिट्युत्तमैकवचने रूपं। वरे।

वृञ् वरणे । ग्रहवृदृनिश्चिगमश्चेत्यप् । पित्त्वादनुदात्तत्वे धातुस्वरः । दृषद्वत्यां । दृ विदारणे । दृणातेः षुग्घ्रस्वश्च । उ॰ १. १३०. । इत्यादिना षुगागमो धातोर्ह्रस्वश्च । दृषद उपला यस्यां संतीति मतुप् । झय इति तस्य वत्वं । स्वरविधौ व्यंजनमविद्यमानवदित्यस्याः परिभाषाया अत्राश्रयणाभावान्मतुप उदात्तताभावः । अदिप्रत्ययस्वरः । सरस्वत्यां । सरःशब्दोऽसुन्नन्तत्वादाद्युदात्तः । तदस्यास्तीति मतुप् । अदुपधत्वान्मस्य वत्वं । उगित्वात् ङीप् । दिदीहि । दिवु क्रीडादावित्यस्य यङ्लुकि रूपं ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥५॥
इळां । अग्ने । पुरुऽदंसं । सनिं । गोः । शश्वतऽतमं । हवमानाय । साध ।
स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥५॥

व्याख्यातेयमित्युपरिता ॥　॥ २३ ॥

अग्ने सहस्वेति पंचर्चं द्वादशं सूक्तं । अत्रानुक्रमणिका । अग्ने सहस्व गायत्रमाद्यानुष्टुबिति । ऋषिर्गाथिनो विश्वामित्रः । अग्निर्देवता । आद्यानुष्टुप् शिष्टा गायत्र्यः ॥ सूक्तविनियोगो लैंगिकः ॥ प्रातरनुवाक आश्विनशस्त्रे च प्रथमावर्जितस्य सूक्तस्य विनियोगः । अथैतस्या इति खंडे सूत्रितं । अग्न ईळितेति चतस्रः । आ॰ ४. १३ । इति ॥ अभ्युदयेष्टावग्नेर्दातुरनुवाक्याग्ने दा दाशुष इत्येषा । अथाग्नेय्य इति खंडे सूत्रितं । अग्ने दा दाशुषे रयिं स यंता विप्र एषा । आ॰ ३. १३ । इति ॥

अग्ने सहस्व पृतना अभिमातीरपास्य । दुष्टरस्तरन्नरातीर्वर्चो धा यज्ञवाहसे ॥१॥
अग्ने । सहस्व । पृतनाः । अभिऽमातीः । अप । अस्य । दुस्तरः । तरन् । अरातीः ।
वर्चः । धाः । यज्ञऽवाहसे ॥१॥

विश्वामित्रः स्तौति । हे अग्ने पृतना अभियोक्त्रीः सेनाः सहस्व । अभिभव । अभिमातीरभिमानिनः कर्मविघ्नकारिणः शत्रून् अपास्य । अपनुद । किंच दुष्टरो न केनापि तरितुं शक्यः अत एव अरातीररातीन् शत्रून् तरन् स्वतेजसा तिरस्कुर्वंस्त्वं यज्ञवाहसे यज्ञनिर्वाहकाय यजमानाय वर्चो धाः । अन्नं धेहि । कुरु ॥ सहस्व । षह मर्षणे इत्यस्य लोटि रूपं । आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । अभिमातीः । माङ् माने । मानं मातिः । भावे क्तिन् । अस्य तुम्विकरणत्वादीत्वं न भवतः । अभितो मानं येषां ते इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अस्य । असु क्षेपणे । दिवादिः । लोटि रूपं । दुष्टरः । तॄ प्लवनतरणयोः । अस्मात्कृच्छ्रार्थे खल् । सुषामादित्वाद्विसर्जनीयस्य सकारस्य षत्वं । लित्स्वरः । तरन् । तरतेः शतरि रूपं । अदुपदेशाल्लसार्वधातुकस्वरेण शतुरनुदात्तत्वे कृते धातुस्वरः । धाः । दधातेश्छंदसि लुङि रूपं । निघातः ॥

अग्न इळा समिध्यसे वीतिहोत्रो अमर्त्यः । जुषस्व सू नो अध्वरं ॥२॥
अग्ने । इळा । सं । इध्यसे । वीतिऽहोत्रः । अमर्त्यः । जुषस्व । सु । नः । अध्वरं ॥२॥

हे अग्ने वीतिहोत्रः । वीतिः प्रीतिविषयं होत्रमग्निहोत्रादिकं यस्यासौ वीतिहोत्रः । यद्वेषु प्रीतिभाक्त्यर्थः । अमर्त्यो मरणधर्मरहितस्त्वमिळेळायामीडायामुत्तरवेद्यां समिध्यसे । आज्याहुतिप्रक्षेपेण सम्यक् प्रज्वाल्यसे । तादृशस्त्वं नोऽस्माकमध्वरमिमं यज्ञं सु सुष्ठु जुषस्व । आहुतिस्वीकरणेन सेवस्व ॥ वीतिहोत्रः । वी कांत्यादिषु । अस्मात्कर्मणि मंत्रे वृषेषपचेत्यादिना क्तिन्नुदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । जुषस्व । जुषतेर्लोटि रूपं । शस्वरः । सु । निपातस्य चेति संहितायां दीर्घः ॥

अग्ने द्युम्नेन जागृवे सहसः सूनवाहुत । एदं बर्हिः सदो मम ॥३॥
अग्ने । द्युम्नेन । जागृवे । सहसः । सूनो इति । आऽहुत । आ । इदं । बर्हिः । सदः । मम ॥३॥

द्युम्नेन स्वतेजसा सह जागृवे । जागर्तीति जागृविः । तस्य संबुद्धिः । लोकरक्षार्थं स्वतेजसा सह सर्वदा जागरणोपेत आहूत देवताह्वानार्थमस्माभिराहूत सहसः सूनो बलस्य पुत्र हे अग्ने मम मत्संबंधिन्यस्मिन्यज्ञे यद्वयामास्तीर्णमिदं बर्हिस्तत्रासदः । आसीद ॥ जागृवे । जागृ निद्राक्षये । जॄशॄस्तृजागृभ्यः क्विनिति क्विन् । कित्त्वादगुणः । जागर्तीति जागृविः । जागृविर्जागरणात । नि० ९. ८ । इति यास्कः । संबुद्धौ चेति गुणः । एङ्ह्रस्वात् । पा० ६. १. ६९ । इति सोर्लोपः । निघातः । सहसः सूनो । सुप आमंत्रिते पराङ्गवद्भावादनुदात्तत्वे पादादित्वादनिघातः । सदः । षद्लृ विशरणगत्यवसादनेष्वित्यस्य छांदसे लुङि लृदित्त्वादङ् । निघातः । मम । अस्मच्छब्दस्य षष्ठ्येकवचने ममादेशः । युष्मदस्मदोर्ङसीत्याद्युदात्तत्वं ॥

अग्ने॒ विश्वे॑भिर॒ग्निभि॑र्दे॒वेभि॑र्महया॒ गिरः॑ । य॒ज्ञेषु॒ य उ॑ चा॒यवः॑ ॥४॥

अग्ने॑ । विश्वे॑भिः । अ॒ग्निऽभिः॑ । दे॒वेभिः॑ । म॒हय॑ । गिरः॑ । य॒ज्ञेषु॑ । ये । ऊं॒ इति॑ । चा॒यवः॑ ॥४॥

हे अग्ने देवेभिर्द्योतमानैर्विश्वेभिः सर्वैरग्निभिर्यष्टव्यतया स्थितैरग्निभिः सहितस्त्वं चायव उक्तविषयस्तुतिरूपाभिर्वाग्भिरनन्यमनस्कतया पूजका ये विद्यंते तेषां यज्ञेषु ज्योतिष्टोमादिषु गिरः स्तोत्रशस्त्रादिलक्षणानि वाक्यानि महय । पूजय ॥ महय । मह पूजायां । चुरादिः । अदंतत्वादुपधावृद्ध्यभावः । निघातः । चायवः । चायृ पूजानिशामनयोः । मृगय्वादयश्चेति कुप्रत्ययः । प्रत्ययस्वरः ॥

अग्ने॒ दा दा॒शुषे॑ र॒यिं वी॒रव॑न्तं॒ परी॑णसं । शि॒शी॒हि नः॑ सूनु॒मतः॑ ॥५॥

अग्ने॑ । दाः । दा॒शुषे॑ । र॒यिं । वी॒रऽव॑न्तं । परी॑णसं । शि॒शी॒हि । नः॒ । सू॒नु॒ऽमतः॑ ॥५॥

हे अग्ने दाशुषे तुभ्यं हविर्दत्तवते यजमानाय वीरवंतं पुत्रयुक्तं परीणसं प्रभूतं रयिं धनं दाः । देहि । सूनुमतः पुत्रपौत्रादिसहितान्नोऽस्मान् शिशीहि । धनप्रदानेन तीक्ष्णीकुरु ॥ दाः । डुदाञ् दाने इत्यस्य छांदसे लुङि रूपं । आमंत्रितस्याविद्यमानत्वेन पादादि[illegible] [illegible]पः । तिङ्ङतिङ इति निघातः । दाशुषे । दाशृ दाने इत्यस्य क्वसौ दाश्वान्साह्वान्मीढ्वांश्चेति नि[illegible]पः । [illegible] अगणितेनात् द्विर्वचनाभाव इडभावश्च । भसंज्ञायां संप्रसारणं । प्रत्ययस्वरः । परीणसं । परिपूर्वो णसतेर्व्याप्त्य[illegible] [illegible] सूत्रेणात् क्विप् । अन्येषामपि दृश्यत इति दीर्घः । शिशीहि । शिञ् निशाने । व्यत्ययेन श्लुः । दीर्घश्छांदसः । [illegible] पित्त्वादंतोदात्तत्वं ॥ ॥२४॥

अग्ने दिव इति पंचर्चं त्रयोदशं सूक्तं वैश्वामित्रं । अत्रेयमनुक्रमणिका । अग्ने दिवो विराजमुपांत्यामैंद्रीति । विराट् छंदः । अग्न इंद्रश्चेत्येषैंद्राग्नीदेवताका । शिष्टा आग्नेय्यः ॥ अग्निष्टोम आज्यशस्त्रेऽग्न इंद्रश्चेति याज्या । अग्न इंद्रश्च दाशुषो दुरोण इति याज्या । आ० ५. ९ । इति सूत्रितत्वात् ॥

अग्ने॑ दि॒वः सू॒नुर॑सि॒ प्रचे॑ता॒स्तना॑ पृथि॒व्या उ॒त वि॒श्ववे॑दाः ।
ऋध॑ग्दे॒वाँ इ॒ह य॑जा चिकित्वः ॥१॥

अग्ने॑ । दि॒वः । सू॒नुः । अ॒सि॒ । प्रऽचे॑ताः । तना॑ । पृ॒थि॒व्याः । उ॒त । वि॒श्वऽवे॑दाः ।
ऋध॑क् । दे॒वान् । इ॒ह । य॒ज॒ । चि॒कि॒त्वः॒ ॥१॥

विश्वामित्रः स्तौति । हे अग्ने विश्ववेदाः सर्वविषयज्ञानवान् प्रचेताः कर्मविषयज्ञानवांस्त्वं दिवो द्युलोकाभिमानिदेवतायाः सूनुरसि । पुत्रो भवसि । उत अपि च पृथिव्याः पृथिव्यभिमानिदेवतायास्तना तनयोऽसि । किंच चिकित्वश्चेतनावन् हे अग्ने इहास्माभिः क्रियमाणेऽस्मिन्कर्मणि देवान् यजनीयानिंद्रादिदेवान् ऋधक् पृथक् क्रमेण यज । हविष्प्रदानेन पूजय ॥ असि । अस भुवीत्यस्य लटि तासस्त्योर्लोप इति सलोपः । निघातः । विश्ववेदाः । बहुव्रीहौ विश्वं संज्ञायामिति विश्वस्यांतोदात्तत्वं ॥

अ॒ग्निः स॑नोति वी॒र्या॑णि वि॒द्वान्त्स॒नोति॒ वाज॑म॒मृता॑य॒ भूष॑न् ।
स नो॑ दे॒वाँ एह व॑हा पुरुक्षो ॥२॥

अग्निः । सनोति । वीर्याणि । विद्वान् । सनोति । वाजं । अमृताय । भूषन् ।
सः । नः । देवान् । आ । इह । वह । पुरुक्षो इति पुरुऽक्षो ॥२॥

विद्वान् कर्माभिज्ञो योऽग्निर्वीर्याणि पशुपुत्रादिसंपद्रूपाणि सामर्थ्यानि सनोति यजमानाय ददाति यश्चाग्निर्भूषन् स्वतेजसा सर्वं जगद्भूषयन् अलंकुर्वन्नमृताय मरणधर्मरहितायेन्द्रादिदेवाय वाजं हविर्लक्षणमन्नं सनोति प्रयच्छति पुरुक्षो पुरोडाशादिबहुविधान्नोपेत हे अग्ने स तादृशस्त्वं नोऽस्माकं सर्वाधनीहास्मिन्यज्ञे देवान्यजनीयान्देवानावह । आह्वय ॥ सनोति । षणु दाने । तनादित्वादुप्रत्ययः । प्रत्ययस्वरः । पादादित्वादनिघातः । भूषन् । भूष अलंकारे । अन्तर्भावितण्यर्थः । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः शिष्यते । वह । वहेर्लोटि रूपं । पुरुक्षो । पुरवः क्षुधोऽन्नानि यस्येति पुरुक्षुः । अत्यल्लोपश्छान्दसः । सबुद्धौ चेति गुणः ॥

अग्निर्द्यावापृथिवी विश्वजन्ये आ भाति देवी अमृते अमूरः । क्षयन्वाजैः पुरुश्चंद्रो नमोभिः ॥३॥

अग्निः । द्यावापृथिवी इति । विश्वजन्ये इति विश्वऽजन्ये । आ । भाति । देवी इति ।
अमृते इति । अमूरः । क्षयन् । वाजैः । पुरुऽचंद्रः । नमःऽभिः ॥३॥

अमूरोऽमूढः सर्वज्ञः क्षयन् ईशानः सर्वस्य जगतः अत एव पुरुश्चन्द्रः पुरुचन्द्रो बहुहिरण्योपेतः । यद्वा बहुदीप्तिस्वरूपः । वाजैर्बलैर्नमोभिरन्नैश्च सहितः सोऽग्निर्विश्वजन्ये विश्वस्य जनयित्र्यौ । यद्वा विश्वं जन्यमुत्पाद्यं याभ्यां ते । देवी द्योतमाने अमृते मरणधर्मरहिते द्यावापृथिवी द्यावापृथिव्यावाभाति । आ समन्तात्प्रकाशयति ॥ द्यावापृथिवी । दिवःशब्दस्य दिवो द्यावेति द्यावादेश आद्युदात्तः । पृथिवीशब्दो ङीपन्तत्वेनान्तोदात्तः । देवताद्वंद्वे चेत्युभयोः प्रकृतिस्वरत्वं । विश्वजन्ये । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदान्तोदात्तः । तत्पुरुषे तु स्वरश्चिन्तनीयः । आ भाति । भा दीप्तौ । अन्तर्भावितण्यर्थः । क्षयन् । क्षि ऐश्वर्ये । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः । पुरुश्चन्द्रः । ह्रस्वाच्चन्द्रोत्तरपदे मन्त्र इति सुडागमः । श्चुत्वेन शकारः । उत्तरपदान्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानमित्युत्तरपदान्तोदात्तत्वं । यद्वा समासस्यान्तोदात्तत्वं ॥

अग्न इंद्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोप यातं ।
अमर्धंता सोमपेयाय देवा ॥४॥

अग्ने । इंद्रः । च । दाशुषः । दुरोणे । सुतऽवतः । यज्ञं । इह । उप । यातं ।
अमर्धंता । सोमऽपेयाय । देवा ॥४॥

हे अग्ने त्वमिन्द्रश्चोभौ देवा देवौ युवाममर्धन्ता अनागमनेन यज्ञहिंसामकुर्वन्तौ सन्तौ सुतवतः सोमाभिषवं कुर्वतो दाशुषो हविर्दत्तवतो यजमानस्येह दुरोणे गृहे क्रियमाणमिमं यज्ञमभिलक्ष्य सोमपेयाय सोमपानार्थमुप यातं । उप समीपे आगच्छतं ॥ यातं । या प्रापणे इत्यस्य लोटि रूपं । निघातः । अमर्धन्ता । मृधु हिंसायामित्यस्य शतरि रूपं । नञा समासः । सुपो डादेशः । तत्पुरुषे नञ्स्वरः । सोमपेयाय । पा पाने । अचो यदिति यत् । ईद्यतीतीकारादेशः । आर्धधातुकलक्षणो गुणः । कृदुत्तरपदप्रकृतिस्वरः ॥

अग्ने अपां समिध्यसे दुरोणे नित्यः सूनो सहसो जातवेदः ।
सधस्थानि महयमान ऊती ॥५॥

अग्ने । अपां । सं । इध्यसे । दुरोणे । नित्यः । सूनो इति । सहसः । जातऽवेदः ।
सधऽस्थानि । महयमानः । ऊती ॥५॥

सहसः सूनो बलस्य पुत्र जातवेदो जातप्रज्ञ हे अग्ने नित्योऽविनाशी ऊती ऊत्या रक्षणेन सधस्थानि प्राणिनां निवासभूताँल्लोकान्महयमानः परिचरंस्त्वमपां दुरोणेऽपां स्थानेंऽतरिक्षे समिध्यसे। सम्यग्दीप्यसे॥ दुरोणे। अव रक्षण इत्यस्मादौणादिको नक्प्रत्ययः। ज्वरत्वरेत्यादिना ऊठ्। गुणः। दुरोण इति गृहनाम दुरवा भवंति। नि० ४ ५। इति यास्कः। प्रत्ययस्वरः। महयमानः। मह पूजायां। व्यत्ययेन शानच्। शानचो लसार्वधातुकस्वरेणानुदात्तत्वे णिचस्वरः। ऊती। अव रक्षणादिषु। ऊतियूतिजूतीत्यादिना निपातनादंतोदात्तः। सुपां सुलुगिति तृतीयायाः सवर्णदीर्घः॥ ॥२५॥

वैश्वानरं मनसेति नवर्चं चतुर्दशं सूक्तं। तत्रानुक्रमणिका। वैश्वानरं नव तृचा वैश्वानरीयमारुतौ जागतौ तृच आत्मस्तुतिर्वा पूर्वात्मगीतात्योपाध्यायस्तुतिरिति। वैश्वानरं मनसेत्याद्यौ तृचौ जागतौ। प्रथमस्य वैश्वानरोऽग्निर्देवता द्वितीयस्य मरुतः। सप्तम्याद्यास्तिस्रस्त्रिष्टुभः। अग्निरस्मीति तृचस्याग्निः परं ब्रह्म वा देवता। नवम्यास्तु विश्वामित्रोपाध्यायस्य स्तुत्यत्वात्स एव देवता। सप्तमीवर्जितस्य सूक्तस्य विश्वामित्र ऋषिः। सप्तम्या ब्रह्मवाक्यत्वाद्यस्य वाक्यं स ऋषिरिति न्यायेन ब्रह्म ऋषिः॥ वैश्वानरं मनसेत्याद्यस्तृच आभिप्लविके चतुर्थेऽहनि आग्निमारुते वैश्वानरीयनिविद्धाने विनियुक्तः। तृतीयस्येति खंडे सूत्रितं। वैश्वानरं मनसेति तिस्रः। आ० ७. ७। इति॥ अयमेव तृचो बृहस्पतिसवेऽप्याग्निमारुते वैश्वानरीयनिविद्धानीयः। प्र यंतु वाजा इति द्वितीयतृचो बृहस्पतिसव मारुतनिविद्धानीयः। उभयमप्युशनसः स्तोमेनेति खंडे सूत्रितं। वैश्वानरं मनसाग्निं निचाय्य प्र यंतु वाजास्तविषीभिरग्नयः। आ० ९ ५। इति॥ अग्निचयने संचिताग्न्यनुशंसनेऽग्निरस्मीत्येषा। अथाग्निं संचितमनुगीतमनुशंसेदित्युपक्रम्य सूत्रितं। अग्निरस्मि जन्मना जातवेदा इति त्रिर्मध्यमया वाचा। आ० ४ ८। इति॥

वैश्वानरं मनसाग्निं निचाय्या हविष्मंतो अनुषत्यं स्वर्विदं।
सुदानुं देवं रथिरं वसूयवो गीर्भी रण्वं कुशिकासो हवामहे ॥१॥

वैश्वानरं। मनसा। अग्निं। निऽचाय्य। हविष्मंतः। अनुऽसत्यं। स्वःऽविदं।
सुऽदानुं। देवं। रथिरं। वसुऽयवः। गीःऽभिः। रण्वं। कुशिकासः। हवामहे ॥१॥

विश्वामित्रः स्तौति। हे अग्ने हविष्मंतः संभृतहविष्का वसूयवो धनमात्मन इच्छंतः कुशिकासः कुशिकगोत्रोत्पन्ना वयं वैश्वानरं। विश्वे नरा अग्निप्रणयनादिक्रियाया नेतारो यस्येति विश्वानरोऽग्निः। तस्य संबंधी वैश्वानरः। अपत्यमिति यावत्। यद्वा विश्वानर एव वैश्वानरः। तद्धितोऽनन्यार्थो राक्षसवायसादिवत्। तमनुषत्यं सत्येनानुगतं कर्मानुरूपफलप्रदाने सत्यप्रतिज्ञं स्वर्विदं स्वर्गादिलक्षणफलस्य ज्ञातारं अत एव सुदानुं सुष्ठु फलस्य दातारं रथिरं रथवंतं अत एव रण्वं यज्ञान्गच्छंतं देवं द्योतमानं तमिमममग्निं मनसा निचाय्य अतःकर्मनिर्वाहकगुणविशिष्टस्त्वमिति ज्ञात्वा गीर्भिः स्तुतिलक्षणाभिर्वाग्भिर्हवामहे। इह कर्मणि त्वामाह्वयामः॥ वैश्वानरं। नरे संज्ञायामिति पूर्वपदस्य दीर्घत्वं। विश्वानरस्येदमित्यर्थे तस्येदमित्यण्। प्रत्ययस्वरः। निचाय्य। चायृ पूजानिशामनयोरित्यस्य ल्यपि रूपं। लित्स्वरः। अनुषत्यं। अनुगतं सत्येन। अत्यादयः क्रांताद्यर्थे तृतीययेति समासः। सुषामादित्वात्षत्वं। निरुदकादित्वादंतोदात्तत्वं। सुदानुं। डुदाञ् दाने। दाभाभ्यां नुरिति कर्तरि नुप्रत्ययः। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। रथिरं। रथशब्दान्मत्वर्थे मेधारथाभ्यामिरन्निरचौ वक्तव्यावितीरच्। चित्स्वरः। वसूयवः। वस्वात्मन इच्छंत इति सुप आत्मनः क्यच्। अकृत्सार्वधातुकयोरिति दीर्घः। क्याच्छंदसीत्युप्रत्ययः। अतो लोपः। प्रत्ययस्वरः। रण्वं। रवि गत्यर्थः। रण्वति यज्ञान्गच्छतीति रण्वः। पचाद्यजंतः। चित्स्वरः। कुशिकासः। कुशिकशब्दाद्गोत्रमित्यर्थे विदादित्वादञ्। तस्य बह्वचः यञञोश्च। पा० २ ४ ६४। इति लुक्। हवामहे। ह्वयतेर्बहुलं छंदसीति संप्रसारणं। निघातः॥

तं शुभ्रमग्निमवसे हवामहे वैश्वानरं मातरिश्वानमुक्थ्यं।
बृहस्पतिं मनुषो देवतातये विप्रं श्रोतारमतिथिं रघुष्यदं ॥२॥

तं । शुभ्रं । अग्निं । अवसे । हवामहे । वैश्वानरं । मातरिश्वानं । उक्थ्यं ।
बृहस्पतिं । मनुषः । देवऽतातये । विप्रं । श्रोतारं । अतिथिं । रघुऽस्यदं ॥२॥

योऽग्निः पूर्वमंत्रे प्रतिपादितस्तं शुभ्रं द्योतमानं वैश्वानरं विश्वानरसंबंधिनं मातरिश्वानं । मातर्यंतरिक्षे श्वसितीति विद्युदादिरूपतया चेष्टत इति मातरिश्वाग्निः । तमुक्थ्यमुक्थैः शस्त्रैः शंसनीयं बृहस्पतिं बृहतो यज्ञस्य पतिं पालकतया स्वामिनं विप्रं मेधाविनं श्रोतारं स्तोत्रशस्त्रादिमंत्रवाक्यं शृण्वंतमतिथिमातिथ्यपूजार्हतया यदृच्छया प्राप्तं रघुस्यदं लघुस्यदं । रघुर्लघुः स्यदो वेगो यस्येति क्षिप्रगंतारं । यद्वा स्यदशब्देनाध्वा लक्ष्यते रघुस्यदः क्षिप्रगंतेत्यर्थः । तमेवंविधगुणयुक्तमग्निमवसेऽस्माकं रक्षणाय हवामहे । कुशिकगोत्रजा वयमाह्वयामः । किंच । मनुषो मनुष्यस्य देवतातये यज्ञार्थं त्वामाह्वयामः ॥ शुभ्रं । शुभ दीप्तौ । अस्मात् स्फायितंचीत्यादिना कर्तरि रक् । कित्त्वाद्गुणाभावः । प्रत्ययस्वरः । मातरिश्वानं । निर्माणहेतुत्वान्माताऽंतरिक्षं । तत्र श्वसिति प्राणितीति मातरिश्वाग्निः । श्वन्नुक्षन्नित्यादिना मातरिश्वशब्दस्य कनिन्प्रत्ययांतत्वेन निपातनात्पूर्वपदांतोदात्तत्वं । उक्थ्यं । उक्थेन स्तोत्रेण स्तुत्यः । तत्र भव इत्यर्थे भवे छंदसीति यत् । तित्स्वरितमिति स्वरितः । देवतातये । देव एव देवतातिः । स्वार्थिकस्तातिल् । देवतातिशब्देन यज्ञो लक्ष्यते तत्संप्रदानकत्वाद्यज्ञस्य । लित्स्वरः । रघुष्यदं । स्यन्दू प्रस्रवणे इत्यस्माद्घञंतः स्यदशब्दः । स्यदो जवे इति निपातनादनुनासिकलोपः । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

अश्वो न क्रंदञ्जनिभिः समिध्यते वैश्वानरः कुशिकेभिर्युगेयुगे ।
स नो अग्निः सुवीर्यं स्वश्व्यं दधातु रत्नममृतेषु जागृविः ॥३॥
अश्वः । न । क्रंदन् । जनिऽभिः । सं । इध्यते । वैश्वानरः । कुशिकेभिः । युगेऽयुगे ।
सः । नः । अग्निः । सुऽवीर्यं । सुऽअश्व्यं । दधातु । रत्नं । अमृतेषु । जागृविः ॥३॥

यो वैश्वानरोऽग्निः कुशिकेभिः स्तोत्रं कुर्वाणैर्होत्रादिभिर्युगे युगे प्रतिदिनं समिध्यत आज्याहुतिप्रक्षेपेण सम्यक् दीप्यते । तत्र दृष्टांतः । अश्वो नेति । यथा जातोऽश्वः क्रंदन् हेषारवं कुर्वन् जनिभिर्जनयित्रीभिर्वडवाभिः स्तन्यप्रदानेन प्रतिदिनं सम्यक् पोष्यते तद्वत् । अमृतेषु मरणधर्मरहितेषु देवेषु मध्ये जागृविर्जागरूकतया जाग्रत् दीप्यमानः सोऽग्निः सुवीर्यं शोभनापत्ययुक्तं स्वश्व्यं शोभनाश्वादिपशुयुक्तं रत्नमुत्तमं धनं नोऽस्माकं दधातु । विदधातु । प्रयच्छतु ॥ युगेयुगे । नित्यवीप्सयोरिति द्विर्वचनं । परस्याम्रेडितत्वादनुदात्तत्वं पूर्वपदप्रकृतिस्वरः । स्वश्व्यं । अश्वशब्दः क्वन्प्रत्ययांत आद्युदात्तः । बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं । यकारोपजननं छांदसं । यद्वा । अश्वेषु साधवोऽश्व्याः । तत्र साधुरिति यत् । यतोऽनाव इत्याद्युदात्तत्वं । बहुव्रीहौ पूर्वोक्तस्वरः । दधातु । दधातेर्लोटि रूपं । रत्नं । रमु क्रीडायां । रमेस्त चेत्यधिकरणे नप्रत्ययस्तकारश्चांतादेशः । रमंतेऽस्मिन्निति रत्नं । नित्यनुवृत्तावाद्युदात्तः । जागृविः । क्रिन्प्रत्ययांतः । नित्त्वादाद्युदात्तः ॥

प्र यंतु वाजास्तविषीभिरग्नयः शुभे संमिश्लाः पृषतीरयुक्षत ।
बृहदुक्षो मरुतो विश्ववेदसः प्र वेपयंति पर्वताँ अदाभ्याः ॥४॥
प्र । यंतु । वाजाः । तविषीभिः । अग्नयः । शुभे । संऽमिश्लाः । पृषतीः । अयुक्षत ।
बृहत्ऽउक्षः । मरुतः । विश्वऽवेदसः । प्र । वेपयंति । पर्वतान् । अदाभ्याः ॥४॥

वाजा वेगवंतोऽग्नयः प्रयंतु । जलमभिलक्ष्य गच्छंतु । गताश्च तेऽग्नयस्तविषीभिर्बलयुक्तैर्मरुद्भिः शुभे जले संमिश्लाः परस्परं संगताः संतः पृषतीर्विंदून्ययुक्षत । अयुजन् । जले विंदूनकुर्वन् । यद्वा वाजा वेगवंतोऽग्नयस्तविषीभिर्बलयुक्तैर्मरुद्भिर्जलमनुलक्ष्य प्रयंतु । गच्छंतु । ते च मरुतः शुभे जले संमिश्ला अग्निभिः संगताः संतः पृषतीश्चित्रवर्णा वाहनरूपा वडवा अयुक्षत । रथं मेघभेदनार्थं ता अयोजुः । रथारूढास्ते विश्ववेदसः प्राणि

कृतकर्माभिज्ञानयुक्ता अदाभ्याः केनाप्यतिरस्कार्या मरुत एवंविधा वायवो बृहदुक्षः प्रभूतसेक्तॄन्पर्वतान्मेघान प्रवेपयंति। यथा प्रभूता वृष्टिर्भवति तथा मेघान चालयंति ॥ तविषीभिः। तव गताविति सौत्रो धातुः। अस्मात्तविर्णिद्वति टिपच निम्न। तवति संचरंत्याकाश इति तविषा वायवः। टिड्ढाणञिति ङीप। लिंगव्यत्ययः। नित्त्वादाद्युदात्तः। पृषतीः। पृषु सेचने पॄ पालनपूरणयोरिति वा। अस्माद्वर्तमाने पृषद्बृहन्महदिति निपातनादतिप्रत्ययः शतृवद्भवति। उगितश्चेति ङीप। पर्षतीति पृषत्यः शीकराः। पृणाति पालयंतीति पृषत्यो वडवाः। अयुग्ध्वं। युजिर योगे इत्यस्य लुङि सिचि रूपं। निघातः। बृहदुक्षः। उक्ष सेचने इत्यस्मात्क्विप। कृदुत्तरपदप्रकृतिस्वरः। वेपयंति। टुवेपृ कंपने। निघातः। पर्वतान। पर्व पूरणे इत्यस्मात भृमृदृशीत्यादिना अतच। पर्वति पूरयति भूमिमुदकेनेति पर्वतो मेघः। व्यत्ययेनाद्युदात्तः॥

अग्निश्रियो मरुतो विश्वकृष्टय आ त्वेषमुग्रमव ईमहे वयं।
ते स्वानिनो रुद्रिया वर्षनिर्णिजः सिंहा न हेषक्रतवः सुदानवः ॥५॥

अग्निऽश्रियः। मरुतः। विश्वऽकृष्टयः। आ। त्वेषं। उग्रं। अवः। ईमहे। वयं।
ते। स्वानिनः। रुद्रियाः। वर्षऽनिर्निजः। सिंहाः। न। हेषऽक्रतवः। सुऽदानवः॥५॥

अग्निश्रियो विद्युतमग्निं श्रयंतो विश्वकृष्टयः। विश्वस्य वृक्षादेः कृष्टिराकर्षणं नमनोन्नमनादिलक्षणं कर्म येभ्यो भवति ते विश्वकृष्टयः। एवंविधा ये मरुतो विद्यंते तेषां च मरुतां त्वेषं दीप्तमुग्रमुद्गूर्णमवो रक्षणमीमहे। कुशिका वयमा समंताद्याचामहे। ते मरुतो रुद्रिया रुद्रपुत्रा वर्षनिर्णिजः। निर्णिकशब्दो रूपवाची निर्णिग्वव्रिरिति तन्नामसु पाठात। वर्षणं रूपं स्वभावो येषां ते वर्षनिर्णिजो वर्षकाः। हेषक्रतवः। हेषारवस्य क्रतुः करणं येषां ते कृतहेषारवाः सिंहा न सिंहा इव स्वानिनः शब्दवंतः। एवंविधास्ते मरुतः सुदानवः सुष्ठु जलस्य दातारो भवंति ॥ अग्निश्रियः। श्रिञ् सेवायां। क्विपवचिप्रच्छीत्यादिना क्विप संप्रसारणाभावो धातोर्दीर्घश्च। जसि इयङादेशः। कृत्स्वरः। उग्रं। गमॢ गतौ। उत्पूर्वः। ऋज्रेंद्राग्रेति निपातनाद्रप्रत्ययो मकारलोप उपसर्गस्यातल्लोपश्च। उद्गच्छतीत्युग्रः। प्रत्ययस्वरः। ईमहे। ई कांतिगत्यादिषु। व्यत्ययेनात्मनेपदं। अदादित्वाच्छपो लुक। निघातः। स्वानिनः। स्वानो घञतः। तद्वंतः। अत इनिठनाविति इनिः। प्रत्ययस्वरः। रुद्रियाः। रुद्रशब्दाच्छांदसो घः। तस्येयादेशः। प्रत्ययस्वरः॥ ॥२६॥

व्रातंव्रातं गणंगणं सुशस्तिभिरग्नेर्भामं मरुतामोज ईमहे।
पृषदश्वासो अनवभ्रराधसो गंतारो यज्ञं विदथेषु धीराः ॥६॥

व्रातंऽव्रातं। गणंऽगणं। सुशस्तिऽभिः। अग्नेः। भामं। मरुतां। ओजः। ईमहे।
पृषत्ऽअश्वासः। अनवभ्रऽराधसः। गंतारः। यज्ञं। विदथेषु। धीराः ॥६॥

कुशिका वयमग्नेर्भामं भासकं मरुतामोजस्तेजो व्रातं व्रातं व्राते व्राते प्रतिसमूहं गणं गणं गणे गणे सदति समूहे क्रियमाणाभिः सुशस्तिभिः। शोभनाः शस्तयः स्तुतयो येर्मर्त्यैः क्रियंते ते सुशस्तयः। तैर्मर्त्यैरीमहे। तादृशं मारुतं तेजो याचामहे। पृषदश्वासः। पृषत्यश्चित्रवर्णा अश्वा येषां ते तादृशाः। अनवभ्रराधसः। न विद्यते ऽवभ्रंशो यस्य तदनवभ्रं। अनवभ्रं राधो धनं येषां ते ऽनवभ्रष्टधनाः। संपूर्णधना इति यावत। धीराः कर्माभिज्ञास्ते मरुतो विदथेषु यज्ञेषु यज्ञं यजनीयं हविरभिलक्ष्य गंतारो गमनशीला भवंति ॥ गणं गणं। गण संख्याने। पचाद्यच। नित्यवीप्सयोरिति द्विर्वचनं। परस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः। सुशस्तिभिः। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। भामं। भा दीप्तौ। अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्नित्यादिना मन। नित्स्वरः। ओजः। उब्ज आर्जवे। उब्जेर्बले बलोपश्च। उ०४.१९१। इत्यसुन। तत्संनियोगेन बकारलोपः। आर्धधातुकलक्षणो गुणः। नित्स्वरः। ईमहे। ई कांत्यादिषु। निघातः। अनवभ्रराधसः। अनवभ्रं। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। बहुव्रीहौ पूर्वपदस्वरः। गंतारः। ताच्छीलिकस्तृन। विदथेषु। विद ज्ञाने। रुविदिभ्यां ङिदित्यथप्रत्ययः। ङित्वादगुणः। विदंत्यस्मिन्कर्मजातमध्वर्य्वादय इति विदथो यज्ञः। प्रत्ययस्वरः॥

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥७॥
अग्निः । अस्मि । जन्मना । जातऽवेदाः । घृतं । मे । चक्षुः । अमृतं । मे । आसन् ।
अर्कः । त्रिऽधातुः । रजसः । विऽमानः । अजस्रः । घर्मः । हविः । अस्मि । नाम ॥७॥

साक्षात्कृतपरतत्त्वरूपोऽग्निर्वचनैः स्वात्मनः सर्वात्मकत्वानुभवमाविष्करोति । हे कुशिकाः । भोक्तृभोग्यभावेन द्विविधं हीदं सर्वं जगत् । एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद इति श्रुतेः । तत्र सकलभोक्तृवर्गरूपेणान्नादोऽग्निः । स चाग्निवाय्वादित्यभेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्षद्युलोकानधितिष्ठति । तदुक्तं वाजसनेयके । स त्रेधात्मानं व्यभजत । आदित्यं तृतीयं वायुं तृतीयमिति । तत्र सोऽग्निरहं जन्मनैव जातवेदा अस्मि । श्रवणमननादिसाधननिरपेक्षेण स्वभावत एव साक्षात्कृतपरतत्त्वस्वरूपोऽस्मि । घृतं मे चक्षुः । यदेतद्विश्वस्य विभासकं मम स्वभावभूतप्रकाशात्मकं चक्षुस्तद्घृतं । इदानीमत्यन्तं दीप्तं । यदेतदमृतं कर्मफलं दिव्यादिव्यविविधविषयोपभोगात्मकं तन्मे ममासन् । आस्ये वर्तते । सकलभोक्तृवर्गात्मना स्वयमेवावस्थानात् । एवं स्वात्मनः पृथिव्यधिष्ठातृरूपतामभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृतामाह । अर्को जगत्स्रष्टा प्राणः । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं । श॰ ब्रा॰ १० ६ ५ । इति श्रुतेः । स प्राणोऽहं त्रिधातुः । त्रेधात्मानं विभज्य तत्र वाय्वात्मना रजसोऽन्तरिक्षस्य विमानो विमाताधिष्ठातास्मि । तथादित्यरूपेण द्युलोकाधिष्ठातृतामाह । अजस्रो घर्म इति । अजस्रोऽनुपक्षीणो घर्मः प्रकाशात्मा द्युलोकाधिष्ठातादित्योऽहमस्मि । एवं भोक्तृरूपमात्मनोऽनुसंधाय भोग्यरूपतामप्यनुसंधत्ते । यद्धविर्भोग्यं प्रसिद्धमस्ति तदप्यहमेवास्मि । यद्वा । अहमग्निरस्मि । देवानां हविष्प्रापणाद्दहनादिगुणयुक्तोऽस्मि । किंच जन्मनोत्पत्त्या जातवेदा जातप्रज्ञोऽस्मि । उत्पत्तिक्षण एव सर्वज्ञोऽहमस्मि । अथवा जातं सर्वं स्वात्मरूपतया वेत्तीति जातवेदाः । सर्वात्मक इत्यर्थः । तत्कथमित्युच्यते । घृतं मे चक्षुः । यदेतद्घृतं प्रसिद्धमस्ति तन्मे चक्षुःस्थानीयं । यथा लोके चक्षुर्भासकमेवं घृतं मयि प्रक्षिप्तं ज्वालामुत्पादयन्मम भासकं । अमृतं प्रभारूपं यदमृतमविनाशि ज्योतिर्मे ममासन् । आस्ये वर्तते । त्रिधातुः प्राणापानव्यानात्मना त्रिधा वर्तमानोऽर्कोऽर्चनीयो यो प्राणोऽस्ति सोऽप्यहमेवास्मि । तथा च रजसोऽन्तरिक्षस्य विमानो विशेषेण माता परिच्छेत्ता वायुश्चाहमस्मि । किंच । अजस्रो घर्मो निरन्तरं संतापकारी सूर्यश्चाहमस्मि । किं बहुना आज्यपुरोडाशादिरूपं यदेतद्धविरस्ति तद्रूपलक्षितं सर्वमप्यहमस्मि । सर्वं खल्विदं ब्रह्मेति श्रुतेः । नामशब्दः प्रसिद्धौ । तदनेनाग्नेः सर्वात्मकत्वप्रतिपादनेन परब्रह्मत्वमुक्तं भवति ॥ चक्षुः । चक्षिङ् व्यक्तायां वाचि । उसिन्नित्यनुवृत्तौ चक्षेः शिच्चेत्युसिन् । शित्त्वात्ख्याञादेशाभावः । नित्स्वरः । आसन् । आस्यशब्दस्य पद्दन्नोमास्इत्यादिना आसन्नादेशः । सुपां सुलुगिति सप्तम्या लुक् । विमानः । माङ् माने । कृत्यल्युटो बहुलमिति कर्तरि ल्युट् । लित्स्वरः । अजस्रः । जसु मोक्षणे । नञ्पूर्वः । नमिकम्पिस्म्यजसकमहिंसदीपो रः । पा॰ ३ २ १६७ । इति ताच्छीलिको रप्रत्ययः । नञ्पूर्वो जसिर्नैरन्तर्ये वर्तते । नञ्स्वरः । जसु उपक्षये वा ॥

त्रिभिः पवित्रैरपुपोद्ध्य१र्कं हृदा मतिं ज्योतिरनु प्रजानन् ।
वर्षिष्ठं रत्नमकृत स्वधाभिरादिद्द्यावापृथिवी पर्यपश्यत् ॥८॥
त्रिऽभिः । पवित्रैः । अपुपोत् । हि । अर्कं । हृदा । मतिं । ज्योतिः । अनु । प्रऽजानन् ।
वर्षिष्ठं । रत्नं । अकृत । स्वधाभिः । आत् । इत् । द्यावापृथिवी इति । परि । अपश्यत् ॥८॥

सर्वात्मकोऽग्निर्हृदान्तःकरणवृत्त्या मतिं मननीयं ज्योतिः स्वप्रकाशरूपं परब्रह्माख्यं तेजोऽनु प्रजानन् श्रवणमननादिक्रमेण प्रकर्षेण संशयविपर्यासभावनाबुद्धिनिरासेन स्वात्मरूपतया जानानः सन् पवित्रैः पावनैस्त्रिभिरग्निवायुसूर्यैरर्कमर्चनीयं स्वात्मानमपुपोद्धि । तेभ्योऽपि निर्मलतया पावनं परिचिच्छेद खलु । यथा दशापवित्रेण सोमं पावयन्ति तद्वत् । एवं जानानोऽग्निर्वर्षिष्ठं स्वात्मानमुत्तमं स्वधाभिः । स्वेन लोकान्दधा

तीति स्वधा। तैरग्निवायुसूर्यै रत्नं रमणीयमकृत। अकार्षीत्। आदित् अनंतरमेवमात्मनि ज्ञाते सति द्यावापृथिवी तत्र परिकल्पिते द्यावापृथिव्यौ तदुपलक्षितं सर्वं जगच्च पर्यपश्यत। परितः सर्वतः स्वात्मतयादर्शत। आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीति श्रुतेः॥ पवित्रैः। पूञ् पवने। अस्मात्कर्तरि चर्षिदेवतयोः। पा० ३.२.१८६। इति देवतायामभिधेयायां कर्तरि इत्रप्रत्ययः। पुनतीति पवित्रा अग्निवायुसूर्याः। प्रत्ययस्वरः। अपुपोत। पूञ् पवने इत्यस्य यङ्लुगंतस्य रूपं। संज्ञापूर्वकस्य विधेरनित्यत्वादभ्यासस्य गुणाभावः। यद्वृत्तपरं छंदसि। पा० ८.१.५६.। इति न निघातः। अर्कं। अर्च पूजायां। कृदाधारार्चिकलिभ्यः क इति कप्रत्ययः। हृदा। हृदयशब्दस्य पद्दन्नोमास्मित्यादिना हृदादेशः। मतिं। मन ज्ञाने। मंत्रे वृषेषपचेत्यादिना कर्मणि क्तिन् उदात्तः। अकृत। करोतेर्लुङि सिच। तस्य ह्रस्वादंगादिति लोपः। द्यावापृथिवी। देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरः॥

शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानां।
मेळिं मदंतं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचं ॥९॥
शतऽधारं। उत्सं। अक्षीयमाणं। विपःऽचितं। पितरं। वक्त्वानां।
मेळिं। मदंतं। पित्रोः। उपऽस्थे। तं। रोदसी इति। पिपृतं। सत्यऽवाचं ॥९॥

यस्मादुपाध्यायाद्विश्वामित्रो वैश्वानराख्यं परं ब्रह्माज्ञासीत्तमिममुपाध्यायमनयर्चा स्तौति। हे रोदसी द्यावापृथिव्यौ शतधारमपरिमितजलधारायुक्तमक्षीयमाणं न कदापि विच्छिन्नप्रवाहमुत्सं उत्समिव शतप्रवाहोपेतं स्रोत इवाविच्छिन्नवाक्सरणीसमेतं विपश्चितं मेधाविनं सकलशास्त्राभिज्ञं पितरं शिष्याणां विद्योपदेशेन पालकं वक्त्वानां वक्तव्यानां वेदवाक्यानां मेळिं मेलकं नानाशाखागतानां वाक्यानामेकस्मिन्नर्थे संकलय्य वक्तारं पित्रोर्द्यावापृथिव्योरुपस्थे समीपे मदंतं ज्ञानातिशयेन हृष्यंतं अत एव सत्यवाचमज्ञातार्थाभावात्परप्रतारणे च कारणाभावात्सत्यवादिनं। तमिममुपाध्यायं पिपृतं। अपेक्षितफलप्रदानेन संपूर्णं कुरुतं। यद्वा पालयतं॥ उत्सं। उन्दी क्लेदने। अस्मादुन्दिगुधिकृषिभ्यः कित्। उ० ३.६८। इति सप्रत्ययः। कित्त्वान्नकारलोपः। उनत्तीत्युत्सः। व्यत्ययेनाद्युदात्तः। विपश्चितं। विशेषेण पातीति विपा वाक्। विपो वाचश्चिनोतीति क्विप्। ह्रस्वस्य पिति कृति तुक्। तत्पुरुषे कृति बहुलमिति बहुलवचनात् द्वितीयाया अलुक्। कृदुत्तरपदस्वरः। वक्त्वानां। वच परिभाषणे। अस्मात्कृत्यार्थे तवैकेन्केन्यत्वन इति त्वन्प्रत्ययः। चोः कुरिति कुत्वं। निःस्वरः। मेळिं। मिलिः संपर्कार्थो धातुः। अस्मादौणादिक इप्रत्ययः। रोदसी। आमंत्रितत्वान्निघातः। पिपृतं। पॄ पालनपूरणयोः। छांदसो जुहोत्यादिः। अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं। निघातः॥ ॥२१॥

प्र वो वाजा इति पंचदशर्चं पंचदशं सूक्तं। अत्रानुक्रमणिका। प्र वः पचोना गायत्रं त्वृतव्या वाग्नेति। विश्वामित्र ऋषिः। गायत्री छंदः। अग्निर्देवता। आद्या ऋतुदेवत्या वा॥ प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छंदस्यस्य सूक्तस्य विनियोगः। प्र वो वाजा उपसद्याय। आ० ४.१३। इति॥ आभिप्लविकेषूक्थ्येषु प्र वो वाजा इति वैकल्पिकः स्तोत्रियस्तृचः। सूत्रितं च। प्र वो वाजा अभिद्यवोऽभि प्रयांसि वाहसा। आ० ७.८.। इति॥ सूक्तस्याद्या सामिधेनी। सूत्रितं च। प्र वो वाजा अभिद्यवोऽग्न आ याहि वीतये। आ० १.२। इति॥ सामिधेनीषु समिध्यमान इत्येका। सूत्रितं च। समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति द्वे। आ० १.२। इति॥ आधाने तृतीयायामिष्टौ सामिधेनीष्विध्यमानसमिद्धवत्योर्मध्ये पृथुपाजा इति द्वे धाय्ये। सूत्रितं च। प्रागुपोत्तमायाः पृथुपाजा अमर्त्य इति द्वे। आ० २.१। इति॥ एवमन्यत्रापि यत्र यत्र सप्तदश सामिधेन्यस्तत्र तत्रैते धाय्ये इति द्रष्टव्यं॥ विषुवत्येकविंशतिः सामिधेन्यः। तत्र पृथुपाजा अमर्त्य इति षडृचो धाय्याः। पृथुपाजा अमर्त्य इति षट् धाय्याः सामिधेनीनां। आ० ८.६। इति सूत्रितं॥ महाव्रतेऽपि पंचविंशतिसंख्याकाः सामिधेन्यः। तत्राप्येताः षडृचो द्रष्टव्याः॥ अग्नीषोमप्रणयने होता देवो अमर्त्य इति तृचः। सूत्रितं च। होता देवो अमर्त्यः पुरस्तादेति मायया। विदथानि प्रचोदयन्। आ० ४.१०.। इति॥ ईळेन्यो नमस्यस्तिर इति तिस्रः सामिधेन्यः। सूत्रितं च। ईळेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे। आ० १.२। इति॥

प्र वो॒ वाजा॑ अ॒भिद्य॑वो ह॒विष्म॑न्तो घृ॒ताच्या॑ । दे॒वाञ्जि॑गाति सुम्न॒युः ॥१॥

प्र । वः॒ । वाजाः॑ । अ॒भिऽद्य॑वः । ह॒विष्म॑न्तः । घृ॒ताच्या॑ । दे॒वान् । जि॒गा॒ति॒ । सु॒म्न॒युः ॥१॥

हे ऋतवो वाजाः । व्रजंति गच्छंतीति वाजा मासाः । अभिद्यवः । अभितो द्यवो दिवसा येष्वित्यभिद्यवोऽर्धमासाश्च । हविष्मंतो हविर्भाजो देवाः । घृताच्या । घृतमचतीति घृताची गौः । तथा च तैत्तिरीयकं । देवा हविष्मंतो गौर्घृताची । सं॰ २.५.७ । इति । यद्वा हविष्मंतो हविषः क्षीरादेः प्रदातारः पशवो घृताच्या । घृतमचति प्राप्नोतीति घृताची स्रुक् । तथा च वाजसनेयकं । पशवो हविष्मंतः स्रुग्घृताचीति । तया घृताच्या सहिता हविष्मंतो देवाः पशवश्च मासाश्चार्धमासाश्चेति सर्वे वो युष्माकं यजनार्थं प्रभवंति । तेषु वाजादिषु प्रभवत्सु सत्सु सुम्नयुः सुखमात्मन इच्छन्यजमानो देवाञ्जिगाति । यज्ञद्वारा देवान्प्राप्नोति । उक्तार्थं तैत्तिरीयब्राह्मणं । प्र वो वाजा इत्यन्वाह मासा वै वाजा अर्धमासा अभिद्यवो देवा हविष्मंतो गौर्घृताची यज्ञो देवाञ्जिगाति यजमानः सुम्नयुः । ६.५ । इति ॥ अभिद्यवः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । घृताच्या । घृ क्षरणदीप्त्योः । अस्मादजिघृषिभ्यः क्तः । उ॰ ३.८९ । इति कर्मणि क्तः । घृतमाज्यमचतीत्यृत्विग्दधृगित्यादिना क्विन् । अनिदितामित्युपधालोपः । अचतेश्चोपसंख्यानमिति ङीप् । चाविति पूर्वपदांतोदात्तत्वं । जिगाति । गातिर्गत्यर्थः । छांदसो जुहोत्यादिः । निघातः । सुम्नयुः । सुम्न सुखमात्मन इच्छतीति सुप आत्मनः क्यच् । क्याच्छंदसीत्युः । प्रत्ययस्वरः ॥

ईळे॑ अ॒ग्निं वि॑प॒श्चितं॑ गि॒रा य॒ज्ञस्य॒ साध॑नं । श्रु॒ष्टी॒वानं॑ धि॒तावा॑नं ॥२॥

ईळे॑ । अ॒ग्निं । वि॒पः॒ऽचितं॑ । गि॒रा । य॒ज्ञस्य॑ । साध॑नं । श्रु॒ष्टी॒ऽवानं॑ । धि॒तऽवा॑नं ॥२॥

विपश्चितं मेधाविनं यज्ञस्य साधनं यज्ञस्य निर्वाहकं श्रुष्टीवानं सुखवंतं यद्वा वेगवंतं धितावानं । वानं वननीयं धनं धितं निहितं यस्य तं निहितधनं । तमिममग्निं गिरा स्तुतिलक्षणया वाचा । विश्वामित्रोऽहं स्तौमि ॥ ईळे । ईड स्तुतौ । श्रुष्टीवानं । वन षण संभक्तावित्यस्माद्विच् । श्रुष्टी वनतीति श्रुष्टीवा । कृदुत्तरपदस्वरः । धितावानं । दधातेर्निष्ठायां धिरादेशश्छांदसः । वन संभक्तौ । कर्मणि घञ् । बहुव्रीहौ निष्ठेति धितशब्दस्य पूर्वनिपातः । पूर्वपदप्रकृतिस्वरः ॥

अग्ने॒ शके॑म ते व॒यं यमं॑ दे॒वस्य॑ वा॒जिनः॑ । अति॒ द्वेषां॑सि तरेम ॥३॥

अग्ने॑ । शके॑म । ते॒ । व॒यं । यमं॑ । दे॒वस्य॑ । वा॒जिनः॑ । अति॑ । द्वेषां॑सि । त॒रे॒म॒ ॥३॥

हे अग्ने वाजिनः संभृतहविष्का वयं देवस्य द्योतमानस्य ते तव यमं यमनमा यज्ञसमाप्तिपर्यंतावस्थानं कर्तुं शकेम । शक्ताः स्म । वाजिनो वेगवतो देवस्येति वा योजनीयं । ततः कारणात् द्वेषांस्यस्मदीयानि पापान्यति तरेम । पापेभ्य उत्तीर्णा भवेम ॥ शकेम । शक्लृ शक्तावित्यस्याशीर्लिङि लिङ्याशिष्यङित्यङ्प्रत्ययः । किदाशिषीति यासुट् । सलोपयादेशयल्लोपगुणसलोपाः । आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । उदात्तनिवृत्तिस्वरः । यमं । यम उपरमे इत्यस्माद्भावे घञ् । यम उपरम इति निपातनाद्वृद्ध्यभावः । ञित्स्वरः । तरेम । तॄ प्लवनतरणयोः । प्रार्थने लिङि रूपं । निघातः ॥

स॒मि॒ध्यमा॑नो अध्व॒रे॒३॒॑ग्निः पा॑व॒क ईड्यः॑ । शो॒चिष्के॑श॒स्तमी॑महे ॥४॥

स॒म्ऽइ॒ध्यमा॑नः । अ॒ध्व॒रे । अ॒ग्निः । पा॒व॒कः । ईड्यः॑ । शो॒चिःऽके॑शः । तं । ई॒म॒हे॒ ॥४॥

योऽग्निरध्वरे यज्ञे समिध्यमानो घृताद्याहुतिभिः सम्यक् प्रज्वाल्यमानोऽत एव शोचिष्केशो ज्वालाकेशः पावकः शोधक ईड्यः स्तोतृभिः प्रशस्यो भवति तमिममग्निमभिमतफलार्थमीमहे । वयं याचामहे ॥ ईड्यः । ईड स्तुतावित्यस्माण्ण्यत् । अस्य तित्स्वरितमिति स्वरितत्वे प्राप्त ईडवंदेत्यादिनाद्युदात्तत्वं । ईमहे । ई कात्यादिषु । अयं धातुरत्र याच्ञार्थः । निघातः ॥

पृथुपाजा अमर्त्यो घृतनिर्णिक्स्वाहुतः। अग्निर्यज्ञस्य हव्यवाट् ॥५॥

पृथुऽपाजाः। अमर्त्यः। घृतऽनिर्निक्। सुऽआहुतः। अग्निः। यज्ञस्य। हव्यऽवाट् ॥५॥

पृथुपाजाः प्रभूततेजोरूपोऽमर्त्यो मरणधर्मरहितो घृतनिर्णिक्। घृतस्य विलयनद्वारा शोधनं येनेति घृतनिर्णिक्। स्वाहुतः सुष्ठु होत्रादिभिः सम्यगिष्टः। एवंभूतोऽग्निर्यज्ञस्य ज्योतिष्टोमादेर्हव्यवाट् हव्यानां वोढा भवति ॥ पृथुपाजाः। कृदुत्तरपदस्वरः। स्वाहुतः। जुहोतेः कर्मणि क्तः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। हव्यवाट्। वहश्चेति ण्विः ॥ ॥२८॥

तं सबाधो यतस्रुच इत्था धिया यज्ञवंतः। आ चक्रुरग्निमूतये ॥६॥

तं। सऽबाधः। यतऽस्रुचः। इत्था। धिया। यज्ञऽवंतः। आ। चक्रुः। अग्निं। ऊतये ॥६॥

सबाधः। रक्षोघ्नमंत्रोच्चारणेन तद्विषयबाधा सह वर्तत इति सबाधः। यज्ञवतो यजनीयहविर्युक्ता यतस्रुचः। यताः संयताः स्रुचो जुह्वाद्या यैस्ते यतस्रुचः। ऋत्विजः। इत्थित्यमनेन प्रकारेण क्रियमाणया धिया स्तुत्या तमेवंभूतमग्निमूतये राक्षसबाधाद्रक्षणाय आ अभिमुखं चक्रुः। कुर्वंति ॥ सबाधः। बाधृ विलोडने इत्यस्मात् क्विप्। कृदुत्तरपदस्वरः। इत्था। इदंशब्दात्प्रकारार्थे इदमस्थमुः। तस्य सुपा सुलुगिति डादेशः। उदात्तनिवृत्तिस्वरेणातोदात्तः। चक्रुः। डुकृञ् करणे इत्यस्य लिट्युसि यणादेशे कृते तस्य द्विर्वचनेऽचीति स्थानिवद्भावाद्द्विर्वचनं। निघातः ॥

होता देवो अमर्त्यः पुरस्तादेति मायया। विदथानि प्रचोदयन् ॥७॥

होता। देवः। अमर्त्यः। पुरस्तात्। एति। मायया। विदथानि। प्रऽचोदयन् ॥७॥

होता होमनिष्पादकोऽमर्त्यो मरणधर्मरहितो देवो द्योतमानो विदथानि वेदितव्यानि कर्माणि प्रचोदयन् प्रकर्षेण प्रेरयन् सोऽग्निर्मायया कर्मविषयाभिज्ञानेन युक्तः सन् पुरस्तात्कर्मप्रारंभकाल एवैति। अस्मानागच्छति ॥ मायया। माङ् माने शब्दे चेत्यस्मान्माछाशसिसूभ्यो य इति कर्तरि कर्मणि वा यप्रत्ययः। मिमीते जानीते कर्म मीयतेऽनयेति वा माया कर्मविषयज्ञानं। प्रत्ययस्वरः। विदथानि। विद ज्ञाने इत्यस्माद्रुदिविदिभ्यां ङिदिति कर्मण्यथप्रत्ययः। ङित्त्वादगुणः। प्रत्ययस्वरः ॥

वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते। विप्रो यज्ञस्य साधनः ॥८॥

वाजी। वाजेषु। धीयते। अध्वरेषु। प्र। नीयते। विप्रः। यज्ञस्य। साधनः ॥८॥

वाजी बलवानग्निर्वाजेषु युद्धेषु धीयते। देवैः शत्रुहननार्थं निधीयते। किंच। अध्वरेष्वग्निहोत्रादिषु प्रणीयते। अध्वर्य्वादिभिः प्रकर्षेणाहवनीयादिस्थानेषु प्रक्षिप्यते। अत एव विप्रो मेधावी सन्नग्निर्यज्ञस्यापि होत्रादेः साधनः साधको भवति ॥ धीयते। दधातेः कर्मणि यक्। घुमास्थागापाजहातिसां हलीतीत्वं। निघातः। नीयते। णीञ् प्रापणे इत्यस्य कर्मणि यकि रूपं। उपसर्गादसमासेऽपि णोपदेशस्येति णत्वं। साधनः। साध संसिद्धौ। नंद्यादित्वात्कर्तरि ल्युः। लित्स्वरः ॥

धिया चक्रे वरेण्यो भूतानां गर्भमा दधे। दक्षस्य पितरं तना ॥९॥

धिया। चक्रे। वरेण्यः। भूतानां। गर्भं। आ। दधे। दक्षस्य। पितरं। तना ॥९॥

योऽग्निर्धियाधानपवमानेष्टिरूपेण कर्मणा चक्रे आहवनीयरूपतया कृतोऽभूत् अत एव वरेण्यः सर्वैर्यजमानैः कर्मागत्वेन वरणीयः यश्चाग्निर्भूतानां स्थावरजंगमात्मकानां भूतजातानामंतर्गर्भं स्वात्मानमेव गर्भरूपतया आदधे सर्वत्र दधार पितरं सर्वस्य जगतः पालकं तमिममग्निं दक्षस्य दक्षप्रजापतेस्तना तनया वेदिरूपा भूमिर्दर्शपूर्णमासाग्निहोत्रादिकर्मसिद्ध्यर्थं धारयति। भूमेर्दक्षदुहितृत्वे मंत्रवर्णः। अदितिर्ह्यजनिष्ट दक्ष या

दुहिता तव । ऋग्वि॰ १०. ७२. ५. । इति ॥ चक्रे । करोतेः कर्मणि लिटि रूपं । गर्भं । गॄ निगरणे इत्यस्मादर्तिगृभ्यां भन्निति भन । गिरति गीर्यते वा गर्भः । नित्त्वादाद्युदात्तः । दधे । दधातेर्लिटि रूपं । पितरं । पा रक्षणे । नप्तृनेष्टृ इत्यादिना तृजंतत्वेन निपातनादित्वं । पाति पालयतीति पिता पालकः । चित्स्वरः । तना । यलोपश्छांदसः ॥

नि त्वा दधे वरेण्यं दक्षस्येळा सहस्कृत । अग्ने सुदीतिमुशिजं ॥१०॥

नि । त्वा । दधे । वरेण्यं । दक्षस्य । इळा । सहःऽकृत । अग्ने । सुऽदीतिं । उशिजं ॥१०॥

उक्तार्थोऽनयर्चा विव्रियते । सहस्कृत मथनाख्येन बलेन निष्पन्न हे अग्ने सुदीतिं शोभनदीप्तियुक्तमुशिजं पुरोडाशादिहविः कामयमानं । यद्वा कर्मार्थिभिः काम्यमानं । अत एव वरेण्यं तैर्वरणीयं त्वा एवंविधं त्वा दक्षस्य दुहितेळा वेद्यादिलक्षणा भूमिर्नि दधे । अग्निहोत्रादिकर्मसमृद्ध्यर्थं नितरां दधार ॥ इळा । ईड स्तुतौ । पुंसि संज्ञायामित्यत्र प्रायिकवचनात् स्त्र्यर्थेऽपि घप्रत्ययः । छन्दसत्वादत्वः । सत्तापूर्वकस्य विधेरनित्यत्वादगुणः । ईड्यते स्तूयतेऽस्यां यजमानैर्देवा इतीळा भूमिः । उदात्तनिवृत्तिस्वरेणांतोदात्तः । प्रत्ययस्वरः । उशिजं । वश कांतावित्यस्माद्वशः किदिति इजिप्रत्ययः । कित्त्वात्संप्रसारणं । वष्टि हविः कामयते उश्यते काम्यते कर्मार्थिभिरिति वा उशिक् अग्निः । प्रत्ययस्वरः ॥ ॥२९॥

अग्निं यंतुरमप्तुरमृतस्य योगे वनुषः । विप्रा वाजैः समिंधते ॥११॥

अग्निं । यंतुरं । अप्ऽतुरं । ऋतस्य । योगे । वनुषः । विप्राः । वाजैः । सं । इंधते ॥११॥

वनुषः कर्मसिद्ध्यर्थं संभजमाना विप्रा मेधाविनोऽध्वर्य्वादयो यंतुरं सर्वस्य नियंतारं । यद्वा क्षिप्रं गंतारं । अप्तुरमपां प्रेरकं तमिममग्निमृतस्य सत्यभूतस्य ज्योतिष्टोमादेर्योगे प्रयोगार्थं वाजैर्हविर्लक्षणैरन्नैः समिंधते । सम्यग्दीपयंति ॥ यंतुरं । वर्णव्यत्ययः । यंतारमित्यर्थः । अप्तुरं । तुर त्वरणे । अपस्तूर्तीर्ति त्वरयतीति क्विप् । कृदुत्तरपदप्रकृतिस्वरः । योगे । युजिर् योगे । भावे घञ् । चजोः कु घिण्यतोरिति कुत्वं । ञित्स्वरः । वनुषः । वन षण संभक्तौ । जनेरुसिरित्यधिकारे बहुलवचनादस्मादप्युसिः । प्रत्ययस्वरः । इंधते । ञिइंधी दीप्तौ । निघातः ॥

ऊर्जो नपातमध्वरे दीदिवांसमुप द्यवि । अग्निमीळे कविक्रतुं ॥१२॥

ऊर्जः । नपातं । अध्वरे । दीदिऽवांसं । उप । द्यवि । अग्निं । ईळे । कविऽक्रतुं ॥१२॥

ऊर्जो नपातं हविर्लक्षणैरन्नैः समिध्यमानत्वेनान्नस्य पुत्रं । यद्वान्नस्य चतुर्थं । यथाऽन्नादाहुतिराहुतेरादित्य आदित्यादग्निरिति । उप द्यव्यंतरिक्षस्य समीपे दीदिवांसमतिशयेन दीप्यमानं कविक्रतुं । कवयो मेधाविनोऽध्वर्य्वादयो मथनेन क्रतवः कर्तारो यस्येति । अध्वर्य्वादिभिर्निष्पाद्यमानं तमिममग्निमध्वरेऽस्मिन्यज्ञ ईळे । स्तुतिलक्षणाभिर्गीर्भिरहं स्तौमि ॥ ऊर्जः । ऊर्ज बल इत्यस्माद्भ्राजभासेत्यादिना ताच्छीलिकः क्विप् । ऊर्जयति शरीरमित्यूर्क् अन्नं । सावेकाच इति विभक्तेरुदात्तत्वं । द्यवि । द्युत दीप्तावित्यस्मादौणादिको डुन्प्रत्ययः । द्योतते किरणसंबंधादिति द्युरंतरिक्षं । नित्स्वरः । ईळे । लटि रूपं ॥

ईळेन्यो नमस्यस्तिरस्तमांसि दर्शतः । समग्निरिध्यते वृषा ॥१३॥

ईळेन्यः । नमस्यः । तिरः । तमांसि । दर्शतः । सं । अग्निः । इध्यते । वृषा ॥१३॥

ईळेन्यः स्तोतृभिरीड्योऽत एव नमस्यः सर्वैर्नमस्कार्यस्तमांसि तिरो ध्वांतानि स्वप्रभाभिस्तिरस्कुर्वन् दर्शतः कमनीयतया सर्वैर्दर्शनीयः । तादृशोऽग्निर्वृषा यजमानस्य कामानां वर्षिता समिध्यते । आहुतिप्रक्षेपेण प्रज्वाल्यते । उक्तार्थे वाजसनेयकं । ईळेन्यो ह्येष नमस्यो ह्येष तिरस्तमांसि ददृशे समिद्ध इति ॥ ईळेन्यः । ईड स्तुतौ । कृत्यार्थे तवैकेन्केन्यत्वन इति केन्यः । प्रत्ययस्वरः । नमस्यः । नमस्यतेरचो यदिति यत् । अतोलोपयलोपौ । तित्स्वरितमिति स्वरितः । दर्शतः । दृशिर् प्रेक्षणे । अस्माद्भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच् इत्यतचप्रत्ययः । चित्स्वरः । वृषा । वृषु सेचने इत्यस्मात्कनिन्युवृषीत्यादिना कनिन् । कित्त्वादगुणः । नित्त्वादाद्युदात्तः ॥

वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तं हविष्मंत ईळते ॥१४॥

वृषो इति । अग्निः । सं । इध्यते । अश्वः । न । देवऽवाहनः । तं । हविष्मंतः । ईळते ॥१४॥

वृषो वृषेव कामानां वर्षिता देववाहनः । देवान्हवींषि वाहयति प्रापयतीति देववाहनः । तत्र दृष्टांतः । अश्वो नेति । यथाश्वो राजानं वाहयति स्वपुरं प्रापयतीति । वाहनमश्वः । तद्वत् वाहनभूतो योऽग्निः समिध्यते आहुतिप्रदानेन सम्यग्दीप्यते तं तादृशमग्निं हविष्मंतः संभृतहविष्का यजमाना ईळते । कर्मसिद्ध्यर्थं स्तुवंति ॥ वृषो उ । गुणः । उञमवलंब्य प्रगृह्यसंज्ञा । देववाहनः । वह प्रापणे इत्यस्माण्ण्यंतात्कर्तरि ल्युः । लित्स्वरः । समासे कृदुत्तरपदस्वरः ॥

वृषणं त्वा वयं वृषन्वृषणः समिधीमहि । अग्ने दीद्यतं बृहत् ॥१५॥

वृषणं । त्वा । वयं । वृषन् । वृषणः । सं । इधीमहि । अग्ने । दीद्यतं । बृहत् ॥१५॥

वृषन् कामानां वर्षितरहे अग्ने वृषणो वृषाणो घृताद्याहुतीनां सेक्तारो वयं वृषणमाहुतिद्वारोदकस्य सेक्तारं । तथा च स्मृतिः । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः । मनु॰ ३. ७६ । इति । दीद्यतं दीप्यमानं बृहद्दत एवंभूतं त्वामग्निं समिधीमहि । सम्यग्दीपयामः ॥ इधीमहि । ञिइन्धी दीप्तावित्यस्य प्रार्थने लिङि नकारलोपश्छांदसः । दीद्यतं । दीदेतिर्दीप्तिकर्मा । तस्य शतरि रूपं । अभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ ॥३०॥

अग्ने जुषस्वेत्यष्टर्चं षोडशं सूक्तं वैश्वामित्रमाग्नेयं । अत्रानुक्रमणिका । अग्ने जुषस्व षट् तृतीयाद्युष्णिक् त्रिष्टुब्जगत्य इति । पूर्वसूक्ते गायत्र इत्युक्तत्वादेतदपि गायत्रं । तृतीया तूष्णिक् चतुर्थी त्रिष्टुप् पंचमी जगती ॥ अग्ने जुषस्वेति सवनीयपुरोडाशे स्विष्टकृतः प्रातःसवनीयानुवाक्या । सूत्रितं च । अथ स्विष्टकृतोऽग्ने जुषस्व नो हविः । आ॰ ५. ४. । इति ॥ अतिरात्रे आश्विनशस्त्रे परिहिते सति चमसगणैः सहाश्विनोर्द्विकपालः पुरोडाशः सर्वहुतो होतव्यः । यदि पुरोडाशमवशेष्य स्विष्टकृतं कुर्युस्तस्य स्विष्टकृतः पुरोळा अग्न इत्येषा याज्या । यद्येतस्य पुरोडाशस्य स्विष्टकृता चरेयुः पुरोळा अग्ने पचतः । आ॰ ६. ५ । इति सूत्रितं ॥ माध्यंदिने सवने सवनीयपुरोडाशे स्विष्टकृतोऽनुवाक्या माध्यंदिने सवन इत्येषा । सूत्रितं च । अग्ने जुषस्व नो हविर्माध्यंदिने सवने जातवेदः । आ॰ ५. ४ । इति ॥ तृतीयसवने सवनीयपुरोडाशस्य स्विष्टकृतोऽनुवाक्याग्ने तृतीये सवन इत्येषा । सूत्रितं च । अग्ने तृतीये सवने हि कानिष इत्यनुसवनमनुवाक्याः । आ॰ ५. ४. । इति ॥ आश्विनपुरोडाशस्य स्विष्टकृतो याज्याग्ने वृधान इत्येषा । सूत्रितं च । अग्ने वृधान आहुतिमिति संयाज्ये । आ॰ ६. ५. । इति ॥

अग्ने जुषस्व नो हविः पुरोळाशं जातवेदः । प्रातःसावे धियावसो ॥१॥

अग्ने । जुषस्व । नः । हविः । पुरोळाशं । जातऽवेदः । प्रातःऽसावे । धियावसो इति धियाऽवसो ॥१॥

विश्वामित्रः स्तौति । जातवेदः जातप्रज्ञ धियावसो । धिया स्तोत्रेण वसु धनं यस्माद्भवति सोऽयं धियावसुः । तस्य संबुद्धिः । कर्मानुरूपधनप्रद हे अग्ने प्रातःसावेऽग्निष्टोमे प्रातःसवने नोऽस्मत्संबंधि पुरोडाशं पुरोडाशाख्यं हविर्जुषस्व । सेवस्व ॥ जुषस्व । जुषी प्रीतिसेवनयोरित्यस्माल्लोटि रूपं । आमंत्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः । प्रातःसावे । षुञ् अभिषवे । सवनं सावः । भावे घञ् । थाथघञ्क्ताजबित्रकाणामित्यंतोदात्तत्वं । धियावसो । विभक्त्यलोपश्छांदसः । आमंत्रितत्वान्निघातः ॥

पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः । तं जुषस्व यविष्ठ्य ॥२॥

पुरोळाः । अग्ने । पचतः । तुभ्यं । वा । घ । परिऽकृतः । तं । जुषस्व । यविष्ठ्य ॥२॥

यविष्ठ्य युवतम हे अग्ने यः पुरोळाः । पुरो दाश्यतेऽध्वर्य्वादिभिरेनमिति पुरोडाः पुरोडाशः । पचत कपालयोः पक्वोऽस्ति । स च तुभ्यं त्वदर्थं परिष्कृतो वा घ पर्यग्निकरणादिभिरलंकृतः खलु । तमिमं पुरोडाशं जुषस्व । सेवस्व ॥ पुरोळाः । दाशृ दान इत्यस्मात्पुरस्पूर्वान्मंत्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् । पा॰ ३. २. ७१ । इति कर्मणि ण्विनि कृते श्वेतवहादीनां डस्पदस्य । पा॰ ३. २. ७१. १ । इति डस्प्रत्यये च कृते अवयाः श्वेतवाः पुरोडाश्चेति निपातनादिकारस्य डत्वं । पुरो दाश्यत एनमिति पुरोडाः पुरोडाशः । डकारस्य ळकारो बह्वृचसांप्रदायिकः । कृदुत्तरपदस्वरः । पचतः । डुपचष् पाके इत्यस्माद्भृमृदृशीत्यादिना कर्मण्यतच्प्रत्ययः । पच्यतेऽसाविति पचतः पक्वः । चित्स्वरः । घा । ऋचि तुनुघेत्यादिना संहितायां दीर्घः । परिष्कृतः । संपर्युपेभ्यः करोतौ भूषणे इति करोतेः सुडागमः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । यविष्ठ्य । यविष्ठ एव यविष्ठ्यः । पादार्घाभ्यां च । पा॰ ५. ४. २५. । इत्यत्र चकारेण नवादीनां स्वार्थे यत्प्रत्ययस्योपादानाद्यविष्ठशब्दात्स्वार्थिको यत्प्रत्ययः । आमंत्रितत्वान्निघातः ॥

अग्ने॑ वी॒हि पु॑रो॒ळाश॒माहु॑तं ति॒रोअ॑ह्न्यं । सह॑सः सू॒नुर॑स्यध्व॒रे हि॒तः ॥३॥

अग्ने॑ । वी॒हि । पु॒रो॒ळाश॑म् । आऽहु॑तं । ति॒रःऽअ॑ह्न्यं । सह॑सः । सू॒नुः । अ॒सि॒ । अ॒ध्व॒रे । हि॒तः ॥३॥

हे अग्ने तिरोअह्न्यं अह्नि तिरोहितं सत्याहुतमासमंतादाहुतं पुरोडाशं पुरोडाशाख्यं हविर्वीहि । भक्षय । अध्वरेऽस्मिन्यज्ञे सहसः सूनुर्बलस्य पुत्रस्त्वं हितोऽसि । आहवनीयादिस्थानेष्वस्माभिर्निहितोऽसि । तस्माद्वीहीति शेषः ॥ वीहि । वी कांतिगत्यादिषु । लोटि रूपं । हेरपित्त्वादंतोदात्तत्वं । आहुतं । जुहोतेः कर्मणि क्तः गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । तिरोअह्न्यं । अह्नि भवमह्न्यं । भवे छंदसीति यत् । तिरोभूतमह्न्यं यस्मिन् काले स तिरोअह्न्यः । रात्रिकाल इत्यर्थः । कालाध्वनोरत्यंतसंयोग इति द्वितीया । प्रकृत्यांतःपादमव्यपर इति प्रकृतिभावः । बहुव्रीहौ पूर्वपदस्वरः ॥

माध्यं॑दिने॒ सव॑ने जातवेदः पुरो॒ळाश॑मि॒ह क॑वे जुषस्व ।

अग्ने॑ य॒ह्वस्य॒ तव॑ भाग॒धेयं॒ न प्र मि॑नन्ति वि॒दथे॑षु॒ धीराः॑ ॥४॥

माध्यं॑दिने । सव॑ने । जा॒त॒ऽवे॒दः॒ । पु॒रो॒ळाश॑म् । इ॒ह । क॒वे॒ । जु॒ष॒स्व॒ ।

अग्ने॑ । य॒ह्वस्य॑ । तव॑ । भा॒ग॒ऽधेय॑म् । न । प्र । मि॒न॒न्ति॒ । वि॒दथे॑षु । धीराः॑ ॥४॥

कवे मेधाविन् हे जातवेद इहास्मिन्नग्निष्टोमाख्ये कर्मणि तत्र च माध्यंदिने मध्यंदिनसंबंधिनि सवने पुरोडाशं माध्यंदिनसवनीयपुरोडाशं जुषस्व । सेवस्व । हे अग्ने विदथेषु यज्ञेषु धीराः कर्मकुशला अध्वर्य्वादयो यह्वस्य । यांति प्राप्नुवंति देवा हवींष्यनेनेति यह्वो महानग्निः । यह्वस्य महतस्तव भागधेयं भागतया परिकल्पितमिमं पुरोडाशं न प्रमिनंति । न हिंसंति । किंतु तुभ्यं प्रयच्छंति । न जुषंतीति शेषः ॥ माध्यंदिने । मध्यंदिने भवमित्यर्थे उत्सादित्वादञ् । ञित्त्वादादिवृद्धिः । ञित्त्वादेवाद्युदात्तत्वं । यह्वस्य । या प्रापणे इत्यस्मात् शेवायह्वजिह्वेति निपातनात्करणे वन्प्रत्ययः । हुगागमधातुह्रस्वौ । यात्यनेनेति यह्वोऽग्निः । व्यत्ययेनांतोदात्तः । भागधेयं । भागशब्दात्स्वार्थे भागरूपनामभ्यो धेयप्रत्ययो वक्तव्यः । पा॰ ५. ४. ३६. २ । इति धेयः । प्रत्ययस्वरः । मिनंति । मीञ् हिंसायामित्यस्य क्र्यादित्वात् श्ना । मीनातेर्निगम इति ह्रस्वत्वं । हिनुमीना । पा॰ ८. ४. १५ । इति णत्वं न भवति सर्वविधीनां छंदसि विकल्पितत्वादिति ॥

अग्ने॑ तृ॒तीये॒ सव॑ने॒ हि कानि॑षः पुरो॒ळाशं॑ सहसः सूनवाहु॑तं ।

अथा॑ दे॒वेष्व॑ध्व॒रं वि॑प॒न्यया॑ धा॒ रत्न॑वन्तम॒मृते॑षु॒ जागृ॑विं ॥५॥

अग्ने॑ । तृ॒तीये॑ । सव॑ने । हि । कानि॑षः । पु॒रो॒ळाश॑म् । सह॑सः । सू॒नो॒ इति॑ । आऽहु॑तं ।

अथ॑ । दे॒वेषु॑ । अ॒ध्व॒रं । वि॒प॒न्यया॑ । धाः॒ । रत्न॑ऽवन्तं । अ॒मृते॑षु । जागृ॑विं ॥५॥

सहसः सूनो बलस्य पुत्र हे अग्ने त्वं तृतीये सवने आहुतं हूयमानं पुरोडाशं कानिषः। कामयसे। अथ अनंतरमध्वरमविनाशिनं रत्नवंतं। रत्नशब्देन स्वर्गादिलक्षणमुत्तमं फलमभिधीयते। तद्वंतं फलप्रदं जागृविं जागरणकारिणं। प्रातः सोमो जागृविर्भवति स्वप्ननिवारक इति। तमिमं सोमं विपन्यया स्तुतिलक्षणया वाचा स्तुतस्त्वममृतेषु मरणधर्मरहितेषु देवेष्विंद्रादिषु धाः। धेहि॥ तृतीये। त्रिशब्दात्पूरणार्थे त्रेः संप्रसारणं। पा० ५. २ ५५.। इति तीयप्रत्ययः। तत्संनियोगेन संप्रसारणं। हल इति दीर्घो न भवति। अन्निति तत्र नानुवर्तनात् प्रत्ययस्वरः। कानिषः। कनी कांत्यादिषु। लेटि सिब्बहुलमिति सिप्। तस्यार्धधातुकत्वादिडागमः। कांतिरभिलाषः। अकारस्य आकारो व्यत्ययेन। हियोगादनिघातः। धातुस्वरः। विपन्यया। पन स्तुतौ। भावे क्विप्। विपनं यातीति कप्रत्ययः। प्रत्ययस्वरः। धाः। दधातेर्धातोश्छंदसि लुङि रूपं। पादादित्वाद-निघातः। जागृविं। क्विन्प्रत्ययांतो जागृविशब्दः। नित्स्वरः॥

अग्ने॑ वृधा॒न आहु॑तिं पुरो॒ळाशं॑ जातवेदः। जु॒षस्व॑ ति॒रोअ॑ह्न्यं ॥६॥

अग्ने॑। वृ॒धा॒नः। आऽहु॑तिं। पु॒रो॒ळाशं॑। जा॒त॒ऽवे॒दः॒। जु॒षस्व॑। ति॒रःऽअ॑ह्न्यं ॥६॥

जातवेदो जातप्रज्ञ हे अग्ने वृधान आहुतिभिर्वर्धमानस्त्वं तिरोअह्न्यं। अहि भवमह्न्यं दिवसकृत्यं। तिरो-भूतमह्न्यं यस्मिन्काले स तिरोअह्न्यो रात्रिकालः। तस्मिन्काले आहुतिं पुरोडाशाख्यं हविर्जुषस्व। सेवस्व॥ आहुतिं। जुहोतेः कर्मणि क्तिन्। तादौ च निति कृत्यतावित्ति गतेः प्रकृतिस्वरत्वं॥ ॥३१॥

अस्तीदमिति षोडशर्चं सप्तदशं सूक्तं वैश्वामित्रं। अत्रानुक्रमणिका। अस्तीदं षोळशाद्याचतुर्थीदशमीद्वा-दश्योऽनुष्टुभः षष्ठ्येकादश्युपांत्ये च जगत्यः पंचम्यृत्विगभ्यो वेति। आद्याचतुर्थीदशमीद्वादश्योऽनुष्टुभः षष्ठ्येकाद-श्युपांत्ये च जगत्यः षष्ठ्येकादशी चतुर्दशी पचदशी च जगत्यः शिष्टा अष्टौ त्रिष्टुभः। पचमी मथता नर इत्येषा ऋत्विग्देवताकाग्निदेवताका वा शिष्टा अग्निदेवताकाः॥ सूक्तविनियोगो लैंगिकः। वरुणप्रघासेष्वग्निप्रणयन इळायास्त्वा पद इत्येषा। सूत्रितं च। इळायास्त्वा पदे वयमग्ने विश्वेभिः स्वनीक देवैरित्यर्धर्चं आरमेत। आ० २ १६.। इति॥ तत्रैवाग्निप्रणयने उत्तरवेद्यामग्नौ स्थापिते सति सीद होतरित्येषा। निहितेऽग्नौ सीद होतः स्व उ लोके चिकित्वान्। आ० २ १६। इति सूत्रितं॥ अरण्यामग्निसमारोपणेऽयं ते योनिरित्येषा। सूत्रितं च। अयं ते योनिर्ऋत्विय इत्यरणी गार्हपत्ये प्रतितपत्पाणी वा। आ० ३. १०.। इति॥

अस्ती॒दम॑धि॒मंथ॑न॒मस्ति॑ प्र॒जन॑नं कृ॒तं।

ए॒तां वि॒श्पत्नी॒मा भ॑रा॒ग्निं मं॑थाम पू॒र्वथा॑ ॥१॥

अस्ति॑। इ॒दं। अ॒धि॒ऽमंथ॑नं। अस्ति॑। प्र॒ऽजन॑नं। कृ॒तं।

ए॒तां। वि॒श्पत्नीं॑। आ। भ॒र॒। अ॒ग्निं। मं॒था॒म॒। पू॒र्वऽथा॑ ॥१॥

यजमानोऽध्वर्य्वादीन्प्रति ब्रूते। इदमरण्यर्थं यूपशकलमस्त्यधिमंथनं। अरण्या उपरि निधेयं मथनसाध-नभूतं दंडरज्ज्वादिकमस्ति। प्रजननमग्निजननसाधनभूतं दर्भपिंजूलं कृतं संपादितमस्ति। यद्वा। प्रजननं मथनदंडस्य विन्यासविशेषः। यस्मादेतानि यूपशकलादीन्यग्निमंथनसाधनान्याहृतानि संति तस्माद्विश्पत्नीं विशां प्रजानामग्निसाध्याग्निहोत्रद्वारा स्वर्गादिफलसंपादनेन पालयित्रीमेतामरणीमाभर। हे अध्वर्यो आहर। तस्यामाहृतायां पूर्वथा यथा वयमाधानकालेऽग्निममथ्नीम यथा वा पूर्वे महर्षयोऽग्निममथ्नुस्तद्वदयमेनमग्निमस्मिन्कर्मणि मंथाम। मंथनेन निष्पन्नं करवाम॥ अस्तीति पदद्वयस्य पादादित्वादनिघातः। विश्पत्नीं। पतिशब्दस्य विभाषा सपूर्वस्येति ङीप् नकारश्चांतादेशः। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। भर। हृञ् हरणे इत्यस्य लोटि हृग्रहोर्भश्छंदसीति भकारः। मथाम। मंथ विलोडने। लोटि रूपं। निघातः। पूर्वथा। पूर्वशब्दादिवार्थे प्रत्नपूर्वविश्वेमात्थाल् छंदसीति थाल्प्रत्ययः। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं॥

अरण्योर्निहितो जातवेदा गर्भ इव सुधितो गर्भिणीषु ।
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥२॥
अरण्योः । निऽहितः । जातऽवेदाः । गर्भःऽइव । सुऽधितः । गर्भिणीषु ।
दिवेऽदिवे । ईड्यः । जागृवत्ऽभिः । हविष्मत्ऽभिः । मनुष्येभिः । अग्निः ॥२॥

जातवेदाः सर्वविषयज्ञानवानयमग्निररण्योर्निहितः । दैवयज्ञार्थं नितरां स्थापितोऽस्ति । अत्र दृष्टांतः । गर्भ इवेति । यथा गर्भो गर्भिणीषु स्त्रीषु सुधितः सुष्ठु निहितो वर्तते तद्वत् । स तादृशोऽग्निर्हविष्मद्भिः संभृतहविष्कैरत एव जागृवद्भिः कर्मणि जागरूकैर्मनुष्येभिर्मनुष्यैरस्माभिर्दिवे दिवे प्रत्यहमृत्विक्स्तुत्यर्थमीड्यः । स्तुतिरूपाभिर्गीर्भिः स्तोतव्यः ॥ अरण्योः । ऋ गतौ । अर्तिसृधृधमीत्यादिना अनिः । प्रत्ययस्वरः । निहितः । दधातेः कर्मणि निष्ठायां दधातेर्हिरिति हिरादेशः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । सुधितः । दधातेः कर्मणि निष्ठा । तस्मिन् सुधित वसुधितेत्यादिना निपातनाद्धिरादेशः । दिवे दिवे । दिवु क्रीडादौ । इगुपधलक्षणः कः । नित्यवीप्सयोरिति द्विर्वचनं । तस्याम्रेडितत्वादनुदात्तत्वं पूर्वपदस्वरः । जागृवद्भिः । जागृ निद्राक्षय इत्यस्य क्वसौ रूपं । द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यमिति विकल्पितत्वाद्द्विर्वचनाभावः । वसुस्रंसुध्वंस्वनडुहां दः । पा॰ ८.२.७२ । इति वसोः सकारस्य दत्वं । प्रत्ययस्वरः ॥

उत्तानायामव भरा चिकित्वान्सद्यः प्रवीता वृषणं जजान ।
अरुषस्तूपो रुशदस्य पाज इळायास्पुत्रो वयुनेऽजनिष्ट ॥३॥
उत्तानायां । अव । भर । चिकित्वान् । सद्यः । प्रऽवीता । वृषणं । जजान ।
अरुषऽस्तूपः । रुशत् । अस्य । पाजः । इळायाः । पुत्रः । वयुने । अजनिष्ट ॥३॥

चिकित्वान् ज्ञानवानध्वर्युस्त्वमुत्तानायामधरारण्यामुत्तानशयायामुत्तरारणिमव भर । अधोमुखां धारय । अनंतरं साधरारणिः सद्यः प्रवीता तदानीमेव निषिक्तरेतस्का सती वृषणं कामानां वर्षकमग्निं जजान । जनयतु । अथास्याग्ने रुशत्तमो विनाशयत् पाजस्तेजोमात्रं तत्राभूत् । अनंतरमरुषस्तूप आरोचमानतेजःसंघोपेत इळायास्पुत्र उत्तरवेद्या उत्पन्नोऽग्निर्वयुनेऽरण्योर्योनिस्थानेऽजनिष्ट । अजनि ॥ जजान । जन जनने । लोडर्थे लिटि बहुलमन्यत्रापि संज्ञाछंदसोरिति णिलोपः । प्रत्ययातत्वाभावादाम्न भवति । निघातः । अरुषस्तूपः । न विद्यते रुषः क्रोधो यस्येत्यरुषः । क्रोधराहित्येन रोचमान इत्यर्थः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । ष्टुञ् स्तुतौ । स्तौतेर्दीर्घश्च । उ॰ ३.२५ । इति पप्रत्ययः स्तौतेर्धातोर्दीर्घश्च । स्तूयत इति स्तूपस्तेजःसंघः । अरुष आरोचमानस्तेजःसंघो यस्येति बहुव्रीहौ पूर्वपदस्वरः । रुशत् । रुश हिंसायां । शतरि रूपं । वयुने । अज गतिक्षेपणयोः । अजियमिशीङ्भ्यश्चेत्युनन् चित्प्रत्ययः । अजति वीयते वा वयुनमग्नि । प्रत्ययस्य चित्वादंतोदात्तत्वं । अजनिष्ट । जनी प्रादुर्भावे । लुङि सिचि रूपं । निघातः ॥

इळायास्त्वा पदे वयं नाभा पृथिव्या अधि ।
जातवेदो नि धीमह्यग्ने हव्याय वोळ्हवे ॥४॥
इळायाः । त्वा । पदे । वयं । नाभा । पृथिव्याः । अधि ।
जातऽवेदः । नि । धीमहि । अग्ने । हव्याय । वोळ्हवे ॥४॥

जातवेदो जातप्रज्ञ हे अग्ने अध्वर्य्वादयो वयं पृथिव्या अधि भूमेरुपर्युत्तरवेद्यां नाभा नाभौ तस्या नाभिस्थाने मध्यप्रदेशे । तदेव स्थानं विशेष्यते । इळायाः पदे मानव्या इडाया गोः पदे इडापदरूपे उत्तरवेद्यात्मके स्थाने त्वा त्वां हव्याय वोळ्हवे पुरोडाशादिलक्षणं हविर्वोढुं निधीमहि । निदधीमहि । उक्तार्थे

ब्राह्मणं। इळायास्त्वा पदे वयं नाभा पृथिव्या अधीत्येतद्वा इळायास्पदं यदुत्तरवेदीनाभिर्जातवेदो नि धीमहीति निधास्यतो ह्येनं भवत्यग्ने हव्याय वोळ्हव इति हव्यं हि वक्ष्यन्भवति। ऐ॰ ब्रा॰ १ २८.। इति ॥ नाभा। णह बंधने। इत्यनुवृत्तौ नहो भश्चेतीञ् भकारश्चांतादेशः। ञित्त्वादुपधावृद्धिः। नह्यतीति नाभिर्मध्यस्थानं। सुपां सुलुगिति सप्तम्या डादेशः। ञित्स्वरः। धीमहि। दधातेर्लिङि रूपं। लिङः सीयुट्। पा॰ ३ ४. १०२.। इति सीयुट्। द्विर्वचनाभावश्छांदसः। निघातः। वोळ्हवे। वह प्रापणे। तुमर्थे तवेन्। सहिवहोरोदवर्णस्येति धात्वकारस्यौत्वं। ढत्वधत्वष्टुत्वढलोपाः। नित्त्वादाद्युदात्तः ॥

**मंथता नरः कविमद्वयंतं प्रचेतसममृतं सुप्रतीकं।**
**यज्ञस्य केतुं प्रथमं पुरस्तादग्निं नरो जनयता सुशेवं ॥५॥**
**मंथत। नरः। कविं। अद्वयंतं। प्रऽचेतसं। अमृतं। सुऽप्रतीकं।**
**यज्ञस्य। केतुं। प्रथमं। पुरस्तात्। अग्निं। नरः। जनयत। सुऽशेवं ॥५॥**

नरः कर्मणां नेतारो हे अध्वर्य्वादयः कविं क्रांतदर्शिनमद्वयंतं द्वयमनाचरंतमद्वैतं कुर्वाणं मनसा वाचा चैकविधमेव कर्म कुर्वाणमत एव प्रचेतसं प्रकृष्टज्ञानोपेतममृतं मरणधर्मरहितं सुप्रतीकं शोभनैरंगैर्ज्वालाभिः समेतं तमिममग्निं मथत। मंथनेन निष्पादयत। किंच। हे नरः कर्मणां नेतारोऽध्वर्य्वादयो यूयं यज्ञस्य ज्योतिष्टोमादेः केतुं प्रज्ञापकं प्रथमं मुख्यांगभूतं। अग्निपूर्वकत्वात्सर्वेषामुत्तरक्रतूनां। सुशेवं शोभनसुखोपेतं तादृशमग्निं पुरस्तात्कर्मणः प्रारंभे जनयत। तमिममग्निमेवंविधगुणयुक्तं कुरुतेति भावः॥ मथत। मन्थ विलोडने। लोटि रूपं। पादादित्वादनिघातः। नरः। णीञ् प्रापणे। नयतेर्डिच्च। उ॰ २ १०१। इति ऋप्रत्ययः। डित्त्वाट्टिलोपः। नयंति कर्माणि नीयंते कर्माण्येभिरिति वा नरः। आमंत्रितत्वान्निघातः। अद्वयंतं। द्वयमिवाचरतीत्यर्थे सर्वप्रातिपदिकेभ्यः क्विप् वक्तव्य इत्याचारार्थे क्विप्। द्वयति। तस्य शतरि रूपं द्वयन्निति। न द्वयन्नद्वयन्। त। तत्पुरुषे नञ्स्वरः। सुप्रतीकं। बहुव्रीहौ क्रत्वादयश्चेत्युत्तरपदाद्युदात्तत्वं। जनयत। जनी प्रादुर्भावे। णिच्। अत उपधाया इति वृद्धौ प्राप्तायां जनीजॄष्क्नसुरंजोऽमंताश्चेति मित्त्वान्मितां ह्रस्व इति ह्रस्वः। निघातः। सुशेवं। शेवशब्दो वन्प्रत्ययांत आद्युदात्तः। बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं॥ ॥३०॥

**यदी मंथंति बाहुभिर्वि रोचतेऽश्वो न वाज्यरुषो वनेष्वा।**
**चित्रो न यामन्नश्विनोरनिवृतः परि वृणक्त्यश्मनस्तृणा दहन् ॥६॥**
**यदि। मंथंति। बाहुऽभिः। वि। रोचते। अश्वः। न। वाजी। अरुषः। वनेषु। आ।**
**चित्रः। न। यामन्। अश्विनोः। अनिऽवृतः। परि। वृणक्ति। अश्मनः। तृणा। दहन् ॥६॥**

यद्यध्वर्य्वादयो बाहुभिः स्वकीयैर्हस्तैरग्निं मंथंति मथ्नंति ततः स जातोऽग्निर्वनेषु काष्ठेषु वाजी शीघ्रगमनवान् अरुष आरोचमानः सर्वेषां प्रीतिकरः सन् आ वि रोचते। आ समताद्विशेषेण दीप्यते। तत्र दृष्टांतः। अश्वो नेति। यथाश्वो वनेषु वननीयेषु बाह्यालीस्थानेषु वेगवानारोचमानो वर्तते तद्वत्। तत्रैव दृष्टांतांतरं। चित्रो नेति। यथा यामन् यामनि वेगगमनेऽश्विनोर्देवभिषजोश्चित्रो नानाविधवर्णो रथ आरोचमानो वर्तते तद्वत्। अनिवृतः केनाप्यप्रतिबद्धगमनः सोऽयमग्निरश्मन उपलान् तृणा तृणानि च दहन् भस्मसात्कुर्वन् परि वृणक्ति। दग्धस्थानानि परितो वर्जयति। तादृशोऽग्निरारोचत इति पूर्वेणान्वयः॥ मंथंति। मन्थ विलोडने। लटि रूपं। यदियोगादनिघातः। रोचते। रुच दीप्तौ भौवादिकः। लटि रूपं। निघातः। यामन्। या प्रापणे। आतो मनिन्क्वनिब्वनिपश्चेति मनिन्। सुपां सुलुगित्यादिना सप्तम्या लुक्। नित्स्वरः। अनिवृतः। वृञ् वरणे। निष्ठायां यस्य विभाषेतीट्प्रतिषेधः। निपूर्वो वृणोतिर्निवारणे वर्तते। न निवृतोऽनिवृतः। नञ्स्वरः। वृणक्ति। वृजी वर्जने रुधादिः। चोः कुरिति कुत्वं। निघातः। तृणा। तृह हिंसायां। तृहेः क्नो हलोपश्च। उ॰ ५. ८.। इति क्नः। कित्त्वादगुणः। हलोपश्च। तृह्यंते छिद्यंते गवादिभिरिति तृणं। नित्स्वरः॥

जातो अग्नी रोचते चेकितानो वाजी विप्रः कविशस्तः सुदानुः ।
यं देवास ईड्यं विश्वविदं हव्यवाहमदधुरध्वरेषु ॥७॥
जातः । अग्निः । रोचते । चेकितानः । वाजी । विप्रः । कविऽशस्तः । सुऽदानुः ।
यं । देवासः । ईड्यं । विश्वऽविदं । हव्यऽवाहं । अदधुः । अध्वरेषु ॥७॥

जातो मंथनानंतरमुत्पन्नः स च चेकितानो सर्वं जानानः सन् वाजी सततगमनस्वभावो विप्रो कर्माभिज्ञोऽत एव कविशस्तः कविभिर्मेधाविभिर्होतृभिः स्तुतः सुदानुः सुष्ठु कर्मफलस्य दाता एवंविधोऽग्नी रोचते। दीप्यते। देवासो देवा इंद्रादय ईड्यं होत्रादिभिः स्तुत्यं विश्वविदं सर्वस्य जगतो वेदितारं यमग्निमध्वरेषु ज्योतिष्टोमादियज्ञेषु हव्यवाहं हव्यानां वोढारमदधुर्व्यदधुः सोऽग्निर्दीप्यत इति पूर्वेणान्वयः ॥ चेकितानः । कित ज्ञाने इत्यस्य यङ्लुकि गुणो यङ्लुकोरित्यभ्यासस्य गुणः । अभ्यस्तानामादिरित्याद्युदात्तत्वं । कविशस्तः । थाथघञ्क्ताजबित्रकाणामित्यंतोदात्तत्वं । अदधुः । दधातेर्लङि झेः सिजभ्यस्तविदिभ्यश्चेति जुस् । यद्वृत्तयोगादनिघातः । अडागमस्वरः ॥

सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञं सुकृतस्य योनौ ।
देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥८॥
सीद । होतरिति । स्वे । ऊं इति । लोके । चिकित्वान् । सादय । यज्ञं । सुऽकृतस्य । योनौ ।
देवऽअवीः । देवान् । हविषा । यजासि । अग्ने । बृहत् । यजमाने । वयः । धाः ॥८॥

यजमानो ब्रूते । होतर्होमनिष्पादक हे अग्ने स्वे स्वकीये लोके उत्तरवेद्या नाभौ सीद । त्वं होमनिमित्तमुपविशैव । तथा चिकित्वान् ज्ञानवांस्त्वं सुकृतस्य सुकृतजन्योपभोगस्य योनौ स्थाने उत्तमलोके यज्ञं यज्ञस्य कर्तारं यजमानं सादय । स्थापय । किंच देवावीः । देवान् हविष्प्रदानेनावतीति देवावीः । तादृशस्त्वं हविषा पुरोडाशादिलक्षणेन हव्येन देवान् यजासि । यज । अथ त्वं यजमाने यागं कुर्वाणे मयि बृहत्प्रभूतं पशुपुत्रादिसमेतं वयोऽन्नं धाः । विधेहि ॥ सीद । सदेर्लोटि रूपं । सादय । सदेर्ण्यंतस्य लोटि रूपं । णिच्स्वरः । देवावीः । अव रक्षणादिषु । अवितॄस्तृतंत्रिभ्य ईरितीप्रत्ययः । कृदुत्तरपदस्वरः । यजासि । यजेर्लेट्याडागमः । धाः । दधातेश्छांदसे लुङि रूपं ॥

कृणोत धूमं वृषणं सखायोऽस्रेधंत इतन वाजमच्छ ।
अयमग्निः पृतनाषाट् सुवीरो येन देवासो असहंत दस्यून् ॥९॥
कृणोत । धूमं । वृषणं । सखायः । अस्रेधंतः । इतन । वाजं । अच्छ ।
अयं । अग्निः । पृतनाषाट् । सुऽवीरः । येन । देवासः । असहंत । दस्यून् ॥९॥

यजमानोऽध्वर्य्वादीन्प्रति ब्रूते । हे सखायः कर्मसहकारिणो यूयं वृषणं कामानां वर्षितारं धूमं । धुनोति कंपयतीति धूमोऽग्निः । एवंविधमग्निं कृणोत । कुरुत । मथनेनोत्पादयत । यदाग्निर्न जायते तदानीमाह । अस्रेधंतोऽक्षीणा अनुपरतसामर्थ्याः संतो यूयं वाजं मथनलक्षणं युद्धमच्छाभिमुख्येनेतन । प्राप्नुत । सुवीरः शोभनसामर्थ्योपेतोऽयमग्निः पृतनाषाट् पृतनोपलक्षितं युद्धं सहमानो भवति । येन युद्धं सहमानेनाग्निना देवासो देवा दस्यूनुपक्षपयितॄनसुरानसहंत अभ्यभवन् । तस्मादक्षीणबला यूयं मथनं कुरुतेति भावः ॥ कृणोत । कृवि हिंसाकरणयोः । लोटि तप्प्रत्ययस्य तप्तनप्तनथनाश्चेति तबादेशः । पित्त्वाद्गुणः । पादादित्वादनिघातः । उप्रत्ययस्वरः । धूमं । धूञ् कंपने । इषियुधींधिदसीत्यादिना मक् । कित्त्वाद्गुणाभावः । धुनोति कंपयति दाह्यानीति धूमोऽग्निः । प्रत्ययस्वरः । इतन । इण् गतावित्यस्य लोटि तप्प्रत्ययस्य तनादेशः । निघातः । पृतनाषाट् ।

षह मर्षणे। छंदसि सह इति ण्विः। णित्त्वादुपधावृद्धिः। सहेः साडः स इति षत्वं। कृदुत्तरपदप्रकृतिस्वरः। असहंत। षह मर्षण इत्यस्य लङि रूपं। यद्योगादनिघातः। दस्यून्। दसु उपक्षये। यजिमनिशुंधिदसिजनिभ्यो युर्जति युच। दस्यतीति दस्यवः शत्रवः। व्यत्ययेनाद्युदात्तत्वं॥

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः।
तं जानन्नग्न आ सीदाथा नो वर्धया गिरः॥१०॥
अयं। ते। योनिः। ऋत्वियः। यतः। जातः। अरोचथाः।
तं। जानन्। अग्ने। आ। सीद। अथ। नः। वर्धय। गिरः॥१०॥

हे अग्ने ऋत्वियो वसंताद्यृतौ भवोऽयमंगुल्या निर्दिश्यमानः पलाशाश्वत्थादिमयः काष्ठविशेषोऽरणिस्ते तव योनिरुत्पत्तिस्थानं यतोऽरणेर्जातस्त्वमरोचथाः। अशोभथाः। जानंस्त्वं तमरणिरूपं काष्ठविशेषमासीद। तस्यामरण्यामारोपितः सन् नैरंतर्येण तिष्ठ। अथानंतरं नोऽस्माकं गिरः स्तुतिलक्षणा वाचो वर्धय। यद्वा गीःशब्देन तद्वंतो लक्ष्यंते। तथा स्तोतॄनस्मान् वर्धय। पशुपुत्रादिभिः समृद्धान् कुरु॥ योनिः। यु मिश्रणे। वहिश्रीत्यादिना निप्रत्ययः। निदित्युक्तत्वादाद्युदात्तः। ऋत्वियः। छंदसि घसित्यृतुशब्दात्प्राप्तार्थे घस्प्रत्ययः। घस्य इयादेशः। सितीति पदसंज्ञायां ओर्गुणः। पा॰ ६.४.१४६। इति संज्ञाधीनो गुणो न भवति। प्रत्ययस्वरः। अरोचथाः। रुच दीप्तावित्यस्य लङि रूपं। यद्वृत्तयोगादनिघातः। सीद। सदेर्लोटि पाघ्रेत्यादिना सीदादेशः। निघातः। अथ। निपातस्य चेति सांहितिको दीर्घः। वर्धय। वृधु वर्धने। हेतुमति णिच्। निघातः॥ ॥३३॥

तनूनपादुच्यते गर्भ आसुरो नराशंसो भवति यद्विजायते।
मातरिश्वा यदमिमीत मातरि वातस्य सर्गो अभवत्सरीमणि॥११॥
तनूऽनपात्। उच्यते। गर्भः। आसुरः। नराशंसः। भवति। यत्। विऽजायते।
मातरिश्वा। यत्। अमिमीत। मातरि। वातस्य। सर्गः। अभवत्। सरीमणि॥११॥

योऽग्निर्यदा गर्भोऽरणीषु गर्भरूपतया वर्तते तदा सोऽग्निस्तनूनपादुच्यते। यष्टॄणां तनूः शरीराणि न पातयति न दहतीति व्युत्पत्तेः। यद्वा तनूशब्देनापोऽभिधीयंते नपाच्छब्देनकांतरिताः प्रजाः। तथा चापां नप्ता। कथमेतत्। आपस्तावत् अंतरिक्षे। ताभ्य ओषधिवनस्पतयो जायंते। तेभ्यो ह्येष इति। यद्यदा विजायते विशेषेण प्रत्यक्षतया जायते तदासुरः कर्मविघ्नकारिणामसुराणां हंता स एव नराशंसः नरैः कर्मणां नेतृभिरध्वर्य्वादिभिः शंसनीयो भवति। यद्यदा मातर्यंतरिक्षे स्व तेजोऽमिमीत निर्मिमीते तदा मातरिश्वा भवति। मातर्यंतरिक्षे श्वसिति चेष्टत इति व्युत्पत्तेः। एवंविधस्याग्नेः सरीमणि सरणे शीघ्रगमने वातस्य वायोः सर्गः सृष्टिरभवत्। भवति। यदाग्निररणीषु गर्भरूपतया वर्तते तदा तनूनपान्नामको भवति। यदा जायते तदा नराशंसनामको भवति। यदांतरिक्षे विद्योतते तदा मातरिश्वनामको भवतीति॥ तनूनपात्। तनु विस्तारे। कृषिचमितनिधनिसर्जिखर्जिभ्य ऊरिति ऊप्रत्ययः। व्यत्ययेनाद्युदात्तः। नपात्। पा रक्षणे पत्लृ गतौ वा ण्यंतः। क्विप्। न पाति न पातयतीति वा नपात्। नभ्राण्नपान्नवेदा इत्यादिना निपातनान्नञः प्रकृतिभावः। नञ्स्वरः। तनूर्न पातीति तनूनपात्। कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते उभे वनस्पत्यादिषु युगपदित्युभयपदप्रकृतिस्वरत्वं। आसुरः। असुरस्यायमासुरः। अहितकारित्वेन संबंधी। तस्येदमित्यण्। प्रत्ययस्वरः। नराशंसः। नॄ नये। ऋदोरबित्यप्। प्रत्ययस्य पित्त्वान्नरशब्द आद्युदात्तः। शंसु स्तुतावित्यस्माद्घञंत आद्युदात्तः। नरशब्दस्यान्येषामपि दृश्यत इति दीर्घः। वनस्पत्यादित्वादुभयोः प्रकृतिस्वरत्वं। विजायते। जनी प्रादुर्भावे। दिवादित्वात् श्यन्। धातुस्वरः। अमिमीत। माङ् माने शब्दे च। जुहोत्यादिः। भृञामिदित्यभ्यासस्येत्वं। यद्योगादनिघातः। सरीमणि। सृ गतौ। हृभृसृस्तृसृभ्यः। उ॰ ४.१४७। इतीमनिन्प्रत्ययः। नित्स्वरः॥

सुनिर्मथा निर्मथितः सुनिधा निहितः कविः ।
अग्ने स्वध्वरा कृणु देवान्देवयते यज ॥१२॥
सुनिःऽमथा । निःऽमथितः । सुऽनिधा । निऽहितः । कविः ।
अग्ने । सुऽअध्वरा । कृणु । देवान् । देवऽयते । यज ॥१२॥

हे अग्ने कविर्मेधावी सुनिर्मथा शोभनेन मथनेन निर्मथितः । नितरां मथितोऽसि । तथा सुनिधा शोभनेन निधानेन निहितोऽसि । उत्तरवेद्यादिस्थानेषु नितरां प्रतिष्ठोऽसि । किंच स्वध्वराण्यस्माभिः क्रियमाणानि कर्माणि सुष्ठु हिंसारहितानि कृणु । कुरु । तथा देवयते देवान्कामयमानाय यजमानाय देवान्यजनीयानिन्द्रादीन् यज । पूजय ॥ सुनिर्मथा । मथ विलोडने । अस्मात्संपदादिलक्षणो भावे क्विप् । प्रादिसमासः । कृदुत्तरपदस्वरः । निर्मथितः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । सुनिधा । निपूर्वस्य दधातेर्भावे आतश्चोपसर्गे इत्यङ् । सुपां सुलुगिति तृतीयाया लुक् । कृदुत्तरपदस्वरः । कृणु । कृवि हिंसाकरणयोरित्यस्य लोटि धिन्विकृण्व्योरच्चेत्युप्रत्ययः । उतश्च प्रत्ययादिति हेर्लुक् । निघातः ॥

अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीळुजंभं ।
दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभि सं रभंते ॥१३॥
अजीजनन् । अमृतं । मर्त्यासः । अस्रेमाणं । तरणिं । वीळुऽजंभं ।
दश । स्वसारः । अग्रुवः । संऽईचीः । पुमांसं । जातं । अभि । सं । रभंते ॥१३॥

मर्त्यासो मर्त्या ऋत्विजोऽमृतं मरणधर्मरहितं अत एवास्रेमाणं क्षयरहितं वीळुजंभं हविर्भक्षणार्थं दृढदंतं तरणिं । तरंति यजमानाः पापमनेनेति तरणिरग्निः । तमजीजनन् । मथनेनोदपीपदन् । अथ जातं तमग्निमभिलक्ष्य स्वसारः सरंत्यो दश दशसंख्याका अग्रुवः । कर्मकरणार्थमग्रमगतीत्यग्रुवोऽङ्गुलयः । तादृश्योऽङ्गुलयः समीचीः परस्परं संगताः सत्यः संरभंते । शब्दं कुर्वंते । जातमग्निं दृष्ट्वाध्वर्य्वादयो हर्षात्स्वहस्तद्वयसंपुटेन शब्दं कुर्वंतीत्यर्थः । तत्र दृष्टांतः । पुमांसमिति । यथा जातं पुत्रमुपलभ्य तत्रत्याः पित्रादयो हर्षाद्ध्वनयंति तद्वत् ॥ अजीजनन् । जनी प्रादुर्भावे इत्यस्य ण्यंतस्य लुङि चङि रूपं । अस्रेमाणं । स्रिवु गतिशोषणयोः । भावे मनिन्निति मनिन्प्रत्ययः । लघूपधगुणः । लोपो व्योर्वलीति वलोपः । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । तरणिं । तॄ प्लवनतरणयोः । अर्तिसृधृधम्यम्यश्यवितॄभ्योऽनिरित्यनिप्रत्ययः । गुणः । प्रत्ययस्वरः । स्वसारः । असु क्षेपणे इत्यस्मात्सुञ्युपसर्गेऽऋन्निति ऋन्प्रत्ययः । सुष्ठु अस्यंति कर्मसु पदार्थानिति स्वसारः । न षट्स्वस्रादिभ्य इति ङीपः प्रतिषेधः । नित्त्वादाद्युदात्तः । अग्रुवः । अगि गतौ । जत्र्वादयश्च । उ० ४ १०२ । इति रुप्रत्ययः । निपातनान्नलोपः । जसि तन्वादित्वादुवङादेशः । प्रत्ययस्वरः । समीचीः । इण् गतावित्यस्मात्समीणः । उ० ४ ९२ । इति चट्प्रत्ययो धातोर्दीर्घश्च । टित्त्वाड्ढाणञित्यादिना ङीप् । समयंतीति समीच्यः । यद्वा संपूर्वस्याञ्चतेः क्विप् । समः समीति समि इत्यादेशः । अचतेश्चोपसंख्यानमिति ङीप् । अच इत्यकारलोपः । चाविति दीर्घः । वा छंदसीति पूर्वसवर्णदीर्घः । एकादेशस्वरः । पुमांसं । पा रक्षणे इत्यस्मात्पातेर्डुम्सुन् । उ० ४ १७७ । इति डुम्सुन्प्रत्ययः । पुंसोऽसुङ् । पा० ७ १.८९ । इत्यसुङादेशः । पाति कुलमिति पुमान् । नित्स्वरः । रभंते । रभ शब्दे इत्यस्य लटि रूपं । निघातः ॥

प्र सप्तहोता सनकादरोचत मातुरुपस्थे यदशोचदूधनि ।
न नि मिषति सुरणो दिवेदिवे यदसुरस्य जठरादजायत ॥१४॥
प्र । सप्तऽहोता । सनकात् । अरोचत । मातुः । उपऽस्थे । यत् । अशोचत । ऊधनि ।
न । नि । मिषति । सुऽरणः । दिवेऽदिवे । यत् । असुरस्य । जठरात् । अजायत ॥१४॥

सनकात्सनातनोऽग्निः सप्तहोता। सप्त होतारो होत्रका यस्यासौ सप्तहोता सन् प्रारोचत। गार्हपत्यस्थानेऽदीप्यत। यद्यदा मातुः पृथिव्या उपस्थ उत्सङ्गे तत्राप्यूधन्यूधःस्थान उत्तरवेद्यामशोचत अशोभत तदा सोऽग्निः सुरणः। सुष्ठु रणयति शब्दयतीति सुरणः। सर्वैः कमनीयतया दृश्यमानः सन् दिवे दिवे प्रतिदिनं न निमिषति। न निद्राति। किंतु सर्वदा यज्ञार्थं जागर्त्येव। यद्यस्मादसुरस्याग्नेः प्रेरकस्यारणीरूपस्य काष्ठस्य जठरादुदरादजायत कर्मार्थमुदपद्यत तस्मान्न निमिषतीति पूर्वेणान्वयः॥ अरोचत। रुच दीप्तावित्यस्य लङि रूपं। निघातः। अशोचत। शुच दीप्तौ। ऊधनि। सकारस्य नकारश्छांदसः। मिषति। मिषु सेचन इत्यस्य लटि रूपं। सुरणः। रण शब्दे। तत्करोतीति णिच। तस्मादकर्तरि कर्तरि खल्। नित्स्वरः। असुरस्य। असु क्षेपण इत्यस्मादसेरुरन्नित्युरन्प्रत्ययः। अस्यतीत्यसुरः। नित्स्वरः। जठरात्। जनी प्रादुर्भाव इत्यस्मात् जनेररष्ठ च। उ० ५ ३८। इत्यरप्रत्ययः ठकारश्चांतादेशः। प्रत्ययस्वरः। अजायत। जनी प्रादुर्भाव इत्यस्य लङि श्यनि ज्ञाजनोर्जेति धातोर्जादेशः। यद्योगादनिघातः॥

अमित्रायुधो मरुतामिव प्रयाः प्रथमजा ब्रह्मणो विश्वमिद्विदुः।
द्युम्नवद्ब्रह्म कुशिकास एरिर एकएको दमे अग्निं समीधिरे ॥१५॥
अमित्रऽयुधः। मरुताम्ऽइव। प्रऽयाः। प्रथमऽजाः। ब्रह्मणः। विश्वं। इत्। विदुः।
द्युम्नऽवत्। ब्रह्म। कुशिकासः। आ। ईरिरे। एकःऽएकः। दमे। अग्निं। सं। ईधिरे ॥१५॥

अमित्रायुधोऽमित्रैः कर्मविघ्नकारिभिरसुरैः सह योद्धारः। यद्वा अमित्राणि पापानि। तैः सह योद्धारस्तत्र दृष्टांतः। मरुतामिव प्रया इति। यथा मरुतां देवानां प्रयाः प्रकर्षेण शत्रूनभियांतीति प्रया बलानि शत्रूणां हंतॄणि तद्वत्कर्मविघ्नकारिणां पापानां च हंतारो ब्रह्मणः सर्वस्य जगतः स्रष्टुः प्रथमजाः प्रथममुत्पन्नाः कुशिकासः कुशिकगोत्रोत्पन्ना ऋषयो विश्वं स्थावरजंगमात्मकं सर्वं जगद्विदुरित। जानंत्येव। तेऽमी कुशिका द्युम्नवद्धविर्युक्तं ब्रह्म स्तोत्रमेरिरे। अग्नय आ समंतात्प्रेरयंति। ते च दमे स्वे स्वे गृह एक एक एकैको भूत्वाग्निं समीधिरे। आज्याद्याहुतिभिः सम्यग्दीपयंति॥ अमित्रायुधः। युध संप्रहारे। क्विप्। कृदुत्तरपदस्वरः। संहितायां पूर्वपदस्य दीर्घश्छांदसः। प्रयाः। या प्रापणे। अन्येभ्योऽपि दृश्यंत इति विच्। प्रथमजाः। जनी प्रादुर्भावे। जनसनेत्यादिना विट्। विड्वनोरित्यात्वं। विदुः। विदेर्लटि विदो लटो वेति झेरुसादेशः। ईरिरे। ईर गतावित्यस्य लिटि रूपं। मन्त्रत्वादाम्न भवति। दमे। दमु उपशमने। करणे घञ्। नोदात्तोपदेशस्येति वृद्धिप्रतिषेधः। ञित्स्वरः। ईधिरे। ञिइन्धी दीप्तावित्यस्य लिटि इन्धिभवतिभ्यां चेति किद्वद्भावान्नकारलोपः। निघातः॥

यदद्य त्वा प्रयति यज्ञे अस्मिन्होतश्चिकित्वोऽवृणीमहीह।
ध्रुवमया ध्रुवमुताशमिष्ठाः प्रजानन्विद्वाँ उप याहि सोमं ॥१६॥
यत्। अद्य। त्वा। प्रऽयति। यज्ञे। अस्मिन्। होतरिति। चिकित्वः। अवृणीमहि। इह।
ध्रुवं। अयाः। ध्रुवं। उत। अशमिष्ठाः। प्रऽजानन्। विद्वान्। उप। याहि। सोमं ॥१६॥

होतर्होमनिष्पादक चिकित्वः कर्मविषयज्ञानवन् हे अग्ने अद्येदानीं प्रयति प्रवर्तमानेऽस्मिन् ज्योतिष्टोमादौ यज्ञे त्वा त्वां यद्यस्मात्कारणादवृणीमहि त्वद्विषयं वरणमकुर्म तस्मात्तादृशस्त्वमिह कर्मणि देवान् ध्रुवमयाः। ध्रुवं यथा भवति तथास्माभिर्दत्तानि हवींषि प्रापय। उत अपि चाशमिष्ठाः। हविःस्वीकरणात्तृप्तैर्देवैः शांतस्त्वमकारिष्ठाः। अथ प्रजानन्निमं यज्ञं सम्यक् जानन्विद्वान्यत्किंचित्सर्वं जानानस्त्वं सोममस्माभिः क्रियमाणमिममभिषुतं सोममभिलक्ष्योप याहि। समीप आगच्छ॥ प्रयति। इण् गतावित्यस्य शतरि रूपं। शतुरनुम इति विभक्तेरुदात्तत्वं। अवृणीमहि। वृञ् वरणे। क्र्यादित्वात् श्ना। लङ्युत्तमबहुवचन ई हल्यघोरितीत्वं। आमंत्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः। अयाः। या प्रापण इत्यस्य लङि सिपि

रूपं । निघातः । अशमिष्ठाः । शमु उपशमने इत्यस्य ण्यंतस्य कर्मणि लुङि स्यसिचसीयुट् । पा॰ ६. ४. ६२. । इति विकल्पेनेडागमः । तस्यासिद्धत्वाणेरनिटीति णिलोपः । निघातः । प्रजानन् । ज्ञा अवबोधने । शतरि रूपं । याहि । यातेर्लोटि रूपं ॥ ॥ ३४ ॥ ॥ २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके प्रथमोऽध्यायः समाप्तः ॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

तृतीयेऽनुवाके नव सूक्तानि । तत्रेच्छंति त्वेति द्वाविंशत्यृचं प्रथमं सूक्तं । तत्रेयमनुक्रमणिका । इच्छंति द्व्यधिकेंद्रमिति । मंडलद्रष्टा विश्वामित्र ऋषिः । इंद्रो देवता । अनुक्तत्वात्रिष्टुप् छंदः ॥ आभिप्लविके प्रथमेऽहनि दशरात्रे प्रथमेऽहनि च माध्यंदिने सवनेऽच्छावाकशस्त्रेऽहीनसूक्तस्थाने द्वितीयमिदं संपातसूक्तं । अभिप्लवपृष्ठ्याहानीति खंडे सूत्रितं । इमामू ष्विच्छंति त्वा शासद्वह्निरिति संपाताः । आ॰ ७. ५. । इति ॥ इंद्रस्य वृत्रघ्नः संवर्धिनि पशौ महदानुमिति वपाया याज्या । महदानुं पुरुहूत क्षियंतं सुत इंद्रो मघवा यद्ध वृत्र । आ॰ ३. ८. । इति सूत्रितं ॥ अग्नये वाजिभिः शर्ध्यपदे पशौ हविषो याज्या । सूत्रितं च । अग्नये वाजिभिश्च प्रशितः शुचो वो हव्या मरुतः शुचीनां । आ॰ ३. ७. । इति ॥ शुनासीरीये वैकल्पिकस्येंद्रस्य शुनस्य शुनं हुवेमेत्यनुवाक्या । सूत्रितं च । शुनं हुवेम मघवानमिंद्रमस्यायतो गव्यतो वाजयंतः । आ॰ २. २०. । इति ॥

इ॒च्छंति॑ त्वा सो॒म्यासः॒ सखा॑यः सु॒न्वंति॒ सोमं॒ दध॑ति॒ प्रयां॑सि ।
तिति॑क्षंते अ॒भिश॑स्तिं॒ जना॑ना॒मिंद्र॒ त्वदा कश्च॒न हि प्र॑के॒तः ॥१॥

इ॒च्छंति॑ । त्वा॒ । सो॒म्यासः॑ । सखा॑यः । सु॒न्वंति॑ । सोम॑ं । दध॑ति । प्रयां॑सि ।
तिति॑क्षंते । अ॒भिऽश॑स्तिं । जना॑नां । इंद्र॑ । त्वत् । आ । कः । च॒न । हि । प्र॒ऽके॒तः ॥१॥

विश्वामित्रः स्तौति । हे इंद्र सोम्यासः सोमार्हा ब्राह्मणास्त्वा त्वां शंसितुमिच्छंति । अत एव सखायस्ते ब्राह्मणास्त्वदर्थं सोमं सुन्वंति । अभिषुण्वंति । प्रयांसीतराण्यपि हवींषि दधति । त्वदर्थं धारयंति । त्वया प्रेरिताः संतो जनानां सपत्नानामभिशस्तिं तत्कृतां हिंसां तितिक्षंते । सहंते । एवमनुग्राहकस्त्वत् त्वत्तोऽन्यः कश्चन हि को नाम पुरुषः खलु आ प्रकेतः । सर्वतो जगति । प्रकेतयते ख्याप्यत इति प्रकेतः । प्रख्यापितो विद्यते ॥ सोम्यासः । सोममर्हतीत्यर्थे सोममर्हति य इति यः । प्रत्ययस्वरः । सुन्वंति । षुञ् अभिषवे । स्वादित्वात् श्नुः । सति शिष्टस्वरो बलीयानिति श्नुप्रत्ययस्वरः । दधति । दधातेर्लटि रूपं । समानवाक्ये युष्मदस्मदादेशनिघाताः । पा॰ ८. १. १८. ५. । इति सोमपदस्येतरवाक्येनान्वयान्न निघातः । अभ्यस्तानामादिरित्याद्युदात्तत्वं । तितिक्षंते । तिज निशाने इत्यस्य क्षमायां गुप्तिज्किद्भ्यः सन्निति सन् । अभ्यस्तस्वरः । अभिशस्तिं । शसु हिंसायामित्यस्माद्भावे क्तिन् । तादौ च निति कृत्यताविति गतेः प्रकृतिस्वरत्वं । प्रकेतः । कित ज्ञाने । कर्मणि घञ् । थाथघञ्क्तांतोदात्तत्वं ॥

न ते॑ दू॒रे प॑र॒मा चि॒द्रजां॒स्या तु प्र या॑हि हरिवो॒ हरि॑भ्यां ।
स्थि॒राय॒ वृष्णे॒ सव॑ना कृ॒तेमा यु॒क्ता ग्रावा॑णः समिधा॒ने अ॒ग्नौ ॥२॥

न । ते । दूरे । परमा । चित् । रजांसि । आ । तु । प्र । याहि । हरिऽवः । हरिऽभ्यां ।
स्थिराय । वृष्णे । सवना । कृता । इमा । युक्ताः । ग्रावाणः । संऽइधाने । अग्नौ ॥ २ ॥

हरिवः । हरिवर्णावश्वौ यस्य सोऽयं हरिवानिंद्रः । हे हरिवः परमा चित परमाणि दूरे वर्तमानान्यपि रजांसि स्थानानि ते तव दूरे न भवंति । तस्माद्धरिभ्यामश्वाभ्यां त्वं तु क्षिप्रमा प्रयाहि । अस्मदीयं यज्ञमभिलक्ष्यागच्छ । स्थिराय फलप्रदाने दृढचित्तायात एव वृष्णे कामानां वर्षित्रे तुभ्यमिमा इमानि सवना सवनानि प्रातरादीनि कृता । कृतानि । किंच । अग्नावाहवनीये समिधाने आहुत्यधिकरणतया सम्यग्दीप्यमाने सति ग्रावाण उपला युक्ताः । सोमाभिषवार्थमुद्युक्ताः । अतस्त्वं क्षिप्रमागच्छेति भावः ॥ याहि । या प्रापण इत्यस्य लोटि रूपं । हरिवः । हरी अस्य स्त इति मतुप् । छंदसीर इति तस्य वत्वं । आमंत्रितत्वान्निघातः । स्थिराय । ष्ठा गतिनिवृत्तावित्यस्मादजिरशिशिरेत्यादिना किरच । प्रत्ययांतत्वेन निपातनादाकारलोपः । चित्स्वरः । सवना । षुञ् अभिषव इत्यस्मादधिकरणे ल्युट् चेति ल्युट् । सूयते सोमो यत्रेति सवनानि प्रातरादीनि । लित्स्वरः । समिधाने । ञिइंधी दीप्तावित्यस्य कानचि रूपं । क्ङित्त्वान्नकारलोपः । चित्स्वरः ॥

इंद्रः सुशिप्रो मघवा तरुत्रो महाव्रातस्तुविकूर्मिर्ऋघावान् ।
यदुग्रो धा बाधितो मर्त्येषु [illegible] वृषभ वीर्याणि ॥ ३ ॥
इंद्रः । [illegible] । मघऽवा । तरुत्रः । महाऽव्रातः । तुविऽकूर्मिः । ऋघावान् ।
[illegible] । उग्रः । धाः । बाधितः । मर्त्येषु । क्व । त्या । ते । वृषभ । वीर्याणि ॥ ३ ॥

वृषभ कामानां वर्षक हे इंद्र यस्त्वमिंद्रः परमैश्वर्यसंपन्नः सुशिप्रः । शिप्रशब्देन शिरस्त्राणमभिधीयते । शोभनशिरस्त्राणोपेतः । यद्वा शोभनहनुमान् । शिप्रे हनू नासिके वा । नि॰ ६. १७ । इति यास्कः । मघवा धनवान् तरुत्रः । तरत्यनेन शत्रूनिति वा इति तरुत्र इंद्रः । महाव्रातः । मरुद्भिर्महान्व्रातः समूहो यस्येति स तथोक्तः । तुविकूर्मिः संग्रामे नानाविधकर्मणां कर्ता ऋघावान् शत्रुविषयहिंसावान् अत एवोग्रः शत्रूणां भयंकरः स तादृशस्त्वं बाधितोऽसुरैः संग्रामे बाधितः सन् मर्त्येषु मारयितुष्वसुरेषु यत यानि वीर्याणि धा अधा इदानीं ते तव त्या तानि वीर्याणि क्व । क्वासंति वद ॥ सुशिप्रः ॥ सृप् गतौ । औणादिको रन्प्रत्ययः । बाहुलकात्सृ इत्यस्य शि इत्यादेशः । बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं । तरुत्रः । तरतेरशिवादिभ्य इत्रोत्रावित्युत्रप्रत्ययः । व्यत्ययेनाद्युदात्तत्वं । महाव्रातः । आन्महत इत्याकारादेशो महतस्तकारस्य । तुविकूर्मिः । करोतेरौणादिको मिप्रत्ययः । गुणे कृतेऽकारस्योत्वं छांदसं । हलि चेति दीर्घः । ऋघावान् । ऋहन् हंतीत्यृघाः । अन्येभ्योऽपि दृश्यंत इति विच् । दृशिग्रहणान्नलोपो हकारस्य घत्वं । तदस्यास्तीति मत्वर्थे छंदसीवनिपाविति वनिप् । व्यत्ययेनाद्युदात्तः । क्व । किंशब्दस्य सप्तम्यर्थे किमोऽदित्यत्प्रत्ययः । तस्मिन् क्वातीति क्वादेशः । तित्स्वरः ॥

त्वं हि ष्मा च्यावयन्नच्युतान्येको वृत्रा चरसि जिघ्नमानः ।
तव द्यावापृथिवी पर्वतासोऽनु व्रताय निमितेव तस्थुः ॥ ४ ॥
त्वं । हि । स्म । च्यवयन् । अच्युतानि । एकः । वृत्रा । चरसि । जिघ्नमानः ।
तव । द्यावापृथिवी इति । पर्वतासः । अनु । व्रताय । निमिताऽइव । तस्थुः ॥ ४ ॥

हे इंद्र त्वमेकोऽसहाय एवाच्युतानि च्युतिरहितानि दृढमूलान्यपि तव प्रतिपक्षभूतानि रक्षांसि च्यावयन् स्वस्वस्थानात्पातयन् तथा वृत्रा वृत्राणि पापानि जिघ्नमानो हिंसन् चरसि हि स्म । वर्तसे खलु । किंच । एवंविधसामर्थ्योपेतस्य तव व्रताय कर्मण आज्ञायै द्यावापृथिव्यौ पर्वताश्च निमितेव निखाता निश्चला इवानुतस्थुः । अनुकूला स्तिष्ठंति ॥ स्म । चादित्वादनुदात्तः । च्यावयन् । च्युङ् गतावित्यस्य ण्यंतस्य शतरि रूपं । णिच्स्वरः ।

चरसि । चर गतिभक्षणयोः । हियोगादनिघातः । जिघ्नमानः । हन हिंसागत्योरित्यस्य घञर्थे कविधानमिति कः । तस्य छंदस्युभयथेति सार्वधातुकत्वाच्छप् । तस्य श्लुः । बहुलं छंदसीत्यभ्यासस्येत्वं । हंतीति जिघ्नः । आचारार्थे क्विप् । अस्मात्ताच्छील्यार्थे चानश् । शप् । व्यत्ययेनाद्युदात्तत्वं । द्यावापृथिवी । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं । निमितेव । डुमिञ् प्रक्षेपणे इत्यस्य कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । सुपां सुलुगिति सुपो डादेशः । इवेन विभक्त्यलोप इत्युक्तत्वात्पूर्वपदस्वरः । तस्थुः । ष्ठा गतिनिवृत्तावित्यस्य लिट्युस्यातो लोपि कृते तस्य द्विर्वचनेऽचीति स्थानिवद्भावाद्द्विर्वचनं । निघातः ॥

उताभये पुरुहूत श्रवोभिरेको दृळ्हमवदो वृत्रहा सन् ।
इमे चिदिंद्र रोदसी अपारे यत्संगृभ्णा मघवन्काशिरित्ते ॥५॥

उत । अभये । पुरुऽहूत । श्रवःऽभिः । एकः । दृळ्हं । अवदः । वृत्रऽहा । सन् ।
इमे इति । चित् । इंद्र । रोदसी इति । अपारे इति । यत् । संऽगृभ्णाः । मघऽवन् । काशिः । इत् । ते ॥५॥

उतेत्यामंत्रणं । हे इंद्र पुरुहूत पुरुभिर्बहुभिर्यज्ञेभिराहूत । यद्वा देवैरसुरेभ्यो रक्षार्थं बहुवारमाहूत । श्रवोभिर्वीर्यैरुपेत एकोऽसहायस्त्वं वृत्रहा वृत्रशत्रोर्हंता सन् अभये ऽसुरेभ्यः सकाशान्मा बिभीतेति देवान्प्रति यद्वाक्यमवदोऽवोचस्तद्वाक्यं दृढं । सत्यमेव । किंच । मघवन्निंद्र त्वमपारे चित् दुरपारे ऽपीमे रोदसी द्यावापृथिव्यौ यद्यस्मात्कारणात्संगृभ्णाः संगृह्णासि । परस्परमधरोत्तरभावेन संयोजितं करोषीति यावत् । एष ते तव महिमा काशिरित् प्रकाशो लोके प्रसिद्ध एव । यद्वा यत् येन ते रोदसी संगृह्णासि ते तव काशिर्मुष्टिर्महान् । काशिर्मुष्टिः । नि॰ ६ १ । इति यास्कः ॥ अभये । ञिभी भये इत्यस्माद्भावे एरजित्यच्प्रत्ययः । नञा समासे तस्य स्वरः । अवदः । वद व्यक्तायां वाचि । लङि रूपं । निघातः । अपारे । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । संगृभ्णाः । ग्रह उपादाने । क्र्यादित्वात् श्ना । ग्रहिज्यावयीत्यादिना संप्रसारणं । हृग्रहोर्भश्छंदसीति हकारस्य भकारः । इतश्चेति सिप इकारलोपः । बहुलं छंदसीत्यडभावः । समासस्वरः । काशिः । काशृ दीप्तौ । औणादिक इप्रत्ययः । प्रत्ययस्वरः ॥ ॥१॥

प्र सू त इंद्र प्रवता हरिभ्यां प्र ते वज्रः प्रमृणन्नेतु शत्रून् ।
जहि प्रतीचो अनूचः पराचो विश्वं सत्यं कृणुहि विष्टमस्तु ॥६॥

प्र । सु । ते । इंद्र । प्रऽवता । हरिऽभ्यां । प्र । ते । वज्रः । प्रऽमृणन् । एतु । शत्रून् ।
जहि । प्रतीचः । अनूचः । पराचः । विश्वं । सत्यं । कृणुहि । विष्टं । अस्तु ॥६॥

हे इंद्र ते तव हरिभ्यामश्वाभ्यां युक्तो रथः शत्रूनभिलक्ष्य प्रवता प्रवणेन मार्गेण सु सुष्ठु प्रैतु । शीघ्रं गच्छतु । तथा ते वज्रोऽशनिः शत्रूनसुरान्प्रमृणन् हिंसन्प्रैतु । त्वं च प्रतीचस्त्वदाभिमुख्येनागच्छतः शत्रून् जहि । मारय । तथानूचोऽनुगच्छतः पार्ष्णिग्राहानसुरान्पराचः पलायनपराश्च जहि । एवं शत्रुषु बाधितेषु सत्सु विश्वं जगत्सत्यं कृणुहि । सत्यभूताग्निहोत्रादिकर्मपरं कुरु । एवंविधं सामर्थ्यं त्वयि विष्टं निविष्टमस्तु ॥ प्रवता । प्रशब्दादुपसर्गाच्छंदसि धात्वर्थ इति वतिः । प्रत्ययस्वरः । प्रमृणन् । मृण हिंसायां । जहि । हन हिंसागत्योरित्यस्य लोटि सिपो हिरादेशः । तस्मिन्हंतेर्जः इति जादेशः । अतो हेरिति लुकि प्राप्ते आभाच्छास्त्रस्यासिद्धत्वान्निवृत्तिः । हेर्ङित्त्वादंतोदात्तः । प्रतीचः । अचु गतिपूजनयोः । अचेश्छंदस्यसर्वनामस्थानमिति विभक्त्युदात्तत्वं । पराचः । अनिगंतोऽंचतौ वप्रत्यय इति गतेः प्रकृतिस्वरत्वं । कृणुहि । कृवि हिंसाकरणयोः । अस्तु । अस भुवि ॥

यस्मै धायुरदधा मर्त्यायाभक्तं चिद्भजते गेह्यं१सः ।
भद्रा त इंद्र सुमतिर्घृताची सहस्रदाना पुरुहूत रातिः ॥७॥

यस्मै । धायुः । अदधाः । मर्त्याय । अभक्तं । चित् । भजते । गेह्यं । सः ।
भद्रा । ते । इंद्र । सुऽमतिः । घृताची । सहस्रऽदाना । पुरुऽहूत । रातिः ॥७॥

हे इंद्र धायुर्निरंतरमैश्वर्यं दधानस्त्वं यस्मै मर्त्याय मनुष्यायादधा यद्वीर्यं दधासि स मर्त्योऽभक्तं चित पूर्वमप्राप्तमपि गेह्यं गृहेषु भवं कनकपश्वादिकं भजते । प्राप्नोति । किंच । हे पुरुहूत बहुभिराहूतेंद्र घृताची । घृतशब्दो हविर्मात्रमुपलक्षयति । तथा च सोमाज्यपुरोडाशादिलक्षणं हविरंचति प्राप्नोतीति घृताची ते तव सुमतिः शोभना बुद्धिर्भद्रा । कल्याणकरी । तथा तव रातिर्धनशक्तिः सहस्रदाना । अपरिमितधनदानसमेता । इंद्रस्य बहुदातृत्वे मंत्रवर्णः । भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर । ऋसं॰ ४. ३२. २० । इति ॥ धायुः । दधातेरौणादिक उणप्रत्ययः । अदधाः । दधातेर्लङि रूपं । यद्वृत्तयोगादनिघातः । मर्त्याय । मर्त एव मर्त्यः । वस्वादिषु पाठात स्वार्थिको यत । यतोऽनाव इत्याद्युदात्तत्वं । गेह्यं । गेहशब्दात्तत्र भव इत्यर्थे भवे छंदसीति यत । तित्स्वरितः । सुमतिः । मंत्रे वृषत्यादिना मतिशब्दोऽंतोदात्तः । समासे कृदुत्तरपदस्वरः । रातिः । रा दाने । मंत्रे वृषत्यादिना क्तिन्नुदात्तः ॥

सहदानुं पुरुहूत क्षियंतमहस्तमिंद्र सं पिणक्कुणारुं ।
अभि वृत्रं वर्धमानं पियारुमपादमिंद्र तवसा जघंथ ॥८॥
सहऽदानुं । पुरुऽहूत । क्षियंतं । अहस्तं । इंद्र । सं । पिणक् । कुणारुं ।
अभि । वृत्रं । वर्धमानं । पियारुं । अपादं । इंद्र । तवसा । जघंथ ॥८॥

हे पुरुहूतेंद्र त्वं सहदानुं । दानुर्दानवी वृत्रमाता तया सह वर्तमानं । तथा च मंत्रवर्णः । दानुः शये सहवत्सा । ऋसं॰ १ ३२. ९. । इति । यद्वा सहदानुं दानुभिर्दानवैः सह वर्तत इति सहदानुः । तं क्षियंतं बाधमानं कुणारुं क्वणनशीलं कंचिदसुरमहस्तं हस्तहीनं कृत्वा सं पिणक् । सम्यक् चूर्णीकुरु । किंच । हे इंद्र वर्धमानं सर्वत इषुमात्रं वर्धमानं । स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत । तै॰ सं॰ २ ४ १२. । इति श्रुतेः । पियारुं हिंस्रं वृत्रं वृत्रासुरमपादं पादहीनं कृत्वा तवसा बलेनाभिजघंथ । हतवानसि । यद्वा सहदानुमुदकदानोपेतं क्षियंतमाकाशे निवसंतं कुणारुं गर्जंतं वृत्रं । वृणोत्याच्छादयति नभ इति वृत्रो मेघः । तमिमं वर्धमानं मेघं हस्तपादशून्यं कृत्वा संपिणक् । संपिंढि । तथा च यास्कः । अहस्तमिंद्र कृत्वा संपिंढि परिक्वणनं मेघं । नि॰ ६. १ । इति ॥ सहदानुं । दो अवखंडने । दाभाभ्यां नुरिति नुप्रत्ययः । द्यतीति दानुर्दानवः । यद्वा दानुर्दानं । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । क्षियंतं । क्षि निवासगत्योः । तुदादित्वाच्छः । प्रत्ययस्वरः । पिणक् । पिषॢ संचूर्णने । रुधादित्वात् श्नं । हल्ङ्यादिलोपे कृते षकारस्य ककारश्छांदसः । कुणारुं । कुण शब्दने । बाहुलकादारुप्रत्ययः । आद्युदात्तः । जघंथ । हन हिंसागत्योरित्यस्य लिटि थलि रूपं । अभ्यासाच्चेति धातुहकारस्य घत्वं । निघातः । उपदेशेऽत्वत इतीट्प्रतिषेधः ॥

नि सामनामिषिरामिंद्र भूमिं महीमपारां सदने ससत्थ ।
अस्तभ्नाद्द्यां वृषभो अंतरिक्षमर्षंत्वापस्त्वयेह प्रसूताः ॥९॥
नि । सामनां । इषिरां । इंद्र । भूमिं । महीं । अपारां । सदने । ससत्थ ।
अस्तभ्नात् । द्यां । वृषभः । अंतरिक्षं । अर्षंतु । आपः । त्वया । इह । प्रऽसूताः ॥९॥

हे इंद्र महीं महतीमत एवापारामिषिरां स्थानाभावेन चलंतीं एवंविधां भूमिं सामनां समानां । तथा च मंत्रवर्णः । गावौ ते सामनावितः । ऋसं॰ १०. ८५. ११ । इति । यद्वा सम एव साम । तथा च शतपथे श्रूयते । यदेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्मादेव साम । १४. ४. १ । इति । तदस्यास्तीति सामनः । तां साम्यवतीं कृत्वा सदने स्वे स्थाने निषसत्थ । निवेशयामासिथ । तथा वृषभोऽभिमतफलानां वर्षक इंद्रो द्यां द्युलोकमस्तभ्नात् । यथा न पतति तथाधारयत । तथांतरिक्षं । एवं द्यावापृथिव्योरवस्थितौ

सत्यां त्वया प्रसूता मेघभेदनेन प्रेरिता आप इह भूमावर्पंतु । आगच्छंतु । तथा च मंत्रवर्णः । यः पृथिवीं व्यथमानामदृंहत । ऋग्वे० २. १२. २ । इति ॥ सामना । सम एव साम । तदस्यास्तीति मत्वर्थे पामादित्वान्नप्रत्ययः । प्रत्ययस्वरः । इषिरां । इष गतौ । इषिमदीत्यादिना । उ० १ ५२ । किरचप्रत्ययः । कित्वादगुणः । चित्स्वरः । ससत्थ । षद्लृ विशरणगत्यवसादनेष्वित्यस्यांतर्भावितण्यर्थस्य लिटि थल्युपदेशेऽत्वत इतीटप्रतिषेधः । निघातः । अस्तभ्नात । स्तंभु स्तंभन इति सौत्रो धातुः । स्तंभुस्तुंभ्वित्यादिना श्नाप्रत्ययः । श्नान्नलोप इति धातुनकारलोपः । अडागमस्वरः । अर्षंतु । ऋषी गतौ । व्यत्ययेन शप्प्रत्ययः । गुणः । पादादित्वादनिघातः । आपः । आप्लृ व्याप्तौ । क्विप धातोर्ह्रस्वश्च । जस्यप्तृन्तृजित्यादिना दीर्घः । जसः सुप्त्वादनुदात्तत्वे धातुस्वरः । प्रसूताः । षू प्रेरणे इत्यस्य कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं ॥

अलातृणो वल इंद्र व्रजो गोः पुरा हंतोर्भयमानो व्यार ।
सुगान्पथो अकृणोन्निरजे गाः प्रावन्वाणीः पुरुहूतं धमंतीः ॥१०॥

अलातृणः । वलः । इंद्र । व्रजः । गोः । पुरा । हंतोः । भयमानः । वि । आर ।
सुऽगान । पथः । अकृणोत् । निःऽअजे । गाः । प्र । आवन । वाणीः । पुरुऽहूतं । धमंतीः ॥१०॥

हे इंद्र अलातृणः । बहूदकतयालमत्यर्थमातृद्यते हिंस्यत इत्यलातृणः । गोर्माध्यमिकाया वाचो व्रजो गोष्ठभूतो वलः । वृणोत्याकाशमिति वलो मेघः । पुरा हंतोस्तव वज्रप्रहारात प्राक् भयमानो बिभ्यद्व्यार । विश्लिष्टो बभूव । अनंतर स इंद्रो गा अपो निरजे निर्गमयितुं सुगान सुगमान पथो मार्गानकृणोत । अकरोत । अतो वाणीर्वननीया धमतीः शब्दायमानास्ता आपः पुरुहूत बहुभिराहूत पार्थिवमुदकं प्रति प्रावन । प्रभ्यागच्छन । एतामृचं यास्क एवं व्याख्यत । अलातृणो वल इंद्र व्रजो गोः । अलातृणोऽलमातर्दनो मेघो वलो वृणोतेर्व्रजो व्रजत्यंतरिक्षे गोरितस्या माध्यमिकाया वाचः पुरा हननाद्भयमानो व्यार । सुगान्पथो अकृणोन्निरजे गाः । सुगमनान्पथोऽकरोन्निर्गमनाय गवां । प्रावन्वाणीः पुरुहूत धमंतीः । आपो वा वहनाद्वाचो वा वदनाद्बहुभिराहूतमुदकं भवति । धमतिर्गतिकर्मा । नि० ६ २ ॥ अलातृणः । तृहि हिंसायां । अलंपूर्वात्तृहेर्घञर्थे कविधानमिति कर्मणि कप्रत्ययः । अलमो मकारस्याकारः । समासस्वरः । वलः । वल संवरणे । वल्यत आच्छाद्यते नभोऽनेनेति वलो मेघः । पुंसि संज्ञायामिति घः । प्रत्ययस्वरः । व्रजः । व्रज गतौ । गोचरसंचरेत्यादिना । पा० ३ ३. ११९. । घप्रत्ययांतत्वेन निपातनात्कुत्वाभावः । व्रजत्यंतरिक्ष इति । प्रत्ययस्वरः । भयमानः । ञिभी भये । व्यत्ययेन शप् । आर । ऋ गतावित्यस्य लिटि णलि रूपं । निघातः । सुगान । गम्लृ गतावित्यस्मादधिकरणे सुदुरोरधिकरण इति डप्रत्ययः । डित्वाट्टिलोपः । कृत्स्वरः । निरजे । अज गतिक्षेपणयोरित्यस्मात्संपदादिलक्षणो भावे क्विप् । कृदुत्तरस्वरः । आवन । अव रक्षणगत्यादिष्वित्यस्य लङि रूपं । पुरुहूत । ह्वयतेर्निष्ठायां यजादित्वात्संप्रसारणं । हल इति दीर्घः । थाथादिस्वरः । धमंतीः । ध्मा शब्दे । शपि पाघ्रेत्यादिना धमादेशः । वा छंदसीति जसः सवर्णदीर्घः । शतुर्लसार्वधातुकस्वरे कृते धातुस्वरः ॥ ॥२॥

एको द्वे वसुमती समीची इंद्र आ पप्रौ पृथिवीमुत द्यां ।
उतांतरिक्षादभि नः समीक इषो रथीः सयुजः शूर वाजान ॥११॥

एकः । द्वे इति । वसुमती इति वसुऽमती । समीची इति संऽईची । इंद्रः । आ । पप्रौ । पृथिवीं । उत । द्यां ।
उत । अंतरिक्षात् । अभि । नः । संऽईके । इषः । रथीः । सऽयुजः । शूर । वाजान ॥११॥

योऽयमिंद्र एकोऽसहाय एव सन पृथिवीमुत अपि च द्यां द्वे एते द्यावापृथिव्यौ समीची परस्परसंगते वसुमती धनयुक्ते सत्यावा पप्रौ समंतात्पूरयामास । उत अपि च हे शूर संस्त्वमंतरिक्षाद्भिर्पत तादृशस्त्वं रथी रथवान स नोऽस्माकं समीके समीप इषः स्यातुमिच्छन सयुजः संगतान्वाजान । वजंति गच्छंतीति वाजा अश्वाः ।

तामस्मानंतरिक्षादंतरिक्षमकाशात् अभि प्रेरय। रथारूढस्त्वमस्मत्समीपं शीघ्रमागच्छेति भावः ॥ वसुमती। वा छंदसीति पूर्वसवर्णदीर्घः। पप्रा। प्रा पूरणे इत्यस्य लिटि णलि आत औ णल इत्यौकारः। निघातः। इषः। इषु इच्छायां। अस्मादिगुपधलक्षणः कः। कित्त्वादगुणः। प्रत्ययस्वरः। रथीः। रथोऽस्यास्तीति मतुबर्थे छंदसीवनिपाविति ईप्रत्ययः। प्रत्ययस्वरः ॥

दिशः सूर्यो न मिनाति प्रदिष्टा दिवेदिवे हर्यश्वप्रसूताः।
सं यदानळध्वन आदिदश्वैर्विमोचनं कृणुते तत्त्वस्य ॥१२॥
दिशः। सूर्यः। न। मिनाति। प्रऽदिष्टाः। दिवेऽदिवे। हर्यश्वऽप्रसूताः।
सं। यत्। आनट्। अध्वनः। आत्। इत्। अश्वैः। विऽमोचनं। कृणुते। तत्। तु। अस्य ॥१२॥

हर्यश्वप्रसूताः। हरी अश्वौ यस्यासाविति हर्यश्व इंद्रः। तेन प्रेरिता दिशः प्रागादयो दिवे दिवे प्रतिदिवसं प्रदिष्टाः सूर्यस्य गमनार्थं दत्ता या दिशो विद्यंते ताः सूर्यो न मिनाति। न हिनस्ति। किंतु ताभिरेव व्रजति। यद्यदा सूर्योऽध्वनो गंतव्यान्प्रदेशानश्वैर्गमनसाधनभूतैः समानट् सम्यगश्नुते। आदित् अनंतरमेव विमोचनं कृणुते। अश्वानां विमोचनं कुरुते। तदेतत्सर्वं कर्मास्य। तवैव खलु। तु प्रसिद्धौ ॥ सूर्यः। षू प्रेरणे इत्यस्मात्सृधाक्गृधिभ्यः क्रन्निति क्रन्प्रत्ययः। सुवति प्रेरयतीति सूर आदित्यः। सूर एव सूर्यः। वस्वादित्वात्स्वार्थिको यत्। यतोऽनाव इत्याद्युदात्तत्वं। मिनाति। मीञ् हिंसायां। मीनातेर्निगम इति ह्रस्वः। हर्यश्वप्रसूताः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। आनट्। अशु व्याप्तावित्यस्य बहुलं छंदसीति लङः लुक्। अश्नोतेश्चेति नुडागमः। व्रश्चादिना षत्वं। यद्योगादनिघातः ॥

दिदृक्षंत उषसो यामन्नक्तोर्विवस्वत्या महि चित्रमनीकं।
विश्वे जानंति महिना यदागादिंद्रस्य कर्म सुकृता पुरूणि ॥१३॥
दिदृक्षंते। उषसः। यामन्। अक्तोः। विवस्वत्याः। महि। चित्रं। अनीकं।
विश्वे। जानंति। महिना। यत्। आ। अगात्। इंद्रस्य। कर्म। सुऽकृता। पुरूणि ॥१३॥

विश्वे सर्वे जना विवस्वत्या विवासनवत्या निर्गमनपराया अक्तो रात्रेः संबंधिन उषसो यामन् यामनि निर्गमने सति महि महत् चित्रं चायनीयमनीकं सारं तेजो दिदृक्षंते। द्रष्टुमिच्छंति। यद्यदा आगात् उषःकालः समंतादागतो भवति तदा तेजो दिदृक्षमाणाः सर्वे जना महिना महनीयान्यहिहत्यादीनि कर्माणि जानंति। कर्तव्यतयावबुध्यंते। हे इंद्र पुरूणि बहूनि सुकृता सुष्ठु कृतानि कर्म कर्माणीन्द्रस्य तवैव ॥ दिदृक्षंते। दृशिर् प्रेक्षणे इत्यस्य सनि ज्ञाश्रुस्मृदृशां सनः। पा॰ १ ३ ५७। इत्यात्मनेपदं। अभ्यस्तस्वरः। विवस्वत्याः। विवासतेः संपदादिलक्षणः क्विप्। व्यत्ययेनोपधाह्रस्वत्वं। तस्मात्तदस्यास्तीति मतुप्। मादुपधाया इति तस्य वत्वं। मतुपः पित्त्वादनुदात्तत्वे धातुस्वरः। जानंति। ज्ञा अवबोधने। ज्ञाजनोर्जेति जादेशः। निघातः। अगात्। इण् गता-वित्यस्य लुङि रूपं। यद्योगादनिघातः। सुकृता। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं ॥

महि ज्योतिर्निहितं वक्षणास्वामा पक्वं चरति बिभ्रती गौः।
विश्वं स्वाद्म संभृतमुस्रियायां यत्सीमिंद्रो अदधाद्भोजनाय ॥१४॥
महि। ज्योतिः। निऽहितं। वक्षणासु। आमा। पक्वं। चरति। बिभ्रती। गौः।
विश्वं। स्वाद्म। संऽभृतं। उस्रियायां। यत्। सीं। इंद्रः। अदधात्। भोजनाय ॥१४॥

वक्षणासु। वक्ष्यंते यासूदकानीति वक्षणा नद्यः। तासु महि महत् ज्योतिर्ज्योतिष्मदुदकं निहितमिंद्रेणामा नवसूतिका गौः पक्वं क्षीरादिकं बिभ्रती दधाना सती चरति। सर्वत्र वर्तते। यद्यस्मादुदकात्स्वाद्म स्वादुतरं

संभृतं स्वेन संपादितं दधिघृतक्षीरादिकं सोमेतद्विश्वं सर्वमुस्रियायां गवि भोजनायेंद्रोऽदधात् । तस्मात्क्षीरादिकं बिभ्रती गौश्चरतीति पूर्वेणान्वयः ॥ वक्षणासु । वक्ष रोषे । अस्मात्करणाधिकरणयोश्चेति करणे ल्युट् । लित्स्वरः । पक्वं । पचेर्निष्ठातकारस्य पचो व इति वत्वं । प्रत्ययस्वरः । चरति । चरतिर्गत्यर्थः । बिभ्रती । डुभृञ् धारणपोषणयोः । जुहोत्यादिः । शतुरुगित्वादुगितश्चेति ङीप् । अभ्यस्तानामादिरित्याद्युदात्तत्वं । उस्रियायां । वस निवासे । स्फायितंचीत्यादिनाधिकरणे रक्प्रत्ययः । यजादित्वात्संप्रसारणं । शासिवसिघसीनां चेति षत्वाभावश्छांदसः । स्वार्थिको घप्रत्ययः । प्रत्ययस्वरः ॥

इंद्र दृह्य यामकोशा अभूवन्यज्ञाय शिक्ष गृणते सखिभ्यः ।
दुर्मायवो दुरेवा मर्त्यासो निषंगिणो रिपवो हंत्वासः ॥१५॥
इंद्र । दृह्य । यामऽकोशाः । अभूवन् । यज्ञाय । शिक्ष । गृणते । सखिऽभ्यः ।
दुःऽमायवः । दुःऽएवाः । मर्त्यासः । निषंगिणः । रिपवः । हंत्वासः ॥१५॥

हे इंद्र दृह्य । दृढो भव । यतो यामकोशाः । यात्यस्मिन्निति यामो मार्गः । तस्य कोशाः कोशवदाच्छादका मार्गप्रतिबंधका राक्षसा अभूवन् । त्वं यज्ञाय यज्ञकर्मणे गृणते स्तोत्रं कुर्वते यजमानाय सखिभ्यः पुत्रादिभ्यश्च शिक्ष । अपेक्षितं फलं देहि । दुर्मायवः । दुष्टमायुधानि मिन्वंति प्रक्षिपंतीति दुर्मायवः । दुरेवा दुष्टगंतारो मर्त्यासो मारयितारो निषंगिणः । निषंगशब्देनेषुधिरभिधीयते । तद्वंतः । एवंविधसामर्थ्योपेता रिपवः शत्रवो राक्षसा हंत्वासः । त्वया हननीयाः ॥ दृह्य । दृह दृहि बृह बृहि वृद्धौ । व्यत्ययेन श्यन् । लोटि रूपं । निघातः । अभूवन् । भू सत्तायां । अस्य लुङि रूपं । गातिस्थेति सिचो लुक् । भूसुवोस्तिङीति गुणप्रतिषेधः । भुवो वुग्लुङ्लिटोरिति वुगागमः । निघातः । शिक्ष । शिक्ष विद्योपादाने । अयं धातुरत्र दाने वर्तते । व्यत्ययेन परस्मैपदं । निघातः । दुर्मायवः । मिनोतेः कृवापाजिमीत्यादिना उण्प्रत्ययः । कृदुत्तरपदस्वरः । दुरेवाः । इण् गतौ । इण्शीङ्भ्यां वन्निति कर्तरि वन्प्रत्ययः । रिपवः । रपेरिच्चोपधाया इत्युप्रत्ययः । उपधाया इत्वं । प्रत्ययस्वरः । हंत्वासः । हन हिंसागत्योः । कृत्यार्थे तवैकेन्केन्यत्वन इति त्वन् । नित्त्वादाद्युदात्तः ॥ ॥ ३ ॥

सं घोषः शृण्वेऽवमैरमित्रैर्जही न्येष्वशनिं तपिष्ठां ।
वृश्चेमधस्ताद्वि रुजा सहस्व जहि रक्षो मघवन्रंधयस्व ॥१६॥
सं । घोषः । शृण्वे । अवमैः । अमित्रैः । जहि । नि । एषु । अशनिं । तपिष्ठां ।
वृश्च । ईं । अधस्तात् । वि । रुज । सहस्व । जहि । रक्षः । मघऽवन् । रंधयस्व ॥१६॥

हे इंद्र अवमैः समीपे वर्तमानैरमित्रैः शत्रुभिरसुरैः कृतस्पृष्टो योऽशनिर्घोषो घुष्यमाणः स शृण्वे सम्यगस्माभिः श्रूयते तपिष्ठामतिशयेन तापिकां तामशनिमेषु शत्रुष्वेव निधाय जहि । मारय । ते प्रयुक्तामशनिं तानेव प्रापयेति भावः । ईमेनान् शत्रून् अधस्तान्मूलतो वृश्च । छिंधि । किंच वि रुज । तानशेषेण बाधस्व । सहस्व । अभिभव च । हे मघवन्निंद्र रक्षः कर्मविघ्नकारीणि रक्षांसि जहि । मारय । अनंतरमिमं यज्ञं रंधयस्व । पारं नय ॥ शृण्वे । निघातः । जहि । हन हिंसागत्योः । अस्य लोटि रूपं । अशनिं । अशू व्याप्तौ । अश्यवितृभ्योऽनिरित्यनिप्रत्ययः । प्रत्ययस्वरः । तपिष्ठां । तपृशब्दादिष्ठन्प्रत्ययः । नित्स्वरः । वृश्च । ओव्रश्चू छेदने । तुदादिः । ग्रहिज्यादिना संप्रसारणं । सहस्व । वाक्यभेदादनिघातः । रंधयस्व । रध हिंसासंराद्ध्योरित्यस्य ण्यंतस्य लोटि रधिजभोरचीति नुडागमः । वाक्यभेदादनिघातः ॥

उद्वृह रक्षः सहमूलमिंद्र वृश्चा मध्यं प्रत्यग्रं शृणीहि ।
आ कीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य ॥१७॥

उत्। वृह। रक्षः। सहऽमूलं। इंद्र। वृश्च। मध्यं। प्रति। अग्रं। शृणीहि।
आ। कीवतः। सललूकं। चकर्थ। ब्रह्मऽद्विषे। तपुंषिं। हेतिं। अस्य ॥१७॥

हे इंद्र रक्षः कर्मविघ्नकारि रक्षो रक्षःकुलं सहमूलं मूलसहितं यथा भवति तथोद्वृह। उद्धर। किंच। मध्यं तस्य मध्यभागं वृश्च। छिंधि। प्रत्यग्रमग्रं प्रत्यागतं ततं शृणीहि। जहि। तस्य रक्षःकुलस्य मध्ये सललूकं सरणशीलं रक्ष आ कीवतः। आङ् मर्यादायां। कियतोऽनिर्ज्ञायमानपरिमाणाद्दूरादेशाच्चकर्थ। कुरु। कृत्वा च ब्रह्मद्विषे ब्राह्मणद्वेषकारिणे तस्मै रक्षसे तपुंषिं तापकं हेतिं घातकमायुधमस्य। क्षिप। उक्तमर्थं यास्कोऽब्रवीत। उद्धर रक्षः सहमूलमिंद्र। मूलं मोचनाद्वा मोषणाद्वा मोहनाद्वा। वृश्च मध्यं प्रति शृणीह्यग्रं। अग्रमागतं भवति। आ कियतो देशात्सललूकं संलुब्धं भवति पापकमिति नैरुक्ताः सरत्कं वा स्यात्सर्तेर-भ्यस्तात। तपुषिस्तपतेर्हेतिर्हंतेः। नि० ६. ३.। इति॥ वृह। वृहू उद्यमने इत्यस्य लोटि रूपं। शृणीहि। शॄ हिंसायां। अस्य लोटि हौ हेर्ह्न्यघोरितीत्वं। निघातः। कीवतः। किंशब्दात्किं परिमाणमस्येत्यर्थे किमिदंभ्यां वो घ इति किंशब्दाद्वतुबस्तीति ज्ञापितत्वाद्वतुप्यादेशाभावश्छांदसः। इदंकिमोरीश्की इति की इत्यादेशः। सललूक। सृ गतौ। छांदसो रूपसिद्धिः। चकर्थ। डुकृञ् करणे इत्यस्य लिटि थलि रूपं। क्रादित्वादिडभावः। निघातः। तपुषि। तप संतापे इत्यस्मादर्तिपृवपियजितनिधनितपिभ्यो नित्युसिप्रत्ययो नित्। अकारस्य इकारश्छांदसः। नित्स्वरः। हेतिं। हन हिंसागत्योः। ऊतियूतिजूतिसातीत्यादिना निपातनादंतोदात्तः। अस्य। असु क्षेपणे। लोटि रूपं॥

स्वस्तये वाजिभिश्च प्रणेतः सं यन्महीरिष आसत्सि पूर्वीः।
रायो वंतारो बृहतः स्यामास्मे अस्तु भर्ग इंद्र प्रजावान् ॥१८॥
स्वस्तये। वाजिऽभिः। च। प्रनेतरिति प्रऽनेतः। सं। यत्। महीः। इषः। आऽसत्सि। पूर्वीः।
रायः। वंतारः। बृहतः। स्याम। अस्मे इति। अस्तु। भर्गः। इंद्र। प्रजाऽवान् ॥१८॥

प्रणेतः प्रकर्षेण जगतो निर्वाहक हे इंद्र अस्मान्वाजिभिरश्वैः सहितान् कुरु। स्वस्तये चाविनाशाय कुरु। यदा त्वं समासत्सि अस्माकं समीपे यज्ञनिर्वाहार्थमासीदसि तदा वयं महीर्महतीरिषोऽन्नानि पूर्वीः प्रभूतानि रायो धनानि वंतारस्त्वया संभक्तारः संतो बृहतो महांतः स्याम। भवेम। किंच प्रजावान् अपत्योपेतं भगो धनमस्मे अस्मासु। भवतु॥ आसत्सि। षद्लृ विशरणादिषु। बहुलं छंदसीति शपो लुक्। यद्योगादनिघातः। इषो राय इति च द्वे षष्ठ्यर्थे द्वितीये। वंतारः। वन षण संभक्तावित्यस्य तृचि आगमानुशासनस्यानित्यत्वा-दिडभावः। चित्स्वरः। स्याम। अस भुवीत्यस्य लिङि रूपं। अस्मे। अस्मच्छब्दस्य सप्तम्याः सुपां सुलुगिति शे इत्यादेशः॥

आ नो भर भगमिंद्र द्युमंतं नि ते देष्णस्य धीमहि प्ररेके।
ऊर्व इव पप्रथे कामो अस्मे तमा पृण वसुपते वसूनां ॥१९॥
आ। नः। भर। भगं। इंद्र। द्युऽमंतं। नि। ते। देष्णस्य। धीमहि। प्रऽरेके।
ऊर्वःऽइव। पप्रथे। कामः। अस्मे इति। तं। आ। पृण। वसुऽपते। वसूनां ॥१९॥

हे इंद्र नोऽस्मदर्थं द्युमंतं दीप्तियुक्तं भगं धनमाभर। आ समंतात्संभर। देष्णस्य दानशीलस्य ते तव संबंधिनो धनस्य प्ररेके प्ररेचने दाने निधीमहि। धनदानस्य वयं पात्रभूताः स्म इत्यर्थः। कुत इत्यत आह। अस्मे अस्माकं कामोऽभिलाष ऊर्व इव अनवाप्तकामो वडवानल इव पप्रथे। प्रभूतो वर्तते। वसूनां वसुपते धनानां मध्ये उत्तमधनानामधिपते हे इंद्र तं महांतं काममापृण। बहुधनप्रदानेनापूरय॥ भर। भृञ् भरणे इत्यस्य लोटि रूपं। देष्णस्य। डुदाञ् दाने। गादाभ्यामिष्णुजितीष्णुच्प्रत्ययः। अत्यर्थं ददातीति देष्णः।

चित्स्वरः। धीमहि। दधातेर्लिङि बहुलं छंदसीति शपो लुक्। छंदस्युभयथेति महिङः सार्वधातुकत्वात्सीयुट् सलोपः। आर्धधातुकत्वादातो लोपः। निघातः। उर्व इव। पूर्वपदस्वरः। पप्रथ। प्रथ प्रख्याने इत्यस्य लिटि रूपं। पृण। पृण प्रीणने इत्यस्य लोटि सेर्हिः। तुदादिः। अतो हेरिति हेर्लुक्। वसुना। नित्त्वादाद्युदात्तः॥

इमं कामं मंदया गोभिरश्वैश्चंद्रवता राधसा पप्रथश्च।
स्वर्यवो मतिभिस्तुभ्यं विप्रा इंद्राय वाहः कुशिकासो अक्रन्॥२०॥
इमं। कामं। मंदय। गोभिः। अश्वैः। चंद्रऽवता। राधसा। पप्रथः। च।
स्वःऽयवः। मतिऽभिः। तुभ्यं। विप्राः। इंद्राय। वाहः। कुशिकासः। अक्रन्॥२०॥

हे इंद्र इमं धनादिविषयं काममस्मदीयमभिलाषं गोभिरश्वैर्होत्रादिकर्मसाधनभूतैर्गवादिभिर्वाहनसाधनभूतैरश्वैश्च चंद्रवता दीप्तियुक्तेन राधसा धनेन च मंदय। एतानि दत्त्वेममभिलाषं पूरय। किंच। एतैरस्मान्पप्रथः। प्रथितांश्च कुरु। पश्चात्स्वर्यवः स्वर्गादिसुखमात्मन इच्छंतो विप्राः कर्मकुशलाः कुशिकासः कुशिका मतिभिर्मननीयैर्मंत्रैर्वाहः स्तोत्रमिंद्राय तुभ्यमक्रन्। अकार्षुः॥ मंदय। मदि स्तुत्यादिष्वित्यस्य लोटि रूपं। गोभिः। सावेकाच इति विभक्तेरुदात्तत्वे प्राप्ते न गोश्वन्साववर्णेत्यादिना प्रतिषेधः। प्रकृतिस्वरः। पप्रथः। प्रथ प्रख्याने। क्विप्। छंदस्युभयथेति तस्य सार्वधातुकत्वात् शप्। तस्य बहुलं छंदसीति श्लुः। धातुस्वरः। अक्रन्। करोतेर्लुङि मंत्रे घसह्वरेत्यादिना लुक्। निघातः॥

आ नो गोत्रा दर्दृहि गोपते गाः समस्मभ्यं सनयो यंतु वाजाः।
दिवक्षा असि वृषभ सत्यशुष्मोऽस्मभ्यं सु मघवन्बोधि गोदाः॥२१॥
आ। नः। गोत्रा। दर्दृहि। गोऽपते। गाः। सं। अस्मभ्यं। सनयः। यंतु। वाजाः।
दिवक्षाः। असि। वृषभ। सत्यऽशुष्मः। अस्मभ्यं। सु। मघऽवन्। बोधि। गोऽदाः॥२१॥

गोपते गवां पते स्वर्गाधिपते हे इंद्र नोऽस्मदर्थं गोत्रा गोत्राण्यभ्राणि गा अपः प्रत्या दर्दृहि। आद्रियस्व। अभ्राणि विदार्य जलानि प्रापयेत्यर्थः। ततः सनयः संभजनीयानि वाजा अन्नान्यस्मभ्यमस्मदर्थं सयंतु। समागच्छंतु। वृषभ कामानां वर्षितर्हे इंद्र त्वं दिवक्षा असि। दिवं व्याप्य वर्तमानत्वेन महानसि। अत एव सत्यशुष्मः सत्यसामर्थ्यो मघवन् धनवन् हे इंद्र अस्मभ्यं गोदा गवां प्रदाता भवामीति सु बोधि। सुष्ठु बुध्यस्व॥ दर्दृहि। दृङ् आदरे। यङ्लुकि लोटि रूपं। ऋतश्च। पा॰ ७. ४. ९२। इत्यभ्यासस्य रुगागमः। निघातः। गाः। औतोऽम्शसोः। पा॰ ६. १. ९३.। इत्योकारस्याकारः। एकादेशस्वरः। अस्मभ्यं। भ्यसो भ्यमिति चतुर्थीबहुवचनस्य भ्यमादेशः। यंतु। इण् गतौ। लोटि रूपं। दिवक्षाः। अक्षू व्याप्तौ। असुन्। दिवं व्याप्नोतीति दिवक्षाः। कृदुत्तरपदस्वरः। गोदाः। डुदाञ् दाने इत्यस्माद्विच्। कृदुत्तरपदस्वरः॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां॥२२॥
शुनं। हुवेम। मघऽवानं। इंद्रं। अस्मिन्। भरे। नृऽतमं। वाजऽसातौ।
शृण्वंतं। उग्रं। ऊतये। समतऽसु। घ्नंतं। वृत्राणि। संऽजितं। धनानां॥२२॥

हे इंद्र वाजसातौ। वाजस्यान्नस्य सातिर्लाभो यस्मिन् सोऽयं वाजसातिः। अस्मिन्भरे। बिभ्रति अयत्नलीमनेन योद्धार इति भरः संग्रामः। तस्मिन्संग्रामे शुनं शुनमुत्साहेन स्फूर्तं। यद्वा शुनमिति सुखनाम। सुखकरं मघवानं धनवंतं अत एवेंद्रं निरतिशयैश्वर्यसंपन्नं नृतमं सर्वस्य जगतोऽतिशयेन नेतारं त्वां हुवेम।

कुशिका वयं यज्ञार्थमाह्वयेम। तथा शृण्वंतमस्माभिः क्रियमाणां स्तुतिं शृण्वंतमुग्रं शत्रूणां भयंकरं समत्सु संग्रामेषु वृत्राणि वृत्रोपलक्षितानि सर्वाणि रक्षांसि घ्नंतं हिंसंतं धनानां शत्रुसंबंधिनां संजितं सम्यग्जेतारं त्वामूतये रक्षणाय वयमाह्वयेम ॥ शुनं। टुओश्वि गतिवृद्ध्योरित्यस्य निष्ठायां यस्य विभाषेतीट्प्रतिषेधः। यजादित्वात्संप्रसारणं। दीर्घाभावश्छांदसः। प्रत्ययस्वरः। हुवेम। ह्वयतेर्बहुलं छंदसीति संप्रसारणे कृते शपो लुकि कृते च लिङि रूपं। निघातः। भरे। भृञ् भरणे। घः। वृषादित्वादाद्युदात्तः। वाजसातौ। षणु दाने। भावे क्तिन्। जनसनेत्यादिनानुनासिकस्यात्वं। बहुव्रीहौ पूर्वपदस्वरः। समत्सु। अद भक्षणे। संपूर्वात् क्विप्। संभक्षयंति योद्धॄणामायूंषीति समदः संग्रामाः। कृदुत्तरपदस्वरः। घ्नंतं। हन हिंसागत्योरित्यस्य शतरि गमहनेत्यादिनोपधालोपः। हो हंतेरिति घत्वं। संजितं। जि जये। क्विप्॥ ॥४॥

शासद्वह्निरिति द्वाविंशत्यृचं द्वितीयं सूक्तं। अत्रानुक्रमणिका। शासत कुशिको विश्वामित्र एव वा ग्रुतेरिति। इषीरथस्य पुत्रः कुशिको विश्वामित्र एव वा ऋषिः। इंद्रो देवता। त्रिष्टुप् छंदः॥ चातुर्विंशिकेऽहनि माध्यंदिने सवनेऽच्छावाकशस्त्र आरंभणीयाया ऊर्ध्वमहीनसूक्तसंज्ञकमेतत्सूक्तं शंसनीयं। सूत्रितं च। अस्मा इदु प्रतवसे शासद्वह्निरितीतरावहीनसूक्ते। आ० ७.४.। इति॥ पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि माध्यंदिनसवनेऽच्छावाकशस्त्रेऽहीनसूक्तस्य स्थाने त्रीणि संपातसूक्तानि। तत्रेदं तृतीयं संपातसूक्तं। इमामू षु प्रभृतिं सातये धा शश्वत् ... इमामु ष्विच्छंति त्वा शासद्वह्निरिति संपाताः। आ० ७.५। इति॥

**शास॒द्वह्नि॑र्दुहि॒तुर्न॒प्त्यं॑ गा॒द्वि॒द्वाँ ऋ॒तस्य॒ दीधि॑तिं सप॒र्यन्।**
**पि॒ता यत्र॑ दुहि॒तुः सेक॑मृ॒ञ्जन्त्सं श॒ग्म्ये॑न॒ मन॑सा दध॒न्वे ॥१॥**
**शास॑त्। वह्निः॑। दु॒हि॒तुः। न॒प्त्य॑म्। गा॒त्। वि॒द्वान्। ऋ॒तस्य॑। दीधि॑तिम्। स॒प॒र्यन्।**
**पि॒ता। यत्र॑। दु॒हि॒तुः। सेक॑म्। ऋ॒ञ्जन्। सम्। श॒ग्म्ये॑न। मन॑सा। द॒ध॒न्वे ॥१॥**

कुशिकः प्रसंगात् कंचित् शास्त्रार्थं ब्रूते। अपुत्रस्य पितुः पुत्री दायादा पुत्रिका सती। यतः संतानकृत्तस्याः पुत्र इत्यनयोच्यत इति। अपुत्रो यः पिता कन्यामन्यकुलं प्रापयति स वह्निरित्युच्यते। स पिता शासत। अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृतां। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति। वासि० १७ १७। स्मृत्युक्तमनुशासनं कुर्वन् दुहितुः पुत्रिकाया नप्त्यं नप्तारं पौत्रं गात्। गच्छति। दुहितुः पुत्रत्वेन स्वीकाराद्दौहित्रं नप्तृभवं पिंडदानादिकं कर्तव्यतया गात्। गच्छति। किं कुर्वन्। विद्वान् अस्यां दुहितरि जातः पुत्रो मम स्वधाकरो भविष्यतीति जानन् ऋतस्य सत्यस्य पुत्रोत्पादनसमर्थस्य रेतसो दीधितिं धर्तारं जामातरं तत्पतिं सपर्यन् वस्त्रालंकारादिना पूजयन् पिता नप्तृभवं गच्छति। यत्र यस्मिन्विषये पितापुत्रौ जनको दुहितुरप्रत्तायाः स्वकन्यायाः सेकं रेतसः सेकं तस्यां रेतःसेकमृंजन् प्रसाधयन् शग्म्येन सुखनिमित्तेन मनसा संदधन्वे। आत्मानं संधत्ते। अपुत्रत्वनिमित्तदुःखापगमात्। यस्या दुहितुः पिता पालकः पतिर्जामाता सेकं तस्यां रेतःसेकमृंजन् प्रसाधयन् सं शग्म्येन केवलं सुखनिमित्तेन मनसा तया स्वशरीरं संदधन्वे। संधत्ते। न तु पुत्रनिमित्तेन मनसा। एतमर्थं यास्कोऽप्याह। प्रशास्ति वोढा संतानकर्मणे दुहितुः पुत्रभावं। दुहिता दुर्हिता दूरे हिता दोग्धेर्वा। नप्तारमुपागमद्दौहित्रं पौत्रमिति विद्वान्प्रजननयज्ञस्य रेतसो वांगादंगात्संभूतस्य हृदयादधि जातस्य मातरि प्रत्यृतस्य विधानं पूजयन्नित्यादिना। नि० ३ ४.॥ शासत। शासेः शतर्यभ्यस्तत्वान्नुमभावः। दुहितुः। दुह प्रपूरणे। नप्तृनेष्टृ इत्यादिना तृचि निपातनादिडागमः। चित्स्वरः। नप्त्यं। नप्तरि भवं। भवे छंदसीति यत्। रीङृत इति रीङादेशः। यस्येति लोपः। रेफलोपश्छांदसः। तित्स्वरितः। गात्। इण् गतावित्यस्य छांदसे लुङि रूपं। ऋंजन्। ऋंजतिः प्रसाधनकर्मा। शग्म्येन। शं सुखं गच्छंतीति गमेरौणादिकः कप्रत्ययः। क्वित्वाद्गमहनेत्यादिनोपधालोपः। शग्मे साधुरिति तत्र साधुरिति यत्प्रत्ययः। वीरवीर्यौ चेत्यत्र यतोऽनाव इत्यस्यानित्यत्वस्य ज्ञापितत्वादत्र तित्स्वरः। दधन्वे। धवि संचारे धातुः। लिटि रूपं। प्रत्ययस्वरः। यद्योगादनिघातः॥

**न जा॒मये॒ तान्वो॑ रि॒क्थमा॑रैक्च॒कार॒ गर्भं॑ सनि॒तुर्नि॒धान॑म्।**
**यदी॑ मा॒तरो॑ ज॒नय॑न्त॒ वह्नि॑म॒न्यः क॒र्ता सु॒कृतो॑र॒न्य ऋ॒न्धन् ॥२॥**

न। जामये। तान्वः। रिक्थं। अरैक्। चकार। गर्भं। सनितुः। निऽधानं।
यदि। मातरः। जनयंत। वह्निं। अन्यः। कर्ता। सुऽकृतोः। अन्यः। ऋंधन ॥२॥

अभ्रातृकाया दुहितुः पुत्रिकाकरणात सा रिक्थभागित्युक्तं। भ्रातृमत्यास्तस्या रिक्थभाक्त्वं नास्तीति ब्रूते। तान्वस्तनूज औरसः पुत्रो जामये भगिन्यै रिक्थं पित्र्यं धनं नारैक्। न प्ररेचयति। न प्रददाति। किं तर्हि। सनितुरेनां संभजमानस्य भर्तुर्गर्भं। षष्ठ्यर्थे द्वितीया। गर्भस्य निधानं रेतःसेकनिधानीमेना चकार। पाणिग्रहणेन संस्कृतामेनां करोति। न तु तस्यै रिक्थं ददातीत्यभिप्रायः। असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः। भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकमिति याज्ञवल्क्यस्मरणात। २. १२४। स्त्रीपुंसलक्षणस्यापत्यस्यैकोत्पादत्वाविशेषात्पुमपत्यस्य को विशेष इत्याशंक्य विशेषं दर्शयति। यदि यद्यपि मातरो मातापितरौ वह्निं। अवह्निः स्त्री वह्निः पुमान स्वभार्याया वोढृत्वात्। अवह्निश्च वह्निः। तादृशं स्त्रीपुंसलक्षणमपत्य जनयत। तथापि तयोर्मध्येऽन्यः पुंलक्षणः सुकृतोः शोभनस्य पिंडदानादेः कर्मणः कर्ता भवति। अन्यः स्त्रीलक्षण ऋंधन वस्त्रालंकारादिना ऋध्यमान एव भवति। पिंडदानादिकर्तृत्वात्पुत्रो दायार्हः दुहिता तथा नेति न दायार्हा सा तु केवलं परस्मै दीयते। तथा च निरुक्तं। न जामये भगिन्यै। जामिरन्येऽस्यां जनयंति जामपत्यं जमतेर्वा स्याद्गतिकर्मणो निर्गमनप्राया भवति। तान्व आत्मजः पुत्रो रिक्थं प्रारिचत्प्रादात्चकारेनां गर्भनिधानी सनितुर्हस्तग्राहस्य यदिह मातरोऽजनयंत वह्निं पुत्रमवह्निं च स्त्रियमन्यतरः संतानकर्ता भवति पुमान्दायादोऽन्यतरोऽर्धयित्वा जामिः प्रदीयते परस्मै। नि॰ ३. ६.। इति॥ तान्वः। तन्वाः प्राणाधिष्ठितत्वात्तनूः प्राणवती। तद्विकार इत्यर्थे प्राणिरजतादिभ्योऽञित्यत्र संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः। रिक्थं। रिचिर विरेचने। पातृतुदिवचिरिचिभ्यस्थक्। प्रत्ययस्वरः। अरैक्। रिचिर विरेचन इत्यस्य लुङि सिचि वदव्रजेत्यादिना वृद्धिः। बहुलं छंदसीतीडभावः। हल्ड्याादिसंयोगांतलोपौ। निघातः। सनितुः। षण संभक्तावित्यस्य तृचि रूपं। निधानं। दधातेर्ल्युटि रूपं। तित्स्वरः। मातरः। पिता मात्रेति पितुः शेषे प्राप्ते मातुः शेषश्छांदसः। द्विवचनस्य बहुवचनं पूजार्थं। जनयंत। जनेर्णिचि रूपं। वह्निं। पुमान स्त्रिया। पा॰ १. २. ६७। इति वह्निः शेषः। सुकृतोः। करोतेरौणादिकः कुप्रत्ययः। ऋंधन। ऋधु वृद्धौ। व्यत्ययेन श्नम्॥

अग्निर्जज्ञे जुह्वा३ रेजमानो महस्पुत्राँ अरुषस्य प्रयक्षे।
महान्गर्भो मह्या जातमेषां मही प्रवृद्धर्यश्वस्य यज्ञैः ॥३॥
अग्निः। जज्ञे। जुह्वा। रेजमानः। महः। पुत्रान। अरुषस्य। प्रऽयक्षे।
महान्। गर्भः। महि। आ। जातं। एषां। मही। प्रऽवृत्। हरिऽअश्वस्य। यज्ञैः ॥३॥

हे इंद्र अरुषस्यारोचमानस्य तव प्रयक्षे यज्ञार्थं जुह्वा ज्वालाभी रेजमानः कंपमानोऽग्निर्महः प्रभूतान पुत्रान रश्मीन जज्ञे। उत्पादयामास। एषां रश्मीनां गर्भो जन्मात्मना क्रोडीकारो महानासीत। किंच एषां रश्मीनां मेलनं आ जातं सर्वत औषध्यात्मना जातं महि महदभूत। किंच एषां रश्मीनां प्रवृत अनेन प्रकारेण प्रवृत्तिर्हर्यश्वस्येंद्रस्य यज्ञैर्यज्ञार्हैः सोमाहुतिभिर्मही महती भवति॥ जज्ञे। जनी प्रादुर्भाव इत्यस्य लिटि रूपं। अंतर्भावितण्यर्थः। जुह्वा। जुहोतेर्द्वे दीर्घश्चेति क्विप द्विर्वचन दीर्घश्च धातोः। उदात्तस्वरितयोरिति स्वरितत्वं। हर्यश्वस्य। हरी अश्वौ यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरः॥

अभि जैत्रीरसचंत स्पृधानं महि ज्योतिस्तमसो निरजानन।
तं जानतीः प्रत्युदायन्नुषासः पतिर्गवामभवदेक इंद्रः ॥४॥
अभि। जैत्रीः। असचंत। स्पृधानं। महि। ज्योतिः। तमसः। निः। अजानन।
तं। जानतीः। प्रति। उत्। आयन्। उषसः। पतिः। गवां। अभवत्। एकः। इंद्रः ॥४॥

जैत्रीर्जेत्र्यो विशो मरुतः मृधानं वृत्रेण सह स्पर्धमानमिंद्रमभ्यसचंत। सर्वतः समगच्छन्। ते च मरुतस्तस्मिन्वृत्रे हते महि महत ज्योतिः सूर्याख्यं तेजस्तमसस्तमोरूपाद्वृत्रान्निरजानन्। निर्गतमज्ञासिषुः। तत इंद्रं वृत्रहंतारमुदित सूर्यं जानतीर्जानाना उपसस्तं प्रत्युत अभिलक्ष्यैव आयन् प्राप्नुवन्। अथ तत्रोद्भूतानां गवां रश्मीनामेकोऽद्वितीय एवेंद्रः पतिरभवत्॥ जैत्रीः। जयतेस्तृनि रूपं। गुणस्य स्थाने व्यत्ययेन वृद्धिः। नित्स्वरः। असचंत। षच समवाय इत्यस्य लङि रूपं। मृधानं। स्पर्ध संघर्षे। छंदसि कानजादेशः। छंदसि द्विर्वचनस्य विकल्पितत्वाद्द्विर्वचनाभावः। चित्स्वरः। अजानन्। ज्ञा अवबोधन इत्यस्य लङि रूपं। निघातः। आयन्। अय पय गतावित्यस्य लङि रूपं॥

वीळ्हौ सतीरभि धीरा अतृंदन्प्राचाहिन्वन्मनसा सप्त विप्राः।
विश्वामविंदन्पथ्यामृतस्य प्रजानन्नित्ता नमसा विवेश ॥५॥

वीळ्हौ। सतीः। अभि। धीराः। अतृंदन्। प्राचा। अहिन्वन्। मनसा। सप्त। विप्राः।
विश्वां। अविंदन्। पथ्यां। ऋतस्य। प्रऽजानन्। इत्। ता। नमसा। आ। विवेश ॥५॥

पुरा किलांगिरसां गावः पणिनामकैरसुरैरपहृत्य निगूढे कस्मिंश्चित्पर्वते स्थापिताः। ते चांगिरसस्तत्प्राप्त्यर्थमिंद्रं तुष्टुवुः। स्तुतश्च स इंद्रो गवान्वेषणाय देवशुनीं प्राहिणोत्। सा च गवां गवेषणपरा सती तत्स्थानमलभत। तया विज्ञापित इंद्रस्ता गा आनीयांगिरोभ्यः प्रादादित्यैतिहासिकी कथा। तथा चास्या ऋचोऽयमर्थः। धीरा धीमंतः सप्त विप्रा मेधाविनः सप्तसंख्याका अंगिरसो वीळ्हौ दृढे पर्वते सतीर्निरुद्धाः सतीर्गा अभि अभिलक्ष्यातृंदन्। निधानमपावृण्वन्। उपज्ञामकुर्वन्। ततस्तेऽगिरसः पर्वतविले गावः संतीति मनसा निश्चित्य प्राचा येन मार्गेण प्रविष्टास्तेनैव प्राचीनेन मार्गेण ता गा अहिन्वन्। निरगमयन्। यद्वा प्राचा। प्रकर्षेणेंद्रमंचति प्राप्नोतीति प्राक्। तेनेंद्रविषयेण मनसा। मन्यत इति मनः स्तोत्रं। तेन स्तोत्रेणाहिन्वन्। अवर्धयन्। इंद्रं तुष्टमकुर्वन्। स्तुत्वा च ऋतस्य पथ्यां यज्ञस्य मार्गे साधुभूतां विश्वा सर्वामपहृतां गामविदन्। अलभत। ततः स इंद्रस्ता तान्यंगिरसां कर्माणि प्रजानन्नित्त प्रकर्षेण जानन्निंद्रो नमसा नमस्कारेणांगिरसः संभावयन् तैरधिष्ठितं पर्वतमाविवेश॥ अतृंदन्। उतृदिर् हिंसानादरयोरित्यस्य लङि रुधादित्वात् श्नम्। तस्य श्नसोरित्यल्लोपः। निघातः। प्राचा। अंचेश्छंदस्यसर्वनामस्थानमिति विभक्तेरुदात्तत्वं। अहिन्वन्। हि गतिवर्धनयोरित्यस्य लङि रूपं। अविंदन्। विद्लृ लाभ इत्यस्य लङि मुचादित्वान्नुम्। निघातः। पथ्यां। पथि साधुरित्यर्थे तत्र साधुरिति यत्प्रत्ययः। यचि भमिति भसंज्ञायां नस्तद्धित इति टिलोपः। यतोऽनाव इत्यस्यानित्यत्वात्तित्स्वरित इति स्वरितः। विवेश। विश प्रवेशन इत्यस्य लिटि रूपं॥ ॥५॥

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥६॥

विदत्। यदि। सरमा। रुग्णं। अद्रेः। महि। पाथः। पूर्व्यं। सध्र्यक्। करिति कः।
अग्रं। नयत्। सुऽपदी। अक्षराणां। अच्छ। रवं। प्रथमा। जानती। गात् ॥६॥

यदि यदा सरमेंद्रेण गवान्वेषणार्थं प्रेषिता सरमा नाम देवशुन्यद्रेः रुग्णं भग्नं द्वारं विदत्. अलभत तदानीमिंद्रो महि महत्पूर्व्यं पूर्वं प्रेषणकालेऽन्नादिकं ते प्रजां करिष्यामीति प्रतिज्ञातं सध्र्यक् इतरैरपि शोभिः सध्रीचीनं पाथो गव्यादिलक्षणमन्नं कः। अकार्षीत्। तस्यै दत्तवान्। ततः सुपदी शोभनपादयुक्ता सा सरमाक्षराणां क्षयरहितानां गवामग्रं प्रांतं नयत्। प्राप्नोत्। कुत इत्यत आह। यतो रवं तेषां हंभारवं प्रथमा प्रथमं जानती सती अच्छ शब्दाभिमुख्येन गात्। जगाम॥ विदत्। विद्लृ लाभ इत्यस्य लुङि लृदित्त्वात् च्लेरङादेशः। तस्य स्वरः। सरमा। सृ गतौ। औणादिकोऽमप्रत्ययः। सरतीति। सरमा सरणादिति यास्कः। प्रत्ययस्वरः। रुग्णं। रुजो भंग इत्यस्य निष्ठायामोदितश्चेति नत्वं। प्रत्ययस्वरः। पाथः। पा रक्षणे। अन्ने च

। उ॰ ४. २०४. । इत्यसुन्प्रत्ययः । थुडागमः । पातीति पाथोऽन्नं । नित्स्वरः । सध्र्यक् । अंचु गतिपूजनयोः । ऋत्विगित्यादिना क्विन् । सहांचतीति । सहस्य सध्रिरिति सध्र्यादेशः । क्विन्प्रत्ययस्य कुत्वं । अद्रिसध्र्योरंतोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थमिति सध्रि इत्यादेशोऽंतोदात्तः । यणादेशे कृते उदात्तस्वरितयोर्यणः स्वरित इति यणः स्वरितत्वं । कः । करोतेर्लुङि सिपि मंत्रे घसह्वरेत्यादिना लुक् । गुणे कृते हल्ङ्यादिना सिपो लोपः । विसर्जनीयः । निघातः । नयत । नयतेर्लङि रूपं । सुपदी । पादोऽन्यतरस्यां । पा॰ ४. १. ८. । इति ङीप् । गात् । इणो लुङि रूपं ॥

अगच्छदु विप्रतमः सखीयन्नसूदयत्सुकृते गर्भमद्रिः ।
ससान मर्यो युवभिर्मखस्यन्नथाभवदंगिराः सद्यो अर्चन् ॥७॥
अगच्छत् । ऊं इति । विप्रऽतमः । सखिऽयन् । असूदयत् । सुऽकृते । गर्भं । अद्रिः ।
ससानं । मर्यः । युवऽभिः । मखस्यन् । अथ । अभवत् । अंगिराः । सद्यः । अर्चन् ॥७॥

विप्रतमोऽतिशयेन मेधावी सखीयन्नंगिरोभिः साकमात्मनः सखित्वमिच्छन्निंद्रोऽगच्छत् । गोभिरधिष्ठितं पर्वतमगमदेव । सोऽद्रिः सखित्वमिच्छन् सुकृते सुष्ठु युद्धकर्त्रे इंद्राय गर्भं गवात्मकं गर्भमसूदयत् । निरगमयत् । युवभिर्नित्यतरुणैर्मरुद्भिः सह मखस्यन् गोधनमंगिरसामिच्छन् मर्योऽसुराणां मारयितेंद्रः ससान । असुरैरपहृतास्ता गा भेजे । अथानंतरमंगिराः सप्तानामंगिरसां मध्ये वरिष्ठोऽंगिरा ऋषिरिंद्रात्ता गा लब्ध्वा सद्यस्तदानीमेवार्चन्निंद्रं पूजयन्नभवत् ॥ अगच्छत् । गमेर्लङि रूपं । सखीयन् । सुप आत्मनः क्यच् । असूदयत् । षूद निरासे इत्यस्य ण्यंतस्य लङि रूपं । ससान । षण संभक्तावित्यस्य लिटि णलि रूपं । नित्स्वरः । मखस्यन् । छंदसि परेच्छायामिति परेच्छायामपि क्यच् । सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः इति सुगागमः । एकादेशस्वरः । अंगिराः । रम गतौ । अंगारशब्द उपपदे संतेर्धातोरसुन्प्रत्ययः । उपपदे गकारात्परस्येत्वमंत्यलोपश्च धातोर्नलोपश्च अंगिराः । उ॰ ४. २३५. । इति सूत्रेण निपात्यते । भूतकालेऽंगारेभ्यः सृत इत्यंगिरा ऋषिः । अंगारेष्वंगिरा इति यास्कः । नित्स्वरः ॥

सतःसतः प्रतिमानं पुरोभूर्विश्वा वेद जनिमा हंति शुष्णं ।
प्र णो दिवः पदवीर्गव्युरर्चन्त्सखा सखीँरमुंचन्निरवद्यात् ॥८॥
सतःऽसतः । प्रतिऽमानं । पुरःऽभूः । विश्वा । वेद । जनिम । हंति । शुष्णं ।
प्र । नः । दिवः । पदऽवीः । गव्युः । अर्चन् । सखा । सखीन् । अमुंचत् । निः । अवद्यात् ॥८॥

योऽयमिंद्रः सतः सत उत्तमस्य वस्तुनः प्रतिमानं । प्रतिमीयत उपमीयतेऽनेन सर्वमिति प्रतिमानं प्रतिनिधिः । यद्वा सतः सतो जातस्य सर्वस्य प्रतिमानं स्वस्य महत्त्वेन प्रतिमातीयत्तया सर्वं परिच्छिनत्तीत्यर्थः । पुरोभूर्युद्धे पुरतः शत्रूनवाप्नोतीति पुरोभूः स विश्वा जनिम सर्वाणि जातानि वेद । जानाति । शुष्णं शोषकमसुरं हंति । पदवीः कवितमो गव्युर्गोधनमंगिरसामिच्छन्नस्माकं सखेंद्रः सखीन्नोऽस्मान् दिवो द्युलोकादागत्य प्रार्चन् प्रकर्षेण पूजयन्नवद्याद्वृत्रबाधरूपाद्दोषान्निरमुंचत् । नितरां मुंचतु ॥ प्रतिमानं । मातीति मानं । औणादिको नन्प्रत्ययः । यद्वा करणे ल्युट् । पुरोभूः । भू प्राप्तौ । क्विप् । वेद । वेत्तेर्लटि रूपं । जनिम । जनी प्रादुर्भावे । जनिहनिभ्यामिमनिन्निति इमनिन्प्रत्ययः । भूतकाले जातानीति जनिम । सुपां सुलुगिति सुपो लुक् । नित्स्वरः । हंति । हंतेर्लटि रूपं । वाक्यभेदादनिघातः । शुष्णं । शोषयतीति शुष्णः । प्र णः । उपसर्गाद्बहुलमिति संहितायां णत्वं । पदवीः । वी कांत्यादिषु । क्विप् । पदानि वेत्ति परस्परसंगतानि करोतीति पदवीः कविः । गव्युः । गोशब्दादात्मेच्छायां छंदसीति क्यच् । वांतो यि प्रत्यय इति वांतादेशः । क्याच्छंदसीत्युप्रत्ययः । प्रत्ययस्वरः । अर्चन् । अर्चतेः शतरि रूपं । सखीन् । संहितायां नकारस्य दीर्घादटीति रुः । पूर्वस्य वर्णस्य अत्रानुनासिक इत्यनुनासिकादेशः । अमुंचत् । मुच्लृ मोक्षणे इत्यस्य लङि शे मुचादीनामिति नुमागमः ।

निघातः । अवद्यात् । वद व्यक्तायां वाचीत्यस्य नञ्पूर्वस्य गर्ह्यार्थेऽवद्यपण्यवर्या इति निपातनात् । पा० ३. १. १०१. । यत्प्रत्ययः ॥

नि गव्यता मनसा सेदुरर्कैः कृण्वानासो अमृतत्वाय गातुं ।
इदं चिन्नु सदनं भूर्येषां येन मासाँ असिषासन्नृतेन ॥ ९ ॥
नि । गव्यता । मनसा । सेदुः । अर्कैः । कृण्वानासः । अमृतऽत्वाय । गातुं ।
इदं । चित् । नु । सदनं । भूरि । एषां । येन । मासान् । असिसासन् । ऋतेन ॥ ९ ॥

गव्यता गा इच्छता मनसा युक्ता अर्कैरर्चनीयैः स्तोत्रैरमृतत्वाय देवत्वप्राप्त्यर्थं गातुं । गच्छंत्यनेनेति गातुर्मार्गः । अमृतत्वप्राप्त्युपायभूतं मार्गं कृण्वानासः कुर्वाणास्तेऽंगिरसो निषेदुः । सत्राख्ये कर्मण्यासीदन् । एषामंगिरसामिदं चित्सदनं इदमेव सत्राख्यं कर्मण्यासदनं भूरि नु । प्रभूतं । अमृतत्वप्राप्त्यर्थं महानुपायः खलु । कुत इत्यत आह । ऋतेन सत्यभूतेन येन सत्रकर्मणा तेऽंगिरसो मासानभिप्लवपृष्ठ्यषडहैः कल्पितान् मासान् असिसासन् । संभक्तुमैच्छन् ॥ गव्यता । गोशब्दात् क्यचि रूपं । वांतो यि प्रत्यय इति वांतादेशः । एकादेशस्वरः । सेदुः । सदेर्लिटि अत एकहल्मध्येऽनादेशादेर्लिटीत्येत्वाभ्यासलोपौ । निघातः । कृण्वानासः । कृवि हिंसाकरणयोरित्यस्य ताच्छीलिकश्चानश् । धिन्विकृण्व्योरच्चेत्युप्रत्ययः । चित्स्वरः । गातुं । गाङ् गतौ । कमिमनिजनिगाभापायाहिभ्य इति करणे तुप्रत्ययः । प्रत्ययस्वरः । असिषासन् । षण संभक्तावित्यस्य सनि जनसनखनां सञ्झलोरित्यात्वं । अभ्यासस्य सन्यत इतीत्वं । मनोतिरन इति संहितायां षत्वं । तदंताल्लङि रूपं । यद्वृत्तयोगादनिघातः ॥

संपश्यमाना अमदन्नभि स्वं पयः प्रत्नस्य रेतसो दुघानाः ।
वि रोदसी अतपद्घोष एषां जाते निःष्ठामदधुर्गोषु वीरान् ॥ १० ॥
संऽपश्यमानाः । अमदन् । अभि । स्वं । पयः । प्रत्नस्य । रेतसः । दुघानाः ।
वि । रोदसी इति । अतपत् । घोषः । एषां । जाते । निःऽस्थां । अदधुः । गोषु । वीरान् ॥ १० ॥

स्वं स्वकीयं गोधनमभि अभिलक्ष्य संपश्यमाना मदीया एता गाव इत्यात्मीयतया जानानास्तेऽंगिरसः प्रत्नस्य पुरा जातस्य रेतसस्तदुपलक्षितस्य पुत्रस्य धारणार्थं पयो दुघानास्ता गाः पयो दुहंतः संतोऽमदन् । अहृष्यन् । एषामंगिरसां घोषो हर्षादुत्पन्नो महाध्वनिः स्तुतिजातो वा रोदसी द्यावापृथिव्यौ व्यतपत् । ते व्याप्यातपिष्ट । ततस्तेऽंगिरसो जाते आत्मीयतया संपन्ने चराचरात्मके वस्तुनि निःष्ठां पूर्वं यथा स्थितिमकार्षुः । तथा गोष्वाहृतासु वीरान् रक्षाकर्मण्यतिशूरान्पुरुषानदधुः । स्थापयामासुः ॥ संपश्यमानाः । संपूर्वस्य दृशेर्दृशेश्चेति वक्तव्यमित्यात्मनेपदं । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः । अमदन् । मदी हर्ष इत्यस्य लुङि णिच्यङि रूपं । निघातः । दुघानाः । दुह प्रपूरण इत्यस्मात् शानच् । अदादित्वाच्छपो लुक् । घत्वं छांदसं । वृषादित्वादाद्युदात्तः । अतपत् । विपूर्वस्य तपतेरच्च सकर्मकत्वादात्मनेपदाभावः । लङि रूपं । घोषः । घुष संशब्दने । घञतः । ञित्स्वरः । निःष्ठां । ष्ठा गतिनिवृत्तौ । स्थः क च । पा० ३. २. ७७. । इति क्विप् । कृदुत्तरस्वरः । अदधुः । दधातेर्लङि झेः सिजभ्यस्तेति जुसादेशः । वाक्यभेदान्निघाताभावः । गोषु । सावेकाच इति विभक्तेरुदात्तत्वे प्राप्ते न गोश्वन्निति प्रतिषिद्धत्वात्प्रातिपदिकस्वरः ॥ ॥ ६ ॥

स जातेभिर्वृत्रहा सेदु हव्यैरुदुस्रिया असृजदिंद्रो अर्कैः ।
उरूच्यस्मै घृतवद्भरंती मधु स्वाद्म दुदुहे जेन्या गौः ॥ ११ ॥
सः । जातेभिः । वृत्रऽहा । सः । इत् । ऊं इति । हव्यैः । उत् । उस्रियाः । असृजत् । इंद्रः । अर्कैः ।
उरूची । अस्मै । घृतऽवत् । भरंती । मधु । स्वाद्म । दुदुहे । जेन्या । गौः ॥ ११ ॥

स इंद्रो जातिभिः सहायतया संपन्नैर्मरुद्भिः सहितः सन् वृत्रहा वृत्रस्यासुरस्य हंता भवति । सेदु स एवेंद्रोऽर्कैरर्चनीयैः अत एव हव्यैर्होतव्यैर्मरुद्भिः सहितः सन् उस्रियाः । ऊर्ध्वं वसत्यासु क्षीरादिरूपं हविरित्युस्रिया गावः । यद्वा ऊर्ध्वं क्षीरदधिनवनीतादि क्रमेणासु वसतीति । उस्रियेति गोनामोत्स्राविणोऽस्यां भोगाः । नि० ४. १९. । इति यास्कः । ता गा उदसृजत् । यज्ञार्थं सम्यक् ससर्ज । यस्मादेवं तस्मात् घृतवत् घृतोपेतं क्षीरादिकं हविर्भरंती बिभ्राणा अत एवोरुची । उरु प्रभूतमग्निहोत्रादिकर्माचति हविः प्रदातुं प्राप्नोतीत्युरूची । जेन्या जेतव्या प्रशस्ता गौरस्मै यजमानाय स्वाद्म स्वादुतरं क्षीरादि दुदुह्रे । दुह्यते स्म ॥ उस्रियाः । वस निवासे इत्यस्मात् स्फायितंचीत्यादिना रक्प्रत्ययः । उस्रशब्दात् स्वार्थे घप्रत्ययः । प्रत्ययस्वरः । यद्वा सृ गतौ । उत्पूर्वस्य सरतेः कप्रत्ययः । पूर्वपदस्यांत्यलोपश्छांदसः । अत्रापि स्वार्थिको घप्रत्ययः । असृजत् । सृज विसर्गे इत्यस्य लङि रूपं । उरूची । उर्वंचतीति क्विन् । अंचतेश्चोपसंख्यानमिति ङीप् । उदात्तनिवृत्तिस्वरेणांतोदात्तः । दुदुह्रे । दुह प्रपूरणे इत्यस्य लिटि रूपं । जेन्या । जयतेः कृत्यार्थे केन्यप्रत्ययः । इकारलोपश्छांदसः । प्रत्ययस्वरः ॥

पित्रे चिच्चक्रुः सदनं समस्मै महि त्विषीमत्सुकृतो वि हि ख्यन् ।
विष्कभ्नंतः स्कंभनेना जनित्री आसीना ऊर्ध्वं रभसं वि मिन्वन् ॥१२॥
पित्रे । चित् । चक्रुः । सदनं । सं । अस्मै । महि । त्विषिऽमत् । सुऽकृतः । वि । हि । ख्यन् ।
विऽस्कभ्नंतः । स्कंभनेन । जनित्री इति । आसीनाः । ऊर्ध्वं । रभसं । वि । मिन्वन् ॥१२॥

सत्रमनुतिष्ठंतोऽङ्गिरसः पित्रे चित्पालकायास्मा इंद्राय महि महत् त्विषीमद्दीप्तिमत् सदनमुत्तमं स्थानं संचक्रुः । कथमिति चेदुच्यते । यतः सुकृतः समुपार्जितकर्माणस्तेऽङ्गिरसस्तादृशमिंद्रस्योचितं स्थानं वि हि ख्यन् । विशेषेणादर्शयन् खलु । कृत इत्यत आह । आसीनाः सत्रमुपतिष्ठंतस्तेऽङ्गिरसो जनित्री सर्वस्य जगतो जनयित्र्यौ द्यावापृथिव्यौ स्कंभनेन स्तंभनसाधनेनांतरिक्षेण विष्कभ्नंतो यथा ते रोदस्यावधो न पततस्तथा विष्टब्धीकुर्वंतः संतो रभसं वेगवंतं तमिंद्रमूर्ध्वं द्युलोके वि मिन्वन् । हविःस्वीकरणार्थं विशेषेणास्थापयन् ॥ चक्रुः । करोतेर्लिट्युसि रूपं । निघातः । ख्यन् । ख्या प्रकथने । अस्य लुङि लिपिसिचिह्वश्चेत्यङ् । चक्षिङः ख्याञादेशः । आतो लोप इटीत्याकारलोपः । हियोगादनिघातः । विष्कभ्नंतः । स्कंभु रोधने । सौत्रो धातुः । तस्माच्छतरि रूपं । वेः स्कभ्नातेर्नित्यं । पा० ८. ३. ७७ । इति षत्वं । शतुः प्रत्ययस्वरः । जनित्री । ऋन्नेभ्यो ङीप् । जनिता मंत्रे इति निपातनाणिलोपः । वा छंदसीति सवर्णदीर्घः । आसीनाः । आस उपवेशने इत्यस्माच्छानच् । ईदासः । पा० ७. २. ८३. । इतीकारः । शानचो लसार्वधातुकस्वरे कृते धातुस्वरः । मिन्वन् । डुमिञ् प्रक्षेपणे इत्यस्य लङि रूपं । निघातः ॥

मही यदि धिषणा शिश्नथे धात्सद्योवृधं विभ्वं१ रोदस्योः ।
गिरो यस्मिन्ननवद्याः समीचीर्विश्वा इंद्राय तविषीरनुत्ताः ॥१३॥
मही । यदि । धिषणा । शिश्नथे । धात् । सद्यःऽवृधं । विऽभ्वं । रोदस्योः ।
गिरः । यस्मिन् । अनवद्याः । संऽईचीः । विश्वाः । इंद्राय । तविषीः । अनुत्ताः ॥१३॥

मही महती धिषणास्माभिः क्रियमाणेंद्रविषया स्तुती रोदस्योः शिश्नथे द्यावापृथिव्योरन्योन्यवियोगाय सद्योवृधं तदानीमेव वर्धमानं विभ्वं विभुं तयोर्धारणसमर्थं साधनं यदि धात् अकरोत् तस्मात्तत्र वर्तमाने यस्मिन्निंद्रेऽनवद्या दोषरहिता गिरः स्तुतिलक्षणा वाचः समीचीः संगता भवति । इंद्रायेति विभक्तिव्यत्ययः । तादृशस्येंद्रस्य विश्वास्तविषीः सर्वाणि बलान्यनुत्ता अपरैरप्रेरितानि स्वभावसिद्धान्येव ॥ धिषणा । ञिधृषा प्रागल्भ्ये । धृषेर्धिष च संज्ञायामिति क्युप्रत्ययः । धातोर्धिषादेशः । धृष्णोत्यनयेति धिषणा स्तुतिः । प्रत्ययस्वरः । शिश्नथे । श्नथ हिंसार्थः । अस्मात्क्विप् । छंदस्युभयथेति तस्य सार्वधातुकत्वाच्छप् । तस्य बहुलं छंदसीति

युः। बहुलं छंदसीत्यभ्यासस्येत्वं। धातुस्वरः। धात। दधातेश्छांदसे लुङि रूपं। यदियोगादनिघातः। विभ्व। भवतेः क्विप। छंदस्युभयथेति यणादेशः। उदात्तस्वरितयोर्यण इति स्वरितत्वं। अनुत्ताः। णुद प्रेरणे इत्यस्य नञ्पूर्वस्य निष्ठायां नसत्तनिषत्तानुत्तेत्यादिना निपातनान्निष्ठातकारस्य नत्वाभावः। नञः स्वरः ॥

मह्या ते सख्यं वश्मि शक्तीरा वृत्रघ्ने नियुतो यंति पूर्वीः।
महि स्तोत्रमव आगन्म सूरेरस्माकं सु मघवन्बोधि गोपाः ॥१४॥

महि। आ। ते। सख्यं। वश्मि। शक्तीः। आ। वृत्रऽघ्ने। निऽयुतः। यंति। पूर्वीः।
महि। स्तोत्रं। अवः। आ। अगन्म। सूरेः। अस्माकं। सु। मघऽवन्। बोधि। गोपाः॥१४॥

हे इंद्र ते तव महि महत्सख्यमावश्मि। आकामये। शक्तीस्त्वत्संबंधीनि दानानि चाकामये। वृत्रघ्ने वृत्रासुरस्य हंत्रे तुभ्यं पूर्वीर्बह्व्यो नियुतो वडवा आयंति। वहनार्थमागच्छंति। सूरेर्विदुषस्तव महि महत् स्तोत्रमवो हविर्लक्षणमन्नं चागन्म। प्रापयामः। हे मघवन्निंद्र तादृशस्त्वमस्माकं सु सुष्ठु गोपाः पालयिता भवामीति बोधि। बुध्यस्व॥ सख्यं। सख्युर्य इति भावार्थे यप्रत्ययः। प्रत्ययस्वरः। वश्मि। वश कांतौ। लटि रूपं। नियुतः। यु मिश्रणे। क्विप। नितरां युवंति मिश्रयंत्यात्मानं रथेष्विति नियुतो वडवाः। अगन्म। गमेर्लङ्युत्तमबहुवचनं बहुलं छंदसीति शपो लुक्। म्वोश्चेति मकारस्य नकारः। निघातः। बोधि। बुधेर्लोटि हुधी रूपं। निघातः। गोपाः। गुपु रक्षणे। गुपूधूपेत्यादिना आयप्रत्ययः। तदंतात् क्विप। अतो लोपयलोपौ। प्रत्ययस्वरः॥

महि क्षेत्रं पुरु श्चंद्रं विविद्वानादित्सखिभ्यश्चरथं समैरत्।
इंद्रो नृभिरजनद्दीद्यानः साकं सूर्यमुषसं गातुमग्निं ॥१५॥

महि। क्षेत्रं। पुरु। चंद्रं। विविद्वान्। आत्। इत्। सखिऽभ्यः। चरथं। सं। ऐरत्।
इंद्रः। नृऽभिः। अजनत्। दीद्यानः। साकं। सूर्यं। उषसं। गातुं। अग्निं ॥१५॥

योऽयमिंद्रो महि महत् क्षेत्रं केदारादि पुरु प्रभूतं चंद्रं हिरण्यं च विविद्वान् अर्थिभ्यः सखिभ्योऽस्मभ्यं लंभयन्। आदित् अनंतरं चरथं चरात्मकं गवादिकं च समैरत् सम्यक् प्रेरयत्। दत्तवानित्यर्थः। दीद्यानो दीप्यमानः सोऽयमिंद्रो नृभिर्नेतृभिः कर्मसहायभूतैर्मरुद्भिः साकं सहितः सन् सूर्यं कालस्य निर्वाहकमादित्यं उषसमुषःकालं गातुं। गायंति स्तुवंत्यस्यामिंद्रादिदेवानिति गातुः पृथिवी। तां। अग्निमग्निहोत्रादिकर्मसाधनभूतमाहवनीयादिलक्षणमग्निं चाजनत्। अजनयत्॥ पुरु चंद्रं। संहितायां ह्रस्वाच्चंद्रोत्तरपदे मंत्र इति सुडागमः। तस्य श्चुत्वेन शकारः। पदकाले नास्ति सुडागमः। पुरु। कुप्रत्ययस्वरः। चंद्रं। रक्। प्रत्ययस्वरः। चरथं। चर गत्यर्थः। अस्मादौणादिकोऽथप्रत्ययः। प्रत्ययस्वरः। ऐरत्। ईर गतावित्यस्य लङि आडजादीनामित्याडागमः। निघातः। अजनत्। जनेर्ण्यंतस्य लङि रूपं। बहुलमन्यत्रापि संज्ञाछंदसोरिति णिलुक्। गातुं। गै शब्दे। गापायाहिभ्य इति तुप्रत्ययः। प्रत्ययस्वरः॥ ॥७॥

अपश्चिदेष विभ्वो३दमूनाः प्र सध्रीचीरसृजद्विश्वश्चंद्राः।
मध्वः पुनानाः कविभिः पवित्रैर्द्युभिर्हिन्वंत्यक्तुभिर्धनुत्रीः ॥१६॥

अपः। चित्। एषः। विऽभ्वः। दमूनाः। प्र। सध्रीचीः। असृजत्। विश्वऽचंद्राः।
मध्वः। पुनानाः। कविऽभिः। पवित्रैः। द्युऽभिः। हिन्वंति। अक्तुऽभिः। धनुत्रीः ॥१६॥

दमूनाः। दांतं मनो यस्यासौ दमूनाः। दांतमनाः। यद्वा दाम्यतीति दमूनाः। उपरत इत्यर्थः। स एष एवेंद्रो विभ्वो व्याप्ताः सध्रीचीः परस्परसंगता विश्वश्चंद्रा विश्वस्याह्लादयित्रीः। विश्वस्याह्लादो याभ्यस्ता इति

चा। एवंभूता अपश्चिदपोऽपि प्रासृजत्। सृष्टवान्। सृष्टाश्च ता आपो मध्वो माधुर्योपेतान्सोमान्कविभिः पवित्रैरपिवायुसूर्यैः पुनानाः शोधयित्र्यो धनुत्रीः सर्वस्य जगतः प्रीणयित्र्यः सत्यो द्युभिर्दिवसैरक्तुभी रात्रिभिर्हिन्वंति। रात्रिंदिवं सर्वं जगत्स्वस्वव्यापारप्रवणं कुर्वंतीत्यर्थः॥ दमूनाः। दमु उपशमे। दमेरूनसिरित्यूनसिप्रत्ययः। दाम्यतीति दमूनाः। यद्वा दांतशब्दस्य दभावो मनसो मकारात्परस्याकारस्य ऊकारश्छांदसः। असृजत्। सृज विसर्गे। हिन्वंति। हि गतौ। निघातः। धनुत्रीः। धन धान्ये इत्यस्मादशित्रादित्वादुत्रप्रत्ययः। शार्ङ्गरवादिषु ङीन् द्रष्टव्यः। नित्स्वरः॥

अनु॑ कृ॒ष्णे वसु॑धिती जिहाते उ॒भे सूर्य॑स्य मं॒हना॒ यज॑त्रे।

परि॒ यत्ते॑ महि॒मानं॑ वृ॒जध्यै॒ सखा॑य इंद्र॒ काम्या॑ ऋजि॒प्याः॥१७॥

अनु॑। कृ॒ष्णे इति॑। वसु॑धिती॒ इति॒ वसु॑ऽधिती। जि॒हा॒ते॒ इति॑। उ॒भे इति॑। सूर्य॑स्य। मं॒हना॑। यज॑त्रे॒ इति॑।

परि॑। यत्। ते॒। म॒हि॒मान॑म्। वृ॒जध्यै॑। सखा॑यः। इं॒द्र॒। काम्याः॑। ऋ॒जि॒प्याः॥१७॥

हे इंद्र सूर्यस्य सुष्ठु जगतः प्रेरकस्य तव मंहना महत्त्वेन सामर्थ्येन वसुधिती वस्तव्यपदार्थधारणोपेते यजत्रे यजनार्हे ते उभे कृष्णे अहोरात्रे अनु जिहाते। पुनःपुनरावृत्य वर्तेते। किंच। ऋजिप्या ऋजुगतयः सखायस्ते मित्रभूताः काम्याः कमनीया मरुतो वृजध्यै। कर्मविघ्नकारिणामसुराणां वर्जनाय परिभवाय। यद्यस्य ते तव महिमानं सामर्थ्यमनुसृत्य परि परितः प्रभवंति॥ जिहाते। ओहाङ् गतौ। जुहोत्यादिः। भृञामिदित्यभ्यासस्येत्वं। निघातः। मंहना। महि वृद्धौ। ल्युट्। लित्स्वरः। वृजध्यै। वृजी वर्जने। तुमर्थे कध्यैप्रत्ययः। कित्त्वाद्गुणाभावः। प्रत्ययस्वरः। काम्याः। कमेर्ण्यंतस्याचो यदिति यत्प्रत्ययः। यतोऽनाव इत्याद्युदात्तत्वं। ऋजिप्याः। ओप्यायी वृद्धौ। क्विप्। लोपो व्योर्वलीति यलोपः। पूर्वपदस्योकारस्येकारो व्यत्ययेन। बहुवचनस्यैकवचनं छांदसं। कृदुत्तरपदप्रकृतिस्वरः॥

पति॑र्भव वृत्रहन्त्सू॒नृता॑नां गि॒रां वि॒श्वायु॑र्वृष॒भो व॑यो॒धाः।

आ नो॑ गहि स॒ख्येभिः॑ शि॒वेभि॑र्म॒हान्म॒हीभि॑रू॒तिभिः॑ सरण्यन्॥१८॥

पतिः॑। भ॒व॒। वृ॒त्र॒ऽह॒न्। सू॒नृता॑नाम्। गि॒राम्। वि॒श्वऽआ॑युः। वृ॒ष॒भः। व॒यः॒ऽधाः।

आ। नः॒। ग॒हि॒। स॒ख्येभिः॑। शि॒वेभिः॑। म॒हान्। म॒हीभिः॑। ऊ॒तिऽभिः॑। स॒र॒ण्यन्॥१८॥

हे वृत्रहन्निंद्र विश्वायुः। विश्वं संपूर्णमायुर्यस्यासौ विश्वायुः। अविनाशी वृषभः कामानां वर्षिता वयोधा अन्नस्य दाता तादृशस्त्वं सूनृतानां गिरामस्माभिः क्रियमाणानां प्रियतमानां वाचां पतिः स्वामी भव। तथा सरण्यन् सरणं यज्ञार्थं गमनमिच्छन् महान्महीभिर्महतीभिरूतिभी रक्षाभिः शिवेभिः कल्याणैः सख्येभिः फलप्रदानरूपोपकारलक्षणैः सख्यैश्च सहितस्त्वं नोऽस्मान्प्रत्यागहि। यज्ञार्थमागच्छ॥ सूनृतानां। ऊन परिहाणे। सुतरामूनयत्यप्रियमिति सूनेति प्रियमुच्यते। तच्च तदृतं सत्यं चेति सूनृतं। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। वयोधाः। वयस्युपपदे दधातेर्विच्। गहि। गमेर्लोटि बहुलं छंदसीति शपो लुक्। सेर्हिरादेशः। अपिच्च। तस्य ङित्त्वादनुदात्तोपदेशेत्यादिना मलोपः। तस्यासिद्धत्वादतो हेरिति हेर्लुक् न भवति। निघातः। सरण्यन्। सरणशब्दात्क्यच्। एकादेशस्वरः॥

तम॑ंगिर॒स्वन्नम॑सा स॒प॒र्यन्नव्यं॑ कृणोमि॒ सन्य॑से पुरा॒जाम्।

द्रुहो॒ वि या॑हि बहु॒ला अदे॑वीः॒ स्व॑श्च नो मघवन्त्सा॒तये॑ धाः॥१९॥

तं । अंगिरस्वत् । नमसा । सपर्यन् । नव्यं । कृणोमि । सन्यसे । पुराऽजां ।
द्रुहः । वि । याहि । बहुलाः । अदेवीः । स्व१रिति स्वः । च । नः । मघऽवन् । सातये । धाः ॥१९॥

हे इंद्र अंगिरस्वत् अंगिरस इव नमसा स्तोत्रेण सपर्यन् पूजयन् विश्वामित्रोऽहं तं तादृशमहिमोपेतं पुराजां पुरातनं त्वा सन्यसे संभजनाय नव्यं कृणोमि। स्तोतव्यतयाभिनवं करोमि। अदेवीस्तमोरूपत्वेनाद्योतमानान्बहुला बहून् द्रुहो द्रोग्धॄन् शत्रुभूतान् राक्षसान् वि याहि। विशेषेण मृतिं प्रापय। हे मघवन्निंद्र नोऽस्मभ्यं स्वः स्वं धनं च सातये संभजनार्थं धाः। धेहि ॥ अंगिरस्वत्। अंगिरस इव। तेन तुल्यमिति वतिप्रत्ययः। नभोऽङ्गिरोमनुषां वत्युपसंख्यानमिति भसंज्ञायां सकारस्य रुत्वाभावः। सपर्यन्। सपरशब्दः कंड्वादिः। नव्यं। णु स्तुतावित्यस्मादचो यदिति यत्प्रत्ययः। धातोस्तन्निमित्तस्यैवेति वांतादेशः। यतोऽनाव इत्याद्युदात्तत्वं। कृणोमि। कृविर्लटि रूपं। सन्यसे। सनतेर्भावे क्विप्। यमु प्रयत्ने। अस्मात् क्विप्। सनः संभजनस्य यसे यत्नाय। संभजनार्थमित्यर्थः। पुराजां। जनेर्विट्यात्वे रूपं। याहि। यातेर्लोटि रूपं। स्वः। स्वरादिनिपातमव्ययमित्यव्ययसंज्ञायामव्ययादाप्सुप इति सुपो लुक्। सातये। षण संभक्तौ। भावे क्तिन्। जनसनखनां सञ्झलोरित्यादिना आत्वं। ऊतियूतीत्यादिना निपातनादुदात्तः ॥

मिहः पावकाः प्रतता अभूवन्त्स्वस्ति नः पिपृहि पारमासां ।
इंद्र त्वं रथिरः पाहि नो रिषो मक्षूमक्षू कृणुहि गोजितो नः ॥२०॥
मिहः । पावकाः । प्रऽतताः । अभूवन् । स्वस्ति । नः । पिपृहि । पारं । आसां ।
इंद्र । त्वं । रथिरः । पाहि । नः । रिषः । मक्षुऽमक्षु । कृणुहि । गोऽजितः । नः ॥२०॥

हे इंद्र ते पावकाः पापानां शोधयित्र्यो मिहः सेचनसाधनान्यापः प्रतता लोके प्रकर्षेण विस्तृता अभुवन्। आसामपां स्वस्ति विनाशरहितं पारं तीरं नोऽस्मदर्थं पिपृहि। जलैः संपूर्णं कुरु। जलसमवारपारीणं कुर्वित्यर्थः। रथिरो रथवांस्त्वं रिषो हिंसकाच्छत्रोः सकाशान्नोऽस्मान्पाहि। पालय। अनंतरं नोऽस्मान् मक्षु मक्षु अतिशीघ्रं गोजितो गवादिपशूनां जेतॄन् कृणुहि। कुरु। वृष्टिप्रदानेन तटाकादिजलाशयान् संपूर्णान् कृत्वा गवादिधनयुक्तान् कुर्विति भावः ॥ अभूवन्। भू सत्तायामित्यस्य लुङि रूपं। निघातः। पिपृहि। पॄ पालनपूरणयोः। जुहोत्यादिः। अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं। ह्रेर्ङित्त्वादगुणः। निघातः। रथिरः। मत्वर्थे मेधारथाभ्यामिरन्निरचावितीरच्प्रत्ययः। रिषः। रिष हिंसायां। क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं। मक्षू मक्षू। नित्यवीप्सयोरिति द्विर्वचनं। संहितायामृचि तुनुघमक्षुतङ्कुत्रोरुष्याणामिति दीर्घः ॥

अदेदिष्ट वृत्रहा गोपतिर्गा अंतः कृष्णाँ अरुषैर्धामभिर्गात् ।
प्र सूनृता दिशमान ऋतेन दुरश्च विश्वा अवृणोदप स्वाः ॥२१॥
अदेदिष्ट । वृत्रऽहा । गोऽपतिः । गाः । अंतरिति । कृष्णान् । अरुषैः । धामऽभिः । गात् ।
प्र । सूनृताः । दिशमानः । ऋतेन । दुरः । च । विश्वाः । अवृणोत् । अप । स्वाः ॥२१॥

वृत्रहा वृत्रस्य हंता गोपतिर्गवां स्वामी सन्निंद्रो गा अदेदिष्ट। अस्मभ्यं दिशतु। तथा कृष्णान् कर्मविघ्नकारिणोऽसुरानरुषैरारोचमानैर्धामभिस्तेजोभिरंतरंतर्धानं विनाशं गात्। गमयतु। तथा सूनृताः प्रियतमा गा ऋतेन प्रतारणवर्जितेन सत्येन वाक्येन प्रदिशमानोऽङ्गिरोभ्यः प्रदिशन्निंद्रो विश्वाः सर्वाणि दुरो गवां स्वेच्छया निर्गमनद्वाराणि स्वाः स्वकीया गाश्चापावृणोत्। व्रजे गाः स्थापयित्वा तानि द्वाराण्याच्छादितवानित्यर्थः ॥ अदेदिष्ट। दिश अतिसर्जन इत्यस्माण्ण्यंताल्लुङि लङि व्यत्ययेनात्मनेपदं। अडागमस्वरः। गोपतिः। पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरः। गात्। इण् गतौ। अंतर्भावितण्यर्थः। दिशमानः। दिशेर्व्यत्ययेन शानच्। तस्य लसार्वधातुकस्वरेणानुदात्तत्वे शस्वरः। अवृणोत्। वृञ् वरण इत्यस्य लङि रूपं ॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥२२॥
शुनं । हुवेम । मघऽवानं । इंद्रं । अस्मिन् । भरे । नृऽतमं । वाजऽसातौ ।
शृण्वंतं । उग्रं । ऊतये । समत्ऽसु । घ्नंतं । वृत्राणि । संऽजितं । धनानां ॥२२॥

व्याख्यातेयमृक् ॥ ॥८॥

इंद्र सोमं सोमपत इति सप्तदशर्चं तृतीयं सूक्तं वैश्वामित्रं त्रैष्टुभमैंद्रं । अनुक्रांतं च । इंद्र सोम त्र्यूनेति ॥ पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि मरुत्वतीय इंद्र सोममितीदं सूक्तं निविद्धानीयं । द्वितीयस्येति खंडे सूत्रितं । इंद्र सोमं या त ऊतिरवमेति मध्यंदिनः । आ॰ ७. ६ । इति ॥ गोसवविवधयोरपि मरुत्वतीयशस्त्र एतत्सूक्तं । सूत्रितं च । इंद्र सोममेतायामिति मध्यंदिनः । आ॰ ९. ८. । इति ॥ उद्भिद्बलभिदोरपि मरुत्वतीय एतत्सूक्तं । सूत्रितं च । इंद्र सोममिंद्रः पुर्भिदिति मध्यंदिनः । आ॰ ९. ८. । इति ॥

इंद्र सोमं सोमपते पिबेमं माध्यंदिनं सवनं चारु यत्ते ।
प्रप्रुथ्या शिप्रे मघवन्नृजीषिन्विमुच्या हरी इह मादयस्व ॥१॥
इंद्र । सोमं । सोमऽपते । पिब । इमं । माध्यंदिनं । सवनं । चारु । यत् । ते ।
प्रऽप्रुथ्य । शिप्रे इति । मघऽवन् । ऋजीषिन् । विऽमुच्य । हरी इति । इह । मादयस्व ॥१॥

विश्वामित्रो ब्रूते । सोमपते सोमस्याधिपते हे इंद्र इममस्माभिर्माध्यंदिने सवने क्रियमाणं सोमं सोमरसं पिब । यद्यस्मात्ते त्वदर्थं क्रियमाणं माध्यंदिनं मध्यंदिनसंबंधि सवनं निष्केवल्याख्यं शस्त्रं चारु रमणीयं वर्तते । मघवन् धनवन् ऋजीषिन् । ऋजीषशब्देन गतसारं सोमद्रव्यमुच्यते । तद्वन् हे इंद्र हरी रथे योजितावश्वौ रथाद्विमुच्य शिप्रे हनू प्रप्रुथ्यात्यंतेन ग्रासेन पूरयित्वेह देवयजनदेशे मादयस्व । तावश्वौ हर्षय ॥ प्रप्रुथ्य । प्रोथृ पर्याप्तावित्यस्य ल्यपि रूपं । ह्रस्वश्छांदसः । नित्स्वरः । ऋजीषिन् । अर्ज षर्ज अर्जन इत्यस्मादर्जेर्ऋज्च । उ॰ ४. २८. । इतीषन्प्रत्यय ऋजि इत्यादेशश्च धातोः । अर्ज्यत इत्यृजीषं । तदस्यास्तीतीनिप्रत्ययः । आमंत्रितत्वान्निघातः । मादयस्व । मदि स्तुत्यादिषु । हेतुमति णिच् । निघातः ॥

गवाशिरं मंथिनमिंद्र शुक्रं पिबा सोमं ररिमा ते मदाय ।
ब्रह्मकृता मारुतेना गणेन सजोषा रुद्रैस्तृपदा वृषस्व ॥२॥
गोऽआशिरं । मंथिनं । इंद्र । शुक्रं । पिब । सोमं । ररिम । ते । मदाय ।
ब्रह्मऽकृता । मारुतेन । गणेन । सऽजोषाः । रुद्रैः । तृपत् । आ । वृषस्व ॥२॥

हे इंद्र गवाशिरं गव्यस्य पयस आशीर्मिश्रणं यस्मिन् तं सोमं । अपि च मंथिनं मंथसंयुक्तं शुक्रमभिनवं यद्वा शुक्रामंथिग्रहे वर्तमानं । एवं त्रिषु सवनेषु वर्तमानमिमं सोमं पिब । ते तव मदाय हर्षाय ररिम । तं सोमं वयं प्रयच्छामः । मारुतेन । मरुतां गणो मारुतः । स च ब्रह्मकृत । ब्रह्म स्तोत्रं करोतीति ब्रह्मकृत । इंद्रस्तोत्रं कुर्वाणेन मारुतेन गणेन रुद्रैरेकादशसंख्याकै रुद्रैश्च सजोषाः संगतस्त्वं तृपत् सोमपानेन तृप्यन् आ वृषस्व । तमिमं सर्वतो जठरे सिंच । धारय ॥ गवाशिरं । श्रीणातेराङ्पूर्वात्क्विप्यपस्पृधेथामानृचुरित्यादिना निपातनादाशिरादेशः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । पिबा । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । ररिम । रातेश्छांदसे वर्तमाने लिटि रूपं । असमानवाक्यत्वान्निघाताभावः । आगमा अनुदात्ता इतीटोऽनुदात्तत्वात्प्रत्ययस्वरः । तृपत् । तृप प्रीणने । तुदादिः । आगमानुशासनस्यानित्यत्वान्नुमभावः । वृषस्व । वृषु सेचने । व्यत्ययेन शः ॥

ये ते शुष्मं ये तविषीमवर्धन्नर्चंत इंद्र मरुतस्त ओजः ।
माध्यंदिने सवने वज्रहस्त पिबा रुद्रेभिः सगणः सुशिप्र ॥ ३ ॥
ये । ते । शुष्मं । ये । तविषीं । अवर्धन । अर्चंतः । इंद्र । मरुतः । ते । ओजः ।
माध्यंदिने । सवने । वज्रऽहस्त । पिब । रुद्रेभिः । सऽगणः । सुऽशिप्र ॥ ३ ॥

हे इंद्र ये मरुतस्ते तव शुष्मं शत्रूणां शोषकं तेजो ये च मरुतस्तविषीं बलं चावर्धन युद्धसहकारितया वर्धयन ते मरुतोऽर्चंतस्त्वां स्तुवतः संतस्ते तवौजो युद्धसामर्थ्यमवर्धयन । वज्रहस्त वज्रयुक्तौ हस्तौ यस्येति तादृश सुशिप्र शोभनहनो । शिप्रे हनू नासिके वेति यास्कः । हे इंद्र रुद्रेभिः । रोदयंति शत्रूनिति रुद्रा मरुतः । तैः सगणस्त्वं माध्यंदिने सवने सोमं पिब ॥ अवर्धन । वृधु वर्धने । अंतर्भावितण्यर्थः । यद्वृत्तयोगादनिघातः । माध्यंदिने । उत्सादित्वादञ् । ञित्त्वादाद्युदात्तः ॥

त इन्न्वस्य मधुमद्विविप्र इंद्रस्य शर्धो मरुतो य आसन ।
येभिर्वृत्रस्येषितो विवेदामर्मणो मन्यमानस्य मर्म ॥ ४ ॥
ते । इत् । नु । अस्य । मधुऽमत् । विविप्र । इंद्रस्य । शर्धः । मरुतः । ये । आसन ।
येभिः । वृत्रस्य । इषितः । विवेद । अमर्मणः । मन्यमानस्य । मर्म ॥ ४ ॥

ये मरुत इंद्रस्य शर्धो बलभूता आसन त इत त एव मरुतोऽस्य । द्वितीयार्थे षष्ठी । इममिंद्रं मधुमत । तव सहाया वयमास्महे त्वं युद्धमभिगच्छेति माधुर्योपेत वाक्यं यथा भवति तथा विविप्र नु । क्षिप्रं प्रेरयन । येभिर्यैर्युद्धसहायैर्मरुद्भिरिषितः प्रेरित इंद्रोऽमर्मणः परैरविदितमर्मस्थानस्यात एव मन्यमानस्य न कोऽपि मम हंतेत्यभिमन्यमानस्य वृत्रस्यासुरस्य मर्म यस्मिन स्थाने प्रहृतो सत्यां स मरिष्यति तादृशं स्थानं विवेद । अज्ञासीत ॥ विविप्र । विप क्षेपण इत्यस्य लिटि व्यत्ययेनात्मनेपदं । इरेच इरयो र इति रे इत्यादेशः । निघातः । आसन । अस भुवीत्यस्य लङि रूपं । यद्वृत्तयोगान्निघाताभावः । विवेद । विद ज्ञान इत्यस्य लिटि रूपं । लित्स्वरः । मर्म । मृङ् प्राणत्याग इत्यस्मादौणादिको मनिन । नित्स्वरः ॥

मनुष्वदिंद्र सवनं जुषाणः पिबा सोमं शश्वते वीर्याय ।
स आ ववृत्स्व हर्यश्व यज्ञैः सरण्युभिरपो अर्णा सिसर्षि ॥ ५ ॥
मनुष्वत् । इंद्र । सवनं । जुषाणः । पिब । सोमं । शश्वते । वीर्याय ।
सः । आ । ववृत्स्व । हरिऽअश्व । यज्ञैः । सरण्युऽभिः । अपः । अर्णा । सिसर्षि ॥ ५ ॥

हे इंद्र मनुष्वत मनोर्यज्ञमिव ममेदं सवनं यज्ञं जुषाणः सेवमानस्त्वं शश्वते शाश्वताय वीर्याय परपरिभवलक्षणाय सामर्थ्यायेमं सोमं पिब । हे हर्यश्व स तादृशस्त्वं यज्ञैर्यजनीयैर्मरुद्भिः साकमाववृत्स्व । आगच्छ । किंच सरण्युभिरेकश्रुतिमन्मंत्रानात्मन इच्छद्भिः यद्वा सरण्युभिः सरणशीलैर्मरुद्भिः सहितस्त्वमपोऽतरिक्षस्थितान्युदकानि अर्णा पार्थिवान्युदकानि सिसर्षि । प्रापय । यद्वा अपः । पंचम्यंतमेतत्पदं । अपो व्याप्तादंतरिक्षात्मकाशादर्णांसि प्रापय ॥ ववृत्स्व । वृतु वर्तने । व्यत्ययेन शपः श्लुः । लोटि रूपं । सरण्युभिः । रण शब्दार्थः । क्विप । समानो रणो ध्वनिर्येषां ते सरणा मंत्राः । तानिच्छंतः । सुपः क्यच । क्याच्छंदसीत्युप्रत्ययः । यद्वा सृ गतौ । सृयुवचिभ्योऽन्युजागूजक्नुचः । उ० ३ ८१. । इत्यन्युचप्रत्ययः । रषाभ्यां । पा० ८. ४. १. । इति णत्वं । चित्त्वादंतोदात्तः । अपः । आपॢ व्याप्तौ । आप्नोतेः क्विप ह्रस्वश्चेति क्विप धातोर्ह्रस्वश्च । सावेकाच इति विभक्तेरुदात्तत्वं । सिसर्षि । सृ गतौ । छांदसो जुहोत्यादेः । बहुलं छंदसीत्यभ्यासस्येत्वं ॥ ॥ ९ ॥

त्वमपो यद्ध वृत्रं जघन्वाँ अत्याँ इव प्रासृजः सर्तवाजौ ।
शयानमिंद्र चरता वधेन वव्रिवांसं परि देवीरदेवं ॥६॥
त्वं । अपः । यत् । ह । वृत्रं । जघन्वान् । अत्यान्ऽइव । प्र । असृजः । सर्तवे । आजौ ।
शयानं । इंद्र । चरता । वधेन । वव्रिऽवांसं । परि । देवीः । अदेवं ॥६॥

हे इंद्र त्वं देवीर्देवनशीला अपः परि वव्रिवांसं परित आवृत्य वर्तमानं अत एवादेवं बहूदकतयास्वच्छत्वेनाप्रतिभासमानं शयानमेकत्र निश्चलतया वर्तमानं वृत्रं मेघं यद्यदा चरता तमुद्दिश्य वर्तमानेन वधेन युद्धेन जघन्वान् हतवानसि तदा त्वमाजौ युद्धे सर्तवे अतिवेगगमनायात्यानिव यथाश्वान् प्रेरयसि तथा त्वमप उदकान्यंतरिक्षादाकाशात् प्रासृजो ह । प्रकर्षेण मेघभेदनं कृत्वासृजः खलु । त यजाम इत्युत्तरेणान्वयः ॥ जघन्वान् । हन हिंसागत्योरित्यस्य क्वसौ विभाषा गमहनविदविशामितीटो विकल्पितत्वादत्रेडभावः । अभ्यासाच्चेति हकारस्य घत्वं । प्रत्ययस्वरः । असृजः । सृज विसर्गे । शविकरणी । यद्योगादनिघातः । सर्तवे । सृ गतौ । तुमर्थे तवेप्रत्ययः । अतश्च तवे युगपदिति धातोः प्रत्ययस्य चोदात्तत्वं । आजौ । अज गतिक्षेपणयोः । अज्यतिभ्यां च । उ॰ ४ १३० । इति इणप्रत्ययः । णित्त्वादुपधावृद्धिः । अजंति गच्छंत्यस्मिन्निति आजिर्युद्धं । प्रत्ययस्वरः । सर्तवाजावित्यत्र संहितायामायादेशे कृते तस्य लोपः शाकल्यस्येति यकारलोपः । सर्वविधीनां छंदसि विकल्पितत्वात्सवर्णदीर्घत्वे कर्तव्ये यल्लोपो नासिद्धो भवति । सवर्णदीर्घः । शयानं । शीङ् स्वप्ने । शानच् । अदादित्वाच्छपो लुक् । ङित्वात्सार्वधातुकस्वरेण शानचोऽनुदात्तत्वे धातुस्वरः । वधेन । हंतेर्भावे हनश्च वध इत्यप्प्रत्ययो वधादेशश्च धातोरंतोदात्तश्च । वव्रिवांसं । वृञ् वरणे इत्यस्य क्वसौ विड्डागमश्छांदसः । प्रत्ययस्वरः ॥

यजाम इन्नमसा वृद्धमिंद्रं बृहंतमृष्वमजरं युवानं ।
यस्य प्रिये ममतुर्यज्ञियस्य न रोदसी महिमानं ममाते ॥७॥
यजामः । इत् । नमसा । वृद्धं । इंद्रं । बृहंतं । ऋष्वं । अजरं । युवानं ।
यस्य । प्रिये इति । ममतुः । यज्ञियस्य । न । रोदसी इति । महिमानं । ममाते इति ॥७॥

नमसा हविर्लक्षणेनान्नेन वृद्धं प्रवृद्धं अत एव बृहंतं महांतमृष्वं । ऋष्यते गम्यते स्तुतिलक्षणैर्मंत्रैरिति ऋष्वः स्तोतव्यं । अजरं जरारहितं अत एव युवानं नित्यतरुणं एवंविधमिंद्रं यजाम इत् । कौशिका वयं यज्ञसिद्ध्यर्थं स्तुतिवाक्यैः पूजयामः । प्रिये प्रियतमे अपरिमिते रोदसी द्यावापृथिव्यौ यज्ञियस्य यज्ञार्हस्य यस्येंद्रस्य तव महिमानं वैभवं न ममतुः । न परिच्छेत्तुं शक्नुतः । न ममाते इति द्वितीयं क्रियापदमादरार्थं ॥ यजामः । यजेर्लेटि रूपं । ऋष्वं । ऋषी गतौ । सर्वनिघृष्वरिष्वेत्यादिना वप्रत्ययांतो निपातितः । प्रत्ययस्वरः । प्रिये । ईदूदेदिति प्रगृह्यसंज्ञा । ममतुः । मा माने इत्यस्य लिट्यतुसि रूपं । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः । महिमानं । महिशब्दात्तस्य भाव इत्यर्थे पृथ्वादित्वादिमनिच् । चित्स्वरः । ममाते । माङ् माने शब्दे चेत्यस्य लिट्यातामि रूपं ॥

इंद्रस्य कर्म सुकृता पुरूणि व्रतानि देवा न मिनंति विश्वे ।
दाधार यः पृथिवीं द्यामुतेमां जजान सूर्यमुषसं सुदंसाः ॥८॥
इंद्रस्य । कर्म । सुऽकृता । पुरूणि । व्रतानि । देवाः । न । मिनंति । विश्वे ।
दाधार । यः । पृथिवीं । द्यां । उत । इमां । जजान । सूर्यं । उषसं । सुऽदंसाः ॥८॥

विश्वे सर्वे देवा इंद्रस्य तव कर्म कर्माणि सुकृता सुकृतानि सुष्ठु निर्मितानि पृथिव्यादीनि पुरूणि बहूनि

व्रतानि यज्ञादीनि च न मिनंति। एतानि सर्वाणि तव कर्माणि न हिंसंति। क्रियंत्यादृियंते। किंच योऽयमिंद्रः पृथिवीं भूलोकं द्यां द्युलोकं उत अपि चेमामिममंतरिक्षलोकं च एतांस्त्रीन् लोकान् दाधार। सुदंसाः सुकर्मा शोभनकर्मा सन्निंद्रः सूर्यं लोकप्रकाशकमादित्यमुपससर्गमिहोत्रादिकर्मनिर्वाहकमुषःकालं जजान। उत्पादयामास ॥ इंद्रस्य कर्म सुकृता पुरूणीत्येतत्पदकदंबकमेको द्वे वसुमती इत्यस्मिन्वर्गे। ऋखि॰ ३. २. ३.। पठितं। अत्रापि तदेव पठ्यते किमिति पदकाले नोत्सृज्यत इति चेन्न। वाक्यभेदात्। तत्रेंद्रस्य कर्म सुकृता पुरूणीत्येकं वाक्यं अत्र तु कर्म सुकृतेत्येकं वाक्यं पुरूणि व्रतानीत्यपरं। किंच तत्रत्यं पदकदंबकं प्रथमांतं अत्रत्यं द्वितीयांतं। अतो वाक्यभेदाद्विभक्तिभेदाच्च पदकाले नोत्सृज्यते ॥ मिनंति। मीञ् हिंसायामित्यस्य लटि रूपं। निघातः। दाधार। धृञ् धारण इत्यस्य लिटि रूपं। तुजादित्वादभ्यासस्य दीर्घः। लित्स्वरः। जजान। जन जनन इत्यस्यांतर्भावितण्यर्थस्य लिटि रूपं। लित्स्वरः। सुदंसाः। सोर्मनसी इत्युत्तरपदाद्युदात्तत्वं ॥

अद्रो॑घ स॒त्यं तव॒ तन्म॑हि॒त्वं स॒द्यो यज्जा॒तो अपि॑बो ह॒ सोम॑म्।
न द्याव॑ इंद्र त॒वस॑स्त॒ ओजो॒ नाहा॒ न मासाः॑ श॒रदो॑ वरंत ॥९॥

अद्रो॑घ। स॒त्यं। तव॑। तत्। म॒हि॒ऽत्वं। स॒द्यः। यत्। जा॒तः। अपि॑बः। ह॒। सोम॑म्।
न। द्याव॑ः। इं॒द्र॒। त॒वस॑ः। ते॒। ओज॑ः। न। अहा॑। न। मासाः॑। श॒रद॑ः। व॒रं॒त॒ ॥९॥

अद्रोघ द्रोहवर्जित हे इंद्र तव तन्महित्वं तादृशं माहात्म्यं सत्यं यथार्थं। यद्यस्माज्जात उत्पन्नः सद्यस्तदानीमेव सोममस्माभिर्दीयमानं सोमरसमपिबः। ह प्रसिद्धौ। किंच तवसो बलवतस्ते तवौजः सामर्थ्यं द्यावो दिवोपलक्षिताः सर्वे लोका न वरंत। न वारयंति। किंच। अहा प्रतिपदादीन्यहानि न वारयंति। तथा मासार्धमासाद्याः शरदः संवत्सराश्च तव सामर्थ्यं न वारयंति। किंतु तव सामर्थ्यमनुसृत्य सर्वे वर्तंत इति भावः ॥ अद्रोघ। आमंत्रितस्य चेति पाष्ठिकमाद्युदात्तत्वं। अपिबः। यद्योगादनिघातः। मासाः। मसी परिमाणे। मस्यते परिमीयते त्रिंशता दिनैरिति मासः। कर्मणि घञ्। ञित्वादाद्युदात्तः। शरदः। शॄ हिंसायामित्यस्मात् शॄदृभसोऽदिरित्यधिकरणेऽदिप्रत्ययः। शीर्यतेऽस्यां तृणगुल्मवनस्पतीनां तेजांसीति शरत्। प्रत्ययस्वरः। वरंत। वृञ् वरणे। अंतर्भावितण्यर्थोऽत्र निवारणे वर्तते। भौवादिकः। छांदसे लङि रूपं। निघातः ॥

सद्यस्क्रीनाम्न्येकाहे निष्केवल्यशस्त्रे त्वं सद्यो अपिब इति सूक्तमुखीया। सूत्रितं च। त्वं सद्यो अपिबो जात इंद्रानु त्वाहिघ्न अध देव देवाः। आ॰ ९. ५। इति ॥

त्वं स॒द्यो अपि॑बो जा॒त इं॑द्र॒ मदा॑य॒ सोमं॑ पर॒मे व्यो॑मन्।
यद्ध॒ द्यावा॑पृथि॒वी आवि॑वे॒शीरथा॑भवः पू॒र्व्यः का॑रु॒धाया॑ः ॥१०॥

त्वं। स॒द्यः। अपि॑बः। जा॒तः। इं॒द्र॒। मदा॑य। सोम॑म्। प॒र॒मे। वि॒ऽओ॑मन्।
यत्। ह॒। द्यावा॑पृथि॒वी इति॑। आ। अवि॑वे॒शीः। अथ॑। अ॒भ॒वः॒। पू॒र्व्यः। का॒रु॒ऽधाया॑ः ॥१०॥

हे इंद्र सद्यस्तदानीमेव जातः परमे व्योमन् उत्तमे स्थाने स्थितस्त्वं मदाय हर्षाय सोममपिबः। यद्यदा त्वं द्यावापृथिवी द्यावापृथिव्यावाविवेशीर्ह। आ समंतात्भृशं प्रविष्टोऽसि खलु। अथानंतरं पूर्व्यः पुरातनः सन् कारुधायाः कर्मणां विधाताभवः खलु ॥ व्योमन्। अव रक्षणगत्यादिषु। विपूर्वस्यावतेर्नामन् सीमन्नित्यादिना मनिन्। ज्वरत्वरेत्यादिना ऊठ्। विशेषेणाम व्याप्तिर्यस्य तत्। सुपां सुलुगित्यादिना सुपो लुक्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। आविवेशीः। विश प्रवेशने इत्यस्य यङ्लुकि लङि सिपि यङो वेतीडागमः। इतश्चेति सिप इकारलोपः। यद्योगादनिघातः। कारुधायाः। कारुः। करोतेः कृवापाजिमिस्वदिसाध्यशूभ्य उण्प्रत्ययः। णित्त्वाद्वृद्धिः। दधातेर्वहिहाधाञ्भ्यश्छंदसीत्यसुन्। णिदित्यनुवृत्तेरातो युक् चिण् कृतोरिति युगागमः। समासे गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेति सूत्रात्पूर्वपदप्रकृतिस्वरः ॥ ॥१०॥

अहन्नहिं परिशयानमर्ण ओजायमानं तुविजात तव्यान् ।
न ते महित्वमनु भूदध द्यौर्यदन्यया स्फिग्याउक्षामवस्थाः ॥११॥
अहन् । अहिं । परिऽशयानं । अर्णः । ओजायमानं । तुविऽजात । तव्यान् ।
न । ते । महिऽत्वं । अनु । भूत् । अध । द्यौः । यत् । अन्यया । स्फिग्या । क्षां । अवस्थाः ॥११॥

तुविजात। बहूनि जातानि पृथिव्यादीनि यस्मात्सोऽयं तुविजातः। हे तुविजात इंद्र तव्यानतिशयेन प्रवृद्धस्त्वमर्णः परिशयानमुदकं परितः शयानमुदकमंतः कृत्वा परितो वर्तमानं अत एवौजायमानं बलमाचरंतमहिं। आ समंताद्धंत्यपहरत्युदकमित्यहिर्मेघः। तमिमं मेघमहन्। उदकप्रेरणाय हतवानसि। अध अथ ते महित्वं महिमानं द्यौर्नानुभूत। नानुभवति। न जानाति। यद्यस्मात्त्वमन्ययैकतरया स्फिग्या कट्या क्षां भूमिमवस्थाः। अवच्छाद्य तिष्ठसि ॥ अहन्। हंतेर्लङि सिप्लोपे रूपं। अहिं। हन हिंसागत्योः। आङि श्रिहनिभ्यां ह्रस्वश्चेति इणप्रत्ययः डिच्च पूर्वपदस्य ह्रस्वश्च। वृषादित्वादाद्युदात्तत्वं। ओजायमानं। ओजःशब्दादाचारार्थे कर्तुः क्यङ् सलोपश्चेति क्यङ्प्रत्ययः सलोपश्च। ङित्त्वादात्मनेपदं। प्रत्ययस्वरः। तव्यान्। तु इति सौत्रो धातुः। अस्मात्तृजंतात्तुश्छंदसीतीयसुन्। तुरिष्ठेमेयःस्विति तृचो लोपः। भसंज्ञायामोर्गुणः। इकारलोपश्छांदसः। नित्स्वरः। भूत्। भवतेर्लुङि रूपं। स्फिग्या। यचि भमिति भसंज्ञां बाधित्वा स्वादिष्वसर्वनामस्थान इति पदसंज्ञायां जश्त्वं। तृतीयायाः पूर्वसवर्णः। क्षा। क्षि निवासगत्योः। अन्येभ्योऽपि दृश्यत इति निरुपपदादपि डप्रत्ययः। ततष्टाप्। क्षियंति निवसंत्यस्यां प्राणिन इति क्षा भूमिः। उदात्तनिवृत्तिस्वरेणांतोदात्तः। अवस्थाः। वस आच्छादन इत्यस्य लङ्यनुदात्तत्वादात्मनेपदं। थास्यदादित्वाच्छपो लुक्। यद्योगादनिघातः। अडागमस्वरः ॥

यज्ञो हि त इंद्र वर्धनो भूदुत प्रियः सुतसोमो मियेधः ।
यज्ञेन यज्ञमव यज्ञियः सन्यज्ञस्ते वज्रमहिहत्य आवत् ॥१२॥
यज्ञः । हि । ते । इंद्र । वर्धनः । भूत् । उत । प्रियः । सुतऽसोमः । मियेधः ।
यज्ञेन । यज्ञं । अव । यज्ञियः । सन् । यज्ञः । ते । वज्रं । अहिऽहत्ये । आवत् ॥१२॥

हे इंद्र अस्मदीयो यज्ञस्ते तव वर्धनो हविष्प्रदानेन वर्धयिता भूद्धि। भवति खलु। उत अपि च सुतसोमोऽभिषुतसोमवान्मियेधो यज्ञस्तव प्रियः। स त्वं यज्ञियो यज्ञार्हः सन् यज्ञ यज्ञस्य कर्तारं यजमानं यज्ञेनानुष्ठीयमानेनानेनाव। फलप्रदानेन रक्ष। किंचायं यज्ञस्ते तव वज्रमहिहत्ये वृत्रहनने कर्मण्यावत्। रक्षतु ॥ वर्धनः। वृधु वर्धन इत्यस्य ण्यंतस्य नंद्यादित्वात् ल्युप्रत्ययः। लित्स्वरः। भूत्। हियोगादनिघातः। अव। अवतेर्लोटि रूपं। निघातः। सन्। असेः शतरि रूपं। प्रत्ययस्वरः। अहिहत्ये। हन हिंसागत्योरित्यस्य भावे हनस्त चेति क्यप् तकारश्चांतादेशः। कृदुत्तरपदस्वरः। आवत्। अवतेश्छांदसे लङि रूपं। निघातः ॥

यज्ञेनेंद्रमवसा चक्रे अर्वागैनं सुम्नाय नव्यसे ववृत्यां ।
यः स्तोमेभिर्वावृधे पूर्व्येभिर्यो मध्यमेभिरुत नूतनेभिः ॥१३॥
यज्ञेन । इंद्रं । अवसा । आ । चक्रे । अर्वाक् । आ । एनं । सुम्नाय । नव्यसे । ववृत्यां ।
यः । स्तोमेभिः । ववृधे । पूर्व्येभिः । यः । मध्यमेभिः । उत । नूतनेभिः ॥१३॥

हे इंद्र सर्वो यजमानोऽवसा रक्षकेण यज्ञेनेंद्रं त्वामर्वागाचक्रे। हविष्प्रदानेनाभिमुखं करोति। तथाहं नव्यसे नवतराय सुम्नाय धनायैनं त्वामा ववृत्यां। यज्ञेनावृत्त मदभिमुखं कुर्यां। कीदृशस्त्वं। यः पूर्व्येभिः पुरातनैः स्तोमेभिः स्तोत्रैर्ववृधे। तथा य इंद्रो मध्यमेभिर्मध्यभवैः स्तोत्रैरुतापि च नूतनेभिरस्माभिः क्रियमा-

णेरधुनातनैः स्तोत्रैर्वर्धते ॥ चक्रे । करोतेर्लिटि रूपं । नव्यसे । नवशब्दादीयसुनि भसंज्ञायामकारलोप ईकारलोपश्छांदसः । नित्वादाद्युदात्तः । ववृत्यां । वृतु वर्तने । लिङि बहुलं छंदसीति शपः श्लुः । व्यत्ययेन परस्मैपदं । निघातः । ववृधे । वृधु वर्धने इत्यस्य लिटि रूपं । प्रत्ययस्वरः । मध्यमेभिः । मध्यशब्दात् शैषिकार्थे मध्यान्मः । पा० ४ ३ ८ । इति मप्रत्ययः । प्रत्ययस्वरः । नूतनेभिः । नवशब्दस्य नूतनप्नख्शाश्च प्रत्यया वक्तव्या नू इत्यादेशश्चेति तनप्प्रत्ययो नू इत्यादेशश्च ॥

विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिंद्रमह्नः ।
अंहसो यत्र पीपरद्यथा नो नावेव यांतमुभये हवंते ॥१४॥
विवेष । यत् । मा । धिषणा । जजान । स्तवै । पुरा । पार्यात् । इंद्रं । अह्नः ।
अंहसः । यत्र । पीपरत् । यथा । नः । नावाऽइव । यांतं । उभये । हवंते ॥१४॥

यद्यदा धिषणेंद्रं स्तवानीति मदीया बुद्धिर्मा विवेष व्याप्नोत् तदाहं स्तोत्रं जजान । करोमि । बुद्धेः स्वरूपं दर्शयति । अहं पार्यात्पारे भवादतिदूरवर्तिनो विघ्नकारिणोऽह्नः पुरा पूर्वं स्तवै । स्तवानि । यत्र यस्यां धिषणायामेव जातायां सत्यां स इंद्रो नोऽस्मानंहसः पापरूपाद्दारिद्र्याद्यथा पीपरत् यथा पारं नयेत् तथास्मदुभयपार्श्ववर्तिधनार्थिनो जना हवंते । आह्वयंति । तत्र दृष्टांतः । नावेव यांतं । यथा नद्यादिषु नौकया यांतं गच्छंतं पुरुषमुभये उभयकूलवर्तिनो जना हवंते । आह्वयंति । तद्वत् ॥ विवेष । विष्लृ व्याप्तावित्यस्य लिटि णलि रूपं । लित्स्वरः । जजान । जन जनन इत्यस्य लिट्युत्तमे णलि रूपं । वाक्यभेदादनिघातः । अंहसः । अम गत्यादिषु । अमेर्हुक् च । उ० ४. २१२ । इत्यसुन्प्रत्ययो हुगागमश्च । नित्स्वरः । पीपरत् । पॄ पालनपूरणयोरित्यस्य लुङि चङि ह्रस्वाभ्यासेत्वदीर्घगुणाः । यथायोगादनिघातः । लित्स्वरः । नावेव । णुद प्रेरणे इत्यस्माद्ग्लानुदिभ्यां डौः । उ० २. ६४. । इति डौप्रत्ययः । नुद्यत इति नौः प्लवः । सावेकाच इति तृतीयाया उदात्तत्वं । इवेन नित्यसमासो विभक्त्यलोप इत्यादि । उभये । उभशब्दात्परस्य तयप उभादुदात्तो नित्यं । पा० ५. २ ४४. । इत्ययजादेशः । वचनसामर्थ्यादाद्युदात्तत्वं । हवंते । ह्वयतेर्लटि रूपं ॥

माध्यंदिने सवन आग्नीध्रीयस्य आपूर्णो अस्येति प्रस्थितयाज्या । सूत्रितं च । आपूर्णो अस्य कलशः स्वाहेति माध्यंदिन्यः । आ० ५. ५. । इति ॥

आपूर्णो अस्य कलशः स्वाहा सेक्तेव कोशं सिसिचे पिबध्यै ।
समु प्रिया आववृत्रन्मदाय प्रदक्षिणिदभि सोमास इंद्रं ॥१५॥
आऽपूर्णः । अस्य । कलशः । स्वाहा । सेक्ताऽइव । कोशं । सिसिचे । पिबध्यै ।
सं । ऊं इति । प्रियाः । आ । अववृत्रन् । मदाय । प्रऽदक्षिणित् । अभि । सोमासः । इंद्रं ॥१५॥

हे इंद्र अस्य तव पानार्थं कलशो द्रोणकलशः सोमेनापूर्णः । स्वाहा स्वाहाकृतो दत्तश्च सोमसहितः कलशः पिबध्यै तव पानार्थं । सिसिचे । तं सोमं चोदितायाधारे सिंचामि । तत्र दृष्टांतः । कोशं सेक्तेव । यथा सेक्तोत्सेचको जलपूर्णात्कोशात् दृतेः सकाशाज्जलं पात्रांतरे सिंचति तद्वत् । प्रियाः स्वादुतमाः सोमासो दत्ताः सोमा इंद्र त्वामभि अभिलक्ष्यैव मदाय तव हर्षार्थं प्रदक्षिणित् प्रादक्षिण्येन समाववृत्रन् । सम्यगावृत्य वर्तंतां ॥ आपूर्णः । पॄ पालनपूरणयोरित्यस्य कर्मणि निष्ठा । रदाभ्यामिति तस्य नत्वं । गतिरनंतर इति गतिस्वरः । स्वाहा । निपातत्वादाद्युदात्तः । सेक्तेव कोशं । न लोकाव्ययेति षष्ठीप्रतिषेधः । सिसिचे । षिच क्षरणे इत्यस्य लिटि रूपं । पिबध्यै । पा पाने इत्यस्य तुमर्थे शध्यैन्प्रत्ययः । शित्त्वात्पिबादेशः । नित्त्वादाद्युदात्तः । अववृत्रन् । वृतु वर्तने इत्यस्य लङि शप् । बहुलं छंदसीति तस्य शपः श्लुः । व्यत्ययेन परस्मैपदं । बहुलं छंदसीति झे रुडागमः ॥

न त्वा गभीरः पुरुहूत सिंधुर्नाद्रयः परि षंतो वरंत ।
इत्था सखिभ्य इषितो यदिंद्रा दृळ्हं चिदरुजो गव्यमूर्वं ॥१६॥
न । त्वा । गभीरः । पुरुऽहूत । सिंधुः । न । अद्रयः । परि । संतः । वरंत ।
इत्था । सखिऽभ्यः । इषितः । यत् । इंद्र । आ । दृळ्हं । चित् । अरुजः । गव्यं । ऊर्वं ॥१६॥

हे पुरुहूतेंद्र गभीरो गंभीरः सिंधुः समुद्रस्त्वा त्वां न वारयति । ततः परि परितो वर्तमानाः सतोऽद्रयः शैलास्त्वां न वरंत । न वारयंति । किंतु त्वामनुसृत्य वर्तंते । यद्यस्मादित्थेत्थमनेन प्रकारेण सखिभ्यः सखिभिर्देवैरिषितः प्रार्थितस्त्वं दृळ्हं चिदतिप्रबलमपि गव्यं गवि भवमवटं वर्तमानमूर्वमूर्वाननमारुजः । सम्यगभांक्षीः ॥ गभीरः । गाधृ प्रतिष्ठालिप्सयोर्ग्रंथे च । अस्मादीरच्प्रत्ययः । धकारस्य भकारः आकारस्य ह्रस्वश्च गभीरगंभीरौ । उ॰ ४ ३५ । इत्यनेन निपात्यते । चित्स्वरः । सिंधुः । स्यन्दू प्रस्रवणे । स्यंदेः संप्रसारणं धश्चेत्युप्रत्ययः संप्रसारणं दकारस्य धकारः । निदित्यनुवृत्तेराद्युदात्तः । परि षतः । सतः । अस्तेः शतरि रूपं । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः इति षत्वं । केचित्परिः क्रियान्वयमिच्छंति । तदा षत्वमनुपपन्नं । परि । निपातस्वरः । सतः । प्रत्ययस्वरः । वरंत । वृञ् वरणे । स्वादिकः । लङि रूपं । निघातः । अरुजः । रुजो भंगे इत्यस्य लङि रूपं । गव्यं । गोर्विकार इत्यर्थे गोपयसोर्यदिति यत् । यतोऽनाव इत्याद्युदात्तत्वं ॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥१७॥
शुनं । हुवेम । मघऽवानं । इंद्रं । अस्मिन् । भरे । नृऽतमं । वाजऽसातौ ।
शृण्वंतं । उग्रं । ऊतये । समत्ऽसु । घ्नंतं । वृत्राणि । संऽजितं । धनानां ॥१७॥

एषा ऋक् पूर्वमेव व्याख्याता ॥ ॥११॥

प्र पर्वतानामिति त्रयोदशर्चं चतुर्थं सूक्तं । अत्रेयमनुक्रमणिका । प्र पर्वतानां सप्तोना संवादो नदीभिर्विश्वामित्रस्योत्तितीर्षोरत्र नदीवाक्यं चतुर्थीषष्ठ्यष्टमीदशम्यः षष्ठीसप्तम्योरिंद्रस्तुतिरंत्यानुष्टुभिति । अत्र चतुर्थीषष्ठ्यष्टमीदशमीनां नदीवाक्यत्वान्नद्य एव ऋषयः शिष्टानां विश्वामित्रवाक्यत्वात्स एव ऋषिः । अंत्यानुष्टुप् शिष्टास्त्रिष्टुभः । इंद्रो देवता । यद्यपि षष्ठ्यां सप्तम्यां च विश्वामित्रो नद्यश्च स्तूयंते तथापींद्र एव देवता ॥ सूक्तविनियोगो लैंगिकः ॥ पुरा किल विश्वामित्रः पैजवनस्य सुदासो राज्ञः पुरोहितो बभूव । स च पौरोहित्येन लब्धधनः सर्वं धनमादाय विपाट्छुतुद्र्योः संभेदमाययावनुययुरितरे । अथोत्तितीर्षुर्विश्वामित्रोऽगाधजले ते नद्यौ दृष्ट्वोत्तरणार्थमाद्याभिस्तिसृभिरस्तुषाव ॥

प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने ।
गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥१॥
प्र । पर्वतानां । उशती इति । उपऽस्थात् । अश्वे इवेत्यश्वेऽइव । विषिते इति विऽसिते । हासमाने इति ।
गावाऽइव । शुभ्रे इति । मातरा । रिहाणे इति । विऽपाट् । शुतुद्री । पयसा । जवेते इति ॥१॥

पर्वतानां गिरीणां शैलानामुपस्थादुत्संगान्निर्गत्योशती समुद्रगमनं कामयमाने । गमने दृष्टांतः । अश्वे इव । यथा विषिते मंदुरातो विमुक्ते हासमाने अन्योन्यजवेन स्पर्धमाने । यद्वा हृष्यंत्यावश्वे इव वडवे इव त्वरया गच्छंत्यौ परस्परं हृष्यंत्यौ । तथा गावेव शुभ्रे । यथा द्वौ गावौ शोभमानौ वर्तेते तद्वच्छुभ्रे शोभमाने ।

किंच मातरा। यथा मातरौ धेनू रिहाणे। अंतर्णीतमत्वर्थो लिहिः। वत्सं जिह्वया लेढुमिच्छंत्यौ शीघ्रं गच्छतस्तद्वत्समुद्रं गंतुं जवात्गच्छंत्यौ पयसा संयुक्ते विपाट्। कूलविपाटनात् विपाशनाद्वा विमोचनाद्वा विपाट्। शुतुद्री। शु क्षिप्रं तु तुन्ना तुन्नेव द्रवति गच्छतीति शुतुद्री। एतन्नामके नद्यौ प्र जवेते। समुद्रं प्रति शीघ्रं गच्छतः। अत्र निरुक्तं। पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषणे इति वा हासमाने हासतिः स्पर्धायां हर्षमाणे वा गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते। नि० ९. ३९.। इति॥ उशती। वश कांतौ। अस्य शतुरिग्रहिज्यावयीत्यादिना संप्रसारणं। विषिते। षिञ् बंधने इत्यस्य कर्मणि निष्ठा। संहितायां परिनिविभ्यः सेवसितसयसिवुसहेत्यादिना। पा० ८. ३. ७०.। षत्वं। गतिरनंतर इति गतेः प्रकृतिस्वरः। हासमाने। हासतिः स्पर्धाकर्मा हसे हसने वा। शानच्। तस्य लसार्वधातुकस्वरे कृते धातुस्वरः। रिहाणे। लिह आस्वादने। स्वरितत्वादुभयपदी। शानच्। अदादित्वाच्छपो लुक्। लकारस्य रेफश्छांदसः। रेफमवलंब्य णत्वं। चित्त्वादंतोदात्तः। विपाट्। पट गतौ पश बाधनस्पर्शनयोरिति वा ण्यंतावेतौ विपूर्वौ। शकारस्य व्रश्चादिना षत्वं। शुतुद्री। छांदसी रूपसिद्धिः। जवेते। जुङ् गतौ। भौवादिकः। ङित्त्वादात्मनेपदं। आतो ङित इतीयादेशः। निघातः॥

इंद्रेषिते प्रसवं भिक्षमाणे अच्छा समुद्रं रथ्येव याथः।
समाराणे ऊर्मिभिः पिन्वमाने अन्या वामन्यामप्येति शुभ्रे॥२॥
इंद्रेषिते इतींद्रऽइषिते। प्रऽसवं। भिक्षमाणे इति। अच्छ। समुद्रं। रथ्याऽइव। याथः। समाराणे इति संऽआराणे। ऊर्मिऽभिः। पिन्वमाने इति। अन्या। वां। अन्यां। अपि। एति। शुभ्रे इति॥२॥

हे नद्यौ इंद्रेषिते इंद्रेण प्रेषिते प्रसवं तस्येंद्रस्यानुज्ञां भिक्षमाणे प्रार्थयमाने युवां समुद्रमच्छाभिमुख्येन याथः। गच्छथः। तत्र दृष्टांतः। रथ्येवेति। यथा रथिनौ लक्ष्यं देशमभिगच्छतस्तद्वत्। किं कुर्वत्यौ। समाराणे परस्परं संगच्छंत्यावूर्मिभिस्तरंगैः पिन्वमाने परिसरप्रदेशं संतर्पयंत्यौ शुभ्रे शोभमाने। युवां समुद्रं गच्छथ इति पूर्वेणान्वयः। तथा वा युवयोर्मध्येऽन्यैकान्यामपरां नदीमप्येति। अपिगच्छति। परस्परमैक्यमापद्येते इत्यर्थः॥ इंद्रेषिते। इष गतावित्यस्य कर्मणि निष्ठायामिषिसहेत्यादिना इडागमः। तृतीया कर्मणीति पूर्वपदस्वरः। प्रसवं। षू प्रेरणे इत्यस्याप्। थाथादिस्वरः। भिक्षमाणे। भिक्ष याच्ञायां। आत्मनेपदी। शानचो लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः। रथ्येव। रथस्येमौ। तस्येदमित्यर्थे रथाद्यदिति यत्प्रत्ययः। तित्स्वरितः। इवेन विभक्त्यलोपः। याथः। यातेर्लटि रूपं। समाराणे। ऋ गतावित्यस्य लिट्। संपूर्वस्यार्तेः समो गम्यृच्छीत्यादिनात्मनेपदत्वात्तस्य कानजादेशः। ऋच्छत्यॄतामिति गुणः। पिन्वमाने। पिवि सेचने। भौवादिः। लसार्वधातुकस्वरेण शानचोऽनुदात्तत्वे धातुस्वरः॥

अच्छा सिंधुं मातृतमामयासं विपाशमुर्वीं सुभगामगन्म।
वत्समिव मातरा संरिहाणे समानं योनिमनु संचरंती॥३॥
अच्छ। सिंधुं। मातृऽतमां। अयासं। विऽपाशं। उर्वीं। सुऽभगां। अगन्म। वत्संऽइव। मातरा। संरिहाणे इति संऽरिहाणे। समानं। योनिं। अनु। संचरंती इति संऽचरंती॥३॥

हे नद्यौ मातृतमामतिशयेन मातरं सिंधुं स्रवंतीं शुतुद्रीं त्वामच्छाभिमुख्येनायासं। विश्वामित्रोऽहं प्राप्तोऽभूवं। उर्वीं महतीं सुभगां सौभाग्यवतीं विपाशं त्वामगन्म। वयं प्राप्ताः स्मः। किं कुर्वत्यौ। मातरा मातरौ द्वे धेनू वत्समिव संरिहाणे। अंतर्णीतमत्वर्थो लिहिः। जिह्वया लेढुमिच्छंत्यौ यथा वत्समनुगच्छतस्तद्वत्

समानमेकं योनिं स्थानं समुद्रमनु अभिलक्ष्य संचरंती सम्यक् चरंत्यौ। युवामयासिषमिति पूर्वेणान्वयः॥ अयासं। या प्रापणे इत्यस्य रूपं। इडभावश्छांदसः। अगन्म। गमेर्लुङि बहुलं छंदसीति शपो लुक्। म्वोश्चेति मकारस्य नकारः। निघातः। संचरंती। चरतिर्गत्यर्थः। तृतीयायुक्तत्वाभावादात्मनेपदाभावः। शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः॥

एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरंतीः।
न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति॥४॥
एना। वयं। पयसा। पिन्वमानाः। अनु। योनिं। देवऽकृतं। चरंतीः।
न। वर्तवे। प्रऽसवः। सर्गऽतक्तः। किंऽयुः। विप्रः। नद्यः। जोहवीति॥४॥

एवं स्तुते नद्यौ विश्वामित्रं प्रत्यूचतुः। एनेनैन पयसा पिन्वमानाः संतर्पयंत्यो देवकृतं देवेनेंद्रेण कृतं संदिष्टं योनिं स्थानं समुद्रमनु लक्षीकृत्य चरंतीर्गच्छंत्यो वयमास्महे। द्वयोर्बहुवचनं पूजार्थं। तासामस्माकं सर्गतक्तः सर्गे गमने प्रवृत्तः प्रसव उद्योगो न वर्तवे। निवर्तनाय न भवति। कियुः किमिच्छन्नसौ विप्रो ब्राह्मणो नद्यो नदीरस्मान् जोहवीति। भृशमाह्वयति॥ एना। इदंशब्दस्य तृतीयाया एनादेशः। सुपां सुलुगिति तृतीयाया आजादेशः। ऊडिदमिति विभक्तेरुदात्तत्वं। पिन्वमानाः। पिवि सेचने। देवकृतं। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः। वर्तवे। वृतु वर्तने। तुमर्थे तवेन्प्रत्ययः। नित्स्वरः। सर्गतक्तः। क्ते चेति पूर्वपदप्रकृतिस्वरः। कियुः। किमिच्छन्। क्यचि मांताव्ययप्रतिषेधः। पा॰ ३. १. ८. १.। इति छांदसत्वादत्र प्रतिषेधो न भवतीति क्यच्। क्याच्छंदसीत्युप्रत्ययः। प्रत्ययस्वरः। नद्यः। छांदसो यणादेशः। जोहवीति। ह्वः संप्रसारणमभ्यस्तस्य चेति संप्रसारणे कृते गुणो यङ्लुकोरित्यभ्यासस्य गुणः। यङो वेतीडागमः। गुणः। निघातः॥

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः।
प्र सिंधुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः॥५॥
रमध्वं। मे। वचसे। सोम्याय। ऋतऽवरीः। उप। मुहूर्तं। एवैः।
प्र। सिंधुं। अच्छ। बृहती। मनीषा। अवस्युः। अह्वे। कुशिकस्य। सूनुः॥५॥

विश्वामित्रो नदीः प्रति ब्रूते। ऋतावरीः। ऋतमुदकं। तद्वत्यो हे नद्यो यूयं मे विश्वामित्रस्य मम सोम्याय। उत्तीर्याहं सोमं संपादयामीत्येवं सोमसंपादिने। वचसे तदर्थमेवैः। पंचम्यर्थे तृतीया। शीघ्रगमनेभ्यो मुहूर्तं मुहूर्तमात्रमुप रमध्वं। उपपूर्वो रमिरुपसंहारे वर्तते। क्षणमात्रं शीघ्रगमनादुपरता भवत। सामान्येन नदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीषु पुरोवर्तिनीं शुतुद्रीं प्रति ब्रूते। कुशिकस्य राजर्षेः सूनुर्विश्वामित्रोऽहं बृहती महत्या मनीषा मनीषया स्तुत्यावस्युरात्मनो रक्षणमिच्छन् सन् सिंधुं शुतुद्रीं त्वामच्छाभिमुख्येन प्राह्वे। प्रकर्षेणाह्वयामि। अत्र निरुक्तं। उपरमध्वं मे वचसे सोम्याय सोमसंपादिन ऋतावरीर्ऋतवत्य ऋतमित्युदकनाम प्रत्यृतं भवति मुहूर्तमेवैरयनैरवनैर्वा। प्राभिह्वयामि सिंधुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वावनाय कुशिकस्य सूनुः। कुशिको राजा बभूव। नि॰ २. २५। इति॥ रमध्वं। रमु उपरमे। उपपूर्वाद्रमतेर्विभाषाकर्मकात्। पा॰ १. ३. ८५। इत्यात्मनेपदं। ऋतावरीः। ऋतशब्दात्मत्वर्थे छंदसीवनिपाविति वनिप्। वनो र चेति ङीप् रेफश्चांतादेशः। वा छंदसीति सवर्णदीर्घः। आमंत्रितस्य पादादित्वात्षाष्ठिकमाद्युदात्तत्वं। एवैः। इण् गतौ। इणशीङ्भ्यां वन्। आर्धधातुकलक्षणो गुणः। नित्स्वरः। बृहती मनीषा। उभयत्र तृतीयायाः पूर्वसवर्णदीर्घः। अवस्युः। अवो रक्षणमिच्छन्। सुप आत्मनः क्यच्। नः क्ये इति नकारांतस्य पदसंज्ञाया नियमितत्वादत्र सकारस्य रुत्वं न भवति। क्याच्छंदसीत्युप्रत्ययः। अह्वे। ह्वयतेर्लुङि लिपिसिचिह्वश्च आत्मनेपदेष्वन्यतरस्यां। पा॰ ३. १. ५४.। इत्यङादेशः। गुणः। निघातः॥ ॥१२॥

इंद्रो अस्माँ अरदद्वज्रबाहुरपाहन्वृत्रं परिधिं नदीनां।
देवोऽनयत्सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥६॥
इंद्रः। अस्मान्। अरदत्। वज्रऽबाहुः। अप। अहन्। वृत्रं। परिऽधिं। नदीनां।
देवः। अनयत्। सविता। सुऽपाणिः। तस्य। वयं। प्रऽसवे। यामः। उर्वीः ॥६॥

नद्यः प्रत्यूचुः। हे विश्वामित्र वज्रबाहुः। वज्रयुक्तौ बाहू यस्यासौ वज्रबाहुः। तादृशो बलवानिंद्रो नदीरस्मानरदत्। रदतिः खनतिकर्मा। अखनत्। कथमखनत्। उच्यते। नदीनां शब्दकारिणीनामपां परिधिं परितो निहितमुदकमंतः कृत्वा परितो वर्तमानमित्यर्थः। तादृशं वृत्रं। वृणोत्याकाशमिति वृत्रो मेघः। तं मेघमपाहन्। जघान। तस्मिन्हते आपः पतिताः। ताभिर्गच्छंतीभिर्वयं खाताः। एवं मेघहननद्वारेणाखनत्। न केवलमखनत् किं तर्हि सविता सर्वस्य जगतः प्रेरकः सुपाणिः शोभनहस्त उत्पत्तिस्थितिकर्तृत्वात्तादृशो देवो द्योतमान इंद्रोऽस्माननयत्। मेघभेदनं कृत्वोदकप्रेरणेन समुद्रमपूरयत्। तस्य तादृशसामर्थ्योपेतस्येंद्रस्य प्रसवेऽभ्यनुज्ञायां वर्तमाना उर्वीरुदकैः प्रभूता वयं यामः। गच्छामः। न तव वचनादुपरमामहे। उक्तार्थं यास्को ब्रवीति। इंद्रो अस्मानरदद्वज्रबाहू रदतिः खनतिकर्मापाहन्वृत्रं परिधिं नदीनामिति व्याख्यातं। देवोऽनयत्सविता सुपाणिः कल्याणपाणिः। पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान्पूजयंति। तस्य वयं प्रसवे याम उर्वीरुर्व्यः। नि॰ २ २६। इति॥ अरदत्। रदतेर्लङि रूपं। वज्रबाहुः। बहुव्रीहौ पूर्वपदस्वरः। अहन्। हंतेर्लङि रूपं। निघातः। परिधिं। डुधाञ् धारणपोषणयोरित्यस्मात्कर्मण्युपसर्गे घोः किरिति किप्रत्ययः। आतो लोपः। कृदुत्तरपदस्वरः। अनयत्। नयतेर्लङि रूपं। सुपाणिः। पण व्यवहारे स्तुतौ च। अशिपणाय्यो रुडायलुकौ च। उ॰ ४. १३२। इतीण्। आयलुक्। बहुव्रीहौ नञ्सुभ्यामिति स्वरः। प्रसवे। षू प्रेरणे। ऋदोरबिति भावेऽप्प्रत्ययः। थाथघञ्क्तेत्युत्तरपदांतोदात्तत्वं। यामः। या प्रापणे इत्यस्य लटि रूपं। निघातः। उर्वीः। उरुशब्दाद्वोतो गुणवचनादिति ङीष्। वा छंदसीति सवर्णदीर्घः। प्रत्ययस्वरः॥

प्रवाच्यं शश्वधा वीर्यं१ तदिंद्रस्य कर्म यदहिं विवृश्चत्।
वि वज्रेण परिषदो जघानायन्नापोऽयनमिच्छमानाः ॥७॥
प्रऽवाच्यं। शश्वधा। वीर्यं। तत्। इंद्रस्य। कर्म। यत्। अहिं। विऽवृश्चत्।
वि। वज्रेण। परिऽसदः। जघान। आयन्। आपः। अयनं। इच्छमानाः ॥७॥

योऽयमिंद्रोऽहिं मेघं विवृश्चत् उदकप्रेरणार्थं जघानेति यत्कर्म छेदनरूपं तदिदं तस्येंद्रस्य वीर्यं सामर्थ्यं शश्वधा सर्वदा प्रवाच्यं। प्रकर्षेण वचनीयं। तथा स इंद्रः परिषदः परितः सीदत आसीनान् प्रतिबंधकारिणोऽसुरान् वज्रेण वि जघान। अथायनं स्थानमिच्छमाना इच्छंत्य आप आयन्। यांति॥ प्रवाच्यं। वच परिभाषणे इत्यस्मादृहलोर्ण्यदिति ण्यत्। णित्त्वादुपधावृद्धिः। वचोऽशब्दसंज्ञायां। पा॰ ७ ३ ६७। इति कुत्वाभावः। व्यत्ययेनाद्युदात्तत्वं। यद्वा वाचयतेरचो यत्। यतोऽनाव इति स्वरः। शश्वधा। शश्वच्छब्दात्स्वार्थे धाप्रत्ययस्तकारलोपश्च द्रष्टव्यः। विवृश्चत्। ओव्रश्चू छेदने। तुदादिः। लङि ग्रहिज्यावयीत्यादिना संप्रसारणं। सह सुपेत्यत्र संहेति योगविभागात्समासः। समासस्वरः। परिषदः। क्विप्। संहितायां सदेरप्रतेरिति षत्वं। जघान। हंतेर्लिटि णलि रूपं। निघातः। आयन्। अय गतावित्यस्य लङि रूपं। पादादित्वादनिघातः। इच्छमानाः। इषु इच्छायामित्यस्माद्व्यत्ययेन शानच्। तस्य लसार्वधातुकस्वरे कृते प्रत्ययस्वरः॥

एतद्वचो जरितर्मापि मृष्ठा आ यत्ते घोषानुत्तरा युगानि।
उक्थेषु कारो प्रति नो जुषस्व मा नो नि कः पुरुषत्रा नमस्ते ॥८॥

एतत्। वचः। जरितः। मा। अपि। मृष्ठाः। आ। यत्। ते। घोषान्। उत्ऽतरा। युगानि। उक्थेषु। कारो इति। प्रति। नः। जुषस्व। मा। नः। नि। करिति कः। पुरुषऽत्रा। नमः। ते ॥८॥

नद्यः प्रसंगादिंद्रस्तोत्रं कृत्वा विश्वामित्रं प्रत्यूचुः। जरितः स्तोतर्हे विश्वामित्र ते त्वदीयं यत्संवादात्मकं वचस्त्वं नोऽभीत्या घोषानुद्घोषयन्वर्तसे तद्वचो मापि मृष्ठाः। मा विस्मार्षीः। किं कारणं। उत्तरा युगान्युत्तरेषु याज्ञिकेषु युगेष्वहःसूक्थेषु कारो शस्त्राणां कर्तस्त्वं नोऽस्मान्प्रति जुषस्व। संवादात्मकेन तेन वाक्येन प्रतिसेवस्व। इदानीं नोऽस्मान् पुरुषत्रा पुरुषेषु मा नि कः। उक्तिप्रत्युक्तिरूपसंवादवाक्याध्यापनेन नितरां पुरुषेषु प्रागल्भ्यं मा कार्षीः। ते तुभ्यं नमः ॥ मृष्ठाः। मृजूष शुद्धावित्यस्य लोङि व्यत्ययेनात्मनेपदं। अदादित्वाच्छपो लुक्। व्रश्चादिना षत्वं। निघातः। घोषान्। घुषिर् संशब्दने इत्यस्य शतरि सर्वविधीनां छंदसि विकल्पितत्वादतो गुण इति पररूपत्वाभावः। सवर्णदीर्घः। शतुर्लसार्वधातुकस्वरे कृते धातुस्वरः। युगानि। युजिर् योगे। उंछादिषु घञंतत्वेन निपातनादगुणत्वं। विशिष्टविषयं च निपातनमिष्यते। कालविशेषे रथाद्युपकरणे चेति तत्र पाठादंतोदात्तत्वं। कालाध्वनोरत्यंतसंयोग इति द्वितीया। कारो। करोतेः कृवापाजिमीत्यादिना उणप्रत्ययः। आमंत्रितत्वान्निघातः। कः। करोतेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक्। हल्ङ्यादिना सिपो लोपः। न माङ्योग इत्यडभावः। पुरुषत्रा। देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलमिति सप्तम्यर्थे त्राप्रत्ययः। प्रत्ययस्वरः ॥

ओ षु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन।
नि षू नमध्वं भवता सुपारा अधोअक्षाः सिंधवः स्रोत्याभिः ॥९॥
ओ इति। सु। स्वसारः। कारवे। शृणोत। ययौ। वः। दूरात्। अनसा। रथेन।
नि। सु। नमध्वं। भवत। सुऽपाराः। अधःऽअक्षाः। सिंधवः। स्रोत्याभिः ॥९॥

विश्वामित्रो नदीः प्रत्युवाच। स्वसारो भगिन्यः सिंधवो हे नद्यः कारवे स्तोत्रे कुशिकपुत्राय मम वचनं सु सुष्ठु ओ शृणोत। शृणुतैव। अनसा शकटेन रथेन च सह दूराद्विप्रकृष्टाद्देशादहं युष्मान्ययौ। प्राप्तोऽस्मि। यूयं सु सुष्ठु नि नमध्वं। आत्मना स्वयं प्रह्वा भवत। तथा सुपाराः। रथादीनां तीरात्सुगमेन तीरांतरगमनं यथा स्यात्तथा शोभनरोधसश्च भवत। किंच यूयं स्रोत्याभिः स्रवणशीलाभिरद्भिरधोअक्षा रथाक्षस्याधस्तादेव स्याधस्ताद्भवत। यदापोऽक्षस्याधस्ताद्भवंति तदा रथादीनि नेतुं शक्यंते। तस्मात्तत्परिमाणोदका भवतेत्यभिप्रायः ॥ ओ इति प्रगृह्यसंज्ञा। शृणोत। श्रु श्रवणे इत्यस्य लोटि तप्रत्ययस्य तप्तनप्तनथनाश्चेति तबादेशः। पित्त्वाद्गुणः। निघातः। ययौ। या प्रापणे इत्यस्य भूतमात्रे लिट्। उत्तमे णल्। आत औ णल इत्यौकारः। एकादेशस्वरः। वः। युष्मच्छब्दस्य द्वितीयाया बहुवचनस्य वस्नसाविति वसादेशः। षू। निपातस्य चेति संहितायां दीर्घः। नमध्वं। णमु प्रह्वत्वे शब्दे चेत्यस्य कर्मकर्तरि न दुहस्नुनमां यक्चिणाविति प्रतिषेधाद्यगभावः। अधोअक्षाः। अधरशब्दस्य पूर्वाधरावराणामसि पुरधवश्चैषामित्यसिप्रत्ययोऽधादेशश्च। अक्षशब्दोऽशू व्याप्तावित्यस्माद्गुर्देवने। उ॰ ३ ६५। इति सप्रत्ययांतः। कृदुत्तरपदप्रकृतिस्वरः। सिंधवः। आमंत्रितत्वान्निघातः। स्रोत्याभिः। स्रोतःशब्दात्स्रोतसो विभाषा ड्यड्ड्यौ। पा॰ ४ ४ ११३। इति ड्यप्रत्ययः। डित्त्वाट्टिलोपः। प्रत्ययस्वरः ॥

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन।
नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥१०॥
आ। ते। कारो इति। शृणवाम। वचांसि। ययाथ। दूरात्। अनसा। रथेन।
नि। ते। नंसै। पीप्यानाऽइव। योषा। मर्यायऽइव। कन्या। शश्वचै। त इति ते ॥१०॥

नद्यः पूर्वं विश्वामित्रवाक्यं प्रत्याख्यायानयर्चा तस्य वाक्यमाशुश्रुवुः। कारो स्तोत्रं कुर्वाण हे विश्वामित्र ते तव वचांसीमानि वाक्यान्या शृणवाम। शृणुमः। तव समीहितं प्रयोजनं कुर्म इत्यर्थः। अनसा शकटेन रथेन च सह ययाथ। यतो दूरादागतोऽसि। वयं च ते त्वदर्थं नि नंसै। नीचैर्नमाम। प्रत्येकविवक्षयैकवचनं। रथेन गंतुं गाधोदका भवामेत्यर्थः। तत्र दृष्टांतः। पीप्यानेव योषा। पीप्याना पुत्रं स्तनं पाययंती योषा माता यथा प्रह्वीभवति। दृष्टांतांतरं। यथा कन्या युवतिर्मर्यायेव मनुष्याय पित्रे भ्रात्रे वा शश्वचै परिष्वजनाय नम्रा भवति तद्वत्त्वदर्थं प्रह्वीभवामः। ते इति पुनरुक्तिरादरार्थं। एतामृचं यास्क एव व्याचष्टे। आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वा। नि॰ २.२७। इति॥ कारो। संबुद्धौ शाकल्यस्येतौ। पा॰ १.१.१६। इति प्रगृह्यसंज्ञा। शृणवाम। श्रु श्रवणे इत्यस्य लोट्याडुत्तमस्य पिच्चेत्याडागमः। पित्त्वान्निघातः। निघातः। ययाथ। या प्रापणे इत्यस्य भूतमात्रे लिटि थल्येकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधः। लित्स्वरः। अनसा। सहार्थे तृतीया। नंसै। णमु प्रह्वत्वे इत्यस्य लेट्युत्तमे लेटि सिब्बहुलमिति सिप्। वैतोऽन्यत्रेत्यैकारादेशः। निघातः। पीप्यानेव। पीङ् पाने इत्यस्यांतर्भावितण्यर्थस्य लिटि कानचि रूपं। चित्स्वरः। योषा। यु मिश्रणे। वृतृवदिहनीत्यादिना। उ॰ ३.६२। सप्रत्ययः। यातीति योषा। वृषादित्वादाद्युदात्तः। शश्वचै। ष्वन्ज परिष्वंगे इत्यस्मात्संपदादिलक्षणो भावे क्विप्। पृषोदरादित्वादिष्टरूपमिदिरंतोदात्तश्च॥ ॥१३॥

यदंग त्वा भरताः संतरेयुर्गव्यन्ग्राम इषित इंद्रजूतः।
अर्षादह प्रसवः सर्गतक्त आ वो वृणे सुमतिं यज्ञियानां॥११॥
यत्। अंग। त्वा। भरताः। संऽतरेयुः। गव्यन्। ग्रामः। इषितः। इंद्रऽजूतः।
अर्षात्। अह। प्रऽसवः। सर्गऽतक्तः। आ। वः। वृणे। सुऽमतिं। यज्ञियानां॥११॥

विश्वामित्रो नदीः प्रत्युवाच। अंगेत्यामंत्रणं। हे नद्यो यद्यस्माद्युष्माभिरुत्तितीर्षोर्ममोत्तरणमभ्यनुज्ञातं तस्माद्भरता भरतकुलजा मदीयाः सर्वे त्वा परस्परमेकतामापन्नां नदीं त्वां संतरेयुः। सम्यगुत्तीर्णा भवेयुः। तदेव विशिनष्टि। गव्यन् गा उदकानि तरीतुमिच्छन्निषितस्त्वयाभ्यनुज्ञात इंद्रजूतो युष्माकं प्रवर्तकेनेंद्रेण च प्रेरितो ग्रामो भरतानां संघोऽर्षात। संतरत। यतः सर्गतक्तो गमनाय प्रवृत्तः प्रसवस्तेषामुद्योगोऽह पूर्वं युष्माभिरनुज्ञातः। अत्र तु यज्ञियानां यज्ञार्हाणां वो युष्माकं सुमतिं शोभनां स्तुतिमा वृणे। सर्वतः संभजे॥ भरताः। भरतशब्दादुत्सादित्वादञ्। तस्य यञञोश्चेति लुक्। अतश्च प्रत्ययस्वरः। संतरेयुः। तरतेर्लिङि जुसि रूपं। झलेर्लसार्वधातुकस्वरे धातुस्वरः। तिङि चोदात्तवतीति गतेर्निघातः। गव्यन्। गा आत्मन इच्छन्। सुपः क्यचं। एकादेशस्वरः। ग्रामः। ग्रसेरा च। उ॰ १.१४२। इति मन्प्रत्यय आकारादेशश्च। नित्स्वरः। इंद्रजूतः। जू इति सौत्रो धातुर्गत्यर्थः। श्र्युकः कितीति निष्ठायामिट्प्रतिषेधः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः। अर्षात। ऋ गतावित्यस्य लेटि तिपि सिब्बहुलमिति सिप्। लेटोऽडाटावित्यडागमः। एकाच इतीट्प्रतिषेधः। गुणः। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। वृणे। वृङ् संभक्तावित्यस्य लटि रूपं। यज्ञियानां। यज्ञर्त्विग्भ्यां घखञावितिघप्रत्ययः। प्रत्ययस्वरः॥

अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनां।
प्र पिन्वध्वमिषयंतीः सुराधा आ वक्षणाः पृणध्वं यात शीभं॥१२॥
अतारिषुः। भरताः। गव्यवः। सं। अभक्त। विप्रः। सुऽमतिं। नदीनां।
प्र। पिन्वध्वं। इषयंतीः। सुऽराधाः। आ। वक्षणाः। पृणध्वं। यात। शीभं॥१२॥

गव्यवो गा आत्मन इच्छंतो भरता भरतकुलजाः सर्वेऽतारिषुः। तां नदीं समतरन्। विप्रो मेधावी विश्वामित्रो नदीनां सुमतिं शोभनां स्तुतिं समभक्त। समभजत। यूयं तु यथा पूर्वमिषयंतीः कुल्यादिद्वारान्नं कुर्वाणा अत एव सुराधाः शोभनधनोपेता यूयं वक्षणाः छत्रिमसरितः कुल्याः प्र पिन्वध्वं। प्रकर्षेण तर्पयत।

आ पृणध्वं। ताः सर्वतः पूरयत च। शीभं शीघ्रं यात। गच्छत च ॥ अतारिषुः। तॄ प्लवनतरणयोरित्यस्य लुङि सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः। अडागमस्वरः। गव्यवः। सुपः क्यच। क्याच्छंदसीत्युप्रत्ययः। तस्य स्वरः। अभक्त। भज सेवायामित्यस्य लुङि सिचो झलो झलीति लोपः। पादादित्वादनिघातः। पिन्वध्वं। पिवि सेचन इत्यस्य लोटि रूपं। निघातः। इषयंतीः। इषं कुर्वत्यः। तत्करोतीति णिच। णाविष्ठवत्प्रातिपदिकस्येतीष्ठवद्भावाट्टेरिति टिलोपः। वा छंदसीति सवर्णदीर्घः। प्रत्ययस्वरः। पृणध्वं। पृण प्रीणने। लोटि रूपं। व्यत्ययेनात्मनेपदं। वाक्यभेदादनिघातः। यात। या प्रापणे इत्यस्य लोटि रूपं। अत्रापि न निघातः। शीभं। शीभृ कत्थने। श्लाघ्यतेऽनेन तद्वानिति करणे घञ्। ञित्स्वरः॥

उद्व॑ ऊ॒र्मिः शम्या॑ हं॒त्वापो॒ योक्त्रा॑णि मुंचत।

मादु॑ष्कृतौ॒ व्ये॑नसा॒घ्न्यौ॒ शून॒मार॑तां ॥१३॥

उत्। वः॒। ऊ॒र्मिः। शम्याः॑। हं॒तु॒। आपः॑। योक्त्रा॑णि। मुं॒चत॒।

मा। अदुः॑ऽकृतौ। विऽए॑नसा। अ॒घ्न्यौ। शून॑ं। आ। अ॒र॑तां ॥१३॥

पूर्वमुत्तितीर्षुर्विश्वामित्रो नदीरुत्क्राधुनोत्तितीर्षुः पुनराह। हे नद्यो वो युष्माकमूर्मिस्तरंगः शम्या युगकीला युग्यकटपार्श्वादिसंलग्ना रज्जव उदूर्ध्वं यथा भवति तथा हंतु। गच्छतु। स तरंगो रज्जुनामधो गच्छत्वित्यभिप्रायः। तथा हे आपो यूयं योक्त्राणि ता रज्जूर्मुंचत। यथा न स्पृशति तथा यात्वित्यभिप्रायः। व्येनसा विगतपापे अत एवादुष्कृतौ कल्याणकर्मकारिण्यौ अघ्न्यावघ्ये न केनापि तिरस्करणीये विपाट्छुतुद्र्यौ शूनं समृद्धिं मारतां। आगच्छतां। एवं विश्वामित्रो नदीः स्तुत्वा ताभिरनुज्ञातोऽतरदिति॥ ऊर्मिः। ऋ गतौ। अर्तेरूच्चेति मिप्रत्ययः। ऊरित्ययमादेशो धातोः। ऋच्छतीत्यूर्मिः। प्रत्ययस्वरः। शम्याः। शमु उपशमे। पोरदुपधादिति यत्प्रत्ययः। यतोऽनाव इत्याद्युदात्तत्वं। हंतु। हन हिंसागत्योरित्यस्य लोटि रूपं। निघातः। योक्त्राणि। युजिर योगे। करणे दाम्नीशसयुयुजेत्यादिना ष्ट्रन्प्रत्ययः। नित्स्वरः। मुंचत। मुच्लृ मोक्षणे। निघातः। अदुष्कृतौ। इदुदुपधस्य चाप्रत्ययस्येति विसर्जनीयस्य षत्वं। व्येनसा। बहुव्रीहौ पूर्वपदस्वरः। सुपो डादेशः। अघ्न्यौ। हन हिंसागत्योरित्यस्य नञ्पूर्वस्याघ्न्यादयश्चेति निपातनाद्यक। किंत्वादुपधालोपः। हो हंतेरिति घत्वं। सर्वविधीनां छंदसि विकल्पितत्वादजाद्यतः शीभावाभावः। एकादेशस्वरः। शूनं। ट्वोश्वि गतिवृद्ध्योः। नपुंसके भावे क्त इति क्तः। यजादित्वात्संप्रसारणं। हल इति दीर्घत्वं। ओदितश्चेति निष्ठानत्वं। निष्ठा च द्व्यजनादित्याद्युदात्तः। अरतां। ऋ गतावित्यस्य लुङि च्लेः सर्तिशास्त्यर्तिभ्यश्चेत्यङादेशः। ऋदृशोऽङि गुणः। न माङ्योग इत्यडभावः। निघातः॥ ॥१४॥

इंद्रः पूर्भिदित्येकादशर्चं पंचमं सूक्तं वैश्वामित्रं त्रैष्टुभमैंद्रं। अत्रानुक्रमणिका। इंद्रः पूर्भिदेकादशेति॥ अग्निष्टोमे माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे इंद्रः पूर्भिदिति सूक्तं। होत्रकाणामिति खंडे सूत्रितं। इंद्रः पूर्भिदद् ब्रह्माणि। आ॰ ५ १६। इति॥ पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे चातुर्विंशिकातिदिष्टस्याहीनसूक्तस्य स्थाने त्रीणि संपातसूक्तानि। तत्रेदं प्रथमं। इंद्रः पूर्भिदेकं इत्यास्तिरश्चीनग: । आ॰ ७ ५.। इति॥ उद्भिद्बलभिदोर्निष्केवल्य एतत्सूक्तं निविद्धानीयं। सूत्रितं च। इंद्र सोममिंद्रः पूर्भिदिति मध्यंदिनः। आ॰ ९ ८.। इति॥

इंद्र॑ः पू॒र्भिदाति॑रद्दा॒सम॒र्कैर्वि॒दद्व॑सु॒र्दय॑मानो॒ वि शत्रू॑न्।

ब्रह्म॑जूतस्त॒न्वा॑ वावृधा॒नो भूरि॑दात्र॒ आपृ॑ण॒द्रोद॑सी उ॒भे ॥१॥

इंद्र॑ः। पूः॒ऽभित्। आ। अ॒ति॒र॒त्। दास॑म्। अ॒र्कैः। वि॒दत्ऽव॑सुः। दय॑मानः। वि। शत्रू॑न्।

ब्रह्म॑ऽजूतः। त॒न्वा॑। व॒वृ॒धा॒नः। भूरि॑ऽदात्रः। आ। अ॒पृ॒ण॒त्। रोद॑सी॒ इति॑। उ॒भे इति॑ ॥१॥

विश्वामित्रः स्तौति। पूर्भिदसुरपुरां भेत्ता अत एव विदद्वसुर्वेदयद्धनः स्वमहिमप्रख्यापकैर्वसुभिर्युक्तः

शत्रूनसुरान्वि दयमानो विशेषेण हिंसन् । तथा च यास्कः । विदद्वसुर्दयमानो वि शत्रूनिति हिंसाकर्मा । नि॰ ४ १७ । इति । तादृश इंद्रो दासं । दस्यतेऽनेन तम इति दासो वासरः । तमर्कैरर्चनीयैः स्वतेजोभिरातिरत् । समंतादवर्धयत् इंद्रस्य सूर्यात्मकत्वात् । तथा च स्मृतिः । चैत्रमासि तपेदिंद्र इति । किंच । ब्रह्मजूतो ब्रह्मणा स्तोत्रेणाकृष्टः । यद्वा ब्रह्मणा जगत्स्रष्ट्रा प्रेरितस्तन्वा स्वशरीरेण वावृधानो वर्धमानो भूरिदात्रः । दायते लूयतेऽनेन शत्रुशिर इति दात्रमायुधं । बहुविधायुधोपेतः । तादृश इंद्र उभे रोदसी द्यावापृथिव्यावापृणत् । सर्वतोऽतर्पयत् ॥ पुर्भित् । भिदिर् विदारणे । क्विप् । आतिरत् । तरतेर्व्यत्ययेन शः । ऋत इद्धातोरितीत्वं । निघातः । दासं । करणे घञ् । ञित्स्वरः । विदद्वसुः । विदेरंतर्भावितण्यर्थस्य शतर्यदादित्वाल्लुकि सति प्रत्ययस्वरेण शतुरुदात्तत्वं । बहुव्रीहौ पूर्वपदस्वरः । दयमानः । दय दानगतिरक्षणहिंसादानेषु । आत्मनेपदी । लटः शानच् । न लोकाव्ययेति षष्ठीप्रतिषेधः । वावृधानः । वृधु वर्धने । कानचि रूपं । संहितायामभ्यासस्य तुजादित्वाद्दीर्घः । भूरिदात्रः । दाप् लवने । करणे दाम्नीशसेत्यादिना ष्ट्रन्प्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । अपृणत् । पृण प्रीणन इत्यस्य लङि तुदादित्वाच्छः । निघातः । रोदसी । रुदेरसुनि रूपं । ञित्स्वरः ॥

मखस्यं ते तविषस्य प्र जूतिमियर्मि वाचममृताय भूषन् ।
इंद्र क्षितीनामसि मानुषीणां विशां दैवीनामुत पूर्वयावा ॥ २ ॥
मखस्यं । ते । तविषस्यं । प्र । जूतिं । इयर्मि । वाचं । अमृताय । भूषन् ।
इंद्र । क्षितीनां । असि । मानुषीणां । विशां । दैवीनां । उत । पूर्वऽयावा ॥ २ ॥

हे इंद्र भूषन् त्वामलंकुर्वन्नहं मखस्य महनीयस्य स्तुत्यस्य तविषस्य बलवतस्ते तव जूतिं मनसा प्रेरितां वाचं स्तुतिलक्षणाममृतायामरणार्थं प्रेयर्मि । प्रकर्षेणोच्चारयामि । मानुषीणां क्षितीनां मनोर्जातानां मनुष्याणां उत अपि च दैवीनां देवसंबंधिनीनां विशां प्रजानां पूर्वयावाग्रतो गंता त्वमसि ॥ मखस्य । मह पूजायां । महेर्हलोपश्च । उ॰ ५ २३ । इति हलोप इत्यनुवृत्तौ महेर्घति खप्रत्ययो हलोपश्च । मह्यते पूज्यते सर्वैरिति मखः । खातस्याद्युदात्तः । फि॰ १ ६ । इत्यंतोदात्तत्वं । यद्यपि मकारादिर्भवति तथापि वचनसामर्थ्याद्भवति । तविषस्य । तवतेष्टिषच्प्रत्ययः । चित्स्वरः । जूतिं । ऊतियूतीत्यादिना क्तिन उदात्तत्वं । इयर्मि । अर्तेर्जुहोत्यादेः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं । अभ्यासस्यासवर्णे इयङादेशः । पादादित्वान्न निघातः । अभ्यस्तस्वरः । भूषन् । भूष अलंकार इत्यस्य शतरि रूपं । शतुर्लसार्वधातुकस्वरे धातुस्वरः । असि । अस्तेर्लटि रूपं । निघातः । मानुषीणां । मनोर्जातावित्यञ् । षुगागमः । टिड्ढाणञिति ङीप् । ञित्स्वरः । दैवीनां । देवाद्यञञावित्यञ् । अत्रापि पूर्ववत् ङीप् । ञित्स्वरः । पूर्वयावा । या प्रापण इत्यस्मादातो मनिन्क्वनिब्वनिपश्चेति वनिप् । कृदुत्तरपदस्वरः ॥

इंद्रो वृत्रमवृणोच्छर्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः ।
अहन्व्यंसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणां ॥ ३ ॥
इंद्रः । वृत्रं । अवृणोत् । शर्धऽनीतिः । प्र । मायिनां । अमिनात् । वर्पऽनीतिः ।
अहन् । विऽअंसं । उशधक् । वनेषु । आविः । धेनाः । अकृणोत् । राम्याणां ॥ ३ ॥

शर्धनीतिः । नयनं नीतिः कर्म । शर्धं प्रवृद्धं नीतिः कर्म यस्य स तथोक्तः । स इंद्रो वृत्रमसुरमवृणोत् । बलेनारुंधत् । तथा वर्पणीतिर्युद्धे परप्रहाराणां निवारककर्मेंद्रो मायिनां । द्वितीयार्थे षष्ठी । मायिनोऽसुरान् प्रामिनात् । प्रकर्षेणावधीत् । उशधक् शत्रुवधं कामयमान इंद्रो वनेषु गूढचारिणमसुरं व्यंसं विगतांसं यथा भवति तथाहन् । जघान । अथ तस्मिन् रात्रिचरे गवामपहर्तरि हते सति राम्याणां । रमणं स्त्रीभिः सह क्रीडा रामः । तमर्हतीति राम्या रात्रयः । तासां रात्रीणामंतःस्थिता धेना गा आविरकृणोत् । प्रकटा अकरोत् । रात्रीणामसुराक्रांतत्वं तैत्तिरीयकं । अहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां

चित्तं वेद्यमासीत्तेन सह रात्रिं प्राविशन्निति ये दिवा स्तोतारो राम्यास्तेषां वाचो धेना इति ॥ अवृणोत । वृञ् वरण इत्यस्य लङि रूपं । निघातः । शर्धनीतिः । शर्धतिरुत्साहार्थः । अस्मात्कर्मणि घञ् । बहुव्रीहौ पूर्वपदस्वरः । अमिनात । मीञ् हिंसायामित्यस्य लङि मीनातेर्निगम इति ह्रस्वः । निघातः । अहन । हंतेर्लङि रूपं । उशधक् । वश कांतौ । पृषोदरादित्वाद्रूपसिद्धिः । आविः । स्वरादिष्वंतोदात्तत्वेन पठितत्वादंतोदात्तः । धेनाः । धेट् पाने । धेट ई च । उ॰ ३.११. । इति नप्रत्यय ईकारश्चांतादेशः । गुणः । धयंति तामिति धेना वाक् । धेना जिगाति । ऋग्वे॰ १.२.३. । इत्यत्र प्रत्ययस्वरेणांतोदात्तः । अत्र व्यत्ययेनाद्युदात्तत्वं । अक्षणोत । क्षवि हिंसाकरणयोः । निघातः । राम्याणां । रमु क्रीडायां । राममर्हतीत्यर्थे छंदसि चेति यप्रत्ययः । तस्य स्वरः । यद्वा रमेरंतर्णीतण्यर्थादघ्यादयश्चेति यक्प्रत्ययः । प्ररमयति भूतानि नक्तंचारीण्युपरमयतीतराणीति यास्कः । नि॰ २.१८. । वर्णव्यत्ययः ॥

इंद्रः स्वर्षा जनयन्नहानि जिगायोशिग्भिः पृतना अभिष्टिः ।
प्रारोचयन्मनवे केतुमह्नामविंदज्ज्योतिर्बृहते रणाय ॥४॥
इंद्रः । स्वःऽसाः । जनयन् । अहानि । जिगाय । उशिक्ऽभिः । पृतनाः । अभिष्टिः ।
प्र । अरोचयत् । मनवे । केतुं । अह्नां । अविंदत् । ज्योतिः । बृहते । रणाय ॥४॥

स्वर्षाः स्वर्गप्रद इंद्रोऽहानि स्वतेजोभिर्जनयन्नुशिग्भिर्युद्धं कामयमानैरंगिरोभिः सह पृतनाः परकीयाः सेना अभिष्टिरभिभावुकः सन् जिगाय । शत्रूनजैषीत । शत्रुवधानंतरं मनवे मनुष्याय कर्मकर्त्रे यजमानाय अह्नां केतुं प्रज्ञापकं सूर्यं प्रारोचयत तथा च तमोरूपासुरवधात्प्रकर्षेणादीपयत । ततो बृहते रणाय युद्धप्रकाशनाय ज्योतिः प्रकाशमविंदत । अलभत ॥ स्वर्षाः । षणु दाने । क्विप् । जनसनखनां सञ्झलोः । इत्यात्वं । सनोतेरन इति षत्वं । अहरादीनां पत्यादिषूपसंख्यानमिति विसर्जनीयस्य रुत्वं । जिगाय । जि जय इत्यस्य लिटि सन्लिटोर्जेरित्यभ्यासादुत्तरस्य कवर्गादेशः । लित्स्वरः । पृतनाः । पृङ् व्यायामे । कृपृभ्यां कित् इति तनन्प्रत्ययः । व्याप्रियंतेऽत्र योद्धार इति पृतनाः सेनाः । नित्त्वादाद्युदात्तः । अभिष्टिः । अभिगंता । इष गतौ । मंत्रे वृषेत्यादिना क्तिन्नुदात्तः । स हि भावपरोऽपि भवितारं लक्षयति । तितुत्रतथेत्यादिनेट्प्रतिषेधः । शकंध्वादित्वात्पररूपत्वं । कृदुत्तरपदस्वरः । अरोचयत । रुच दीप्तावित्यस्य लङि रूपं । मनवे । मन ज्ञाने । शॄस्वृस्निहीत्यादिना उप्रत्ययः । निदनुवृत्तेराद्युदात्तः । अविंदत । विद्लृ लाभ इत्यस्य शे मुचादीनामिति नुम् । पादादित्वादनिघातः । रणाय । क्रियाग्रहणं कर्तव्यं । म॰ १.४.३२. । इति संप्रदानसंज्ञा । रणतिः शब्दार्थः । घञर्थे कविधानमित्युपसंख्यानमित्यप्रत्ययः । रणंति शब्दं कुर्वंति परस्परं योद्धारोऽत्रेति रणः संग्रामः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः ॥

इंद्रस्तुजो बर्हणा आ विवेश नृवद्दधानो नर्या पुरूणि ।
अचेतयद्धिय इमा जरित्रे प्रेमं वर्णमतिरच्छुक्रमासां ॥५॥
इंद्रः । तुजः । बर्हणाः । आ । विवेश । नृऽवत् । दधानः । नर्या । पुरूणि ।
अचेतयत् । धियः । इमाः । जरित्रे । प्र । इमं । वर्णं । अतिरत् । शुक्रं । आसां ॥५॥

स तादृश इंद्रस्तुजो बाधिका बर्हणा युद्धोत्साहेन वर्धमानाः परकीयाः सेना नृवन्मनुष्यवदा विवेश । प्रकाशं लब्ध्वा प्राविशत । किं कुर्वन् । पुरूणि बहूनि नर्या युद्धनयनकारिणा योग्यानि धनानि दधानः प्रयच्छन्नाविवेश । स इंद्रो जरित्रे स्तोत्र इमा दृश्यमाना धिय उषसः । ध्यायंत्यासु मनुष्या इति । ता धियोऽचेतयत । अज्ञापयत । अथासामुषसामिमं शुक्रं वर्णं प्रकाशेन युक्तं प्रातिरत । स्वतेजसा प्रकर्षेण वर्धयति । धीशब्दस्योषःपरत्वे मंत्रवर्णः । शुक्रवर्णामुदु नो यंसते धियं । ऋग्वे॰ १.१४३.७. । इति ॥ तुजः । तुज हिंसायां । क्विप् । धातुस्वरः । बर्हणाः । वृहि वृद्धौ । अस्माद्युच बहुलमिति कर्तरि युच् । व्यत्ययेनाद्युदात्तत्वं । विवेश ।

विशतेर्लिटि रूपं। निघातः। नृवत। नृशब्दात्तेन तुल्यमिति वतिप्रत्ययः। तस्य स्वरः। दधानः। दधातेः शानचि रूपं। अभ्यस्तानामादिरित्याद्युदात्तत्वं। नर्या। नरेषु साधूनीत्यर्थे तत्र साधुरिति यत्। यतोऽनाव इत्याद्युदात्तत्वं। अचेतयत। चिती संज्ञाने इत्यस्य ण्यंतस्य लङि रूपं। अडागमस्वरः। धियः। ध्यै चिंतायां। अन्येभ्योऽपि दृश्यत इति क्विप्। दृशिग्रहणात्संप्रसारणं। धातुस्वरः। इमाः। दश्च। पा० ७. २. १०९. इति दकारस्य मकारः। एकादेशस्वरः। अतिरत। तरतेर्व्यत्ययेन शः। निघातः। आसां। इदमोऽन्वादेशेऽशित्यनुदात्तौ इत्यशादेशोऽनुदात्तश्च। प्रत्ययः सुप्त्वादनुदात्तः। अतः सर्वानुदात्तः॥ ॥१५॥

महो महानि पनयंत्यस्येंद्रस्य कर्म सुकृता पुरूणि।
वृजनेन वृजिनान्त्सं पिपेष मायाभिर्दस्यूँरभिभूत्योजाः ॥६॥
महः। महानि। पनयंति। अस्य। इंद्रस्य। कर्म। सुऽकृता। पुरूणि।
वृजनेन। वृजिनान्। सं। पिपेष। मायाभिः। दस्यून्। अभिभूतिऽओजाः ॥६॥

महो महतोऽस्यैतादृशसामर्थ्यस्येंद्रस्य महानि महनीयानि पुरूणि बहूनि सुकृता सुष्ठु कृतानि कर्म वृत्रहननादीनि कर्माणि पनयंति। स्तुवंति। इंद्रस्य कर्म सुकृता पुरूणीत्येतत्पदकदंबकमत्रार्थभेदात्पदकाले नोत्सृज्यते। तादृश इंद्रो वृजनेन। वर्ज्यंते शत्रवोऽनेनेति वृजनं बलं। तेन बलेन वृजिनान्पापरूपानसुरान् सं पिपेष। सम्यक् चूर्णीचकार। तथाभिभूत्योजाः। अभिभूतिः शत्रुविषयोऽभिभवः। तत्रौजो बलमस्येत्यभिभूत्योजाः शत्रूणां पराभवे समर्थः। तादृश इंद्रो दस्यूनुपक्षपयितॄनसुरान्मायाभिः कपटैः सं पिपेष॥ पनयंति। पनते. स्तुत्यर्थस्य गुपूधूपविच्छिपणिपनिभ्य इत्यायप्रत्ययः। ह्रस्वश्छांदसः। निघातः। वृजनेन। वृजी वर्जने। कृपृवृजिमंदिनिधाञ्भ्यः क्युरिति क्युप्रत्ययः। कित्त्वादगुणः। प्रत्ययस्वरः। वृजिनान्। वृजी वर्जने। वृजेः किच्च। उ० २. ४७। इतीनचप्रत्ययः। वृजिनं पापं। तद्वंतः। अर्शआदित्वादच्। एकादेशस्वरः। पिपेष। पिष्लृ संचूर्णने इत्यस्य लिटि णलि रूपं। निघातः। अभिभूत्योजाः। भूतिर्भवनं। भावे क्तिन्। तादौ च निति कृत्यतौ इत्यभेः प्रकृतिस्वरत्वं। अभिभूतावोजो यस्येति सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरिति समासः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः॥

युधेंद्रो मह्ना वरिवश्चकार देवेभ्यः सत्पतिश्चर्षणिप्राः।
विवस्वतः सदने अस्य तानि विप्रा उक्थेभिः कवयो गृणंति ॥७॥
युधा। इंद्रः। मह्ना। वरिवः। चकार। देवेभ्यः। सत्ऽपतिः। चर्षणिऽप्राः।
विवस्वतः। सदने। अस्य। तानि। विप्राः। उक्थेभिः। कवयः। गृणंति ॥७॥

सत्पतिः सतां देवानां पतिश्चर्षणिप्राश्चर्षणीनां मनुष्याणामपेक्षितफलप्रदानेन कामपूरकः स इंद्रो मह्ना महता युधा युद्धेन वरिवः। भृशं व्रियतेऽर्थिभिरिति वरिवो धनं। तादृशं धनं युद्धेन लब्ध्वा देवेभ्यो देवनशीलेभ्यः स्तोतृभ्यश्चकार। दत्तवान्। विप्रा मेधाविनः कवयः स्तोतारो विवस्वतो विशेषेणाग्निहोत्रादिकर्मार्थे वसतो यजमानस्य सदने गृहेऽस्येंद्रस्य तानि वृत्रहननवज्रप्रदानानि कर्माण्युक्थेभिः स्तोत्रैर्गृणंति। स्तुवंति॥ युधा। युध संप्रहारे। भावे संपदादिलक्षणः क्विप्। सावेकाचः इति विभक्तेरुदात्तता। वरिवः। वृञ् वरणे इत्यस्य यङ्लुकि ऋतश्चेत्यभ्यासस्य रिगागमः। तदंतादसुन्। बाहुलकाद्रिलोपः। नित्स्वरः। चकार। करोतेर्लिटि रूपं। निघातः। सत्पतिः। अस्तेः शतरि रूपं सदिति। पत्यावैश्वर्ये इति पूर्वपदप्रकृतिस्वरत्वं। चर्षणिप्राः। प्रा पूरणे। विच्। विवस्वतः। विपूर्वाद्वस निवासे इत्यस्मात्संपदादिलक्षणो भावे क्विप्। तदस्यास्त्यस्मिन्निति मतुप्। मादुपधाया इति तस्य वत्वं। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। गृणंति। गॄ शब्दे इत्यस्य लटि रूपं। निघातः॥

सत्रासाहं वरेण्यं सहोदां ससवांसं स्वरपश्च देवीः।
ससान यः पृथिवीं द्यामुतेमामिंद्रं मदंत्यनु धीरणासः ॥८॥

सत्राऽसहं । वरेण्यं । सहःऽदां । ससऽवांसं । स्वः । अपः । च । देवीः ।
ससान । यः । पृथिवीं । द्यां । उत । इमां । इंद्रं । मदंति । अनु । धीऽरणासः ॥८॥

धीरणासो धिया स्तुत्या रणयंतः स्तोतारः सत्रासाहं महतो वृत्रादेरभिभवितारमत एव वरेण्यं सर्वैर्वरणीयं सहोदां दुर्बलस्यार्थिनो बलप्रदं देवीर्देवनशीला अपः स्वश्च स्वर्लोकं च ससवांसं भजमानमिंद्रमनु मदंति । हृष्यंति । हर्षमनु स्वयं हृष्यंतीत्यर्थः । य इंद्रः पृथिवीमुत अपि च द्यां द्युलोकमिमामिममंतरिक्षलोकं चैतांस्त्रीँल्लोकान् ससान तत्तल्लोकवासिभ्यो ददौ । तमनुमदंतीत्यन्वयः ॥ सत्रासाहं । षह मर्षणे । छंदसि सहः इति ण्विः । णित्त्वादुपधावृद्धिः । ससवांसं । षण संभक्तावित्यस्य क्वसौ विड्भावे नकारलोपे रूपं । प्रत्ययस्वरः । ससान । षणु दाने इत्यस्य लिटि रूपं । लित्स्वरः । मदंति । मदि स्तुत्यादिष्वित्यस्य व्यत्ययेन परस्मैपदं । निघातः । धीरणासः । रणतीति रणा वाक् । धिया स्तुत्या रणा येषां ते धीरणाः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥

ससानात्यॉं उत सूर्यं ससानेंद्रः ससान पुरुभोजसं गां ।
हिरण्ययमुत भोगं ससान हत्वी दस्यून्प्रार्यं वर्णमावत् ॥९॥
ससान । अत्यान् । उत । सूर्यं । ससान । इंद्रः । ससान । पुरुऽभोजसं । गां ।
हिरण्ययं । उत । भोगं । ससान । हत्वी । दस्यून् । प्र । आर्यं । वर्णं । आवत् ॥९॥

पूर्वमंत्रे प्रतिपादितः स इंद्रोऽत्यानश्वान् ससान । युद्धार्थं मरुद्भ्यो ददौ । उत अपि च सूर्यं जगत्प्रकाशकमादित्यं ससान । प्राणिनां व्यवहारनिर्वाहाय तेभ्यो ददौ । तथा पुरुभोजसं । पुरुभिः सर्वैर्जनैः क्षीरादिद्वारेणोपभुज्यत इति पुरुभोजाः । क्षीरादिरूपबहुविधान्नोपेतां गामग्निहोत्रादिसिद्ध्यर्थं ससान । तेभ्यो ददौ । उत अपि च हिरण्ययं सुवर्णमयं भोगं धनं । भुज्यतेऽस्मिन्निति भोगो गृहं वा । ससान । अर्थिभ्यो ददौ । ततो दस्यून् बाधकानसुरान् हत्वी हत्वार्यमुत्तमं वर्णं त्रैवर्णिकं प्रावत । यथा कर्मविघ्नो न भवेत्तथापालयत ॥ ससान । षणु दाने इत्यस्य लिटि णलि रूपं । लित्स्वरः । हिरण्ययं । हिरण्यशब्दाद्विकारार्थे मयड्वैतयोः । पा॰ ४. ३. १४३. । इति विहितस्य छंदसि विषये ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छंदसीति निपातनात् मयटो मकारलोपः । प्रत्ययस्वरः । हत्वी । हंतेः क्त्वार्थे स्नात्व्यादयश्चेति निपातितः । प्रत्ययस्वरः । आवत । अवतेर्लङि रूपं ॥

इंद्र ओषधीरसनोदहानि वनस्पतीँरसनोदंतरिक्षं ।
बिभेद वलं नुनुदे विवाचोऽथाभवद्दमिताभिक्रतूनां ॥१०॥
इंद्रः । ओषधीः । असनोत् । अहानि । वनस्पतीन् । असनोत् । अंतरिक्षं ।
बिभेद । वलं । नुनुदे । विऽवाचः । अथ । अभवत् । दमिता । अभिऽक्रतूनां ॥१०॥

तादृश इंद्र ओषधीः पक्वफलसंयुक्तास्तृणगुल्मादिका असनोत । प्राणिनामुपभोगार्थं प्रादात । तथाहानि दिवसांश्चायुष्परिक्लृप्त्यर्थं प्रायच्छत् । किंच वनस्पतीन्यज्ञार्थं खदिरपलाशादिलक्षणान् वृक्षानसनोत । तथांतरिक्षं संचारार्थं प्रादात् । तथा वलं । संव्रियतेऽनेनाकाशमिति वलो मेघः । तं मेघं बिभेद । उदकप्रेरणार्थमभिंदत । विवाचो विरुद्धवाचः प्रतिकूलानसुरान् नुनुदे । प्राणिनां रक्षार्थं तान् बबाधे । अथानंतरमभिक्रतूनां । क्रतुः कर्म । अभि आभिमुख्येन युद्धार्थं कर्म येषां तेऽभिक्रतवो बलीयांसः शत्रवः । तेषामपि दमितोपशमयिताभवत् । एवं हितकरणाहितपरिहाराभ्यां सर्वाः प्रजाः पालयति स्मेति भावः ॥ असनोत । षणु दाने इत्यस्य लङि रूपं । वनस्पतीन् । पारस्करप्रभृतित्वात् सुडागमः । वनशब्दो नब्विषयस्येत्याद्युदात्तः । पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः । उभे वनस्पत्यादिषु युगपदित्युभयपदप्रकृतिस्वरत्वं । बिभेद । भिदिर् विदारणे इत्यस्य लिटि

रूपं। लित्स्वरः। नुनुदे। नुद प्रेरणे इत्यस्य लिटि रूपं। वाक्यभेदादनिघातः। प्रत्ययस्वरः। दमिता। दमु उपशमे इत्यस्य तृचि रूपं। चित्स्वरः। अभिक्रतूनां। बहुव्रीहौ पूर्वपदस्वरः॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां॥११॥
शुनं। हुवेम। मघऽवानं। इंद्रं। अस्मिन्। भरे। नृऽतमं। वाजऽसातौ।
शृण्वंतं। उग्रं। ऊतये। समत्ऽसु। घ्नंतं। वृत्राणि। संऽजितं। धनानां॥११॥

एषा ऋक् पूर्वमेव व्याख्याता॥ ॥१६॥

तिष्ठा हरी इत्येकादशर्चं षष्ठं सूक्तं वैश्वामित्रं त्रैष्टुभमैंद्रं। तिष्ठा हरी इत्यनुक्रमणिका॥ अग्निष्टुति मरुत्वतीयशस्त्रे निविद्धानं सूक्तं। सूत्रितं च। तिष्ठा हरी यो जात एवेति मध्यंदिनः। आ० ९. ७.। इति॥ इंद्राग्न्योः कुलायनाम्न्येकाहेऽप्येतन्मरुत्वतीयनिविद्धानं। सूत्रितं च। तिष्ठा हरी तमु ष्टुहीति मध्यंदिनः। आ० ९. ७.। इति॥ समूढे दशरात्रे तृतीये छंदोमे मरुत्वतीयशस्त्रे एतत्सूक्तं। सूत्रितं च। तिष्ठा हरी प्र मंदिने इमा उ त्वेति मरुत्वतीयं। आ० ८. ७.। इति॥ अतिरात्रे तृतीये पर्याये होतुः शस्त्रे परिहिते सत्याद्या तिष्ठा हरी इत्येषा शस्त्रयाज्या। सूत्रितं च। विश्वजिते तिष्ठा हरी रथ आ युज्यमानेति याज्या। आ० ६. ४.। इति॥

तिष्ठा हरी रथ आ युज्यमाना याहि वायुर्न नियुतो नो अच्छ।
पिबास्यंधो अभिसृष्टो अस्मे इंद्र स्वाहा ररिमा ते मदाय॥१॥
तिष्ठ। हरी इति। रथे। आ। युज्यमाना। याहि। वायुः। न। निऽयुतः। नः। अच्छ।
पिबासि। अंधः। अभिऽसृष्टः। अस्मे इति। इंद्र। स्वाहा। ररिम। ते। मदाय॥१॥

विश्वामित्रः स्तौति। हे इंद्र रथे स्यंदने युज्यमाना संयुज्यमानौ हरी अश्वावभिलक्ष्य कंचित्कालमा तिष्ठ। तत्र दृष्टांतः। वायुर्नेति। यथा वायू रथे नियुज्यमाना नियुतो वडवा अभिलक्ष्य कंचित्कालं तिष्ठति तद्वत्। अथ रथारूढस्त्वं नोऽस्मानच्छाभिलक्ष्या याहि। शीघ्रमागच्छ। आगत्य चास्मे अस्माभिरभिसृष्टोऽनुज्ञातस्त्वमंधः सोमलक्षणमन्नं पिबासि। पिब। स्वाहा। दत्तश्चायं सोमः। वयं ते तव मदाय हर्षाय स्वाहाकृतमिमं सोमं ररिम। ददाम॥ अत्र याहि वायुर्न नियुतो नो अच्छेत्यत्र रथेना याहीत्यर्थः। आपश्चित्पिप्युः स्तर्यो न गावः। ऋग्वे० ७. २३. ४। इत्यत्र तत्र तथेति पदकाले नोत्सृज्यते॥ तिष्ठ। तिष्ठतेर्लोटि रूपं। तिष्ठादेशस्याद्युदात्तः। याहि। यातेर्लोटि रूपं। हेर्ङित्त्वादतोदात्तः। वायुः। वा गतिगंधनयोरित्यस्मात्कृवापेत्यादिना उण्। आतो युक्। प्रत्ययस्वरः। पिबासि। पातेर्लेट्याडागमः। आगमस्यानुदात्तत्वाद्धातुस्वरः। अंधः। अद भक्षणे। अदेर्नुम धश्चेत्यसुन्नुमागमो धकारश्चांतादेशः। अद्यते प्राणिभिस्तद्वा स्वयमत्तीति। तथा च श्रुतिः। अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते। तै० उ० २. २.। इति। नित्स्वरः। अस्मे। सुपां सुलुगिति तृतीयायाः शे इत्यादेशः। ररिम। रातेर्लिटि रूपं। वाक्यभेदादनिघातः। प्रत्ययस्वरः॥

उपाजिरा पुरुहूताय सप्ती हरी रथस्य धूर्ष्वा युनज्मि।
द्रवद्यथा संभृतं विश्वतश्चिदुपेमं यज्ञमा वहात इंद्रं॥२॥
उप। अजिरा। पुरुऽहूताय। सप्ती इति। हरी इति। रथस्य। धूःऽसु। आ। युनज्मि।
द्रवत्। यथा। संऽभृतं। विश्वतः। चित्। उप। इमं। यज्ञं। आ। वहातः। इंद्रं॥२॥

हे इंद्र पुरुहूताय पुरुभिर्बहुभिर्यजमानैर्यज्ञार्थमाहूताय तुभ्यमजिरा शीघ्रगमनशीलौ सप्ती सर्पणशीलौ हरी हरिनामकावश्वौ रथस्य धूर्षु युगप्रांतरूपा युनज्मि। अहं तथा योजयामि। द्रवत् स रथो यथा

गच्छतमित्यर्थ इति शेषः। विश्वतश्चित सर्वतः संभृतं आपिर्यजुर्भिः सविता स्तोमैरित्यादियज्ञसंभारैः संपूर्णमिमं यज्ञं प्रतीन्द्रं त्वामुपा वहातः। तावश्वौ सम्यगावहतां॥ धूर्षु। धुर्वी हिंसार्थः। क्विप्। राल्लोप इति वकारलोपः। र्वोरुपधाया इति दीर्घः। सावेकाचः इति विभक्तेरुदात्तता। युनज्मि। युजिर् योगे। रुधादिः। लटि रूपं। निघातः। द्रवत्। द्रु गतावित्यस्य छांदसे लङि रूपं। व्यत्ययेनाद्युदात्तत्वं। वहातः। वहेर्लेट्याडागमे रूपं॥

उपो नयस्व वृषणा तपुष्पोतेमव त्वं वृषभ स्वधावः।
ग्रसेतामश्वा वि मुचेह शोणा दिवेदिवे सदृशीरद्धि धानाः॥३॥

उपो इति। नयस्व। वृषणा। तपुःऽपा। उत। ईं। अव। त्वं। वृषभ। स्वधाऽवः।
ग्रसेतां। अश्वा। वि। मुच। इह। शोणा। दिवेऽदिवे। सऽदृशीः। अद्धि। धानाः॥३॥

वृषभ कामानां वर्षक स्वधावोऽन्नवन् हे इंद्र वृषणा सेचनसमर्थौ तपुष्पा तापकेभ्यः शत्रुभ्यो रक्षकावश्वा वुपो नयस्व। अस्मत्समीपं प्रापय। उत अपि च त्वमीमेनं यजमानमव। पालय। शोणा शोणवर्णौ तावश्वा विहास्मिन्देवयजने वि मुच। विमुक्तौ तावश्वौ ग्रसेतां। विषमं भक्षयतां। त्वं तु सदृशीरेकरूपान् धाना भृष्टयवान् दिवे दिवे प्रतिदिवसमद्धि। भक्षय॥ नयस्व। नयतेर्लोटि रूपं। तपुष्पा। पा रक्षणे। आतोऽनुपसर्गे कः। सुपां सुलुगिति डादेशः। इणः षः इति संहितायां विसर्जनीयस्य षत्वं। कृदुत्तरपदप्रकृतिस्वरः। अव। अवतेर्लोटि रूपं। स्वधावः। मतुवसोरिति नकारस्य रुत्वं। निघातः। ग्रसेतां। ग्रसु अदन इत्यस्य लोट्यातामि रूपं। पादादित्वादनिघातः। आतामो लसार्वधातुकस्वरे धातुस्वरः। मुच। मुचतेर्लोटि रूपं। आगमानुशासनस्यानित्यत्वान्नुमभावः। सदृशीः। समानशब्द उपपदे दृशिर् प्रेक्षणे इत्यस्मात्समानान्ययोश्चेति कञ्प्रत्ययः। समानस्य दृग्दृशवतुष्विति सभावः। टिड्ढाणञ् इत्यादिना ङीप्। तस्य पित्त्वादनुदात्तत्वे धातुस्वरः। अद्धि। अद भक्षणे इत्यस्य लोट्यदादित्वाच्छपो लुक्। हुझल्भ्यो हेर्धिरिति ध्यादेशः। निघातः। धानाः। डुधाञ् धारणपोषणयोः। धापॄवस्यज्यतिभ्यो न इति नप्रत्ययः। प्रत्ययस्वरः॥

चातुर्विंशिकेऽहनि माध्यंदिने सवने ब्राह्मणाच्छंसिशस्त्रे ब्रह्मणा त इत्यारंभणीया। सूचितं च। ब्रह्मणा ते ब्रह्मयुजा युनज्मियुक्‌ नो लोकमनु नेषि विद्वान्। आ॰ ७. ४। इति॥

ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू।
स्थिरं रथं सुखमिंद्राधितिष्ठन्प्रजानन्विद्वाँ उप याहि सोमं॥४॥

ब्रह्मणा। ते। ब्रह्मऽयुजा। युनज्मि। हरी इति। सखाया। सधऽमादे। आशू इति।
स्थिरं। रथं। सुऽखं। इंद्र। अधिऽतिष्ठन्। प्रऽजानन्। विद्वान्। उप। याहि। सोमं॥४॥

हे इंद्र ब्रह्मयुजा ब्रह्मणा मंत्रेण योक्तव्यौ सधमादे। मादयंति योद्धारोऽत्रेति मादो युद्धं। सहमादः सधमादः। तस्मिन्युद्धे सखाया समानप्रसिद्धी अत एवाशू क्षिप्रगमनौ पर्तौ ते तव हरी अश्वौ ब्रह्मणा स्तोत्रेण युनज्मि। रथे संयोजयामि। स्थिरं सुदृढं सुखं सुष्ठुद्वारं तादृशं रथमधितिष्ठन् आरूढः सन् त्वं सोमपानार्थमा याहि। प्रजानन्नित्यादि गतं॥ ब्रह्मयुजा। युजेः रागादिकः कर्मणि क्विप्। युनज्मि। युजेर्लटि रूपं। निघातः। सधमादे। मदी हर्षे। अधिकरणे घञ्। सध मादस्थयोश्छंदसीति सहस्य सधादेशः। कृदुत्तरपदप्रकृतिस्वरः। रथं। अधिशीङ्स्थासां कर्मेति कर्मसंज्ञा। सुखं। खनु विदारणे। अन्येभ्योऽपि दृश्यत इति डः। कृदुत्तरस्वरः॥

मा ते हरी वृषणा वीतपृष्ठा नि रीरमन्यजमानासो अन्ये।
अत्यायाहि शश्वतो वयं तेऽरं सुतेभिः कृणवाम सोमैः॥५॥

मा। ते। हरी इति। वृषणा। वीतऽपृष्ठा। नि। रीरमन्। यजमानासः। अन्ये।
अतिऽआयाहि। शश्वतः। वयं। ते। अरं। सुतेभिः। कृणवाम। सोमैः॥५॥

हे इंद्र वृषणा कामानां सेचकौ वीतपृष्ठा कमनीयपृष्ठभागौ ते तव हरी अन्ये अस्मदन्ये यजमानासो यजमाना मा नि रीरमन। मा हर्षयन्। वयं तु सुतेभिरभिषुतैः सोमैस्ते तवारं पर्याप्तं कृणवाम। यथा तव तृप्तिर्भवति तथा कुर्म इत्यर्थः। त्वं तु अत्यायाहि शश्वतः। बहून्यान्यानतिक्रम्य सोमपानार्थं शीघ्रमागच्छ॥ वीतपृष्ठा। वी कांत्यादिषु। अस्मात्क्तप्रत्ययः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। रीरमन। रमु क्रीडायामित्यस्य ण्यंतस्य लुङि चङि रूपं। न माङ्योग इत्यडभावः। निघातः। अत्यायाहि। यातेर्लोटि रूपं। गतिर्गताविति पूर्वस्य निघातः। कृणवाम। कृणोतेर्लोटि रूपं। निघातः॥ ॥१७॥

तवायं सोम इति माध्यंदिने सवने नेष्टुः प्रस्थितयाज्या। सूत्रितं च। तवायं सोमस्त्वमेह्यर्वाङिंद्राय सोमाः प्रदिवः। आ० ५ ५। इति॥

तवायं सोमस्त्वमेह्यर्वाङ् शश्वत्तमं सुमना अस्य पाहि।
अस्मिन्यज्ञे बर्हिष्या निषद्या दधिष्वेमं जठर इंदुमिंद्र॥६॥

तव। अयं। सोमः। त्वं। आ। इहि। अर्वाङ्। शश्वत्ऽतमं। सुऽमनाः। अस्य। पाहि।
अस्मिन। यज्ञे। बर्हिषि। आ। निऽसद्य। दधिष्व। इमं। जठरे। इंदुं। इंद्र॥६॥

हे इंद्र अयं सोमस्तव त्वदर्थमभिषुतः। त्वमर्वाङ् सोमाभिमुख्येनेहि। आयाहि। आगत्य च सुमनाः शोभनमनस्को भूत्वा शश्वत्तमं भूयांसमस्येमं सोमं पाहि। पिब। बर्हिषि प्रवृत्तेऽस्मिन्यज्ञे निषद्योपविश्येंदुं क्लेदनशीलमिमं सोमं जठर आ दधिष्व। धारय। यथा नाभेरधस्तान्न गच्छति तथा धारय॥ अंगिरोभिरा गहि यज्ञियेभिः। ऋग्वे० १० १४. ५.। इत्यत्र न यज्ञविशेषणं बर्हिर्भिन्नरूपं वा तदित्यतो नोत्सृज्यते॥ इहि। इण गतौ। अस्य लोटि रूपं। निघातः। शश्वत्तमं। उंछादित्वादंतोदात्तत्वं। पाहि। पा पान इत्यस्य लोटि रूपं। बहुलं छंदसीति शपो लुक्। निघातः। निषद्य। सदेर्ल्यपि सदेरप्रतेरिति षत्वं। लित्स्वरः। दधिष्व। दधातेर्लोटि छंदस्युभयथेति थास आर्धधातुकत्वादिडागमः। प्रत्ययस्वरः। इंदुं। उन्दी क्लेदने। उंदेरिच्चादे रित्युप्रत्ययः। धातोरादेरिकारादेशः। निदित्यनुवृत्तेराद्युदात्तः॥

स्तीर्णं ते बर्हिः सुत इंद्र सोमः कृता धाना अत्तवे ते हरिभ्यां।
तदोकसे पुरुशाकाय वृष्णे मरुत्वते तुभ्यं राता हवींषि॥७॥

स्तीर्णं। ते। बर्हिः। सुतः। इंद्र। सोमः। कृताः। धानाः। अत्तवे। ते। हरिऽभ्यां।
तत्ऽओकसे। पुरुऽशाकाय। वृष्णे। मरुत्वते। तुभ्यं। राता। हवींषि॥७॥

हे इंद्र ते तवोपवेशनार्थं बर्हिः स्तीर्णं। विस्तृतं। तथा सोमश्च त्वदर्थं सुतः। अभिषुतः। ते तव हरिभ्यामत्तवे भक्षणार्थं धाना भृष्टयवाः कृताः। संपादिताः। तदोकसे। तद्बर्हिरोको निलयो यस्य तस्मै। पुरुशाकाय बहुभिः स्तुत्याय यद्वा बहुसहायाय वृष्णे कामानां वर्षित्रे मरुत्वते। मरुतो देवविशः। तद्वते। एवभूताय तुभ्य हवींषि सोमाज्यादीनि राता। अस्माभिर्दत्तानि। तानि सेवस्वेति भावः॥ स्तीर्णं। स्तृञ् आच्छादन इत्यस्य ऋत इद्धातोरितीत्वं। रदाभ्यामिति निष्ठानत्वं। प्रत्ययस्वरः। अत्तवे। अद भक्षण इत्यस्मात्तुमर्थे तवेन्प्रत्ययः। नित्स्वरः। तदोकसे। बहुव्रीहौ पूर्वपदस्वरः। पुरुशाकाय। शच व्यक्तायां वाचीत्यस्मात्कर्मणि घञ्। चजोः कु घिण्ण्यतोरिति कुत्वं। छदुत्तरपदस्वरः। मरुत्वते। तसौ मत्वर्थ इति भसंज्ञायां तकारस्य जश्त्वाभावः। प्रत्ययस्य पित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः। राता। रा दान इत्यस्मात्कर्मणि क्तः। प्रत्ययस्वरः॥

इमं नरः पर्वतास्तुभ्यमापः समिंद्र गोभिर्मधुमंतमक्रन्।
तस्यागत्या सुमना ऋष्व पाहि प्रजानन्विद्वान्पथ्या३ अनु स्वाः॥८॥

इमं। नरः। पर्वताः। तुभ्यं। आपः। सं। इंद्र। गोभिः। मधुऽमंतं। अक्रन्।
तस्य। आऽगत्यं। सुऽमनाः। ऋष्व। पाहि। प्रऽजानन्। विद्वान्। पथ्याः। अनु। स्वाः॥८॥

हे इंद्र नरः कर्मणा नेतारोऽध्वर्य्वादयः पर्वता ग्रावाण आपश्चेति सर्वे संभूय तुभ्यं त्वदर्थमिमं सोमं गोभिः पयोभिर्मधुमंतं माधुर्योपेतं समक्रन्। सम्यगकार्षुः। ऋष्व दर्शनीय हे इंद्र सुमनाः शोभनमनस्को विद्वान्कर्माभिज्ञः स्वाः स्वकीयाः पथ्या वैदिके पथि कर्मणि साधुभूताः स्तुतीरनु प्रजानन् त्वं तस्य पाहि। इममभिषुतं सोमं पिब ॥ अक्रन्। करोतेर्लुङि रूपं। निघातः। आगत्य। गमेर्ल्यपि रूपं। तित्स्वरः। पाहि। पातेर्लोटि रूपं॥

याँ आभजो मरुत इंद्र सोमे ये त्वामवर्धन्नभवन्गणस्ते।
तेभिरेतं सजोषा वावशानोऽग्नेः पिब जिह्वया सोममिंद्र ॥९॥

यान्। आ। अभजः। मरुतः। इंद्र। सोमे। ये। त्वां। अवर्धन्। अभवन्। गणः। ते।
तेभिः। एतं। सऽजोषाः। वावशानः। अग्नेः। पिब। जिह्वया। सोमं। इंद्र॥९॥

हे इंद्र यान्मरुतः सोमे सोमपानविषय आभजः समभावयः ये च मरुतस्त्वामवर्धन् युद्धे प्रोत्साहोत्पादनेनावर्धयन् ये च मरुतस्ते तव गणोऽभवन् सहाया अभूवन्नित्यर्थः। हे इंद्र एवंविधैस्तैर्मरुद्भिः सजोषाः सगतः सन् एतमभिषुतं सोमं वावशानः कामयमानस्त्वमग्नेरा इत्यधिकरणभूतस्याहवनीयस्य ज्वालारूपया जिह्वयेम पिब ॥ अभजः। भज सेवायामित्यस्य लङि रूपं। यद्वृत्तयोगादनिघातः। अवर्धन्। वृधु वर्धन इत्यस्य ण्यन्तस्य लङि रूपं। छंदस्युभयथेति आर्धधातुकत्वाणेरनिटीति णिलोपः। अत्रापि यद्योगादनिघातः। अभवन्। वाक्यभेदादनिघातः। वावशानः। वश कान्तावित्यस्य यङ्लुकि चानशि रूपं। चित्स्वरः। पिब। पा पाने। निघातः॥

इंद्र पिब स्वधया चित्सुतस्याग्नेर्वा पाहि जिह्वया यजत्र।
अध्वर्योर्वा प्रयतं शक्र हस्ताद्धोतुर्वा यज्ञं हविषो जुषस्व ॥१०॥

इंद्र। पिब। स्वधया। चित्। सुतस्य। अग्नेः। वा। पाहि। जिह्वया। यजत्र।
अध्वर्योः। वा। प्रऽयतं। शक्र। हस्तात्। होतुः। वा। यज्ञं। हविषः। जुषस्व॥१०॥

हे इंद्र स्वधया। स्वमात्मानं दधाति पोषयतीति स्वधा बलं। तेन। चिद्विकल्पार्थः। बलादपहृत्य सुतस्य सुतमभिषुतं हुतं वा पिब। यजत्र यष्टव्येंद्राग्नेर्ज्वालारूपया जिह्वया वा हुतं सोमं पाहि। पिब। हे शक्र समर्थेंद्र अध्वर्योर्हस्ताद्वा प्रयतं दातुमुपक्रांतं सोमं पिब। अथवा होतुर्यज्ञ यजनीय वषट्कारोपेतं हविषो भागं जुषस्व। सेवस्व। सर्वथापि त्वमत्रागत्यास्माभिर्दीयमानं सोमं पिबेति भावः॥ पिब। आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः। अध्वर्योः। अध्वरं कामयतीति क्यच्। कव्यध्वरपृतनस्यर्चि लोप इत्यकारलोपः। प्रत्ययस्वरः। तत एकादेशस्वरः। प्रयतं। यम उपरम इत्यस्य कर्मणि निष्ठा। शक्र। शकॢ शक्तौ। स्फायितंचीत्यादिना रक्। हस्तात्। असिहसीत्यादिना तन्। नित्स्वरः। होतुः। जुहोतेस्तृन्। नित्स्वरः। जुषस्व। जुषी प्रीतिसेवनयोरित्यस्य लोटि रूपं। निघातः॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥११॥

शुनं। हुवेम। मघऽवानं। इंद्रं। अस्मिन्। भरे। नृऽतमं। वाजऽसातौ।
शृण्वंतं। उग्रं। ऊतये। समत्ऽसु। घ्नंतं। वृत्राणि। संऽजितं। धनानां॥११॥

पूर्वं व्याख्याता॥ ॥१८॥

इमामू ष्विल्येकादशर्चं सप्तमं सूक्तं त्रैष्टुभमैंद्रं । अत्रानुक्रमणिका । इमामू षूपांत्यां घोरोऽपश्यत् सा निर्दहंत्यस्यमानेति श्रूयत इति । दशम्या आंगिरसो घोर ऋषिः शिष्टानां विश्वामित्रः ॥ अग्निष्टोमे माध्यंदिनसवनेऽच्छावाकशस्त्रे दशमीवर्जितमिमामू ष्विति सूक्तं । सूत्रितं च । इमामू ष्वित्युपोत्तमामुद्धरेत्सर्वत्र । आ० ५ १६ । इति ॥ पृष्ठ्याभिप्लवषडहयोर्माध्यंदिनसवनेऽच्छावाकशस्त्रे चातुर्विंशिकातिदिष्टस्याहीनसूक्तस्य स्थाने त्रीणि संपातसूक्तानि । तत्रोपोत्तमावर्जमेतत्प्रथमं सूक्तं । सूत्रितं च । इमामू ष्वित्कर्हि त्वा । आ० ७ ५ । इति ॥

इमामू षु प्रभृतिं सातये धाः शश्वच्छश्वदूतिभिर्यादमानः ।
सुतेसुते वावृधे वर्धनेभिर्यः कर्मभिर्महद्भिः सुश्रुतो भूत् ॥१॥

इमां । ऊं इति । सु । प्रऽभृतिं । सातये । धाः । शश्वत्ऽशश्वत् । ऊतिऽभिः । यादमानः ।
सुतेऽसुते । ववृधे । वर्धनेभिः । यः । कर्मऽभिः । महत्ऽभिः । सुऽश्रुतः । भूत् ॥१॥

विश्वामित्र इंद्रं स्तौति । हे इंद्र ऊतिभिः । अवंति रक्षंति सर्वमित्यूतयो मरुतः । तैः शश्वच्छश्वत्सर्वदा यादमानः संगत याचमानस्त्वं प्रभृतिं । प्रकर्षेण भ्रियते धार्यते यज्ञार्थमिति प्रभृतिः सोमः स्तुतिर्वा । इमामिमं सोममिमां स्तुतिं वा सातयेऽस्माकं धनलाभार्थं सु धाः । सुष्ठु संपादय । तथा स इंद्रः सुते सुते सोमेऽभिषुते सति वर्धनेभिर्वर्धनकारिभिः सोमाज्यादिभिर्हविर्भिर्वावृधे । वर्धते । य इंद्रो महद्भिः कर्मभिरसुरवधमेघभेदनादिलक्षणैर्व्यापारैः सुश्रुतो लोके प्रसिद्धो भूत् । स इंद्र इति पूर्वेणान्वयः ॥ प्रभृतिं । तादौ च निति कृत्यतौविति गतेः प्रकृतिस्वरत्वं । धाः । दधातेश्छांदसे लुङि रूपं । निघातः । शश्वच्छश्वत् । नित्यवीप्सयोरिति द्विर्वचनं । यादमानः । दुयाचृ याच्ञायां । शानचि रूपं । चकारस्य दकारश्छांदसः । वावृधे । वृधु वर्धन इत्यस्माल्लिटि रूपं । तुजादित्वादभ्यासस्य दीर्घः सांहितायां । निघातः । वर्धनेभिः । वर्धतेर्ण्यंतस्य नंद्यादित्वाल्ल्युट । लित्स्वरः । सुश्रुतः । श्रु श्रवण इत्यस्मात्कर्मणि क्तः । गतिरनंतर इति गतिस्वरः । भूत् । भवतेर्लुङि रूपं ॥

माध्यंदिने सवनेऽच्छावाकस्य प्रस्थितयाज्येंद्राय सोमाः प्रदिव इत्येषा । सूत्रितं च । इंद्राय सोमाः प्रदिवो विदाना ऋभुर्येभिरिति याज्या । आ० ५ ५ । इति ॥

इंद्राय सोमाः प्रदिवो विदाना ऋभुर्येभिर्वृषपर्वा विहायाः ।
प्रयम्यमानान्प्रति षू गृभायेंद्र पिब वृषधूतस्य वृष्णः ॥२॥

इंद्राय । सोमाः । प्रऽदिवः । विदानाः । ऋभुः । येभिः । वृषऽपर्वा । विऽहायाः ।
प्रऽयम्यमानान् । प्रति । सु । गृभाय । इंद्र । पिब । वृषऽधूतस्य । वृष्णः ॥२॥

हे इंद्र इंद्राय तुभ्यं सोमाः प्रदिवः प्रगतेषु पूर्वेष्वहःसु विदानाः । अस्माभिर्लभिताः । वृषपर्वा । वृषाणः फलस्य वर्षकाः पर्वाणि कालावयवा वर्षाद्या यस्य स तथोक्तः । कालात्मक इत्यर्थः । अत एव विहायाः । विजहात्युत्सृजत्यर्थानर्थिभ्य इति विहाया महान् । तादृश इंद्रो येभिर्यैर्दत्तैः सोमैर्ऋभुर्दीप्तो वर्तते हे इंद्र त्वं प्रयम्यमानान् प्रकर्षेण सर्वैरुपयम्यमानानिमान्सोमान् सु सुष्ठु प्रति गृभाय । प्रतिगृहाण । गृहीत्वा च वृषधूतस्य वृषभिर्ग्रावभिरभिषुतं वृष्णः स्वर्गादिफलवर्षकमिमं सोमं पिब ॥ प्रदिवः । दिवु क्रीडादौ । क्विप् । कालाध्वनोरत्यंतसंयोग इति द्वितीया । दिव्शब्दो दिवसवाची । कृदुत्तरपदस्वरः । विदानाः । विद्लृ लाभ इत्यस्य व्यत्ययेन शानच् । बहुलं छंदसीति विकरणस्य लुक् । विहायाः । ओहाक् त्यागे । वहिहाधाञ्भ्यश्छंदसीत्यसुन् । णिदित्यनुवृत्तेरातो युक् चिण्कृतोरिति युगागमः । गतिकारकयोरिति पूर्वपदप्रकृतिस्वरत्वं । गृभाय । ग्रह उपादान इत्यस्य लोटि हौ श्नाप्रत्ययस्य छंदसि शायजपीति शायजादेशः । हृग्रहोर्भ इति भत्वं । अतो हेरिति हेर्लुक् । निघातः ॥

माध्यंदिने सवनेऽच्छावाकशस्त्रे याज्या पिबा वर्धस्वेत्येषा । सूत्रितं च । पिबा वर्धस्व तव घा सुतास इति याज्या । आ० ५. १६. । इति ॥

पिबा वर्धस्व तव घा सुतास इंद्र सोमासः प्रथमा उतेमे ।
यथापिबः पूर्व्याँ इंद्र सोमाँ एवा पाहि पन्यो अद्या नवीयान् ॥३॥
पिब । वर्धस्व । तव । घ । सुतासः । इंद्र । सोमासः । प्रथमाः । उत । इमे ।
यथा । अपिबः । पूर्व्यान । इंद्र । सोमान । एव । पाहि । पन्यः । अद्य । नवीयान् ॥३॥

हे इंद्र इमं सोमं पिब । ततो वर्धस्व । शरीरेण पुष्टो भव । त्वदर्थं प्रथमाः पुरातना उत अपि चेमेऽभिनवा उभयविधाः सोमाः सुतासो घ । ग्रावभिरभिषुताः खलु । हे इंद्र पूर्व्यान्पुरातनान्सोमान्यथा त्वमपिब एवैवमद्याधुना पन्यः स्तुत्योऽत एव नवीयानतिशयेनाभिनवस्त्वमिमानभिनवान्सोमान्पाहि । पिब ॥ पिब । पातेर्लोटि रूपं । वर्धस्व । तिङ उत्तरत्वान्निघाताभावः । अपिबः । यथायोगादनिघातः । पाहि । पातेर्लोटि बहुलं छंदसीति शपो लुक् । निघातः । पन्यः । पनतेः स्तुत्यर्थस्याघ्न्यादित्वाद्यत । यतोऽनाव इत्याद्युदात्तत्व । नवीयान् । नवशब्दादीयसुनि रूपं । नित्स्वरः ॥

महाँ अमत्रो वृजने विरप्श्यु१ग्रं शवः पत्यते धृष्ण्वोजः ।
नाह विव्याच पृथिवी चनैनं यत्सोमासो हर्यश्वममंदन् ॥४॥
महान् । अमत्रः । वृजने । विऽरप्शी । उग्रं । शवः । पत्यते । धृष्णु । ओजः ।
न । अह । विव्याच । पृथिवी । चन । एनं । यत् । सोमासः । हरिऽअश्वं । अमंदन् ॥४॥

योऽयमिंद्रो महानतिशयितसामर्थ्यवान् वृजने बलोपलक्षिते युद्धेऽमत्रः शत्रूणामभिभविता तथा विरप्शी विरपणशीलो भुजास्फालनेन युद्धार्थं शत्रूणामाह्वानकारी । यद्वा विविधं रपणं स्तुतिलक्षणं यस्येति । स सर्वैः स्तुत्य इत्यर्थः । तादृशस्येंद्रस्योग्रमुद्गूर्णं शवो बलं धृष्णु धर्षणशीलमोजः पराक्रमलक्षणं तेजः पत्यते । सर्वत्र प्रसरति । एनमेतादृशमहिमोपेतमिंद्रं पृथिवी विस्तीर्णा भूमिर्न विव्याच । न व्याप्नोति । अहशब्द एवार्थे । चनेत्यप्यर्थे । द्यौरपि न व्याप्नोतीत्यर्थः । यद्यदा सोमासः स्वाहाकृताः सोमा हर्यश्वमिंद्रममदन् । अमादयन् । तदा तमेनं द्यावापृथिव्यौ व्याप्तुं न शक्नुत इत्यर्थः ॥ अमत्रः । अम गत्यादिषु । अमिनक्षियजीत्यादिनात्रन्प्रत्ययः । नित्स्वरः । विरप्शी । रप लप व्यक्तायां वाचि । औणादिकः शप्रत्ययः । विविधं रपंतीति विरप्शाः स्तोतारः । तेऽस्य संतीत्यत इनिः । यद्वा विविधं रपणं विरप्शं । तदस्यास्तीति । प्रत्ययस्वरः । पत्यते । पत्यंतेन कर्तरि यक् । निघातः । धृष्णु । ञिधृषा प्रागल्भ्ये । त्रसिगृधिधृषिक्षिपेः क्नुप्रत्ययः । रषाभ्यामिति णत्वं । प्रत्ययस्वरः । विव्याच । व्यचेर्लिटि णलि लिट्यभ्यासस्योभयेषामित्यभ्यासस्य संप्रसारणं । निघातः । चनेति निपातसमुदाय-स्यार्थे वर्तते । एवमादित्वादंतोदात्तः । अमदन् । मदि स्तुत्यादिष्वित्यस्य लङि रूपं । यद्योगादनिघातः ॥

महाँ उग्रो वावृधे वीर्याय समाचक्रे वृषभः काव्येन ।
इंद्रो भगो वाजदा अस्य गावः प्र जायंते दक्षिणा अस्य पूर्वीः ॥५॥
महान । उग्रः । ववृधे । वीर्याय । संऽआचक्रे । वृषभः । काव्येन ।
इंद्रः । भगः । वाजऽदाः । अस्य । गावः । प्र । जायंते । दक्षिणाः । अस्य । पूर्वीः ॥५॥

महान्युद्धकर्मणि बलवानुग्रः शत्रूणां भयंकर इंद्रो वीर्याय वीर्यकरणाय वावृधे । वर्धते । वृषभः फलस्याभिवर्षको भगः सर्वभजनीयः स इंद्रः काव्येन । कवयः स्तोतारः । तत्कर्म स्तोत्रं । तेन स्तोत्रेण समाचक्रे । संगच्छते । तादृशस्यास्येंद्रस्य गावो वाजदाः क्षीरादिलक्षणान्नप्रदाः प्रजायंते । तथास्य पूर्वीर्बह्व्यस्ता गावो दक्षिणाः प्रजायंते ॥ वावृधे । वर्धतेर्लिटि रूपं । निघातः । वीर्याय । वीर भक्षं वीर्यं । भव छंदसीति यत । वीरवीर्यौ चेत्यत्र यतोऽनाव इत्यस्यामित्यस्य ज्ञापितत्वात्तित्स्वरितः । समाचक्रे । करोतेर्लिटि रूपं । गति

गतावित्ति पूर्वस्य गतेर्निघातः । काव्येन । कवेः कर्म काव्यं । ब्राह्मणादित्वात् ष्यञ् । ञित्त्वादुपधावृद्धिः । ञित्स्वरः । वाजदाः । ददातेरातोऽनुपसर्गे कः । जायंते । जनी प्रादुर्भाव इत्यस्य लटि रूपं । दक्षिणाः । दक्ष वृद्धावित्यस्मात् द्रुदक्षिभ्यामिनन्निती इनन्प्रत्ययः । नित्त्वादाद्युदात्तः ॥ ॥१९॥

प्र यत्सिंधवः प्रसवं यथायन्नापः समुद्रं रथ्येव जग्मुः ।
अतश्चिदिंद्रः सदसो वरीयान्यदीं सोमः पृणति दुग्धो अंशुः ॥६॥
प्र । यत् । सिंधवः । प्रऽसवं । यथा । आयन् । आपः । समुद्रं । रथ्याऽइव । जग्मुः ।
अतः । चित् । इंद्रः । सदसः । वरीयान् । यत् । ईं । सोमः । पृणति । दुग्धः । अंशुः ॥६॥

सिंधवो नद्यो यथा प्रसवं । प्रकर्षेण सूयत इति प्रसवः कामः । तमनुसृत्य यद्यदा प्रायन् प्रकृष्टमतिदूरं समुद्रं गच्छंति तदापो महांतं समुद्रं रथ्येव रथिन इव जग्मुः । प्रीणनार्थं गच्छंति । तद्वत् अतश्चित्सदसोऽस्मादप्यंतरिक्षादसाविंद्रो वरीयान् । उरुतरः खलु । यदीं एनमिंद्रं दुग्धोऽभिषुतोऽंशुर्लताखंडरूपोऽल्पः सोमः पृणति प्रीणयति । यथाल्पा नद्योऽल्पीयांसि च जलानि महांतं समुद्रं प्रीणयंति तद्वदल्पतरोऽंशुभूतः सोमो वरीयांसमिंद्रं प्रीणयति ॥ प्रसवं । सवतेः कर्मण्यप् । थाथादिस्वरः । आयन् । अयतेर्लङि रूपं । यद्योगादनिघातः । रथ्येव । रथस्येमे रथ्याः । रथाद्यदिति यत् । सुपां सुलुगिति सुपो डादेशः । तित्स्वरितः । इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरः । जग्मुः । गमेर्लिटि रूपं । गमहनेत्यादिनोपधालोपः । निघातः । वरीयान् । उरुशब्दादीयसुनि प्रियस्थिरेत्यादिना वरादेशः । नित्त्वादाद्युदात्तः । पृणति । पृण प्रीणने । तुदादिः । यद्योगादनिघातः । दुग्धः । दुहेः क्तः । एकाच इतीट्प्रतिषेधः । दादेर्धातोर्घ इति हकारस्य घत्वं । झषस्तथोर्धोऽधः । प्रत्ययस्वरः ॥

समुद्रेण सिंधवो यादमाना इंद्राय सोमं सुषुतं भरंतः ।
अंशुं दुहंति हस्तिनो भरित्रैर्मध्वः पुनंति धारया पवित्रैः ॥७॥
समुद्रेण । सिंधवः । यादमानाः । इंद्राय । सोमं । सुऽसुतं । भरंतः ।
अंशुं । दुहंति । हस्तिनः । भरित्रैः । मध्वः । पुनंति । धारया । पवित्रैः ॥७॥

समुद्रेण । महता नद्यादिरूपेणापोऽभिद्रवंत्येनमिति समुद्रः । तेन यादमानास्तेन सह संगतिं याचमानाः सिंधवो नद्यो यथा तं पूरयंति तद्वद्धस्तिनो हस्तवंतोऽध्वर्य्वादय इंद्राय तुभ्यं सुषुतं सुष्ठ्वभिषुतं सोमं भरतः संपादयंतोऽंशुं दुहंति । लताखंडमभिषुण्वंति । तथा तेऽध्वर्य्वादयः स्रवतो रसस्य धारया पवित्रैः पावनैः भरित्रैः । कर्मकरणार्थं पदार्थान्बिभ्रतीति भरित्रा बाहवः । तैर्मध्वो माधुर्योपेतान्सोमान्पुनंति । शोधयंति ॥ समुद्रेण । समुत्पूर्वाद्द्रवतेरन्येभ्योऽपि दृश्यत इति डः । डित्त्वाट्टिलोपः । यद्वा । उन्दी क्लेदने । संपूर्वस्य स्फायितंचीत्यादिना रक् । कित्त्वादुपधालोपः । उभयत्र प्रत्ययस्वरः । सुपा सहैकादेशे कृत एकादेश उदात्त एव । यादमानाः । टुयाचृ याच्ञायां । शानच् । व्यत्ययेन चकारस्य दकारः । शानचो लसार्वधातुकस्वरे धातुस्वरः । दुहंति । दुह प्रपूरण इत्यस्य लटि रूपं । भरित्रैः । डुभृञ् धारणपोषणयोरित्यस्मादर्तिलूधूसूखनसहचर इत्रः इत्रप्रत्ययः । प्रत्ययस्वरः । पुनंति । पूञ् पवन इत्यस्य लटि रूपं ॥

ह्रदा इव कुक्षयः सोमधानाः समीं विव्याच सवना पुरूणि ।
अन्ना यदिंद्रः प्रथमा व्याश वृत्रं जघन्वाँ अवृणीत सोमं ॥८॥
ह्रदाःऽइव । कुक्षयः । सोमऽधानाः । सं । ईं । इति । विव्याच । सवना । पुरूणि ।
अन्ना । यत् । इंद्रः । प्रथमा । वि । आश । वृत्रं । जघन्वान् । अवृणीत । सोमं ॥८॥

इंद्रस्य कुक्षय उदराणि सोमधानाः। सोमो निधीयते येष्विति सोमधानाः। तत्र दृष्टांतः। ह्रदा इव। यथा ह्रदा जलाधारा भवंति तद्वत्। ई सोऽयमिंद्रः पुरूणि सवना त्रीणि सवनानि सं विव्याच। सम्यक् व्याप्नोति। इंद्रः प्रथमा प्रथमान्यन्ना भक्षणीयानि सोमादीन्यन्नानि यद्यस्मादाश भक्षितवानत एव तथा सुबृद्धो भवति। अथ सोमपानानंतरं वृत्रं वधायोत्क्षिप्ते वज्रे पुरा जघास ततो वृत्र जघन्वान्वृत्रस्य हंतेंद्रः सोमं माध्यंदिने सवने देवेभ्योऽवृणीत। समभजत ॥ कुक्षयः। कुष निष्कर्षे। प्लुषिकुषि शुषिभ्यः क्सिः। उ॰ ३ १५५। कुष्यत इति कुक्षिः। प्रत्ययस्वरः। सोमधानाः। दधातेरधिकरणे ल्युट्। लित्स्वरः। विव्याच। व्यचेर्लिटि रूपं। अन्ना। अद भक्षणे। अद्यत इत्यन्न। आश। अश भोजन इत्यस्य लिटि णलि रूपं। अत आदेरित्यभ्यासस्य दीर्घः। यद्योगादनिघातः। लित्स्वरः। वृत्रं। न लोकाव्ययेति षष्ठीप्रतिषेधः। जघन्वान्। हंतेः क्वसावभावे रूपं। प्रत्ययस्वरः। अवृणीत। वृङ् संभक्तावित्यस्य लङि रूपं ॥

आ तू भर माकिरेतत्परि ष्ठाद्विद्मा हि त्वा वसुपतिं वसूनां।
इंद्र यत्ते माहिनं दत्रमस्त्यस्मभ्यं तद्धर्यश्व प्र यंधि ॥९॥

आ। तु। भर। माकिः। एतत्। परि। स्थात्। विद्म। हि। त्वा। वसुऽपतिं। वसूनां।
इंद्र। यत्। ते। माहिनं। दत्रं। अस्ति। अस्मभ्यं। तत्। हरिऽअश्व। प्र। यंधि ॥९॥

हे इंद्र तु क्षिप्रं धनमा भर। एतत्त्वया दीयमानं धनं माकिः को वा परि ष्ठात्। प्रतिबध्य तिष्ठत्। त्वा त्वा वसूनां धनानां वसुपतिमुत्तमस्य धनस्य स्वामिनं विद्म हि। जानीमः खलु। ते तव माहिनं महनीयं यद्दत्र धनमस्ति हे हर्यश्व तद्धनमस्मभ्यं प्र यंधि। प्रयच्छ ॥ तु। ऋचि तुनुघेत्यादिना संहितायां दीर्घः। भर। भरतेर्लोटि रूपं। माकिः। निपातः। स्थात्। तिष्ठतेश्छांदसे लुङि रूपं। उपसर्गात्सुनोतीत्यादिना संहितायां षत्वं। निघातः। विद्म। वेत्तेर्लटि विदो लटो वेति मसो मादेशः। प्रत्ययस्वरः। संहितायां द्व्यचोऽतस्तिङ इति दीर्घः। वसुपतिं। पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरः। माहिनं। महेरिनण् चेतीनण्प्रत्ययः। णित्त्वादुपधावृद्धिः। यासादित्वादाद्युदात्तः। यंधि। यमु उपरमे। लोटि बहुलं छंदसीति शपो लुक्। सेर्हिः। तस्य वा छंदसीति पित्त्वस्य विकल्पितत्वादपित्त्वाद्ङित्त्वादनुनासिकलोप इति हेर्धिरादेशः। निघातः ॥

जातकर्मण्यंसाभिमर्शनेऽस्मे प्रयंधीत्येषा। आ॰ गृ॰ १ १५। यद्यपि सा निर्देहादिति वचनेन शंसने निषिद्धा तथाप्यभिमर्शनस्य शंसने चोदितत्वान्नोक्तदोषः ॥

अस्मे प्र यंधि मघवन्नृजीषिन्निंद्र रायो विश्ववारस्य भूरेः।
अस्मे शतं शरदो जीवसे धा अस्मे वीराञ्छश्वत इंद्र शिप्रिन् ॥१०॥

अस्मे इति। प्र। यंधि। मघऽवन्। ऋजीषिन्। इंद्र। रायः। विश्वऽवारस्य। भूरेः।
अस्मे इति। शतं। शरदः। जीवसे। धाः। अस्मे इति। वीरान्। शश्वतः। इंद्र। शिप्रिन् ॥१०॥

मघवन्धनवन्नृजीषिन् गतसारसोमवन् हे इंद्र विश्ववारस्य। विश्वैः सर्वैः संभजनीयतया वरणं यस्य तत्। भूरेर्भूरि बहु रायो धनं। द्वितीयार्थे षष्ठी। अस्मे अस्मभ्यं प्र यंधि। प्रयच्छ। किंच अस्मे अस्माकं जीवसे जीवनाय शतं शरदः संवत्सरान्धाः। देहि। शिप्रिन् शोभनहनो हे इंद्र अस्मे अस्माकं शश्वतः। शश्वदिति बहुनाम। बहून्वीरान्पुत्रान्देहि ॥ जीवसे। जीव प्राणधारण इत्यस्य तुमर्थेऽसेप्रत्ययः। प्रत्ययस्वरः। शश्वतः। टुओश्वि गतिवृद्ध्योः। अस्मात्सर्वधातुभ्योऽभ्यादिभ्यो अतिप्रत्ययात्त्वेन निपातनादिष्टरूपसिद्धिः ॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥११॥

शुनं। हुवेम। मघऽवानं। इंद्रं। अस्मिन्। भरे। नृऽतमं। वाजऽसातौ।
शृण्वंतं। उग्रं। ऊतये। समत्ऽसु। घ्नंतं। वृत्राणि। संऽजितं। धनानां ॥११॥ ॥२०॥

वार्त्रहत्यायेत्येकादशर्चमष्टमं सूक्तं । एकादश्यनुष्टुप् शिष्टा गायत्र्यः । तथा चानुक्रांतं । वार्त्रहत्याय गायत्रमंत्यानुष्टुबिति ॥ अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे वार्त्रहत्यायेत्युत्तमावर्जं सूक्तं शंसनीयं । तथा च सूत्रितं । वार्त्रहत्यायेत्युत्तमामुद्धरेत । आ॰ ६. ४. । इति ॥ महाव्रते गायत्रीतृचाशीतावुत्तमावर्जमिदं सूक्तं पंचमारण्यके सूत्रितं । वार्त्रहत्याय शवस इत्युत्तमामुद्धरति । ऐ॰ आ॰ ५. २. ५. । इति ॥

वार्त्रहत्याय शवसे पृतनाषाह्याय च । इंद्र त्वा वर्तयामसि ॥१॥

वार्त्रऽहत्याय । शवसे । पृतनाऽसह्याय । च । इंद्र । त्वा । आ । वर्तयामसि ॥१॥

विश्वामित्रः स्तौति । हे इंद्र वार्त्रहत्याय वृत्रहननर्निमित्ताय शवसे बलायापि च पृतनासाह्याय परकीयसेनाभिभवाय त्वामा सर्वतो वर्तयामसि । प्रवर्तयामः ॥ वार्त्रहत्याय । वृत्रघ्नः कर्मेत्यर्थे ब्राह्मणादित्वात् ष्यञ् । हनस्तोऽचिण्णलोः । पा॰ ७. ३. ३२. । इति तकारः । ञित्त्वादाद्युदात्तः । पृतनाषाह्याय । षह मर्षण इत्यस्माच्छक्तिशकिसहोश्चेति यत् । संहितायां सहेः पृतनर्ताभ्यां च । पा॰ ८. ३. १०९. । इति षत्वं । दीर्घश्छांदसः । वर्तयामसि । वृतु वर्तन इत्यस्य ण्यंतस्य मस इदंतो मसिरिति मसि इत्यादेशः । निघातः ॥

अर्वाचीनं सु ते मन उत चक्षुः शतक्रतो । इंद्र कृण्वंतु वाघतः ॥२॥

अर्वाचीनं । सु । ते । मनः । उत । चक्षुः । शतक्रतो इति शतऽक्रतो । इंद्र । कृण्वंतु । वाघतः ॥२॥

हे शतक्रतो । शतं क्रतवो यस्यासौ शतक्रतुः । हे इंद्र वाघतः । वहंति यज्ञियां धुरमिति वाघतः स्तोतारः । ते तव सु अस्मदभिमतफलसंपादनेन शोभनं मनोऽर्वाचीनमस्मदभिमुखं कृण्वंतु । कुर्वंतु । उत अपि च चक्षुस्त्वदीयं दर्शनमस्मास्वनुग्रहदृष्टिं कुर्वंतु ॥ अर्वाचीनं । विभाषांचेरदिक्स्त्रियामिति खप्रत्ययः । खस्येनादेशः । चक्षुः । चक्षेः शिच्चेत्युसिप्रत्ययः । शित्त्वाभावात् ख्याञादेशाभावः । नित्यनुवृत्तेराद्युदात्तः । कृण्वंतु । कृवि हिंसाकरणयोरित्यस्य लोटि रूपं । आमंत्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः । प्रत्ययस्वरः । वाघतः । वह प्रापणे । संश्चद्वेहदित्यादिना अतिप्रत्ययांतत्वेन निपातनादुपधावृद्धिः । हकारस्य घत्वं । प्रत्ययस्वरः ॥

नामानि ते शतक्रतो विश्वाभिर्गीर्भिरीमहे । इंद्राभिमातिषाह्ये ॥३॥

नामानि । ते । शतक्रतो इति शतऽक्रतो । विश्वाभिः । गीःऽभिः । ईमहे । इंद्र । अभिमातिऽसह्ये ॥३॥

शतक्रतो हे इंद्र अभिमातिषाह्ये । मातिर्मानो गर्वः । अभितो मानो येषां तेऽभिमातयः शत्रवः । तेषां सहनमेव सह्यं । तस्मिन्युद्धेऽस्माकमुपस्थिते सति ते तव नामानि शक्रवज्रहस्तादीनि नामधेयानि । यद्वा । तदुपलक्षितानि बलानि विश्वाभिर्गीर्भिः सर्वाभिः स्तुतिलक्षणाभिर्वाग्भिरीमहे । वयं याचामहे ॥ ईमहे । ई कांत्यादिषु । व्यत्ययेनात्मनेपदं । अदादित्वाच्छपो लुक् । निघातः ॥

पुरुष्टुतस्य धामभिः शतेन महयामसि । इंद्रस्य चर्षणीधृतः ॥४॥

पुरुऽस्तुतस्य । धामऽभिः । शतेन । महयामसि । इंद्रस्य । चर्षणिऽधृतः ॥४॥

हे इंद्र पुरुष्टुतस्य पुरुभिर्बहुभिः स्तोतृभिः स्तुतस्य शतेनापरिमितसंख्याकैर्धामभिस्तेजोभिर्युक्तस्य चर्षणीधृतश्चर्षणीनां मनुष्याणां कर्मानुष्ठातृणामभिमतफलसंपादनेन धारकस्येंद्रस्य । यद्वा । आकर्षति सर्वमनेनेति चर्षणि बलं । तद्धारकस्य तव महयामसि । स्तोत्रं कुर्मः ॥ पुरुष्टुतस्य । ष्टुञ् स्तुतौ । कर्मणि क्तः । थाथादिस्वरः । संहितायां स्तुतस्तोमयोश्छंदसीति षत्वं । महयामसि । मह पूजायामित्यस्य लटीदंतो मसिः । निघातः । चर्षणीधृतः । कृष आकर्षणे । कृषेरादेश्च चः । उ॰ २. १०५. । इत्यनिप्रत्ययः । ककारस्य चकारादेशः । यद्वा । कृष विलेखने । कर्षतीति चर्षणयो मनुष्याः । धृ धारणे । क्विप् । कृदुत्तरपदस्वरः ॥

इंद्रं वृत्राय हंतवे पुरुहूतमुप ब्रुवे । भरेषु वाजसातये ॥५॥
इंद्रं । वृत्राय । हंतवे । पुरुऽहूतं । उप । ब्रुवे । भरेषु । वाजऽसातये ॥५॥

हे इंद्र वृत्राय हंतवे वृत्रनामकमसुरं हंतुं भरेषु युद्धेषु वाजसातयेऽन्नोपलक्षितधनलाभाय च पुरुहूत पुरुभिराहूतमिंद्रं बलवंतं त्वामुपब्रुवे । सोमपानार्थं विश्वामित्रोऽहमाह्वयामि ॥ वृत्राय । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानं । हंतवे । हंतेस्तुमर्थे तवेन्प्रत्ययः । नित्स्वरः । ब्रुवे । ब्रूञ् व्यक्तायां वाचीत्यस्य लट्युत्तम इटि रूपं । निघातः । वाजसातये । सननं सातिः । वाजस्य सातिर्वाजसातिः । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरः ॥ ॥२१॥

वाजेषु सासहिर्भव त्वामीमहे शतक्रतो । इंद्र वृत्राय हंतवे ॥६॥
वाजेषु । ससहिः । भव । त्वां । ईमहे । शतक्रतो इति शतऽक्रतो । इंद्र । वृत्राय । हंतवे ॥६॥

शतक्रतो हे इंद्र वाजेषु संग्रामेषु सासहिः शत्रूणामभिभविता भव । वृत्राय हंतवे वृत्रं हंतुं त्वामीमहे । प्रार्थयामहे ॥ सासहिः । सहिवहिचलिपतिभ्यो यङंतेभ्यः किकिनौ वक्तव्याविति किप्रत्ययः । तस्य स्वरः । वृत्राय । कर्मणः संप्रदानं । हंतवे । तुमर्थे तवेन्प्रत्ययः ॥

द्युम्नेषु पृतनाज्ये पृत्सुतूर्षु श्रवःसु च । इंद्र साक्ष्वाभिमातिषु ॥७॥
द्युम्नेषु । पृतनाज्ये । पृत्सुतूर्षु । श्रवःऽसु । च । इंद्र । साक्ष्व । अभिऽमातिषु ॥७॥

हे इंद्र द्युम्नेषु द्योतमानेषु धनेषु प्राप्तव्येष्वभिमानिनो ये सपत्नाः पृतनाज्ये । पृतनानामजनं गमनं यस्मिन्निति पृतनाज्यं संग्रामः । तस्मिन्संग्रामे च पृत्सुतूर्षु पृतनासु तरणशीलेषु शूरेषु श्रवःसु बलेषु च येऽभिमानिनः सपत्नाः संति तान् साक्ष्व । अभिभव । तथाभिमातिषु सर्वतो गर्वयुक्तेषु शत्रुषु पुरुषेषु ये सपत्नाः तांश्चाभिभव ॥ पृतनाज्ये । अज गतिक्षेपणयोरित्यस्य ल्युडंतस्य अचो यत् । पृतनानामाज्यं पृतनाज्यं । एकादेशस्वरः । पृत्सुतूर्षु । पृतनाशब्दस्य सौ परतः मांस्पृत्स्नूनामुपसंख्यानमिति पृदादेशः । त्रित्वरा संभ्रमे । ताच्छीलिकः क्विप् । ज्वरत्वरेत्यादिना ऊठ् । तत्पुरुषे कृति बहुलमिति पूर्वपदस्य सप्तम्या अलुक् । कृदुत्तरपदस्वरः । साक्ष्व । षह मर्षण इत्यस्य लोटि बहुलं छंदसीति शपो लुक् । ढत्वकत्वे । दीर्घश्छांदसः ॥

चातुर्विंशिकेऽहनि माध्यंदिने सवने ब्राह्मणाच्छंसिशस्त्रे शुष्मिंतमं न ऊतय इति तृचो वैकल्पिकोऽनुरूपः । सूत्रितं च । शुष्मिंतमं न ऊतये आयंत इव सूर्यं । आ० ७ ४ । इति ॥

शुष्मिन्तमं न ऊतये द्युम्निनं पाहि जागृविं । इंद्र सोमं शतक्रतो ॥८॥
शुष्मिनऽतमं । नः । ऊतये । द्युम्निनं । पाहि । जागृविं । इंद्र । सोमं । शतक्रतो इति शतऽक्रतो ॥८॥

शतक्रतो हे इंद्र शुष्मिन्तमं बलवतां मध्येऽतिशयेन बलवंतं द्युम्निनं दीप्तिमंतं । यद्वा शुष्मिन्तमं शत्रूणां शोषकतमं द्युम्निनं यशस्विनं जागृविं जागरणशीलं । पीतः सोमो जागृविः स्वप्ननिवारक इति । तादृशं नोऽस्माकं संबंधिनं सोममूतयेऽस्माकं रक्षणाय पाहि । अत्रागत्य पिब ॥ शुष्मिन्तमं । तमपः पित्वादनुदात्तत्वे प्रत्ययस्वरः । पाहि । पातेर्लोटि बहुलं छंदसीति शपो लुक् । निघातः । जागृविः । क्रिन्प्रत्ययांतः । नित्त्वादाद्युदात्तः ॥

इंद्रियाणि शतक्रतो या ते जनेषु पंचसु । इंद्र तानि त आ वृणे ॥९॥
इंद्रियाणि । शतक्रतो इति शतऽक्रतो । या । ते । जनेषु । पंचऽसु । इंद्र । तानि ।
ते । आ । वृणे ॥९॥

शतक्रतो हे इंद्र ते तव संबंधिषु पंचसु जनेषु गंधर्वाः पितरो देवा असुरा रक्षांसीत्येषु या यानींद्रियाणि रूपग्रहणादिसामर्थ्यानि स्थितानि ते त्वदीयानि तानींद्रियाण्यहमा वृणे। संभजे। यद्वा। पंचजनेषु निषादपंचमेषु चतुर्षु जनेषु यानींद्रियाणि सामर्थ्यानि तानि त्वदीयान्यहमा वृणे॥ इंद्रियाणि। इंद्रियमिंद्रलिंगमिंद्रदृष्टमिंद्रसृष्टमिंद्रजुष्टमिंद्रदत्तमिति वेति घचप्रत्ययांतत्वेन निपातनादंतोदात्तः। वृणे। वृङ् संभक्तावित्यस्य लटि रूपं। निघातः॥

अगन्निंद्र श्रवो बृहद्द्युम्नं दधिष्व दुष्टरं। उत्ते शुष्मं तिरामसि ॥१०॥

अगन्। इंद्र। श्रवः। बृहत्। द्युम्नं। दधिष्व। दुस्तरं। उत्। ते। शुष्मं। तिरामसि ॥१०॥

हे इंद्र बृहन्महत् श्रवः सोमलक्षणमस्माभिर्दीयमानमन्नमगन्। त्वा गच्छतु। त्वं दुष्टरं दुस्तरं शत्रुभिस्तरीतुमशक्यं द्युम्नं धनं दधिष्व। अस्मभ्यं प्रयच्छ। वयं तु ते त्वदीयं शुष्मं बलमुत्कृष्टं तिरामसि। सोमाज्यादिभिर्वर्धयामः॥ अगन्। गमेर्लुङि बहुलं छंदसीति शपो लुक्। हल्ङ्याब्भ्य इत्यादिना तिलोपः। मो नो धातोः। अडागमस्वरः। दधिष्व। दधातेर्लोटि छंदस्युभयथेति थास आर्धधातुकत्वादिडागमः। निघातः। दुस्तरं। तरतेः छच्छ्रार्थे खल्। सुषामादित्वात्संहितायां षत्वं। लित्स्वरः। तिरामसि। इदंतो मसिः। निघातः॥

अर्वावतो न आ गह्यथो शक्र परावतः।
उ लोको यस्ते अद्रिव इंद्रेह तत आ गहि ॥११॥

अर्वाऽवतः। नः। आ। गहि। अथो इति। शक्र। पराऽवतः।
ऊं इति। लोकः। यः। ते। अद्रिऽवः। इंद्र। इह। ततः। आ। गहि ॥११॥

शक्र बलवन्हे इंद्र अर्वावतोऽर्वाचीनात्समीपाद्देशात् अथो अपि च परावतोऽतिदूराद्देशान्नोऽस्मानभिलक्ष्या गहि। आगच्छ। अद्रिवः। अत्ति भक्षयति शत्रूनित्यद्रिर्वज्रः। तद्वन् हे इंद्र ते तव य उ लोक उत्तमो लोकोऽस्ति ततस्तस्मादपि लोकादिहास्मिन्देवयजने देशे सोमपानार्थमा गहि। आगच्छ॥ गहि। गमेर्लोटि रूपं। परावतः। उपसर्गाच्छंदसि धात्वर्थ इति वतिः। प्रत्ययस्वरः। अद्रिवः। मतुवसो रुरिति रुः। ततः। पंचम्यास्तसिलिति तसिल्। लित्स्वरः॥ ॥२२॥

अभि तष्टेवेति दशर्चं नवमं सूक्तं। अत्रानुक्रमणिका। अभि तष्टेव दश प्रजापतिः स वैश्वामित्रो वाच्यो वा द्वौ वा तौ न वेकोऽपीति। विश्वामित्रगोत्रः प्रजापतिर्वाचः पुत्रः प्रजापतिर्वा ऋषिः। तावुभावपि समुच्चितावस्य सूक्तस्य ऋषी इति द्वितीयः पक्षः। अथवा नोभावपि किंतु विश्वामित्र एवेति तृतीयः पक्षः। त्रिष्टुप् छंदः। इंद्रो देवता॥

चातुर्विंशिकेऽहनि माध्यंदिने सवनेऽच्छावाकशस्त्रेऽभि तष्टेवेत्यहरहःशस्यनामकं सूक्तं। सूत्रितं च। उद्ब्रह्माण्यभि तष्टेवेतीतरावहरहःशस्यं। आ० ७. ४.। इति॥ एवं सर्वत्राहर्गणेषु द्वितीयादिष्वहःसु माध्यंदिने सवनेऽच्छावाकशस्त्र एतत्सूक्तं॥

अभि तष्टेव दीधया मनीषामत्यो न वाजी सुधुरो जिहानः।
अभि प्रियाणि मर्मृशत्पराणि कवीँरिच्छामि संदृशे सुमेधाः ॥१॥

अभि। तष्टाऽइव। दीधय। मनीषां। अत्यः। न। वाजी। सुऽधुरः। जिहानः।
अभि। प्रियाणि। मर्मृशत्। पराणि। कवीन्। इच्छामि। संऽदृशे। सुऽमेधाः ॥१॥

यजमानः स्तोतारं प्रति ब्रूते। हे स्तोतर्मनीषामिंद्रविषयां स्तुतिमभि दीधय। सर्वतो दीप्तां कुरु। तत्र दृष्टांतः। तष्टेव। यथा तष्टा तक्षणेन काष्ठं संस्करोति तद्वत्। सुधुरः शोभनया धुरान्वितो वाजी वेगवानत्यो ऽश्व इव जिहानः कर्मणि प्रवर्तमानः पराण्युत्तमानि प्रियाणींद्रस्य प्रियतमानि। यद्वा। पराण्युत्तरेष्वहःसु

क्रियमाणानि कर्माण्यभिमर्मृशत अत्यर्थमभि मृशन् सुमेधाः शोभनमेधावानहं कवीन्। ये पूर्वमनुष्ठितयज्ञा देवभूयमगमन् ते कवयः। तान् संदृशे संद्रष्टुमिच्छामि। उक्तार्थे ब्राह्मणं। अभि तष्टेव दीधया मनीषामित्यच्छावाकोऽहरहः शंसत्यभिवत्तत्य रूपमभि प्रियाणि मर्मृशत्पराणीति यान्येव पराण्यहानि तानि प्रियाणि तान्येव तदभिमर्मृशतो यंत्यभ्यारभमाणाः परो वा अस्माल्लोकात्स्वर्गो लोकस्तमेव तदभिवदति कवींरिच्छामि संदृशे सुमेधा इति ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै कवयस्तानेव तदभ्यतिवदति। ऐ॰ ब्रा॰ ६. २०। इति॥ तष्टेव। तक्षू त्वक्षू तनूकरणे इत्यस्य तृनि रूपं। निस्स्वरः। दीधय। दीधीङ् दीप्तिदेवनयोरित्यस्मादंतर्भावितण्यर्थस्य लोटि शपो बहुलं छंदसीति लुगभावः। व्यत्ययेन परस्मैपदं। सुधुरः। आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। जिहानः। ओहाङ् गतावित्यस्य शानचि भृञामिदित्यभ्यासस्येत्वं। चित्त्वादंतोदात्तत्वे प्राप्तेऽभ्यस्तानामादिरित्याद्युदात्तत्वं। मर्मृशत। मृश आमर्शन इत्यस्य यङ्लुकि रुग्रिकौ च लुकीत्यभ्यासस्य रुगागमः। तदंताल्लङि कर्तरि रूपं। नाभ्यस्ताच्छतुरिति नुमभावः। अभ्यस्तस्वरः। संदृशे। दृशिर् प्रेक्षणे इत्यस्मात्तुमर्थे दृशे विख्ये चेति केन्प्रत्ययांतत्वेन निपातनादाद्युदात्तः। समासे कृदुत्तरपदस्वरः। सुमेधाः। नित्यमसिच् प्रजामेधयोरित्यसिच्प्रत्ययः। चित्स्वरः॥

इनोत पृच्छ जनिमा कवीनां मनोधृतः सुकृतस्तक्षत द्यां।
इमा उ ते प्रण्यो३ वर्धमाना मनोवाता अध नु धर्मणि ग्मन् ॥२॥
इना। उत। पृच्छ। जनिम। कवीनां। मनःऽधृतः। सुऽकृतः। तक्षत। द्यां।
इमाः। ऊं इति। ते। प्रऽन्यः। वर्धमानाः। मनःऽवाताः। अध। नु। धर्मणि। ग्मन् ॥२॥

उतेत्यामंत्रणे। हे इंद्र कवीनां सुकृतकर्मणां देवभूयंगतानां जनिम जन्म। केन कर्मणा दिवं गताः कृतो वा तेषामुत्पत्तिरित्येतमर्थमिना ईश्वरान् गुरून्पृच्छ। ते कवयो मनोधृतः संयतमनस्का अत एव सुकृतः शोभनकर्माणः संतो द्यां दिवं तक्षत। अकुर्वन्। अध अथेदानीं धर्मण्यस्मिन्यज्ञे ते त्वदर्थं प्रण्यः प्रणीयमाना मनोवाता मनोवेगा वर्धमानास्त्वां वर्धयंत्य इमा अस्माभिः क्रियमाणाः स्तुतयो नु क्षिप्रं ग्मन्। त्वां गच्छंतु। उ सर्वत्र प्रसिद्ध्यर्थः॥ पृच्छ। प्रच्छ ज्ञीप्सायामित्यस्य लोटि तुदादित्वाच्छः। तस्य ग्रहिज्याद्विनादिना संप्रसारणं। निघातः। प्रण्यः। णीञ् प्रापणे इत्यस्मादौणादिकः कर्मणि क्विप्। सर्वविधीनां छंदसि विकल्पितत्वादियङादेशं बाधित्वा यणादेशः। उदात्तस्वरितयोरिति स्वरितत्वं। ग्मन्। गमेर्लुङि बहुलं छंदसीति शपो लुक्। झेर्ङित्त्वाद्गमहनेत्यादिनोपधालोपः। निघातः॥

नि षीमिदत्र गुह्या दधाना उत क्षत्राय रोदसी समंजन्।
सं मात्राभिर्ममिरे येमुरुर्वी अंतर्मही समृते धायसे धुः ॥३॥
नि। सीं। इत्। अत्र। गुह्या। दधानाः। उत। क्षत्राय। रोदसी इति। सं। अंजन्।
सं। मात्राभिः। ममिरे। येमुः। उर्वी इति। अंतः। मही इति। समृते इति संऽऋते।
धायसे। धुरिति धुः ॥३॥

अत्र भूलोके गुह्या गूढानि कर्माणि सीमित सर्वत एव निदधानाः कुर्वाणा एते कवय उत अपि च क्षत्राय बलाय धनाय वा रोदसी द्यावापृथिव्यौ समंजन्। ओषधीभिः पृथिवीं देवैश्च दिवं संगतामकार्षुः। किंच ते मात्राभिः। मीयंते मांतीति वा मात्राः शिलोच्चयाः। ताभिर्मात्राभिः सं ममिरे। ते रोदस्यौ वियत्तया परिच्छिन्ने चक्रुश्च। समृते परस्परं संगते उर्वी विस्तीर्णे मही महत्यौ ते द्यावापृथिव्यौ येमुः। नियमितवंतः। विष्टंभकेनांतरिक्षेणांतर्दयन्कन। तथा धायसे तयोर्धारणार्थमंतरिक्षं धुः। व्यधुः॥ डुधाञ् धारणे। गुह्या। गुहायां भवानि। भवार्थे यत्। यतोऽनाव इत्याद्युदात्तः। दधानाः। दधातेः शानचि रूपं। अभ्यस्तस्वरः। अंजन्। अंजू व्यक्तिम्रक्षणकांतिगतिष्वित्यस्य लङि श्नसोरल्लोपः। निघातः। मात्राभिः। मा माने माङ् माने वा।

ऋयामेत्यादिना क्नप्रत्ययः। नित्स्वरः। ममिरे। माङ् मान इत्यस्य लिटि रूपं। चादिलोपे विभाषेति न निघातः। येमुः। यम उपरम इत्यस्य लिट्युसि रूपं। तिङुत्तरत्वादनिघातः। धायसे। वहिहाधाञ्भ्यश्छंदसीत्यसुन। नित्स्वरः। धुः। दधातेर्लुङि रूपं॥

आ॒तिष्ठं॑तं॒ परि॒ विश्वे॑ अभूष॒ञ्छ्रियो॒ वसा॑नश्चरति॒ स्वरो॑चिः।
म॒हत्तद्वृष्णो॒ असु॑रस्य॒ नामा॒ विश्वरू॑पो अ॒मृता॑नि त॒स्थौ ॥४॥
आ॒ऽतिष्ठं॑तं। परि॑। विश्वे॑। अ॒भू॒षन्। श्रियः॑। वसा॑नः। च॒र॒ति॒। स्वऽरो॑चिः।
म॒हत्। तत्। वृष्णः॑। असु॑रस्य। नाम॑। आ। वि॒श्वऽरू॑पः। अ॒मृता॑नि। त॒स्थौ॒ ॥४॥

विश्वे सर्वे कवयो रथमातिष्ठंतमिंद्रं पर्यभूषन। परितोऽलंमकुर्वन। स्वरोचिः। स्वमेव रोचिर्यस्यासौ स्वरोचिः। स्वप्रभयैव दीप्यमान इत्यर्थः। अत एव श्रियो दीप्तीर्वसान आच्छादयन् सोऽयमिंद्रश्चरति। सर्वत्र वर्तते। वृष्णः कामानां वर्षितुरसुरस्य। अस्यति प्रेरयति सर्वानंतर्यामितयेत्यसुरः। तस्येंद्रस्य तत्तादृशमननुभूतपूर्वं नाम। नमयति सर्वानननेन शत्रूनिति नाम कर्म। यद्वा नम्यते सर्वैर्नमस्क्रियत इति नामेंद्रस्य शरीरं कर्म वा। महदाश्चर्योपेतं वर्तते। तथा विश्वरूपो नानाविधरूपतां भजमानः स इंद्रो वरुणात्मनामृतानि जलान्या तस्थौ। अधितिष्ठति॥ विश्वे। जसः शी। अभूषन। भूष अलंकार इत्यस्य लङि रूपं। वसानः। वस आच्छादन इत्यस्य शानचि रूपं। तस्य लसार्वधातुकस्वरे धातुस्वरः। नाम। णमु प्रह्वत्व इत्यस्मान्नामन्सीमन्नित्यादिना मनिन्प्रत्ययांतत्वेन निपातनादाद्युदात्तः। विश्वरूप इति तस्य संज्ञा। बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं। अमृतानि। कालाध्वनोरत्यंतसंयोग इति द्वितीया। तस्थौ। तिष्ठतेर्लिटि णलि रूपं॥

असू॑त॒ पूर्वो॑ वृष॒भो ज्याया॑नि॒मा अ॑स्य शु॒रुधः॑ संति॒ पूर्वीः॑।
दिवो॑ नपाता विदथ॑स्य धीभिः क्ष॒त्रं रा॑जाना प्र॒दिवो॑ दधाथे ॥५॥
असू॑त। पूर्वः॑। वृ॒ष॒भः। ज्याया॑न्। इ॒माः। अ॒स्य॒। शु॒रुधः॑। सं॒ति॒। पू॒र्वीः॑।
दि॒वः॑। न॒पा॒ता॒। वि॒दथ॑स्य। धी॒भिः। क्ष॒त्रं। रा॒जा॒ना॒। प्र॒ऽदिवः॑। द॒धा॒थे॒ इति॑ ॥५॥

वृषभः कामानां वर्षकः पूर्वश्चिरंतनोऽत एव ज्यायानिंद्रोऽसूत। अपः ससर्ज। पूर्वीर्बह्व्य इमा अनेन सृष्टा आपोऽस्य शुरुधः संति। शुचः पिपासाया रोधयित्र्यो भवंति। दिवो नपाता दिवो न पातयितारौ हे राजानाविंद्रावरुणौ प्रदिवः प्रकर्षेण द्योतमानस्य विदथस्य यज्ञकारिणः स्तोतुर्धीभिः स्तुतिभिः क्षत्रं धनं दधाथे। अस्मभ्यं दातुं धारयेथे॥ असूत। षूङ् प्राणिगर्भविमोचन इत्यस्य लङि रूपं। अडागमस्वरः। ज्यायान। प्रशस्यशब्दादीयसुनि ज्य चेति ज्यादेशः। ज्यादादीयस इतीयस आदेराकारादेशः। नित्त्वादाद्युदात्तः। शुरुधः। पृषोदरादिः। नपाता। नभ्राण्नपादिति निपातनान्नञः प्रकृतिभावः। आमंत्रितत्वान्निघातः। धीभिः। सावेकाच इति विभक्तेरुदात्तत्वं। राजाना। आमंत्रितत्वान्निघातः। दधाथे। दधातेर्लिटि रूपं। निघातः॥ ॥२३॥

त्रीणि॑ राजाना वि॒दथे॑ पु॒रूणि॒ परि॒ विश्वा॑नि भूषथः॒ सदां॑सि।
अप॑श्यमत्र॒ मन॑सा जग॒न्वान्व्र॒ते गं॑ध॒र्वाँ अपि॑ वा॒युके॑शान् ॥६॥
त्रीणि॑। रा॒जा॒ना॒। वि॒दथे॑। पु॒रूणि॑। परि॑। विश्वा॑नि। भू॒ष॒थः॒। सदां॑सि।
अप॑श्यं। अत्र॑। मन॑सा। ज॒ग॒न्वान्। व्र॒ते। गं॒ध॒र्वा॒न्। अपि॑। वा॒युऽके॑शान् ॥६॥

हे राजानाविंद्रावरुणौ विदथेऽस्मिन्यज्ञे विश्वानि व्याप्तानि पुरूणि यजमानीयैः सोमादिभिः पूर्णानि त्रीणि सदांसि सवनानि परि भूषथः। सर्वतोऽलंकुरुथः। हे इंद्र त्वं जगन्वान्। यज्ञं प्रति गतवानसि। अपि

। यतोऽहमत्र ब्रूते यज्ञे वायुकेशान वायुवज्ज्वलनरश्मीन गंधर्वान सोमरक्षकान स्वानभ्राजादीन ते च स्वानभ्राजादयस्तैत्तिरीयके स्पष्टमभिहिताः। स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते गणास्तान्त्रजध्वं मा वो दभन। स॰ १.२.७। इति॥ भूषथः। भूष अलंकारे इत्यस्य लटि रूपं। अपश्य। गा इत्यस्य लङि रूपं। पादादित्वादनिघातः। जगन्वान। गमेः क्वसौ विभाषा गमहनविदविशामिति वीटो विकल्पितत्वादत्रेडभावः। मो नो धातोरित्यभ्यासस्य मकारस्य नकारः। प्रत्ययस्वरः। गंधर्वान। धृञ् धारणे इत्यस्य गोशब्द उपपदे गवि गन धृञो व इति वप्रत्ययः। तत्संनियोगेन गोशब्दस्य गनादेशः। प्रत्ययस्वरः॥

तदिन्न्वस्य वृषभस्य धेनोरा नामभिर्ममिरे सक्म्यं गोः।
अन्यदन्यदसुर्यं१ वसाना नि मायिनो ममिरे रूपमस्मिन ॥७॥

तत्। इत्। नु। अस्य। वृषभस्य। धेनोः। आ। नामऽभिः। ममिरे। सक्म्यं। गोः।
अन्यत्ऽअन्यत्। असुर्यं। वसानाः। नि। मायिनः। ममिरे। रूपं। अस्मिन ॥७॥

ये यजमाना वृषभस्याभिमतफलप्रदस्यास्येंद्रस्यार्थं धेनोर्गोर्नामभिर्विशायुर्विश्वव्यचा इत्यादिभिरूपलक्षितायां सक्म्यं सभजनार्हं तत्क्षीरादिकं हविर्नु क्षिप्रमाममिर आदृहंति। धातूनामनेकार्थत्वात। तेन च हविषा यज्ञमनुष्ठाय देवभूय प्राप्तास्ते कवयोऽन्यदन्यन्नूतनमसुर्यमसुराणां बलं वसाना आच्छादयंत अत एव मायिनो मायया स्वीकृतकामरूपाः। यद्वा मायिनः प्रज्ञावंतः संतोऽस्मिन्निंद्रे रूपं स्वं स्वं रूपं नि ममिरे। इयत्तया परिच्छिद्य निदधुः॥ इत् पूरणः। ममिरे। माङ् माने। लिटि रूपं। निघातः। सक्म्यं। युजिरुचितिजां कुश्चेत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात्सचतेर्मक्प्रत्ययः कुत्वं च। सचनं सक्मः। तत्र भव इत्यर्थे भवे छंदसीति यत। यतोऽनाव इत्याद्युदात्तः। गोः। एकादेशस्वरः। असुर्यं। असुरस्य स्वमित्यर्थेऽसुरस्य स्वं। पा॰ ४.४.१२३। इति यत। तित्स्वरितः। रूपं। रूप रूपक्रियायां। ख्यतः। खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः। उ॰ ३.२८। इति पप्रत्ययांतत्वेन निपातनात्पकारलोपोऽगुणत्वं च। रूपयति रूप्यते वेति रूपं। प्रत्ययस्वरः॥

तदिन्न्वस्य सवितुर्नकिर्मे हिरण्ययीममतिं यामशिश्रेत।
आ सुष्टुती रोदसी विश्वमिन्वे अपीव योषा जनिमानि वव्रे ॥८॥

तत्। इत्। नु। अस्य। सवितुः। नकिः। मे। हिरण्ययीं। अमतिं। यां। अशिश्रेत।
आ। सुऽस्तुती। रोदसी इति। विश्वमिन्वे इति विश्वंऽइन्वे। अपिऽइव। योषा।
जनिमानि। वव्रे ॥८॥

तत्तस्मात्सवितुः सर्वस्य जगतोऽंतर्यामितया प्रेरयितुरस्येंद्रस्य मे मम हिरण्ययीं सुवर्णमयीममतिं दीप्तिं नकिः को वा परिच्छिनत्ति ननु। या मदीया दीप्तिमशिश्रेत य आश्रयति स सुष्टुती शोभनया स्तुत्या स्तूयमान विश्वमिन्वे सर्वस्य संतर्पयित्र्यौ रोदसी द्यावापृथिव्यावा वव्रे। स्वकीयतया सर्वतो वृणुते। तत्र दृष्टांतः। अपीव योषा जनिमानि। यथा योषा स्त्री जनिमानि जातान्यपत्यानि वृणोति तद्वत॥ नकिः। निपातः। हिरण्ययीं। हिरण्यस्य विकारार्थे मयड्वैतयोरिति मयट। ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छंदसीति निपातनान्मयटो मकारलोपः। टिड्ढाणञिति ङीप। प्रत्ययस्वरः। अमतिं। अम गत्यादिषु। अमेरतिरित्यतिप्रत्ययः। प्रत्ययस्वरः। अशिश्रेत। श्रयतेर्लङि बहुलं छंदसीति शपः श्लुः। यद्वृत्तयोगादनिघातः। सुष्टुती। सुपां सुलुगिति तृतीयायाः सवर्णदीर्घः। विश्वमिन्वे। इवि व्याप्तिप्रीणनयोरित्यस्मात्कर्मण्यण। इदितो नुम। तत्पुरुषे कृति बहुलमिति द्वितीयाया अलुक। कृदुत्तरपदस्वरः। योषा। योतेर्मिश्रीभावकर्मणो वृतवदिहानि कमिकषियुसिचिभ्यः स इति सप्रत्ययः। ग्रामादित्वादाद्युदात्तः। जनिमानि। जनी प्रादुर्भावे। हृजनिभ्यामिमनिन्नितीमनिन्प्रत्ययो भूतकाले। नित्त्वादाद्युदात्तः। वव्रे। वृञ् वरणे इत्यस्य लिटि रूपं॥

युवं प्रत्नस्य साधथो महो यद्दैवी स्वस्तिः परि णः स्यातं ।
गोपाजिह्वस्य तस्थुषो विरूपा विश्वे पश्यंति मायिनः कृतानि ॥९॥
युवं । प्रत्नस्य । साधथः । महः । यत् । दैवी । स्वस्तिः । परि । नः । स्यातं ।
गोपाजिह्वस्य । तस्थुषः । विऽरूपा । विश्वे । पश्यंति । मायिनः । कृतानि ॥९॥

हे इंद्रावरुणौ युवं युवां प्रत्नस्य स्तोतुर्महस्तादृशं श्रेयः साधथः । साधयथः । कीदृशं तदित्यत आह । यद्दैवी स्वस्तिर्यदिदं देवसंबंधि श्रेयः स्वराज्यलक्षणं । किंच युवां नोऽस्मान्परि परितः स्यातं । रक्षकौ भवतं । विश्वे सर्वे मायिनो देवा गोपाजिह्वस्य । गोप्त्री जिह्वा सा विभीतिस्तथातादृशी वाग्यस्य स तथोक्तः । तस्थुषः स्थिरतरस्येंद्रस्य विरूपा नानाविधानि वृत्रहननादीनि कृतानि कर्माणि पश्यंति । एवमिंद्रस्य विश्वरूपत्वमुक्तं ॥ युवं । युष्मच्छब्दस्य द्विवचने युवावौ द्विवचन इति युवादेशः । ङेप्रथमयोरमिति सुपोऽमादेशः । साधथः । साध संसिद्धावित्यस्य ण्यंतस्य लटि रूपं । बहुलमन्यत्रापीति णिलुक् । निघातः । दैवी । देवाद्यञञावित्यञ्प्रत्ययः । ञित्स्वरः । स्यातं । अस्तेर्लिङि रूपं । गोपाजिह्वस्य । गुपू रक्षण इत्यस्यायप्रत्ययांतस्य क्विप्यतोलोपयलोपयोः कृतयो रूपं गोपा इति । बहुव्रीहौ पूर्वपदस्वरः । तस्थुषः । ष्ठा गतिनिवृत्तावित्यस्य क्वसौ वस्वेकाजाद्घसामिति प्राप्तस्येटः संप्रसारणं । संप्रसारणाश्रयं च बलीय इति संप्रसारणस्य बलीयस्त्वान्निवृत्तिः । वसोः संप्रसारणं । प्रत्ययस्वरः । पश्यंति । दृशिर् प्रेक्षणे । निघातः ॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥१०॥
शुनं । हुवेम । मघऽवानं । इंद्रं । अस्मिन् । भरे । नृऽतमं । वाजऽसातौ ।
शृण्वंतं । उग्रं । ऊतये । समत्ऽसु । घ्नंतं । वृत्राणि । संऽजितं । धनानां ॥१०॥ ॥२४॥ ॥३॥

अथ चतुर्थेऽनुवाके पंचदश सूक्तानि । तत्रेंद्रं मतिरिति नवर्चं प्रथमं सूक्तं वैश्वामित्रं त्रैष्टुभमैंद्रं । इंद्रं मतिर्नवेत्यनुक्रांतं । सूक्तविनियोगो लिंगादवगंतव्यः ॥

इंद्रं मतिर्हृद आ वच्यमानाच्छा पतिं स्तोमतष्टा जिगाति ।
या जागृविर्विदथे शस्यमानेंद्र यत्ते जायते विद्धि तस्य ॥१॥
इंद्रं । मतिः । हृदः । आ । वच्यमाना । अच्छ । पतिं । स्तोमऽतष्टा । जिगाति ।
या । जागृविः । विदथे । शस्यमाना । इंद्र । यत् । ते । जायते । विद्धि । तस्य ॥१॥

विश्वामित्रः स्तौति । हे इंद्र हृदो हृदयादुच्यमानोच्यमाना स्तोमतष्टा स्तोमकारिभिः कृता मतिः स्तुतिः पतिं सर्वस्य जगतः स्वामिनं त्वामच्छाभिमुख्येन जिगाति । समंतात्प्राप्नोतु । या मदीया स्तुतिर्जागृविः स्तुत्यस्य तव जागरणं कुर्वाणा विदथे यज्ञे शस्यमाना भवति । हे इंद्र ते त्वदर्थं यत्स्तोत्रं मत्तो जायते तद्विद्धि । जानीहि । तस्येति द्वितीयार्थे षष्ठी ॥ मतिः । मंत्रे वृषेत्यादिना क्तिन्नुदात्तः । हृदः । हृदयशब्दस्य पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिष्वित्यादिना हृदादेशः । ऊडिदमिति विभक्तेरुदात्तत्वं । वच्यमाना । वच परिभाषणे इत्यस्य कर्मणि यक् । संप्रसारणाभावश्छांदसः । प्रत्ययस्वरः । स्तोमतष्टा । तक्षू त्वक्षू तनूकरणे इत्यस्य कर्मणि निष्ठा । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । जिगाति । गा स्तुतौ छंदसीति जुहोत्यादिः । बहुलं छंदसीत्यभ्यासस्येत्वं । निघातः । जायते । जनी प्रादुर्भावे इत्यस्य लटि रूपं । यद्वृत्तयोगादनिघातः । विद्धि । विद ज्ञाने इत्यस्य लोटि हुझल्भ्यो हेर्धिरिति धादेशः । वाक्यभेदादनिघातः ॥

दि॒वश्चि॒दा पू॒र्व्या जाय॑माना॒ वि जा॒गृवि॑र्वि॒दथे॑ श॒स्यमा॑ना ।
भ॒द्रा वस्त्रा॒ण्यर्जु॑ना॒ वसा॑ना॒ सेयम॒स्मे स॑न॒जा पित्र्या॒ धीः ॥२॥
दि॒वः । चि॒त् । आ । पू॒र्व्या । जाय॑माना । वि । जा॒गृविः॑ । वि॒दथे॑ । श॒स्यमा॑ना ।
भ॒द्रा । वस्त्रा॑णि । अर्जु॑ना । वसा॑ना । सा । इ॒यं । अ॒स्मे इति॑ । स॒न॒ऽजा । पित्र्या॑ । धीः ॥२॥

हे इंद्र दिवश्चित् द्योतमानात्सूर्यादपि पूर्व्या पूर्वकाले भवोषःकालसंबंधिन्या जायमाना या स्तुतिलक्षणा वाग्विभवति सेयं वाग्विदथे यज्ञे शस्यमाना जागृविः स्तुत्यस्य तव जागरणं कुर्वाणा भद्रा कल्याणान्यर्जुना शुक्लवर्णानि वस्त्राणि योग्यतया तेजांसि वसानास्मे अस्माकं पित्र्या पितृक्रमागता अत एव सनजा पुरातनी सती धीस्तव स्तुतिर्भवति ॥ दिवः । दिवेः क्विप् । ऊडिदमिति विभक्तेरुदात्तत्वं । अर्जुना । अर्जेर्णिलुक्चेत्युनन् । नित्स्वरः । सनजा । जनेरन्येभ्योऽपि दृश्यत इति डः । प्रत्ययस्वरः । पित्र्या । पितृशब्दात्तत आगत इत्यर्थे पितुर्यच्चेति यत्प्रत्ययः । रीङृत इति रीङादेशः । यस्येति लोपः । यतोऽनाव इत्याद्युदात्तत्वं ॥

य॒मा चि॒दत्र॑ यम॒सूर॑सूत जि॒ह्वाया॒ अग्रं॒ पत॒दा ह्यस्था॑त् ।
वपूं॑षि जा॒ता मि॑थु॒ना स॑चेते तमो॒हना॒ तपु॑षो बु॒ध्न एता॑ ॥३॥
य॒मा । चि॒त् । अत्र॑ । य॒म॒ऽसूः । अ॒सू॒त॒ । जि॒ह्वायाः॑ । अग्र॑ं । पत॑त् । आ । हि । अस्था॑त् ।
वपूं॑षि । जा॒ता । मि॒थु॒ना । स॒चे॒ते॒ इति॑ । त॒मः॒ऽहना॑ । तपु॑षः । बु॒ध्ने । आऽइ॑ता ॥३॥

प्रसंगादुषःकालं प्रशंसति । यमसूः । यमौ यमलौ सूत इति यमसूरुषोऽभिमानिनी देवता । सा यमा यमलावश्विनावत्रोषःकालेऽसूत । अश्विनोस्तत्र शस्यमानत्वात्तावश्विनौ स्तोतुं मम जिह्वाया अग्रं पतत्संचलत्सत् आस्थाद्धि । तिष्ठति खलु । तमोहना तमसो हंतारौ तपुषः । तपत्यस्मिन्सूर्य इति तपुर्दिवसः । तस्य बुध्ने मूले एता एतावागतौ मिथुना परस्परं संगतौ तावश्विनौ जातोत्पन्नानि वपूंषि । उप्यंते निधीयंत इति वपूंष्युषःकाले क्रियमाणानि शस्त्रादीनि कर्माणि । सचेते । सगच्छतः ॥ यमसूः । षूङ् प्राणिगर्भविमोचन इत्यस्य क्विप् । कृदुत्तरपदस्वरः । असूत । तस्यैव धातोर्लङ्यदादित्वाच्छपो लुक् । निघातः । पतत् । पत्लृ गतौ । शतुर्लसार्वधातुकस्वरे धातुस्वरः । अस्थात् । ष्ठा गतिनिवृत्तौ । लुङि रूपं । हियोगादनिघातः । वपूंषि । डुवप् बीजसंताने । अर्तिपृवपियजितनिधनितपिभ्यो नित्युसिप्रत्ययः । नित्त्वादाद्युदात्तः । सचेते । षच समवाय इत्यस्य लटि रूपं । तपुषः । तप संतापे । अर्तिपृवपीत्यादिना उसिः । बुध्ने । बन्ध बंधने । बंधेर्ब्रधिबुधी च । उ० ३.५ । इति नक्प्रत्ययः । ब्रधिबुधी एतावादेशौ धातोः । प्रत्ययस्वरः । एता । इण गतावित्यस्य कर्मणि निष्ठा । गतिरनंतर इति गतेः स्वरः ॥

न॒किरे॑षां निंदि॒ता मर्त्ये॑षु॒ ये अ॒स्माकं॑ पि॒तरो॒ गोषु॑ यो॒धाः ।
इंद्र॑ एषां दृंहि॒ता माहि॑नावा॒नुद्गो॒त्राणि॑ ससृजे दं॒सना॑वान् ॥४॥
न॒किः । ए॒षां॒ । निं॒दि॒ता । मर्त्ये॑षु । ये । अ॒स्माकं॑ । पि॒तरः॑ । गोषु॑ । यो॒धाः ।
इंद्रः॑ । ए॒षां॒ । दृं॒हि॒ता । माहि॑नऽवान् । उत् । गो॒त्राणि॑ । स॒सृ॒जे॒ । दं॒सना॑ऽवान् ॥४॥

हे इंद्र सत्रे प्रवृत्तानामस्माकं ये पितरोऽगिरसो गोषु पणिभिरपहृतेषु तन्निमित्तं योधा योद्धारो वर्तंते तेषामेषां मर्त्येषु निंदिता दूषको नकिर्न कश्चिदस्ति । कुत इत्यत आह । माहिनावान्महिमोपेतो दंसनावान्वृत्रहननादिकर्मवानिंद्र एषामंगिरसां दृंहितानि समृद्धानि गोत्राणि गवां वृंदान्युत्ससृजे । तेभ्योऽगिरोभ्यो ददौ ॥ निंदिता । णिदि कुत्सायामित्यस्य तृचि रूपं । मर्त्येषु । वस्वादित्वात्स्वार्थिको यत् । यतोऽनाव इत्याद्युदात्तत्वं । योधाः । युध संप्रहार इत्यस्य पचाद्यचि रूपं । दृंहिता । दृह दृहि वृद्धावित्यस्य निष्ठायां रूपं । माहिनावान् ।

महेरिनण्चेतीनणप्रत्ययः । तदस्यास्तीति मतुप् । माहिनावानिति तस्य संज्ञा । मतौ बह्वचोऽनजिरादीना-मिति संहितायां दीर्घः । गोत्राणि । गवां समूह इत्यर्थे खलगोरथादित्यनुवृत्तौ विनित्रकट्यचश्चेति गोशब्दात्त्र-प्रत्ययः । प्रत्ययस्वरः । ससर्ज । सृज विसर्ग इत्यस्य लिटि रूपं ॥

दशमेऽहनि निष्केवल्ये निविद्धानीयस्य पुरस्तात्सखा ह यत्रेत्येषा । सूत्रितं च । सखा ह यत्र सखिभिर्नवग्वै-रिति निविद्धानीययोराद्ये । आ० ८. ३. । इति ॥

सखा॑ ह॒ यत्र॒ सखि॑भि॒र्नव॑ग्वैरभि॒ज्ञ्वा सत्व॑भि॒र्गा अ॑नु॒ग्मन् ।
स॒त्यं तदिंद्रो॑ द॒शभि॒र्दश॑ग्वैः सूर्यं॑ विवेद॒ तम॑सि क्षि॒यन्तं॑ ॥ ५ ॥
सखा॑ । ह॒ । यत्र॑ । सखि॑ऽभिः । नव॑ऽग्वैः । अ॒भि॒ऽज्ञु । आ । सत्व॑ऽभिः । गाः । अ॒नु॒ऽग्मन् ।
स॒त्यं । तत् । इंद्रः॑ । द॒शऽभिः॑ । दश॑ऽग्वैः । सूर्यं॑ । वि॒वे॒द॒ । तम॑सि । क्षि॒यन्तं॑ ॥ ५ ॥

सखिभिः समानख्यानैः सत्वभिरिंद्रमभितः सीदद्भिर्नवग्वैः । मेधातिथिप्रभृतयोऽङ्गिरसः केचिन्नव मासा-न्सत्रमनुष्ठाय फलं लेभिरे केचिद्दश मासाननुष्ठायेति । तत्र ये नव मासान् सत्रमनुष्ठाय लब्धफला उदतिष्ठन् ते नवग्वाः । तैः सत्वभिरंगिरोभिः सखा समानख्यान इंद्रो यत्र यस्मिन्विले पणिभिर्निरुद्धा गा अभिलक्ष्याभिज्ञु अभिगतजानुकं यथा भवति तथानुग्मन् अन्वगच्छन्निंद्रस्तत्र विले दशग्वैः । ये दश मासान्सत्रमनुष्ठाय लब्धफ-ला उदतिष्ठन् ते दशग्वाः । दशभिर्दशसंख्याकैरंगिरोभिः सहितः सन् तमसि विलवर्तिन्यंधकारे क्षियंतं निवसंतं सत्यं यथार्थप्रकाशं सूर्यं विवेद । लेभे । ततो लब्धप्रकाशः स इंद्रस्ता गा आनीयांगिरोभ्यः प्रादादिति भावः ॥ सखा । ख्या प्रकथने । समाने ख्यश्चोदात्त इतीणप्रत्ययः । डिच्च । समानस्य छंदसीति समानस्य सभावः । उदात्त इत्युक्तेन सामर्थ्यादुपपदस्येति गम्यते । आद्युदात्तः । नवग्वैः । गमेरौणादिको ड्वप्रत्ययः । बहुव्रीहौ पूर्वपदस्वरः । अभिज्ञु । प्रसंभ्यां जानुनोर्ज्ञुरिति विधीयमानो ज्ञुरभेरुत्तरस्य व्यत्ययेन भवति । सत्वभिः । षद्लृ विशरणगत्यवसादनेष्वित्यस्मात् ईरमश्चोमृद चेति क्वनिप्रत्ययः । तुडागमः । नित्त्वादाद्युदात्तः । अनुग्मन् । गमेः शतरि बहुलं छंदसीति शपो लुकि कृते गमहनेत्यादिनोपधालोपः । प्रादिसमासः । शतृस्वरः । विवेद । विद ज्ञाने इत्यस्माल्लिटि णलि रूपं । क्षियंतं । क्षि निवासगत्योरित्यस्य शतरि रूपं ॥ ॥ २५ ॥

इंद्रो॒ मधु॒ संभृ॑तमु॒स्रिया॑यां प॒द्वद्वि॑वेद श॒फव॒न्नमे॒ गोः ।
गुहा॑ हि॒तं गुह्यं॑ गू॒ळ्हम॒प्सु हस्ते॑ दधे॒ दक्षि॑णे॒ दक्षि॑णावान् ॥ ६ ॥
इंद्रः॑ । मधु॑ । सम्ऽभृ॑तं । उ॒स्रिया॑यां । प॒त्ऽवत् । वि॒वे॒द॒ । श॒फऽव॑त् । नमे॑ । गोः ।
गुहा॑ । हि॒तं । गुह्यं॑ । गू॒ळ्हं । अ॒प्ऽसु । हस्ते॑ । द॒धे॒ । दक्षि॑णे । दक्षि॑णऽवान् ॥ ६ ॥

इंद्र उस्रियायां क्षीरदध्यादिक्रमेणोत्स्राविण्यां भोगवत्यां गवि संभृतं संपादितं मधु क्षीरादि विवेद । अज्ञासीत् । ततस्तदर्थं पद्वत्पादयुक्तं शफवत्खुरोपेतं गोधनं विवेद । लेभे । कथं लब्धवानिति तदुच्यते । नमे गोः । गोरिति द्वितीयार्थे षष्ठी । पणिनामकैरसुरैरपहृता गा नमे । आनीतामकरोत् । तथा दक्षिणावानौ-दार्यवान्समर्थः स इंद्रो गुहा गुहायां हितं गुह्यं प्रच्छन्नं अत एवाप्स्वंतरिक्षे गूढं गूढचारिणं मायिनमसुरं दक्षिणे हस्ते दधे । दधार । अग्रहीदित्यर्थः ॥ द्वितीयाष्टके । २. ६. ३ । श्रुधी हवमित्यस्मिन्वर्गे गुहा हितमित्ये-तत्सम्यगभ्यधायि । उस्रियाया प्रक्रिया सम्यक् पूर्वमेवावादि ॥ विवेद । विद ज्ञाने विद्लृ लाभे । एतयोर्लिटि रूपं । शफवत् । शफोऽस्यास्तीति मतुप् । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं । नमे । णम प्रह्वत्वे इत्यस्य लिटि रूपं । द्विर्वचनस्य छंदसि विकल्पितत्वादत्र द्विर्वचनाभावः । वाक्यभेदादनिघातः । गुह्यं । गुहू संवरणे इत्यस्मात् शंसिदुहिगुहिभ्यो वेति वक्तव्यमिति क्यप् । कित्त्वादगुणः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । दधे । दधातेर्लिटि रूपं । दक्षिणावान् । दक्ष वृद्धौ । द्रुदक्षिभ्यामिनन्निति इनन्प्रत्ययः । तदस्यास्तीति मतुप् । संहिता-यामन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घः । नित्स्वरः ॥

ज्योतिर्वृणीत तमसो विजानन्नारे स्याम दुरितादभीके ।
इमा गिरः सोमपाः सोमवृद्ध जुषस्वेंद्र पुरुतमस्य कारोः ॥७॥
ज्योतिः । वृणीत । तमसः । विऽजानन । आरे । स्याम । दुःऽइतात् । अभीके ।
इमाः । गिरः । सोमऽपाः । सोमऽवृद्ध । जुषस्व । इंद्र । पुरुऽतमस्य । कारोः ॥७॥

तमसो रात्रेः सकाशाद्विजानन्विशेषेण जानन प्रादुर्भवन्सूर्यात्मक इंद्रो ज्योतिर्वृणीत । जगद्व्यवहारनिर्वाहकं प्रकाशं समभजत् । यद्वा तमसस्तमोरूपाद्वृत्रादेर्विजानन प्रादुर्भवन् । वृत्रं हत्वा प्रकाशमवृणीत । वयं दुरितात्पापादारे दूरे पापवर्जिताः संतोऽभीके भयरहिते स्थाने स्याम । भवेम । सोमपाः सोमस्य पातरत एव सोमवृद्ध सोमपानेषु वृद्ध हे इंद्र पुरुतमस्य । पुरून्बहूञ्शत्रून् तामयति ग्लापयतीति पुरुतमः । तादृशस्य कारोः स्तोत्रं कुर्वाणस्य ऋत्विज इमाः स्तुतिलक्षणा गिरो वाचो जुषस्व । सेवस्व ॥ वृणीत । वृङ् संभक्तावित्यस्य लङि रूपं । विजानन । ज्ञा अवबोधने । विशेषेण ज्ञानं प्रकाशः । प्रत्ययस्वरः । अभीके । न विद्यते भीर्यस्मिन् । ततः शेषाद्विभाषा । पा० ५ ४ १५४ । इति कप्प्रत्ययः । नञ्सुभ्यामित्यंतोदात्तत्वे प्राप्ते कपि पूर्वं । पा० ६ २ १७३ । इति पूर्वस्यांतोदात्तत्वं । पुरुतमस्य । तमु ग्लाने इत्यस्माण्ण्यंतात्पचाद्यचि परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं ॥

ज्योतिर्यज्ञाय रोदसी अनु ष्यादारे स्याम दुरितस्य भूरेः ।
भूरि चिद्धि तुजतो मर्त्यस्य सुपारासो वसवो बर्हणावत् ॥८॥
ज्योतिः । यज्ञाय । रोदसी इति । अनु । स्यात् । आरे । स्याम । दुःऽइतस्य । भूरेः ।
भूरि । चित् । हि । तुजतः । मर्त्यस्य । सुऽपारासः । वसवः । बर्हणाऽवत् ॥८॥

हे इंद्र ज्योतिर्जगत्प्रकाशकः सूर्यो यज्ञायाग्निहोत्रादिकर्मकरणाय रोदसी द्यावापृथिव्यावनु ष्यात् । अनुभवतु । प्रकाशयतु । वयं भूरेः प्रभूतस्य दुरितस्य पापस्यारे दूरे स्याम । भवेम । हे वसवः सर्वस्य वासयितार इंद्रादयः सुपारासः सुपाराः शोभनपाराः स्तुत्याभिमुखीकर्तुं शक्या यूयं भूरि चिदतिप्रभूतं बर्हणावत्समृद्धियुक्तं धनं तुजतो भूरिप्रदस्य मर्त्यस्य प्रयच्छथ । अत्र योग्यक्रियाध्याहारः ॥ स्यात् । अस्तेर्लिङि रूपं । संहितायामनोरुत्तरस्यास्तेरुपसर्गप्रादुर्भ्यामस्तिर्यच्परः इति षत्वं । निघातः । तुजतः । तुजि पिजि लजि हिंसादाननिकेतनेषु । शतुरनुम इति विभक्तेरुदात्तत्वं । बर्हणावत् । वृहि वृद्धावित्यस्य भाव औणादिको युप्रत्ययः । प्रत्ययस्वरः ॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥९॥
शुनं । हुवेम । मघऽवानं । इंद्रं । अस्मिन् । भरे । नृऽतमं । वाजऽसातौ ।
शृण्वंतं । उग्रं । ऊतये । समत्ऽसु । घ्नंतं । वृत्राणि । संऽजितं । धनानां ॥९॥ ॥२६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके द्वितीयोऽध्यायः समाप्तः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

इंद्र त्वेति नवर्चं द्वितीयं सूक्तं वैश्वामित्रं गायत्रमैंद्रं । तथा चानुक्रांतं । इंद्र त्वा गायत्रं हीति ॥ अग्निष्टोमे प्रातःसवने ब्राह्मणाच्छंसिशस्त्र इदं सूक्तं । सूत्रितं च । इंद्र त्वा वृषभमुदु त्यदिमीति तिस्रः । आ॰ ५. १०. । इति ॥ आद्या प्रातःसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्या । सूत्रितं च । इंद्र त्वा वृषभं मरुतो यस्य । आ॰ ५. ५ । इति ॥

इंद्रं॑ त्वा वृष॒भं व॒यं सु॒ते सोमे॑ हवामहे । स पा॑हि॒ मध्वो॒ अंध॑सः ॥१॥

इंद्रं॑ । त्वा॒ । वृ॒ष॒भं । व॒यं । सु॒ते । सोमे॑ । ह॒वा॒म॒हे॒ । सः । पा॒हि॒ । मध्वः॑ । अंध॑सः ॥१॥

इंदो स्रवति सोमरसे रमते क्रीडतीतींद्रः । यद्वा इदं सर्वं जगत्साक्षाद्दर्शयतीतींद्रः । तस्य संबुद्धिः । हे इंद्र वृषभं कामानां वर्षकं त्वा त्वां सुते ग्रावभिरभिषुते सोमे वयं हवामहे । सोमपानार्थमाह्वयामः । स त्वं मध्वो मदकरमधसोऽन्नलक्षणं सोमं पाहि । पिब । इंद्रशब्दं यास्को बहुधा निर्विवच । इंद्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयत इति वेरां धारयत इति वेंदवे द्रवतीति वेंदौ रमत इति वेंद्धे भूतानीति वा । तद्यदेनं प्राणैः समैंधस्तदिंद्रस्येंद्रत्वमिति । यत्र यत्र योऽर्थोऽनुगुणस्तत्र सोऽर्थः स्वीकार्यः । इदंदर्शनादित्यौपमन्यवः । इदं ब्रह्म साक्षात्पश्यतीतींद्रः । तथा चारण्यके श्रूयते । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीऽ३ । तस्मादिदंद्रो नामेदंद्रो ह वै नाम तमिदंद्रं संतमिंद्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः । ऐ॰ आ॰ २. ४. ३ । इति ॥ इंद्र । इदि परमैश्वर्ये इति धातुः । स्वमायया जगद्रूपत्वं परमैश्वर्यं । अनेनाभिप्रायेण श्रूयते । इंद्रो मायाभिः पुरुरूप ईयत इति । इंदुशब्द उपपदे रमतेरन्येभ्योऽपि दृश्यत इति डः । पूर्वपदस्योकारलोपः । इदि परमैश्वर्ये इत्यस्मादृज्रेंद्राग्रेत्यादिना रन्प्रत्ययांतत्वेन निपातितः । एवमेतानि निर्वचनानि द्रष्टव्यानि । आमंत्रितायुदात्तत्वं । हवामहे । ह्वयतेर्बहुलं छंदसीति संप्रसारणं लटि रूपं । मध्वः । मधुशब्दः फलिपाटीत्यादिनोन्प्रत्ययांतः । आगमानुशासनस्यानित्यत्वान्नुमभावः । संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः । यणादेशः । अंधसः । अदेर्नुम् धश्चेत्यसुन् । नित्स्वरः ॥

ब्राह्मणाच्छंसिनः प्रातःसवने इंद्र क्रतुविदमिति शस्त्रयाज्या । सूत्रितं च । इंद्र क्रतुविदं सुतमिति याज्या । आ॰ ५ १० । इति ॥

इंद्र॑ क्रतु॒विदं॑ सु॒तं सोमं॑ हर्य पुरुष्टुत । पिबा॒ वृष॑स्व॒ तातृ॑पिं ॥२॥

इंद्र॑ । क्र॒तु॒ऽविदं॑ । सु॒तं । सोमं॑ । ह॒र्य॒ । पु॒रु॒ऽस्तु॒त॒ । पिब॑ । आ । वृ॒ष॒स्व॒ । तातृ॑पिं ॥२॥

हे इंद्र क्रतुविदं क्रतोः प्रज्ञाया लंभकं सुतमभिषुतमिमं सोमं हर्य । पातुं कामयस्व । हे पुरुष्टुत पुरुभिर्बहुभिः स्तुतेंद्र तातृपिं तर्पकमाप्यायनकारिणमिमं सोमं पिब । पीतमिमं सोममा वृषस्व । जठरे सिंच । यथा नाभेरधो न पतति तथा धारयेति भावः ॥ हर्य । हर्य गतिकांत्योरित्यस्य लोटि रूपं । निघातः । पुरुष्टुत । स्तुतस्तोमयोश्छंदसीति संहितायां षत्वं । वृषस्व । वृषु सेचने इत्यस्य लोटि रूपं । आङ उत्तरत्वान्निघातः । तातृपिं । तृप प्रीणने इत्यस्माच्छंदसि सदादिभ्यो दर्शनादिति किन् । तस्य लिड्वद्भावाद्विर्वचनादि । संहितायामन्येषामपीत्यभ्यासस्य दीर्घः । नित्वादाद्युदात्तः ॥

इंद्र॒ प्र णो॑ धि॒तावा॑नं य॒ज्ञं विश्वे॑भिर्दे॒वेभिः॑ । ति॒र स्त॑वान विश्पते ॥३॥

इंद्र॑ । प्र । नः॒ । धि॒तऽवा॑नं । य॒ज्ञं । विश्वे॑भिः । दे॒वेभिः॑ । ति॒र । स्त॒वा॒न॒ । वि॒श्प॒ते॒ ॥३॥

हे स्तवान स्तोतृभिः स्तूयमान विश्पते विशां मरुतां पते हे इंद्र विश्वेभिर्देवेभिः सर्वैर्यजनीयैर्देवैः सहितस्त्वं धितावानं । वन्यते संभज्यत इति वानं हविः । धितं निहितं हविर्यस्य तं । संभृतहविष्कमित्यर्थः । अस्मदीयमिमं

यज्ञं प्र तिर । प्रकर्षेण वर्धय । हविःस्वीकरणेन संपूर्णं कुर्विति भावः ॥ णः । उपसर्गाद्बहुलमिति संहितायां णत्वं । धितावानं । डुधाञ् धारणपोषणयोरित्यस्मान्निष्ठा । बहुव्रीहौ पूर्वपदस्वरः । तिरः । तरतेर्व्यत्ययेन शः । प्रत्ययस्वरः । सुवान । षुञ् सुतौ । सुस्थानच सुव इत्युपपदाभावेऽपि कर्मण्यानचप्रत्ययः । आमंत्रितत्वान्निघातः ॥

इंद्र सोमाः सुता इमे तव प्र यंति सत्पते । क्षयं चंद्रास इंदवः ॥४॥

इंद्र । सोमाः । सुताः । इमे । तव । प्र । यंति । सत्ऽपते । क्षयं । चंद्रासः । इंदवः ॥४॥

हे सत्पते इंद्र चंद्रास आह्लादयितार इंदवो दीप्ताः सुता अभिषुता इमेऽस्माभिर्दत्ताः सोमाः क्षयं । क्षियंति निवसंत्यन्नादीन्यत्रेति क्षयो जठरं । प्र यंति । प्रकर्षेण गच्छंति । तान् धारयेति भावः ॥ क्षयं । क्षि निवासगत्योरित्यस्मादधिकरणे घप्रत्ययः । प्रत्ययस्वरेणांतोदात्तत्वे प्राप्ते क्षयो निवास इत्याद्युदात्तत्वं । चंद्रासः । चदि आह्लादने दीप्तौ च । अस्मात्स्फायितंचीत्यादिना रक्प्रत्ययः । आज्जसेरसुगित्यसुक् । प्रत्ययस्वरः । इंदवः । उंदेरिच्चादेरित्युप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तः ॥

दधिष्वा जठरे सुतं सोममिंद्र वरेण्यं । तव द्युक्षास इंदवः ॥५॥

दधिष्व । जठरे । सुतं । सोमं । इंद्र । वरेण्यं । तव । द्युक्षासः । इंदवः ॥५॥

हे इंद्र वरेण्यं सर्वैर्वरणीयं सुतमभिषुतं सोमं जठरे दधिष्व । धारय । इंदवो दीप्ता इमे सोमास्तव द्युक्षासः । दिवि क्षियंति निवसंतीति द्युक्षासः । अतस्त्वं तान् धारयेति भावः ॥ दधिष्व । दधातेर्लोटि रूपं । आगमा अनुदात्ता इतीटोऽनुदात्तत्वात्प्रत्ययस्वरः । वरेण्य । वृङ् संभक्तौ । वृङ एण्य इत्येण्यप्रत्ययः । वृषादित्वादाद्युदात्तः । द्युक्षासः । क्षियतेरन्येभ्योऽपि दृश्यत इति डप्रत्ययः । कृदुत्तरपदस्वरः ॥ ॥१॥

गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे । इंद्र त्वादातमिद्यशः ॥६॥

गिर्वणः । पाहि । नः । सुतं । मधोः । धाराभिः । अज्यसे । इंद्र । त्वाऽदातं । इत् । यशः ॥६॥

गिर्वणो गीर्भिर्वननीय । तथा च यास्कः । गिर्वणा देवो भवति गीर्भिरेनं वनयंति । नि० ६. १४ । इति । तादृशेंद्र नोऽस्मदीयं सुतमभिषुतमिमं सोमं पाहि । पिब । यतो मधोर्मदकरस्य सोमस्य धाराभिरज्यसे सिच्यसे हे इंद्र त्वादातमित्त्वया शोधितं विशदीकृतमेव यशोऽन्नमस्मासु भवति ॥ गिर्वणः । वन संभक्ताविति अस्मादसुन् । गिर उपधाया दीर्घाभावश्छांदसः । आमंत्रितस्येति षाष्ठिकमाद्युदात्तत्वं । पाहि । पा पान इत्यस्माल्लोटि रूपं । आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । प्रत्ययस्वरः । त्वादातं । दैप् शोधने । सत्यपि पकारे नानुबंधकृतमनेजंतत्वमित्येजंत एवायं । तत आदेच इत्यात्वं । अस्मात्कर्मणि क्तः । दाधा घ्वदाबित्यत्रादाबिति प्रतिषेधेन घुसंज्ञाया अभावाद्दो दद्घोरिति ददादेशो न भवति । त्वेति युष्मच्छब्दस्य तृतीया कर्तृकरणे कृता बहुलमिति समासः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः । यशः । अशू व्याप्तौ । अशेर्युट्चेत्यसुन् । तत्संनियोगेन धातोर्युडागमः । नित्त्वादाद्युदात्तः ॥

अभि द्युम्नानि वनिन इंद्रं सचंते अक्षिता । पीत्वी सोमस्य वावृधे ॥७॥

अभि । द्युम्नानि । वनिनः । इंद्रं । सचंते । अक्षिता । पीत्वी । सोमस्य । ववृधे ॥७॥

वनिनः । वनं देवताविषयं संभजनमस्यास्तीति वनी । तस्य देवान् संभजमानस्य यजमानस्य द्युम्नानि द्योतमानान्यक्षिता क्षयरहितानि संपूर्णानि सोमादीनि हवींषींद्रमभि अभितः सचंते । समवयंति । तेषु मध्ये सोमस्य पीत्वी सोमं पीत्वा वावृधे । स इंद्रो वर्धते ॥ वनिनः । अत इनिठनाविति इनिप्रत्ययः । तस्य स्वरः । सचंते । षच समवाये इत्यस्य लटि रूपं । अक्षिता । क्षि क्षय इत्यस्य निष्ठा । अत्र ण्यदर्थे इति दीर्घाभावः । तस्मादेव क्षियो दीर्घादिति निष्ठानत्वाभावः । नञा समासे तस्य स्वरः । पीत्वी । पा पाने इत्यस्मात् क्त्वाप्रत्ययस्य स्नात्व्यादयश्चेति निपातनात् त्वी इत्यादेशः । प्रत्ययस्वरः । घुमास्थागापेत्यादिना ईत्वं ॥

अर्वावतो न आ गहि परावतश्च वृत्रहन् । इमा जुषस्व नो गिरः ॥८॥
अर्वाऽवतः । नः । आ । गहि । पराऽवतः । च । वृत्रऽहन् । इमाः । जुषस्व । नः । गिरः ॥८॥

हे वृत्रहन्निंद्र अर्वावतोऽर्वाचीनात्समीपाद्देशात्परावतोऽतिदूराद्देशाद्वा नोऽस्मानभिलक्ष्या गहि । आगच्छ । आगत्य च नोऽस्मदीया इमाः स्तुतिलक्षणा गिरो वाचो जुषस्व । सेवस्व ॥ परावतः । उपसर्गाच्छंदसि धात्वर्थ इति वतिः । प्रत्ययस्वरः ॥

यदंतरा परावतमर्वावतं च हूयसे । इंद्रेह तत आ गहि ॥९॥
यत् । अंतरा । पराऽवतं । अर्वाऽवतं । च । हूयसे । इंद्र । इह । ततः । आ । गहि ॥९॥

हे इंद्र यद्यस्मिन्परावतमतिविप्रकृष्टस्य देशस्यार्वावतं संनिकृष्टस्य देशस्य चांतरा तयोर्मध्यदेशे हूयसे सम्यगाहूयसे ततस्तस्माद्देशादिहास्मिन्यज्ञ आ गहि । सोमपानार्थमागच्छ ॥ परावतं अर्वावतं । अंतरांतरेण युक्ते । पा॰ २ ३ ४ । इति द्वितीया । ततः । पंचम्यास्तसिल् । लित्स्वरः ॥ ॥२॥

आ तू न इंद्रेति नवर्चं तृतीयं सूक्तं वैश्वामित्रं गायत्रमैंद्रं । आ तू न इत्यनुक्रांतं ॥ अतिरात्रे द्वितीये पर्याये ब्राह्मणाच्छंसिशस्त्र एतदादिके द्वे सूक्ते । सूत्रितं च । आ तू न इंद्र मद्र्यगिति सूक्ते । आ॰ ६ ४ । इति ॥

आ तू न इंद्र मद्र्यग्घुवानः सोमपीतये । हरिभ्यां याह्यद्रिवः ॥१॥
आ । तु । नः । इंद्र । मद्र्यक् । हुवानः । सोमऽपीतये । हरिऽभ्यां । याहि । अद्रिऽवः ॥१॥

हे अद्रिवो हे वज्रिन् हे इंद्र हुवानो होतृभिराहूयमानस्त्वं मद्र्यक् मदभिमुखः सन् नोऽस्मदीये यज्ञे सोमपीतये सोमपानार्थं हरिभ्यामश्वाभ्यां सह तु क्षिप्रमा याहि ॥ तु । ऋचि तुनुघेत्यादिना संहितायां दीर्घः । मद्र्यक् । मामंचतीति ऋत्विग्दधृगित्यादिना क्विन् । प्रत्ययोत्तरपदयोश्चेत्यस्मच्छब्दस्यैकवचने मपर्यंतस्य मादेशः । विष्वग्देवयोश्च टेरद्र्यंचतौ वप्रत्यये इति टेरद्रि इत्यादेशः । अद्रिमध्योरंतोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थमिति वचनादद्र्यादेशोऽतोदात्तः । यणादेशे कृते उदात्तस्वरितयोर्यण इति यणः स्वरितत्वं । क्विन्प्रत्ययस्य कुरिति कुत्वं । सोमपीतये । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं । अद्रिवः । मतुवसोरिति रुत्वं । आमंत्रितत्वान्निघातः ॥

सत्तो होता न ऋत्वियस्तिस्तिरे बर्हिरानुषक् । अयुंजन्प्रातरद्रयः ॥२॥
सत्तः । होता । नः । ऋत्वियः । तिस्तिरे । बर्हिः । आनुषक् । अयुंजन् । प्रातः । अद्रयः ॥२॥

हे इंद्र सोऽस्मदीये यज्ञे होता ऋत्विक् तवाह्वानार्थमृत्वियः प्राप्तकालः सन् सत्तो निषण्णो वर्तते । तथा बर्हिरानुषक् अनुषक्तं परस्परसंबद्धं यथा भवति तथा तिस्तिरे । हविष्पात्रेषु स्तीर्णमभूत् । तथा प्रातः प्रातःसवने सोमाभिषवार्थमद्रयो ग्रावाणोऽयुंजन् । परस्परं संगता अभूवन् । तस्मात्सोमपानार्थं त्वमागच्छेति भावः ॥ सत्तः । षद्लृ विशरणादिष्वित्यस्माद्गत्यर्थाकर्मकश्लिषेत्यादिना । पा॰ ३ ४ ७२ । कर्तरि क्तः । सर्वविधीनां छंदसि विकल्पितत्वादत्र निष्ठातकारस्य नत्वाभावः । ऋत्वियः । ऋतुशब्दाच्छंदसि घसिति घस्प्रत्ययः । घस्येयादेशः । सितीति पदसंज्ञायामोर्गुण इति भसंज्ञाधीनो गुणो न भवति । यणादेशः । प्रत्ययस्वरः । तिस्तिरे । स्तृञ् आच्छादने इत्यस्य कर्मणि लिट्यृत इद्धातोरितीत्वं । द्विर्वचने शर्पूर्वाः खय इति तकारस्य शेषः । लिट्सिद्धयोरिरिशंरजीति तप्रत्ययस्येशित्यादेशः । पादादित्वादनिघातः । प्रत्ययस्वरः । आनुषक् । षंज संगे । क्विप् । अनिदितामिति नलोपः । आङन्वोरुपसर्गयोः प्राक्प्रयोगः । गतिसमासः । कृदुत्तरपदस्वरः । अयुंजन् । युजिर् योगे इत्यस्य लुङि च्लेरिरितो वेत्यङादेशः । बहुलं छंदसीति रुडागमः । पादादित्वादनिघातः । रुडागमस्वरः ॥

इमा ब्रह्म ब्रह्मवाहः क्रियंत आ बर्हिः सीद । वीहि शूर पुरोळाशं ॥३॥
इमा । ब्रह्म । ब्रह्मऽवाहः । क्रियंते । आ । बर्हिः । सीद । वीहि । शूर । पुरोळाशं ॥३॥

ब्रह्माणि स्तोत्राणि स्तुत्यतया वहतीति ब्रह्मवाहा ब्रह्मणा स्तोत्रेण प्राप्यत इति वा । हे ब्रह्मवाह इंद्र तुभ्यमिमेमानि ब्रह्म ब्रह्माणि स्तोत्राण्यस्माभिः क्रियंते । अतो बर्हिरा सीद । स्तुत्यतया बर्हिषि यज्ञ उपविश । हे शूर समर्थेंद्रास्माभिर्दीयमानमिमं पुरोडाशं पुरोडाशाख्यं हविर्वीहि । भक्षय ॥ ब्रह्मवाहः । वह प्रापणे इत्यस्माद्वहिहाधाञ्भ्यश्छंदसीत्यसुन् । णिदित्यनुवृत्तेरुपधावृद्धिः । आमंत्रितत्वान्निघातः । क्रियंते । करोतेः कर्मणि यक् । रिङ् शयग्लिङ्क्ष्विति रिङादेशः । प्रत्ययस्वरः । पादादित्वादनिघातः । बर्हिः । कालाध्वनोरत्यंतसंयोगे द्वितीया । वीहि । वी कांत्यादिषु । लोटि रूपं । हेर्ङित्त्वादुदात्तः । पुरोळाशं । दाशृ दाने इत्यस्मात्पुरःपूर्वान्मंत्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् । पुरो दाशत एनमिति । निपातनाद्दकारस्य डकारः । कृदुत्तरपदस्वरः ॥

रारंधि सवनेषु ण एषु स्तोमेषु वृत्रहन् । उक्थेष्विंद्र गिर्वणः ॥४॥
रारंधि । सवनेषु । नः । एषु । स्तोमेषु । वृत्रऽहन् । उक्थेषु । इंद्र । गिर्वणः ॥४॥

हे गिर्वणो गीर्भिः स्तुतिभिर्वननीय वृत्रहन् वृत्रस्य हंतरिंद्र नोऽस्माकं सर्वेष्वपि त्रिषु सवनेष्वेषु क्रियमाणेषु स्तोमेषु स्तोत्रेषूक्थेषु शस्त्रेषु च रारंधि । रमस्व ॥ रारंधि । रमतेर्लोटि बहुलं छंदसीति शपः श्लुः । छंदस्युभयथेति हेरार्धधातुकत्वेनाङित्त्वादङितश्चेति हेर्धिः । सवनेषु । सूयंते सोमा येष्विति अधिकरणे सुनोतेर्ल्युट् । लित्स्वरः । णः । नसो नकारस्य नश्च धातुस्थोरुषुभ्य इति संहितायां णत्वं ॥

मतयः सोमपामुरुं रिहंति शवसस्पतिं । इंद्रं वत्सं न मातरः ॥५॥
मतयः । सोमऽपां । उरुं । रिहंति । शवसः । पतिं । इंद्रं । वत्सं । न । मातरः ॥५॥

हे इंद्र मतयोऽस्माभिः क्रियमाणाः स्तुतय उरुं महांतं सोमपां सोमस्य पातारं शवसो बलस्य पतिमिंद्रं त्वा रिहंति । लिहंति । तत्र दृष्टांतः । वत्सं न । यथा वत्सं मातरो धेनवो लिहंति तद्वत् ॥ मतयः । मन ज्ञाने इत्यस्मात्कर्मणि मंत्रे वृषेत्यादिना क्तिन्नुदात्तः । उरुं । ऊर्णुञ् आच्छादने इत्यस्मान्महत्त्वार्थे गम्यमाने महति ह्रस्वश्च । उ॰ १. ३२ । इति कुप्रत्ययो धातोर्ह्रस्वश्च । प्रत्ययस्वरः । रिहंति । लिह आस्वादने इत्यस्य लटि रूपं । रलयोरभेदः । प्रत्ययस्वरः । शवसस्पतिमिति संहितायां षष्ठ्याः पतिपुत्रपृष्ठेत्यादिना विसर्जनीयस्य सत्वं । वत्सं । वद व्यक्तायां वाचि । अस्माद्वृतृवदिहनीत्यादिना सप्रत्ययः । वदत्यभीक्ष्णं मातरमिति वत्सो गोबालः । प्रत्ययस्वरः ॥ ॥ ३ ॥

स मंदस्वा ह्यंधसो राधसे तन्वा महे । न स्तोतारं निदे करः ॥६॥
सः । मंदस्व । हि । अंधसः । राधसे । तन्वा । महे । न । स्तोतारं । निदे । करः ॥६॥

हे इंद्र स तथाविधस्त्वं महे महते राधसे धनायांधसोऽस्माभिर्दीयमानस्य सोमस्य पानेन तन्वा शरीरेण सह मंदस्व । हृष्टो भव । हिरत्र समुच्चयार्थः । किंच त्वं स्तोतारं मां निदे निंदायै विषयभूतं न करः । मा कार्षीः ॥ मंदस्व । मदि स्तुत्यादिष्वित्यस्य लोटि रूपं । हि चेति निघातप्रतिषेधेन भवितव्यमिति चेन्न । तत्राप्रातिलोम्य इति वर्तते । अत्र हिः समुच्चयार्थत्वान्निघातः । तन्वा । उदात्तस्वरितयोर्यण इति स्वरितत्वं । महे । तकारलोपश्छांदसः । बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वं । निदे । णिदि कुत्सायामित्यस्मात्संपदादिलक्षणो भावे क्विप् । आगमानुशासनस्यानित्यत्वान्नुमभावः । सावेकाच इति विभक्तेरुदात्तत्वं । करः । करोतेर्लेटि च्लेः कृमृदृरुहिभ्यश्छंदसीत्यङादेशः । निघातः ॥

वयमिंद्र त्वायवो हविष्मंतो जरामहे । उत त्वमस्मयुर्वसो ॥७॥
वयं । इंद्र । त्वाऽयवः । हविष्मंतः । जरामहे । उत । त्वं । अस्मऽयुः । वसो इति ॥७॥

हे इंद्र त्वायवो यज्ञार्थं त्वामात्मन इच्छंतस्त्वत्कामाः संतो हविष्मंतः संभृतहविष्का वयं जरामहे। त्वां स्तुमः। हे वसो सर्वस्य वासक इंद्र उत त्वमप्यस्मयुरस्मदीयहविःस्वीकरणार्थमस्मानात्मन इच्छन्भव॥ त्वायवः। त्वामिच्छंतीत्यर्थे सुप आत्मनः क्यच्। प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः। क्याच्छंदसीत्युप्रत्ययः। त्वद्यव इति प्राप्ते युष्मदस्मदोरनादेश इत्यविभक्तावपि हलादौ व्यत्ययेनात्वं। प्रत्ययस्वरः। हविष्मंतः। तसौ मत्वर्थ इति भसंज्ञायां सकारस्य रुत्वाभावः। स्वरविधौ व्यंजनमविद्यमानवदिति परिभाषानाश्रयणान्मतुप उदात्तत्वाभावः। इसिप्रत्ययस्वरः। जरामहे। जरतिः स्तुतिकर्मेति यास्कः। अस्मयुः। अस्मानिच्छतीत्यर्थे सुपः क्यच्। तस्मादुप्रत्ययः। पूर्वपदांतलोपश्छांदसः। प्रत्ययस्वरः॥

मारे अस्मद्वि मुमुचो हरिप्रियार्वाङ्याहि। इंद्र स्वधावो मत्स्वेह॥८॥

मा। आरे। अस्मत्। वि। मुमुचः। हरिऽप्रिय। अर्वाङ्। याहि। इंद्र। स्वधाऽवः। मत्स्व। इह॥८॥

हे हरिप्रिय हरी अश्वौ प्रियौ यस्य तादृश हे इंद्र अस्मदस्मत्त आरे दूरे रथे योजितावश्वौ मा वि मुमुचः। मा विमोचय। ताभ्यामुपेत एवार्वाङ् अस्मदाभिमुख्येन याहि। आगच्छ। हे स्वधावः सोमलक्षणान्नवन्निंद्र इहास्मिन्देवयजने मत्स्व। सोमं पीत्वा हृष्टो भव॥ अस्मत्। अस्मच्छब्दस्य पंचमीबहुवचनस्य पंचम्या अत्। पा॰ ७. १ ३१। इत्यदादेशः। मुमुचः। मुच्लृ मोक्षण इत्यस्य ण्यंतस्य छांदसे लुङि चङि रूपं। अभ्यासस्य दीर्घाभावश्छांदसः। न माङ्योग इत्यडभावः। निघातः। हरिप्रिय। आमंत्रितस्य पादादित्वात्षाष्ठिकमाद्युदात्तत्वं। मत्स्व। मदि स्तुत्यादिष्वित्यस्य लोटि बहुलं छंदसीति विकरणस्य लुक्। आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः॥

अर्वाचं त्वा सुखे रथे वहतामिंद्र केशिना। घृतस्नू बर्हिरासदे॥९॥

अर्वाचं। त्वा। सुऽखे। रथे। वहतां। इंद्र। केशिना। घृतस्नू इति घृतऽस्नू। बर्हिः। आऽसदे॥९॥

हे इंद्र घृतस्नू श्रमजनितजलप्रस्रवणयुक्तौ केशिना केशिनौ स्कंधप्रदेशे लंबमानकेशयुक्तौ हरी आसदे आसदनीयं बर्हिरभिलक्ष्य सुखे सुखकरे रथेऽर्वाचमस्मदभिमुखं त्वा त्वां वहतां॥ अर्वाच। अंचतेः क्विन्युगिदचामिति नुम्। वहतां। वहेर्लोटि रूपं। तसो लसार्वधातुकस्वरे कृते धातुस्वरः। आसदे। सदेः कृत्यार्थे केन्प्रत्ययः। नित्स्वरः। कृदुत्तरपदप्रकृतिस्वरः॥ ॥४॥

उप नः सुतमिति नवर्चं चतुर्थं सूक्तं वैश्वामित्रं गायत्रमैंद्रं। उप न इत्यनुक्रमणिका। पूर्वसूक्तेन सहोक्तो विनियोगः॥

उप नः सुतमा गहि सोममिंद्र गवाशिरं। हरिभ्यां यस्ते अस्मयुः॥१॥

उप। नः। सुतं। आ। गहि। सोमं। इंद्र। गोऽआशिरं। हरिऽभ्यां। यः। ते। अस्मऽयुः॥१॥

हे इंद्र नोऽस्मदीयं सुतमभिषुतं गवाशिरं पयसा मिश्रितं सोमं प्रति उपा गहि। समीप आगच्छ। यतो हरिभ्यामश्वाभ्यां युक्तस्तव रथोऽस्मयुरस्मान्कामयमानो वर्तते॥ गवाशिर। आङ्पूर्वस्य श्रीणातेः क्विप्यपस्पृधेथामानृचुरित्यादिनाशिरित्यादेशः। बहुव्रीहौ पूर्वपदस्वरः॥

तमिंद्र मदमा गहि बर्हिःष्ठां ग्रावभिः सुतं। कुविन्न्वस्य तृप्णवः॥२॥

तं। इंद्र। मदं। आ। गहि। बर्हिःऽस्थां। ग्रावऽभिः। सुतं। कुवित्। नु। अस्य। तृप्णवः॥२॥

हे इंद्र ग्रावभिः सुतमभिषुतं बर्हिःष्ठां बर्हिषि स्थितं मदं। मद्यतेऽनेनेति मदः सोमः। तमिमं सोममा गहि।

आगच्छ। कुवित्प्रभूतं यथा भवति तथास्य सोमस्य पाने नु क्षिप्रं तृप्णवः। तृप्तो भव ॥ मदं। मदी हर्षे। मदोऽनुपसर्ग इत्यप्प्रत्ययः। तस्य पित्त्वादनुदात्तत्वे धातुस्वरः। बर्हिःष्ठां। ष्ठा गतिनिवृत्तौ। क्विप्। संहितायां पूर्वपदसकारस्यादेशप्रत्यययोरिति षत्वं। ष्टुत्वं। कृदुत्तरपदस्वरः। तृप्णवः। तृप प्रीणन इत्यस्य लेट्यडागमः। कुविद्योगादनिघातः। क्षुभ्नादिषु नृनमन तृप्नोतीति पठितं। तथापि सर्वविधीनां छंदसि विकल्पितत्वादत्र णत्वप्रतिषेधो न भवति। प्रत्ययस्वरः ॥

इंद्रमित्था गिरो ममाच्छागुरिषिता इतः। आवृते सोमपीतये ॥३॥

इंद्रं। इत्था। गिरः। मम। अच्छ। अगुः। इषिताः। इतः। आऽवृते। सोमऽपीतये ॥३॥

हे इंद्र इषितास्त्वदर्थं प्रेरिता इत्थेत्थमनेन प्रकारेणोच्यमाना मम गिरः स्तुतिलक्षणा वाच इंद्रं त्वामितोऽस्माद्देवयजनदेशादच्छागुः। आभिमुख्येन गच्छतु। किमर्थं। सोमपीतये सोमपानार्थमावृते त्वामावर्तयितुं ॥ इत्था। इदंशब्दात्था हेतौ च छंदसीति व्यत्ययेन थाप्रत्ययः। इदम एतेतौ रथोरितीदित्यादेशः। प्रत्ययस्वरः। अच्छ। अच्छ गत्यर्थवदेष्विति गतिसंज्ञा। अगुः। इण् गतावित्यस्य लुङि रूपं। निघातः ॥

इंद्रं सोमस्य पीतये स्तोमैरिह हवामहे। उक्थेभिः कुविदागमत् ॥४॥

इंद्रं। सोमस्य। पीतये। स्तोमैः। इह। हवामहे। उक्थेभिः। कुवित्। आऽगमत् ॥४॥

स्तोमैस्त्रिवृत्पंचदशादिस्तोमसाध्यैः स्तोत्रैरुक्थेभिरुक्थैः शस्त्रैश्चेह कर्मणि सोमस्य पीतये सोमपानार्थमिंद्रं हवामहे। वयमाह्वयामः। कुविद्बहुवारमाहूतः स इंद्र आगमत्। यज्ञं प्रत्यागच्छतु ॥ आगमत्। गमेर्लेट्यडागमः। आगमा अनुदात्ता इत्यटोऽनुदात्तत्वाद्धातुस्वरः। तिङि चोदात्तवतीति गतेर्निघातः। कुविद्योगादनिघातः ॥

इंद्र सोमाः सुता इमे तान्दधिष्व शतक्रतो। जठरे वाजिनीवसो ॥५॥

इंद्र। सोमाः। सुताः। इमे। तान्। दधिष्व। शतक्रतो इति शतऽक्रतो। जठरे। वाजिनीवसो इति वाजिनीऽवसो ॥५॥

हे शतक्रतो इंद्र इमे सोमाः सुताः। ग्रावभिस्त्वदर्थमभिषुताः। हे वाजिनीवसो अन्नधन। यद्वा। वाजोऽन्नमासु फलत्वेनास्तीति वाजिन्यः क्रियाः। तासां वासक हे इंद्र तान्सोमरसान् जठरे दधिष्व। धारय ॥ वाजिनीवसो। वाजशब्दान्मत्वर्थेऽत इनिठनाविति इनिप्रत्ययः। ऋन्नेभ्यो ङीबिति ङीप्। तासां वसो। सवृ‌ड्डा चेति गुणः। आमंत्रितत्वादाष्टमिकमनुदात्तत्वं ॥ ॥५॥

विद्मा हि त्वा धनंजयं वाजेषु दधृषं कवे। अधा ते सुम्नमीमहे ॥६॥

विद्म। हि। त्वा। धनंऽजयं। वाजेषु। दधृषं। कवे। अध। ते। सुम्नं। ईमहे ॥६॥

हे कवे क्रांतदर्शिन्निंद्र वाजेषु युद्धेषु दधृषं शत्रूणामभिभवितारं अत एव धनंजयं। धनं जयतीति धनंजयः। तादृशं त्वा त्वां विद्म हि। जानीमः खलु। अधानंतरं ते तव सुम्नं धनमीमहे। याचामहे ॥ विद्म। विदेर्लटि विदो लटो वेति मसो मादेशः। पादादित्वादनिघातः। धनंजय। जि जय इत्यस्माद्धने उपपदे संज्ञायां भृतवृजिधारिसहितपिदम इति खच्प्रत्ययः। अरुर्द्विषदजंतस्य मुमिति पूर्वपदस्य मुमागमः। चित्त्वादंतोदात्तः। दधृषं। ञिधृषा प्रागल्भ्ये इत्यस्य यङ्लुगभ्यासस्य रीगभावश्छांदसः। तदंतात्पचाद्यचि यङोऽचि चेति यङो लुक्। लघूपधगुणे प्राप्ते न धातुलोप इति तस्य प्रतिषेधः। चित्त्वादंतोदात्तः ॥

इममिंद्र गवाशिरं यवाशिरं च नः पिब। आगत्या वृषभिः सुतं ॥७॥

इमं। इंद्र। गोऽआशिरं। यवऽआशिरं। च। नः। पिब। आऽगत्य। वृषऽभिः। सुतं ॥७॥

हे इंद्र गवाशिरं गव्यमिश्रणोपेतं सोमं तथा यवाशिरं यवमिश्रणोपेतं वृषभिर्ग्रावभिः सुतमभिषुतं नो ऽस्मदीयमिमं सोमं देवयजनमागत्य पिब ॥ गवाशिरं यवाशिरमित्यत्र आङ्पूर्वस्य श्रीणातेः क्विप्यपस्पृधेथा-मानृचुरित्यादिनाशिरित्यादेशः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥

तुभ्येदिंद्र स्व ओक्ये३ सोमं चोदामि पीतये । एष रारंतु ते हृदि ॥८॥

तुभ्यं । इत् । इंद्र । स्वे । ओक्ये । सोमं । चोदामि । पीतये । एषः । ररंतु । ते । हृदि ॥८॥

हे इंद्र तुभ्येत्तुभ्यमेव पीतये पानार्थं स्वे स्वकीय ओक्ये स्थाने जठरेऽभिषुतमिमं सोमं चोदामि । प्रेरयामि । एष पीतः सोमस्तव हृदि हृदये ररंतु । अत्यर्थं रमतां ॥ तुभ्य । युष्मच्छब्दस्य चतुर्थ्येकवचने तुभ्यमह्याविति तुभ्यादेशः । सुपां सुलुगिति सुपो लुक् । ङयि चेत्याद्युदात्तः । ओक्ये । वस्वादित्वात्स्वार्थिको यत्प्रत्ययः । तित्स्वरितः । चोदामि । चुद प्रेरणे । ण्यंतस्य लटि रूपं । बहुलमन्यत्रापीति णिलुक् । निघातः । रारंतु । रमु क्रीडायामित्यस्य यङ्लुकि लोटि सर्वविधीनां छंदसि विकल्पितत्वादत्राभ्यासस्य नुमभावः । संहितायामन्येषामपीत्यभ्यासस्य दीर्घः । निघातः । हृदि । हृदयशब्दस्य पद्दन्नोमास्हृदित्यादिना हृदादेशः । ऊडिदमिति विभक्तेरुदात्तत्वं ॥

त्वां सुतस्य पीतये प्रत्नमिंद्र हवामहे । कुशिकासो अवस्यवः ॥९॥

त्वां । सुतस्य । पीतये । प्रत्नं । इंद्र । हवामहे । कुशिकासः । अवस्यवः ॥९॥

हे इंद्र अवस्यवस्त्वत्तो रक्षणमिच्छंतः कुशिकासः कुशिकगोत्रोत्पन्ना वयं सुतस्य ग्रावभिरभिषुतस्य सोमस्य पीतये पानार्थं प्रत्नं पुरातनं त्वा हवामहे । स्तुतिलक्षणाभिर्गीर्भिराह्वयामः ॥ पीतये । स्थागापापचो भाव इति क्तिन् । तिष्ठतेरित्यादिना । फि॰ १ ७ । इत्यंतोदात्तत्वं । हवामहे । ह्वयतेर्लटि बहुलं छंदसीति संप्रसारणं रूपं । अवस्यवः । अव इच्छतीत्यर्थे सुपः क्यच् । क्याच्छंदसीत्युप्रत्ययः । कुशिकासो अवस्यव इत्यत्र संहितायाम-व्यादवद्यादित्यादिना । पा॰ ६ १ ११६ । एङः प्रकृतिभावः ॥ ॥६॥

आ याह्यर्वाङित्यष्टर्चं पंचमं सूक्तं वैश्वामित्रं त्रैष्टुभमैंद्रं । आ याह्यष्टावित्यनुक्रमणिका ॥ दशरात्रे चतुर्थेऽहनि स्तोमवृद्धौ माध्यंदिने सवनेऽच्छावाकशस्त्रे स्तोमाभिशंसनार्थमिदं सूक्तं । सूचितं च । आ याह्यर्वाङित्य-ष्टर्चान्यावपेरन् । आ॰ ७ १२ । इति ॥ महाव्रतेऽप्यावपनीयं ॥

आ याह्यर्वाङुप वंधुरेष्ठास्तवेदनु प्रदिवः सोमपेयं ।
प्रिया सखाया वि मुचोप बर्हिस्त्वामिमे हव्यवाहो हवंते ॥१॥

आ । याहि । अर्वाङ् । उप । वंधुरेऽस्थाः । तव । इत् । अनु । प्रऽदिवः । सोमऽपेयं ।
प्रिया । सखाया । वि । मुच । उप । बर्हिः । त्वां । इमे । हव्यऽवाहः । हवंते ॥१॥

हे इंद्र वंधुरेष्ठाः । वंधुरशब्देनेषाद्वयसंबंधस्थानमभिधीयते । तेन तद्विशिष्टो रथो लक्ष्यते । तस्मिन् रथे तिष्ठन् त्वमर्वाङस्मदभिमुखः सन् आ अभिलक्ष्योप याहि । समीप आगच्छ । प्रदिवः प्रत्नं पूर्वकमगतं तवेत्तवैव सवाधि सोमपेय सोमपानं त्वमनु उद्दिश्य प्रिया तव प्रियतमौ सखाया समानख्यानावश्वौ बर्हिरूप बर्हिषः समीपे वि मुच । विमुंच । हव्यवाहः । हव्यं वहंतीति हव्यवाहः । इमे ऋत्विजस्त्वां हवंते । सोमपानार्थमाह्वयंति । तस्मादागच्छेति भावः ॥ वंधुरेष्ठाः । तिष्ठतेर्विच् । तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् । प्रदिवः । सकारातमव्ययं । सोमपेय । पा पाने इत्यस्य भावेऽचो यदिति यत्प्रत्ययः । ईद्यतीतीत्वं । आर्धधातुकलक्षणो गुणः । यतोऽनाव इत्याद्युदात्तत्वं । समासे कृदुत्तरपदस्वरः । मुच । मुचतेर्लोट्यागमानुशासनस्यानित्यत्वान्नुमभावः ॥

आ याहि पूर्वीरति चर्षणीराँ अर्य आशिष उप नो हरिभ्यां ।
इमा हि त्वा मतयः स्तोमतष्टा इंद्र हवंते सख्यं जुषाणाः ॥२॥

आ। याहि। पूर्वीः। अति। चर्षणीः। आ। अर्यः। आऽशिषः। उप। नः। हरिऽभ्यां।
इमाः। हि। त्वा। मतयः। स्तोमऽतष्टाः। इंद्र। हवंते। सख्यं। जुषाणाः ॥२॥

हे इंद्र पूर्वीः सर्वाश्चर्षणीः प्रजा अत्या याहि। अतिक्रम्यागच्छ। द्वितीय आङ् पूरणः। अर्योऽस्माकं स्वामी त्वं न आशिषस्त्वमत्रागत्य सोमं पिबेत्येवमादिका अस्माकं प्रार्थना हरिभ्यामश्वाभ्यां युक्तः सन् उपागच्छ। किंच ते तव सख्यं जुषाणाः सेवमानाः स्तोमतष्टाः स्तोमकारिभिः स्तोतृभिः कृता इमा मतयः स्तुतयो हवंते। सोमपानार्थं त्वामाह्वयंति। हि प्रसिद्धौ। करणे कर्तृव्यापारः। काष्ठानि पचंतीतिवत् ॥ आ। संहितायामाङोऽनुनासिकश्छंदसीत्यनुनासिकः। अर्यः। ऋ गतौ। अर्यः स्वामिवैश्ययोरिति निपातनाद्यत्प्रत्ययः। यतोऽनाव इत्याद्युदात्तत्वे प्राप्तेऽर्यस्य स्वाम्याख्या चेत्। फि० १ १८। इत्यंतोदात्तत्वं। आशिषः। शासु इच्छायां। आङः शास इत्युपधाया इत्वं। शासिवसिघसीनां चेति षत्वं। स्तोमतष्टाः। तक्षू त्वक्षू तनूकरणे इत्यस्मात्कर्मणि क्तः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः ॥

आ नो यज्ञं नमोवृधं सजोषा इंद्र देव हरिभिर्याहि तूयं।
अहं हि त्वा मतिभिर्जोहवीमि घृतप्रयाः सधमादे मधूनां ॥३॥
आ। नः। यज्ञं। नमःऽवृधं। सऽजोषाः। इंद्र। देव। हरिऽभिः। याहि। तूयं।
अहं। हि। त्वा। मतिऽभिः। जोहवीमि। घृतऽप्रयाः। सधऽमादे। मधूनां ॥३॥

देव द्योतमान हे इंद्र नोऽस्माकं नमोवृधं नमसोऽन्नस्य वर्धकमिमं यज्ञं हरिभिरश्वैः सजोषाः सहप्रीतिस्त्वं तूयं क्षिप्रमा याहि। घृतप्रयाः। घृतसहितानि प्रयांस्यन्नरूपाणि हवींषि यस्य स तथोक्तः। तादृशोऽहं मधूनां सोमानां सधमादे। सह माद्यंति यत्र सोमे इति सधमादः। तस्मिन् स्थाने मतिभिः स्तुतिभिस्त्वा त्वा जोहवीमि हि। भृशमाह्वयामि खलु ॥ जोहवीमि। यङ्लुक्यभ्यस्तस्य चेति संप्रसारणं। गुणो यङ्लुकोरित्यभ्यासस्य गुणः। यङो वेतीडागमः। हियोगादनिघातः। अभ्यस्तानामादिरित्याद्युदात्तः। घृतप्रयाः। घृ क्षरणदीप्त्योरित्यस्मादजिघृषिभ्यः क्त इति क्तप्रत्ययः। बहुव्रीहौ पूर्वपदस्वरः ॥

आ च त्वामेता वृषणा वहातो हरी सखाया सुधुरा स्वंगा।
धानावदिंद्रः सवनं जुषाणः सखा सख्युः शृणवद्वंदनानि ॥४॥
आ। च। त्वां। एता। वृषणा। वहातः। हरी इति। सखाया। सुऽधुरा। सुऽअंगा।
धानाऽवत्। इंद्रः। सवनं। जुषाणः। सखा। सख्युः। शृणवत्। वंदनानि ॥४॥

हे इंद्र वृषणा सेचनसमर्थौ सुधुरा शोभनया धुरान्वितौ स्वंगा शोभनावयवोपेतौ सखाया शोभनख्यातिसंवर्तितौ हरी त्वामा वहातश्च। यज्ञं प्रत्यागमनाय रथे त्वामावहतः। अथ धानावत् भृष्टयवोपेतं सवनं जुषाणः सेवमानः सखा सखिभूतः स इंद्रः सख्युः स्तोतुर्मम वंदनानि स्तोत्राणि शृणवत्। शृणुयात् ॥ वहातः। वहेर्लेट्याडागमे रूपं। चवायोगे प्रथमेति न निघातः। शृणवत्। श्रु श्रवणे इत्यस्य लेट्यडागमे रूपं। निघातः ॥

कुविन्मा गोपां करसे जनस्य कुविद्राजानं मघवन्नृजीषिन्।
कुविन्म ऋषिं पपिवांसं सुतस्य कुविन्मे वस्वो अमृतस्य शिक्षाः ॥५॥
कुवित्। मा। गोपां। करसे। जनस्य। कुवित्। राजानं। मघऽवन्। ऋजीषिन्।
कुवित्। मा। ऋषिं। पपिऽवांसं। सुतस्य। कुवित्। मे। वस्वः। अमृतस्य। शिक्षाः ॥५॥

हे इंद्र कुविदपि च मा मां जनस्य गोपां गोप्तारं करसे। कुरु। तथा हे मघवन्धनवन्नृजीषिन्सोमवन् हे इंद्र मां राजानं सर्वस्य स्वामिनं कुरु। कुविच्च मा मामृषिमतींद्रियार्थस्य द्रष्टारं कुरु। ऋषिर्दर्शनादिति यास्कः। तथा सुतस्याभिषुतस्य सोमस्य पपिवांसं पातारं कुरु। अपि च मे मह्यममृतस्य क्षयरहितं वस्वो वसु शिक्षाः। प्रयच्छ॥ करसे। डुकृञ् करणे। लेट्यडागमे रूपं। कुविद्योगादनिघातः। स ऋषिमित्यत्र संहितायामृत्यक इति प्रकृतिभावो ह्रस्वश्च। पपिवांसं। पा पान इत्यस्य क्वसौ वस्वेकाजाद्घसामितीडागमः। प्रत्ययस्वरः। शिक्षाः। शिक्षतिर्दानकर्मा। अस्माल्लेट्याडागमे रूपं। कुविद्योगादनिघातः। आगमा अनुदात्ता इत्याटोऽनुदात्तत्वे धातुस्वरः॥

आ त्वा बृहंतो हरयो युजाना अर्वागिंद्र सधमादो वहंतु।
प्र ये द्विता दिव ऋंजंत्याताः सुसंमृष्टासो वृषभस्य मूराः॥६॥
आ। त्वा। बृहंतः। हरयः। युजानाः। अर्वाक्। इंद्र। सधऽमादः। वहंतु।
प्र। ये। द्विता। दिवः। ऋंजंति। आताः। सुऽसंमृष्टासः। वृषभस्य। मूराः॥६॥

हे इंद्र त्वा त्वां बृहंतो महांतो युजाना रथे युज्यमाना हरयोऽश्वाः सधमादः सह मादयंतः संतोऽर्वाक् अस्मदभिमुखमा वहंतु। वृषभस्य कामानां वर्षितुरिंद्रस्य मूराः शत्रूणां मारकाः सुसंमृष्टास इंद्रस्य हस्ताभ्यां पृष्ठभागे सुष्ठु संस्पृष्टा दिवो नभसः सकाशादागच्छंतो येऽश्वा आताः। आभिमुख्येन गम्यंते प्राणिभिस्तत्तत्कार्ये प्रतीत्याता दिशः। सर्वा दिशो द्विता द्वैधं यथा भवति तथा प्र ऋंजंति। प्रकर्षेण साधयंति॥ युजानाः। युजिर् योगे। युजिबुधिदृशः किच्च। उ० २. ९०। इत्यानच्। चित्त्वादंतोदात्तः। सधमादः। मदी हर्षे इत्यस्माण्ण्यंतात् क्विप्। कृदुत्तरपदस्वरः। द्विता। द्विशब्दात्संख्याया विधार्थे धेति धाप्रत्ययः। धकारस्य तकारश्छांदसः। प्रत्ययस्वरः। दिवः। ऊडिदमिति विभक्तेरुदात्तत्वं। आताः। अत सातत्यगमन इत्यस्मात्कर्मणि घञ्। व्यत्ययेनाद्युदात्तः॥

इंद्र पिब वृषधूतस्य वृष्ण आ यं ते श्येन उशते जभार।
यस्य मदे च्यावयसि प्र कृष्टीर्यस्य मदे अप गोत्रा ववर्थ॥७॥
इंद्र। पिब। वृषऽधूतस्य। वृष्णः। आ। यं। ते। श्येनः। उशते। जभार।
यस्य। मदे। च्यवयसि। प्र। कृष्टीः। यस्य। मदे। अप। गोत्रा। ववर्थ॥७॥

हे इंद्र वृषधूतस्य ग्रावभिरभिषुतं वृष्णोऽभिमतफलसेचकं सोमं पिब। श्येनः शंसनीयगतिश्छंदोरूपः सुपर्ण उशते सोमं कामयमानाय ते तुभ्यं यं सोममा जभार। आजहार। यस्य सोमस्य मदे हर्षे संजाते सति कृष्टीः। आकर्षंति वशीकुर्वंति कर्मणा सर्वानिति कृष्टयो मनुष्याः। तान् सपत्नभूतान्मनुष्यान् प्र च्यावयसि। प्रकर्षेण पातयसि। यस्य सोमस्य मदे संजाते सति गोत्रा। गामुदकं रश्मिभिरावृतं वर्षास्वृतुषु त्रायते पालयतीति गोत्रा मेघाः। तानप ववर्थ। अपवृणोषि॥ वृषधूतस्य। धूञ् कंपन इत्यस्य निष्ठायां यस्य विभाषेतीट्प्रतिषेधः। तृतीया कर्मणीति पूर्वपदस्वरः। श्येनः। श्यैङ् गतौ। श्यास्त्याहृञविभ्य इनच्। उ० २. ४६। इतीनच्प्रत्ययः। श्यायत इति श्येनः। चित्त्वादंतोदात्तः। जभार। हरतेर्लिटि णलि रूपं। हृग्रहोर्भश्छंदसीति भकारः। यद्वृत्तयोगादनिघातः। लित्स्वरः। मदे। मदी हर्षे। मदोऽनुपसर्ग इत्यप्प्रत्ययः। तस्य पित्त्वादनुदात्तत्वे धातुस्वरः। गोत्रा। त्रैङ् पालन इत्यस्यातोऽनुपसर्गे क इति कः। सुपो डादेशः। एकादेशस्वरः। ववर्थ। वृञ् वरण इत्यस्य लिटि थल्यृतो भारद्वाजस्येतीट्प्रतिषेधः। गुणः। लित्स्वरः॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां॥८॥

शुनं। हुवेम। मघऽवानं। इंद्रं। अस्मिन्। भरे। नृऽतमं। वाजऽसातौ।
शृण्वंतं। उग्रं। ऊतये। समत्ऽसु। घ्नंतं। वृत्राणि। संऽजितं। धनानां ॥८॥ ॥७॥

अयं त अस्त्विति पचर्चं षष्ठं सूक्तं वैश्वामित्रं बार्हतमैंद्रं। अत्रानुक्रमणिका। अयं ते पंच बार्हतं त्विति॥ महाव्रते बार्हत्यां तृचाशीताविदं सूक्तं। ऐ॰ आ॰ ५. २.॥ षोडशिशस्त्रेऽयं त अस्तु हर्यत इत्याद्यस्तृचो विनियुक्तः। सूत्रितं च। अयं ते अस्तु हर्यत इत्यौष्णिहबार्हतौ तृचौ। आ॰ ६. २। इति॥

अयं ते अस्तु हर्यतः सोम आ हरिभिः सुतः।
जुषाण इंद्र हरिभिर्न आ गह्या तिष्ठ हरितं रथं ॥१॥
अयं। ते। अस्तु। हर्यतः। सोमः। आ। हरिऽभिः। सुतः।
जुषाणः। इंद्र। हरिऽभिः। नः। आ। गहि। आ। तिष्ठ। हरितं। रथं ॥१॥

हे इंद्र हरिभिः। हरंति सोमरसानिभिरिति हरयो ग्रावाणः। तैरा सुतः सर्वतोऽभिषुतो हर्यतः कमनीयो जुषाणः प्रीतिविषयोऽयं सोमस्ते तुभ्यमस्तु। त्वं हरिभिरश्वैर्युक्तं हरितं हरिद्वर्णं रथमा तिष्ठ। अधितिष्ठ। ततो नोऽस्मानभिलक्ष्या गहि। आगच्छ॥ हर्यतः। हर्य गतिकांत्योरित्यस्माद्भृमृदृशीत्यादिनातच्प्रत्ययः। चित्त्वादंतोदात्तः। हरितं। हृञ् हरणे। हृश्याभ्यामितन्। उ॰ ३. ९३. इतीतन्प्रत्ययः। नित्त्वादाद्युदात्तः। रथं। रमु क्रीडायां। हनिकुषिनीत्यादिना क्थन्प्रत्ययः। कित्त्वादनुनासिकलोपः। नित्स्वरः॥

हर्यन्नुषसमर्चयः सूर्यं हर्यन्नरोचयः।
विद्वांश्चिकित्वान्हर्यश्व वर्धस इंद्र विश्वा अभि श्रियः ॥२॥
हर्यन्। उषसं। अर्चयः। सूर्यं। हर्यन्। अरोचयः।
विद्वान्। चिकित्वान्। हरिऽअश्व। वर्धसे। इंद्र। विश्वाः। अभि। श्रियः ॥२॥

हे इंद्र हर्यन् सोमं कामयमानस्त्वमुषसमुषःकालमर्चयः। पूजयसि। तथा हर्यन्नुदितं सूर्यं सोमं कामयमानस्त्वं सूर्यमरोचयः। दीपयसि। हे हर्यश्वेंद्र विद्वानेतत्सर्वं जानानश्चिकित्वानस्मदभिलषितफलविषयज्ञानवांस्त्वं विश्वाः सर्वाः श्रियो नः संपदोऽभि वर्धसे। अभिमतफलप्रदानेनाभितो वर्धयसि॥ चिकित्वान्। कित ज्ञाने इत्यस्य क्वसौ रूपं। प्रत्ययस्वरः। वर्धसे। वृधु वर्धने इत्यस्मादंतर्भावितण्यर्थस्य लटि रूपं। निघातः॥

द्यामिंद्रो हरिधायसं पृथिवीं हरिवर्पसं।
अधारयद्धरितोर्भूरि भोजनं ययोरंतर्हरिश्चरत् ॥३॥
द्यां। इंद्रः। हरिऽधायसं। पृथिवीं। हरिऽवर्पसं।
अधारयत्। हरितोः। भूरि। भोजनं। ययोः। अंतः। हरिः। चरत् ॥३॥

सोऽयमिंद्रो हरिधायसं। हरितो हरितवर्णा धायसो धारका रश्मयो यस्याः सा। तां द्यामधारयत्। तथा हरिवर्पसमोषधीभिर्हरितवर्णां पृथिवीमधारयत्। हरितोर्हरिद्वर्णयोर्ययोर्द्यावापृथिव्योर्मध्ये स्वकीययो रश्म्योर्भूरि प्रभूतं भोजनं। भुज्यत इति भोजनं यवसादि। लभ्यते। ययोश्च द्यावापृथिव्योरंतर्मध्ये हरिरिंद्रश्चरत्। चरति। ते द्यावापृथिव्याविंद्रोऽधारयदित्यर्थः॥ हरिधायसं। डुधाञ् धारणपोषणयोरित्यस्माद्वहिहाधाञ्भ्यश्छंदसीत्यसुन्। णिदित्यनुवृत्तेरातो युक्। बहुव्रीहौ पूर्वपदस्वरः। पृथिवी। प्रथेः षिवन् संप्रसारणं चेति षिवन्प्रत्ययः। षिद्गौरादिभ्यश्चेति ङीष्। प्रत्ययस्वरेणांतोदात्तः। हरिवर्पसं। वृङ् संभक्तौ। वृङ्शीङ्भ्या

रुपम्यांगयोरित्यमुन्प्रत्ययः पुगागमश्च । संभज्यते तदिति वर्पो रूपं । बहुव्रीहौ पूर्वपदस्वरः । हरितोः । हृञ् हरणे इत्यस्मात् हृसृरुहियुषिभ्य इतिः । उ० १. ९९. । इतीतिप्रत्ययः । प्रत्ययस्वरः । भोजनं । भुज पालनाभ्यवहारयोरित्यस्मात्कृत्यल्युटो बहुलमिति कर्मणि ल्युट् । लित्स्वरः । अतः । स्वरादिष्वंतोदात्तत्वेन पठितत्वादंतोदात्तः । चरत । चरतिर्गत्यर्थः । लोटि रूपं । यद्वृत्तयोगादनिघातः ॥

जज्ञानो हरितो वृषा विश्वमा भाति रोचनं ।
हर्यश्वो हरितं धत्त आयुधमा वज्रं बाह्वोर्हरिं ॥४॥
जज्ञानः । हरितः । वृषा । विश्वं । आ । भाति । रोचनं ।
हरिऽअश्वः । हरितं । धत्ते । आयुधं । आ । वज्रं । बाह्वोः । हरिं ॥४॥

वृषा कामानां वर्षको हरितो हरिद्वर्णोपेतो जज्ञानो जात इंद्रो विश्वं सर्वं रोचनं दीप्यमानं लोकमा भाति । सर्वतः प्रकाशयति । तथा हर्यश्व इंद्रो हरितं हरिद्वर्णोपेतमायुधं धत्ते । बाह्वोर्धत्ते । तथा हरिं शत्रूणां प्राणहारकं वज्रं बाह्वोराधत्ते ॥ जज्ञानः । जनी प्रादुर्भावे इत्यस्य लिटः कानच् । गमहनेत्यादिनोपधालोपः । चित्त्वादंतोदात्तः । भाति । भा दीप्तावित्यस्मादंतर्भावितण्यर्थस्य लटि रूपं । रोचनं । रुच दीप्तावित्यस्मादनुदात्तेतश्च हलादेरिति युच् । चित्वादंतोदात्तः । बाह्वोः । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं ॥

इंद्रो हर्यंतमर्जुनं वज्रं शुक्रैरभीवृतं ।
अपावृणोद्धरिभिरद्रिभिः सुतमुद्गा हरिभिराजत ॥५॥
इंद्रः । हर्यंतं । अर्जुनं । वज्रं । शुक्रैः । अभिऽवृतं ।
अप । अवृणोत् । हरिऽभिः । अद्रिऽभिः । सुतं । उत् । गाः । हरिऽभिः । आजत ॥५॥

सोऽयमिंद्रो हर्यंतं कमनीयमर्जुनं शुभ्रं । शुभ्रत्वमुपपादयति । शुक्रैः शुभ्रैः क्षीरादिभिरभिवृतं व्याप्तं वज्रं वज्रवत् हरिभिः । हरंत्येभिः सोमरसानिति हरयः । तैरद्रिभिर्ग्रावभिः सुतमभिषुतं सोममपावृणोत् । आवरणरहितमकरोत् । तथा च मंत्रवर्णः । पूषा राजानमाघृणिरपगूळ्हं गुहा हितं अविंदत् । ऋग्वे० १. २३. १४. । इति । तथा गाः पणिभिरपहृता गा हरिभिरश्वैरुपेतः स इंद्र उदाजत । बिलान्निरगमयत ॥ अर्जुनं । अर्ज षर्ज अर्जने इत्यस्मादर्जेर्णिलुक्चेत्युनन् । नित्स्वरः । अभिवृतं । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । आजत । अज गतिक्षेपणयोः । लङि व्यत्ययेनात्मनेपदं । निघातः ॥ ॥८॥

आ मंद्रैरिति पंचर्चं सप्तमं सूक्तं वैश्वामित्रं बार्हतमैंद्रं । आ मंद्रैरित्यनुक्रमणिका । पूर्वसूक्ते बार्हतं त्वित्युक्तत्वादस्यापि बार्हतत्वं ॥ विशेषविनियोगस्तु यत्र श्रुत्या न सूचितः । स्मार्तं तत्र विजानीयाद्दृग्विधानादि शास्त्रतः ॥

आ मंद्रैरिंद्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि यमन्विं न पाशिनोऽति धन्वेव ताँ इहि ॥१॥
आ । मंद्रैः । इंद्र । हरिऽभिः । याहि । मयूररोमऽभिः ।
मा । त्वा । के । चित् । नि । यमन् । विं । न । पाशिनः । अति । धन्वऽइव । तान् । इहि ॥१॥

हे इंद्र मंद्रैर्मादयितृभिर्मयूररोमभिर्मयूररोमसदृशरोमयुक्तैर्हरिभिरश्वैरुपेतस्त्वमा याहि । यज्ञं प्रत्यागच्छ । केचिदपि जनास्त्वा त्वां मा नि यमन् । मा नियच्छंतु । गमनप्रतिबंधं मा कुर्वंत्वित्यभिप्रायः । प्रतिबंधे दृष्टांतः । विं न । यथा पाशिनः पाशहस्ता व्याधा विं गच्छंतं पक्षिणं नियच्छंति तद्वत्मा नियच्छंतु । किंच धन्वेव । यथा पांथा धन्व मरुदेशं शीघ्रमतिगच्छंति । तद्वद्गमनप्रतिबंधकानतीत्य शीघ्रमिहि । आगच्छ ॥

मंद्रैः। मदि स्तुत्यादिष्वित्यस्य स्फायितंचीत्यादिना रक्प्रत्ययः। इदित्त्वान्नुम्। प्रत्ययस्वरः। मयूररोमभिः। मयूररोमवद्रोमाणि येषामिति सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च। पा॰ २. २. २४. १२। इति समास उत्तरपदलोपश्च। मयूरशब्दो मीनातेरूरन्। उ॰ १. ६८। इत्यूरन्प्रत्ययातः। मीनाति सर्पानिति मयूरो बर्हो। नित्त्वादाद्युदात्तत्वे प्राप्ते मादीनां। फि॰ ३. ४.। इति सूत्रेण मध्योदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। यमन्। यम उपरम इत्यस्य लेख्यडागमे रूपं। इहि। इण गतावित्यस्य लोटि रूपं॥

वृत्रखादो वलंरुजः पुरां दर्मो अपामजः।
स्थाता रथस्य हर्योरभिस्वर इंद्रो दृळ्हा चिदारुजः ॥२॥
वृत्रऽखादः। वलंऽरुजः। पुरां। दर्मः। अपां। अजः।
स्थाता। रथस्य। हर्योः। अभिऽस्वरे। इंद्रः। दृळ्हा। चित्। आऽरुजः ॥२॥

सोऽयमिंद्रो वृत्रखादः। वृत्रं खादति हिनस्तीति वृत्रखादः। वलंरुजः। वृणोत्याकाशमिति वलो मेघः। तस्य भंजकः। तथा च मंत्रवर्णः। विभेद वलं। ऋ॰सं॰ ३. ३४. १०। इति। ततोऽपामजो मेघभेदनद्वारापां प्रेरकः पुरां शत्रुसंबंधिनां पुराणां दर्मो दारकः। तथा हर्योरश्वयोरभिस्वरेऽस्मदाभिमुख्येन प्रेरणे निमित्तभूते सति रथस्य स्थाता रथमधिष्ठाता। तथा दृळ्हा चित् दृढानामतिबलवतां शत्रूणामप्यारुज आसमंताद्भंजको भवति॥ वृत्रखादः। खादृ भक्षणे इत्यस्मात्कर्मण्यण्। कृदुत्तरपदस्वरः। वलंरुजः। रुजो भंगे। कर्मण्युपपदे मूलविभुजादित्वात्कप्रत्ययः। तत्पुरुषे कृति बहुलमिति द्वितीयाया अलुक्। थाथादिस्वरः। आरुजः। रुजो भंग इत्यस्मादिगुपधलक्षणः कः। समासे थाथादिस्वरः॥

गंभीराँ उदधीँरिव क्रतुं पुष्यसि गा इव।
प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्या इवाशत ॥३॥
गंभीरान्। उदधीन्ऽइव। क्रतुं। पुष्यसि। गाःऽइव।
प्र। सुऽगोपाः। यवसं। धेनवः। यथा। ह्रदं। कुल्याःऽइव। आशत ॥३॥

हे इंद्र त्वं गंभीरान्महावकाशानुदधीन्समुद्रानुदकैर्यथा पोषयसि तद्वत्क्रतुं यज्ञस्य कर्तारमिमं यजमानमभिमतफलप्रदानेन पुष्यसि। पोषयसि। अत्र दृष्टांतः। यथा सुगोपाः समीचीनो गोपालो यवसेन गाः पोषयति तद्वत्। यथा धेनवो यवसं तृणादिकं प्राप्नुवंति तद्वत्सोमास्त्वां प्राप्नुवंति। ते च सोमाः कुल्या इव कृत्रिमसरितो ह्रदं महाजलाशयं यथा प्राप्नुवंति तद्वत्त्वामाशत। व्याप्नुवंति॥ गंभीरान्। गाधृ प्रतिष्ठालिप्सयोर्ग्रंथे चेत्यस्माद्गंभीरगभीरावित्यनेन सूत्रेण ईरच्प्रत्ययः। नुमागमोपधाह्रस्वमकारा अर्थे निपात्यंते। चित्त्वादंतोदात्तः। उदधीनिव। उदकशब्द उपपदे दधातेरधिकरणेऽर्थे कर्मण्यधिकरणे चेति किप्रत्ययः। उदकशब्दस्य पेषंवासवाहनधिषु च। पा॰ ६. ३. ५८। इत्युदभावः। कृत्स्वरः। इवेन विभक्त्यलोपः। पुष्यसि। पुष पुष्टावित्यस्मादंतर्णीतण्यर्थस्य लटि रूपं। निघातः। सुगोपाः। गोपायतेः क्विपि रूपं। यथा। यथेति पादांते। फि॰ ४. १२। इति निघातः। आशत। अशू व्याप्तावित्यस्माल्लङि बहुलं छंदसीति विकरणस्य लुक्। निघातः॥

आ नस्तुजं रयिं भरांशं न प्रतिजानते।
वृक्षं पक्वं फलमंकीव धूनुहींद्र संपारणं वसु ॥४॥
आ। नः। तुजं। रयिं। भर। अंशं। न। प्रतिऽजानते।
वृक्षं। पक्वं। फलं। अंकीऽइव। धूनुहि। इंद्र। संऽपारणं। वसु ॥४॥

हे इंद्र नोऽस्माकं तुजं शत्रूणां बाधकं रयिं धनेनोपलक्षितं पुत्रमा भर। संपादय। तत्र दृष्टांतः। अंशं न। यथा पिता प्रतिजानते व्यवहारज्ञाय पुत्राय स्वकीयस्य धनस्य भागं ददाति तद्वत्। किंच पक्वं फलं प्रति वृक्षमंकीवाकुशी यथा धूनोति तथा त्वं संपारणमस्मदिच्छायाः सम्यक् पूरकं वसु धनं धूनुहि। चालय। प्रयच्छेत्यर्थः॥ प्रतिजानते। ज्ञा अवबोधने इत्यस्य शतरि रूपं। प्रादिसमासः। शतुरनुम इति विभक्तेरुदात्तत्वं। धूनुहि। धूञ् कंपने इत्यस्य लोटि रूपं। संपारणं। पॄ पालनपूरणयोरित्यस्य ण्यंतस्य करणे ल्युट्। समासे कृत्स्वरः॥

स्वयुरिंद्र स्वराळसि स्मद्दिष्टिः स्वयशस्तरः।
स वावृधान ओजसा पुरुष्टुत भवा नः सुश्रवस्तमः॥५॥
स्वऽयुः। इंद्र। स्वऽराट्। असि। स्मत्ऽदिष्टिः। स्वयशःऽतरः।
सः। ववृधानः। ओजसा। पुरुऽस्तुत। भव। नः। सुश्रवःऽतमः॥५॥

हे इंद्र स्वयुर्धनवानसि। तथा स्वराट् स्वर्गस्य राजासि। स्मद्दिष्टिर्भद्रवाक्यः स्वयशस्तरोऽतिशयेन प्रभूतकीर्तिरसि। हे पुरुष्टुत बहुभिराहूतेंद्र स त्वमोजसा बलेन वावृधानः वर्धमानः सन् नोऽस्मदर्थं सुश्रवस्तमोऽतिशयेन शोभनान्नोपेतो भव॥ स्वयुः। स्वशब्दान्मत्वर्थीयो युः। स्वराट्। राजृ दीप्तौ। क्विप्। व्रश्चादिना षत्वं। स्मद्दिष्टिः। स्मत सुसमदित्यर्थे। उकारलोपश्छांदसः। बहुव्रीहौ पूर्वपदस्वरः। पुरुष्टुत। संहितायां स्तुत स्तोमयोश्छंदसीति षत्वं। भव। भवतेर्लोटि रूपं। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। सुश्रवस्तमः। श्रवःशब्दोऽसुनंतः। बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। तदंतादतिशायने तमप्। तस्य पित्त्वादनुदात्तत्वे बहुव्रीहिस्वरः॥ ॥९॥

युध्मस्य त इति पंचर्चमष्टमं सूक्तं वैश्वामित्रमैंद्रं। युध्मस्येत्यनुक्रमणिका॥ दशरात्रे चतुर्थेऽहनि निष्केवल्ये युध्मस्य त इति सूक्तं निविद्धानं। सूत्रितं च। कुह श्रुत इंद्रो युध्मस्य त इति निष्केवल्यं। आ॰ ७ ११। इति॥ ऋषभनाम्न्येकाहेऽपि निष्केवल्य इदं सूक्तं निविद्धानं। सूत्रितं च। युध्मस्य त इति मध्यंदिनः। आ॰ ९ ७। इति॥

युध्मस्य ते वृषभस्य स्वराज उग्रस्य यूनः स्थविरस्य घृष्वेः।
अजूर्यतो वज्रिणो वीर्याणींद्र श्रुतस्य महतो महानि॥१॥
युध्मस्य। ते। वृषभस्य। स्वऽराजः। उग्रस्य। यूनः। स्थविरस्य। घृष्वेः।
अजूर्यतः। वज्रिणः। वीर्याणि। इंद्र। श्रुतस्य। महतः। महानि॥१॥

हे इंद्र युध्मस्य योधनशीलस्य वृषभस्याभिमतफलसेचकस्य स्वराजो धनाधिपतेरुग्रस्य समर्थस्य यूनो नित्यतरुणस्य स्थविरस्य चिरंतनस्य घृष्वेः शत्रूणां संघर्षकस्याजूर्यतो जरारहितस्य वज्रिणः श्रुतस्य त्रिषु लोकेषु प्रसिद्धस्य अत एव महतस्ते तव वीर्याणि महानि। महांति खलु॥ युध्मस्य। युध संप्रहारे। इषियुधींधिदसी त्यादिना मक्प्रत्ययः। यूनः। यौति. कनिन्युवृषीत्यादिना कनिन्। श्वयुवमघोनामतद्धिते इति संप्रसारणं। नित्स्वरः। स्थविरस्य। अजिरशिशिरशिथिलेत्यादिना किरच्प्रत्ययांतो निपातितः। घृष्वेः। घृषु संघर्षे। कुवि घृष्विजवीत्यादिना क्विन्प्रत्ययांतो निपात्यते। नित्त्वादाद्युदात्तः॥

महाँ असि महिष वृष्ण्येभिर्धनस्पृदुग्र सहमानो अन्यान्।
एको विश्वस्य भुवनस्य राजा स योधया च क्षयया च जनान्॥२॥
महान्। असि। महिष। वृष्ण्येभिः। धनऽस्पृत्। उग्र। सहमानः। अन्यान्।
एकः। विश्वस्य। भुवनस्य। राजा। सः। योधय। च। क्षयय। च। जनान्॥२॥

हे महिष महनीय उग्र इंद्र त्वं महानसि। धनस्पृत धनानि दानभोगत्यागैः पारं नयन्स्त्वं वृष्ण्येभिर्वीर्यैरन्यान् शत्रून्सहमानोऽभिभवन्वर्तसे। तथा विश्वस्य सर्वस्य भुवनस्यैकोऽसहायो राजा स त्वं योधय च। सपत्नान् प्रहर। जनान् क्षयय च। निवासय। बाधकान्हत्वा साधुजनान् स्वस्थाने स्थापयेत्यभिप्रायः॥ महिष। मह पूजायां। अविमह्योष्टिषच्। उ॰ १ ४६। इति टिषच्प्रत्ययः। आमंत्रितत्वान्निघातः। वृष्ण्येभिः। वृषणि भवानि भवे छंदसीति यत्। यतोऽनाव इत्याद्युदात्तः। योधय। युध संप्रहारे इत्यस्य ण्यंतस्य लोटि रूपं। चादिषु चेति न निघातः। णित्स्वरः। क्षयय। क्षि निवासगत्योरित्यस्य ण्यंतस्य लोटि रूपं। अत्रापि पूर्ववदनिघातः॥

प्र मात्राभी रिरिचे रोचमानः प्र देवेभिर्विश्वतो अप्रतीतः।
प्र मज्मना दिव इंद्रः पृथिव्याः प्रोरोर्महो अंतरिक्षादृजीषी॥३॥

प्र। मात्राभिः। रिरिचे। रोचमानः। प्र। देवेभिः। विश्वतः। अप्रतिऽइतः।
प्र। मज्मना। दिवः। इंद्रः। पृथिव्याः। प्र। उरोः। महः। अंतरिक्षात्। ऋजीषी॥३॥

रोचमानो दीप्यमानो विश्वतः सर्वतोऽप्रतीत एतावदस्य सामर्थ्यमित्यपरिज्ञायमान ऋजीषी सोमवानिंद्रो मात्राभिः। मीयंते परिच्छिद्यंत इति मात्राः शिलोच्चयाः। तेभ्योऽपि प्र रिरिचे। प्रकर्षेण महत्त्वयातिरिक्तोऽभूत्। तथा देवेभिर्देवेभ्योऽपि मज्मना। मज्जयति शत्रून्दुःखसागर इति मज्म बलं। तेन बलेन प्ररिरिचे। तथा दिवः पृथिव्या द्यावापृथिवीभ्यां च प्ररिरिचे। तथोरोर्विस्तीर्णान्महतो महतोऽतरिक्षादपि प्ररिरिचे॥ मात्राभिः। माङ् माने शब्दे चेत्यस्मात् हुयामाश्रुभसिभ्यस्त्रन्निति त्रन्प्रत्ययः। नित्त्वादाद्युदात्तः। इत्लोपे पूर्वस्य दीर्घोऽण इति संहितायां दीर्घः। रोचमानः। रुच दीप्तावित्यस्मात् शानचि रूपं। तस्य लसार्वधातुकस्वरे धातुस्वरः। अप्रतीतः। इण् गतौ। कर्मणि क्तः। प्रादिसमासः। नञा समासे तस्य स्वरः। मज्मना। टुमस्जो शुद्धौ। औणादिको मनिन्प्रत्ययः। झलां जश् झशीति जश्त्वं। नित्त्वादाद्युदात्तः। पृथिव्याः। उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं॥

उरुं गंभीरं जनुषाभ्युप्र१ग्रं विश्वव्यचसमवतं मतीनां।
इंद्रं सोमासः प्रदिवि सुतासः समुद्रं न स्रवत आ विशंति॥४॥

उरुं। गभीरं। जनुषा। अभि। उग्रं। विश्वऽव्यचसं। अवतं। मतीनां।
इंद्रं। सोमासः। प्रऽदिवि। सुतासः। समुद्रं। न। स्रवतः। आ। विशंति॥४॥

उरुं महांतं अत एव गभीरं महावकाशं जनुषा जन्मना स्वभावत एवोग्रं शत्रूणां भयंकरं। गभीरत्वमेवोच्यते। विश्वव्यचसं विश्वव्याप्तं मतीनां स्तुतीनां स्तोतॄणां वा अवतं रक्षकं तादृशमिंद्रं प्रदिवि पूर्वस्मिन्नहःसु सुतासो ग्रावभिरभिषुताः सोमासः सोमा अभि आभिमुख्येना विशंति। तत्र दृष्टांतः। समुद्रं न। यथा स्रवतः स्रवंत्यो नद्यः समुद्रमाविशंति तद्वत्॥ जनुषा। जनी प्रादुर्भावे इत्यस्माज्जनेरुसिरित्युसिप्रत्ययः। विश्वव्यचसं। व्यच व्याजीकरण इत्यस्मादसुन्। व्यचेः कुटादित्वमनसीति वचनादनसीति पर्युदासात् ङित्त्वाभावः। विश्वव्यचा इतींद्रस्य नाम। बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदस्यांतोदात्तत्वं। अवतं। अव रक्षणादिषु। औणादिकोऽतच्प्रत्ययः। चित्त्वादंतोदात्तः॥

यं सोममिंद्र पृथिवीद्यावा गर्भं न माता बिभृतस्त्वाया।
तं ते हिन्वंति तमु ते मृजंत्यध्वर्यवो वृषभ पातवा उ॥५॥

यं। सोमं। इंद्र। पृथिवीद्यावा। गर्भं। न। माता। बिभृतः। त्वाऽया।
तं। ते। हिन्वंति। तं। ऊं इति। ते। मृजंति। अध्वर्यवः। वृषभ। पातवै। ऊं इति॥५॥

हे इंद्र पृथिवीद्यावा द्यावापृथिव्यौ त्वाया त्वत्कामतया यं सोमं बिभृतोऽधारयतः। अत्र दृष्टांतः। गर्भं न। यथा माता गर्भं बिभर्ति तद्वत्। हे वृषभ कामानां वर्षक हे इंद्र अध्वर्यवोऽध्वरं यजमानायेच्छंतस्ते त्वदर्थं तं सोमं हिन्वंति। प्रेरयंति। किंच ते तव पातवे पानाय तं सोमं मृजंति। शोधयंति। उ प्रसिद्धौ॥ पृथिवीद्यावा। दिवो द्यावेति द्यावादेशः। आद्युदात्तः। नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमंथिष्विव्यत्र पर्युदासाद्देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरः। कृतसमासस्य विपर्यासश्छांदसः। बिभृतः। डुभृञ् धारणपोषणयोरित्यस्माल्लटि भृञामिदित्यभ्यासस्येत्वं। यद्वृत्तयोगादनिघातः। अजादिप्रत्ययपरत्वाभावादत्राभ्यस्तानामादिरिति स्वरो न भवति। प्रत्ययस्वरः। त्वाया। त्वामिच्छतीत्यर्थे सुप आत्मनः क्यच्। पूर्वपदटकारस्याकारश्छांदसः। अ प्रत्ययादिति भावेऽप्रत्ययः। सुपां सुलुगिति तृतीयायाः सवर्णदीर्घः। एकादेशस्वरः। अध्वर्यवः। अध्वरमिच्छतः। सुपः क्यच्। कव्यध्वरपृतनस्यर्चि लोप इत्याकारलोपः। क्याच्छंदसीत्युप्रत्ययः। प्रत्ययस्वरः। पातवे। पा पाने। तुमर्थे तवेप्रत्ययः। अंतश्च तवै युगपदिति धात्वंतस्य प्रत्ययस्य चोदात्तत्वं। उञ इति प्रगृह्यसंज्ञा॥ ॥१०॥

मरुत्वानिति पंचर्चं नवमं सूक्तं वैश्वामित्रं त्रैष्टुभमैंद्रं। मरुत्वानित्यनुक्रमणिका॥ दशरात्रे चतुर्थेऽहनि मरुत्वतीयशस्त्र एतत्सूक्तं निविद्धानीयं। सूत्रितं च। श्रुधी हवमिंद्र मरुत्वाँ इंद्रेति मरुत्वतीयं। आ॰ ८ ११.। इति॥ ऋषभनाम्न्येकाहेऽपि मरुत्वतीयशस्त्र एतन्निविद्धानं। सूत्रितं च। मरुत्वाँ इंद्र युध्मस्य त इति मध्यंदिनः। आ॰ ९ ५। इति॥

मरुत्वाँ इंद्र वृषभो रणाय पिबा सोममनुष्वधं मदाय।
आ सिंचस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानां॥१॥
मरुत्वान्। इंद्र। वृषभः। रणाय। पिब। सोमं। अनुऽस्वधं। मदाय।
आ। सिंचस्व। जठरे। मध्वः। ऊर्मिं। त्वं। राजा। असि। प्रऽदिवः। सुतानां॥१॥

हे इंद्र यो वृषभोऽपां वर्षिता मरुत्वान्। मरुतो देवविशस्तद्वान्। स त्वमनुष्वधं स्वधया सवनीयपुरोडाशादिरूपेणान्नेनानुगतं सोमं रणाय रमणीयसंग्रामार्थं मदाय तं सोमं पिब। किंच मध्वो मदकरस्य सोमस्योर्मिं संघातं वृद्धतमं जठरे। जग्धमन्नमस्मिंस्तिष्ठतीति जठरमुदरं। तस्मिन्नुदर आ सिंचस्व। सर्वतः क्षारय। यतस्त्वं प्रदिवः पूर्वेष्वहःसु सुतानामभिषुतानां सोमानां राजासीशितासि। न केवलमधुनातनानामिति भावः। उक्तमर्थं यास्को ब्रवीति। मरुत्वानिंद्र मरुद्भिस्तद्वान् वृषभो वर्षितापां रणाय रमणीयाय संग्रामाय पिब सोममनुष्वधमन्नं मदाय मदनीयाय जैत्रायासिंच स्वजठरे मधुन ऊर्मिं। मधु सोममित्यौपमिकं माद्यतेरिदमपीतरन्मधुतस्मादेव। त्वं राजासि पूर्वेष्वप्यहःसु सुतानां। नि॰ ४ ८। इति॥ अनुष्वधं। स्वधामनुगमस्य वर्तमानं। अत्यादयः क्रांताद्यर्थे द्वितीययेति समासः। संहितायां पूर्वपदात्। पा॰ ८. ३. १०६.। इति षत्वं। निरुदकादित्वादंतोदात्तत्वं। ऊर्मिं। अर्तेरूच्चेति मिप्रत्ययः। धातोरूः इत्यादेशो रपरः। प्रत्ययस्वरः॥

सजोषा इंद्रेति मरुत्वतीयग्रहस्य याज्या। सूत्रितं च। सजोषा इंद्र सगणो मरुद्भिरिति भक्षयित्वैतत्पात्र। आ॰ ५ १४। इति॥

सजोषा इंद्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्।
जहि शत्रूँरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः॥२॥
सऽजोषाः। इंद्र। सऽगणः। मरुत्ऽभिः। सोमं। पिब। वृत्रऽहा। शूर। विद्वान्।
जहि। शत्रून्। अप। मृधः। नुदस्व। अथ। अभयं। कृणुहि। विश्वतः। नः॥२॥

हे शूर बलवन् हे इंद्र सजोषाः संगतो देवैर्मरुद्भिः सगणो मरुद्भिरेव वृत्रहा वृत्रस्य हंता विद्वान्कर्मविपश्चिदभिज्ञस्त्वं सोमं पिब। ततो नः शत्रून् जहि। मृधो हिंसकान् शत्रूनप नुदस्व। यद्वा मृधः। हिंस्यंतेऽत्र प्राणिन

इति मृधः संग्रामाः। तत्र वर्तमानान् शत्रूनपनुदस्व। अथानंतरं नोऽस्माकं विश्वतः सर्वतोऽभयं कृणुहि। कुरु। सर्वतो भयरहितानस्मान्कुर्वित्यर्थः॥ वृत्रहा। हंतेर्ब्रह्मभ्रूणवृत्रेषु क्विप्। अभयं। ञिभी भये इत्यस्मादेरच्। नञा समासे तस्य स्वरः। विश्वतः। पंचम्यास्तसिल्। लित्स्वरः॥

उत ऋतुभिर्ऋतुपाः पाहि सोममिंद्र देवेभिः सखिभिः सुतं नः।
याँ आभजो मरुतो ये त्वान्वहन्वृत्रमदधुस्तुभ्यमोजः॥३॥
उत। ऋतुऽभिः। ऋतुऽपाः। पाहि। सोमं। इंद्र। देवेभिः। सखिऽभिः। सुतं। नः।
यान्। आ। अभजः। मरुतः। ये। त्वा। अनु। अहन्। वृत्रं। अदधुः। तुभ्यं। ओजः॥३॥

उत अपि च हे ऋतुपाः कालनिर्वाहकतया ऋतूनां पातः। ऋतुषु सोमं पिबतीति वा ऋतुपाः। यद्वा ऋतुभिर्मरुद्भिः सह सोमं पिबतीति ऋतुपाः। तादृश हे इंद्र सखिभिः समानख्यानैर्ऋतुभिर्मरुद्भिर्देवेभिर्देवैः सहितस्त्वं नः संबंधिनं सुतमभिषुतं सोमं पाहि। पिब। किंच यान्मरुत आभजो युद्धसहायार्थमसेवथा ये च मरुतस्त्वा त्वां युद्धे स्वामिनमन्वभजंत। ततस्त्वं वृत्रमहन्। हतवानसि। ते मरुतस्तुभ्यं त्वदर्थमोजो युद्धे शत्रुहननादिरूपं पराक्रममदधुः। अकुर्वन्॥ अभजः। भज सेवायामित्यस्य लङि रूपं। यद्वृत्तयोगादनिघातः। अहन्। हन हिंसागत्योरित्यस्य लङि सिपो हल्ङ्यादिना लोपः। पादादित्वादनिघातः। अदधुः। दधातेर्लङि झेः सिजभ्यस्तेति जुस्। वाक्यभेदादनिघातः॥

मरुत्वतीयशस्त्रे याज्या ये त्वाहिहत्य इत्येषा। सूचितं च। ये त्वाहिहत्ये मघवन्नवर्धन्निति याज्या। आ० ५ १४। इति॥

ये त्वाहिहत्ये मघवन्नवर्धन्ये शांबरे हरिवो ये गविष्टौ।
ये त्वा नूनमनुमदंति विप्राः पिबेंद्र सोमं सगणो मरुद्भिः॥४॥
ये। त्वा। अहिऽहत्ये। मघऽवन्। अवर्धन्। ये। शांबरे। हरिऽवः। ये। गोऽइष्टौ।
ये। त्वा। नूनं। अनुऽमदंति। विप्राः। पिब। इंद्र। सोमं। सऽगणः। मरुतऽभिः॥४॥

हे मघवन्निंद्र ये मरुतोऽहिहत्ये वृत्रहननरूपे कर्मणि त्वा त्वामवर्धन् प्रहर भगवो जहि वीरयस्वेति बलदानेनावीवृधन्। हे हरिवोऽश्ववन्निंद्र ये च शांबरे शंबरवधसंबंधिनि युद्धे त्वामवीवृधन्। इंद्र शंबरमवधीदित्यस्मिन्नर्थे मंत्रवर्णः। यः शंबरं पर्वतेषु क्षियंतं चत्वारिंश्यां शरद्यन्वविंदत्। ओजायमानं यो अहिं जघान। ऋ० २ १२ ११। इति। तथा ये मरुतो गविष्टौ पणिनामकैरसुरैः सह गवार्थे युद्धे च त्वामवीवृधन्। विप्रा मेधाविनो ये च मरुतो नूनमिदानीं त्वामनुमदंति मादयंति तादृशैर्मरुद्भिः सगणः सह इह सोमं पिब॥ अहिहत्ये। हंतेर्भावे हनस्त चेति क्यप्। कृदुत्तरपदस्वरः। अवर्धन्। वृधु वृद्धावित्यस्य ण्यंतस्य लङि रूपं। छंदस्युभयथेति शेरार्धधातुकत्वाण्णिलोपः। यद्वृत्तयोगादनिघातः। शांबरे। शंबरस्येदमित्यर्थे तस्येदमित्यण्प्रत्ययः। गविष्टौ। इषु इच्छायां। भावे क्तिन्। बहुव्रीहौ पूर्वपदस्वरः। अनुमदंति। मदि स्तुत्यादिष्वित्यस्य लटि व्यत्ययेन परस्मैपदं। आगमानुशासनस्यानित्यत्वान्नुमभावः। शेर्लसार्वधातुकस्वरे कृते धातुस्वरः। तिङि चोदात्तवतीति गतेर्निघातः॥

मरुत्वंतं वृषभं वावृधानमकवारिं दिव्यं शासमिंद्रं।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम॥५॥
मरुत्वंतं। वृषभं। ववृधानं। अकवऽअरिं। दिव्यं। शासं। इंद्रं।
विश्वऽसहं। अवसे। नूतनाय। उग्रं। सहःऽदां। इह। तं। हुवेम॥५॥

हे इन्द्र मरुत्वंतं मरुद्भिस्तद्वंतं वृषभं मेघभेदनद्वारापां वर्षकं ववृधानं वृत्रहननादिकर्मसुत्साहेन वर्धमानमकवारिं प्रभूतशत्रुकं यद्वा अकुत्सितारिं । तथा च मंत्रः । स्वरिरमत्रो ववक्षे रणाय । ऋग्वे॰ १. ६१. ९ । इति । दिवि दिवि स्वर्गलोके वर्तमानं शासं हितोपदेशाहितपरिहाराभ्यां शासितारं विश्वासाहं विश्वस्य प्रतिपक्षस्य सर्वस्याभिभवितारमुग्रं शत्रुपुरूर्णां सहोदां युद्धसहकारिणा मरुतां बलप्रदं तं तादृशसामर्थ्योपेतमिंद्रं नूतनाय नवतरायावसे रक्षणायेह कर्मणि हुवेम । त्वामाह्वयेम ॥ नूतनाय । नवशब्दस्य नू इत्यादेशः । त्नप्तनखाश्च प्रत्यया वक्तव्या इति तनप्रत्ययः ॥ ॥११॥

सद्यो हेति पंचर्चं दशमं सूक्तं विश्वामित्रं त्रैष्टुभमैंद्रं । सद्यो हेत्यनुक्रमणिका ॥ अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणशस्त्रे सद्यो ह जात इत्येतत्सूक्तं । सूत्रितं च । सद्यो ह जात एवा त्वामिंद्र । आ॰ ५. १६. । इति ॥ चातुर्विंशिकेऽप्यहनि मैत्रावरुणशस्त्रेऽहरहःशस्यमेतत्सूक्तं । सूत्रितं च । सद्यो ह जात इत्यहरहःशस्य मैत्रावरुणः । आ॰ ७. ४ । इति ॥ अहर्गणे द्वितीयादिष्वहःसु माध्यंदिनसवनेऽस्मिन् शस्त्र एतत्सूक्तं । अहरहःशस्यानीति होत्रका द्वितीयादिष्वेव । आ॰ ७. १. । इति सूत्रितं ॥ साद्यस्क एकाहे मरुत्वतीये शस्त्रे सद्यो ह जात इत्याद्या सूक्तमुखीया । सूत्रितं च । सद्यो ह जातो वृषभः कनीनस्त्वं सद्यो अपिबो जात इंद्र । आ॰ ९. ५ । इति ॥

सद्यो ह जातो वृषभः कनीनः प्रभर्तुमावदंधसः सुतस्य ।
साधोः पिब प्रतिकामं यथा ते रसाशिरः प्रथमं सोम्यस्य ॥१॥
सद्यः । ह । जातः । वृषभः । कनीनः । प्रऽभर्तुं । आवत् । अंधसः । सुतस्य ।
साधोः । पिब । प्रतिऽकामं । यथा । ते । रसऽआशिरः । प्रथमं । सोम्यस्य ॥१॥

वृषभो वृष्टिद्वारापां वर्षिता सद्यस्तदानीमेव जात उत्पन्नः कनीनः कमनीय इंद्रः सुतस्याभिषुतस्यांधसो हविर्लक्षणस्यान्नस्य सोमस्य प्रभर्तुं प्रकर्षेण भर्तारं संग्रहीतारं यजमानमावत् । रक्षतु । ह प्रसिद्धौ । किंच तादृशस्त्वं प्रतिकामं कामे कामे सोमपानेच्छायां सत्यां ते तव यथा कामस्य पूर्तिर्भवति तथा साधो रसात्मना समिद्धं रसाशिरो गोपयोभिश्रणोपेतं सोम्यस्य सोममयं रसं प्रथमं सर्वेभ्यो देवेभ्यः पुरस्तात्पिब ॥ प्रतिकाम । कामं कामं प्रति । वीप्सायामव्ययीभावः । समासस्वरः । यथा । अपादातत्वादेव लित्स्वरः । रसाशिरः । आङ्पूर्वात् श्रीणातेः क्विप्यपस्पृधेथामित्यादिनाशिर इत्यादेशः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । सोम्यस्य । सोमशब्दान्मयडर्थे मये चेति यप्रत्ययः ॥

यज्जायथास्तदहरस्य कामेंऽशोः पीयूषमपिबो गिरिष्ठां ।
तं ते माता परि योषा जनित्री महः पितुर्दम आसिंचदग्रे ॥२॥
यत् । जायथाः । तत् । अहः । अस्य । कामे । अंशोः । पीयूषं । अपिबः । गिरिऽस्थां ।
तं । ते । माता । परि । योषा । जनित्री । महः । पितुः । दमे । आ । असिंचत् । अग्रे ॥२॥

हे इन्द्र त्वं यदस्मिन्नहनि जायथा अजायथाः तदहस्तस्मिन्नेवाहन्यस्य सोमस्य कामे पिपासायां सत्यां गिरिष्ठां गिरिस्थां पर्वतस्योच्चस्थाने वर्तमानमंशोः सोमलताखंडविशिष्टस्य ऋजीषस्य पीयूषमभिनवं रसमपिबः । पीतवानसि । उत्पत्तिक्षण एव सोमपाने कारणं दर्शयति । तं तव जनित्री माता योषा युवतिरदितिर्महो महतः पितुर्जनकस्य कश्यपस्य दमे सूतिकागृहेऽग्रे स्तन्यदानात् प्राक् तं तादृशं सोमं पर्यासिंचत् । तवास्ये परितोऽक्षारयत् ॥ जायथाः । जनी प्रादुर्भाव इत्यस्य लङि बहुलं छंदसीत्यडभावः । यद्वृत्तयोगादनिघातः । जनित्री । जनिता मंत्र इति निपातनाण्णिलोपः ॥

उपस्थाय मातरमन्नमैट्ट तिग्ममपश्यदभि सोममूधः ।
प्रयावयन्नचरद्गृत्सो अन्यान्महानि चक्रे पुरुधप्रतीकः ॥३॥

उपऽस्थाय । मातरं । अन्नं । ऐट्ट । तिग्मं । अपश्यत् । अभि । सोमं । ऊधः ।
प्रऽयवयन् । अचरत् । गृत्सः । अन्यान् । महानि । चक्रे । पुरुधऽप्रतीकः ॥३॥

स इंद्रो मातरमुपस्थाय प्रार्थयित्वान्नमैट्ट । तामन्नमयाचत । ईळिरध्येषणाकर्मेति यास्कः । ततस्तस्या ऊध ऊधसि क्षीररूपेण स्थितं तिग्मं दीप्तं सोमममभ्यपश्यत । सर्वतोऽदर्शत । गृत्सः । अभिकांक्षते सर्वदैव शत्रुहननार्थमिति गृत्स इंद्रः । अन्यान्सपत्नान्प्रयवयन् स्वस्वस्थानात्प्रकर्षेणोच्चालयन्नचरत । सर्वत्र चरति । किंच पुरुधप्रतीकस्तेजोयोगाद्बहुधा विलिप्ताङ्गो महानि महांति वृत्रहननादीनि कर्माणि चक्रे ॥ उपस्थाय । तिष्ठतेर्ल्यपि घुमास्थेतीत्वे प्राप्ते न ल्यपीति प्रतिषेधः । लित्स्वरः । ऐट्ट । ईळिर्याच्ञार्थः । तस्माल्लङि रूपं । आडजादीनामित्याडागमः । ष्टुत्वं । निघातः । तिग्मं । तिज निशाने । अस्मादुणादिकर्चतिजो कुश्चेति मक्प्रत्ययः कवर्गादेशश्च । प्रयवयन् । यु मिश्रणामिश्रणयोरित्यस्य ण्यंतस्य शतरि रूपं । लित्स्वरः । गृत्सः । गृधु अभिकांक्षायां । गृधिपण्योर्दकौ चेति सप्रत्ययो दकारश्चांतादेशः । वृषादित्वादाद्युदात्तः । पुरुधप्रतीकः । पुरुशब्द इह संख्यावाची । संख्याया विधार्थे धेति धाप्रत्ययः । ह्रस्वश्छांदसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥

उग्रस्तुराषाळभिभूत्योजा यथावशं तन्वं चक्र एषः ।
त्वष्टारमिंद्रो जनुषाभिभूयामुष्या सोममपिबच्चमूषु ॥४॥
उग्रः । तुराषाट् । अभिभूतिऽओजाः । यथाऽवशं । तन्वं । चक्रे । एषः ।
त्वष्टारं । इंद्रः । जनुषा । अभिऽभूय । आऽमुष्य । सोमं । अपिबत् । चमूषु ॥४॥

य एष इंद्र उग्रः शत्रूणां भयकरस्तुराषाट् त्वरया शत्रूणामभिभविता अत एवाभिभूत्योजाः शत्रूणामभिभवनपराक्रमोपेतः सन् तन्वमात्मीयं शरीरं यथावशं यथाकामं नानाविधरूपोपेतं चक्रे । तथा च मंत्रांतरं । रूपंरूपं मघवा बोभवीति । ऋ०सं० ३ ५३ ८ । इति । स इंद्रो जनुषा जन्मना सामर्थ्येन त्वष्टारं त्वष्टृनामकमसुरमभिभूय चमूषु चमसेषु स्थितमामुष्य चोरयित्वा सोममपिबत । त्वष्टा हतपुत्रो वीद्रमित्यादि प्रासहा सोममपिबत । मं० २ ४ १२ । इति तैत्तिरीयकं ॥ तुराषाट् । जित्वरा संभ्रमे । क्विप् । ज्वरत्वरेत्यादिना ऊठ् । सहेर्ण्वि छंदसि सह इति ण्विः । कर्तृकरणे कृता बहुलमिति समासः । तत्पुरुषे कृति बहुलमिति तृतीयाया अलुक् । सहेः साडः स इति षत्वं । कृदुत्तरपदस्वरः । यथावशं । वशः काममनतिक्रम्येत्यव्ययीभावसमासः । समासस्वरः । आमुष्य । मुष स्तेये । ल्यप् । चमूषु । चमु अदने । कृषिचमितनिधनिसर्जिखर्जिभ्य ऊरित्यूप्रत्ययः । प्रत्ययस्वरः ॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥५॥
शुनं । हुवेम । मघऽवानं । इंद्रं । अस्मिन् । भरे । नृऽतमं । वाजऽसातौ ।
शृण्वंतं । उग्रं । ऊतये । समत्ऽसु । घ्नंतं । वृत्राणि । संऽजितं । धनानां ॥५॥

सिद्धिषा ॥ ॥१२॥

शंसा महामिति पंचर्चमेकादशं सूक्तं वैश्वामित्रं त्रैष्टुभमैंद्रं । शंसा महामित्यनुक्रमणिका ॥ मरुत्वतीये दशरात्रेऽष्टमेऽहनि मरुत्वतीयशस्त्र एतत्सूक्तं । सूत्रितं च । शंसा महां महांश्चत्वामिंद्र । आ० ८ ७ । इति ॥

शंसा महामिंद्रं यस्मिन्विश्वा आ कृष्टयः सोमपाः काममव्यन् ।
यं सुक्रतुं धिषणे विभ्वतष्टं घनं वृत्राणां जनयंत देवाः ॥१॥

शंस । महां । इंद्रं । यस्मिन् । विश्वाः । आ । कृष्टयः । सोमऽपाः । कामं । अव्यन् ।
यं । सुऽक्रतुं । धिषणे इति । विभ्वऽतष्टं । घनं । वृत्राणां । जनयंत । देवाः ॥१॥

हे होतः महां महांतमिंद्रं शंस । शस्त्रैः स्तुहि । यस्मिन्निंद्रे रक्षितरि सति विश्वाः कृष्टयः सर्वे मनुष्याः सोमपा यज्ञमनुष्ठाय सोमपाः संतः कामं । काम्यत इति कामः स्वर्गादिः । तमाव्यन सर्वतः प्राप्नुवंति । धिषणे देवमनुष्यादीनां धारयित्र्यौ । यद्वा । प्रगल्भे समर्थे स्वाश्रितान् रक्षितुमिति धिषणे द्यावापृथिव्यौ । देवाश्च सुक्रतुं । क्रतुः कर्म जगत्पालनादि । शोभनः क्रतुर्यस्यासौ सुक्रतुः । तादृशं विभ्वतष्टं विभुना ब्रह्मणा जगदाधिपत्ये स्थापितं महांतं वृत्राणां पापरूपाणां घनं हंतारं यमिंद्रं जनयंत । अजनयन् ॥ शंस । शंसु स्तुतावित्यस्य लोटि रूपं । पादादित्वादनिघातः । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । अव्यन् । वी कांतिगत्यादिषु । लङि रूपं । यद्वृत्तयोगादनिघातः । अटस्वरः । सुक्रतुं । क्रत्वादयश्चेत्युत्तरपदाद्युदात्तः । धिषणे । ञिधृषा प्रागल्भ्ये इत्यस्माद्धृषेर्धिष च संज्ञायामिति क्युप्रत्ययः । धिष इत्यादेशः । प्रत्ययस्वरः । घनं । हंतेः पुंसि संज्ञायामिति घः । हो हंतेरिति कुत्वं । प्रत्ययस्वरः । जनयंत । जनेर्ण्यंतस्य लङि रूपं । यद्वृत्तयोगादनिघातः ॥

यं नु नकिः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठां ।
इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः ॥२॥
यं । नु । नकिः । पृतनासु । स्वऽराजं । द्विता । तरति । नृऽतमं । हरिऽस्थां ।
इनऽतमः । सत्वऽभिः । यः । ह । शूषैः । पृथुऽज्रयाः । अमिनात् । आयुः । दस्योः ॥२॥

पृतनासु । व्याप्रियंतेऽत्र योद्धार इति पृतनाः संग्रामाः । तेषु स्वराजं हरिष्ठां हरिस्थां हरियुक्ते रथे वर्तमानं नृतमं बलस्य युद्धे नेतृतमं द्विता युद्धमासाद्य सेनां द्विधा कृत्वा वर्तमानं यमिंद्रं नकिर्न कश्चिदपि तरति उत्तीर्य गच्छति । न कोऽप्यधृष्यस्तीत्यर्थः । नु प्रसिद्धौ । स इंद्र इनतमोऽतिशयेन सेनास्वामी सत्वभिः परितः सीदद्भिर्मरुद्भिः सह यो यान् गच्छन् शूषैः । शोषयति परबलानीति शूषाणि बलानि । तैः पृथुज्रया युद्धं प्रति तीव्रवेगः सन् दस्योः शत्रोरायुरन्नं प्राणं वामिनात् । हिनस्ति । ह प्रसिद्धौ ॥ अत्र निरुक्तं । पृथुज्रयाः पृथुजवः । पृथुज्रया अमिनादायुर्दस्योः । प्रामापयदायुर्दस्योः । ५ ९ । इति ॥ तरति । तॄ प्लवनतरणयोरित्यस्य लटि रूपं । यद्वृत्तयोगादनिघातः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । यः । या प्रापणे । औणादिकः कप्रत्ययः । आतो लोपः । प्रत्ययस्वरः ॥

महावा पृत्सु तरणिर्नार्वा व्यानशी रोदसी मेहनावान् ।
भगो न कारे हव्यो मतीनां पितेव चारुः सुहवो वयोधाः ॥३॥
महऽवा । पृत्ऽसु । तरणिः । न । अर्वा । विऽआनशिः । रोदसी इति । मेहनाऽवान् ।
भगः । न । कारे । हव्यः । मतीनां । पिताऽइव । चारुः । सुऽहवः । वयःऽधाः ॥३॥

य इंद्रः महवा बलवान्पृत्सु संग्रामेषु तरणिः । शत्रूनुत्तीर्य वर्तत इति तरणिः । तत्र दृष्टांतः । अर्वा न । यथार्वा बलवानश्वः शत्रुबलं तरति तथा रोदसी द्यावापृथिव्यौ व्यानशिर्व्याप्नुवन्मेहनावान् । मिह्यते सिच्यते दीयतेऽर्थिभ्य इति मेहनं धनं । तद्वान्भवति । तादृश इंद्रः कारे । क्रियत इति कारो यज्ञादिः । तस्मिन्यज्ञे भगो न पूषा देव इव हव्यो ह्वनीयो मतीनां स्तोतॄणां स्तुतीनां वा पितेव पालयिता चारुः कमनीयः सुहवः सुष्ठ्वाह्वानोपेतो वयोधा अन्नस्य दाता भवति ॥ महावा । महोऽस्यास्तीति मतुबर्थे छंदसीवनिपाविति वनिप् । अन्येषामपि दृश्यत इति संहितायां दीर्घः । पृत्सु । पृतनाशब्दस्य सौ परतः पदन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु इति पृदादेशः । साविकाच इति विभक्तेरुदात्तत्वं । व्यानशिः । अशू व्याप्तावित्यस्माच्छंदसि सदादिभ्यात्किप्रत्ययः । तस्य लिड्वद्भावः । अत आदेरित्यभ्यासस्य दीर्घे कृतेऽश्नोतेश्चेति नुडागमः । प्रादिसमासः । कारे । करोतेः कर्मणि

घञ्। कर्षात्वतो घञोंऽत उदात्त इत्यंतोदात्तत्वं। हव्यः। जुहोतेरचो यत्। यतोऽनाव इत्याद्युदात्तत्वं। सुहवः। ह्वयतेर्भावेऽनुपसर्गस्य। पा॰ ३. ३. ७५। इत्यप्प्रत्ययः। संप्रसारणं। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। आद्युदात्तं द्व्यच्छंदसीति बहुव्रीहावुत्तरपदाद्युदात्तत्वं॥

धर्ता दिवो रजसस्पृष्ट ऊर्ध्वो रथो न वायुर्वसुभिर्नियुत्वान्।
क्षपां वस्ता जनिता सूर्यस्य विभक्ता भागं धिषणेव वाजं॥४॥
धर्ता। दिवः। रजसः। पृष्टः। ऊर्ध्वः। रथः। न। वायुः। वसुऽभिः। नियुत्वान्।
क्षपां। वस्ता। जनिता। सूर्यस्य। विऽभक्ता। भागं। धिषणाऽइव। वाजं॥४॥

स इंद्रो दिवो द्युलोकस्य रजसोऽतरिक्षस्य च धर्ता धारकः पृष्टः सर्वत्र वर्तमानो रथो न तदीयो रथ इवोर्ध्वो वायुरूर्ध्वं गता वसुभिः सहायतया निवसद्भिर्मरुद्भिर्नियुत्वान्सहायवान्। यद्वा नेत्ययमुत्तरत्रापि संबध्यते। यथा वायुर्नियुत्वान्नियुन्नामकवडवाभिस्तद्वानेवमिंद्रो वसुभिर्मरुद्भिः सहायवान्। तथा क्षपा वस्ता रात्रिमाच्छादयन्सूर्यस्य जगत्प्रकाशकस्यादित्यस्य जनिता जनयिता भागं भजनीयं वाजं कर्मफलरूपमन्नं विभक्ता साधु विभागकर्ता भवति। तत्र दृष्टांतः। धिषणेव। यथाध्माना वागस्येदमिति विभागं करोति तद्वत्॥ रजसः। रंज रागे इत्यस्माद्भूरंजिभ्यां कित्। उ॰ ४. २१६। इत्यसुन्। कित्त्वान्नलोपः। रज्यंते प्रकाशेनेति रजोंऽतरिक्षं। नित्त्वादाद्युदात्तः। वस्ता। वस आच्छादने इत्यस्य तृचि रूपं। जनिता। जनयतेस्तृचि जनिता मंत्रे इति निपातनाण्णिलोपः। चित्त्वादंतोदात्तः। विभक्ता। भज सेवायामित्यस्य साधुकारिण्यर्थे तृन्। एकाच उपदेशे इतीट्प्रतिषेधः। तादौ च निति कृत्यतावित गतेः प्रकृतिस्वरत्वं॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां॥५॥
शुनं। हुवेम। मघऽवानं। इंद्रं। अस्मिन्। भरे। नृऽतमं। वाजऽसातौ।
शृण्वंतं। उग्रं। ऊतये। समत्ऽसु। घ्नंतं। वृत्राणि। संऽजितं। धनानां॥५॥ ॥१३॥

इंद्रः स्वाहेति पंचर्चं द्वादशं सूक्तं वैश्वामित्रं त्रैष्टुभमैंद्रं॥ दशरात्रे नवमेऽहनि मरुत्वतीयशस्त्र इदं सूक्तं। सूत्रितं च। तृतीयस्येंद्रः स्वाहा गायत्साम। आ॰ ८. ७। इति॥

इंद्रः स्वाहा पिबतु यस्य सोम आगत्या तुम्रो वृषभो मरुत्वान्।
ओरुव्यचाः पृणतामेभिरन्नैरास्य हविस्तन्वः काममृध्याः॥१॥
इंद्रः। स्वाहा। पिबतु। यस्य। सोमः। आऽगत्य। तुम्रः। वृषभः। मरुत्वान्।
आ। उरुऽव्यचाः। पृणतां। एभिः। अन्नैः। आ। अस्य। हविः। तन्वः। कामं। ऋध्याः॥१॥

अयमिंद्रः स्वाहा स्वाहाकृतमिमं सोमं पिबतु। यस्येंद्रस्यायं सोमः स इंद्रो यज्ञं प्रत्यागत्य तुम्रः कर्मविघ्नकारिणां हिंसको वृषभो यष्टॄणामभिमतफलवर्षको मरुत्वान्मरुद्भिस्तद्वान् उरुव्यचाः प्रभूतव्याप्तिः सन् एभिरस्माभिर्दत्तैरन्नैः सोमादिलक्षणैर्हविर्भिरा पृणतां। समंतात्पूरयतु। ततोऽस्येंद्रस्य संबंधिनस्तन्वः शरीरस्य कामं पुष्ट्यादिलक्षणविषयमभिलाषं हविरस्माभिर्दत्तमा ऋध्याः। सर्वतः पूरयतु॥ तुम्रः। तुमिराहननार्थः। उरुव्यचाः। व्यचेरसुन्। व्यचेः कुटादित्वमनसीति वक्तव्यमित्यत्रानसीति पर्युदासात् ङित्त्वाभावः। कृदुत्तरस्वरः। ऋध्याः। ऋध्नोतेराशीर्लिङि रूपं॥

आ ते सपर्यू जवसे युनज्मि ययोरनु प्रदिवः श्रुष्टिमावः ।
इह त्वा धेयुर्हरयः सुशिप्र पिबा त्व१स्य सुषुतस्य चारोः ॥२॥
आ । ते । सपर्यू इति । जवसे । युनज्मि । ययोः । अनु । प्रऽदिवः । श्रुष्टिं । आवः ।
इह । त्वा । धेयुः । हरयः । सुऽशिप्र । पिब । तु । अस्य । सुऽसुतस्य । चारोः ॥२॥

हे इंद्र ते तव जवसे यज्ञं प्रत्यागमनाय सपर्यू परिचारकौ हरी आ युनज्मि । रथे योजयामि । प्रदिवः पुरातनस्त्वं ययोरश्वयोः श्रुष्टिं वेगं । श्रुष्टीति क्षिप्रनामेति यास्कः । तमन्वाव । अनुगच्छसि । हे सुशिप्र शोभनहनो इंद्र हरयो रथे योजितास्तेऽश्वा इह कर्मणि त्वा त्वां धेयुः । यज्ञं प्रति धारयंतु । तत आगतस्त्वं सुषुतस्य सुष्ठ्वभिषुत चारोः कमनीयमस्येमं सोमं तु क्षिप्रं पिब ॥ सपर्यू । सपरशब्दः कंड्वादिः । तदंतादौणादिकः कुप्रत्ययः । आवः । अव रक्षणादिषु । छांदसे लङि रूपं । यद्वृत्तयोगादनिघातः । धेयुः । दधातेराशीर्लिङि किदाशिषीति यासुट् । एर्लिङि । पा॰ ६. ४. ६७. । इत्येकारादेशः । निघातः । पिब । पादादित्वादनिघातः । सुषुतस्य । षुञ् अभिषवे । कर्मणि क्तः । गतिरनंतर इति गतिस्वरः । उपसर्गात्सुनोतीत्यादिना संहितायां षत्वं ॥

गोभिर्मिमिक्षुं दधिरे सुपारमिंद्रं ज्यैष्ठ्याय धायसे गृणानाः ।
मंदानः सोमं पपिवाँ ऋजीषिन्त्समस्मभ्यं पुरुधा गा इषण्य ॥३॥
गोभिः । मिमिक्षुं । दधिरे । सुऽपारं । इंद्रं । ज्यैष्ठ्याय । धायसे । गृणानाः ।
मंदानः । सोमं । पपिऽवान् । ऋजीषिन् । सं । अस्मभ्यं । पुरुधा । गाः । इषण्य ॥३॥

गृणानाः स्तोत्रं कुर्वाणा ऋत्विजो मिमिक्षुं स्तोतॄणामभिमतफलं वर्षितुमिच्छंतं सुपारं शोभनपारं स्तुतिभिरभिमुखीकर्तुं शक्यमित्यर्थः । तादृशमिंद्रं ज्यैष्ठ्याय धनादिसंपत्त्या श्रेष्ठत्वाय धायसे चिरकालमायुर्धारणाय च गोभिर्गोभिः श्रितैः सोमैर्दधिरे । धारयंति । शपः प्रत्ययः । हे ऋजीषिन् सोमवन्निंद्र स त्वं मंदानो मोदमानः सोमं पपिवान् सोमस्य पाता सन् स्तोतृभ्योऽस्मभ्यं पुरुधा बहुधा गा अग्निहोत्रादिकर्मसिद्ध्यर्थं धेनूः समिषण्य । सम्यक् प्रेरय ॥ गोभिः । सावेकाच इति विभक्तेरुदात्तत्वे प्राप्ते न गोश्वन्साववर्णेति प्रतिषेधः । मिमिक्षुं । मिह सेचने इत्यस्य सन्येकाच इतीट्प्रतिषेधे हलंताच्चेति किद्भावः । सनाशंसभिक्ष उः । प्रत्ययस्वरः । ज्यैष्ठ्याय । ज्येष्ठस्य भाव इत्यर्थे ब्राह्मणादित्वात् ष्यञ् । ञित्त्वादाद्युदात्तः । गृणानाः । गॄ शब्दे । क्र्यादित्वात् श्ना । चित्त्वादंतोदात्तः । मंदानः । मदि स्तुत्यादिष्वित्यस्य शानचि बहुलं छंदसीति शपो लुक् । पुरुधा । पुरुशब्द इह संख्यावाची । संख्याया विधार्थे धेति धाप्रत्ययः । इषण्य । इष गतौ । इषणमिच्छतीति छंदसि परेच्छायां क्यच् । तदंतादंतर्भावितण्यर्थाल्लोटि रूपं ॥

इमं कामं मंदया गोभिरश्वैश्चंद्रवता राधसा पप्रथश्च ।
स्वर्यवो मतिभिस्तुभ्यं विप्रा इंद्राय वाहः कुशिकासो अक्रन् ॥४॥
इमं । कामं । मंदय । गोभिः । अश्वैः । चंद्रऽवता । राधसा । पप्रथः । च ।
स्वःऽयवः । मतिऽभिः । तुभ्यं । विप्राः । इंद्राय । वाहः । कुशिकासः । अक्रन् ॥४॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥५॥

शुनं। हुवेम। मघऽवानं। इंद्रं। अस्मिन्। भरे। नृऽतमं। वाजऽसातौ।
शृण्वंतं। उग्रं। ऊतये। समत्ऽसु। घ्नंतं। वृत्राणि। संऽजितं। धनानां ॥५॥

एते व्याख्याते ॥ ॥१४॥

चर्षणीधृतमिति द्वादशर्चं त्रयोदशं सूक्तं वैश्वामित्रमैंद्रं। अत्रानुक्रमणिका। चर्षणीधृतं द्वादशाद्यावंत्यौ तृचौ जागतगायत्राविति। आद्यमृचो जागतोऽत्यमृचो गायत्रः शिष्टा ऋचस्त्रिष्टुभः॥ सूक्तविनियोगो लैंगिकः। उक्थ्ये क्रतौ मैत्रावरुणशस्त्रेऽनुरूपतृचानंतरमाद्यमृचः शंसनीयः। सूत्रितं च। चर्षणीधृतमस्तभ्नाद्द्याममुर इति तृचौ। आ॰ ६.१.। इति॥ विषुवति निष्केवल्ये नृणामु त्वेति तृचः। विषुवानिति खंडे सूत्रितं। नृणामु त्वा नृतम गीर्भिरुक्थैरिति तिस्रः। आ॰ ८ ६। इति॥ बृहस्पतिसवेऽप्येष तृचो निष्केवल्ये निविद्धानीयः। सूत्रितं च। नृणामु त्वेति मध्यंदिनः। आ॰ ९ ५। इति॥ महाव्रतेऽपि निष्केवल्येऽयं तृचः॥ दशरात्रे चतुर्थेऽहनि मरुत्वतीये इंद्र मरुत्व इति तिस्रः। पंचमेऽहनि पष्ठस्येति खंडे सूत्रितं। इंद्र मरुत्व इति तिस्र इति मरुत्वतीये। आ॰ ८.१। इति॥ बृहस्पतिसवेऽपि मरुत्वतीयशस्त्रेऽयं तृचो निविद्धानीयः। सूत्रितं च। इंद्र मरुत्व इह नृणामु त्वेति मध्यंदिनः। आ॰ ९ ५। इति॥ आद्या मरुत्वतीयग्रहस्यानुवाक्या। सूत्रितं च। मरुत्वतीयेन ग्रहेण चरंतींद्र मरुत्व इह पाहि सोमं। आ॰ ५ १४। इति॥ तृतीये पर्याये होतुः शस्त्र इदं ह्यन्वोजसेति स्तोत्रियस्तृचः। सूत्रितं च। इदं ह्यन्वोजसा महाँ इंद्रो य ओजसा। आ॰ ६ ४। इति॥

चर्षणीधृतं मघवानमुक्थ्य१मिंद्रं गिरो बृहतीरभ्यनूषत।
वावृधानं पुरुहूतं सुवृक्तिभिरमर्त्यं जरमाणं दिवेदिवे ॥१॥
चर्षणिऽधृतं। मघऽवानं। उक्थ्यं। इंद्रं। गिरः। बृहतीः। अभि। अनूषत।
ववृधानं। पुरुऽहूतं। सुवृक्तिऽभिः। अमर्त्यं। जरमाणं। दिवेऽदिवे ॥१॥

बृहतीः प्रभूता गिरोऽस्मदीयाः स्तुतिलक्षणा वाचश्चर्षणीधृतं चर्षणीनां मनुष्याणामभिमतफलप्रदानेन धारकं पोषकं। यद्वा। आकृष्यतेऽनेन सर्वमिति चर्षणि बलं तद्धारकं। मघवानं धनवंतमुक्थ्यमुक्थैः शस्त्रैः शंसनीयं वावृधानं बलधनादिसंपत्त्या प्रतिक्षणं वर्धमानं पुरुहूतं स्तोतृभिर्बहुवारमाहूतममर्त्यं मरणधर्मरहितं सुवृक्तिभिः शोभनस्तुतिवाक्यैर्दिवे दिवे प्रत्यहं जरमाणं स्तूयमानं तमिममिंद्रमभ्यनूषत। अभितः सर्वतः स्तुवंतु॥ बृहतीः। वा छंदसीति सवर्णदीर्घः। अनूषत। णू स्तवने। अस्माल्लुङि सिच्। धातोः कुटादित्वात्सिचो ङित्त्वेन गुणाभावः। सुवृक्तिभिः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। यद्वा। सुवृज्यंत इति स्तुतिकरणभूता ऋचो वृक्तिशब्देनोच्यंते। क्तिच्क्तौ चेति क्तिच्। कृत्स्वरेणांतोदात्तः। दिवे दिवे। नित्यवीप्सयोरिति द्विर्वचनं। परस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः॥

शतक्रतुमर्णवं शाकिनं नरं गिरो म इंद्रमुप यंति विश्वतः।
वाजसनिं पूर्भिदं तूर्णिमप्तुरं धामसाचमभिषाचं स्वर्विदं ॥२॥
शतऽक्रतुं। अर्णवं। शाकिनं। नरं। गिरः। मे। इंद्रं। उप। यंति। विश्वतः।
वाजऽसनिं। पूःऽभिदं। तूर्णिं। अपऽतुरं। धामऽसाचं। अभिऽसाचं। स्वःऽविदं ॥२॥

मे मदीया गिरः स्तुतिलक्षणा वाचः शतक्रतुं। शतं क्रतवो यज्ञा यस्य तं। अर्णवं पर्जन्यात्मनोदकवंतं शाकिनं। शक्नोत्येभिरिंद्र इति शाकाः सहायभूता मरुतः। तद्वंतं। नरं सर्वस्य जगतो नेतारं वाजसनिं वाजस्यान्नस्य दातारं पूर्भिदं शत्रुपुरां भेत्तारं तूर्णिं युद्धं प्रति शीघ्रं गंतारमप्तुरं मेघभेदनद्वारापां प्रेरकं धामसाचं तेजो भजमानं। यद्वा धनं धाम। तदर्थिभिः सह योजयितारं। अभिषाचं शत्रूणामभिभवितारं स्वर्विदं

स्वर्गस्य लंभकं तमिममिंद्रं विश्वतः सर्वत उप यंति। उपगच्छंतु ॥ अर्णवं। अर्णोऽस्यास्तीति मत्वर्थेऽर्णसः सलोपश्चेति वप्रत्ययः सकारलोपश्च। प्रत्ययस्वरः। नरं। नयतेर्डिच्चेत्यृप्रत्ययः। अमः सुप्त्वादनुदात्तत्वे प्रत्ययस्वरः। यंति। इण गतावित्यस्य लटीणो यणिति यण। निघातः। वाजसनिं। षणु दाने। खनिकष्यज्यसिवसीत्यादिना इप्रत्ययः। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। तूर्णिं। ञित्वरा संभ्रमे। वह्निश्रीत्यादिना निप्रत्ययः। ज्वरत्वरेत्यादिना ऊट। नित्दित्यतिदेशादाद्युदात्तः। अप्तुरं। तुर त्वरणे। क्विप। कृदुत्तरपदस्वरः। अभिपाचं। पच समवाये। ण्यंतस्य क्विप ॥

आकरे वसोर्जरिता पनस्यतेऽनेहसः स्तुभ इंद्रो दुवस्यति।
विवस्वतः सदन आ हि पिप्रिये सत्रासाहमभिमातिहनं स्तुहि ॥३॥
आऽकरे। वसोः। जरिता। पनस्यते। अनेहसः। स्तुभः। इंद्रः। दुवस्यति।
विवस्वतः। सदने। आ। हि। पिप्रिये। सत्राऽसहं। अभिमातिऽहनं। स्तुहि ॥३॥

जरिता शत्रूणां जरयितेंद्र आकरे। आकीर्यंते युद्धार्थं धनमित्याकरो युद्धं। तस्मिन्वसोर्धनस्य स्थानभूते युद्धे पनस्यते। सर्वैः स्तूयते। यद्वा वसोः। वसत्याभिमुख्येन तिष्ठतीति वसुः शत्रुस्तस्य जरयितेति योजनीयं। स इंद्रोऽनेहसोऽपापाः स्तुभः स्तुतीर्दुवस्यति। परिचरति। तासां फलं प्रयच्छन पूजयतीत्यर्थः। किंच स इंद्रो विवस्वतो। परिचरणाग्निहोत्रार्थं वसतो हविष्मतो वा यजमानस्य सदने गृह आ पिप्रिये हि। सोमपानादिनात्यंत प्रीतो भवति खलु। सत्रासाहं शत्रूणामेव हंतारं यद्वा मरुद्भिः सह शत्रूणामभिभवितारं अत एवाभिमातिहनं शत्रूणां हंतारमिंद्रं स्तुहि। हे विश्वामित्रेति ॥ आकरे। कॄ विक्षेपे। अधिकरणे ऋदोरबित्यप। थाथादिस्वरेणांतोदात्तः। जरिता। जॄष वयोहानावित्यस्यांतर्भावितण्यर्थस्य तृचि रूपं। चित्त्वादंतोदात्तः। पनस्यते। पनस्यतिः स्तुतिकर्मा। तस्य कर्मणि लटि रूपं। निघातः। अनेहसः। हंतेर्नञ्युपपदे नञि हन एह चेत्यसिप्रत्यय एह इत्ययं चादेशो धातोः। नञ्सुभ्यामिति स्वरेणांतोदात्तः। स्तुभः। स्तोभतिरर्चतिकर्मा। क्विप। दुवस्यति। दुवः परिचरणमात्मन इच्छतीत्यर्थे क्यच। निघातः। पिप्रिये। प्रीङ् तर्पणे। लिटि रूपं। हियोगादनिघातः ॥

नृणामु त्वा नृतमं गीर्भिरुक्थैरभि प्र वीरमर्चता सबाधः।
सं सहसे पुरुमायो जिहीते नमो अस्य प्रदिव एक ईशे ॥४॥
नृणां। ऊं इति। त्वा। नृऽतमं। गीःऽभिः। उक्थैः। अभि। प्र। वीरं। अर्चत। सऽबाधः।
सं। सहसे। पुरुऽमायः। जिहीते। नमः। अस्य। प्रऽदिवः। एकः। ईशे ॥४॥

हे इंद्र सबाधः। रक्षोघ्नमंत्रोच्चारणेन तद्विषयबाधया सह वर्तंत इति सबाध ऋत्विजः। नृणां नृतमं मनुष्याणामतिशयेन स्वकर्मणि नेतारं वीरं सामर्थ्योपेतं त्वा गीर्भिः स्तुतिसाधनभूतैर्वाक्यैरुक्थैः शस्त्रैश्चाभ्यामभिमुख्येन प्रार्चत। प्रकर्षेणार्चत। पुरुमायो वृत्रहननादिबहुकर्मा स इंद्रः सहसे बलाय सं जिहीते। गमनोद्यमं करोति। किंच प्रदिवः पुरातन एकोऽसहायः स इंद्रो नमो नमसोऽस्य हविर्लक्षणस्यान्नस्येशे। ईष्टे। यद्वा अस्य सर्वस्य जगत ईष्टे। तस्मा इंद्राय नमः ॥ नृणां। नामन्यतरस्यामिति विभक्तेरुदात्तत्वं। अर्चत। अर्चतेर्लोटि झस्तादेशः तिङां तिङो भवतीति वचनात्। सबाधः। बाधृ विलोडने। क्विप। वोपसर्जनस्येति सहस्य सत्वं। कृदुत्तरपदस्वरः। पुरुमायः। अंतोदात्तप्रकरणे त्रिचक्रादीनामुपसंख्यानमित्यंतोदात्तत्वं। ईशे। ईश ऐश्वर्ये इत्यस्य लटि लोपस्त आत्मनेपदेष्विति तलोपः। निघातः ॥

पूर्वीरस्य निष्षिधो मर्त्येषु पुरू वसूनि पृथिवी बिभर्ति।
इंद्राय द्याव ओषधीरुतापो रयिं रक्षंति जीरयो वनानि ॥५॥

पूर्वीः । अस्य । निःऽसिधः । मर्त्येषु । पुरु । वसूनि । पृथिवी । बिभर्ति ।
इंद्राय । द्यावः । ओषधीः । उत । आपः । रयिं । रक्षंति । जीरयः । वनानि ॥५॥

मर्त्येषु मनुष्येष्वस्येंद्रस्य निष्षिधोऽनुशासनानि पूर्वीर्हितोपदेशादिभिः प्रभूतानि नानाप्रकाराणि भवंति । इंद्रस्य शासितृत्वे मंत्रः । उक्थमिंद्राय शंस्यं वर्धनं पुरुनिष्षिधे । ऋग्सं० १.१०.५. । इति । तथा शासकाय तस्मा इंद्राय पृथिवी पुरु पुरूणि बहूनि वसूनि धनानि बिभर्ति । अंतर्धारयति । किंच द्यावो द्युलोका ओषधीरोषधय उत अपि चापो जलानि जीरयः । जीर्यंत इति जीरयो मनुष्याः । वनानि वृक्षाश्च एते सर्व इंद्रस्याज्ञया तदुपभोगयोग्यं रयिं धनं रक्षंति ॥ निष्षिधः । षिधु गत्यां । क्विप् । संहितायां निसः सकारेणाणो व्यवधानं छांदसत्वादनादृत्योपसर्गात्सुनोतीत्यादिना षत्वं । निसः सकारस्य ष्टुना ष्टुरिति षत्वं ॥ ॥१५॥

तुभ्यं ब्रह्माणि गिर इंद्र तुभ्यं सत्रा दधिरे हरिवो जुषस्व ।
बोध्या३पिरवसो नूतनस्य सखे वसो जरितृभ्यो वयो धाः ॥६॥

तुभ्यं । ब्रह्माणि । गिरः । इंद्र । तुभ्यं । सत्रा । दधिरे । हरिऽवः । जुषस्व ।
बोधि । आपिः । अवसः । नूतनस्य । सखे । वसो इति । जरितृऽभ्यः । वयः । धाः ॥६॥

हे हरिवोऽश्ववन्निंद्र तुभ्यं त्वदर्थं ब्रह्माणि स्तोत्राणि तथा तुभ्यं गिरः शस्त्राणि च सत्रा सत्यमेव दधिरे । ऋत्विजो धारयंति । तानि जुषस्व । सेवस्व । हे वसो सर्वस्य वासयितः सखे सखिभूत हे इंद्र आपिर्व्याप्तस्त्वं नूतनस्य नवतरस्यावसोऽन्नलक्षणं हविर्बोधि । त्वदर्थं दीयमानं जानीहि । अतस्त्वं जरितृभ्यः स्तोतृभ्योऽस्मभ्यं वयोऽन्नं धाः । देहि ॥ तुभ्य । ङयि चेत्याद्युदात्तत्वं । जुषस्व । जुषी प्रीतिसेवनयोरित्यस्य लोटि रूपं । वाक्यभेदादनिघातः । बोधि । बुध अवगमन इत्यस्य लोटि वा छंदसीति हेर्विकल्पेन पित्त्वादत्र पित्त्वाद्गुणः । हुझल्भ्यो हेर्धिरिति ध्यादेशः । ङित्त्वादंतोदात्तः ॥

इंद्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्ना विवासंति कवयः सुयज्ञाः ॥७॥

इंद्र । मरुत्वः । इह । पाहि । सोमं । यथा । शार्याते । अपिबः । सुतस्य ।
तव । प्रऽनीती । तव । शूर । शर्मन । आ । विवासंति । कवयः । सुऽयज्ञाः ॥७॥

हे मरुत्वो मरुद्भिस्तद्वन् हे इंद्र त्वमिहास्मदीये यज्ञ आगत्य सोमं पाहि । पिब । यथा त्वं पुरं शार्याते शार्यातेः पुत्रे तस्मिन्राजनि यज्ञं कुर्वाणे सुतस्याभिषुतं सोममपिबः तथात्रापि पिबेत्यर्थः । इंद्रः शार्यातस्य यज्ञे सोमरसमानपिबदित्येषोऽर्थः कौषीतके स्पष्टमुक्तः । तथा मंत्रवर्णश्च । आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मंदसे । ऋग्सं० १.५१.१२ । इति । हे शूरेंद्र तव संबंधिनि शर्मन शर्मणि निर्बाधस्थाने स्थिताः सुयज्ञाः सुष्ठुकृतयज्ञाः कवयो मेधाविनो यजमानाः प्रणीती तव हविषा प्रणयनेन प्रापणेन आ समंतात्त्वां विवासंति । त्वामेव परिचरंति । विवासतिः परिचरणकर्मा ॥ शार्याते । शर्यातेरयमित्यर्थे तस्येदमित्यण्प्रत्ययः । अपिबः । यथायोगादनिघातः । अडागमस्वरः । प्रणीती । नयतेर्भावे क्तिन् । तादौ च निति कृतीति गतेः प्रकृतिस्वरत्वं । सुपां सुलुगिति तृतीयायाः सवर्णदीर्घः । उपसर्गादसमासेऽपि णत्वं ॥

स वावशान इह पाहि सोमं मरुद्भिरिंद्र सखिभिः सुतं नः ।
जातं यत्त्वा परि देवा अभूषन्महे भराय पुरुहूत विश्वे ॥८॥

सः । वावशानः । इह । पाहि । सोमं । मरुत्ऽभिः । इंद्र । सखिऽभिः । सुतं । नः ।
जातं । यत् । त्वा । परि । देवाः । अभूषन । महे । भराय । पुरुऽहूत । विश्वे ॥८॥

हे इंद्र वावशानः सोमं कामयमानः स तादृशस्त्वं सखिभिः समानख्यानैर्मरुद्भिः सह गोऽस्मत्संबंधिनी-र्हाभिन्यत्र सुतमभिषुतं सोमं पाहि । पिब । हे पुरुहूत पुरुभिराहूतेंद्र जातं पानेन प्रबलं संपन्नं यत यं त्वां विश्वे सर्वे देवा मंह महते भराय । ह्रियंते योधानामायूंष्यत्रेति भरः संग्रामः । तस्मै संग्रामाय पर्यभूषन् । सर्वतोऽलमकुर्वन् ॥ वावशानः । वशेर्यङ्लुकि चानशि रूपं । चित्त्वादंतोदात्तः । अभूषन् । भूष अलंकारे । भ्वादिः । लङि रूपं । यद्योगादनिघातः । भराय । हृञ् हरणे । अधिकरणे घः । हृग्रहोर्भश्छंदसीति हकारस्य भकारः । वृषादित्वादाद्युदात्तः ॥

अप्तूर्यं मरुत आपिरेषोऽमंदन्निंद्रमनु दातिवाराः ।
तेभिः साकं पिबतु वृत्रखादः सुतं सोमं दाशुषः स्वे सधस्थे ॥९॥

अपऽतूर्यं । मरुतः । आपिः । एषः । अमंदन् । इंद्रं । अनु । दातिऽवाराः ।
तेभिः । साकं । पिबतु । वृत्रऽखादः । सुतं । सोमं । दाशुषः । स्वे । सधऽस्थे ॥९॥

हे मरुतो य एष इंद्रोऽप्तूर्येऽपां प्रेरणे आपिर्युष्माकं सखा सन् वर्तते दातिवाराः । वारो वरणीयं बलं धनं वा । दत्तबला दत्तधना वा ते मरुतस्तमिंद्रमन्वमदन् । अहृष्यन् । वृत्रखादो वृत्रस्य हिंसकः स इंद्रस्तेभि-स्तैर्मरुद्भिः साकं दाशुषो हविर्दत्तवतो यजमानस्य स्वे स्वकीये सधस्थे । सह तिष्ठंत्यस्मिन्निति सधस्थं गृहं । तस्मिन् सुतमभिषुतं सोमं पिबतु ॥ अप्तूर्ये । तूरी त्वराहिंसयोरित्यस्मादघ्न्यादयश्चेति यत्प्रत्ययः । यतोऽनाव इत्या-द्युदात्तः । समासे कृदुत्तरपदस्वरः । अमदन् । मदि स्तुत्यादिषु । परस्मैपदी । पादादित्वादनिघातः । वृत्रखादः । खादृ भक्षणे । कर्मण्यण् । दाशुषः । दाशृ दाने इत्यस्य क्वसौ दाश्वान्साह्वान्मीढ्वांश्चेति द्विर्वचनाद्यभावः । वसोः संप्रसारणं । प्रत्ययस्वरः । सधस्थे । सध मादस्थयोश्छंदसीति सहस्य सधादेशः ॥

इदं ह्यन्वोजसा सुतं राधानां पते । पिबा त्व१स्य गिर्वणः ॥१०॥

इदं । हि । अनु । ओजसा । सुतं । राधानां । पते । पिब । तु । अस्य । गिर्वणः ॥१०॥

हे राधानां पते धनानां स्वामिन् गिर्वणो गीर्भिः स्तुतिभिर्वननीय हे इंद्र इदमनु अनेनानुक्रमेण । उद्देशानुक्रमेणेत्यर्थः । ओजसा बलेन ग्रावभिः सुतमभिषुतं सोमं तु क्षिप्रं पिब हि ॥

यस्ते अनु स्वधामसत्सुते नि यच्छ तन्वं । स त्वा ममत्तु सोम्यं ॥११॥

यः । ते । अनु । स्वधां । असत् । सुते । नि । यच्छ । तन्वं । सः । त्वा । ममत्तु । सोम्यं ॥११॥

हे इंद्र त्वदर्थं यः सोमः स्वधामन्नमनु अनुसृत्य ग्रावभिरभिषुतोऽसत् सुते तस्मिन् सोमे तन्वं स्वकीयं शरीरं नि यच्छ । प्रेरय । स सोमः सोम्यं सोमार्हं त्वा त्वां ममत्तु । मादयतु ॥ असत् । अस्तेर्लेट्यडागमे रूपं । यद्वृत्तयोगादनिघातः । आगमस्यानुदात्तत्वे धातुस्वरः ॥

प्र ते अश्नोतु कुक्ष्योः प्रेंद्र ब्रह्मणा शिरः । प्र बाहू शूर राधसे ॥१२॥

प्र । ते । अश्नोतु । कुक्ष्योः । प्र । इंद्र । ब्रह्मणा । शिरः । प्र । बाहू इति । शूर । राधसे ॥१२॥

हे इंद्र स सोमस्ते तव कुक्ष्योः कुक्ष्योरुभयोः पार्श्वयोरुभौ पार्श्वौ प्राश्नोतु । प्रकर्षेण व्याप्नोतु । तथा ब्रह्मणा स्तोत्रेण सहितः स सोमः शिरः शरीरं । अवयववादिनावयवी लक्ष्यते । त्वच्छरीरं प्राश्नोतु । हे शूर इंद्र राधसे धनाय तव बाहू अपि प्राश्नोतु ॥ अश्नोतु । अशू व्याप्तावित्यस्य लोटि व्यत्ययेन परस्मैपदं । निघातः । कुक्ष्योः । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं ॥ ॥१६॥

धानावंतमित्यष्टर्चं चतुर्दशं सूक्तं वैश्वामित्रमैंद्रं । अत्रेयमनुक्रमणिका । धानावंतमष्टौ पूर्वार्धं गायत्रं षष्ठी जगतीति । आदितश्चतस्रो गायत्र्यस्तृतीयं धाना इति षष्ठी जगती शिष्टास्त्रिष्टुभः ॥ सूक्तविनियोगो लिंगाद-

वगंतव्यः। प्रातःसवनीयपुरोडाशस्यानुवाक्या धानावंतमित्याद्या। सूचितं च। धानावंतं करंभिणमिति प्रातःसवनेऽनुवाक्या। आ० ५. ४.। इति ॥

धानावंतं करंभिणमपूपवंतमुक्थिनं। इंद्र प्रातर्जुषस्व नः ॥१॥
धानाऽवंतं। करंभिणं। अपूपऽवंतं। उक्थिनं। इंद्र। प्रातः। जुषस्व। नः ॥१॥

हे इंद्र धानावंतं। धाना भृष्टयवाः। तद्वंतं करंभिणं। करंभो दधिमिश्राः सक्तवः। तद्वंतमपूपवंत सवनीयपुरोडाशोपेतमुक्थिनं शस्त्रिणं नोऽस्मदीयमिमं सोमं प्रातः प्रातःसवने जुषस्व। सेवस्व ॥ प्रातः। स्वरादिष्वंतोदात्तत्वेन पठितत्वादंतोदात्तः ॥

पुरोळाशं पचत्यं जुषस्वेंद्रा गुरस्व च। तुभ्यं हव्यानि सिस्रते ॥२॥
पुरोळाशं। पचत्यं। जुषस्व। इंद्र। आ। गुरस्व। च। तुभ्यं। हव्यानि। सिस्रते ॥२॥

हे इंद्र पचत्यं पचने साधु पुरोडाशं। पुरो दाशत एनमिति पुरोडाशो हविः। जुषस्व। किंच आ गुरस्व। पुरोडाशभक्षणार्थमुद्यमं कुरु। हव्यानि हवनयोग्यानि पुरोडाशादीनि हवींषि तुभ्यं त्वदर्थं सिस्रते। आहवनीयं गच्छंति। तानि सेवस्वेति भावः ॥ पचत्यं। पचतशब्दात्तत्र साधुरिति यत्प्रत्ययात्तस्य पदस्य द्व्यच्त्वाभावादत्र यतोऽनाव इत्यस्य प्राप्तिर्नास्ति। तित्स्वरितः। गुरस्व। गुरी उद्यमने। शविकरणो। निघातः। सिस्रते। सृ गतौ। बहुलं छंदसि जुहोत्यादिः। व्यत्ययेनात्मनेपदं ॥

पुरोळाशं च नो घसो जोषयासे गिरश्च नः। वधूयुरिव योषणां ॥३॥
पुरोळाशं। च। नः। घसः। जोषयासे। गिरः। च। नः। वधूयुःऽइव। योषणां ॥३॥

हे इंद्र नोऽस्मत्संबंधिनं पुरोडाशं घसः। भक्षय च। नोऽस्मदीयाः स्तुतिलक्षणा गिरो जोषयासे। सेवस्व च। तत्र दृष्टांतः। वधूयुरिव योषणां। यथा वधूयुः स्त्रीकामो योषणां भजनीयां युवतिं सेवते तद्वत् ॥ घसः। घसॢ अदने इत्यस्य लेट्यडागमे रूपं। चवायोगे प्रथमेति न निघातः। जोषयासे। जुषी प्रीतिसेवनयोरित्यस्य ण्यंतस्य लेट्याडागमे रूपं। आगमस्यानुदात्तत्वे णिच्स्वरः। पादादित्वादनिघातः। वधूयुरिव। सुप आत्मनः क्यच्। क्याच्छंदसीत्युप्रत्ययः। प्रत्ययस्वरः। योषणां। युष भजन इति सौत्रो धातुः। कृत्यल्युटो बहुलमिति ल्युट्। लित्स्वरः ॥

पुरोळाशं सनश्रुत प्रातःसावे जुषस्व नः। इंद्र क्रतुर्हि ते बृहन् ॥४॥
पुरोळाशं। सनऽश्रुत। प्रातःऽसावे। जुषस्व। नः। इंद्र। क्रतुः। हि। ते। बृहन् ॥४॥

हे सनश्रुत पुराणतया प्रसिद्ध हे इंद्र नोऽस्मत्संबंधिनमिमं पुरोडाशं प्रातःसावे। सूयतेऽत्र सोम इति सावः। तस्मिन् प्रातःसवने जुषस्व। यतस्ते तव क्रतुः कर्म बृहन् महद्धि ॥ प्रातःसावे। षुञ् अभिषवे। कर्मणि घञ्। प्रादिसमासः। थाथादिस्वरेणांतोदात्तः ॥

माध्यंदिनसवने सवनीयपुरोडाशस्य माध्यंदिनस्य सवनस्य धाना इत्यनुवाक्या। सूचितं च। माध्यंदिनस्य सवनस्य धाना इति माध्यंदिने। आ० ५ ४.। इति ॥

माध्यंदिनस्य सवनस्य धानाः पुरोळाशमिंद्र कृष्वेह चारुं।
प्र यत्स्तोता जरिता तूर्ण्यर्थो वृषायमाण उप गीर्भिरीट्टे ॥५॥
माध्यंदिनस्य। सवनस्य। धानाः। पुरोळाशं। इंद्र। कृष्व। इह। चारुं।
प्र। यत्। स्तोता। जरिता। तूर्णिऽअर्थः। वृषऽयमाणः। उप। गीःऽभिः। ईट्टे ॥५॥

हे इंद्र माध्यंदिनस्य मध्यंदिने भवस्य सवनस्य संबंधिनीर्धाना भृष्टयवान् चारुं कमनीयं पुरोडाशं चेह कर्मण्यागत्य कृष्व । भक्षणेन संस्कुरु । यद्यदा जरिता भवत्परिचरणं कुर्वाणस्तृर्ण्यर्थस्त्वां स्तोतुमितस्ततस्त्वरितगमनः अत एव वृषायमाणो वृषवाचरन् स्तोता गीर्भिः स्तुतिलक्षणाभिर्वाग्भिरुप समीपे प्रेट्टे प्रकर्षेण स्तौति । तदा पुरोडाशादिहवींषि भक्षयेति भावः ॥ माध्यंदिनस्य । मध्यंदिनशब्दात्तत्र भवार्थे उत्सादित्वादञ् । ञित्त्वादाद्युदात्तः । चारु । चर गतिभक्षणयोः । दृसनिजनिचरिचटिरहिभ्यो ञुणिति ञुण् । णित्त्वादुपधावृद्धिः । ञित्त्वादाद्युदात्तः । तृर्ण्यर्थः । तूर्णिः । ञित्वरा संभ्रम इत्यस्माद्वहिश्रीत्यादिना निप्रत्ययो निदृ । अर्थः । ऋ गतौ । उषिकुषिगार्तिभ्यस्थन्निति थन् । बहुव्रीहौ पूर्वपदस्वरः । वृषायमाणः । वृषवाचरतीत्यर्थे कर्तुः क्यङ् सलोपश्चेति क्यङ् । अकृत्सार्वधातुकयोर्दीर्घः । ङित्त्वादनुदात्तङित इत्यात्मनेपदं । लट् । शानच् । तस्य लसार्वधातुकस्वरे धातुस्वरः । ईट्टे । ईड स्तुतावित्यस्य लटि रूपं । यद्योगादनिघातः ॥ ॥१७॥

तृतीयसवने सवनीयपुरोडाशस्य तृतीये धाना इत्यनुवाक्या । सूचितं च । तृतीये धानाः सवने पुरुष्टुतेति तृतीयसवने । आ० ५. ४. । इति ॥

तृतीये धानाः सवने पुरुष्टुत पुरोळाशमाहुतं मामहस्व नः ।
ऋभुमंतं वाजवंतं त्वा कवे प्रयस्वंत उप शिक्षेम धीतिभिः ॥६॥
तृतीये । धानाः । सवने । पुरुऽस्तुत । पुरोळाशं । आऽहुतं । ममहस्व । नः ।
ऋभुऽमंतं । वाजऽवंतं । त्वा । कवे । प्रयस्वंतः । उप । शिक्षेम । धीतिऽभिः ॥६॥

हे पुरुष्टुत पुरुभिर्बहुभिः स्तोतृभिः स्तुत हे इंद्र तृतीये सवने नोऽस्मदीया धाना हुतान् भृष्टयवानाहुतं पुरोडाशं च मामहस्व । भक्षणेन महय । संभावय । हे कवे इंद्र प्रयस्वंतः संभृतहविष्का वयमृभुमंतं । ऋभवो ये केचन देवास्तद्वंतं । वाजवंतं । वाजो नाम सुधन्वनः पुत्रस्तद्वंतं त्वां धीतिभिः स्तुतिभिरुप शिक्षेम । समीपे परिचरेम ॥ आहुत । जुहोतेः कर्मणि क्तः । गतिरनंतर इति गतेः स्वरः । मामहस्व । मह पूजायामित्यस्य यङ्लुगंतस्य लोटि व्यत्ययेनात्मनेपदं । शपो लुगभावश्छांदसः । शिक्षेम । शिक्षतेराशीर्लिङि लिङ्याशिष्यङिति अङ्प्रत्ययः । निघातः । धीतिभिः । तितुत्रतथसिसुसरकसेषु चेतीण्निषेधाद्... 

पूषण्वते ते चकृमा करंभं हरिवते हर्यश्वाय धानाः ।
अपूपमद्धि सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ॥७॥
पूषण्ऽवते । ते । चकृम । करंभं । हरिऽवते । हरिऽअश्वाय । धानाः ।
अपूपं । अद्धि । सऽगणः । मरुत्ऽभिः । सोमं । पिब । वृत्रऽहा । शूर । विद्वान् ॥७॥

हे इंद्र पूषण्वते । पूषा नाम कश्चिद्देवोऽदंतकः । तद्वते ते तुभ्यं करंभं दधिमिश्रं सक्तुं चकृम । भक्षणार्थं कुर्मः । तथा च श्रुतिः । पूषा प्रपिष्टभागोऽदंतको हि । तै० सं० २. ६. ८. । इति । हरिवते । हरिनामकावश्वौ । तद्वते हर्यश्वाय हरितवर्णाश्वयुक्तायेंद्राय तुभ्यं धाना भक्षणार्थं कुर्मः । तथा च मंत्रवर्णः । यमेतामश्वा वि मुचेह शोणा दिवेदिवे सदृशीरद्धि धानाः । ऋग्वे० ३ ३५. ३. । इति । मरुद्भिः सगणस्त्वमपूपं पुरोडाशमद्धि । भक्षय । हे शूर असहाय हे इंद्र वृत्रहा वृत्रस्य हंता विद्वान् सर्वं जानानस्त्वं सोमं पिब ॥ पूषण्वते । पूषन्शब्दस्य मतुप् । अनो नुडिति नुडागमः । रषाभ्यामिति णत्वं । चकृम । करोतेश्छांदसे वर्तमाने लिटि क्रादित्वादिडभावः । निघातः । हरिवते । छंदसीर इति मतुपो वत्वं ॥

प्रति धाना भरत तूर्यमस्मै पुरोळाशं वीरतमाय नृणां ।
दिवेदिवे सदृशीरिंद्र तुभ्यं वर्धंतु त्वा सोमपेयाय धृष्णो ॥८॥

प्रति । धानाः । भरत । तूयं । अस्मै । पुरोळाशं । वीरऽतमाय । नृणां ।
दिवेऽदिवे । सऽदृशीः । इंद्र । तुभ्यं । वर्धंतु । त्वा । सोमऽपेयाय । धृष्णो इति ॥ ८॥

यजमानोऽध्वर्य्वादीन्प्रति ब्रूते । हे अध्वर्य्वादयः अस्मा इंद्राय धानास्तूयं क्षिप्रं प्रति भरत । संपादयत । नृणां वीरतमायास्मा इंद्राय पुरोडाशं च संपादयत । अथ प्रत्यक्षकृतः । हे धृष्णो शत्रूणामभिभवनशील हे इंद्र सदृशीरेकविधाः स्तुतयस्तुभ्यं त्वदर्थं दिवे दिवे प्रतिदिवसमस्माभिः क्रियंते । ताः स्तुतयः सोमपेयाय सोमपानार्थं त्वा वर्धंतु । उत्साहेन प्रवृद्धं कुर्वंतु ॥ सदृशीः । समानान्ययोश्चेति कञ्प्रत्ययः । टिड्ढाणञित्यादिना ङीप् । दृग्दृशवतुष्विति समानस्य सभावः ॥ ॥१८॥

इंद्रापर्वतेति चतुर्विंशत्यृचं पंचदशं सूक्तं । अत्रेयमनुक्रमणिका । इंद्रापर्वता चतुर्विंशतिराद्यैंद्रापार्वती पंचदश्यादिद्वे वाचं ससर्पर्यं चतस्रो रथांगस्तुतयोऽत्या अभिशापास्ता वसिष्ठद्वेषिण्यो न वसिष्ठाः शृण्वंति । दशमीषोडश्यौ जगत्यौ त्रयोदशी गायत्री द्वादशीविंशीद्वाविंश्योऽनुष्टुभोऽष्टादशी बृहतीति । विश्वामित्र ऋषिः । दशमी षोडशी च द्वे जगत्यौ त्रयोदशी गायत्री द्वादशीविंशीद्वाविंश्यस्तिस्रोऽनुष्टुभोऽष्टादशी बृहती शिष्टास्त्रिष्टुभः । आद्यैंद्रापर्वतदेवताका पंचदशीषोडश्यौ वाग्देवत्ये तदुत्तराश्चतस्रो रथांगदेवताकाः शिष्टा ऐंद्र्यः ॥

इंद्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः ।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदंता ॥१॥
इंद्रापर्वता । बृहता । रथेन । वामीः । इषः । आ । वहतं । सुऽवीराः ।
वीतं । हव्यानि । अध्वरेषु । देवा । वर्धेथां । गीःऽभिः । इळया । मदंता ॥१॥

इंद्रापर्वता इंद्रश्च पर्वतश्च । हे इंद्रापर्वतौ बृहता रथेनागत्य वामीर्वननीयाः सुवीराः शोभनपुत्रोपेता इषोऽन्नान्या वहतं । अस्मदर्थं धारयतं । प्रयच्छतमित्यर्थः । किंच हे देवौ द्योतमानावध्वरेष्वस्मत्संबंधिषु यज्ञेषु हव्यानि हवनयोग्यानि पुरोडाशादीनि हवींषि वीतं । भक्षयतं । तथेळयास्माभिर्दत्तेन हविषा मदंता हृष्यंतौ युवां गीर्भिः स्तुतिलक्षणाभिरस्मदीयाभिर्वाग्भिर्वर्धेथां । समृद्धौ भवतं ॥ इंद्रापर्वता । आमंत्रितस्य पादादित्वात्षाष्ठिकमाद्युदात्तत्वं । सुवीराः । बहुव्रीहौ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं । वीतं । वी कांत्यादिष्वित्यस्य लोण्यदादित्वाच्छपो लुक् । प्रत्ययस्वरः । वर्धेथां । वृधु वृद्धावित्यस्य लोण्याथामो लसार्वधातुकस्वरे धातुस्वरः ॥

अहर्गणेष्वंत्यवर्जितेष्वहःसु हारियोजनस्य तिष्ठा सु कमित्यनुवाक्या । सूत्रितं च । तिष्ठा सु कं मघवन्मा परा गा अयं यज्ञो देवया अयं मियेधः । आ॰ ६. ११. । इति ॥

तिष्ठा सु कं मघवन्मा परा गाः सोमस्य नु त्वा सुषुतस्य यक्षि ।
पितुर्न पुत्रः सिचमा रभे त इंद्र स्वादिष्ठया गिरा शचीवः ॥२॥
तिष्ठ । सु । कं । मघऽवन् । मा । परा । गाः । सोमस्य । नु । त्वा । सुऽसुतस्य । यक्षि ।
पितुः । न । पुत्रः । सिचं । आ । रभे । ते । इंद्र । स्वादिष्ठया । गिरा । शचीऽवः ॥२॥

हे मघवन्धनवन्निंद्र कं सुखेनास्मिन्यज्ञे सु तिष्ठ । सुष्ठु कंचित्कालमत्र तिष्ठ । मा परा गाः । अस्मदीयाद्यज्ञात्मा गच्छ । तत्र कारणमाह । सुषुतस्य सुष्ठुभिषुतेन सोमस्य सोमेन नु क्षिप्रं त्वां यक्षि । यजे । हे शचीवः शक्तिमन्निंद्र ते तव सिचं वस्त्रप्रांतं स्वादिष्ठया स्वादुतरया स्तुतिलक्षणया गिरा आ रभे । आलभे । गृह्णामीत्यर्थः । तत्र दृष्टांतः । पितुर्न । यथा पुत्रो मधुरया वाचा पितुर्जनकस्य चेलांचलं गृह्णाति तद्वत् ॥ सु कमिति निपातद्वयं । प्रथमस्य निपाता आद्युदात्ता इत्याद्युदात्तत्वं । द्वितीयस्य चादयोऽनुदात्ता इत्यनुदात्तत्वं । सोमस्य यक्षि । यज देवपूजासंगतिकरणदानेषु । स्वरितञित इत्यात्मनेपदं । तस्य लुङि सिच्येकाच इतीट्प्र-

तिपधः। ब्रश्चादिना षत्वं। षढोः कः सीति कत्वं। मिचः सकारस्य षत्वं। निघातः। रभे। डुलभष् प्राप्तौ। लट्युत्तम इटि रूपं। रभलभयोरभेदः। निघातः। स्वादिष्ठया। स्वादुशब्दादिष्ठनि रूपं। नित्त्वादाद्युदात्तः॥

शंसावाध्वर्यो प्रति मे गृणीहींद्राय वाहः कृणवाव जुष्टं।
एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिंद्राय शस्तं॥३॥
शंसाव। अध्वर्यो इति। प्रति। मे। गृणीहि। इंद्राय। वाहः। कृणवाव। जुष्टं।
आ। इदं। बर्हिः। यजमानस्य। सीद। अथ। च। भूत्। उक्थं। इंद्राय। शस्तं॥३॥

शंसिष्यन् होताध्वर्युं ब्रूते। हे अध्वर्यो आवां शंसाव। होतस्त्वमेव शंससि। कथमहं शंसानि। अत आह। प्रति मे गृणीहीति। त्वं मे प्रतिगृणीहि। ओथामोदैवेत्यादिको होतृकृत्साहजननः प्रतिगरः। आ० ५.११। त इत्यत्र। तथेंद्राय जुष्टं प्रीतियुक्तं वाहः स्तोत्रं कृणवाव। त्वं यजमानस्येदं बर्हिरस्मिन्बर्हिष्या सीद। उपविश। अथ चानंतरमिंद्रायेंद्रार्थमावाभ्यां क्रियमाणमुक्थं शस्त्रं शस्तं प्रशस्तं भूत। भवतु॥ शंसाव। शंसु स्तुतौ। लेट्युत्तमद्विवचने रूपं। आडुत्तमस्येत्याडागमः। उत्तमस्य पिद्वद्भावादनुदात्तत्वे धातुस्वरः। मे। अनु प्रतिगृणश्च। पा० १.४.४१। इति संप्रदानसंज्ञा। जुष्टं। नित्यं मंत्र इत्याद्युदात्तत्वं॥

जायेदस्तं मघवन्त्सेदु योनिस्तदित्त्वा युक्ता हरयो वहंतु।
यदा कदा च सुनवाम सोममग्निष्ट्वा दूतो धन्वात्यच्छ॥४॥
जाया। इत्। अस्तं। मघऽवन्। सा। इत्। ऊं इति। योनिः। तत्। इत्। त्वा। युक्ताः। हरयः। वहंतु।
यदा। कदा। च। सुनवाम। सोमं। अग्निः। त्वा। दूतः। धन्वाति। अच्छ॥४॥

हे मघवन्धनवन्निंद्र अस्तं। अस्यंते क्षिप्यंते पदार्था अत्रेत्यस्तं गृहं। जायेज्जायैव गृहं भवति। न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यत इति स्मृतेः। तथा सेत् सा जायैव योनिः पुरुषस्य मिश्रणस्थानं। उ प्रसिद्ध्यर्थः। तस्मात्तदित् तत्र गृह एव युक्ता रथे योजिता हरयोऽश्वास्त्वां त्वा वहंतु। वयं तु यदा कदा च त्वदर्थं सोमं सुनवाम अभिषुतं करवाम तदास्माभिः प्रहितो दूतोऽग्निस्त्वा त्वामच्छाभिमुख्येन धन्वाति। गच्छति॥ अस्तं। असु क्षेपणे। असिहसिमृग्रिण्वामीत्यादिना तन्प्रत्ययः। नित्त्वादाद्युदात्तः। सुनवाम। षुञ् अभिषवे इत्यस्य लोटि रूपं। यद्वृत्तयोगादनिघातः। त्वा। युष्मत्तत्ततक्षुःष्वंतःपादमिति संहितायां षत्वं। धन्वाति। धवि गत्यर्थः। लेट्याडागमे रूपं। निघातः॥

अहर्गणेऽत्यर्वार्जितप्वहःसु हारियोजनस्य वैकल्पिकी परा याहीत्यनुवाक्या। परा याहि मघवन्ना च याहीति वानुवाक्येति सूत्रितं। आ० ६.११॥

परा याहि मघवन्ना च याहींद्र भ्रातरुभयत्रा ते अर्थं।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो रासभस्य॥५॥
परा। याहि। मघऽवन्। आ। च। याहि। इंद्र। भ्रातः। उभयत्र। ते। अर्थं।
यत्र। रथस्य। बृहतः। निऽधानं। विऽमोचनं। वाजिनः। रासभस्य॥५॥

हे मघवन्धनवन्निंद्र त्वं परा याहि। अस्माद्देवयजनात्पराङ्मुखो गृहं प्रति गच्छ। अथवा देवयजनं प्रत्यायाहि। हे भ्रातः पोषकोभयत्रापि ते तवार्थं। अर्यते प्राप्यत इत्यर्थः प्रयोजनं। अस्ति तत्र जायात्र सोमः। प्रयोजनांतरमाह। यत्र गृहं प्रति गमने बृहतो महतो रथस्योपरि निधानमवस्थानं प्रयोजनं। अत्र स्थितौ रासभस्य हेषारवं कुर्वतो वाजिनोऽश्वस्य रथाद्विमोचनं प्रयोजनं॥ अर्थं। ऋ गतौ। उषिकुषिगार्तिभ्यस्थन्निति

थन। नित्स्वरः। निधानं। दधातेर्भावे ल्युट्। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। रासभस्य। रासृ शब्दे। रासिवल्लिभ्यां च। उ० ३.१२५.। इति कर्तर्यभचप्रत्ययः। ग्रामादित्वादाद्युदात्तः॥ ॥१९॥

अंत्येप्वहःसु हारियोजनस्यापाः सोममित्यनुवाक्या। सूत्रितं च। हारियोजनेऽपाः सोममस्तमिंद्र प्र याहि। आ० ६.११.। इति॥

अपाः सोममस्तमिंद्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत्॥६॥
अपाः। सोमं। अस्तं। इंद्र। प्र। याहि। कल्याणीः। जाया। सुऽरणं। गृहे। ते।
यत्र। रथस्य। बृहतः। निऽधानं। विऽमोचनं। वाजिनः। दक्षिणाऽवत्॥६॥

हे इंद्र सोममपाः। अत्रैव स्थित्वा सोमं पिब। पीत्वास्तं गृहं प्र याहि। प्रकर्षेण गच्छ। ते तव गृहे कल्याणीर्मंगलकारिणी जाया शची विद्यते। सुरणं शोभनगीतादिध्वनिश्चास्ति। यद्वा। सुरणं सुरमणीयं यथा भवति तथा गृहे जाया तिष्ठति। यत्रेत्यादि गतं। दक्षिणावत्। अत्र स्थितौ सत्यां रथे योजितानां वाजिनां विमोचनं खादनपानादिना दक्षिणावत् प्रयोजनवद्भवति। विमुक्तेभ्यो वाजिभ्यो खादनं पानं चोपहरति॥ अपाः। पा पाने। लुङि गातिस्थेति सिचो लुक्। अडागमस्वरः। कल्याणीः। कल्याणमस्यास्तीति मत्वर्थे कंदसीवनिपाविति ईप्रत्ययः। प्रत्ययस्वरः। सुरणं। रण शब्दार्थः। अस्मादकृच्छ्रार्थे खल्। लित्स्वरः। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। समासे कृदुत्तरपदस्वरः॥

इमे भोजा अंगिरसो विरूपा दिवस्पुत्रासो असुरस्य वीराः।
विश्वामित्राय ददतो मघानि सहस्रसावे प्र तिरंत आयुः॥७॥
इमे। भोजाः। अंगिरसः। विऽरूपाः। दिवः। पुत्रासः। असुरस्य। वीराः।
विश्वामित्राय। ददतः। मघानि। सहस्रऽसावे। प्र। तिरंते। आयुः॥७॥

हे इंद्र इमे यागं कुर्वाणा भोजाः सौदासाः क्षत्रियाः तेषां याजका विरूपा नानारूपा मेधातिथिप्रभृतयोऽंगिरसश्च दिवोऽसुरस्य देवेभ्योऽपि बलवतो रुद्रस्य पुत्रासः पुत्रा वीरा बलवंतो मरुतः ते सर्वे विश्वामित्राय मह्यं सहस्रसावे। सहस्रं सूयतेऽत्रेति सहस्रसावोऽश्वमेधः। तस्मिन्नश्वमेधे मघानि मंहनीयानि धनानि ददतः प्रयच्छंतः संत आयुर्जीवनमन्नं वा प्र तिरंते। प्रकर्षेण वर्धयंति॥ दिवस्पुत्रास इति संहितायां षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य सत्वं। ददतः। डुदाञ् दाने इत्यस्य शतरि रूपं। अभ्यस्तानामादिरित्याद्युदात्तत्वं। तिरंते। तरतेर्व्यत्ययेन शः॥

रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं१ परि स्वां।
त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मंत्रैरनृतुपा ऋतावा॥८॥
रूपंऽरूपं। मघऽवा। बोभवीति। मायाः। कृण्वानः। तन्वं। परि। स्वां।
त्रिः। यत्। दिवः। परि। मुहूर्तं। आ। अगात्। स्वैः। मंत्रैः। अनृतुऽपाः। ऋतऽवा॥८॥

मघवा धनवानिंद्रो रूपं रूपं यद्यद्रूपं कामयते तत्तद्रूपं बोभवीति। भृशं प्राप्नोति तत्तद्रूपात्मको भवति। तत्र कारणमुच्यते। माया अनेकरूपग्रहणसामर्थ्योपेताः कृण्वानः कुर्वाणः स्वां तन्वं स्वकीयां तनूं परि। पंचम्यर्थे। स्वस्माच्छरीरान्नानाविधानि शरीराणि निर्मिमीते। यद्वा। स्वां तनूं नानाविधरूपोपेतां करोति। तथा च मंत्रवर्णः। इंद्रो मायाभिः पुरुरूपः। ऋसं० ६.४७.१८.। इति। यद्यस्मात्स्वैर्मंत्रैः स्वकीयैः स्तुतिलक्षणैर्वाक्यै-

राहुतोऽनृतुपाः । स केवलमृतुष्वेव पिबति किंत्वनृतुष्वपि । बहुशः सोमं पिबन्नित्यर्थः । ऋतावा सत्यवान् तादृश इंद्रो दिवः स्वर्गलोकात्परि मुहूर्तमेकस्मिन्नेव मुहूर्ते नानादेशवर्तिषु यज्ञेषु तत्रापि त्रिः त्रिषु सवनेष्वागात् । आगच्छति ॥ बोभवीति । भवतेर्यङ्लुकि तिपि यङो वेतीडागमः । निघातः । अगात् । इणो लुङि रूपं । यद्वृत्तयोगादनिघातः ॥

महाँ ऋषिर्देवजा देवजूतोऽस्तभ्नात्सिंधुमर्णवं नृचक्षाः ।
विश्वामित्रो यदवहत्सुदासमप्रियायत कुशिकेभिरिंद्रः ॥९॥
महान् । ऋषिः । देवऽजाः । देवऽजूतः । अस्तभ्नात् । सिंधुं । अर्णवं । नृऽचक्षाः ।
विश्वामित्रः । यत् । अवहत् । सुऽदासं । अप्रियायत । कुशिकेभिः । इंद्रः ॥९॥

महान् तपसातिशयितसामर्थ्यवानृषिरतींद्रियार्थद्रष्टा देवजा द्योतमानानां तेजसां जनयिता देवजूतस्तेजोभिराकृष्टो नृचक्षा नृणां कर्मनेतृणामध्वर्य्वादीनामुपद्रष्टा स विश्वामित्रोऽर्णवमुदकवंतं सिंधुं विपाट्छुतुद्र्योः संभेदमस्तभ्नात् । निरुद्धवेगमकरोत् । किंच स विश्वामित्रः सुदासं पैजवनं राजानं यदा यदावहत् अयाजयत् तदानीमिंद्रः कुशिकेभिः कुशिकगोत्रोत्पन्नैर्ऋषिभिः सहाप्रियायत । प्रिय इवाचरत् ॥ अवहत् । वह प्रापणे इत्यस्य लङि रूपं । यद्योगादनिघातः । अप्रियायत । प्रिय इवाचरतीत्यर्थे कर्तुः क्यङ् सलोपश्चेति क्यङ् । तदंताल्लङि रूपं । पादादित्वादनिघातः ॥

हंसा इव कृणुथ श्लोकमद्रिभिर्मदंतो गीर्भिरध्वरे सुते सचा ।
देवेभिर्विप्रा ऋषयो नृचक्षसो वि पिबध्वं कुशिकाः सोम्यं मधु ॥१०॥
हंसाःऽइव । कृणुथ । श्लोकं । अद्रिऽभिः । मदंतः । गीःऽभिः । अध्वरे । सुते । सचा ।
देवेभिः । विप्राः । ऋषयः । नृऽचक्षसः । वि । पिबध्वं । कुशिकाः । सोम्यं । मधु ॥१०॥

हे विप्रा मेधाविनो हे ऋषयोऽतींद्रियार्थस्य द्रष्टारो हे नृचक्षसो नृणां कर्मनेतृणां विशेषेण द्रष्टारो हे कुशिकाः कुशिकगोत्रोत्पन्ना हे पुत्रा अध्वरे यज्ञेऽद्रिभिर्ग्रावभिः सोमे सुतेऽभिषुते सति गीर्भिर्मदंतः स्तुतिभिर्देवान्मादयंतो यूयं श्लोकं । श्लोक्यते शस्यतेऽनेनेति श्लोकः शस्त्रं । कृणुथ । सम्यगुच्चारयत । तत्र दृष्टांतः । हंसा इव । यथा हंसाः सम्यक् शब्दं कुर्वंति तद्वत् । किंच देवेभिः सचा यष्टव्यैर्देवैः सहिता यूयं सोम्यं सोममयं मधु मधुकरं रसं वि पिबध्वं । परस्परव्यतिहारेण पिबत ॥ श्लोकं । श्लोकृ शब्दे । करणे घञ् । ञित्वादाद्युदात्तः । मदंतः । मदी हर्षे इत्यस्यांतर्भावितण्यर्थस्य व्यत्ययेन शप् । पिबध्वं । पा पाने । कर्तरि कर्मव्यतिहार इत्यात्मनेपदं । सोम्यं । सोमशब्दान्मये चेति यप्रत्ययः ॥ ॥ २० ॥

उप प्रेत कुशिकाश्चेतयध्वमश्वं राये प्र मुंचता सुदासः ।
राजा वृत्रं जंघनत्प्रागपागुदगथा यजाते वर आ पृथिव्याः ॥११॥
उप । प्र । इत । कुशिकाः । चेतयध्वं । अश्वं । राये । प्र । मुंचत । सुऽदासः ।
राजा । वृत्रं । जंघनत् । प्राक् । अपाक् । उदक् । अथ । यजाते । वरे । आ । पृथिव्याः ॥११॥

हे कुशिकाः कुशिकगोत्रोत्पन्ना हे पुत्रा उप प्रेत । अश्वस्य समीपे प्रकर्षेण गच्छत । तत्र गत्वा चेतयध्वं । सावधाना भवत । यद्वा । अश्वरक्षिणः सावधानान् कुरुत । सुदासः पैजवनस्य राज्ञोऽश्वं राये तस्य दिग्विजयेन धनलाभाय प्र मुंचत । राजा देवानां स्वामीद्रो वृत्रं कर्मविघ्नकारिणमसुरं प्रागपागुदक् पूर्वपश्चिमोत्तरेषु देशेषु जघनत् । भृशं हतवान् । तस्मादश्वं विमुंचतेति भावः । अथानंतरं पृथिव्या वरे उत्तमे देवयजनदेशे यजाते । स राजा यजेत ॥ चेतयध्वं । चिती संज्ञाने इत्यस्य ण्यंतस्य लोटि रूपं । आमंत्रितस्याविद्यमानवत्त्वेन

तिङ उत्तरत्वान्न निघातः । जंघनंत् । हन हिंसागत्योरित्यस्य यङ्लुकि नुगतोऽनुनासिकांतस्येत्यभ्यासस्य नुगागमः । तदंतांल्लेट्यडागमः । प्राक् । अंचतेः क्विनि रूपं । अनिगतोऽचतावप्रत्यय इति गतेः स्वरः । यजाति । यजतेर्लेट्याडागमः । निघातः । वरं । वृञ् वरणे इत्यस्मात् ग्रहवृदृनिश्चिगमश्चेत्यप्प्रत्ययः । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः ॥

य इमे रोदसी उभे अहमिंद्रमतुष्टवं । विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनं ॥१२॥

यः । इमे इति । रोदसी इति । उभे इति । अहं । इंद्रं । अतुष्टवं । विश्वामित्रस्य । रक्षति । ब्रह्म । इदं । भारतं । जनं ॥१२॥

हे कुशिकाः कुशिकपुत्रा योऽहं विश्वामित्र उभे इमे रोदसी द्यावापृथिव्याविंद्रमतुष्टवं स्तावयामि । द्यावापृथिवीभ्यामिंद्रस्य स्तोत्रं मया कारितमित्यर्थः । यद्वा । उभयो रोदस्योरंतरवस्थितमिंद्रं स्तौमि । स्तोत्रं कुर्वाणस्य विश्वामित्रस्य ममेदमिंद्रविषयं ब्रह्म स्तोत्रं भारतं भरतकुलं जनं रक्षति । पालयति ॥ अतुष्टवं । ष्टुञ् स्तुतौ । ण्यंतस्य लुङि चङि रूपं । यद्वृत्तयोगादनिघातः । भारतं । भरतशब्द उत्सादिः । ञित्त्वादाद्युदात्तः ॥

विश्वामित्रा अरासत ब्रह्मेंद्राय वज्रिणे । करदिन्नः सुराधसः ॥१३॥

विश्वामित्राः । अरासत । ब्रह्म । इंद्राय । वज्रिणे । करत् । इत् । नः । सुऽराधसः ॥१३॥

विश्वामित्रा वज्रिणे वज्रहस्तायेंद्राय ब्रह्म स्तोत्रमरासत । अकुर्वन् । स्तुतः स इंद्रो नोऽस्मान् सुराधसः शोभनधनोपेतान् करदित् । करोत्येव ॥ अरासत । रासृ शब्दे इत्यस्य लङि बहुलं छंदसीति शपो लुक् । निघातः । करत् । करोतेर्लुङि च्लेः कृमृदृरुहिभ्यश्छंदसीत्यङादेशः । सुराधसः । आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं ॥

किं ते कृण्वंति कीकटेषु गावो नाशिरं दुह्रे न तपंति घर्मं ।

आ नो भर प्रमंगदस्य वेदो नैचाशाखं मघवन्रंधया नः ॥१४॥

किं । ते । कृण्वंति । कीकटेषु । गावः । न । आऽशिरं । दुह्रे । न । तपंति । घर्मं ।

आ । नः । भर । प्रऽमंगदस्य । वेदः । नैचाऽशाखं । मघऽवन् । रंधय । नः ॥१४॥

हे इंद्र कीकटेष्वनार्यनिवासेषु जनपदेषु । यद्वा । क्रियाभिर्यागदानहोमलक्षणाभिः किं फलिष्यतीत्यश्रद्दधानाः प्रत्युत पिबत खादतायमेव लोको न पर इति वदंतो नास्तिकाः कीकटाः । तेषु गावस्ते तव किं कृण्वंति । किं कुर्वंति । न कंचित्तवोपयोगं कुर्वंतीत्यर्थः । अनुपयोगं दर्शयति । आशिरं सोममिश्रणयोग्यं पयो न दुह्रे । न दुहंति । किंच घर्मं प्रवर्ग्याख्यकर्मोपयुक्तं महावीरपात्रं स्वपयःप्रदानद्वारेण न तपंति । न दीपयंति । एतेन सांनाय्याद्यर्थमपि नोपयुज्यंत इत्यपि सूचितं भवति । एवं क्वाचिदपि वैदिके कर्मण्यनुपयुक्तास्ता गा नोऽस्मभ्यमा भर । आहर । न केवलं ता एव किं तर्हि प्रमगंदस्य । द्विगुण्यादिलक्षणपरिमाणं गतोऽर्थो मामेवागमिष्यतीति बुद्ध्या परेषां ददातीति मगंदो वार्धुषिकः । तस्यापत्यं पुत्रादिः प्रमगंदः । प्रस्कण्वादिवदपत्यार्थः प्रशब्देन द्योत्यते । तस्यात्यंतकुसीदिकुलस्य वेदो धनमाहर । किंच हे मघवन्धनवन्निंद्र नैचाशाखं । नीचासु शूद्रयोनिषूत्पादिता शाखा पुत्रपौत्रादिपरंपरा येन स नीचाशाखः । शूद्रापत्यैश्च केवलैः शूद्रावेदी पतत्यध इति च पातकहेतुत्वेन स्मरणात् । पतितस्य संबंधि धनं नैचाशाखं । तद्धनं नोऽस्मभ्यं रंधय । साधय । एतेषां तद्धनं तव नोपयुज्यते अस्मदायत्तं तु तद्धनं यागादिद्वारा तवोपयुज्यते । तस्मात्तदस्मभ्यं प्रयच्छेति भावः ॥ एतमर्थं यास्कोऽप्याह । किं ते कुर्वंति कीकटेषु गावः । कीकटो नाम देशोऽनार्यनिवासः । कीकटाः किंकृताः किं क्रियाभिरिति प्रेप्सा वा । नैव चाशिरं दुह्रे न तपंति घर्मं घरणं । आ हर नः प्रमगंदस्य धनानि । मगंदः कुसीदी मांगदो मामागमिष्यतीति च ददाति । तदपत्यं प्रमगंदोऽत्यंतकुसीदिकुलीनः । प्रमदको वा

योऽयमेवास्मि लोको न पर इति प्रेप्सः। पंडको वा पंडकः पंडगः प्रार्दको वा प्रार्दयत्यांडौ। आंडावाणी इव व्रीडयति। तस्य नैचाशाखं। नीचाशाखो नीचैःशाखः। शाखाः शक्नोतेः। आशिरं रणात। तन्नो मघवन्रंधयेति रध्यतिर्वशगमने। नि० ६ ३२। इति॥ आशिरं। आङ्पूर्वाच्छ्रीणातेः श्रिण्यपस्पृधेथामित्यादिना शिरित्यादेशः। दृह्र। दृहेर्लिटीरयो रे इति रेआदेशः। द्विर्वचनस्य विकल्पितत्वात द्विर्वचनाभावः। चादिलोपे विभाषेति न निघातः। नैचाशाखं। तस्येदमित्यण्। प्रत्ययस्वरः। रधय। रधेर्ण्यंतस्य रधिजभोरचीति नुमागमः॥

ससर्परीवृचं प्राहुरितिहासं पुराविदः। सौदासनृपयज्ञे वै वसिष्ठात्मजशक्तिना। विश्वामित्रस्याभिभूतं बलं वाक् च ससततः। वासिष्ठेनाभिभूतः स ह्यवासीदथ गाधिजः। तस्मै ब्राह्मी तु सौरी वा नाम्ना वाचं ससर्परी। सूर्यवेश्मन आहृत्य ददुर्वै जमदग्नयः। कुशिकानां मतिः सा वागमतिं तामपानुदत॥

ससर्परीरमतिं बाधमाना बृहन्मिमाय जमदग्निदत्ता।
आ सूर्यस्य दुहिता ततान श्रवो देवेष्वमृतमजुर्यं॥१५॥
ससर्परीः। अमतिं। बाधमाना। बृहत्। मिमाय। जमदग्निऽदत्ता।
आ। सूर्यस्य। दुहिता। ततान। श्रवः। देवेषु। अमृतं। अजुर्यं॥१५॥

जमदग्निदत्ता जमदग्निभिः प्रज्वलिताग्निभिर्ऋषिभिरस्मभ्यं दत्तामतिमज्ञानं बाधमाना ससर्परीः सर्वत्र शब्दरूपतया सर्पणशीला वाक् बृहत्प्रभूतं यथा भवति तथा मिमाय। नभसि शब्दं करोति। सैषा सूर्यस्य दुहिता वाग्देवता देवेष्विंद्रादिष्वजुर्यं क्षयरहितममृतममृतलक्षणं श्रवोऽन्नमा ततान। समतात्स्वाहाकारवाचं तनोति॥ जमदग्निदत्ता। दाण् दान इत्यस्य निष्ठायां दो दद्घोरिति ददादेशः। तृतीया कर्मणीति पूर्वपद प्रकृतिस्वरः। अजुर्यं। जॄ वयोहानौ। ऋहलोर्ण्यत। बहुलं छंदसीत्युत्वं। नञ्सुभ्यामित्यंतोदात्तत्वं॥ ॥२१॥

ससर्परीरभरत्तूयमेभ्योऽधि श्रवः पांचजन्यासु कृष्टिषु।
सा पक्ष्या३नव्यमायुर्दधाना यां मे पलस्तिजमदग्नयो ददुः॥१६॥
ससर्परीः। अभरत्। तूयं। एभ्यः। अधि। श्रवः। पांचऽजन्यासु। कृष्टिषु।
सा। पक्ष्या। नव्यं। आयुः। दधाना। यां। मे। पलस्तिऽजमदग्नयः। ददुः॥१६॥

ससर्परीः सर्वत्र गद्यपद्यात्मकत्वेन सर्पणशीला वाग्देवता पांचजन्यासु कृष्टिषु। निषादपंचमाश्चत्वारो वर्णाः पंच जनाः। तत्संबंधिनीषु प्रजासु यच्छ्रवोऽन्नं विद्यते तन्नोऽस्मभ्यमधि अधिकं यथा भवति तथा तूयं क्षिप्रमभरत। भरतु। संपादयतु। पलस्तिजमदग्नयः पलस्तयः पलिता दीर्घायुषो जमदग्नयो मुनयो यां वाचं सूर्यादाहृत्य मे मह्यं ददुरददुः पक्ष्या पक्षस्य पक्षादिनिर्वाहकस्य सूर्यस्य दुहिता सा वाक् नव्यं नवतरमायुरन्नं जीवनं वा दधाना मम कुर्वाणा भवतु॥ पांचजन्यासु। बहिर्देवपंचजनेभ्यश्चेति वक्तव्यमिति ञ्यप्रत्ययः। ञित्त्वादाद्युदात्तः। पक्ष्या। पक्षे भवा। दिगादित्वाद्यत। तित्स्वरितः। नव्यं। नवशब्दाद्भस्यादित्वात्स्वार्थिको यत। पलस्तिजमदग्नयः पलस्तयो जमदग्नयः। कर्मधारयसमासः। समासस्वरः॥

स्थिरौ गावौ भवतां वीळुरक्षो मेषा वि वर्हि मा युगं वि शारि।
इंद्रः पातल्ये ददतां शरीतोररिष्टनेमे अभि नः सचस्व॥१७॥
स्थिरौ। गावौ। भवतां। वीळुः। अक्षः। मा। ईषा। वि। वर्हि। मा। युगं। वि। शारि।
इंद्रः। पातल्ये३इति। ददतां। शरीतोः। अरिष्टऽनेमे। अभि। नः। सचस्व॥१७॥

राज्ञः सुदासो यज्ञेऽवभृथं कृत्वा यज्ञशालातो निर्गंतुमिच्छन् रथेऽश्वादिकं युञ्जानो विश्वामित्रो रथांगानि स्तौति । गावौ । गच्छत इति गावावक्षौ । स्थिरौ भवतां । अक्षश्च वीळुर्दृढो भवतु । ईषा दंडश्च मा वि वर्हि । वृढो मा भवतु । युगं च मा वि शारि । विशीर्णं मा भवतु । इंद्रः पातल्ये पतनशीले कीलके शरीतोर्विशरणात्प्राक् ददतां । धारयतु । हे अरिष्टनेमे अहिंसितप्रधिविशिष्ट हे रथ नोऽस्मानभि आभिमुख्येन सचस्व । संगतो भव ॥ वि वर्हि । वृहि वृद्धौ । विपूर्वो वृहिर्विनाशे वर्तते । अस्मात्कर्मकर्तरि लुङि चिण् भावकर्मणोरिति चिण् । चिणो लुगिति तप्रत्ययस्य लुक् । निघातः । युगं । युगशब्द उञ्छादिषु रथाद्युपकरणेऽर्थे घञंतत्वेन निपातनादगुणत्वं । तत्र पाठादंतोदात्तत्वं । शारि । शॄ हिंसायामित्यस्य लुङि रूपं । अरिष्टनेमे । पादादित्वात् पाष्ठिकमाद्युदात्तत्वं ॥

बलं॑ धेहि त॒नूषु॑ नो॒ बल॑मिंद्रान॒ळुत्सु॑ नः ।
बलं॑ तो॒काय॒ तन॑याय जी॒वसे॒ त्वं हि ब॑ल॒दा अ॒सि॑ ॥१८॥
बलं॑ । धे॒हि॒ । त॒नूषु॑ । नः॒ । बलं॑ । इं॒द्र॒ । अ॒न॒ळुत्ऽसु॑ । नः॒ ।
बलं॑ । तो॒काय॑ । तन॑याय । जी॒वसे॑ । त्वं । हि॒ । ब॒ल॒दाः । अ॒सि॑ ॥१८॥

हे इंद्र नोऽस्माकं तनूषु शरीरेषु बलं धेहि । नोऽस्मत्संबंधिरथवाहिष्वनळुत्सु बलं धेहि । तोकाय पुत्राय तनयाय पौत्राय च जीवसे चिरं जीवनाय बलमायुर्विधेहि । एतादृशं दातुत्वं कुत इत्यत आह । त्वं बलदाः । बलं ददातीति बलदाः । असि हि । सर्वेषु लोकेषु प्रसिद्धोऽसि खलु ॥ अनळुत्सु । वह प्रापणे । अनसि वहेः क्विबनसो डश्चेति क्विप् । अनसः सकारस्य डत्वं । वहेर्यजादित्वात्संप्रसारणं । वसुस्रंसुध्वंस्वनडुहां द इति हकारस्य दत्वं । कृदुत्तरस्वरः । असि । हियोगादनिघातः । सिपः पित्त्वादनुदात्तत्वे धातुस्वरः ॥

अ॒भि व्य॑यस्व खदि॒रस्य॒ सार॒मोजो॑ धेहि स्पंदने शिं॒शपा॑यां ।
अक्ष॑ वीळो वीळित वी॒ळय॑स्व॒ मा या॒माद॒स्माद॑व जीहिपो नः ॥१९॥
अ॒भि । व्य॒य॒स्व॒ । ख॒दि॒रस्य॑ । सार॑ । ओजः॑ । धे॒हि॒ । स्पं॒दने॑ । शिं॒शपा॑यां ।
अक्ष॑ । वीळो॒ इति॑ । वीळि॒त॒ । वी॒ळय॑स्व । मा । या॒मात् । अ॒स्मात् । अ॒व॑ । जी॒हि॒पः॒ । नः॒ ॥१९॥

हे इंद्र खदिरस्य सारं । सारेण हि अक्षाः क्रियते । तं खदिरस्य सारभूतमाक्षमभि व्ययस्व । अभितस्तत्स्थानेषु दार्ढ्यार्थं निधेहि । स्पंदने रथस्य गमने सति शिंशपायां शिंशपाख्यदारुनिर्मिते रथस्य फलके ओजो धेहि । दार्ढ्यं कुरु । हे वीळो दृढ वीळित अस्माभिर्दृढीकृत हे अक्ष वीळयस्व । त्वं दृढो भव । यद्वास्मान् दृढीकुरु । यामाद्गच्छतोऽस्माद्रथान्नोऽस्मान् माव जीहिपः । मा पीपतः ॥ खदिरस्य । अजिरशिशिरेत्यादिना किरचप्रत्ययांतत्वेन निपातनादंतोदात्तः । वीळित । वीळयतेर्ण्यंतस्य निष्ठायामिडागमः । निष्ठायां सेटि । पा० ६. ४ ५२. । इति णिलुक् । वीळयस्व । आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । यामात् । या प्रापणे इत्यस्मादर्तिस्तुसुहु इत्यादिना मन्प्रत्ययः । नित्त्वादाद्युदात्तः । जीहिपः । ओहाक् त्यागे । ण्यंतस्य लुङि चङि रूपं । अकारस्येकारश्छांदसः ॥

अ॒यम॒स्मान्वन॒स्पति॒र्मा च॒ हा मा च॑ रीरिषत् ।
स्व॒स्त्या गृ॒हेभ्य॒ आव॒सा आ वि॒मोच॑नात् ॥२०॥
अ॒यं । अ॒स्मान् । व॒न॒स्पतिः॑ । मा । च॒ । हाः॑ । मा । च॒ । रि॒रि॒षत् ।
स्व॒स्ति । आ । गृ॒हेभ्यः॑ । आ । अ॒व॒ऽसे । आ । वि॒ऽमोच॑नात् ॥२०॥

यजमान आत्मनः श्रेय आशास्ते । वनस्पतिर्वनस्पतिनिर्मितोऽयं रथो रथारूढानस्मान् मा च हाः । मा

त्याचीत् । किंच मा रीरिषत । अस्मान् मा विनाशयतु । किंचा गृहेभ्यः । यावद्गृहान् प्राप्नुयाम तावदस्माभ्यं स्वस्ति भवतु । तथावसे । पंचम्यर्थे चतुर्थी । यावद्रथवेगावमामं तावत् । आ विमोचनात । यावद्रथयोजितानश्वविमोचनं तावत स्वस्ति भवतु ॥ हाः । ओहाक् त्यागे । लुङि मंत्रे घसेत्यादिना सिचो लुक् । पुरुषव्यत्ययः । चवायोगे प्रथमेति न निघातः । रीरिषत । रिष हिंसायामित्यस्य ण्यंतस्य लुङि चङि रूपं । द्वितीयत्वान्निघातः । गृहेभ्यः । गेहे क इति कः । पंचम्यपाङ्परिभिरिति पंचमी । अवसे । षो ऽंतकर्मणि । क्विप् । चतुर्थ्येकवचन आतो लोपाभावश्छांदसः । वृद्धिः । एकादेशस्वरः ॥ ॥ २२ ॥

इंद्रोतिभिरित्याद्याश्चतस्रो वसिष्ठद्वेषिण्यः । पुरा खलु विश्वामित्रशिष्यः सुदा नाम राजर्षिरासीत् । स च केनचित्कारणेन वसिष्ठद्वेष्योऽभूत । विश्वामित्रस्तु शिष्यस्य रक्षार्थमाभिर्ऋग्भिर्वसिष्ठमशपत् । इमा अभिशापरूपाः । ता ऋचो वसिष्ठा न शृण्वंति ॥

इंद्रो॒तिभि॑र्बहु॒लाभि॑र्नो अ॒द्य या॑च्छ्रे॒ष्ठाभि॑र्मघवञ्छूर जिन्व ।
यो नो॒ द्वेष्ट्यध॑रः॒ सस्प॑दीष्ट॒ यमु॑ द्वि॒ष्मस्तमु॑ प्रा॒णो ज॑हातु ॥ २१ ॥
इंद्र॑ । ऊ॒तिऽभिः॑ । ब॒हु॒लाभिः॑ । नः॒ । अ॒द्य । या॒त्ऽश्रे॒ष्ठाभिः॑ । म॒घ॒ऽव॒न् । शू॒र॒ । जि॒न्व॒ ।
यः । नः॒ । द्वेष्टि॑ । अध॑रः । सः । प॒दी॒ष्ट॒ । यं । ऊं॒ इति॑ । द्वि॒ष्मः । तं । ऊं॒ इति॑ । प्रा॒णः । ज॒हा॒तु॒ ॥ २१ ॥

परस्य शापं करिष्यन् आदावात्मनो रक्षां कुरुते प्रथमेनार्धर्चेन । हे शूर शौर्यवन्पराभिभवशक्त हे मघवन्धनवन्निंद्र अद्यास्मिन्काले यात । यातयतिर्वधकर्मा । यातयतीति यात । सुपा सुलुगिति शपो लुक् । यातः शत्रून् हिंसतो नोऽस्मानूतिभिस्त्वदीयाभी रक्षाभिर्जिन्व । प्रीणय । कीदृशीभिः । बहुलाभिर्बह्वीभिः श्रेष्ठाभिः प्रशस्यतराभिः । अथ शपति । नोऽस्मान्यः शत्रुर्द्वेष्टि द्वेष्यस्मद्विषयामप्रीतिं करोति सोऽधरो निकृष्टः सन् पदीष्ट । पततु । वयं च यमु द्विष्मस्तमु तं द्वेष्यं प्राणो देहमध्ये वर्तमानः पंचवृत्तिर्वायुर्जहातु । परित्यजतु । उशब्दौ पूरकौ ॥

प॒र॒शुं चि॒द्वि त॑पति शिंब॒लं चि॒द्वि वृ॑श्चति ।
उ॒खा चि॑दिंद्र॒ येषं॑ती॒ प्रय॑स्ता॒ फेन॑मस्यति ॥ २२ ॥
प॒र॒शुं । चि॒त् । वि । त॒प॒ति॒ । शिं॒ब॒लं । चि॒त् । वि । वृ॒श्च॒ति॒ ।
उ॒खा । चि॒त् । इं॒द्र॒ । येषं॑ती । प्रऽय॑स्ता । फेनं॑ । अ॒स्य॒ति॒ ॥ २२ ॥

परशुं चित । चिच्छब्द उपमार्थः । यथा परशुं कुठारं प्राप्य वृक्षो वि तपति विशिष्टतापयुक्तो भवति । एव मदीयो द्वेष्टा वितपतु । शिंबलं चित् शल्मलीकुसुमं यथानायासेन वि वृश्चति विच्छिद्यते । एवं स द्वेष्टा विवृश्चति । विच्छिन्नावयवो भवतु । प्रयस्ता प्रहता येषंती स्रवंत्युखा चित स्थालीव स द्वेष्टा मदीयमंत्रसामर्थ्येन प्रहतः सन् फेनमस्यति । फेन मुखादुद्गिरतु ॥

न साय॑कस्य चिकिते जनासो लो॒धं न॑यंति॒ पशु॒ मन्य॑मानाः ।
नावा॑जिनं वा॒जिना॑ हासयंति॒ न ग॑र्द॒भं पु॒रो अश्वा॑न्नयंति ॥ २३ ॥
न । साय॑कस्य । चि॒कि॒ते॒ । ज॒ना॒सः॒ । लो॒धं । न॒यं॒ति॒ । पशु॑ । मन्य॑मानाः ।
न । अवा॑जिनं । वा॒जिना॑ । हा॒स॒यं॒ति॒ । न । ग॒र्द॒भं । पु॒रः । अश्वा॑त् । न॒यं॒ति॒ ॥ २३ ॥

पुरा खलु तपसः क्षयो मा प्रापदिति शापान्निवृत्तं मौनिनं विश्वामित्रं वसिष्ठपुरुषा बद्धानीतवंतः । तान्प्रति विश्वामित्रो ब्रूते । हे जनासो जनाः सायकस्यावसानकारिणो विश्वामित्रस्य मंत्रगणसामर्थ्यं न

चिकिते। भवत्विति न ज्ञायते। अत एव लोध लुब्ध तपसः क्षयो मा भूदिति लोभेन तूष्णीं स्थितमपि पशु मन्यमानाः। पशु इति निपातः पशुशब्दसमानार्थः। पशुवन्मन्यमाना एतं नयंति। बद्ध्वा स्वकीयं देशं प्रापयंति। एवं स्वसामर्थ्यं प्रदर्श्य विसदृशो वसिष्ठो मया सह स्पर्धितुं नार्हतीति धिक्करोति। नावाजिनमिति। अवाजिनं। वाचामिनो वाजिनः सर्वज्ञाः। तद्विलक्षणं मूर्खजनं वाजिनो वागीशा न हासयंति हास्यास्पदं न कुर्वंति। तेन सह न स्पर्धंत इत्यर्थः। तथा गर्दभं रासभमश्वात्पुरः पुरस्तान्न नयंति। एवमेव विसदृशो वसिष्ठो न मया स्पर्धितुमीष्ट इत्यर्थः॥

इम इंद्र भरतस्य पुत्रा अपपित्वं चिकितुर्न प्रपित्वं।
हिन्वंत्यश्वमरणं न नित्यं ज्यावाजं परि णयंत्याजौ ॥२४॥
इमे। इंद्र। भरतस्य। पुत्राः। अपऽपित्वं। चिकितुः। न। प्रऽपित्वं।
हिन्वंति। अश्वं। अरणं। न। नित्यं। ज्याऽवाजं। परि। नयंति। आजौ ॥२४॥

हे इंद्र भरतस्य पुत्रा भरतवंश्या इमे विश्वामित्रा अपपित्वमपगमनं वसिष्ठेभ्यश्चिकितुः। जानंति। प्रपित्वं प्रगमनं न जानंति। शिष्टैः सह तेषां संगतिर्नास्ति। ब्राह्मणा एव ते इत्यर्थः। अपि चाजौ संग्रामे नित्यं सहजं मरणं नारिमिव वसिष्ठान्प्रत्यश्वं हिन्वंति। प्रेरयंति। ततश्च ज्यावाजं बलं धनुः परि णयंति। वसिष्ठान्हंतुं शरसंधानेन चरंति॥ ॥२३॥ ॥४॥

पंचमेऽनुवाके नव सूक्तानि। तत्रेमं महे इति द्वाविंशत्यृचं प्रथमं सूक्तं त्रैष्टुभं वैश्वदेवं विश्वामित्रपुत्रस्य वाक्पुत्रस्य वा प्रजापतेरार्षं। अत्रेयमनुक्रमणिका। इमं महे द्व्यधिकोक्तगोत्रः प्रजापतिर्हि वैश्वदेवं हेति। अस्मिन् सूक्ते आद्याग्नेयी ततः परं सप्तर्चो द्यावापृथिव्यास्ततः परा वृदेवताका दशमी द्यावापृथिव्येकादशी सावित्री ततः परं सुक्तादिति त्वाष्ट्र्यार्भवी च विद्युद्रथेति मारुती सारस्वती च ततः परं तिस्रो विश्वदेवत्याग्नि देवताकाः स्वदस्त्वित्याग्नेयीति। एवं वैश्वदेवं सूक्तं॥ सूक्तविनियोगो लैंगिकः। अग्निप्रणयने राजन्यस्येमं महे इति प्रतिपत्। पंचम्यां पौर्णमास्यामित्यत्र सूत्रितं। इमं महे विदथ्याय शूषं। आ० २. १७। इति॥

इमं महे विदथ्याय शूषं शश्वत्कृत्व ईड्याय प्र जभ्रुः।
शृणोतु नो दम्येभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्रः ॥१॥
इमं। महे। विदथ्याय। शूषं। शश्वत्। कृत्वः। ईड्याय। प्र। जभ्रुः।
शृणोतु। नः। दम्येभिः। अनीकैः। शृणोतु। अग्निः। दिव्यैः। अजस्रः ॥१॥

महे महते विदथ्याय विदथे यज्ञे मथनेन निष्पाद्यमानायेड्याय सर्वैः स्तुत्यायाग्नये शूषं सुखकरमिमं स्तोमं शश्वत्कृत्वो भूयो भूयः प्र जभ्रुः। प्रभरंति। प्रकर्षेण धारयंति। उच्चारयंतीत्यर्थः। सोऽग्निर्दम्येभिः परेषां दमनकुशलैर्दमे गृहे विद्यमानैर्वानीकैस्तेजोभिर्युक्तः सन् नोऽस्मदीयमिमं स्तोमं शृणोतु। दिव्यैर्दिवि भवैस्तेजोभिरजस्रो निरंतरं युक्तोऽग्निरिमं स्तोमं शृणोतु। शश्वत्कृत्व ईड्याय प्र जभ्रुरिति स्थानासवेन तदुक्थं गमयति। ऐ० ब्रा० १. २८। इति ब्राह्मणानुसारेण महदादिगुणविशिष्टाय यजमानायेममग्निं प्रजभ्रुः प्रहरंत्यृत्विज इति वा व्याख्येयं। उत्तरार्धर्चः समान एव॥ विदथ्याय। तत्र भव इत्यर्थे भवे छंदसीति यत्। तित्स्वरितं। ईड्याय। ईडवंदेत्यादिना उदात्तत्वं। दम्येभिः। तत्र साधुरिति यत्। यतोऽनाव इत्याद्युदात्तत्वं। दिव्यैः। दिवमर्हतीत्यर्थे छंदसि चेति यप्रत्ययः। अजस्रः। जसु मोक्षणे। नमिकंपीत्यादिना ताच्छीलिको रप्रत्ययः। नञा समासे तस्य स्वरः॥

महि महे दिवे अर्चा पृथिव्यै कामो म इच्छंचरति प्रजानन्।
ययोर्ह स्तोमे विदथेषु देवाः सपर्यवो मादयंते सचायोः ॥२॥

महि॑ । म॒हे । दि॒वे । अ॒र्च॒ । पृ॒थि॒व्यै । कामः॑ । मे॒ । इ॒च्छन् । च॒र॒ति॒ । प्र॒ऽजा॒नन् ।
ययोः॑ । ह॒ । स्तोमे॑ । वि॒दथे॑षु । दे॒वाः । स॒प॒र्यवः॑ । मा॒दय॑न्ते । सचा॑ । आ॒योः ॥२॥

हे स्तोतर्महे महत्यै दिवे द्युलोकदेवतायै महत्यै पृथिव्यै च महि महत् त्वं प्रजानन् स्तोत्रमर्च । कुरु । मे मम कामो मनोरथः सर्वान् भोगानिच्छन् चरति । सर्वत्र वर्तते । आयोर्मनुष्यस्य विदथेषु यज्ञेषु ययोर्द्यावापृथिव्योः स्तोमे स्तोत्रे सपर्यवः पूजाकामा देवाः स्तोतारो वा सचा मादयन्ते ह सह मादयन्ति खलु ॥ पृथिव्यै । उदात्तयण इति विभक्तिरुदात्तत्वं । सपर्यवः । सपर्यामिच्छन्तीत्यर्थे सुपः क्यच ॥

यु॒वोर्ऋ॒तं रो॑दसी स॒त्यम॑स्तु म॒हे षु णः॑ सुवि॒ताय॒ प्र भू॑तं ।
इ॒दं दि॒वे नमो॑ अग्ने पृथि॒व्यै स॑प॒र्यामि॒ प्रय॑सा॒ यामि॒ रत्नं॑ ॥३॥
यु॒वोः । ऋ॒तं । रो॒द॒सी॒ इति॑ । स॒त्यं । अ॒स्तु॒ । म॒हे । सु । नः॒ । सु॒वि॒ताय॑ । प्र । भू॒तं॒ ।
इ॒दं । दि॒वे । नमः॑ । अ॒ग्ने॒ । पृ॒थि॒व्यै । स॒प॒र्यामि॑ । प्रय॑सा । यामि॑ । रत्नं॑ ॥३॥

हे रोदसी द्यावापृथिव्यौ युवोर्युवयोर्ऋतमागतमानुशंस्य सत्यं यथार्थमस्तु । युवां नोऽस्माकं महे महते सुविताया भ्युदयाय यज्ञसमाप्त्यर्थं सु सुष्ठु प्र भूतं । प्रभवतं । हे अग्ने दिवे पृथिव्यै चेदं नमोऽस्तु । प्रयसा हविर्लक्षणेनान्नेन सपर्यामि । परिचरामि । रत्नमुत्तमं धनं यामि । याचे । यातिर्याञ्चाकर्मा ईमहे इत्यादिषु पठितत्वात् ॥ षु । संहितायां सुत्र इति षत्वं । णः । संहितायां नश्च धातुस्थोरुषुभ्य इति णत्वं । सुविताय । इण् गतौ । अधिकरणे क्तः । शोभनं गम्यतेऽस्मिन्निति सुवितं । उवङादेशश्छांदसः । भूतं । भवतेर्लोटि बहुलं छंदसीति शपो लुकि रूपं । यद्वा । छांदसे लुङि भिचो गातिस्थेति लुक् । निघातः । दिवे पृथिव्यै । नमःस्वस्तीत्यादिना । पा० २. ३ १६ । चतुर्थी । सपर्यामि कंड्वादिः परिचरणे वर्तते । प्रत्ययस्वरः । यामि । यातेर्लोटि रूपं । वाक्यभेदादनिघातः ॥

उ॒तो हि वां॑ पू॒र्व्या आ॑विवि॒द्र ऋता॑वरी रोदसी सत्य॒वाचः॑ ।
नर॑श्चिद्वां समि॒थे शूर॑साता ववं॒दिरे पृथिवि॒ वेवि॑दानाः ॥४॥
उ॒तो इति॑ । हि । वां॒ । पू॒र्व्याः । आ॒ऽवि॒वि॒द्रे । ऋत॑वरी॒ इत्यृत॑ऽवरी । रो॒द॒सी॒ इति॑ । स॒त्यऽवा॑चः ।
नरः॑ । चि॒त् । वां॒ । सं॒ऽइ॒थे । शूर॑ऽसातौ । व॒वं॒दि॒रे । पृ॒थि॒वि॒ । वेवि॑दानाः ॥४॥

उतो अपि च हे ऋतावरी । ऋतं सत्यं । तद्वत्यौ हे रोदसी द्यावापृथिव्यौ पूर्व्याः पूर्वे भवाः पुरातनाः सत्यवाचो महर्षयो वा युवाभ्यामाविविद्रे हि । तं तमपेक्षितमर्थं लेभिरे खलु । तथा हे पृथिवि शूरसातौ शूराणां सातिर्लाभो यस्मिन् तस्मिन्समिथे संगमननिमित्ते युद्धे नरश्चिद्यतना मनुष्याश्च वां युवयोर्माहात्म्यं वेविदाना जानन्तोऽतो द्यावापृथिव्यौ ववन्दिरे । स्तुवन्ति ॥ आविविद्रे । विद्लृ लाभे इत्ययमुभयपदी । लिटि इरयो रे इति रेआदेशः । सह सुपेत्यत्र संहितेतियोगविभागादाङा सह समासः । समिथे । इण् गतौ । समीणि इति थक्प्रत्ययः । प्रत्ययस्वरः ॥

को अ॒द्धा वे॑द॒ क इ॒ह प्र वो॑च॒द्देवाँ अच्छा॑ प॒थ्या॒३ का समे॑ति ।
दद्टश्र॑ एषामव॒मा सदां॑सि॒ परे॑षु॒ या गुह्ये॑षु व्र॒तेषु॑ ॥५॥
कः । अ॒द्धा । वे॒द॒ । कः । इ॒ह । प्र । वो॒च॒त् । दे॒वान् । अच्छ॑ । प॒थ्या॑ । का । सं । ए॒ति॒ ।
द॒दृ॒श्रे॒ । ए॒षां॒ । अ॒व॒मा । सदां॑सि । परे॑षु । या । गुह्ये॑षु । व्र॒तेषु॑ ॥५॥

को वाद्धा सत्यभूतं तादृशमर्थं वेद । वेत्ति । को वेहास्मिन्नज्ञातमर्थं प्र वोचत् । प्र ब्रवीति । किं तत्तदुच्यते । देवानच्छाभिलक्ष्य का पथ्या पथि साधुः समीचीनः को वा मार्गः समेति । सम्यक् प्राप्नोतीति । इममर्थं न कश्चि-

ज्जानाति । न कोऽपि ब्रवीति । किं ते देवा विद्यते । वाढमित्याह । एषां दिवि स्थितानां नक्षत्ररूपाणां देवानामवमाधोमुखानि सदांसि स्थानानि ददृश्रे । दृश्यन्ते । तथापि परेषूत्तमेषु गुह्येषु दुर्ज्ञानेषु व्रतेषु कर्मसु अनुष्ठितेषु या यानि दिवि देवस्थानानि लभ्यन्ते तत्रागन्तुं को मार्ग इति वेदमन्तरेण न कश्चिज्जानातीत्यभिप्रायः ॥ अद्धा । स्वरादिष्वन्तोदात्तत्वेन पठितत्वादन्तोदात्तः । वोचत । ब्रूञ् व्यक्तायां वाचि । लुङि ब्रुवो वचिरिति वच्यादेशः । अस्यतिवक्तिख्यातिभ्य इति च्लेरङादेशः । वच उमित्युमागमः । निघातः ॥ ॥ २४ ॥

कविर्नृचक्षा अभि षीमचष्ट ऋतस्य योना विघृते मदन्ती ।
नाना चक्राते सदनं यथा वेः समानेन क्रतुना संविदाने ॥ ६ ॥

कविः । नृऽचक्षाः । अभि । सीम् । अचष्ट । ऋतस्य । योना । विघृते इति विऽघृते । मदन्ती इति ।
नाना । चक्राते इति । सदनम् । यथा । वेः । समानेन । क्रतुना । संविदाने इति संऽविदाने ॥ ६ ॥

कविः क्रान्तदर्शी नृचक्षा नृणां द्रष्टा सूर्यः सीमेते द्यावापृथिव्यावभ्यचष्ट । सर्वतः पश्यति । ऋतस्य योना जलस्य स्थानेऽन्तरिक्षे मदन्ती हृष्यन्त्यौ विघृते । घृतमस्या ओषधयो जलममुष्या इति । एवंविधरसोपेते समानेन । समानमेतदुदकमुच्चैत्यव चाहभिः । भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नय इति परस्परप्रीणनाख्येनैकेन क्रतुना कर्मणा संविदाने परस्परमेकमत्यं प्राप्ते ते द्यावापृथिव्यौ नाना पृथग्भूते सदने स्थाने चक्राते । तथा च श्रुतिः । इमौ वै लोकौ सहास्तां तौ व्यैतामिति । तत्र दृष्टान्तः । यथा वेः कुलाय नाना भवति तद्वत् ॥ अचष्ट । चक्षिङ् व्यक्तायां वाचीत्यस्य लङि स्कोः संयोगाद्योरिति ककारलोपः । निघातः । संविदाने । विद ज्ञाने इत्यस्य समो गम्यृच्छीत्यादिनात्मनेपदे शानच् । चित्त्वादन्तोदात्तः ॥

समान्या वियुते दूरेअन्ते ध्रुवे पदे तस्थतुर्जागरूके ।
उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥ ७ ॥

समान्या । वियुते इति विऽयुते । दूरेअन्ते इति दूरेऽअन्ते । ध्रुवे । पदे । तस्थतुः । जागरूके इति ।
उत । स्वसारा । युवती इति । भवन्ती इति । आत् । ऊँ इति । ब्रुवाते इति । मिथुनानि ।
नाम ॥ ७ ॥

समान्या समाने परस्परप्रीणनाख्येन कर्मणैकमत्यं गते वियुते वियुज्य वर्तमाने दूरेअन्ते । दूरेऽन्तोऽवसानं ययोस्ते दूरेअन्ते । अविनाशिन्यौ ते द्यावापृथिव्यौ जागरूके जागरणशीले सत्यौ ध्रुवेऽविनाशिनि पदेऽन्तरिक्षे तस्थतुः । तिष्ठतः । उतापि च युवती नित्यतरुणे स्वसारा भगिन्यावेकस्मादात्मनो जाते इति भवती तस्थतुरित्यन्वयः । आदनन्तरं मिथुनानि द्वन्द्वानि नाम उर्वी पृथ्वी बहुले दूरेअन्ते रोदसी पूर्वीहिते इत्यादीनि नामानि ब्रुवाते । ते परस्परं ब्रूतः । उर्व्यादिभिर्द्वन्द्वनामभिर्द्यावापृथिव्यावुच्येते इत्यर्थः ॥ समान्या । सुपां सुलुगिति विभक्तेर्डादेशः । दूरेअन्ते । इण गतौ । दुरीणो लोपश्च । उ० २. २० । इति रक्प्रत्ययो धातोर्लोपश्च । रो रीति रेफलोपः । ढ्रलोपे इति दीर्घः । अन्तशब्दोऽमरमिदमीत्यादिना तन्प्रत्ययान्तः । सप्तम्युपमानेति बहुव्रीहिः । हलदन्तादिति सप्तम्या अलुक् । पूर्वपदस्वरः । जागरूके । जागृ निद्राक्षये इत्यस्मात्ताच्छील्यार्थे जागरूकः । पा० ३. २. १६५ । इत्यूकप्रत्ययः । प्रत्ययस्वरः । स्वसारा । न षट्स्वस्रादिभ्य इति ङीपः प्रतिषेधः ॥

विश्वेदेते जनिमा सं विविक्तो महो देवान्बिभ्रती न व्यथेते ।
एजद्ध्रुवं पत्यते विश्वमेकं चरत्पतत्रि विषुणं वि जातम् ॥ ८ ॥

विश्वा । इत् । एते इति । जनिम । सम् । विविक्तः । महः । देवान् । बिभ्रती इति । न । व्यथेते इति ।
एजत् । ध्रुवम् । पत्यते । विश्वम् । एकम् । चरत् । पतत्रि । विषुणम् । वि । जातम् ॥ ८ ॥

एते द्यावापृथिव्यौ विश्वज्जनिम सर्वाण्यपि भूतजातानि सं विविक्तः । अवकाशप्रदानेन संविभज्य कुरुतः । किंच महो महतो देवानिन्द्रसूर्यादीन सरित्समुद्रपर्वतादींश्च बिभ्रती बिभ्राणे अपि न व्यथेते । न खिद्येते । किंच एजज्जगमात्मकं ध्रुवं स्थावरात्मकं च विश्वं जगदेकं स्थानं पृथिवीमिव पत्यते । अभिगच्छति । तथा चरत्संचरत्पशुजातं पतत्रि पक्षिजातं च विषुणं विष्वक् नानारूपमनयोर्मध्ये वितिष्ठते । योग्यक्रियाध्याहारः ॥ विविक्तः । विचिर् पृथग्भावे । जुहोत्यादिः । निघातः । बिभ्रती । डुभृञ् धारणपोषणयोरित्यस्य शतरि नाभ्यस्ताच्छतुरिति नुमभावः । अभ्यस्तस्वरः । एजत् । एजृ कंपने । शतरि रूपं । पत्यते । पद गतौ । दिवादिरात्मनेपदी । दकारस्य तकारो व्यत्ययेन । निघातः ॥

सना पुराणमध्येम्यारान्महः पितुर्जनितुर्जामि तन्नः ।
देवासो यत्र पनितार एवैरुरौ पथि व्युते तस्थुरंतः ॥९॥
सना । पुराणं । अधि । एमि । आरात् । महः । पितुः । जनितुः । जामि । तत् । नः ।
देवासः । यत्र । पनितारः । एवैः । उरौ । पथि । विऽउते । तस्थुः । अंतरिति ॥९॥

हे द्यौर्महो महत्याः पितुः सर्वस्य पालयित्र्या जनितुर्जनयित्र्यास्तव सना सनातनं पुराणं पूर्वक्रमागतं नोऽस्माकं तज्जामि जामित्वं । सर्वमेकस्माज्जातमिति द्यौर्भगिनी भवति । तादृशं भगिनीत्वं तदारादधुनाध्येमि । स्मरामि । दिवः पितृत्वं जनयितृत्वं च मंत्रवर्णः । द्यौर्मे पिता जनिता नाभिरत्र । ऋग्वे० १ १६४ ३३ । इति । यत्र यस्या दिव्यंतर्मध्य उरौ विस्तीर्णे व्युते विविक्ते पथि नभसि पनितारः स्तोत्रा स्तुवतो देवासो देवा एवैर्गमनसाधनैः स्वैः स्ववाहनैः सहिताः संतस्तस्थुः । तत्र स्थिता देवा मदीयं स्तोत्रं शृण्वन्त्विति भावः ॥ पुराणं । पुराशब्दात् प्रतिपदिकार्थे सायंचिरमिति ट्युप्रत्ययः । पुराणप्रोक्तेषु ब्राह्मणकल्पेष्विति निपातनात्तुडभावः । निपातनादेवा-न्तोदात्तत्वं । एमि । इक् स्मरणे । अदादिः । लटि रूपं । निघातः । व्युते । वेञ् तंतुसंताने । कर्मणि क्तः । यजादित्वात्संप्रसारणं । गतिरनंतर इति गतेः प्रकृतिस्वरः । तस्थुः । तिष्ठतेर्लिटि रूपं । यत्रयोगादनिघातः ॥

इमं स्तोमं रोदसी प्र ब्रवीम्यृदूदराः शृण्वन्नग्निजिह्वाः ।
मित्रः सम्राजो वरुणो युवान आदित्यासः कवयः पप्रथानाः ॥१०॥
इमं । स्तोमं । रोदसी इति । प्र । ब्रवीमि । ऋदूदराः । शृण्वन् । अग्निऽजिह्वाः ।
मित्रः । सम्ऽराजः । वरुणः । युवानः । आदित्यासः । कवयः । पप्रथानाः ॥१०॥

हे रोदसी द्यावापृथिव्याविमं युष्मदीयं स्तोमं प्र ब्रवीमि । प्रकर्षेण वदामि । ऋदूदराः । ऋदु मृदु उदरं येषां ते ऋदूदराः । यद्वा । मृदुरुदरे सोमो येषां ते ऋदूदराः । अग्निजिह्वाः । अग्निर्जिह्वास्थानीयो येषां ते तथोक्ताः । सम्राजः सम्यग्दीप्यमाना युवानो नित्यतरुणाः । यद्वा । यजमानानभिमतफलैर्मिश्रीकुर्वंतः । कवयः क्रांतदर्शिनः पप्रथानाः स्वानि स्वानि कर्माणि प्रथयंतो मित्रादयो देवाः शृण्वन् । तदिदं स्तोत्रं शृण्वंतु ॥ शृण्वन् । श्रु श्रवणे इत्यस्य लेट्यडागमः । अग्निजिह्वाः । त्रिचक्रादित्वादंतोदात्तत्वं । पप्रथानाः । प्रथ प्रख्याने इत्यस्य कानचि रूपं । चित्त्वादंतोदात्तः ॥ ॥२५॥

हिरण्यपाणिः सविता सुजिह्वस्त्रिरा दिवो विदथे पत्यमानः ।
देवेषु च सवितः श्लोकमश्रेरादस्मभ्यमा सुव सर्वतातिं ॥११॥
हिरण्यऽपाणिः । सविता । सुऽजिह्वः । त्रिः । आ । दिवः । विदथे । पत्यमानः ।
देवेषु । च । सवितरिति । श्लोकं । अश्रेः । आत् । अस्मभ्यं । आ । सुव । सर्वऽतातिं ॥११॥

हिरण्यपाणिः । दानार्थं हिरण्यं पाणौ हस्ते यस्य स तथोक्तः । यद्वा । देवकर्तृकयागे सवितुर्ऋत्विग्भूतस्य हस्ते प्राशित्रं भक्षणार्थमध्वर्यवो ददुः । तत्प्राशित्रं तस्य हस्तौ चिच्छेद । ततोऽध्वर्यवो हिरण्मयौ हस्तौ कृत्वा संदधुः । ततोऽयं हिरण्यपाणिः । तथा च कौषीतकं । सवित्रे प्राशित्रं प्रतिजह्रुस्तत्तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ प्रतिदधुस्तस्माद्धिरण्यपाणिरिति । सुजिह्वः शोभनवाक् सविता विदथे यज्ञे त्रिष्वपि सवनेषु दिवो नभसः सकाशाद्वा पत्यमान आगच्छन् भवतीति शेषः । परोऽर्धर्चः प्रत्यक्षः । हे सवितस्त्वं देवेषु स्तोतृषु विद्यमानं च श्लोकं । श्लोक्यतेऽनेनेति श्लोकः स्तोत्रं । तदश्रोः । शृणु हि च । आदनंतरं सर्वतातिं सर्वसंपादितं फलमस्मभ्यमा सुव । प्रेरय ॥ हिरण्यपाणिः । हिरण्यशब्दं यास्को बहुधा निर्वक्ति । हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमित्यादिना । नि० २.१० । पाणिशब्दं च निर्विवेच । पाणिः पणायतेः पूजाकर्मणः । नि० २.२६. । इति ॥ हर्य कांतिगत्योः । हर्यतेः कन्यन् हिर चेति कन्यन् हिर इत्ययमादेशो धातोः । नित्त्वादाद्युदात्तः । बहुव्रीहौ पूर्वपदस्वरः । पत्यमानः । पद गतौ । दिवादिरात्मनेपदी । दकारस्य तकारश्छांदसः । अश्रोः । श्रिञ् सेवायामित्यस्य लेटि बहुलं छंदसीति शपो लुक् । चवायोगे प्रथमेति न निघातः । सुव । षू प्रेरणे । तुदादिः । सर्वतातिं । सर्वदेवात्तातिलिति स्वार्थिकः । लित्स्वरः ॥

सुकृत्सुपाणिः स्ववाँ ऋतावा देवस्त्वष्टावसे तानि नो धात ।
पूषण्वंत ऋभवो मादयध्वमूर्ध्वग्रावाणो अध्वरमतष्ट ॥१२॥
सुऽकृत् । सुऽपाणिः । स्वऽवान् । ऋतऽवा । देवः । त्वष्टा । अवसे । तानि । नः । धात ।
पूषणऽवंतः । ऋभवः । मादयध्वं । ऊर्ध्वऽग्रावाणः । अध्वरं । अतष्ट ॥१२॥

सुकृत्सृष्टु जगतः कर्ता सुपाणिः कल्याणपाणिः स्ववान् धनवानृतावा सत्यसंकल्पस्त्वष्टा देवस्तानि यान्यस्माकमपेक्षितान्यवसे रक्षणाय नोऽस्मभ्यं धात । ददातु । ऋभवः । उरु भांतीत्यृभवः । हे ऋभवः पूषण्वंतः पूष्णा सहिता यूयं मादयध्वं । अस्मान् धनप्रदानेन हृष्टान् कुरुत । ऊर्ध्वग्रावाणः सोमाभिषवार्थमुद्यतग्रावाणः संत ऋत्विज इममस्मदीयमध्वरमतष्ट । अकुर्वन् ॥ अतष्ट । तक्षू त्वक्षू तनूकरणे । ऊदित्त्वादिडभावः । झलो झलीति सिलोपः । स्कोः संयोगाद्योरिति ककारलोपः । बहुवचनस्यैकवचनं छांदसं ॥

विद्युद्रथा मरुत ऋष्टिमंतो दिवो मर्या ऋतजाता अयासः ।
सरस्वती शृणवन्यज्ञियासो धाता रयिं सहवीरं तुरासः ॥१३॥
विद्युत्ऽरथाः । मरुतः । ऋष्टिऽमंतः । दिवः । मर्याः । ऋतऽजाताः । अयासः ।
सरस्वती । शृणवन् । यज्ञियासः । धात । रयिं । सहऽवीरं । तुरासः ॥१३॥

विद्युद्रथा विद्योतमानरथोपेता ऋष्टिमंतो दीप्तिमंतः । ऋष्टिरायुधविशेषः । तद्वंतो वा दिवो द्योतमाना मर्याः शत्रूणां मारयितार ऋतजाता उदकात्सत्याद्वा प्रादुर्भूताः । यद्वा । ऋतमुदकं जातं येभ्यस्ते ऋतजाताः । अयासः सततगमनशीला यज्ञियासो यज्ञार्हा मरुतः सरस्वती । सरः पयस्तद्वती । प्रसरणमस्या अस्तीति सरस्वती । वाग्देवता च । एते सर्वे देवा मदीयमिमं स्तोमं शृणवन् । शृण्वंतु । तुरासोऽस्माकं फलप्रदाने त्वरणयुक्ता हे मरुतः सहवीरं पुत्रसहितं रयिं धनं धात । अस्मभ्यं धत्त ॥ धात । दधातेर्लोटि बहुलं छंदसीति शपो लुक् । तप्तनप्तनथनाश्चेति तबादेशः । पादादित्वादनिघातः । तपः पित्त्वादनुदात्तत्वे धातुस्वरः । तुरासः । तुर त्वरणे । इगुपधलक्षणः कः । आमंत्रितत्वान्निघातः ॥

विष्णुं स्तोमासः पुरुदस्ममर्का भगस्येव कारिणो यामनि ग्मन् ।
उरुक्रमः ककुहो यस्य पूर्वीर्न मर्धंति युवतयो जनित्रीः ॥१४॥

विष्णुं। स्तोमासः। पुरुऽदस्मं। अर्काः। भगस्यऽइव। कारिणः। यामनि। ग्मन्।
उरुऽक्रमः। ककुहः। यस्य। पूर्वीः। न। मर्धंति। युवतयः। जनित्रीः ॥१४॥

स्तोमासः। स्तूयत एभिरिति स्तोमाः स्तोत्राणि। अर्का अर्चनीयानि शस्त्राणि च भगस्येव धनस्य कारिणः कर्तृणीव स्थितानि तानि यामनि संततं प्रतायमानेऽस्मिन्यज्ञे पुरुदस्मं बहुकर्माणं। यद्वा। बहून् दस्यत्युपक्षपयतीति पुरुदस्मः। तं विष्णुं देवं ग्मन्। गच्छतु। पूर्वीर्बह्व्यो जनित्रीः सर्वस्य जनयित्र्यो युवतयः परस्परमसंकीर्णाः ककुहः। कं स्कुभ्नंति विस्तारयंतीति ककुभो दिशः। यद्वा। ककुबुच्छ्रयार्थः। उच्छ्रिता इव हि दिशो वृक्षाग्रेषूपलभ्यमानास्तिष्ठंति। एता दिशो विष्णोराज्ञां न मर्धंति। न हिंसंति। स विष्णुरुरुक्रमः। उरुर्महान् क्रमः पादविक्षेपो यस्य सः। त्रिविक्रमावतारे एकेनैव पादेन सर्वं जगदाक्रम्यातिष्ठत्॥ ग्मन्। गमेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक्। ककुभः। पृषोदरादित्वादृपस्वरसिद्धिः॥

इंद्रो विश्वैर्वीर्यैः३ पत्यमान उभे आ पप्रौ रोदसी महित्वा।
पुरंदरो वृत्रहा धृष्णुषेणः संगृभ्या न आ भरा भूरि पश्वः ॥१५॥

इंद्रः। विश्वैः। वीर्यैः। पत्यमानः। उभे इति। आ। पप्रौ। रोदसी इति। महिऽत्वा।
पुरंऽदरः। वृत्रऽहा। धृष्णुऽसेनः। संऽगृभ्य। नः। आ। भर। भूरि। पश्वः ॥१५॥

विश्वैः सर्ववीर्यैः सामर्थ्यैः पत्यमानः प्राप्यमाणः स इंद्र उभे रोदसी द्यावापृथिव्यौ महित्वा स्वकीयेन महिम्ना पप्रौ। पूरयामास। शेषः प्रत्यक्षकृतः। पुरंदरः शत्रुपुरां दारयिता वृत्रहा वृत्रस्य हंता धृष्णुषेणः पराभिभवनशीलसेनोपेतः स त्वं पश्वः पशून् संगृभ्य संगृह्य नोऽस्मभ्यं भूरि प्रभूतं यथा भवति तथा भर। देहि। यद्वा। पश्वः पशोर्भूरि बहुत्वं बहून् पशूंश्च यच्छति॥ पुरंदरः। दॄ विदारणे इत्यस्य पुरशब्द उपपदे पूःसर्वयोर्दारिसहोरिति खच्प्रत्ययः। वाचंयमपुरंदरौ चेति निपातनात्पूर्वपदस्यामागमः। चित्त्वादंतोदात्तः। धृष्णुषेणः। पूर्वपदादिति संहितायां षत्वं। यदा षत्वं तदा रषाभ्यामिति णत्वं। संगृभ्य। ग्रहेर्ल्यपि स्थाने संप्रसारणं। हृग्रहोर्भश्छंदसीति भत्वं। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। पश्वः। पशुशब्दात् शसः जसादिषु छंदसि वावचनमिति सवर्णदीर्घाभावः॥ ॥२८॥

नासत्या मे पितरा बंधुपृच्छा सजात्यमश्विनोश्चारु नाम।
युवं हि स्थो रयिदौ नो रयीणां दात्रं रक्षेथे अकवैरदब्धा ॥१६॥

नासत्या। मे। पितरा। बंधुऽपृच्छा। सऽजात्यं। अश्विनोः। चारु। नाम।
युवं। हि। स्थः। रयिऽदौ। नः। रयीणां। दात्रं। रक्षेथे इति। अकवैः। अदब्धा ॥१६॥

हे नासत्यावश्विनौ बंधुपृच्छा। हविष्प्रदातृत्वेन बंधूनस्मानपेक्षितमर्थं पृच्छत इति बंधूनां प्रष्टारौ। युवां मे पितरौ पालयितारौ भवतं। युवयोरश्विनोः सजात्यं सजाते भवं संगतं चारु नाम कमनीयं खलु। हे अश्विनौ युव युवां नोऽस्मभ्यं रयीणां धनानां मध्ये रयिदावुत्तमस्य धनस्य दातारौ स्थो हि। भवथः खलु। किंच अदब्धा केनाप्यतिरस्कृतौ युवां दात्रं हविषा दातारं मामकवैरकुत्सितैः शोभनैः कर्मभी रक्षेथे। पालयतं॥ नासत्या। नभ्राण्नपादित्यादिना निपातनान्नञः प्रकृतिभावः। बंधुपृच्छा। पृच्छेः क्विप्। सुपां सुलुगिति सुपो डादेशः। सजात्यं। सजाते भवं। भवे छंदसीति यत्। तित्स्वरितः। स्थः। अस्तेर्लटि रूपं। हियोगादनिघातः॥

महत्तदः कवयश्चारु नाम यद्ध देवा भवथ विश्व इंद्रे।
सख ऋभुभिः पुरुहूत प्रियेभिरिमां धियं सातये तक्षता नः ॥१७॥

महत्। तत्। वः। कवयः। चारु। नाम। यत्। ह। देवाः। भवथ। विश्वे। इंद्रे।
सखा। ऋभुऽभिः। पुरुऽहूत। प्रियेभिः। इमां। धियं। सातये। तक्षत। नः ॥१७॥

हे कवयो मेधाविनो हे देवा वो युष्माकं तत्तादृशं महत्प्रभूतं नाम कर्म नमनं वा चारु मनोहरं खलु। यद्येन कर्मणा विश्वे सर्वे यूयमिंद्रे इंद्रोपलक्षिते लोके देवा भवथ ह देवत्वं प्राप्नुथ खलु। हे पुरुहूत बहुभि राहूत हे इंद्र त्वं प्रियेभिः प्रियतमैर्ऋभुभिः। ऋतेन भवत्यृतेन भातीति वा। ऋभुभिर्देवैः सखासि। इंद्रस हिता ऋभवो यूयमिमामस्मदीयां धियं स्तुतिं नोऽस्माकं सातये धनादिलाभार्थं तक्षत। स्वीकुरुत॥ यत्। सुपां सुलुगित्यादिना सुपो लुक्। भवथ। भवतेर्लटि रूपं। यद्वृत्तयोगादनिघातः। सख ऋभुभिरित्यस्य संहिता यामृत्यक इति प्रकृतिभावो ह्रस्वत्वं च॥

अर्यमा णो अदितिर्यज्ञियासोऽदब्धानि वरुणस्य व्रतानि।
युयोत नो अनपत्यानि गंतोः प्रजावान्नः पशुमाँ अस्तु गातुः ॥१८॥
अर्यमा। नः। अदितिः। यज्ञियासः। अदब्धानि। वरुणस्य। व्रतानि।
युयोत। नः। अनपत्यानि। गंतोः। प्रजाऽवान्। नः। पशुऽमान्। अस्तु। गातुः ॥१८॥

अर्यमा। ऋच्छति सर्वदा गच्छतीत्यर्यमा सूर्यः। अदितिर्देवमाता यज्ञियासो यज्ञार्हा देवा यस्य वरुणस्य व्रतानि कर्माण्यदब्धान्यहिंसितानि भवंति स वरुणस्ते चार्यमादयो देवा नोऽस्मान्रक्षंत्विति शेषः। ते यूय नोऽस्माकमनपत्यान्यपत्यानां पुत्राणामहितानि कर्माणि। यद्वा। पतनकारणं न भवतीत्यपत्यं। तदन्यान्यनप त्यानि पतनकारणानि कर्माणि गंतोः सन्मार्गाद्युयोत। पृथक्कुरुत। यथा तान्यहितानि कर्माणि न स्पृशंति तथा कुरुतेत्यर्थः। अथ गातुः। गायंति स्तुवंतीद्रादीनत्रेति गातुर्गृहं। नोऽस्मदीयं गृहं पशुमान्पश्वादियुक्तं प्रजावानपत्योपेतमस्तु॥ अर्यमा। ऋ गतौ। श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्नित्यादिना निपातनाद्रूपसिद्धिः। अदितिः। दीङ् क्षये इत्यस्य कर्तरि क्तिच्। नञा समासः। अदितिरदीनेति यास्कः। क्तादेस ह्रस्वत्वं। नञः स्वरः। युयोत। यौतिरमिश्रीभावकर्मणो लोटि बहुलं छंदसीति शपः श्लुः। तप्तनप्तनथनाश्चेति तप्रत्ययस्य तबादेशः। गंतोः। गमॢ गतौ। सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् इति तुन्प्रत्ययः। नित्त्वादाद्युदात्तः। गातुः। गापाभ्यां चेति तुप्रत्ययः॥

देवानां दूतः पुरुध प्रसूतोऽनागान्नो वोचतु सर्वताता।
शृणोतु नः पृथिवी द्यौरुतापः सूर्यो नक्षत्रैरुर्वंतरिक्षं ॥१९॥
देवानां। दूतः। पुरुध। प्रऽसूतः। अनागान्। नः। वोचतु। सर्वऽताता।
शृणोतु। नः। पृथिवी। द्यौः। उत। आपः। सूर्यः। नक्षत्रैः। उरु। अंतरिक्षं ॥१९॥

पुरुध पुरुषु बहुषु देशेषु प्रसूतोऽग्निहोत्रार्थं विहितः। यद्वा। पुरुभिर्यजमानैः प्रसूतो यष्टव्यदेवाह्वानार्थं प्रेरितो देवानां दूतः। तथा च तैत्तिरीयके। अग्निर्देवानां दूत आसीदिति। तादृशोऽग्निः कर्मकर्तृसाधनत्व गुणेन सापराधानप्यस्माननागाननागसः सर्वताता सर्वत्र वोचतु। ब्रवीतु। किंच पृथिवी द्यौश्च उतापि चापः सूर्यश्च नक्षत्रैरुरु विस्तीर्णमंतरिक्षं च। एते सर्वे देवा नोऽस्मदीयां स्तुतिं शृणोतु। शृण्वंतु। प्रत्येकाविवक्षयैकवचनं॥ प्रसूतः। षू प्रेरणे। कर्मणि क्तः। गतिरनंतर इति गतेः प्रकृतिस्वरः। अनागान्। शसि सकारलोपश्छांदसः। सवर्णदीर्घे कृते तस्मात्क्ससो न इति नत्वं। वोचतु। वच परिभाषणे। व्यत्ययो बहुलमिति शपो ऽङादेशः। वच उम्। गुणः। निघातः। नक्षत्रैः। णक्ष गतौ। अमिनक्षियजिवधिपतिभ्योऽत्रन्नित्यत्रन्प्रत्ययः। नित्त्वादाद्युदात्तः। यद्वा। न क्षरति न क्षीयत इति वा नक्षत्रं। नभ्राण्नपादिति नञः प्रकृतिभावः। नञः स्वरः॥

शृण्वंतु नो वृषणः पर्वतासो ध्रुवक्षेमास इळया मदंतः ।
आदित्यैर्नो अदितिः शृणोतु यच्छंतु नो मरुतः शर्म भद्रं ॥२०॥
शृण्वंतु । नः । वृषणः । पर्वतासः । ध्रुवऽक्षेमासः । इळया । मदंतः ।
आदित्यैः । नः । अदितिः । शृणोतु । यच्छंतु । नः । मरुतः । शर्म । भद्रं ॥२०॥

वृषणोऽभिमतफलसेचका मरुतः पर्वतासः । पृणंति पूरयत्यर्थिनां कामानिति पर्वता ग्रावाभिमानिनो देवाः ध्रुवक्षेमासो निश्चलस्थाना इळया हविर्लक्षणेनान्नेन मदंतो माद्यतः संतो नोऽस्मदीयां स्तुतिं शृण्वंतु । किंच आदित्यैरपत्यभूतैरादित्यैरुपेतादितिर्नोऽस्मदीयां स्तुतिं शृणोतु । मरुतश्च नोऽस्मभ्यं भद्रं कल्याणकरं शर्म सुखं यच्छंतु । ददतु ॥ आदित्यैः । अदितेरपत्यानीत्यर्थे दित्यदितीति ण्यः । प्रत्ययस्वरेणांतोदात्तः । सुपा संहिकादेशे कृते एकादेश उदात्तः ॥

प्रवत्स्यन्यजमानः सदा सुग इत्यृचं जपन् गच्छेत । सूत्रितं च । सदा सुगः पितुमाँ अस्तु पंथा इति पंथानमवरुह्य । आ॰ २. ५ । इति ॥

सदा सुगः पितुमाँ अस्तु पंथा मध्वा देवा ओषधीः सं पिपृक्त ।
भगो मे अग्ने सख्ये न मृध्या उद्रायो अश्यां सदनं पुरुक्षोः ॥२१॥
सदा । सुऽगः । पितुऽमान् । अस्तु । पंथाः । मध्वा । देवाः । ओषधीः । सं । पिपृक्त ।
भगः । मे । अग्ने । सख्ये । न । मृध्याः । उत । रायः । अश्यां । सदनं । पुरुऽक्षोः ॥२१॥

हे अग्ने अस्माकं पंथा मार्गः सदा सर्वदा सुगः सुखेन गंतुं शक्यः पितुमानन्नवांश्चास्तु । हे देवा मध्वा माधुर्योपेतेनोदकेनौषधीः सं पिपृक्त । संपर्चयत । सेचयतेत्यर्थः । हे अग्ने त्वया सख्ये संजाते सति मे मम भगो धनं न मृध्याः । न विनश्यतु । किंच रायो धनस्य पुरुक्षोर्बह्वन्नस्य च सदनं स्थानमुदश्यां । प्राप्नुयां ॥ सदा । स्वरादिष्वाद्युदात्तत्वेन पाठादाद्युदात्तः । पिपृक्त । पृची संपर्के । लोटि बहुलं छंदसीति शपः श्लुः । बहुलं छंदसीत्यभ्यासस्येत्वं । मृध्याः । मृधिर्हिंसार्थः । लिङि तिङां तिङो भवंतीति तिपः सिप् ॥

पशौ पुरोडाशस्विष्टकृतः स्वदस्व हव्येति याज्या । सूत्रितं च । स्वदस्व हव्या समिषो दिदीहीति पुरोडाशस्विष्टकृतः । आ॰ ३ ५ । इति ॥

स्वदस्व हव्या समिषो दिदीह्यस्मद्र्य१क्सं मिमीहि श्रवांसि ।
विश्वाँ अग्ने पृत्सु तांजेषि शत्रूनहा विश्वा सुमना दीदिही नः ॥२२॥
स्वदस्व । हव्या । सं । इषः । दिदीहि । अस्मद्र्यक् । सं । मिमीहि । श्रवांसि ।
विश्वान् । अग्ने । पृतऽसु । तान् । जेषि । शत्रून् । अहा । विश्वा । सुऽमनाः । दीदिहि । नः ॥२२॥

हे अग्ने हव्या हवनयोग्यानि हवींषि स्वदस्व । स्वादय । अस्माकमिषोऽन्नानि सं दिदीहि । सम्यक् प्रकाशय । दीपितानि तानि श्रवांस्यन्नान्यस्मद्र्यगस्मदभिमुखानि सं मिमीहि । संमानय । कुर्वित्यर्थः । ततः पृत्सु संग्रामेषु तान्बाधकान्विश्वान् शत्रून् जेषि । जय । अथ सुमनाः शोभनमनस्कः सन् नोऽस्माकं विश्वाहा सर्वाण्यहानि दीदिहि । अग्निहोत्रादिकर्मयोग्यानि प्रकाशय ॥ स्वदस्व । स्वद आस्वादने । लोटि रूपं । थासो लसार्वधातुकस्वरे धातुस्वरः । दिदीहि । दिवु क्रीडादावित्यस्य लोटि बहुलं छंदसीति विकरणस्य श्लुः । परत्वात् हलि चेति दीर्घत्वे कृते पश्चाद्वलि लोपः । निघातः । अस्मद्र्यक् । अस्मानंचतीत्यंचतेः क्विप् । विष्वग्देवयोश्च टेरिति यणः स्वरितत्वं । मिमीहि । माङ् माने शब्दे च । जुहोत्यादिः । तस्य लोटि व्यत्ययेन परस्मैपदं । निघातः । सुमनाः । सोर्मनसीत्युत्तरपदाद्युदात्तत्वं । दीदिहि । दिवेर्यङ्लुकि लोटि तुजादित्वादभ्यासस्य दीर्घः । वलि लोपः ॥ ॥२७॥

उषसः पूर्वा इति द्वाविंशत्यृचं द्वितीयं सूक्तं त्रैष्टुभं। उषस इत्यनुक्रमणिका। प्रजापतेरार्षं वैश्वदेवं प्रजापतिर्हि वैश्वदेवं हेति पूर्वसूक्ते हिहशब्दप्रयोगात्। सूक्तविनियोगो लैंगिकः। अत्राद्योषस्या ततः परं नवर्चो ऽग्न्यादिदेवतास्ततः पराहोरात्रदेवताका ततश्चतस्रो रोदस्योः पंचदशी द्युनिशोर्वा षोडशी दिग्देवताका ततः षडृचो वर्षत इंद्रस्य केचिदंत्यस्त्वष्टुश्चेति मन्यंते ॥

उषसः पूर्वा अध यद्व्यूषुर्महद्वि जज्ञे अक्षरं पदे गोः ।
व्रता देवानामुप नु प्रभूषन्महद्देवानामसुरत्वमेकं ॥१॥
उषसः । पूर्वाः । अध । यत् । विऽऊषुः । महत् । वि । जज्ञे । अक्षरं । पदे । गोः ।
व्रता । देवानां । उप । नु । प्रऽभूषन् । महत् । देवानां । असुरऽत्वं । एकं ॥१॥

पूर्वा उदयकालात्प्राचीना उषसो यद्यदा व्यूषुर्व्युच्छंति अध तदानीमक्षरं। न क्षरतीत्यक्षरं। अविनाश्यादित्याख्यं महत्प्रभूतं ज्योतिर्गोरुदकस्य पदे स्थाने समुद्रे नभसि वा वि जज्ञे। उत्पद्यते। अथोदिते सूर्ये प्रभूषन्नग्निहोत्रादिकर्मसु प्रभवितुमिच्छन्यजमानो व्रता कर्माणि देवानां नु क्षिप्रमुप समीपे तिष्ठति। योग्यक्रियाध्याहारः। तदिदं देवानामेकं मुख्यमसुरत्वं। अस्यति क्षिपति सर्वानित्यसुरः प्रबलः। तस्य भावोऽसुरत्वं प्राबल्यं। महदैश्वर्यं ॥ व्यूषुः। उष दाहे इत्यस्य विपूर्वस्य लिट्युसि रूपं। संहिते योगविभागात्समासः। यद्वृत्तयोगादनिघातः। प्रभूषन्। भवतेः सनि द्विर्वचनस्य छंदसि विकल्पितत्वादत्र द्विर्वचनाभावः। तदंताच्छतरि रूपं। प्रादिसमासः। शतुर्लसार्वधातुकस्वरे धातुस्वरः ॥

मो षू णो अत्र जुहुरंत देवा मा पूर्वे अग्ने पितरः पदज्ञाः ।
पुराण्योः सद्मनोः केतुरंतर्महद्देवानामसुरत्वमेकं ॥२॥
मो इति । सु । नः । अत्र । जुहुरंत । देवाः । मा । पूर्वे । अग्ने । पितरः । पदऽज्ञाः ।
पुराण्योः । सद्मनोः । केतुः । अंतः । महत् । देवानां । असुरऽत्वं । एकं ॥२॥

हे अग्ने अत्रास्मिन्काले देवा नोऽस्मान् सु सुष्ठु मो जुहुरंत। मा हिंस्युः। तथा पदज्ञाः कर्माण्यनुष्ठाय देवपदमनुभवंतः पूर्वे पुरातनाः पितरो मा हिंसिषुः। यस्मात्केतुर्यज्ञानां प्रज्ञापकः सूर्यः पुराण्योः पुरातनयोः सद्मनोः। सीदंत्यनयोर्देवमनुष्या इति सद्मनी रोदसी। तयोरंतर्मध्य उदेति। तस्मादत्र मा हिंसीत्यर्थः। महद्देवानामित्यादि पूर्ववत् ॥ जुहुरंत। ह्वृ प्रसह्यकरणे। लुङि जुहोत्यादित्वात् श्लुः। व्यत्ययेनात्मनेपदं। बहुलं छंदसीत्युत्वं। संज्ञापूर्वकस्य विधेरनित्यत्वाददादेशाभावेऽतादेशः ॥

वि मे पुरुत्रा पतयंति कामाः शम्यच्छा दीद्ये पूर्व्याणि ।
समिद्धे अग्नावृतमिद्वदेम महद्देवानामसुरत्वमेकं ॥३॥
वि । मे । पुरुऽत्रा । पतयंति । कामाः । शमि । अच्छ । दीद्ये । पूर्व्याणि ।
संऽइद्धे । अग्नौ । ऋतं । इत् । वदेम । महत् । देवानां । असुरऽत्वं । एकं ॥३॥

हे अग्ने मे मम पुरुत्रा बहवः कामा अभिलाषा वि पतयंति। विविधं गच्छंति। शम्यग्निष्टोमादिलक्षणे कर्मण्यच्छाभिलक्ष्याहं पूर्व्याणि पुरातनानि स्तोत्राणि तदर्थं दीद्ये। दीपयामि। पश्चाद्यज्ञार्थमग्नौ समिद्धे दीप्यमाने सत्यृतमित् सत्यमेव वदेम। अनृतवचने हि यज्ञे वैगुण्यं स्यादिति ॥ पुरुत्रा। देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योरित्यादिना त्राप्रत्ययः। पतयंति। पत्लृ गतौ। स्वार्थिको णिच् ॥

समानो राजा विभृतः पुरुत्रा शये शयासु प्रयुतो वनानु ।
अन्या वत्सं भरति क्षेति माता महद्देवानामसुरत्वमेकं ॥४॥
समानः । राजा । विऽभृतः । पुरुऽत्रा । शये । शयासु । प्रऽयुतः । वना । अनु ।
अन्या । वत्सं । भरति । क्षेति । माता । महत् । देवानां । असुरऽत्वं । एकं ॥४॥

समानः साधारणः सर्वेषां । यद्वा । एक एव राजा दीप्यमानोऽग्निः पुरुत्रा बहुषु देशेषु विभृतोऽग्निहोत्रार्थं विहृतो भवति । यद्वा । राजाभिषुतः सोमः सर्वेषु देशेषु यज्ञार्थं विहृतो भवति । स चाग्निः सोमो वा शयासु । शेरते हविरादयः पदार्था अत्रेति शया वेद्यः । तासु शये । शेते । निवसति । वनानु अनुवनं वनेष्वरणिरूपेषु काष्ठेषु प्रयुतो विभक्तोऽग्निर्वर्तते । सोमश्चद्रुघणेषु चमसेषु विभक्तो वर्तते । तस्य द्वे मातरौ द्यावापृथिव्यौ । तयोरन्या द्यौरस्या भूमेर्जायमानतया वत्सं वत्सभूतमग्निं सोमं वा भरति । वृष्ट्यादिरूपेण भरति । पोषयति । माता वसुधा क्षेति । केवलं निवासयति ॥ विभृतः । हृञ् हरणे । कर्मणि क्तः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । पुरुत्रा । अधिकरणे त्राप्रत्ययः । शये । शीङ् स्वप्ने । लोपस्त इति तकारलोपः । शीङः सार्वधातुके गुणः । शयासु । शीङ् स्वप्ने । एरजित्यधिकरणेऽच । भरति । भृञ् भरणे । भुवादिः । एकान्याभ्यां समर्थाभ्यामिति पूर्वस्य न निघातः । क्षेति । क्षि निवासगत्योरित्यस्य लटि बहुलं छंदसीति विकरणस्य लुक् ॥

आक्षित्पूर्वास्वपरा अनूरुत्सद्यो जातासु तरुणीष्वंतः ।
अंतर्वतीः सुवते अप्रवीता महद्देवानामसुरत्वमेकं ॥५॥
आऽक्षित् । पूर्वासु । अपराः । अनूरुत् । सद्यः । जातासु । तरुणीषु । अंतरिति ।
अंतःऽवतीः । सुवते । अप्रऽवीताः । महत् । देवानां । असुरऽत्वं । एकं ॥५॥

पूर्वासु जीर्णास्वोषधीष्वाक्षिदावर्तमानस्तथापरा नव्या ओषधीरनूरुदनुरुंधन उत्पत्त्यानुगुण्येनानुतिष्ठन्नग्निः सूर्यो वा सद्यो जातासु तदानीमुत्पन्नासु तरुणीषु पल्लवितास्वोषधीष्वंतर्वर्तते । ता ओषधयोऽप्रवीताः केनापि पुरुषेणानिषिक्तारतस्का अनभ्यक्ता वा अंतर्वतीरग्निना गर्भवत्यो भूत्वा सुवते । फलं पुष्पं चोत्पादयंति । तदिदं देवानामैश्वर्यं ॥ आक्षित । क्षि निवासगत्योः । क्विप् । अनूरुत । अनो रुध कामे । अस्मात् क्विप् । अन्येषामपि दृश्यत इति दीर्घः । कृत्स्वरः । तरुणीषु । नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानं । म० ४. १. १५. ६. । इति ङीप् । अंतर्वतीः । झय इति मतुपो वत्वं । सुवते । षूङ् प्राणिगर्भविमोचन इत्यस्य लटि रूपं । निघातः ॥ ॥२८॥

शयुः परस्तादध नु द्विमाताबंधनश्चरति वत्स एकः ।
मित्रस्य ता वरुणस्य व्रतानि महद्देवानामसुरत्वमेकं ॥६॥
शयुः । परस्तात् । अध । नु । द्विऽमाता । अबंधनः । चरति । वत्सः । एकः ।
मित्रस्य । ता । वरुणस्य । व्रतानि । महत् । देवानां । असुरऽत्वं । एकं ॥६॥

द्विमाता । द्वे द्यावापृथिव्यौ मातरौ यस्य स द्विमाता । यद्वा । द्वयोर्लोकयोर्निर्माता सूर्यः परस्तात्पश्चिमायां दिश्यस्तवेलायां शयुः शयानोऽव्याप्रियमाणो भवति । अध नु अथोदयवेलायामेको द्यावापृथिव्योः साधारणस्तयो रसादानाद्वत्सः पुत्रोऽबंधनोऽप्रतिबद्धगतिरनालंबन एकः सन् चरति । नभसि गच्छति । ता तानीमानि मित्रस्य वरुणस्य मित्रावरुणयोर्व्रतानि कर्माणि ॥ शयुः । शीङ् स्वप्ने । भृमृशीतृचरीत्यादिना उप्रत्ययः । द्विमाता । नद्यृतश्चेति प्राप्तस्य कप ऋतश्छंदसीति प्रतिषेधः ॥

द्विमाता होता विदथेषु सम्राळन्वग्रं चरति क्षेति बुध्नः ।
प्र रण्यानि रण्यवाचो भरंते महद्देवानामसुरत्वमेकं ॥७॥
द्विऽमाता । होता । विदथेषु । संऽराट् । अनु । अग्रं । चरति । क्षेति । बुध्नः ।
प्र । रण्यानि । रण्यऽवाचः । भरंते । महत् । देवानां । असुरऽत्वं । एकं ॥७॥

द्विमाता द्वयोर्लोकयोर्निर्माता विदथेषु यज्ञेषु होता देवानामाह्वाता सम्राट् यज्ञेषु सम्यग्राजमानोऽग्निरन्वग्रमग्रं दिवि चरति । सूर्यभूतस्तत्र वर्तते । बुध्नः सर्वस्य कर्मणो मूलभूतः सन् क्षेति । भूम्यां वसति । यद्वा । अग्रं मुख्यं भागं चरति । भक्षयति । क्षेति । यज्वनां गृहेषु निवसति । यद्वा । बुध्नः प्रतिष्ठितभागी स्विष्टकृद्रूपेण । प्रतिष्ठा वै स्विष्टकृदिति श्रुतेः । किंच रण्यवाचो रमणीयवाचः स्तोतारो रण्यानि रमणीयानि स्तोत्राणि प्र भरंते । प्रणयंति । कुर्वंति । तदिदं देवानामैश्वर्यं ॥ चरति । चादिलोप इति न निघातः ॥

शूरस्येव युध्यतो अंतमस्य प्रतीचीनं ददृशे विश्वमायत् ।
अंतर्मतिश्चरति निष्षिधं गोर्महद्देवानामसुरत्वमेकं ॥८॥
शूरस्यऽइव । युध्यतः । अंतमस्य । प्रतीचीनं । ददृशे । विश्वं । आऽयत् ।
अंतः । मतिः । चरति । निःऽसिधं । गोः । महत् । देवानां । असुरऽत्वं । एकं ॥८॥

अंतमस्य समीपे वर्तमानस्य दावाग्नेरायदभिमुखमागच्छद्विश्वं भूतजातं प्रतीचीनं पराङ्मुखं ददृशे । दृश्यते । तत्र दृष्टांतः । शूरस्येव । यथा युध्यतो युद्धं कुर्वाणस्य शूरस्य समर्थस्य राज्ञोऽभिमुखमागच्छत्परबलं पराङ्मुखं दृश्यते तद्वत् । मतिः सर्वैर्ज्ञायमानः सोऽग्निर्गोरुदकस्य निष्षिधं हिंसिकां दीप्तिमंतश्चरति । अंतर्धारयति ॥ युध्यतः । युध संप्रहारे । दिवादिः । तस्य शतरि रूपं । अंतमस्य । अंतशब्दादंत इत्यनिठन्नावित्ति ठन् । अतिशयेनांतिक इत्यर्थे तमप् । तमे तादेश्चेति तादिलोपः । नित्त्वादाद्युदात्तः । प्रतीचीनं । प्रतिपूर्वस्याचतेः क्विन् । तस्माद्विभाषांचेरदिक्स्त्रियामिति खः । ईनादेशः । प्रत्ययस्वरः । आयत् । या प्रापण इत्यस्याङ्पूर्वस्य शतरि रूपं आङ्पूर्वस्य अय पय गतावित्यस्य शतरि रूपं वेति व्युत्पत्त्यनवधारणादनवग्रहः ॥

नि वेवेति पलितो दूत आस्वंतर्महांश्चरति रोचनेन ।
वपूंषि बिभ्रदभि नो वि चष्टे महद्देवानामसुरत्वमेकं ॥९॥
नि । वेवेति । पलितः । दूतः । आसु । अंतः । महान् । चरति । रोचनेन ।
वपूंषि । बिभ्रत् । अभि । नः । वि । चष्टे । महत् । देवानां । असुरऽत्वं । एकं ॥९॥

पलितः पालयिता पूर्णो वा देवानां दूतोऽग्निरास्वोषधीषु नि वेवेति । नितरां व्याप्य वर्तते । महान् सोऽग्नी रोचनेन सूर्येण सहांतरा रोदस्योर्मध्ये चरति । वपूंषि नानाविधानि रूपाणि बिभ्रत् सोऽग्निर्नोऽस्मान् यष्टॄनभि वि चष्टे । विशेषेणानुग्रहदृष्ट्या पश्यति ॥ वेवेति । वी गत्यादिषु । यङ्लुकि ईडभावे रूपं । रोचनेन । सहार्थे तृतीया । बिभ्रत् । डुभृञ् धारणपोषणयोरित्यस्य शतरि रूपं । अभ्यस्तस्वरः ॥

विष्णुर्गोपाः परमं पाति पाथः प्रिया धामान्यमृता दधानः ।
अग्निष्टा विश्वा भुवनानि वेद महद्देवानामसुरत्वमेकं ॥१०॥
विष्णुः । गोपाः । परमं । पाति । पाथः । प्रिया । धामानि । अमृता । दधानः ।
अग्निः । ता । विश्वा । भुवनानि । वेद । महत् । देवानां । असुरऽत्वं । एकं ॥१०॥

विष्णुर्व्याप्तो गोपाः सर्वस्य गोपायिता प्रिया प्रियतमान्यमृता क्षयरहितानि धामानि तेजांसि दधानः सोऽग्निः परम पाथः स्थानं पाति। रक्षति। यद्वा। धामानि लोकधारकाण्यमृतोदकानि दधानः सन् परमं पाथ उदकस्य स्थानमंतरिक्षं पाति। सोऽग्निस्ता तानि विश्वा सर्वाणि भुवनानि भूतजातानि वेद। जानाति॥ गोपाः। गोपायतेः क्विप्यतोलोपयलोपौ। अग्निष्टत्यत्र संहितायां युष्मत्ततत्क्षुःष्वंतःपादमिति षत्वं॥ ॥२९॥

नाना चक्राते यम्या३ वपूंषि तयोरन्यद्रोचते कृष्णमन्यत्।
श्यावी च यदरुषी च स्वसारौ महद्देवानामसुरत्वमेकं॥११॥
नाना। चक्राते इति। यम्या। वपूंषि। तयोः। अन्यत्। रोचते। कृष्णं। अन्यत्।
श्यावी। च। यत्। अरुषी। च। स्वसारौ। महत्। देवानां। असुरऽत्वं। एकं॥११॥

यम्या यमरूपे मिथुनभूते अहश्च रात्रिश्चेत्येते नाना नानाविधानि वपूंषि शुक्लकृष्णादीनि रूपाणि चक्राते। कुरुतः। श्यावी कृष्णवर्णारुषी शुक्लतयारोचमाना यत् ये परस्परं स्वसारौ भवतस्तयोर्मध्येऽन्यदर्जुनमहो रोचते। किरणसंबंधाद्दीप्यते। अन्यद्रात्रिलक्षणं कृष्णं तमःसंबंधात् कृष्णवर्णमाभाति॥ यम्या। सुपो डादेशः। रोचते। एकान्याभ्यां समर्थाभ्यामिति न निघातः॥

माता च यत्र दुहिता च धेनू सबर्दुघे धापयेते समीची।
ऋतस्य ते सदसीळे अंतर्महद्देवानामसुरत्वमेकं॥१२॥
माता। च। यत्र। दुहिता। च। धेनू इति। सबर्दुघे इति सबःऽदुघे। धापयेते इति।
समीची इति संऽईची।
ऋतस्य। ते इति। सदसि। ईळे। अंतः। महत्। देवानां। असुरऽत्वं। एकं॥१२॥

माता सर्वेषां निर्मातृत्वान्माता पृथिवी च दुहिता दूरे निहिता द्यौश्च। दुहिता दुर्हिता दूरे हिता दोग्धेर्वेति यास्कः। एते सबर्दुघे सबरः क्षीरस्य क्षीररूपस्य रसस्य दोग्ध्र्यौ अत एव धेनू जगतः प्रीणयित्र्यौ द्यावापृथिव्यौ यत्रांतरिक्षे समीची परस्परं संगते सत्यौ धापयेते स्वकीयं रसमन्योन्यं पाययेते ऋतस्योदकस्य सदसि स्थानभूते तस्मिन्नंतरिक्षेऽतः स्थिते द्यावापृथिव्यावीळे। अहं स्तौमि। यद्वा। वृष्टिलक्षणं रसं द्यौः पृथिवी धापयत् आहुतिलक्षणं रसं द्यां पृथिवीत्येवमन्योन्यं माता च दुहिता च भवतः। ऋतस्य सदसि स्थाने यज्ञसदने स्थितोऽहं ते उभे स्तौमि॥ सबर्दुघे। सबःशब्दः क्षीरवाचीति संप्रदायविद आहुः। तस्मिन्नुपपदे दुह प्रपूरण इत्यस्माद्धातोर्दुहः कब्घश्चेति कप्रत्ययो घश्चांतादेशः। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। धापयेते। धेट् पान इत्यस्य ण्यंतस्य लटि निगरणचलनार्थेभ्यश्चेति परस्मैपदे प्राप्ते पादिषु धेट उपसंख्यानमि त्यात्मनेपदं। यद्वृत्तयोगादनिघातः॥

अन्यस्या वत्सं रिहती मिमाय कया भुवा नि दधे धेनुरूधः।
ऋतस्य सा पयसापिन्वतेळा महद्देवानामसुरत्वमेकं॥१३॥
अन्यस्याः। वत्सं। रिहती। मिमाय। कया। भुवा। नि। दधे। धेनुः। ऊधः।
ऋतस्य। सा। पयसा। अपिन्वत। इळा। महत्। देवानां। असुरऽत्वं। एकं॥१३॥

अन्यस्याः पृथिव्या वत्समग्निं रिहत्युदकधारारूपया जिह्वया लिहती द्यौर्मिमाय। मेघद्वारा ध्वनिं करोति। धेनुः प्रीणयित्री सा द्यौः कया जलवर्जितया भुवा तत्रत्यं जलमादाय स्वकीयमूधो मेघरूपं नि दधे। उदकेन निहितमकरोत्। सा जलवर्जितेळा पृथिव्यृतस्य सत्यभूतस्यादित्यस्य पयसोदकेनापिन्वत।

वर्षकाले सिक्ता भवति । आदित्याज्जायते वृष्टिः । मनु० ३. ७६. । इति स्मृतेः ॥ रिहती । लिह आस्वादन इत्यस्य शतरि रूपं । शतुरनुम इति ङीप उदात्तत्वं । अपिन्वत । पिवि सेचने । मुचादिरात्मनेपदी । निघातः ॥

पद्या वस्ते पुरुरूपा वपूंष्यूर्ध्वा तस्थौ त्र्यविं रेरिहाणा ।
ऋतस्य सद्म वि चरामि विद्वान्महद्देवानामसुरत्वमेकं ॥१४॥
पद्या । वस्ते । पुरुऽरूपा । वपूंषि । ऊर्ध्वा । तस्थौ । त्रिऽअविं । रेरिहाणा ।
ऋतस्य । सद्म । वि । चरामि । विद्वान । महत् । देवानां । असुरऽत्वं । एकं ॥१४॥

पद्या । जगत्स्रष्टुः परमेश्वरस्य पद्भ्यां जातत्वात्पद्या भूमिः । तथा च मंत्रवर्णः । पद्भ्यां भूमिः । ऋग्वे० १० ९०. १४. । इति । यद्वा । पादसंचारे साधुः पद्या भूमिः पुरुरूपा नानाविधस्वरूपाणि वपूंषि स्थावरजंगमात्मकानि रूपाणि वस्ते । आच्छादयति । सैषा भूमिरूर्ध्वोत्तरवेद्यात्मनोन्नता सती सस्सारभूतेन हविषा त्र्यविं । सार्धसंवत्सरवयस्को वत्सस्त्र्यविरित्युच्यते । तत्प्रमाणमादित्यं । त्रीन् लोकानवति रसतेजसा व्याप्नोतीति त्र्यविरिति वा । रेरिहाणा लिहती तस्थौ । ऋतस्य सत्यभूतस्यादित्यस्य सद्म स्थानं विद्वान् जानानोऽहं वि चरामि । हविर्भिस्तमादित्यं परिचरामि ॥ पद्या । पादशब्दाद्रथ कंदसीति यत् । पद्यत्यतदर्थे । पा० ६. ३. ५३ । इति पादस्य पद्भावः । यद्वा । तत्र साधुरिति यत् । यतोऽनाव इत्याद्युदात्तत्वं । त्र्यविं । अव रक्षणादिषु । इन्नितीन्प्रत्ययः । कृत्स्वरः । रेरिहाणा । लिह आस्वादन इत्यस्य यङ्लुकि शानचि रूपं । अभ्यस्तस्वरः ॥

पदे इव निहिते दस्मे अंतस्तयोरन्यद्गुह्यमाविरन्यत ।
सध्रीचीना पथ्या३ सा विषूची महद्देवानामसुरत्वमेकं ॥१५॥
पदे इवेति पदेऽइव । निहिते इति निऽहिते । दस्मे । अंतरिति । तयोः । अन्यत् । गुह्यं । आविः । अन्यत् ।
सध्रीचीना । पथ्या । सा । विषूची । महत् । देवानां । असुरऽत्वं । एकं ॥१५॥

पदे इव । पद्यते ज्ञायते तत्तदसाधारणलिंगेनेति पदे । अहश्च रात्रिश्चेत्यर्थः दस्मे सर्वदर्शनीये ते उभे अंतर्नभसि मध्ये निहिते स्थापिते इव वर्तेते । तयोरहोरात्रयोरन्यद्रात्रिलक्षणं गुह्यमप्रकाशमानतया गूढमिवास्ति । अन्यदहराविः सूर्यप्रकाशेन प्रकटं भवति । सध्रीचीनाहोरात्रयोः परस्परसंगतरूपा पथ्या मार्गः । काल इत्यर्थः । सा विषूची । पुण्यकृतोऽपुण्यकृतश्च प्राप्नोतीति विषूची भवति । सर्वे जना अहोरात्रयोर्वर्तंते । यद्वा । पदे इव देवमनुष्यादीनां स्थानभूते द्यावापृथिव्यावंतरंतरिक्षे निहिते वर्तेते । तयोरन्यद्द्यौर्गुह्यमस्माभिरदृश्यमानतया गूढं वर्तते । अन्यत्पृथिव्याविः सर्वदृश्यमानत्वेन प्रकटा भवति । सध्रीचीनेति पूर्ववत् ॥ सध्रीचीना । सहपूर्वादंचतेः क्विन् । सहस्य सध्रिरिति सध्र्यादेशः । विभाषांचेरदिक्स्त्रियामिति खः ॥ ॥३०॥

आ धेनवो धुनयंतामशिश्वीः सबर्दुघाः शशया अप्रदुग्धाः ।
नव्या नव्या युवतयो भवंतीर्महद्देवानामसुरत्वमेकं ॥१६॥
आ । धेनवः । धुनयंतां । अशिश्वीः । सबःऽदुघाः । शशयाः । अप्रऽदुग्धाः ।
नव्याःऽनव्याः । युवतयः । भवंतीः । महत् । देवानां । असुरऽत्वं । एकं ॥१६॥

धेनवो वृष्टिद्वारा सर्वस्य जगतः प्रीणयित्र्योऽशिश्वीः शिशुरहिताः । यद्वा । शिशवो न भवंतीत्यशिश्वीः । शशया नभसि शयाना वर्तमानाः केनाप्यप्रदुग्धा अक्षीणरसाः सबर्दुघा उदकलक्षणस्य क्षीरस्य दोग्ध्र्यो युवतयः परस्परंमिश्रणोपेता नव्या नव्या अतिशयेन नूतना भवंतीर्दिशो मेघा वा आ धुनयंतां । आदुहंतु ।

मेघपत्नेऽशिश्वीर्भवंतीरित्यत्र लिंगव्यत्ययः ॥ धूनयंतां । धूञ् कंपने । णिचि धूञ्प्रीणोर्नुग्वक्तव्यः । पा॰ ७. ३. ३७. १. । इति नुक् । हृस्वश्छांदसः । अशिश्वीः । सख्यशिश्वीति भाषायामिति व्यत्ययेन छंदसि भवति ॥

यदन्यासु वृषभो रोरवीति सो अन्यस्मिन्यूथे नि दधाति रेतः ।
स हि क्षपावान्त्स भगः स राजा महद्देवानामसुरत्वमेकं ॥१७॥
यत् । अन्यासु । वृषभः । रोरवीति । सः । अन्यस्मिन् । यूथे । नि । दधाति । रेतः ।
सः । हि । क्षपाऽवान् । सः । भगः । सः । राजा । महत् । देवानां । असुरऽत्वं । एकं ॥१७॥

वृषभोऽपां वर्षको यद्यः पर्जन्यात्मेंद्रोऽन्यासु दिक्षु रोरवीति मेघद्वारा भृशं शब्दं करोति स पर्जन्य इंद्रोऽन्यस्मिन्यूथे दिशां वृंदे रेत उदकं नि दधाति । तत्र वर्षति । लोके हि वृषभः कासुचिद्गोषु रेतःसेकार्थं रवं करोत्यन्यस्मिन् गोयूथे रेतः सिंचति । तद्वत् । स इंद्रः क्षपावान् । क्षिपति शत्रूनुदकं वेति क्षेपणवान् । यद्वा । क्षपा रात्रिः । तथा रात्रिपर्यायगानां स्तोत्राणां भागभूता या रात्रिः सोच्यते । तद्वान् । स भगः । सर्वैर्भजनीयः । स राजा हि । तत्तत्कर्मानुरूपफलप्रदानेन सर्वेषां राजा खलु ॥ रोरवीति । रु शब्द इत्यस्य यङ्लुगंतस्य लटि रूपं । एकान्याभ्यां समर्थाभ्यामिति प्रथमस्य न निघातः । यूथे । यु मिश्रणे । तिथपृष्ठगूथयूथप्रोथा इति थक्प्रत्ययांतत्वेन निपातनाद्दीर्घः । रेतः । रीङ् स्रवण इत्यस्मात् स्रुरीभ्यां तुट् चेत्यसुन्प्रत्ययस्तुडागमश्च । नित्त्वादाद्युदात्तः ॥

वीरस्य नु स्वश्व्यं जनासः प्र नु वोचाम विदुरस्य देवाः ।
षोळ्हा युक्ताः पंचपंचा वहंति महद्देवानामसुरत्वमेकं ॥१८॥
वीरस्य । नु । सुऽअश्व्यं । जनासः । प्र । नु । वोचाम । विदुः । अस्य । देवाः ।
षोळ्हा । युक्ताः । पंचऽपंच । आ । वहंति । महत् । देवानां । असुरऽत्वं । एकं ॥१८॥

हे जनासो जना वीरस्य शूरस्येंद्रस्य स्वश्व्यं शोभनाश्वोपेतत्वं नु क्षिप्रं प्र वोचाम । प्रकर्षेण वदाम । तथा देवा अप्यस्येंद्रस्य स्वश्वत्वं विदुः । जानंति । किं तत्स्वश्वत्वं । तदुच्यते । षोळ्हा मासानां द्वंद्वयोगकाले षोढा दृश्यमाना ऋतवोऽश्वा निरूप्यंते । ते च षट्संख्याका ऋतवो हेमंतशिशिरयोः समासेन पंच पंच युक्ताः संतः कालात्मकमिंद्रमा वहंति । तदिदमिंद्रस्य स्वश्वत्वं यदृतुभिरूढत्वं ॥ षोळ्हा । षष्शब्दात्संख्याया विधार्थे धेति धाप्रत्ययः । षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च । पा॰ ६. ३. १०९. ३. । इत्युत्वं ष्टुत्वं च । प्रत्ययस्वरः ॥

त्वाष्ट्रे पशौ हविषोऽनुवाक्या देवस्त्वष्टेत्येषा । सूत्रितं च । देवस्त्वष्टा सविता विश्वरूपो देव त्वष्टर्यद्ध चारुत्वमानट् । आ॰ ३. ८. । इति ॥

देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान ।
इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकं ॥१९॥
देवः । त्वष्टा । सविता । विश्वऽरूपः । पुपोष । प्रऽजाः । पुरुधा । जजान ।
इमा । च । विश्वा । भुवनानि । अस्य । महत् । देवानां । असुरऽत्वं । एकं ॥१९॥

सवितांतर्यामितया सर्वस्य प्रेरको विश्वरूपो नानाविधरूपस्त्वष्टा त्वष्टृनामको देवः प्रजाः पुरुधा बहुधा जजान । जनयति । ताश्च पुपोष । पोषयति । इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि चास्य त्वष्टुः संबंधीनि ॥ विश्वरूपः । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं ॥

मही समैरच्चम्वा समीची उभे ते अस्य वसुना न्यृष्टे ।
शृण्वे वीरो विंदमानो वसूनि महद्देवानामसुरत्वमेकं ॥२०॥

मही इति । सं । ऐरत् । चम्वा । समीची इति सम्ऽईची । उभे इति । ते इति । अस्य । वसुना । न्यृष्टे इति निऽऋष्टे ।

शृण्वे । वीरः । विंदमानः । वसूनि । महत् । देवानां । असुरऽत्वं । एकं ॥ २० ॥

मही महत्यौ समीची परस्परं संगते चम्वा । चमंत्यदंत्यनयोर्देवमनुष्या इति चम्वौ । यद्वा । चम्येते अद्येते भूतजातैरिति चम्वौ द्यावापृथिव्यौ । समैरत । इंद्रः प्रजापत्यादिभिः सम्यगयोजयत । ते उभे द्यावापृथिव्यावस्येंद्रस्य वसुना तेजसा धनेन वा न्यृष्टे नितरां व्याप्ते भवतः । वीरः समर्थः स इंद्रो वसूनि शत्रूनभिभूय तदीयानि धनानि विंदमानो लभमानः सन् शृण्वे । सर्वैः श्रूयते । तथा चेदमभितः शंकितं वसु । ऋग्वे॰ १ ५३ ३ । इत्यादिषु दृष्टत्वात् ॥ ऐरत । ईर गतावित्यस्य लङि रूपं । न्यृष्टे । ऋषी गतौ । कर्मणि क्तः । गतिरनंतर इति गतेः स्वरः । शृण्वे । श्रु श्रवण इत्यस्य व्यत्ययेन कर्मणि श्नुः । लोपस्त आत्मनेपदेष्विति तलोपः । विंदमानः । विद्लृ लाभ इत्यस्य लटि शानचि रूपं । तस्य लसार्वधातुकस्वरे धातुस्वरः ॥

इमां च नः पृथिवीं विश्वधाया उप क्षेति हितमित्रो न राजा ।
पुरःसदः शर्मसदो न वीरा महद्देवानामसुरत्वमेकं ॥ २१ ॥

इमां । च । नः । पृथिवीं । विश्वऽधायाः । उप । क्षेति । हितऽमित्रः । न । राजा ।
पुरःऽसदः । शर्मऽसदः । न । वीराः । महत् । देवानां । असुरऽत्वं । एकं ॥ २१ ॥

विश्वधाया विश्वस्य धाता सर्वान्नो वा नोऽस्माकं राजेंद्र इमां पृथिवीमंतरिक्षं चोप तयोः समीपे क्षेति । निवसति । तत्र दृष्टांतः । हितमित्रो न । यथा कस्यचित् हितोपदेष्टा सुहृत्समीपे निवसति तद्वत् । वीराः समर्था युद्धसहाया मरुतः पुरःसदो युद्धार्थं पुरतो निश्चयेन गंतार इंद्रस्य शर्मसदः । न चार्थे । शर्मणि गृहे सीदंतश्च भवंति । यत्र यत्रासौ तत्र तत्र संनिधिं कुर्वाणा इत्यर्थः ॥ क्षेति । क्षि निवासगत्योरित्यस्य लटि बहुलं छंदसीति विकरणस्य लुक् । निघातः ॥

निष्षिध्वरीस्त ओषधीरुतापो रयिं त इंद्र पृथिवी बिभर्ति ।
सखायस्ते वामभाजः स्याम महद्देवानामसुरत्वमेकं ॥ २२ ॥

निःऽसिध्वरीः । ते । ओषधीः । उत । आपः । रयिं । ते । इंद्र । पृथिवी । बिभर्ति ।
सखायः । ते । वामऽभाजः । स्याम । महत् । देवानां । असुरऽत्वं । एकं ॥ २२ ॥

हे पर्जन्यात्मकेंद्र ओषधीरोषधयस्ते निष्षिध्वरीर्निष्षिध्वर्यो नितरां त्वत्कर्तृकाभिःसिद्धमत्यः । उतापि च आपस्त्वत्तो निःसृताः । पृथिवी ते तव भोगयोग्यं रयिं धनं बिभर्ति । पृक्ष वसूनि पृथिवी बिभर्ति । ऋग्वे॰ ३ ५१ ५ । इति हि निगमः । ततस्ते तव सखायो हविष्प्रदानेनोपकारकाः स्तोतारो वयं वामभाजः स्याम । सर्वं वननीयधनभागिनो भवेम । तदेतद्देवानां महदैश्वर्यं ॥ निष्षिध्वरीः । षिधु संराद्धौ । संपदादिलक्षणो भावे क्विप् । तदस्यास्तीत्यर्थे छंदसीवनिपाविति वनिप् । वनो र चेति ङीप् रेफश्च । निसा सह समासः । निसः सकारकांदसत्वादनादृत्योपसर्गात्सुनोतीत्यादिना षत्वं । ङीपः पित्वादनुदात्तत्वे धातुस्वरः । बिभर्ति । डुभृञ् धारणपोषणयोरित्यस्य लटि भृञामिदित्यभ्यासस्येत्वं । निघातः । वामभाजः । भज सेवायां । भजो ण्विः । पा॰ ३ २. ६२. । इति ण्विः । कृदुत्तरपदस्वरः ॥ ॥ ३१ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके तृतीयोऽध्यायः समाप्तः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

न ता मिनंतीत्यष्टर्चं तृतीयं सूक्तं विश्वामित्रस्य वाचः पुत्रस्य वा प्रजापतेरार्षं त्रैष्टुभं वैश्वदेवं। तथा चानुक्रमणिका। न ताष्टावित। सूक्तविनियोगो लिंगादवगंतव्यः। अस्मिन्सूक्ते प्रार्थणादिभिः सह संवत्सरः स्तूयते॥

न ता मिनंति मायिनो न धीरा व्रता देवानां प्रथमा ध्रुवाणि।
न रोदसी अद्रुहा वेद्याभिर्न पर्वता निनमे तस्थिवांसः ॥१॥
न। ता। मिनंति। मायिनः। न। धीराः। व्रता। देवानां। प्रथमा। ध्रुवाणि।
न। रोदसी इति। अद्रुहा। वेद्याभिः। न। पर्वताः। निऽनमे। तस्थिऽवांसः ॥१॥

मायिनः कपटवृत्त्युपेता असुरा देवानामिंद्रादीनां प्रथमा प्रथमानि सृष्ट्यनंतरभावीनि ध्रुवाणि स्थिराणि केनापि चालयितुमशक्यानि ता तानि लोके प्रसिद्धानि व्रता व्रतानि लोकपालनादिकर्माणि न मिनंति। न हिंसंति। तथा धीरा विद्वांसोऽपि न हिंसंति। तथाद्रुहा देवमनुष्यादिषु प्रजासु द्रोहवर्जिते रोदसी द्यावापृथिव्यौ वेद्याभिः स्वाश्रयतया सर्वैर्वेदनीयाभिः प्रजाभिः सहितानि कर्माणि न मिनीतः। तदेतदुपपादयति। तस्थिवांसः पृथिव्यामूर्ध्वतया स्थिताः पर्वता न निनमे। निनमनीया न भवंति। एतदुक्तं भवति। यद्देवमनुष्यादीनां द्यावापृथिव्याधारकतयावस्थापनं यच्च पर्वतादीनामुन्नततयावस्थापनं तदिदं देवानां कर्म। तन्न कोऽप्यन्यथयितुमर्हतीति॥ मिनंति। मीङ् हिंसायामित्यस्य लटि मीनातेर्निगम इति ह्रस्वः। निघातः। वेद्याभिः। वेदनमर्हंति। छंदसि चेति यत्प्रत्ययः। निनमे। णमु प्रह्वत्वे इत्यस्य कृत्यार्थे केन्प्रत्ययः। कित्स्वरः॥

षड्भाराँ एको अचरन्बिभर्त्यृतं वर्षिष्ठमुप गाव आगुः।
तिस्रो महीरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका ॥२॥
षट्। भारान्। एकः। अचरन्। बिभर्ति। ऋतं। वर्षिष्ठं। उप। गावः। आ। अगुः।
तिस्रः। महीः। उपराः। तस्थुः। अत्याः। गुहा। द्वे इति। निहिते इति निऽहिते।
दर्शि। एका ॥२॥

अचरन् स्थायी एकः संवत्सरः षट् षट्संख्याकान् भारान्। भ्रियंते पुष्पविकासादि येष्विति भारा ऋतवः। तान्वसंतादीन् बिभर्ति। अवयवत्वेन धारयति। तथा ऋतं सत्यभूतं वर्षिष्ठं वृद्धतरमादित्यात्मकं तमेव संवत्सरं गावो रश्मय उपागुः। प्राप्नुवंति। किंच तस्मिन्नेव संवत्सरेऽत्या अतनशीला आगमापायिधर्मोपेतास्तिस्रो महीस्त्रयो लोका उपरा उपर्युपरि वर्तमानास्तस्थुः। तिष्ठंति। लोकत्रयमेव दर्शयति। गुहा गुहायां स्वात्मनि द्वे द्यावांतरिक्षे चेत्येते निहिते। न दृश्येते। एका भूमिर्दर्शि। सर्वभूताधारतया दृश्यते॥ भारान्। डुभृञ् धारणपोषणयोरित्यस्मादधिकरणे घञ्। कर्षात्वतो घञ इत्यंतोदात्तत्वं। निहिते। दधातेः कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। दर्शि। दृशिर् प्रेक्षणे। कर्मणि लुङि चिणि चिणो लुगिति प्रत्ययस्य लुक्। वाक्यभेदादनिघातः॥

त्रिपाजस्यो वृषभो विश्वरूप उत त्र्युधा पुरुध प्रजावान्।
त्र्यनीकः पत्यते माहिनावान्त्स रेतोधा वृषभः शश्वतीनां ॥३॥

त्रिऽपाजस्यः । वृषभः । विश्वऽरूपः । उत । त्रिऽउधा । पुरुध । प्रजाऽवान् ।
त्रिऽअनीकः । पत्यते । माहिनऽवान् । सः । रेतःऽधाः । वृषभः । शश्वतीनां ॥३॥

त्रिपाजस्यः ग्रीष्मवर्षाहेमंताख्यैस्त्रिभिर्ऋतुभिः पाजस्यमुरो यस्य स त्रिपाजस्यः । त्र्युरस्क इत्यर्थः । उरोवचनश्च पाजस्यशब्दः । इंद्रस्य क्रोडोऽदित्यै पाजस्यं । वाज॰ २५. ८ । इत्यश्वमेधमंत्रे उरःपरतयाम्नानात् पाजसि बले साधुरिति व्युत्पत्तेश्च सर्वेषामंगानां मध्ये उरसो बलवत्त्वात् । वृषभः स्वावयवभूतैर्वर्षर्तावपां वर्षको विश्वरूपस्तत्तदृतुसाधारणकार्यैः पुष्पविकासादिभिर्लिंगैर्नानारूप उतापि च त्र्युधा । वसंतग्रीष्मशरदाख्यैस्त्रिभिर्ऋतुभिरूधो यस्य स त्र्युधा । प्रजावान् । प्रकर्षेण जायंत इति व्रीह्यादयः प्रजाः । पुरुध नानाप्रकारेण विद्यमानव्रीहियवादिरूपप्रजावान् । किंच त्र्यनीकस्त्रिभिरुष्णवर्षशीताख्यैरनीकैर्मुखरूपैर्युतो माहिनावान्महत्त्ववान् संवत्सराभिमानी देवः पत्यते । आगच्छति । वृषभः सेचनसमर्थः स संवत्सरः शश्वतीनां बह्वीनामोषधीनां पुष्पफलादिसंपत्त्यै रेतोधा रेतस उदकस्य धर्ता भवति ॥ त्र्युधा । बहुव्रीहावूधसोऽनङित्यनङ् । सर्वविधीनां छंदसि विकल्पितत्वात्पुंस्यपि भवति । ऊकारस्य ह्रस्वश्छांदसः । उत्तरपदांतोदात्तप्रकरणे त्रिचक्रादीनां छंदस्युपसंख्यानमित्युत्तरपदांतोदात्तत्वं ॥

अभीकं आसां पदवीरबोध्यादित्यानामह्वे चारु नाम ।
आपश्चिदस्मा अरमंत देवीः पृथग्व्रजंतीः परि षीमवृंजन् ॥४॥
अभीके । आसां । पदऽवीः । अबोधि । आदित्यानां । अह्वे । चारु । नाम ।
आपः । चित् । अस्मै । अरमंत । देवीः । पृथक् । व्रजंतीः । परि । सीं । अवृंजन् ॥४॥

संवत्सर आसामोषधीनामभीके समीपे पदवीः । पदानि तत्तदृतुविशिष्टपुष्पफलादीनि वेति प्रजनयतीति पदवीः सन् अबोधि । बुध्यते । सावधानो वर्तते । तथादित्यानां । आदित्या मासाः सख्यासाम्यात् । यद्वा । आदित्यसंक्रमणनिमित्तत्वादादित्या मासाः । मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चांद्रश्चैत्राद्यः स ज्ञेय इति स्मृतेः । तेषां चैत्रादीनां मासानां चारु नाम मधुश्च माधवश्चेत्यादि नामधेयमह्वे । आह्वयामि । उच्चारयामीत्यर्थः । किंच देवीर्द्योतनशीलाः पृथग्गतास्ततो व्रजंतीर्गच्छंत्य आपश्चित् आपोऽप्यस्मै संवत्सरायारमंत । संवत्सरसंबंधिमासचतुष्टये वृष्टिद्वारा रमंते । ता आपः सीमेनं संवत्सरं पर्यवृंजन् । अष्टसु मासेषु परिवर्जयंति ॥ पदवीः । वी गत्यादिषु । क्विप् । अबोधि । बुध अवगमने इत्यस्य लुङि दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्यामिति कर्तरि च्लेश्चिण् । चिणो लुक् । निघातः । आदित्यानां । आदित्यसंबंधिन इत्यर्थे दित्यदित्यादित्यपत्युत्तरपदाण्ण्य इति ण्यः । अतोलोपयलोपौ । प्रत्ययस्वरः । अह्वे । ह्वयतेर्लुङि लिपिसिचिह्वश्च आत्मनेपदेष्वन्यतरस्यामित्यङादेशः । गुणः । निघातः । अवृंजन् । वृजी वर्जने इत्यस्य लङि श्नमि रूपं । निघातः ॥

त्री षधस्था सिंधवस्त्रिः कवीनामुत त्रिमाता विदथेषु सम्राट् ।
ऋतावरीर्योषणास्तिस्रो अप्यास्त्रिरा दिवो विदथे पत्यमानाः ॥५॥
त्री । सधऽस्था । सिंधवः । त्रिः । कवीनां । उत । त्रिऽमाता । विदथेषु । संऽराट् ।
ऋतऽवरीः । योषणाः । तिस्रः । अप्याः । त्रिः । आ । दिवः । विदथे । पत्यमानाः ॥५॥

प्रजापतिः स्वविज्ञानं सिंधूनां निवेदयति । हे सिंधव आपः सर्वमाच्छिद्य यूयं । त्री षधस्था त्रयो लोकाः । ते च प्रत्येकं त्रिर्भवंति । तथा त्रयो वा इमे त्रिवृतो लोका इति श्रुतेः । न द्याव इंद्रमोजसा नांतरिक्षाणि वज्रिणं न विव्यचंत भूमयः । ऋग्वे॰ ८. ६ १५ । इति प्रत्येकं बहुवचनश्रवणात् । बहुवचनं च कपिंजलन्यायेन त्रित्वे पर्यवसितं । ते च लोकाः कवीनां देवानां निवासस्थानानि भवंति । उतापि च त्रिमाता त्रयाणाममीषां लोकानां निर्माता संवत्सरः सूर्यो वा विदथेषु यज्ञेषु सम्राट् यजनीयतया सम्यग्दीप्यमानो वर्तते । तथा

ऋतावरीरुदकवत्योऽप्या नभस्या आप्तव्या वा तिस्रो योषणास्त्रिसंख्याका इळासरस्वतीभारतीत्येवंरूपाः परस्परमिश्रणोपेता देवता विदथे यज्ञे दिवो दिवसस्य त्रिस्त्रिषु सवनेष्वा पत्यमाना आगच्छंत्यो भवंति ॥ सधस्था । पूर्वपदादिति संहितायां षत्वं । योषणाः । युष इति सौत्रो धातुः । ल्युटि रूपं । लित्स्वरः । तिस्रः । तिसृभ्यो जस इत्याद्युदात्तत्वं । अप्याः । अप् इत्यंतरिक्षनाम । तत्र भवाः । भवे छंदसीति यत् । यतोऽनाव इत्याद्युदात्तत्वं ॥

त्रिरा दिवः सवितर्वार्याणि दिवेदिव आ सुव त्रिर्नो अह्नः ।
त्रिधातु राय आ सुवा वसूनि भग त्रातर्धिषणे सातये धाः ॥६॥
त्रिः । आ । दिवः । सवितरिति । वार्याणि । दिवेऽदिवे । आ । सुव । त्रिः । नः । अह्नः ।
त्रिऽधातु । रायः । आ । सुव । वसूनि । भग । त्रातः । धिषणे । सातये । धाः ॥६॥

सवितः सर्वस्य प्रेरक हे आदित्य दिवो द्युलोकादागत्य त्वं वार्याणि सर्वैः संभजनीयानि धनानि दिवे दिवे प्रतिदिनं त्रिरा सुव । त्रिवारमस्मभ्य प्रेरय । प्रयच्छेत्यर्थः । तदेवोच्यते । भग सर्वैर्भजनीय त्रातरस्माकं रक्षक हे आदित्य त्रिधातु त्रिधातूनि पशुकनकरत्नभेदेन त्रिप्रकाराणि वसूनि धनानि रायः । राति क्षीरादीनीति रायो गोधनानि । तानि च नोऽस्मभ्यमह्नः संबंधिषु त्रिस्त्रिषु सवनेष्वा सुव । प्रयच्छ । धिषणे माध्यमिके हे वाक् सातये धनलाभाय धाः । अस्मान् कुरु ॥ त्रिः । द्वित्रिचतुर्भ्यः सुच् । पा॰ ५. ४. १८. । इति सुच् । चित्स्वरः । सुव । षू प्रेरणे । तुदादिः । लोटि रूपं । त्रिधातु । डुधाञ् धारणपोषणयोरित्यस्मात्सितनिगमिमसीत्यादिना तुन्प्रत्ययः । धिषणे । आमंत्रितत्वान्निघातः ॥

त्रिरा दिवः सविता सोषवीति राजाना मित्रावरुणा सुपाणी ।
आपश्चिदस्य रोदसी चिदुर्वी रत्नं भिक्षंत सवितुः सवाय ॥७॥
त्रिः । आ । दिवः । सविता । सोसवीति । राजाना । मित्रावरुणा । सुपाणी इति सुऽपाणी ।
आपः । चित् । अस्य । रोदसी इति । चित् । उर्वी इति । रत्नं । भिक्षंत । सवितुः । सवाय ॥७॥

सविता देवो दिवो दिवसस्य त्रिस्त्रिषु कालेष्वा सोषवीति । अस्मभ्यं धनान्यासुवतु । प्रेरयतु । किंच राजाना राजानौ सुपाणी कल्याणपाणी मित्रावरुणावापः । आप्नोति सर्वं जगदित्याप अंतरिक्षं । नित्यबहुवचनांतत्वाद्बहुवचनं । चिदपि च उर्वी विस्तीर्णे रोदसी द्यावापृथिव्यावेता देवताः सवितुः प्रेरकस्यास्य देवस्य सवाय सवनेन प्रेरणेन रत्नमर्पयितुमर्थं भिक्षंत । याचंते ॥ सोसवीति । षू प्रेरणे इत्यस्य यङ्लुकि लटि रूपं । मित्रावरुणा । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं । भिक्षंत । भिक्ष याञ्चायामित्यस्य लङि रूपं । सवाय । अवसवौ च । पा॰ ३ ३ ५६ ४ । इत्यजंतत्वेन निपातनादंतोदात्तत्वं ॥

त्रिरुत्तमा दूणशा रोचनानि त्रयो राजंत्यसुरस्य वीराः ।
ऋतावान इषिरा दूळभासस्त्रिरा दिवो विदथे संतु देवाः ॥८॥
त्रिः । उत्ऽतमा । दुःऽनशा । रोचनानि । त्रयः । राजंति । असुरस्य । वीराः ।
ऋतऽवानः । इषिराः । दुःऽदभासः । त्रिः । आ । दिवः । विदथे । संतु । देवाः ॥८॥

दूणशा दुर्नशा केनापि विनाशयितुमशक्यानि रोचनानि दीप्यमानानि त्रिस्त्रीण्युत्तमानि स्थानानि संति । एतेषु त्रिषु स्थानेष्वसुरस्य । अस्यति क्षिपति सर्वमित्यसुरः कालात्मा संवत्सरः । तस्य वीराः पुत्रास्त्रयोऽग्निवायुसूर्यरूपा राजंति । शोभंते । तानेव विशिनष्टि । ऋतावानः । ऋतं सत्यभूतमग्निहोत्रादिकं कर्म तद्वंतः । इषिरा यज्ञार्थं शीघ्रगतिमंतो दूळभासो दुर्दभासः केनापि स्वतेजसा तिरस्कर्तुमशक्या एते सर्वे देवा विदथे

ऽस्मदीये यज्ञे दिवोऽह्नः संबंधिषु त्रिस्विषु सवनेष्वा संतु। समंताद्यजनीयतया भवंतु ॥ उत्तमा। उत्तमश-ब्दस्तमौ सर्वत्रेत्युंछादिषु पाठादंतोदात्तत्वं। दूणाशा। नशेः कृच्छ्रार्थे खल्। दुरो दाशनाशदभध्येषूत्वं वक्तव्यमिति रेफस्योत्वं। उत्तरपदादेः ष्टुत्वं। लित्स्वरः। दूळभासः। पूर्ववदुत्वष्टुत्वे ॥ ॥१॥

प्र मे विविक्वानिति षड्चं चतुर्थं सूक्तं। विश्वामित्र ऋषिः। त्रिष्टुप् छंदः। विश्वे देवा देवता। अत्रानुक्रमणिका। प्र मे षळिति। सूक्तविनियोगो लैंगिकः ॥

प्र मे विविक्वाँ अविदन्मनीषां धेनुं चरंतीं प्रयुतामगोपां।
सद्यश्चिद्या दुदुहे भूरि धासेरिंद्रस्तदग्निः पनितारो अस्याः ॥१॥
प्र। मे। विविक्वान्। अविदत्। मनीषां। धेनुं। चरंतीं। प्रऽयुतां। अगोपां।
सद्यः। चित्। या। दुदुहे। भूरि। धासेः। इंद्रः। तत्। अग्निः। पनितारः। अस्याः ॥१॥

विविक्वान्विवेकवानिंद्रोऽग्निर्वा मे मम मनीषां देवताविषयां स्तुतिं प्राविदत्। प्रकर्षेण जानातु। तत्र दृष्टांतः। चरंतीं यवसं इतस्ततो गच्छंतीं प्रयुतां पृथग्भूतामेकाकिनीमगोपां गोप्तृरहितां यथाकामं चरंतीं धेनुं नवसूतिकां गामिव देवतानां प्रीणयित्रीं स्तुतिमविददित्यन्वयः। या स्तुतिरूपा धेनुः सद्यश्चित्तदानीमेव धासेः। धारयति प्राणान् धीयते दीयतेऽर्थिभ्य इति वा धासिरन्नं। कर्मणि षष्ठी। भूरि बहून्नसंपादितं फलं दुदुहे दुग्धे इंद्रोऽग्निरन्ये च देवा अस्याः स्तुतिरूपाया धेनोस्तत्तस्यान्नभूतस्य पयसः पनितारः स्तोतारो भवंति। यद्वा। इंद्राग्नी स्तोतारो वयं चास्या धेनोस्तत्पयः प्राप्नुमः ॥ विविक्वान्। विचिर् पृथग्भाव इत्यस्य क्वसौ रूपं। अविदत्। विद ज्ञाने इत्यस्य लङि बहुलं छंदसीति शः। दुदुहे। दुह प्रपूरणे इत्यस्य लिटि रूपं। यद्वृत्तयोगादनिघातः। प्रत्ययस्वरः। पनितारः। पन स्तुतावित्यस्य तृचि रूपं ॥

इंद्रः सु पूषा वृषणा सुहस्ता दिवो न प्रीताः शशयं दुदुह्रे।
विश्वे यदस्यां रणयंत देवाः प्र वोऽत्र वसवः सुम्नमश्यां ॥२॥
इंद्रः। सु। पूषा। वृषणा। सुऽहस्ता। दिवः। न। प्रीताः। शशयं। दुदुह्रे।
विश्वे। यत्। अस्यां। रणयंत। देवाः। प्र। वः। अत्र। वसवः। सुम्नं। अश्यां ॥२॥

वसवः सर्वस्य वासयितारो हे देवा इंद्रः पूषा च वृषणावभिमतफलस्य सेक्तारौ सुहस्ता कल्याणपाणी नासत्यौ मित्रावरुणौ वा। राजाना मित्रावरुणा सुपाणी इत्यादिषु दृष्टत्वात्। एते सर्वे देवाः। नेति संप्रत्यर्थे। इदानीं प्रीताः संतः शशयं नभसि शयानं मेघं दिवो नभसः सकाशात्सु दुदुह्रे। वृष्टिद्वारोपचितं फलं सुष्ठु दुहंति। यद्यस्माद्विश्वे सर्वे देवा अस्यां वेद्यां रणयंत रमयंते वो युष्माकं संबंधिन्यत्रास्मिँल्लोके सुम्नं सुखकरसंपादितं फलं प्राश्यां। प्राप्नुयां ॥ सुहस्ता। हसेर्हसिहसीत्यादिना तन्प्रत्ययः। नित्त्वादाद्युदात्तः। बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। दुदुह्रे। दुह प्रपूरणे इत्यस्य लिटीरयो रे। रणयंत। रमु क्रीडायां। ण्यंतस्य लङि रूपं। वर्णव्यापत्तिः। अश्यां। अशू व्याप्तावित्यस्य लिङि बहुलं छंदसीति विकरणस्य लुक्। व्यत्ययेन परस्मैपदं ॥

या जामयो वृष्ण इच्छंति शक्तिं नमस्यंतीर्जानते गर्भमस्मिन्।
अच्छा पुत्रं धेनवो वावशाना महश्चरंति बिभ्रतं वपूंषि ॥३॥
याः। जामयः। वृष्णे। इच्छंति। शक्तिं। नमस्यंतीः। जानते। गर्भं। अस्मिन्।
अच्छ। पुत्रं। धेनवः। वावशानाः। महः। चरंति। बिभ्रतं। वपूंषि ॥३॥

या जामयः। जमंति वर्षाकाले प्रादुर्भवंतीति जामय ओषधयः। वृष्णेऽपां वर्षकायेंद्राय शक्तिं सेचनसामर्थ्यमिच्छंति। नमस्यंतीः प्रह्वीभूतास्ता ओषधयोऽस्मिन्निंद्रे गर्भं वृष्टिद्वारा पुष्पफलादिलक्षणगर्भाधानादिसामर्थ्यं जानते। जानंति। वावशानाः फलं कामयमाना धेनवः सर्वस्य प्रीणयित्र्य ओषधयो महो महांति नानाप्रकाराणि वपूंषि रूपाणि बिभ्रतं व्रीहियवनीवारादिफललक्षणं पुत्रं तनयमच्छाभिमुख्येन चरंति। प्राप्नुवंति। लोके हि हंभारवं कुर्वाणा धेनवो वत्समभिलक्ष्य गच्छंति। तद्वत्। यद्वा। जामयः। जमंति सर्वत्र प्रसरंतीति जामयः सूर्यदीप्तयः। वृष्णेऽपां वर्षकाय। रसरश्मिभिर्भौमान्रसानादाय पुनर्वर्षतीति वर्षकः सूर्यः। आदित्याज्जायते वृष्टिरिति स्मृतेश्च। तस्मै वर्षणशक्तिमिच्छंति। ता दीप्तयोऽस्मिन्नादित्ये गर्भमब्रूपगर्भाधानसामर्थ्यं जानंति॥ जामयः। जमंतेर्गतिकर्मणो जनिघसिभ्यामिणिति विधीयमानो बहुलवचनादस्मादपि भवति। नमस्यंतीः। नमःशब्दान्नमोवरिवश्चित्रङः क्यजिति क्यच्। तदंताच्छतरि रूपं। प्रत्ययस्वरः। जानते। ज्ञा अवबोधने इत्यस्य लटि रूपं। अच्छ। निपातस्य चेति संहितायां दीर्घः॥

अच्छा विवक्मि रोदसी सुमेके ग्राव्णो युजानो अध्वरे मनीषा।
इमा उ ते मनवे भूरिवारा ऊर्ध्वा भवंति दर्शता यजत्राः॥४॥
अच्छ। विवक्मि। रोदसी इति। सुमेके इति सुऽमेके। ग्राव्णः। युजानः। अध्वरे। मनीषा।
इमाः। ऊं इति। ते। मनवे। भूरिऽवाराः। ऊर्ध्वाः। भवंति। दर्शताः। यजत्राः॥४॥

अध्वरे यज्ञे ग्राव्णः सोमाभिषवार्थमुपलान् युजानः प्रयुंजानोऽहं सुमेके सुरूपे रोदसी द्यावापृथिव्यौ मनीषा मनस ईषया स्तुतिलक्षणया वाचाच्छ विवक्मि। आभिमुख्येन स्तौमि। हे अग्ने ते तव भूरिवारा यजमानैर्बहुवारं वरणीया दर्शताः कमनीयतया दर्शनीया यजत्राः पूज्या इमा दीप्तयो मनवे मनुष्यव्यवहारार्थमूर्ध्वा ऊर्ध्वमुखा भवंति॥ विवक्मि। वच परिभाषणे। लटि बहुलं छंदसीति शपः श्लुः। अर्तिपिपर्त्योश्च बहुलं छंदसीत्यभ्यासस्येत्वं। चकारस्य कुत्वं व्यत्ययेन। युजानः। युजिबुधिदृशः किदित्यानच्। कित्त्वादगुणः। चित्त्वादंतोदात्तः। मनीषा। सुपां सुलुगिति तृतीयाया डादेशः॥

या ते जिह्वा मधुमती सुमेधा अग्ने देवेषूच्यत उरूची।
तयेह विश्वाँ अवसे यजत्राना सादय पायया चा मधूनि॥५॥
या। ते। जिह्वा। मधुऽमती। सुऽमेधाः। अग्ने। देवेषु। उच्यते। उरूची।
तया। इह। विश्वान्। अवसे। यजत्रान्। आ। सादय। पायय। च। मधूनि॥५॥

हे अग्ने ते तव मधुमत्युदकवती सुमेधाः। शोभना मेधा प्रज्ञा यस्याः सा। सर्वस्य ज्ञापयित्री या जिह्वा ज्वालोरूची बहुव्याप्तिः सती देवेषु मध्ये आह्वानार्थमुच्यते प्रेर्यते तया जिह्वया यजत्रान्यजनीयान्विश्वान्देवानिह कर्मण्यस्माकमवसे रक्षणायासादय। उपवेशय। किंच तान्विश्वान्देवान्मधूनि मदकरान्सोमान्पायय॥ सुमेधाः। नित्यमसिच्प्रजामेधयोरित्यसिच्। उच्यते। वच परिभाषणे। कर्मणि यकि रूपं। यद्वृत्तयोगादनिघातः। उरूची। अंचतेः क्विन्। अंचतेश्चोपसंख्यानमिति ङीप्। अनुदात्तस्य च यत्रोदात्तलोप इति ङीप उदात्तत्वं। पायय। पा पाने इत्यस्य णौ परतः शाच्छासाह्वाव्यावेपां युगिति युक्। तिङ उत्तरत्वादनिघातः॥

या ते अग्ने पर्वतस्येव धारासश्चंती पीपयद्देव चित्रा।
तामस्मभ्यं प्रमतिं जातवेदो वसो रास्व सुमतिं विश्वजन्यां॥६॥
या। ते। अग्ने। पर्वतस्यऽइव। धारा। असश्चंती। पीपयत्। देव। चित्रा।
तां। अस्मभ्यं। प्रऽमतिं। जातऽवेदः। वसो इति। रास्व। सुऽमतिं। विश्वऽजन्यां॥६॥

देव दीप्यमान हे अग्ने चित्रा नानारूपासश्चंत्यस्मदन्यत्र संगतिमकुर्वाणा या ते तव प्रमतिः प्रकृष्टा बुद्धिः पीपयत अपेक्षितफलदानेनास्मान्वर्धयति। तत्र दृष्टांतः। पर्वतस्येव धारा। यथा पर्वतस्य मेघस्योदकधारौषधिवनस्पत्यादिषु संगतिं कुर्वाणा तान्वर्धयति तद्वत्। वसो सर्वस्य वासयितर्जातवेदो जातप्रज्ञ हे अग्ने तां प्रमतिं परहितकरणसमर्थां बुद्धिमस्मभ्यं रास्व। दत्स्व। तथा विश्वजन्यां सर्वजनहितां सुमतिं शोभनां बुद्धिं दत्स्व॥ असश्चंती। सश्चतिर्गतिकर्मा। शतर्युगितश्चेति ङीप्। नञा समासे नञ्स्वरः। पीपयत। पा पाने। ण्यंतस्य लुङि चङि रूपं। चङ्यन्यतरस्यामिति चङि परतः पूर्वस्योदात्तत्वं। यद्वृत्तयोगादनिघातः। प्रमतिं। तादौ च निति कृत्यतावित्ति गतिः प्रकृतिस्वरत्वं। रास्व। रा दाने। व्यत्ययेनात्मनेपदं। लोटि रूपं। आमंत्रितस्याविद्यमानत्वान्निघाताभावः॥ ॥२॥

धेनुः प्रत्नस्येति नवर्चं पंचमं सूक्तं वैश्वामित्रं त्रैष्टुभमाश्विनं। तथा चानुक्रांतं। धेनुर्नवाश्विनमिति॥ प्रातरनुवाक आश्विनक्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चास्य सूक्तस्य विनियोगः। सूत्रितं च। धेनुः प्रत्नस्य क उ श्रवदिति सूक्ते। आ० ४.१५। इति॥ व्यूळ्हे दशरात्रे द्वितीये छंदोमे प्रउगशस्त्रेऽयमाश्विनस्तृचः। द्वितीयस्याग्निं व इति खंडे सूत्रितं। धेनुः प्रत्नस्य काम्यं दुहाना ब्रह्मा ण इंद्रोप याहि विद्वान्। आ० ८.१०। इति॥

धेनुः प्रत्नस्य काम्यं दुहानांतः पुत्रश्चरति दक्षिणायाः।
आ द्योतनिं वहति शुभ्रयामोषसः स्तोमो अश्विनावजीगः॥१॥
धेनुः। प्रत्नस्य। काम्यं। दुहाना। अंतरिति। पुत्रः। चरति। दक्षिणायाः।
आ। द्योतनिं। वहति। शुभ्रऽयामा। उषसः। स्तोमः। अश्विनौ। अजीगरिति॥१॥

धेनुः प्रीणयित्र्युषाः प्रत्नस्य पुरातनस्याग्नेः काम्यं कमनीयं पयो दुहाना। दोग्ध्री भवति। दक्षिणाया उषसः पुत्रः सूर्यस्तस्या अंतश्चरति। उषसोऽनंतरं शुभ्रयामा। सूर्यकिरणसंपर्काच्छुभ्रतया गमनं यस्यासौ शुभ्रयामा दिवसः। द्योतनिं सर्वस्य प्रकाशकं सूर्यमा वहति। बिभर्ति। अत उषसः पुरोभाविनौ स्तोतृ स्तोमः स्तोत्रकारी होत्रादिरजीगः। जागर्ति। उत्तिष्ठति॥ शुभ्रयामा। या प्रापणे। आतो मनिन्। बहुव्रीहौ पूर्वपदस्वरः। अजीगः। जागृ निद्राक्षये। लङि तिप्यदादित्वाच्छपो लुक्। आकारस्येकार इच्छादसः। गुणे कृते हल्ङ्यादिना तिपो लोपः॥

सुयुग्वहंति प्रति वामृतेनोर्ध्वा भवंति पितरेव मेधाः।
जरेथामस्मद्वि पणेर्मनीषां युवोरवश्चकृमा यातमर्वाक्॥२॥
सुऽयुक्। वहंति। प्रति। वां। ऋतेन। ऊर्ध्वाः। भवंति। पितराऽइव। मेधाः।
जरेथां। अस्मत्। वि। पणेः। मनीषां। युवोः। अवः। चकृम। आ। यातं। अर्वाक्॥२॥

हे अश्विनौ सुयुक् सुष्ठु रथे योजिता अश्वा ऋतेन सत्यभूतेन रथेन वां युवां प्रति वहंति। यज्ञं प्रत्यागमनाय धारयंति। मेधा यज्ञाश्चोर्ध्वा युष्मदभिमुखमूर्ध्वा भवंति। तत्र दृष्टांतः। पितरेव। यथा पुत्राः पितरौ मातापितरावभिलक्ष्य गच्छंति तद्वत्। अस्मदस्मत्तः सकाशात्पणेर्मनीषामासुरीं बुद्धिं वि जरेथां। विशीर्णां नाशयतं। वयं तु युवोर्युवयोरवो हविर्लक्षणमन्नं चकृम। कुर्मः। युवामर्वागस्मदाभिमुख्येना यातं॥ सुयुक्। युजेः क्विप्। सुपां सुलुगिति सुपो लुक्। पितरेव। पिता मात्रेति पितुः शेषः। सुपो डादेशः। जरेथां। जृष वयोहानौ। ण्यंतस्य जनीजृष्क्नसुरंजोऽमंताश्चेति मित्त्वाद्वृद्ध्यभावः। छंदस्युभयथेत्याथाम आर्धधातुकत्वाण्णिलोपः। शपः पित्त्वादनुदात्तत्वे धातुस्वरः॥

सुयुग्भिरश्वैः सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः।
किमंग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः॥३॥

सुयुक्ऽभिः । अश्वैः । सुऽवृता । रथेन । दस्रौ । इमं । शृणुतं । श्लोकं । अद्रेः ।
किं । अंग । वां । प्रति । अवर्तिं । गमिष्ठा । आहुः । विप्रासः । अश्विना । पुराऽजाः ॥३॥

हे अश्विनौ सुयुग्भिः सुष्ठु योजितैरश्वैः सुवृता । पुनःपुनरावर्तत इति वृत्तचक्रं । शोभनचक्रोपेतेन रथेनागत्य दस्रौ शत्रूणामुपक्षपयितारौ युवामद्रेः । आद्रियते सर्वैरित्यद्रिः स्तोता । तस्येमं श्लोकं स्तोत्रं शृणुतं । अंग हे अश्विनौ विप्रासो मेधाविनः पुराजाः पुरातना ऋषयो वा युवामवर्तिमस्माकं वृत्तिहानिं प्रति गमिष्ठा अतिशयेन गंतारावित्ति किमाहुः किं कथयंतीति । न कथयंतीत्यर्थः । प्रथमाष्टकेऽष्टमेऽध्याये सुवृता रथेनेत्यादि गतं ॥ गमिष्ठा । गंतृशब्दादिष्ठनि रूपं ॥

आ मंन्येथामा गंतं कच्चिदेवैर्विश्वे जनासो अश्विना हवंते ।
इमा हि वां गोऋजीका मधूनि प्र मित्रासो न ददुरुस्रो अग्रे ॥४॥
आ । मन्येथां । आ । गतं । कत् । चित् । एवैः । विश्वे । जनासः । अश्विना । हवंते ।
इमा । हि । वां । गोऽऋजीका । मधूनि । प्र । मित्रासः । न । ददुः । उस्रः । अग्रे ॥४॥

कच्चिदिति प्रश्नः । हे अश्विनौ आ मन्येथां । इमां मदीयां स्तुतिं जानीतं । किंच एवैर्गमनसाधनैरश्वैरा गतं । यद्वा प्रत्यागच्छत । विश्वे सर्वे जनासः स्तोतारोऽश्विनाश्विनौ वां युवां हवंते । स्तुतिलक्षणाभिर्वाग्भिराह्वयंति । किंच गोऋजीका गवां पयसा मिश्रणोपेतानि मधूनि मदकराणि सोमरसरूपाणीमानि हवींषि युवाभ्यां प्र ददुः । अध्वर्य्वादयः प्रयच्छंति । तत्र दृष्टांतः । मित्रासो न । यथा मित्राणि मित्रेभ्योऽपेक्षितं ददति तद्वत् । उस्रः । वसति नभसीत्युस्रः सूर्यः । अग्र उषसोऽग्र उदेति । तस्मादागच्छतमिति भावः ॥ ददुः । दाण् दान इत्यस्य लिट्युसि रूपं । हियोगादनिघातः । उस्रः । वस निवासे । स्फायितंचीत्यादिना रक् । कित्त्वात्संप्रसारणं । शासिवसिघसीनां चेति षत्वाभावश्छांदसः ॥

तिरः पुरू चिदश्विना रजांस्यांगूषो वां मघवाना जनेषु ।
एह यातं पथिभिर्देवयानैर्दस्राविमे वां निधयो मधूनां ॥५॥
तिरः । पुरु । चित् । अश्विना । रजांसि । आंगूषः । वां । मघऽवाना । जनेषु ।
आ । इह । यातं । पथिऽभिः । देवऽयानैः । दस्रौ । इमे । वां । निऽधयः । मधूनां ॥५॥

हे अश्विनौ पुरू चिद्बहून्यपि रजांसि स्थानानि तिरः स्वतेजसा तिरस्कुर्वंतौ वां युवामिह कर्मणि देवयानैः पथिभिर्मार्गैरा यातं । मघवाना धनवंतौ हे अश्विनौ जनेषु स्तोतृषु वां युवयोरांगूष आ समंताद्घोषणीयं स्तोत्रं वर्तते । दस्रौ शत्रूणामुपक्षपयितारौ हे अश्विनौ वां युवयोर्मधूनां मदकराणां सोमानामिमे निधयः । निधीयतेऽत्र सोम इति निधयः पात्रविशेषाः । संति । तस्मादागच्छतमिति भावः ॥ आंगूषः । आङ्पूर्वाद्घुषेः कर्मणि घञ् । आघुष्यत इत्याघोषः । घो इत्यस्य पृषोदरादित्वाद्गू इत्यादेशः । आङोऽनुनासिकश्छंदसीत्यनच्यप्यनुनासिकश्छांदसः । यद्वा । अगिर्गत्यर्थः । अस्मादंगूष इति सूत्रेणोषचप्रत्ययांतो निपातितः । अगति गच्छति देवानित्यंगूषः स्तोत्रं । अंगूष एवांगूषः । प्रज्ञादित्वात्स्वार्थिकोऽण् । प्रत्ययस्वरः । एह यातमित्यर्धर्चो गतः ॥ ॥३॥

अप्तोर्यामेऽतिरिक्तोक्थेऽच्छावाकशस्त्रे पुराणमोक इति चतस्रो विकल्पेन याज्याः । सूचितं च । यदि नाधीयात्पुराणमोकः सख्यं शिवं वामिति चतस्रो याज्याः । आ० ९ ११. । इति ॥

पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्यां ।
पुनः कृण्वानाः सख्या शिवानि मध्वा मदेम सह नू समानाः ॥६॥

पुराणं। ओकः। सख्यं। शिवं। वां। युवोः। नरा। द्रविणं। जह्नाव्यां।
पुनरिति। कृण्वानाः। सख्या। शिवानि। मध्वा। मदेम। सह। नु। समानाः॥६॥

हे अश्विनौ वां युवयोः पुराणं पुरातनं सख्यमोकः सेव्यं शिवं कल्याणकरं भवति। किंच हे नरा नराव स्मदीयस्य कर्मणो नेतारौ युवोर्युवयोर्द्रविणं धनं जह्नाव्यां जह्नुकुलजायां भवति। शिवानि सुखकराणि युवयोः सख्यानि पुनः कृण्वानाः कुर्वंतः समाना हविष्प्रदानेनोपकारकत्वान्मित्रभूता एकीभूताः संतो वयं मध्वा मदकरेण सोमेन युवां सह युगपत नु क्षिप्रं मदेम। हर्षयेम॥ सख्यं। सख्युर्भाव इत्यर्थे सख्युर्य इति यप्रत्ययः। जह्नाव्यां। जह्नोः संबंधिनीत्यर्थे तस्येदमित्यण्। ओर्गुणः। ह्रस्वदीर्घयोर्व्यत्ययः। मदेम। मदी हर्ष इत्यस्याशीर्लिङि लिङ्याशिष्यङ्प्रत्ययः। निघातः॥

अश्विना वायुना युवं सुदक्षा नियुद्भिश्च सजोषसा युवाना।
नासत्या तिरोअह्न्यं जुषाणा सोमं पिबतमस्रिधा सुदानू॥७॥

अश्विना। वायुना। युवं। सुऽदक्षा। नियुत्ऽभिः। च। सऽजोषसा। युवाना।
नासत्या। तिरःऽअह्न्यं। जुषाणा। सोमं। पिबतं। अस्रिधा। सुदानू इति सुऽदानू॥७॥

सुदक्षा शोभनसामर्थ्योपेतौ युवाना नित्यतरुणौ नासत्या। न विद्यतेऽसत्यं ययोस्तौ। सुदानू शोभनफलस्य दातारौ हे अश्विनौ वायुना नियुद्भिरश्वैश्च सजोषसा सगतौ जुषाणा सोमविषयप्रीतियुक्तावस्रिधानुपक्षीणौ युवं युवां तिरोअह्न्यमह्नि तिरोहितं ह्रूयमानमिमं सोम पिबत॥ नियुद्भिः। यौतेः क्विप। तिरोअह्न्य। अह्नि भवमह्न्य। भवे छंदसीति यत्। तिरो भूतमह्न्य यस्मिन्काले स तिरोअह्न्यः। पूर्वपदप्रकृतिस्वरः॥

अश्विना परि वामिषः पुरूचीरीयुर्गीर्भिर्यतमाना अमृध्राः।
रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः॥८॥

अश्विना। परि। वां। इषः। पुरूचीः। ईयुः। गीःऽभिः। यतमानाः। अमृध्राः।
रथः। ह। वां। ऋतऽजाः। अद्रिऽजूतः। परि। द्यावापृथिवी इति। याति। सद्यः॥८॥

हे अश्विनौ पुरूचीः पुर्वंचति गच्छंतीति पुरूचीर्बहनीयो हविर्लक्षणान्यन्नानि वां युवां परीयुः। परितो गच्छंति। तथामृध्राः केनाप्यतिरस्कृता यतमानाः कर्मणि प्रवर्तमानाः स्तोतारो गीर्भिः स्तुतिलक्षणाभिर्वाग्भिर्युवां परिचरंति। ऋतजा ऋतस्योदकस्य जनयिता। ऋते यज्ञे प्रादुर्भवतीति वा। अद्रिजूतः स्तोतृभिराकृष्टो वां युवयो रथो द्यावापृथिवी द्यावापृथिव्यौ सद्यस्तदानीमेव परि याति ह। सर्वतः प्राप्नोति खलु। अश्विनो रथस्य वेगवत्त्वे मंत्रवर्णः। यो वामश्विना मनसो जवीयान्रथः स्वश्वो विश आजिगाति। ऋग्वे० १ ११७. २। इति। अतः कारणादस्मदीयं यज्ञं प्रत्यागच्छतमिति भावः॥ ईयुः। इण गतावित्यस्य लिटि दीर्घ इणः कितीत्यभ्यासस्य दीर्घः। पादादित्वान्निघातः। यतमानाः। यती प्रयत्न इत्यस्य शानचि रूपं। शपः पित्त्वादनुदात्तत्वे शानचो लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः। ऋतजाः। जनसनेति विट्। विड्वनोरित्यात्व। अद्रिजूतः। जू इति सौत्रो धातुः। कर्मणि क्तः। तृतीया कर्मणीति पूर्वपदस्वरः॥

अश्विना मधुषुत्तमो युवाकुः सोमस्तं पातमा गतं दुरोणे।
रथो ह वां भूरि वर्पः करिक्रत्सुतावतो निष्कृतमागमिष्ठः॥९॥

अश्विना। मधुसुत्ऽतमः। युवाकुः। सोमः। तं। पातं। आ। गतं। दुरोणे।
रथः। ह। वां। भूरि। वर्पः। करिक्रत्। सुतऽवतः। निःऽकृतं। आऽगमिष्ठः॥९॥

हे अश्विनौ यः सोमो मधुपृक्तमो मधुरसमत्यंतं प्रेरयन्युवाकुर्युवां कामयमानो वर्तते। यद्वा। युवाकुर्वसतीवरीप्रभृतिभिर्मिश्रित इत्यर्थः। तमिमं सोमं पातं। पिबतं। दुरोणेऽस्माकं गृह आ गतं। आगच्छतं। भूरि प्रभूत सर्पो वारक तेजः रूप वा सर्ववरणीयं धनं वा करिक्रत्पुनःपुनः कुर्वन्वां युवयो रथः सुतवतः सोममभिषुतवतो यजमानस्य निष्कृतं। निरित्येष समित्यतस्य स्थाने। नि॰ १२. ७.। इति यास्कः। संस्कारि। यद्वा। संस्कृतं गृहमागमिष्ठोऽतिशयेनागच्छन भवति॥ युवाकुः। यौतिः कटिकूपिभ्यां काकुरिति बाहुलकादस्मादपि भवति। प्रत्ययस्वरेण मध्योदात्तः। करिक्रत। करोतेर्यङ्लुकि शतरि दाधर्ति दर्धर्ति दर्धर्षीत्यादिना चुत्वाभावे यणादेशे कृतेऽङ्गस्यानृकारांतत्वादभ्यासस्य रिगागमो न प्राप्नोतीति सोऽपि निपात्यते। अभ्यस्तस्वरः। निष्कृतं। करोतेरादिकर्मणि क्तः। संस्कर्तुं प्रवृत्त इत्यर्थः। थाथादिस्वरः॥ ॥४॥

मित्रो जनानिति नवर्चं षष्ठं सूक्तं वैश्वामित्रं त्रैष्टुभं मैत्रं। मित्रो मैत्रं चतुर्गायत्र्यंतमित्यनुक्रमणिका। आदितः पंच त्रिष्टुभः शिष्टाश्चतस्रो गायत्र्यः। मित्रो देवता॥ अग्निहोत्रार्थे पयसि वर्षबिंदुपतने मित्रो जनानित्यनया समिधमादध्यात। सूत्रितं च। मित्रो जनान्यातयति ब्रुवाण इति समिदाधानं। आ॰ ३. ११। इति॥

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्यां।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥१॥
मित्रः। जनान्। यातयति। ब्रुवाणः। मित्रः। दाधार। पृथिवीं। उत। द्यां।
मित्रः। कृष्टीः। अनिऽमिषा। अभि। चष्टे। मित्राय। हव्यं। घृतऽवत्। जुहोत ॥१॥

ब्रुवाणः स्तूयमानः शब्दं कुर्वाणो वा मित्रः। प्रकर्षेण मर्णेर्मीयते त्रायते तथा सर्वान्वृष्टिप्रदानेन त्रायत इति वा मित्रः सूर्यः। जनान् कर्षकादिजनान्यातयति। कृष्यादिकर्मसु प्रयत्नं कारयति। तथा मित्र एव पृथिवीमुतापि च द्यामेतावुभौ लोकौ वृष्टिद्वारान्नं यागांश्च जनयन् दाधार। धारयति। तथा स मित्रोऽनिमिषानिमिषेणानुग्रहदृष्ट्या कृष्टीः कर्मवतो मनुष्यानभि चष्टे। सर्वतः पश्यति। एतत्सर्वं ज्ञात्वा हे ऋत्विजो घृतवदुपस्तरणाभिघारणयुक्तं हव्यं हवनयोग्यं पुरोडाशादिकं तस्मै मित्राय देवाय जुहोत। जुहुत। प्रयच्छतेत्यर्थः। उक्तार्थं यास्को ब्रवीति। मित्रो जनान्यातयति ब्रुवाणः शब्दं कुर्वन्। मित्र एव धारयति पृथिवीं च दिवं च। मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति। कृष्टय इति मनुष्यनाम कर्मवंतो भवति विकृष्टदेहा वा। मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातं। जुहोतिर्दानकर्मा। नि॰ १०. २२। इति॥ यातयति। यती प्रयत्न इत्यस्य ण्यंतस्य लटि रूपं। दाधार। तुजादीनामित्यभ्यासस्य दीर्घः। जुहोत। जुहोतेर्लोटि प्रत्ययस्य तबादेशः। गुणः। निघातः॥

देवसुवां हविःषु मित्रस्य सत्यस्य प्र स मित्रेति याज्या। एषैव प्रातर्होमस्य कालात्ययनिमित्ते मैत्रे चरौ याज्या। सूत्रितं च। प्र स मित्र मर्तो अस्तु प्रयस्वांस्त्वां सहस्वान्महिमाय पृच्छंते। आ॰ ४. ११.। इति॥ तत्र इष्टौ मित्रः सूर्योऽभि यो महिना दिव प्र स मित्र मर्तो अस्तु प्रयस्वानिति संस्थितायां। आ॰ ३ १२। इति च॥

प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यंतितो न दूरात् ॥२॥
प्र। सः। मित्र। मर्तः। अस्तु। प्रयस्वान्। यः। ते। आदित्य। शिक्षति। व्रतेन।
न। हन्यते। न। जीयते। त्वाऽऊतः। न। एनं। अंहः। अश्नोति। अंतितः। न। दूरात् ॥२॥

हे आदित्य व्रतेन यज्ञेन युक्तो यो मनुष्यस्ते तुभ्यं शिक्षति हविर्लक्षणमन्नं ददाति हे मित्र स मर्तो मनुष्यः प्रयस्वानन्नवान् प्रास्तु। प्रभवतु। त्वोतस्त्वया रक्षितः स मनुष्यः केनापि न हन्यते। न बाध्यते। न जीयते। नाभिभूयते च। एनं तुभ्यं हविर्दत्तवंतं पुरुषमंहः पापमंतितः समीपान्नाश्नोति। न प्राप्नोति। दूरादपि न प्राप्नोति॥ शिक्षतिर्दानकर्मा। व्यत्ययेन परस्मैपदं। यद्वृत्तयोगादनिघातः। जीयते। ज्यतेः कर्मणि यक्यस्त-

त्सार्वधातुकयोरिति दीर्घः । स्तोतः । तृतीया कर्मणीति पूर्वपदस्वरः । अश्नोति । अशु व्याप्तौ । स्वादि । व्यत्ययेन परस्मैपदं ॥

देवसुवां हविःषु मित्रस्य सत्यस्यानुवाक्या । अनमीवास इळया मदंतः प्र स मित्र मर्तो अस्तु प्रयस्वानिति सूचितं । आ॰ ४ ११ ॥

अनमीवास इळया मदंतो मितज्ञवो वरिमन्ना पृथिव्याः ।
आदित्यस्य व्रतमुपक्षियंतो वयं मित्रस्य सुमतौ स्याम ॥३॥
अनमीवासः । इळया । मदंतः । मितऽज्ञवः । वरिमन् । आ । पृथिव्याः ।
आदित्यस्य । व्रतं । उपऽक्षियंतः । वयं । मित्रस्य । सुऽमतौ । स्याम ॥३॥

हे मित्र अनमीवासो रोगवर्जिता इळयान्नेन मदंतो माद्यंतः पृथिव्या वरिमन्विस्तीर्णे प्रदेशे मितज्ञवो मितजानुका आ यथाकामं सर्वत्र गच्छंत आदित्यस्य सवधि व्रत कर्मोपक्षियतस्तस्य कर्मणः समीपे निवसतः । तदीयं कर्म कुर्वाणा इत्यर्थः । तादृशा वयं मित्रस्यादित्यस्य सुमतौ शोभनायामनुग्रहबुद्धौ स्याम । वर्तेमहि ॥ मदंतः । मदी हर्षे इत्यस्य शतरि व्यत्ययेन शप् । मितज्ञवः । जानुशब्दस्य ज्ञुरुक्तादेशः । वरिमन् । उरुशब्दात्पृथ्वादित्वादिमनिच । प्रियस्थिरेत्यादिना वरादेशः । सुपां सुलुगिति सप्तम्या लुक् । व्यत्ययेनाद्युदात्तः ॥

अयं मित्रो नमस्यः सुशेवो राजा सुक्षत्रो अजनिष्ट वेधाः ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥४॥
अयं । मित्रः । नमस्यः । सुऽशेवः । राजा । सुऽक्षत्रः । अजनिष्ट । वेधाः ।
तस्य । वयं । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥४॥

अयं पूर्वमंत्रे प्रतिपादितो मित्रः सूर्यो नमस्यः सर्वैर्नमस्करणीयः सुशेवः शोभनसुखः । सुखेन सेव्य इत्यर्थः । राजा सर्वस्य जगतः प्रकाशप्रदानेन स्वामी सुक्षत्रः । क्षत्रशब्देन बलमुच्यते । शोभनबलोपेतो वेधाः सर्वस्य जगतो विधाता । एवंगुणोपेतः सूर्योऽजनिष्ट । प्रादुरभूत । तस्यैवंविधगुणोपेतस्य यज्ञियस्य यज्ञार्हस्य सूर्यस्य सुमतौ शोभनायां बुद्धौ भद्रे कल्याणकारिणि सौमनसे सौमनस्येऽपि यजमाना वयं स्याम । भवेम ॥ नमस्यः । नमसि साधुः । तत्र साधुरिति यत् । तित्स्वरितः । अजनिष्ट । जनी प्रादुर्भावे इत्यस्य लुङि सिचि रूपं । सौमनसे । सुमनस इदमित्यर्थे तस्येदमित्यण् । प्रत्ययस्वरः ॥

महाँ आदित्यो नमसोपसद्यो यातयज्जनो गृणते सुशेवः ।
तस्मा एतत्पन्यतमाय जुष्टमग्नौ मित्राय हविरा जुहोत ॥५॥
महान् । आदित्यः । नमसा । उपऽसद्यः । यातयत्ऽजनः । गृणते । सुऽशेवः ।
तस्मै । एतत् । पन्यऽतमाय । जुष्टं । अग्नौ । मित्राय । हविः । आ । जुहोत ॥५॥

योऽयमादित्यो महान् अत एव नमसा नमस्कारेणोपसद्यः सर्वैरुपसदनीयो यातयज्जनः । प्रातः प्रातः स्वस्वकर्मणि प्रवर्तनीया जना येनेति स तथोक्तः । गृणते स्तोत्रं कुर्वते जनाय सुशेवश्च भवति तस्मै पन्यतमाय स्तुत्यतमाय मित्रायादित्याय जुष्टं प्रीतिविषयमेतद्धविरग्नावा जुहोत । जुहुत ॥ यातयज्जनः । यती प्रयत्ने इत्यस्य ण्यंतस्य शतरि रूपं । बहुव्रीहौ पूर्वपदप्रकृतिस्वरे प्राप्ते महद्वृधादित्वात्पूर्वपदांतोदात्तत्वं । गृणते । गॄ शब्दे । शतुरनुम इति विभक्तेरुदात्तत्वं । पन्यतमाय । पनतेरघ्न्यादित्वाद्यत् । यतोऽनाव इत्याद्युदात्तत्वं । जुष्टं । नित्यं मंत्रे इत्याद्युदात्तत्वं ॥ ॥५॥

अभिप्लवषडहे दशरात्रे च सप्तदशैकविंशादिस्तोमे सति होत्रादिकशस्त्रेष्वावापस्थाने पंचसप्तादिसंख्याका ऋचः आवपनीयाः। तत्र मैत्रावरुणशस्त्रे मित्रस्य चर्षणीधृत इत्याद्यास्तिस्र आवापार्थाः। सूत्रितं च। मित्रस्य चर्षणीधृत इति चतस्रो मैत्र्यः। आ० ७. ५.। इति ॥

मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमं ॥६॥

मित्रस्य। चर्षणिऽधृतः। अवः। देवस्य। सानसि। द्युम्नं। चित्रश्रवःऽतमं ॥६॥

चर्षणीधृतो मनुष्याणां वृष्टिप्रदानेन धारकस्य मित्रस्य देवस्य संबंध्यवोऽन्नं सानसि सर्वैः संभजनीयं द्युम्नं तदीयं धनं च चित्रश्रवस्तमं। अतिशयेन चायनीयकीर्तियुक्तं ॥ सानसि। सनोतेः सानसिवर्णसीत्यादिना सिच्प्रत्ययांतत्वेन निपातनादुपधावृद्धिः। चित्त्वादंतोदात्तः। स्वमोरिति स्वमोर्लुक् ॥

प्रातर्होमस्य काम्यात्यये मैत्रेष्टिः। तस्यामभि यो महिनेत्यनुवाक्या। सूत्रितं च। अभि यो महिना दिवं प्र स मित्र मर्तो अस्तु प्रयस्वान्। आ० ३. १२। इति ॥

अभि यो महिना दिवं मित्रो बभूव सप्रथाः। अभि श्रवोभिः पृथिवीं ॥७॥

अभि। यः। महिना। दिवं। मित्रः। बभूव। सऽप्रथाः। अभि। श्रवःऽभिः। पृथिवीं ॥७॥

यो मित्रो महिना स्वकीयेन महिम्ना दिवमंतरिक्षमभि बभूवाभिभवति स मित्रः सप्रथाः। प्रथः प्रसिद्धिः कीर्तिः। तत्सहितः श्रवोभिर्वृष्टिद्वारोत्पादितैरन्नैः पृथिवीमप्यभिभवति। बह्वन्नयुक्तां करोतीत्यर्थः ॥ सप्रथाः। प्रथ प्रख्याने। असुन्। वोपसर्जनस्येति सहस्य सभावः ॥

मित्राय पंच येमिरे जना अभिष्टिशवसे। स देवान्विश्वान्बिभर्ति ॥८॥

मित्राय। पंच। येमिरे। जनाः। अभिष्टिऽशवसे। सः। देवान्। विश्वान्। बिभर्ति ॥८॥

पंच जना निषादपंचमाश्चत्वारो वर्णा अभिष्टिशवसे शत्रूणामभिगंतृबलयुक्ताय मित्राय येमिरे। हवींषि यच्छंति। स तादृशो मित्रो विश्वान् सर्वान्देवान्बिभर्ति। स्वस्वरूपतया धारयति ॥ अभिष्टिशवसे। इषेर्मंत्रे वृषेत्यादिना क्तिन्। तादौ च निती त्यंतरस्योदात्तत्वं। शकंध्वादित्वात्पररूपत्वं। बहुव्रीहौ पूर्वपदस्वरः ॥

मित्रो देवेष्वायुषु जनाय वृक्तबर्हिषे। इषं इष्टव्रता अकः ॥९॥

मित्रः। देवेषु। आयुषु। जनाय। वृक्तऽबर्हिषे। इषः। इष्टऽव्रताः। अकरित्यकः ॥९॥

मित्रो भगवानादित्यो देवेषु द्योतमानादिगुणयुक्तेष्वायुषु मनुष्येषु मध्ये यो जनो वृक्तबर्हिः। वृक्तं लूनं बर्हिर्येन सः। बर्हिर्लवनासादनपूर्वं हविषो दाता ऋत्विगित्यर्थः। तस्मै वृक्तबर्हिषे जनायेष्टव्रताः। इष्टानि कल्याणानि व्रतानि कर्माणि याभिः सिध्यंति ता इषस्तादृशान्यन्नान्यकः। करोति। तस्मै ददातीत्यर्थः ॥ वृक्तबर्हिषे। ओव्रश्चू छेदने। कर्मणि निष्ठायां यस्य विभाषेतीट्प्रतिषेधः। बहुव्रीहौ पूर्वपदस्वरः। अकः। करोतेर्लुङि मंत्रे घसेत्यादिना लुक्। सिपो हल्ङ्यादिलोपः। निघातः ॥ ॥६॥

इहेह व इति सप्तर्चं सप्तमं सूक्तं वैश्वामित्रं जागतमृभुदेवताकं। अत्यस्त्वृच इंद्रदेवताकश्च। तथा चानुक्रांतं। इहेह वः सप्तार्भवं जागतं तृचोऽंत्य ऐंद्रश्चेति ॥ सूक्तविनियोगो लैंगिकः। आद्यास्तिस्रः पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि वैश्वदेवशस्त्र आर्भवनिविद्धानीयाः। सूत्रितं च। इहेह व इति चतस्रः। आ० ७. ५। इति ॥

इहेह वो मनसा बंधुता नर उशिजो जग्मुरभि तानि वेदसा।

याभिर्मायाभिः प्रतिजूतिवर्पसः सौधन्वना यज्ञियं भागमानश ॥१॥

इहऽइह। वः। मनसा। बंधुता। नरः। उशिजः। जग्मुः। अभि। तानि। वेदसा।

याभिः। मायाभिः। प्रतिजूतिऽवर्पसः। सौधन्वनाः। यज्ञियं। भागं। आनश ॥१॥

हे ऋभवो वो युष्माकं बंधुता । बध्नंति फलेन संयोजयंतीति बंधवः कर्माणि । तेषां समूहो बंधुता । इहेह सर्वत्र मनसा सर्वैर्ज्ञायते । नरो हे मनुष्या ऋभव उशिजो यज्ञभागं कामयमाना भवंतो वेदसा यज्ञभागप्रापककर्मविषयज्ञानेन तानि तादृशानि कर्माण्यभि जग्मुः । प्राप्नुवंति । कानि तानि । मायाभिः । मीयंते ज्ञायंत इति मायाः कर्माणि । याभिर्मायाभिर्यैः कर्मभिः प्रतिजूतिवर्पसः प्रतिपक्षाभिभवनशीलतेजोयुक्ताः सौधन्वनाः । सुधन्वनामांगिरसः पुत्रः कश्चिदृषिः । तस्य पुत्राः सौधन्वनाः । ते च त्रय ऋभुर्विभ्वा वाज इति । एतन्नामका यूयं यज्ञियं यज्ञार्हं भागं सोमपानादिलक्षणमानश । प्राप्ताः स्थ । तथा च मंत्रवर्णः । ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं भागमैतन । ऋग्वे॰ १. १६१. ६. । इति । अयमर्थो ब्राह्मणेऽप्यृभवो वै देवेषु तपसा सोमपीथमभ्यजयन्नित्यत्रोपाख्यानपूर्वकं स्पष्टमभिहितः । यद्वा । नरः कर्मणा नेतारो हे ऋभव उशिजः कामयमाना वेदसा हविर्लक्षणेन धनेन युक्ताः स्तोतारो वो युष्माकं तानि चमसतक्षणादीनि कर्माणि बंधुता बंधुतया सख्येन मनसा जग्मुः । अभिगच्छंति । कानीत्याशंकायामाह । येश्चमसतक्षणादिभिः कर्मभिर्यज्ञार्हं भागं यूयमाप्नुत तान्यभिगच्छंति । युष्माकं वृद्धिनिपुणानि चिंतयंतीत्यर्थः ॥ इहेह । नित्यवीप्सयोरिति द्विर्वचनं । परस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः । बंधुता । बन्ध बंधने । शॄस्वृस्निहीत्यादिना कर्तर्युप्रत्ययः । समूह इत्यर्थे ग्रामजनबंधुसहायेभ्यस्तल् । पा॰ ४. २. ४३ । इति तल् । लित्स्वरः ॥

याभिः शचीभिश्चमसाँ अपिंशत यया धिया गामरिणीत चर्मणः ।
येन हरी मनसा निरतक्षत तेन देवत्वमृभवः समानश ॥ २॥
याभिः । शचीभिः । चमसान् । अपिंशत । यया । धिया । गां । अरिणीत । चर्मणः ।
येन । हरी इति । मनसा । निःऽअतक्षत । तेन । देवऽत्वं । ऋभवः । सं । आनश ॥ २॥

हे ऋभवो याभिः शचीभिः शक्तिभिश्चमसान् चतुरोऽपिंशत विभक्तवंतः स्थ । यया धिया प्रज्ञया गां मृतामरिणीत चर्मणः चर्मणा योजनात्प्रापितवंतः स्थ । येन मनसा प्रज्ञानेन हरी एतन्नामकाविंद्रस्याश्वौ निरतक्षत नितरामकुरुत । तथा च मंत्रवर्णः । य इंद्राय वचोयुजा ततक्षुर्मनसा हरी । ऋग्वे॰ १. २०. २ । इति । तेन सर्वेणानेन कर्मणा देवत्वं यज्ञभागार्हत्वलक्षणं देवभावं समानश । सम्यक् प्राप्ताः स्थ ॥ अपिंशत । पिश अवयवे । तुदादिः । तस्य लङि मध्यमे रूपं । यद्वृत्तयोगादनिघातः । अरिणीत । री गतिरेषणयोः । क्र्यादिः । तस्य लङि रूपं । अत्रापि पूर्ववदनिघातः । निरतक्षत । तक्षू त्वक्षू तनूकरणे । लङि रूपं । पूर्ववदनिघाते तिङि चोदात्तवतीति गतेर्निघातः । अडुदात्तः । आनश । अश्नोतेर्लिटि रूपं । निघातः ॥

इंद्रस्य सख्यमृभवः समानशुर्मनोर्नपातो अपसो दधन्विरे ।
सौधन्वनासो अमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया ॥ ३॥
इंद्रस्य । सख्यं । ऋभवः । सं । आनशुः । मनोः । नपातः । अपसः । दधन्विरे ।
सौधन्वनासः । अमृतऽत्वं । आ । ईरिरे । विष्ट्वी । शमीभिः । सुऽकृतः । सुऽकृत्यया ॥ ३॥

मनोर्नपातो मनुष्यस्यांगिरसः पुत्रा अपसो यागादिलक्षणकर्मवंत ऋभव इंद्रस्य सख्यं समानख्यानत्वं समानशुः । सम्यक् प्राप्नुवन् । तथेंद्रस्य सख्यं प्राप्तास्त ऋभवो दधन्विरे । पूर्वं मनुष्यत्वेन मरणयोग्या अपीदानीमिंद्रस्य सख्येन प्राणान्धारयंति । तथा मंत्रः । अधारयत वह्नयः । ऋग्वे॰ १. २०. ८ । इति । सौधन्वनासः सुधन्वनामकस्यर्षेः पुत्रा ऋभवः सुकृतः शोभनकर्माणः संतः प्रभृतैः शमीभिर्देवत्वप्राप्तिप्रतिबंधनिवारणहेतुभिः कर्मभिः सुकृत्यया शोभनेन कर्मणा च विष्ट्वी व्याप्यामृतत्वमेरिरे । देवत्वं प्रापुः । तथा च मंत्रांतरमाम्नायते । मर्तासः संतो अमृतत्वमानशुः । ऋग्वे॰ १. ११०. ४ । इति ॥ नपातः । नभ्राण्नपादित्यादिना नञः प्रकृतिभावः । दधन्विरे । धविर्गत्यर्थः । व्यत्ययेनात्मनेपदं । लिटि रूपं । ईरिरे । ईर गतौ । मंत्रत्वादाम्न भवति । निघातः । सुकृत्यया । करोतेर्भावे छंदसः श च्चेति क्यप् । प्रत्ययस्य व्यत्ययेनांतोदात्तत्वं । समासे कृदुत्तरस्वरः ॥

इंद्रे॑ण याथ स॒रथं॑ सु॒ते सचाँ॒ अथो॒ वशा॑नां भवथा स॒ह श्रि॒या ।
न वः॑ प्रति॒मै सु॑कृ॒तानि॑ वाघतः॒ सौध॑न्वना ऋभवो॒ वी॒र्या॑णि च ॥४॥
इंद्रे॑ण । या॒थ॒ । स॒ऽरथं॑ । सु॒ते । सचा॑ । अथो॒ इति॑ । वशा॑नां । भ॒व॒थ॒ । स॒ह । श्रि॒या ।
न । वः॒ । प्र॒ति॒ऽमै । सु॒ऽकृ॒तानि॑ । वा॒घ॒तः॒ । सौध॑न्वनाः । ऋ॒भ॒वः॒ । वी॒र्या॑णि । च॒ ॥४॥

हे ऋभवो यूयमिंद्रेण सचा सह सरथं समानमेकं रथमारुह्य सुतेऽभिषुतसोमवति यज्ञे याथ। गच्छथ। अथो अनंतरमिंद्रेण सहैकरथमारूढा यूयं वशानां। उश्यंते काम्यंते यजमानैः स्वर्गादिलक्षणं फलमेभिरिति वशा मनुष्याः। तेषां श्रिया स्तुतिहविरादिरूपया सह भवथ। हे सौधन्वनाः सुधन्वनः पुत्रा वाघतोऽमृतत्वादिलक्षणफलस्य वोढारो मेधाविनो वेति यास्कः। तादृशा हे ऋभवो वो युष्माकं सुकृतानि देवत्वस्य प्रापकाणि शोभनानि कर्माणि न प्रतिमै। प्रतिमातुमियत्तया परिच्छेत्तुं न केनापि शक्यानि। तथा वीर्याणि युष्माकं सामर्थ्यानि च नैव प्रतिमातुं शक्यानि॥ वशानां। वश कांतौ। वशिरण्योरुपसंख्यानमिति करणेऽप्प्रत्ययः। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। वशाशब्दो बध्यावचनश्चेदंतोदात्तो भवति। वशा मेषा अवसृष्टाम आहुताः। ऋग्वे० १०. ९१ १४.। इति। वः। युष्मच्छब्दस्य षष्ठीबहुवचने वसादेशः। निघातः। प्रतिमै। माङ् माने। विच। प्रतिमाः प्रतिमानं। तस्य चतुर्थ्येकवचन आतो लोपश्छांदसः। एकादेशस्वरः॥

आभिप्लविके पचमेऽहनि वैश्वदेवशस्त्र इंद्र ऋभुभिरित्यार्भवस्तृचः। सूत्रितं च। घृतवती भुवनाना मभिश्रियेंद्र ऋभुभिर्वाजवद्भिरिति तृचौ। आ० ७. ७.। इति॥ आद्यस्तृतीयसवने होतुः प्रस्थितयाज्या। सूत्रितं च। इंद्र ऋभुभिर्वाजवद्भिः समुक्षितमिंद्रावरुणा सुतपाविमं सुतं। आ० ५. ५.। इति॥

इंद्र॑ ऋ॒भुभि॒र्वाज॑वद्भिः॒ समु॑क्षितं सु॒तं सोम॒मा वृ॑षस्वा॒ गभ॑स्त्योः ।
धि॒येषि॒तो म॑घव॒न्दाशु॑षो गृ॒हे सौ॑धन्व॒नेभिः॑ स॒ह म॑त्स्वा॒ नृभिः॑ ॥५॥
इंद्र॑ । ऋ॒भुऽभिः॑ । वाज॑वत्ऽभिः । सम्ऽउ॑क्षितं । सु॒तं । सोमं॑ । आ । वृ॒ष॒स्व॒ । गभ॑स्त्योः ।
धि॒या । इ॒षि॒तः । म॒घ॒ऽव॒न् । दा॒शुषः॑ । गृ॒हे । सौ॒ध॒न्व॒नेभिः॑ । स॒ह । म॒त्स्व॒ । नृ॒ऽभिः॑ ॥५॥

हे इंद्र वाजवद्भिः। वाजो नाम ऋभूणां भ्राता। यद्वा। वाजोऽन्नं। तत्सहितैर्ऋभुभिः सहितस्त्वं समुक्षित सम्यगद्भिः सिक्तं ग्रावभिः सुतं सोमं गभस्त्योः। बप्सत्यदत्याभ्यामन्नमिति गृह्णाति पदार्थानाभ्यामिति वा गभस्ती बाहू। तयोर्बाह्वोरा वृषस्व। आसारय। यद्वमुभाभ्यां बाहुभ्यां गृहीत्वा सोमं पिबेत्यर्थः। हे मघवन् हे इंद्र धिया स्तोत्ररूपेण कर्मणेषितः प्रेरितस्त्वं दाशुषो हविर्दत्तवतो यजमानस्य गृहे सौधन्वनेभिः सुधन्वनः पुत्रैर्नृभिर्मनुष्यैर्ऋभुभिः सह साकं मत्स्व। सोमपानेन हृष्टो भव॥ समुक्षितं। उक्ष सेचने। कर्मणि क्तः। गतिरनंतर इति गतेः स्वरः। गभस्त्योः। भस भर्त्सनदीप्त्योरित्यस्माद्गमेर्गश्चेति सूत्रेण तिप्रत्ययो धातोर्गडागमश्च। यद्वा। गृह्णातेः पृषोदरादित्वादेव नेयं। मत्स्व। मदि स्तुत्यादिषु। लोटि बहुलं छंदसीति विकरणस्य लुक्। निघातः॥

इंद्र॑ ऋ॒भुमा॒न्वाज॑वान्मत्स्वे॒ह नो॒ऽस्मिन्त्सव॑ने॒ शच्या॑ पुरुष्टुत ।
इ॒मानि॒ तुभ्यं॒ स्वस॑राणि येमिरे व्र॒ता दे॒वानां॒ मनु॑षश्च॒ धर्म॑भिः ॥६॥
इंद्र॑ । ऋ॒भुऽमा॑न् । वाज॑ऽवान् । म॒त्स्व॒ । इ॒ह । नः॒ । अ॒स्मिन् । सव॑ने । शच्या॑ । पु॒रु॒ऽस्तु॒त॒ ।
इ॒मानि॑ । तुभ्यं॑ । स्वस॑राणि । ये॒मि॒रे॒ । व्र॒ता । दे॒वानां॑ । मनु॑षः । च॒ । धर्म॑ऽभिः ॥६॥

पुरुष्टुत बहुभिः स्तुत हे इंद्र ऋभुमान् ऋभुणा तद्वान् वाजवान् वाजेन ऋभोर्भ्रात्रा युक्तः शच्येंद्राण्या कर्मणा वा सहितः सन् नोऽस्माकमिह कर्मण्यस्मिन् तृतीयसवने मत्स्व। हृष्टो भव। हे इंद्र तुभ्यं त्वदर्थमिमानि स्वसराण्यहानि येमिरे। तव सोमपानार्थं त्रिषु सवनेषु नियतान्यासते। किंच देवानामग्न्यादीनां व्रता व्रतानि कर्माणि च मनुषो मनुष्यस्य धर्मभिः कर्मभिः साकं त्वदर्थं नियतान्यासते॥

इंद्र ऋभुभिर्वाजिभिर्वाजयन्निह स्तोमं जरितुरुप याहि यज्ञियं ।
शतं केतेभिरिषिरेभिरायवे सहस्रणीथो अध्वरस्य होमनि ॥७॥
इंद्र । ऋभुऽभिः । वाजिऽभिः । वाजयन् । इह । स्तोमं । जरितुः । उप । याहि । यज्ञियं ।
शतं । केतेभिः । इषिरेभिः । आयवे । सहस्रऽनीथः । अध्वरस्य । होमनि ॥७॥

हे इंद्र वाजिभिर्वाजयुक्तैर्ऋभुभिः सहितस्त्वं वाजयन् स्तोतुर्वाजमन्नं कुर्वाण इह यज्ञे यज्ञियं यज्ञार्हं जरितुः स्तोमं स्तोत्रमुप याहि। आगच्छ। पुनः किंविशिष्टः। केतेभिः। केत्यंते ज्ञायंते सर्वमेभिरिति केताः प्राज्ञा मरुतः। तैः शतं शतसंख्याकैरिषिरेभिरिषिरैर्गमनकुशलैरश्वैः सहित आयवे मनुष्याय यजमानाय सहस्रनीथो बहुप्रकारनयनोपेतोऽध्वरस्य। न विद्यते ध्वरो हिंसा यस्य तादृशस्य सोमस्य होमनि होमे आगच्छेति शेषः॥ वाजयन्। वाजं करोतीति णिच्। णाविष्ठवत्प्रातिपदिकस्य। पुंवद्भावरभावटिलोपयणादिपरं प्रातिपदिकस्य विन्मतोर्लुक् इति टिलोपः। केतेभिः। कित ज्ञाने। घञ्। ञित्त्वादाद्युदात्तः॥ ॥७॥

उषो वाजेनेति सप्तर्चमष्टमं सूक्तं वैश्वामित्रमुषोदेवताकं। तथा चानुक्रांतं। उष उषस्यमिति॥ प्रातरनुवाक उषस्ये क्रतावाश्विनशस्त्रे च त्रैष्टुभे छंदस्येतस्य सूक्तस्य विनियोगः। सूत्रितं च। उषो वाजेनेदमु त्यत्। आ॰ ४.१४। इति॥

उषो वाजेन वाजिनि प्रचेताः स्तोमं जुषस्व गृणतो मघोनि ।
पुराणी देवि युवतिः पुरंधिरनु व्रतं चरसि विश्ववारे ॥१॥
उषः । वाजेन । वाजिनि । प्रऽचेताः । स्तोमं । जुषस्व । गृणतः । मघोनि ।
पुराणी । देवि । युवतिः । पुरंऽधिः । अनु । व्रतं । चरसि । विश्वऽवारे ॥१॥

वाजिन वाजिन्यन्नेनान्नवति। तथा च मंत्रः। स वाजिनीवति। ऋसं॰ १.४८.१६। इति। मघोनि धनवति हे उषः प्रचेताः प्रकृष्टज्ञानवती सती गृणतः तव स्तोत्रं कुर्वतः स्तोतुः स्तोमं स्तोत्रं जुषस्व। सेवस्व। यद्वा। वाजेन हविर्लक्षणेनान्नेन सह स्तोमं जुषस्वेति संबंधः। विश्ववारे विश्वैः सर्वैर्वरणीये हे उषो देवि पुराणी पुरातनी युवतिरित्युपमा तद्वच्छोभमाना। सुसंकाशा मातृमृष्टेव योषा। ऋसं॰ १.१२३.११। इतिवत्। पुरंधिः। पुरु बहु धीः स्तोत्रलक्षणं कर्म यस्याः सा। बहुस्तोत्रवती। पुरंधिर्बहुधीरिति यास्कः। पुरंधिः शोभमाना वा। एवंविधगुणोपेता त्वमनु व्रतं यज्ञकर्माभिलक्ष्य चरसि। यष्टव्यतया वर्तसे॥ मघोनि। मघशब्दान्मत्वर्थे छंदसीवनिपाविति वनिप्। स्त्रियामन्नेभ्यो ङीप्। श्वयुवमघोनामतद्धित इति संप्रसारणं कृते गुणः। संबुद्धावंबार्थनद्योर्ह्रस्वः। निघातः। पुराणी। पुराणशब्दः पुराणप्रोक्तेष्विति अंतोदात्तत्वेन निपातितः। टिड्ढाणञिति ङीप्। अनुदात्तस्य च यत्रोदात्तलोप इत्यंतोदात्तत्वं। पुरंधिः। पृषोदरादित्वादुकारस्यामादेश ईकारस्य ह्रस्वश्च। आद्युदात्तप्रकरणे दिवोदासादीनां छंदस्युपसंख्यानमित्याद्युदात्तत्वं॥

उषो देव्यमर्त्या वि भाहि चंद्ररथा सूनृता ईरयंती ।
आ त्वा वहंतु सुयमासो अश्वा हिरण्यवर्णां पृथुपाजसो ये ॥२॥
उषः । देवि । अमर्त्या । वि । भाहि । चंद्रऽरथा । सूनृताः । ईरयंती ।
आ । त्वा । वहंतु । सुऽयमासः । अश्वाः । हिरण्यऽवर्णां । पृथुऽपाजसः । ये ॥२॥

हे उषो देव्यमर्त्या मरणधर्मरहिता चंद्ररथा सुवर्णमयरथोपेता सूनृताः प्रियसत्यरूपा वाच ईरयंत्युच्चारयंती। तथा च मंत्रवर्णः। सुम्नावरी सूनृता ईरयंती। ऋसं॰ १.११३.१२। इति। तादृशी त्वं वि भाहि।

सूर्यकिरणसंबंधाद्विशेषेण दीप्यस्व । पृथुपाजसः प्रभूतबलयुक्ता अरुणवर्णा येऽश्वा विद्यंते सुयमासः सुष्ठु नियंतुं शक्या रथे योजितास्तेऽश्वा हिरण्यवर्णां त्वा त्वामा वहंतु ॥ सुयमासः । यमेरक्षच्छार्थे खल् । लित्स्वरः ॥

उषः प्रतीची भुवनानि विश्वोर्ध्वा तिष्ठस्यमृतस्य केतुः ।
समानमर्थं चरणीयमाना चक्रमिव नव्यस्या ववृत्स्व ॥३॥
उषः । प्रतीची । भुवनानि । विश्वा । ऊर्ध्वा । तिष्ठसि । अमृतस्य । केतुः ।
समानं । अर्थं । चरणीयमाना । चक्रंऽइव । नव्यसि । आ । ववृत्स्व ॥३॥

हे उषो देवि विश्वा सर्वाणि भुवनानि प्रतीची । प्रत्याभिमुख्येनांचति प्राप्नोतीति प्रतीची । अमृतस्य मरणधर्मरहितस्य सूर्यस्य केतुः प्रज्ञापयित्री त्वमूर्ध्वा नभस्युन्नता तिष्ठसि । नव्यसि पुनःपुनर्जायमानतया नवतरे हे उषो देव्यर्थं । अर्यते गम्यतेऽस्मिन्नित्यर्थो मार्गः । समानमेकं मार्गमुदयात्प्राचीनकाललक्षणं चरणीयमाना चरितुमिच्छंती त्वमा ववृत्स्व । पुनस्तस्मिन्मार्ग आवृत्ता भव । तत्र दृष्टांतः । चक्रमिव । यथा नभसि चरितुः सूर्यस्य रथांगं पुनःपुनरावर्तते तद्वत ॥ प्रतीची । प्रतिपूर्वादचतेः क्विन । अंचतेश्चोपसंख्यानमिति ङीप । अच इत्यकारलोपे चाविति दीर्घः । उदात्तनिवृत्तिस्वरेणातोदात्तः । केतुः । चायृ पूजानिशामनयोरित्यस्मा च्चायः की चेति तुः । की इत्यादेशः । आर्धधातुकलक्षणो गुणः । अर्थं । अर्तेस्थन्प्रत्ययः । नव्यसि । नवशब्दा दीयसुनि ङीपि रूपं । ईकारलोपश्छांदसः । ववृत्स्व । वृतु वर्तने । बहुलं छंदसीति विकरणस्य श्लुः ॥

अव स्यूमेव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी ।
स्व१र्जनंती सुभगा सुदंसा आंताद्दिवः पप्रथ आ पृथिव्याः ॥४॥
अव । स्यूमंऽइव । चिन्वती । मघोनी । उषाः । याति । स्वसरस्य । पत्नी ।
स्वः । जनंती । सुऽभगा । सुऽदंसाः । आ । अंतात् । दिवः । पप्रथे । आ । पृथिव्याः ॥४॥

येयमुषाः स्यूमेव वस्त्रमिव विस्तृतं तमोऽवचिन्वत्यवचयमपचयं प्रापयंती मघोनी धनवती स्वसरस्य । सुष्ठस्यति क्षिपति तम इति स्वसरः सूर्यो वासरो वा । तस्य पत्नी सती याति गच्छति । स्वः स्वकीयं तेजो जनंती जनयंती सुभगा सुधना सौभाग्ययुक्ता वा सुदंसाः शोभनाग्निहोत्रकर्मा सेयमुषा दिवो द्युलोकस्यांता त्पृथिव्याश्चांतादावसानात्पप्रथे । प्रथते । प्रकाशत इत्यर्थः ॥ स्यूमेव । षिवु तंतुसंताने । अर्तिपिषिविशुभ्यः किदिति मन्प्रत्ययः । च्छ्वोः शूडनुनासिके चेत्यूट् । यणादेशः । सुपां सुलुगिति सोर्लुक् । नित्त्वादाद्युदात्तः । चिन्वती । शतुरनुम इति ङीप उदात्तत्वं । जनंती । जन जनन इत्यस्य ण्यंतस्य शतरि रूपं । छंदस्युभयथेति शप आर्धधातुकत्वेन णिलोपः ॥

अच्छा वो देवीमुषसं विभातीं प्र वो भरध्वं नमसा सुवृक्तिं ।
ऊर्ध्वं मधुधा दिवि पाजो अश्रेत्प्र रोचना रुरुचे रण्वसंदृक् ॥५॥
अच्छ । वः । देवीं । उषसं । विऽभातीं । प्र । वः । भरध्वं । नमसा । सुऽवृक्तिं ।
ऊर्ध्वं । मधुधा । दिवि । पाजः । अश्रेत् । प्र । रोचना । रुरुचे । रण्वऽसंदृक् ॥५॥

हे स्तोतारो वो युष्मानच्छाभिलक्ष्य विभातीं शोभमानामुषसं देवीं प्रति वो युष्माकं संबंधिना नमसा नमस्कारेण सह सुवृक्तिं शोभनां स्तुतिं प्रभरध्वं । यूयं कुरुत । मधुधा । मधुराणि स्तुतिलक्षणानि वाक्यानि दधातीति । मधु सोमः । तं धारयतीति वा । यद्वा । मधुधादित्यधात्री । यद्वा । अवग्रहाभावादव्युत्पन्नावयवम खंडमिदं पदमुषोनाम । सेयमुषा दिवि नभस्यूर्ध्वं पाज ऊर्ध्वाभिमुखं पाजस्तेजोऽश्रेत । श्रयति । तथा रोचना

रोचनशीला रण्वसंदृक् रमणीयदर्शनोषाः प्र रुरुचे। प्रकर्षेण दीप्यते। यद्वा। रोचना लोकान्प्र रुरुचे। प्रकर्षेण स्वतेजसा दीपयति। तथा च मंत्रवर्णः। व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनं। ऋग्वे० १. ४९. ४। इति॥ रण्वसंदृक्। रवि गत्यर्थस्याचप्रत्ययः। इदित्त्वान्नुमागमः। संपूर्वाद्दृशेः क्विन्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः॥

ऋतावरी दिवो अर्कैरबोध्या रेवती रोदसी चित्रमस्थात्।
आयतीमग्न उषसं विभातीं वाममेषि द्रविणं भिक्षमाणः॥६॥
ऋतऽवरी। दिवः। अर्कैः। अबोधि। आ। रेवती। रोदसी इति। चित्रं। अस्थात्।
आऽयतीं। अग्ने। उषसं। विऽभातीं। वामं। एषि। द्रविणं। भिक्षमाणः॥६॥

ऋतावरी सत्यवती येयमुषा दिवो द्युलोकादर्कैस्तेजोभिरबोधि सर्वैर्ज्ञायते। ततो रेवती धनवती येय रोदसी द्यावापृथिव्यौ चित्रं नानाविधरूपयुक्तं यथा भवति तथास्थात् सर्वतो व्याप्य तिष्ठति हे अग्ने आयतीं त्वदभिमुखमागच्छन्तीं विभातीं भासमानामुषसमुषोदेवीं भिक्षमाणो हवींषि याचमानस्त्वं वामं वननीयं द्रविणमग्निहोत्रादिलक्षणं धनमेषि। प्राप्नोषि॥ अबोधि। बुध अवगमने। कर्मणि लुङि चिण् भावकर्मणोरिति चिण्। चिणो लुक्। रेवती। रयिशब्दान्मतुप्। छन्दसीर इति वत्वं। रयेर्मतौ बहुलमिति संप्रसारणपरपूर्वत्वे। गुणः। उगितश्चेति ङीप्। रयिशब्दाच्चोपसंख्यानमिति मतुप उदात्तत्वं॥

ऋतस्य बुध्न उषसामिषण्यन्वृषा मही रोदसी आ विवेश।
मही मित्रस्य वरुणस्य माया चंद्रेव भानुं वि दधे पुरुत्रा॥७॥
ऋतस्य। बुध्ने। उषसां। इषण्यन्। वृषा। मही इति। रोदसी इति। आ। विवेश।
मही। मित्रस्य। वरुणस्य। माया। चंद्राऽइव। भानुं। वि। दधे। पुरुऽत्रा॥७॥

वृषा वृष्टिद्वारा प्रेरक आदित्य ऋतस्याग्निहोत्रादिकर्मकरणे सत्यभूतस्याह्नो बुध्ने मूल उषसामिषण्यन् प्रेरणं कुर्वन्मही महत्यौ रोदसी द्यावापृथिव्यावा विवेश। स्वतेजोभिः सर्वतः प्रविष्टवान्। यद्वा। वृषा वर्षितेषण्यन् सर्वतो गच्छन्नुषसां संबंधी रश्मिसमूहो रोदसी द्यावापृथिव्यौ विष्टवानिति योजनीयं। तत उषा मही महती मित्रस्य वरुणस्य मित्रावरुणयोर्माया प्रभारूपा सती चंद्रेव सुवर्णानीव भानुं स्वप्रभां पुरुत्रा बहुषु देशेषु वि दधे। विदधाति। सर्वत्र प्रसारयति॥ मही। अल्लोपश्छान्दसः। पुरुत्रा। देवमनुष्येत्यादिना साधिकरणे त्राप्रत्ययः॥ ॥८॥

इमा उ वामित्यष्टादशर्चं नवमं सूक्तं। अत्रेयमनुक्रमणिका। इमा उ द्व्यूनैन्द्रावरुणबार्हस्पत्यपौष्णसावित्रसौम्यमैत्रावरुणास्तृचा अन्त्यो जमदग्न्यार्षो वा चतुर्थ्याद्या गायत्र्य इति। कृत्स्नस्य विश्वामित्र ऋषिरन्त्यस्य तृचस्य जमदग्निर्वा। आद्यास्तिस्रस्त्रिष्टुभः शिष्टाः पंचदश गायत्र्यः। प्रथमस्यैंद्रावरुणौ देवता द्वितीयस्य बृहस्पतिस्तृतीयस्य पूषा चतुर्थस्य सविता पंचमस्य सोमः षष्ठस्य मित्रावरुणौ॥ आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ सत्यां स्वस्वशस्त्रे होत्रका अत्यसूक्तमवशिष्य स्तोमातिशंसनार्थं तृचादिसंख्या ऋच आवपेयुः। तत्र मैत्रावरुणस्यावापार्थमाद्यास्तृचः। सूत्रितं च। इमा उ वां भृमयो मन्यमाना इति तिस्रः। आ० ७. ९०। इति॥

इमा उ वां भृमयो मन्यमाना युवावते न तुज्या अभूवन्।
क्व१त्यदिंद्रावरुणा यशो वां येन स्मा सिनं भरथः सखिभ्यः॥१॥
इमाः। ऊं इति। वां। भृमयः। मन्यमानाः। युवाऽवते। न। तुज्याः। अभूवन्।
क्व। त्यत्। इंद्रावरुणा। यशः। वां। येन। स्म। सिनं। भरथः। सखिऽभ्यः॥१॥

हे इंद्रावरुणौ वां युवयोः संबंधिन्यो मन्यमाना बलिभिः शत्रुभिरभिमन्यमाना अत एव भृमयो भ्रमण-

शीला इमाः प्रजाः । उः पूरणः । युवावते । तृतीयार्थे चतुर्थी । यावन्नवता बलिना शत्रुणा तुज्या हिंस्या माभूवन् । न भवतु । अपि च वां युवयोस्त्यत्तादृशं यशः क्र कुत्रास्ति । येन यशसा सखिभ्योऽस्मभ्यं सिनमन्नं भरथः स्म प्रदातुं संपादयथः । तत्क्वास्ति इत्यन्वयः । यद्वा । हे इंद्रावरुणौ वां युवयोः संबंधिन्य इमा अस्माभिः क्रियमाणा भृमयो युवां प्राप्तुं भ्रमणशीला मन्यमानाः । मन्यतिरर्चतिकर्मा । युवामर्चंत्यस्ताः स्तुतयो युवावते युवाभ्यां सदृशायान्यस्मै देवाय न तुज्याः । तुजतिर्दानकर्मार्थः । प्रदेया मा भुवन् । शिष्टं समानं ॥ भृमयः । भ्रमु अनवस्थाने । भ्रमेः संप्रसारणं चेतीन्प्रत्ययः संप्रसारणं च । व्यत्ययेनांतोदात्तत्वं । युवावते । युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानमिति वतुप् । अविभक्तावपि युवादेशश्छांदसः । तुज्याः । तुज हिंसादानानिकेतनेषु । अघ्न्यादयश्चेति यत् । यतोऽनाव इत्याद्युदात्तत्वं । सिनं । षिञ् बंधने । इणिषञ्दीङुष्यविभ्यो नगिति नक् । व्यत्ययेनाद्युदात्तत्वं ॥

अयमु वां पुरुतमो रयीयञ्छश्वत्तममवसे जोहवीति ।
सजोषाविंद्रावरुणा मरुद्भिर्दिवा पृथिव्या शृणुतं हवं मे ॥२॥
अयं । ऊं इति । वां । पुरुऽतमः । रयिऽयन् । शश्वत्ऽतमं । अवसे । जोहवीति ।
सऽजोषौ । इंद्रावरुणा । मरुत्ऽभिः । दिवा । पृथिव्या । शृणुतं । हवं । मे ॥२॥

हे इंद्रावरुणौ रयीयन् रयिमात्मन इच्छन्नयमु पुरुतमो वैदिककर्मप्रवृत्ततयातिशयेन पुरुर्महान्यजमानोऽवसे रक्षणायान्नाय वा वां युवां शश्वत्तमं सर्वदा जोहवीति । भृशमाह्वयति । मरुद्भिर्देवविशेषैर्दिवा पृथिव्या च सजोषौ संगंतारौ युवां मे मम हवं युष्मदीयमाह्वानं शृणुतं ॥ पुरुतमः । तमपो व्यत्ययेनाद्युदात्तत्वं । जोहवीति । ह्वयतेर्यङ्लुकभ्यस्तस्य चेति संप्रसारणे रूपं । दिवा । ऊडिदमिति विभक्तेरुदात्तत्वं । पृथिव्या । उदात्तयणो हल्पूर्वादित्युदात्तत्वं । हवं । ह्वयतेर्भावेऽनुपसर्गस्येत्यप् । प्रत्ययस्य पित्त्वादनुदात्तत्वं ॥

अस्मे तदिंद्रावरुणा वसु ष्यादस्मे रयिर्मरुतः सर्ववीरः ।
अस्मान्वरूत्रीः शरणैरवंत्वस्मान्होत्रा भारती दक्षिणाभिः ॥३॥
अस्मे इति । तत् । इंद्रावरुणा । वसु । स्यात् । अस्मे इति । रयिः । मरुतः । सर्वऽवीरः ।
अस्मान् । वरूत्रीः । शरणैः । अवंतु । अस्मान् । होत्रा । भारती । दक्षिणाभिः ॥३॥

हे इंद्रावरुणावस्मे अस्मासु तदभिलषितं तादृशं वसु धनं स्यात् । भवतु । हे मरुतः सर्ववीरः सर्वेषु कर्मसु वीरः समर्थो रयिः पुत्रपौत्रयुक्तः पशुसंघः । पशवो वै रयिरिति तैत्तिरीयकं । सोऽस्मे अस्माकं भवतु । वरूत्रीः सर्वैः संभजनीया देवपत्न्यः शरणैः । शृणाति शीतादिक्लेशमिति शरणानि गृहाः । तैरस्मानवंतु । होत्रा । ह्वयंतेऽस्या हवींषीति । यद्वा । ह्वयते तत्र प्राण इति होत्रा वाक् । तथा च श्रुतिः । वाचि हि प्राणं जुहुमः प्राणे वा वाच । कौ० उ० २ ५ । इति । यद्वा । होत्रेति यज्ञनाम । ह्वयते तत्र हविरिति । यज्ञश्च वागुच्यते । वाचं यज्ञेति वाग्वै यज्ञः । ऐ० ब्रा० ५. २४ । इति ब्राह्मणं । तादृशी भारती सरस्वती दक्षिणाभिर्गोरूपाभिर्दक्षिणाभिः । यद्वा । उदाराभिर्वाग्भिरस्मान् पालयतु ॥ वसु ष्यादित्यत्र संहितायां पूर्वपदादिति षत्वं । वरूत्रीः । ग्रसितस्कभितेत्यादिना ङीबंतत्वेन निपातनादिष्टसिद्धिः । होत्रा । हु दानादनयोः । हुयामाश्रुभसिभ्यस्त्रन्नित्यधिकरणे त्रन्प्रत्ययः ॥

बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य । रास्व रत्नानि दाशुषे ॥४॥
बृहस्पते । जुषस्व । नः । हव्यानि । विश्वऽदेव्य । रास्व । रत्नानि । दाशुषे ॥४॥

विश्वदेव्य सर्वदेवहित हे बृहस्पते नोऽस्मत्संबंधीनि हव्यानि हवनयोग्यानि पुरोडाशादीनि हवींषि जुषस्व । सेवस्व । ततस्त्वं दाशुषे हविर्दत्तवते यजमानाय मह्यं रत्नान्युत्तमानि धनानि रास्व । देहि ॥ रास्व । रा दाने । व्यत्ययेनात्मनेपदं ॥

शुचिमर्कैर्बृहस्पतिमध्वरेषु नमस्यत । अनाम्योज आ चके ॥५॥

शुचिं । अर्कैः । बृहस्पतिं । अध्वरेषु । नमस्यत । अनामि । ओजः । आ । चके ॥५॥

हे ऋत्विजो यूयमध्वरेषु शुचिं शुद्धं बृहस्पतिमर्कैरर्चनीयैः स्तोत्रैर्नमस्यत । परिचरत । अनाम्यनमनशीलं परैरनभिभवनीयमोजस्तस्य बलमा चके । सर्वतो याचे ॥ बृहस्पतिं । वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः । चके । कमेर्लिट्युत्तमे मकारलोपश्छांदसः ॥ ॥९॥

वृषभं चर्षणीनां विश्वरूपमदाभ्यं । बृहस्पतिं वरेण्यं ॥६॥

वृषभं । चर्षणीनां । विश्वऽरूपं । अदाभ्यं । बृहस्पतिं । वरेण्यं ॥६॥

चर्षणीनां मनुष्याणां वृषभमभिमतफलवर्षकं विश्वरूपं व्याप्तरूपं । यद्वा । विश्वरूपानामकगोवाहनोपेतं । तथा च मंत्रवर्णः । बृहस्पतिर्विश्वरूपामुपाजत । ऋग्वे° १ १६१ ६ । इति । अदाभ्यं केनाप्यतिरस्करणीयं वरेण्यं सर्वैर्भजनीयं बृहस्पतिं । अभिमतफलं याचे इति पूर्वेणान्वयः ॥ विश्वरूपं । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं । यद्वा । विश्वरूपास्य संतीति अर्श आदित्वादच्प्रत्ययः । मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं । अदाभ्यं । दंभेश्छंदसि वक्तव्यमिति ण्यत्प्रत्ययः ॥

इयं ते पूषन्नाघृणे सुष्टुतिर्देव नव्यसी । अस्माभिस्तुभ्यं शस्यते ॥७॥

इयं । ते । पूषन् । आघृणे । सुऽस्तुतिः । देव । नव्यसी । अस्माभिः । तुभ्यं । शस्यते ॥७॥

आघृणे आगतदीप्तिमन् हे पूषन् देव नव्यसी नवतरेयं सुष्टुतिः शोभनस्तुतिरूपा वाक् ते त्वत्संबंधिनी भवति । सैषा स्तुतिरस्माभिः स्तोतृभिस्तुभ्यं त्वदर्थं शस्यते । तां जुषस्वेत्युत्तरेणान्वयः ॥

तां जुषस्व गिरं मम वाजयंतीमवा धियं । वधूयुरिव योषणां ॥८॥

तां । जुषस्व । गिरं । मम । वाजऽयंतीं । अव । धियं । वधूयुःऽइव । योषणां ॥८॥

हे पूषन् स्तोत्रं कुर्वाणस्य मम तां तादृशीं गिरं स्तुतिलक्षणां वाचं जुषस्व । सेवस्व । स्तुत्या प्रीतस्त्वं वाजयंतीं वाजमन्नमिच्छंतीं हर्षकारिणीं धियमिमां स्तुतिं प्रत्यव । अभिगच्छ । तत्र दृष्टांतः । वधूयुरिव । यथा वधूयुः स्त्रीकामो योषणां स्त्रियं प्रत्यागच्छति तद्वत् ॥ वाजयंती । वाजशब्दादिच्छतीत्यर्थे क्यच् । तदंतात्कर्तरि ङीपि रूपं । ङीपोऽनुदात्तत्वे प्रत्ययस्वरः । अव । अव रक्षणादिष्वित्यस्य लोटि रूपं ॥

यो विश्वाभि विपश्यति भुवना सं च पश्यति । स नः पूषाविता भुवत् ॥९॥

यः । विश्वा । अभि । विऽपश्यति । भुवना । सं । च । पश्यति । सः । नः । पूषा । अविता । भुवत् ॥९॥

यः पूषा विश्वा भुवना सर्वांल्लोकानभि आभिमुख्येन विपश्यति विशेषेण पश्यति । किंच तानि सं पश्यति तत्तद्वस्तुयाथात्म्यं सम्यक् जानाति । स तादृशः पूषा देवो नोऽस्माकमविता रक्षको भुवत् । भवतु ॥ विपश्यति । यद्वृत्तयोगादनिघातः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । तिङि चोदात्तवतीति गतेर्निघातः । पश्यति । अत्र सकर्मकत्वात्परस्मैपदं । पूर्ववदनिघातः । भुवत् । भवतेर्लेट्यडागमः । भूसुवोस्तिङीति गुणप्रतिषेध उवङादेशः । निघातः ॥

दशरात्रस्य पंचमेऽहनि वैश्वदेवशस्त्रे तत्सवितुरिति द्वे ऋचौ प्रतिपत्तृचस्य द्वितीयातृतीये । सूत्रितं च । तत्सवितुर्वरेण्यमिति द्वे दोषो आगात । आ° ८ १ । इति ॥ अभिप्लवषडहयोर्द्वितीयेऽहनि वैश्वदेवशस्त्रे प्रतिपत्तृचस्येते एव प्रथमाद्वितीये । सूत्रितं च । तत्सवितुर्वरेण्यमिति द्वे आविश्वदेवं । आ° ७ ६ । इति ॥

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥१०॥

तत् । सवितुः । वरेण्यं । भर्गः । देवस्य । धीमहि । धियः । यः । नः । प्रऽचोदयात् ॥१०॥

यः सविता देवो नोऽस्माकं धियः कर्माणि धर्मादिविषया वा बुद्धीः प्रचोदयात् प्रेरयेत् तत्तस्य देवस्य सवितुः सर्वांतर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य वरेण्यं सर्वैरुपास्यतया ज्ञेयतया च संभजनीयं भर्गो ऽविद्यातत्कार्ययोर्भर्जनाद्भर्गः स्वयंज्योतिः परब्रह्मात्मकं तेजो धीमहि। वयं ध्यायामः। यद्वा। तदिति भर्गो-विशेषणं। सवितुर्देवस्य तत्तादृशं भर्गो धीमहि। किं तदित्यपेक्षायामाह। य इति लिंगव्यत्ययः। यद्भर्गो धियः प्रचोदयात्। तद्भार्ग्यमिति समन्वयः। यद्वा। यः सविता सूर्यो धियः कर्माणि प्रचोदयात् प्रेरयति तस्य सवितुः सर्वस्य प्रसवितुर्देवस्य द्योतमानस्य सूर्यस्य तत्सर्वैर्दृश्यमानतया प्रसिद्धं वरेण्यं सर्वैः संभजनीयं भर्गः पापानां तापकं तेजोमंडलं धीमहि। ध्येयतया मनसा धारयेम। यद्वा। भर्गःशब्देनान्नमभिधीयते। यः सविता देवो धियः प्रचोदयति तस्य प्रसादाद्भर्गोऽन्नादिलक्षणं फलं धीमहि। धारयामः। तस्याधारभूता भवेमेत्यर्थः। भर्गःशब्दस्यान्नपरत्वे धीशब्दस्य कर्मपरत्वे चाथर्वणं। वेदांश्छंदांसि सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः कर्माणि धियस्तदु ते प्रब्रवीमि प्रचोदयंत्सविता याभिरेतीति। गो० ब्रा० १. ३२.॥ भर्गः। भ्रस्ज पाके। असुन्। भ्रस्जो रोपधयो रमन्यतरस्यां। पा० ६. ४. ४७। इति रोपधयोर्लोपो रमागमः। न्यंक्वा-दिपाठात् कुत्वं। धीमहि। ध्यायतेर्लिङि बहुलं छंदसीति संप्रसारणं। व्यत्ययेनात्मनेपदं। यद्वा। धीङ् आधारे। लिङि बहुलं छंदसीति विकरणस्य लुक्। प्रचोदयात्। चोदयतेर्लेट्याडागमः। यद्वृत्तयोगादनि-घातः। आगमस्यानुदात्तत्वे णिचः स्वरः॥ ॥१०॥

देवस्य सवितुर्वयं वाजयंतः पुरंध्या। भगस्य रातिमीमहे ॥११॥

देवस्य। सवितुः। वयं। वाजऽयंतः। पुरंऽध्या। भगस्य। रातिं। ईमहे ॥११॥

वाजयंतो वाजमन्नमात्मन इच्छंतो वयं देवस्य द्योतमानस्य सवितुः पुरंध्या तद्विषयस्तुत्या प्रज्ञया वा भगस्य भजनीयस्य धनस्य रातिं दानमीमहे। याचामहे॥ रातिं। मंत्रे वृषेत्यादिना क्तिन उदात्तत्वं॥

देवं नरः सवितारं विप्रा यज्ञैः सुवृक्तिभिः। नमस्यंति धियेषिताः ॥१२॥

देवं। नरः। सवितारं। विप्राः। यज्ञैः। सुवृक्तिऽभिः। नमस्यंति। धिया। इषिताः ॥१२॥

नरः कर्मणां नेतारो विप्रा मेधाविनोऽध्वर्य्वादयो धियेषिताः कर्मणा बुद्ध्या वा प्रेर्यमाणाः संतः सवि-तारं देवं त्वा यज्ञैर्यजनीयैर्हविर्भिः सुवृक्तिभिः शोभनस्तोत्रैश्च नमस्यंति। परिचरंति॥ नमस्यंति। नमोवरिव-श्चित्रङः क्यजिति क्यच्॥

अग्नीषोमप्रणयने सोमो जिगातीत्याद्यास्तिस्र ऋचः। सूत्रितं च। सोमो जिगाति गातुविद्देवानां तमस्य राजा वरुणस्तमश्विनेत्यर्धर्चं आरमेत। आ० ४. १०.। इति॥

सोमो जिगाति गातुविद्देवानामेति निष्कृतं। ऋतस्य योनिमासदं ॥१३॥

सोमः। जिगाति। गातुऽवित्। देवानां। एति। निःऽकृतं। ऋतस्य। योनिं। आऽसदं ॥१३॥

गातुवित्। गातुर्वेदिमार्गः। तं जानानः सोमो जिगाति। गच्छति। गंतव्यं स्थानं दर्शयति। देवानां संबंधि निष्कृतं संस्कृतमासदं सर्वैरासदनीयमृतस्य यज्ञस्य योनिं स्थानं हविर्धानाख्यमेति। प्राप्नोति॥ जि-गाति। गा स्तुतौ। जुहोत्यादिः॥

सोमो अस्मभ्यं द्विपदे चतुष्पदे च पशवे। अनमीवा इषस्करत् ॥१४॥

सोमः। अस्मभ्यं। द्विऽपदे। चतुःऽपदे। च। पशवे। अनमीवाः। इषः। करत् ॥१४॥

सोमः स्तोतृभ्योऽस्मभ्यं तथा द्विपदेऽस्मदीयाभ्यो द्विपाद्भ्यः प्रजाभ्यश्चतुष्पदे पशवे चतुष्पाद्भ्यो गवादिपशु-भ्यश्चानमीवा रोगवर्जितानीषोऽन्नानि करत्। करोतु॥ चतुष्पदे। भसंज्ञायां पादस्य पद्भावः। इसुसोः सामर्थ्ये इति संहितायां सत्वं। आदेशप्रत्यययोरिति षत्वं। बहुव्रीहौ पूर्वपदस्वरः। करत्। करोतेर्लेट्यडागमः। इष-स्करादित्यत्र संहितायां कःकरत्करतीत्यादिना सत्वं॥

अस्माकमायुर्वर्धयन्नभिमातीः सहमानः । सोमः सधस्थमासदत् ॥ १५ ॥

अस्माकं । आयुः । वर्धयन् । अभिऽमातीः । सहमानः । सोमः । सधऽस्थं । आ । असदत् ॥ १५ ॥

स सोमो देवोऽस्माकमायुरन्नं जीवनं वा वर्धयन्वृद्धिं प्रापयन्नभिमातीः कर्मविघ्नकारिणः शत्रून् सहमानोऽभिभवन्नस्माकं सधस्थं हविर्धानाख्यं स्थानमासदत् । आसीदतु ॥ असदत । सदेर्लेटि रूपं । निघातः ॥

अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्र आ नो मित्रावरुणेति स्तोत्रियस्तृचः । सूत्रितं च । आ नो मित्रावरुणा नो गंतं रिशादसा । आ० ५. १०. । इति ॥ चतुर्विंशेऽहनि प्रातःसवने मैत्रावरुणशस्त्र आ नो मित्रावरुणेति षडहस्तोत्रियसंज्ञकस्तृचः । सूत्रितं च । आ नो मित्रावरुणा मित्रं वय हवामहे । आ० ७ २ । इति ॥ सोमवृद्धावयमेव तृच आवापार्थः । सूत्रितं च । आ नो मित्रावरुणेति तृचौ । आ० ७ ५ । इति ॥ दाक्षायणे यज्ञे द्वे अमावास्ये कर्तव्ये । तत्रोत्तरस्याममावास्यायां द्वितीयेऽहनि मैत्रावरुण आ नो मित्रावरुणेति तस्यानुवाक्या । सूत्रितं च । आ नो मित्रावरुणा यद्वांहिष्ठ नातिविधे सुदानू । आ० २ १४ । इति ॥

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतं । मध्वा रजांसि सुक्रतू ॥ १६ ॥

आ । नः । मित्रावरुणा । घृतैः । गव्यूतिं । उक्षतं । मध्वा । रजांसि । सुक्रतू इति सुऽक्रतू ॥ १६ ॥

सुक्रतू शोभनकर्माणौ हे मित्रावरुणौ नोऽस्माकं गव्यूतिं गवां मार्गं गोनिवासस्थानं घृतैः क्षरणसाधनैः पयोभिरोक्षतं । समंतात्सिंचतं । अस्मभ्यं दोग्ध्रीर्गाः प्रयच्छतमिति भावः । रजांस्यस्मदावासस्थानानि मध्वा मधुररसेन सिंचतं ॥ गव्यूति । गोर्यूतौ छंदसीति वातादेशः । मध्वा । सर्वविधीनां छंदसि विकल्पितत्वाद्नुमागमाभावः ॥

उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः । द्राघिष्ठाभिः शुचिव्रता ॥ १७ ॥

उरुऽशंसा । नमःऽवृधा । मह्ना । दक्षस्य । राजथः । द्राघिष्ठाभिः । शुचिऽव्रता ॥ १७ ॥

शुचिव्रता परिशुद्धकर्माणौ हे मित्रावरुणावुरुशंसा उरुभिर्बहुभिः शंसनीयौ । यद्वा । उरु महच्छंसः शस्त्रं ययोस्तौ । नमोवृधा नमसा हविर्लक्षणेनान्नेन स्तोत्रेण वा वर्धमानौ द्राघिष्ठाभिरत्यंतं दीर्घस्तुतिलक्षणाभिर्वाग्भिर्युक्तौ युवां दक्षस्य । दक्ष धनं बलं वा । तस्य मह्ना महत्त्वेन राजथः । ईशाथे ॥ उरुशंसा । शंसु स्तुतौ । कर्मणि घञ् । ञित्स्वरः । द्राघिष्ठाभिः । दीर्घशब्दादिष्ठनि प्रियस्थिरेत्यादिना द्राघीत्यादेशः । नित्त्वादाद्युदात्तः ॥

मैत्रावरुणस्य ग्रहस्य याज्या गृणाना जमदग्निनेत्येषा । सूत्रितं च । होता यक्षन्मित्रावरुणा गृणाना जमदग्निना । आ० ५. ५. । इति ॥ अध्यायोपाकरणे मंडलादौतहोमे गृणाना जमदग्निनेत्येषा । आ० गृ० ३ ५ ॥

गृणाना जमदग्निना योनावृतस्य सीदतं । पातं सोममृतावृधा ॥ १८ ॥

गृणाना । जमत्ऽअग्निना । योनौ । ऋतस्य । सीदतं । पातं । सोमं । ऋतऽवृधा ॥ १८ ॥

हे मित्रावरुणौ जमदग्निनैतन्नामकेन महर्षिणा गृणाना स्तूयमानौ यद्वा । जमदग्निना प्रज्वलिताग्निना विश्वामित्रेण स्तूयमानौ युवामृतस्य यज्ञस्य योनौ देवयजनाख्ये देशे सीदतं । उपविशतं । ऋतावृधा ऋतस्य कर्मफलस्य वर्धयितारौ युवां सोमं पातं । पिबतं ॥ गृणाना । गॄ शब्दे । व्यत्ययेन कर्मणि शानच् । चित्त्वादंतोदात्तः । सीदतं । सदेर्लोटि पाघ्रेत्यादिना सीदादेशः । पातं । पा पाने । बहुलं छंदसीति शपो लुक् ॥ ॥ ११ ॥

॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तृतीयाष्टके तृतीये मंडले पंचमोऽनुवाकः समाप्तं च तृतीयं मंडलं ॥

## ॥ अथ चतुर्थं मंडलं ॥

वामदेव्ये चतुर्थे मंडले पंचानुवाकाः । तत्र प्रथमेऽनुवाके दश सूक्तानि । तेषु त्वां ह्यग्ने सदमिदिति विंशत्यृचं प्रथमं सूक्तं । अत्रेयमनुक्रमणिका । त्वां ह्यग्ने विंशतिरष्टयतिजगतीधृतय आद्या उपाद्याश्चतस्रो वारुण्यश्च वेति । मंडलद्रष्टा वामदेव ऋषिः । प्रथमा चतुःपष्ट्यक्षराष्टिर्द्वितीया द्विपंचाशदक्षरातिजगती तृतीया द्विसप्तत्यक्षरा धृतिश्चतुर्थ्याद्या अनादेशपरिभाषया सप्तदश त्रिष्टुभः । कृत्स्नस्य सूक्तस्य मंडलादिष्वाग्नेयमिति परिभाषयाग्निर्देवता द्वितीयाद्याश्चतस्रो वरुणदेवत्या वा ॥ सूक्तविनियोगो लैंगिकः ॥ आद्याध्यायोपाकरणे मंडलादिहोमे विनियुक्ता ॥

त्वां ह्यग्ने सदमित्समन्यवो देवासो देवमरतिं न्येरिर इति क्रत्वा न्येरिरे ।
अमर्त्यं यजत मर्त्येष्वा देवमादेवं जनत प्रचेतसं विश्वमादेवं जनत प्रचेतसं ॥१॥

त्वां । हि । अग्ने । सदं । इत् । सऽमन्यवः । देवासः । देवं । अरतिं । निऽएरिरे । इति । क्रत्वा । निऽएरिरे ।
अमर्त्यं । यजत । मर्त्येषु । आ । देवं । आऽदेवं । जनत । प्रऽचेतसं । विश्वं । आऽदेवं । जनत । प्रऽचेतसं ॥१॥

वामदेवः स्तौति । हे अग्ने समन्यवः । मन्युः स्पर्धा । तया सह वर्तमानाः । स्वसमानैः स्पर्धमाना इत्यर्थः । देवासो देवनशीला इंद्रादयो देवा देवं द्योतमानमरतिं शीघ्रं गंतारं त्वां सदमित्सदैव न्येरिरे हि । स्पर्धानिमित्तं युद्धं प्रेरयंति खलु । इतिशब्दो हेत्वर्थः । यस्माद्देवास्त्वा युद्धार्थं नितरां प्रेरयंति तस्माद्यजमाना. क्रत्वा स्तुतिलक्षणेन कर्मणा न्येरिरे । यज्ञकर्मणि देवान्हविः प्रापयितुं देवानाह्वातुं च त्वा नितरां प्रेरयंति खलु । यजत यजनीय हे अग्ने अमर्त्यं मरणधर्मरहितमा सर्वतो देवं द्योतमानं प्रचेतसं । प्रकृष्टं कर्मविषयं चेतो ज्ञानं यस्य तादृशं त्वां मर्त्येषु यागं कुर्वाणेषु मनुष्येष्वादेवमागंतारं जनत । देवा हविःप्रापणार्थमजनयन् । तथा प्रचेतसं कर्माभिज्ञमादेवं तत्तद्यज्ञेष्वागंतारं त्वां विश्वं जनत । युगपन्नानादेशवर्तिषु यज्ञेषु यौगपद्येन हविरानयनार्थं व्याप्तं देवा अकुर्वन् ॥ न्येरिरे । ईर गतौ । लिटि सत्वादाम्न भवति । समेति योगविभागात्समासः । हियोगादनिघातः । क्रत्वा । जसादिषु छंदसि वावचनमिति नादेशाभावः । यणादेशः ॥

स भ्रातरं वरुणमग्न आ ववृत्स्व देवाँ अच्छा सुमती यज्ञवनसं ज्येष्ठं यज्ञवनसं ।
ऋतावानमादित्यं चर्षणीधृतं राजानं चर्षणीधृतं ॥२॥

सः । भ्रातरं । वरुणं । अग्ने । आ । ववृत्स्व । देवान् । अच्छ । सुऽमती । यज्ञऽवनसं । ज्येष्ठं । यज्ञऽवनसं ।
ऋतऽवानं । आदित्यं । चर्षणिऽधृतं । राजानं । चर्षणिऽधृतं ॥२॥

हे अग्ने स तादृशस्त्वं भ्रातरमेकस्थानवासेन भ्रातरं वरुणं । वृणोत्युदकमिति वरुणः । तं देवं यज्ञवनसं यज्ञैर्वननीयैर्हविर्भिः संभजनीयं यज्ञवनसं च यज्ञस्य संभक्तारं ज्येष्ठमतिशयेन प्रशस्यमृतावानमपां स्वामिनं यद्वोदकवंतं सत्यवंतं वा आदित्यमदितेः पुत्रं चर्षणीधृतं मनुष्याणामुदकप्रदानेन धारकं सुमती शोभनबुद्ध्या हेतुना चर्षणीधृतं चर्षणिभिर्विद्वद्भिर्धृतं राजानं राजंतं एतादृशं वरुणं देवं देवान् देवनशीलान् स्तोतृन्नच्छाभि वववृत्स्व । आवर्तय । अभिमुखीकुरु ॥ ववृत्स्व । वृतु वर्तने । लोटि बहुलं छंदसीति विकरणस्य श्लुः ।

निघातः। सुमती। मंत्रे वृषेष्यादिना क्तिन्नुदात्तः। सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घः। एकादेशस्वरः। यजिष्ठं। प्रशस्यस्येष्ठनि ज्य चेति ज्यादेशः। नित्त्वादाद्युदात्तः। एकादेशस्वरः। वनवनसं। वन षण संभक्तौ। कर्मकर्तरि चासुन्प्रत्ययः। गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेति पूर्वपदस्वरः॥

प्रवर्ग्येऽभिष्टव उत्तरस्मिन्पटले सखे सखायमित्येषा। सूत्रितं च। सखे सखायमभ्या ववृत्स्वोर्ध्व ऊ षु ण ऊतये। आ° ४. ७। इति॥

सखे सखायमभ्या ववृत्स्वाशुं न चक्रं रथ्येव रंह्यास्मभ्यं दस्म रंह्या।
अग्ने मृळीकं वरुणे सचा विदो मरुत्सु विश्वभानुषु।
तोकाय तुजे शुशुचान शं कृध्यस्मभ्यं दस्म शं कृधि ॥३॥

सखे। सखायं। अभि। आ। ववृत्स्व। आशुं। न। चक्रं। रथ्याऽइव। रंह्या। अस्मभ्यं। दस्म। रंह्या।
अग्ने। मृळीकं। वरुणे। सचा। विदः। मरुत्ऽसु। विश्वऽभानुषु।
तोकाय। तुजे। शुशुचान। शं। कृधि। अस्मभ्यं। दस्म। शं। कृधि ॥३॥

सखे सखिभूत दस्म दर्शनीय हे अग्ने त्वं तव सखायं वरुणमस्मानस्मदर्थमा ववृत्स्व। अभिमुखीकुरु। तत्र दृष्टांतः। रंह्या रंहणं गमनं साधुभूतौ रथ्येव रथं योजितावश्वौ यथाशु शीघ्रगतं चक्रं लक्ष्यदेशं प्रत्यभिमुखी कुरुतस्तद्वत्। हे अग्ने सचा तव सहाये वरुणे मृळीकं सुखकरं हविर्विदः। लब्धवानसि। तथा विश्वभानुषु सर्वतो व्याप्ततेजस्केषु मरुत्सु सुखकरं लब्धवानसि। आग्निवारुणाग्निमारुतयोः कर्मणोरिष्टवानसीत्यर्थः। शुशुचान दीप्यमान हे अग्ने तोकाय। तुद्यते पीड्यतेऽनेन माता गर्भवासेनेति तोकं पुत्रः। तस्मै तुजे। गर्भात्मनेनानृण्यं पितेति तुक् पौत्रः। तस्मै शं सुखं कृधि। कुरु। दस्म दर्शनीय हे अग्ने अस्मभ्यं शं कृधि। सुखं कुरु॥ रथ्येव। रथस्येमावित्यर्थे रथाद्यदिति यत्। सुपां सुलुगिति सुपो डादेशः। रंह्या। रंहशब्दात्तत्र साधुरिति यत्प्रत्ययः। यतोऽनाव इत्याद्युदात्तत्वं॥

त्वं नो अग्न इत्येतदारभ्येदं सूक्तमुत्तराणि सूक्तानि च प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे च विनियुक्तानि। सूत्रितं च। त्वं नो अग्ने वरुणस्य विद्वानित्येतत्प्रभृतीनि चत्वारि। आ° ४. १३। इति॥ अवभृथेष्ट्यां स्विष्टकृदर्थेऽग्नीवरुणयोर्यष्ट्यौ। तत्र त्वं नो अग्न इति द्वे याज्यानुवाक्ये। सूत्रितं च। अग्नीवरुणौ स्विष्टकृदर्थे त्वं नो अग्ने वरुणस्य विद्वानिति द्वे। आ° ६. १३। इति॥ अस्मातो यद्यग्निहोत्रं जुहुयात्तदाग्निवारुणीष्टिः। तस्यामेते एव याज्यानुवाक्ये। तदाहुर्य आहिताग्निरित्युपक्रम्याम्नातं। तस्य याज्यानुवाक्ये त्वं नो अग्ने वरुणस्य विद्वान्त्स त्वं नो अग्नेऽवमो भवोती। ऐ° ब्रा° ७. ९। इति॥

त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेळोऽव यासिसीष्ठाः।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् ॥४॥

त्वं। नः। अग्ने। वरुणस्य। विद्वान्। देवस्य। हेळः। अव। यासिसीष्ठाः।
यजिष्ठः। वह्निऽतमः। शोशुचानः। विश्वा। द्वेषांसि। प्र। मुमुग्धि। अस्मत् ॥४॥

हे अग्ने विद्वान् सर्वपुरुषार्थसाधनोपायज्ञस्त्वं देवस्य द्योतमानस्य वरुणस्य हेळः क्रोधान् नोऽस्मत्सकाशाद्वरुणकर्तृकान्पाशग्रहणानव यासिसीष्ठाः। अपनय। किंच यजिष्ठो यष्टृतमो वह्नितमो हविषामतिशयेन वोढा शोशुचानोऽतिशयेन दीप्यमानस्त्वं विश्वा सर्वाणि द्वेषांसि पापानि द्वेष्टॄणि रजांसि वा अस्मदस्मत्तः प्र मुमुग्धि। प्रकर्षेण मोचय॥ हेळः। हेडृ अनादरे। क्विप्। शसि रूपं। शसः सुप्त्वादनुदात्तत्वे धातुस्वरः। यासिसीष्ठाः। यमेर्ण्यन्ताद्दाशीर्लिङि। यासि सीयुडागमः। छंदस्युभयथेति लिङः सार्वधातुकत्वाण्णिलोपाभावः। अवपूर्वो यासिर्विनाशे वर्तते। मुमुग्धि। मुंचतेर्लोटि रूपं। बहुलं छंदसीति शपः श्लुः॥

स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ।
अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि ॥५॥
सः। त्वं। नः। अग्ने। अवमः। भव। ऊती। नेदिष्ठः। अस्याः। उषसः। विऽउष्टौ।
अव। यक्ष्व। नः। वरुणं। रराणः। वीहि। मृळीकं। सुऽहवः। नः। एधि ॥५॥

हे अग्ने स तादृशस्त्वमूती ऊत्या रक्षणेन नोऽस्माकमवमोऽर्वाचीनः प्रत्यासन्नः सन् अस्या उषसो व्युष्टौ व्युच्छने प्रातःकालेऽग्निहोत्रादिकर्मसिद्ध्यर्थं नेदिष्ठो भव। अतिशयेनास्मदंतिकस्थो भव। यद्वा। ऊत्या गमनेनास्माकमवमो रक्षको भव। किंच नोऽस्माकं वरुणं वरुणकृतं जलोदरादिरोगं आवारकं पापं वा अव यक्ष्व। अवयज। विनाशयेत्यर्थः। रराणोऽस्मद्दत्ते हविषि रममाणः। यद्वा। यजमानेभ्योऽत्यंतमीप्सितफलप्रदस्त्वं मृळीकं सुखकरमिदं हविर्वीहि। भक्षय। किंच नोऽस्माकं सुहवः शोभनाह्वानोपेत एधि। भव॥ नेदिष्ठः। अंतिकशब्दादिष्ठन्यंतिकबाढयोर्नेदसाधाविति नेद इत्यादेशः। नित्त्वादाद्युदात्तः। रराणः। रमतेः कानचि मकारलोपश्छांदसः। यद्वा। रातेर्यङ्लुकि व्यत्ययेन कानच्। अभ्यस्तानामादिः। एधि। अस्तेर्लोटि घ्वसोरेद्धावभ्यासलोपश्चेति ए इत्यादेशः। तस्यासिद्धत्वाद्धुझल्भ्यो हेर्धिः। निघातः॥ ॥१२॥

अस्य श्रेष्ठा सुभगस्य संदृग्देवस्य चित्रतमा मर्त्येषु।
शुचि घृतं न तप्तमघ्न्यायाः स्पार्हा देवस्य मंहनेव धेनोः ॥६॥
अस्य। श्रेष्ठा। सुऽभगस्य। संऽदृक्। देवस्य। चित्रऽतमा। मर्त्येषु।
शुचि। घृतं। न। तप्तं। अघ्न्यायाः। स्पार्हा। देवस्य। मंहनाऽइव। धेनोः ॥६॥

सुभगस्य सुधनस्य सुष्ठु भजनीयस्याग्नेर्देवस्य श्रेष्ठातिशयेन प्रशस्या संदृक् संदृष्टिर्मर्त्येषु चित्रतमातिशयेन चायनीया पूजनीया भवति। स्पार्हा सर्वैः स्पृहणीया भवति। तत्र दृष्टांतः। यथा देवस्य क्षीरं कामयमानस्य पुरुषस्याघ्न्याया अहंतव्याया गोः शुचि तेजोयुक्तं घृतं क्षरणयुक्तं तप्तं क्षीरं स्पृहणीयं भवति। तत्रैव दृष्टांतांतरं। यथा गां भिक्षमाणस्य मर्त्यस्य धेनोर्दोग्ध्र्या गोर्मंहनेव। मंहतिर्दानकर्मा। दानं यथा प्रियकरं भवति तद्वत्॥ सुभगस्य। आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। स्पार्हा। कर्षात्वतो घञोऽंत उदात्तः। देवस्य। दीव्यतीति देवः। दीव्यतेः कांत्यर्थस्य पचाद्यचि रूपं॥

त्रिरस्य ता परमा संति सत्या स्पार्हा देवस्य जनिमान्यग्नेः।
अनंते अंतः परिवीत आगाच्छुचिः शुक्रो अर्यो रोरुचानः ॥७॥
त्रिः। अस्य। ता। परमा। संति। सत्या। स्पार्हा। देवस्य। जनिमानि। अग्नेः।
अनंते। अंतरिति। परिऽवीतः। आ। अगात्। शुचिः। शुक्रः। अर्यः। रोरुचानः ॥७॥

अग्नेरग्न्यभिमानिनोऽस्य देवस्य त्रिस्त्रीण्यग्निवायुसूर्यात्मना त्रीणि ता तानि प्रसिद्धानि परमोत्तमानि सत्या यथार्थभूतानि जनिमानि जन्मानि स्पार्हा सर्वैः स्पृहणीयानि संति। यद्वा। अग्नेरेव त्रीणि जन्मानि दिवस्परि प्रथमं जज्ञे अग्निः। ऋग्वे० १०. ४५. १। इति त्रीणि जाना परि भूषंत्यस्य। ऋग्वे० १. ९५. ३.। इत्येवमादिषु मंत्रेषु प्रसिद्धानि। अनंतेऽपर्यंते नभस्यंतर्मध्ये स्वतेजसा परिवीतः परिवेष्टितः शुचिः सर्वस्य शोधकः शुक्रो दीप्तियुक्तोऽत एव रोरुचानो भृशं दीप्यमानोऽर्यः स्वामी तादृशो देव आगात्। अस्मदीयं यज्ञं प्रत्यागच्छतु॥ सत्या। शेश्छंदसि बहुलमिति शेर्लुक्। परिवीतः। व्येञ् संवरणे। कर्मणि क्तः। यजादित्वात्संप्रसारणं। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। अर्यः। ऋ गतौ। अर्यः स्वामिवैश्ययोरिति यत्प्रत्ययांतो निपातितः। स्वामिन्यंतोदात्तत्वं वक्तव्यमित्यंतोदात्तत्वं॥

स दूतो विश्वेदभि वष्टि सद्मा होता हिरण्यरथो रंसुजिह्वः ।
रोहिदश्वो वपुष्यो विभावा सदा रण्वः पितुमतीव संसत् ॥८॥
सः । दूतः । विश्वा । इत् । अभि । वष्टि । सद्म । होता । हिरण्यऽरथः । रंऽसुजिह्वः ।
रोहित्ऽअश्वः । वपुष्यः । विभाऽवा । सदा । रण्वः । पितुमतीऽइव । संऽसत् ॥८॥

देवानां दूतो होता देवानामाह्वाता हिरण्यरथः सुवर्णमयरथोपेतो रंसुजिह्वो रमणीयशोभनज्वालोपेतः स तादृशोऽग्निर्विश्वेत सर्वाण्येव सद्म देवयजनस्थानान्यभि वष्टि । कामयते । पुनश्च कीदृशः । रोहिदश्वः । रोहितवर्णा अश्वा यस्य स तथोक्तः । वपुष्यो वपुषि रूपे साधुर्विभावा कांतियुक्तोऽत एव सदा रण्वो रमणीयो भवति । तत्र दृष्टांतः । पितुमतीव संसत् । यथान्नादिवत्समृद्धं गृहं रमणीयं तद्वत् ॥ रंसुजिह्वः । रमतेरन्येभ्योऽपि दृश्यत इति विच् । बहुव्रीहौ पूर्वपदस्वरः । वपुष्यः । तत्र साधुरिति यत् । तित्स्वरितः । विभावा । छंदसीवनिपाविति वनिप् ॥

स चेतयन्मनुषो यज्ञबंधुः प्र तं मह्या रशनया नयंति ।
स क्षेत्यस्य दुर्यासु साधन्देवो मर्तस्य सधनित्वमाप ॥९॥
सः । चेतयत् । मनुषः । यज्ञऽबंधुः । प्र । तं । मह्या । रशनया । नयंति ।
सः । क्षेति । अस्य । दुर्यासु । साधन् । देवः । मर्तस्य । सधनिऽत्वं । आप ॥९॥

यज्ञबंधुः । यज्ञेऽग्निहोत्रादौ बंधनं विनियोजनं यस्य स तथोक्तः । सोऽग्निर्मनुषः कर्मणि प्रवृत्तान्मनुष्यान् चेतयत् । जानाति । मह्या महत्या रशनया स्तुतिरूपया रज्ज्वा युक्तं तं तादृशमग्निं प्रणयंति । उत्तरवेद्यादिष्वध्वर्य्वादयः प्रतिपादयंति । मर्तस्य मनुष्यस्यास्य यजमानस्य दुर्यासु गृहेषु साधन् अभीष्टानि साधयन् सोऽग्निः क्षेति । वसति । स देवो द्योतमानोऽग्निः सधनित्वं यस्य गृहे निवसति तेन धनिना साहित्यमाप । प्राप्नोति । प्रभूतं धनं यजमानाय दापयित्वा तेन सहितोऽभवदित्यर्थः ॥ साधन् । राध साध संसिद्धौ । एतस्य शतरि रूपं ॥

स तू नो अग्निर्नयतु प्रजानन्नच्छा रत्नं देवभक्तं यदस्य ।
धिया यद्विश्वे अमृता अकृण्वन्द्यौष्पिता जनिता सत्यमुक्षन् ॥१०॥
सः । तु । नः । अग्निः । नयतु । प्रऽजानन् । अच्छ । रत्नं । देवऽभक्तं । यत् । अस्य ।
धिया । यत् । विश्वे । अमृताः । अकृण्वन् । द्यौः । पिता । जनिता । सत्यं । उक्षन् ॥१०॥

प्रजानन् सर्वं जानानः सोऽग्निर्देवभक्तं देवैर्देवनशीलैः स्तोतृभिः संभजनीयमस्याग्नेः सकाशाद्यदुत्तमं रत्नं धनमस्ति तद्रत्नमच्छाभिमुख्येन तु क्षिप्रं नोऽस्मान्नयतु । प्रापयतु । अमृता मरणधर्मरहिता विश्वे सर्वे देवा धिया हविर्वहनलक्षणेन कर्मणा हेतुना यद्यमग्निमकृण्वन् हविषां प्रापयितारमकुर्वन् । यस्य चाग्नेर्द्यौः पिता पालयित्री जनिता जनयित्री च । अग्ने दिवः सूनुरसि प्रचेताः । ऋग्वे° ३ २५ १ । इति श्रवणात् । यद्वा । द्यौर्देवनशील आदित्यः पिता जनयिता च । आदित्यादग्निरित्याम्नानात् । सत्यं यथार्थभूतं तमग्निमुक्षन् । घृताद्याहुतिभिरध्वर्य्वादयः सिंचति ॥ देवभक्तं । भज सेवायां । कर्मणि क्तः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः । उक्षन् । उक्ष सेचने । लङि रूपं । बहुलं छंदसीत्यडभावः ॥ ॥१३॥

स जायत प्रथमः पस्त्यासु महो बुध्ने रजसो अस्य योनौ ।
अपादशीर्षा गुहमानो अंतायोयुवानो वृषभस्य नीळे ॥११॥

सः । जायत । प्रथमः । पस्त्यासु । महः । बुध्ने । रजसः । अस्य । योनौ ।
अपात् । अशीर्षा । गुहमानः । अंता । आऽयोयुवानः । वृषभस्य । नीळे ॥११॥

सोऽग्निः प्रथम आहवनीयादिरूपतया श्रेष्ठः सन् पस्त्यासु यजमानानां गृहेषु जायत । आहुत्यधिकरणतया संपद्यते । तथा महो महतोऽस्य रजसोऽंतरिक्षस्य बुध्ने मूले पृथिव्यां तत्रापि योनावुत्तरवेद्यादिस्थाने सपद्यते । सोऽग्निरपात्पादवर्जितोऽशीर्षा शिरोवर्जितः । तदेवाह । अंतावंते पादशिरसी गूहमानो गूहमानः । अविज्ञेयपादशिरा इत्यर्थः । वृषभस्य वर्षणसमर्थस्य मेघस्य नीळे निलये नभस्यायोयुवानो धूमाकारेणात्मानमायोजयन्वर्तते । यद्वा । यः प्रथमो वैद्युतोऽग्निः पस्त्यासु नदीषु बुध्नेऽंतरिक्षे महो महतो रजस उदकस्य तेजसो वा योनौ स्थाने च चरति । अपादशीर्षा पादशिरोवर्जितोऽतात्मनः पर्यंतप्रदेशान्स्वतेजसा गूहमान आच्छादयन पुनश्चायोयुवानस्तानि तेजांसि स्वात्मनि मिश्रीकुर्वन्वृषभस्य मेघस्य नीळे स्थाने नभसि चरति सोऽग्निरधुना कर्मयोग्यतयाजायत ॥ अपात । पादस्य लोपोऽहस्त्यादिभ्य इत्यकारलोपः समासांतः । गुहमानः । गुह संवरणे । शविकरणो । शानचि रूपं । शानचो लसार्वधातुकस्वरे कृते प्रत्ययस्वरः । आयोयुवानः । यु मिश्रणे । यङ्लुकि शानचि रूपं । अभ्यस्तस्वरेणाद्युदात्तः ॥

प्र शर्ध आर्त प्रथमं विपन्यँ ऋतस्य योना वृषभस्य नीळे ।
स्पार्हो युवा वपुष्यो विभावा सप्त प्रियासोऽजनयंत वृष्णे ॥१२॥

प्र । शर्धः । आर्त । प्रथमं । विपन्या । ऋतस्य । योना । वृषभस्य । नीळे ।
स्पार्हः । युवा । वपुष्यः । विभाऽवा । सप्त । प्रियासः । अजनयंत । वृष्णे ॥१२॥

हे अग्ने विपन्या स्तुत्या युक्तमृतस्योदकस्य योनौ स्थाने वृषभस्य वर्षणसमर्थस्य मेघस्य नीळे कुलायभूतेंऽतरिक्षे वैद्युताग्निरूपेण वर्तमानं त्वां शर्धस्तेजः प्रथमं प्रार्त । प्रकर्षेण गच्छति । यश्चाग्निः स्पार्हः सर्वैः स्पृहणीयो युवा नित्यतरुणो वपुष्यः कमनीयो विभावा दीप्तिमान तस्मै वृष्णेऽभिमतफलवर्षकायाग्नये प्रियासः प्रियाः सप्त होत्रका अजनयत । स्तोत्रमकुर्वन ॥ आर्त । ऋ गतौ । लङि व्यत्ययेनात्मनेपदं । निघातः । विपन्या । पन स्तुत्यर्थस्तत्प्रत्ययः । कृदिकारादक्तिन इति ङीप् । प्रत्ययस्वरेणांतोदात्तः । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं । विपन्यँ ऋतस्येत्यत्र संहितायामिकोऽसवर्णे शाकल्यस्य ह्रस्वश्च । पा० ६. १. १२७ । इत्यनिकोऽपि ह्रस्वोऽनुनासिकश्च ॥

अस्माकमत्र पितरो मनुष्या अभि प्र सेदुर्ऋतमाशुषाणाः ।
अश्मव्रजाः सुदुघा वव्रे अंतरुदुस्रा आजन्नुषसो हुवानाः ॥१३॥

अस्माकं । अत्र । पितरः । मनुष्याः । अभि । प्र । सेदुः । ऋतं । आशुषाणाः ।
अश्मऽव्रजाः । सुऽदुघाः । वव्रे । अंतः । उत् । उस्राः । आजन । उषसः । हुवानाः ॥१३॥

अत्र लोके पूर्वे मनुष्या अस्माकं पितरोऽंगिरस ऋतं यज्ञमाशुषाणा अश्नुवानाः संतोऽभि प्र सेदुः । अग्निमभिलक्ष्य प्रजग्मुः । तेऽगिरसोऽग्निपरिचर्याबलादश्मव्रजाः पर्वतैः परिवृता वव्रे । वृणोत्याच्छादयतीति वव्रं पर्वतबिलांतर्वर्ति तमः । तस्मिन्नंतर्मध्ये स्थिताः सुदुघाः सुष्ठु दोग्ध्रीरुस्राः पणिभिरपहृता गा उदाजन । तस्माद्बिलान्निरगमयन । किं कुर्वतः । तमसो विध्वंसिनीरुषसो देवीः प्रकाशार्थं हुवाना आह्वयंतः ॥ वव्रे । वृणोतेरौणादिकः कः । हुआदीनां द्वे भवत इति द्विर्वचनं ॥

ते मर्मृजत ददृवांसो अद्रिं तदेषामन्ये अभितो वि वोचन् ।
पश्वयंत्रासो अभि कारमर्चन्विदंत ज्योतिश्चकृपंत धीभिः ॥१४॥

ते। मर्मृजत। ददृऽवांसः। अद्रिं। तत्। एषां। अन्ये। अभितः। वि। वोचन्।
पश्वऽयंत्रासः। अभि। कारं। अर्चन्। विदंत। ज्योतिः। चकृपंत। धीभिः ॥१४॥

तेऽङ्गिरसोऽद्रिं पणिभिरपहृतानां गवां निरोधकं पर्वतं ददृवांसो विदारयंतः संतो मर्मृजत। अपि पर्यचरन्। एषामंगिरसां तत्तादृशं कर्मान्ये महर्षयोऽभितः सर्वत्र जगति वि वोचन्। विशेषेणाकथयन्। पश्वयंत्रासः पशुनिर्गमनार्थानि यंत्राण्युपाया येषां तेऽङ्गिरसः कारमभिमतस्य प्रयोजनस्य कर्तारमग्निमभ्यर्चन्। अस्तुवन्। ततस्तमोपहमादित्याख्यं ज्योतिर्विदंत। अलभत। ततो धीभिर्बुद्धिभिश्चकृपंत। यज्ञानकल्पयन्। कुर्वन् ॥ मर्मृजत। मृजूष् शुद्धौ। यङ्लुकि लङि व्यत्ययेनात्मनेपदं। निघातः। चकृपंत। कृपू सामर्थ्ये। ण्यंतस्य लुङि चङि सन्वद्भावाभावश्छांदसः ॥

ते गव्यता मनसा दृध्रमुब्धं गा येमानं परि षंतमद्रिं।
दृळ्हं नरो वचसा दैव्येन व्रजं गोमंतमुशिजो वि वव्रुः ॥१५॥

ते। गव्यता। मनसा। दृध्रं। उब्धं। गाः। येमानं। परि। संतं। अद्रिं।
दृळ्हं। नरः। वचसा। दैव्येन। व्रजं। गोऽमंतं। उशिजः। वि। वव्रुरिति वव्रुः ॥१५॥

नरः कर्मणां नेतार उशिजोऽग्निं कामयमानास्तेऽङ्गिरसो गव्यता गा इच्छता मनसा दृध्रं गवां निर्गमनद्वारनिरोधकमुब्धं समुब्धं संहतं। यद्वा। उभिः पूरणार्थः। गोभिः पूर्णं गा येमानं नियच्छंतं परि सर्वतः संतं वर्तमानं दृळ्हं दृढं गोमंतं गोभिर्युक्तं व्रजं गवां निवासस्थानमद्रिं पर्वतं दैव्येनाग्निविषयेण वचसा वेदात्मकेन स्तोत्रेण वि वव्रुः। गोनिर्गमनार्थमुद्घाटितवंतः ॥ उब्धं। उब्जिर्हिंसने समानार्थः। यद्वा। उभ उम्भ पूरणे। कर्मणि क्तः। येमानं। यमः कानच्चेत्वाभ्यासलोपौ। चित्वादंतोदात्तः। परि षंतमित्यत्र सनितायामुपसर्गात्सुनोतीत्यादिना षत्वं। ... इति षत्वं ॥ ॥१४॥

ते मन्वत प्रथमं नाम धेनोस्त्रिः सप्त मातुः परमाणि विंदन्।
तज्जानतीरभ्यनूषत व्रा आविर्भुवदरुणीर्यशसा गोः ॥१६॥

ते। मन्वत। प्रथमं। नाम। धेनोः। त्रिः। सप्त। मातुः। परमाणि। विंदन्।
तत्। जानतीः। अभि। अनूषत। व्राः। आविः। भुवत्। अरुणीः। यशसा। गोः ॥१६॥

हे अग्ने ते स्तोत्रं कुर्वाणा अंगिरसो मातुर्जनन्या धेनोर्वाचः संबंधि नाम स्तुतिसाधकं शब्दमात्रं प्रथमं पूर्वं मन्वत। अजानत। पश्चात्तस्या वाचः संबंधीनि त्रिः सप्तैकविंशतिसंख्याकानि स्तुतिसाधनानि छंदांसि। तानि च गायत्र्यादीनि जगत्यंतानि सप्त। अतिजगत्यादीन्यतिधृत्यंतानि सप्त। कृतिप्रभृतीन्युत्कृतिपर्यंतानि सप्तेति। एवं त्रिः सप्त छंदांसि परमाण्युत्तमानि विंदन्। अलभत। एवंविधच्छंदोयुक्तमंत्रैरग्निमस्तुवन्नित्यर्थः। तत्ततो जानतीः सर्वं जानाना व्राः। व्रा इत्युषोनाम। उषसोऽभ्यनूषत। अस्तुवन्। ततो गोः सूर्यस्य यशसा तेजसा सहारुणीररुणवर्णोषा आविर्भुवत् आविरभूत्। यद्वा। तेऽङ्गिरसः प्रथमं पुरातनं नाम एहि सुरभि गुग्गुलु गंधिनीति धेनोर्नामधेयं मन्वत। उच्चारयामासुः। मातुर्भूम्याः स्वभूतानि पणिभिरपहृतानि त्रिः सप्त रत्नानि विंदन्। तत उच्चारितं नाम जानंत्यो गावोऽभ्यनूषत। हंभारवलक्षणं शब्दमकुर्वन्। तदानीमुषाः प्रादुरभूदिति ॥ जानतीः। एकस्मिन्पक्षे वा छंदसीति पूर्वसवर्णदीर्घः। उभयत्र शतुरनुमो नद्यजादीति ङीप उदात्तत्वं। अनूषत। णु स्तुतौ। लुङि रूपं। कुटादित्वादगुणः। अरुणीः। सोरस्योपश्छांदसो गौरीर्मिमाय। ऋग्वे० १. १६४. ४१.। इतिवत् ॥

नेशत्तमो दुधितं रोचत द्यौरुद्देव्या उषसो भानुरर्त ।
आ सूर्यो बृहतस्तिष्ठदज्राँ ऋजु मर्तेषु वृजिना च पश्यन् ॥१७॥
नेशत् । तमः । दुधितं । रोचत । द्यौः । उत् । देव्याः । उषसः । भानुः । अर्त ।
आ । सूर्यः । बृहतः । तिष्ठत् । अज्रान् । ऋजु । मर्तेषु । वृजिना । च । पश्यन् ॥१७॥

तमो रात्रिकृतं ध्वांतं दुधितं । दुधिः प्रेरणकर्मा । प्रातरग्निविहरणकाले उषसा प्रेरितं सत् नेशत् । अनश्यत् । ततो द्यौरंतरिक्षं रोचत । अदीप्यत । ततो देव्या देवनशीलाया उषसो भानुः प्रभोदर्त । उदगच्छत् । अथ सूर्यो बृहतो महतोऽज्रानजरान्पर्वतान् गमनशीलान्रश्मीन्वा तिष्ठत् । अध्यतिष्ठत् । किं कुर्वन् । मर्तेषु मनुष्येषु विद्यमानमृजु सत्कर्म वृजिनानृजून्यसत्कर्माणि च पश्यन् । अध्यतिष्ठदिति शेषः ॥ नेशत् । णश अदर्शने । लङि णशिमन्योरलिट्येत्वं वक्तव्यमित्येत्व । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । रोचत । रुच दीप्तौ । लङि रूपं । वाक्यभेदादनिघातः ॥

आदित्पश्चा बुबुधाना व्यख्यन्नादिद्रत्नं धारयंत द्युभक्तं ।
विश्वे विश्वासु दुर्यासु देवा मित्र धिये वरुण सत्यमस्तु ॥१८॥
आत् । इत् । पश्चा । बुबुधानाः । वि । अख्यन् । आत् । इत् । रत्नं । धारयंत । द्युऽभक्तं ।
विश्वे । विश्वासु । दुर्यासु । देवाः । मित्र । धिये । वरुण । सत्यं । अस्तु ॥१८॥

आदित्सूर्योदयादनंतरं बुबुधानाः पणिभिरपहृता निरोधान्निर्गता गा जानाना अंगिरसः पश्चा पृष्ठदेशेषु व्यख्यन् । अशेषेण ता गा अपश्यन् । तथादिदनंतरं द्युभक्तं दीप्तियुक्तं देवैः संभक्तं वा रत्नं पणिभिरपहृतं धनं च धारयंत । अधारयन् । लब्धगोधनानामंगिरसां विश्वासु दुर्यासु सर्वेषु गृहेषु विश्वे यजनीयाः सर्वे देवा आजग्मुः । हे मित्र मित्रभूत हे वरुणोपद्रवाणां वारक हे अग्ने धिये कर्मणां कर्त्रे स्तोत्रे वा यजमानाय सत्यमस्तु । यदेतत्तवोपद्रववारणसामर्थ्यं तद्यथार्थभूतमस्तु ॥ पश्चा । पश्च पश्चा च छंदसीति निपातितः । बुबुधानाः । बुधेर्लिटि कानचि रूपं । चित्त्वादंतोदात्तः । द्युभक्तं । भज सेवायां । कर्मणि क्तः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः ॥

अच्छा वोचेय शुशुचानमग्निं होतारं विश्वभरसं यजिष्ठं ।
शुच्यूधो अतृणन्न गवामंधो न पूतं परिषिक्तमंशोः ॥१९॥
अच्छ । वोचेय । शुशुचानं । अग्निं । होतारं । विश्वऽभरसं । यजिष्ठं ।
शुचि । ऊधः । अतृणत् । न । गवां । अंधः । न । पूतं । परिऽसिक्तं । अंशोः ॥१९॥

हे अग्ने शुशुचानं भृशं दीप्यमानं होतारं देवानामाह्वातारं विश्वभरसमाहुतिद्वारा वृष्टिप्रदानेन विश्वस्य पोषकं यजिष्ठं यष्टृतममग्निं त्वामच्छाभिलक्ष्य वोचेय । स्तवानि । गवामूधः शुचि शुद्धं पयो नातृणत् । तवा हुत्यर्थं यजमानो न दोग्धि । अंशोः सोमलताखंडस्य संबध्यंधो रसाख्यमन्नं पूतं दशापवित्रेण शोधितं सत् न परिषिक्तं । गृहेषु न प्रक्षिप्तं । किंत्वनेन यजमानेन केवलं स्तुतिरेव क्रियते ॥ वोचेय । ब्रूञ् आशीर्लिङि ब्रुवो वचिः । लिङ्याशिष्यङ् । छंदस्युभयथेति सार्वधातुकत्वात्सीयुटः सलोपः । अतृणत् । उतृदिर् हिंसानादरयोः । दोहनमेवोधोहिंसनं । परिषिक्तं । सिंचतेः कर्मणि क्तः । उपसर्गात्सुनोतीति संहितायां षत्वं । गतिरनंतर इति गतेः स्वरः ॥

विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषाणां ।
अग्निर्देवानामव आवृणानः सुमृळीको भवतु जातवेदाः ॥२०॥

विश्वेषां । अदितिः । यज्ञियानां । विश्वेषां । अतिथिः । मानुषाणां ।
अग्निः । देवानां । अवः । आऽवृणानः । सुऽमृळीकः । भवतु । जातऽवेदाः ॥ २० ॥

अयमग्निर्विश्वेषां सर्वेषां यज्ञियानां यज्ञार्हाणां देवानामदितिः । अदितिर्देवमाता । तद्वद्देवानां पोषक इत्यर्थः । यद्वा । विश्वेषां देवानामदितिर्भूस्थानीयः आधारभूत इति यावत् । अथ वा अग्निर्वैश्वानर इति श्रुतेः । तथायमग्निर्विश्वेषां मानुषाणामतिथिरतिथिवत्पूज्यो भवति । देवानां देवनशीलानां स्तोतॄणामवोऽन्नं हविरावृणानः संभजन् जातवेदाः । जातं सर्वं वेत्तीति जातवेदाः । सोऽग्निरेषां स्तोतॄणां सुमृळीकः सुखकरो भवतु ॥ अतिथिः । अत सातत्यगमने । ऋतन्यञ्जीत्यादिनेथिन्प्रत्ययः । नित्त्वादाद्युदात्तः । मानुषाणां । मनोरपत्यानीत्यर्थे मनोर्जातावञ्यतौ षुक्चेत्यञ्प्रत्ययः । ञित्त्वादाद्युदात्तः ॥ ॥ १५ ॥

यो मर्त्येष्विति विंशत्यृचं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं । यो मर्त्येष्वित्यनुक्रमणिका ॥ अस्य सूक्तस्य प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्त एव विनियोग उक्तः ॥

यो मर्त्येष्वमृत ऋतावा देवो देवेष्वरतिर्निधायि ।
होता यजिष्ठो मह्ना शुचध्यै हव्यैरग्निर्मनुष ईरयध्यै ॥ १ ॥
यः । मर्त्येषु । अमृतः । ऋतऽवा । देवः । देवेषु । अरतिः । निऽधायि ।
होता । यजिष्ठः । मह्ना । शुचध्यै । हव्यैः । अग्निः । मनुषः । ईरयध्यै ॥ १ ॥

अमृतो मरणधर्मरहितो योऽग्निर्मर्त्येषु मनुष्येष्वृतावा सत्यवान्निधायि निहितः । यद्वा । मर्त्येषु मनुष्यसंबंधिषु वागादीन्द्रियेषु निहितः । अग्निर्वाग्भूत्वा मुखं प्राविशदिति श्रुतेः । देवो देवनशीलो योऽग्निरिन्द्रादिषु देवेष्वरतिरभिगंता शत्रूणां । यद्वा । देवलोके गंता । निधायि निहितः । स च होता देवानामाह्वाता यजिष्ठो यष्टृतमोऽग्निर्मह्ना स्वकीयेन महता तेजसा शुचध्यै दीपितुमुत्तरवेद्यां निहितः । किंच हव्यैर्हवनीयैराज्यपुरोडाशादिभिर्हविर्भिर्हेतुभिर्मनुषो मनुष्यस्य यजमानस्येरयध्यै स्वर्गं प्रति प्रेरणाय निहितः ॥ अरतिः । ऋ गतौ । वहिवस्यर्तिभ्यश्चिदित्यतिप्रत्ययः । चित्त्वादंतोदात्तः । निधायि । दधातेः कर्मणि लुङि रूपं । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । शुचध्यै । शुच दीप्तौ । तुमर्थे कध्यैप्रत्ययः । कित्त्वादगुणः । प्रत्ययस्वरः । ईरयध्यै । ईर प्रेरणे । तुमर्थे शध्यैप्रत्ययः । शित्त्वेन सार्वधातुकत्वाण्णिलोपाभावः ॥

इह त्वं सूनो सहसो नो अद्य जातो जाताँ उभयाँ अंतरग्ने ।
दूत ईयसे युयुजान ऋष्व ऋजुमुष्कान्वृषणः शुक्रांश्च ॥ २ ॥
इह । त्वं । सूनो इति । सहसः । नः । अद्य । जातः । जातान् । उभयान् । अंतः । अग्ने ।
दूतः । ईयसे । युयुजानः । ऋष्व । ऋजुऽमुष्कान् । वृषणः । शुक्रान् । च ॥ २ ॥

हे सहसः सूनो बलस्य पुत्राग्ने अद्यास्मिन्दिवसे नोऽस्मदीय इह कर्मणि जात आधानपवमानेष्टिभिः संस्कृतस्त्वं जातानुत्पन्नानुभयान्देवमनुष्यानंतस्तेषामुभयेषां मध्ये दूतो हवींषि देवान्प्रापयितुमीयसे । गच्छसि । किं कुर्वन् । हे ऋष्व दर्शनीयाग्ने ऋजुमुष्कान् । मुष्कशब्देन मांसलोऽभिधीयते । ऋजव प्रसाधका अवयवा येषां ते मुष्काश्चेत्यृजुमुष्काः । तान्वृषणः रेतःसेचनसमर्थान् शुक्रान्दीप्यमानानश्वान् युयुजानः स्वरथे योजयन्नीयसे । यद्वा । ऋष्व महन्नग्ने युयुजानो हविर्वहने नियुज्यमानस्त्वं वृषणो हविःसेचनसमर्थान्यजमानान् दीप्तान्देवांश्चेयसे ॥ सूनो सहसः । परमपि छंदसीति सहसः परांगवद्भावात् द्वयोः सर्वानुदात्तत्वं । ईयसे । ईङ् गतौ । दिवादिः । निघातः । युयुजानः । युजेः वर्तमाने लिटि कानचि रूपं । ऋष्व । संहितायामृत्यक इति प्रकृतिभावः । ऋजुमुष्कान् । समासस्वरः ॥

अत्या॑ वृध॒स्नू रोहि॑ता घृ॒तस्नू॑ ऋ॒तस्य॑ मन्ये॒ मन॑सा॒ जवि॑ष्ठा ।
अं॒तरी॑यसे अरु॒षा यु॑जा॒नो यु॒ष्मांश्च॑ दे॒वान्विश॒ आ च॒ मर्ता॑न् ॥३॥
अत्या॑। वृ॒ध॒स्नू इति॑ वृ॒ध॒ऽस्नू॑। रोहि॑ता। घृ॒त॒स्नू इति॑ घृ॒त॒ऽस्नू॑। ऋ॒तस्य॑। म॒न्ये॒। मन॑सा। जवि॑ष्ठा।
अं॒तः। ई॒य॒से॒। अ॒रु॒षा। यु॒जा॒नः। यु॒ष्मान्। च॒। दे॒वान्। विशः॑। आ। च॒। मर्ता॑न् ॥३॥

हे अग्ने ऋतस्य सत्यभूतस्य तव संबंधिनौ मनसा मनसोऽपि जविष्ठा वेगवत्तमौ वृधस्नू । वर्धयतीति वृधमन्नं । तत्क्षरंतौ । घृतस्नू । घृतमुदकं तत्स्रवंतौ रोहिता रोहितवर्णावत्यावश्वौ मन्ये । स्तौमि । अरुषारोचमानौ तावश्वौ युजानो रथे युंजानस्त्वं युष्मान् । देवेष्वग्नेरंतर्भावाद्यजनीयरूपेण कीर्तनं । युष्मान्यष्टव्यान्देवान् विशः परिचारकान्मर्तान्मनुष्यानंतः । षष्ठ्यर्थे द्वितीया । तेषां मध्य आ समंतादीयसे । हविः स्वीकर्तुं यजमानान् गच्छसि । तद्धविः प्रदातुं देवान् गच्छसि ॥ मन्ये । मन्यतिरर्चतिकर्मा । मनसा । सुपां सुलुगिति पंचम्या आकारः । युजानः । युजिर् योगे । युजिवुधिदृशः किदित्यानच्प्रत्ययः । चित्त्वादंतोदात्तः ॥

अ॒र्य॒मणं॒ वरु॑णं मि॒त्रमे॑षा॒मिंद्रा॒विष्णू॑ म॒रुतो॑ अ॒श्विनो॒त ।
स्वश्वो॑ अग्ने सु॒रथः॑ सु॒राधा॒ एदु॑ वह सुह॒विषे॒ जना॑य ॥४॥
अ॒र्य॒मण॑म्। वरु॑णम्। मि॒त्रम्। ए॒षा॒म्। इंद्रा॒विष्णू॒ इति॑। म॒रुतः॑। अ॒श्विना॑। उ॒त।
सु॒ऽअश्वः॑। अ॒ग्ने॒। सु॒ऽरथः॑। सु॒ऽराधाः॑। आ। इ॒त्। ऊं॒ इति॑। व॒ह॒। सु॒ऽह॒विषे॑। जना॑य ॥४॥

हे अग्ने स्वश्वः शोभनाश्वोपेतः सुरथः शोभनरथः सुराधाः शोभनधनोपेतस्त्वमेषां मर्त्यानां मध्ये सुहविषे शोभनहविष्काय जनाय यजमानायार्यमादीनुतापि चाश्विनौ यष्टव्यान्देवाना वहेदु । आङ्यर्थेव । उः पूरणः ॥ इंद्राविष्णू । ऋज्रेंद्रेत्यादिना निपातनादिंद्रशब्द आद्युदात्तः । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं । सुहविषे । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं ॥

गोमाँ॑ अ॒ग्नेऽवि॑माँ अ॒श्वी य॒ज्ञो नृ॒वत्स॑खा॒ सद॒मिद॑प्रमृ॒ष्यः ।
इळा॑वाँ ए॒षो अ॑सुर प्र॒जावा॑न्दी॒र्घो र॒यिः पृ॑थुबु॒ध्नः स॒भावा॑न् ॥५॥
गोऽमा॑न्। अ॒ग्ने॒। अवि॑ऽमान्। अ॒श्वी। य॒ज्ञः। नृ॒वत्ऽस॑खा। सद॑म्। इत्। अ॒प्र॒ऽमृ॒ष्यः।
इळा॑ऽवान्। ए॒षः। अ॒सु॒र॒। प्र॒जाऽवा॑न्। दी॒र्घः। र॒यिः। पृ॒थु॒ऽबु॒ध्नः। स॒भाऽवा॑न् ॥५॥

हे असुर बलवन्हे अग्ने एष मदीयोऽयं यज्ञो गोमान् गोभिस्तद्वानविमान् । अवयो मेषा अस्य संति तद्वान् अश्व्यश्वोपेतश्चास्तु । नृवत्सखा । नरः कर्मणां नेतारोऽध्वर्य्वादयस्तद्वंतः सखायोऽनुष्ठातारो यजमाना यस्य स तथोक्तः । सदमित्सदैवाप्रमृष्योऽप्रधृष्यश्चास्तु । तथेळावान् । इळा हविर्लक्षणमन्नं । तद्वान् । प्रजावान्पुत्रपौत्रादियुक्तश्चास्तु । दीर्घोऽविच्छिन्नानुष्ठानोपेतो रयिर्धनवान् । लुप्तमत्वर्थीयः । पृथुबुध्नः । पृथूनि बहुलानि बुध्नानि धनादीनि कारणानि यस्य स तथोक्तः । सभावानुपद्रष्टृरूपसभायुक्तश्चास्तु ॥ नृवत्सखा । नरो येषां संतीति नृवत । मतुप् । तस्य छांदसं वत्वं । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं । बहुव्रीहौ पूर्वपदस्वरः ॥ ॥१६॥

यस्त॑ इ॒ध्मं ज॒भर॑त्सिष्विदा॒नो मू॒र्धानं॑ वा त॒तप॑ते त्वा॒या ।
भुव॒स्तस्य॒ स्वत॑वाँः पा॒युर॑ग्ने॒ विश्व॑स्मात्सीमघाय॒त उ॑रुष्य ॥६॥

यः । ते । इध्मं । जभरत् । सिस्विदानः । मूर्धानं । वा । ततपते । त्वाऽया ।
भुवः । तस्य । स्वऽतवान् । पायुः । अग्ने । विश्वस्मात् । सीं । अघऽयतः । उरुष्य ॥६॥

हे अग्ने ते त्वदर्थं यः पुमान् सिस्विदानः सिस्विदानः स्विद्यद्गात्रः सन् इध्मं त्वत्समिन्धनार्थं काष्ठभारं जभरत् । आहरति । यो वा त्वाया त्वत्कामनया मूर्धानं स्वमस्तकं ततपते काष्ठभारेण तापयति तस्य तादृशस्य पुंसः स्वतवान् । स्वतवान्धनवानिति तन्नवकारे उक्तं । धनवान् भुवः । भवसि । पायुः पालयितासि । सीमेनं विश्वस्मादघायतोऽघं पापमिच्छतः पुरुषादुरुष्य । रक्ष ॥ जभरत् । हरतेर्लुङि चङि रूपं । चङ्यन्यतरस्यामिति चङ्पूर्वस्योदात्तत्वं । सिस्विदानः । ञिष्विदा गात्रप्रक्षरणे । कानचि रूपं । संहितायामादेशप्रत्यययोरिति धातुसकारस्य षत्वं । त्वाया । त्वामात्मन इच्छतीत्यर्थे क्यच् । प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः । इकारस्य छांदसमात्वं । क्यजंताद्धातोर्भावे अ प्रत्ययादित्यकारप्रत्ययः । सुपां सुलुगिति तृतीयाया आकारः । एकादेशस्वरः । भुवः । भवतेर्लेट्यडागमे रूपं । भूसुवोस्तिङीति गुणप्रतिषेधः । आगमस्यानुदात्तत्वे धातुस्वरः । स्वतवाँः पायुरित्यत्र संहितायां स्वतवान्पायौ । पा॰ ८ ३ ११ । इति नकारस्य रुत्वं । अत्रानुनासिकः पूर्वस्य तु वेत्याकारोऽनुनासिकः । रेफस्य विसर्जनीयः । कुप्वोः ≍क≍पौ चेति ≍प इत्यादेशः । अघायत । अघमात्मन इच्छतीत्यर्थे सुपः क्यच् । अश्वाघस्यादित्यात्वं । तदंतात् शतृप्रत्ययः । शतुरनुम इति विभक्तेरुदात्तत्वं । उरुष्य । उरुशब्दः कण्ड्वादिः । लोटि रूपं । निघातः ॥

यस्ते भरादन्नियते चिदन्नं निशिषन्मंद्रमतिथिमुदीरत् ।
आ देवयुरिनधते दुरोणे तस्मिन्रयिर्ध्रुवो अस्तु दास्वान् ॥७॥
यः । ते । भरात् । अन्निऽयते । चित् । अन्नं । निऽशिषत् । मंद्रं । अतिथिं । उत्ऽईरत् ।
आ । देवऽयुः । इनधते । दुरोणे । तस्मिन् । रयिः । ध्रुवः । अस्तु । दास्वान् ॥७॥

हे अग्ने यः पुमानन्नियतेऽन्नमिच्छते ते तुभ्यं हविर्लक्षणं पुरोडाशादिकमन्नं भरात् दात् बिभृयात् । चिदिति चार्थे । यश्च मंद्रं मदकरं सोमं निशिषत् नितरां प्रयच्छति । यश्चातिथिमतिथिवत्पूज्यं त्वामुदीरत् उच्चैर्वचसा प्रेरयति । आ अपि च यश्च देवयुर्देवं त्वा कामयमानो दुरोणे स्वकीये गृहे इनधते त्वा समिद्भिः समिंधते तस्मिंस्तस्मिन्पुरुषे रयिः पुत्रो ध्रुव आस्तिक्यबुद्ध्या वैदिके मार्गे निश्चलोऽस्तु । तथा दास्वान्दातापि तस्यास्तु ॥ भरात् । डुभृञ् धारणपोषणयोरित्यस्य लेट्याडागमे रूपं । यद्वृत्तयोगादनिघातः । अन्नियते । अन्नमात्मन इच्छते । क्यच् । क्यचि चेतीत्वं । ह्रस्वश्छांदसः । निशिषत् । शासु अनुशिष्टौ । लुङि सर्तिशास्त्यर्तिभ्यश्चेति च्लेरङादेशः । शास इदङ्हलोरितीत्वं । उदीरत् । ईर गतौ । लेटि व्यत्ययेन परस्मैपदं । अडागमः । आगमस्यानुदात्तत्वे धातुस्वरः । तिङि चोदात्तवतीति गतेर्निघातः । इनधते । ञिइंधी दीप्तौ । लटि व्यत्ययेन शप् । रुधादित्वात् श्नम् । श्नान्नलोप इति धातुनकारलोपः ङित्परत्वाभावात् श्नसोरल्लोपाभावः । यद्वृत्तयोगादनिघातः । श्नमः स्वरः । दास्वान् । दाश् दाने । संपदादिलक्षणो भावे क्विप् । तदस्यास्तीति मतुप् । मादुपधाया इति वत्वं । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः ॥

यस्त्वा दोषा य उषसि प्रशंसात्प्रियं वा त्वा कृणवते हविष्मान् ।
अश्वो न स्वे दम आ हेम्यावान्तमंहसः पीपरो दाश्वांसं ॥८॥
यः । त्वा । दोषा । यः । उषसि । प्रऽशंसात् । प्रियं । वा । त्वा । कृणवते । हविष्मान् ।
अश्वः । न । स्वे । दमे । आ । हेम्याऽवान् । तं । अंहसः । पीपरः । दाश्वांसं ॥८॥

हे अग्ने यः पुमान् दोषा दोषायां रात्रौ त्वां प्रशंसात् संस्तुयात् । यश्चोषसि प्रातःकाले त्वा प्रशंसेत् । हविष्मान् संभृतहविष्को यो वा यजमानस्त्वा त्वा प्रियं हविर्भिः प्रीतं कृणवते । कुर्यात् । आ अथ दाश्वांसं

हविर्दत्तवंतं तं तादृशं यजमानं स्वे दमे स्वकीये गृहे हिरण्यवान् सुवर्णनिर्मितकक्ष्यावानश्वो न अश्व इव संचरन्त्वमंहसः पापरूपाद्दारिद्र्यात्पीपरः । पारं नय । तस्मै यजमानाय बहु धनं प्रयच्छेत्यर्थः ॥ दोषा । सप्तम्या आकारः । प्रशंसात् । शन्सु स्तुतौ । लेट्याडागमे रूपं । कृणवते । कृवि हिंसाकरणयोरित्यस्य लटि धिन्विकृण्व्योरच्चेत्युप्रत्ययः । लेटोऽडाटावित्यडागमः । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः । हिरण्यवान् । हिरण्यमर्हतीति । कर्दमि चेति यः । पीपरः । पॄ पालनपूरणयोरित्यस्य ण्यंतस्य लुङि चङि रूपं । निघातः ॥

यस्तुभ्यमग्ने अमृताय दाशद्दुवस्त्वे कृणवते यतस्रुक् ।
न स राया शशमानो वि योषन्नैनमंहः परि वरदघायोः ॥९॥
यः । तुभ्यं । अग्ने । अमृताय । दाशत् । दुवः । त्वे इति । कृणवते । यतऽस्रुक् ।
न । सः । राया । शशमानः । वि । योषत् । न । एनं । अंहः । परि । वरत् । अघऽयोः ॥९॥

हे अग्ने यो यजमानोऽमृताय मरणधर्मरहिताय तुभ्यं दाशत् हवींषि प्रयच्छेत् । यतस्रुक् संयतस्रुक् स च यजमानस्त्वे त्वयि दुवः परिचर्यां कृणवते करोति शशमानः स्तोत्रं कुर्वाणः स यजमानो राया धनेन न वि योषत् । न पृथग्भवेत् । सदा धनयुक्तो भवेदित्यर्थः । अघायोः पापमिच्छतो हिंसकस्य संबंध्यंहः आहननं पापमेनं यजमानं न परि वरत् । न परिवृणुयात् । न स्पृशेदित्यर्थः ॥ दाशत् । दाशृ दाने । लेट्यडागमे रूपं । त्वे । सुपां सुलुगिति सप्तम्याः शे इत्यादेशः । कृणवते । यद्वृत्तयोगादनिघातः । योषत् । यु मिश्रणे । लेटि सिब्बहुलमिति सिप् । अडागमः । निघातः । वरत् । वृञ् वरणे । लेटि रूपं ॥

यस्य त्वमग्ने अध्वरं जुजोषो देवो मर्तस्य सुधितं रराणः ।
प्रीतेदसद्धोत्रा सा यविष्ठासाम यस्य विधतो वृधासः ॥१०॥
यस्य । त्वं । अग्ने । अध्वरं । जुजोषः । देवः । मर्तस्य । सुऽधितं । रराणः ।
प्रीता । इत् । असत् । होत्रा । सा । यविष्ठ । असाम । यस्य । विधतः । वृधासः ॥१०॥

हे अग्ने रराणो रममाणो देवो दीप्यमानस्त्वं यस्य मर्तस्य मनुष्यस्य संबंधि सुधितं त्वदर्थं सुष्ठु निहितमध्वरमनुपहतं हविर्लक्षणमन्नं जुजोषः सेवथा हे यविष्ठ युवतम सा होत्रा स होता यजमानः प्रीतेदसत् । प्रीत एव भवेत् । असाम तस्य यजमानस्य संबंधिनो भवेम यस्य विधतोऽग्निपरिचर्यां कुर्वतो यजमानस्य होत्रादयो वृधासो यज्ञस्य वर्धयितारो भवंति ॥ जुजोषः । जुषी प्रीतिसेवनयोरित्यस्य बहुलं छंदसीति श्लुः । अडागमः । अभ्यस्तस्वरः । सुधितं । दधातेर्निष्ठायां सुधितवसुधितेति निपातनात् ध्यादेशः । गतिरनंतर इति गतेः स्वरः । असाम । अस्तेर्लोट्याडुत्तमस्य पिच्चेत्याडागमः । उत्तमस्य पिद्वद्भावादनुदात्तत्वे धातुस्वरः । विधतः । विध विधाने । तुदादिः । शतुरनुम इति विभक्तेरुदात्तत्वं ॥  ॥१७॥

चित्तिमचित्तिं चिनवद्वि विद्वान्पृष्ठेव वीता वृजिना च मर्तान् ।
राये च नः स्वपत्याय देव दितिं च रास्वादितिमुरुष्य ॥११॥
चित्तिं । अचित्तिं । चिनवत् । वि । विद्वान् । पृष्ठाऽइव । वीता । वृजिना । च । मर्तान् ।
राये । च । नः । सुऽअपत्याय । देव । दितिं । च । रास्व । अदितिं । उरुष्य ॥११॥

विद्वान् प्राणिनां पुण्यपापरूपाणि कर्माणि जानानः सोऽग्निश्चित्तिं ज्ञातव्यं पुण्यमचित्तिमनुपादेयत्वेनाचेतनीयं पापं । यद्वा । चित्तिं ज्ञानमचित्तिमज्ञानं वि चिनवत् । विचिनोतु । पृथक्करोतु । तत्र दृष्टांतः । पृष्ठेव । यथाश्वपालोऽश्वानां वीता कांतानि वृजिना दुर्वहाणि च पृष्ठा पृष्ठानि हेयोपादेयत्वेन पृथक्करोति

तद्वत्। किंच मर्तान्पुण्यकृतोऽपुण्यकृतश्च मनुष्यान् पृथक्करोतु। हे देवाग्ने स्वपत्याय शोभनपुत्रोपेताय राये धनाय नोऽस्मान् कुरु। दितिं दातारं च रास्व। देहि। अदितिं। पचम्यर्थे द्वितीया। अदातुः सकाशाद्रक्ष। रक्ष॥ चित्तिं। चिती संज्ञाने। स्त्रियां क्तिन्। नित्त्वादाद्युदात्तः। चिनवत्। चिनोतेर्लेट्यडागमः। दितिं। दाण् दाने। कर्तरि क्तिन्। रास्व। रा दाने। लोटि व्यत्ययेनात्मनेपदं। चवायोगे प्रथमेति न निघातः॥

कविं शशासुः कवयोऽदब्धा निधारयंतो दुर्यास्वायोः।
अतस्त्वं दृश्याँ अग्न एतान्पड्भिः पश्येरद्भुताँ अर्य एवैः॥१२॥
कविं। शशासुः। कवयः। अदब्धाः। निऽधारयंतः। दुर्यासु। आयोः।
अतः। त्वं। दृश्यान्। अग्ने। एतान्। पट्ऽभिः। पश्येः। अद्भुतान्। अर्यः। एवैः॥१२॥

हे अग्ने आयोर्मनुष्यस्य दुर्यासु गृहेष्वदब्धाः केनाप्यतिरस्कृता निधारयंतो निवसंतः कवयः क्रांतदर्शिनो देवाः कविं मेधाविनं त्वां शशासुः। होता भवेति शशासुः। अतः कारणादर्यो यज्ञस्य स्वामी त्वं दृश्यान्दर्शनीयानद्भुतानाश्चर्यरूपोपेतानिन्द्रादीनेतान्देवानेवैर्गमनशीलैः पड्भिः पादैः स्वतेजोभिः पश्येः। जानीयाः॥ दृश्यान्। दृशिर् प्रेक्षणे। ऋदुपधाच्चाक्लृपिचृतेः। पा० ३ १ ११०। इति कर्मणि क्यप्। कित्त्वादगुणः। पित्त्वादनुदात्तत्वे धातुस्वरः॥

त्वमग्ने वाघते सुप्रणीतिः सुतसोमाय विधते यविष्ठ।
रत्नं भर शशमानाय घृष्वे पृथु श्चंद्रमवसे चर्षणिप्राः॥१३॥
त्वं। अग्ने। वाघते। सुऽप्रनीतिः। सुतऽसोमाय। विधते। यविष्ठ।
रत्नं। भर। शशमानाय। घृष्वे। पृथु। चंद्रं। अवसे। चर्षणिऽप्राः॥१३॥

हे यविष्ठ युवतम घृष्वे दीप्तियुक्त। यद्वा। परेषां घर्षणशील हे अग्ने चर्षणिप्राः अर्पितफलप्रदानेन मनुष्याणां कामपूरकः सुप्रणीतिः सुष्ठुस्तरवेद्या प्रणयनीयस्त्वं सुतसोमाय विधते तव परिचरणं कुर्वते शशमानाय त्वा स्तुवते वाघते यज्ञनिर्वाहकाय यजमानाय पृथु प्रभूतं चन्द्रमाह्लादकारि रत्नमुत्तमं धनमवसे रक्षणाय भर। आहर। प्रयच्छेत्यर्थः॥ सुप्रणीतिः। णीञ् प्रापणे। कर्मणि क्तिन्। तादौ च निति कृतीत्यनंतरप्रगतेः स्वरोदात्तत्वं। पृथु श्चन्द्रमित्यत्र संहितायां ह्रस्वाच्चंद्रोत्तरपदे मंत्र इति सुडागमः। सुत्वेन शकारः॥

अधा ह यद्वयमग्ने त्वाया पड्भिर्हस्तेभिश्चकृमा तनूभिः।
रथं न क्रंतो अपसा भुरिजोर्ऋतं येमुः सुध्य आशुषाणाः॥१४॥
अध। ह। यत्। वयं। अग्ने। त्वाऽया। पट्ऽभिः। हस्तेभिः। चकृम। तनूभिः।
रथं। न। क्रंतः। अपसा। भुरिजोः। ऋतं। येमुः। सुऽध्यः। आशुषाणाः॥१४॥

हे अग्ने अध ह अथ खलु वयं त्वाया त्वत्कामनया पड्भिः पादैर्हस्तेभिर्हस्तैस्तनूभिरन्यैश्चावयवैश्चकृम यत् यस्मात्कारणात्कर्मसिद्ध्यर्थं त्वामुपपादयामस्तस्मात्सुध्यः सुकर्माण आशुषाणाः कर्माणि व्याप्नुवन्तोऽङ्गिरस ऋतं सत्यभूतं त्वां भुरिजोः। बिभृतः कर्मकरणसामर्थ्यं पदार्थान्वेति भुरिजौ बाहू। तयोरपसा मथनाख्येन कर्मणा येमुः। उद्यच्छंति। तत्र दृष्टांतः। रथं न। यथा क्रंतः कारवः शिल्पिनः क्रामतोऽश्वगा वा हस्तयोर्यथा रथमुद्यच्छंति तद्वत्। यद्वा। भुरिजोः। देवान्मनुष्यांश्च बिभृत इति भुरिजौ द्यावापृथिव्यौ। तयोर्मध्येऽपसा परिचरणकर्मणा सत्यभूतं तमपि येमुः। उद्यच्छंति॥ अध। संहितायां निपातस्य चेति दीर्घः। क्रतः। करोतेः शतरि बहुलं छंदसीति विकरणस्य लुक्। प्रत्ययस्वरः। भुरिजोः। डुभृञ् धारणपोषणयोः। भृञ ऊच्च। उ० २ ७१। इती जिप्रत्ययः। धातोरूकारो रपरः। प्रत्ययस्वरः॥

अधा मातुरुषसः सप्त विप्रा जायेमहि प्रथमा वेधसो नॄन् ।
दिवस्पुत्रा अंगिरसो भवेमाद्रिं रुजेम धनिनं शुचंतः ॥१५॥
अध । मातुः । उषसः । सप्त । विप्राः । जायेमहि । प्रथमाः । वेधसः । नॄन् ।
दिवः । पुत्राः । अंगिरसः । भवेम । अद्रिं । रुजेम । धनिनं । शुचंतः ॥१५॥

वामदेवोऽन्यैः षड्भिरंगिरोभिः सह ब्रूते । अधापि च मातुरुषसः सकाशात्सप्त सप्तसंख्याका विप्राः प्राज्ञा वयं स्मः । प्रथमाः श्रेष्ठा वयं वेधसोऽग्नेः परिचारकान्नॄन् वेधसो विधातॄन् रश्मीन् वा जायेमहि । वयं जनयामः । दिवो द्योतमानस्यादित्यस्य पुत्रा वयमंगिरसो भवेम । भूतिमंतः स्याम । शुचंतो दीप्यमाना वयं धनिनमुदकवंतमद्रिं मेघं रुजेम । वर्षार्थं भिनद्याम । यद्वा । धनिनं पणिनामकासुरापहृतगोधनयुक्तमद्रिं पर्वतं रुजेम । अंगिरसामादित्यपुत्रत्वमेवमाम्नायते । तस्य यद्रेतसः प्रथममुददीप्यत तदसावादित्योऽभवदित्युपक्रम्य येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् । ऐ० ब्रा० ३. ३४. । इति ॥ जायेमहि । जनी प्रादुर्भावे । लिङि ज्ञाजनोर्जेति जादेशः । वेधसः । डुधाञ् धारणपोषणयोरित्यस्माद्विधाञो वेध च । उ० ४ २२४ । इत्यसिप्रत्ययः । धातोर्वेध इत्यादेशः । दिवस्पुत्रा इत्यत्र संहितायां षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य सत्वं । रुजेम । रुजो भंगे । अदादिः । लिङि रूपं ॥ ॥१८॥

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिंदंतो अरुणीरप व्रन् ॥१६॥
अध । यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतं । आशुषाणाः ।
शुचि । इत् । अयन् । दीधितिं । उक्थऽशसः । क्षाम । भिंदंतः । अरुणीः । अप । व्रन् ॥१६॥

हे अग्ने अधापि च परासः श्रेष्ठाः प्रत्नासः पुराणा ऋतं सत्यभूतं यज्ञं यथा यथावदाशुषाणा अश्नुवाना नोऽस्माकं पितरोऽङ्गिरसः शुचि दीप्तं स्थानमयन् । अगच्छन् । तथा दीधितिं तेजश्चागच्छन् । किंच उक्थशास उक्थानां शस्त्राणां शंसितारः क्षाम क्षयकारणं तमः पापं वा भिंदतो विनाशयंतोऽङ्गिरसोऽरुणीररुणवर्णाः पणिभिरपहृता गा उषसो वा अप व्रन् । अपावृण्वन् । प्रकाशितवंत इत्यर्थः ॥ अयन् । इण् गतौ । लङीणो यणिति यण् । व्यत्ययेनाडागमः । दीधितिं । दीधीङ् दीप्तिदेवनयोरित्यस्मात् क्तिनि ह्रस्वश्छांदसः । निस्वा दाद्युदात्तः । उक्थशसः । उक्थशब्द उपपदे शंसु स्तुतावित्यस्मान्मंत्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्निति ण्विन् नकारलोपश्च निपातनादेव । पदकाले ह्रस्वश्छांदसः । अरुणीः । गौरादिङीषंतः । एकादेशस्वरः । व्रन् । वृणोतेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक् । निघातः ॥

आग्रयण आग्नेंद्रस्य हविषः सुकर्माणं इति याज्या । सूत्रितं च । सुकर्माणः सुरुचो देवयंतो विश्वे देवास आ गत । आ० २ ९ । इति ॥

सुकर्माणः सुरुचो देवयंतोऽयो न देवा जनिमा धमंतः ।
शुचंतो अग्निं ववृधंत इंद्रमूर्वं गव्यं परिषदंतो अग्मन् ॥१७॥
सुऽकर्माणः । सुऽरुचः । देवऽयंतः । अयः । न । देवाः । जनिम । धमंतः ।
शुचंतः । अग्निं । ववृधंतः । इंद्रं । ऊर्वं । गव्यं । परिऽसदंतः । अग्मन् ॥१७॥

सुकर्माणः सुष्ठुनुष्ठितयागादिकर्माणः सुरुचः शोभनदीप्तयो देवयंतो देवान् कामयमाना देवा देवनशीलाः स्तोतारो जनिम स्वकीयं मानुषं जन्म धमंतो यागादिलक्षणेन कर्मणा निर्मलीकुर्वंतः । तत्र दृष्टांतः । अयो न । यथा कर्मारा अयो भस्त्रेण धमंति तद्वत् । तादृशा अग्निं शुचंतो हविर्भिर्दीपयंत इंद्रं ववृधंतः

सोमेन स्तुत्या वा वर्धयंतोऽङ्गिरसः परिषदंतः परितः सीदंतः संत ऊर्वं महांतं गव्यं गोसंघमगमन्। प्राप्नुवन्॥ सुकर्माणः। सोर्मनसीत्युत्तरपदाद्युदात्तत्वं। धमंतः। ध्मा शब्दाग्निसंयोगयोः। शतरि पाघ्रादिना धमादेशः। शपः पित्त्वादनुदात्तत्वे शतुर्लसार्वधातुकस्वरः। ववृधंतः। वृधु वर्धने। व्यत्ययेन परस्मैपदं। शतरि शपः श्लुः। गव्यं। गवां समूह इत्यर्थे खलगोरथादिति यः। अगमन्। गमेर्लुङि च्लेर्लुकि रूपं॥

आ यूथेव क्षुमति पश्वो अख्यद्देवानां यज्जनिमांत्युग्र।
मर्तानां चिदुर्वशीरकृप्रन्वृधे चिदर्य उपरस्यायोः॥१८॥

आ। यूथाऽइव। क्षुऽमति। पश्वः। अख्यत्। देवानां। यत्। जनिम। अंति। उग्र।
मर्तानां। चित्। उर्वशीः। अकृप्रन्। वृधे। चित्। अर्यः। उपरस्य। आयोः॥१८॥

उग्र तेजस्विन्हे अग्ने देवानामङ्गिरसां संबंधि यज्जनिम य गोसंघमंति पर्वतस्य समीप आख्यत्। आ समंतादिंद्रोऽपश्यत्। तत्र दृष्टांतः। यूथेव। यथा पश्वः पशुना गवा यूथानि क्षुमत्यन्नवत्याश्रयगृहे वर्तमानानि पश्यंति जनास्तद्वत्। यद्वा। हे अग्ने तव परिचारकोऽङ्गिरोगणो देवानामिंद्रादीनां यज्जनिम योऽयं जनोऽति मदंतिके पश्वः पणिभिरपहृतान्पशूनाख्यत्। समंतात्पश्यति। तत्र दृष्टांतः। यथा क्षुमति शब्द कुर्वाणि गवां यूथा यूथं पशून्पश्यति तद्वत्। मर्तानां चिन्मनुष्याणामुर्वशीरुरुभ्यामश्नुवानाः। उर्वश्यश्नुत ऊरुभ्यामश्नुत इति यास्कः। नि॰ ५ १३। प्रजा अकृप्रन्। ताभिरानीताभिर्गोभिः कृप्ताः समर्था अभवन्। चिदपि च अर्यः स्वामी लब्धगोधन उपरस्योत्पन्नस्य निषिक्तस्यापत्यस्य वृधे वर्धनाय समर्थो भवति। तथायोर्मनुष्यस्य भृत्यादेश्च पोषणे समर्थो भवति॥ यूथेव। शसः सुपां सुलुगिति वा डादेशः। क्षुमति। क्षुदित्यन्ननाम। यद्वा। टुक्षु शब्दे। भावे क्विप्। छादसस्तकारलोपः। तदस्यास्तीति मतुप्। ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं। अख्यत्। ख्या प्रकथने। लुङि च्लेरस्यतिवक्तिख्यातिभ्योऽङित्यङादेशः। आतो लोपः। जनिम। जनी प्रादुर्भावे। हृजनिभ्यामिमनिन्निती मनिन्प्रत्ययः। नित्त्वादाद्युदात्तः। अकृप्रन्। कृपू सामर्थ्ये। लङि बहुलं छंदसीति विकरणस्य लुक्। रुडागमः॥

अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः।
अनूनमग्निं पुरुधा सुश्चंद्रं देवस्य मर्मृजतश्चारु चक्षुः॥१९॥

अकर्म। ते। सुऽअपसः। अभूम। ऋतं। अवस्रन्। उषसः। विभातीः।
अनूनं। अग्निं। पुरुधा। सुऽचंद्रं। देवस्य। मर्मृजतः। चारु। चक्षुः॥१९॥

हे अग्ने ते तव परिचरणमकर्म। कुर्मः। तेन कर्मणा स्वपसः शोभनकर्माणोऽभूम। विभातीर्व्युच्छंत्य उषस ऋतं तेजोऽवस्रन्। आच्छादयंति। धारयंतीत्यर्थः। तथा ता उषसोऽनूनं संपूर्णं पुरुधा बहुधा सुश्चंद्रं सुष्ठ्वाह्लादकारिणं यद्वा सुहिरण्यमग्निं धारयंति। किंच देवस्य द्योतमानस्य तव चारु मनोहरं चक्षुस्तेजो मर्मृजतः परिचरंतो वयं स्वपसोऽभूमेति पूर्वेणान्वयः॥ अकर्म। करोतेर्लङि बहुलं छंदसीति विकरणस्य लुक्। मर्मृजतः। मृजूष् शुद्धौ। यङ्लुकि रुग्रिकौ च लुकीत्यभ्यासस्य रुगागमः। शतरि नाभ्यस्ताच्छतुरिति नुम्भावः। अभ्यस्तस्वरः॥

एता ते अग्न उचथानि वेधोऽवोचाम कवये ता जुषस्व।
उच्छोचस्व कृणुहि वस्यसो नो महो रायः पुरुवार प्र यंधि॥२०॥

एता। ते। अग्ने। उचथानि। वेधः। अवोचाम। कवये। ता। जुषस्व।
उत्। शोचस्व। कृणुहि। वस्यसः। नः। महः। रायः। पुरुऽवार। प्र। यंधि॥२०॥

वेधो विधातर्हे अग्ने कवये मेधाविने ते तुभ्यमेतैतान्युचथान्युक्थानि शस्त्राण्यवोचाम । त्वं ता तानि जुषस्व । सेवस्व । किंच त्वमुक्तोचस्व । उद्दीप्यस्व । नोऽस्मान्वस्यसोऽतिशयेन धनयुक्तान्कृणुहि । कुरु । तदेवोच्यते । पुरुवार पुरुभिर्बहुभिर्वरणीय महो रायो महद्धनं प्र यंधि । अस्मभ्यं प्रयच्छ ॥ अवोचाम । वच परिभाषणे । लुङि च्लेरङादेशः । पादादित्वादनिघातः । कृणुहि । कृवि हिंसाकरणयोरित्यस्य लोटि रूपं । तिङ उत्तरत्वादनिघातः । वस्यसः । वसुमच्छब्दादीयसुनि विन्मतोर्लुगिति मतुपो लुकि टिलोपे च कृते ईकारलोपश्छान्दसः । यंधि । यमेर्लोटि बहुलं छंदसीति विकरणस्य लुक् । वा छंदसीति हेर्विकल्पेन पित्त्वादङितश्चेति धिरादेशः ॥ ॥१९॥

आ वो राजानमिति षोडशर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं । आ वः षोळशेत्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः ॥

आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वं ॥१॥
आ । वः । राजानं । अध्वरस्य । रुद्रं । होतारं । सत्यऽयजं । रोदस्योः ।
अग्निं । पुरा । तनयित्नोः । अचित्तात् । हिरण्यऽरूपं । अवसे । कृणुध्वं ॥१॥

हे ऋत्विग्यजमाना अध्वरस्य यज्ञस्य राजानमधिपतिं होतारं देवानामाह्वातारं रुद्रं रोदयमानं द्रवंतं शत्रून्रोदयंतं वा । यद्वा । एषा वा अग्नेस्तनूर्यद्रुद्र इति रुद्रात्मकं रोदस्योर्द्यावापृथिव्योः सत्ययजं सत्यस्यान्नस्य दातारं । यद्वा । सत्ययजं सत्येन हविषा देवान्यजंतं । यद्वा । रोदस्योर्व्याप्य वर्तमानं हिरण्यरूपं सुवर्णप्रभं । एवंविधमग्निं वो युष्माकमवसे रक्षणाय तनयित्नोः । तनयित्नुरशनिः स ह्याकस्मिकः । तत्सदृशादचित्तात् । न विद्यते चित्तं यस्मिन् तदचित्तं । चित्तोपलक्षितसर्वेंद्रियोपसंहारो मरणमिति यावत् । तस्मान्मरणात्पुरा प्रागेवा कृणुध्वं । यूयं ममतार्थविभिरपि भजध्वं ॥ रुद्रं । रोदयते रोदेर्णिलुक्च । उ० २ २२. । इति रक्प्रत्ययः । तनयित्नोः । तनिः शब्दार्थः । चुरादिरदंतः । स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् । उ० ३. २९ । इतीत्नुच्प्रत्ययः । चित्स्वरेणांतोदात्तः । सुपां सुलुगादिना एकादेशस्वरः । कृणुध्वं । कृवि हिंसाकरणयोः । लोटि रूपं ॥

अयं योनिश्चकृमा यं वयं ते जायेव पत्य उशती सुवासाः ।
अर्वाचीनः परिवीतो नि षीदेमा उ ते स्वपाक प्रतीचीः ॥२॥
अयं । योनिः । चकृम । यं । वयं । ते । जायाऽइव । पत्ये । उशती । सुऽवासाः ।
अर्वाचीनः । परिऽवीतः । नि । सीद । इमाः । ऊं इति । ते । सुऽअपाक । प्रतीचीः ॥२॥

हे अग्ने ते त्वदर्थं यमुत्तरवेदिलक्षणं प्रदेशं वयं चकृम । कृमः । अयं योनिस्तव स्थानं भवति । तत्र दृष्टांतः । जायेव । यथा पत्ये उशती पतिं कामयमाना सुवासाः शोभनवस्त्रोपेता जाया स्वात्मसमीपे तस्य स्थानं करोति तद्वत् । हे स्वपाक स्वपक्व सुकर्मन्नग्ने त्वं परिवीतो यष्टव्यैर्देवैस्तेजोभिर्वा परिवीतोऽर्वाचीनोऽस्मदभिमुखः सन् नि षीद । उत्तरवेद्यामुपविश । तत्र स्थितस्य ते तवेमा ज्वालाः स्तुतयो वा प्रतीचीस्त्वदभिमुखाः प्रवर्तंते ॥ चकृम । करोतेर्लिटि रूपं । वाक्यभेदान्निघाताभावः । अर्वाचीनः । विभाषांचेरदिगिति खः । परिवीतः । व्येञ् संवरणे । कर्मणि निष्ठा । यजादित्वात्संप्रसारणं । गतिरनंतर इति गतेः स्वरः ॥

आशृण्वते अदृपिताय मन्म नृचक्षसे सुमृळीकाय वेधः ।
देवाय शस्तिममृताय शंस ग्रावेव सोता मधुषुद्यमीळे ॥३॥

आऽशृण्वते । अदृपिताय । मन्म । नृऽचक्षसे । सुऽमृळीकाय । वेधः ।
देवाय । शस्तिं । अमृताय । शंस । ग्रावाऽइव । सोता । मधुऽसुत् । यं । ईळे ॥३॥

वेधः स्तोत्राणां कर्तर्हे स्तोतराशृण्वते स्तोत्राकर्णनपरायादृपितायादृप्तायाप्रमत्ताय नृचक्षसे नृणां द्रष्ट्रे सुमृळीकाय सुसुखायामृताय मरणधर्मरहिताय देवाय तस्मा अग्नये मन्म स्तोत्रं शस्तिं शस्त्रं च शंस । मधुसुन्मदकरस्य सोमस्य सोता । तत्र दृष्टांतः । ग्रावेव । यथा ग्रावा सोमस्य सोता तद्वत् । सोमाभिषवं कुर्वाणो यजमानो यमग्निमीळे । स्तौति । तस्मै शंसेति संबन्धः । यद्वा । मधुसुत्सोमसुद्यजमानोऽग्निमीळे । स्तौति । तत्र दृष्टांतः । यथा ग्रावा सोमस्य सोता शब्दं करोति । प्रैते वदंतु प्र वयं वदाम ग्रावभ्यः । ऋग्वे॰ १० ९४ १ । इत्यत्र ग्राव्णां कर्तृत्वं श्रुतमिति ॥ आशृण्वते । शतुरनुम इति विभक्तेरुदात्तत्वं । ईळे । ईड स्तुतौ । लटि लोपस्त आत्मनेपदेष्विति तलोपः । यद्वा । लिटि तशब्दस्यैशादेशे कृते रूपं ॥

त्वं चिन्नः शम्या अग्ने अस्या ऋतस्य बोध्यृतचित्स्वाधीः ।
कदा त उक्था सधमाद्यानि कदा भवंति सख्या गृहे ते ॥४॥
त्वं । चित् । नः । शम्यै । अग्ने । अस्याः । ऋतस्य । बोधि । ऋतऽचित् । सुऽआधीः ।
कदा । ते । उक्था । सधऽमाद्यानि । कदा । भवंति । सख्या । गृहे । ते ॥४॥

हे अग्ने त्वं चित्त्वमेव शम्यै । शमीशब्दः कर्मनाम । अस्याः शम्यै नोऽस्मत्संबंधिनोऽस्य कर्मणो देवता भवसि । हे ऋतचित् सत्यज्ञ हे अग्ने स्वाधीः सुकर्मा सुध्यानो वा त्वमृतस्य बोधि । अस्मदीयं स्तोत्रं बुध्यस्व । ते तव सधमाद्यानि सहमदनिमित्तान्युक्था शस्त्राणि कदा कस्मिन्काले भवंति । भविष्यंति । तथास्मदीये गृहे ते त्वया सह सख्या सख्यानि कदा भविष्यंति ॥ सधमाद्यानि । मादयतेर्ण्यंतस्याचो यदिति यत् । सध मादस्थयोरिति सहस्य सधादेशः । भवंति । विभाषा कदाकर्ह्योः । पा॰ ३ ३ ५ । इति भविष्यदर्थे लट् ॥

कथा ह तद्वरुणाय त्वमग्ने कथा दिवे गर्हसे कन्न आगः ।
कथा मित्राय मीळ्हुषे पृथिव्यै ब्रवः कदर्यम्णे कद्भगाय ॥५॥
कथा । ह । तत् । वरुणाय । त्वं । अग्ने । कथा । दिवे । गर्हसे । कत् । नः । आगः ।
कथा । मित्राय । मीळ्हुषे । पृथिव्यै । ब्रवः । कत् । अर्यम्णे । कत् । भगाय ॥५॥

हे अग्ने त्वं तदस्मदीयं पापं वरुणाय कथा गर्हसे । केन हेतुना गर्हापूर्वमावेदयसि । इति प्रश्नः । दिवे द्युलोकाय द्योतमानाय सूर्याय वा कथा कथं तत्पापमावेदयसि । नोऽस्माकमागस्तत्पापं कत्किमस्ति । त्वत्परिचरणान्नास्तीत्यर्थः । तथा मीळ्हुषेऽभिमतफलस्य सेक्त्रे मित्राय पृथिव्यै च कथा ब्रवः । कथमागो ब्रूयाः । अर्यम्णे देवाय भगायैतन्नामकाय च देवाय कत्कथं ब्रूयाः ॥ कथा । किंशब्दात्था हेतौ च छंदसीति थाप्रत्ययः । प्राग्दिशो विभक्तिरिति विभक्तिसंज्ञायां किमः कः । पा॰ ७ २ १०३ । इति कादेशः । मीळ्हुषे । मिह सेचने । क्वसौ दाश्वान् साह्वान् मीढ्वांश्चेति निपातितः । ब्रवः । ब्रूञ् व्यक्तायां वाचि । लेटि लेटोऽडाटावित्यडागमः । पादादित्वादनिघातः । आगमस्यानुदात्तत्वाद्धातुस्वरः ॥ ॥२०॥

कद्धिष्ण्यासु वृधसानो अग्ने कद्वाताय प्रतवसे शुभंये ।
परिज्मने नासत्याय क्षे ब्रवः कदग्ने रुद्राय नृघ्ने ॥६॥
कत् । धिष्ण्यासु । वृधसानः । अग्ने । कत् । वाताय । प्रऽतवसे । शुभंऽये ।
परिऽज्मने । नासत्याय । क्षे । ब्रवः । कत् । अग्ने । रुद्राय । नृऽघ्ने ॥६॥

हे अग्ने धिष्ण्यास्वाग्नीध्रीयादिधिष्ण्येषु वृधमानो घृताद्याहुतिभिर्वर्धमानस्त्वं कत्कथं ब्रूयाः । प्रतवसे प्रकृष्टबलाय शुभंये शुभस्य प्रापयित्रे परिज्मने परितो गन्त्रे नासत्याय सत्यस्य नेत्रे । यद्वा । न विद्यतेऽसत्यं यस्य तस्मै वाताय वायवे । यद्वा । नासत्यायेति वचनव्यत्ययः । नासत्याभ्यामश्विभ्यां । क्षे । क्षेति पृथिवीमाह । क्षियंति निवसन्त्यस्यां प्राणिन इति । तस्यै क्षे पृथिव्यै च कत्कथं ब्रूयाः । हे अग्ने नृघ्ने नृणां पापकृतां हंत्रे रुद्राय देवाय कत्कथमागो ब्रवः । ब्रूयाः ॥ वृधमानः । वृधु वर्धने । असानजित्यनुवृत्तावृजिवृधिमंदिसहिभ्यः किदित्यसानच्प्रत्ययः । कित्त्वादगुणः । चित्त्वादंतोदात्तः । शुभंये । या प्रापणे । विच् । तत्पुरुषे कृति बहुलमिति द्वितीयाया अप्यलुक् । कृत्स्वरः । क्षे । क्षि निवासगत्योः । अन्येभ्योऽपि दृश्यत इत्यधिकरणे डः । ततष्टाप् । चतुर्थ्येकवचन आतो धातोरित्यत्रात इति योगविभागादाकारलोपः । नृघ्ने । हन हिंसागत्योः । बहुलं छंदसीति क्विप् ॥

कथा म॒हे पु॑ष्टिंभ॒राय॑ पू॒ष्णे कद्रु॒द्राय॒ सुम॑खाय ह॒विर्दे ।
कद्विष्ण॑व उरुगा॒याय॒ रेतो॒ ब्रवः॒ कद॑ग्ने॒ शर॑वे बृह॒त्यै ॥७॥
कथा । म॒हे । पु॒ष्टि॒म्ऽभ॒राय॑ । पू॒ष्णे । कत् । रु॒द्राय॑ । सुऽम॑खाय । ह॒विः॒ऽदे ।
कत् । विष्ण॑वे । उ॒रु॒ऽगा॒याय॑ । रेतः॑ । ब्रवः॑ । कत् । अ॒ग्ने॒ । शर॑वे । बृ॒ह॒त्यै ॥७॥

हे अग्ने महे महते पुष्टिंभराय पुष्टिधारकाय पूष्णे एतन्नामकाय देवाय कथा केन हेतुना पापं ब्रवीथाः । सुमखाय सुपूजनीयाय सुयज्ञाय वा हविर्देऽग्निरूपेण देवानां हविर्दात्रे । यद्वा । स्विष्टकृत्त्वाद्धविषो दात्रे । रुद्राय कत्कथं ब्रूयाः । तथोरुगायायोरुभिर्बहुभिर्गायमानाय । यद्वा । प्रभूतकीर्तये विष्णवे रेतः जयहेतु पापं कत्कथं वदेः । शरवे । शृणाति पक्वा ओषधीरिति शरुः शरत्संवत्सरः । यद्वा । हिंसिका निर्ऋतिः । बृहत्यै महत्यै शरवे निर्ऋत्यै वा कत्कथं पापं ब्रवः । ब्रूयाः ॥ पुष्टिंभराय । डुभृञ् धारणपोषणयोः । संज्ञायां भृतॄवृजीत्यादिना खच् । अरुर्द्विषदजंतस्य मुमिति पूर्वपदस्य मुमागमः । चित्त्वादंतोदात्तः । समासे कृत्स्वरः । हविर्दे । अनुदात्तस्य च यत्रोदात्तलोप इति सुप उदात्तत्वं । शरवे । शॄ हिंसायां । शॄस्वृस्निहित्रप्यसीत्यादिना उप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तः ॥

कथा॒ शर्धा॑य म॒रुता॑मृ॒ताय॒ कथा॑ सू॒रे बृ॑ह॒ते पृ॒च्छ्यमा॑नः ।
प्रति॑ ब्र॒वोऽदि॑तये तु॒राय॒ साधा॑ दि॒वो जा॑तवेदश्चिकि॒त्वान् ॥८॥
कथा॑ । शर्धा॑य । म॒रुता॑म् । ऋ॒ताय॑ । कथा॑ । सू॒रे । बृ॒ह॒ते । पृ॒च्छ्यमा॑नः ।
प्रति॑ । ब्र॒वः॒ । अदि॑तये । तु॒राय॑ । साध॑ । दि॒वः । जा॒त॒ऽवे॒दः॒ । चि॒कि॒त्वान् ॥८॥

हे अग्ने ऋताय गन्त्रे सत्यभूताय वा मरुतां शर्धाय बलभूताय गणाय कथा केन हेतुना मदीयमागः प्रतिब्रूयाः । तेन पृच्छ्यमानः सन् तस्मै बृहते महते सूरे सूर्याय कथा कथं वदेः । तथादितये देव्यै तुराय त्वरितगमनाय वायवे । अदितयेऽदीनाय तुराय वा । प्रति ब्रवः । मदीयमागः कथं प्रतिब्रूयाः । यस्मादेवं तस्मात् हे जातवेदोऽग्ने चिकित्वान् तत्सर्वं जानानस्त्वं दिवो दीप्तान्देवान् साध । साधय । गच्छ । यद्वा । दिवो द्युलोकस्य यज्ञवहनलक्षणं कार्यं साध । कुरु ॥ सूरे । सर्वविधीनां छंदसि विकल्पितत्वात् ङेर्यत्वाभावः । अतो गुण इति पररूपत्वं । पृच्छ्यमानः । प्रच्छ ज्ञीप्सायां । कर्मणि यक् । ग्रहिज्यादिना संप्रसारणं । शानचो लसार्वधातुकानुदात्तत्वे यक्स्वरः । साध । राध साध संसिद्धौ । अंतर्भावितण्यर्थस्य लोटि व्यत्ययेन शप् ॥

ऋ॒तेन॑ ऋ॒तं निय॑तमीळ॒ आ गोरा॒मा सचा॒ मधु॑मत्प॒क्वम॑ग्ने ।
कृ॒ष्णा स॒ती रुश॑ता धा॒सिनै॒षा जाम॑र्येण॒ पय॑सा पीपाय ॥९॥

ऋतेन । ऋतं । निऽयतं । ईळे । आ । गोः । आमा । सचा । मधुऽमत् । पक्वं । अग्ने ।
कृष्णा । सती । रुशता । धासिना । एषा । जामर्येण । पयसा । पीपाय ॥९॥

हे अग्ने ऋतेन सत्यभूतेन यज्ञेन नियतमनुस्यूतमृतमुदकं गोर्धेनोः पय ईळे । आयाचे । सानाय्यादिहविरर्थं गव्यं पयस्त्वां याच इत्यभिप्रायः । आमापक्वा सा गौर्मधुमन्माधुर्योपेतं पक्वं पयः सचा सह धारयति । कृष्णा कृष्णवर्णा सत्येषा गौ रुशता श्वेतेन धासिना प्राणिनां धारकेण जामर्येण । जायत इति जाः प्रजाः । ता जा अमर्येणामरणनिमित्तेन तेन पयसा पीपाय । प्रजाः प्याययति । तवैव महिमा यद्गवां सान्परिणाममग्नेव करोषि ॥ पीपाय । प्यायतेर्लिटि लिड्यङोश्चेति पीभावः ॥

ऋतेन हि ष्मा वृषभश्चिदक्तः पुमाँ अग्निः पयसा पृष्ठ्येन ।
अस्पंदमानो अचरद्वयोधा वृषा शुक्रं दुदुहे पृश्निरूधः ॥१०॥
ऋतेन । हि । स्म । वृषभः । चित् । अक्तः । पुमान् । अग्निः । पयसा । पृष्ठ्येन ।
अस्पंदमानः । अचरत् । वयःऽधाः । वृषा । शुक्रं । दुदुहे । पृश्निः । ऊधः ॥१०॥

वृषभोऽभिमतफलवर्षकः पुमान् श्रेष्ठः सोऽग्निर्ऋतेन सत्यभूतेन पृष्ठ्येन धारकेण पयसाक्तः सिक्तो भवति । हि ष्म चित् त्रयः पूरणाः । वयोधा अन्नदः सोऽग्निरस्पंदमान एकत्रावस्थितः सन् एवाचरत् । सर्वत्र तेजसा चरति । तथा वृषाणां वर्षकः पृश्निः सूर्यः शुक्रं पय ऊधोऽन्तरिक्षं मेघं वा दुदुहे । दोग्धि ॥ अक्तः । अंजू व्यक्तिम्रक्षणगतिषु । कर्मणि निष्ठा । दुदुहे । द्विकर्मकोऽयं धातुः । ऊधः । अकथितं चेति कर्मसंज्ञा ॥ ॥२१॥

ऋतेनाद्रिं व्यसन्भिदंतः समंगिरसो नवंत गोभिः ।
शुनं नरः परि षदन्नुषासमाविः स्वरभवज्जाते अग्नौ ॥११॥
ऋतेन । अद्रिं । वि । असन् । भिदंतः । सं । अंगिरसः । नवंत । गोभिः ।
शुनं । नरः । परि । सदन् । उषसं । आविः । स्वः । अभवत् । जाते । अग्नौ ॥११॥

अंगिरसो मेधातिथिप्रभृतय ऋतेन यज्ञेन हेतुना गवां निरोधकमद्रिं पर्वतं भिदंतो विदारयंतः सन्तो व्यसन् । व्यक्षिपन् । ततस्ते गोभिः सं नवंत । समगच्छंत । नरः कर्मणां नेतारस्ते शुनं सुखेनोषसं परि षदन् । परितः प्राप्नुवन् । ततः स्वः सूर्योऽप्याविरभवत् । सर्वमेतदग्ने त्वयि जाते मथनेन निष्पादिते सत्यभूदिति ॥ असन् । अस्यतेर्लुङि लृदित्पुष्यादिद्युतादिनाङादेशः । अनित्यमागमशासनमिति थुगभावः ॥

ऋतेन देवीरमृता अमृक्ता अर्णोभिरापो मधुमद्भिरग्ने ।
वाजी न सर्गेषु प्रस्तुभानः प्र सदमित्स्रवितवे दधन्युः ॥१२॥
ऋतेन । देवीः । अमृताः । अमृक्ताः । अर्णःऽभिः । आपः । मधुमतऽभिः । अग्ने ।
वाजी । न । सर्गेषु । प्रऽस्तुभानः । प्र । सदं । इत् । स्रवितवे । दधन्युः ॥१२॥

हे अग्ने अमृता अमरणाहेतव अमृक्ता रक्षःप्रभृतिभिरबाधिता मधुमद्भिर्माधुर्योपेतैरर्णोभिरुदकैर्युक्ता देवीर्दिव्यो नद्य ऋतेन सत्येन यज्ञेन वा हेतुनाप आप्तयाः सत्यः सदमित्सदैव स्रवितवे स्रवणाय प्र दधन्युः । प्रगच्छंति । तत्र दृष्टांतः । वाजी न । यथा सर्गेषु प्रेरणेषु प्रस्तुभानः प्रोत्साह्यमानोऽश्वः प्रगच्छति तद्वत् ॥ आपः । आप्लृ व्याप्तौ । आप्नोतेः क्विप् ह्रस्वश्चेति कर्मणि क्विप् । अप्तृन्नित्यादिना जसि दीर्घः । प्रस्तुभानः । स्तोभतिरर्चतिकर्मा ॥

मा कस्य यक्षं सदमिद्धुरो गा मा वेशस्य प्रमिनतो मापेः ।
मा भ्रातुरग्ने अनृजोर्ऋणं वेर्मा सख्युर्दक्षं रिपोर्भुजेम ॥१३॥
मा । कस्य । यक्षं । सदं । इत् । हुरः । गाः । मा । वेशस्य । प्रऽमिनतः । मा । आपेः ।
मा । भ्रातुः । अग्ने । अनृजोः । ऋणं । वेः । मा । सख्युः । दक्षं । रिपोः । भुजेम ॥१३॥

हे अग्ने ह्वरोऽस्माकं हिंसकस्य कस्य कस्यचिदपि जंतोर्यज्ञं यज्ञं सदमित्सदैव मा गाः । कदाचिदपि मा गच्छ । प्रमिनतो हिंसकस्य वेशस्य प्रातिवेश्यस्य यज्ञं मा गाः । तथापेर्मद्व्यतिरिक्तस्य बंधोर्यज्ञं मा गच्छ । तथानृजोः कुटिलचित्तस्य भ्रातुर्ऋणमृणवद्देयं हविर्मा वेः । मा कामयेथाः । तथा वयमपि सख्युर्मित्रस्य रिपोः शत्रोर्दक्षं भोगसमर्थं धनं मा भुजेम । मा भुंजीमहि । किंतु त्वया दत्तं धनं भुंजीमहि ॥ ह्वरः । ह्व प्रसह्यकरणे । क्विप् । बहुलं छंदसीत्युत्वं । सार्वकाच इति विभक्तेरुदात्तत्वं । भुजेम । भुज पालनाभ्यवहारयोः । आशीर्लिङि व्यत्ययेन परस्मैपदं । लिङ्याशिष्यङित्यङ्प्रत्ययः ॥

रक्षा णो अग्ने तव रक्षणेभी रारक्षाणः सुमख प्रीणानः ।
प्रति ष्फुर वि रुज वीड्वंहो जहि रक्षो महि चिद्वावृधानं ॥१४॥
रक्ष । नः । अग्ने । तव । रक्षणेभिः । ररक्षाणः । सुऽमख । प्रीणानः ।
प्रति । स्फुर । वि । रुज । वीळु । अंहः । जहि । रक्षः । महि । चित् । ववृधानं ॥१४॥

सुमख सुयज्ञ सुधनेति वा हे अग्ने ररक्षाणो भृशमस्माकं रक्षिता प्रीणानो हविर्भिः प्रीतस्त्वं तव रक्षणेभिस्त्वदीयैरवनैर्नोऽस्मान्रक्ष । पालय । प्रति स्फुर । अस्मान्प्रतिदीप्यस्व । वीळु दृढमंहः पापं वि रुज । विशेषेण नाशय । किंच महि चिन्महदपि वावृधानं वर्धमानं वृत्रं वा बाधकं रक्षो जहि ॥ णः । नश्च धातुस्थोरुषुभ्य इति संहितायां णत्वं । ररक्षाणः । रक्षेर्यङ्लुकि चानशि रूपं । जहि । हन हिंसागत्योः । लोटि हंतेर्ज इति जादेशः । आभाच्छास्त्रीयस्यासिद्धत्वादतो हेरिति लुक् न भवति ॥

एभिर्भव सुमना अग्ने अर्कैरिमान्स्पृश मन्मभिः शूर वाजान् ।
उत ब्रह्माण्यंगिरो जुषस्व सं ते शस्तिर्देववाता जरेत ॥१५॥
एभिः । भव । सुऽमनाः । अग्ने । अर्कैः । इमान् । स्पृश । मन्मऽभिः । शूर । वाजान् ।
उत । ब्रह्माणि । अंगिरः । जुषस्व । सं । ते । शस्तिः । देवऽवाता । जरेत ॥१५॥

हे अग्ने एभिर्मदीयैरर्कैरर्चनीयैः शस्त्रैः सुमनाः शोभनमनस्को भव । हे शूर इमानस्मदीयान्हविर्लक्षणान्वाजान्मन्मभिः स्तोत्रैः सह स्पृश । प्रतिगृहाण । उतापि च अंगिरः । अंगति हवींषि प्राप्नोतीत्यंगिरा अग्निः । यद्वा । येंऽगारा आसंस्तेऽगिरसोऽभवन् । ऐ॰ ब्रा॰ ३. ३४ । इति ब्राह्मणं । तेषामंगिरसां कारणत्वादग्नेरंगिरस्त्वं । तत्कारणत्वे च मंत्रः । ये अंगिरसः सूनवस्ते अग्नेः परि जज्ञिरे । ऋग्वे॰ १०. ६२. ५. । इति । तादृश हे अग्ने ब्रह्माणि मंत्रान् जुषस्व । सेवस्व । देववाता । देवार्थं गता देवान् स्तोतुं प्राप्तेत्यर्थः । तादृशी शस्तिः शंसनं ते त्वां सं जरेत । सवर्धयतु ॥ स्पृश । स्पृश संस्पर्शने । तुदादिः । देववाता । वा गतिगंधनयोः । गत्यर्थाकर्मकेति कर्तरि क्तः । देवः । पचाद्यजंतः । क्ते चेति चतुर्थ्यंतस्य पदस्य प्रकृतिस्वरः ॥

एता विश्वा विदुषे तुभ्यं वेधो नीथान्यग्ने निण्या वचांसि ।
निवचना कवये काव्यान्यशंसिषं मतिभिर्विप्र उक्थैः ॥१६॥

एता । विश्वा । विदुषे । तुभ्यं । वेधः । नीथानि । अग्ने । निण्या । वचांसि ।
निऽवचना । कवये । काव्यानि । अशंसिषं । मतिऽभिः । विप्रः । उक्थैः ॥१६॥

वेधो विधातर्हे अग्ने विदुषे कर्मविषयज्ञानवते कवये क्रांतदर्शिने तुभ्य नीथानि फलप्रापकाणि निण्या नेयार्थानि गूढानि निवचना नितरां वक्तव्यानि काव्यानि कविभिर्मेधाविभिः कृतान्येता विश्वानि सर्वाणि वचांसि वाक्यानि मतिभिर्मननीयैः स्तोत्रैरुक्थैः शस्त्रैश्च सहितो विप्रः प्राज्ञोऽहमशंसिषं । अवोच । तानि सेवस्वेत्यर्थः ॥ ॥ २२ ॥

कृणुष्वेति पंचदशर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभं रक्षोहाग्निदेवताकं । कृणुष्व पंचोना राक्षोघ्नमित्यनुक्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोः सूक्तविनियोगः ॥ प्रवर्ग्येऽभिष्टवे कृणुष्व पाज इत्याद्याः पंचर्चो विनियुक्ताः । सूत्रितं च । कृणुष्व पाजः प्रसितिं न पृथ्वीमिति पंच । आ० ४ ६ । इति ॥

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥१॥

कृणुष्व । पाजः । प्रऽसितिं । न । पृथ्वीं । याहि । राजाऽइव । अमऽवान् । इभेन ।
तृष्वीं । अनु । प्रऽसितिं । द्रूणानः । अस्ता । असि । विध्य । रक्षसः । तपिष्ठैः ॥१॥

हे अग्ने पाजस्तेजःसंघं कृणुष्व । कुरुष्व । विस्तारय । तत्र दृष्टांतः । प्रसितिं न । यथा मृगयुः पृथ्वीं विस्तीर्णां प्रसितिं । प्रकर्षेण सीयते बध्यत इति प्रसितिर्वागुरा । तादृशीं प्रसितिं पक्षिग्रहणार्थं वनगहनेषु प्रसारयति तद्वत्त्वमपि रक्षांसि हंतुं महद्बलमग्रतस्तनुष्व । इभेन गतभयेन तेजःसंघेन युक्तस्त्वं याहि । रक्षांसि हंतुं गच्छ । तत्र दृष्टांतः । राजेव । यथामवान् राजा । सह वर्तत इत्यमोऽमात्यः । तद्वान् । यद्वा । अमोऽमन रोगः । शत्रूणां कर्तव्यो रोगस्तद्वान् । शत्रूणां रोगभूत इत्यर्थः । राजेभेन गजेन युक्तः सन् परबलं प्रतिगच्छति तद्वत् । किंच तृष्वीं । तृष्वीति क्षिप्रनाम । क्षिप्रगामिनीं प्रसितिं प्रकृष्टां सेनामनु द्रूणानोऽनुगच्छन् । यद्वा । तृष्वीमिति तृतीयार्थे द्वितीया । तृष्व्या क्षिप्रया प्रसित्यानुबद्धया संततया गत्या द्रूणानः परसेनां हिंसन् अस्ता शत्रूणां क्षेप्तासि । तपिष्ठैस्तप्तृतमैस्तेजोभी रक्षसो राक्षसान्विध्य । ताडय ॥ अत्र निरुक्तं । कुरुष्व पाजः । पाजः पालनात् । प्रसितिमिव पृथ्वीं । प्रसितिः प्रसयनात्तंतुर्वा जालं वा । याहि राजेवामात्यवानभ्यमनवान्त्स्ववान्वेरावता गणेन गतभयेन बृंहितेनेति वा । तृष्व्यानु प्रसित्या द्रूणानः । तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वा । अस्तासि विध्य रक्षसस्तपिष्ठैस्तप्ततमैस्तापिष्ठतमैरिति वा । नि० ६ १२ । इति ॥ कृणुष्व । कृवि हिंसाकरणयोः । लोटि धिन्विकृण्व्योरच्चेत्युप्रत्ययः । व्यत्ययेनात्मनेपदं । विकरणस्वरस्य सति शिष्टोऽपि सार्वधातुकस्वरं न बाधत इति सार्वधातुकस्वरः । म० ६ १ १५८ ११ ॥

तव भ्रमास आशुया पतंत्यनु स्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतंगानसंदितो वि सृज विष्वगुल्काः ॥२॥

तव । भ्रमासः । आशुऽया । पतंति । अनु । स्पृश । धृषता । शोशुचानः ।
तपूंषि । अग्ने । जुह्वा । पतंगान् । असंऽदितः । वि । सृज । विष्वक् । उल्काः ॥२॥

हे अग्ने तव संबंधिनो भ्रमासो भ्राम्यंत आशुया शीघ्रगतयो रश्मयः पतंति । सर्वतः प्रसरंति । शोशुचानो भृशं दीप्यमानस्त्वं धृषताभिभवसमर्थेन तेजःसंघेन शत्रूननु क्रमेण स्पृश । दह । दहनोपायं दर्शयति । असंदितः परैरसिबद्धस्त्वं तपूंषि तापकानि तेजांसि पतंगान् पतनशीलान्विस्फुलिंगानुल्काश्चैतत्त्रितयं जुह्वा । हूयतेऽस्यामाहुतय इति जुहूर्ज्वाला । तया विष्वक् सर्वतो वि सृज । प्रसारय ॥ आशुया । आशुशब्दाज्जसः सुपां सुलुगिति याजादेशः । चित्स्वरः । धृषता । धृष प्रसहने । चुरादिराधृषीयः । व्यत्ययेन शः । शतुरनुम

इति विभक्तेरुदात्तत्वं । जुह्वा । जुहोतेर्दीर्घश्चेति क्विप् द्विर्वचनं दीर्घत्वं । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वस्य नोङ्धात्वोरिति प्रतिषेध उदात्तस्वरितयोर्यण इति स्वरितत्वं । असंदितः । दो अवखंडने । कर्मणि निष्ठा । द्यतिस्यतीतीत्वं । नञा समासे तस्य स्वरः ॥

प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशंसो यो अंत्यग्ने माकिष्टे व्यथिरा दधर्षीत् ॥३॥
प्रति । स्पशः । वि । सृज । तूर्णिऽतमः । भव । पायुः । विशः । अस्याः । अदब्धः ।
यः । नः । दूरे । अघऽशंसः । यः । अंति । अग्ने । माकिः । ते । व्यथिः । आ । दधर्षीत् ॥३॥

हे अग्ने तूर्णितमस्त्वरिततमस्त्वं स्पशः परबाधकान्स्वकीयान् चारान्प्रति सत्यानृतविवेकार्थं वि सृज । शत्रून्प्रति विशेषेण प्रेरय । अदब्धः केनाप्यहिंसितस्त्वमस्यास्त्वदीयाया विशोऽस्मदादिकायाः प्रजायाः पायुः पालको भव । कस्मात्त्राणमित्यपेक्षायामाह । नोऽस्माकं दूरे योऽघशंसः । अघं पापात्मकं शंसनमभिलापः कीर्तनं वा यस्य सोऽघशंसः । यश्चाघशंसोऽंत्यस्माकं समीपे तिष्ठति तस्मादुभयविधाच्छत्रोः पालको भव । किंच ते त्वत्संबंधिनोऽस्मान्माकिर्न कश्चिदपि व्यथिर्बाधको राक्षस आ दधर्षीत् । आधर्षयतु । अस्माकं कश्चिदपि परिभवं मा करोत्वित्यर्थः ॥ अंति । अंतिकस्य कादिलोप आद्युदात्तत्वं च । अग्ने । पादादित्वात्षाष्ठिकमाद्युदात्तत्वं । माकिष्ट इति संहितायां युष्मत्तत्ततक्षुःष्वंतःपादमिति षत्वं । दधर्षीत् । धृष प्रसहने । लङि बहुलं छंदसीति शपः श्लुः । बहुलं छंदसीति तिप ईडागमः । निघातः ॥

उदग्ने तिष्ठ प्रत्या तनुष्व न्य१मित्राँ ओषतात्तिग्महेते ।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कं ॥४॥
उत् । अग्ने । तिष्ठ । प्रति । आ । तनुष्व । नि । अमित्रान् । ओषतात् । तिग्मऽहेते ।
यः । नः । अरातिं । संऽइधान । चक्रे । नीचा । तं । धक्षि । अतसं । न । शुष्कं ॥४॥

तिग्महेते । तिग्मास्तीक्ष्णा हेतयो ज्वाला यस्य स तथोक्तः । तादृश हे अग्ने उत्तिष्ठ । रक्षोहननार्थमुद्यतो भव । शत्रून्प्रत्या तनुष्व । ज्वालामेव विस्तारय । तेजसा नि अमित्रान् शत्रूनोषतात् । नितरां दह । हे समिधान समिद्भिर्दीप्यमानाग्ने यः पुमान् नोऽस्माकमरातिं । भावप्रधानोऽयं निर्देशः । अरातित्वं शात्रवं चक्रे । कुरुते । अरातिमदानं वा कुरुते । तं पुमांसं नीचा न्यग्भूतं धक्षि । दह । तत्र दृष्टांतः । अतसं न । यथा शुष्कमनार्द्रमतसं काष्ठं दहसि तद्वत् ॥ ओषतात् । उष दाहे । लोटि तुह्योस्तातङाशिष्यन्यतरस्यामिति तातङादेशः । धक्षि । दहेर्लोटि बहुलं छंदसीति शपो लुक् । हो ढ इति ढत्वं । भष्भावः । षढोः कः सीति कत्वं । निघातः ॥

ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥५॥
ऊर्ध्वः । भव । प्रति । विध्य । अधि । अस्मत् । आविः । कृणुष्व । दैव्यानि । अग्ने ।
अव । स्थिरा । तनुहि । यातुऽजूनां । जामिं । अजामिं । प्र । मृणीहि । शत्रून् ॥५॥

हे अग्ने ऊर्ध्वो भव । रक्षोहननार्थमुद्युक्तो भव । अस्मदस्मत्तोऽधि अधिकान्राक्षसान् प्रति विध्य । प्रत्येकं ताडय । दैव्यानि तेजांसि चाविष्कृणुष्व । आविष्कुरु । एतत्त्रयं विधाय यातुजूनां यातयितुं प्राणिनः क्लेशयितुं ये जवं कुर्वंति तेषां यातुधानानां स्थिरा दृढानि धनूंष्यव तनुहि । अवगतज्यानि कुरु । किंच जामिमजामिं बंधुमबंधुं शत्रून्प्र मृणीहि । प्रजहि । यद्वा । जामिं यः पूर्वं प्रहृतस्तं । अजामिं पूर्वमप्रहृतं । एवंभूतान् शत्रून् जहि ।

प्रहतोऽयमित्यपेक्षां मा कृथाः ॥ आविष्कृणुष्वेत्यत्र संहितायामिदुदुपधस्य चाप्रत्ययस्येति षत्वं । तनुहि । तनोतेर्लोट्युतश्च प्रत्ययाच्छंदसि वावचनमिति हेर्लुगभावः । यातुजूनां । जु गतौ । क्विब्वचीत्यादिना क्विप् । दीर्घः । आमि छांदसो नुम् । मृणीहि । मृङ् प्राणत्यागे । अंतर्भावितण्यर्थस्य लोटि बहुलं छंदसीति विकरणस्य श्ना । निघातः ॥ ॥ २३ ॥

स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।
विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् ॥ ६ ॥
सः । ते । जानाति । सुऽमतिं । यविष्ठ । यः । ईवते । ब्रह्मणे । गातुं । ऐरत् ।
विश्वानि । अस्मै । सुऽदिनानि । रायः । द्युम्नानि । अर्यः । वि । दुरः । अभि । द्यौत् ॥ ६ ॥

यविष्ठ युवतम । यद्वा । देवानां हवींषि मिश्रयितृतम हे अग्ने यः पुमानीवते गमनवते कल्याणहेतुभूतागमनाय ब्रह्मणे परिवृढाय तुभ्यं गातुं । गीयत उच्चार्यत इति गातुः स्तोत्रं । तदैरत् । प्रेरयति । स पुमान् ते तव सुमतिं कल्याणकरीमनुग्रहात्मिकां बुद्धिं जानाति । लभत इत्यर्थः । अस्मै स्तोत्रं कृतवते यजमानाय तदर्थं विश्वानि सुदिनानि शोभनानि दिनानि रायो धनानि द्युम्नानि द्युतिमंति रत्नकनकादीनि दुरो गृहानभि अभिलक्ष्यार्यो यज्ञानां स्वामी त्वं वि द्यौत् । विशेषेण द्योतय । केचिदत्र वाक्यभेदमंगीकुर्वंति । स्तोत्रं कृतवते यजमानाय विश्वानि सुदिनान्यभ्युदयकारीणि भवंति । रायः । राति ददातीति रायो गोधनानि । द्युम्नानि द्योतमानानि कनकादीनि चास्मै भवंति । अर्यः कर्मणामनुष्ठाता स यजमानो दुरो गृहानभि वि द्यौत । विशेषेण द्योतते ॥ ईवते । ई गतौ । क्विप् । तदस्यास्तीति मतुप् । छंदसीर इति मतुपो वत्वं । ऐरत् । ईर गतौ । यद्वृत्तयोगादनिघातः । अर्यः । ऋ गतौ । अर्यः स्वामिवैश्ययोरिति यत्प्रत्ययांतो निपातितः । स्वामिन्यंतोदात्तत्वं । द्यौत् । द्युत दीप्तौ । छांदसे लुङि द्युद्भ्यो लुङीति परस्मैपदं । बहुलं छंदसीत्यडभावः ॥

सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥ ७ ॥
सः । इत् । अग्ने । अस्तु । सुऽभगः । सुऽदानुः । यः । त्वा । नित्येन । हविषा । यः । उक्थैः ।
पिप्रीषति । स्वे । आयुषि । दुरोणे । विश्वा । इत् । अस्मै । सुऽदिना । सा । असत् । इष्टिः ॥ ७ ॥

हे अग्ने यः पुमान् नित्येन यावज्जीवं संकल्पितेनाग्निहोत्रादिसाधनभूतेन हविषा त्वा त्वां पिप्रीषति । प्रीणयितुमिच्छति । यश्चोक्थैः शस्त्रैः प्रीणयितुमिच्छति सेत् स एव पुमान् सुभगः शोभनधनः सौभाग्यवान्वा सुदानुः शोभनदानोपेतश्चास्तु । किंच दुरोणे दुरवने कृच्छ्रलभ्ये स्वे स्वकीय आयुषि शतवर्षात्मके जीवने तिष्ठतु । अस्मै यजमानाय विश्वा सर्वाणि सुदिना शोभनानि दिनानि भवंतु । अस्य सेष्टिः स यज्ञोऽसत् । फलसाधनसमर्थो भवतु ॥ पिप्रीषति । प्रीञ् तर्पणे । धातोः कर्मण इति सन् । असत् । अस्तेर्लेट्यडागमः । इष्टिः । मंत्रे वृषेत्यादिना क्तिन्नुदात्तः ॥

उखासंभरणीयेष्टावग्नेः स्विष्टकृतोऽर्चामि त इति याज्या । सूत्रितं च । अर्चामि ते सुमतिं घोष्यर्वागिती-दंप्रभृतिकर्मणां । आ० ४. १. । इति ॥

अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता जरतामियं गीः ।
स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥ ८ ॥
अर्चामि । ते । सुऽमतिं । घोषि । अर्वाक् । सं । ते । ववातां । जरतां । इयं । गीः ।
सुऽअश्वाः । त्वा । सुऽरथाः । मर्जयेम । अस्मे इति । क्षत्राणि । धारयेः । अनु । द्यून् ॥ ८ ॥

हे अग्ने ते तव सुमतिमनुग्रहकरीं शोभनां बुद्धिमर्चामि । पूजयामि । ववाता पुनःपुनस्त्वामभिगच्छंतीयमुच्यमाना गीर्वाग्घोषि घोषयुक्तं यथा भवति तथार्वाक् त्वदभिमुखं ते त्वां सं जरतां । स्तौतु । वयमपि स्वश्वाः शोभनाश्वोपेताः सुरथाश्च । उपलक्षणमेतत् । पुत्रपौत्रादिभिः सहिताः संतस्त्वां मर्जयेम । अलंकुर्याम । परिचरेमेति यावत् । त्वं तु अनु द्यूनन्वहमस्मे अस्मासु क्षत्राणि धनानि धारयेः । निधेहि ॥ घोषि । घुष शब्दने । औणादिक इन् । नित्स्वादाद्युदात्तः । वावाता । वा गतिगंधनयोरित्यस्य यङ्लुगंतस्य निष्ठायां रूपं । मर्जयेम । मृजू शौचालंकारयोः । ण्यंतस्य लिङि रूपं । वृद्ध्यभावश्छांदसः ॥

इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवांसमनु द्यून् ।
क्रीळंतस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवांसो जनानां ॥९॥
इह । त्वा । भूरि । आ । चरेत् । उप । त्मन् । दोषाऽवस्तः । दीदिऽवांसं । अनु । द्यून् ।
क्रीळंतः । त्वा । सुऽमनसः । सपेम । अभि । द्युम्ना । तस्थिऽवांसः । जनानां ॥९॥

हे अग्ने इह रक्षोहननाख्ये कर्मणि यद्वास्मिँल्लोके यः पुरुषो दोषावस्तः रात्रावहनि च दीदिवांसं दीप्यमानं त्वामनु द्यूनन्वहं त्मन् आत्मना स्वयमेवोप समीपे भूरि भूयिष्ठं यथा भवति तथा चरेत् । परिचरति । तस्माद्वयमपि जनानां शत्रूणां द्युम्ना द्युम्नानि धनान्यभि तस्थिवांसस्त्वत्प्रसादादात्मसात्कुर्वंतोऽत एव क्रीळंतः स्वे स्वे गृहे पुत्रपौत्रादिभिः सह संक्रीडमानास्तथा सुमनसः शोभनमनस्काः संतस्त्वा सपेम । परिचरेम । यद्वा । दोषावस्तरिति संबुद्धिः । दोषाया रात्रिकृतस्य तमसो वस्तराच्छादयितर्निवारयितः ॥ त्मन् । आत्मन्शब्दस्य तृतीयायाः सुपां सुलुगिति लुक् । मंत्रेष्वाङ्यादेरात्मन इत्याकारलोपः । दोषावस्तः । तृन्पक्षे कारकोपपदयथेति पूर्वपदप्रकृतिस्वरः । संबुद्धिपक्ष आमंत्रितस्य पादादित्वात् षाष्ठिकमाद्युदात्तत्वं । सपेम । षप समवाये । लिङि रूपं । निघातः ॥

यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् ॥१०॥
यः । त्वा । सुऽअश्वः । सुऽहिरण्यः । अग्ने । उपऽयाति । वसुऽमता । रथेन ।
तस्य । त्राता । भवसि । तस्य । सखा । यः । ते । आतिथ्यं । आनुषक् । जुजोषत् ॥१०॥

हे अग्ने यः पुमान् स्वश्वः शोभनाश्वोपेतः सुहिरण्यो यागयोग्यधनोपेतो वसुमता व्रीह्यादिधनयुक्तेन रथेन सहितः सन् त्वामुपयाति । परिचरणार्थं तव समीपं गच्छति । तस्य पुंसस्त्राता सर्वदुरितेभ्यो रक्षको भवसि । यश्च पुमान् ते तवातिथ्यमतिथियोग्यां पूजामानुषगनुक्रमेण जुजोषत् प्रापयति तस्य पुंसः सखा तदुचितफलप्रदानेनोपकर्ता भवसि ॥ उपयाति । सह सुपेत्यत्र संहितेति योगविभागात्समासः । तिपः पित्त्वादनुदात्तत्वे धातुस्वरः । तिङि चोदात्तवतीति गतेर्निघातः । आतिथ्यं । अतिथिशब्दात्तादर्थ्ये अतिथेर्ञ्य इति ञ्यप्रत्ययः । प्रत्ययस्वरः । जुजोषत् । जोषयतेर्लेटि बहुलं छंदसीति शपः श्लुः । अडागमः । छंदस्युभयथेति तिप आर्धधातुकत्वाण्णिलोपः । अभ्यस्तानामादिरित्याद्युदात्तः ॥ ॥२४॥

महो रुजामि बंधुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ।
त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥११॥
महः । रुजामि । बंधुता । वचःऽभिः । तत् । मा । पितुः । गोतमात् । अनु । इयाय ।
त्वं । नः । अस्य । वचसः । चिकिद्धि । होतरिति । यविष्ठ । सुक्रतो इति सुऽक्रतो । दमूनाः ॥११॥

हे होतर्देवानामाह्वातर्यविष्ठ युवतम सुक्रतो शोभनप्रज्ञ हे अग्ने वचोभिस्त्वदुद्देशेन कृतैः स्तोत्रैः समुपजाता येयं बधुता बंधुभावस्तया बधुतया महो महतो राजसान्नुजामि। भर्नाज्म। तत्तादृशं स्तोत्रात्मकं वचः पितुरुत्पादयितुर्गोतमादृषेः सकाशान्मा वामदेवं मामन्वियाय। दस्मना दांतमना दानमना वा शत्रूणामुपक्षपयिता वा तादृशस्त्वं नोऽस्मदीयस्यास्य वचसः स्तोत्रात्मकमेतद्वाक्यं चिकिद्धि। जानीहि॥ चिकिद्धि। कित ज्ञाने। जौहोत्यादिकः। लोटि रूपं। होतः। पादादित्वात् षाष्ठिकमाद्युदात्तत्वं। इतरयोस्तु नामंत्रिते समानाधिकरण इति प्रथमस्याविद्यमानवत्त्वाभावनिषेधादपादादित्वेन निघातः॥

अस्वप्नजस्तरणयः सुशेवा अतंद्रासोऽवृका अश्रमिष्ठाः ।
ते पायवः सध्र्यंचो निषद्याग्ने तव नः पांत्वमूर ॥१२॥
अस्वप्नऽजः । तरणयः । सुऽशेवाः । अतंद्रासः । अवृकाः । अश्रमिष्ठाः ।
ते । पायवः । सध्र्यंचः । निऽसद्य । अग्ने । तव । नः । पांतु । अमूर ॥१२॥

अमूर अमूढ सर्वज्ञ। यद्वा। अमूर अप्रतिहतगते हे अग्ने अस्वप्नजोऽस्वपतः। जागरूका इति यावत्। तरणयः सततगमनस्वभावा आपद्भ्यस्तारका वा सुशेवाः सुसुखा अतंद्रासोऽतंद्रा अनलसाः सर्वदोद्युक्ता अवृका अहिंसका अश्रमिष्ठा अश्रांततमाः सध्र्यंचः परस्परं संगताः पायवो रक्षकास्ते तादृशास्तव रश्मयो निषद्यास्मदनुग्रहार्थं निषण्णा भूत्वा नोऽस्मान्पांतु। रक्षंतु॥ अस्वप्नजः। स्वपितृषोर्नजिङ्प्रत्ययः। सध्र्य्ऽवग्रहश्छांदसः। सध्र्यंचः। सहपूर्वादंचतेः क्विप्। सहस्य सध्रिरिति सहस्य सध्र्यादेशः। सध्र्यादेशस्यांतोदात्तत्वान्निपातनाद्यणादेशे उदात्तस्वरितयोर्यण इति स्वरितत्वं। अमूर। मुह वैचित्ये। निष्ठाया ढकारस्य रेफश्छांदसः। यद्वा। मूङ् बंधने। औणादिको रक्॥

ये पायवो मामतेयं ते अग्ने पश्यंतो अंधं दुरितादरक्षन् ।
ररक्ष तान्त्सुकृतो विश्ववेदा दिप्संत इद्रिपवो नाह देभुः ॥१३॥
ये । पायवः । मामतेयं । ते । अग्ने । पश्यंतः । अंधं । दुःऽइतात् । अरक्षन् ।
ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः । दिप्संतः । इत् । रिपवः । न । अह । देभुः ॥१३॥

अत्रेयमैतिहासिकी कथा। उचथ्यस्य गर्भिणी ममतानामधेया भार्या तदनुजो बृहस्पतिरचकमत। तस्या रेत आधित्सुं तं बृहस्पतिं गर्भस्थो रेतोऽब्रवीत्। रेतोऽत्र मा सिंचीरहमत्र वसामीति। एवमुक्तो बृहस्पतिर्निरुद्धरेतस्कः सन् रेतोरूपं गर्भं शशाप। जात्यंधत्वरूपं दीर्घं तमः प्राप्नुहीति। ततस्तस्या दीर्घतमा अजनिष्ट। स चाध्यपरिहारायाग्निं स्तुत्वा चक्षुरलभतेति। तदिदानीमाह। हे अग्ने पायवो रक्षकाः पश्यंतोऽधोऽयमिति कृपादृष्ट्या पश्यंतस्ते तव ये रश्मयो मामतेयं ममतायाः पुत्रमंधं चक्षुर्हीनं दीर्घतमसं दुरितादांध्यलक्षणात्पापादरक्षन् चक्षुःप्रदानेनापालयन्। विश्ववेदा विश्वप्रज्ञो भवान् सुकृतः शोभनं चक्षुःप्रदानादिकर्म कृतवतस्तान् रश्मीन्ररक्ष। आदरेण परिगृह्य पालयति। तेषां परिग्रहमिहाभिधीयते। दिप्सत इत् दंभितुं परिभवितुमिच्छंत एव रिपवः शत्रव एनं दीर्घतमसं नाह देभुः। नैव परिभवंति खलु॥ मामतेय। ममताया अपत्यमित्यर्थे स्त्रीभ्यो ढक्। दिप्सतः। दंभु दंभे। सनीवंतर्धेत्यादिना इडभावः। दंभ इच्चेतीकारः। देभुः। श्रंथिग्रंथिदंभिस्वंजीनामुपसंख्यानमिति लिटः कित्त्वादुपधालोपः॥

त्वया वयं सधन्य१स्त्वोतास्तव प्रणीत्यश्याम वाजान् ।
उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥१४॥
त्वया । वयं । सऽधन्यः । त्वाऽऊताः । तव । प्रऽनीती । अश्याम । वाजान् ।
उभा । शंसा । सूदय । सत्यऽताते । अनुष्ठुया । कृणुहि । अह्रयाण ॥१४॥

अहृयाण अलज्जितगमन । अहृयाणोऽह्रीतयान इति यास्कः । तादृश हे अग्ने वयं स्तोतारस्त्वया सधन्यस्त्वत्प्रसादात्समानधनास्त्वोतास्त्वया रक्षिता वयं तव प्रणीती प्रणीत्या तव प्रेरणेनानुज्ञया वाजानन्नान्यश्याम । प्राप्नुयाम । हे सत्यताते । सत्यं तनोतीति वा सत्यं तायते यस्मिन्निति वा सत्यतातिः । हे सत्यताते शंसा पापानां शंसितारावुभावासन्नविप्रकृष्टौ शत्रू सूदय । जहि । अनुष्ठ्यानुक्रमेण छणुहि । अस्मिन्सूक्ते प्रतिपादितमर्थं कुरु ॥ सधन्यः । धनमेषामस्तीति छंदसीवनिपाविति प्रत्ययः । एरनेकाच इति यण् । उदात्तस्वरितयोरिति स्वरितत्वं । अनुष्ठुया । अपदुःसुषु स्थ इति विधीयमानः कुप्रत्ययो बहुलवचनादनुपूर्वस्यापि भवति । सुपां सुलुगिति तृतीयाया याजादेशः । अहृयाण । ह्री लज्जायां । बहुलं छंदसीति शपः श्लुभावाभावः । अनित्यमागमशासनमिति सुगभावः ॥

अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय ।
दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥१५॥
अया । ते । अग्ने । सम्ऽइधा । विधेम । प्रति । स्तोमं । शस्यमानं । गृभाय ।
दह । अशसः । रक्षसः । पाहि । अस्मान् । द्रुहः । निदः । मित्रऽमहः । अवद्यात् ॥१५॥

हे अग्ने अयानया समिधा दीप्त्या स्तुत्या ते त्वां विधेम । परिचरेम । अस्माभिः शस्यमानमिमं स्तोमं स्तोत्रं प्रति गृभाय । प्रतिगृहाण । अशसः । शंसंति स्तुवंतीति शसः स्तोतारः । ते न भवंतीत्यशसो नृशंसाः । तान्रक्षसो दह । भस्मसात्कुरु । हे मित्रमहो मित्रैः पूजनीय हे अग्ने द्रुहो द्रोग्धुर्निदो निंदकादवद्यात्परिवादाच्चास्मान् पाहि । रक्ष ॥ गृभाय । ग्रहेर्लोटि छंदसि शायजपीति श्नः शायच । हृग्रहोर्भः । पाहि । वाक्यभेदादनिघातः । निदः । णिदि कुत्सायां । क्विप् । आगमशासनस्यानित्यत्वान्नुमभावः । सावेकाच इति विभक्तेरुदात्तत्वं । अवद्यात् । अवद्यपण्येति यत् । यतोऽनाव इति यतोऽनावः प्रागुक्तं न्याय्यं स्पष्टमवद्यात्तदर्थे । पा० ६. २. १५६ । इत्यंतोदात्तत्वं । मित्रमहो अवद्यादित्यत्र संहितायामव्यादवद्यादित्येङः प्रकृतिभावः ॥ ॥ २५ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके चतुर्थोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

चतुर्थे मंडले प्रथमेऽनुवाके दश सूक्तानि । वैश्वानरायेति पंचदशर्चं पंचमं सूक्तं वामदेवस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकं । अत्रानुक्रमणिका । वैश्वानराय वैश्वानरीयमिति ॥ विनियोगो लैंगिकः ॥

वैश्वानराय मीळ्हुषे सजोषाः कथा दाशेमाग्नये बृहद्भाः ।
अनूनेन बृहता वक्षथेनोप स्तभायदुपमिन्न रोधः ॥१॥
वैश्वानराय । मीळ्हुषे । सऽजोषाः । कथा । दाशेम । अग्नये । बृहत् । भाः ।
अनूनेन । बृहता । वक्षथेन । उप । स्तभायत् । उपऽमित् । न । रोधः ॥१॥

सजोषाः सजोषसः समानप्रीतियुक्ता वयमृत्विग्यजमाना वैश्वानराय विश्वानरसंबंधिने एतन्नामकाय मीळ्हुषेऽभिमतवृष्ट्यादिसेक्त्रे बृहद्बृहते महते भा भासमानायाग्नये देवाय कथा कथं केन प्रकारेण दाशेम । दद्याम । सामर्थ्याद्धविरिति गम्यते । अथवा बृहद्भा इत्युत्तरत्र योज्यं । कथा दाशेमेत्युक्तं । किं तत्राधिक्यमिति तदुच्यते । योऽग्निर्बृहन्महान्भा भासमानश्च सन् अनूनेनाविकलेन संपूर्णेन अत एव बृहता प्रभूतेन वक्षथेन वोढव्येन स्वशरीरेणोप स्तभायत । उपस्तभ्नाति । सामर्थ्याद्द्यामिति शेषः । द्युलोकं व्याप्नोतीत्यर्थः । तत्र दृष्टांतः । उपमित्न रोधः । उप समीपे मीयते क्षिप्यत इत्युपमित स्थूणा । सा यथा तृणाच्छादनादिनिरोधकं वंशादिकमुपस्तभ्नाति तद्वत् । यद्वा । वक्षथेनोक्थलक्षणेन फलादिवाहकेन स्तोत्रेण सह द्युलोकमुपस्तभायत ॥ स्तभायत । स्तन्भुः सौत्रो धातुः । लङि छंदसि शायजपीति व्यत्ययेनाह्यावपि शायजादेशः । बहुलं छंदसीत्य डागमाभावः । किमिव । उपमित्न रोधः । उप समीपे मीयत इत्युपमिदुदकं । कूलमिव ॥

मा निंदत य इमां मह्यं रातिं देवो ददौ मर्त्याय स्वधावान् ।
पाकाय गृत्सो अमृतो विचेता वैश्वानरो नृतमो यह्वो अग्निः ॥२॥
मा । निंदत । यः । इमां । मह्यं । रातिं । देवः । ददौ । मर्त्याय । स्वधाऽवान् ।
पाकाय । गृत्सः । अमृतः । विऽचेताः । वैश्वानरः । नृऽतमः । यह्वः । अग्निः ॥२॥

हे होत्रादयोऽमुं वैश्वानरमग्निं मा निंदत । निंदां मा कुरुत । स्तुतेत्यर्थः । यो देवो दीप्यमानोऽग्निः स्वधावानस्मद्दत्तेन हविर्लक्षणेनान्नेन तद्वान् सन् मर्त्याय मरणधर्माय पाकाय परिपक्वप्रज्ञाय मह्यं यजमानायेमामिदानीं दीयमानप्रकारां रातिं धनं ददौ । दत्तवान् । स विशेष्यते । गृत्सो मेधावी । मेधाविनामैतत् । अमृतोऽमरणस्वभावो विचेता विशिष्टप्रज्ञो वैश्वानरो विश्वैर्नरैराहवनीयादिरूपेण नीयमानो नृतमो नेतृतमः फलादीनां यह्वो महान् । महन्नामैतत् । अग्निरंगनादिगुणविशिष्टः । तादृशमग्निं स्तुतेति भावः ॥

साम द्विबर्हा महि तिग्मभृष्टिः सहस्ररेता वृषभस्तुविष्मान् ।
पदं न गोरपगूळ्हं विविद्वानग्निर्मह्यं प्रेदु वोचन्मनीषां ॥३॥
साम । द्विऽबर्हाः । महि । तिग्मऽभृष्टिः । सहस्रऽरेताः । वृषभः । तुविष्मान् ।
पदं । न । गोः । अपऽगूळ्हं । विविद्वान् । अग्निः । मह्यं । प्र । इत् । ऊं इति । वोचत् । मनीषां ॥३॥

द्विबर्हा द्वयोर्मध्यमोत्तमयोः स्थानयोः परिवृढस्तिग्मभृष्टिस्तीक्ष्णतेजाः सहस्ररेता बहुविधहिरण्यरेतस्कः । रेतःशब्दः सारवाची । प्रभूतसारो वा । वृषभो वर्षिता कामानां तुविष्मान्बहुधन ईदृशोऽयमग्निरत्यंतगोपितं गोः पदं न नष्टाया गोः पदमिवापगूळ्हमत्यंतरहस्यं । मनीषाशब्दो ज्ञानवाची सन्नत्र ज्ञातव्ये वर्तते । मनीषा ज्ञातव्यं महि महत्पूज्यं सामास्मदभिमतं स्तोत्रं विविद्वान् विशेषेण जानन् प्रेदु वोचत । प्रैव ब्रवीतु ॥

प्र ताँ अग्निर्बभसत्तिग्मजंभस्तपिष्ठेन शोचिषा यः सुराधाः ।
प्र ये मिनंति वरुणस्य धाम प्रिया मित्रस्य चेततो ध्रुवाणि ॥४॥
प्र । तान् । अग्निः । बभसत् । तिग्मऽजंभः । तपिष्ठेन । शोचिषा । यः । सुऽराधाः ।
प्र । ये । मिनंति । वरुणस्य । धाम । प्रिया । मित्रस्य । चेततः । ध्रुवाणि ॥४॥

योऽग्निः सुराधाः शोभनधनः स तिग्मजंभस्तीक्ष्णदंष्ट्रः सन् तपिष्ठेन शोचिषातिशयेन शत्रूणां तापकेन तेजसा तान्वक्ष्यमाणान् द्विष्टून्प्र बभसत् । प्रकर्षेण भर्त्सयतु । दहत्वित्यर्थः ॥ भस भर्त्सनदीप्त्योः । लेटीतश्च लोप इतीकारलोपः । लेटोऽडाटावित्यडागमः ॥ तानित्युक्तं कानित्याह । ये द्विष्टारश्चेततो जानतः । एतदुभयवि-

गाषणं । मित्रस्य वरुणस्य च प्रिया प्रियाणि ध्रुवाणि स्थिराणि धाम धामानि तेजःस्थानानि कर्माणि वा प्रमिनन्ति । प्रकर्षेण हिंसन्ति ॥ मीञ् हिंसायां । मीनातेर्निगम इति ह्रस्वत्वं । विकरणस्वरः ॥

अभ्रातरो न योषणो व्यंतः पतिरिपो न जनयो दुरेवाः ।
पापासः संतो अनृता असत्या इदं पदमजनता गभीरं ॥५॥
अभ्रातरः । न । योषणः । व्यंतः । पतिऽरिपः । न । जनयः । दुःऽएवाः ।
पापासः । संतः । अनृताः । असत्याः । इदं । पदं । अजनत । गभीरं ॥५॥

अभ्रातरो भ्रात्रादिबंधुरहिता योषणो न गतभर्तृका योषित इव ॥ वा षपूर्वस्य निगम इति विकल्पनादीर्घाभावः ॥ ता यथा भर्तृगृहात्पितृगृहं प्रत्यायंति तद्वद्व्यंतो गच्छंतः । यज्ञादीनपहायामार्गे वर्तमाना इत्यर्थः । तथा पतिरिपो न जनयः पतिद्विषिण्यः स्त्रिय इव दुरेवा दुष्टगतयो दुराचारा अत एव पापासः पापाः संतोऽनृता मानससत्यरहिता असत्या वाचिकसत्यरहिता मनसा वाचाग्निमभजमाना इदं पापिभिरनुभूयमानतया प्रसिद्धं गभीरमगाधं पदं नरकस्थानमजनत । अजनयंत । उत्पादयंति ॥ लङि जनेरंतर्भावितण्यर्थाद्व्यत्ययेनैकवचनं ॥ ॥१॥

इदं मे अग्ने कियते पावकामिनते गुरुं भारं न मन्म ।
बृहद्दधाथ धृषता गभीरं यह्वं पृष्ठं प्रयसा सप्तधातु ॥६॥
इदं । मे । अग्ने । कियते । पावक । अमिनते । गुरुं । भारं । न । मन्म ।
बृहत् । दधाथ । धृषता । गभीरं । यह्वं । पृष्ठं । प्रयसा । सप्तऽधातु ॥६॥

हे पावक शोधकाग्ने कियतेऽत्यल्पाय गुरुं भारं न वोढुमशक्यं भारमिव । तं यथा धर्तुमसहमानः पातयति तद्वत्त्वदीयं कर्मामिनतेऽहिंसतेऽत्यजते मे मह्यमिदं ख्यातव्यत्वेन प्रसिद्धं बृहत्प्रभूतं मन्म मननीयं धनं दधाथ । देहि । तदेव विशिष्यते । धृषता शत्रुणा धर्षकेण प्रयसा । अन्ननामैतत् । अन्नेन युक्तं गभीरमन्यैरनवगाह्यं यह्वं महत्पृष्ठं स्पृष्टं योग्यं सप्तधातु ग्राम्यारण्यभेदेन सप्तप्रकारं । सप्त ग्राम्याः पशवः सप्तारण्याः । तै० सं० ५. २ ५ । इति श्रुतेः । ईदृग्धनं देहीत्यर्थः । गुरु भारं न अन्यदीयं भारं यथान्यस्मै ददाति तद्वदस्माकं दातव्यं धनं देहीति वा योज्यं ॥

तमिन्न्वे३व समना समानमभि क्रत्वा पुनती धीतिरश्याः ।
ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप आरुपितं जबारु ॥७॥
तं । इत् । नु । एव । समना । समानं । अभि । क्रत्वा । पुनती । धीतिः । अश्याः ।
ससस्य । चर्मन् । अधि । चारु । पृश्नेः । अग्रे । रुपः । आऽरुपितं । जबारु ॥७॥

अग्निर्विद्युदादित्यास्त्रयोऽपि मतभेदेन वैश्वानरशब्दाभिधेया इति । नि० ७ २३ । यास्केनोक्तत्वादत्रादित्यात्मना वैश्वानरः स्तूयते । तमित्तमेव वैश्वानरं द्युस्थानं समानं सर्वेषामेकरूपं समना सदृशी तद्योग्या पुनत्यस्मान् शोधयित्री धीतिर्मतिरस्मदीया स्तुतिः क्रत्वा तदर्चितेन कर्मणा न्वेव क्षिप्रमेवाश्याः । अभिप्राप्नुयात् । भजेदित्यर्थः ॥ अश्नोतेर्लिङि बहुलं छंदसीति विकरणस्य लुक् । व्यत्ययेन परस्मैपदं मध्यमपुरुषत्वं च ॥ पूर्वत्र तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्य द्युस्थानस्य वैश्वानरस्य जबारु जवमानरोहि जरमाणरोहि वा चारु दीप्तं मंडलं । जबारु जरमाणरोहीति वा जवमानरोहीति वेति यास्कः । नि० ६ १७ । अग्रे पुरस्तात्पूर्वस्यां दिशि रुपः । आरोपयति स्वात्मनि सस्यादीनि रुविति भूमिरुच्यते । तस्याः सकाशात्ससस्य । लुप्तोपममेतत् । स्वपत इव निश्चलस्य पृश्नेः । द्युनामैतत् स्वः पृश्निरिति द्युलोकादित्ययोः साधारणनामसु पाठात् ।

ज्योतिरादिभिः स्पृश्यमानस्य द्युलोकस्याधि उपरि चर्मन् चर्मणि चरणाय ॥ चरेरौणादिको मनिन् । सुपां सुलुगिति चतुर्थ्या लुक् ॥ आरुपितमारोपितं देवैः । तमश्या इति पूर्वत्रान्वयः ॥

प्रवाच्यं वचसः किं मे अस्य गुहा हितमुप निणिग्वदंति ।
यदुस्रियाणामप वारिव व्रन्पाति प्रियं रूपो अग्रं पदं वेः ॥८॥

प्रऽवाच्यं । वचसः । किं । मे । अस्य । गुहा । हितं । उप । निणिक् । वदंति ।
यत् । उस्रियाणां । अप । वाःऽइव । व्रन् । पाति । प्रियं । रूपः । अग्रं । पदं । वेरिति वेः ॥८॥

मे मदीयस्यास्य वक्ष्यमाणस्य वचसो वाक्यस्य किं प्रवाच्यमस्ति । तथ्यमेवोच्यत इत्यर्थः । किं तदुच्यत इत्युच्यते । उस्रियाणां । गोनामैतत् । क्षीराद्युत्स्राविणीनां गवां संबंधि यत्क्षीरं वारिव उदकमिव तद्यथा सेक्तारो विष्कुर्वंति तथाप व्रन् । अपवृण्वंति । दोग्धारो निणिक् । नितरां नेनेक्ति शोधयतीति निणिक् क्षीरमुच्यते । तादृक् क्षीरमेतेन वैश्वानरेण गुहा गुहायामुप हितमुपनिहितं वदंति वक्तारः । किंचायं वेः प्राप्तायाः रूपो भूम्याः प्रियं सर्वेषामाधारत्वेन प्रियभूतमग्रं श्रेष्ठं पदं स्थानं पाति । रक्षति ॥

इदमु त्यन्महि महामनीकं यदुस्रिया सचत पूर्व्यं गौः ।
ऋतस्य पदे अधि दीद्यानं गुहा रघुष्यद्रघुयद्विवेद ॥९॥

इदं । ऊं इति । त्यत् । महि । महां । अनीकं । यत् । उस्रिया । सचत । पूर्व्यं । गौः ।
ऋतस्य । पदे । अधि । दीद्यानं । गुहा । रघुऽस्यत् । रघुऽयत् । विवेद ॥९॥

इदमु इदमेव त्यत्प्रसिद्धं महि महत्पूज्यं महां महतां देवानामनीकं समूहरूपं सूर्यमंडलं वैश्वानरं एवेति शेषः । पूर्व्यं पूर्वकालीनं पुरकं वा यन्मंडलमुस्रिया क्षीराद्युत्स्राविणी गौरभिहोत्रार्थं सचत । सेवते । ऋतस्योदकस्य पदे स्थानेऽतरिक्षेऽध्यधिकं । यद्वा । अधीति सप्तम्यर्थानुवादः । दीद्यानं द्योतमानं गुहा गुहायां रघुष्यत् शीघ्रं स्यंदमानं रघुयत् शीघ्रं गच्छत्सूर्यमंडलं विवेद । वैश्वानरमेवेति ज्ञातवानस्मि ॥

अध द्युतानः पित्रोः सचासामनुत गुह्यं चारु पृश्नेः ।
मातुष्पदे परमे अंति षद्गोर्वृष्णः शोचिषः प्रयतस्य जिह्वा ॥१०॥

अध । द्युतानः । पित्रोः । सचा । आसा । अमनुत । गुह्यं । चारु । पृश्नेः ।
मातुः । पदे । परमे । अंति । सत् । गोः । वृष्णः । शोचिषः । प्रऽयतस्य । जिह्वा ॥१०॥

अध अथ द्युतानो दीप्यमानः पित्रोर्द्यावापृथिव्योः सचा सह मध्ये व्याप्तः सन् पृश्नेर्गोः संबंधि चारु रमणीयं गुह्यमूधसि निगूढं पय आसा स्वकीयेनास्येनामनुत । पानायावुध्यत । उक्तमेवार्थं विवृणोति । मातुः क्षीरादिनिर्मात्र्या गोः परमे पदे उत्कृष्टे स्थाने ऊधोलक्षणेऽति सत् समीपे विद्यमानं क्षीरं वृष्णः फलानां वर्षितुः शोचिषो दीप्तस्य प्रयतस्याहवनीयादिरूपेण नियतस्य वैश्वानरस्य जिह्वा पातुमिच्छतीति शेषः ॥ ॥२॥

ऋतं वोचे नमसा पृच्छ्यमानस्तवाशसा जातवेदो यदीदं ।
त्वमस्य क्षयसि यद्ध विश्वं दिवि यदु द्रविणं यत्पृथिव्यां ॥११॥

ऋतं । वोचे । नमसा । पृच्छ्यमानः । तव । आऽशसा । जातऽवेदः । यदि । इदं ।
त्वं । अस्य । क्षयसि । यत् । ह । विश्वं । दिवि । यत् । ऊं इति । द्रविणं । यत् । पृथिव्यां ॥११॥

अहं यजमानो नमसा नमस्कारेण सह पृच्छ्यमानोऽन्यैरनुयुज्यमानः सन् ऋतं वोचे। सत्यं ब्रवीमि। किं तदित्युच्यते। हे जातवेदो जातानां वेदितर्जातप्रज्ञ वाग्ने तवाशसा त्वत्स्तुत्या साधनेन यदीदं धनं लभ्यमस्माभिः स्यात् अस्य धनस्य त्वं क्षयसि। त्वमेवेश्वरो भवसि। तस्य धनस्य यज्ञादिद्वारागन्यर्थत्वादिति भावः। अत्यल्पमिदमुक्तं। यद् विश्वं यत्सकलं कृत्स्नं धनमस्ति तस्यापीशिषे। विश्वमिति सामान्येन यदुक्तं तदेव विशदयति। दिवि द्युलोके यद् द्रविणं यदेव धनं यच्च पृथिव्यां धनं तस्य सर्वस्य त्वमीश्वरो भवसि। यज्ञार्थं द्रव्यमुत्पन्नमिति स्मरणात्। अग्निव्यतिरेकेण यज्ञासंभवादिति भावः॥

किं नो अस्य द्रविणं कद्ध रत्नं वि नो वोचो जातवेदश्चिकित्वान्।
गुहाध्वनः परमं यन्नो अस्य रेकु पदं न निदाना अगन्म ॥१२॥
किं। नः। अस्य। द्रविणं। कत्। ह। रत्नं। वि। नः। वोचः। जातऽवेदः। चिकित्वान्।
गुहा। अध्वनः। परमं। यत्। नः। अस्य। रेकु। पदं। न। निदानाः। अगन्म ॥१२॥

पूर्वमंत्रेण यस्य धनस्याग्निस्वामित्वमुक्तमस्य धनस्य किं द्रविणं किं साधनभूतं नोऽस्मभ्यं दातव्यं धनमस्ति। कद्ध रत्नं किं च रमणीयं हितकरं धनमस्ति। तद्धनं हे जातवेदो जातधनाग्ने चिकित्वांश्चेतनावानभिज्ञस्त्वं नोऽस्मभ्यं वि वोचः। विब्रूहि। यद्वा। किं दातव्यं द्रविणमस्ति। अस्य द्रविणराशेः कद्ध रत्नमिति योज्यं। अस्याध्वनो धनप्राप्तिमार्गस्य यद्गुहा गुहायां निहितं गूढं परममुत्कृष्टं प्राप्तव्यमस्ति तदपि नोऽस्मभ्यं विवोचः। वयं रेकु रिक्तं पदं गंतव्यं स्थानं गृहादिकं निदाना अन्यैर्निंद्यमानाः॥ कर्मणि कर्तृप्रत्ययः॥ नागन्म। न प्राप्नुमः॥

का मर्यादा वयुना कद्ध वाममच्छा गमेम रघवो न वाजं।
कदा नो देवीरमृतस्य पत्नीः सूरो वर्णेन ततनन्नुषासः ॥१३॥
का। मर्यादा। वयुना। कत्। ह। वामं। अच्छ। गमेम। रघवः। न। वाजं।
कदा। नः। देवीः। अमृतस्य। पत्नीः। सूरः। वर्णेन। ततनन्। उषसः ॥१३॥

का मर्यादा का प्रीत्यादिव्यवस्था का च वयुना प्रज्ञानं पदार्थविषयं कद्ध किं च वामं वननीयं पदार्थजातं। एतत्सर्वमच्छ गमेम। अभिगच्छेम। तत्र दृष्टांतः। रघवो न वाजं। शीघ्रगामिनोऽश्वादयः संग्राममिव तद्वत्। कदा कस्मिन्काले नोऽस्माकं व्यवहाराय देवीर्देव्यो द्योतमाना अमृतस्यामरणधर्मस्यादित्यस्य पत्नीः पत्न्यः पालयित्र्यः सूरः प्रसवित्र्य उषासो वर्णेन प्रकाशेन ततनन्। विस्तारयेयुः। एवं सूर्यसंबंधिन उषसः स्तुत्या सर्वात्मनो वैश्वानरस्य स्तुतिरवगंतव्या॥ तनोतेर्लेटि बहुलं छंदसीति विकरणस्य लुः। द्विर्भावहलादिशेषौ॥

अनिरेण वचसा फल्ग्वेन प्रतीत्येन कृधुनातृपासः।
अधा ते अग्ने किमिहा वदंत्यनायुधास आसता सचंतां ॥१४॥
अनिरेण। वचसा। फल्ग्वेन। प्रतीत्येन। कृधुना। अतृपासः।
अध। ते। अग्ने। किं। इह। वदंति। अनायुधासः। असता। सचंतां ॥१४॥

अनिरेण। इरान्नं। तद्रहितेन फल्ग्वेनाल्पेन प्रतीत्येन प्रतिगंतव्येन। आरोह्येणेत्यर्थः। कृधुना ह्रस्वेन। कृधुरिति ह्रस्वनाम कृधुको वम्रक इति तन्नामसूक्तत्वात्। एवंविधेन वचसातृपासोऽतृप्ता जनाः। अध अधुनेहास्मिन् लोके हे अग्ने ते त्वां किं वदंति। निर्दुष्टेन वचसा न किंचिल्लभ्यत इत्यर्थः। किंत्वनायुधासः। आयुधशब्दः साधनं लक्षयति। हविरादिसाधनरहितास्तेऽसता दुःखेन सचंतां। संगच्छंतां॥

अस्य श्रिये समिधानस्य वृष्णो वसोरनीकं दम आ रुरोच ।
रुशद्वसानः सुदृशीकरूपः क्षितिर्न राया पुरुवारो अद्यौत् ॥१५॥
अस्य । श्रिये । सम्ऽइधानस्य । वृष्णः । वसोः । अनीकं । दमे । आ । रुरोच ।
रुशत् । वसानः । सुदृशीकऽरूपः । क्षितिः । न । राया । पुरुऽवारः । अद्यौत् ॥१५॥

समिधानस्य समिध्यमानस्य ॥ कर्मणि कर्तृप्रत्ययः ॥ वृष्णो वर्षितुः फलस्य वसोर्वासयितुरस्याग्नेरनीकं तेजःसंघो दमे यागगृह आ रुरोच । सर्वतो दीप्यते । किमर्थं । श्रियै श्रेयसे यजमानानां । सोऽग्नी रुशत् । वर्णनामैतत् । दीप्तं तेजो वसान आच्छादयन् अत एव सुदृशीकरूपः सुष्ठु दर्शनीयरूपः पुरुवारो बहुभिर्ऋत्विग्भिर्यजमानैर्वरणीयः सन्नद्यौत् । द्योतते । किमिव । रायाश्वादिधनेन क्षितिर्न राजादिरिव । क्षितिरिति मनुष्यनाम ॥ ॥३॥

ऊर्ध्व ऊ षु ण इत्येकादशर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं । ऊर्ध्व ऊ ष्वेकादशेत्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छंदसीदं । सूत्रितं च । ऊर्ध्व ऊ षु णः समस्य यद्वियुतेति पंच । आ० ४. १३. । इति ॥

ऊर्ध्व ऊ षु णो अध्वरस्य होतरग्ने तिष्ठ देवताता यजीयान् ।
त्वं हि विश्वमभ्यसि मन्म प्र वेधसश्चित्तिरसि मनीषां ॥१॥
ऊर्ध्वः । ऊं इति । सु । नः । अध्वरस्य । होतः । अग्ने । तिष्ठ । देवऽताता । यजीयान् ।
त्वं । हि । विश्वं । अभि । असि । मन्म । प्र । वेधसः । चित् । तिरसि । मनीषां ॥१॥

हे अध्वरस्य होतर्यागसंबंधिनां देवानामाह्वातः । यद्वा । होतरित्यत्र प्रकृत्यर्थोऽनुवादः । हे होमनिष्पादकाग्ने यजीयान्यष्टृतमस्त्वं नोऽस्माकमूर्ध्व ऊ षु तिष्ठ । उन्नत एव तिष्ठ । नित्यमुन्नतो भवेत्यर्थः । कुत्रेति तदुच्यते । देवताता देवतातौ । देवास्तायंते विस्तीर्यंतेऽत्रेति देवतातिर्यज्ञः । तस्मिन् । त्वं हि त्वं खलु विश्वं सर्वं मन्म मननीयं शत्रूणां धनमभ्यसि । अभिभवसि । किंच वेधसश्चित् । चित्पूजायां । स्तोतुर्यजमानादेर्मनीषां मतिं स्तुतिं प्र तिरसि । प्रवर्धयसि । प्रपूर्वस्तिरतिर्वर्धनार्थः ॥

अमूरो होता न्यसादि विक्ष्व१ग्निर्मंद्रो विदथेषु प्रचेताः ।
ऊर्ध्वं भानुं सवितेवाश्रेन्मेतेव धूमं स्तभायदुप द्यां ॥२॥
अमूरः । होता । नि । असादि । विक्षु । अग्निः । मंद्रः । विदथेषु । प्रऽचेताः ।
ऊर्ध्वं । भानुं । सविताऽइव । अश्रेत् । मेताऽइव । धूमं । स्तभायत् । उप । द्यां ॥२॥

अमूरोऽमूढः । प्रगल्भ इत्यर्थः । होता होमनिष्पादको मंद्रो मदनीयो मादयिता वा प्रचेताः प्रकृष्टज्ञानोऽग्निर्देवो विक्षु ऋत्विग्रूपासु प्रजासु मध्ये विदथेषु यागेषु निमित्तभूतेषु न्यसादि । नितरां स्थापितः । अथ तथाभूतोऽग्निर्भानुं दीप्तिं सवितेवोदितः सूर्य इवोर्ध्वमश्रेत् । ऊर्ध्वमुखमाश्रयति । किंच मेतेव स्तंभ इव । स यथा स्वाधिष्ठितं वंशादिकं स्तभ्नाति तद्वदयमग्निर्धूमं स्वोत्थितं द्यामुप द्युलोकस्योपरि स्तभायत् । स्तभ्नाति ॥

यता सुजूर्णी रातिनी घृताची प्रदक्षिणिद्देवतातिमुराणः ।
उदु स्वरुर्नवजा नाक्रः पश्वो अनक्ति सुधितः सुमेकः ॥३॥

यता । सुऽजूर्णिः । रातिनी । घृताची । प्रऽदक्षिणित् । देवऽतातिं । उराणः ।
उत । ऊं इति । स्वरुः । नवऽजाः । न । अक्रः । पश्वः । अनक्ति । सुऽधितः । सुऽमेकः ॥३॥

यता सयता सुजूर्णिः शोभनजवा सुष्ठु जीर्णा पुराणी वा । घृताची । घृतमंचतीति घृताची जुहूः । रातिनी । रातिर्धनं । हविर्लक्षणधनवती । आज्यपूर्णा भवतीत्यर्थः । देवतातिं यज्ञं तथोराण उरु कुर्वाणो ऽध्वर्युरग्निर्वा प्रदक्षिणित । प्रदक्षिणमेतीति प्रदक्षिणित । प्रदक्षिणगमनो भवति ॥ अकारलोपश्छांदसः ॥ नवजा नवजातस्तदानीमेवोत्पादितः स्वरुर्न । यूपशकलवाची स्वरुरत्र यूपं लक्षयति । चषालवंतः स्वरवः पृथिव्या । ऋ॰सं॰ ३. ८. १० । इत्यादिषु स्वरुशब्देन यूपाभिधानात् । नकारः समुच्चये । यूपोऽप्युत् । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । उन्नतो भवति । किंच अक्र आक्रमिता सुमेकः सुदीप्तः सुधितः स्वधितिरित्यर्थः । सोऽपि पश्वः पशूननक्ति । गच्छति । यद्वा । सुधितः स्वरुरेवोद उत्कृष्टः पश्वः पशूननक्ति । स्वरुणा पशुमनक्तीति श्रुतेः ॥

स्तीर्णे बर्हिषि समिधाने अग्ना ऊर्ध्वो अध्वर्युर्जुजुषाणो अस्थात् ।
पर्यग्निः पशुपा न होता त्रिविष्ट्येति प्रदिव उराणः ॥४॥
स्तीर्णे । बर्हिषि । सम्ऽइधाने । अग्ना । ऊर्ध्वः । अध्वर्युः । जुजुषाणः । अस्थात् ।
परि । अग्निः । पशुऽपाः । न । होता । त्रिऽविष्टि । एति । प्रऽदिवः । उराणः ॥४॥

बर्हिषि वेद्यां स्तीर्णे आस्तृते सत्यग्नावाहवनीयादिके समिधाने सम्यगिध्यमाने च सत्यध्वर्युरध्वरस्य नेता जुजुषाणो देवान्प्रीणयन्नूर्ध्वोऽस्थात् । तिष्ठति । होता होमनिष्पादकः प्रदिवः । पुराणनामैतत् । पुरातन उराणः स्वल्पमपि हविर्देवयोग्यत्वसंपादनेनोरु कुर्वाणः । उराण उरु कुर्वाण इति निरुक्तं । यद्व देवेजोप्यते हविस्तन्निरिमात्र वर्धत इति श्रुतेरग्नेरुरुकरणमुचितं । ईदृशोऽग्निः पशुपा न पशूनां पालक इव पशून् त्रिविष्टि त्रिरावृत्य पर्येति । त्रिर्हि पर्यग्निः क्रियते ॥

परि त्मना मितद्रुरेति होताग्निर्मन्द्रो मधुवचा ऋतावा ।
द्रवन्त्यस्य वाजिनो न शोका भयन्ते विश्वा भुवना यदभ्राट् ॥५॥
परि । त्मना । मितऽद्रुः । एति । होता । अग्निः । मन्द्रः । मधुऽवचाः । ऋतऽवा ।
द्रवन्ति । अस्य । वाजिनः । न । शोकाः । भयन्ते । विश्वा । भुवना । यत् । अभ्राट् ॥५॥

उक्तमेवार्थं स्पष्टयति । अयं होता होमनिष्पादकोऽग्निस्त्मनात्मना स्वरूपेणैव मितद्रुः परिमितगतिः सन् पर्येति । परितो गच्छति पशुं । कीदृशोऽयं । मन्द्रो मादनीयो मोदयिता वा मधुवचा मधुरवचन ऋतावा यज्ञवान् । वाजिनो हविष्मतोऽस्याग्नेः शोका न दीप्तयोऽपि । नशब्दोऽप्यर्थे । द्रवंति । गच्छंति परितः । यद्वा । नकार उपमार्थीयः । वाजिनो न अश्वा इव द्रवंतीति योज्यं । यद्यस्मादयमभ्राट् । भ्राजते । तस्माद्विश्वा भुवना सर्वाणि भूतजातानि भयंते । भीतानि भवंति ॥ ॥४॥

भद्रा ते अग्ने स्वनीक संदृग्घोरस्य सतो विषुणस्य चारुः ।
न यत्ते शोचिस्तमसा वरन्त न ध्वस्मानस्तन्वी३ रेप आ धुः ॥६॥
भद्रा । ते । अग्ने । सुऽअनीक । सम्ऽदृक् । घोरस्य । सतः । विषुणस्य । चारुः ।
न । यत् । ते । शोचिः । तमसा । वरन्त । न । ध्वस्मानः । तन्वि । रेपः । आ । धुरिति धुः ॥६॥

हे स्वनीक शोभनज्वालाग्ने घोरस्य भीतिजनकस्यापि सतो विपुणस्य विष्वक् सर्वतो व्याप्तस्य ते तव चारु रमणीया भद्रा स्तुत्या कल्याणी वा मूर्तिः संदृक् संदृष्टिः । सम्यक् दृश्या भवतीत्यर्थः । यद्यस्मात्ते शोचिर्दीप्तिं तमसाधकारेण न वरंत । वारयंति निशाः । यस्मात्त ध्वस्मानो ध्वंसका राक्षसादयस्तन्वि तव शरीरे रपः पापं ध्वंसनादिरूपं ना धुः । न दधति । न कुर्वंति । अतः संदृगिति संबंधः ॥

न यस्य॑ मातुर्जनि॑तोरवा॑रि न मा॒तरा॑ पि॒तरा॒ नू चि॑दि॒ष्टौ ।
अधा॑ मि॒त्रो न सुधि॑तः पाव॒को॒३॑ऽग्निर्दी॑दाय॒ मानु॑षीषु वि॒क्षु ॥ ७॥

न । यस्य॑ । मा॒तुः । ज॒नितोः॑ । अवा॑रि । न । मा॒तरा॑ । पि॒तरा॑ । नु । चि॒त् । इ॒ष्टौ ।
अध॑ । मि॒त्रः । न । सुऽधि॑तः । पा॒व॒कः । अ॒ग्निः । दी॒दा॒य॒ । मानु॑षीषु । वि॒क्षु ॥ ७॥

जनितोर्जनयितुर्वृष्ट्युत्पादकस्य यस्य वैश्वानरस्य मातुः सनिः पश्वादिलक्षणं दानं दीप्तिर्वा नावारि । केनापि न वार्यते । किंच मातरा पितरा मातापितरौ द्यावापृथिव्यौ यस्येष्टौ प्रेषणे नू चित् क्षिप्रमेव न प्रभवतः । अधापि च मित्रो न सखेव सुधितः सुतृप्तः पावकः शोधकोऽग्निर्मानुषीषु मनोः संबंधिनीषु विक्षु प्रजासु दीदाय । दीप्यते ॥ दीपी दीप्तौ । पकारलोपश्छांदसः । व्यत्ययेन परस्मैपदं । लिट्यभ्यासस्य हस्वे कृते तुजादित्वाद्दीर्घत्वं ॥

द्वि॒र्यं पंच॒ जीज॑नन्त्सं॒वसा॑नाः॒ स्वसा॑रो अ॒ग्निं मानु॑षीषु वि॒क्षु ।
उ॒ष॒र्बुध॑मथ॒र्यो॒३॑ न दंतं॑ शु॒क्रं स्वासं॑ पर॒शुं न ति॒ग्मं ॥ ८॥

द्विः । यं । पंच॑ । जीज॑नन् । सं॒ऽवसा॑नाः । स्वसा॑रः । अ॒ग्निं । मानु॑षीषु । वि॒क्षु ।
उ॒षः॒ऽबुधं॑ । अ॒थर्यः॑ । न । दंतं॑ । शु॒क्रं । सु॒ऽआ॒सं॑ । प॒र॒शुं । न । ति॒ग्मं ॥ ८॥

मानुषीषु मनोः संबंधिनीषु विक्षु प्रजासु संवसानाः संगच्छमाना द्विः पंच दश स्वसारोऽगुल्यो यमग्निं जीजनन् । मथनेनोदपादयन् ॥ जनी प्रादुर्भावे । लुङि छांदसत्वादडभावः ॥ कीदृश्य अंगुल्यः । अथर्यो न स्त्रिय इव । कीदृशमग्निं । उषर्बुधमुषसि बुध्यमानं दंतं हविषां भक्षकं शुक्रं रश्मिभिर्दीप्यमानं स्वासं शोभनास्यं तिग्मं तीक्ष्णं परशुं न परशुमिव रक्षसां हंतारमिति शेषः ॥

तव॒ त्ये अ॑ग्ने ह॒रितो॑ घृत॒स्ना रोहि॑तास ऋ॒ज्वंचः॒ स्वंचः॑ ।
अ॒रु॒षासो॒ वृष॑ण ऋजुमु॒ष्का आ दे॒वता॑तिमह्वंत द॒स्माः ॥ ९॥

तव॑ । त्ये । अ॒ग्ने॒ । ह॒रितः॑ । घृ॒त॒ऽस्नाः । रोहि॑तासः । ऋ॒जु॒ऽअंचः॑ । सु॒ऽअंचः॑ ।
अ॒रु॒षासः॑ । वृष॑णः । ऋ॒जु॒ऽमु॒ष्काः । आ । दे॒वऽता॑तिं । अ॒ह्वं॒त॒ । द॒स्माः ॥ ९॥

हे अग्ने त्ये ते प्रसिद्धास्तव हरितस्त्वत्संबंधिनोऽश्वा देवतातिमस्मदीयं यागं प्रत्याह्वंत । ऋत्विग्भिराह्वयंते ॥ लुङि लिपिसिचिह्वश्चेत्यङादेशः ॥ कीदृशाः । घृतस्ना घृतस्नुवो बलातिशयात्तामापद्य स्वेदस्थानीयमुदकं क्षरंतो रोहितासो रोहिता लोहितवर्णा ऋज्वंचः । ऋज्वकुटिलमंचंति गच्छंतीत्यृज्वंचः । स्वंचः सुष्ठु गच्छंतः । अरुषास आरोचमाना वृषणो युवानो वर्षितारो वा ॥ वा षपूर्वस्य निगमे इति विकल्पेन दीर्घविधानादत्र दीर्घाभावः ॥ ऋजुमुष्काः साधनमुष्का दस्मा दर्शनीयाः ॥

ये ह॒ त्ये ते॒ सह॑माना अ॒यास॑स्त्वे॒षासो॑ अग्ने अ॒र्चय॒श्चरं॑ति ।
श्ये॒नासो॒ न दु॑वस॒नासो॒ अर्थं॑ तुविष्व॒णसो॒ मारु॑तं॒ न शर्धः॑ ॥ १०॥

ये । ह । त्ये । ते । सहमानाः । अयासः । त्वेषासः । अग्ने । अर्चयः । चरंति ।
श्येनासः । न । दुवसनासः । अर्थं । तुविऽस्वनसः । मारुतं । न । शर्धः ॥१०॥

हे अग्ने ये ह खलु त्ये ते प्रसिद्धाः सहमानाः शत्रूनभिभवंतोऽयासो गमनशीलास्त्वेषासो दीप्ता दुवसनासः परिचरणीयास्ते त्वदीया अर्चयो रश्मयः श्येनासो न अश्वा इवार्थं गंतव्यं चरंति । गच्छंति । कीदृशाः । मारुतं शर्धो न मरुत्संबंधी गण इव तुविष्वणसस्तुविस्वना अधिकध्वनयो भवंति ॥

अकारि ब्रह्म समिधान तुभ्यं शंसात्युक्थं यजते व्यू धाः ।
होतारमग्निं मनुषो नि षेदुर्नमस्यंत उशिजः शंसमायोः ॥११॥
अकारि । ब्रह्म । सम्ऽइधान । तुभ्यं । शंसाति । उक्थं । यजते । वि । ऊं इति । धाः ।
होतारं । अग्निं । मनुषः । नि । सेदुः । नमस्यंतः । उशिजः । शंसं । आयोः ॥११॥

हे समिधान समिध्यमानाग्ने तुभ्यं त्वदर्थं ब्रह्म स्तोत्रमकारि । अस्माभिः कृतं । होतोक्थं शस्त्ररूपं स्तोत्रं शंसाति । शंसति ॥ शंसु स्तुतौ । लेटोऽडाटावित्याडागमः ॥ त्वां यजमानो यजते । अतः कारणादस्मभ्यं धनं वि धाः । विधेहि ॥ दधातेश्छांदसे लुङि बहुलं छंदसीत्यडभावः । उ इति पादपूरणः ॥ किंच आयोर्मनुष्यस्य शंसं शंसनीयं होतारं देवानामाह्वातारमग्निं त्वां नमस्यंतः पूजयंत उशिजः पश्वादिलक्षणं धनं कामयमाना मनुषो मनुष्या ऋत्विजो नि षेदुः । उपाविशन । सेवंत इत्यर्थः ॥ ॥५॥

अयमिहेत्येकादशर्चं सप्तमं सूक्तं वामदेवस्यार्षमाग्नेयं । आद्या जगती द्वितीयाद्याः पंचानुष्टुभः शिष्टास्त्रिष्टुभः । तथा चानुक्रांतं । अयमिहाद्या जगती पंचानुष्टुभ इति ॥ सूक्तविनियोगो लैंगिकः ॥ अग्निप्रणयनेऽयमिहेति वैश्यस्य प्रतिपत् । तथा च सूत्रितं । अयमिह प्रथमो धायि धातृभिरिति तु राजन्यवैश्ययोराद्ये । आ॰ २ १७. । इति ॥

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥१॥
अयं । इह । प्रथमः । धायि । धातृऽभिः । होता । यजिष्ठः । अध्वरेषु । ईड्यः ।
यं । अप्नवानः । भृगवः । विऽरुरुचुः । वनेषु । चित्रं । विऽभ्वं । विशेऽविशे ॥१॥

धातृभिर्यज्ञार्थं कर्म कुर्वद्भिरध्वर्युभिरिहास्मिन्यज्ञे होता देवानामाह्वाता यजिष्ठोऽतिशयेन यष्टाध्वरेषु यागेष्वीड्य ऋत्विग्भिः स्तूयमानः प्रथमः सर्वेषां देवानां मुख्योऽयमाहवनीयादिस्थानेषु प्रत्यक्षेणोपलभ्यमानोऽग्निर्धायि । अधायि । निहितः ॥ दधातेः कर्मणि लुङ् । बहुलं छंदस्यमाङ्योग इत्यडभावः । तिङ्ङतिङ इति निघातः ॥ अयमग्निरित्युक्तं । कोऽसावग्निरित्यत आह । अप्नवानो भृगुसंबंधी कश्चिदृषिः स चान्ये भृगवश्च वनेष्वरण्येषु चित्रं दावाग्निरूपेण बहुधा दर्शनीयं विशे विशे । वीप्सया सर्वजनव्याप्तिर्गृह्यते । सर्वस्या विशः प्रजाया विभ्वं विभुमीश्वरं यं देवानां हविर्वाहकत्वेन प्रसिद्धमग्निं विरुरुचुः । दीप्तियुक्तं कुर्वंति स्म । यमिति यच्छब्दस्यायमितीदंशब्देन संबंधः ॥

अग्ने कदा त इति । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतावानुष्टुभे छंदस्यग्ने कदा त इत्याद्याः पंचर्चः । सूत्रितं च । अग्ने कदा त इति पंच । आ॰ ४. १३. । इति ॥

अग्ने कदा त आनुषग्भुवद्देवस्य चेतनं ।
अधा हि त्वा जगृभ्रिरे मर्तासो विक्ष्वीड्यं ॥२॥

अग्ने । कदा । ते । आनुषक् । भुवत् । देवस्य । चेतनं ।
अध । हि । त्वा । जगृभ्रिरे । मर्तासः । विक्षु । ईड्यं ॥२॥

हे अग्ने अधातः कारणाद्देवस्य द्योतमानस्य ते तव संबंधि चेतनं तेजः कदानुषक् अनुषक्तं भुवत् । भवेत् ॥ लेट्यडागमः । बहुलं छंदसीति विकरणस्य लुक् । भूसुवोस्तिङीति गुणप्रतिषेधः ॥ अतः कारणादित्युक्तं । कस्माद्धेतोरित्युच्यते । हि यस्मात्कारणान्मर्तासो मनुष्या विक्षु विड्भिः प्रजाभिरीड्यं स्तुत्यं त्वा त्वां जगृभ्रिरे । जगृहिरे । गृह्णंति ॥ ग्रहेर्धातोर्लिटि ह्यहोर्भ इति भत्वं । बहुलं छंदसीति रुडागमः ॥

ऋतावानं विचेतसं पश्यंतो द्यामिव स्तृभिः ।
विश्वेषामध्वराणां हस्कर्तारं दमेदमे ॥३॥
ऋतऽवानं । विऽचेतसं । पश्यंतः । द्यांऽइव । स्तृऽभिः ।
विश्वेषां । अध्वराणां । हस्कर्तारं । दमेऽदमे ॥३॥

ऋतावानममायिनं विचेतसं विशिष्टज्ञानं स्तृभिर्नक्षत्रैः परिवृतं द्यामिव विस्फुलिंगैः समेतं विश्वेषां सर्वेषामध्वराणां यज्ञानां हस्कर्तारं प्रभासकं वृद्धेः कर्तारं वाग्निं पश्यंत ऋत्विगादयो दमे दमे सर्वस्मिन्यज्ञगृहे जगृभ्रिर इति पूर्वेण संबंधः ॥

आशुं दूतं विवस्वतो विश्वा यश्चर्षणीरभि ।
आ जंभ्रुः केतुमायवो भृगवाणं विशेविशे ॥४॥
आशुं । दूतं । विवस्वतः । विश्वाः । यः । चर्षणीः । अभि ।
आ । जभ्रुः । केतुं । आयवः । भृगवाणं । विशेऽविशे ॥४॥

योऽग्निर्विश्वाश्चर्षणीः सर्वाः प्रजा अभि भवति आयवो मनुष्याः । आयव इति मनुष्यनाम आयवो यदव इति मनुष्यनामसु पाठात् । आशुं क्षिप्रगामिनं विवस्वतो मनुष्यस्य यजमानस्य दूतं । विवस्वत इति मनुष्यनामेदं । केतुं प्रज्ञापकं भृगवाणं भृगुवदाचरंतं । दीप्यमानमित्यर्थः ॥ सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्य इति क्विप् । तदंतालटो व्यत्ययेन शानच् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वं ॥ तमग्निं विशे विशे सर्वस्यै प्रजाया आ जभ्रुः । आजह्रुः ॥ ह्यहोर्भ इति भत्वं ॥

तमीं होतारमानुषक्चिकित्वांसं नि षेदिरे ।
रण्वं पावकशोचिषं यजिष्ठं सप्त धामभिः ॥५॥
तं । ईं । होतारं । आनुषक् । चिकित्वांसं । नि । सेदिरे ।
रण्वं । पावकऽशोचिषं । यजिष्ठं । सप्त । धामऽभिः ॥५॥

ऋत्विगादयो मनुष्या आनुषक् आनुपूर्व्येण होतारं देवानामाह्वातारं चिकित्वांसं जानंतं ॥ कित ज्ञाने । लिटः क्वसुः । द्विर्भावहलादिशेषचुत्वदीर्घाः । प्रत्ययस्वरः ॥ तमीं तमिममग्निं नि षेदिरे । निषादयंति स्म । कीदृशं । रण्वं रमणीयं पावकशोचिषं शोधकदीप्तिं यजिष्ठं यष्टृतमं सप्त सप्तभिर्धामभिस्तेजोभिर्युक्तं ॥ ॥६॥

तं शश्वतीषु मातृषु वन आ वीतं अश्रितं ।
चित्रं संतं गुहा हितं सुवेदं कूचिदर्थिनं ॥६॥

तं । शश्वंतीषु । मातृषुं । वनें । आ । वीतं । अश्रितं ।
चित्रं । संतं । गुहां । हितं । सुऽवेदं । कूचित्ऽअर्थिनं ॥ ६ ॥

शश्वतीषु बह्वीषु मातृष्वप्सु । ताः सस्यादिनिर्मातृकत्वान्मातर इत्युच्यंते । वन आ वृक्षसमूहे च । आकार श्चार्थे । संत विद्यमानं वीतं कांतमश्रितं प्राणिभिर्दाहभयादसेवितं । दुरासदमित्यर्थः । चित्रं चायनीयं गुहा गुहायां हितं निहितं सुवेदं सुविज्ञानं सुधनं वा कूचिदर्थिनं क्वापि हविष्यर्थिनं समिदाज्यपुरोडाशादि हविः स्वीकुर्वंतं ॥ क्रत्यत्र वकारस्य छांदसं संप्रसारणं परपूर्वत्वं च हल इति दीर्घत्वं ॥ एवंभूतमपि निषेदिर इति पूर्वेण संबंधः ॥

प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छंदसि ससस्य यद्वियुतेत्याद्याः पंचर्चः । सूत्रितं च । ससस्य यद्वियुतेति पंच । आ॰ ४ १३ । इति ॥

ससस्य यद्वियुता सस्मिन्नूधन्नृतस्य धामन्रणयंत देवाः ।
महाँ अग्निर्नमसा रातहव्यो वेरध्वराय सदमिदृतावा ॥ ७ ॥
ससस्यं । यत् । विऽयुता । सस्मिंन् । ऊधंन् । ऋतस्यं । धामंन् । रणयंत । देवाः ।
महान् । अग्निः । नमसा । रातऽहव्यः । वेः । अध्वरायं । सदं । इत् । ऋतऽवा ॥ ७ ॥

यद्यमग्निं देवाः स्तोतारः ससस्य स्वप्नस्य वियुता वियुते वियोगे । उषसीत्यर्थः । ऋतस्योदकस्य धामन् धामनि स्थाने सस्मिन् सर्वस्मिन्नूधन्नूधनि यज्ञे रणयंत । रमयंति । स्तोत्रैरिति शेषः । महान्प्रभूतो नमसा नमस्कारेण रातहव्यो दत्तहविष्क ऋतावा सत्यवान् सोऽग्निः सदमित्सर्वदैवाध्वरायाध्वरे यजमानैः क्रत यज्ञे ॥ सुपां सुपो भवंतीति वक्तव्य । म॰ ७ १. ३९ । इति वचनादत्र द्वितीयार्थे चतुर्थी ॥ वेः । वेत्ति । जानाति । यद्वा । देवा इंद्रादयः ससस्य ऋत्विग्भिः सेव्यस्य यद्यस्याग्नेर्वियुता विशिष्टे सस्मिन् भजनीये ऋतस्य सत्यस्य धामन् धामनि योनावूधन्नूधनि यज्ञे रणयंत । रमयंते । महान्प्रभूतो नमसा हविषा रातहव्यो दत्तहविष्क ऋतावा सत्यवान् सोऽग्निरध्वराय यज्ञार्थं सदमित्सर्वदैव वेः । गंता भवति । अध्वराय यज्ञं वेः कामयते वा ॥

वेरध्वरस्यं दूत्यानि विद्वानुभे अंता रोदसी संचिकित्वान् ।
दूत ईयसे प्रदिवं उराणो विदुष्टरो दिव आरोधनानि ॥ ८ ॥
वेः । अध्वरस्यं । दूत्यानि । विद्वान् । उभे इति । अंतरिति । रोदसी इति । संऽचिकित्वान् ।
दूतः । ईयसे । प्रऽदिवः । उराणः । विदुःऽतरः । दिवः । आऽरोधनानि ॥ ८ ॥

हे अग्ने विद्वान् सर्वं जानानस्त्वमध्वरस्य यज्ञस्य संबंधीनि दूत्यानि दूतकर्माणि वेः । वेत्सि कामयसे वा । यद्वा । वेरिति यज्ञविशेषणं । वेर्यजमानस्याभीष्टफलजनकस्याध्वरस्य यागस्य संबंधीनि दूत्यानि दूतकर्माणि विद्वान् जानन् उभे रोदसी उभयो रोदस्योर्द्यावापृथिव्योरंतर्मध्ये स्थितमंतरिक्षं संचिकित्वान् सम्यक् जानन् प्रदिवः पुराणः । पुराणनामैतत् प्रत्न प्रदिव इति पुराणनामसु पाठात् । उराणोऽल्पमपि हविर्बहु कुर्वाणः । उराण उरु कुर्वाण इति यास्केनोक्तत्वात् । विदुष्टरो विद्वत्तरो देवानां दूतस्त्वं दिवः स्वर्गस्यारोधनान्यारोहणानि । आरोहणार्हाणि स्थानानीत्यर्थः । देवानां हवींष्यर्पयितुमीयसे । गच्छसि ॥

कृष्णं त एम रुशतः पुरो भाश्चरिष्ण्व१र्चिर्वपुषामिदेकं ।
यदप्रवीता दधते ह गर्भं सद्यश्चिज्जातो भवसीदु दूतः ॥ ९ ॥

कृष्णं। ते। एम। रुशतः। पुरः। भाः। चरिष्णु। अर्चिः। वपुषां। इत्। एकं।
यत्। अप्रऽवीता। दधते। ह। गर्भं। सद्यः। चित्। जातः। भवसि। इत्। ऊं इति। दूतः॥९॥

हे अग्ने रुशतो रोचमानस्य ते तव संबन्ध्येम। एमञ्शब्देन गमनमार्ग उच्यते। एम वर्त्म कृष्णं कृष्णवर्णं भवति। भास्तव संबन्धिनी दीप्तिः पुरः पुरस्ताद्भवति। चरिष्णु संचरणशीलमर्चिस्त्वदीयं तेजो वपुषां वपुष्मतां रूपवतां। तेजस्विनामित्यर्थः। एकमित्मुख्यमेव भवति। यद्यं त्वामप्रवीता अनुपगता यजमाना गर्भं त्वज्जननहेतुमरणिं दधते ह। धारयन्ति खलु। स त्वं सद्यश्चित्सद्य एव जात उत्पन्नः सन् दूतो भवसीत्। यजमानस्य दूतो भवस्येव॥

सद्यो जातस्य ददृशानमोजो यदस्य वातो अनुवाति शोचिः।
वृणक्ति तिग्मामतसेषु जिह्वां स्थिरा चिदन्ना दयते वि जंभैः॥१०॥
सद्यः। जातस्य। ददृशानं। ओजः। यत्। अस्य। वातः। अनुऽवाति। शोचिः।
वृणक्ति। तिग्मां। अतसेषु। जिह्वां। स्थिरा। चित्। अन्ना। दयते। वि। जंभैः॥१०॥

सद्यो जातस्यारणिनिर्मथनादनन्तरमेवोत्पन्नस्याग्नेरोजस्तेजो ददृशानं। ऋत्विगादिभिर्दृश्यमानं भवतीति शेषः। वातो वायुर्यद्यदास्याग्नेः शोचिर्दीप्तिमनु लक्षीकृत्य वाति गच्छति तदा सोऽयमग्निरतसेषु वृक्षसंघेषु तिग्मां तीक्ष्णां जिह्वां ज्वालां वृणक्ति। संयोजयति। स्थिरा चित् स्थिराण्यप्यन्नान्नरूपाणि काष्ठादीनि जंभैस्तेजोभिर्वि दयते। विखण्डयति। भक्षयतीत्यर्थः॥

तृषु यदन्ना तृषुणा ववक्ष तृषुं दूतं कृणुते यह्वो अग्निः।
वातस्य मेळिं सचते निजूर्वन्नाशुं न वाजयते हिन्वे अर्वा॥११॥
तृषु। यत्। अन्ना। तृषुणा। ववक्ष। तृषुं। दूतं। कृणुते। यह्वः। अग्निः।
वातस्य। मेळिं। सचते। निऽजूर्वन्। आशुं। न। वाजयते। हिन्वे। अर्वा॥११॥

यदोऽग्निस्तृषु क्षिप्रमेवान्नान्यन्नानि काष्ठादीनि तृषुणा क्षिप्रेण रश्मिसमूहेन ववक्ष। वहति। दहतीत्यर्थः। यह्वो महान् सोऽग्निस्तृषुमात्मानं दूतं कृणुते। यजमानदूतं करोति। निजूर्वन् काष्ठानि निःशेषेण दहन्नग्निर्वातस्य वायोर्मेळिं बलं सचते। सेवते। आशुं न। अश्वमिवेदृशो यथाश्वस्तथार्वा गमनशीलोऽग्निः स्वरश्मिं वाजयते। वाजिनं बलवन्तं करोति। हिन्वे। प्रेरयति च॥ ॥५॥

दूतं व इत्यष्टर्चमष्टमं सूक्तं वामदेवस्यार्षं गायत्रीछन्दस्कमग्निदेवताकं। तथा चानुक्रम्यते। दूतं वोऽष्टौ गायत्रं त्विति॥ व्यूळ्हे दशरात्रे प्रथमे छन्दोमे इदं सूक्तं जातवेदस्यनिविद्धानीयं। तथा च सूत्रितं। दूतं व इत्याग्निमारुतं। आ० ८. ९। इति॥ इदमादिके द्वे सूक्ते प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दसि विनियुक्ते। सूत्रितं च। अग्ने पावक दूतं व इति सूक्ते। आ० ४. १३। इति॥

दूतं वो विश्ववेदसं हव्यवाहममर्त्यं। यजिष्ठमृंजसे गिरा॥१॥
दूतं। वः। विश्वऽवेदसं। हव्यऽवाहं। अमर्त्यं। यजिष्ठं। ऋंजसे। गिरा॥१॥

हे अग्ने विश्ववेदसं। विश्वं समस्तं वेदो धनं यस्यासौ विश्ववेदाः। तं सर्वविदं वा हव्यवाहं देवेभ्यो हविषां वोढारममर्त्यममरणधर्माणं यजिष्ठमतिशयेन यष्टारं दूतं देवानां वस्त्वा गिरा स्तुतिरूपया वाचा ऋंजसे। यजमानोऽहं प्रसाधयामि। वर्धयामीत्यर्थः। ऋंजतिः प्रसाधनकर्मेति यास्कः॥

स हि वेदा वसुधितिं महाँ आरोधनं दिवः । स देवाँ एह वक्षति ॥२॥

सः । हि । वेद । वसुऽधितिं । महान् । आऽरोधनं । दिवः । सः । देवान् । आ । इह । वक्षति ॥२॥

स हि प्रसिद्ध एवाग्निर्वसुधितिं यजमानाभीष्टफलरूपधनस्य दानं वेद । वेत्ति । महान् प्रभूतोऽग्निर्दिव आरोधनमारोहणं देवानां स्थानं वेत्ति । सोऽग्निरिहास्मिन्यज्ञे देवानिंद्रादीना वक्षति । आवहतु ॥ वहेर्धातोर्लिङर्थे लेडिति लेट् । तस्य तिप् । सिब्बहुलं लेटीति सिप् । लेटोऽडाटावित्यडागमश्च । हो ढ इति ढत्वं । ढत्वकत्वषत्वानि । तिङ्ङतिङ इति निघातः ॥

स वेद देव आनमं देवाँ ऋतायते दमे । दाति प्रियाणि चिद्वसु ॥३॥

सः । वेद । देवः । आऽनमं । देवान् । ऋतऽयते । दमे । दाति । प्रियाणि । चित् । वसु ॥३॥

देवो द्योतमानः सोऽग्निरानमं यजमानादीनानमयितुं नमस्कारयितुं देवानिंद्रादीन्वेद । क्रमेण वेत्ति । दमे यज्ञगृह ऋतायत ऋतं यज्ञमिच्छते यजमानाय प्रियाणि चिदभीष्टान्यपि वसु वसूनि पश्वादीनि धनानि दाति । ददाति । प्रयच्छति ॥

स होता सेदु दूत्यं चिकित्वाँ अंतरीयते । विद्वाँ आरोधनं दिवः ॥४॥

सः । होता । सः । इत् । ऊं इति । दूत्यं । चिकित्वान् । अंतः । ईयते । विद्वान् । आऽरोधनं । दिवः ॥४॥

सोऽग्निर्होता देवानामाह्वाता भवति । सेदु स एवाग्निर्दूत्यं देवानां दूतकर्म चिकित्वान् जानन् दिवः स्वर्गस्यारोधनमारोहणमारोहणार्हं देवानां स्थानं च विद्वान् जानन् अंतर्द्यावापृथिव्योर्मध्य ईयते । गच्छति ॥ ईङ् गतौ । दिवादिभ्यः श्यन् । तिङ्ङतिङ इति निघातः ॥

ते स्याम ये अग्नये ददाशुर्हव्यदातिभिः । य ईं पुष्यंत इंधते ॥५॥

ते । स्याम । ये । अग्नये । ददाशुः । हव्यदातिऽभिः । ये । ईं । पुष्यंतः । इंधते ॥५॥

ते तव यजमानाः स्याम । भूयाम । त इत्युक्तं । क इत्युच्यते । ये यजमाना अग्नये हव्यदातिभिर्हविर्दानैर्ददाशुः । प्रीतिं कुर्वंति । ईमेनमग्निं पुष्यंतो वर्धयंतो ये यजमाना इंधते । समिद्भिर्दीप्तियुक्तं कुर्वंति ॥

ते राया ते सुवीर्यैः ससवांसो वि शृण्विरे । ये अग्ना दधिरे दुवः ॥६॥

ते । राया । ते । सुऽवीर्यैः । ससऽवांसः । वि । शृण्विरे । ये । अग्ना । दधिरे । दुवः ॥६॥

ये यजमाना अग्नावग्नौ ॥ सुपां सुलुगित्याकारः ॥ दुवः परिचर्यां दधिरे । धारयंति । कुर्वंतीत्यर्थः । ते ससवांसोऽग्निं संभजमाना राया पश्वादिलक्षणेन धनेन वि शृण्विरे । विश्रूयंते । प्रख्यायंते । ते सुवीर्यैः शोभनवीर्योपेतैः पुत्रादिभिश्च विश्रूयंते ॥

अस्मे रायो दिवेदिवे सं चरंतु पुरुस्पृहः । अस्मे वाजास ईरतां ॥७॥

अस्मे इति । रायः । दिवेऽदिवे । सं । चरंतु । पुरुऽस्पृहः । अस्मे इति । वाजासः । ईरतां ॥७॥

पुरुस्पृह ऋत्विगादिभिरभिलष्यमाणा रायः पश्वादिधनान्यस्मे अस्मासु यजमानेषु दिवे दिवे प्रतिदिनं सं चरंतु । प्रचरंत्यो भवंतु ॥ दिवशब्दादुत्तरस्याः सप्तम्याः सुपां सुलुगित्यादिना शेआदेश उडिदमित्यादिना च तस्योदात्तत्वं । नित्यवीप्सयोरिति द्विर्भावे सत्युत्तरभागस्यानुदात्तं चेत्यनुदात्तत्वं ॥ वाजासोऽन्नानि चास्मे अस्मासीरतां । यज्ञार्थं प्रेरयंतु ॥

स विप्रश्चर्षणीनां शवसा मानुषाणां । अति क्षिप्रेव विध्यति ॥८॥

सः । विप्रः । चर्षणीनां । शवसा । मानुषाणां । अति । क्षिप्राऽइव । विध्यति ॥८॥

विप्रो मेधावी । विप्र इति मेधाविनाम विप्रो धीर इति तन्नामसु पाठात् । सोऽग्निः शवसा बलेन । शव इति बलनाम पाजः शव इति तन्नामसु पाठात् । मानुषाणां मनुसंबंधिनां चर्षणीनां प्रजानां क्षिप्रेव क्षिप्राण्येव विनाशयितुमर्हाणि । दुरितानीति शेषः । अति विध्यति । अति विध्यतु । अतिशयेन नाशयतु ॥ ॥ ८ ॥

अग्ने मृळेत्यष्टर्चं नवमं सूक्तं वामदेवस्यार्षं गायत्रीछंदस्कमाग्नेयदेवताकं । अनुक्रांतं च । अग्ने मृळेति ॥ द्वितीये छंदोम इदं सूक्तं जातवेदस्यनिविद्धानीयं । सूत्रितं च । क्रीळं वः शर्धोऽग्ने मृळेत्याग्निमारुतं । आ० ८. १० । इति ॥

अग्ने मृळ महाँ असि य ईमा देवयुं जनं । इयेथ बर्हिरासदं ॥१॥

अग्ने । मृळ । महान् । असि । यः । ईं । आ । देवऽयुं । जनं । इयेथ । बर्हिः । आऽसदं ॥१॥

हे अग्ने मृळ । अस्मान् सुखय । स त्वं महानसि । प्रभूतो भवसि । यस्त्वमीमिमं देवयुं देवानां कामयितारं जनं यजमानं बर्हिर्दर्भमासदं यज्ञ आसत्तुमा इयेथ । आगच्छसि ॥

स मानुषीषु दूळभो विक्षु प्रावीरमर्त्यः । दूतो विश्वेषां भुवत् ॥२॥

सः । मानुषीषु । दुःऽदभः । विक्षु । प्रऽअवीः । अमर्त्यः । दूतः । विश्वेषां । भुवत् ॥२॥

दूळभो दुर्दभो राक्षसादिना दुर्हिंसो मानुषीषु मनुसंबंधिनीषु विक्षु प्रजासु प्रावीः प्रकर्षेण गतामर्त्योऽमरणधर्मा सोऽग्निर्विश्वेषां सर्वेषां देवानां दूतो भुवत् । भवतु ॥

स सद्म परि णीयते होता मंद्रो दिविष्टिषु । उत पोता नि षीदति ॥३॥

सः । सद्म । परि । नीयते । होता । मंद्रः । दिविष्टिषु । उत । पोता । नि । सीदति ॥३॥

सोऽग्निः सद्म यज्ञगृहं परि णीयते । ऋत्विग्भिः परितो नीयते । नीयमानः सन् दिविष्टिषु यागेषु मंद्रो मदनीयः स्तुत्यः सोऽग्निर्होता च भवति । उतापि च पोता सन् नि षीदति । यज्ञगृह उपविशति ॥

उत ग्ना अग्निरध्वर उतो गृहपतिर्दमे । उत ब्रह्मा नि षीदति ॥४॥

उत । ग्नाः । अग्निः । अध्वरे । उतो इति । गृहऽपतिः । दमे । उत । ब्रह्मा । नि । सीदति ॥४॥

उतापि चाग्निरध्वरे यागे ग्ना देवपत्नीर्यजति । यष्टा भवतीत्यर्थः । यद्वा । ग्ना गच्छन्नध्वर्युर्भवति । उतो अपि च सोऽग्निर्दमे यज्ञगृहे गृहपतिर्यजमानश्च भवति । उतापि च ब्रह्मा ब्राह्मणाच्छंसी सन् नि षीदति । उपविशति ॥

वेषि ह्यध्वरीयतामुपवक्ता जनानां । हव्या च मानुषाणां ॥५॥

वेषि । हि । अध्वरिऽयतां । उपऽवक्ता । जनानां । हव्या । च । मानुषाणां ॥५॥

अध्वरीयतां यज्ञमिच्छतां मानुषाणां मनुसंबंधिनां जनानां हव्या च हव्यानि हवींषि हे अग्ने वेषि हि । कामयसे खलु । उपवक्ताध्वर्युप्रभृतीनां सर्वेषां कर्मणामनुज्ञार्थं सां प्रणयेत्यादिरूपस्य वाक्यस्य वक्ता सन् ब्रह्मा चासि । ब्रह्मा त्वो वदति जातविद्यां । ऋग्सं० १०. ७१. ११ । इति श्रुतेः । उपवक्ता सर्वेषां कर्मणामवैकल्यार्थमुपद्रष्टा वा सदस्योऽसि । स हि सप्तदशः कर्मणामुपद्रष्टा भवतीत्यापस्तंबेनोक्तत्वात् ॥

वेषीद्वस्य दूत्यं१ यस्य जुजोषो अध्वरं। हव्यं मर्तस्य वोळ्हवे ॥६॥

वेषि। इत्। ऊं इति। अस्य। दूत्यं। यस्य। जुजोषः। अध्वरं। हव्यं। मर्तस्य। वोळ्हवे ॥६॥

हे अग्ने त्वं मर्तस्य मनुष्यस्य यस्य यजमानस्याध्वरं यागं हव्यं हविर्वोळ्हवे वोढुं ॥ वहेर्धातोस्तुमर्थे सेसेनसे इति तवेन्प्रत्ययः। ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं ॥ जुजोषः सेवथाः ॥ जुषी प्रीतिसेवनयोः। लेट्। बहुलं छंदसीति शपः श्लुर्द्विर्भावश्च। लेटोऽडाटावित्यडागमः ॥ अस्य यजमानस्य दूत्यं दूतकर्म वेषीदु। कामयस एव ॥

अस्माकं जोष्यध्वरमस्माकं यज्ञमंगिरः। अस्माकं शृणुधी हवं ॥७॥

अस्माकं। जोषि। अध्वरं। अस्माकं। यज्ञं। अंगिरः। अस्माकं। शृणुधि। हवं ॥७॥

हे अंगिरोऽग्ने त्वमस्माकमध्वरमस्मदीयं यागं जोषि। जुषस्व। सेवस्व। अस्माकमस्मदीयं यज्ञं यजनसाधनं हविश्च जुषस्व। अस्माकमस्मदीयं हवमाह्वानरूपं स्तोत्रं च शृणुधि। शृणु ॥ शृणोतेर्लोण्मध्यमैकवचनं सिप्। तस्य हिरादेशः श्रुवः शृ चेति धातोः श्नुप्रत्ययः शृभावश्च। श्रुशृणुपृकृवृभ्यश्छंदसीति हेर्धिरादेशः ॥

परि ते दूळभो रथोऽस्माँ अश्नोतु विश्वतः। येन रक्षसि दाशुषः ॥८॥

परि। ते। दुःऽदभः। रथः। अस्मान्। अश्नोतु। विश्वतः। येन। रक्षसि। दाशुषः ॥८॥

हे अग्ने त्वं येन रथेन विश्वतो विश्वासु सर्वासु दिक्षु गच्छन् दाशुषो हविष्प्रदातॄन्यजमानान्रक्षसि। विघ्नेभ्यः पालयसि। त्वदीयो दूळभो दुर्दभो दुर्हिंसः स रथोऽस्मान्यजमानान् परि परितः सर्वतोऽश्नोतु। व्याप्नोतु ॥ अश्नोतिर्व्यत्ययेन परस्मैपदं ॥ ॥ ९ ॥

अग्ने तमद्येत्यष्टर्चं दशमं सूक्तं वामदेवस्यार्षमाग्नेयं। तथा चानुक्रमणिका। अग्ने तमद्य पदपाङ्क्तं पंचमी महापदपङ्क्तिरत्योष्णिक् चतुर्थी पञ्चपात्या वा सप्तम्याः पंचकौ मध्यौ तृतीयः सप्तको नवकश्चाष्टम्याः पंचकः पादश्चतुष्कः सप्तकस्त्रिष्टुभस्त्विति। इदं कृत्स्नमपि सूक्तं पदपङ्क्तिच्छंदस्कं पंचकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिरित्युक्तलक्षणोपेतत्वात्। पंचमी तत्र त्वादिष्टेत्येषा महापदपङ्क्तिः पंच पंचकाः षट्कश्चैक इति लक्षणसद्भावात्। अध्या शिवा नः सख्येत्येषोष्णिकछंदस्का। चतुर्थीषष्ठीसप्तम्य आभिष्टे अद्य घृतं न पूतं कृतं चिदिति एता अस्मिन्सूक्ते उष्णिहः पदपङ्क्त्यो वा। अत्र सप्तम्यष्टम्योः पदपङ्क्त्युष्णिहोः परिभाषोक्तपादविच्छेदापवादाय प्रकारान्तरेण विच्छेदः कृतः ॥ दशमेऽहनीदं सूक्तमाज्यशस्त्रं। सूत्रितं च। अग्ने तमद्याश्वं न स्तोमैरित्याज्यं। आ॰ ८. १२। इति ॥ पिंडपितृयज्ञेऽग्ने तमद्येत्यनयाग्निं प्रत्यागच्छेत्। सूत्रितं च। अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैरिति। आ॰ २. ७। इति ॥ पौनराधेयिक्या स्विष्टकृत्येषैव याज्या। सूत्रितं च। अग्ने तमद्याश्वं न स्तोमैरिति संयाज्ये। आ॰ २. ८। इति ॥

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशं। ऋध्यामा त ओहैः ॥१॥

अग्ने। तं। अद्य। अश्वं। न। स्तोमैः। क्रतुं। न। भद्रं। हृदिऽस्पृशं। ऋध्याम। ते। ओहैः ॥१॥

हे अग्ने अद्यास्मिन्नहनि वयमृत्विगादय ओहैरिंद्रादिप्रापकैः स्तोमैः स्तोत्रसमूहैस्तं प्रसिद्धं त्वामृध्याम। समर्धयामः। कीदृशं त्वा। अश्वं न वोढारमश्वमिव तथा हविषो वाहकं क्रतुं न कर्तारमिव। उपकर्तारमित्यर्थः। तथा भद्रं भजनीयं हृदिस्पृशं हृदयंगमं। अतिशयेन प्रियमित्यर्थः ॥

पौनराधेयिक्यामिष्टौ प्रधानस्याधा ह्यग्न इत्येषानुवाक्या। एभिर्नो अर्कैरिति तस्यां स्विष्टकृतोऽनुवाक्या। आभिष्टे अद्येति प्रधानस्य याज्या। सूत्रितं च। अधा ह्यग्ने क्रतोर्भद्रस्याभिष्टे अद्य गीर्भिर्गृणंत एभिर्नो अर्कैः। आ॰ २. ८। इति ॥

अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः। रथीर्ऋतस्य बृहतो बभूथ ॥२॥

अध। हि। अग्ने। क्रतोः। भद्रस्य। दक्षस्य। साधोः। रथीः। ऋतस्य। बृहतः। बभूथ ॥२॥

अधा हि इदानीमेव हे अग्ने त्वं क्रतोरस्मदीयस्य यागस्य रथीर्नेता बभूथ। भवसि ॥ छंदसि लुङ्लङ्लिट इति भवतेर्वर्तमानेऽर्थे लिटि सिपस्थल्। आर्धधातुकस्येड्वलादेरितीडागमे प्राप्ते बभूथाततन्थेति निपातनादिडभावः ॥ कीदृशस्य यागस्य। भद्रस्य भजनीयस्य दक्षस्य प्रवृद्धस्य साधोरभीष्टफलानां साधकस्य ऋतस्य सत्यभूतस्य बृहतो महतः ॥

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्व१र्ण ज्योतिः। अग्ने विश्वेभिः सुमना अनीकैः ॥३॥

एभिः। नः। अर्कैः। भव। नः। अर्वाङ्। स्वः। न। ज्योतिः। अग्ने। विश्वेभिः। सुऽमनाः। अनीकैः ॥३॥

हे अग्ने ज्योतिर्ज्योतिष्मान् स्वर्ण सूर्य इव तथा विश्वेभिर्विश्वैः समस्तैरनीकैस्तेजोभिः सुमनाः शोभनमनस्कस्त्वं नोऽस्मदीयैरेभिरेतैरर्कैरर्चनीयैः स्तोत्रैर्नोऽस्माकमर्वाङभिमुखो भव ॥

आभिष्टे अद्य गीर्भिर्गृणंतोऽग्ने दाशेम। प्र ते दिवो न स्तनयंति शुष्माः ॥४॥

आभिः। ते। अद्य। गीःऽभिः। गृणंतः। अग्ने। दाशेम। प्र। ते। दिवः। न। स्तनयंति। शुष्माः ॥४॥

अद्यास्मिन्दिवसे हे अग्ने आभिर्गीर्भिः स्तुतिरूपाभिर्वाग्भिर्गृणतस्त्वा स्तुवतो वयमस्त्विगादयस्ते तुभ्यं दाशेम। हवींषि दद्याम। दिवो न सूर्यस्य रश्मय इव ते त्वदीयाः शुष्माः शोधका ज्वालाः प्र स्तनयंति। प्रकर्षेण शब्दायंते। यद्वा। दिवो न मेघा इव त्वदीया ज्वालाः शब्दायंते ॥

तव स्वादिष्ठाग्ने संदृष्टिरिदा चिदह्न इदा चिदक्तोः। श्रिये रुक्मो न रोचत उपाके ॥५॥

तव। स्वादिष्ठा। अग्ने। संऽदृष्टिः। इदा। चित्। अह्नः। इदा। चित्। अक्तोः। श्रिये। रुक्मः। न। रोचते। उपाके ॥५॥

हे अग्ने स्वादिष्ठा स्वादुतमा प्रियतमा तव त्वदीया संदृष्टिर्दीप्तिरह्न इदा चित् दिवसस्येदानीं चाक्तोरिदा चित्। अक्तुरिति रात्रिनाम शर्वर्यक्तुरूर्म्येति रात्रिनामसु पाठात्। रात्रेरिदानीं च। अहोरात्र इत्यर्थः ॥ अन्जू व्यक्तिम्रक्षणकान्तिगतिष्वित्यस्माद्धातोः कितसिद्धगादिकसूत्रेण तुप्रत्ययः तस्य कित्त्वान्नलोपः। तितुत्रेतीट्प्रतिषेधः। अनिदितामित्युपधानकारलोपः। चोः कुरिति कुत्वं ॥ रुक्मो नालंकार इव श्रिये पदार्थमाश्रयितुम् उपाकेऽन्तिके। उपाक इत्यन्तिकनाम आके उपाक इति तन्नामसु पाठात्। रोचते। राजते ॥

घृतं न पूतं तनूररेपाः शुचि हिरण्यं। तत्ते रुक्मो न रोचत स्वधावः ॥६॥

घृतं। न। पूतं। तनूः। अरेपाः। शुचि। हिरण्यं। तत्। ते। रुक्मः। न। रोचत। स्वधाऽवः ॥६॥

हे स्वधावः। स्वधाशब्दोऽन्नवाची। अन्नवन्नग्ने पूतं शोधितं घृतं नाज्यमिव तनूस्त्वदीया मूर्तिररेपाः पापरहिता भवति। शुचि शुद्धं हिरण्यं हितरमणीयं ते त्वदीयं तत्प्रसिद्धं तेजो रुक्मो न भूषणमिव रोचत। रोचते। भासते ॥

कृतं चिद्धि ष्मा सनेमि द्वेषोऽग्न इनोषि मर्तात्। इत्था यजमानादृतावः ॥७॥

कृतं। चित्। हि। स्म। सनेमि। द्वेषः। अग्ने। इनोषि। मर्तात्। इत्था। यजमानात्। ऋतऽवः ॥७॥

हे ऋतावः सत्यवन्नग्ने कृतं चित् यजमानेन कृतमपि सनेमि चिरंतनं । सनेमीति पुराणनाम सनेमि पूर्व्यमिति पुराणनामसु पाठात् । द्वेषः पापं मर्तान्मनुष्याद्यजमानादित्था सत्यं । इत्थेति सत्यनामैतत् अद्धेत्थेति तन्नामसु पाठात् । इनोषि हि स्म । प्रेरयस्येव खलु । नाशयसीत्यर्थः ॥

शिवा नः सख्या संतु भ्रात्राग्ने देवेषु युष्मे । सा नो नाभिः सदने सस्मिन्नूधन् ॥८॥

शिवा । नः । सख्या । संतु । भ्रात्रा । अग्ने । देवेषु । युष्मे इति । सा । नः । नाभिः ।
सदने । सस्मिन् । ऊधन् ॥८॥

हे अग्ने नोऽस्मदीयानि सख्या सख्यानि सखित्वानि भ्रात्रा भ्रात्राणि भ्रातृसंबंधीनि कर्माणि देवेषु द्योतमानेषु युष्मे युष्मासु ॥ सुपां सुलुगिति सप्तमीबहुवचनस्य शेआदेशः ॥ शिवा शिवानि संतु । मंगलानि भवंतु । सा सखित्वभ्रातृकर्मसंततिः सदने देवानां स्थाने सस्मिन्नूधनि सर्वस्मिन्यज्ञे नोऽस्माकं नाभिर्बंधनं भवति ॥ ॥१०॥ ॥१॥

द्वितीयेऽनुवाके एकादश सूक्तानि । तत्र भद्रं त इति षड्चं प्रथमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं । भद्रं षडित्यनुक्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छंदसीदमादिके द्वे सूक्ते विनियुक्ते । तथा च सूत्रितं । भद्रं ते अग्न इति सूक्ते । आ० ४ १३ । इति ॥

भद्रं ते अग्ने सहसिन्ननीकमुपाक आ रोचते सूर्यस्य ।
रुशद्दृशे ददृशे नक्तया चिदरूक्षितं दृश आ रूपे अन्नं ॥१॥

भद्रं । ते । अग्ने । सहसिन् । अनीकं । उपाके । आ । रोचते । सूर्यस्य ।
रुशत् । दृशे । ददृशे । नक्तऽया । चित् । अरूक्षितं । दृशे । आ । रूपे । अन्नं ॥१॥

हे सहसिन् बलवन्नग्ने ते त्वदीयं भद्रं भजनीयमनीकं तेजः सूर्यस्योपाके समीपभूते । दिवस इत्यर्थः । आ रोचते । समंताद्दीप्यते । रुशद्रोचमानं दृशे दर्शनीयं तेजो नक्तया चिद्रात्रावपि ददृशे । दृश्यते । आ इत्ययं शब्दश्चार्थे वर्तते । आ किंच अरूक्षितं स्निग्धं दृशे दर्शनीयमन्नं पुरोडाशादिरूपं हवी रूपे रूपवति त्वय्यृत्विग्भिर्हुतं भवति ॥

वि षाह्यग्ने गृणते मनीषां खं वेपसा तुविजात स्तवानः ।
विश्वेभिर्यद्वावनः शुक्र देवैस्तन्नो रास्व सुमहो भूरि मन्म ॥२॥

वि । साहि । अग्ने । गृणते । मनीषां । खं । वेपसा । तुविऽजात । स्तवानः ।
विश्वेभिः । यत् । ववनः । शुक्र । देवैः । तत् । नः । रास्व । सुऽमहः । भूरि । मन्म ॥२॥

हे तुविजात मथनेनारणिद्वारा यज्ञादिकर्मसु बहुजन्मन्नग्ने स्तवान ऋत्विगादिभिः स्तूयमानस्त्वं वेपसा यज्ञादिकर्मणा । वेप इति कर्मनाम वेपो वेषो विष्टीति कर्मनामसु पाठात् । मनीषां स्तुतिं गृणते कुर्वते यजमानाय खं यजमानप्राप्यस्य पुण्यलोकस्य द्वारं वि षाहि । विष्य । विमुंचेत्यर्थः ॥ षोऽंतकर्मणीत्यस्माद्धातोर्लोण्मध्यमपुरुषैकवचनं । सिप् । दिवादिभ्यः श्यन् । तस्य बहुलं छंदसीति लुक् । आदेच उपदेशेऽशितीत्यात्वं । सेर्हिरादेशः । तिङ्ङतिङ इति निघातः ॥ हे शुक्र दीप्यमानाग्ने त्वं विश्वेभिर्विश्वैः सर्वैः ॥ बहुलं छंदसीति भिस ऐसभावः ॥ देवैरिंद्रादिभिः सह यत्पश्वादिधनं ववनः । यजमानेभ्यः प्रयच्छः ॥ वनतेर्लेट् । तस्य सिप् इतश्च लोप इतीकारलोपः । बहुलं छंदसीति विकरणस्य श्लुः । श्लाविति द्विर्वचनं । हलादिशेषः । लेटोऽडाटावित्यडागमः । यद्वृत्तान्नित्यमिति निघाताभावः ॥ हे सुमहः शोभनतेजस्काग्ने भूरि प्रभूतं मन्म मननीयं तद्धनं नोऽस्मभ्यं रास्व । देहि ॥

महापितृयज्ञे स्विष्टकृदग्निः कव्यवाहनो यष्टव्यः। तस्य द्वे अनुवाक्ये। तत्र त्वदग्ने काव्येति द्वितीयानुवाक्या। तथा च सूत्रितं। त्वदग्ने काव्या त्वन्मनीषाः स प्रत्नथा सहसा जायमानः। आ० २ १९। इति॥

त्वद॑ग्ने का॒व्या॑ त्वन्म॑नी॒षास्त्वदु॒क्था जा॑यन्ते॒ राध्या॑नि।
त्वदे॑ति॒ द्रवि॑णं वी॒रपे॑शा इ॒त्थाधि॑ये दा॒शुषे॒ मर्त्या॑य॥३॥
त्वत्। अ॒ग्ने॒। काव्या॑। त्वत्। म॒नी॒षाः। त्वत्। उ॒क्था। जा॒य॒न्ते॒। राध्या॑नि।
त्वत्। ए॒ति॒। द्रवि॑णं। वी॒रऽपे॑शाः। इ॒त्थाऽधि॑ये। दा॒शुषे॑। मर्त्या॑य॥३॥

हे अग्ने काव्या काव्यानि हविर्वहनदेवतानयनादीन्यग्निसंबंधीनि कर्माण्याध्वर्यवाणि कर्माणि वा त्वद्भवतो जायंते। उत्पद्यंते। मनीषाः स्तुतिरूपा वाचस्त्वत्त एव जायंते। राध्यानि राद्धं योग्यान्युक्थान्युक्थानि शस्त्राणि त्वत्त्वत्तो जायंते। इत्थाधिये। धीरिति कर्मनाम। इत्थेति सत्यनामसु पाठात् सत्यकर्मणे दाशुषे हवींषि दत्तवते मर्त्याय मनुष्याय यजमानाय वीरपेशाः। पेश इति रूपनाम। इह विक्रांत रूपं। अत्र लिंगव्यत्ययेन वीरपेशा इति रूपं। द्रविणं पश्वादिधनं त्वत्त्वत्त एति। निर्गच्छति। उत्पद्यत इत्यर्थः॥

त्वद्वा॒जी वा॑जंभ॒रो विहा॑या अभिष्टि॒कृज्जा॑यते स॒त्यशु॑ष्मः।
त्वद्र॒यिर्दे॒वजू॑तो मयो॒भुस्त्वदा॒शुर्जू॒जुवाँ॑ अग्ने॒ अर्वा॑॥४॥
त्वत्। वा॒जी। वा॒ज॒म्ऽभ॒रः। विऽहा॑याः। अ॒भि॒ष्टि॒ऽकृत्। जा॒य॒ते॒। स॒त्यऽशु॑ष्मः।
त्वत्। र॒यिः। दे॒वऽजू॑तः। म॒यः॒ऽभुः। त्वत्। आ॒शुः। जू॒जु॒ऽवान्। अ॒ग्ने॒। अर्वा॑॥४॥

हे अग्ने वाजी बलवान्वाजभरो हविर्लक्षणस्यान्नस्य वाहकः॥ अपि वा वाजंभर इत्येषा वैदिकी संज्ञा। संज्ञायां भृतॄवृजीति वाजशब्दे कर्मण्युपपदे खच्प्रत्ययः। अरुर्द्विषदजंतस्येति मुमागमः। चित इत्यंतोदात्तत्वं॥ विहाया महानभिष्टिकृदभिष्टिकृत् अभीप्सितकृद्वा। सत्यशुष्मः सत्यबलः पुत्रस्त्वत्तो जायते। उत्पद्यते। देवजूतो देवैः प्रेरितो मयोभुः सुखप्रदः। मय इति सुखनामैतत्। रयिर्धनं त्वज्जायते। आशुः शीघ्रगामी। अप्रतिहतगमन इत्यर्थः। जूजुवान्वेगेन गच्छन्नर्वाश्वस्त्वद्भवतो जायते॥

त्वाम॑ग्ने प्रथ॒मं दे॑व॒यन्तो॑ दे॒वं मर्ता॑ अमृत म॒न्द्रजि॑ह्वं।
द्वे॒षो॒युत॒मा वि॑वासन्ति धी॒भिर्दमू॑नसं गृ॒हप॑तिम॒मूरं॑॥५॥
त्वां। अ॒ग्ने॒। प्र॒थ॒मं। दे॒व॒ऽयन्तः॑। दे॒वं। मर्ताः॑। अ॒मृ॒त॒। म॒न्द्रऽजि॑ह्वं।
द्वे॒षः॒ऽयुत॑ं। आ। वि॒वा॒स॒न्ति॒। धी॒भिः॒। दमू॑नसं। गृ॒हऽप॑तिं। अ॒मूरं॑॥५॥

हे अमृत अमरणशीलाग्ने देवयंतो देवानिच्छंतो मर्ता मनुष्या यजमानास्त्वा धीभिः स्तुतिभिः कर्मभिर्वा आ विवासंति। समंतात्परिचरंति। कीदृशं त्वां। प्रथमं देवानामाद्यं देवं द्योतमानं मंद्रजिह्वं। देवानां मादयित्री जिह्वा यस्य तं। द्वेषोयुतं द्वेषसां पापानां पृथक्कर्तारं दमूनसं रक्षसां दमनकरणमनसं। दमू॒नःशब्दस्य कथमयमर्थ इति दमूना दममना वा दानमना वा दांतमना वापि वा दम इति गृहनाम तन्मनाः स्यादिति यास्केनोक्तत्वादिति॥ दमु उपशमने। दमेरुनसिरित्यौणादिक उनसिप्रत्ययः॥ गृहपतिं गृहाणां पालयितारममूरममूढं। प्रगल्भमित्यर्थः॥

स्वस्त्ययन्यामारे अस्मदिति स्विष्टिमतोऽपि याज्या। सूत्रितं च। आरे अस्मदमतिमारे अंहः। आ० २ १०। इति॥

आरे अस्मदमतिमारे अंह आरे विश्वां दुर्मतिं यन्निपासि ।
दोषा शिवः सहसः सूनो अग्ने यं देव आ चित्सचसे स्वस्ति ॥६॥
आरे । अस्मत् । अमतिं । आरे । अंहः । आरे । विश्वां । दुःऽमतिं । यत् । निऽपासि ।
दोषा । शिवः । सहसः । सूनो इति । अग्ने । यं । देवः । आ । चित् । सचसे । स्वस्ति ॥६॥

हे सहसः सूनो बलस्य पुत्र । मथ्यमानोऽग्निर्मथनकारिणा हि बलेन जायत इत्यग्नेर्बलपुत्रत्वं । हे अग्ने दोषा रात्रौ शिवः शिवकरो देवो द्योतमानस्त्वं यं यानस्मान् स्वस्त्यविनाशाय आ सचसे । परितः सेवसे । चिदिति पूरणः । यद्यस्मात्कारणान्निपासि । यजमानान्नितरां पालयसि । तेभ्योऽस्मदस्मत्तोऽमतिं पापरूपामशनेच्छामारे दूरे कुरु । अशनाया वै पाप्मामतिः । ऐ॰ ब्रा॰ २ २ । इति ब्राह्मणं । आरे दूरेऽस्मत्तोऽंहः पापं कुरु । आरे इति दूरनामैतत् । अस्मत्त आरे दूरे दुर्मतिं दुर्मनस्त्वं कुरु ॥ ॥११॥

यस्त्वामग्न इति षड्चं द्वितीयं सूक्तं । वामदेव ऋषिः । त्रैष्टुभं छंदः । अग्निर्देवता । यस्त्वामित्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

यस्त्वामग्न इनधते यतस्रुक्त्रिस्ते अन्नं कृणवत्सस्मिन्नहन् ।
स सु द्युम्नैरभ्यस्तु प्रसक्षत्तव क्रत्वा जातवेदश्चिकित्वान् ॥१॥
यः । त्वां । अग्ने । इनधते । यतऽस्रुक् । त्रिः । ते । अन्नं । कृणवत् । सस्मिन् । अहन् ।
सः । सु । द्युम्नैः । अभि । अस्तु । प्रऽसक्षत् । तव । क्रत्वा । जातऽवेदः । चिकित्वान् ॥१॥

हे अग्ने यतस्रुक् स्रुचा संबद्धो यो यजमानस्त्वामिनधते । दीप्तियुक्तं कुर्यात् । यः सस्मिन्नहन् सर्वस्मिन्नहनि ते तुभ्यं त्रिस्त्रिवारं सवनत्रयेऽन्नं हविर्लक्षणमन्नं कृणवत् । कुर्यात् । हे जातवेदो जातानां वेदितरग्ने तव तोषकेण कत्वेंधनादिहेतुना कर्मणा प्रसक्षत् प्रसहमानः त्वदीयं तेजश्चिकित्वान् जानन् स यजमानो द्युम्नैर्धनैर्यशोभिर्वा सु अत्यंतमभ्यस्तु । शत्रूनभिभवतु ॥

इध्मं यस्ते जभरच्छश्रमाणो महो अग्ने अनीकमा सपर्यन् ।
स इधानः प्रति दोषामुषासं पुष्यन्रयिं सचते घ्नन्नमित्रान् ॥२॥
इध्मं । यः । ते । जभरत् । शश्रमाणः । महः । अग्ने । अनीकं । आ । सपर्यन् ।
सः । इधानः । प्रति । दोषां । उषसं । पुष्यन् । रयिं । सचते । घ्नन् । अमित्रान् ॥२॥

हे अग्ने यो यजमानस्ते तुभ्यमिध्मं होमसाधनं समित्संघातं जभरत् । आहरत् ॥ हृञ् हरणे । लिङर्थे लेट् । तस्य तिप इतश्च लोप इतीकारलोपः । बहुलं छंदसीति शपः श्लुः । द्विर्वचनादिकार्यं । लेटोऽडाटावित्यडागमः । हृग्रहोर्भ इति भत्वं ॥ शश्रमाण इध्माद्याहरणे श्राम्यन्महो महतस्तवानीकं । आकारश्चार्थे । तेजश्च सपर्यन्परिचरन् यो यजमानो दोषां प्रति रात्रिं लक्षीकृत्योषसं प्रत्युषःकालं च लक्षीकृत्य । कालद्वयेऽपीत्यर्थः । इधान इधानस्त्वां दीप्तियुक्तं करोति पुष्यन् प्रजाभिः पशुभिश्च पुष्टः सन् स यजमानोऽमित्रान् शत्रून् घ्नन् हिंसन्नयिं धनं सचते । सेवते । सर्वदा पश्वादिधनसमृद्धो भवतीत्यर्थः ॥

उखासंभरणीयेष्टावग्नेः क्षत्रभृतोऽनुवाक्या । तथा च सूत्रितं । अग्निरीशे बृहतः क्षत्रियस्याचामि ते सुमतिं घोष्यर्वाक् । आ॰ ४ १. । इति ॥

अग्निरीशे बृहतः क्षत्रियस्याग्निर्वाजस्य परमस्य रायः ।
दधाति रत्नं विधते यविष्ठो व्यानुषङ्मर्त्याय स्वधावान् ॥३॥

अग्निः । ईशे । बृहतः । क्षत्रियस्य । अग्निः । वाजस्य । परमस्य । रायः ।
दधाति । रत्नं । विधते । यविष्ठः । वि । आनुषक् । मर्त्याय । स्वधाऽवान् ॥३॥

अग्निर्बृहतो महतः क्षत्रियस्य बलस्येशे । ईश्वरो भवति ॥ वर्तमानार्थे लिट् ॥ किंच अग्निः परमस्योत्कृष्टस्य वाजस्यान्नस्य रायः पश्वादेर्धनस्य चेशे । यविष्ठो युवतमः स्वधावानन्नवान् तेजस्वी वाग्निर्विधते । परिचरते । विधतिः परिचरणकर्मेति यास्कः । मर्त्याय मनुष्याय यजमानाय रत्नं रमणीयं धनमानुषक् अनुषक्तं वि दधाति । करोति ॥

यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः ।
कृधी ष्व१स्माँ अदितेरनागान्व्येनांसि शिश्रथो विष्वगग्ने ॥४॥
यत् । चित् । हि । ते । पुरुषऽत्रा । यविष्ठ । अचित्तिऽभिः । चकृम । कत् । चित् । आगः ।
कृधि । सु । अस्मान् । अदितेः । अनागान् । वि । एनांसि । शिश्रथः । विष्वक् । अग्ने ॥४॥

हे यविष्ठ युवतमाग्ने यच्चिद्धि यदपि खलु ते त्वदीयेषु पुरुषत्रा परिचारकेषु पुरुषेष्वचित्तिभिरज्ञानैः कच्चिदागः किंचिदपि पापं वयं चकृम तथापि हे अग्ने अस्मानदितेर्भूमेरनागानागसः पापरहितान् सु अत्यन्तं कृधि । कुरु । हे अग्ने विष्वक् सर्वतो विद्यमानान्येनांस्यस्माभिः कृतानि पापानि वि शिश्रथः । विश्रथय । शिथिलीकुरु ॥

महश्चिदग्न एनसो अभीक ऊर्वाद्देवानामुत मर्त्यानां ।
मा ते सखायः सदमिद्रिषाम यच्छा तोकाय तनयाय शं योः ॥५॥
महः । चित् । अग्ने । एनसः । अभीके । ऊर्वात् । देवानां । उत । मर्त्यानां ।
मा । ते । सखायः । सदं । इत् । रिषाम । यच्छ । तोकाय । तनयाय । शं । योः ॥५॥

हे अग्ने देवानामिन्द्रादीनामुत अपि च मर्त्यानां मनुष्याणामभीकेऽन्तिके । अभीक इत्यन्तिकनामैतत् । अस्माभिर्यत्पापं कृतं महश्चिन्महतोऽप्यूर्वाद्विस्तृतादस्मादेनसः पापात्त्वदीयाः सखायो मित्रभूताः स्तोतारो वयं सदमित्सर्वदैव मा रिषाम । मा हिंसिता भूम । हे अग्ने त्वं तोकाय पुत्राय तनयाय पौत्राय शं पापकृतोपद्रवाणां शान्तिं योः सुकृतोत्पादितं सुखं च यच्छ । देहि ॥

यथा ह त्यद्वसवो गौर्यं चित्पदि षिताममुंचता यजत्राः ।
एवो ष्व१स्मन्मुंचता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥६॥
यथा । ह । त्यत् । वसवः । गौर्यं । चित् । पदि । सितां । अमुंचत । यजत्राः ।
एवो इति । सु । अस्मत् । मुंचत । वि । अंहः । प्र । तारि । अग्ने । प्रऽतरं । नः । आयुः ॥६॥

यजत्रा यजनीयाः पूजार्हा हे वसवो निवासयितारोऽग्नयो यूयं यथा ह यथैव त्यत्त्या तां पदि पादे सितां बद्धां गौर्यं चित् गौरीं गामप्यमुंचत । त्यक्तवन्तो भूयास्त । एवो एवमेवास्मदस्मत्तोंऽहः पापं सु अत्यन्तं वि मुंचत । विमुक्तं कुरुत । बहुवचनं पूजार्थं । हे अग्ने त्वया प्रतरं प्रवृद्धं नोऽस्मदीयमायुः प्र तारि । प्रवृद्धं क्रियतां ॥ ॥१०॥

प्रत्यग्निरिति पचर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं तत्तन्मंत्रवर्णादभिधेयोषःप्रभृतिदेवतं वा । तथा चानुक्रांतं । प्रत्यग्निः पंच लिंगोक्तदेवतं त्वैक इति ॥ लैंगिको विनियोगः ॥

प्रत्यग्निरुषसामग्रमख्यद्विभातीनां सुमना रत्नधेयं ।
यातमश्विना सुकृतो दुरोणमुत्सूर्यो ज्योतिषा देव एति ॥१॥
प्रति । अग्निः । उषसां । अग्रं । अख्यत् । विऽभातीनां । सुऽमनाः । रत्नऽधेयं ।
यातं । अश्विना । सुऽकृतः । दुरोणं । उत् । सूर्यः । ज्योतिषा । देवः । एति ॥१॥

सुमनाः शोभनमनस्कोऽग्निर्विभातीनां व्युच्छन्तीनामुषसामुषोदेवतानां रत्नधेयं रत्नधानं । धनप्रकाशकमित्यर्थः । अग्रं प्रति पूर्वकाले लक्षीकृत्याख्यत । प्रवृद्धो भवति । हे अश्विनावश्विनौ युवां सुकृतो यजमानस्य दुरोणं गृहं । दुरोण इति गृहनाम दुरोणे दुर्या इति गृहनामसु पाठात । यातं । गच्छतं । सूर्य ऋत्विगादीनां प्रेरको देवो ज्योतिषा स्वेन तेजसोदेति । उषःकाले प्रादुर्भवतीत्यर्थः ॥

ऊर्ध्वं भानुं सविता देवो अश्रेद्द्रप्सं दविध्वद्गविषो न सत्वा ।
अनु व्रतं वरुणो यंति मित्रो यत्सूर्यं दिव्यारोहयंति ॥२॥
ऊर्ध्वं । भानुं । सविता । देवः । अश्रेत् । द्रप्सं । दविध्वत् । गोऽइषः । न । सत्वा ।
अनु । व्रतं । वरुणः । यंति । मित्रः । यत् । सूर्यं । दिवि । आऽरोहयंति ॥२॥

सविता प्रेरको देव ऊर्ध्वमुन्नतं भानुमश्रेत । आश्रयति । यद्यदा रश्मयः सूर्यं दिवि द्युलोक आरोहयंति । आरोहणं कारयंति । तदा वरुणो रात्र्यभिमानी देवो मित्रोऽहरभिमान्यन्ये देवाश्च व्रतं तत्संबंधि कर्मानुयंति । अनुगच्छंति । अनुगमने दृष्टांत उच्यते । द्रप्सं पार्थिवं रजो दविध्वद्धुन्वन् । विकिरन्नित्यर्थः । गविषो गा इच्छन् सत्वा न वृषभ इव तद्वत ॥

यं सीमकृण्वन्तमसे विपृचे ध्रुवक्षेमा अनवस्यंतो अर्थं ।
तं सूर्यं हरितः सप्त यह्वीः स्पशं विश्वस्य जगतो वहंति ॥३॥
यं । सीं । अकृण्वन् । तमसे । विऽपृचे । ध्रुवऽक्षेमाः । अनवऽस्यंतः । अर्थं ।
तं । सूर्यं । हरितः । सप्त । यह्वीः । स्पशं । विश्वस्य । जगतः । वहंति ॥३॥

ध्रुवक्षेमाः स्थिरनिवासाः सृष्टिकर्तारो देवाः सीं सर्वतस्तमसे तमसो विपृचे पृथक्करणायार्थं जगल्लक्षणं कार्यमनवस्यतोऽविमुंचतः कुर्वंत एव यं सूर्यमकृण्वन् । असृजन्नित्यर्थः । यह्वीर्महत्यः सप्त सप्तसंख्याका हरितोऽश्वा विश्वस्य समस्तस्य जगतः प्राणिसमूहस्य स्पशं प्रेरकत्वेन ज्ञातारं तं सूर्यं वहंति । धारयंति ॥

वहिष्ठेभिर्विहरन्यासि तंतुमवव्ययन्नसितं देव वस्म ।
दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वं१तः ॥४॥
वहिष्ठेभिः । विऽहरन् । यासि । तंतुं । अवऽव्ययन् । असितं । देव । वस्म ।
दविध्वतः । रश्मयः । सूर्यस्य । चर्मऽइव । अव । अधुः । तमः । अपऽसु । अंतरिति ॥४॥

हे देव द्योतमान सूर्य त्वं जगन्निर्वाहात्मकस्य रसस्यादानार्थं तंतुं रश्मिसमूहं विहरन्विस्तारयन् असितं कृष्णवर्णं वस्म नक्तंचराणां निवासभूतां रात्रिमवव्ययन् अवाचीनं यथा भवति तथा संवृण्वन् । तिरस्कुर्वन्नित्यर्थः । वहिष्ठैर्वोढृतमैरत्यंतं शीघ्रैरश्वैर्यासि । गमनमार्गं गच्छसि । अस्यामृचि पूर्वार्धे सूर्यस्य प्रत्यक्षमर्थं प्रतिपाद्योत्तरार्धे परोक्षमर्थं प्रतिपादयितुमाह । दविध्वतो धुन्वानाः सूर्यस्य संबंधिनो रश्मयः किरणा

मप्स्वंतरिक्षे। आप इत्यंतरिक्षनाम आकाशमापः पृथिवीति तन्नामसु पाठात्। अंतर्मध्ये चर्मेव चर्मवत्स्थित तमोऽधकारमवाधुः। अवाचीनमदधुः। तिरस्कुर्वतीत्यर्थः॥

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न।
कया याति स्वधया को ददर्श दिवः स्कंभः समृतः पाति नाकं ॥५॥

अनायतः। अनिऽबद्धः। कथा। अयं। न्यङ्। उत्तानः। अव। पद्यते। न।
कया। याति। स्वधया। कः। ददर्श। दिवः। स्कंभः। संऽऋतः। पाति। नाकं ॥५॥

आयतशब्दो दूरवाची। तद्विपरीतोऽनायत आसीनः सन्नय प्रत्यक्षेणोपलभ्यमानो मण्डलाभिमानी सूर्यो ऽनिबद्धः। केनापि बद्धो न क्रियते। अपि चाय सूर्यो न्यङ्ङवाङ्मुखः सन् केनचित्कथा कथ नाव पद्यते। न हिंस्यते। किंचायमुत्तान ऊर्ध्वमुखत्वेन तिष्ठन् कया स्वधया केन बलेन याति। गच्छति। स्वधाशब्दोऽन्नवाच्यत्र तत्कार्यं बलं लक्षयति। अपि च दिवो द्युलोकस्य स्कंभः स्तंभः समृतो नाकेन सर्वतः सूर्यो नाकं स्वर्गं पाति। पालयति। को ददर्श। तत्त्वतः कः पश्यति। न कोऽपि जानातीत्यर्थः॥ ॥१३॥

प्रत्यग्निरुषस इति पंचर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेय मात्रवर्णिकदैवतं वा। तथा चानुक्रांतं। प्रत्यग्निरिति। लिंगोक्तदैवतं त्विति तुशब्दादस्यापि सूक्तस्य लिंगोक्तदैवतत्वं॥ विनियोगो लैंगिकः॥

प्रत्यग्निरुषसो जातवेदा अख्यद्देवो रोचमाना महोभिः।
आ नासत्योरुगाया रथेनेमं यज्ञमुप नो यातमच्छ ॥१॥

प्रति। अग्निः। उषसः। जातऽवेदाः। अख्यत्। देवः। रोचमानाः। महःऽभिः।
आ। नासत्या। उरुऽगाया। रथेन। इमं। यज्ञं। उप। नः। यातं। अच्छ ॥१॥

देवो द्योतमानो जातवेदा जातधनोऽग्निर्महोभिस्तेजोभी रोचमाना दीप्यमाना उषसः प्रत्युषसो लक्षीकृत्याख्यत। प्रवृद्धो भवति। उरुगाया प्रभूतगमनौ हे नासत्याश्विनौ रथेन नोऽस्मदीयमिमं यज्ञमच्छाभिमुखमुप यात। उपगच्छत॥

ऊर्ध्वं केतुं सविता देवो अश्रेज्ज्योतिर्विश्वस्मै भुवनाय कृण्वन्।
आप्रा द्यावापृथिवी अंतरिक्षं वि सूर्यो रश्मिभिश्चेकितानः ॥२॥

ऊर्ध्वं। केतुं। सविता। देवः। अश्रेत्। ज्योतिः। विश्वस्मै। भुवनाय। कृण्वन्।
आ। अप्राः। द्यावापृथिवी इति। अंतरिक्षं। वि। सूर्यः। रश्मिऽभिः। चेकितानः ॥२॥

विश्वस्मै सर्वस्मै भुवनाय लोकाय ज्योतिस्तेजः कृण्वन् कुर्वन् सविता प्रेरको देव ऊर्ध्वमुन्मुखं केतुं प्रकाशकं भानुमश्रेत्। आश्रयति। वि चेकितानः सर्वं विशेषेण पश्यन् सूर्यो रश्मिभिः स्वकीयैः किरणैर्द्यावापृथिवी द्युलोकभूलोकौ चांतरिक्षं चाप्राः। समंतादपूरयत्॥

आवहंत्यरुणीर्ज्योतिषागान्मही चित्रा रश्मिभिश्चेकिताना।
प्रबोधयंती सुविताय देव्युषा ईयते सुयुजा रथेन ॥३॥

आऽवहंती। अरुणीः। ज्योतिषा। आ। अगात्। मही। चित्रा। रश्मिऽभिः। चेकिताना।
प्रऽबोधयंती। सुविताय। देवी। उषाः। ईयते। सुऽयुजा। रथेन ॥३॥

आवहंती धनानि धारयंत्यरुणीररुणवर्णाः ॥ प्रथमैकवचने द्वितीयाबहुवचनं छांदसं ॥ ज्योतिषा तेजसा युक्ता मही महती रश्मिभिः किरणैश्चित्रा दर्शनीया चेकिताना जानत्युषा आगात । आगच्छत । किंच प्रबोधयंती सुप्तान् प्रबुद्धान् कुर्वती देवी द्योतमानोषाः सुयुजा शोभनयुक्तेन रथेन सुविताय सुखप्राप्तये ईयते । गच्छति ॥

आ वां वहिष्ठा इह ते वहंतु रथा अश्वास उषसो व्युष्टौ ।
इमे हि वां मधुपेयाय सोमा अस्मिन्यज्ञे वृषणा मादयेथां ॥४॥
आ । वां । वहिष्ठाः । इह । ते । वहंतु । रथाः । अश्वासः । उषसः । विऽउष्टौ ।
इमे । हि । वां । मधुऽपेयाय । सोमाः । अस्मिन् । यज्ञे । वृषणा । मादयेथां ॥४॥

हे अश्विनाविह यज्ञे वहिष्ठा वोढृतमास्ते प्रसिद्धा रथा रंहणा गंतारोऽश्वासोऽश्वा वां युवामुषस उषोदेवताया व्युष्टौ व्युच्छनकाल आ वहंतु । समंतान्नयतु । हि यस्मात्कारणात् हे वृषणा वृषणौ कामानां वर्षितारौ हे अश्विनाविमे सोमा वां युवां मधुपेयाय मधोः सोमस्य पानायास्मिन्यज्ञे मादयेथां । हर्षयेथां ॥

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।
कया याति स्वधया को ददर्श दिवः स्कंभः समृतः पाति नाकं ॥५॥
अनायतः । अनिऽबद्धः । कथा । अयं । न्यङ् । उत्तानः । अव । पद्यते । न ।
कया । याति । स्वधया । कः । ददर्श । दिवः । स्कंभः । संऽऋतः । पाति । नाकं ॥५॥

इयमृक्पूर्वं व्याख्याता ॥ ॥१४॥

अग्निर्होतेति दशर्चं पंचमं सूक्तं वामदेवस्यार्षं गायत्रं । अत्रेयमनुक्रमणिका । अग्निर्होता दश गायत्रमपि-बोधदित्याभ्यां सोमक साहदेव्यमभ्यवदत्पराभ्यामस्याश्विनावायुरयाचतेति । बोधयदिति द्वृचेन सोमकराजा स्तूयत एष वामिति द्वृचेनाश्विनौ शिष्टाभिः पड्भिरग्निः स्तूयते । अतस्ता एव क्रमेण देवताः ॥ सूक्तविनियोगो लैंगिकः ॥ पशोः पर्यग्निकरणेऽग्निर्होता न इत्ययमृचोऽनुवचनीयः । तथा च सूत्रितं । अग्निर्होता न इति तृचं पर्यग्नयेऽन्वाह । आ० ३. २ । इति ॥ प्रातरनुवाकेऽप्याश्विने क्रतौ गायत्रे छंदस्याश्विनशस्त्रे चायं तृचो विनियुक्तः । तथा च सूत्रितं । अग्निर्होता नो अध्वर इति तिस्रः । आ० ४. १३ । इति ॥

अग्निर्होता नो अध्वरे वाजी सन्परि णीयते । देवो देवेषु यज्ञियः ॥१॥
अग्निः । होता । नः । अध्वरे । वाजी । सन् । परि । नीयते । देवः । देवेषु । यज्ञियः ॥१॥

होता देवानामाह्वाता होमनिष्पादको वाग्निर्नोऽस्मदीयेऽध्वरे यागे । वाजीत्यतद्गुणोपमाक । वाजी शीघ्रगामी वोढाश्व इव तथा देवेभ्यो हविर्वाहकः सन् परि णीयते । परितः समंतात्प्राप्यते । तथा ब्राह्मणं च भवति । वाजी सन्परि णीयत इति वाजिनमिव ह्येनं संतं परिणयंति । ऐ० ब्रा० २. ५ । इति । कीदृशोऽग्निः । देवेषु द्योतमानेष्विंद्रादिषु मध्ये देवो द्योतमानो यज्ञियो यज्ञार्हः ॥

परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् ॥२॥
परि । त्रिऽविष्टि । अध्वरं । याति । अग्निः । रथीःऽइव । आ । देवेषु । प्रयः । दधत् ॥२॥

देवेषु द्योतमानेष्विंद्रादिषु । प्रय इत्यन्ननामैतत् । प्रयो यजमानैर्दत्तं हवीरूपमन्नमा दधत् आ समंताद्धारयन्नग्निरगमनादिगुणविशिष्टोऽग्निस्त्रिविष्टि त्रिवारं । सवनत्रयेऽपीत्यर्थः । परि परितः समंतादध्वरं यजमानैः कृतं यागं याति । गच्छति । परिगमने दृष्टांतः । रथीरिव । रथवान्पुरुषो यथा शीघ्रं याति तद्वत् । तथा च ब्राह्मणं । परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिवेति हि रथीरिवाध्वरं पर्येति । ऐ० ब्रा० २. ५. । इति ॥

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥३॥
परि । वाजऽपतिः । कविः । अग्निः । हव्यानि । अक्रमीत् । दधत् । रत्नानि । दाशुषे ॥३॥

वाजपतिर्वाजानामन्नानां पतिः पालकः । परि वाजपतिः कविरित्येष हि वाजानां पतिः । ऐ॰ ब्रा॰ २. ५. । इति ब्राह्मणं । कविः क्रान्तदर्शी मेधावी वा दाशुषे हविर्दत्तवते यजमानाय रत्नानि रमणीयानि धनानि दधत् प्रयच्छन्नग्निर्हव्यानि हवींषि पर्यक्रमीत् । परितः क्रामति । व्याप्नोति ॥

अयं यः सृञ्जये पुरो दैववाते समिध्यते । द्युमाँ अमित्रदम्भनः ॥४॥
अयं । यः । सृञ्जये । पुरः । दैवऽवाते । सम्ऽइध्यते । द्युऽमान् । अमित्रऽदम्भनः ॥४॥

यः प्रसिद्धोऽयं प्रत्यक्षेणोपलभ्यमानोऽग्निर्दैववाते देववातस्य पुत्रे सृञ्जये । सृञ्जयो नाम कश्चित्सोमयाजी । तस्मिन्निमित्तभूते सति । तद्यागार्थमित्यर्थः । सृञ्जयस्य यष्टृत्वं तैत्तिरीया आमनन्ति । वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सृञ्जयान्बहुयाजिनोऽयीयजः । तै॰ सं॰ ६. ६. २. २. । इति । पुरः पूर्वस्यां दिशि स्थितायाम् उत्तरवेद्यां समिध्यते । सम्यग्दीप्यते । अमित्रदम्भनः शत्रूणां हिंसकः सोऽग्निर्द्युमान् दीप्तिमान् भवतीति शेषः ॥

अस्य घा वीर ईवतोऽग्नेरीशीत मर्त्यः । तिग्मजम्भस्य मीळ्हुषः ॥५॥
अस्य । घ । वीरः । ईवतः । अग्नेः । ईशीत । मर्त्यः । तिग्मऽजम्भस्य । मीळ्हुषः ॥५॥

वीरः स्तोता विक्रान्तो मर्त्यो मरणधर्मा यजमानस्तिग्मजम्भस्य तीक्ष्णतेजसो मीळ्हुषोऽभिलषितफलानां सेक्तुरीवतो गमनवतोऽस्याग्नेरीशीत । ईश्वरो भवेत् । घेति पादपूरणः । एतेन यजमानमात्माभीष्टफलं कारयितुं समर्थो भवतीत्यर्थः ॥ ॥१५॥

तमर्वन्तं न सानसिमरुषं न दिवः शिशुं । मर्मृज्यन्ते दिवेदिवे ॥६॥
तं । अर्वन्तं । न । सानसिं । अरुषं । न । दिवः । शिशुं । मर्मृज्यन्ते । दिवेऽदिवे ॥६॥

यजमाना अर्वन्तं न शीघ्रगामिनमश्वमिव सानसिं संभजनीयं दिवः शिशुं न द्युलोकस्य पुत्रभूतं सूर्यमिवारुषमारोचमानं तमग्निं दिवे दिवे प्रतिदिनं मर्मृज्यन्ते । भृशं परिचरणं कुर्वन्ति ॥

बोधद्यन्मा हरिभ्यां कुमारः साहदेव्यः । अच्छा न हूत उदरं ॥७॥
बोधत् । यत् । मा । हरिऽभ्यां । कुमारः । साहऽदेव्यः । अच्छ । न । हूतः । उत् । अरं ॥७॥

साहदेव्यः सहदेवनाम्नो राज्ञः पुत्रः कुमारः सोमकाभिधो राजा हरिभ्यामश्वाभ्यामश्वौ दातुं मा मां यद्यदा बोधत् । बोधयामासेमौ तवाश्वाविति । तदाहमस्याभिमुख्येन कुमारेण हूतः सन् नोदरं । तावश्वावलब्ध्वा न निर्गतवानस्मि ॥

उत त्या यजता हरी कुमारात्साहदेव्यात् । प्रयता सद्य आ ददे ॥८॥
उत । त्या । यजता । हरी इति । कुमारात् । साहऽदेव्यात् । प्रऽयता । सद्यः । आ । ददे ॥८॥

उतापि च साहदेव्यात्सहदेवस्य पुत्रात्कुमारात्सोमकाद्राज्ञो यजता पूजनीयौ प्रयता प्रयतौ त्या त्यौ तौ प्रसिद्धौ हरी अश्वौ सद्यो यस्मिन्दिने तेनाहूतस्तस्मिन्नेव दिन आ ददे । आदत्तवानस्मि । मन्त्रद्रष्टा ऋषिर्वामदेव्योऽश्वयाचनेन कुमारमश्वप्रसङ्गमनश्याचनेनाभ्युपगम्याश्वावितस्माल्लब्ध्वा प्रीतोऽभवदित्यर्थः ॥

एष वां देवावश्विना कुमारः साहदेव्यः । दीर्घायुरस्तु सोमकः ॥९॥

एषः । वां । देवा । अश्विना । कुमारः । साहऽदेव्यः । दीर्घऽआयुः । अस्तु । सोमकः ॥९॥

देवौ द्योतमानौ हे अश्विनौ वां युवां तर्पकः साहदेव्यः सहदेवस्य पुत्रः कुमारः सोमकः सोमकाभिधान एष राजा दीर्घायुरस्तु । शतायुष्को भवतु । एतमु हैव प्रोचतुः पर्वतनारदौ सोमकाधेत्यादिना सर्वे हैव महाराजा आसुः । ऐ० ब्रा० ७. ३४. । इत्यनेन ब्राह्मणेन सोमकस्य राजत्वं स्पष्टीकृतं ॥

तं युवं देवावश्विना कुमारं साहदेव्यं । दीर्घायुषं कृणोतन ॥१०॥

तं । युवं । देवा । अश्विना । कुमारं । साहऽदेव्यं । दीर्घऽआयुषं । कृणोतन ॥१०॥

हे देवावश्विना द्योतमानावश्विनौ युवं युवां साहदेव्यं सहदेवस्य पुत्रं कुमारं सोमकाख्यं राजानं दीर्घायुषं शतायुष्कं कृणोतन । कुरुतं । अनेन तृचेनास्य कुमारस्य दीर्घमायुरश्विनावृषिरयाचतेत्यर्थः ॥ ॥१९॥

आ सत्यो यात्वित्येकविंशत्यृचं षष्ठं सूक्तं त्रैष्टुभमैंद्रं । अत्रेयमनुक्रमणिका । आ सत्यः सैकैंद्रमिति । तत्रैंद्र मित्युक्तत्वादयन्यधिकारो निवृत्त इत्यवगम्यते ॥ चतुर्विंशेऽहनि माध्यंदिनसवने मैत्रावरुणशस्त्र इदं द्वितीयमहीनसूक्तं । तथा च सूत्रितं । आ सत्यो यात्वित्यहीनसूक्तं द्वितीय मैत्रावरुणः । आ० ७. ४ । इति ॥ समूळ्हे दशरात्रे नवमेऽहनि निष्केवल्यशस्त्र इदं सूक्तं । तथा च सूत्रितं । आ सत्यो यात्वह भुवं तत्त इंद्रियमिति निष्केवल्यं । आ० ८. ७. । इति ॥

आ सत्यो यातु मघवाँ ऋजीषी द्रवंत्वस्य हरय उप नः ।
तस्मा इदंधः सुषुमा सुदक्षमिहाभिपित्वं करते गृणानः ॥१॥

आ । सत्यः । यातु । मघऽवान् । ऋजीषी । द्रवंतु । अस्य । हरयः । उप । नः ।
तस्मै । इत् । अंधः । सुसुम । सुऽदक्षं । इह । अभिऽपित्वं । करते । गृणानः ॥१॥

ऋजीषी । ऋजीषशब्देन निष्पिष्टो विगतसारः सोमोऽभिधीयते । तद्वान् सत्यः सत्यवान्मघवान्धनवानिंद्रो नोऽस्माकमुप समीप आ यातु । आगच्छतु । किंच अस्येंद्रस्य हरयोऽश्वा नोऽस्माकमुप समीपे द्रवंतु । आगच्छंतु । वयं यजमाना इहास्मिन्यज्ञे तस्मा इंद्राय सुदक्षं शोभनबलं । सारोपेतमित्यर्थः । इदिदं प्रत्यक्षेणोपलभ्यमानमंधोऽन्नरूपं सोमं सुषुम । अभिषुतं कुर्याम । गृणानोऽस्माभिः स्तूयमान इंद्रोऽभिपित्वमस्मदभिमतप्राप्तिं करते । करोतु ॥

अव स्य शूराध्वनो नांतेऽस्मिन्नो अद्य सवने मंदध्यै ।
शंसात्युक्थमुशनेव वेधाश्चिकितुषे असुर्याय मन्म ॥२॥

अव । स्य । शूर । अध्वनः । न । अंते । अस्मिन् । नः । अद्य । सवने । मंदध्यै ।
शंसाति । उक्थं । उशनाऽइव । वेधाः । चिकितुषे । असुर्याय । मन्म ॥२॥

हे शूर शत्रूणामभिभवसमर्थेंद्र अद्येदानीमस्मिन सवने माध्यंदिनाख्ये मंदध्यै त्वां मादयितुं नोऽस्मानव स्य । विमुंच । तत्र दृष्टांतः । अध्वनो गंतव्यस्य मार्गस्यांते समीपे नाश्वान्मनुष्या यथा मुंचंति तद्वत् । उशनेव काव्य इव वेधाः शंसिता यजमानो हे इंद्र चिकितुषे सर्वं जानतेऽसुर्यायासुराणां हिंसकाय तुभ्यं मन्म मननीयमुक्थं शस्त्ररूपं स्तोत्रं शंसाति । शंसनं करोति ॥

कविर्न निण्यं विदथानि साधन्वृषा यत्सेकं विपिपानो अर्चात् ।
दिव इत्था जीजनत्सप्त कारूनह्ना चिच्चक्रुर्वयुना गृणंतः ॥३॥

कविः। न। निण्यं। विदथानि। साधन्। वृषा। यत्। सेकं। विऽपिपानः। अर्चात्।
दिवः। इत्था। जीजनत्। सप्त। कारून्। अह्ना। चित्। चक्रुः। वयुना। गृणंतः ॥३॥

कविर्मेधावी निण्य न। निण्यमित्यंतर्हितनामैतत्। अंतर्हितं गूढमर्थमिव विदथानि वेदनीयानि कार्यजातानि साधन् साधयन् वृषा कामानां वर्षितेंद्रो यद्यदा सेकं सेचनीयं सोमं विपिपानोऽत्यर्थं पिबन्नर्चात् विशेषेणार्चति। सोमपाने श्रद्धां करोतीत्यर्थः। तदानीं दिवोऽमुष्माल्लोकादित्था सत्यमेव सप्त सप्तसंख्याकान् कारून्रश्मीन् जीजनत्। अजीजनत्। जनयति। गृणतः स्तूयमाना रश्मयो वयुना वयुनानि मनुष्याणां ज्ञानान्यह्ना चित् दिवसेनापि चक्रुः। कृतवंतः ॥

स्व१र्यद्वेदि सुदृशीकमर्कैर्महि ज्योती रुरुचुर्यद्ध वस्तोः।
अंधा तमांसि दुधिता विचक्षे नृभ्यश्चकार नृतमो अभिष्टौ ॥४॥
स्वः। यत्। वेदि। सुऽदृशीकं। अर्कैः। महि। ज्योतिः। रुरुचुः। यत्। ह। वस्तोः।
अंधा। तमांसि। दुधिता। विऽचक्षे। नृऽभ्यः। चकार। नृऽतमः। अभिष्टौ ॥४॥

यद्ध यदा खलु महि महत्प्रभूतं ज्योतिस्तेजोरूपं यत्स्वर्यां द्युलोकोऽर्कै रश्मिभिः सुदृशीकं सुष्ठु दर्शनीयं वेदि। अवेदि। ज्ञायते। तदानीं देवास्तस्मिन् स्वर्गे वस्तोर्निवासार्थं रुरुचुः। दीप्तियुक्ता बभूवुः। नृतमो नेतृतमः सूर्योऽभिष्टावभ्यागमने नृभ्यो नृणां विचक्षे विशेषेण दर्शनायांधांधकाररूपाणि निबिडानि तमांसि दुधिता दुधितानि नाशितानि चकार। कृतवान् ॥

ववक्ष इंद्रो अमितमृजीष्यु१भे आ पप्रौ रोदसी महित्वा।
अतश्चिदस्य महिमा वि रेच्यभि यो विश्वा भुवना बभूव ॥५॥
ववक्षे। इंद्रः। अमितं। ऋजीषी। उभे इति। आ। पप्रौ। रोदसी इति। महिऽत्वा।
अतः। चित्। अस्य। महिमा। वि। रेचि। अभि। यः। विश्वा। भुवना। बभूव ॥५॥

ऋजीषी। ऋजीषशब्देन निष्पिष्टो विगतसारः सोमोऽभिधीयते। तद्वानिंद्रः परमैश्वर्ययुक्तोऽमितमियत्तारहितं महिमानं ववक्षे। उवाह। किंच महित्वा महत्त्वेन स्वेन महिम्नोभे रोदसी उभे द्यावापृथिव्यावा पप्रौ। समंतादपूरयत्। य इंद्रो विश्वा भुवना सर्वाणि भुवनान्यभि बभूव। तिरश्चकार। अतश्चिदेभ्योऽपि विश्वेभ्यो भुवनेभ्योऽस्येंद्रस्य महिमा वि रेचि। अतिरिरिचे। अधिको बभूवेत्यर्थः॥ ॥१७॥

विश्वानि शक्रो नर्याणि विद्वानपो रिरेच सखिभिर्निकामैः।
अश्मानं चिद्ये बिभिदुर्वचोभिर्व्रजं गोमंतमुशिजो वि वव्रुः ॥६॥
विश्वानि। शक्रः। नर्याणि। विद्वान्। अपः। रिरेच। सखिऽभिः। निऽकामैः।
अश्मानं। चित्। ये। बिभिदुः। वचःऽभिः। व्रजं। गोऽमंतं। उशिजः। वि।
वव्रुरिति वव्रुः ॥६॥

विश्वानि समस्तानि नर्याणि मनुष्याणां हितानि वृष्ट्यादीनि कार्याणि विद्वान् जानन् शक्रः समर्थ इंद्रो निकामैर्निकामयमानेभ्यः सखिभिः सखिभूतेभ्यो मरुद्भ्यः॥ व्यत्ययेन चतुर्थ्यर्थे तृतीया॥ अपो वृष्टिलक्षणान्युदकानि रिरेच। रिक्तीचकार। इंद्रः सस्यादिफलसिद्ध्यर्थं मेघस्थान्युदकानि मरुद्भ्यो दत्तवानित्यर्थः। यद्वा। निकामैर्निकामयमानैः सखिभिर्मरुद्भिः सहितः सन्नपो नभसः सकाशात्। आप इत्यंतरिक्षनामैतत्॥ अत्र विभक्ति

व्यत्ययः ॥ रिरिच । व्यतिरिक्तो बभूव । ये मरुतो वचोभिर्वाग्रूपैर्ध्वनिभिरश्मानं चित् पर्वतमपि मेघं वा । अश्मेति मेघनामैतत् । विभिदुः । अभिन्दन् । उशिजः कामयमानास्ते मरुतो गोमन्तं गोभिरुपेतं व्रजमंगिरसां संबंधि गोस्थानं वि वव्रुः । आच्छादयामासुः ॥

अपो वृत्रं वव्रिवांसं पराहन्प्रावत्ते वज्रं पृथिवी सचेताः ।
प्रार्णांसि समुद्रियाण्यैनोः पतिर्भवञ्छवसा शूर धृष्णो ॥ ७ ॥

अपः । वृत्रं । वव्रिऽवांसं । परा । अहन् । प्र । आवत् । ते । वज्रं । पृथिवी । सऽचेताः ।
प्र । अर्णांसि । समुद्रियाणि । ऐनोः । पतिः । भवन् । शवसा । शूर । धृष्णो इति ॥ ७ ॥

हे इन्द्र प्रावत् राक्षसादिभ्यः प्रकर्षेण लोकान् पालयितृ ते त्वदीयं वज्रमपो वृष्टिलक्षणान्युदकानि वव्रिवांसं समावरकं वृत्रं मेघं पराहन् । प्रकर्षेण प्रेरयति स्म । पृथिवी भूमिः सचेताश्चेतनावती । त्वया संगता बभूव । धृष्णो धर्षणशील हे शूर विक्रांतेंद्र त्वं शवसा बलेन पतिर्भवन् लोकानां पालकः सन् समुद्रियाणि समुद्रसंबंधीन्यर्णांसि नभसि स्थितान्युदकानि प्रैणोः । प्रेरकोऽभूः ॥

अपो यदद्रिं पुरुहूत दर्दराविर्भुवत्सरमा पूर्व्यं ते ।
स नो नेता वाजमा दर्षि भूरिं गोत्रा रुजन्नंगिरोभिर्गृणानः ॥ ८ ॥

अपः । यत् । अद्रिं । पुरुऽहूत । दर्दः । आविः । भुवत् । सरमा । पूर्व्यं । ते ।
सः । नः । नेता । वाजं । आ । दर्षि । भूरिं । गोत्रा । रुजन् । अंगिरःऽभिः । गृणानः ॥ ८ ॥

हे पुरुहूत बहुभिराहूतेंद्र यद्यदाप. प्रति वृष्टिलक्षणान्युदकानि लक्षीकृत्याद्रिं मेघं दर्दः । विदारितवानसि । सरमा देवशुनी पूर्व्यं पुरा ते तुभ्यं पणिभिरपहृतं गोधनमाविर्भुवत् । प्रकाशयामास । अंगिरोभिर्ऋषिभिर्गृणानः स्तूयमानः सन् गोत्रा गोत्राण्यभ्राणि रुजन् नोऽस्मान् भूरिं प्रभूतं वाजमन्नं नेता प्रापयिता स त्वमा दर्षि । आदरं कृतवानसि ॥

अच्छा कविं नृमणो गा अभिष्टौ स्वर्षाता मघवन्नाधमानं ।
ऊतिभिस्तमिषणो द्युम्नहूतौ नि मायावानब्रह्मा दस्युरर्त ॥ ९ ॥

अच्छ । कविं । नृऽमनः । गाः । अभिष्टौ । स्वःऽसाता । मघऽवन् । नाधमानं ।
ऊतिऽभिः । तं । इषणः । द्युम्नऽहूतौ । नि । मायाऽवान् । अब्रह्मा । दस्युः । अर्त ॥ ९ ॥

हे मघवन्धनवन्निंद्र नृमणः । नृभिर्मनुष्यैर्मन्यत इति नृमणाः । त्वं कविं मेधाविनं कुत्समच्छ गाः । अभ्यगाः । किंच स्वर्षाता । स्वर्धनं । तस्य साता दाने निमित्तेऽभिष्टौ कवेरभिगमे सति नाधमानं युद्धार्थं त्वां याचमानं कुत्समूतिभिः शत्रुकृतोपद्रवपरिहाररूपै रक्षणैरिषणः । प्रेरितवानसि । मायावान् कपटवानब्रह्मा । ऋत्विग्भिः क्रियमाणं सर्वं कर्मजातमनुष्ठानरूपेण जानन् ऋत्विग्विशेषो ब्रह्मशब्देनोच्यते । स न विद्यते यस्य सोऽब्रह्मा । वेदोक्तकर्मसाक्षित्वरहित इत्यर्थः । दस्युः कुत्सस्य शत्रुर्द्युम्नहूतौ द्युम्नं धनं हूतिराह्वानं यस्यां युधि तस्यां न्यर्त । विनष्टो बभूव । इन्द्रः कुत्सेनाहूतः सन् तस्य शत्रुं हतवानित्यर्थः ॥

आ दस्युघ्ना मनसा याह्यस्तं भुवत्ते कुत्सः सख्ये निकामः ।
स्वे योना नि षदतं सरूपा वि वां चिकित्सदृतचिद्ध नारी ॥ १० ॥

आ। दस्युऽघ्ना। मनसा। याहि। अस्तं। भुवत्। ते। कुत्सः। सख्ये। निऽकामः।
स्वे। योनौ। नि। सदतं। सऽरूपा। वि। वां। चिकित्सत्। ऋतऽचित्। ह। नारी ॥१०॥

अत्र काचिदाख्यायिका श्रूयते। कथं। रुरुनामकः कश्चिद्राजर्षिः। तस्य पुत्रः कुत्साख्यो राजर्षिरासीत्। स च कदाचिच्छत्रुभिः सह युयुत्सुः संग्रामे स्वयमशक्तः सन् शत्रूणां हननार्थमिंद्रस्याह्वानं चकार। स चेंद्रः कुत्सस्य गृहमागत्य तस्य शत्रून् जघान। तदनंतरमतिप्रीत्या तयोः सख्यमभवत्। सख्यानंतरमिंद्र एनमपि स्वकीयं गृहं प्रापयामास। तत्र शचींद्रं प्राप्तुमागता सती तौ समानरूपौ दृष्ट्वायमिंद्रोऽयं कुत्स इति विवेकाभावेन संशयं चकारेति। अनयाख्यायिकया प्रतीयमानोऽर्थोऽत्र प्रतिपाद्यते। हे इंद्र दस्युघ्ना दस्यूनां शत्रूणां हंत्रा मनसा युक्तस्त्वमस्तं कुत्सस्य गृहं। अस्तमिति गृहनामैतत्। आ याहि। आगाः॥ लुडर्थे लोट्॥ कुत्सश्च ते तव संबंधिनि सख्ये निकामो नितरां कामयमानो भुवत्। अभवत्। ततस्तौ युवां स्वे योनौ स्वकीये स्थाने नि षदतं। न्यसीदतं। उपविष्टावभूतं। ऋतचित्सत्यदर्शिनी नारींद्रस्य भार्या शची सरूपा समानरूपौ वां युवां वि चिकित्सत्। संशयं चकार॥ ॥१८॥

यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः।
ऋज्रा वाजं न गध्यं युयूषन्कविर्यदहन्पार्याय भूषात् ॥११॥
यासि। कुत्सेन। सऽरथं। अवस्युः। तोदः। वातस्य। हर्योः। ईशानः।
ऋज्रा। वाजं। न। गध्यं। युयूषन्। कविः। यत्। अहन्। पार्याय। भूषात् ॥११॥

हे इंद्र अवस्युः कुत्सस्य रक्षणमिच्छन्॥ छंदसि क्यच् परेच्छायामपि दृश्यते॥ तोदस्तोदकः शत्रूणां हिंसको वातस्य वायुसदृशयोर्वेगवतोर्हर्योरश्वयोरीशान ईश्वरस्त्वं कुत्सेन कुत्साख्येन राजर्षिणा सरथं समानरथं यासि। गच्छसि। गध्यं ग्राह्यं। गध्यं गृह्णातेः। ऋज्रा वाजं न गध्यं युयूषन्नित्यपि निगमो भवतीति निरुक्तं। ५। १५। वाजं नान्नमिव ऋज्रा ऋजुगामिनावश्वौ युयूषन् स्वकीये रथे योजयन् कविः प्राज्ञः कुत्सो यस्मिन्नहन्नहनि दिवसे पार्याय पारणाय आपन्निस्तरणाय भूषात्। प्रभवेत्। तस्मिन्नेव दिने कुत्सेन सरथं यासीति पूर्वेण संबंधः॥

कुत्साय शुष्णमशुषं नि बर्हीः प्रपित्वे अह्नः कुयवं सहस्रा।
सद्यो दस्यून्प्र मृण कुत्स्येन प्र सूरश्चक्रं वृहतादभीके ॥१२॥
कुत्साय। शुष्णं। अशुषं। नि। बर्हीः। प्रऽपित्वे। अह्नः। कुयवं। सहस्रा।
सद्यः। दस्यून्। प्र। मृण। कुत्स्येन। प्र। सूरः। चक्रं। वृहतात्। अभीके ॥१२॥

शुष्णं पिप्रुमित्यस्यामृचि। ऋसं० १। १०३। ८। प्रतिपादितोऽर्थः कुत्सायेत्यनेन चार्धर्चेन स्पष्टीक्रियते। हे इंद्र त्वं कुत्साय कुत्सार्थमशुषं। शुषमिति सुखनामैतत्। तद्रहितं। अत्र दीर्घाभावः। शुष्णं शुष्णनामानमसुरं नि बर्हीः। न्यबर्हीः। अवधीः। तथाह्नो दिवसस्य प्रपित्वे प्रक्रमे पूर्वाह्णे कुयवं कुयवनामानमसुरं च हतवानसि। तथा स त्वं सहस्रा सहस्रेण बहुभिः परिजनैः सह सद्यो यस्मिन् काले कुयवमवधीस्तस्मिन् काल एव कुत्स्येन। कुत्स इति वज्रनामैतत्। कुत्स एव कुत्स्यं वज्रं। तेन दस्यून् शत्रून्प्र मृण। जहि॥ भूतार्थे लोट्॥ हतवानसि। तथा सूरः प्रेरकस्य सूर्यस्य चक्रमायुधमभीके समीपे संग्रामे वा प्र वृहतात्। प्रकर्षेण छिन्नवानसि॥

त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रंधीः।
पंचाशत्कृष्णा नि वपः सहस्रात्कं न पुरो जरिमा वि दर्दः ॥१३॥

त्वं । पिप्रुं । मृगयं । शूशुऽवांसं । ऋजिश्वने । वैदथिनाय । रंधीः ।
पंचाशत । कृष्णा । नि । वपः । सहस्रा । अत्कं । न । पुरः । जरिमा । वि । दर्दरिति दर्दः ॥१३॥

हे इंद्र त्वं पिप्रुं पिप्रुनामानमसुरं शूशुवांसं प्रवृद्धं मृगयं मृगयनामानमसुरं च हतवानसि । किंच स त्वं वैदथिनाय विदथिनः पुत्राय ऋजिश्वने ऋजिश्वनाम्ने राज्ञे रंधीः । वशमनयः । पंचाशत्पंचाशत्संख्याकानि सहस्रा सहस्राणि कृष्णा कृष्णवर्णानि रक्षांसि नि वपः । न्यवपः । अवधीः । तथा स त्वं जरिमा जरात्कं न वयोविशेष रूपमिव पुरः शंबरस्य नगराणि वि दर्दः । विदारितवानसि ॥

सूर उपाके तन्वं१ दधानो वि यत्ते चेत्यमृतस्य वर्पः ।
मृगो न हस्ती तविषीमुषाणः सिंहो न भीम आयुधानि बिभ्रत् ॥१४॥
सूरः । उपाके । तन्वं । दधानः । वि । यत् । ते । चेति । अमृतस्य । वर्पः ।
मृगः । न । हस्ती । तविषीं । उषाणः । सिंहः । न । भीमः । आयुधानि । बिभ्रत् ॥१४॥

हे इंद्र सूरः प्रेरकस्य सूर्यस्योपाके समीपे तन्वं त्वदीयं शरीरं यद्यदा दधानो धारकोऽभवः तदामृतस्य मरणरहितस्य ते त्वदीयं वर्पो रूपं वि चेति । व्यचेति । हे इंद्र ज्ञातृभिर्विशेषेणाज्ञायत । सूर्यस्य समीपे सर्वाणि रूपाणि मलिनीभवंति न तथेंद्रस्य रूपं किंतु सूर्यस्य समीपे इंद्रस्य रूपं विशेषेण भासमानं बभूवेत्यर्थः । अपि च हे इंद्र हस्ती मृगो न गजविशेषो मृग इव तविषीं परेषां बलमुषाणो दहन् आयुधानि वज्रादीनि शस्त्राणि बिभ्रद्बिभ्राणस्त्वं सिंहो न सिंह इव भीमो भयकरोऽभूः ॥

इंद्रं कामा वसूयंतो अग्मन्त्स्वर्मीळ्हे न सवने चकानाः ।
श्रवस्यवः शशमानास उक्थैरोको न रण्वा सुदृशीव पुष्टिः ॥१५॥
इंद्रं । कामाः । वसुऽयंतः । अग्मन् । स्वःऽमीळ्हे । न । सवने । चकानाः ।
श्रवस्यवः । शशमानासः । उक्थैः । ओकः । न । रण्वा । सुदृशीऽइव । पुष्टिः ॥१५॥

कामा राक्षसादिभयनिवारणार्थमिंद्रं कामयमाना वसूयंतः पश्वादिधनमिच्छंतः स्तोतार इंद्रं परमैश्वर्ययुक्तमग्मन् । अगमन् । गच्छंति ॥ वर्तमानार्थे छादसो लुङ् ॥ कीदृशाः स्तोतारः । स्वर्मीळ्हे न युद्ध इव सवने यज्ञे चकाना याचमानाः श्रवस्यवोऽन्नकामा उक्थैः स्तोत्रैः शशमानासः शंसमानाः स्तुवतः । तदा सोऽयमिंद्र ओको न स्तोतृणामावास इव भवति । रण्वा रमणीया सुदृशीव पुष्टिः शोभनदर्शना लक्ष्मीरिव भवति ॥ ॥१९॥

तमिद्व इंद्रं सुहवं हुवेम यस्ता चकार नर्या पुरूणि ।
यो मावते जरित्रे गध्यं चिन्मक्षू वाजं भरति स्पार्हराधाः ॥१६॥
तं । इत् । वः । इंद्रं । सुऽहवं । हुवेम । यः । ता । चकार । नर्या । पुरूणि ।
यः । माऽवते । जरित्रे । गध्यं । चित् । मक्षु । वाजं । भरति । स्पार्हऽराधाः ॥१६॥

य इंद्रो नर्या नर्याणि मनुष्यहितानि पुरूणि बहूनि ता तानि प्रसिद्धानि कर्माणि चकार । अकरोत् । किंच स्पार्हराधाः स्पृहणीयधनो य इंद्रो मावते मत्सदृशाय जरित्रे स्तोत्रे गध्यं चित् ग्राह्यं संयोजनीयमपि वाजमन्नं मक्षु शीघ्रं भरति । आहरति । वयं स्तोतारो हे यजमाना वो युष्मभ्यं तमित्तमेवेंद्रं सुहवं शोभनमाह्वानं यथा भवति तथा हुवेम । आह्वयामः ॥

तिग्मा यदंतरशनिः पताति कस्मिंश्चिच्छूर मुहुके जनानां ।
घोरा यदर्य समृतिर्भवात्यध स्मा नस्तन्वो बोधि गोपाः ॥१७॥
तिग्मा। यत्। अंतः। अशनिः। पताति। कस्मिन्। चित्। शूर। मुहुके। जनानां।
घोरा। यत्। अर्य। संऽऋतिः। भवाति। अध। स्म। नः। तन्वः। बोधि। गोपाः ॥१७॥

हे शूर विक्रांतेंद्र यद्यदा कस्मिंश्चित्सर्वस्मिन्नपि जनानां मनुष्याणां मुहुके मोहके युद्धेऽतरस्माकं मध्ये तिग्मा तीक्ष्णाशनिः पताति। पतेत्। हे अर्य स्वामिन्निंद्र यद्यदास्माकं शत्रुभिः सह घोरा भीमरूपा समृतिर्युद्धं भवाति। भवेत्। अध तदानीं नोऽस्मदीयस्य तन्वः शरीरस्य गोपा रक्षको बोधि स्म। अबोधि। शत्रुभ्यः सकाशादस्मान्रक्षकत्वेन बुद्धवानसि खलु ॥

भुवोऽविता वामदेवस्य धीनां भुवः सखावृको वाजसातौ ।
त्वामनु प्रमतिमा जगन्मोरुशंसो जरित्रे विश्वध स्याः ॥१८॥
भुवः। अविता। वामऽदेवस्य। धीनां। भुवः। सखा। अवृकः। वाजऽसातौ।
त्वां। अनु। प्रऽमतिं। आ। जगन्म। उरुऽशंसः। जरित्रे। विश्वध। स्याः ॥१८॥

हे इंद्र त्वं वामदेवस्य वामदेवाख्यस्य मंत्रद्रष्टुर्मम संबंधिनीनां धीनां कर्मणामविता रक्षिता भुवः। भव। अवृको हिंसारहितस्त्वं वाजसातौ युद्धे सखा मम सुहृद्भुवः। भव। हे इंद्र वयं प्रमतिं प्रकृष्टज्ञानं त्वामनु लक्षीकृत्या जगन्म। आगच्छाम। स त्वं विश्वध सर्वदा जरित्रे स्तोत्रे उरुशंसो महता शंसनेन युक्तः स्याः। भवेः ॥

एभिर्नृभिरिंद्र त्वायुभिष्ट्वा मघवद्भिर्मघवन्विश्व आजौ ।
द्यावो न द्युम्नैरभि संतो अर्यः क्षपो मदेम शरदश्च पूर्वीः ॥१९॥
एभिः। नृऽभिः। इंद्र। त्वायुऽभिः। त्वा। मघवत्ऽभिः। मघऽवन्। विश्वे। आजौ।
द्यावः। न। द्युम्नैः। अभि। संतः। अर्यः। क्षपः। मदेम। शरदः। च। पूर्वीः ॥१९॥

हे मघवन्धनवन्निंद्र विश्वे विश्वस्मिन्नाजौ संग्रामे त्वायुभिः शत्रुजयार्थं त्वां कामयमानैर्मघवद्भिस्त्वदर्थं दीयमानहविर्लक्षणैर्धनैरुपेतैरेभिः प्रत्यक्षेणोपलभ्यमानैर्नृभिः पुत्रपौत्राद्यैः परिजनैः सहिता वयं यजमाना द्युम्नैर्धनैर्द्यावो न द्योतमानाः प्रकाशमाना धनिनो यथा तथार्योऽरीन् शत्रूनभि संतोऽभिभवतः क्षपः सर्वा रात्रीः पूर्वीर्बह्वीः शरदश्च संवत्सरांश्च मदेम। स्तवाम। यजमानाः सर्वेषु कालेषु स्तोत्रैरिंद्रं हर्षयतीत्यर्थः ॥

एवेदिंद्राय वृषभाय वृष्णे ब्रह्माकर्म भृगवो न रथं ।
नू चिद्यथा नः सख्या वियोपदसन्न उग्रोऽविता तनूपाः ॥२०॥
एव। इत्। इंद्राय। वृषभाय। वृष्णे। ब्रह्म। अकर्म। भृगवः। न। रथं।
नु। चित्। यथा। नः। सख्या। विऽयोषत्। असत्। नः। उग्रः। अविता। तनूऽपाः ॥२०॥

यथेंद्रो नोऽस्मदीयानि सख्या सख्यानि कर्माणि नू चित् वियोषत्। न पृथक्कुर्यात्। उग्रस्तेजस्वी तनूपाः शरीराणां पालक इंद्रो यथा नोऽस्मानविता रक्षितासत्। स्यात्। तथा वयं यजमाना एवेदेवमेवोक्तप्रकारेणेंद्राय वृषभाय कामानां वर्षित्रे वृष्णे नित्यतरुणाय ब्रह्म स्तोत्रमकर्म। अकृर्म। तत्र दृष्टांतः। भृगवो

दीप्तास्तत्राणो रथं न रथमिव तद्वत्। यजमानेभ्यो यथेंद्रोऽभीप्सितफलप्रदो भवति तथेंद्रं यजमानाः स्तुवंतीत्यर्थः ॥

नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥२१॥

नु । स्तुतः । इंद्र । नु । गृणानः । इषं । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यं । धिया । स्याम । रथ्यः । सदाऽसाः ॥२१॥

हे इंद्र नु क्षिप्रं स्तुतः पूर्वैर्ऋषिभिः संस्तुतो नु क्षिप्रं गृणानोऽस्माभिः स्तूयमानश्च त्वमिषमन्नं जरित्रे स्तोत्रे मह्यं नद्यो न अद्भिर्नदीरिव पीपेः। प्यायय। प्रवृद्धं कुरु। हे इंद्र हरिवो हरिवन् हरिसंज्ञकाश्वोपेतेंद्र ते तुभ्यं नव्यं नवतरं ब्रह्म स्तोत्रमकारि। अस्माभिः क्रियते। रथ्यो रथवंतो वयं धिया प्रज्ञारूपया स्तुत्या सदासास्त्वां सर्वदा भजमानास्त्वदर्थं हवीरूपस्यान्नस्य दातारो वा स्याम। भूयास्म ॥ ॥२०॥

त्वं महाँ इंद्र तुभ्यमित्येकविंशत्यृचं सप्तमं सूक्तं। अत्रेयमनुक्रमणिका। त्वं महाँ अभिकृयामेकपदेति। अभिकृयां यजमानो न होतेत्येकपदा विराट् शिष्टा विंशतिस्त्रिष्टुभः। इंद्रो देवता ॥ समूळ्हे दशरात्रेऽष्टमेऽहनि निष्केवल्य इदं सूक्तं विनियुक्तं। तथा च सूत्रितं। त्वं महाँ इंद्र तुभ्यमिति निष्केवल्यं। आ॰ ८. ७.। इति ॥ इंद्रस्य वृत्रघ्नस्य महाँ इति पशुपुरोडाशस्यानुवाक्या। सूत्रितं च। त्वं महाँ इंद्र तुभ्यं ह क्षाः सत्राहणं। आ॰ ३. ८.। इति ॥

त्वं महाँ इंद्र तुभ्यं ह क्षा अनु क्षत्रं मंहना मन्यत द्यौः ।
त्वं वृत्रं शवसा जघन्वान्सृजः सिन्धूँरहिना जग्रसानान् ॥१॥

त्वं । महान् । इंद्र । तुभ्यं । ह । क्षाः । अनु । क्षत्रं । मंहना । मन्यत । द्यौः ।
त्वं । वृत्रं । शवसा । जघन्वान् । सृजः । सिंधून् । अहिना । जग्रसानान् ॥१॥

हे इंद्र त्वं महान्प्रभूतो भवसि। क्षाः पृथिवी। क्षा इति पृथिवीनामैतत्। मंहना महत्त्वेन युक्ता सती तुभ्यं ह त्वदर्थमेव क्षत्रं त्वदीयं बलमनु मन्यत। अन्वमन्यत। अनुमतीचकार। द्यौश्च त्वदर्थं बलमन्वमन्यत। हे इंद्र त्वं शवसा त्वदीयेन बलेन वृत्रं लोकानामावरकं वृत्रनामकमसुरं जघन्वान्। हतवान्। किंच अहिना वृत्रेण जग्रसानान् जग्रहाणान् ग्रस्तान् ॥ ग्रसतेर्लिटः कानजादेशः ॥ सिंधून् अपः सृजः। असृजः। सृष्टवानसि ॥

तव त्विषो जनिमन्रेजत द्यौ रेजद्भूमिर्भियसा स्वस्य मन्योः ।
ऋघायंत सुभ्व१ः पर्वतास आर्दन्धन्वानि सरयंत आपः ॥२॥

तव । त्विषः । जनिमन् । रेजत । द्यौः । रेजत् । भूमिः । भियसा । स्वस्य । मन्योः ।
ऋघायंत । सुऽभ्वः । पर्वतासः । आर्दन् । धन्वानि । सरयंते । आपः ॥२॥

हे इंद्र त्विषो दीप्यमानस्य तव त्वदीये जनिमन् जन्मनि सति द्यौरंतरिक्षं स्वस्य त्वदीयान्मन्योः कोपात्। पंचम्यर्थे षष्ठी। भियसा जातभयेन रेजत। अरेजत। अकंपत। भूमिश्च रेजत्। कंपमाना बभूव। सुभ्वो महांतः पर्वतासः। पर्वता मेघाः। ऋघायंत। मरुदादीनां वृष्टिप्रदानार्थं नियामकेन त्वयाबाध्यंत। तथा मेघा आर्दन्। प्राणिनां पिपासारूपां पीडामहिंसन्। तथा मेघा धन्वान्युदकरहितान्देशानापोऽपः सरयंते। गमयंति ॥

भिनद्गिरिं शवसा वज्रमिष्णन्नाविष्कृण्वानः सहसान ओजः ।
वधीद्वृत्रं वज्रेण मंदसानः सरन्नापो जवसा हतवृष्णीः ॥३॥
भिनत् । गिरिं । शवसा । वज्रं । इष्णन् । आविःऽकृण्वानः । सहसानः । ओजः ।
वधीत् । वृत्रं । वज्रेण । मंदसानः । सरन् । आपः । जवसा । हतऽवृष्णीः ॥३॥

सहसानः शत्रूणामभिभवन्नोजस्तेज आविष्कृण्वान आविष्कुर्वन्निंद्रो वज्रमिष्णन् वज्रं प्रेरयन् शवसा बलेन गिरिं पर्वतजातं भिनत् । अभिनत् । बिभेद । किंच मंदसानः सोमेन मोदमान इंद्रो वज्रेण वृत्रं वृत्रनामानमसुरं वधीत् । अवधीत् । जघान । तत आपो वृत्रेणावृतान्युदकानि हतवृष्णीः । हतो वृषा वृत्रो यासां ता हतवृष्ण्यः । ता वृत्रवधानंतरं निवारणरहिताः सत्यो जवसा वेगेन सरन् । असरन् । अगच्छन् ॥

सुवीरस्ते जनिता मन्यत द्यौरिंद्रस्य कर्ता स्वपस्तमो भूत् ।
य ईं जजान स्वर्यं सुवज्रमनपच्युतं सदसो न भूम ॥४॥
सुऽवीरः । ते । जनिता । मन्यत । द्यौः । इंद्रस्य । कर्ता । स्वपःऽतमः । भूत् ।
यः । ईं । जजान । स्वर्यं । सुऽवज्रं । अनपऽच्युतं । सदसः । न । भूम ॥४॥

हे इंद्र यः प्रजापतिः स्वर्यमृत्विगादिभिः स्तुत्यं सुवज्रं शोभनवज्रोपेतं सदसः स्वकीयात्स्थानाच्छ्रेष्ठात्स्थानादनपच्युतं विनाशरहितं च । नेति समुच्चयार्थे । भूम भूम्ना महत्त्वेन युक्तमीमेनं त्वा जजान । अजीजनत् ॥ जन जनन इति धातुः ॥ द्यौर्द्योतमानस्तव जनिता जनयिता स प्रजापतिः सुवीरः शोभनपुत्रवानहमस्मीति मन्यत । अमन्यत । किंच इंद्रस्य कर्तेंद्रस्य जनयिता प्रजापतिः स्वपस्तमोऽत्यंतं शोभनकर्माभूत् ॥

य एक इच्च्यावयति प्र भूमा राजा कृष्टीनां पुरुहूत इंद्रः ।
सत्यमेनमनु विश्वे मदंति रातिं देवस्य गृणतो मघोनः ॥५॥
यः । एकः । इत् । च्यवयति । प्र । भूम । राजा । कृष्टीनां । पुरुऽहूतः । इंद्रः ।
सत्यं । एनं । अनु । विश्वे । मदंति । रातिं । देवस्य । गृणतः । मघोनः ॥५॥

कृष्टीनां सर्वासां प्रजानां राजा प्रभुः पुरुहूतो बहुभिराहूत एक इद्देवानां मध्ये मुख्य एव य इंद्रो भूम भूतं निष्पन्नं शत्रुभ्यो भयं प्र च्यावयति । प्रकंपेण नाशयति । विश्वे सर्वे यजमाना मघोनो मघवतः । हविर्लक्षणधनवत इत्यर्थः । देवस्येंद्रसमाश्रयात् द्योतमानस्य गृणतः स्तुवतो रातिं वधूमेनमिंद्रमनु लक्षीकृत्य सत्यमेव मदंति । स्तुवंति ॥ ॥२१॥

सत्रा सोमा अभवन्नस्य विश्वे सत्रा मदासो बृहतो मदिष्ठाः ।
सत्राभवो वसुपतिर्वसूनां दत्रे विश्वा अधिथा इंद्र कृष्टीः ॥६॥
सत्रा । सोमाः । अभवन् । अस्य । विश्वे । सत्रा । मदासः । बृहतः । मदिष्ठाः ।
सत्रा । अभवः । वसुऽपतिः । वसूनां । दत्रे । विश्वाः । अधिथाः । इंद्र । कृष्टीः ॥६॥

विश्वे सर्वे सोमा अस्येंद्रस्य सत्रा । सत्रेति सत्यनामैतत् । सत्यमेव प्रभुता अभवन् । किंच मदासो मदा मदकराः सोमा बृहतो महतोऽस्येंद्रस्य मदिष्ठा मादयितृतमाः सत्रा सत्यमेवाभवन् । हे इंद्र त्वं वसुपतिर्धनपतिः । न केवलं धनपतिः किंतु वसूनां सर्वेषां पश्वादीनां धनानां पतिः सत्रा सत्यमेवाभवः । भवसि । हे इंद्र त्वं दत्रे धने निमित्तभूते सति विश्वाः सर्वाः कृष्टीः स्तोत्रीः प्रजा अधिथाः । धारयसि ॥

त्वमध प्रथमं जायमानोऽमे विश्वा अधिथा इंद्र कृष्टीः ।
त्वं प्रति प्रवत आशयानमहिं वज्रेण मघवन्वि वृश्वः ॥७॥
त्वं । अध । प्रथमं । जायमानः । अमे । विश्वाः । अधिथाः । इंद्र । कृष्टीः ।
त्वं । प्रति । प्रऽवतः । आऽशयानं । अहिं । वज्रेण । मघऽवन् । वि । वृश्वः ॥७॥

अध अपि च प्रथममेव जायमानस्त्वममे वृत्रनिमित्ते भये सति विश्वाः सर्वाः कृष्टीः प्रजा अधिथाः । रक्षकत्वेन धारयसि । हे मघवन्धनवन्निंद्र त्वं प्रति प्रवतः प्रति प्रवणानुदकवतो देशान् लक्षीकृत्याशयानमपा निरोधकमहिं वृत्रनामानमसुरं वज्रेण वि वृश्वः । व्यवृश्चः । छिन्नवानसि ॥

इंद्रस्य वृत्रघ्नः पशौ सत्राहणमिति हविषोऽनुवाक्या । सूत्रितं च । सत्राहणं दाधृषिं तुम्रमिंद्रं महदानु पुरुहूत त्रियंतं । आ० ३ ८ । इति ॥

सत्राहणं दाधृषिं तुम्रमिंद्रं महामपारं वृषभं सुवज्रं ।
हंता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥८॥
सत्राऽहनं । दधृषिं । तुम्रं । इंद्रं । महां । अपारं । वृषभं । सुऽवज्रं ।
हंता । यः । वृत्रं । सनिता । उत । वाजं । दाता । मघानि । मघऽवा । सुऽराधाः ॥८॥

सत्राहणं बहूनां शत्रूणां हंतारं दाधृषिमत्यंतं धर्षकं तुम्रं । तुमिः प्रेरणकर्मा । शत्रूणां प्रेरकं महां महांत मपारमपरिमाणं । विनाशरहितमित्यर्थः । वृषभं कामानां वर्षितारं सुवज्रं शोभनेन वज्रेणोपेतमिंद्रं । वयं स्तोतारः स्तुम इति शेषः । य इंद्रो वृत्रं वृत्रनामानमसुरं हंता हिंसिता भवति । उतापि च य इंद्रो वाजमन्नं सनिता दाता भवति । सुराधाः शोभनधनयुक्तो यो मघवेंद्रो मघानि धनानि दाता भवति । तमिंद्रं स्तुम इति पूर्वेणान्वयः ॥ अत्र सर्वत्र तृन्नंतत्वान्न लोकाव्ययेति षष्ठीप्रतिषेधे सति द्वितीयैव भवति ॥

अयं वृतश्चातयते समीचीर्य आजिषु मघवा शृण्व एकः ।
अयं वाजं भरति यं सनोत्यस्य प्रियासः सख्ये स्याम ॥९॥
अयं । वृतः । चातयते । संऽईचीः । यः । आजिषु । मघऽवा । शृण्वे । एकः ।
अयं । वाजं । भरति । यं । सनोति । अस्य । प्रियासः । सख्ये । स्याम ॥९॥

मघवा धनवान्य इंद्र आजिषु संग्रामेष्वेको मुख्य एव शृण्वे । श्रूयते । अयमिंद्रः समीचीः संगता वृतः । वृण्वंत्याच्छादयंति लोकानिति वृतः शत्रुसेनाः । ताश्चातयते । नाशयति । अयमिंद्रो यं वाजं यदन्नं सनोति । यजमानाय ददाति । तं वाजं भरति । यजमानस्य तदन्नं दातुं बिभर्ति । स्तोतारो वयमस्यैवंभूतस्येंद्रस्य सख्ये सखित्वे प्रियासः प्रियाः स्याम । भवेम ॥

अयं शृण्वे अध जयन्नुत घ्नन्नयमुत प्र कृणुते युधा गाः ।
यदा सत्यं कृणुते मन्युमिंद्रो विश्वं दृळ्हं भयत एजदस्मात् ॥१०॥
अयं । शृण्वे । अध । जयन् । उत । घ्नन् । अयं । उत । प्र । कृणुते । युधा । गाः ।
यदा । सत्यं । कृणुते । मन्युं । इंद्रः । विश्वं । दृळ्हं । भयते । एजत् । अस्मात् ॥१०॥

अधापि च अयमिंद्रो जयन् शत्रून्विजयन् शृण्वे । श्रूयते । सर्वत्र प्रख्यातो भवति । उतापि च घ्नन् शत्रु-

न्हिंसन् सर्वत्र श्रूयते। उतापि चायमिंद्रो युधा युद्धेन गाः पशून्स कृणुते। शत्रुसकाशादाहरति। किंच इंद्रो यदा मन्युं कोपं सत्यमेव कृणुते। द्विषदर्थं करोति। तदानीं दृढं स्थिरं स्थावररूपमेजत्कंपमानं जंगमरूपं च विश्वं समस्तं जगदस्मादिंद्राद्भयते। बिभेति॥ ॥२२॥

समिंद्रो गा अजयत्सं हिरण्या समश्विया मघवा यो ह पूर्वीः।
एभिर्नृभिर्नृतमो अस्य शाकै रायो विभक्ता संभरश्च वस्वः॥११॥
सं। इंद्रः। गाः। अजयत्। सं। हिरण्या। सं। अश्विया। मघऽवा। यः। ह। पूर्वीः।
एभिः। नृऽभिः। नृऽतमः। अस्य। शाकैः। रायः। विऽभक्ता। संऽभरः। च। वस्वः॥११॥

यो ह यः खलु मघवा धनवानिंद्रो गा असुराणां समजयत। सम्यक् जितवान् भवति। किंच हिरण्या हिरण्यानि हितरमणीयानि शत्रुसंबंधीनि धनानि समजयत। तथा अश्वियाश्वियानि शत्रुसंबंधिनोऽश्वसमूहान् सम्यक् जयति स्म। तथा पूर्वीर्बह्वीः शत्रुसेनाः समजयत। इंद्रः सर्वान् शत्रून् जित्वा सकलमपि पश्वादिधनमपहृतवानित्यर्थः। शाकैः सामर्थ्यैर्नृतमो नेतृतमः पश्वादीनामतिशयेन निर्वाहकः स इंद्र एभिर्नृभिर्नेतृभिः स्तोतृभिः स्तुतः सन् अस्य रायः पश्वादिरूपस्य धनस्य विभक्ता स्तोतृभ्यो विभागस्य कर्ता। दाता भवतीत्यर्थः। किंच वस्वो वसुनो धनस्य संभरश्च संभर्ता धारकश्च भवति॥

कियत्स्विदिंद्रो अध्येति मातुः कियत्पितुर्जनितुर्यो जजान।
यो अस्य शुष्मं मुहुकैरियर्ति वातो न जूतः स्तनयद्भिरभ्रैः॥१२॥
कियत्। स्वित्। इंद्रः। अधि। एति। मातुः। कियत्। पितुः। जनितुः। यः। जजान।
यः। अस्य। शुष्मं। मुहुकैः। इयर्ति। वातः। न। जूतः। स्तनयत्ऽभिः। अभ्रैः॥१२॥

य इंद्रो मातुर्जनन्याः सकाशात्कियत्स्वित्कियद्बलमध्येति। अधिगच्छति। पितुः सकाशात्कियद्बलमधिगच्छति। य इंद्रो जनितुर्जनयितुर्यस्मात्प्रजापतेः सकाशादिदं दृश्यमानं जगज्जजान। अजनयत। य इंद्रस्तस्मात्प्रजापतेः सकाशादस्य जगतः शुष्मं यावद्बलं मुहुकैर्मुहुर्मुहुरियर्ति। प्रेरयति। स्तनयद्भिर्गर्जद्भिरभ्रैर्मेघैर्जूतः प्रेरितो वातो न वायुरिव तथा स इंद्रः स्तोतृभिर्जूतः प्रेरितो हविष्प्रदानार्थमाहूतो भवति॥

क्षियंतं त्वमक्षियंतं कृणोतीयर्ति रेणुं मघवा समोहं।
विभंजनुरशनिमाँ इव द्यौरुत स्तोतारं मघवा वसौ धात्॥१३॥
क्षियंतं। त्वं। अक्षियंतं। कृणोति। इयर्ति। रेणुं। मघऽवा। संऽओहं।
विऽभंजनुः। अशनिमान्ऽइव। द्यौः। उत। स्तोतारं। मघऽवा। वसौ। धात्॥१३॥

मघवा धनवानिंद्रः क्षियंतं धनराहित्येन क्षीयमाणं त्वमेकं जनमक्षियंतं धनेनाक्षीयमाणं कृणोति। करोति। अकिंचनः कश्चित्पुरुष इंद्रं स्तुत्वा धनसमृद्धोऽभवदित्यर्थः। अशनिमानशनिना युक्तो द्यौरिव द्योतमान इव विभंजनुः शत्रूणां विशेषेण भंजको मघवेंद्रः समोहं समूढं रेणुं पापमियर्ति। स्तोतुः सकाशात्प्रेरयति। उतापि च मघवा धनवानिंद्रः स्तोतारं वसौ धने धात्। अधात्। निदधाति॥

अयं चक्रमिषणत्सूर्यस्य न्येतशं रीरमत्ससृमाणं।
आ कृष्ण ईं जुहुराणो जिघर्ति त्वचो बुध्ने रजसो अस्य योनौ॥१४॥

अयं । चक्रं । इषणत् । सूर्यस्य । नि । एतशं । रीरमत् । ससृमाणं ।
आ । कृष्णः । ईं । जुहुराणः । जिघर्ति । त्वचः । बुध्ने । रजसः । अस्य । योनौ ॥ १४ ॥

पतश सूर्यं पस्पृधानमित्यर्धर्चे । ऋग्वे॰ १. ६१. १५ । पूर्वं काचिदाख्यायिका सूचिता । अत्राप्ययं चक्रमिति पूर्वार्धं सा सूच्यते । स्वश्वनामा कश्चिद्राजा । स च पुत्रार्थं सूर्यमुपास्त । स च सूर्यः पुत्ररूपेण स्वयमेव तत्रोत्पन्नः सन् एतशाख्येन महर्षिणा सार्धं युद्धं चकार । तदानीं स ऋषिर्युद्धे जयार्थमिंद्रं तुष्टाव । स इंद्रस्तेन स्तूयमानः सन् स्वश्वपुत्रस्य सूर्यस्य संबंधिनः संग्रामादेनमपालयदिति । अयमिंद्रः सूर्यस्य चक्रमायुधमिषणत । प्रैरयत । ससृमाणं युद्धार्थं सरंतं गच्छंतमेतशनामानमृषिं नि रीरमत । न्यरीरमत । निवारितवान् । जुहुराणः कुटिलं यथा भवति तथा संचरन् कृष्णः कृष्णवर्णो मेघस्त्वचस्तेजसो बुध्ने मूलभूते रजसोऽस्योदकस्य योनौ स्थानेऽतरिक्षे स्थितमेनमिंद्रमा जिघर्ति । आसिंचति । शत्रूणां प्रेरिताच्चक्रादेस्त्वसौ रक्षतीत्यर्थः ॥

असिंक्न्यां यजमानो न होता ॥ १५ ॥
असिंक्न्यां । यजमानः । न । होता ॥ १५ ॥

एकपदेयमृक् पूर्वर्चा सह दृष्टांतत्वेन संबध्यते । असिक्न्यां रात्रौ यजमानो न यजमान इव होता होतारमाह्वातारमपि । द्वितीयार्थे प्रथमा । सोमेनासिंचति तद्वन्मेघ इंद्रमासिंचतीत्यर्थः ॥ ॥ २३ ॥

गव्यंत इंद्रं सख्याय विप्रा अश्वायंतो वृषणं वाजयंतः ।
जनीयंतो जनिदामक्षितोतिमा च्यावयामोऽवते न कोशं ॥ १६ ॥
गव्यंतः । इंद्रं । सख्याय । विप्राः । अश्वऽयंतः । वृषणं । वाजयंतः ।
जनिऽयंतः । जनिऽदां । अक्षितऽऊतिं । आ । च्यवयामः । अवते । न । कोशं ॥ १६ ॥

गव्यतो गा इच्छंतोऽश्वायंतोऽश्वानिच्छंतो वाजयंतो वाजमन्नमिच्छंतो जनीयंतो जायामिच्छंतो विप्रा मेधाविनः स्तोतारो वयं सख्यायेंद्रसंबंधिने सखित्वाय वृषणं कामानां वर्षितारं जनिदां जायाप्रदमक्षितोतिमक्षीणरक्षं । सर्वदा रक्षाकरमित्यर्थः । एवंभूतमिंद्रमा च्यावयामः । आगमयामः । तत्र दृष्टांतः । अवते कूपे । अवत इति कूपनाम अवतोऽवटः क्रिविरिति कूपनामसु पाठात् । कोशं न जलोद्धरणपात्रमिव । पुरुषा जलोद्धरणपात्रं जलेन पूरयितुं कूपे यथाच्यावयंति तथा वयमाच्यावयाम इत्यर्थः ॥

त्राता नो बोधि ददृशान आपिरभिख्याता मर्डिता सोम्यानां ।
सखा पिता पितृतमः पितॄणां कर्तेमु लोकमुशते वयोधाः ॥ १७ ॥
त्राता । नः । बोधि । ददृशानः । आपिः । अभिऽख्याता । मर्डिता । सोम्यानां ।
सखा । पिता । पितृऽतमः । पितॄणां । कर्ता । ईं । ऊं इति । लोकं । उशते । वयोऽधाः ॥ १७ ॥

हे इंद्र आपिराप्तो ददृशानः सर्वं पालकत्वेन पश्यंस्त्वं नोऽस्माकं त्राता रक्षको बोधि । भव । किंच । अभिख्याताभिद्रष्टा मर्डिता सुखयिता सोम्यानां सोमार्हाणां यजमानादीनां सखा प्रजापतिना समानख्यातिः पिता पालकः । केवलं पालको न किंतु पितॄणां पालकानां मध्ये पितृतमोऽतिशयेन पालकः कर्तेमु पितॄणां स्रष्टा च त्वं लोकं स्वर्गादिलोकमुशते कामयमानाय स्तोत्रे वयोधाः । वय इत्यन्ननामैतत् । अन्नप्रदो भव ॥

सखीयतामविता बोधि सखा गृणान इंद्र स्तुवते वयो धाः ।
वयं ह्या ते चकृमा सबाध आभिः शमीभिर्महयंत इंद्र ॥ १८ ॥

सखिऽयतां। अविता। बोधि। सखा। गृणानः। इंद्र। स्तुवते। वयः। धाः।
वयं। हि। आ। ते। चकृम। सऽबाधः। आभिः। शमीभिः। महयंतः। इंद्र ॥१८॥

हे इंद्र त्वं सखीयतां सखित्वमिच्छतामस्माकमविता रक्षिता बोधि। भव। तथा गृणानः स्तूयमानस्त्वं सखा भव। हे इंद्र स्तुवते स्तुतिं कुर्वते मह्यं वयोऽन्नं धाः। अधाः। धेहि। हे इंद्र सबाधो बाधासहिता वयं हि वयं खलु ते त्वामा चकृम। आह्वयामः। किं कुर्वंतः। आभिः प्रत्यक्षेणोपलभ्यमानैः शमीभिः स्तुतिरूपैः कर्मभिर्महयंतस्त्वां पूजयंतः ॥

इंद्रस्य वृत्रघ्नः पुरोडाशस्य स्तुत इंद्र इति याज्या। सूत्रितं च। स्तुत इंद्रो मघवा यद्ध वृत्रेंद्रा वस्व इंद्रः सत्यः सम्राट्। आ॰ ३. ८.। इति ॥

स्तुत इंद्रो मघवा यद्ध वृत्रा भूरीण्येको अप्रतीनि हंति।
अस्य प्रियो जरिता यस्य शर्मन्नकिर्देवा वारयंते न मर्ताः ॥१९॥
स्तुतः। इंद्रः। मघऽवा। यत्। ह। वृत्रा। भूरीणि। एकः। अप्रतीनि। हंति।
अस्य। प्रियः। जरिता। यस्य। शर्मन्। नकिः। देवाः। वारयंते। न। मर्ताः ॥१९॥

यद्ध यदा खलु मघवा धनवानिंद्रः स्तुतोऽस्माभिः स्तुतो भवति तदेंद्र एकोऽसहाय एव भूरीणि बहून्यप्रतीन्यप्रतिगमनानि। अभिगमनयुक्तानीत्यर्थः। वृत्रा वृत्राणि शत्रून्हंति। हिनस्ति। यस्येंद्रस्य शर्मन् शर्मण्याश्रये वर्तमानं स्तोतारं देवा नकिर्वारयंते। निवारणं न कुर्वंति। मर्ताश्च न निवारयंते अस्येंद्रस्य जरिता स्तोता प्रियो भवति ॥

आग्निमारुतशस्त्र एवा न इंद्र इति परिधानीया। सूत्रितं च। एवा न इंद्रो मघवा विरप्शीति परिदध्यात्। आ॰ ५. २०। इति ॥

एवा न इंद्रो मघवा विरप्शी करत्सत्या चर्षणीधृदनर्वा।
त्वं राजा जनुषां धेह्यस्मे अधि श्रवो माहिनं यज्जरित्रे ॥२०॥
एव। नः। इंद्रः। मघऽवा। विऽरप्शी। करत्। सत्या। चर्षणिऽधृत्। अनर्वा।
त्वं। राजा। जनुषां। धेहि। अस्मे इति। अधि। श्रवः। माहिनं। यत्। जरित्रे ॥२०॥

विरप्शी बहुविधशब्दवान् चर्षणीधृत् सर्वासां प्रजानां धारयितानर्वाप्रत्यृतः। केनापि प्रतिकूलेन न प्राप्त इत्यर्थः। मघवा धनवानिंद्र एवैवमस्माभिः स्तुतः सन् नोऽस्माकं सत्या सत्यरूपाण्यभिमतानि फलानि करत्। करोतु। हे इंद्र जनुषां जन्मवतां सर्वेषां राजा प्रभुस्त्वं माहिनं महिम्नोपेतं यच्छ्रवो यद्यशो जरित्रे स्तोत्रे देयं तद्यशोऽस्मे अस्मास्वधि अधिकत्वेन धेहि ॥ एवा न इंद्रो मघवा विरप्शीत्युत्तमया परिदधातीयं वा इंद्रो मघवा विरप्शीत्यादि ब्राह्मणं। ऐ॰ ब्रा॰ ३. ३८. ॥

नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३न पीपेः।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥२१॥
नु। स्तुतः। इंद्र। नु। गृणानः। इषं। जरित्रे। नद्यः। न। पीपेरिति पीपेः।
अकारि। ते। हरिऽवः। ब्रह्म। नव्यं। धिया। स्याम। रथ्यः। सदाऽसाः ॥२१॥

नू ष्टुत इंद्रेति व्याख्याता ॥ ॥२४॥

अयं पंथा इति त्रयोदशर्चमष्टमं सूक्तं त्रैष्टुभं। अत्रानुक्रमणिका। अयं पंथाः सप्तोना संवाद इंद्रादिति-वामदेवानामिति। यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवतेति परिभाषितत्वादृषिदेवते तत्र तत्र ज्ञातव्ये। अस्मिन्सूक्त इंद्रादितिवामदेवसंवादरूपिणी काचिदाख्यायिका श्लोकरूपेण सूच्यते ॥ गर्भस्थो ज्ञानसंपन्नो वामदेवो महामुनिः। मतिं चक्रे न जायेय योनिदेशात्तु मातृतः ॥ किंतु पार्श्वादितश्चेति ज्ञात्वा तु जननी त्विदं। दध्यौ शार्त्यं शची देवीमदितिं त्विंद्रमातरं ॥ अदितिस्त्विंद्रसहिता गर्भिणीमभ्यगाद्वने। अदितींद्रवामदेवा संवादमथ चक्रिरे ॥ संवाद इति सूत्रेण कथा सैषात्र सूच्यते। नोक्तो वक्तृविशेषोऽत्र ह्युपदेशेष्वनुक्तितः ॥ अर्थतस्त्ववगंतव्यो वक्तृभेद इति स्थितिः। इंद्रोऽदितिर्ऋषिश्चास्मिन्मिथः सूक्ते समूचिरे ॥ गर्भे शयानं सुचिरं मातुर्गर्भादनिर्गतं। वामदेवं प्रति ब्रूत आद्ययर्चा शतक्रतुः ॥ द्वितीयादिभिरर्धर्चैर्ऋषिरत्राह पंचभिः। महीत्वस्येति सप्त स्युरर्धर्चा अदितेर्वचः ॥ ममच्चन त्वा युवतिरित्यृचः पंच वै मुनेः। दौर्गत्यशांतिमत्राह वामदेवस्तथांत्यया ॥ एवमर्थाद्वक्तृभेद इति बह्वृचशासनं। अर्थो विवेकस्पष्टत्वादुपदेशेषु नेरितः। ऋषिदैवतसिद्ध्यर्थं विवेकादर्थ ईरित इति ॥

अयं पंथा॒ अनु॑वित्तः पुरा॒णो यतो॑ दे॒वा उ॒दजा॑यंत॒ विश्वे॑।
अ॒तश्चि॑दा ज॑निषीष्ट॒ प्रवृ॑द्धो॒ मा मा॒तर॑म॒मुया॒ पत्त॑वे कः ॥१॥
अ॒यं। पंथाः॑। अनु॑ऽवित्तः। पु॒रा॒णः। यतः॑। दे॒वाः। उ॒त्ऽअजा॑यंत। विश्वे॑।
अ॒तः। चि॒त्। आ। ज॒नि॒षी॒ष्ट॒। प्रऽवृ॑द्धः। मा। मा॒तर॑म्। अ॒मुया॑। पत्त॑वे। कः॒रिति॑ कः ॥१॥

पुराणोऽनादिरयं प्रत्यक्षेणोपलभ्यमानः पंथा योनिनिर्गमनरूपो मार्गोऽनु आनुपूर्व्येण वित्तः। सर्वैर्जायमानैर्लब्धः। यतो यस्माद्योनिमार्गाद्विश्वे सर्वे देवा उदजायंत। उत्कर्षेणोत्पन्ना भवंति। तस्माद्योनिमार्गान्मनुष्या उत्पन्ना भवंतीति किमु वक्तव्यं। अतश्चिदस्माद्योनिमार्गादेव प्रवृद्धो गर्भे प्रकर्षेण वृद्धिं गतो वामदेव आ जनिषीष्ट। आ समंताज्जायतां। अमुयामूं मातरं पत्तवे पतनाय। मरणायेत्यर्थः। मा कः। मा करोतु ॥

नाहमतो॒ निर॑या दु॒र्गहै॒तत्ति॑र॒श्चता॑ पा॒र्श्वान्निर्ग॑माणि।
ब॒हूनि॑ मे॒ अकृ॑ता॒ कर्त्वा॑नि॒ युध्यै॑ त्वेन॒ सं त्वे॑न पृच्छै ॥२॥
न। अ॒हम्। अ॒तः। निः। अ॒य॒। दुः॒ऽगहा॑। ए॒तत्। ति॒र॒श्चता॑। पा॒र्श्वात्। निः। ग॒मा॒नि॒।
ब॒हूनि॑। मे॒। अकृ॑ता। कर्त्वा॑नि। युध्यै॑। त्वे॒न॒। सम्। त्वे॒न॒। पृ॒च्छै॒ ॥२॥

वामदेव एवमुक्तवंतमिंद्रं प्रत्याह। अहमतो योनिमार्गान्न निरया। न निरयाणि। न निर्गच्छानि। एतद्योनिनिर्गमरूपं वर्त्म दुर्गहा। दुर्ग्रहं। दुःखेन ग्राह्यं। न प्राप्यं भवतीत्यर्थः। किंतु तिरश्चता तिरश्चीनात्पार्श्वान्निर्गमानि। निर्गच्छानि। योनिदेशादनिर्गतोऽहं पार्श्वं भित्त्वा निर्गच्छानीत्यर्थः। अन्यैरकृतमिदमेव न केवलं मया क्रियते किंत्वन्यैरकृतानि बहूनि कर्माणि मे कर्त्वानि कर्तव्यानि संति। त्वेनैकेन सपत्नेन विवदमानेन सह युध्यै। युद्धं करवाणि। त्वेनैकेन बुभुत्सुना सं पृच्छै। सम्यक् पृच्छानि ॥

प॒रा॒य॒तीं मा॒तर॒मन्व॑चष्ट॒ न नानु॑ गा॒न्यनु॒ नू ग॑मानि।
त्वष्टु॑र्गृ॒हे अ॑पिब॒त्सोम॒मिंद्रः॑ शत॒धन्यं॑ च॒म्वोः॑ सु॒तस्य॑ ॥३॥
प॒रा॒ऽय॒तीम्। मा॒तर॑म्। अनु॑। अ॒च॒ष्ट॒। न। न। अनु॑। गा॒नि॒। अनु॑। नु। ग॒मा॒नि॒।
त्वष्टुः॑। गृ॒हे। अ॒पि॒ब॒त्। सोम॑म्। इंद्रः॑। श॒त॒ऽधन्य॑म्। च॒म्वोः॑। सु॒तस्य॑ ॥३॥

मयि गर्भस्थिते सतींद्रो मदीयां मातरं परायतीं परेतां म्रियमाणामन्वचष्ट। अन्वब्रवीत्। एवमपीदानीं

गर्भे स्थितोऽहं पुराणं पंथानं न नानु गानि । नानुगच्छानीति न । किंतु नु क्षिप्रमनु गमानि । अनुगच्छाम्येव । वामदेवः स्वकीयमकृत्यकारित्वं परिहृत्येंद्रस्याकृत्यकारित्वमुत्तरार्धर्चेन प्रतिपादयति । इंद्रस्त्वष्टुः सोमाभिषवफलकयोः सुतस्य सोमं सुतवतोऽभिषुतवतस्त्वष्टुः संबंधिनि गृहेऽनुपहूतः सन् शतधन्यं बहुधनेन क्रीतं सोममपिबत् । बलात्कारेण सोमस्य पानं कृतवान् । अयमर्थस्तैत्तिरीयैस्त्वष्टा हतपुत्रो वींद्रं सोममाहरदित्यनुवाके । तै॰ सं॰ २. ४. १२. । महता प्रबंधेन प्रपंचितः ॥

किं स ऋधंक्कृणवद्यं सहस्रं मासो जभार शरदश्च पूर्वीः ।
नही न्वस्य प्रतिमानमस्त्यंतर्जातेषूत ये जनित्वाः ॥४॥

किं । सः । ऋधंक् । कृणवत् । यं । सहस्रं । मासः । जभार । शरदः । च । पूर्वीः ।
नहि । नु । अस्य । प्रतिऽमानं । अस्ति । अंतः । जातेषु । उत । ये । जनिऽत्वाः ॥४॥

अदितिर्यमिंद्रं सहस्रं बहून्मासो मासान्पूर्वीर्बह्वीः शरदश्च संवत्सरांश्च जभार । बभार ॥ बिभर्तेरिदं रूपं ॥ गर्भे स्थित इंद्रो बहुषु संवत्सरेष्वदितिं क्लेशितवानित्यर्थः । एवंभूतः स इंद्रः किं यत्किमपि । सर्वमपीत्यर्थः । ऋधक् विरुद्धं कर्म कृणवत् । अकरोत् । इंद्रस्यानुपमसहमानादितिरिंद्रमाताप्येनं प्रति ब्रूते । हे वामदेव जातेषूत्पन्नेषु देवादिष्वंतर्मध्येऽस्येंद्रस्य प्रतिमानं न ह्यस्ति । न विद्यते खलु । नु इति पादपूरणार्थः । उतापि च ये देवादयो जनित्वा जनयितव्या जनयिष्यमाणास्तेषु मध्येऽस्येंद्रस्य प्रतिमानं नास्ति ॥

अवद्यमिव मन्यमाना गुहाकरिंद्रं माता वीर्येणा न्यृष्टं ।
अथोदस्थात्स्वयमत्कं वसान आ रोदसी अपृणाज्जायमानः ॥५॥

अवद्यंऽइव । मन्यमाना । गुहा । अकः । इंद्रं । माता । वीर्येण । निऽऋष्टं ।
अथ । उत् । अस्थात् । स्वयं । अत्कं । वसानः । आ । रोदसी इति । अपृणात् ।
जायमानः ॥५॥

गुहा गुहायां गह्वररूपे सूतिकागृहे जातमिंद्रमवद्यमिव गर्ह्यमिव मन्यमाना जानती मातेंद्रजनन्यदितिर्वीर्येण सामर्थ्येन न्यृष्टं नितरां प्राप्तमकः । अकरोत् । अथानंतरं जायमान उत्पद्यमान इंद्रः स्वयमेवात्कं तेजो वसान आच्छादकः सन् । दधान इत्यर्थः । उदस्थात् । उत्कर्षेणातिष्ठत् । किंच रोदसी द्यावापृथिव्यावापृणात् । समंतात्पूरयामास ॥ ॥ २५ ॥

एता अर्षंत्यललाभवंतीर्ऋतावरीरिव संक्रोशमानाः ।
एता वि पृच्छ किमिदं भनंति कमापो अद्रिं परिधिं रुजंति ॥६॥

एताः । अर्षंति । अललाऽभवंतीः । ऋतवरीःऽइव । संऽक्रोशमानाः ।
एताः । वि । पृच्छ । किं । इदं । भनंति । कं । आपः । अद्रिं । परिऽधिं । रुजंति ॥६॥

अललाभवंतीरललेत्येवंरूपं शब्दं कुर्वत्य ऋतावरीरिवोदकवत्य एवंता नद्यः संक्रोशमाना इंद्रमहत्त्वप्रतिपादकोत्सूतेन हर्षेण बहुविधं शब्दायमानाः सत्योऽर्षंति । गच्छंति । एवंभूता नद्य इदं किं भनंति श्रोत्रग्राह्यं शब्दायमानं किं वदंतीममर्थं हे ऋषे त्वमेता नदीर्वि पृच्छ । विशेषेण पृष्टवान्भव । एवं संपृष्टे । विचारिते सत्येतच्छब्दायमानमिंद्रमाहात्म्यस्यैव वचनं भवतीत्यर्थः । किंच आप उदकानि परिधिमावरकं कमद्रिं कं मेघं रुजंति । भंजंति । आपः कमपि मेघं न भंजंति किंतु इंद्रो मम पुत्र एवोदकावरकं मेघं भित्त्वापः प्रवर्तयतीत्यर्थः ॥

किमु ष्विदस्मै निविदो भनंतेंद्रस्यावद्यं दिधिषंत आपः ।
ममैतान्पुत्रो महता वधेन वृत्रं जघन्वाँ असृजद्वि सिंधून् ॥ ७ ॥
किं । ऊं इति । स्वित् । अस्मै । निऽविदः । भनंत । इंद्रस्य । अवद्यं । दिधिषंते । आपः ।
मम । एतान् । पुत्रः । महता । वधेन । वृत्रं । जघन्वान् । असृजत् । वि । सिंधून् ॥ ७ ॥

यदिंद्रो वृत्रासुरं हतवान् तदा शाश्वतीं ब्रह्महत्यां प्राप्तवानिति वामदेवस्याभिप्रायमृत्नीयादितिराह । निविदः । मरुत्वतीयशस्त्रे प्रयुज्यमानानि मरुत्स्तोत्रो मरुद्गण इत्यादीनींद्रस्तुतिप्रतिपादकानि कानिचित्पदानि निविच्छब्देनोच्यंते । ता निविदोऽस्मा इमं वृत्रवधनिमित्त ब्रह्महत्यारूप पापं प्राप्नुवतमिंद्रं किमु ष्वित् भनंत । भनंति । किं वदतीति चेत् । तर्हि । पापरहितमिंद्रं मत्वा निविदः स्तुवंति । कथमिंद्रस्य पापरहितत्वं । उच्यते । आपः फेनरूपेणास्यंद्रस्यावद्य ब्रह्महत्यादिरूपं पाप दिधिषंते । धारयंति । मम पुत्रो मदीयः पुत्र इंद्रो महता प्रभूतेन वधेन । वध इति वज्रनामैतत् । वज्रेण वृत्र जघन्वान् । हतवान् । तत एतान् सिंधून् उदकानि व्यसृजत् । विशेषेण स्थिरत्वेन सर्तु सृष्टवान् । इंद्रेणोत्सृष्टा आपस्तस्य पाप जगृहुरित्यर्थः ॥

ममच्चन त्वा युवतिः परास ममच्चन त्वा कुषवा जगार ।
ममच्चिदापः शिशवे ममृड्युर्ममच्चिदिंद्रः सहसोदतिष्ठत् ॥ ८ ॥
ममत् । चन । त्वा । युवतिः । पराऽआस । ममत् । चन । त्वा । कुषवा । जगार ।
ममत् । चित् । आपः । शिशवे । ममृड्युः । ममत् । चित् । इंद्रः । सहसा । उत् । अतिष्ठत् ॥ ८ ॥

सूक्तशेषेण ऋषिरिंद्रं स्तौति । हे इंद्र ममच्चन माद्यन्नेव । प्रमत्त्तेवेत्यर्थः । युवतिस्त्वदीया मातादितिस्त्वा त्वां परास । पराचिक्षेप । किंच कुषवानाम्नी काचिद्राक्षसी सा ममच्चन प्रमत्तेव त्वा त्वां जगार । गिरति स्म । हे इंद्र ममच्चित्प्रमाद्यत्य एवापः शिशवे जाताय तुभ्य ममृड्युः । सुखयांचक्रुः । ममच्चित माद्यन्नेवेंद्रः सहसा स्वेन वीर्येणोदतिष्ठत् । सूतिकागृहाद्राक्षसीं बाधमानः सन् उत्कर्षेण तस्थौ ॥

ममच्चन ते मघवन्व्यंसो निविविध्वाँ अप हनू जघान ।
अधा निविद्ध उत्तरो बभूवाञ्छिरो दासस्य सं पिणग्वधेन ॥ ९ ॥
ममत् । चन । ते । मघऽवन् । विऽअंसः । निऽविविध्वान् । अप । हनू इति । जघान ।
अध । निऽविद्धः । उत्ऽतरः । बभूवान् । शिरः । दासस्य । सं । पिणक् । वधेन ॥ ९ ॥

हे मघवन्धनवन्निंद्र ममच्चन प्रमाद्यन्नेव व्यंसो नाम राक्षसो निविविध्वान् प्रविध्यन् ते हनू त्वदीये हनू मुखपार्श्वे अप जघान । अपहतवान् । अध अथानंतर हे इंद्र निविद्धो राक्षसेन ताडितस्त्वमुत्तरो व्यंसादधिकबलो बभूवान् भूतः सन् दासस्य क्षीणस्य व्यंसस्य शिरो वधेन वज्रेण सं पिणक् । पिष्टवानसि ॥

गृष्टिः ससूव स्थविरं तवागामनाधृष्यं वृषभं तुम्रमिंद्रं ।
अरीळ्हं वत्सं चरथाय माता स्वयं गातुं तन्व इच्छमानं ॥ १० ॥
गृष्टिः । ससूव । स्थविरं । तवागां । अनाधृष्यं । वृषभं । तुम्रं । इंद्रं ।
अरीळ्हं । वत्सं । चरथाय । माता । स्वयं । गातुं । तन्वे । इच्छमानं ॥ १० ॥

गृष्टिः काचिद्गौर्वत्सं यथा ससूव। सुषुवे। तथा मातेंद्र जनन्यदितिस्त्वरथाय स्विच्छया संचरणायेंद्रं ससूव। सुषुवे। कीदृशमिंद्रं। स्थविरं वयसा प्रवृद्धं तवागां प्रवृद्धबलमनाधृष्यं शत्रुभिरनभिभाव्य वृषभं सेचनसमर्थं तुम्रं प्रेरकमरीळ्हं शत्रुभिरनभिभूतं स्वयं गातुमन्यैर्निरूपणगमनं तन्वे स्वशरीरायेच्छमानमिच्छंत ॥

उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः।
अथाब्रवीद्वृत्रमिंद्रो हनिष्यन्त्सखे विष्णो वितरं वि क्रमस्व ॥११॥
उत। माता। महिषं। अनु। अवेनत्। अमी इति। त्वा। जहति। पुत्र। देवाः।
अथ। अब्रवीत। वृत्रं। इंद्रः। हनिष्यन। सखे। विष्णो इति। विऽतरं। वि। क्रमस्व ॥११॥

उतापि च हे मदीय पुत्रेंद्र अमी वह्न्यादयो देवास्त्वा त्वा जहति। त्यजंति। इत्युक्तवतींद्रस्य मातादितिरिंद्रं महिषं महांतं। महिष इति महन्नामैतत्। अन्ववेनत्। अयाचत। अथानंतरं हे विष्णो व्यापनशील हे सखे मित्रभूत हरे त्वं वृत्रं हनिष्यन् हंतुमिच्छन् वितरं वि क्रमस्व। अतिपराक्रमी भवेतींद्रो विष्णुमब्रवीत्। उवाच ॥

कस्ते मातरं विधवामचक्रच्छयुं कस्त्वामजिघांसच्चरंतं।
कस्ते देवो अधि मार्डीक आसीद्यत्प्राक्षिणाः पितरं पादगृह्य ॥१२॥
कः। ते। मातरं। विधवां। अचक्रत्। शयुं। कः। त्वां। अजिघांसत्। चरंतं।
कः। ते। देवः। अधि। मार्डीके। आसीत। यत्। प्र। अक्षिणाः। पितरं। पादऽगृह्य ॥१२॥

हे इंद्र यद्यस्मात्कारणात्पितुः सकाशाज्जनिष्यमाणाद्भीतस्त्वं त्वदीयं पितरं पादगृह्य पादेषु गृहीत्वा प्राक्षिणाः। प्रकर्षेणावधीः। तस्मात्कारणात्ते त्वत्तोऽन्यः को देवो मातरं स्वकीयजननीं विधवां पितृवधेन पतिरहितामचक्रत्। अकरोत्। कस्त्वत्तोऽन्यः शयुं शयानं चरंतं जाग्रतं वा त्वामजिघांसत्। हंतुमैच्छत्। ते त्वत्तोऽन्यः को देवो मार्डीके प्रजानां सुखकरणेऽधि अधिक आसीत्। अयमर्थ ऋक्सामे वै देवेभ्य इत्यनुवाके यत्तो दक्षिणामभ्यध्यायदित्यादिब्राह्मणेन। तै॰ सं॰ ६ १ ३ ६। तैत्तिरीयकेऽवधा प्रपंचितः ॥

अवर्त्या शुन आंत्राणि पेचे न देवेषु विविदे मर्डितारं।
अपश्यं जायाममहीयमानामधा मे श्येनो मध्वा जभार ॥१३॥
अवर्त्या। शुनः। आंत्राणि। पेचे। न। देवेषु। विविदे। मर्डितारं।
अपश्यं। जायां। अमहीयमानां। अध। मे। श्येनः। मधु। आ। जभार ॥१३॥

अनया वामदेवः स्वकीयं दारिद्र्यं सूचयन्निंद्रस्योत्कर्षमाह। वामदेवोऽहमवर्त्या जीवनोपायराहित्येन शुनः शुनकस्यांत्राणि पुरीतंति पेचे। अपचं। देवेषु द्योतमानेषु वह्न्यादिषु मध्ये इंद्रादन्यं मर्डितारं सुखयितारं न विविदे। न लेभे। किंच जायां स्वकीयां भार्याममहीयमानामश्लाघनीयामपश्यं। अद्राक्षं। अध अथानंतरं श्येनः श्येनवच्छीघ्रगामींद्रो मे मह्यं मधु मधुरोपेतमुदकमा जभार। आजहार ॥ ॥२६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके पंचमोऽध्यायः संपूर्णः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

चतुर्थे मंडले द्वितीयानुवाकेऽष्ट सूक्तानि व्याख्यातानि । एवा त्वामिंद्रेत्येकादशर्चं नवमं सूक्तं । तस्य मंडलादिपरिभाषया वामदेव ऋषिः । अनादेशपरिभाषया त्रिष्टुप् छंदः । इंद्रो देवता । तथा चानुक्रांतं । एवैकादशेति ॥ अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणशस्त्र इदं सूक्तं । सूत्र्यते हि । एवा त्वामिंद्रोशन्नु षु णः सुमना उपाक इति याज्या । आ० ५ १६. । इति ॥ पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि मैत्रावरुणशस्त्रेऽहीनसूक्ततत्स्थाने त्रीणि संपातसूक्तानि । तत्रेदं प्रथमं सूक्तं । सूत्रितं च । एवा त्वामिंद्र यन्न इंद्रः । आ० ७ ५. । इति ॥

एवा त्वामिंद्र वज्रिन्नत्र विश्वे देवासः सुहवास ऊमाः ।
महामुभे रोदसी वृद्धमृष्वं निरेकमिद्वृणते वृत्रहत्ये ॥१॥
एव । त्वां । इंद्र । वज्रिन् । अत्र । विश्वे । देवासः । सुऽहवासः । ऊमाः ।
महां । उभे इति । रोदसी इति । वृद्धं । ऋष्वं । निः । एकं । इत् । वृणते । वृत्रऽहत्ये ॥१॥

अत्रास्मिन्यज्ञे वज्रिन् हे वज्रवन्निंद्र सुहवासः सुहवाः शोभनाह्वाना ऊमा रक्षका विश्वे देवासः सर्वे देवा उभे रोदसी द्यावापृथिव्यौ च एवैवमुक्तप्रकारेण स्तूयमानं महां महांतं प्रभूतं वृद्धं गुणैः प्रवृद्धमृष्वं दर्शनीयं त्वामेकमिदेकमेव वृत्रहत्ये वृत्रहननार्थं निर्वृणते । निःशेषेण संभजंते ॥

अवासृजंत जिव्रयो न देवा भुवः सम्राळिंद्र सत्ययोनिः ।
अहन्नहिं परिशयानमर्णः प्र वर्तनीररदो विश्वधेनाः ॥२॥
अव । असृजंत । जिव्रयः । न । देवाः । भुवः । सम्ऽराट् । इंद्र । सत्यऽयोनिः ।
अहन् । अहिं । परिऽशयानं । अर्णः । प्र । वर्तनीः । अरदः । विश्वऽधेनाः ॥२॥

हे इंद्र देवास्त्वां जिव्रयो न जीर्णाः प्रवृद्धाः पितरो यूनः पुत्रानिवावासृजंत । असुरवधार्थं प्रेरयन् । ततो हे इंद्र सत्ययोनिः सत्यनिवासस्त्वं सम्राट् सर्वेषां लोकानामधीश्वरो भुवः । अभवः । अर्णं उदकं लक्षीकृत्य परिशयानं परितः समताच्छयनं कुर्वंतमहिं वृत्रासुरमहन् । अवधीः । विश्वधेना विश्वस्य प्रीणयित्रीर्वर्तनीः सर्वत्र प्रवर्तिका नदीः प्रारदः । प्रकर्षेण विलेखनं कृतवानसि । इंद्रो वृत्रं हत्वा तेनावृतान्युदकानि प्रवाहरूपेण प्रवर्तयतीत्यर्थः ॥

अतृप्णुवंतं वियतमबुध्यमबुध्यमानं सुषुपाणमिंद्र ।
सप्त प्रति प्रवत आशयानमहिं वज्रेण वि रिणा अपर्वन् ॥३॥
अतृप्णुवंतं । विऽयतं । अबुध्यं । अबुध्यमानं । सुसुपानं । इंद्र ।
सप्त । प्रति । प्रऽवतः । आऽशयानं । अहिं । वज्रेण । वि । रिणाः । अपर्वन् ॥३॥

हे इंद्र त्वमतृप्णुवंतं भोगेष्वतृप्यंतं वियतं शिथिलांगमबुध्यं दुर्विज्ञानमबुध्यमानं किमप्यजानंतं सुषुपाणं सुप्तं सप्त सर्पणस्वभावाः प्रवतोऽपः प्रत्याशयानमावृत्य तिष्ठंतमहिं वृत्रमपर्वन् अपर्वणि पौर्णमास्यां वज्रेण वि

रिणाः। व्यरिणाः। विशेषेण हतवानसि। पौर्णमास्यां वृत्रवधस्त्वष्टा हतपुत्र इत्यनुवाके घ्नंति वा एनं पौर्णमास आमावास्यायां प्यायंतीति तैत्तिरीयैरप्युक्तः। तै० सं० २ ५ २. ५.॥

अक्षोदयच्छवसा क्षाम बुध्नं वार्ण वातस्तविषीभिरिंद्रः।
दृळ्हान्यौभ्नादुशमान ओजोऽवाभिनत्ककुभः पर्वतानां॥४॥
अक्षोदयत्। शवसा। क्षाम। बुध्नं। वाः। न। वातः। तविषीभिः। इंद्रः।
दृळ्हानि। औभ्नात्। उशमानः। ओजः। अव। अभिनत्। ककुभः। पर्वतानां॥४॥

इंद्रः परमैश्वर्ययुक्तः शवसा बलेन बुध्नमंतरिक्षं क्षाम क्षीणोदकमक्षोदयत्। अपीपिपत्। तत्र दृष्टांतः। वातो वायुस्तविषीभिर्बलैर्वार्न उदकमिव तद्वत्। किंच ओजो बलमुशमानः कामयमान इंद्रो दृळ्हानि दृढानि स्थिराण्यप्यभ्राण्यौभ्नात्। अभांक्षीत्। तथा पर्वतानां गिरीणां ककुभः पक्षानवाभिनत्। अत्यंतमभैत्सीत्॥

अभि प्र दद्रुर्जनयो न गर्भं रथा इव प्र ययुः साकमद्रयः।
अतर्पयो विसृत उब्ज ऊर्मीन्त्वं वृताँ अरिणा इंद्र सिंधून्॥५॥
अभि। प्र। दद्रुः। जनयः। न। गर्भं। रथाःऽइव। प्र। ययुः। साकं। अद्रयः।
अतर्पयः। विऽसृतः। उब्जः। ऊर्मीन्। त्वं। वृतान्। अरिणाः। इंद्र। सिंधून्॥५॥

हे इंद्र त्वामद्रयो मरुतो जनयो जनन्यो गर्भं न पुत्रमिवाभि प्र दद्रुः। अभिजग्मुः। किंच रथा इव रंहणशीला रथा यथा तथा वृत्रवधार्थं त्वया साकं प्र ययुः। प्रकर्षेणायासिषुः। हे इंद्र त्वं विसृतो विसरणशीला नदीरतर्पयः। अद्भिरपूरयः। तथोर्मीन्मेघानुब्जः। अवधीः। तथा त्वं वृतान्वृत्रेणावृतान् सिंधून्प्राऽरिणाः। प्रेरयः॥ ॥१॥

त्वं महीमवनिं विश्वधेनां तुर्वीतये वय्याय क्षरंतीं।
अरमयो नमसैजदर्णः सुतरणाँ अकृणोरिंद्र सिंधून्॥६॥
त्वं। महीं। अवनिं। विश्वऽधेनां। तुर्वीतये। वय्याय। क्षरंतीं।
अरमयः। नमसा। एजत्। अर्णः। सुऽतरणान्। अकृणोः। इंद्र। सिंधून्॥६॥

हे इंद्र त्वं महीं महतीं विश्वधेनां विश्वस्य प्रीणयित्रीं तुर्वीतये तुर्वीतिनाम्ने राज्ञे वय्याय वय्यनाम्ने च क्षरंतीमभीष्टान् कामान्दुहतीमवनिं भूमिं नमसान्नेनैजदेजता चलताऽर्णसोदकेन चारमयः। रमयसि। इंद्रः पृथिवीमन्नोदकसमृद्धां करोतीत्यर्थः। किंच हे इंद्र त्वं सिंधून् जलानि सुतरणान् सुखेन तीर्णान्यकृणोः। अकार्षीः॥

प्राग्रुवो नभन्वो३ न वक्वा ध्वस्रा अपिन्वद्युवतीर्ऋतज्ञाः।
धन्वान्यज्राँ अपृणक्तृषाणाँ अधोगिंद्रः स्तर्यो३ दंसुपत्नीः॥७॥
प्र। अग्रुवः। नभन्वः। न। वक्वाः। ध्वस्राः। अपिन्वत्। युवतीः। ऋतऽज्ञाः।
धन्वानि। अज्रान्। अपृणक्। तृषाणान्। अधोक्। इंद्रः। स्तर्यः। दंऽसुपत्नीः॥७॥

इंद्रो नभन्वः शत्रूणां हिंसिका वक्वा न सेना इव ध्वस्राः कूलानां ध्वंसिका युवतीरद्भिर्मिश्रिता ऋतज्ञा ऋतस्यान्नस्य जनयित्रीरग्रुवः। अग्रुव इति नदीनामैतत्। अग्रगामिनीर्नदीः प्रापिन्वत्। प्रकर्षेणापूरयत्।

तथा धन्वानि निर्जलानुन्नतान्देशांश्च वृष्ट्यापृणक्। अपूरयत। तथाध्वन्मार्गस्य गंतॄन् तृषाणान् पिपासया युक्तान् पुरुषानपृणक्। अपूरयत। किंच इंद्रो दमुपत्नीः। दमनपरा असुराः सुष्ठु पतयो यासां ताः स्तर्यः स्तरीर्निवृत्तप्रसवा गा अधोक्। अधुक्षत। इंद्रो राक्षसकृतनिरोधदुःखान्निरुद्धप्रसवा अपि गा विमुच्य सप्रसवाश्चकारेत्यर्थः ॥

पूर्वीरुषसः शरदश्च गूर्ता वृत्रं जघन्वाँ असृजद्वि सिंधून्।
परिष्ठिता अतृणद्बद्बधानाः सीरा इंद्रः स्रवितवे पृथिव्या ॥८॥
पूर्वीः। उषसः। शरदः। च। गूर्ताः। वृत्रं। जघन्वान्। असृजत्। वि। सिंधून्।
परिऽस्थिताः। अतृणत्। बद्बधानाः। सीराः। इंद्रः। स्रवितवे। पृथिव्या ॥८॥

वृत्रं वृत्राख्यमसुरं जघन्वान्हतवानिंद्रो गूर्तास्तमिस्रया गीर्णाः पूर्वीर्बह्वीरुषसः शरदश्च संवत्सरांश्च व्यसृजत्। विशेषेण ससर्ज। तथा सिंधून् वृत्रेणावृतान्युदकानि व्यसृजत्। किंच इंद्रः परिष्ठिता मेघेषु परितः स्थिता बद्बधाना वृत्रेण परितो बध्यमानाः सीरा नदीः। सीरा इति नदीनामैतत्। पृथिव्या पृथिवीरूपेण मार्गेण स्रवितवे स्रवितुं गमनार्थमतृणत्। अविध्यत् ॥

वम्रीभिः पुत्रमग्रुवो अदानं निवेशनाद्धरिव आ जभर्थ।
व्यंधो अख्यदहिमाददानो निर्भूदुखच्छित्समरंत पर्व ॥९॥
वम्रीभिः। पुत्रं। अग्रुवः। अदानं। निऽवेशनात्। हरिऽवः। आ। जभर्थ।
वि। अंधः। अख्यत्। अहिं। आऽददानः। निः। भूत्। उखऽछित्। सं। अरंत। पर्व ॥९॥

हे हरिवो हरिसंज्ञकाश्वोपेतेंद्र त्वं वम्रीभिरुपजिह्विकाभिरदानमद्यमानमग्रुवः। अग्रू नाम काचित्। तस्याः पुत्रं निवेशनाद्वल्मीकाख्यात्स्थानादा जभर्थ। आहृतवानसि। आददानः इंद्रेणाह्रियमाणोऽग्रुवः पुत्रो ऽधः पूर्वमधः सन् अहिं सर्पं व्यख्यत्। विशेषेणापश्यत्। ततो निर्भूत्। वल्मीकान्निर्गतोऽभूत्। उखच्छिद्वल्मीकाख्याया उखायाश्छेदकानि पर्व पर्वाण्यस्य सर्वाण्यङ्गानां शिथिलानि पर्वाणि समरंत। समगच्छंत। उपजिह्विकाभिः शिथिलीकृतान्यग्रुवः पुत्रस्य पर्वाणींद्रेण समधीयंतेत्यर्थः ॥

प्र ते पूर्वाणि करणानि विप्राविद्वाँ आह विदुषे करांसि।
यथायथा वृष्ण्यानि स्वगूर्तापांसि राजन्नर्याविवेषीः ॥१०॥
प्र। ते। पूर्वाणि। करणानि। विप्र। आऽविद्वान्। आह। विदुषे। करांसि।
यथाऽयथा। वृष्ण्यानि। स्वऽगूर्ता। अपांसि। राजन्। नर्या। अविवेषीः ॥१०॥

हे राजन्राजमानेंद्र वृष्ण्यानि वर्षणयोग्यानि स्वगूर्ता स्वगूर्तानि स्वयमुद्गीर्णानि नर्या नर्याणि मनुष्यहितान्यपांसि त्वत्संबंधीनि कर्माणि यथायथाविवेषीर्व्याप्नोः। अकार्षीरिति यावत्। तथातथा हे विप्र प्राज्ञेंद्र विदुषे विदुषः सर्वं जानतस्ते त्वत्संबंधीनि पूर्वाणि पुरातनानि करणानि कर्माण्याविद्वान् आ समंताज्जानन् वामदेवः करांसि त्वदीयानि कर्माणि प्र प्रकर्षेणाह। ब्रवीति ॥

नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३न पीपेः।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥

नु । स्तुतः । इंद्र । नु । गृणानः । इषं । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यं । धिया । स्याम । रथ्यः । सदाऽसाः ॥११॥

हे इंद्र नु क्षिप्रं स्तुतः पूर्वैर्ऋषिभिः संस्तुतो नु क्षिप्रं गृणानोऽस्माभिः स्तूयमानस्त्वमिषमन्नं जरित्रे स्तोत्रे मह्यं नद्यो नाद्भिर्नदीरिव पीपेः । प्यायय । प्रवृद्धं कुरु । हे हरिवो हरिमन्नश्वकाश्वोपेतेंद्र ते तुभ्यं नव्यं नवतरं ब्रह्म स्तोत्रमकारि । अस्माभिः क्रियते । रथ्यो रथवंतो वयं धिया प्रज्ञारूपया स्तुत्या सदासास्त्वा सर्वदा भजमानास्त्वदर्थं हवीरूपस्यान्नस्य दातारो वा स्याम । भूयास्म ॥ ॥२॥

आ न इंद्र इत्येकादशर्चं दशमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैंद्रं । आ न इत्यनुक्रमणिका ॥ पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि निष्केवल्य एतन्निविद्धानीयं । सूत्रितं च । आ न इंद्र इति निष्केवल्यं । आ० ७. ५ । इति ॥ महाव्रतेऽप्येतत्संपातसूक्तं । तथैव पंचमारण्यके सूत्रितं च । आ न इंद्रो दूरादा न आसादिति संपात । ऐ० आ० ५. २. २ । इति ॥

आ न इंद्रो दूरादा न आसादभिष्टिकृदवसे यासदुग्रः ।
ओजिष्ठेभिर्नृपतिर्वज्रबाहुः संगे समत्सु तुर्वणिः पृतन्यून् ॥१॥
आ । नः । इंद्रः । दूरात् । आ । नः । आसात् । अभिष्टिऽकृत् । अवसे । यासत् । उग्रः ।
ओजिष्ठेभिः । नृऽपतिः । वज्रऽबाहुः । संऽगे । समत्ऽसु । तुर्वणिः । पृतन्यून् ॥१॥

अभिष्टिकृद्यजमानसंबंधिनामभीष्टानां कर्तोग्रस्तेजस्वींद्रो नोऽस्माकमवसे रक्षणाय दूराद्देशादा यासत् । आयातु । आगच्छतु । अपि चासादासन्नादंतिकाद्देशान्नोऽस्माकमवसे रक्षणायाऽऽयासत् । आयातु । कीदृशः । समत्सु संग्रामेषु संगे शत्रुभिः संयोगे सति पृतन्यून् शत्रून् तुर्वणिर्हिंसन् वज्रबाहुर्वज्रहस्तो नृपतिर्नृपतिर्नृणां मनुष्याणां पालक ओजिष्ठेभिरतिशयेन तेजस्विभिर्मरुद्भिर्युक्त इति शेषः ॥

आ न इंद्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च ।
तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥२॥
आ । नः । इंद्रः । हरिऽभिः । यातु । अच्छ । अर्वाचीनः । अवसे । राधसे । च ।
तिष्ठाति । वज्री । मघऽवा । विऽरप्शी । इमं । यज्ञं । अनु । नः । वाजऽसातौ ॥२॥

अर्वाचीनोऽस्मदभिमुख इंद्रोऽवसेऽस्मदीयाय रक्षणाय राधसे च धनाय च नोऽस्मानस्मानभि लक्षीकृत्य हरिभिरश्वैः सहाऽऽयातु । आगच्छतु । किंच वज्री वज्रवान्मघवा धनवान्विरप्शी महान् । विरप्शीति महन्नामसु पाठात् । अस्मदीयस्य कर्मणो वृष्टिभिरसुरादिभिः सह नोऽस्माकं वाजसातौ युद्धे प्राप्ते सतीममस्मदीयं यज्ञमनूद्दिश्य तिष्ठाति । तिष्ठतु ॥

इमं यज्ञं त्वमस्माकमिंद्र पुरो दधत्सनिष्यसि क्रतुं नः ।
श्वघ्नीव वज्रिन्त्सनये धनानां त्वया वयमर्य आजिं जयेम ॥३॥
इमं । यज्ञं । त्वं । अस्माकं । इंद्र । पुरः । दधत् । सनिष्यसि । क्रतुं । नः ।
श्वघ्नीऽइव । वज्रिन् । सनये । धनानां । त्वया । वयं । अर्यः । आजिं । जयेम ॥३॥

हे इंद्र त्वं नोऽस्मान्पुरो दधत् पुरस्कृतान् कुर्वन्नस्माकं क्रतुं क्रियमाणमिमं यज्ञं सनिष्यसि । संभजिष्यसि । अपि च श्वघ्नीव मृगयुर्मृगानिव हे वज्रिन् वज्रवन्निंद्र त्वया यार्योऽर्यः स्तोतारो वयं धनानां पश्वादिधनानां सनये लाभायाऽऽजिं शत्रुसंबंधिनं संग्रामं जयेम । संजीयास्म ॥

अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणस्योशन्नु षु ण इति शस्त्रयाज्या । सूत्रितं च । उशन्नु षु णः सुमना उपाक इति याज्या । आ० ५ १६. । इति ॥

उशन्नु षु णः सुमना उपाके सोमस्य नु सुषुतस्य स्वधावः ।
पा इंद्र प्रतिभृतस्य मध्वः समंधसा ममदः पृष्ठ्येन ॥४॥
उशन् । ऊं इति । सु । नः । सुऽमनाः । उपाके । सोमस्य । नु । सुऽसुतस्य । स्वधाऽवः ।
पाः । इंद्र । प्रतिऽभृतस्य । मध्वः । सं । अंधसा । ममदः । पृष्ठ्येन ॥४॥

हे स्वधावोऽन्नवन्निंद्र सुमनाः शोभनमनस्कस्त्वमुपाके समीपे नोऽस्मानुशन्नु सु अत्यंत कामयमानः सन् सुषुतस्य सुष्ठभिषुतं प्रतिभृतस्य संभृतं मध्वो मादकं सोमस्य सोमं नु क्षिप्रमेव पाः । पिब । पृष्ठ्येन । पृष्ठ्यशब्देन माध्यंदिनसवने उद्गातृभिरुद्गीयमानं स्तोत्रमुच्यते । तत्संबंधिनांधसा पीतेन सोमेन सं ममदः । प्रहृष्टो भव ॥

वि यो ररप्श ऋषिभिर्नवेभिर्वृक्षो न पक्वः सृण्यो न जेता ।
मर्यो न योषामभि मन्यमानोऽच्छा विवक्मि पुरुहूतमिंद्रं ॥५॥
वि । यः । ररप्शे । ऋषिऽभिः । नवेभिः । वृक्षः । न । पक्वः । सृण्यः । न । जेता ।
मर्यः । न । योषां । अभि । मन्यमानः । अच्छ । विवक्मि । पुरुऽहूतं । इंद्रं ॥५॥

पक्वः पक्वफलो वृक्षो न वृक्ष इव । अत्र सृणिशब्दोऽंकुशवाची । तेनायुधमात्रं लक्ष्यते । सृण्य आयुधकुशलो जेता न शत्रुविजयी वीरपुरुष इव यो नवैभिर्नवैर्नूतनैर्ऋषिभिर्वि ररप्शे । विविधं स्तूयते । स्तोताहं पुरुहूतं बहुभिराहूतं तमिंद्रमच्छाभि लक्षीकृत्य विवक्मि । विशेषेण वच्मि । स्तौमि । तत्र दृष्टांतः । अभि मन्यमानो मदीयेयं योषेत्यभिजानन्मर्यो मर्त्यो योषां न स्त्रीमिव तद्वत् ॥ ॥३॥

गिरिर्न यः स्वतवाँ ऋष्व इंद्रः सनादेव सहसे जात उग्रः ।
आदर्ता वज्रं स्थविरं न भीम उद्नेव कोशं वसुना न्यृष्टं ॥६॥
गिरिः । न । यः । स्वऽतवान् । ऋष्वः । इंद्रः । सनात् । एव । सहसे । जातः । उग्रः ।
आऽदर्ता । वज्रं । स्थविरं । न । भीमः । उद्नाऽइव । कोशं । वसुना । निऽऋष्टं ॥६॥

गिरिर्न पर्वत इव स्वतवान् स्वयं प्रवृद्ध ऋष्वो महान् । ऋष्व इति महन्नाम महत ऋष्व ऋष्व इति तन्नामसु पाठात् । उग्र ओजस्वी य इंद्रः सहसे शत्रोरभिभवाय सनादेव चिरादेव जात उत्पन्नो भीमः शत्रूणां भयकरः स इंद्र उद्नेव कोशमुदकेन जलपात्रमिव वसुना तेजसा न्यृष्टं निगतं स्थविरं बृहद्वज्रं न वज्रं च । नेति चार्थे । आदर्ता । आदृतवानासीत् ॥

न यस्य वर्ता जनुषा न्वस्ति न राधस आमरीता मघस्य ।
उद्वावृषाणस्तविषीव उग्रास्मभ्यं दद्धि पुरुहूत रायः ॥७॥
न । यस्य । वर्ता । जनुषा । नु । अस्ति । न । राधसः । आऽमरीता । मघस्य ।
उत्ऽववृषाणः । तविषीऽवः । उग्र । अस्मभ्यं । दद्धि । पुरुऽहूत । रायः ॥७॥

हे इंद्र यस्य तव कश्चिज्जनुषा जन्मना स्वत एव नु सत्यं वर्ता वारयिता नास्ति । राधसो यज्ञादिकर्मणां साधकस्य मघस्य त्वया दीयमानस्य धनस्यामरीता कश्चिदपि नाशयिता नास्ति हे तविषीवो बलवन्नुग्र

तेजस्विन् हे पुरुहूत बहुभिराहूतेंद्र उद्वृषाणोऽभीष्टान् कामान्वर्षकस्त्वं रायः पश्वादिधनान्यस्मभ्यं स्तोतृभ्यो दर्द्धि । देहि ॥

ईक्षे रायः क्षयस्य चर्षणीनामुत व्रजमपवर्तासि गोनां ।
शिक्षानरः समिथेषु प्रहावान्वस्वो राशिमभिनेतासि भूरिं ॥ ८ ॥
ईक्षे । रायः । क्षयस्य । चर्षणीनां । उत । व्रजं । अपऽवर्ता । असि । गोनां ।
शिक्षाऽनरः । संऽइथेषु । प्रहाऽवान् । वस्वः । राशिं । अभिऽनेता । असि । भूरिं ॥ ८ ॥

हे इंद्र त्वं चर्षणीनां प्रजानां रायो धनस्य क्षयस्य गृहस्य चेक्षे । ईशिषे । उतापि च गोनां गवां व्रजं समूहमपवर्तापवारकोऽसि । निरोधकेभ्योऽसुरेभ्यो गवां मोचयिता भवसीत्यर्थः । किंच हे इंद्र शिक्षानरः शिक्षया नेता प्रजानां शासकः समिथेषु युद्धेषु प्रहावान् प्रहरणवांस्त्वं भूरि प्रभूतं वस्वो धनस्य राशिं समूहमभिनेतासि । प्रापयिता च भवसि ॥

कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु का चिदृष्वः ।
पुरु दाशुषे विचयिष्ठो अंहोऽथा दधाति द्रविणं जरित्रे ॥ ९ ॥
कया । तत् । शृण्वे । शच्या । शचिष्ठः । यया । कृणोति । मुहु । का । चित् । ऋष्वः ।
पुरु । दाशुषे । विऽचयिष्ठः । अंहः । अथ । दधाति । द्रविणं । जरित्रे ॥ ९ ॥

शचिष्ठोऽतिशयेन प्राज्ञः । तदिति लिंगव्यत्ययः । तत् स इंद्रः कया शच्या कया प्रज्ञया । शचीति प्रज्ञानामैतत् । शृण्वे । श्रूयते । ऋष्वो महानिंद्रो मुहु मुहुर्यया प्रज्ञया का चित् कानिचित्कर्माणि कृणोति । करोति । स इंद्रो दाशुषे हविर्दत्तवते यजमानाय पुरु भूयिष्ठमंहः पापं विचयिष्ठोऽतिशयेन नाशको भवति । अथापि च जरित्रे स्तोत्रे द्रविणं पश्वादिधनं दधाति । ददाति ॥

मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते ।
नव्ये देष्णे शस्ते अस्मिन्त उक्थे प्र ब्रवाम वयमिंद्र स्तुवंतः ॥ १० ॥
मा । नः । मर्धीः । आ । भर । दद्धि । तत् । नः । प्र । दाशुषे । दातवे । भूरि । यत् । ते ।
नव्ये । देष्णे । शस्ते । अस्मिन् । ते । उक्थे । प्र । ब्रवाम । वयं । इंद्र । स्तुवंतः ॥ १० ॥

हे इंद्र त्वं नोऽस्मान्मा मर्धीः । मा हिंसीः । किंतु त्वमा भर । पोषको भव । हे इंद्र ते त्वदीयं भूरि बह्वपि यद्धनं दाशुषे हविर्दत्तवते यजमानाय दातवे दातुं । प्र भवतीति शेषः । नोऽस्मभ्यं तद्धनमाहृत्य दद्धि । देहि । हे इंद्र त्वां स्तुवंतो वयमस्मिन्नुक्थेऽस्मिन्निष्केवल्याख्यशस्त्रे ते त्वदर्थं नव्ये नूतने शस्ते प्रशस्ते देष्णे दातव्ये हविषि निमित्तभूते सति प्र ब्रवाम । प्रकर्षेण त्वां वदाम ॥

नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥
नु । स्तुतः । इंद्र । नु । गृणानः । इषं । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यं । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

पूर्वं व्याख्याता ॥ ॥ ४ ॥

आ यात्विंद्र इत्येकादशर्चमेकादशं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैंद्रं । आ यात्वित्यनुक्रांतं ॥ पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहन्येतन्निविद्धानीयं । सूत्रितं च । आ यात्विंद्रोऽवस इति मरुत्वतीयं । आ० ७ ५. । इति ॥

आ यात्विंद्रोऽवस उप न इह स्तुतः सधमादस्तु शूरः ।
वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥ १ ॥
आ । यातु । इंद्रः । अवसे । उप । नः । इह । स्तुतः । सधऽमात् । अस्तु । शूरः ।
ववृधानः । तविषीः । यस्य । पूर्वीः । द्यौः । न । क्षत्रं । अभिऽभूति । पुष्यात् ॥ १ ॥

स इंद्रो नोऽस्माकमवसे रक्षणायोपा यातु । उपागच्छतु । य इंद्र इहास्मिन्यज्ञे स्तुतः । शूरो विक्रांतो ववृधानः प्रवृद्धोऽयमिंद्रः सधमादस्तु । अस्माभिः सह मादनः भवतु । यस्येंद्रस्य तविषीर्बलिष्ठो बलानि पूर्वीः पूर्व्याणि बहूनि । संतीति शेषः । य इंद्रो द्यौर्न द्योतमानः सूर्य इवाभिभूति परकीयं बलमभिभावुकं क्षत्रं स्वकीयं बलं तेजो वा पुष्यात पुष्यतु । स इंद्र उपायात्विति पूर्वेण संबंधः ॥

तस्येदिह स्तवथ वृष्ण्यानि तुविद्युम्नस्य तुविराधसो नॄन् ।
यस्य क्रतुर्विदथ्यो३ न सम्राट् साह्वाँ तरुत्रो अभ्यस्ति कृष्टीः ॥ २ ॥
तस्य । इत । इह । स्तवथ । वृष्ण्यानि । तुविऽद्युम्नस्य । तुविऽराधसः । नॄन् ।
यस्य । क्रतुः । विदथ्यः । न । संऽराट् । सह्वान् । तरुत्रः । अभि । अस्ति । कृष्टीः ॥ २ ॥

तुविद्युम्नस्य बहुकीर्तेस्तुविराधसो बहुधनस्य तस्येत्तस्येंद्रस्यैव वृष्ण्यानि बलभूतानि नॄन् नेतृन्मरुतो हे स्तोतारो यूयमिहास्मिन्यज्ञे स्तवथ । स्तुत । साह्वान् शत्रूनभिभावुकस्तरुत्रोऽस्मानापद्भ्यस्तारको यस्येंद्रस्य क्रतुः कर्म कृष्टीः शत्रुमवधिनीः प्रजा अभ्यस्ति अभिभवति । तत्र दृष्टांतः । विदथ्यो न सम्राट् । विदथार्हो न यज्ञार्हः सम्राट् सकललोकानामधिपतिरिव तद्वत । तस्य वृष्ण्यानीति पूर्वेण संबंधः ॥

आ यात्विंद्रो दिव आ पृथिव्या मक्षू समुद्रादुत वा पुरीषात् ।
स्वर्णरादवसे नो मरुत्वान्परावतो वा सदनादृतस्य ॥ ३ ॥
आ । यातु । इंद्रः । दिवः । आ । पृथिव्याः । मक्षु । समुद्रात् । उत । वा । पुरीषात् ।
स्वःऽनरात् । अवसे । नः । मरुत्वान् । पराऽवतः । वा । सदनात् । ऋतस्य ॥ ३ ॥

मरुत्वान्मरुद्भिः सहित इंद्रो नोऽस्माकमवसे रक्षणाय दिवः स्वर्गलोकादा यातु । आगच्छतु । पृथिव्या भूलोकाच्च मक्षु शीघ्रमा यातु । उत वा अथवा समुद्रादंतरिक्षलोकाद्वायातु । समुद्र इत्यंतरिक्षनाम सगरः समुद्रोऽध्वरमिति तन्नामसु पाठात । अथवा पुरीषादुदकादायातु । पुरीषमित्युदकनाम मधु पुरीषं पिप्पलमिति तन्नामसु पाठात । स्वर्णरात् स्वरादित्यो नरो नेता यस्य तस्माल्लोकाद्वायातु । परावतो वा दूराद्वायातु । ऋतस्योदकस्य सदनात्स्थानान्मेघलोकाद्वायातु ॥

स्थूरस्य रायो बृहतो य ईशे तमु ष्टवाम विदथेष्विंद्रं ।
यो वायुना जयति गोमतीषु प्र धृष्णुया नयति वस्यो अच्छ ॥ ४ ॥
स्थूरस्य । रायः । बृहतः । यः । ईशे । तं । ऊं इति । स्तवाम । विदथेषु । इंद्रं ।
यः । वायुना । जयति । गोऽमतीषु । प्र । धृष्णुऽया । नयति । वस्यः । अच्छ ॥ ४ ॥

य इंद्रः स्थूरस्य स्थूलस्य बृहतो महतो रायो धनस्येशे ईष्टे विदथेषु यज्ञेषु । विदथ इति यज्ञनामैतत् । तमिंद्रम् तमिंद्रमेव वयं स्तोतारः स्तवाम । य इंद्रो वायुना प्राणरूपेण बलेन गोमतीषु सेनासु जयति शत्रून्विजयते । धृष्णुया धृष्णुः प्रगल्भो य इंद्रः स्तोतृभ्यो वसीयः श्रेष्ठं पश्वादिधनमच्छाभि प्रणयति प्रापयति । तमेवेंद्रं स्तवामेति पूर्वेण संबंधः ॥

उप यो नमो नमसि स्तभायन्नियर्ति वाचं जनयन्यजध्यै ।
ऋंजसानः पुरुवार उक्थैरेंद्रं कृण्वीत सदनेषु होता ॥५॥
उप । यः । नमः । नमसि । स्तभायन् । इयर्ति । वाचं । जनयन् । यजध्यै ।
ऋंजसानः । पुरुऽवारः । उक्थैः । आ । इंद्रं । कृण्वीत । सदनेषु । होता ॥५॥

उप स्तभायन् लोकानुपस्तभयन् यजध्यै यष्टुं वाचं गर्जितलक्षणां वाच जनयन् प्रजनयन् ऋंजसानः प्रसाध्यमानः । ऋंजतिः प्रसाधनकर्मेति यास्कः । उक्थैः शस्त्रलक्षणैः स्तोत्रैः पुरुवारो बहुभिः संभजनीयो य इंद्रो नमसि । नम इत्यन्ननामैतत् । यजमानैर्दत्ते हविषि नमो यजमानेभ्यो यज्ञादिसाधनमन्नमियर्ति प्रेरयति । इंद्रो हविषा तृप्तः सन् वृष्टिद्वारान्नं प्रयच्छति तेन चान्नेन पुनर्यज्ञः प्रजायत इत्यर्थः । अस्मदीयो होता सदनेषु यज्ञगृहेषु तमिंद्रमा कृण्वीत । अभिमुखीकरोतु ॥ ॥५॥

धिषा यदि धिषण्यंतः सरण्यान्त्सदंतो अद्रिमौशिजस्य गोहे ।
आ दुरोषाः पास्त्यस्य होता यो नो महान्त्संवरणेषु वह्निः ॥६॥
धिषा । यदि । धिषण्यंतः । सरण्यान् । सदंतः । अद्रिं । औशिजस्य । गोहे ।
आ । दुरोषाः । पास्त्यस्य । होता । यः । नः । महान् । संऽवरणेषु । वह्निः ॥६॥

धिषण्यंतो धिषणामिंद्रविषयां स्तुतिमिच्छंत औशिजस्य । उशिजः कामयमाना ऋत्विजः । तेषां संबंध्यौशिजो यजमानः । तस्य गोहे गृहे सदंतो निषीदंतो जना अद्रिं । आदृणाति शत्रूनित्यद्रिरिंद्रः । तमिंद्रं धिषा स्तुत्या यदि यदा सरण्यान् उपागच्छेयुः तदा स इंद्र आ यातु । नोऽस्माकं संवरणेषु शत्रुसंबाधेषु निरोधेषु वह्निर्वोढा पास्त्यस्य पस्त्ये गृहे वसता यजमानेन होताह्वाता दुरोषा दुस्तरक्रोधो य इंद्रो महान्प्रभूतो भवति । स आयात्विति ॥

सत्रा यदीं भार्वरस्य वृष्णः सिषक्ति शुष्मः स्तुवते भराय ।
गुहा यदीमौशिजस्य गोहे प्र यद्धिये प्रायसे मदाय ॥७॥
सत्रा । यत् । ईं । भार्वरस्य । वृष्णः । सिसक्ति । शुष्मः । स्तुवते । भराय ।
गुहा । यत् । ईं । औशिजस्य । गोहे । प्र । यत् । धिये । प्र । अयसे । मदाय ॥७॥

भार्वरस्य । भर्वरो जगद्भर्ता प्रजापतिः । तस्य पुत्रो भार्वरः । तस्य वृष्णः कामानां वर्षितुरिंद्रस्य संबंधी ईमेष शुष्मो बलं स्तुवते स्तोत्रं कुर्वते यजमाने सिषक्ति सेवत इति यत्तत्सत्रा सत्यमेव । ईमेतद्बलमौशिजस्य यजमानस्य भराय भर्तुं गुहा गुहाया गुहारूपे हृदये प्र भवतीति यत्तत्सत्यं । यजमानस्य गोहे गृहे धिये कर्मणे प्र भवतीति यत्तत्सत्यं । अयसे गमनाय कामानां प्राप्तये मदाय हर्षाय तत्र यद्बलं प्रभवति तत्सत्यं । इंद्रस्य बलं यजमानं सर्वदा पालयतीत्यर्थः ॥

वि यद्वरांसि पर्वतस्य वृण्वे पयोभिर्जिन्वे अपां जवांसि ।
विदद्गौरस्य गवयस्य गोहे यदी वाजाय सुध्यो३ वहंति ॥८॥

वि । यत् । वरांसि । पर्वतस्य । वृण्वे । पयःऽभिः । जिन्वे । अपां । जवांसि ।
विदत् । गौरस्य । गवयस्य । गोहे । यदि । वाजाय । सुऽध्यः । वहंति ॥८॥

इंद्रः पर्वतस्य मेघस्य वरांसि द्वाराणि वि वृण्वे विवृतानि कृतवानिति यत् । अपामुदकानां जवांसि वेगान्पयोभिर्जलैर्जिन्वे प्यायतीति यत् । यदि यदा सुध्यः शोभनकर्माणो यजमाना वाजायान्नाय वहंति इंद्रं प्राप्नुवंति तदा गोहे गृहे गौरस्य गौरमृगस्य गवयस्य गवयमृगस्य च विदत् तौ द्वौ प्रभू लभत इति यत् । तत्सर्वं सत्रेति पूर्वेण संबधः ॥

अभ्युदयेष्टाविंद्रस्य प्रदातुर्भद्रा ते हस्तेति याज्या । सूत्रितं च । दीर्घस्ते अस्त्वंकुशो भद्रा ते हस्ता सुकृतोत पाणी । आ० ३. १३ । इति ॥

भद्रा ते हस्ता सुकृतोत पाणी प्रयंतारा स्तुवते राध इंद्र ।
का ते निषत्तिः किमु नो ममत्सि किं नोदुदु हर्षसे दातवा उ ॥९॥
भद्रा । ते । हस्ता । सुऽकृता । उत । पाणी इति । प्रऽयंतारा । स्तुवते । राधः । इंद्र ।
का । ते । निऽसत्तिः । किं । ऊं इति । नो इति । ममत्सि । किं । न । उत्ऽउत् ।
ऊं इति । हर्षसे । दातवे । ऊं इति ॥९॥

हे इंद्र ते त्वदीयौ भद्रा भद्रौ कल्याणौ हस्ता हस्तौ सुकृता सुकृतौ शोभनकर्माणौ भवतः । उतापि च पाणी त्वदीयौ हस्तौ स्तुवते स्तोत्रे यजमानाय राधो धनं प्रयंतारा प्रयंतारौ प्रदातारौ भवतः । हे इंद्र ते त्वदीया निषत्तिर्निषदनं स्थितिः का । त्वमस्मान् किमु किमर्थं नो ममत्सि । न मादयसि । किमुदुदु किमर्थमेव दातवा अस्माकं धनं दातुं न हर्षसे । हृष्टो न भवसि ॥

इंद्रस्य वार्त्रघ्नस्य पशाविवा वस्व इति हविषो याज्या । सूत्रितं च । एवा वस्व इंद्रः सत्यः सम्राड्ढंतात्वदस्यविर्चतनानि । आ० ३ ८. । इति ॥

एवा वस्व इंद्रः सत्यः सम्राड्ढंता वृत्रं वरिवः पूरवे कः ।
पुरुष्टुत क्रत्वा नः शग्धि रायो भक्षीय तेऽवसो दैव्यस्य ॥१०॥
एव । वस्वः । इंद्रः । सत्यः । संऽराट् । हंता । वृत्रं । वरिवः । पूरवे । करिति कः ।
पुरुऽस्तुत । क्रत्वा । नः । शग्धि । रायः । भक्षीय । ते । अवसः । दैव्यस्य ॥१०॥

एवैवमुक्तप्रकारेण स्तूयमानः सत्यः सत्यवान्वस्वो धनस्य सम्राडीश्वरो वृत्रं वृत्रनामानमसुरं हंता हिंसितेंद्रः पूरवे मनुष्याय यजमानाय वरिवो धनं कः । करोति । ददातीत्यर्थः । क्रत्वा कर्मणा स्तुतिहेतुना हे पुरुष्टुत बहुभिर्यजमानैः स्तुतेंद्र त्वं नोऽस्मभ्यं रायो धनानि शग्धि । देहि । ते त्वया दीयमानस्य दैव्यस्य देवसंबंधिनोऽवसोऽन्नस्य ॥ कर्मणि षष्ठी ॥ अन्नं भक्षीय । अहं भजेय ॥

नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥
नु । स्तुतः । इंद्र । नु । गृणानः । इषं । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यं । धिया । स्याम । रथ्यः । सदाऽसाः ॥११॥

पूर्वं व्याख्याता ॥ ॥६॥ ॥२॥

तत्र तृतीयानुवाक एकादश सूक्तानि । तत्र यन्न इंद्र इत्येकादशर्चं प्रथमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैंद्रं । यन्न इत्यनुक्रमणिका ॥ पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि माध्यंदिनसवने मैत्रावरुणशस्त्रे द्वितीयमिदं संपातसूक्तं । सूत्रितं च । एवा त्वामिंद्र यन्न इंद्रः । आ० ७. ५ । इति ॥

यन्न इंद्रो जुजुषे यच्च वष्टि तन्नो महान्करति शुष्म्या चित् ।
ब्रह्म स्तोमं मघवा सोममुक्था यो अश्मानं शवसा बिभ्रदेति ॥१॥
यत् । नः । इंद्रः । जुजुषे । यत् । च । वष्टि । तत् । नः । महान् । करति । शुष्मी । आ । चित् ।
ब्रह्म । स्तोमं । मघऽवा । सोमं । उक्था । यः । अश्मानं । शवसा । बिभ्रत् । एति ॥१॥

इंद्रो नोऽस्मदीयं यद्धविर्लक्षणमन्नादिकं जुजुषे सेवते यच्च हविरादिकं च वष्टि कामयते महान् प्रभूतः शुष्मी बलवानिंद्रः । चिदिति चार्थे । ब्रह्म चित् हविर्लक्षणपुरोडाशादिकमन्नं च स्तोमं स्तोत्रमस्मदीयं च सोमं मभिषुतं सोमं चोक्थोक्थानि शस्त्राणि चेत्येवंभूतं तद्ब्रह्मादिचतुष्टयमा करति । आकरोतु । स्वीकरोतु । मघवा धनवान् । अत्राश्मशब्दो वज्रवाची । अश्मानं वज्रं बिभ्रत् धारयन् शवसा बलेन युक्तो य इंद्र एति आगच्छति । स इंद्रः स्वीकरोत्विति पूर्वेण संबंधः ॥

वृषा वृषंधिं चतुरश्रिमस्यन्नुग्रो बाहुभ्यां नृतमः शचीवान् ।
श्रिये परुष्णीमुषमाण ऊर्णां यस्याः पर्वाणि सख्याय विव्ये ॥२॥
वृषा । वृषंधिं । चतुःऽअश्रिं । अस्यन् । उग्रः । बाहुऽभ्यां । नृऽतमः । शचीऽवान् ।
श्रिये । परुष्णीं । उषमाणः । ऊर्णां । यस्याः । पर्वाणि । सख्याय । विव्ये ॥२॥

वृषा कामानां वर्षिता वृषंधिं मेघभेदनद्वारेण वर्षं कुर्वतं चतुरश्रिं चतसृभिरश्रिभिर्धाराभिरुपेतं वज्रं बाहुभ्यां हस्ताभ्यामस्यन् शत्रुषु प्रक्षिपन् उग्र उद्गूर्णबलो नृतमः नेतृतमः शचीवान् कर्मवानिंद्र ऊर्णामाच्छादिकां परुष्णीं पर्ववतीं नदीं श्रिये आश्रयणार्थमुषमाणः सेवमानो भवति । यस्याः नद्याः पर्वाणि भिन्नान्देशान् सख्याय सखिकर्मणे विव्ये संवृतवान् ॥

यो देवो देवतमो जायमानो महो वाजेभिर्महद्भिश्च शुष्मैः ।
दधानो वज्रं बाह्वोरुशंतं द्याममेन रेजयत्प्र भूम ॥३॥
यः । देवः । देवऽतमः । जायमानः । महः । वाजेभिः । महत्ऽभिः । च । शुष्मैः ।
दधानः । वज्रं । बाह्वोः । उशंतं । द्यां । अमेन । रेजयत् । प्र । भूम ॥३॥

देवो दीप्यमानो देवतमो दातृतमो जायमान उत्पद्यमानो य इंद्रो महो महद्भिर्वाजेभिरन्नैर्महद्भिः शुष्मैर्बलैश्च । युक्तोऽभवदिति शेषः । स इंद्रो बाह्वोर्हस्तयोरुशंतं कामयमानं वज्रं दधानो धारयन् अमेन बलेन द्यां द्युलोकं च भूम भूलोकं च प्र रेजयत् । प्रकंपयति स्म ॥

विश्वा रोधांसि प्रवतश्च पूर्वीर्द्यौर्ऋष्वाज्जनिमन्रेजत क्षाः ।
आ मातरा भरति शुष्म्या गोर्नृवत्परिज्मन्नोनुवंत वाताः ॥४॥
विश्वा । रोधांसि । प्रऽवतः । च । पूर्वीः । द्यौः । ऋष्वात् । जनिमन् । रेजत । क्षाः ।
आ । मातरा । भरति । शुष्मी । आ । गोः । नृऽवत् । परिऽज्मन् । नोनुवंत । वाताः ॥४॥

विश्वा विश्वानि रोधांसि। रोधःशब्देनोन्नतप्रदेशा उच्यंते। उन्नतप्रदेशाः पर्वताश्च पूर्वीः पूर्व्यो बहूनि प्रवतः प्रवणानि। समुद्राश्चेत्यर्थः। द्यौर्द्युलोकश्च क्षाः पृथिवी च जनिमन्निंद्रस्य जन्मनि सत्युत्पन्नात्महतो ऽस्मादिंद्रादृंजत। अरेजत। अकंपंत। किंच शुष्मी बलवानिंद्रो गोर्गंतुः सूर्यस्य मातरा मातरौ मातापितृभूतौ द्यावापृथिव्यौ च। आ इति चार्थे। आ भरति। आ समंताद्बिभर्ति। नृवन्मनुष्या इव वाता इंद्रेण प्रेरिता वायवश्च परिज्मन्नंतरिक्षे नोनुवंत। शब्दायंते॥

ता तू तं इंद्र महतो महानि विश्वेष्वित्सवनेषु प्रवाच्या।
यच्छूर धृष्णो धृषता दधृष्वानहिं वज्रेण शवसाविवेषीः॥५॥
ता। तु। ते। इंद्र। महतः। महानि। विश्वेषु। इत्। सवनेषु। प्रऽवाच्या।
यत्। शूर। धृष्णो इति। धृषता। दधृष्वान्। अहिं। वज्रेण। शवसा। अविवेषीः॥५॥

हे इंद्र महतः प्रभूतस्य ते त्वदीयानि ता तानि कर्माणि तु क्षिप्रं महानि महांति भवंति। विश्वेष्वित्सर्वेष्वेव सवनेषु प्रातःसवनादिकर्मसु त्वदीयानि कर्माणि प्रवाच्या प्रवाच्यानि स्तोतृभिः प्रकर्षेण वक्तुं योग्यानि स्तुत्यानीति यत्। हे धृष्णो प्रगल्भ हे शूर विक्रांतेंद्र दधृष्वान्पालकत्वेन लोकान्धारयन् शवसा बलेन युक्तस्त्वं धृषता धर्षकेण वज्रेणाहिं वृत्रमसुरमविवेषीः अवधीरिति यत्। एतदादीनि कर्माणि महांतीति पूर्वेण संबंधः। अत्राविवेषीरिति वधकर्मा॥ ॥ ७॥

ता तू तं सत्या तुविनृम्ण विश्वा प्र धेनवः सिस्रते वृष्ण ऊध्नः।
अधा ह त्वद्वृषमणो भियानाः प्र सिंधवो जवसा चक्रमंत॥६॥
ता। तु। ते। सत्या। तुविऽनृम्ण। विश्वा। प्र। धेनवः। सिस्रते। वृष्णः। ऊध्नः।
अध। ह। त्वत्। वृषऽमनः। भियानाः। प्र। सिंधवः। जवसा। चक्रमंत॥६॥

हे तुविनृम्णाधिकबलेंद्र ते त्वदीयानि विश्वा विश्वानि ता तानि कर्माणि तु क्षिप्रं सत्या सत्यानि भवंति। हे इंद्र वृष्णः कामानां वर्षितुस्त्वत्तो भयाद्धेनवो गाव ऊध्नः स्वकीयादापीनात्प्र सिस्रते। प्रकर्षेण क्षीरं क्षरंति। अधापि च हे वृषमनः कामानां वर्षणपरमनस्कंद्र सिंधवो नद्यस्त्वत्त्वत्तो भियाना बिभ्यत्यः सत्यो जवसा वेगेन प्र चक्रमंत ह। प्रकर्षेण गच्छंति खलु॥

अत्राह ते हरिवस्ता उ देवीरवोभिरिंद्र स्तवंत स्वसारः।
यत्सीमनु प्र मुचो बद्बधाना दीर्घामनु प्रसितिं स्यंदयध्यै॥७॥
अत्र। अह। ते। हरिऽवः। ताः। ऊं इति। देवीः। अवःऽभिः। इंद्र। स्तवंत। स्वसारः।
यत्। सीं। अनु। प्र। मुचः। बद्बधानाः। दीर्घां। अनु। प्रऽसितिं। स्यंदयध्यै॥७॥

हे इंद्र त्वं यद्यदा बद्बधाना वृत्रेण बध्यमानाः सीमनु एना नदीरुद्दिश्य दीर्घामत्यधिकां प्रसितिं बंधनमनु स्यंदयध्यै यथाकामं स्यंदितुं प्र मुचः। प्रकर्षेणामोचयः। हे हरिवो हरिवन्निंद्र अत्राहात्रैव मोचनवेलायां ता उ ताः प्रसिद्धा एव देवीर्देव्यो द्योतमानाः स्वसारो नद्यः। अत्र स्वसृशब्दो नदीवाची। अवोभिस्त्वत्कृतै रक्षणैस्त्वा स्तवंत। स्तावयंति। नदीपूरणादिभिः कर्मभिर्जना इंद्रं स्तुवंतीत्यर्थः॥

पिपीळे अंशुर्मद्यो न सिंधुरा त्वा शमी शशमानस्य शक्तिः।
अस्मद्र्यक्शुशुचानस्य यम्या आशुर्न रश्मिं तुव्योजसं गोः॥८॥

पिपीळे । अंशुः । मद्यः । न । सिंधुः । आ । त्वा । शमी । शशमानस्य । शक्तिः ।
अस्मद्र्यक् । शुशुचानस्य । यम्याः । आशुः । न । रश्मिं । तुविऽओजसं । गोः ॥८॥

हे इंद्र मद्यो मादयितांशुः सोमः पिपीळे । अपीड्यत । अभ्यषूयतेत्यर्थः । नेति संप्रत्यर्थे । न इदानीं सिंधुः स्यंदमानः सोमस्त्वा त्वामा यम्याः । आयच्छतु । शुशुचानस्य दीप्यमानस्य शशमानस्य स्तुवतः सवध्य अस्मद्र्यगस्मदभिमुखं शमी शमनं शक्तिः स्तुतिकर्म चायच्छतु । तत्र दृष्टांतः । आशुः शीघ्रगामी यता गोर्गंतुरश्वस्य तुव्योजसं बहुबलं । दृढमित्यर्थः । रश्मिं न अश्वबंधनरज्जुमिव तद्वत् ॥

अस्मे वर्षिष्ठा कृणुहि ज्येष्ठा नृम्णानि सत्रा सहुरे सहांसि ।
अस्मभ्यं वृत्रा सुहनानि रंधि जहि वधर्वनुषो मर्त्यस्य ॥९॥
अस्मे इति । वर्षिष्ठा । कृणुहि । ज्येष्ठा । नृम्णानि । सत्रा । सहुरे । सहांसि ।
अस्मभ्यं । वृत्रा । सुऽहनानि । रंधि । जहि । वधः । वनुषः । मर्त्यस्य ॥९॥

हे सहुरे सहनशीलेंद्र त्वं सत्रा सर्वदा सहांसि शत्रूणामभिभावुकानि वर्षिष्ठा वर्षिष्ठानि प्रवृद्धानि ज्येष्ठा ज्येष्ठानि प्रशस्तानि नृम्णानि धनान्यस्मे अस्मभ्यं कृणुहि । कुरु । हे इंद्र त्वमस्मभ्यं सुहनानि शोभनवधानि वृत्रा वृत्राणि शत्रून् रंधि । रधय । वशं नय । किंच वनुषो हिंसकस्य मर्त्यस्य मरणधर्मणः शत्रोः सत्वापि वधो हननसाधनमायुधं जहि । नाशय ॥

अस्माकमित्सु शृणुहि त्वमिंद्रास्मभ्यं चित्राँ उप माहि वाजान् ।
अस्मभ्यं विश्वा इषणः पुरंधीरस्माकं सु मघवन्बोधि गोदाः ॥१०॥
अस्माकं । इत् । सु । शृणुहि । त्वं । इंद्र । अस्मभ्यं । चित्रान् । उप । माहि । वाजान् ।
अस्मभ्यं । विश्वाः । इषणः । पुरंऽधीः । अस्माकं । सु । मघऽवन् । बोधि । गोऽदाः ॥१०॥

हे इंद्र त्वमस्माकमित अस्मदीया एव स्तुतीः सु सुष्ठु शृणुहि । तथा हे इंद्र त्वं चित्रान् चायनीयान् वाजानन्नान्यस्मभ्यमुप माहि । देहि । किंच अस्मभ्यं विश्वाः सर्वाः पुरंधीर्बुद्धीरिषणः । प्रेरय । अपि च हे मघवन्धनवन्निंद्र अस्माकं गोदा गवां दाता सु सुष्ठु बोधि । भव ॥

नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥
नु । स्तुतः । इंद्र । नु । गृणानः । इषं । जरित्रे । नद्यः । न । पीपरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यं । धिया । स्याम । रथ्यः । सदाऽसाः ॥११॥

पूर्वं व्याख्याता ॥ ॥८॥

कथा महामित्येकादशर्चं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैंद्रं । ऋतस्य हीत्याद्यास्तिस्र ऋतदेवताका वा । तथा चानुक्रांतं । कथोपांत्यास्तिस्र ऋतदेव्यो वेति ॥ आभिप्लविकेऽहनि दशरात्रे प्रथमेऽहनि माध्यंदिनसवने मैत्रावरुणशस्त्रेऽहीनसूक्तस्य स्थाने इदं तृतीयं संपातसूक्तं । सूत्रितं च । कथा महामिंद्रः पूर्भिद्य एकं इतं । आ॰ ७.५. । इति ॥ महाव्रते निष्केवल्य एतत् । तथैव पंचमारण्यके शौनकेन सूत्रितं च । कथा महामवृधत्कस्य होतुरिति संपातः । ऐ॰ आ॰ ५ २ २ । इति ॥

कथा महामवृधत्कस्य होतुर्यज्ञं जुषाणो अभि सोममूधः ।
पिबन्नुशानो जुषमाणो अंधो ववक्ष ऋष्वः शुचते धनाय ॥१॥
कथा । महां । अवृधत् । कस्य । होतुः । यज्ञं । जुषाणः । अभि । सोमं । ऊधः ।
पिबन् । उशानः । जुषमाणः । अंधः । ववक्षे । ऋष्वः । शुचते । धनाय ॥१॥

महां महांतं गुणैः प्रवृद्धमिंद्रं कथा कथं केन प्रकारेणावृधत । वर्धयेत । अस्मत्प्रेरिता स्तुतिरिति शेषः । तस्य महिम्नोऽतिमहत्त्वादिति भावः । स एवंद्रो होतुर्होमनिष्पादकस्य कस्य यजमानस्य यज्ञं यागं जुषाणः प्रीयमाणः सन् अभि । गच्छेदिति शेषः । उपसर्गश्रुतेर्योचितक्रियाध्याहारः । किंच ऊधः उद्धतमतिप्रवृद्धं सोममंधः सोमलक्षणमन्नं पिबन्नास्वादयन् उशानस्तदेवान्नं कामयमानो जुषमाणः सेवमानश्च ऋष्वो महानिंद्रः शुचते प्रदीप्ताय धनाय हिरण्यादिलक्षणाय । उक्तलक्षणं धनं कस्मै यजमानाय दातुं ववक्षे । वहति । पीतमेवान्नं जठरे धारयति । अनेन वाक्यद्वयेनेंद्रस्याचिंत्यचरितत्वं ख्यापितं भवति ॥

को अस्य वीरः सधमादमाप समानंश सुमतिभिः को अस्य ।
कदस्य चित्रं चिकिते कदूती वृधे भुवच्छशमानस्य यज्योः ॥२॥
कः । अस्य । वीरः । सधऽमादं । आप । सं । आनंश । सुमतिऽभिः । कः । अस्य ।
कत् । अस्य । चित्रं । चिकिते । कत् । ऊती । वृधे । भुवत् । शशमानस्य । यज्योः ॥२॥

अस्येंद्रस्य संबंधिनं सधमादं । सह माद्यंतीति सधमादः संग्रामः । तं सह सोमपानं वा वीरः स्तोत्राणाममित्राणां वा वीरयिता कः पुमानाप । प्राप्नोति । कश्चास्येंद्रस्य सुमतिभिः शोभनाभिरनुग्रहबुद्धिभिः समानंश । संगच्छते । कत्कदा वास्येंद्रस्य चित्रं चायनीयं धनं चिकिते । प्रज्ञायते । तत्प्रदानसमयं न कोऽपि जानातीत्यर्थः । कत्कदा वा शशमानस्य स्तुवतो यज्योर्यष्टुर्यजमानस्य वृधे वर्धनायोती ऊत्या रक्षया भुवत् । भवेत् ॥

कथा शृणोति हूयमानमिंद्रः कथा शृण्वन्नवसामस्य वेद ।
का अस्य पूर्वीरुपमातयो ह कथैनमाहुः पपुरिं जरित्रे ॥३॥
कथा । शृणोति । हूयमानं । इंद्रः । कथा । शृण्वन् । अवसां । अस्य । वेद ।
काः । अस्य । पूर्वीः । उपऽमातयः । ह । कथा । एनं । आहुः । पपुरिं । जरित्रे ॥३॥

इंद्रः परमैश्वर्ययुक्तो हूयमानमाह्वयंतं स्तोतारं कथा कथं शृणोति । स्तोत्राणि शृण्वन्नस्य स्तोतुः संबंधीन्यवसा रक्षणानि कथा कथं च वेद । वेत्ति । पूर्वीः पुरातनान्यस्येंद्रस्य संबंधीन्युपमातयो दानानि का ह । कानि चित् संतीति शेषः । तानि दानानि जरित्रे स्तोतुः संबंधिना कामाना पपुरिं पूरयितारमेनमिंद्रं कथा कथं चाहुः । वदंति ॥

कथा सबाधः शशमानो अस्य नशदभि द्रविणं दीध्यानः ।
देवो भुवन्नवेदा म ऋतानां नमो जगृभ्वाँ अभि यज्जुजोषत् ॥४॥
कथा । सऽबाधः । शशमानः । अस्य । नशत् । अभि । द्रविणं । दीध्यानः ।
देवः । भुवत् । नवेदाः । मे । ऋतानां । नमः । जगृभ्वान् । अभि । यत् । जुजोषत् ॥४॥

सबाधः सपत्नानां पीडासहितः शशमान इंद्रविषयां स्तुतिं कुर्वन् दीध्यानः कर्मभिर्दीप्यमानो यजमानोऽस्येंद्रस्य संबंधि द्रविणं पश्वादिधनं कथा कथमभि नशत् । अभिप्राप्नोति । नमो हविर्लक्षणमन्नं जगृभ्वान् गृहीतवानिंद्रो यद्यदाभि जुजोषत् मामभिसेवेत तदा देवो दीप्यमान इंद्रो मे मदीयानामृतानां स्तोत्राणां नवेदा अतिशयेन ज्ञाता भुवत् । भवेत् । अत्र निपातस्थो नकारोऽतिशयवाची ॥

कथा कदस्या उषसो व्युष्टौ देवो मर्तस्य सख्यं जुजोष ।
कथा कदस्य सख्यं सखिभ्यो ये अस्मिन्कामं सुयुजं ततस्रे ॥५॥
कथा । कत् । अस्याः । उषसः । विऽउष्टौ । देवः । मर्तस्य । सख्यं । जुजोष ।
कथा । कत् । अस्य । सख्यं । सखिऽभ्यः । ये । अस्मिन् । कामं । सुऽयुजं । ततस्रे ॥५॥

देवो द्योतमान इंद्रोऽस्या उषसो व्युष्टौ प्रभाते मर्तस्य मर्त्यस्य मनुष्यस्य स्तोतुः संबंधि सख्यं सखिकर्म कथा कथं केन प्रकारेण कत्कदा जुजोष । सेवेत । ये स्तोतारोऽस्मिन्निंद्रे सुयुजं सुष्ठु प्रयुज्यमानं कामं कामयितव्यं हविः स्तोत्रं च ततस्रे वितेनिरे अस्येंद्रस्य सख्यं सखिकर्म सखिभ्यः स्तोतृभ्यः कथा कथं कत्कदाचित् । भवेदिति शेषः ॥ ॥ ९ ॥

किमादमत्रं सख्यं सखिभ्यः कदा नु ते भ्रात्रं प्र ब्रवाम ।
श्रिये सुदृशो वपुरस्य सर्गाः स्वर्ण चित्रतममिष आ गोः ॥६॥
किं । आत् । अमत्रं । सख्यं । सखिऽभ्यः । कदा । नु । ते । भ्रात्रं । प्र । ब्रवाम ।
श्रिये । सुऽदृशः । वपुः । अस्य । सर्गाः । स्वः । न । चित्रऽतमं । इषे । आ । गोः ॥६॥

हे इंद्र वयं यजमानास्त्वदीयममत्रं शत्रूनभिभावुकं सख्यं सखिकर्म सखिभ्यः स्तोतृभ्यः किमात् किं स्वित् प्र ब्रवाम । प्रकर्षेण वदेम । ते त्वदीयं भ्रात्रं भ्रातृकर्म च कदा नु कदा खलु प्र ब्रवाम । सुदृशः शोभनदर्शनस्यास्येंद्रस्य सर्वाधिनः सर्गा उद्योगाः श्रिये सर्वेषां स्तोतॄणां श्रेयसे । भवंतीति शेषः । स्वर्ण सूर्यो यथा दर्शनीयतमस्तथा गोर्गंतुरिंद्रस्य चित्रतमं दर्शनीयतमं वपुः शरीरमिषे । आ समंतात्सर्वैरिष्यते ॥

द्रुहं जिघांसन्ध्वरसमनिंद्रां तेतिक्ते तिग्मा तुजसे अनीका ।
ऋणा चिद्यत्र ऋणया न उग्रो दूरे अज्ञाता उषसो बबाधे ॥७॥
द्रुहं । जिघांसन् । ध्वरसं । अनिंद्रां । तेतिक्ते । तिग्मा । तुजसे । अनीका ।
ऋणा । चित् । यत्र । ऋणऽयाः । नः । उग्रः । दूरे । अज्ञाताः । उषसः । बबाधे ॥७॥

अयमिंद्रो द्रुहं द्रोहं कुर्वतीं ध्वरसं हिंसिकामनिंद्रामिंद्रमजानतीं राक्षसीं जिघांसन् हंतुमिच्छन् तिग्मा तिग्मानि पूर्वमेव तीक्ष्णान्यनीकानीकान्यायुधानि तुजसे तद्वधाय तेतिक्ते । अत्यर्थं तीक्ष्णीकरोति । यत्र यास्मूषःसु तदुपलक्षितेष्वहःसु ऋणा चित् ऋणान्यपि नोऽस्मान्बाधंत इति शेषः । ता उषसश्चोग्र उद्गूर्णबल ऋणया ऋणस्य हंतेंद्रः । यातिर्वधकर्मा । दूरेऽज्ञाता अननुभूताः सतीर्बबाधे । अपीडयत् ॥

ऋतेपयनाम्न्येकाहे मरुत्वतीयनिष्केवल्यशस्त्रयोर्निविद्धानात्पुरस्तादृतस्येत्येतदादिके द्वे ऋचौ क्रमेण शंसनीये । सूत्रितं च । ऋतस्य हि शुरुधः संति पूर्वीरिति सूक्तमुखीये । आ० ९. ५ । इति ॥

ऋतस्य हि शुरुधः संति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हंति ।
ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥८॥

ऋतस्य । हि । शुरुधः । संति । पूर्वीः । ऋतस्य । धीतिः । वृजिनानि । हंति ।
ऋतस्य । श्लोकः । बधिरा । ततर्द । कर्णा । बुधानः । शुचमानः । आयोः ॥ ८ ॥

अत्र ऋतशब्देनेंद्रो वादित्यो वा सत्यं वा यज्ञो वोच्यते ॥ ऋतस्य ऋतदेवस्य संबंधिन्यः पूर्वीर्बह्व्यः शुरुध आपः संति हि । भवंति खलु । ऋतस्य ऋतदेवस्य संबंधिनी धीतिः प्रज्ञा तद्विषया स्तुतिर्वा वृजिनानि वर्जनीयानि पापानि हंति । हिनस्ति । ऋतस्य ऋतदेवस्य संबंधिनी श्लोकः स्तुतिरूपा वागायोर्गंतुर्मनुष्यस्य संबंधिनी बधिरा बधिरौ प्रतिबद्धौ कर्णा कर्णौ ततर्द । तृणत्ति । कीदृशः श्लोकः । बुधानो बुध्यमानः शुचमानो दीप्यमानः ॥

ऋतस्य दृळ्हा धरुणानि संति पुरूणि चंद्रा वपुषे वपूंषि ।
ऋतेन दीर्घमिषणंत पृक्ष ऋतेन गाव ऋतमा विवेशुः ॥ ९ ॥
ऋतस्य । दृळ्हा । धरुणानि । संति । पुरूणि । चंद्रा । वपुषे । वपूंषि ।
ऋतेन । दीर्घं । इषणंत । पृक्षः । ऋतेन । गावः । ऋतं । आ । विवेशुः ॥ ९ ॥

वपुषे वपुष्मतः । षष्ठ्यर्थे चतुर्थी । ऋतस्य ऋतदेवस्य संबंधीनि दृळ्हा दृढानि धरुणानि धारकाणि पुरूणि बहूनि चंद्रा चंद्राण्याह्लादकानि वपूंषि रूपाणि संति । भवंति । ऋतेन ऋतदेवेन दीर्घमत्यधिकं पृक्षोऽन्नमिषणंत । स्तोतार इच्छंति । ऋतेन ऋतदेवेन गावो धेनव ऋतं यज्ञं दक्षिणात्वेना विविशुः । प्रविशंति । यद्वा । गावो रश्मय ऋतमुदकमा विविशुः ॥

ऋतं येमान ऋतमिद्वनोत्यृतस्य शुष्मस्तुरया उ गव्युः ।
ऋताय पृथ्वी बहुले गभीरे ऋताय धेनू परमे दुहाते ॥ १० ॥
ऋतं । येमानः । ऋतं । इत् । वनोति । ऋतस्य । शुष्मः । तुरऽयाः । ऊं इति । गव्युः ।
ऋताय । पृथ्वी इति । बहुले इति । गभीरे इति । ऋताय । धेनू इति । परमे इति ।
दुहाते इति ॥ १० ॥

ऋतमृतदेव येमानो नियच्छन स्तुतिभिर्वशीकुर्वन स्तोता ऋतमित ऋतदेवमेव वनोति । संभजते । ऋतस्य ऋतदेवस्य संबंधि शुष्मो बल तुरयास्तूर्णं गव्युः । उ इति चार्थे । जलकामश्च भवति । बहुले विस्तीर्णे गभीरे दूरवगाहे पृथ्वी द्यावापृथिव्यावृताय ऋतदेवाय भवतः । धेनू प्रीणयित्र्यौ परमे उत्कृष्टे द्यावापृथिव्यावृताय ऋतदेवायैव दुहाते । दोहनं कुर्वाते ॥

नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥
नु । स्तुतः । इंद्र । नु । गृणानः । इषं । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यं । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

पूर्वं व्याख्याता ॥ ॥ १० ॥

का सुष्टुतिरित्येकादशर्चं तृतीयं सूक्तं वामदेवस्यार्षमैंद्रं । दशम्यनुष्टुप शिष्टास्त्रिष्टुभः । तथा चानुक्रमणिका । का सुष्टुतिरूपात्यानुष्टुबिति । विनियोगो लैंगिकः ॥

का सुष्टुतिः शवसः सूनुमिंद्रमर्वाचीनं राधस आ ववर्तत् ।
ददिर्हि वीरो गृणते वसूनि स गोपतिर्निष्षिधां नो जनासः ॥१॥

का । सुऽस्तुतिः । शवसः । सूनुं । इंद्रं । अर्वाचीनं । राधसे । आ । ववर्तत् ।
ददिः । हि । वीरः । गृणते । वसूनि । सः । गोऽपतिः । निःऽसिधां । नः । जनासः ॥१॥

का कीदृशी सुष्टुतिः शवसः सूनुं बलस्य पुत्रं । अतिबलिनमित्यर्थः । अर्वाचीनमस्मदभिमुखमिंद्रं परमैश्वर्ययुक्तं राधसे धनायास्मभ्यं धनं दातुमा ववर्तत । आवर्तयेत । हे जनासो जना यजमाना वीरो विक्रांतो गोपतिः पश्वादिधनस्य पालकः स इंद्रो निष्षिधां निष्षेद्धॄणां शत्रूणां संबंधीनि वसूनि धनानि गृणते गृणद्भ्यः स्तोतृभ्यो नोऽस्मभ्यं ददिर्हि । दाता खलु भवति ॥

स वृत्रहत्ये हव्यः स ईड्यः स सुष्टुत इंद्रः सत्यराधाः ।
स यामन्ना मघवा मर्त्याय ब्रह्मण्यते सुष्वये वरिवो धात ॥२॥

सः । वृत्रऽहत्ये । हव्यः । सः । ईड्यः । सः । सुऽस्तुतः । इंद्रः । सत्यऽराधाः ।
सः । यामन् । आ । मघऽवा । मर्त्याय । ब्रह्मण्यते । सुस्वये । वरिवः । धात ॥२॥

स इंद्रो वृत्रहत्ये वृत्राणां शत्रूणां हत्ये हनने निमित्तभूते सति यामन्युद्धे हव्य आह्वातव्यो भवति । स इंद्र ईड्यः स्तुत्यो भवति । स इंद्रः सुष्टुतः सन् सत्यराधा यजमानेभ्यो दातुं सत्यधनो भवति । मघवा धनवान् स इंद्रो ब्रह्मण्यते स्तोत्रमिच्छते सुष्वये सोमं सुन्वते मर्त्याय मनुष्याय यजमानाय वरिवो धनं । वरिव इति धननामैतत् । आ धात । आ समंताद्ददाति ॥

तमिन्नरो वि ह्वयंते समीके रिरिक्वांसस्तन्वः कृण्वत त्रां ।
मिथो यत्त्यागमुभयासो अग्मन्नरस्तोकस्य तनयस्य साता ॥३॥

तं । इत् । नरः । वि । ह्वयंते । सम्ऽईके । रिरिक्वांसः । तन्वः । कृण्वत । त्रां ।
मिथः । यत् । त्यागं । उभयासः । अग्मन् । नरः । तोकस्य । तनयस्य । साता ॥३॥

नरो नेतारो मनुष्याः समीके युद्धे तमित्तमेवेंद्रं वि ह्वयंते । विविधमाह्वानं कुर्वते । तन्व स्वकीयानि शरीराणि रिरिक्वांसस्तपसा रेचयंतो यजमानास्तमेवेंद्रं त्रां त्रातारं कृण्वत । कृण्वते । कुर्वते । यद्यदा मिथः परस्परं संगता उभयास उभये यजमानाः स्तोतारश्च त्यागं त्यागकर्तारं दातारमिंद्रमग्मन् उपगच्छंति तदा नर उभयविधा मनुष्यास्तोकस्य पुत्रस्य तनयस्य पौत्रस्य च साता लाभे निमित्तभूते सति तमेवेंद्रं त्रातारं कुर्वतीति संबंधः ॥

क्रतूयंति क्षितयो योग उग्राशुषाणासो मिथो अर्णसाता ।
सं यद्विशोऽववृत्रंत युध्मा आदिन्नेम इंद्रयंते अभीके ॥४॥

क्रतुऽयंति । क्षितयः । योगे । उग्र । आशुषाणासः । मिथः । अर्णऽसाता ।
सं । यत् । विशः । अववृत्रंत । युध्माः । आत् । इत् । नेमे । इंद्रयंते । अभीके ॥४॥

हे उग्रोद्गूर्णबलेंद्र आशुषाणासो व्याप्नुवतः क्षितयो मनुष्याः । क्षितय इति मनुष्यनामैतत् । अर्णसाता सस्यादिफलसिद्ध्यर्थमुदकलाभे निमित्ते सति मिथः परस्परं योगे संबंधे सति क्रतूयंति । क्रतून् कर्माणीच्छंति ।

यद्यदा युध्मा योधयितारो विशः प्रजा अभीके युद्धे। अभीक इति संग्रामनामैतत्। समवृत्रंत संवर्तंते परस्परं संगच्छंते आदित् तदानीमेव नेमं केचन भाग्यवतो योधका इंद्रयंते। युद्ध इंद्रमिच्छंति ॥

आदिद्ध नेमं इंद्रियं यजंत आदित्पक्तिः पुरोळाशं रिरिच्यात्।
आदित्सोमो वि पपृच्यादसुष्वीनादिज्जुजोष वृषभं यजध्यै ॥५॥
आत्। इत्। ह। नेमे। इंद्रियं। यजंते। आत्। इत्। पक्तिः। पुरोळाशं। रिरिच्यात्।
आत्। इत्। सोमः। वि। पपृच्यात्। असुस्वीन्। आत्। इत्। जुजोष। वृषभं। यजध्यै ॥५॥

आदित्तदानीमेव युद्धकाले नेमेऽन्ये योधा इंद्रियं बलवंतमिंद्रं यजंते ह। पूजयंति खलु। कश्चिदादिदनंतरमेव पुरोळाशं पिष्टरूपं हविः पक्तिः पचन् रिरिच्यात्। इंद्राय दद्यात्। आदिदनंतरमेव सोमोऽभिषुतसोमो यजमानोऽसुष्वीननभिषुतसोमान्यजमानान्वि पपृच्यात्। धनं पृथक्कुर्यात्। आदिदनंतरमेव कश्चिद्वृषभं कामाना वर्षितारमिंद्रं यजध्यै यष्टुं जुजोष। सेवते ॥ ॥११॥

कृणोत्यस्मै वरिवो य इत्थेंद्राय सोममुशते सुनोति।
सध्रीचीनेन मनसाविवेनं तमित्सखायं कृणुते समत्सु ॥६॥
कृणोति। अस्मै। वरिवः। यः। इत्था। इंद्राय। सोमं। उशते। सुनोति।
सध्रीचीनेन। मनसा। अविऽवेनं। तं। इत्। सखायं। कृणुते। समत्ऽसु ॥६॥

यो यजमानः सोममुशते कामयमानायेत्थामुत्र स्वर्गलोके स्थितायेंद्राय सुनोति अभिषवं करोति इंद्रोऽप्यस्मै यजमानाय वरिवो धनं कृणोति। करोति। सध्रीचीनेन संगतेन मनसा प्रवणेन चित्तेनाविवेनं। वेनतिः कांतिकर्मा। विवेनो विगतेच्छः। तदन्योऽविवेनः। आत्मानं कामयमानं तमित्तमेव सुन्वंतं यजमानं सखायं मित्रं समत्सु संग्रामेष्विंद्रः कृणुते। करोति ॥

य इंद्राय सुनवत्सोममद्य पचात्पक्तीरुत भृज्जाति धानाः।
प्रति मनायोरुचथानि हर्यन्तस्मिन्दधद्वृषणं शुष्ममिंद्रः ॥७॥
यः। इंद्राय। सुनवत्। सोमं। अद्य। पचात्। पक्तीः। उत। भृज्जाति। धानाः।
प्रति। मनायोः। उचथानि। हर्यन्। तस्मिन्। दधत्। वृषणं। शुष्मं। इंद्रः ॥७॥

अद्यास्मिन्दिवसे यो यजमान इंद्राय परमैश्वर्ययुक्ताय देवाय सोमं सोमलक्षणमन्नं सुनवत् सुनुयात् अभिषवं कुर्यात्। तथा यः पक्तीः पक्तव्यांश्च पुरोडाशादीन्पचात् पचेत् पचनं कुर्यात्। उतापि च यो धाना भर्जनयोग्यान्यवान्। अत्र भृष्टयववाची धानाशब्दस्तद्योग्यं यवमात्रं लक्षयति। भृज्जाति भृज्जेत् भर्जनं कुर्यात्। इंद्रो मनायोः स्तुतिमिच्छतो यजमानस्योचथानि स्तोत्राणि प्रति हर्यन् प्रतिकामयमानः सन् तस्मिन्यजमाने वृषणं कामाना वर्षणसमर्थं शुष्मं बलं दधत्। धारयति ॥

यदा समर्यं व्यचेदृघावा दीर्घं यदाजिमभ्यख्यदर्यः।
अचिक्रदद्वृषणं पत्न्यच्छा दुरोण आ निशितं सोमसुद्भिः ॥८॥
यदा। सऽमर्यं। वि। अचेत्। ऋघावा। दीर्घं। यत्। आजिं। अभि। अख्यत्। अर्यः।
अचिक्रदत्। वृषणं। पत्नी। अच्छ। दुरोणे। आ। निऽशितं। सोमसुत्ऽभिः ॥८॥

यदा ऋघावा शत्रूणां हिंसक इंद्रः समर्यं सह मर्तव्यं शत्रुं व्यचेत व्यख्यासीत विशेषेण जानीयात । यद्यदार्यः स्वामींद्रो दीर्घमत्यधिकमाजिं संग्राममभ्याख्यत अभिपश्यत तदा तस्येंद्रस्य पत्नी दृषोणि यज्ञगृहे सोमसुद्भिः सोमं सुन्वद्भिर्ऋत्विग्भिर्निशितं तीक्ष्णीकृतं । सोमपानेनोत्साहवतमित्यर्थः । वृषणं कामानां वर्षितारमिंद्रमच्छाभि आचिक्रदत । आक्रंदति । आह्वयते ॥

**भूयसा वस्नमचरत्कनीयोऽविक्रीतो अकानिषं पुनर्यन् ।**
**स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहंति प्र वाणं ॥९॥**
**भूयसा । वस्नं । अचरत् । कनीयः । अविऽक्रीतः । अकानिषं । पुनः । यन् ।**
**सः । भूयसा । कनीयः । न । अरिरेचीत् । दीनाः । दक्षाः । वि । दुहंति । प्र । वाणं ॥९॥**

अत्र ऋग्द्वये संप्रदायविद्भिः पूर्वाचार्यैः केचित् श्लोकाः पठ्यंते । त एव लिख्यंते ॥ अल्पं यः परिगृह्णाति मूल्यं पण्येन भूयसा । स क्रेतारं पुनर्गच्छन्न विक्रीतमिदं मया ॥ इति ब्रुवन्कामयते पुनर्मूल्यस्य पूरणं । स विक्रेता पुनर्मूल्यं भूयसा न प्रपूरयेत् ॥ हीनं न लभते वस्नं यदा विक्रीतवान्पुरा । यथासमयमेव स्यात्तयोर्न पुनरन्यथा ॥ अयं विक्रय एवेति समयश्चेत्कृतो भवेत् । अथ मूल्यार्थमेतस्याद्विचार्येव तु निर्णयः ॥ इत्येव समयोऽकारि तदा मूल्यं प्रपूर्यते । तस्मादादौ मया कार्यः समयोऽत्रेति चिंतयन् ॥ वामदेवो वशीकृत्य शक्रं स्तोत्रेण भूयसा । विक्रीणन् समयं चक्रे इंद्रं क इममित्यृचि ॥ अतश्च तृच एकार्थो भूयसा वस्नमित्ययमिति ॥ अयमर्थः प्रतिपाद्यते । कश्चिद्भूयसा भूम्ना पण्येन द्रव्येण कनीयोऽल्पतरं वस्नं वसु मूल्यं धनमचरत् । प्राप्नोति । पुनर्यन् क्रेतारं पुनर्गच्छन् स विक्रेतायमर्थो मयाविक्रीत इति ब्रुवन्नकानिषं । मूल्यपूर्तिं कामयते ॥ व्यत्ययेनोत्तमपुरुषः ॥ स विक्रेता भूयसा धनेन कनीयोऽल्पतरं मूल्यं नारिरेचीत् । क्रेतुः सकाशान्न रिक्तीकरोति । न लभत इत्यर्थः । दीना असमर्था दक्षाः समर्थाश्च वाणं वचनं वि प्र दुहंति । यथोक्तं क्रयकाले तथैव लभंते ॥

**क इमं दशभिर्ममेंद्रं क्रीणाति धेनुभिः । यदा वृत्राणि जंघनदथैनं मे पुनर्ददत् ॥१०॥**
**कः । इमं । दशऽभिः । मम । इंद्रं । क्रीणाति । धेनुऽभिः । यदा । वृत्राणि । जंघनत् ।**
**अथ । एनं । मे । पुनः । ददत् ॥१०॥**

मम मदीयमिमं स्वभूतमिंद्रं धेनुभिः प्रीणयित्रीभिर्दशभिर्दशसंख्याकाभिः स्तुतिभिः कः क्रीणाति । क्रयं करोति । तदानीं हे क्रेतारो युष्माकं मध्ये एवमपि समयः क्रियते । यदायमिंद्रो वृत्राणि त्वदीयान् शत्रून् जघनत् हन्यात् अथानंतरमेवैनमिंद्रं मे मह्यं पुनर्ददत् । पुनर्दद्यात् ॥

**नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।**
**अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥**
**नु । स्तुतः । इंद्र । नु । गृणानः । इषं । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।**
**अकारि । ते । हरिऽवः । ब्रह्म । नव्यं । धिया । स्याम । रथ्यः । सदाऽसाः ॥११॥**

पूर्वं व्याख्याता ॥ ॥१२॥

को अद्येत्यष्टर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैंद्रं । तथा चानुक्रांतं । को अद्याष्टाविति ॥ दशरात्रे चतुर्थेऽहनि माध्यंदिने सवने स्तोमवृद्धौ मैत्रावरुणशस्त्र आरंभणीयाया उपरिष्टादिदं सूक्तमावपनीयं च । सूत्रितं च । स्तोमे वर्धमाने को अद्य नर्यः । आ० ७ १२ । इति ॥

**को अद्य नर्यो देवकाम उशन्निंद्रस्य सख्यं जुजोष ।**
**को वा महेऽवसे पार्याय समिद्धे अग्नौ सुतसोम ईट्टे ॥१॥**

कः । अद्य । नर्यः । देवऽकामः । उशन् । इंद्रस्य । सख्यं । जुजोष ।
कः । वा । महे । अवसे । पार्याय । संऽइद्धे । अग्नौ । सुतऽसोमः । ईट्टे ॥१॥

अद्यास्मिन्दिवसे नर्यो मनुष्यहितो देवकामो देवानिच्छन् उशन् कामयमानः को यजमान इंद्रस्य सख्यं सखित्वं जुजोष । सेवते । किंच सुतसोमोऽभिषुतसोमः को वा यजमानोऽग्नौ समिद्धे प्रज्वलिते सति महे महते प्रवृद्धाय पार्याय पारमर्हतेऽवसे तर्पणायेट्टे । इंद्रं स्तौति ॥

को नानाम वचसा सोम्याय मनायुर्वा भवति वस्त उस्राः ।
क इंद्रस्य युज्यं कः सखित्वं को भ्रात्रं वष्टि कवये क ऊती ॥२॥
कः । ननाम । वचसा । सोम्याय । मनायुः । वा । भवति । वस्ते । उस्राः ।
कः । इंद्रस्य । युज्यं । कः । सखिऽत्वं । कः । भ्रात्रं । वष्टि । कवये । कः । ऊती ॥२॥

को यजमानो वचसा वाग्रूपया स्तुत्या सोम्याय सोमार्हायेंद्राय ननाम । नमति । प्रह्वीभवति । को वेंद्राय मनायुर्भवति । स्तुतिकामोऽस्ति । क उस्रा इंद्रेण दत्ता गा वस्ते । आच्छादयति । धारयतीत्यर्थः । क इंद्रस्य युज्यं साहाय्यं वष्टि । इच्छति । कः सखित्वं कः भ्रात्रं भ्रातृभावं वष्टि । इच्छति । कवये क्रांतदर्शिन इंद्रायोती ऊतये तर्पणाय । को भवतीति शेषः ॥

को देवानामवो अद्या वृणीते क आदित्याँ अदितिं ज्योतिरीट्टे ।
कस्याश्विनाविंद्रो अग्निः सुतस्यांशोः पिबंति मनसाविवेनं ॥३॥
कः । देवानां । अवः । अद्य । वृणीते । कः । आदित्यान् । अदितिं । ज्योतिः । ईट्टे ।
कस्य । अश्विना । इंद्रः । अग्निः । सुतस्य । अंशोः । पिबंति । मनसा । अविऽवेनं ॥३॥

अद्यास्मिन्दिने को यजमानो देवानां द्योतमानानामिंद्रादीनामवो रक्षणं वृणीते । प्रार्थयते । क आदित्यान्देवानदितिं देवमातरं च ज्योतिरुदकं चेट्टे । याचते । अश्विनावश्विदेवाविंद्रश्चाग्निश्च मनसा स्तुत्या प्रीताः संतोऽविवेनमविगतकामं । यथाकाममित्यर्थः । कस्य यजमानस्य संबंधिनं सुतस्याभिषुतस्यांशोः सोमस्य । सोममित्यर्थः । पिबंति । पानं कुर्वंति ॥

तस्मा अग्निर्भारतः शर्म यंसज्ज्योक्पश्यात्सूर्यमुच्चरंतं ।
य इंद्राय सुनवामेत्याह नरे नर्याय नृतमाय नृणां ॥४॥
तस्मै । अग्निः । भारतः । शर्म । यंसत् । ज्योक् । पश्यात् । सूर्यं । उत्ऽचरंतं ।
यः । इंद्राय । सुनवाम । इति । आह । नरे । नर्याय । नृऽतमाय । नृणां ॥४॥

भारतो हविषो भर्ताग्निः । प्राणो भूत्वा प्रजा धारयन् भारत इति वाजसनेयकं । अग्निस्तस्मै यजमानाय शर्म सुखं यंसत् । यच्छतु । किंच अयमग्निर्ज्योक् चिरकालमुच्चरंतमुद्यंतं सूर्यं पश्यात् । पश्यतु । यो यजमान इंद्राय सुनवामेत्याह इंद्रार्थं सोमाभिषवं कुर्यामिति ब्रवीति । कीदृशायेंद्राय । नरे नेत्रे नर्याय नरहिताय नृणां नराणां नेतॄणां मध्ये नृतमाय नेतृतमाय ॥

न तं जिनंति बहवो न दभ्रा उर्वस्मा अदितिः शर्म यंसत् ।
प्रियः सुकृत्प्रिय इंद्रे मनायुः प्रियः सुप्रावीः प्रियो अस्य सोमी ॥५॥

न । तं । जिनंति । बहवः । न । दभ्राः । उरु । अस्मै । अदितिः । शर्म । यंसत् ।
प्रियः । सुऽकृत् । प्रियः । इंद्रे । मनायुः । प्रियः । सुप्रऽअवीः । प्रियः । अस्य । सोमी ॥५॥

दभ्रा अल्पा बहवो न बहवोऽपि शत्रुजनास्तं यजमानं न जिनंति । न हिंसंतु । य इंद्राय सुनवामेत्याह तमिति पूर्वेण संबंधः । अदितिरिंद्रमातास्मै यजमानायोरु विस्तीर्णं शर्म सुखं यंसत् । यच्छतु । किंच इंद्रे इंद्राय सुकृत् शोभनयागादीनां कर्ता यजमानः प्रियो भवति । मनायुरिंद्रविषयस्तुतिकामश्चास्येंद्रस्य प्रियो भवति । सुप्रावीः सुष्ठु प्राविता सुष्ठु प्रगच्छन्नुपगच्छन्वा यजमानोऽस्येंद्रस्य प्रियो भवति । सोमी सोमवान्यजमानोऽस्येंद्रस्य प्रियो भवति ॥ ॥१३॥

सुप्राव्यः प्राशुषाळेष वीरः सुष्वेः पक्तिं कृणुते केवलेंद्रः ।
नासुष्वेरापिर्न सखा न जामिर्दुष्प्राव्योऽवहंतेदवाचः ॥६॥
सुप्रऽअव्यः । प्राशुषाट् । एषः । वीरः । सुस्वेः । पक्तिं । कृणुते । केवला । इंद्रः ।
न । असुस्वेः । आपिः । न । सखा । न । जामिः । दुःप्रऽअव्यः । अवऽहंता । इत् । अवाचः ॥६॥

प्राशुषाट् शत्रूणां प्रकर्षेण शीघ्रमभिभविता वीरो विक्रांत एष इंद्रः सुप्राव्यः सुष्ठूपगच्छतो हविर्भिः सुष्ठु प्रतर्पयितुर्वा सुष्वेः सुन्वतो यजमानस्य संबंधिनीं केवला केवलामसाधारणां पक्तिं कृणुते । आत्मनः कुरुते । किंचेंद्रोऽसुष्वेरसुन्वतो यजमानस्यापिर्व्याप्तो न भवति । इंद्रोऽयजमानस्य सखा न भवति । जामिर्बंधुश्च न भवति । अपि च दुष्प्राव्यो दुरुपगमनस्यावाचः स्तुतिरहितस्य पुरुषस्यावहंतेत् हिंसितैव भवति ॥

न रेवता पणिना सख्यमिंद्रोऽसुन्वता सुतपाः सं गृणीते ।
आस्य वेदः खिदति हंति नग्नं वि सुष्वये पक्तये केवलो भूत् ॥७॥
न । रेवता । पणिना । सख्यं । इंद्रः । असुन्वता । सुतऽपाः । सं । गृणीते ।
आ । अस्य । वेदः । खिदति । हंति । नग्नं । वि । सुस्वये । पक्तये । केवलः । भूत् ॥७॥

सुतपा अभिषुतं सोमं पिबन्निंद्रो रेवता धनवता पणिना वणिजा लुब्धेनासुन्वता सोमाभिषवमकुर्वताऽयजमानेन सह सख्यं सखित्वं न सं गृणीते । न संस्तौति । नानुमन्यत इत्यर्थः । किंच अस्यायजमानस्य नग्नं निरर्थकं वेदो धनं ज्ञानं वा आ खिदति । उद्धरति । हंति । हिनस्ति च । अपि च सुष्वये सोमं सुन्वते पक्तये हवींषि पचते यजमानाय केवलोऽसाधारणः सन् वि भूत् । विभवति ॥

इंद्रं परेऽवरे मध्यमास इंद्रं यांतोऽवसितास इंद्रं ।
इंद्रं क्षियंत उत युध्यमाना इंद्रं नरो वाजयंतो हवंते ॥८॥
इंद्रं । परे । अवरे । मध्यमासः । इंद्रं । यांतः । अवऽसितासः । इंद्रं ।
इंद्रं । क्षियंतः । उत । युध्यमानाः । इंद्रं । नरः । वाजयंतः । हवंते ॥८॥

परे उत्कृष्टा अवरे निकृष्टाश्च जना इंद्रं हवंते । आह्वयंति । मध्यमासो मध्यमाश्चेंद्रमेव हवंते । यांतः कार्यसिद्ध्यर्थं गच्छंतो जना इंद्रमेवाह्वयंति । अवसितासो निविष्टाश्चेंद्रमेवाह्वयंति । क्षियंतो गृहे निवसंतो जना इंद्रमेव हवंते । उतापि च युध्यमाना युद्धं कुर्वाणा जना जयार्थमिंद्रमेवाह्वयंति । वाजयंतो वाजमन्नमिच्छंतो नरो नेतारो मनुष्या इंद्रमेव हवंते ॥ ॥१४॥

अहं मनुरिति सप्तर्चं पंचमं सूक्तं वामदेवस्यार्षं । अत्रेयमनुक्रमणिका । अहं मनुः सप्ताद्याभिस्तिसृभिरिंद्रमिवात्मानमृषिरस्तौदिंद्रो वात्मानं परा सप्ताष्टौ वा श्येनस्तुतिरिति । अत्राह मनुरित्याद्याभिस्तिसृभिरात्मान

मिंद्ररूपेण वामदेवः स्तुतवान्। यद्वा। इंद्र एवात्मानं स्तुतवान्। अतो वामदेववाक्यपक्षे वामदेव ऋषिरिंद्रो देवता। इंद्रवाक्यपक्षे त्विंद्र ऋषिः परमात्मा देवता। त्रिष्टुप् छंदः। अवशिष्टानां वामदेव ऋषिः। अवशिष्टाभिरुत्तरसूक्तेन च सुपर्णात्मना ब्रह्म स्तूयते। अतस्तासां परब्रह्म देवता॥ श्येनसाम्न्येकाहे माध्यंदिनसवने मरुत्वतीयशस्त्र इदं सूक्तं। सूत्रितं च। श्येनाजिराभ्यामभिचरन्यजेताहं मनुर्गर्भे नु सन्। आ० ९. ७.। इति॥

अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः।
अहं कुत्समार्जुनेयं न्यृंजेऽहं कविरुशना पश्यता मा ॥१॥
अहं। मनुः। अभवं। सूर्यः। च। अहं। कक्षीवान्। ऋषिः। अस्मि। विप्रः।
अहं। कुत्सं। आर्जुनेयं। नि। ऋंजे। अहं। कविः। उशना। पश्यत। मा ॥१॥

इदमादिमंत्रत्रयेण गर्भे वसन्वामदेव उत्पन्नतत्त्वज्ञानः सन् सार्वात्म्यं स्वानुभवं मन्वादिरूपेण प्रदर्शयन्नाह। अहं वामदेव इंद्रो वा मनुरभवं। सर्वस्य मंता प्रजापतिरस्मि। अहमेव सूर्यश्च सर्वस्य प्रेरकः सविता चास्मि। विप्रो मेधावी कक्षीवान् दीर्घतमसः पुत्र एतत्संज्ञक ऋषिरप्यहमेवास्मि। आर्जुनेयमर्जुन्याः पुत्रं कुत्समेतन्नामकमृषिमहमेव न्यृंजे। नितरां प्रसाधयामि। कविः क्रांतदर्श्युशनैतदाख्य ऋषिरहमेवास्मि। उक्तमुपलक्षणं। परमार्थदृष्ट्या कृत्स्नमप्यहमेवास्मीत्यर्थः। हे जना मा मां सर्वात्मकं पश्यत। यूयमप्येवमेव मत्स्वरूपमनुभवतेत्युक्तं भवति॥

अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय।
अहमपो अनयं वावशाना मम देवासो अनु केतमायन् ॥२॥
अहं। भूमिं। अददां। आर्याय। अहं। वृष्टिं। दाशुषे। मर्त्याय।
अहं। अपः। अनयं। वावशानाः। मम। देवासः। अनु। केतं। आयन् ॥२॥

अहं वामदेव इंद्रो वा आर्याय मनवे भूमिं पृथ्वीमददां। दत्तवानस्मि। दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय वृष्टिं सस्याद्यभिवृद्ध्यर्थं वृष्टिलक्षणमुदकमहमेवाददां। किंच अहं वावशानाः शब्दायमाना अप उदकान्यनयं। सर्वमपि प्रदेशमगमयं। देवासो वह्न्यादयो देवा मम केतं मदीयं संकल्पमन्वायन्। अनुगच्छंति॥

अहं पुरो मंदसानो व्यैरं नव साकं नवतीः शंबरस्य।
शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावं ॥३॥
अहं। पुरः। मंदसानः। वि। ऐरं। नव। साकं। नवतीः। शंबरस्य।
शतऽतमं। वेश्यं। सर्वऽताता। दिवःऽदासं। अतिथिऽग्वं। यत्। आवं ॥३॥

अहं वामदेव इंद्रो वा मंदसानः सोमेन माद्यन्नव नवसंख्याका नवतीर्नवतिसंख्याकाश्च शंबरस्यैतन्नामकस्यासुरस्य संबंधीनि पुरः पुराणि साकं युगपदेव व्यैरं। अध्वंसयं। शततमं शतसंख्यापूरणं पुरं वेश्यं दिवोदासनाम्ने प्रवेशार्हमकरवं। सर्वताता सर्वताता यज्ञेऽतिथिग्वमतिथीनामभिगंतारं दिवोदासं दिवोदासनामकं राजर्षिं यदावं अपालयं। तदा पुरो व्यैरमिति पूर्वेण संबंधः॥

प्र सु ष विभ्यो मरुतो विरस्तु प्र श्येनः श्येनेभ्य आशुपत्वा।
अचक्रया यत्स्वधया सुपर्णो हव्यं भरन्मनवे देवजुष्टं ॥४॥

प्र । सु । सः । विऽभ्यः । मरुतः । विः । अस्तु । प्र । श्येनः । श्येनेभ्यः । आशुऽपत्वा ।
अचक्रया । यत् । स्वधया । सुऽपर्णः । हव्यं । भरत् । मनवे । देवऽजुष्टं ॥४॥

अथैतदादिभिः श्येनः स्तूयते । हे मरुतो वेगेन मरुत्सदृशाः पक्षिणः स प्रसिद्धः श्येनाख्यो विः पक्षी विभ्यः पक्षिभ्यो युष्मत्तः प्र सु अस्तु । बलेन प्रकृष्टो भवतु । किंच श्येनेभ्यः शंसनीयगमनेभ्यः स्वसमानजातिभ्यः पक्षिभ्यः सकाशादाशुपत्वाशुपतनः शीघ्रगामी श्येनः प्रकृष्टो भवतु । सुपर्णः शोभनपतनो यद्यदा श्येनोऽचक्रया चक्रवर्जितया स्वधया रथेन देवजुष्टं देवैः सेवितं हव्यं सोमलक्षणं हविर्मनवे प्रजापतये भरत अहरत द्युलोकसकाशादाहृतवान् । अत्र स्वधाशब्दो रथवाच्यचक्रया स्वधया वर्तमानमित्यादौ । ऋग्वे॰ १०. २७. १९ । दर्शनात् ॥

भरद्यदि विरतो वेविजानः पथोरुणा मनोजवा असर्जि ।
तूयं ययौ मधुना सोम्येनोत श्रवो विविदे श्येनो अत्र ॥५॥
भरत् । यदि । विः । अतः । वेविजानः । पथा । उरुणा । मनःऽजवाः । असर्जि ।
तूयं । ययौ । मधुना । सोम्येन । उत । श्रवः । विविदे । श्येनः । अत्र ॥५॥

यदि यदा विः पक्षी श्येनोऽतोऽमुष्माद्द्युलोकाद्वेविजानः सोमपालकान् भीषयन् भरत । अहरत । सोममाहृतवान् । तदोरुणा विस्तीर्णेन पथान्तरिक्षमार्गेण मनोजवा मनोवद्वेगयुक्तः सन् असर्जि । संसृष्ट आसीत् । सोम्येन सोममयेन मधुनान्नेन सह तूयं क्षिप्रं ययौ । जगाम । उतापि चात्रास्मिन् लोके श्येनः सुपर्णः श्रवः सोमाहरणनिमित्तं यशो विविदे । लेभे ॥

ऋजीपी श्येनो ददमानो अंशुं परावतः शकुनो मन्द्रं मदं ।
सोमं भरद्दादृहाणो देवावान्दिवो अमुष्मादुत्तरादादाय ॥६॥
ऋजीपी । श्येनः । ददमानः । अंशुं । पराऽवतः । शकुनः । मन्द्रं । मदं ।
सोमं । भरत् । दादृहाणः । देवऽवान् । दिवः । अमुष्मात् । उत्ऽतरात् । आऽदाय ॥६॥

ऋजीप्यृजुगामी परावतो दूरादंशुं सोमं ददमानो धारयन् श्येनः शंसनीयगमनो देववान्देवैः सहितः शकुनः पक्षी मन्द्रं मदनीयं स्तुत्यं मदं मदकरं सोममुत्तरादुद्गततरादमुष्माद्दिवो द्युलोकादादाय स्वीकृत्य दादृहाणो दृढीभवन् भरत । अहरत ॥

आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकं ।
अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा अमूरः ॥७॥
आऽदाय । श्येनः । अभरत् । सोमं । सहस्रं । सवान् । अयुतं । च । साकं ।
अत्र । पुरंऽधिः । अजहात् । अरातीः । मदे । सोमस्य । मूराः । अमूरः ॥७॥

श्येनः शंसनीयगमनः पक्षी सवान् सवानां यज्ञानां सहस्रं सहस्रसंख्याकमयुतं चायुतसंख्याकं । अपरिमितसंख्याकमित्यर्थः । साकं सह सोमं सोमलक्षणमन्नमादायादानं कृत्वाभरत । अहरत । आजहार । अत्रास्मिन् सोम आहृते सति पुरंधिः पुरंधीर्बहुकर्मामूरोऽमूढः प्राज्ञ इन्द्रः सोमस्य संबन्धिनि मदे हर्षे सति मूरा मूढा अरातीः शत्रूनजहात् । अत्यजत् । जघानेत्यर्थः ॥ अत्रारातिशब्दः स्त्रीलिंगः ॥ ॥७॥

गर्भे न्विति पंचर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभं। अंत्या शक्वरी षट्पंचाशदक्षरा। श्येनो देवता। पूर्वसूक्तेऽष्टौ वेत्युक्तत्वादंत्याया इंद्रो वा देवता। तथा चानुक्रांतं। गर्भे नु पंचांत्या शक्वरीति॥ श्येने निष्केवल्यशस्त्र इदं सूक्तं। सूत्र तु पूर्वमुदाहृतं॥

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा।
शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयं॥१॥
गर्भे। नु। सन। अनु। एषां। अवेदं। अहं। देवानां। जनिमानि। विश्वा।
शतं। मा। पुरः। आयसीः। अरक्षन। अध। श्येनः। जवसा। निः। अदीयं॥१॥

अत्रैष श्लोकः पठ्यते। श्येनभावं समास्थाय गर्भाद्योगेन निःसृतः। ऋषिर्गर्भे शयानः सन ब्रूते गर्भे नु सन्निति। गर्भे नु गर्भ एव सन विद्यमानोऽहं वामदेव एषामिंद्रादीनां देवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मान्यन्ववेदं। आनुपूर्व्येणाज्ञासिषं। परमात्मनः सकाशात्सर्वे देवा जाता इत्यवेदिषमित्यर्थः। इतः पूर्वं शतं बह्व्यायसीरयोमयान्यभेद्यानि पुरः शरीराणि मा मामरक्षन। अपालयन। यथाहं शरीराद्व्यतिरिक्तमात्मानं न जानीयां तथा मामरक्षन्नित्यर्थः। अधाधुना श्येनः श्येनवत्स्थितोऽहं जवसा वेगेन निरदीयं। शरीरान्निरगमं। अनावरणमात्मानं जानन्निर्गतोऽस्मीत्यर्थः। पुरुषे ह वा अयमादित इति खंडे गर्भ एवैतच्छयानो वामदेव एवमुवाचेत्यादिना। ऐ॰ आ॰ २. ५. १.। अयमर्थः सम्यक् प्रतिपादितः॥

न घा स मामप जोषं जभाराभीमास त्वक्षसा वीर्येण।
ईर्मा पुरंधिरजहादरातीरुत वातां अतरच्छूशुवानः॥२॥
न। घ। सः। मां। अप। जोषं। जभार। अभि। ईं। आस। त्वक्षसा। वीर्येण।
ईर्मा। पुरंऽधिः। अजहात। अरातीः। उत। वातान। अतरत। शूशुवानः॥२॥

स गर्भो मां वामदेवं जोषं पर्याप्तं न घ नैवाप जभार। अपजहार। गर्भेऽपि वसतो मे मोहो नाभूदित्यर्थः। अहं तु ईमिदं गर्भस्थं दुःखं त्वक्षसा तीक्ष्णेन वीर्येण ज्ञानसामर्थ्येनाभ्यास। अभ्यभवं। ईर्मा सर्वस्य प्रेरकः पुरंधिः पुरां धारकः परमात्मारातीर्गर्भसंश्रितान शत्रूनजहात। अत्यजत। जघान। उतापि च शूशुवानो वर्धमानः परिपूर्णः परमात्मा वातान गर्भक्लेशकरान्वायूनतरत। अतारीत॥

अव यच्छ्येनो अस्वनीदध द्योर्वि यद्यदि वात ऊहुः पुरंधिं।
सृजद्यदस्मा अव ह क्षिपज्ज्यां कृशानुरस्ता मनसा भुरण्यन॥३॥
अव। यत। श्येनः। अस्वनीत। अध। द्योः। वि। यत। यदि। वा। अतः। ऊहुः। पुरंऽधिं।
सृजत। यत। अस्मै। अव। ह। क्षिपत। ज्यां। कृशानुः। अस्ता। मनसा। भुरण्यन॥३॥

अध तदानीं सोमाहरणकाले यद्यदा श्येनो द्योर्द्युलोकादवास्वनीत अवाङ्मुखं शब्दमकरोत। यदि वा यदा च। वेति चार्थे। यद्यं पुरंधिं सोममतोऽस्माच्छ्येनाद्व्यूहुः। सोमपाला विक्षिप्तवंतः। यद्यदास्ता शराणां क्षेप्ता मनसा मनोवेगेन भुरण्यन गंतुमिच्छन कृशानुरेतन्नामकः सोमपालो ज्यां धनुषः कोटौ मौर्वीं क्षिपद्व। चिक्षेप गत्नु। अस्मै श्येनाय शरमवासृजत। त्यक्तवान। तथा च ब्राह्मणं। तस्या अनुविसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिदर्दित्यादि। ऐ॰ ब्रा॰ ३. २६.। यदा सोमपाला इत्थमित्थं चक्रुस्तदा श्येनः सोममाजहारेत्यृचोत्तरया संबंधः॥

ऋजिप्य ईमिंद्रावतो न भुज्युं श्येनो जभार बृहतो अधि ष्णोः ।
अंतः पतत्पतत्र्यस्य पर्णमध यामनि प्रसितस्य तद्वेः ॥४॥
ऋजिप्यः । ईं । इंद्रऽवतः । न । भुज्युं । श्येनः । जभार । बृहतः । अधि । स्नोः ।
अंतरिति । पतत् । पतत्रि । अस्य । पर्णं । अध । यामनि । प्रऽसितस्य । तत् । वेरिति वेः ॥४॥

ऋजिप्य ऋजुगामी श्येन इंद्रवत इंद्रो रक्षको यस्य तस्माद्बृहतो महतोऽधि उपरि स्नोः स्थिताद्द्युलोकादीमेनं सोमं जभार । आजहार । तत्र दृष्टांतः । इंद्रवतः । इंद्रः समर्थः । तद्वतो देशाद्भुज्युं न भुज्युनामकं राजानं यथाश्विनावाजह्रतुस्तद्वत् । अध तदानीं यामनि युद्धे प्रसितस्य कृशानोरस्त्रैर्बद्धस्य वेर्गंतुरस्य श्येनस्यांतर्मध्ये स्थितं पतत्रि पतनशीलं तत्पर्णं पतत् । अपतत् ॥

अध श्वेतं कलशं गोभिरक्तमापिप्यानं मघवा शुक्रमंधः ।
अध्वर्युभिः प्रयतं मध्वो अग्रमिंद्रो मदाय प्रति धत्पिबध्यै शूरो मदाय प्रति धत्पिबध्यै ॥५॥
अध । श्वेतं । कलशं । गोभिः । अक्तं । आऽपिप्यानं । मघऽवा । शुक्रं । अंधः ।
अध्वर्युऽभिः । प्रऽयतं । मध्वः । अग्रं । इंद्रः । मदाय । प्रति । धत् । पिबध्यै । शूरः । मदाय । प्रति । धत् । पिबध्यै ॥५॥

अधाधुना शूरो विक्रांतो मघवा धनवानिंद्रः श्वेतं शुभ्रं कलशं कलशे पात्रे स्थितं गोभिर्गव्येन पयसाक्तं सिक्तमापिप्यानमाप्याययंतं शुक्रं सारोपेतमध्वर्युभिः प्रयतं दत्तमंधः सोमलक्षणमन्नं मध्वो मधुरस्य सोमरसस्याग्रमग्रे मदाय मदार्थं पिबध्यै पातुं प्रति धत । प्रतिदधातु । पुनरुक्तिरादरार्था ॥ ॥१६॥

त्वा युजेति पंचर्चं सप्तमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमिंद्रासोमदेवताकं । अनुक्रांतं च । त्वा युजेंद्रासोमामिति । विनियोगो लैंगिकः ॥

त्वा युजा तव तत्सोम सख्य इंद्रो अपो मनवे सस्रुतस्कः ।
अहन्नहिमरिणात्सप्त सिंधूनपावृणोदपिहितेव खानि ॥१॥
त्वा । युजा । तव । तत् । सोम । सख्ये । इंद्रः । अपः । मनवे । सऽस्रुतः । करिति कः ।
अहन् । अहिं । अरिणात् । सप्त । सिंधून् । अप । अवृणोत् । अपिहिताऽइव । खानि ॥१॥

हे सोम तव त्वदीये तत्तस्मिन् सख्ये सखित्वे सति त्वा त्वया युजा सहायेनेंद्रः सस्रुतः सरणशीला अपो वृष्टिलक्षणान्युदकानि मनवे मनुष्येभ्यः कः । अकरोत् । किंच अहिं वृत्रमसुरमहन् । हतवान् । सप्त सर्पणशीलाः सिंधूनपोऽरिणात् । प्रैरयत् । अपिहितेवापिहितानीव वृत्रेण तिरोहितानि च । अत्रेवशब्दश्चार्थे । खानि स्रोतसां द्वाराण्यपावृणोत् । उद्घाटितवान् ॥

त्वा युजा नि खिदत्सूर्यस्येंद्रश्चक्रं सहसा सद्य इंदो ।
अधि ष्णुना बृहता वर्तमानं महो द्रुहो अप विश्वायु धायि ॥२॥
त्वा । युजा । नि । खिदत् । सूर्यस्य । इंद्रः । चक्रं । सहसा । सद्यः । इंदो इति ।
अधि । स्नुना । बृहता । वर्तमानं । महः । द्रुहः । अप । विश्वऽआयु । धायि ॥२॥

हे इंदो सोम इंद्रः सद्यः सपदि त्वा त्वया युजा सहायेन सूर्यस्य प्रेरकस्य सवितुः संबंधिनः पूर्वं द्विचक्रस्य रथस्यैकं चक्रं सहसाभिभावुकेन बलेन नि खिदत । आच्छिनत । कीदृशं । अधि उपरि स्नुना स्थितेन बृहता महतांतरिक्षेण वर्तमानं । किंच सहो महतः प्रभूतस्य द्रुहो द्रोग्धुः सूर्यस्य संबंधि विश्वायु सर्वतो गतृ चक्रमप धायि । इंद्रेणापाहारि ॥

अहन्निंद्रो अदहदग्निरिंदो पुरा दस्यून्मध्यंदिनादभीके ।
दुर्गे दुरोणे क्रत्वा न यातां पुरू सहस्रा शर्वा नि बर्हीत् ॥ ३ ॥
अहन् । इंद्रः । अदहत् । अग्निः । इंदो इति । पुरा । दस्यून् । मध्यंदिनात् । अभीके ।
दुःऽगे । दुरोणे । क्रत्वा । न । यातां । पुरु । सहस्रा । शर्वा । नि । बर्हीत् ॥ ३ ॥

हे इंदो सोम अभीके संग्रामे दस्यून् शत्रूनिंद्रोऽहन् । अवधीत् । अग्निः कांश्चिच्छत्रूनदहत् । ददाह । कीदृशाविंद्राग्नी । मध्यंदिनान्मध्याह्नात्पुरा पुरस्तात्पूर्वाह्ने तव पानाल्लब्धबलाविति शेषः । यातां गच्छताम-सुराणां पुरु पुरूणि बहूनि सर्वा सर्वाणि निरवशेषाणि सहस्रा सहस्राण्यपरिमितानि नि बर्हीत् । न्यबर्हीत् । इंद्रोऽवधीत् । तत्र दृष्टांतः । दुरोणे दुरवने रक्षितुमशक्ये दुर्गे दुरवगाहे देशे क्रत्वा न कर्मणा स्वकीयं कार्यमुद्दिश्य गच्छतः पथिकान्यथा धनलोलुपश्चोरो हंति तद्वत् ॥

विश्वस्मात्सीमधमाँ इंद्र दस्यून्विशो दासीरकृणोरप्रशस्ताः ।
अबाधेथाममृणतं नि शत्रूनविंदेथामपचितिं वधत्रैः ॥ ४ ॥
विश्वस्मात् । सीं । अधमान् । इंद्र । दस्यून् । विशः । दासीः । अकृणोः । अप्रऽशस्ताः ।
अबाधेथां । अमृणतं । नि । शत्रून् । अविंदेथां । अपऽचितिं । वधत्रैः ॥ ४ ॥

हे इंद्र त्वं सीमेनान्दस्यून्विश्वस्मात्सर्वस्माज्जनादधमान् हीनानकृणोः । अकरोः । किंच दासीः कर्महीना विशो मानुषीः प्रजा अप्रशस्ता गर्हिता अकृणोः । हे इंद्रासोमौ युवां शत्रूनबाधेथां । न्यमृणतं । नितरां हिंसितवंतौ । अपि च वधत्रैस्तेषां शत्रूणां प्रहारैरपचितिं पूजां जनेभ्योऽविंदेथां । अलभेथां ॥

एवा सत्यं मघवाना युवं तदिंद्रश्च सोमोर्वमश्व्यं गोः ।
आदर्दृतमपिहितान्यश्ना रिरिचथुः क्षाश्चित्ततृदाना ॥ ५ ॥
एव । सत्यं । मघऽवाना । युवं । तत् । इंद्रः । च । सोम । ऊर्वं । अश्व्यं । गोः ।
आ । अदर्दृतं । अपिऽहितानि । अश्ना । रिरिचथुः । क्षाः । चित् । ततृदाना ॥ ५ ॥

हे सोम त्वं चेंद्रश्चेति युवामुभावूर्वं महांतमश्व्यमश्वसमूहं गोर्गवां समूहं चादर्दृतं । आदरयतं । अपिहितानि पणिभिराच्छादितानि गवां वृंदानि तान्यश्ना पणीनां भूमीश्चाश्नाशनपरेण बलेन रिरिचथुः । रेचितवंतौ । हे मघवानौ धनवंताविंद्रासोमौ ततृदाना शत्रूणां हिंसकौ युवं युवामेवमुक्तप्रकारेण यत्कृतवंतौ तत्सर्वं सत्यमेव ॥ ॥ १७ ॥

आ नः स्तुत इति पंचर्चमष्टमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैंद्रं । आ नः स्तुत इत्यनुक्रमणिका । विनियोगो लैंगिकः ॥

आ नः स्तुत उप वाजेभिरूती इंद्र याहि हरिभिर्मंदसानः ।
तिरश्चिदर्यः सवना पुरूण्यांगूषेभिर्गृणानः सत्यराधाः ॥ १ ॥

आ। नः। स्तुतः। उप। वाजेभिः। ऊती। इंद्र। याहि। हरिऽभिः। मंदसानः।
तिरः। चित्। अर्यः। सवना। पुरूणि। आंगूषेभिः। गृणानः। सत्यऽराधाः ॥१॥

हे इंद्र स्तुतस्त्वं वाजेभिर्वाजैरन्नैः सह तिरश्चित प्राप्तानि। तिरः सत इति प्राप्तस्य। नि॰ ३ २०.। इति यास्कः। पुरूणि पूर्णानि सवना सवनानि नोऽस्मदीयान्यज्ञानुप प्रत्यूती ऊत्यै नोऽस्माकं रक्षणार्थं हरिभिरश्वैरा याहि। आगच्छ। कीदृशः। मंदसानो मोदमानोऽर्यः स्वाम्यांगूषेभिः स्तोत्रैर्गृणानः स्तूयमानः सत्यराधाः सत्यधनः ॥

आ हि ष्मा याति नर्यश्चिकित्वान्हूयमानः सोतृभिरुप यज्ञं।
स्वश्वो यो अभीरुर्मन्यमानः सुष्वाणेभिर्मदति सं ह वीरैः ॥२॥

आ। हि। स्म। याति। नर्यः। चिकित्वान्। हूयमानः। सोतृऽभिः। उप। यज्ञं।
सुऽअश्वः। यः। अभीरुः। मन्यमानः। सुस्वानेभिः। मदति। सं। ह। वीरैः ॥२॥

नर्यो नृभ्यो हितश्चिकित्वान् सर्वं जानन् सोतृभिः सोममभिषुण्वद्भिर्ऋत्विग्भिर्हूयमान आह्वयमान इंद्रोऽस्मदीयं यज्ञमुप प्रति आ याति। आगच्छतु। हि स्मेति पूरणौ। स्वश्वः शोभनाश्वोपेतोऽभीरुर्निर्भयशीलः सुष्वाणेभिः सुन्वद्भिर्यजमानैर्मन्यमानः स्तूयमानो य इंद्रो वीरैः शूरैर्मरुद्भिः सह स मदति ह सह माद्यत्येव। स इंद्र आगच्छत्विति पूर्वेण संबंधः ॥

श्रावयेदस्य कर्णा वाजयध्यै जुष्टामनु प्र दिशं मंदयध्यै।
उद्वावृषाणो राधसे तुविष्मान्करन्न इंद्रः सुतीर्थाभयं च ॥३॥

श्रवय। इत्। अस्य। कर्णा। वाजयध्यै। जुष्टां। अनु। प्र। दिशं। मंदयध्यै।
उत्ऽववृषाणः। राधसे। तुविष्मान्। करत्। नः। इंद्रः। सुऽतीर्था। अभयं। च ॥३॥

हे स्तोतस्त्वमस्येंद्रस्य संबंधिनौ कर्णा कर्णौ वाजयध्यै इंद्रं बलिनं कर्तुं जुष्टामनु दिशं सेविताम् सर्वाम् दिशु प्र मंदयध्यै प्रकर्षेणेंद्रं मादयितुं च श्रवय। स्तोत्राणि श्रावय। इदिति पूरणः। उद्ववृषाणः सोमैर्नोत्सिच्यमानस्तुविष्मान्बलवानिंद्रो नोऽस्माकं राधसे धनार्थं सुतीर्था शोभनानि तीर्थान्यभयं च भयराहित्यं च करत। करोतु ॥

अच्छा यो गंता नाधमानमूती इत्था विप्रं हवमानं गृणंतं।
उप त्मनि दधानो धुर्याशून्त्सहस्राणि शतानि वज्रबाहुः ॥४॥

अच्छ। यः। गंता। नाधमानं। ऊती। इत्था। विप्रं। हवमानं। गृणंतं।
उप। त्मनि। दधानः। धुरि। आशून्। सहस्राणि। शतानि। वज्रऽबाहुः ॥४॥

वज्रबाहुर्वज्रहस्तो य इंद्रस्त्मन्यात्मनि स्थितानात्मवश्यान् सहस्राणि सहस्रसंख्याकान् शतानि शतसंख्याकानाशून् शीघ्रगामिनोऽश्वान्धुरि रथवहनप्रदेश उप दधानः संस्थापयन्नूती रक्षणार्थं नाधमानं याचमानं विप्रं मेधाविनं हवमानमाह्वयंतमित्थमित्थमनेन प्रकारेण गृणंतं स्तुवंतं यजमानमच्छाभिमुख्येन गंता गमनशीलः। भवतीति शेषः। स इंद्रः सुतीर्थान्यभयं च करोत्विति पूर्वेण संबंधः ॥

त्वोतासो मघवन्निंद्र विप्रा वयं ते स्याम सूरयो गृणंतः।
भेजानासो बृहद्दिवस्य राय आकाय्यस्य दावने पुरुक्षोः ॥५॥

त्वाऽऊतासः । मघऽवन् । इंद्र । विप्राः । वयं । ते । स्याम । सूरयः । गृणंतः ।
भेजानासः । बृहत्ऽदिवस्य । रायः । आऽकाय्यस्य । दावने । पुरुऽक्षोः ॥५॥

हे मघवन्धनवन्निंद्र त्वोतासस्त्वया रक्षिता विप्रा मेधाविनो गृणंतस्त्वां स्तुवंतः सूरयः स्तोतारो वयं बृहद्दिवस्य महद्दीप्तेराकाय्यस्य आ समंतात्स्तुत्यस्य पुरुक्षोर्बह्वन्नस्य बहुकीर्तेर्वा ते त्वदीयस्य रायो धनस्य दावने दाने निमित्ते सति भेजानासस्त्वां भजमानाः स्याम । भवेम ॥ ॥१८॥

नकिरिंद्रेति चतुर्विंशत्यृचं नवमं सूक्तं वामदेवस्यार्षं गायत्रं । अष्टमी चतुर्विंशी च द्वे अनुष्टुभौ । इंद्रो देवता । दिवश्चिदित्यय तृच उषोदेवताक इंद्रदेवताकश्च । तथा चानुक्रांतं । नकिश्चतुर्विंशतिर्दिवश्चित्तृच उषस्यश्च गायत्रं ह्यष्टम्यंत्ये चानुष्टुभाविति ॥ अतिरात्रे तृतीये पर्याये मैत्रावरुणशस्त्र उत्तमावर्जमिदं सूक्तं । तथा च सूत्रितं । नकिरिंद्र त्वदुत्तर इत्युत्तमामुद्धरत् । आ० ६. ४. । इति ॥

नकिरिंद्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् । नकिरेवा यथा त्वं ॥१॥
नकिः । इंद्र । त्वत् । उत्ऽतरः । न । ज्यायान् । अस्ति । वृत्रऽहन् । नकिः । एव । यथा । त्वं ॥१॥

हे वृत्रहन्निंद्र वृत्रस्य नाशकेंद्र । लोक एकोऽपीति शेषः । त्वत्त्वत्त उत्तर उत्कृष्टतरो नकिरस्ति । न भवति । त्वत्तो ज्यायान् प्रशस्यतर एकोऽपि नास्ति । हे इंद्र त्वं लोके यथा प्रसिद्धो भवसि तथाविध एकोऽपि नकिरेवास्ति । नैव भवति । कश्चिदपि लोक इंद्रसदृशो नास्तीत्यर्थः ॥

सत्रा ते अनु कृष्टयो विश्वा चक्रेव वावृतुः । सत्रा महाँ असि श्रुतः ॥२॥
सत्रा । ते । अनु । कृष्टयः । विश्वाः । चक्राऽइव । ववृतुः । सत्रा । महान् । असि । श्रुतः ॥२॥

हे इंद्र कृष्टयः प्रजास्ते त्वामनु लक्षीकृत्य सत्रा सत्यमेव ववृतुः । वर्तंते । तत्र दृष्टांतः । विश्वा विश्वानि व्याप्तानि चक्रेव चक्राणीव । यथा चक्राणि शकटमनुवर्तंते तद्वत् । हे इंद्र महांस्त्वं सत्रा सत्यमेव श्रुतो विश्रुतोऽसि । गुणैः प्रख्यातो भवसि ॥

विश्वे चनेदना त्वा देवास इंद्र युयुधुः । यदहा नक्तमातिरः ॥३॥
विश्वे । चन । इत् । अना । त्वा । देवासः । इंद्र । युयुधुः । यत् । अहा । नक्तं । आ । अतिरः ॥३॥

हे इंद्र विश्वे चनेत्सर्व एव देवासोऽसुरान्विजिगीषवो देवा अना प्राणरूपेण बलेन त्वा त्वां सहायं लब्ध्वा युयुधुः । असुरैः सह युद्धं चक्रुः । यद्यस्मात्कारणादहा अहःसु नक्तं रात्रिषु चातिरः । आ समंतात् शत्रूनवधीः । अतः कारणाद्युयुधुरिति पूर्वेण संबंधः ॥

यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते । मुषाय इंद्र सूर्यं ॥४॥
यत्र । उत । बाधितेभ्यः । चक्रं । कुत्साय । युध्यते । मुषायः । इंद्र । सूर्यं ॥४॥

यत्र यस्मिन्युद्ध उतापि च हे इंद्र त्वं बाधितेभ्यः कुत्ससहायेभ्यो युध्यते युद्धं कुर्वते कुत्साय च सूर्यं सूर्यसंबंधि चक्रं मुषायः । अमुष्णाः । अपहृतवानसीत्यर्थः । तस्मिन्युद्धे प्रावः शचीभिरितशामिति परेण संबंधः ॥

यत्र देवाँ ऋघायतो विश्वाँ अयुध्य एक इत् । त्वमिंद्र वनूँरहन् ॥५॥
यत्र । देवान् । ऋघायतः । विश्वान् । अयुध्यः । एकः । इत् । त्वं । इंद्र । वनून् । अहन् ॥५॥

हे इंद्र त्वमेक इदसहाय एव यत्र यस्मिन् संग्रामे देवानिंद्रादीनृघायतो बाधमानान्विश्वान् सर्वान्राक्षसादीनयुध्यः । युद्धमकरोः । तथा वनून् हिंसकानहन् । अवधीः ॥ ॥१९॥

यच्चोत मर्त्याय कमरिणा इंद्र सूर्यं। प्रावः शचीभिरेतशं ॥६॥

यत्। च। उत। मर्त्याय। कं। अरिणाः। इंद्र। सूर्यं। प्र। आवः। शचीभिः। एतशं ॥६॥

यच यस्मिन संग्रामे उतापि च हे इंद्र त्वं मर्त्याय मनुष्यायैतशाख्याय ऋषये सूर्यमरिणाः। अहिंसीः। कमिति पूरणः। तदानीं शचीभिर्युद्धकर्मभिरेतशमेतत्संज्ञकमृषिं प्रावः। प्रकर्षेणारक्षः॥

किमादुतासि वृत्रहन्मघवन्मन्युमत्तमः। अत्राह दानुमातिरः ॥७॥

किं। आत्। उत। असि। वृत्रऽहन्। मघऽवन्। मन्युमत्ऽतमः। अत्र। अह। दानुं। आ। अतिरः ॥७॥

हे वृत्रहन् वृत्राणामावरकाणां तमसां हंतर्मघवन्धनवन्निंद्र त्वमादनंतरमेव उतापि च। किमिति प्रश्नः। मन्युमत्तमोऽसि। अत्यंतं क्रोधवान् भवसि। अत्रास्मिन्नंतरिक्षेऽहैव दानुं दनोः पुत्रं वृत्रमातिरः। आ समंतादहिंसीः॥

एतद्घेदुत वीर्य१मिंद्र चकर्थ पौंस्यं। स्त्रियं यद्दुर्हणायुवं वधीर्दुहितरं दिवः ॥८॥

एतत्। घ। इत्। उत। वीर्यं। इंद्र। चकर्थ। पौंस्यं। स्त्रियं। यत्। दुःऽहनायुवं। वधीः। दुहितरं। दिवः ॥८॥

हे इंद्र उतापि च यद्यस्त्वमेतद्वपनाचितं पौंस्यं बलं वीर्यं सामर्थ्यमपि चकर्थ। कृतवानसि। घेदिति पूरणौ। किंच दुर्हणायुवं दुष्टं हननमिच्छंतीं दिवो दुहितरं द्युलोकसकाशादुत्पन्नां स्त्रियमुषसं वधीः। अवधीः॥

दिवश्चिद्घा दुहितरं महान्महीयमानां। उषासमिंद्र सं पिणक् ॥९॥

दिवः। चित्। घ। दुहितरं। महान। महीयमानां। उषसं। इंद्र। सं। पिणक् ॥९॥

हे इंद्र महांस्त्वं दिवो दुहितरं द्युलोकस्य पुत्रीं महीयमानां पूज्यमानामुषसमुषोदेवीं सं पिणक् चित्। संपिष्टवानसि खलु॥

अपोषा अनसः सरत्संपिष्टादह बिभ्युषी। नि यत्सीं शिश्नथद्वृषा ॥१०॥

अप। उषाः। अनसः। सरत्। संऽपिष्टात्। अह। बिभ्युषी। नि। यत्। सीं। शिश्नथत्। वृषा ॥१०॥

वृषा कामानां वर्षितेंद्रो यद्यदा सीमेतदुषःसंबंधि शकटं नि शिश्नथत्। न्यवधीत्। तदोषा उषोदेवता बिभ्युषींद्रसकाशाद्भीता सती संपिष्टादिंद्रेण संचूर्णितादनसः शकटादप सरत्। अपासरत्। अपजगाम। अहेति पूरणः॥ ॥२०॥

एतदस्या अनः शये सुसंपिष्टं विपाश्या। ससार सीं परावतः ॥११॥

एतत्। अस्याः। अनः। शये। सुऽसंपिष्टं। विऽपाशि। आ। ससार। सीं। पराऽवतः ॥११॥

सुसंपिष्टमिंद्रेण सुष्ठु संचूर्णितमस्या उषसः संबंधितदनः शकटं विपाशि। विपाडाख्या नदी। तस्यास्तत्तीरं आ शये। आ समंताच्छेते। अशेत। सीमियमुषोदेवता शकटे भंग्ने सति परावतो दूरदेशात्ससार। अपससार॥

उत सिंधुं विबाल्यं वितस्थानामधि क्षमि । परि ष्ठा इंद्र मायया ॥१२॥
उत । सिंधुं । विऽबाल्यं । विऽतस्थानां । अधि । क्षमि । परि । स्थाः । इंद्र । मायया ॥१२॥

हे इंद्र उतापि च विबाल्यं विगतबाल्यावस्थां संपूर्णजलां वितस्थानां वितिष्ठमानां सिंधुं नदीमधि क्षमि क्षमायां मायया प्रज्ञया परि ष्ठाः । पर्यस्थाः । सर्वतः स्थापनं कृतवानसि ॥

उत शुष्णस्य धृष्णुया प्र मृक्षो अभि वेदनं । पुरो यदस्य संपिणक् ॥१३॥
उत । शुष्णस्य । धृष्णुऽया । प्र । मृक्षः । अभि । वेदनं । पुरः । यत् । अस्य । संऽपिणक् ॥१३॥

उतापि च हे इंद्र धृष्णुया धृष्णुः धर्षकस्त्वं शुष्णस्य शुष्णनाम्नोऽसुरस्य संबंधि वेदनं वित्तमभि अभितः सर्वतः प्र मृक्षः । प्रकर्षेणाबाधथाः । यद्यदास्य शुष्णस्य पुरः पुराणि नगराणि संपिणक् । संपिष्टवानसि । तदा प्र मृक्ष इति संबंधः ॥

उत दासं कौलितरं बृहतः पर्वतादधि । अवाहन्निंद्र शंबरं ॥१४॥
उत । दासं । कौलिऽतरं । बृहतः । पर्वतात् । अधि । अव । अहन् । इंद्र । शंबरं ॥१४॥

उतापि च हे इंद्र त्वं दासमुपक्षपयितारं कौलितरं कुलितरनाम्नोऽपत्यं शंबरमसुरं बृहतो महतः पर्वतादद्रेरध्युपरि अव अवाचीनं कृत्वाहन । हतवानसि ॥

उत दासस्य वर्चिनः सहस्राणि शतावधीः । अधि पंच प्रधीँरिव ॥१५॥
उत । दासस्य । वर्चिनः । सहस्राणि । शता । अवधीः । अधि । पंच । प्रधीन्ऽइव ॥१५॥

उतापि च हे इंद्र त्वं प्रधीनिव चक्रस्य परितः स्थितान् शंकूनिव हिंसकान्पंच शता पंचशतानि पंचशतसंख्याकान् सहस्राणि सहस्रसंख्याकान्दासस्य लोकानामुपक्षपयितुर्वर्चिनो वर्चिनामकस्यासुरस्य संबंधिनोऽनुचरान्पुरुषानध्यधिकमवधीः । हतवानसि ॥ ॥२१॥

उत त्यं पुत्रमग्रुवः परावृक्तं शतक्रतुः । उक्थेष्विंद्र आभजत् ॥१६॥
उत । त्यं । पुत्रं । अग्रुवः । पराऽवृक्तं । शतऽक्रतुः । उक्थेषु । इंद्रः । आ । अभजत् ॥१६॥

उतापि च शतक्रतुः शतकर्मेंद्रस्त्यं तं प्रसिद्धमग्रुव एतन्नाम्न्याः पुत्रं परावृक्तमेतन्नामकमृक्थेषु स्तोत्रेष्वाभजत । भागिनं कृतवान् । अयमर्थो वम्रीभिः पुत्रमग्रुवः । ऋग्वे० ४. १९. ९. । इत्यस्यामृचि प्रतिपादित इति ॥

उत त्या तुर्वशायदू अस्नातारा शचीपतिः । इंद्रो विद्वाँ अपारयत् ॥१७॥
उत । त्या । तुर्वशायदू इति । अस्नातारा । शचीऽपतिः । इंद्रः । विद्वान् । अपारयत् ॥१७॥

उतापि च अस्नातारास्नातारौ ययातिशापादनभिषिक्तौ त्या त्यौ तौ प्रसिद्धौ तुर्वशायदू तुर्वशनामानं यदुनामकं च राजानौ शचीपतिः कर्मणां पालकः । यद्वा । शचींद्रस्य भार्या । तस्याः पतिर्भर्ता विद्वान् सकलमपि जानन्निंद्रोऽपारयत् । अभिषेकार्हावकरोत् ॥

उत त्या सद्य आर्या सरयोरिंद्र पारतः । अर्णोचित्ररथावधीः ॥१८॥
उत । त्या । सद्यः । आर्या । सरयोः । इंद्र । पारतः । अर्णोचित्ररथा । अवधीः ॥१८॥

उतापि च सद्यः सपदि हे इंद्र त्वं त्या त्यौ तावार्यावार्यत्वाभिमानिनौ संतावपि । इंद्रविषयभक्तिश्रद्धारहिताविंत्यर्थः । सरय्वोः सरय्वा नद्याः पारतः पारे तीरे वसंतावर्णचित्ररथा अर्णनामकं चित्ररथनामकं च राजानाववधीः । अहिंसीः ॥

अनु द्वा जहिता नयोऽधं श्रोणं च वृत्रहन् । न तत्ते सुम्नमष्टवे ॥१९॥

अनु । द्वा । जहिता । नयः । अंधं । श्रोणं । च । वृत्रऽहन् । न । तत् । ते । सुम्नं । अष्टवे ॥१९॥

हे वृत्रहन् वृत्रस्य हिंसकेंद्र त्वं जहिता जहितौ सर्वैर्बंधुभिस्त्यक्तावंधं चक्षुर्हीनमेकं श्रोणं च पंगुमपरं च द्वा एतौ द्वावनु नयः । अंधपंगुत्वपरिहारेणानुनीतवानसि । हे इंद्र ते त्वया दत्तं तत्सुम्नं सुखमष्टवे व्याप्तुं कोऽपि न प्रभवतीति शेषः ॥

शतमश्मन्मयीनां पुरामिंद्रो व्यास्यत् । दिवोदासाय दाशुषे ॥२०॥

शतं । अश्मनऽमयीनां । पुरां । इंद्रः । वि । आस्यत् । दिवःऽदासाय । दाशुषे ॥२०॥

इंद्रोऽश्मन्मयीनां पाषाणैर्निर्मितानां पुरां शंबरस्य संबंधिनां नगराणां शतं शतसंख्याकं दिवोदासायैतन्नामकाय दाशुषे हविर्दत्तवते यजमानाय व्यास्यत् । व्यक्षिपत् ॥ ॥२२॥

अस्वापयद्दभीतये सहस्रा त्रिंशतं हथैः । दासानामिंद्रो मायया ॥२१॥

अस्वापयत् । दभीतये । सहस्रा । त्रिंशतं । हथैः । दासानां । इंद्रः । मायया ॥२१॥

इंद्रो मायया स्वकीयया शक्त्या दासानां लोकानामुपक्षपयितॄणां राक्षसादीनां त्रिंशतं त्रिंशत्संख्याकानि सहस्रा सहस्राणि दभीतये दभीतिनामकस्यार्थाय हथैर्हननसाधनैरायुधैरस्वापयत् । अवधीत् ॥

स घेदुतासि वृत्रहन्त्समान इंद्र गोपतिः । यस्ता विश्वानि चिच्युषे ॥२२॥

सः । घ । इत् । उत । असि । वृत्रऽहन् । समानः । इंद्र । गोऽपतिः । यः । ता ।
विश्वानि । चिच्युषे ॥२२॥

उतापि च हे इंद्र यस्त्वं ता तानि विश्वानि समस्तान् शत्रून् चिच्युषे । प्राच्यावयः । हे वृत्रहन् वृत्राणां शत्रूणां हिंसकेंद्र गोपतिर्गवां पालकः स त्वं समानः सर्वेषां यजमानानां समः सन् प्रख्यातोऽसि । घेदिति पूरणौ ॥

उत नूनं यदिंद्रियं करिष्या इंद्र पौंस्यं । अद्या नकिष्टदा मिनत् ॥२३॥

उत । नूनं । यत् । इंद्रियं । करिष्याः । इंद्र । पौंस्यं । अद्य । नकिः । तत् । आ । मिनत् ॥२३॥

उतापि च हे इंद्र यत्पौंस्यं त्वदीयं बलमिंद्रियं सामर्थ्योपेतं नूनं करिष्याः । कृतवानसि खलु । अद्याद्यतनः कश्चित्तद्बलं नकिरा मिनत् । न हिंस्यात् ॥

वामंवामं त आदुरे देवो ददात्वर्यमा । वामं पूषा वामं भगो वामं देवः करूळती ॥२४॥

वामंऽवामं । ते । आऽदुरे । देवः । ददातु । अर्यमा । वामं । पूषा । वामं । भगः । वामं ।
देवः । करूळती ॥२४॥

हे आदुरे शत्रूणामादारयितरिंद्र ते तव वामं वामं यद्यद्वननीयं संभजनीयं धनमस्ति लोके तद्वाम वस्त्वर्यमारीणां नियमयितैतन्नामको देवो ददातु । प्रयच्छतु । तथा करूळती कृत्तदंतः पूषा पोषको देवो

वाम धनं ददातु । भगोऽपि धनं ददातु । ननु कक्ष्ऊतीत्येतत्संनिहितत्वाद्भग इत्यनेन संबंधनीयं । अथवार्यमादीनां त्रयाणामपि विशेषणत्वेन भाव्यं । कथं पूष्णो विशेषणं स्यादिति साकांक्षत्वात न । सांनिध्याकांक्षयोः सद्भावेऽपि योग्यतामंतरेणान्वयायोगात । तस्मात्पूषा प्रपिष्टभागोऽदंतको हि । तै॰ सं॰ २. ६. ८. ५. । इत्यादि श्रुतिषु पूष्ण एवादंतकत्वेन प्रसिद्धेर्व्यवहितस्यापि तस्यैव विशेषणत्वं युक्तं । वामं वननीयं भवतीत्यादि निरुक्तं । ६. ३१ । अत्र द्रष्टव्यं ॥ ॥ २३ ॥

कया न इति पंचदशर्चं दशमं सूक्तं वामदेवस्यार्षमैंद्रं गायत्रं । अभी षु ण इत्येषा पादनिचृन्नाम गायत्री त्रयः सप्तकाः पादनिचृदिति तल्लक्षणयुक्तत्वात । तथा चानुक्रमणिका । कया पंचोनाभी षु पादनिचृदिति ॥ सूक्तविनियोगो लैंगिकः । अग्निष्टोमे चातुर्विंशिकेऽहनि च माध्यंदिने सवने मैत्रावरुणस्य कया न इत्याद्यस्तृचः स्तोत्रियः । सूत्रितं च । होत्रकाणां कया नश्चित्र आ भुवत । आ॰ ५. ४. । इति ॥ वरुणप्रघासेषु कायस्य हविषोऽनुवाक्या कया न इत्येषा । तथा च सूत्रितं । कया नश्चित्र आ भुवद्धिरण्यगर्भः समवर्तताग्रे । आ॰ २. १७. । इति ॥

कया॑ नश्चि॒त्र आ भु॑वदू॒ती स॒दावृ॑धः॒ सखा॑ । कया॒ शचि॑ष्ठया वृ॒ता ॥ १ ॥
कया॑ । नः॒ । चि॒त्रः । आ । भु॒व॒त् । ऊ॒ती । स॒दाऽवृ॑धः । सखा॑ । कया॑ । शचि॑ष्ठया । वृ॒ता ॥ १ ॥

सदावृधः सदा वर्धमानश्चित्रश्चायनीयः पूजनीयः सखा मित्रभूत इंद्रः कयोती ऊत्या तर्पणेन नोऽस्माना भुवत । आभिमुख्येन भवेत । शचिष्ठया प्रज्ञावत्तमया प्रज्ञासहितमनुष्ठीयमानेन कया वृता केन वर्तनेन कर्मणा चाभिमुखो भवेत ॥

कस्त्वा॑ स॒त्यो मदा॑नां॒ मंहि॑ष्ठो मत्स॒दंध॑सः । दृ॒ळ्हा चि॑दा॒रुजे॒ वसु॑ ॥ २ ॥
कः । त्वा॒ । स॒त्यः । मदा॑नां । मंहि॑ष्ठः । म॒त्स॒त् । अंध॑सः । दृ॒ळ्हा । चि॒त् । आ॒ऽरुजे॑ । वसु॑ ॥ २ ॥

मंहिष्ठः पूजनीयः सत्यः सत्यभूतो मदानां मादयितॄणां मध्ये को मदकरोऽधसः सोमस्य रसो दृळ्हा चित दृढान्यपि वसु वसूनि शत्रूणां धनान्यारुजे आ समंताद्भंक्तुं हे इंद्र त्वा त्वां मत्सत । मादयेत ॥

अ॒भी षु णः॒ सखी॑नामवि॒ता ज॑रितॄ॒णां । श॒तं भ॑वास्यू॒तिभिः॑ ॥ ३ ॥
अ॒भि । सु । नः॒ । सखी॑नां । अ॒वि॒ता । ज॒रि॒तॄ॒णां । श॒तं । भ॒वा॒सि॒ । ऊ॒तिऽभिः॑ ॥ ३ ॥

हे इंद्र त्वं सखीनां समानख्यातीनां जरितॄणां स्तोतॄणामविता रक्षिता त्वं शतं शतेन बह्वीभिरूतिभी रक्षाभिः सह नोऽस्माकं सु सुष्ठु अभि भवासि । अभिमुखो भव ॥

अ॒भी न॒ आ व॑वृत्स्व च॒क्रं न वृ॒त्तमर्व॑तः । नि॒युद्भि॑श्चर्षणी॒नां ॥ ४ ॥
अ॒भि । नः॒ । आ । व॒वृ॒त्स्व॒ । च॒क्रं । न । वृ॒त्तं । अर्व॑तः । नि॒युत्ऽभिः॑ । च॒र्ष॒णी॒नां ॥ ४ ॥

हे इंद्र त्वं वृत्तं चक्रं न वर्तमानं चक्रमिवावर्तत उपगंतृन्नोऽस्मान चर्षणीनामस्मदीयानां मनुष्याणां नियुद्भिः स्तुतिभिरभ्या ववृत्स्व । अभ्यावर्तस्व ॥

प्र॒व॒ता हि क्रतू॑ना॒मा हा॑ प॒देव॒ गच्छ॑सि । अभ॑क्षि॒ सूर्ये॒ सचा॑ ॥ ५ ॥
प्र॒ऽव॒ता । हि । क्रतू॑नां । आ । ह॒ । प॒दाऽइ॑व । गच्छ॑सि । अभ॑क्षि । सूर्ये॑ । सचा॑ ॥ ५ ॥

हे इंद्र त्वं क्रतूनां कर्मणां यजमानानां संबंधिनः प्रवता प्रवतः प्रवणान्देशान्पदेव पदानि स्वकीयानि स्थानानीवा गच्छसि हि । आगतो भवसि खलु । हेति पूरणः । हे इंद्र त्वामहं सूर्ये सूर्येण सचा सहाभक्षि । भजे ॥ ॥ २४ ॥

सं यत्त इंद्र मन्यवः सं चक्राणि दधन्विरे । अध त्वे अध सूर्ये ॥६॥

सं । यत् । ते । इंद्र । मन्यवः । सं । चक्राणि । दधन्विरे । अध । त्वे इति । अध । सूर्ये ॥६॥

हे इंद्र ते त्वदर्थं मन्यवः स्तुतयो यद्यदा सं दधन्विरे । अस्माभिरनुमन्यंत । चक्राणि चक्रमणानि कर्माणि च सं दधन्विरे अध तदानीं ताः स्तुतयस्तानि कर्माणि च त्वे त्वयि भवंति । अध तदनंतरं सूर्ये च भवंति ॥

उत स्मा हि त्वामाहुरिन्मघवानं शचीपते । दातारमविदीधयुं ॥७॥

उत । स्म । हि । त्वां । आहुः । इत् । मघऽवानं । शचीऽपते । दातारं । अविऽदीधयुं ॥७॥

हे शचीपते कर्मपालकेंद्र उतापि च मघवानं धनवंतं दातारं स्तोतृभ्योऽभीष्टप्रदं त्वा त्वामविदीधयुं । विदीधयुरदीप्यमानः । न विदीधयुरविदीधयुः । तं दीप्यमानमाहुः स्म । प्रवदंति खलु । हीदिति द्वय पूरणार्थं ॥

उत स्मा सद्य इत्परि शशमानाय सुन्वते । पुरू चिन्मंहसे वसु ॥८॥

उत । स्म । सद्यः । इत् । परि । शशमानाय । सुन्वते । पुरु । चित् । मंहसे । वसु ॥८॥

उतापि च हे इंद्र त्वं सद्य इत्सद्य एव शशमानाय स्तुतिं कुर्वते । शशमानः शंसमानः । नि॰ ६. ८. । इति यास्केनोक्तत्वात् । सुन्वते सोमाभिषवं कुर्वते यजमानाय पुरु चित्पुरूणि बहून्यपि वसु वसूनि धनानि परि परितो मंहसे स्म । प्रयच्छसि खलु ॥

नहि ष्मा ते शतं चन राधो वरंत आमुरः । न च्यौत्नानि करिष्यतः ॥९॥

नहि । स्म । ते । शतं । चन । राधः । वरंते । आऽमुरः । न । च्यौत्नानि । करिष्यतः ॥९॥

हे इंद्र आमुरो बाधका राक्षसादयस्ते त्वदीयं शतं चन शतपरिमितमपि राधो धनं नहि वरंते स्म । न वारयंति खलु । किंच शत्रूणां हिंसनं करिष्यतस्तव च्यौत्नानि बलानि न वारयंति ॥

अस्माँ अवंतु ते शतमस्मान्त्सहस्रमूतयः । अस्मान्विश्वा अभिष्टयः ॥१०॥

अस्मान् । अवंतु । ते । शतं । अस्मान् । सहस्रं । ऊतयः । अस्मान् । विश्वाः । अभिष्टयः ॥१०॥

हे इंद्र ते त्वदीयाः शतं शतसंख्याका ऊतयो रक्षा अस्मानवंतु । रक्षंतु । सहस्रं सहस्रसंख्याकास्त्वदीया रक्षा अस्मानवंतु । विश्वाः सर्वाण्यभिष्टयस्त्वदीयान्यभिगमनान्यस्मानवंतु ॥ ॥२५॥

अस्माँ इहा वृणीष्व सख्याय स्वस्तये । महो राये दिवित्मते ॥११॥

अस्मान् । इह । वृणीष्व । सख्याय । स्वस्तये । महः । राये । दिवित्मते ॥११॥

हे इंद्र त्वमिहास्मिन्यज्ञेऽस्मान्यजमानान् सख्याय सखिभावाय स्वस्तयेऽविनाशाय च महो महते दिवित्मते दीप्तिमते राये धनाय च वृणीष्व । संभजस्व ॥

अस्माँ अविड्ढि विश्वहेंद्र राया परीणसा । अस्मान्विश्वाभिरूतिभिः ॥१२॥

अस्मान् । अविड्ढि । विश्वहा । इंद्र । राया । परीणसा । अस्मान् । विश्वाभिः । ऊतिऽभिः ॥१२॥

हे इंद्र त्वं विश्वहा सर्वेष्वहःसु परीणसा महता राया धनेनास्मान्यजमानानविड्ढि । रक्ष । किंच विश्वाभिः सर्वाभिरूतिभी रक्षाभिरस्मानविड्ढि ॥

अस्मभ्यं ताँ अपा वृधि व्रजाँ अस्तेव गोमतः । नवाभिरिंद्रोतिभिः ॥१३॥

अस्मभ्यं । तान । अप । वृधि । व्रजान । अस्ताऽइव । गोऽमतः । नवाभिः । इंद्र । ऊतिऽभिः ॥१३॥

हे इंद्र त्वं नवाभिर्नूतनाभिरूतिभी रक्षाभिरस्तेव क्षेप्ता शूर इव गोमतो गोभिर्युक्तान् तान् प्रसिद्धान्व्रजान् गोनिवासानस्मभ्यमपा वृधि । उद्घाटय ॥

अस्माकं धृष्णुया रथो द्युमाँ इंद्रानपच्युतः । गव्युरश्वयुरीयते ॥१४॥

अस्माकं । धृष्णुऽया । रथः । द्युऽमान । इंद्र । अनपऽच्युतः । गव्युः । अश्वऽयुः । ईयते ॥१४॥

हे इंद्र धृष्णुया धृष्णुः शत्रूणां धर्षको द्युमान्दीप्तिमाननपच्युतो विनाशरहितो गव्युर्गोमानश्वयुरश्ववानस्माकमस्मत्संबंधी रथ ईयते । सर्वत्र गच्छतु । तेन रथेनास्मान्रक्षेत्यर्थः ॥

अस्माकमुत्तमं कृधीत्यनयादित्यं दृष्ट्वा रथादवरोहेत । तथा च सूत्रितं । अस्माकमुत्तमं कृधीत्यादित्यमीक्षमाणो जपित्वावरोहेत । आ० गृ० २ ६. १२. । इति ॥

अस्माकमुत्तमं कृधि श्रवो देवेषु सूर्य । वर्षिष्ठं द्यामिवोपरि ॥१५॥

अस्माकं । उत्ऽतमं । कृधि । श्रवः । देवेषु । सूर्य । वर्षिष्ठं । द्यांऽइव । उपरि ॥१५॥

हे सूर्य सर्वस्य प्रेरकेंद्र हे आदित्य वा त्वं देवेषु द्योतमानेषु वह्न्यादिषु मध्येऽस्माकमस्मत्संबंधि श्रवो यश उत्तममुत्कृष्टं कृधि । कुरु । तत्र दृष्टांतः । वर्षिष्ठमतिशयेन प्रवृद्धं सेचनसमर्थं वा द्यामिव द्युलोकं यथा सर्वेषां लोकानामुपरि स्थितमुत्कृष्टमकरोस्तद्वत् ॥ ॥२६॥

आ तू न इंद्रेति चतुर्विंशत्यृचमेकादशं सूक्तं वामदेवस्यार्षं गायत्रमैंद्रं । अंत्ये कनीनकेवेत्यादिके द्वे इंद्राश्वदेवताके । तथा चानुक्रांतं । आ तू नश्चतुर्विंशतिरंत्याभ्यामिंद्राश्वौ स्तुताविति । गतो विनियोगः ॥

आ तू न इंद्र वृत्रहन्नस्माकमर्धमा गहि । महान्महीभिरूतिभिः ॥१॥

आ । तु । नः । इंद्र । वृत्रऽहन । अस्माकं । अर्धं । आ । गहि । महान । महीभिः । ऊतिऽभिः ॥१॥

हे वृत्रहन् वृत्राणां शत्रूणां हिंसकेंद्र त्वं नोऽस्मान्प्रति तु क्षिप्रमागच्छ । हे इंद्र महान्प्रभूतस्त्वं महीभिर्महतीभिरूतिभी रक्षाभिः सहास्माकमर्धं समीपमा गहि । आगच्छ ॥

भृमिश्चिद्घासि तूतुजिरा चित्र चित्रिणीष्वा । चित्रं कृणोष्यूतये ॥२॥

भृमिः । चित । घ । असि । तूतुजिः । आ । चित्र । चित्रिणीषु । आ । चित्रं । कृणोषि । ऊतये ॥२॥

हे चित्र चायनीय पूजनीयेंद्र त्वं भृमिश्चित् भ्रमणशीलोऽपि तूतुजिर्घासि । अस्मदभीष्टप्रदाता च भवसि । आकारश्चार्थे । चित्रिणीषु चित्रकर्मयुक्तास्वस्मद्रूपासु प्रजासु चित्रं चायनीयं धनमूतये रक्षणाय आ कृणोषि । आ समंतात्करोषि । घेति पूरणः ॥

दभ्रेभिश्चिच्छशीयांसं हंसि व्राधंतमोजसा । सखिभिर्ये त्वे सचा ॥३॥

दभ्रेभिः । चित । शशीयांसं । हंसि । व्राधंतं । ओजसा । सखिऽभिः । ये । त्वे इति । सचा ॥३॥

हे इंद्र त्वं दभ्रेभिश्चिदल्पैरपि सखिभिर्यजमानैः सह शशीयांसं ॥ शश प्लुतगतौ ॥ उत्प्लवमानं व्राधंतं महांतमपि शत्रुमोजसा बलेन हंसि । नाशयसि । ये यजमानास्त्वे त्वयि सचा संगताः । तैरिति पूर्वेण संबंधः ॥

वयमिंद्र त्वे सचा वयं त्वाभि नोनुमः । अस्माँअस्माँ इदुदव ॥४॥

वयं । इंद्र । त्वे इति । सचा । वयं । त्वा । अभि । नोनुमः । अस्मान्ऽअस्मान् । इत् । उत् । अव ॥४॥

हे इंद्र वयं यजमानास्त्वे त्वयि सचा संगताः स्मः । वयं त्वा त्वामभि नोनुमः । अतिशयेनाभिष्टुमः । हे इंद्र त्वमप्यस्मानस्मानित् सर्वानस्मानेवोदव । उत्कर्षेण रक्ष ॥

स नश्चित्राभिरद्रिवोऽनवद्याभिरूतिभिः । अनाधृष्टाभिरा गहि ॥५॥

सः । नः । चित्राभिः । अद्रिऽवः । अनवद्याभिः । ऊतिऽभिः । अनाधृष्टाभिः । आ । गहि ॥५॥

हे अद्रिवो वज्रवन्निंद्र स त्वं चित्राभिश्चायनीयाभिरनवद्याभिरनिंदिताभिरनाधृष्टाभिः शत्रुभिरप्रधर्षितैरूतिभी रक्षणैः सहितः सन्नोऽस्माना गहि । आगच्छ ॥ ॥२७॥

भूयामो षु त्वावतः सखाय इंद्र गोमतः । युजो वाजाय घृष्वये ॥६॥

भूयामो इति । सु । त्वाऽवतः । सखायः । इंद्र । गोऽमतः । युजः । वाजाय । घृष्वये ॥६॥

हे इंद्र त्वावतस्त्वत्सदृशस्य गोमतो गोभिर्युक्तस्य देवस्य संबंधिनः सखायः स्तोतारो वयं घृष्वये महते वाजायान्नाय युजः संयुक्ताः सु सुष्ठु भूयामो । भवामेव ॥

त्वं ह्येक ईशिष इंद्र वाजस्य गोमतः । स नो यंधि महीमिषं ॥७॥

त्वं । हि । एकः । ईशिषे । इंद्र । वाजस्य । गोऽमतः । सः । नः । यंधि । महीं । इषं ॥७॥

हे इंद्र हि यस्मात्कारणात्त्वमेक एव गोमतो गोभिर्युक्तस्य वाजस्यान्नस्येशिषे । प्रभवसि । अतः कारणात्स त्वं नोऽस्मभ्यं महीं महतीमिषमन्नं यंधि । प्रयच्छ ॥

न त्वा वरंते अन्यथा यद्दित्ससि स्तुतो मघं । स्तोतृभ्य इंद्र गिर्वणः ॥८॥

न । त्वा । वरंते । अन्यथा । यत् । दित्ससि । स्तुतः । मघं । स्तोतृऽभ्यः । इंद्र । गिर्वणः ॥८॥

हे इंद्र गिर्वणो गिरा संभक्तः स्तुतोऽस्माभिः संस्तुतो यद्यदा स्तोतृभ्योऽस्मभ्यं मघं धनं दित्ससि । दातुमिच्छसि । तदा त्वा त्वामन्यथा प्रकारांतरेण न वरंते । न निवारयंति । किंतु सर्वेऽप्यनुकूला एव भवंति ॥

अभि त्वा गोतमा गिरानूषत प्र दावने । इंद्र वाजाय घृष्वये ॥९॥

अभि । त्वा । गोतमाः । गिरा । अनूषत । प्र । दावने । इंद्र । वाजाय । घृष्वये ॥९॥

हे इंद्र त्वा त्वामभि लक्षीकृत्य गोतमा एतन्नामका ऋषयो गिरा स्तुतिरूपया वाचा दावने धनदानार्थं प्रानूषत । प्रकर्षेण स्तुवंति । घृष्वये महते वाजायान्नाय प्रस्तुवंति ॥

प्र ते वोचाम वीर्या३या मंदसान आरुजः । पुरो दासीरभीत्य ॥१०॥

प्र । ते । वोचाम । वीर्या । याः । मंदसानः । आ । अरुजः । पुरः । दासीः । अभिऽइत्य ॥१०॥

हे इंद्र मंदसानः सोमेन मोदमानस्त्वं दासीः शंबरस्यासुरस्य स्वभूता याः पुरो यानि नगराण्यभीत्याभिगम्यारुजः । आ समंतादभांक्षीः । हे इंद्र ते त्वदीयानि तत्रत्यानि वीर्या वीर्याणि वयं स्तोतारः प्र वोचाम । प्रकर्षेण वदाम ॥ ॥२८॥

ता ते गृणंति वेधसो यानि चकर्थ पौंस्या । सुतेष्विंद्र गिर्वणः ॥११॥

ता । ते । गृणंति । वेधसः । यानि । चकर्थ । पौंस्या । सुतेषु । इंद्र । गिर्वणः ॥११॥

हे इंद्र गिर्वणो गिरां स्तुतिरूपाणां वाचां संभक्ता त्वं यानि पौंस्या पौंस्यानि बलानि चकर्थ । कृतवानसि । हे इंद्र वेधसः प्राज्ञाः सुतेष्वभिषुतेषु सोमेषु ते त्वदीयानि ता तानि बलानि गृणंति । कीर्तयंति ॥

अवीवृधंत गोतमा इंद्र त्वे स्तोमवाहसः । ऐषु धा वीरवद्यशः ॥१२॥

अवीवृधंत । गोतमाः । इंद्र । त्वे इति । स्तोमऽवाहसः । आ । एषु । धाः । वीरऽवत् । यशः ॥१२॥

स्तोमवाहसः स्तोमानां स्तोत्राणां वोढारो गोतमा ऋषयो हे इंद्र त्वे त्वामवीवृधंत । स्तोत्रैर्वर्धयंति । त्वमेषु गोतमेषु वीरवत्पुत्रपौत्रादियुक्तं यशोऽन्नमा धाः । निधेहि ॥

यच्चिद्धि शश्वतामसींद्र साधारणस्त्वं । तं त्वा वयं हवामहे ॥१३॥

यत् । चित् । हि । शश्वतां । असि । इंद्र । साधारणः । त्वं । तं । त्वा । वयं । हवामहे ॥१३॥

हे इंद्र त्वं यच्चिद्धि यद्यपि खलु शश्वतां बहूनां सर्वेषां यजमानानां साधारणोऽसि । सामान्यो भवसि । तथापि तमेव त्वा त्वां वयं स्तोतारो हवामहे । आह्वयामः ॥

अर्वाचीनो वसो भवास्मे सु मत्स्वांधसः । सोमानामिंद्र सोमपाः ॥१४॥

अर्वाचीनः । वसो इति । भव । अस्मे इति । सु । मत्स्व । अंधसः । सोमानां । इंद्र । सोमऽपाः ॥१४॥

हे वसो यज्ञनिवासकेंद्र त्वमस्मे अस्मासु यजमानेष्वर्वाचीनोऽभिमुखो भव । तथा हे सोमपाः सोमानां पातरिंद्र त्वं सोमानामंधसोऽन्नेन सु सुष्ठु मत्स्व । माद्य ॥

अस्माकं त्वा मतीनामा स्तोम इंद्र यच्छतु । अर्वागा वर्तया हरी ॥१५॥

अस्माकं । त्वा । मतीनां । आ । स्तोमः । इंद्र । यच्छतु । अर्वाक् । आ । वर्तय । हरी इति ॥१५॥

मतीनां स्तोतॄणां ॥ मन्यतेः कर्तरि क्तिच ॥ अस्माकं संबंधि स्तोमः स्तोत्रं हे इंद्र त्वा त्वामा यच्छतु । अस्मासु नियच्छतु । त्वमपि हरी त्वदीयावश्वावर्वागस्मदभिमुखं यथा भवति तथा आ वर्तय । परिवर्तनं कुरु ॥

पुरोळाशं च नो घसो जोषयासे गिरश्च नः । वधूयुरिव योषणां ॥१६॥

पुरोळाशं । च । नः । घसः । जोषयासे । गिरः । च । नः । वधूयुःऽइव । योषणां ॥१६॥

हे इंद्र त्वं नोऽस्मदीयं पुरोळाशं च पुरोडाशरूपमन्नं च घसः । अद्धि । तथा नोऽस्मदीया गिरश्च स्तुतिरूपा वाचश्च जोषयासे । सेवस्व । तत्र दृष्टांतः । वधूयुरिव । स्त्रीकामो यथा योषणां स्त्रीणां गिरः सेवते तद्वत् ॥ ॥३०॥

सहस्रं व्यतीनां युक्तानामिंद्रमीमहे । शतं सोमस्य खार्यः ॥१७॥

सहस्रं । व्यतीनां । युक्तानां । इंद्रं । ईमहे । शतं । सोमस्य । खार्यः ॥१७॥

वयं स्तोतार इंद्रं परमैश्वर्ययुक्तं युक्तानां शिक्षितानां व्यतीनां गमनवतामश्वानां सहस्रं सहस्रसंख्याकमीमहे । याचामहे । तथा सोमस्याभिषुतसोमस्य शतं शतसंख्याकाः खार्यः खारीरीमहे । अत्र मानविशेषवाचिना खारीशब्देन द्रोणकलश उपलक्ष्यते । अपरिमितद्रोणकलशान् बहून्यज्ञान्याचामह इत्यर्थः ॥

सहस्रा ते शता वयं गवामा च्यावयामसि । अस्मत्रा राध एतु ते ॥१८॥

सहस्रा । ते । शता । वयं । गवां । आ । च्यवयामसि । अस्मऽत्रा । राधः । एतु । ते ॥१८॥

हे इंद्र ते त्वदीयानि गवां सहस्रा सहस्रसंख्याकानि शता शतसंख्याकानि च आ च्यावयामसि । आच्यावयामः । अस्मदभिमुखं कुर्मः । तथास्मत्रा अस्मासु त्वदीयं राधो धनं ते त्वत्त एतु । आगच्छतु ॥

दश ते कलशानां हिरण्यानामधीमहि । भूरिदा असि वृत्रहन् ॥१९॥

दश । ते । कलशानां । हिरण्यानां । अधीमहि । भूरिऽदाः । असि । वृत्रऽहन् ॥१९॥

हे इंद्र ते त्वत्तः कलशानां कुंभानां । कुंभपरिमितानामिति यावत् । हिरण्यानां हितरमणीयानां धनानां दश दशसंख्याकान्यधीमहि । धारयामः । हे वृत्रहन्वृत्राणां शत्रूणां हिंसकेंद्र त्वं भूरिदा असि । बहुप्रदो भवसि ॥

भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर । भूरि घेदिंद्र दित्ससि ॥२०॥

भूरिऽदाः । भूरि । देहि । नः । मा । दभ्रं । भूरि । आ । भर । भूरि । घ । इत् । इंद्र । दित्ससि ॥२०॥

हे इंद्र भूरिदा बहुप्रदस्त्वं भूरि बहु धनं नोऽस्मभ्यं देहि । प्रयच्छ । किंतु दभ्रमल्पं धनं मा प्रयच्छ । भूरि बहुलं धनमस्मभ्यमा भर । आहर । किंच भूरीत् अदभ्रमेव धनं दित्ससि घ । अस्मभ्यं दातुमिच्छसि खलु ॥

भूरिदा ह्यसि श्रुतः पुरुत्रा शूर वृत्रहन् । आ नो भजस्व राधसि ॥२१॥

भूरिऽदाः । हि । असि । श्रुतः । पुरुऽत्रा । शूर । वृत्रऽहन् । आ । नः । भजस्व । राधसि ॥२१॥

हे वृत्रहन्वृत्रस्य हिंसक शूर विक्रांतेंद्र भूरिदा बहुप्रदस्त्वं पुरुत्रा पुरुषु बहुषु यजमानेषु श्रुतोऽसि हि । विख्यातो भवसि खलु । राधसि धने नोऽस्मानाभजस्व । आ समंताद्भागिनः कुरु ॥

प्र ते बभ्रू विचक्षण शंसामि गोषणो नपात् । माभ्यां गा अनु शिश्रथः ॥२२॥

प्र । ते । बभ्रू इति । विऽचक्षण । शंसामि । गोऽसनः । नपात् । मा । आभ्यां । गाः । अनु । शिश्रथः ॥२२॥

हे विचक्षण प्राज्ञेंद्र ते त्वदीयौ बभ्रू बभ्रुवर्णावश्वौ प्र शंसामि । प्रकर्षेण स्तौमि । हे गोषणो गवां संभक्तर्नपात् न पातयितः स्तोतॄनविनाशयितः । किंतु पालयितरित्यर्थः । हे इंद्र त्वमाभ्यां त्वदीयाभ्यामश्वाभ्यां गा अनु अस्मदीया गा लक्षीकृत्य मा शिश्रथः । विनष्टा मा कार्षीः । गावोऽश्वदर्शनाद्विभ्यति । तस्मा भूदित्यर्थः ॥

कनीनकेव विद्रधे नवे द्रुपदे अर्भके । बभ्रू यामेषु शोभेते ॥२३॥

कनीनकाऽइव । विद्रधे । नवे । द्रुऽपदे । अर्भके । बभ्रू इति । यामेषु । शोभेते इति ॥२३॥

विद्रधे विदृढे व्यूढे नवे नवजातेऽर्भकेऽल्पके द्रुपदे द्रुमाख्यस्थाने स्थिते कनीनकेव कमनीये शालभंजिके इव हे इंद्र बभ्रू बभ्रुवर्णौ त्वदीयावश्वौ यामेषु यज्ञेषु शोभेते । कांतियुक्तौ भवतः ॥ कनीनके कन्यके । कन्या कमनीया भवति क्वेयं नेतव्येति वा कमनेनानीयत इति वा कनतेर्वा स्यात्कांतिकर्मण इत्यादि निरुक्तं । ४ १५ ॥

अरं म उस्रयाम्णेऽरमनुस्रयाम्णे । बभ्रू यामेष्वस्रिधा ॥२४॥

अरं । मे । उस्रऽयाम्ने । अरं । अनुस्रऽयाम्ने । बभ्रू इति । यामेषु । अस्रिधा ॥२४॥

हे इंद्र अस्त्रिधास्त्रिधावहिंसकौ बभ्रू बभ्रुवर्णौ त्वदीयावश्वौ यामेषु गमनेषु प्राप्तेषु सत्सूस्रयाम्णे । उस्राभ्यामनड्डुद्भ्यां युक्तेन रथेन यातीत्युस्रयामा । तस्मै मे मह्यमरमलं पर्याप्तकारिणौ भवतां । अनुस्रयाम्णे पञ्चामिव गच्छते मह्यमरं पर्याप्तकारिणौ भवतां ॥ ॥३०॥ ॥३॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके षष्ठोऽध्यायः समाप्तः ॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

चतुर्थेऽनुवाके त्रयोदश सूक्तानि । तत्र प्र ऋभुभ्य इत्येकादशर्चं प्रथमं सूक्तं वामदेवस्यार्षं त्रैष्टुभं । तुह्यादि-परिभाषयेदमादिसूक्तपंचकमृभुदेवताकं । अत्रानुक्रमणिका । प्र ऋभुभ्य एकादशार्भवं वा इति ॥ व्यूढे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्र आर्भवनिविद्धानीयमिदं । तथा च सूत्रितं । प्र ऋभुभ्यः प्र शुक्रैत्विति वैश्वदेव । आ॰ ८. ८. । इति ॥

प्र ऋभुभ्यो दूतमिव वाचमिष्य उपस्तिरे श्वैतरीं धेनुमीळे ।
ये वातजूतास्तरणिभिरेवैः परि द्यां सद्यो अपसो बभूवुः ॥१॥

प्र । ऋभुऽभ्यः । दूतंऽइव । वाचं । इष्ये । उपऽस्तिरे । श्वैतरीं । धेनुं । ईळे ।
ये । वातऽजूताः । तरणिऽभिः । एवैः । परि । द्यां । सद्यः । अपसः । बभूवुः ॥१॥

तत्र ऋभूणां पूर्वं मनुष्याणामेव सतां तपसा देवत्वप्राप्तिरार्भवं शंसत्यृभवो वै देवेभ्यः । ऐ॰ ब्रा॰ ३. ३० । इत्यत्र ब्राह्मणे स्पष्टमाम्नाता । केचन ऋभवो नाम सूर्यरश्मय इत्याचक्षते । अहं यजमान ऋभुभ्य उरुभासमानेभ्य एतन्नामकेभ्यो देवेभ्यो वाचं स्तुतिरूपां प्रेष्ये । प्रेरयामि । किमिव । दूतमिव । यथा दूतं स्वकार्यं प्रति प्रेषयति तद्वत् । किंच उपस्तिरे सोमोपस्तरणाय श्वैतरीं पयोयुक्तां श्वेततरां वा धेनुमीळे । याचाम्यृभून् । ये ऋभवो वातजूता वातसमानगतयोऽपसो जगदुपकारिकर्माणः संतस्तरणिभिस्तारकैरेवैर्गमनशीलैरश्वैर्द्यामंतरिक्षं सद्यस्तदानीमेव परि बभूवुः । परिभवंति । सर्वतो व्याप्नुवंति । अथ रश्मय एव ऋभव इत्युक्तत्वादादित्यं वा रश्मयः परितो व्याप्नुवंति ॥

यदारमक्रन्नृभवः पितृभ्यां परिविष्टी वेषणा दंसनाभिः ।
आदिद्देवानामुप सख्यमायन्धीरासः पुष्टिमवहन्मनायै ॥२॥

यदा । अरं । अक्रन् । ऋभवः । पितृऽभ्यां । परिऽविष्टी । वेषणा । दंसनाभिः ।
आत् । इत् । देवानां । उप । सख्यं । आयन् । धीरासः । पुष्टिं । अवहन् । मनायै ॥२॥

यदा यस्मिन्काले ऋभवः पितृभ्यां मातापितृभ्यां परिविष्टी परिवेषणेन परिचर्यया वेषणा वेषणेन व्याप्त्या । यद्वा । वेषेण जरद्रूपयोर्युवत्वकरणेन दंसनाभिरन्यैश्चमसनिर्माणादिकर्मभिररमत्यर्थमकन् आदिदनंतरमेव देवानामिंद्रादीनां सख्यं सखित्वं समानख्यानत्वं देवतात्वमुपायन् । आगमन् । युवशा कृत्वा । ऋग्वे॰ १. १६१. ३. ।

इति देवत्वप्राप्तिरेकांतत्वेन देवैरुक्तत्वादिति भावः । किंच धीरासो धीरा बुद्धिमंतस्तेषां पुष्टिं गवादिविषया मनायै मतिष्कृते यजमानायावहन् । वहति । धारयति । यद्वा । सविषयां पुष्टिं मनायै मनसे प्रकृष्टमनस्कत्वायावहन् ॥

पुन॒र्ये च॒क्रुः पि॒तरा॒ युवा॑ना॒ सना॒ यूपे॑व जर॒णा शया॑ना ।
ते वाजो॒ विभ्वाँ॑ ऋ॒भुरिंद्र॑वंतो॒ मधु॑प्सरसो नोऽवंतु य॒ज्ञं ॥३॥
पुन॒रिति॑ । ये । च॒क्रुः । पि॒तरा॑ । युवा॑ना । सना॑ । यूपा॑ऽइव । ज॒र॒णा । शया॑ना ।
ते । वाजः॑ । वि॒ऽभ्वा॑ । ऋ॒भुः । इंद्र॑ऽवंतः । मधु॑ऽप्सरसः । नः॒ । अ॒वं॒तु॒ । य॒ज्ञं ॥३॥

ये ऋभवः पितरा मातापितरौ यूपेव छिन्नस्थाणू इव जरणा जीर्णौ शयाना शयानौ पुनः सना सदा युवाना युवानौ चक्रुः । नित्यतरुणावकुर्वन् । ते वाजो विभ्वा ऋभुश्च एतन्नामकास्त्रयः सुधन्वन आंगिरसस्य पुत्रा ऋभव इंद्रवंतोऽनुग्राहकेणेंद्रेण तद्वंतो मधुप्सरसो मधुरस्य सोमरसस्य भक्षयितारो मनोहररूपा वा नोऽस्मदीयं यज्ञमवंतु । रक्षंतु गच्छंतु वा ॥

यत्सं॒वत्स॑मृ॒भवो॒ गामर॑क्ष॒न्यत्सं॒वत्स॑मृ॒भवो॒ मा अपिं॑शन् ।
यत्सं॒वत्स॒मभ॑र॒न्भासो॑ अस्या॒स्ताभिः॒ शमी॑भिरमृत॒त्वमा॑शुः ॥४॥
यत् । सं॒ऽवत्सं॑ । ऋ॒भवः॑ । गां । अर॑क्षन् । यत् । सं॒ऽवत्सं॑ । ऋ॒भवः॑ । माः॑ । अपिं॑शन् ।
यत् । सं॒ऽवत्सं॑ । अभ॑रन् । भासः॑ । अ॒स्याः॒ । ताभिः॑ । शमी॑भिः । अ॒मृ॒त॒ऽत्वं । आ॒शुः॒ ॥४॥

संवत्सं । संवसंति भूतान्यस्मिन्निति संवत्सः संवत्सरः । संवत्सरपर्यंतमृभवो गां मृतामरक्षन्नपालयन् । स्वमांसस्पर्शादिति यत् यदेतत्कर्मास्ति । तथा संवत्सं संवत्सरमृभवो मांसमस्या एव गोर्मांसमपिंशन् अवयववंतमकुर्वन्निति यत् । किंच संवत्सं संवत्सरपर्यंतमस्या भासोऽभरन् दीप्तीरवयवशोभा अकुर्वन्निति यत् ताभिः शमीभिर्मृताया गोर्नवीकरणविषयैः कर्मभिरमृतत्वमाशुः । देवत्वं प्राप्ताः । धेनुः कर्त्वेति देवत्वप्राप्तिसाधनत्वेन देवैः प्रतिश्रुतत्वात् । यद्वा । अत्र संवत्समित्येतद्वत्सेन सहेति व्याख्येयं ॥

ज्ये॒ष्ठ आ॑ह चम॒सा द्वा क॒रेति॒ कनी॑या॒न्त्रीन्कृ॑णवा॒मेत्या॑ह ।
क॒नि॒ष्ठ आ॑ह च॒तुर॑स्क॒रेति॒ त्वष्ट॑ ऋभव॒स्तत्प॑नय॒द्वचो॑ वः ॥५॥
ज्ये॒ष्ठः । आ॒ह॒ । च॒म॒सा । द्वा । क॒र॒ । इति॑ । कनी॑यान् । त्रीन् । कृ॒ण॒वा॒म॒ । इति॑ । आ॒ह॒ ।
क॒नि॒ष्ठः । आ॒ह॒ । च॒तुरः॑ । क॒र॒ । इति॑ । त्वष्टा॑ । ऋ॒भ॒वः॒ । तत् । प॒न॒य॒त् । वचः॑ । वः॒ ॥५॥

एकं चमसं चतुरस्कृणोतन । ऋग्वे॰ १ १६१. २ । इति यदा देवदूतोऽग्निर्ऋभूनाह देवत्वप्राप्त्युक्तं तदा तेषु मध्ये देवत्वप्राप्त्युत्क एको ज्येष्ठ ऋभुरितरावाह । किमिति । उच्यते । चमसा द्वा करेति । एकमेव संतं द्वौ कृणवामेति । कनीयान् तदनंतरो विभ्वा त्रीन् कृणवाम करवामेत्याह । तदवरः कनिष्ठो वाजश्चतुरः कर चतुर्धा करवामेत्याह । तदेव चतुष्करणरूपं हे ऋभवस्त्वष्टा युष्मद्गुरुः वो वचः युष्मद्वचनं पनयत् । अस्तौत् । अंगीचकारेत्यर्थः ॥ ॥१॥

स॒त्यमू॑चु॒र्नर॑ ए॒वा हि च॒क्रुरनु॑ स्व॒धामृ॒भवो॑ जग्मुरे॒तां ।
वि॒भ्राज॑माना॒ंश्चम॒साँ अहे॒वावे॑न॒त्त्वष्टा॑ च॒तुरो॑ ददृ॒श्वान् ॥६॥

सत्यं। ऊचुः। नरः। एव। हि। चक्रुः। अनु। स्वधां। ऋभवः। जग्मुः। एतां।
विऽभ्राजमानान्। चमसान्। अहाऽइव। अवेनत्। त्वष्टा। चतुरः। ददृश्वान् ॥६॥

नरो मनुष्यरूपा ऋभवः सत्यमूचुः। सत्यमेवाब्रुवन्। हि यस्मादेत एवैवं चक्रुः। चतुरोऽकुर्वन्। यथोक्तं तथैव कृतत्वादित्यभिप्रायः। अनु चतुर्धाकरणानंतरमेतां तृतीयसवनगतां स्वधां सोमाख्यममृतमृभवो जग्मुः। एकं चमसं चतुरस्कृणोतन साकं देवैर्यज्ञियासो भविष्यथेति श्रुतत्वात्। अथ त्वष्टा देवो विभ्राजमानान्देवा-नानीव दीप्यमानांश्चमसांश्चतुरो ददृश्वान्दृष्टवान् सन्नवेनत्। अकामयत। अंगीचकारेत्यर्थः ॥

द्वादश द्यून्यदगोह्यस्यातिथ्ये रणन्नृभवः ससंतः।
सुक्षेत्राकृण्वन्ननयंत सिंधून्धन्वातिष्ठन्नोषधीर्निम्नमापः ॥७॥
द्वादश। द्यून्। यत्। अगोह्यस्य। आतिथ्ये। रणन्। ऋभवः। ससंतः।
सुऽक्षेत्रा। अकृण्वन्। अनयंत। सिंधून्। धन्व। आ। अतिष्ठन्। ओषधीः।
निम्नं। आपः ॥७॥

तत्र रश्मय एव ऋभव इत्युक्तत्वात्तद्रूपेण स्तूयंते। यद्यदा द्वादश द्यून्दिवसान्। आर्द्रादिद्वादशवृष्टिन-क्षत्राणीत्यर्थः। अगोह्यस्यागोप्यस्यादित्यस्य गृह आतिथ्ये। अकस्मादागतोऽतिथिः। तदुचितं सत्काररूपं कर्मातिथ्यं। तदर्थं ससंतः स्वपतः सुखेन निवसंत ऋभवो रणन् रमंते। अगोह्यस्य यदसस्तना गृहे। ऋग्वे॰ १ १६१ ११। इत्युक्तं। तदानीं सुक्षेत्राकृण्वन्। अकृष्टानि शून्यानि क्षेत्राणि वृष्ट्या सस्यादिसमृद्धान्यकुर्वन्। सिंधु-नदीरनयंत। प्रेरयन्। तस्मिन् काले ओषधीरोषधयो धन्व निरुदकस्थानमाश्रित्यातिष्ठन्। निम्नं नीचस्थान-मापोऽतिष्ठन्। उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वप इत्युक्तं ॥

रथं ये चक्रुः सुवृतं नरेष्ठां ये धेनुं विश्वजुवं विश्वरूपां।
त आ तक्षंत्वृभवो रयिं नः स्ववसः स्वपसः सुहस्ताः ॥८॥
रथं। ये। चक्रुः। सुऽवृतं। नरेऽस्थां। ये। धेनुं। विश्वऽजुवं। विश्वऽरूपां।
ते। आ। तक्षंतु। ऋभवः। रयिं। नः। सुऽअवसः। सुऽअपसः। सुऽहस्ताः ॥८॥

य ऋभवः सुवृतं सुचक्रं सुष्ठु वर्तमानं वा नरेष्ठां नेतरि चक्रे वर्तमानं रथं चक्रुः। ये च विश्वजुवं विश्वस्य प्रेरयित्रीं विश्वरूपां बहुरूपामेतन्नामिकां वा धेनुं गां चक्रुः। अकुर्वन्। बृहस्पतिर्विश्वरूपामुपाजत। ऋग्वे॰ १. १६१ ६.। इति ह्युक्तं। ते महांत ऋभवो नोऽस्माकं रयिं धनमा तक्षंतु। सर्वतो निष्पादयंतु। कीदृशास्त ऋभवः। स्वपसः सुकर्माणः स्ववसः शोभनान्नोपेताः सुरक्षणा वा सुहस्ताः शोभनहस्ताः कुशलहस्ताः ॥

अपो ह्येषामजुषंत देवा अभि क्रत्वा मनसा दीध्यानाः।
वाजो देवानामभवत्सुकर्मेंद्रस्य ऋभुक्षा वरुणस्य विभ्वा ॥९॥
अपः। हि। एषां। अजुषंत। देवाः। अभि। क्रत्वा। मनसा। दीध्यानाः।
वाजः। देवानां। अभवत्। सुऽकर्मा। इंद्रस्य। ऋभुक्षाः। वरुणस्य। विऽभ्वा ॥९॥

एषामृभूणामपोऽश्वरथनिर्माणादिरूपं कर्म देवा इंद्रादयोऽजुषंत। असेवंत। इंद्रो हरी युयुजे अश्विना रथमित्यादिमंत्रोक्तप्रकारेण स्वीकृतवंत इत्यर्थः। कीदृशास्ते। क्रत्वा वरप्रदानरूपेण कर्मणा मनसा शोभनेन

चित्तेनानुग्रहयुक्तेनाभि दीध्याना दीप्यमानाः । देवानामनुग्रहेण किं लब्धमित्याह । सुकर्मा शोभनव्यापारो वाजः कनीयान्देवानां सर्वेषां संबंध्यभवत् । तथेंद्रस्य संबंधृभुक्षा ऋभुर्ज्येष्ठः । विभ्वा मध्यमो वरुणस्य संबंध्यभवत् ॥

ये हरी मेधयोक्था मदंत इंद्राय चक्रुः सुयुजा ये अश्वा ।
ते रायस्पोषं द्रविणान्यस्मे धत्त ऋभवः क्षेमयंतो न मित्रं ॥१०॥
ये । हरी इति । मेधया । उक्था । मदंतः । इंद्राय । चक्रुः । सुऽयुजा । ये । अश्वा ।
ते । रायः । पोषं । द्रविणानि । अस्मे इति । धत्त । ऋभवः । क्षेमऽयंतः । न । मित्रं ॥१०॥

य ऋभवो हरी अश्वौ मेधया प्रज्ञयोक्था उक्थैः स्तुतिभिर्मदंतो हर्षयतश्चक्रुः । ये च तौ सुयुजा सुयुजा सुयोजनावश्वाविंद्रायेंद्रार्थं चक्रुः । अकुर्वन् । हे ऋभवस्ते यूयं रायस्पोषं धनपुष्टिं द्रविणानि गवादिधनानि च सुखानि वास्मे अस्मासु धत्त । धारयत । किमिव । क्षेमयतः क्षेममिच्छतो मित्रं न मित्रमिव । अत्र यद्यप्येक एव ऋभुनामा तत्संबंधादितरेऽप्यृभव उच्यंते प्राणभृन्न्यायेन ॥

इदाह्नः पीतिमुत वो मदं धुर्न ऋते श्रांतस्य सख्याय देवाः ।
ते नूनमस्मे ऋभवो वसूनि तृतीये अस्मिन्त्सवने दधात ॥११॥
इदा । अह्नः । पीतिं । उत । वः । मदं । धुः । न । ऋते । श्रांतस्य । सख्याय । देवाः ।
ते । नूनं । अस्मे इति । ऋभवः । वसूनि । तृतीये । अस्मिन् । सवने । दधात ॥११॥

इदेदानीं चमसादिनिर्माणानंतरमह्नः सुत्याहसंबंधिनस्तृतीये सवने पीतिं सोमपानमुतापि च मदं तज्जनितं वो युष्माकं धुः । ददुर्देवाः । श्रांतस्य श्रातात्तपोयुक्तादृते सख्याय सखित्वाय न भवंति देवाः । यत एते श्रांता अतो ददुरित्यर्थः । हे ऋभवस्ते महांतो यूयं नूनं निश्चयमस्मे अस्मास्वस्मिन् तृतीये सवने वसूनि धनानि दधात । धारयत ॥ ॥२॥

ऋभुर्विभ्वेत्येकादशर्चं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमार्भवं । ऋभुर्विभ्वेत्यनुक्रमणिका ॥ व्यूढे दशरात्रे पंचमेऽहनि वैश्वदेवशस्त्र आर्भवनिविद्धानीयमिदं । ऋभुर्विभ्वा स्तुप जनं । आ॰ ८. ८. । इति सूत्रितत्वात् ॥

ऋभुर्विभ्वा वाज इंद्रो नो अच्छेमं यज्ञं रत्नधेयोप यात ।
इदा हि वो धिषणा देव्यह्नामधात्पीतिं सं मदा अग्मता वः ॥१॥
ऋभुः । विऽभ्वा । वाजः । इंद्रः । नः । अच्छ । इमं । यज्ञं । रत्नऽधेया । उप । यात ।
इदा । हि । वः । धिषणा । देवी । अह्नां । अधात् । पीतिं । सं । मदाः । अग्मत । वः ॥१॥

ऋभुर्विभ्वा वाज इंद्रश्चेति देवा नोऽस्मदीयमिमं यज्ञमच्छाभिमुखं रत्नधेयाय रत्नधानायोप यात । उपगच्छत । ननु इंद्रः सोमस्वामित्वादागच्छतु कथमेतेषां यज्ञप्राप्तिरिति चेत् । उच्यते । इदा हीदानीं खलु वो युष्माकं धिषणा वाक् देवी प्रजापतेः संबंधिन्यह्नां सोमाभिषवसंबंधिनां पीतिं सोमपानमधात् । स प्रजापतिरब्रवीत्सविताऽर तव वा इमेऽंतेवासास्त्वमेवैभिः संपिबस्व । ऐ॰ ब्रा॰ ३. ३० । इति ब्राह्मणं । यस्मादेवं तस्मा-न्मदाश्च वो युष्मान् समगमत । संगताः । यद्वा । वो मदा देवैः संगताः ॥

विदानासो जन्मनो वाजरत्ना उत ऋतुभिर्ऋभवो मादयध्वं ।
सं वो मदा अग्मत सं पुरंधिः सुवीरामस्मे रयिमेरयध्वं ॥२॥

विदानासः । जन्मनः । वाजऽरत्नाः । उत । ऋतुऽभिः । ऋभवः । मादयध्वं ।
सं । वः । मदाः । अग्मत । सं । पुरंऽधिः । सुऽवीरां । अस्मे इति । रयिं । आ । ईरयध्वं ॥ २॥

हे वाजरत्नाः सोमलक्षणेनान्नेन राजमाना ऋभवो यूयं जन्मनो जननस्य देवत्वलक्षणस्य देवत्वप्राप्तिं विदानासो जानतः । यद्वा । विदानासः सोमप्राप्तिं जानतो जन्मनः पूर्वं मनुष्यजन्मवंतश्च संतः । उतशब्दश्चार्थे । ऋतुभिर्देवैः सह मादयध्वं । वो युष्मान्मदाः सोमपानजनिताः समग्मत । संगताः । पुरंधिः स्तुतिरपि समग्मत । ते यूयमस्मे अस्माकं सुवीरां शोभनैर्वीरैः पुत्रैरुपेतां रयिमैरयध्वं । प्रेरयत ॥

अयं वो यज्ञ ऋभवोऽकारि यमा मनुष्वत्प्रदिवो दधिध्वे ।
प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥ ३॥
अयं । वः । यज्ञः । ऋभवः । अकारि । यं । आ । मनुष्वत । प्रऽदिवः । दधिध्वे ।
प्र । वः । अच्छ । जुजुषाणासः । अस्थुः । अभूत । विश्वे । अग्रिया । उत । वाजाः ॥ ३॥

हे ऋभवो वो युष्मदर्थमयं यज्ञोऽकारि । यं यज्ञं मनुष्वन्मनुष्यवत्प्रदिवः प्रकर्षेण द्योतमानाः संत आ दधिध्वे । धारयत जठरे । तदर्थं वो युष्मानच्छाभिमुख्येन जुजुषाणासः सेव्यमानाः सोमाः प्रास्थुः । प्रतिष्ठंते । उतापि च धारयित्वा च हे वाजा ऋभवो विश्वे यूयमग्रियायाग्राहा अग्रत्वसंपादिनो वा अभूत । भवथ ॥

अभूदु वो विधते रत्नधेयमिदा नरो दाशुषे मर्त्याय ।
पिबत वाजा ऋभवो ददे वो महि तृतीयं सवनं मदाय ॥ ४॥
अभूत । ऊं इति । वः । विधते । रत्नऽधेयं । इदा । नरः । दाशुषे । मर्त्याय ।
पिबत । वाजाः । ऋभवः । ददे । वः । महि । तृतीयं । सवनं । मदाय ॥ ४॥

हे नरो नेतार ऋभवो वो युष्माकमनुग्रहादिदेदानीं तृतीये सवने रत्नधेयं दातव्यं रत्नं विधते । विधतिः परिचरणकर्मा । स्तुत्या परिचरते दाशुषे हविर्दत्तवते मर्त्याय यजमानाय मह्यमभूत । भवतु । तदर्थं हे वाजा हे ऋभवः । एतद्द्वयं विभ्वनामकस्याप्युपलक्षणं । इतरापेक्षया प्रत्येकं बहुवचनं । यूयं पिबत । तदर्थं वो ददे । किं । महि महत्प्रभूतं तृतीयं सवनं । तत्साधनं सोममित्यर्थः । किमर्थं । मदाय हर्षाय तृप्तये वा ॥

आ वाजा यातोप न ऋभुक्षा महो नरो द्रविणसो गृणानाः ।
आ वः पीतयोऽभिपित्वे अह्नामिमा अस्तं नवस्व इव ग्मन् ॥ ५॥
आ । वाजाः । यात । उप । नः । ऋभुक्षाः । महः । नरः । द्रविणसः । गृणानाः ।
आ । वः । पीतयः । अभिऽपित्वे । अह्नां । इमाः । अस्तं । नवस्वःऽइव । ग्मन् ॥ ५॥

हे वाजा ऋभुक्षा नरो नेतारो यूयं न उपा यात । किं कुर्वंतः । महो महतो द्रविणसो धनस्य ॥ कर्मणि षष्ठी ॥ महत् द्रविणं गृणानाः स्तुवंतः । किंच अह्नामभिपित्वेऽभिपतने समाप्तौ । तृतीये सवन इत्यर्थः । वो युष्मानिमाः पीतयः पानान्या ग्मन् । आगच्छंति । तत्र दृष्टांतः । अस्तं । गृहनामैतत् । गृहं नवस्वो नवप्रसवा गाव इव ॥ ॥ ३॥

आ नपातः शवसो यातनोपेमं यज्ञं नमसा हूयमानाः ।
सजोषसः सूरयो यस्य च स्थ मध्वः पात रत्नधा इंद्रवंतः ॥ ६॥

आ। नपातः। शवसः। यातन। उप। इमं। यज्ञं। नमसा। हूयमानाः।
सऽजोषसः। सूरयः। यस्य। च। स्थ। मध्वः। पात। रत्नऽधाः। इंद्रऽवंतः॥६॥

हे शवसो नपातो बलस्य न पातयितारस्तस्य पुत्रा वा। बलवंत इत्यर्थः। यूयं नमसा स्तोत्रेण हूयमाना आकारिताः संत इमं यज्ञमुप आ यातन। उपागच्छत। कीदृशा यूयं। सजोषस इंद्रेण सह प्रीताः सूरयो मेधाविनः। इंद्रस्य चैषां च कः प्रसंग इत्युच्यते। यस्य च स्थ। भवथ प्रीतिमंतो। यस्येंद्रस्य संबंधिनो यूयं भवथ तद्रचिताश्वनिर्माणादित्यभिप्रायः। यस्मादेवं तस्मादिंद्रवतः प्रीतेनेंद्रेण तद्वंतो रत्नधा रमणीयधनानां दातारो यूयं मध्वो मधुरं सोमं पात। पिबत॥

सजोषा इंद्र वरुणेन सोमं सजोषाः पाहि गिर्वणो मरुद्भिः।
अग्रेपाभिर्ऋतुपाभिः सजोषा ग्नास्पत्नीभी रत्नधाभिः सजोषाः॥७॥

सऽजोषाः। इंद्र। वरुणेन। सोमं। सऽजोषाः। पाहि। गिर्वणः। मरुत्ऽभिः।
अग्रेऽपाभिः। ऋतुऽपाभिः। सऽजोषाः। ग्नाःपत्नीभिः। रत्नऽधाभिः। सऽजोषाः॥७॥

हे इंद्र त्वं वरुणेन रात्र्यभिमानिदेवेन सजोषाः समानप्रीतिः सन् सोमं पाहि। पिब। हे गिर्वणो गीर्भिर्वननीय संभजनीयेंद्र त्वं मरुद्भिः सजोषाः सगतः सन् सोमं पाहि। पिब। किंच अग्रेपाभिः प्रथमपातृभिर्ऋतुपाभिर्ऋतुयाजदेवैश्च ग्नास्पत्नीभिः। स्त्रीणां पालयित्र्यो देव्यो ग्नास्पत्न्यः। ताभिः। गना ग्ना इति स्त्रीणामिति निरुक्तं ३.२१। रत्नधाभी रमणीयधनदातृभिर्ऋभुभिः सह पिब। यद्वा। एतत् ग्नास्पत्नीभिरित्यस्य विशेषणं। ताभिर्वा सजोषाः सोमं पिब॥

सजोषस आदित्यैर्मादयध्वं सजोषस ऋभवः पर्वतेभिः।
सजोषसो दैव्येना सवित्रा सजोषसः सिंधुभी रत्नधेभिः॥८॥

सऽजोषसः। आदित्यैः। मादयध्वं। सऽजोषसः। ऋभवः। पर्वतेभिः।
सऽजोषसः। दैव्येन। सवित्रा। सऽजोषसः। सिंधुऽभिः। रत्नऽधेभिः॥८॥

हे ऋभव आदित्यैः सजोषसः सगता यूयं मादयध्वं। तथा पर्वतेभिः पर्ववद्भिः पर्वण्यर्च्यमानैर्देवविशेषैः सजोषसो मादयध्वं। तथा च दैव्येन देवेभ्यो हितेन सवित्रा सजोषसो रत्नधेभी रत्नानां दातृभिः सिंधुभिः स्यंदनस्वभावैर्नद्यभिमानिदेवैश्च सजोषसो मादयध्वं॥

ये अश्विना ये पितरा य ऊती धेनुं ततक्षुर्ऋभवो ये अश्वा।
ये अंसत्रा य ऋधग्रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः॥९॥

ये। अश्विना। ये। पितरा। ये। ऊती। धेनुं। ततक्षुः। ऋभवः। ये। अश्वा।
ये। अंसत्रा। ये। ऋधक्। रोदसी इति। ये। विऽभ्वः। नरः। सुऽअपत्यानि। चक्रुः॥९॥

य ऋभवोऽश्विनावश्विनावूती ऊत्या क्रियया रथनिर्माणरूपयाप्रीणयन्। ये च पितरा पितरौ ततक्षुस्तक्षणेन समपादयन् जीर्णौ संतावूती ऊत्या युवानौ चक्रुः। ये च धेनुं ततक्षुः मृतायाः पुनर्नवीकरणेन। ये चाश्वावश्वौ ततक्षुः। निश्चर्मणो गामरिणीत धीतिभिर्या जरंता युवशा ताकृणोतनेत्यादृक्तं। ऋग्वे० १.१६१.७। ये चांसत्रांसत्राणि कवचानि देवेभ्यश्चक्रुः। ये च रोदसी द्यावापृथिव्यावृधक् पृथक्चक्रुः। एवमुक्तप्रकारेण ये विभ्वो व्याप्ता ऋभवो नरो नेतारः स्वपत्यानि स्वपतनसाधनानि तत्प्राप्तिसाधनानि वा कर्माणि चक्रुः। ते ऽग्रेपा इत्युत्तरत्र संबंधः॥

ये गोमंतं वाजवंतं सुवीरं रयिं धत्थ वसुमंतं पुरुक्षुं।
ते अग्रेपा ऋभवो मंदसाना अस्मे धत्त ये च रातिं गृणंति ॥१०॥
ये। गोऽमंतं। वाजऽवंतं। सुऽवीरं। रयिं। धत्थ। वसुऽमंतं। पुरुऽक्षुं।
ते। अग्रेऽपाः। ऋभवः। मंदसानाः। अस्मे इति। धत्त। ये। च। रातिं। गृणंति ॥१०॥

हे ऋभवो ये यूयं गोमंत गोसहितं वाजवंतमन्नवंतं सुवीरं शोभनपुत्रोपेतं वसुमंतं निवासयोग्यगृहादिधनोपेत पुरुक्षुं बह्वन्नं रयि धन धत्थ। धारयथ मह्य दातुं। हे ऋभवस्ते यूयमग्रेपाः प्रथमं पातारो मंदसाना माद्यतः संतोऽस्मे अस्मभ्यं धत्त। दत्त रयिं। ये च यूय राति दानं दत्तं सोम वा गृणति। स्तुवंति। ते धत्त। यद्वा। ये च रातिं गृणंति यजमानास्तेभ्योऽपि धत्त ॥

नापाभूत न वोऽतीतृपामानिःशस्ता ऋभवो यज्ञे अस्मिन।
समिंद्रेण मदथ सं मरुद्भिः सं राजभी रत्नधेयाय देवाः ॥११॥
न। अप। अभूत। न। वः। अतीतृपाम। अनिःऽशस्ताः। ऋभवः। यज्ञे। अस्मिन।
सं। इंद्रेण। मदथ। सं। मरुत्ऽभिः। सं। राजऽभिः। रत्नऽधेयाय। देवाः ॥११॥

हे ऋभवो यूय नापाभूत। नापगच्छत। अपरक्ता न भवत। वयं च वो युष्मान्नातीतृपाम। अत्यत तर्पितान्मा करवाम। अतो हे ऋभवो देवा अनिःशस्ता अनिंदिताः संतोऽस्मिन्यज्ञ इंद्रेण सं मदथ। मरुद्भिः स मदथ। राजभी राजमानैरन्यैर्देवैः सं मदथ। तृप्ता भवथ। किमर्थं। रत्नधेयाय रमणीयाय धन दानाय॥ ॥४॥

इहोप यातेति नवर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमार्भवं। इहोप नवेत्यनुक्रमणिका ॥ तृतीयसवने मैत्रावरुणस्येदमनुवोयमानसूक्तं। सूत्रितं च। आ त्वा वहत्वमावि देवमिहोप यातेत्यनुसवनं। आ॰ ५ ५.। इति ॥

इहोप यात शवसो नपातः सौधन्वना ऋभवो माप भूत।
अस्मिन्हि वः सवने रत्नधेयं गमंत्विंद्रमनु वो मदासः ॥१॥
इह। उप। यात। शवसः। नपातः। सौधन्वनाः। ऋभवः। मा। अप। भूत।
अस्मिन। हि। वः। सवने। रत्नऽधेयं। गमंतु। इंद्रं। अनु। वः। मदासः ॥१॥

हे शवसो नपातो बलस्य पुत्रास्तस्य न पातयितारो वा हे सौधन्वनाः सुधन्वनः पुत्रा हे ऋभवो यूयमिहोप यात। अस्मिन तृतीये सवन उपगच्छत। माप भूत। अपगता म भवत। अस्मिन सवने रत्नधेयं रमणीयधनस्य दातारमिंद्रमनु अनुसृत्य वो युष्मान्मदासो मदकराः सोमा गमंतु। गच्छतु। अन्विति क्रियया वा संबध्यते। इंद्रं युष्मांश्चान्वागच्छंत्वित्यर्थः। हि पूरणः ॥

आगन्नृभूणामिह रत्नधेयमभूत्सोमस्य सुषुतस्य पीतिः।
सुकृत्यया यत्स्वपस्यया चँ एकं विचक्र चमसं चतुर्धा ॥२॥
आ। अगन। ऋभूणां। इह। रत्नऽधेयं। अभूत्। सोमस्य। सुऽसुतस्य। पीतिः।
सुऽकृत्यया। यत्। सुऽअपस्यया। च। एकं। विऽचक्र। चमसं। चतुःऽधा ॥२॥

ऋभूणां युष्माकमिह तृतीयसवने रत्नधेयं रत्नदानमागन्। आगच्छतु मह्यं। यद्वा। युष्माकमेव सोमाख्यं

रत्नमागन्। यस्मात्सोमस्य सुषुतस्य पीतिः पानमभूत्। प्रजापतिना लब्धमित्यर्थः। तदपि कुत इति चेत्। उच्यते। यद्यस्मात्सुकृत्यया शोभनहस्तव्यापारेण स्वपस्यया शोभनरथनिर्माणादिकर्मेच्छया चैकं सन्तं चमसं चतुर्धा विचक्र। कृतवतः॥

व्यकृणोत चमसं चतुर्धा सखे वि शिक्षेत्यब्रवीत।
अथैत वाजा अमृतस्य पन्थां गणं देवानामृभवः सुहस्ताः॥३॥
वि। अकृणोत। चमसं। चतुःऽधा। सखे। वि। शिक्ष। इति। अब्रवीत।
अथ। एत। वाजाः। अमृतस्य। पन्थां। गणं। देवानां। ऋभवः। सुऽहस्ताः॥३॥

हे ऋभवो यूयं चमसं चतुर्धा व्यकृणोत। व्यकुरुत। कृत्वा च हे सखे हे सखिभूताग्ने वि शिक्षानुगृहाण सोमपानमित्यब्रवीत। अवदत यूयं। अथ सोऽग्निर्युष्मानवादीत् खलु। किमिति। हे वाजा ऋभवः सुहस्ताः कुशलहस्ता यूयममृतस्यामरणधर्मकस्य स्वर्गस्य पन्थां पन्थानमैत। गच्छत। किं तदमृतमिति। देवानामिन्द्रादीनां गणं संघातमैत॥

किंमयः स्विच्चमस एष आस यं काव्येन चतुरो विचक्र।
अथा सुनुध्वं सवनं मदाय पात ऋभवो मधुनः सोम्यस्य॥४॥
किंऽमयः। स्वित्। चमसः। एषः। आस। यं। काव्येन। चतुरः। विऽचक्र।
अथ। सुनुध्वं। सवनं। मदाय। पात। ऋभवः। मधुनः। सोम्यस्य॥४॥

किंमयः स्वित् किमात्मक एष चमस आस। स्विदिति प्रश्ने। यं चमसमेकं सन्तं काव्येन कवीनां मेधाविनां संबन्धिना कर्मणा कौशलेन चतुरो विचक्र। कृतवतः। अथाधुना सवनं। सूयत इति सवनः सोमः। तं मदाय हर्षाय सुनुध्वं हे ऋत्विजः। हे ऋभवो यूयं च सोम्यस्य सोमसंबन्धिनो मधुनो मधुरं रसं पात। पिबत॥

शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवपानं।
शच्या हरी धनुतरावतष्टेन्द्रवाहावृभवो वाजरत्नाः॥५॥
शच्या। अकर्त। पितरा। युवाना। शच्या। अकर्त। चमसं। देवऽपानं।
शच्या। हरी इति। धनुंऽतरा। अतष्ट। इंद्रऽवाहा। ऋभवः। वाजऽरत्नाः॥५॥

हे वाजरत्ना रमणीयसोमान्ना हे ऋभवो यूयं शच्या कर्मणा पितरा मातापितरौ युवाना युवानावकर्त। अकुरुत। तथा शच्या चमसं देवपानं देवपानार्हमकर्त। चतुर्धाकुरुतेत्यर्थः। शच्या हरी अतष्ट। तक्षणेन संपादितवतः। कीदृशौ हरी। धनुतरौ शीघ्रं गन्तृतरावि‍न्द्रवाहाविन्द्रवोढारौ॥ ॥५॥

यो वः सुनोत्यभिपित्वे अह्नां तीव्रं वाजासः सवनं मदाय।
तस्मै रयिमृभवः सर्ववीरमा तक्षत वृषणो मन्दसानाः॥६॥
यः। वः। सुनोति। अभिऽपित्वे। अह्नां। तीव्रं। वाजासः। सवनं। मदाय।
तस्मै। रयिं। ऋभवः। सर्वऽवीरं। आ। तक्षत। वृषणः। मन्दसानाः॥६॥

हे ऋभवो वाजासोऽन्नवन्तो वो युष्मभ्यं यो यजमानोऽह्नामभिपित्वेऽभिपतने। तृतीयसवन इत्यर्थः। तस्मिन् तीव्रं रसवत्तरं सवनं। सूयत इति सवनः सोमः। तं मदाय सुनोति तस्मै सर्ववीरं बहुपुत्रोपेतं रयिं धनं हे वृषणः फलवर्षितारो मन्दसाना मोदमानाः सन्त आ तक्षत। संपादयतेत्यर्थः॥

प्रातः सुतमपिबो हर्यश्व माध्यंदिनं सवनं केवलं ते ।
समृभुभिः पिबस्व रत्नधेभिः सखीँयाँ इंद्र चकृषे सुकृत्या ॥७॥
प्रातरिति । सुतं । अपिबः । हरिऽअश्व । माध्यंदिनं । सवनं । केवलं । ते ।
सं । ऋभुऽभिः । पिबस्व । रत्नऽधेभिः । सखीन् । यान् । इंद्र । चकृषे । सुऽकृत्या ॥७॥

हे हर्यश्व हरितवर्णाश्वोपेतेंद्र प्रातः प्रातःसवने सुतमभिषुतं सोममपिबः । पिबसि । माध्यंदिनं सवनं केवलं ते । परं तवैव नान्येषां । सवनत्रयस्य पृथगभिधानात्तृतीयसवनं परिशिष्यते । तृतीयसवने रत्नधेभी रमणीयदातृभिर्ऋभुभिः सं पिबस्व । हे इंद्र यानृभून् सुकृत्या शोभनकर्मणा सखीन् चकृषे । अकरोः ॥

ये देवासो अभवता सुकृत्या श्येना इवेदधि दिवि निषेद ।
ते रत्नं धात शवसो नपातः सौधन्वना अभवतामृतासः ॥८॥
ये । देवासः । अभवत । सुऽकृत्या । श्येनाःऽइव । इत् । अधि । दिवि । निऽसेद ।
ते । रत्नं । धात । शवसः । नपातः । सौधन्वनाः । अभवत । अमृतासः ॥८॥

हे ऋभवो ये यूयं सुकृत्या शोभनकर्मणा देवासो देवा अभवत । अभूत । श्येना इवेत् शमनीयगतयो गृध्रविशेषा इव दिवि द्युलोकेऽधि निषेद अधिनिषण्णाः हे शवसो नपातो बलवतस्ते यूयं रत्नं धनं धात । प्रयच्छत । हे सौधन्वना अमृतासोऽमृता देवा अभवत ॥

यत्तृतीयं सवनं रत्नधेयमकृणुध्वं स्वपस्या सुहस्ताः ।
तदृभवः परिषिक्तं व एतत्सं मदेभिरिंद्रियेभिः पिबध्वं ॥९॥
यत् । तृतीयं । सवनं । रत्नऽधेयं । अकृणुध्वं । सुऽअपस्या । सुऽहस्ताः ।
तत् । ऋभवः । परिऽसिक्तं । वः । एतत् । सं । मदेभिः । इंद्रियेभिः । पिबध्वं ॥९॥

हे सुहस्ताः शोभनहस्ता ऋभवो रत्नधेयं रमणीयसोमदानवद्यत्तृतीयं सवनमकृणुध्वं । प्रसाधितवतः । स्वपस्या शोभनकर्मेच्छया तदेतत्सवनं सवनगतं सोमद्रव्यं परिषिक्तं परिषेचनवद्वो युष्माकं संबंधिभिर्मदेभिर्मादयित्रिभिरिंद्रियेभिरिंद्रियैः सं पिबध्वं । यद्यपि वदनमेव पानसाधनं तथापि चक्षुःश्रोत्रादीनामपि दर्शनश्रवणादिना तृप्तिसद्भावात्पातृत्वमुपचर्यते ॥ ॥६॥

अनश्वो जात इति नवर्चं चतुर्थं सूक्तमार्भवं । ऋषिर्वामदेवः । अंत्या त्रिष्टुप् शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः । अनश्वोंऽत्या त्रिष्टुबित्यनुक्रमणिका ॥ आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्र आर्भवनिविद्धानीयमिदं । तथा च सूत्रितं । अनश्वो जातः परावतो य इति वैश्वदेवं । आ॰ ७. ७ । इति ॥

अनश्वो जातो अनभीशुरुक्थ्यो३ रथस्त्रिचक्रः परि वर्तते रजः ।
महत्तद्वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ॥१॥
अनश्वः । जातः । अनभीशुः । उक्थ्यः । रथः । त्रिऽचक्रः । परि । वर्तते । रजः ।
महत् । तत् । वः । देव्यस्य । प्रऽवाचनं । द्यां । ऋभवः । पृथिवीं । यत् । च । पुष्यथ ॥१॥

हे ऋभवोऽश्विनोः संबंधी युष्मद्दत्तो रथोऽनश्वो जातो वाहनाश्वनिरपेक्षः संपन्नः । तथानभीशुः प्रग्रहरहित उक्थ्यः स्तुत्यस्त्रिचक्रश्चक्रत्रययुक्तः सन् रजोऽतंरिक्षं परि वर्तते । परिभ्रमति । महत्प्रभूतं तद्रथनिर्मा-

णाख्यं कर्म वो युष्माकं दैव्यस्य देवत्वस्य प्रवाचनं प्रवक्तृ प्रख्यापकं। यस्य येन कर्मणा द्यां पृथिवीं च पुष्यथ। पुष्टां कुरुथ॥

रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरंतं मनसस्परि ध्यया।
ताँ ऊ न्व१स्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि॥२॥
रथं। ये। चक्रुः। सुऽवृतं। सुऽचेतसः। अविऽह्वरंतं। मनसः। परि। ध्यया।
तान्। ऊं इति। नु। अस्य। सवनस्य। पीतये। आ। वः। वाजाः। ऋभवः। वेदयामसि॥२॥

सुचेतसः शोभनचित्ता य ऋभवः सुवृतं सुवर्तनचक्रमविह्वरतमकुटिलं रथं मनसः परि ध्यया मनसो ध्यानेनाप्रयत्नेन नु क्षिप्रं चक्रुः तान्। उशब्द एवार्थे। तानेवास्य सवनस्य पीतये एतं सोमं पातुं हे वाजा हे ऋभवो वो युष्माना वेदयामसि। आवेदयामः॥

तद्वो वाजा ऋभवः सुप्रवाचनं देवेषु विभ्वो अभवन्महित्वनं।
जिव्री यत्संता पितरा सनाजुरा पुनर्युवाना चरथाय तक्षथ॥३॥
तत्। वः। वाजाः। ऋभवः। सुऽप्रवाचनं। देवेषु। विऽभ्वः। अभवत्। महिऽत्वनं।
जिव्री इति। यत्। संता। पितरा। सनाऽजुरा। पुनः। युवाना। चरथाय। तक्षथ॥३॥

हे वाजा ऋभवो हे विभ्वो विभवः। इतरापेक्षया परस्परं बहुवचनमित्युक्तं। वो युष्माकं तन्महित्वनं महत्त्वं माहात्म्यं देवेषु मध्ये सुप्रवाचनं प्रवाच्यमभवत्। तदित्युक्तं यदित्याह। जिव्री वृद्धौ सता सतौ सनाजुरा सदा जीर्णौ संतौ पितरा पितरौ पुनर्युवाना नित्यतरुणौ चरथाय यथेष्टं संचरणाय तक्षथ। संपादितवंतः॥

एकं वि चक्र चमसं चतुर्वयं निश्चर्मणो गामरिणीत धीतिभिः।
अथा देवेष्वमृतत्वमानश श्रुष्टी वाजा ऋभवस्तद्व उक्थ्यं॥४॥
एकं। वि। चक्र। चमसं। चतुःऽवयं। निः। चर्मणः। गां। अरिणीत। धीतिऽभिः।
अथ। देवेषु। अमृतऽत्वं। आनश। श्रुष्टी। वाजाः। ऋभवः। तत्। वः। उक्थ्यं॥४॥

हे ऋभव एकं चमसमेकमेव संतं पानसाधनं चमसं चतुर्वयं। वयाः शाखाः। चतुःशाखं चतुरवयवं वि चक्र। व्यकुरुत। तथा धीतिभिः कर्मभिश्चर्मणो नूतनां गां निररिणीत। समस्कुरुत। निरित्येष संमित्येतस्य स्थाने। अथ अतः कारणात् देवेषु मध्येऽमृतत्वमानश। प्राप्नुत। हे वाजा हे ऋभवस्तत्तादृशं वो युष्माकं कर्म। श्रुष्टीति क्षिप्रनामैतत्। क्षिप्रमुक्थ्यं स्तुत्यं भवति॥

ऋभुतो रयिः प्रथमश्रवस्तमो वाजश्रुतासो यमजीजनन्नरः।
विभ्वतष्टो विदथेषु प्रवाच्यो यं देवासोऽवथा स विचर्षणिः॥५॥
ऋभुतः। रयिः। प्रथमश्रवःऽतमः। वाजऽश्रुतासः। यं। अजीजनन्। नरः।
विभ्वऽतष्टः। विदथेषु। प्रऽवाच्यः। यं। देवासः। अवथ। सः। विऽचर्षणिः॥५॥

ऋभुत ऋभूणां सकाशात्प्रथमश्रवस्तमः प्रथमं मुख्यमतिशयितमन्नं यशो वा यस्य धनस्य तद्रयिर्धनं। अस्माकं भवत्विति शेषः। वाजश्रुतासो वाजैः सह विख्याता नरो नेतार ऋभवो यं रयिमजीजनन्। उत्पा

दितवंतः । विभ्वतष्टो विभ्वभिर्ऋभुभिस्तष्टस्तक्षणसंपन्नश्चमसोऽश्विनो रथो वा विदथेषु यज्ञेषु प्रवाच्यः । प्रकर्षेण स्तुत्यः । हे देवासो द्योतमाना यूयं यं रथं चमसं वावथ । रक्षथ । स विचर्षणिर्विविधं द्रष्टा भवति । द्रष्टव्यो भवतीत्यर्थः ॥ ॥ ५ ॥

स वाज्यर्वा स ऋषिर्वचस्यया स शूरो अस्ता पृतनासु दुष्टरः ।
स रायस्पोषं स सुवीर्यं दधे यं वाजो विभ्वाँ ऋभवो यमाविषुः ॥ ६ ॥
सः । वाजी । अर्वा । सः । ऋषिः । वचस्यया । सः । शूरः । अस्ता । पृतनासु । दुस्तरः ।
सः । रायः । पोषं । सः । सुऽवीर्यं । दधे । यं । वाजः । विऽभ्वा । ऋभवः । यं । आविषुः ॥ ६ ॥

स वाजी वेजनवान् बलवान् सन् अर्वारणकुशलो भवति । स ऋषिरतीन्द्रियज्ञानी सन् वचस्यया स्तुत्या युक्तो भवति । स शूरो विक्रांतः सन् अस्ता क्षेप्ता शत्रूणां भवति । स्वयं च पृतनासु संग्रामेषु दुष्टरो नाभिभाव्यो भवति । स एव रायस्पोषं धनपुष्टिं दधे । धत्ते । स सुवीर्यं सुवीरत्वं दधे । धत्ते । यं मनुष्यं वाजो विभ्वा ऋभवश्चाविषुः । अरक्षन् । स एवमेवं भवतीति । अत्यस्य बहुवचननिर्देशस्त्रयाणामृभुव्यवहारप्राचुर्याभिप्रायः ॥

श्रेष्ठं वः पेशो अधि धायि दर्शतं स्तोमो वाजा ऋभवस्तं जुजुष्टन ।
धीरासो हि ष्ठा कवयो विपश्चितस्तान्व एना ब्रह्मणा वेदयामसि ॥ ७ ॥
श्रेष्ठं । वः । पेशः । अधि । धायि । दर्शतं । स्तोमः । वाजाः । ऋभवः । तं । जुजुष्टन ।
धीरासः । हि । स्थ । कवयः । विपःऽचितः । तान् । वः । एना । ब्रह्मणा । आ । वेदयामसि ॥ ७ ॥

श्रेष्ठमत्युत्कृष्टमत एव दर्शतं दर्शनीयं वो युष्माकं पेशो रूपमधि धायि । अधिनिहितं । अतस्तद्विषितो यः स्तोमः स्तोत्रमस्मत्कृतमस्ति हे वाजा ऋभवस्त स्तोमं स्तोत्रं जुजुष्टन । सेवध्वं । ये यूयं धीरासो हि धीमतः प्रसिद्धाः कवयो मेधाविनो विपश्चितो ज्ञानवंतः स्थ तान्वो युष्मानेनेन ब्रह्मणा मंत्रेण शस्त्रात्मकेना वेदयामसि । अथवोक्तलक्षणा विपश्चितः स्तोतारो यान् । स्तुवंतीति शेषः । तान्ब्रह्मणा आ वेदयामसि । प्रज्ञापयामः ॥

यूयमस्मभ्यं धिषणाभ्यस्परि विद्वांसो विश्वा नर्याणि भोजना ।
द्युमंतं वाजं वृषशुष्ममुत्तममा नो रयिमृभवस्तक्षता वयः ॥ ८ ॥
यूयं । अस्मभ्यं । धिषणाभ्यः । परि । विद्वांसः । विश्वा । नर्याणि । भोजना ।
द्युऽमंतं । वाजं । वृषऽशुष्मं । उत्ऽतमं । आ । नः । रयिं । ऋभवः । तक्षत । आ । वयः ॥ ८ ॥

हे ऋभवो यूयमस्मभ्यं धिषणाभ्यस्परि स्तुतिभ्यो निमित्तभूताभ्यः ॥ परीति पंचम्यर्थानुवादी ॥ यद्वा । अस्मत्स्तुतिभ्योऽधिकानि नर्याणि नृभ्यो हितानि विश्वा सर्वाणि भोजना भोग्यानि विद्वांसो जानंतः संत आ तक्षत । संपादयत । किंच द्युमंतं दीप्तिमंतं हिरण्यादिरूपं वाजं बलवंतं वृषशुष्मं सेक्तृणां बलवतां शोषकमुत्तमं रयिं नोऽस्माकं वयोऽन्नं चा तक्षत हे ऋभवः ॥

इह प्रजामिह रयिं रराणा इह श्रवो वीरवत्तक्षता नः ।
येन वयं चितयेमात्यन्यान्तं वाजं चित्रमृभवो ददा नः ॥ ९ ॥

इह । प्रऽजां । इह । रयिं । रराणाः । इह । श्रवः । वीरऽवत् । तक्षत । नः ।
येन । वयं । चितयेम । अति । अन्यान् । तं । वाजं । चित्रं । ऋभवः । दद । नः ॥ ९ ॥

हेऽस्माकमिह यज्ञे रराणा रममाणाः प्रजां पुत्रपौत्रादिरूपां तक्षत । संपादयत । इहैव यज्ञे रयिं च तक्षत । इहैव यज्ञे श्रवो यशो वीरवद्वीरैर्भृत्यादिभिरुपेतं तक्षत । किंच वयं येन वाजेनान्यानस्मत्समानति चितयेम । अतिक्रम्य ख्यापयेमहि । तं चित्रं चायनीयं वाजमन्नं हे ऋभवो नो दद । अस्मभ्यं दत्त ॥ ॥ ८ ॥

उप नो वाजा इत्यष्टर्चं पंचमं सूक्तं वामदेवस्यार्षमार्भवं त्रैष्टुभं । पंचम्याद्याश्चतस्रोऽनुष्टुभः । तथा चानुक्रांतं । उप नोऽष्टौ चतुरनुष्टुबंतमिति ॥ व्यूढे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्र आद्याश्चतस्रः शस्याः । उप नो वाजा इति त्रयोदशार्भवं चतस्रश्च । आ० ८. ८ । इति हि सूत्रितं ॥

उप नो वाजा अध्वरमृभुक्षा देवा यात पथिभिर्देवयानैः ।
यथा यज्ञं मनुषो विक्ष्वा३सु दधिध्वे रण्वाः सुदिनेष्वह्नां ॥ १ ॥

उप । नः । वाजाः । अध्वरं । ऋभुक्षाः । देवाः । यात । पथिऽभिः । देवऽयानैः ।
यथा । यज्ञं । मनुषः । विक्षु । आसु । दधिध्वे । रण्वाः । सुऽदिनेषु । अह्नां ॥ १ ॥

हे वाजा हे ऋभुक्षा ऋभवो हे देवा नोऽध्वरं यागमुप यात । उपगच्छत । देवयानैर्देवैर्गंतव्यैः पथिभिर्मार्गैः । यथा येन प्रकारेण मनुषो मनोः संबंधिनीष्वासु विक्षु प्रजासु यजमानेषु मध्ये हे रण्वा रमणीया ऋभवोऽह्नां सुदिनेषु सुदिनत्वनिमित्तेषु यज्ञमस्मदीयं दधिध्वे । धारयथ । यथा येन प्रकारेण यज्ञमागत्य सुदिनत्वं कुरुथ तथा यज्ञमायातेति ॥

ते वो हृदे मनसे संतु यज्ञा जुष्टासो अद्य घृतनिर्णिजो गुः ।
प्र वः सुतासो हरयंत पूर्णाः क्रत्वे दक्षाय हर्षयंत पीताः ॥ २ ॥

ते । वः । हृदे । मनसे । संतु । यज्ञाः । जुष्टासः । अद्य । घृतऽनिर्निजः । गुः ।
प्र । वः । सुतासः । हरयंत । पूर्णाः । क्रत्वे । दक्षाय । हर्षयंत । पीताः ॥ २ ॥

अद्यास्मिन्यागदिने त एते यज्ञा यागसाधनाः सोमा वो हृदे हृदयाय मनसे तत्प्रीतये संतु । भवतु । अद्यास्मिन्दिने जुष्टासः पर्याप्ताः सोमा घृतनिर्णिजो मिश्रणद्रव्येण दीप्तरूपा गुः । गच्छतु युष्मद्धृदयं । सुतासोऽभिषुताः सोमाश्चमसेषु पूर्णा वो युष्मदर्थं प्र हरयंत । प्रक्रियंते । यद्वा । हर्यतिः कांतिकर्मेण इद रूप । प्रकर्षेण वो युष्मान कामयंते । क्रत्वे क्रतवे कर्मणे दक्षायोत्साहाय पीता हर्षयंत । हर्षयंतु ॥

त्र्युदायं देवहितं यथा वः स्तोमो वाजा ऋभुक्षणो ददे वः ।
जुह्वे मनुष्वदुपरासु विक्षु युष्मे सचा बृहद्दिवेषु सोमं ॥ ३ ॥

त्रिऽउदायं । देवऽहितं । यथा । वः । स्तोमः । वाजाः । ऋभुक्षणः । ददे । वः ।
जुह्वे । मनुष्वत् । उपरासु । विक्षु । युष्मे इति । सचा । बृहत्ऽदिवेषु । सोमं ॥ ३ ॥

त्र्युदायं त्र्युदयं सवनत्रयगमनोपेतं देवहितं सोमाख्यमन्नं देवेभ्यो हितं देवैर्वा विहितं । तृतीयसवनस्थमित्यर्थः । तद्यथा वो युष्मान्ददे । धारयति । हे वाजा हे ऋभुक्षण ऋभवो यथा स्तोमः स्तोत्रं वो ददे । धारयति । उपरासु । उप देवयजनसमीपे रमंत इत्युपराः । तासु विक्षु प्रजासु बृहद्दिवेषु प्रभूतदीप्तिषु देवेषु मध्ये मनुष्वत् मनुरिव युष्मे युष्मदर्थं सचा सहाभिकर्षेहेषु प्रस्थितं जुह्वे । जुहोमि सोमं ॥

पीवोअश्वाः शुचद्रथा हि भूतायःशिप्रा वाजिनः सुनिष्काः ।
इंद्रस्य सूनो शवसो नपातोऽनु वश्चेत्यग्रियं मदाय ॥४॥
पीवःऽअश्वाः । शुचत्ऽरथाः । हि । भूत । अयःऽशिप्राः । वाजिनः । सुऽनिष्काः ।
इंद्रस्य । सूनो इति । शवसः । नपातः । अनु । वः । चेति । अग्रियं । मदाय ॥४॥

हे वाजिन ऋभवः पीवोअश्वाः । पीवानोऽश्वा येषां ते तादृशाः । तथा शुचद्रथा दीप्तरथा अयःशिप्राः । शिप्रे हनू नासिके वा । अयोवत्सारभूतशिप्राः सुनिष्काः शोभनधनाश्च भूत । भवत । हे इंद्रस्य सूनो सूनवः पुत्रवद्रक्षणीया हे शवसो नपातो बलस्य पुत्रा बलिनो वो युष्मभ्य मदायानु चेति । अन्वज्ञायि । देवेष्वग्रियमग्र्यं भवं तृतीयसवन ॥

ऋभुमृभुक्षणो रयिं वाजे वाजिन्तमं युजं । इंद्रस्वंतं हवामहे सदासातममश्विनं ॥५॥
ऋभुं । ऋभुक्षणः । रयिं । वाजे । वाजिनऽतमं । युजं । इंद्रस्वंतं । हवामहे । सदाऽसातमं ।
अश्विनं ॥५॥

हे ऋभुक्षण ऋभव ऋभुमुरुभासमानं रयिं धनरूप । तद्धेतुभूतत्वात तात्कर्म्यं । वाजे संग्रामे वाजिन्तम मत्यतबलवत युज परस्परयोगोपेतमिद्रस्वतमिंद्रवतमिद्रियवतं सदासातम सर्वदा दातृतममश्विनमश्ववतं भवतां गण हवामहे । आह्वयामि ॥ ॥ ९ ॥

सेदृभवो यमवथ यूयमिंद्रश्च मर्त्यं । स धीभिरस्तु सनिता मेधसाता सो अर्वता ॥६॥
सः । इत् । ऋभवः । यं । अवथ । यूयं । इंद्रः । च । मर्त्यं । सः । धीभिः । अस्तु । सनिता ।
मेधऽसाता । सः । अर्वता ॥६॥

हे ऋभवो यूयमिद्रश्च यं मर्त्यमवथ । रक्षथ । सेत्स एवास्तु । भवतु । नान्यः श्रेष्ठो भवत्वित्यर्थः । स एव धीभिः कर्मभिः सनिता संभक्ता भवतु । मेधसाता मेधसातौ यज्ञे स एवार्वतारणवताश्वेन युक्तो भवतु ॥

वि नो वाजा ऋभुक्षणः पथश्चितन यष्टवे ।
अस्मभ्यं सूरयः स्तुता विश्वा आशास्तरीषणि ॥७॥
वि । नः । वाजाः । ऋभुक्षणः । पथः । चितन । यष्टवे ।
अस्मभ्यं । सूरयः । स्तुताः । विश्वाः । आशाः । तरीषणि ॥७॥

हे वाजा हे ऋभुक्षण ऋभवो नोऽस्माकं पथो मार्गान यष्टवे यष्टुं यज्ञमार्गान्वि चितन । विचेतयत । प्रज्ञापयतेत्यर्थः । अस्मभ्य हे सूरयो मेधाविनो यूयं स्तुताः संतो विश्वा आशाः सर्वा दिशस्तरीषणि तरीतु सामर्थ्यं । वितरतेति शेषः ॥

तं नो वाजा ऋभुक्षण इंद्र नासत्या रयिं । समश्वं चर्षणिभ्य आ पुरु शस्त मघत्तये ॥८॥
तं । नः । वाजाः । ऋभुक्षणः । इंद्र । नासत्या । रयिं । सं । अश्वं । चर्षणिऽभ्यः । आ । पुरु ।
शस्त । मघत्तये ॥८॥

अनया स्तुतिमुपसंहृत्याभिमतमाशास्ते । हे वाजा हे ऋभुक्षण ऋभवो हे इंद्र हे नासत्याश्विनौ ते यूयं

नोऽस्मभ्यं चर्षणिभ्यो मनुष्येभ्यः स्तोतृभ्यस्तं पुरु प्रभूतं रयिं धनमश्वं च पुरु प्रभूतं मघत्तये धनदानाय समाशास्त । सम्यगाशासनं कुरुत ॥  ॥ १० ॥

उतो हि वामिति दशर्चं षष्ठं सूक्तं । वामदेव ऋषिः । त्रिष्टुप् छंदः । दधिक्रा देवता । आद्या द्यावापृथिव्या । अत्रानुक्रमणिका । उतो हि दश दाधिक्रं हि द्यावापृथिव्यार्धर्चेति । विनियोगो लैंगिकः ॥

उतो हि वां दात्रा संति पूर्वा या पूरुभ्यंस्त्रसदंस्युर्नितोशे ।
क्षेत्रासां ददथुरुर्वरासां घनं दस्युंभ्यो अभिभूंतिमुग्रं ॥१॥
उतो इति । हि । वां । दात्रा । संति । पूर्वा । या । पूरुऽभ्यः । त्रसदस्युः । निऽतोशे ।
क्षेत्रऽसां । ददथुः । उर्वराऽसां । घनं । दस्युऽभ्यः । अभिऽभूतिं । उग्रं ॥१॥

उतो इति पूरणः । अस्या द्यावापृथिव्यत्वादत्र तद्वाचकशब्दाभावेऽपि त एव संबोध्येते । हे द्यावापृथिव्यौ वां युवाभ्यां सकाशाद्दात्रा दानकर्त्रा पौरुकुत्स्येन त्रसदस्युना लब्धानि पूर्वा पूर्वाणि पुरातनानि प्रकाशानि वा धनानि संति । या यानि धनानि पूरुभ्योऽर्थिभ्यो मनुष्येभ्यस्त्रसदस्यू राजा नितोशे । न्यतोशत । दत्तवान् । क्षेत्रसां । क्षेत्राणि सर्वा भूमीः सनोतीति क्षेत्रसा अश्वः । तं ददथुः । तथोर्वरासां । उर्वरा सर्वसस्याढ्या भुः । तां सनोतीत्युर्वरासाः पुत्रः । तं ददथुः । घनं हननार्हमायुधं दस्युभ्यो दस्यूनां वधार्थं च ददथुः । कीदृशमायुधं । अभिभूतिमभिभवितारमुग्रमुद्गूर्णबलं । यद्वा । उत्तरार्धमेकं वाक्यं । दातव्यानि धनान्युत्कलक्षणं पुत्रं च ददथुः । दत्तवत्यौ स्थः । तानि मह्यमपि दद्यातमित्याशयः ॥

उत वाजिनं पुरुनिष्षिध्वानं दधिक्रामु ददथुर्विश्वकृष्टिं ।
ऋजिप्यं श्येनं प्रुषितप्सुमाशुं चर्कृत्यमर्यो नृपतिं न शूरं ॥२॥
उत । वाजिनं । पुरुनिःऽसिध्वानं । दधिऽक्रां । ऊं इति । ददथुः । विश्वऽकृष्टिं ।
ऋजिप्यं । श्येनं । प्रुषितऽप्सुं । आशुं । चर्कृत्यं । अर्यः । नृऽपतिं । न । शूरं ॥२॥

उतापि च वाजिनं गमनवंतं । अश्वरूपं या देवं अग्नेरश्वरूपस्यैव दधिक्राख्यत्वात् । अग्निस्तद्रूपत्वं ब्राह्मणे समाम्नातं । तावग्निरश्वो भूत्वाभ्यद्रवदिति । पुरुनिष्षिध्वानं पुरुणा बहुना शत्रुणा निष्षेद्धारं दधिक्रां । दधदश्वं धारयन् क्रामतीति दधिक्राः । तमेतन्नामकं देवं । उः पूरणः । विश्वकृष्टिं । विश्वाः कृष्टयो रक्षणीयाः सेवका वा मनुष्या यस्य तं । ऋजिप्यं । ऋज्वाप्नोति गच्छतीत्यृजिप्यः । तं श्येनं शंसनीयगमनं प्रुषितप्सुं दीप्तरूपमाशुं व्याप्तं शीघ्रगमनं वार्योऽरिश्चर्कृत्यं कर्तनशीलं शूरं नृपतिं न राजानमिव स्थितं देवं द्यावापृथिव्यौ ददथुः । धारयतः ॥

यं सीमनु प्रवतेव द्रवंतं विश्वः पूरुर्मदंति हर्षमाणः ।
पड्भिर्गृध्यंतं मेधयुं न शूरं रथतुरं वातमिव ध्रजंतं ॥३॥
यं । सीं । अनु । प्रवताऽइव । द्रवंतं । विश्वः । पूरुः । मदति । हर्षमाणः ।
पट्ऽभिः । गृध्यंतं । मेधऽयुं । न । शूरं । रथऽतुरं । वातंऽइव । ध्रजंतं ॥३॥

यं दधिक्रां विश्वः पूरुः सर्वोऽपि मनुष्यो हर्षमाणो हृष्यन् हर्षयन्वा मदति । स्तौति । तं देवं द्यावापृथिव्यौ ददथुरिति संबंधः । स देवो विशिष्यते । सीं सर्वतः प्रवता प्रवणवता निम्नेन मार्गेणोदकमिवानुक्रमेण द्रवंतं गच्छंतं पड्भिः पादैर्गृध्यंतमभिकांक्षंतं दिशो लंघितुं । तत्र दृष्टांतः । मेधयुं न शूरं । संग्रामेच्छुं शूरमिव । यद्वा । यज्ञकर्मणीच्छुमध्वर्य्वादिकमिव । रथतुरं रथेन गच्छंतं वातमिव ध्रजंतं शीघ्रगं वायुमिव । उक्तविशेषविशिष्टानुदकशूरवायून्यथा सर्वो जनः स्तौति तथा यं देवं स्तौति तं ददथुरित्यर्थः ॥

यः स्मारुंधानो गध्या समत्सु सनुतरश्चरति गोषु गच्छन् ।
आविर्ऋजीको विदथा निचिक्यत्तिरो अरतिं पर्याप आयोः ॥४॥
यः । स्म । आऽरुंधानः । गध्या । समत्ऽसु । सनुऽतरः । चरति । गोषु । गच्छन् ।
आविःऽऋजीकः । विदथा । निऽचिक्यत् । तिरः । अरतिं । परि । आपः । आयोः ॥४॥

यः स्म यः खलु देवो गध्या गध्यानि । गध्यतिर्मिश्रीभावकर्मेति निरुक्तं । ५. १५. । मिश्रयितव्यानि फलानि समत्सु संग्रामेष्वारुंधानः सर्वतो निरोधयन् सनुतरः संभक्तृतरो गोषु सर्वासु दिक्षु गोषु वा निमित्तभूतेषु गच्छन्नाविर्ऋजीक आविर्भूतसाधन आविर्भूतमुष्को वा विदथा विदथानि ज्ञातव्यानि निचिक्यत् । पश्यतिकर्मैतत् । जानन् अरतिमरमणं दुःखमभिगतारमरिं वा परि सर्वतस्तिरश्चरति । तिरस्करोति । कस्यारतिमिति । आपो व्याप्तस्य स्तोतुरायोर्मनुष्यस्य यजमानस्य ॥

उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशंति क्षितयो भरेषु ।
नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथं ॥५॥
उत । स्म । एनं । वस्त्रऽमथिं । न । तायुं । अनु । क्रोशंति । क्षितयः । भरेषु ।
नीचा । अयमानं । जसुरिं । न । श्येनं । श्रवः । च । अच्छ । पशुऽमत् । च । यूथं ॥५॥

उत स्म अपि खल्वेनं दधिक्रां भरेषु संग्रामेषु वस्त्रमथिं तायुं न वस्त्रमाथिनं तस्करमिव । तं दृष्ट्वा क्षितयो मनुष्या यथानु क्रोशंति तद्वद्वैरिणोऽनुक्रोशंति । किंच नीचा नीचैरयमानं गच्छंतं जसुरिं न श्येनं क्षुधितं श्येन पक्षिणमिव । तं यथा दृष्ट्वा पक्षिणः पलायंते तद्वत् । श्रवोऽन्नं कीर्तिं वा पशुमद्यूथं चाच्छाभिलक्ष्य गच्छंतमेनमनुक्रोशंतीति संबंधः । अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनमित्यादिनिरुक्तमत्रानुसंधेयं । नि॰ ४.२४. ॥ ॥११॥

उत स्मासु प्रथमः सरिष्यन्नि वेवेति श्रेणिभी रथानां ।
स्रजं कृण्वानो जन्यो न शुभ्वा रेणुं रेरिहत्किरणं ददश्वान् ॥६॥
उत । स्म । आसु । प्रथमः । सरिष्यन् । नि । वेवेति । श्रेणिऽभिः । रथानां ।
स्रजं । कृण्वानः । जन्यः । न । शुभ्वा । रेणुं । रेरिहत् । किरणं । ददश्वान् ॥६॥

उत स्म अपि च खल्वास्वसुरसेनासु सरिष्यन् सर्तुमिच्छन् प्रथमः प्रतम उत्कृष्टतमो मुख्यः सन् रथानां श्रेणिभी राजिभिर्युक्तः सन् नि वेवेति । नितरां गच्छति । इतस्ततो धावति । क इवेति । उच्यते । स्रजं । सृज्यत उत्पाद्यते रूपमनयेति स्रगलंकृतिः । तां कृण्वानो जन्यो न जनेभ्यो हितोऽश्व इव शुभ्वा । शुभ्रु भवतीति शुभ्वा शोभमानः । किरणमास्यगतं खलीनं ददश्वान् दशन् रेणुं स्वपादघातजनितं रेरिहत् । भृशं लेढि ॥

उत स्य वाजी सहुरिर्ऋतावा शुश्रूषमाणस्तन्वा समर्ये ।
तुरं यतीषु तुरयन्नृजिप्योऽधि भ्रुवोः किरते रेणुमृंजन् ॥७॥
उत । स्यः । वाजी । सहुरिः । ऋतऽवा । शुश्रूषमाणः । तन्वा । सऽमर्ये ।
तुरं । यतीषु । तुरयन् । ऋजिप्यः । अधि । भ्रुवोः । किरते । रेणुं । ऋंजन् ॥७॥

उत अपि च स्य स उक्तलक्षणो वाजी वेजनवान् गमनवान् समर्ये समरणे सहुरिः सहनशीलः शत्रूणामृतावानन्नवांस्तन्वा स्वावयवेन खुरादिना स्वतनु शुश्रूषमाणस्तुरं यतीषु त्वरगामिनीष्वसुरसेनासु तुरयन् त्वरयन् ऋजिप्य ऋजुगामी रेणुं धूलिमृंजन्प्रसाधयंस्तमेव रेणुं भ्रुवोरध्युपरि किरते । विक्षिपति ॥

उत स्मास्य तन्यतोरिव द्योर्ऋघायतो अभियुजो भयंते ।
यदा सहस्रमभि षीमयोधीद्दुर्वर्तुः स्मा भवति भीम ऋंजन ॥८॥
उत । स्म । अस्य । तन्यतोःऽइव । द्योः । ऋघायतः । अभिऽयुजः । भयंते ।
यदा । सहस्रं । अभि । सीं । अयोधीत् । दुःऽवर्तुः । स्म । भवति । भीमः । ऋंजन ॥८॥

उत स्म अपि च खलु द्योर्दीप्यमानात्तन्यतोः शब्दयितुरशनेरिव ऋघायतो हिंसतोऽस्यास्माद्दधिक्राव्णो देवादभियुजोऽभियोक्तारोऽसुरा भयंते । बिभ्यति । किंचायं यदा सीं सर्वतः सहस्रमभ्ययोधीत् । संप्रहरत् । तदा ऋंजन् प्रसाधयन्नात्मानं भीमो भयहेतुर्दुर्वर्तुर्दुर्वारश्च भवति ॥

उत स्मास्य पनयंति जना जूतिं कृष्टिप्रो अभिभूतिमाशोः ।
उतैनमाहुः समिथे वियंतः परा दधिक्रा असरत्सहस्रैः ॥९॥
उत । स्म । अस्य । पनयंति । जनाः । जूतिं । कृष्टिऽप्रः । अभिऽभूतिं । आशोः ।
उत । एनं । आहुः । संऽइथे । विऽयंतः । परा । दधिऽक्राः । असरत् । सहस्रैः ॥९॥

उत स्म अपि च खल्वस्य दधिक्राव्णोऽभिभूतिमभिभवित्री जूतिं परानिभूतिं वेत्युभयं वा जनाः पनयंति । स्तुवंति । कीदृशस्यास्य । कृष्टिप्रः । कृष्टयो मनुष्याः । तेषां पूरकस्याशोर्व्याप्तस्य वेगवतो वा । उतापि चैनं समिथे संग्रामे वियंतो विविधं गच्छंतो जना अयं दधिक्रा देवः सहस्रैरनुचरैः परिवृतः परासरदिति अस्मान्विहाय यान्यान् हंतुं गत इत्याहुः । यद्वा । एनमेवमाहुः । वियंतः शत्रवः परा । भवतीति शेषः । दधिक्राः सहस्रैरसरत् । गच्छतीति ॥

पविंत्रिष्टावा दधिक्रा इति दधिक्राव्णो याज्या । तथा च सूत्रितं । दधिक्राव्णो अकारिषमा दधिक्राः शवसा पंच कृष्टीः । आ॰ २ १२. । इति ॥

आ दधिक्राः शवसा पंच कृष्टीः सूर्य इव ज्योतिषापस्ततान ।
सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥१०॥
आ । दधिऽक्राः । शवसा । पंच । कृष्टीः । सूर्यःऽइव । ज्योतिषा । अपः । ततान ।
सहस्रऽसाः । शतऽसाः । वाजी । अर्वा । पृणक्तु । मध्वा । सं । इमा । वचांसि ॥१०॥

यो दधिक्रा देवः शवसा बलेन पंच कृष्टीः पंच जनान् देवमनुष्यासुररक्षःपितृसंज्ञकान्निषादपंचमान् चतुरो वर्णान्वा सूर्यो ज्योतिषा तेजसा यथा जगदावृणोति तद्वदप उदकान्या ततान । आतनोति । सहस्रसाः शतसाः शतानां सहस्राणां च दाता वाजी वेजनवानर्वारणकुशलः स देवो मध्वा मधुना मधुरेण फलेनेमान्यस्मदुक्तानि स्तुतिवचांसि सं पृणक्तु । संयोजयतु ॥ ॥१२॥

आशुं दधिक्रामिति षडृचं सप्तमं सूक्तं । आदितः पंच त्रिष्टुभः षष्ठ्यनुष्टुप् । ऋषिर्वामदेवः । पूर्वसूक्ते हीत्युक्तत्वादेतदपि दाधिक्रं । तथा चानुक्रांतं । आशुं षळंत्यानुष्टुबिति । सूक्तविनियोगो लैंगिकः ॥

आशुं दधिक्रां तमु नु ष्टवाम दिवस्पृथिव्या उत चर्किराम ।
उच्छंतीर्मामुषसः सूदयंत्वति विश्वानि दुरितानि पर्षन् ॥१॥
आशुं । दधिऽक्रां । तं । ऊं इति । नु । स्तवाम । दिवः । पृथिव्याः । उत । चर्किराम ।
उच्छंतीः । मां । उषसः । सूदयंतु । अति । विश्वानि । दुःऽइतानि । पर्षन् ॥१॥

आशुं शीघ्रगामिनं तमु तमेव दधिक्रां देवं नु क्षिप्रं स्तवाम । उतापि च दिवः पृथिव्याश्च सकाशादस्य घासं चर्किराम । विक्षिपाम । उच्छंतीस्तमो विवासयंतीरुषसो मां प्रति सूदयंतु । रचयंतु फलानि । विश्वानि सर्वाणि दुरितान्यति पर्षन । अतिपारयंतु । अन्यदेवताकेषु मंत्रेष्वन्यदेवतास्तुतिस्तासां निपातभाक्त्वान्न विरुध्यते ॥

महश्चर्कर्म्यर्वतः क्रतुप्रा दधिक्राव्णः पुरुवारस्य वृष्णः ।
यं पूरुभ्यो दीदिवांसं नाग्निं ददथुर्मित्रावरुणा ततुरिं ॥२॥
महः । चर्कर्मि । अर्वतः । क्रतुऽप्राः । दधिऽक्राव्णः । पुरुऽवारस्य । वृष्णः ।
यं । पूरुऽभ्यः । दीदिऽवांसं । न । अग्निं । ददथुः । मित्रावरुणा । ततुरिं ॥२॥

क्रतुप्राः कर्मणां पूरकोऽहं महो महतोऽर्वतोऽरणवतः पुरुवारस्य बहुभिर्वरणीयस्य वृष्णो वर्षकस्य दधिक्राव्णः स्तुतिं चर्कर्मि । अत्यर्थं करोमि । हे मित्रावरुणा मित्रावरुणौ युवां ततुरिं तारकं यं दीदिवांसं नाग्निं दीप्यमानमग्निमिव स्थितं पूरुभ्यो मनुष्येभ्यस्तेषामुपकाराय ददथुः । धारयथः ॥

यो अश्वस्य दधिक्राव्णो अकारीत्समिद्धे अग्ना उषसो व्युष्टौ ।
अनागसं तमदितिः कृणोतु स मित्रेण वरुणेना सजोषाः ॥३॥
यः । अश्वस्य । दधिऽक्राव्णः । अकारीत् । संऽइद्धे । अग्नौ । उषसः । विऽउष्टौ ।
अनागसं । तं । अदितिः । कृणोतु । सः । मित्रेण । वरुणेन । सऽजोषाः ॥३॥

यो यजमानोऽश्वस्याश्वरूपस्य व्याप्तस्य वा दधिक्राव्णः स्तुतिमुषसो व्युष्टौ प्रभाते सत्यग्नौ समिद्धे सत्यकारीत । अकार्षीत । मित्रेण वरुणेन चाहोरात्राभिमानिदेवाभ्यां सजोषाः समानप्रीतिरदितिरखंडनीयो दधिक्रास्तं यजमानमनागसं कृणोतु । करोतु ॥

दधिक्राव्ण इष ऊर्जो महो यदमन्महि मरुतां नाम भद्रं ।
स्वस्तये वरुणं मित्रमग्निं हवामह इंद्रं वज्रबाहुं ॥४॥
दधिऽक्राव्णः । इषः । ऊर्जः । महः । यत् । अमन्महि । मरुतां । नाम । भद्रं ।
स्वस्तये । वरुणं । मित्रं । अग्निं । हवामहे । इंद्रं । वज्रऽबाहुं ॥४॥

इषोऽन्नसाधकस्योर्जो बलसाधकस्य महो महतो दधिक्राव्णो देवस्य मरुतां स्तोतॄणां स्वभूतं भद्रं कल्याणं नाम नामरूपमस्ति यत्तदमन्महि । स्तुमः । किंचात्र निपातभाजो वरुणादींश्च स्वस्तये क्षेमाय हवामहे ॥

इंद्रमिवेदुभये वि ह्वयंत उदीराणा यज्ञमुपप्रयंतः ।
दधिक्रामु सूदनं मर्त्याय ददथुर्मित्रावरुणा नो अश्वं ॥५॥
इंद्रंऽइव । इत् । उभये । वि । ह्वयंते । उत्ऽईराणाः । यज्ञं । उपऽप्रयंतः ।
दधिऽक्रां । ऊं इति । सूदनं । मर्त्याय । ददथुः । मित्रावरुणा । नः । अश्वं ॥५॥

इंद्रमिवेनं दधिक्रामुदीराणा युद्धायोद्योगं कुर्वंतो यज्ञमुपप्रयंतो यज्ञमुपक्रम्य प्रवर्तमानाश्चोभये वि ह्वयते । आह्वयंति । यं मर्त्याय मर्त्यस्य सूदनं प्रेरकमश्वमश्वरूपं दधिक्रां देवं हे मित्रावरुणा नोऽस्माकमर्थाय ददथुः । धारयथः । त विह्वयंते । उभय इत्यत्र स्तोतॄणामितॄभेदेन वोभयविधत्वमवगंतव्यं ॥

दधिक्राव्णो अकारिषमिति षष्ठी परिशिष्टा अनुवाक्या। सूत्रितं च। दधिक्राव्णो अकारिषमा दधिक्राः शवसा पंच कृष्टीः। आ० २. १२.। इति॥ दधिद्रप्सभक्षणेऽप्येषा। दधिक्राव्णो अकारिषमित्याग्नीध्रीये दधिद्रप्सान् भक्षयंति। आ० ६. १२.। इति सूत्रितत्वात्॥

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत्॥६॥
दधिऽक्राव्णः। अकारिषं। जिष्णोः। अश्वस्य। वाजिनः।
सुरभि। नः। मुखा। करत्। प्र। नः। आयूंषि। तारिषत्॥६॥

दधिक्राव्णो देवस्य स्तुतिमकारिषं। करवाणि। जिष्णोर्जयशीलस्याश्वस्य व्यापकस्य वाजिनो वेगवतः। स देवो नोऽस्माकं मुखा मुखानि चक्षुरादींद्रियाणि सुरभि सुरभीणि करत्। करोतु। नोऽस्माकमायूंषि प्र तारिषत्। प्रवर्धयतु। प्रपूर्वस्तिरतिर्वर्धनार्थः॥ ॥१३॥

दधिक्राव्ण इदिति पंचर्चमष्टमं सूक्तं वामदेवस्यार्षं दाधिक्रं। आद्या त्रिष्टुप् शिष्टा जगत्यः। हंसः शुचिषदित्येषा सूर्यदेवताका। तथा चानुक्रमणिका। दधिक्राव्णः पंच चतस्रोऽत्या जगत्योऽत्या सौरीति। सूक्तविनियोगो लैंगिकः॥

दधिक्राव्ण इदु नु चर्किराम विश्वा इन्मामुषसः सूदयंतु।
अपामग्नेरुषसः सूर्यस्य बृहस्पतेरांगिरसस्य जिष्णोः॥१॥
दधिऽक्राव्णः। इत्। ऊं इति। नु। चर्किराम। विश्वाः। इत्। मां। उषसः। सूदयंतु।
अपां। अग्नेः। उषसः। सूर्यस्य। बृहस्पतेः। आंगिरसस्य। जिष्णोः॥१॥

दधिक्राव्ण इदु एतन्नामकस्य देवस्यैव स्तुतिं नु क्षिप्रं चर्किराम। भृशं करवाम। मा विश्वा इदुषसः सर्वा अपि ताः सूदयंतु। कर्मसु प्रेरयंतु। अहमप्यबादिदेवतानां स्तुतिं करवाणीति शेषः। तासामपि निपातभाक्त्वात् स्तुतिरविरुद्धा॥

सत्वा भरिषो गविषो दुवन्यसच्छ्रवस्यादिष उषसस्तुरण्यसत्।
सत्यो द्रवो द्रवरः पतंगरो दधिक्रावेषमूर्जं स्वर्जनत्॥२॥
सत्वा। भरिषः। गोऽइषः। दुवन्यऽसत्। श्रवस्यात्। इषः। उषसः। तुरण्यऽसत्।
सत्यः। द्रवः। द्रवरः। पतंगरः। दधिऽक्रावा। इषं। ऊर्जं। स्वः। जनत्॥२॥

सत्वा गंता भरिषो भरणकुशलो गविषो गवां प्रेरक एष्टा वा दुवन्यसत्। दुवः परिचरणमिच्छंतो दुवन्याः। तेषु सीदतीति दुवन्यसत्। इष इष्यमाणाया उषसः संबंधिनि काल इत्यर्थः। यद्वा। इष एष्टा एषणीयो वा। श्रवस्यात्। श्रवस्येत्। अन्नमिच्छेत्। किंच तुरण्यसत्। त्वरया सीदतीति तुरण्यसत्। सत्यः सत्सु तायमानो द्रवो गंता द्रवरः प्रकृष्टवेगवान् पतंगरः। पतनेनोत्प्लवनेन पतन् पतंगः। तद्वान् पतंगरः। उक्तलक्षणो दधिक्रावा देव इषमन्नमूर्जं बलं स्वः स्वर्गं च जनत्। जनयत्। उत्पादयेत्॥

उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः।
श्येनस्येव ध्रजतो अंकसं परि दधिक्राव्णः सहोर्जा तरित्रतः॥३॥

उत। स्म। अस्य। द्रवतः। तुरण्यतः। पर्णं। न। वेः। अनु। वाति। प्रऽगर्धिनः।
श्येनस्यऽइव। ध्रजतः। अंकसं। परि। दधिऽक्राव्णः। सह। ऊर्जा। तरित्रतः ॥३॥

उत स्म अपि च खलु द्रवतो गच्छतस्तुरण्यतस्त्वरमाणस्य प्रगर्धिनः प्रकर्षेणाभिकांक्षतोऽस्य देवस्य गतिं वेर्गंतुः पक्षिणः पर्णं न गमनं पत्रं वानुसृत्य यथा वात्यन्ये पक्षिणस्तद्वदनु वाति सर्वो वेगवान् जनः। सर्वेषामपि शीघ्रगामीत्यर्थः। किंच ध्रजतो गच्छतस्तरित्रतस्तारयतोऽन्यान् ॥ अंतर्भावितण्यर्थोऽयं ॥ श्येनस्येवांकसं पादाधारमुरःप्रदेशं वा परि परित ऊर्जा बलेन निमित्तेनान्नार्थं वा सहैकीभूय। संघेन गच्छंतीति शेषः ॥

उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि।
क्रतुं दधिक्रा अनु संतवीत्वत्पथामंकांस्यन्वापनीफणत् ॥४॥

उत। स्यः। वाजी। क्षिपणिं। तुरण्यति। ग्रीवायां। बद्धः। अपिऽकक्षे। आसनि।
क्रतुं। दधिऽक्राः। अनु। संऽतवीत्वत्। पथां। अंकांसि। अनु। आऽपनीफणत् ॥४॥

उतापि च स्य स वाजी वेजनवानश्वरूपो देवो ग्रीवायां गरणसाधनायां कंठे बद्धोऽपिकक्षे कक्षप्रदेशे आसन्यास्ये च बद्धः। बद्धपन्नेकस्योक्तेषु स्थानेषु पाशबंधाः संभवंति। एवं बद्धः सन् क्षिपणिं क्षेपणमनु तुरण्यति। त्वरयति गंतुं। किंचायं दधिक्रा देवः क्रतुं कर्म प्रज्ञां वान्वनुसृत्य संतवीत्वत् प्रवृद्धबलवान् सन् पथां मार्गाणामकांसि कुटिलान्यनुसृत्यापनीफणत्। सर्वतो भृशं गच्छति ॥ फणतिर्गत्यर्थस्य यङ्लुकीदं रूपं ॥ अपि स वाजी वेजनवानित्यादिनिरुक्तमनुसंधेयं। नि॰ २. २८. ॥

दशरात्रे पंचमेऽहनि तृतीयसवने मैत्रावरुणशस्त्रे हंसः शुचिषदित्येषा। आहय दृरोहणं रोहेद्धंसः शुचिषदिति पच्छोऽर्धर्चशः। आ॰ ८. २। इति सूत्रं ॥ स्मार्तविनियोगमाह शौनकः। हंसः शुचिषदित्यृचा शुचिरीक्षेद्दिवाकरं। अतकाले जपन्नेति ब्राह्मणः सद्म शाश्वतं। ऋग्वि॰ २. १३। इति ॥

हंसः शुचिषद्वसुरंतरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं ॥५॥

हंसः। शुचिऽसत्। वसुः। अंतरिक्षऽसत्। होता। वेदिऽसत्। अतिथिः। दुरोणऽसत्।
नृऽसत्। वरऽसत्। ऋतऽसत्। व्योमऽसत्। अपऽजाः। गोऽजाः। ऋतऽजाः।
अद्रिऽजाः। ऋतं ॥५॥

अनया सौर्यर्चा य एषोंऽतरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः। छा॰ उ॰ १. ६. ६.। इत्यादिश्रुत्युक्तो मंडलाभिमानी देवोऽस्ति यश्च सर्वप्राणिचित्तरूपस्थितः परमात्मा यच्च निरस्तसमस्तोपाधिकं परं ब्रह्म तत्सर्वमेकमेवेति प्रतिपाद्यते ॥ हंसः। हंतिर्गत्यर्थः। सर्वत्र सर्वदा गंता योऽहं सोऽसावित्यादिश्रुत्युक्तप्रकारेणैकीकृत्योपास्यः परमात्मैतत्प्रतिपाद्य आदित्यः। स च शुचौ दीप्ते द्युलोके सीदतीति शुचिषत्। अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्यादिश्रुतेः। अनेन द्युस्थान आदित्यः प्रतिपादितः। स एव मध्यस्थानो वायुरित्याह। वसुः सर्वस्य वासयिता वायुः। स चांतरिक्षसदंतरिक्षसंचारी। अथ तस्यैव क्षितिस्थानवैदिकाग्निरूपतामाह। होता देवानामाह्वाता होमनिष्पादको वा वेदिषद्वेद्यां गार्हपत्यादिरूपेण स्थितः। अतिथिरतिथिवत्सर्वदा पूज्योऽग्निः। दुरोणसत्। दुरोणं गृहनाम। तत्र पाकादिसाधनत्वेन स्थितः। अनेन लौकिकाग्न्यात्मकत्वमुक्तं। नृषत्। नृषु मनुष्येषु चैतन्यरूपेण सीदतीति नृषत्। अनेन परमात्मरूपत्वमुक्तं। पुनरप्यादित्यात्मतामाह। वरसत्। वरे वरणीये मंडले सीदतीति वरसदादित्यः। वरं वा एतन्मन्ना यस्मिन्नेष आसन्नस्तपतीति हि श्रूयते। ऋतं सत्यं ब्रह्म यज्ञो वा। तत्र सीदतीत्यृतसदग्निः। व्योमांतरिक्षं। तत्र सीदतीति व्योमसद्वायुः। इदानीमादित्यतोच्यते। अब्जा उदकेषु जातः। उदकमध्ये खल्वयं जायते। गोजा गोषु रश्मिषु जातः। ऋतं

सत्यं। सर्वैर्दृश्यत्वेन सत्यजातः। न ह्यसाविंद्रादिवत्परोक्षो भवति। यद्वा। उदकेषु वैद्युतरूपेण वा वाडवरूपेण वा जातः। अद्रिजा अद्रावुदयाचले जातः। एवं महानुभाव आदित्य ऋतं सत्यमबाध्यं सर्वाधिष्ठानं ब्रह्मतत्त्वं। तद्रूपो ह्यसावेव। आदित्यस्योक्तरूपत्वं हंसः शुचिषदित्येष वै हंसः शुचिषदित्यादिना ब्राह्मणे। ऐ० ब्रा० ४. २०.। समाम्नातं ॥ ॥१४॥

इंद्रा को वामित्येकादशर्चं नवमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैंद्रावरुणं। अत्रानुक्रमणिका। इंद्रा को वामेकादशैंद्रावरुणं त्विति ॥ आभिप्लविकेषूक्थ्येषु तृतीयसवने मैत्रावरुणशस्त्रेषु स्तोमवृद्धावावापार्थमेतदादि सूक्तद्वयं। इंद्रा को वामिति सूक्ते। आ० ७. ९.। इति सूचितत्वात् ॥

इंद्रा को वां वरुणा सुम्नमाप स्तोमो हविष्माँ अमृतो न होता।
यो वां हृदि क्रतुमाँ अस्मदुक्तः पस्पर्शदिंद्रावरुणा नमस्वान् ॥१॥
इंद्रा। कः। वां। वरुणा। सुम्नं। आप। स्तोमः। हविष्मान्। अमृतः। न। होता।
यः। वां। हृदि। क्रतुऽमान्। अस्मत्। उक्तः। पस्पर्शत्। इंद्रावरुणा। नमस्वान् ॥१॥

हे इंद्रा हे वरुणा हे इंद्रावरुणौ। परस्परापेक्षया द्विवचनं। वां युवयोः सुम्नं सुखं कः स्तोमो हविष्मान् हविर्भिरुपेतः सोमाज्यादिप्रदेयद्रव्योपेतं कतमत् स्तोत्रं सुम्नमाप। फलकत्वेन प्राप्नुयादित्यर्थः। यद्वा। हविष्मानित्येतदुत्तरत्र योज्यं। हविष्मान् हविर्युक्तोऽमृतोऽमरणलक्षणः स्वर्गसाधनो होतारमिव। स यथा तथा यः स्तोमो हे इंद्रावरुणौ वां युवयोर्हृदि हृदये क्रतुमान्प्रज्ञोपेतोऽस्मदस्मत्सकाशादुक्त उदितो नमस्वान् हविष्मान्नमस्कारोपेतो वा पस्पर्शत्। स्पृशेत्। हृदयंगमो भवेत। स क इति स्तोमप्रशंसा ॥

इंद्रा ह यो वरुणा चक्र आपी देवौ मर्तः सख्याय प्रयस्वान्।
स हंति वृत्रा समिथेषु शत्रूनवोभिर्वा महद्भिः स प्र शृण्वे ॥२॥
इंद्रा। ह। यः। वरुणा। चक्रे। आपी इति। देवौ। मर्तः। सख्याय। प्रयस्वान्।
सः। हंति। वृत्रा। सम्ऽइथेषु। शत्रून्। अवःऽभिः। वा। महत्ऽभिः। सः। प्र। शृण्वे ॥२॥

इंद्रा वरुणेंद्रावरुणौ देवौ। हशब्दः पुराणः प्रसिद्धौ वा। यो मर्तो मरणधर्मा प्रयस्वान् हविर्लक्षणान्नवान् सन् सख्याय सखित्वायापी बंधू चक्रे। करोति। स मर्तो वृत्रा आवरकाणि पापानि हंति। तथा समिथेषु संग्रामेषु शत्रून् हंति। वाशब्दश्चार्थे। महद्भिरवोभी रक्षणैः स नरः प्र शृण्वे। प्रकृष्टं श्रूयते। विख्यातो भवति ॥

इंद्रा ह रत्नं वरुणा धेष्ठेत्था नृभ्यः शशमानेभ्यस्ता।
यदी सखाया सख्याय सोमैः सुतेभिः सुप्रयसा मादयैते ॥३॥
इंद्रा। ह। रत्नं। वरुणा। धेष्ठा। इत्था। नृऽभ्यः। शशमानेभ्यः। ता।
यदि। सखाया। सख्याय। सोमैः। सुतेभिः। सुऽप्रयसा। मादयैते इति ॥३॥

इंद्रावरुणौ ता। हेति प्रसिद्धौ। तौ खलु देवावित्थेत्थं नृभ्यो मनुष्येभ्यः शशमानेभ्यः शंसमानेभ्यः स्तोतृभ्योऽस्मभ्यं रत्नं रमणीयं धनं धेष्ठा दातृतमौ। भवत इति शेषः। यदि सखाया परस्परं यजमानस्य वा सखिभूतौ सख्याय सखिकर्मणे सखित्वाय सुतेभिरभिषुतैः सोमैः सुप्रयसा शोभनसोमान्नवंतौ मादयैते। माद्येते। तर्हि रत्नानां दातारौ भवतः ॥

इंद्रा युवं वरुणा दिद्युमस्मिन्नोजिष्ठमुग्रा नि वधिष्टं वज्रं।
यो नो दुरेवो वृकतिर्दभीतिस्तस्मिन्मिमाथामभिभूत्योजः ॥४॥

इंद्रा । युवं । वरुणा । दिद्युं । अस्मिन् । ओजिष्ठं । उग्रा । नि । वधिष्टं । वज्रं ।
यः । नः । दुःऽएवः । वृकतिः । दभीतिः । तस्मिन् । मिमाथां । अभिऽभूति । ओजः ॥४॥

हे इंद्रा इंद्रौ वरुणा वरुणौ हे उग्रा उग्रौ । अत्र सर्वत्र परस्परापेक्षया द्विवचनं प्र मित्रयोर्वरुणयोः । ऋ॰सं॰ ७ ६६ ५ । इतिवत् । यद्वा । छांदसत्वाद्व्यवहितस्याप्यानङ् । अस्मिन् शत्रौ दिद्युं दीप्तमोजिष्ठमतिशयेन तेजोवद्वज्रमायुधं नि वधिष्ट । वधार्थं प्रेरयतमित्यर्थः । यः शत्रुर्नोऽस्माकं दुरेवो दुष्प्रापो वृकतिररतिशयेनादाता दभीतिर्हिंसकस्तस्मिन् शत्रावभिभूत्यभिभावुकमोजो बलं मिमाथां । कुरुतमित्यर्थः ॥

इंद्रा युवं वरुणा भूतमस्या धियः प्रेतारा वृषभेव धेनोः ।
सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥५॥
इंद्रा । युवं । वरुणा । भूतं । अस्याः । धियः । प्रेतारा । वृषभाऽइव । धेनोः ।
सा । नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥५॥

हे इंद्रा वरुणा इंद्रावरुणौ युवं युवामस्या धियः स्तुत्याः प्रेतारा प्रीणयितारौ भूतं । भवतं । वृषभा सेक्तारौ वृषभौ धेनोरिव । सा स्तुतिरूपा धेनुर्नोऽस्माकं दुहीयत् । दुह्यात् । कामान् पूरयेत् । यवसा तृणादि घासेन निमित्तेन गत्वी गत्वा पयसा सहस्रधारा मही महती गौरिव ॥ ॥१५॥

तोके हिते तनय उर्वरासु सूरो दृशीके वृषणश्च पौंस्ये ।
इंद्रा नो अत्र वरुणा स्यातामवोभिर्दस्मा परितक्म्यायां ॥६॥
तोके । हिते । तनये । उर्वरासु । सूरः । दृशीके । वृषणः । च । पौंस्ये ।
इंद्रा । नः । अत्र । वरुणा । स्यातां । अवःऽभिः । दस्मा । परिऽतक्म्यायां ॥६॥

इंद्रावरुणौ देवौ नो हिते तोके पुत्रे तनये तत्पुत्रे चोर्वरासु सस्याढ्यासु भूमिषु निमित्तभूतासु सूरः प्रेरकस्य सूर्यस्य दृशीके चिरकालदर्शनाय । चिरजीवनायेत्यर्थः । तथा वृषणः सेक्तुर्मम पौंस्ये च पुंस्त्वाय च पुनरपि प्रजननसामर्थ्याय च दस्मा शत्रूणां हिंसकौ संतौ नोऽस्माकमवोभी रक्षणैः सह परितक्म्याया परितक्ने निमित्तभूते सति । यद्वा रात्रिनामैतत् । रात्रौ हिंसकानां वधाय स्यातां । भवतां ॥

युवामिद्ध्यवसे पूर्व्याय परि प्रभूती गविषः स्वापी ।
वृणीमहे सख्याय प्रियाय शूरा मंहिष्ठा पितरेव शंभू ॥७॥
युवां । इत् । हि । अवसे । पूर्व्याय । परि । प्रभूती इति प्रऽभूती । गोऽइषः । स्वापी इति सुऽआपी ।
वृणीमहे । सख्याय । प्रियाय । शूरा । मंहिष्ठा । पितराऽइव । शंभू इति शंऽभू ॥७॥

हे इंद्रावरुणौ गविषो गा इच्छंतो वयं युवामित् । हीति पादपूरणः । युवामेव पूर्व्याय पुरातनाय युवाभ्यां कृतायावसे रक्षणाय । वृणीमह इति संबंधः । प्रभूती प्रभवंतौ स्वापी शोभनबंधुभूतौ । आपिरिति बंधुः । यद्वा । सुष्ठु व्यापनशीलौ शूरा विक्रांतौ मंहिष्ठातिशयेन पूज्यौ युवां सख्याय समानख्यानाय प्रियाय च परि वृणीमहे । परितः प्रार्थयामहे । शंभू सुखस्य भावयितारौ पितरेव पितरौ पुत्राय तद्वत् ॥

ता वां धियोऽवसे वाजयंतीराजिं न जंग्मुर्युवयूः सुदानू ।
श्रिये न गाव उप सोममस्थुरिंद्रं गिरो वरुणं मे मनीषाः ॥ ८ ॥
ताः । वां । धियः । अवसे । वाजऽयंतीः । आजिं । न । जग्मुः । युवऽयूः । सुदानू इति सुऽदानू ।
श्रिये । न । गावः । उप । सोमं । अस्थुः । इंद्रं । गिरः । वरुणं । मे । मनीषाः ॥ ८ ॥

सुदानू शोभनफलदातारौ हे देवौ वां युवां वाजयंती रन्नमिच्छंत्यो धियः स्तुतयो जग्मुः । गच्छंति । युवयूर्युवां कामयमानाः पदातय अवसे रक्षणाय आजिं न संग्राममिव । किंच श्रिये दध्यादिश्रयणाय गावः सोमं न सोममिवेंद्रं वरुणं च मे मदीया मनीषा मनस ईश्वरा गिरः स्तुतय उपास्थुः । तिष्ठंति । प्रीणयंतीत्यर्थः ॥

इमा इंद्रं वरुणं मे मनीषा अग्मन्नुप द्रविणमिच्छमानाः ।
उपेमस्थुर्जोष्टार इव वस्वो रघ्वीरिव श्रवसो भिक्षमाणाः ॥ ९ ॥
इमाः । इंद्रं । वरुणं । मे । मनीषाः । अग्मन् । उप । द्रविणं । इच्छमानाः ।
उप । ईं । अस्थुः । जोष्टारःऽइव । वस्वः । रघ्वीःऽइव । श्रवसः । भिक्षमाणाः ॥ ९ ॥

इंद्रं वरुणं च मे मम मनीषाः स्तुतयो द्रविणमिच्छमानाः सत्य उपाग्मन् । उपगच्छंति । जोष्टारः सेवका वस्वो धनस्य लाभाय धनिकं स्वामिनमिव । रघ्वीरिव लघ्व्य इव शीघ्रगामिन्य इव श्रवसोऽन्नस्यान्नं भिक्षमाणा एनमिंद्रं वरुणं चोपास्थुः । उपतिष्ठंते ॥

अश्व्यस्य त्मना रथ्यस्य पुष्टेर्नित्यस्य रायः पतयः स्याम ।
ता चक्राणा ऊतिभिर्नव्यसीभिरस्मत्रा रायो नियुतः सचंतां ॥ १० ॥
अश्व्यस्य । त्मना । रथ्यस्य । पुष्टेः । नित्यस्य । रायः । पतयः । स्याम ।
ता । चक्राणा । ऊतिऽभिः । नव्यसीभिः । अस्मऽत्रा । रायः । निऽयुतः । सचंतां ॥ १० ॥

अश्व्यस्याश्वसमूहस्य रथ्यस्य रथरूपस्य रथार्हस्य वा पुष्टेः पोषस्य नित्यस्याविचालितस्य रायो धनस्य त्मनात्मना स्वयमेवाप्रयत्नेन पतयः स्याम । ता तौ देवौ चक्राणा चक्रमाणौ गंतारौ । भवतामिति शेषः । नव्यसीभिर्नूतनाभिरूतिभी रक्षाभिरस्मत्रास्मासु नियुतोऽश्वा रायो धनानि च सचतां । सेवतां ॥

आ नो बृहंता बृहतीभिरूती इंद्र यातं वरुण वाजसातौ ।
यद्दिद्यवः पृतनासु प्रक्रीळान्तस्य वां स्याम सनितार आजेः ॥ ११ ॥
आ । नः । बृहंता । बृहतीभिः । ऊती । इंद्र । यातं । वरुण । वाजऽसातौ ।
यत् । दिद्यवः । पृतनासु । प्रऽक्रीळान् । तस्य । वां । स्याम । सनितारः । आजेः ॥ ११ ॥

हे बृहंता महांतौ हे इंद्र हे वरुण बृहतीभिर्महतीभिरूती ऊतिभी रक्षाभिः सह यातं । आगच्छतं । वाजसातौ संग्रामेऽन्नलाभनिमित्तभूते वा यद्यस्मिन्नाजौ संग्रामे पृतनासु सेनासु दिद्यवः । आयुधनामैतत् । आयुधानि शत्रूनवधीनि प्रक्रीळान् । प्रक्रीडंते । तस्य तादृशस्याजेः सनितारः संभक्तारः स्याम । भवेम । वां युवयोरनुग्रहात् ॥ ॥ १६ ॥

मम द्विता इति दशर्चं दशमं सूक्तं । पुरुकुत्सस्य पुत्रस्त्रसदस्यू राजर्षिः । आद्यासु षट्स्वात्मनः स्तुत्यत्वादात्मा देवता । अवशिष्टानां चतसृणामिंद्रावरुणौ देवता । त्रिष्टुप् छंदः । अत्रानुक्रमणिका । मम द्विता दश त्रसदस्युः पौरुकुत्स्यः षळाद्या आत्मस्तव इति । उक्तो विनियोगः पूर्वसूक्ते ॥

मम द्विता राष्ट्रं क्षत्रियस्य विश्वायोर्विश्वे अमृता यथा नः ।
क्रतुं सचंते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥१॥

मम । द्विता । राष्ट्रं । क्षत्रियस्य । विश्वऽआयोः । विश्वे । अमृताः । यथा । नः ।
क्रतुं । सचंते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपमस्य । वव्रेः ॥१॥

क्षत्रियस्य क्षत्रियजात्युत्पन्नस्य विश्वायोः कृत्स्नमनुष्याधीशस्य । ममेत्यात्मनो निर्देशः । द्विता क्षितिस्वर्गभेदेन द्वित्वापन्नं राष्ट्रं । मम त्रसदस्योर्विश्वे सर्वेऽमृता देवा यथा नोऽस्माकं भवंति तथा राष्ट्रं प्रजाश्चेत्यर्थः । वरुणस्य वारकस्य वरुणात्मनो वा कृष्टेर्मनुष्यस्य तद्वतो वा उपमस्य । अंतिकनामैतत् । सर्वेषामंतिकतमस्य वव्रेः । रूपनामैतत् । रूपवतो मम क्रतुं कर्म सचंते । सेवंते देवाः सर्वेऽपि । अहं च राजामि । राजतिरैश्वर्यकर्मा । सर्वेश्वरो भवामि । यद्वा । उपमस्य वव्रेः कृष्टे राजामीति योज्यं ॥

अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमा धारयंत ।
क्रतुं सचंते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥२॥

अहं । राजा । वरुणः । मह्यं । तानि । असुर्याणि । प्रथमा । धारयंत ।
क्रतुं । सचंते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपमस्य । वव्रेः ॥२॥

अहमेव च राजा वरुणो भवामि । मह्यं मदर्थमेव प्रथमा मुख्यानि तानि प्रसिद्धान्यसुर्याण्यसुरविघातकानि बलानि धारयंत । अधारयन्देवाः । शिष्टं गतं ॥

अहमिंद्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके ।
त्वष्टेव विश्वा भुवनानि विद्वान्त्समैरयं रोदसी धारयं च ॥३॥

अहं । इंद्रः । वरुणः । ते इति । महिऽत्वा । उर्वी इति । गभीरे इति । रजसी इति ।
सुमेके इति सुऽमेके ।
त्वष्टाऽइव । विश्वा । भुवनानि । विद्वान । सं । ऐरयं । रोदसी इति । धारयं । च ॥३॥

अहं त्रसदस्युरिद्र इंद्रोऽप्यस्मि । अहं वरुणश्च । ते महित्वा महित्वेनोर्वी विस्तीर्णे गभीरे दुरवगाहे अवकाशवत्यौ वा सुमेके सुरूपे रजसी द्यावापृथिव्यौ ते अप्यहमेव । विद्वान जानन्नहं त्वष्टेव प्रजापतिरिव विश्वा भुवनानि सर्वाणि भूतानि समैरयं । संप्रेरयं । रोदसी द्यावापृथिव्यौ धारयं च । धृतवानस्मि ॥

अहमपो अपिन्वमुक्षमाणा धारयं दिवं सदन ऋतस्य ।
ऋतेन पुत्रो अदितेर्ऋतावोत त्रिधातु प्रथयद्वि भूम ॥४॥

अहं । अपः । अपिन्वं । उक्षमाणाः । धारयं । दिवं । सदने । ऋतस्य ।
ऋतेन । पुत्रः । अदितेः । ऋतऽवा । उत । त्रिऽधातु । प्रथयत । वि । भूम ॥४॥

अहमेवोक्षमाणाः सिंचतीरपोऽपिन्वं । असेचयं । तथा ऋतस्योदकस्यादित्यस्य वा सदने स्थाने निमित्ते सति दिवं द्युलोकं धारयं । यद्वा । उदकाधारे स्थाने दिवमादित्यं धारयं । अहमेव ऋतेनोदकेन निमित्तेनादितेः पुत्र ऋतावाभुवं । उतापि च भूम व्याप्तमाकाशं त्रिधातु त्रिप्रकारं वि विशेषेण प्रथयत । मदर्थमेव क्षित्यादिलोकत्रयमकार्षीत्परमेश्वरः ॥

मां नरः स्वश्वा वाजयंतो मां वृताः समरणे हवंते ।
कृणोम्याजिं मघवाहमिंद्र इयर्मि रेणुमभिभूत्योजाः ॥५॥
मां । नरः । सुऽअश्वाः । वाजयंतः । मां । वृताः । संऽअरणे । हवंते ।
कृणोमि । आजिं । मघऽवा । अहं । इंद्रः । इयर्मि । रेणुं । अभिभूतिऽओजाः ॥५॥

मां मामेव स्वश्वाः शोभनाश्वा वाजयंतः संग्राममिच्छंतो नरो नेतारो भटाः । अनुगच्छंतीति शेषः । मामेव वृताः संतः समरणे संग्रामे हवंते । आह्वयंति युद्धार्थं । मघवा धनवानहमिंद्रः सन्नाजिं कृणोमि । करोमि । अभिभूत्योजाः परेषामभिभाविबलोऽहं रेणुमियर्मि । प्रेरयामि ॥ ॥१७॥

अहं ता विश्वा चकरं नकिर्मा दैव्यं सहो वरते अप्रतीतं ।
यन्मा सोमासो ममदन्यदुक्थोभे भयेते रजसी अपारे ॥६॥
अहं । ता । विश्वा । चकरं । नकिः । मा । दैव्यं । सहः । वरते । अप्रतिऽइतं ।
यत् । मा । सोमासः । ममदन् । यत् । उक्था । उभे इति । भयेते इति । रजसी इति ।
अपारे इति ॥६॥

अहं त्रसदस्युस्ता तानि प्रसिद्धानि विश्वा सर्वाणि चकरं । अकार्षं । अप्रतीतमप्रतिगतं मा मां दैव्यं सहो देवसंबंधि सहो बलं नकिर्वरते । नैव वारयति । यद्यस्मात्सोमासः सोमा मा मां ममदन् । अमदयन् । यद्योक्था शस्त्राण्यपि ममदन् तस्मान्मत्तोऽपारे दूरपारे उभे रजसी द्यावापृथिव्यौ भयेते । चलतः ॥

विदुष्टे विश्वा भुवनानि तस्य ता प्र ब्रवीषि वरुणाय वेधः ।
त्वं वृत्राणि शृण्विषे जघन्वान्त्वं वृताँ अरिणा इंद्र सिंधून् ॥७॥
विदुः । ते । विश्वा । भुवनानि । तस्य । ता । प्र । ब्रवीषि । वरुणाय । वेधः ।
त्वं । वृत्राणि । शृण्विषे । जघन्वान् । त्वं । वृतान् । अरिणाः । इंद्र । सिंधून् ॥७॥

इतः परमिंद्रावरुणयोः स्तुतिः । हे वरुण तस्य ते ॥ कर्मणि षष्ठी ॥ तं त्वां विश्वा सर्वाणि ता तानि भुवनानि भूतजातानि विदुः । जानंति । हे वेधः । स्तोतृनामैतत् । हे स्तोतर्वरुणाय प्र ब्रवीषि । वरुणं स्तौषि । हे इंद्र त्वं वृत्राणि वैरिणो जघन्वान् हतवानिति शृण्विषे । श्रूयसे । किंच हे इंद्र त्वं वृतानावृतान् सिंधून् स्यंदनस्वभावानपसंघानरिणाः । अगमयः ॥

अस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्गहे बध्यमाने ।
त आयजंत त्रसदस्युमस्या इंद्रं न वृत्रतुरमर्धदेवं ॥८॥
अस्माकं । अत्र । पितरः । ते । आसन् । सप्त । ऋषयः । दौःऽगहे । बध्यमाने ।
ते । आ । अयजंत । त्रसदस्युं । अस्याः । इंद्रं । न । वृत्रऽतुरं । अर्धऽदेवं ॥८॥

पुरुकुत्सस्य महिषी दौर्गहे बंधनस्थिते । पत्यावराजकं दृष्ट्वा राष्ट्रं पुत्रस्य लिप्सया ॥ यदृच्छया समायातान् सप्तर्षीन्पर्यपूजयत् । ते च प्रीताः पुनः प्रोचुर्यजेंद्रावरुणौ भृशं ॥ सा चेंद्रावरुणाविष्ट्वा त्रसदस्युमजीजनत् । इतिहासमिमं आचख्यावृषिर्ऋचाविह ॥ अथास्माकमत्रास्मिन्नराजके देशेऽस्याः पृथिव्याः वा पितरः पालयितारः उत्पादकास्त आसन् । अभवन् । एते सप्तर्षयः प्रसिद्धा दौर्गहे दुर्गहस्य पुत्रे पुरुकुत्से बध्यमाने दृढं पाशैर्यस्मा-

दस्या अस्यै पुरुकुत्सान्यै त्रसदस्युमायच्छत । प्रादादिंद्रावरुणयोरनुग्रहात् । कीदृशं तं । वृत्रतुरं वृत्राणां हंतारमर्धदेवं देवानामर्धं समीपे वर्तमानं । यद्वा । देवानामर्धभूतमिंद्रं न इंद्रमिव स्थितं पुत्र यत्सर्वेषामर्धमिंद्रः प्रति तस्मादिंद्रो देवतानां भूयिष्ठभाक्तम इति तैत्तिरीयक । तै० सं० ५. ४. ८. ३

पुरुकुत्सानी हि वामदाशद्धव्येभिरिंद्रावरुणा नमोभिः ।
अथा राजानं त्रसदस्युमस्या वृत्रहणं ददथुरर्धदेवं ॥९॥

पुरुऽकुत्सानी । हि । वां । अदाशत् । हव्येभिः । इंद्रावरुणा । नमःऽभिः ।
अथ । राजानं । त्रसदस्युं । अस्याः । वृत्रऽहनं । ददथुः । अर्धऽदेवं ॥९॥

हे इंद्रावरुणौ पुरुकुत्सानी पुरुकुत्सस्य पत्नी ऋषिप्रेरिता वां युवामदाशत् । अप्रीणयत खलु । हव्येभिर्हविर्भिर्नमोभिः स्तुतिभिश्च । अथ राजानं त्रसदस्युं वृत्रहणमर्धदेवमुक्तलक्षणं पुत्रमस्या अस्यै पुरुकुत्सान्यै ददथुः । दत्तवंताविति ॥

राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः ।
तां धेनुमिंद्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरंतीं ॥१०॥

राया । वयं । ससऽवांसः । मदेम । हव्येन । देवाः । यवसेन । गावः ।
तां । धेनुं । इंद्रावरुणा । युवं । नः । विश्वाहा । धत्तं । अनपऽस्फुरंतीं ॥१०॥

राया धनेन मदेम ससवांसो युवां संभक्तारो वयं । हव्येन देवा मोदंतु यवसेन च गावः । तां धेनुं प्रीणयित्रीं रयिं हे इंद्रावरुणौ विश्वाहा विश्वस्य हंतारौ युवं युवां नोऽस्माकं धत्त । दत्त । कीदृशीं । अनपस्फुरंतीमनवहिंसितां । यद्वा । विश्वाहेत्यव्ययं । सर्वदेत्यर्थः ॥ ॥१८॥

क उ श्रवदिति सप्तर्चमेकादशं सूक्तं । सुहोत्रपुत्रौ पुरुमीळ्हाजमीळ्हावृषी । त्रिष्टुप् छंदः । अश्विनौ देवता । तथा चानुक्रमणिका । क उ सप्त पुरुमीळ्हाजमीळ्हौ सौहोत्रावाश्विनं हि ॥ प्रातरनुवाकाश्विनशस्त्रयोरश्विने क्रतौ त्रैष्टुभे छंदसीदमादिके द्वे सूक्ते । धेनुः प्रत्नस्य क उ श्रवत । आ० ४. १५ । इति सूत्रितत्वात् ॥

क उ श्रवत्कतमो यज्ञियानां वंदारु देवः कतमो जुषाते ।
कस्येमां देवीममृतेषु प्रेष्ठां हृदि श्रेषाम सुष्टुतिं सुहव्यां ॥१॥

कः । ऊं इति । श्रवत् । कतमः । यज्ञियानां । वंदारु । देवः । कतमः । जुषाते ।
कस्य । इमां । देवीं । अमृतेषु । प्रेष्ठां । हृदि । श्रेषाम । सुऽस्तुतिं । सुऽहव्यां ॥१॥

यज्ञियानां यज्ञार्हाणां देवानां मध्ये क उ देवः श्रवत् । शृणुयात्स्तुतिं । कतमो देवो वंदारु वंदनशीलं स्तोत्रं । कतमो देवो जुषाते । सेवते । कस्य हृदीमां प्रेष्ठां प्रियतमां देवीं द्योतमानां सुहव्यां शोभनान्नोपेतां शोभनैर्हविर्भिर्युक्तां वा सुष्टुतिममृतेषु मध्ये श्रेषाम । श्रपयेम आश्रयेम वा । अश्विनावंतरेण स्तुतेः को देवः स्वामी भवेदिति ॥

को मृंळाति कतम आगमिष्ठो देवानामु कतमः शंभविष्ठः ।
रथं कमाहुर्द्रवदश्वमाशुं यं सूर्यस्य दुहितावृणीत ॥२॥

कः । मृळाति । कतमः । आऽगमिष्ठः । देवानां । ऊं इति । कतमः । शंऽभविष्ठः ।
रथं । कं । आहुः । द्रवत्ऽअश्वं । आशुं । यं । सूर्यस्य । दुहिता । अवृणीत ॥२॥

को मृळाति। को देवो मृडाति। सुखयेदस्मान्। कतमो देव आगमिष्ठ आगन्तृतमोऽस्मद्यज्ञं प्रति। देवानाम् देवानां मध्ये कतमो देवः शम्भविष्ठः सुखस्य भावयितृतमः। एवमुक्तगुणविशिष्टः को भवेत् अश्विनावेवेति भावः। कं रथं द्रवदश्वमाशुमाहुः। ब्रुवते। यं रथं सूर्यस्य दुहिता सूर्यस्य पत्न्यवृणीत। समभजत। तं कं रथं वेगवत्तममाहुः॥

मक्षू हि ष्मा गच्छंथ ईवंतो द्यूनिंद्रो न शक्तिं परितक्म्यायां।
दिव आजाता दिव्या सुपर्णा कया शचीनां भवथः शचिष्ठा ॥३॥
मक्षु। हि। स्म। गच्छथः। ईवंतः। द्यून्। इंद्रः। न। शक्तिं। परिऽतक्म्यायां।
दिवः। आऽजाता। दिव्या। सुऽपर्णा। कया। शचीनां। भवथः। शचिष्ठा ॥३॥

मक्षु शीघ्रं। हि स्मेति पूरणौ। ईवन्तो गमनवन्त आगामिनो द्यून्दीव्यमानान्सुत्यामत्संबंधिनः प्रति गच्छथ। इन्द्रः शक्तिं न स्वकीयां शक्तिं यथा परितक्म्यायां रात्र्यामतीतायां। प्रदर्शयतीति शेषः। सुत्याहन्युषःकाले इन्द्रो यथा गच्छति तद्वद्युवामपि गच्छतमित्यर्थः। दिवो द्युलोकादाजातावागतौ दिव्या दिवि भवौ सुपर्णा शोभनगमनौ युवां शचीनां युष्मत्संबंधिना कर्मणा शक्तीनां वा मध्ये कया शच्या शचिष्ठा शक्तिमत्तरौ शोभनकर्मवत्तरौ वा भवथः॥

का वां भूदुपमातिः कया न आश्विना गमथो हूयमाना।
को वां महश्चित्त्यजसो अभीक उरुष्यतं माध्वी दस्रा न ऊती ॥४॥
का। वां। भूत्। उपऽमातिः। कया। नः। आ। अश्विना। गमथः। हूयमाना।
कः। वां। महः। चित्। त्यजसः। अभीके। उरुष्यतं। माध्वी इति। दस्रा। नः। ऊती ॥४॥

वां युवयोः कोपमातिः। उप समीपे मातिर्मानं गुणानां परिच्छित्तिर्यस्याः सा स्तुतिः का भूत्। भवेत्। कया स्तुत्या ह्वयमानावाहूयमानौ सन्तौ नोऽस्मानागमथः। आगच्छथः। वां युवयोरभीके आसन्नप्रदेशे महश्चिन्महतस्त्यजसः। त्यज्यते परित्यज्यते सर्वैरिति त्यजः क्रोधः। तस्य सोढा को भवेत्। हे माध्वी मधुररसस्योदकस्य स्रष्टारौ हे दस्रा शत्रूणामुपक्षपयितारावश्विनौ नोऽस्मानूती ऊत्या रक्षयोरुष्यतं। रक्षाकर्मैतत्। रक्षतं॥

उरु वां रथः परि नक्षति द्यामा यत्समुद्रादभि वर्तते वां।
मध्वा माध्वी मधु वां प्रुषायन्यत्सीं वां पृक्षो भुरजंत पक्वाः ॥५॥
उरु। वां। रथः। परि। नक्षति। द्यां। आ। यत्। समुद्रात्। अभि। वर्तते। वां।
मध्वा। माध्वी इति। मधु। वां। प्रुषायन्। यत्। सीं। वां। पृक्षः। भुरजंत। पक्वाः ॥५॥

हे अश्विनौ वां रथो द्यां परि द्युलोकस्य परित उरु प्रभूतं नक्षति। गच्छति। यद्यस्मादा अर्वाक् समुद्रात् समुद्रवणसाधनादन्तरिक्षाद्वा प्रति अभि वर्तते। आभिमुख्येन गच्छति। हे माध्वी उक्तलक्षणौ मध्वा मधुरेण पयसा मधु मधुरं सोमरसं प्रुषायन्। सिंचत्यध्वर्यवः। यद्यस्मात्सीं सर्वतो वां पृक्षो युवयोः सोम पक्वाः पक्वा यवा भुरजंत। प्राप्नुवंति। तस्मादभिवर्तते वामिति॥

सिंधुर्ह वां रसया सिंचदश्वान्घृणा वयोऽरुषासः परि ग्मन्।
तदू षु वामजिरं चेति यानं येन पती भवथः सूर्यायाः ॥६॥

सिंधुः। ह। वां। रसया। सिंचत्। अश्वान्। घृणा। वयः। अरुषासः। परि। ग्मन्।
तत्। ऊं इति। सु। वां। अजिरं। चेति। यानं। येनं। पती इति। भवथः। सूर्यायाः॥६॥

वां युवयोरश्वान् सिंधुः स्यंदमानो मेघ उदकं वा रसया रसेन सिंचत। असेचयत्। घृणा दीप्त्या वयः पक्षिसदृशा वेतारो वा अश्वा अरुषास आरोचमानाः संतः परि परितो ग्मन। गच्छंति। वां यानं गमनसाधनं प्रसिद्धो रथोऽजिरं। क्षिप्रनामैतत्। सु सुष्ठु चेति। ज्ञायते। येन रथेन सूर्यायाः पती पालयितारौ वोढारौ भवथः स रथश्चेतीति॥

इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना।
उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक्॥७॥
इहऽइह। यत्। वां। समना। पपृक्षे। सा। इयं। अस्मे इति। सुऽमतिः। वाजऽरत्ना।
उरुष्यतं। जरितारं। युवं। ह। श्रितः। कामः। नासत्या। युवद्रिक्॥७॥

हे अश्विनौ यद्यस्मात्। यया वा सुमत्या। इहेहास्मिन्नेव यज्ञे समना समानमनस्कौ। सदृशावित्यर्थः। तौ वां युवां सुमत्या पपृक्षे। स्तुत्या संयोजयामि। सेयमिदानीं क्रियमाणा सुमतिः शोभनस्तुतिरस्मे अस्माकमेव फलवती भवत्विति शेषः। हे वाजरत्ना रमणीयान्नौ। अन्नं वै वाजः। शत॰ ब्रा॰ ९. ३ ४ १.। इति श्रुतेः। युवं युवां जरितारं शंसितारं स्तोतारं मामुरुष्यत। रक्षतं। हे नासत्याश्विनौ कामोऽस्मदीयो युवद्रिक् ह युवामेव गच्छन् श्रितः प्राप्तः॥ ॥१९॥

तं वां रथमिति सप्तर्चं द्वादशं सूक्तं। पुरुमीळ्हाजमीळ्हाविव ऋषी। त्रिष्टुप् छंदः। अश्विनौ देवता। तं वामित्यनुक्रांतं॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः।
यः सूर्यां वहति वंधुरायुर्गिर्वाहसं पुरुतमं वसूयुं॥१॥
तं। वां। रथं। वयं। अद्य। हुवेम। पृथुऽज्रयं। अश्विना। संऽगतिं। गोः।
यः। सूर्यां। वहति। वंधुरऽयुः। गिर्वाहसं। पुरुऽतमं। वसुऽयुं॥१॥

हे अश्विना वां युवयो रथं स्तोतारोऽद्य सुत्याहनि हुवेम। आह्वयामः। कीदृशं तं। पृथुज्रयं प्रथितवेगं गोः गवां संगतिं संगमयितारं। यो रथः सूर्यां वहति। धारयति। वंधुरयुः। रथे निवासाधारभूतः काष्ठो वंधुरं तद्वान्। तं गिर्वाहसं गिरां स्तुतीनां वोढारं पुरुतमं प्रभूततमं वसूयुं वसुमंतं॥

युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः।
युवोर्वपुरभि पृक्षः सचंते वहंति यत्ककुहासो रथे वां॥२॥
युवं। श्रियं। अश्विना। देवता। तां। दिवः। नपाता। वनथः। शचीभिः।
युवोः। वपुः। अभि। पृक्षः। सचंते। वहंति। यत्। ककुहासः। रथे। वां॥२॥

हे दिवो नपातादित्यस्य पुत्रस्थानीयौ द्युलोकस्य वा न पातयितारौ हे अश्विनौ युवं युवां देवता देवते॥ विभक्तिव्यत्ययः॥ तां प्रसिद्धां श्रियं शचीभिः कर्मभिः शक्तिभिर्वा वनथः। संभजेथे। यद्वा। वनतिर्दानार्थः। युवोर्युवयोर्वपुः शरीरं पृक्षोऽन्नानि सोमलक्षणान्यभि सचंते। यद्यदा रथे वां वहंति ककुहासो महांतोऽश्वाः। यद्वा। स्तुतयो वा युवां रथं वहंति॥

को वामद्या करते रातहव्य ऊतये वा सुतपेयाय वार्कैः ।
ऋतस्य वा वनुषे पूर्व्याय नमो येमानो अश्विना ववर्तत् ॥३॥
कः । वां । अद्य । करते । रातऽहव्यः । ऊतये । वा । सुतऽपेयाय । वा । अर्कैः ।
ऋतस्य । वा । वनुषे । पूर्व्याय । नमः । येमानः । अश्विना । आ । ववर्तत् ॥३॥

को यजमानोऽद्य वां युवयोः करते । कुर्यात स्तुतिं । अर्कैर्मंत्रैः रातहव्यो दत्तसोम ऊतये वा रक्षणाय वा सुतपेयाय सोमपानाय वा । ऋतस्योदकस्य यज्ञस्य वा पूर्व्याय पुराणाय वनुषे संभजनाय हे अश्विना नमो येमानो नमस्कारं कुर्वाणः क आ ववर्तत । आवर्तयेद्यज्ञं प्रति ॥

हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योप यातं ।
पिबाथ इन्मधुनः सोम्यस्य दधथो रत्नं विधते जनाय ॥४॥
हिरण्ययेन । पुरुभू इति पुरुऽभू । रथेन । इमं । यज्ञं । नासत्या । उप । यातं ।
पिबाथः । इत् । मधुनः । सोम्यस्य । दधथः । रत्नं । विधते । जनाय ॥४॥

हे पुरुभू बहु भवंतौ नासत्याविमं यज्ञं हिरण्ययेन रथेनोप यातं । सोम्यस्य सोमसंबंधिनो मधुनो मधुररसस्य ॥ कर्मणि षष्ठी ॥ सोमरसं पिबाथः । पिबथः । विधते परिचरते जनाय मह्यं रत्नं रमणीयं धनं दधथः । धारयथः ॥ दधतेर्दानार्थस्य लेटि रूपं ॥

आ नो यातं दिवो अच्छा पृथिव्या हिरण्ययेन सुवृता रथेन ।
मा वामन्ये नि यमन्देवयंतः सं यद्ददे नाभिः पूर्व्या वां ॥५॥
आ । नः । यातं । दिवः । अच्छ । पृथिव्याः । हिरण्ययेन । सुऽवृता । रथेन ।
मा । वां । अन्ये । नि । यमन् । देवऽयंतः । सं । यत् । ददे । नाभिः । पूर्व्या । वां ॥५॥

नोऽस्मानच्छाभि प्राप्तुं दिवो द्युलोकात्पृथिव्याः सकाशाद्वा आ यातं । केन साधनेन । हिरण्ययेन हितरमणीयेन सुवृता शोभनावर्तनेन रथेन । वां युवामन्ये देवयंतो देवौ युवामिच्छंतो यजमाना मा नि यमन् । नियमनं मा कुर्वन् । यद्यस्मात्पूर्व्या पूर्वेभ्यो हितरयष्टृभ्यः पूर्वभाविनी नाभिर्बंधिका स्तुतिः सं ददे । संबध्नाति । तस्मादायातं ॥

नू नो रयिं पुरुवीरं बृहंतं दस्रा मिमाथामुभयेष्वस्मे ।
नरो यद्वामश्विना स्तोममावन्त्सधस्तुतिमाजमीळ्हासो अग्मन् ॥६॥
नु । नः । रयिं । पुरुऽवीरं । बृहंतं । दस्रा । मिमाथां । उभयेषु । अस्मे इति ।
नरः । यत् । वां । अश्विना । स्तोमं । आवन् । सधऽस्तुतिं । आजऽमीळ्हासः । अग्मन् ॥६॥

नु क्षिप्रं नोऽस्माकं रयिं धनं पुरुवीरं बहुपुत्रोपेतं बृहंतं महांतं हे दस्रावश्विनौ मिमाथां । कुरुतं । उभयेषु पुरुमीळ्हाजमीळ्हेष्वस्मे अस्मासु यद्यदा नरो नेतार ऋत्विजः पुरुमीळ्हसंबंधिनो वां युवयोः स्तोमं स्तोत्रमावन् । अगमन् । प्राप्ताः । तथा सधस्तुतिं सहस्तुतिमाजमीळ्हासोऽजमीळ्हसंबंधिनोऽपि तैः सहाग्मन् । अगमन् ॥

इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।
उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥७॥
इहऽइह । यत् । वां । समना । पपृक्षे । सा । इयं । अस्मे इति । सुऽमतिः । वाजऽरत्ना ।
उरुष्यतं । जरितारं । युवं । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥७॥

इहेहेति गतं ॥ ॥२०॥

एष स्य भानुरिति सप्तर्चं त्रयोदशं सूक्तं । आदितः षट् जगत्यः सप्तमी त्रिष्टुप् । मंडलद्रष्टा वामदेव ऋषिः । अश्विनौ देवता । एष स्य त्रिष्टुबंतमिति ह्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोर्जागते छंदसीदं शस्त्रं । तथा च सूत्रितं । अबोध्यग्निर्ज्म एष स्य भानुः । आ० ४ १५ । इति ॥

एष स्य भानुरुदियर्ति युज्यते रथः परिज्मा दिवो अस्य सानवि ।
पृक्षासो अस्मिन्मिथुना अधि त्रयो दृतिस्तुरीयो मधुनो वि रप्शते ॥१॥
एषः । स्यः । भानुः । उत् । इयर्ति । युज्यते । रथः । परिऽज्मा । दिवः । अस्य । सानवि ।
पृक्षासः । अस्मिन् । मिथुनाः । अधि । त्रयः । दृतिः । तुरीयः । मधुनः । वि । रप्शते ॥१॥

एष पुरतो दृश्यमानः स्य स भानुर्दीप्तिमानादित्य उदियर्ति । ऊर्ध्वं गच्छति । पुरस्ताद्रथश्च युवयोः संबंधी परिज्मा परितो गतास्य दिवो द्योतमानस्यादित्यस्य सानवि सानौ समुच्छ्रितप्रदेश उदियर्तीति वा रप्शत इति वा संबंधनीयं । अस्मिन्रथेऽधि उपरिभागे मिथुना मिथुनीभूतास्त्रयस्त्रिविधाः पृक्षासोऽन्नानि । त्रेधा विहितं चान्नं । इदमन्नमशनं पानं खादश्चेति हि श्रुतं । त्रिष्वपि पदार्थेषु मिथुनशब्दस्त्रित्तिरीयेषु दृश्यते । माता पिता पुत्रस्तदेव तन्मिथुनमिति । दृतिस्तुरीयः । रसद्रव्याधारः पदार्थश्चर्ममयो दृतिरित्युच्यते । मधुनः सोमरसस्य संबंधी मधुपूर्णश्चतुर्थो वि रप्शते । विविधं राजते ॥

उद्वां पृक्षासो मधुमंत ईरते रथा अश्वास उषसो व्युष्टिषु ।
अपोर्णुवंतस्तम आ परीवृतं स्वर्ण शुक्रं तन्वंत आ रजः ॥२॥
उत् । वां । पृक्षासः । मधुऽमंतः । ईरते । रथाः । अश्वासः । उषसः । विऽउष्टिषु ।
अपऽऊर्णुवंतः । तमः । आ । परिऽवृतं । स्वः । न । शुक्रं । तन्वंतः । आ । रजः ॥२॥

पृक्षासः पृक्षास्त्रिविधान्नवंतो मधुमंतः सोमरसोपेता अश्वासोऽश्वयुक्ता वां युवयो रथाः । यद्वा । मधुमंतः पृक्षा रथा अश्वासोऽश्वा उषसो व्युष्टिषु व्युच्छनेषु सत्सूदीरते । उन्मुखं गच्छंति । किं कुर्वंतः । परीवृतं परितो व्याप्तं तम आ सर्वतोऽपोर्णुवंतोऽपाकुर्वंतः स्वर्न आदित्य इव शुक्रं दीप्तं रजस्तेजश्च तन्वंतः । आकारश्चार्थे । यद्वा । रजोंऽतरिक्षं शुक्रं दीप्तं तन्वंतः ॥

मध्वः पिबतं मधुपेभिरासभिरुत प्रियं मधुने युंजाथां रथं ।
आ वर्तनिं मधुना जिन्वथस्पथो दृतिं वहेथे मधुमंतमश्विना ॥३॥
मध्वः । पिबतं । मधुऽपेभिः । आसऽभिः । उत । प्रियं । मधुने । युंजाथां । रथं ।
आ । वर्तनिं । मधुना । जिन्वथः । पथः । दृतिं । वहेथे इति । मधुऽमंतं । अश्विना ॥३॥

मध्वो मधुरं सोमरसं मधुपेभिः सोमपानार्हैरास्यभिरास्यैः पिबत। उतापि च प्रियं रथं मधुने मधुना भाय युञ्जाथां। अश्वैर्युक्तं कुरुत। वर्तनिं यजमानगृहमागच्छतमिति शेषः। पथो गमनमार्गान्मधुना जिन्वथ। प्रीणयत। यद्वैक वाक्यं। पथो वर्तनिमाकाशं जिन्वथः। इति मधुमतं हे अश्विना वहेथे। धारयथः ॥

हंसासो ये वां मधुमंतो अस्रिधो हिरण्यपर्णा उहुवं उषर्बुधः।
उदप्रुतो मंदिनो मंदिनिस्पृशो मध्वो न मक्षः सवनानि गच्छथः ॥४॥
हंसासः। ये। वां। मधुऽमंतः। अस्रिधः। हिरण्यऽपर्णाः। उहुवः। उषःऽबुधः।
उदऽप्रुतः। मंदिनः। मंदिऽनिस्पृशः। मध्वः। न। मक्षः। सवनानि। गच्छथः ॥४॥

हंसासोऽध्वनि शीघ्रगन्तारो मधुमतो माधुर्योपेता अस्रिधोऽद्रोग्धारो हिरण्यपर्णा हितरमणीयपर्णा उहुवो वोढार उषर्बुध उषसि बुध्यमाना उदप्रुत उदकस्य प्रावयितारो मंदिनो हर्षयितारो मंदिनिस्पृशो मंदिनं सोमं स्पृशतः। इत्थंलक्षणा अश्वा ये संति तैरश्वैर्मध्वो न मध्विव मक्षो मक्षिकाः सवनान्यस्मदीयानि गच्छथः ॥

स्वध्वरासो मधुमंतो अग्नय उस्रा जरंते प्रति वस्तोरश्विना।
यन्निक्तहस्तस्तरणिर्विचक्षणः सोमं सुषाव मधुमंतमद्रिभिः ॥५॥
सुऽअध्वरासः। मधुऽमंतः। अग्नयः। उस्रा। जरंते। प्रति। वस्तोः। अश्विना।
यत्। निक्तऽहस्तः। तरणिः। विऽचक्षणः। सोमं। सुसाव। मधुऽमंतं। अद्रिऽभिः ॥५॥

स्वध्वरासः शोभनयागसाधना मधुमतो हवित्वसोमवतोऽग्नयो गार्हपत्यादय उस्रा सह निवसतावश्विना प्रति वस्तोरन्वहमुषःकाले जरंते। स्तुवंति। यद्यदा निक्तहस्तः समंत्रणादिकेन शोधितहस्तस्तरणिः कर्मणस्तारयिता विचक्षणो विविधद्रष्टाध्वर्युः सोमं मधुमंतमद्रिभिर्ग्रावभिः सुषाव। अभिषुतवान्। तदा तेऽग्नयः स्तुवंति। तस्मादागच्छतमित्यर्थः ॥

आकेनिपासो अहभिर्दविध्वतः स्व१र्ण शुक्रं तन्वंत आ रजः।
सूरश्चिदश्वान्युयुजान ईयते विश्वाँ अनु स्वधया चेतथस्पथः ॥६॥
आकेऽनिपासः। अहऽभिः। दविध्वतः। स्वः। न। शुक्रं। तन्वंतः। आ। रजः।
सूरः। चित्। अश्वान्। युयुजानः। ईयते। विश्वान्। अनु। स्वधया। चेतथः। पथः ॥६॥

आकेनिपासः। आकेऽतिके निपततीत्याकेनिपा रश्मयः। ते चाहभिरहोभिर्दविध्वतः कंपयंतो ध्वंसयंतो वा तमांसि। स्वर्न आदित्य इव शुक्रं दीप्तं रजः आ तन्वंतो भवंत्यश्विनोरश्वाः। सूरश्चित्सूर्योऽश्वान्युयुजानो योजयन्नीयते। गच्छति। हे अश्विनौ युवां विश्वान्पथ आगमनमार्गाननुक्रमेण स्वधयान्नेन सोमलक्षणेन चेतथः। चेतयथः। प्रज्ञापयथः ॥

प्र वामवोचमश्विना धियंधा रथः स्वश्वो अजरो यो अस्ति।
येन सद्यः परि रजांसि याथो हविष्मंतं तरणिं भोजमच्छ ॥७॥
प्र। वां। अवोचं। अश्विना। धियंऽधाः। रथः। सुऽअश्वः। अजरः। यः। अस्ति।
येन। सद्यः। परि। रजांसि। याथः। हविष्मंतं। तरणिं। भोजं। अच्छ ॥७॥

धियंधाः कर्मणां धारकोऽहं हे अश्विना वां प्रावोचं । प्रब्रवीमि । स्तौमि । स्वश्वोऽजरोऽजीर्णो नित्यनूतनोऽजरयिता वा रथो योऽस्ति । येन रथेन सद्यस्तदानीमेव रजांसि लोकान्परि याथः तेन रथेन हविष्मंतं सोमादिहविर्युक्तं तरणिं तारकं शीघ्रगामिनं भोजं भोजयितारमस्मद्यागमच्छ प्राप्तुमागच्छतमिति शेषः ॥ ॥ २१ ॥ ॥ ४ ॥

पंचमेऽनुवाके त्रयोदश सूक्तानि । तत्राग्रं पिबेति सप्तर्चं प्रथमं सूक्तं वामदेवस्यार्षं गायत्रं । द्वितीयाद्याः इंद्रवायुदेवताकमाद्या केवलवायव्या । तथा चानुक्रांतं । अग्रं वायव्याद्यैंद्रवायवं तु गायत्रमिति ॥ सूक्तविनियोगो लैंगिकः । आद्या तु ऐंद्रवायवग्रहस्य याज्या । तथा च सूत्रितं । अग्रं पिबा मधूनामिति याज्या अनवानं । आ० ५. ५ । इति ॥

अग्रं पिबा मधूनां सुतं वायो दिविष्टिषु । त्वं हि पूर्वपा असि ॥ १ ॥
अग्रं । पिब । मधूनां । सुतं । वायो इति । दिविष्टिषु । त्वं । हि । पूर्वऽपाः । असि ॥ १ ॥

हे वायो त्वमग्रमिंद्रादिभ्यः पूर्वं मधूनां मधुररसानां सोमानां संबंधिनं सुतमभिषुतं रसं पिब । कुत्रेति तदुच्यते । दिविष्टिषु दिवः स्वर्गस्य प्रापकेषु यज्ञेषु । यद्वा । अस्माकं दिवः स्वर्गस्यैषणेषु निमित्तेषु । त्वं हि त्वं खलु पूर्वपा असि । हिशब्दो देव दधिषे पूर्वपेयं । ऋग्वे० १ ८२ १ । इत्यादिमंत्रांतरप्रसिद्धिद्योतनार्थः । वायो रग्रपानं देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन्नहं प्रथमः पिबेयमित्यादिब्राह्मणे । ऐ० ब्रा० २. २५. । स्पष्टमाम्नातं । तत्र हि वायुराजिं प्रथमं धावित्वाग्रपानं लब्धवान् ॥

शतेना नो अभिष्टिभिर्नियुत्वाँ इंद्रसारथिः । वायो सुतस्य तृंपतं ॥ २ ॥
शतेन । नः । अभिष्टिऽभिः । नियुत्वान् । इंद्रऽसारथिः । वायो इति । सुतस्य । तृंपतं ॥ २ ॥

हे वायो नियुत्वान्नियुद्भिरश्वैस्तद्वान् इंद्रसारथिरिंद्रसहायः सन् त्वं शतेनापरिमितैरभिष्टिभिरभित एषणीयैः कामैर्निमित्तभूतैरागच्छेति शेषः । आगत्य च सुतस्य सुतमभिषुतं सोमं तृंपतं । पिबतं त्वमिंद्रश्च । इंद्रस्य सारथ्यं ब्राह्मण एवोक्तं । तत्तुरीयभागिंद्रोऽभवत्त्रिभाग्वायुरिति तुरीये ह वै संग्रहीतारो वदंतेऽर्धनेवानुकाशेन यददः इंद्रः सारथिरिव भूत्वोदजयत । ऐ० ब्रा० २. २५ । इति वा ॥

आ वां सहस्रं हरय इंद्रवायू अभि प्रयः । वहंतु सोमपीतये ॥ ३ ॥
आ । वां । सहस्रं । हरयः । इंद्रवायू इति । अभि । प्रयः । वहंतु । सोमऽपीतये ॥ ३ ॥

हे इंद्रवायू वां युवां सहस्रं हरयः सहस्रसंख्याका अश्वाः प्रयोऽन्नं प्रति त्वरयंतः संति । अत्र हरिशब्दोऽश्वसामान्यवचनः । ते सोमपीतय आ वहंतु ॥

रथं हिरण्यवंधुरमिंद्रवायू स्वध्वरं । आ हि स्थाथो दिविस्पृशं ॥ ४ ॥
रथं । हिरण्यऽवंधुरं । इंद्रवायू इति । सुऽअध्वरं । आ । हि । स्थाथः । दिविऽस्पृशं ॥ ४ ॥

हे इंद्रवायू हिरण्यवंधुरं हिरण्मयनिवासाधारकाष्ठोपेतं दिविस्पृशं द्युलोकस्पर्शिनं स्वध्वरं शोभनाध्वरवंतं रथमा स्थाथो हि । आस्थितौ खलु । यस्मादेवं तस्मादागच्छतमित्यर्थः । स्वध्वरं प्रत्यास्थाथ इति वा व्याख्येयं ॥

रथेन पृथुपाजसेत्यादिकस्तृचो दशरात्रे पंचमेऽहनि प्रउगशस्त्र ऐंद्रवायवो द्वितीयः । सूत्रितं च । रथेन पृथुपाजसा बहवः सूरचक्षसः । आ० ७ १२ । इति ॥

रथेन पृथुपाजसा दाश्वांसमुप गच्छतं । इंद्रवायू इहा गतं ॥ ५ ॥
रथेन । पृथुऽपाजसा । दाश्वांसं । उप । गच्छतं । इंद्रवायू इति । इह । आ । गतं ॥ ५ ॥

हे इंद्रवायू पृथुपाजसा प्रभूतबलेन रथेन दाश्वांसं दातारं यजमानमुप गच्छतं । तदर्थमिहास्मिन्यज्ञ आ गतं । आगच्छतं ॥

इंद्रवायू अयं सुतस्तं देवेभिः सजोषसा । पिबतं दाशुषो गृहे ॥६॥
इंद्रवायू इति । अयं । सुतः । तं । देवेभिः । सऽजोषसा । पिबतं । दाशुषः । गृहे ॥६॥

हे इंद्रवायू अयं सोमः सुतोऽभिषुतः । तं सोमं देवेभिर्देवैः सजोषसा समानप्रीतौ दाशुषो हविर्दातुर्गृहे यागशालायां पिबतं ॥

इह प्रयाणमस्तु वामिंद्रवायू विमोचनं । इह वां सोमपीतये ॥७॥
इह । प्रऽयानं । अस्तु । वां । इंद्रवायू इति । विऽमोचनं । इह । वां । सोमऽपीतये ॥७॥

हे इंद्रवायू वां युवयोरिहास्मिन्यज्ञे प्रयाणं गमनमस्तु । इहास्मिन्नेव यज्ञे वां सोमपीतये विमोचनमश्वानामस्तु । पर्यवसानत एकार्थत्वेऽप्यादरार्थत्वादविरोधः ॥ ॥२२॥

वायो शुक्र इति चतुर्ऋचं द्वितीयं सूक्तमानुष्टुभं वामदेवस्यार्षमैंद्रवायवं । आद्या केवलवायव्या । अत्रानुक्रमणिका । वायो चतुष्कमाद्या वायव्यानुष्टुभं त्विति ॥ सूक्तविनियोगो लैंगिकः ॥ आद्या दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे वायव्यतृचे प्रथमा । वायो शुक्रो अयामि ते विहि होत्रा अवीताः । आ० ७.११ । इति सूत्रितं ॥

वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु ।
आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥१॥
वायो इति । शुक्रः । अयामि । ते । मध्वः । अग्रं । दिविष्टिषु ।
आ । याहि । सोमऽपीतये । स्पार्हः । देव । नियुत्वता ॥१॥

हे वायो ते तुभ्यं शुक्रो व्रतचर्यादिना दीप्तोऽहं मध्वो मधुरं सोमरसं ॥ कर्मणि षष्ठी ॥ अग्रमितरेभ्यः पूर्वमयामि । आययामि ॥ अयतिरंतर्भावितण्यर्थः ॥ किमर्थं । दिविष्टिषु दिवो द्युलोकस्यैषणेषु सत्सु हे देव वायो स्पार्हः स्पृहणीयस्त्वं नियुत्वता । नियुद्वायोः श्वेतनियुतोऽश्वः । तेन साधनेन याहि सोमपीतये सोमपानाय ॥

इंद्रश्चेत्यादिस्तृचो दशरात्रे चतुर्थेऽहन्यैंद्रवायवो द्वितीयः । सूत्रितं च । इंद्रश्च वायवेषां सोमानामा चिकितान सुक्रतू । आ० ७.११ । इति ॥

इंद्रश्च वायवेषां सोमानां पीतिमर्हथः । युवां हि यंतींदवो निम्नमापो न सध्र्यक् ॥२॥
इंद्रः । च । वायो इति । एषां । सोमानां । पीतिं । अर्हथः । युवां । हि । यंति । इंदवः ।
निम्नं । आपः । न । सध्र्यक् ॥२॥

हे वायो त्वमिंद्रश्चैषां गृहीतानां सोमानां पीतिं पानमर्हथः । युवां हि खल्विंदवः सोमा यंति । प्राप्नुवंति । निम्नं खातप्रदेशमापो न सध्र्यक् उदकानि यथा सहैव गच्छंति तद्वत्सर्वे सोमा युवां हि यंति ॥

वायविंद्रश्च शुष्मिणा सरथं शवसस्पती । नियुत्वंता न ऊतय आ यातं सोमपीतये ॥३॥
वायो इति । इंद्रः । च । शुष्मिणा । सऽरथं । शवसः । पती इति । नियुत्वंता । नः ।
ऊतये । आ । यातं । सोमऽपीतये ॥३॥

हे वायो त्वमिंद्रश्च हे शवसस्पती बलस्य पती शुष्मिणा बलवंतौ नियुत्वंता नियुत्संज्ञकाश्ववंतौ युवां सरथं समानमेव रथमारुह्येति शेषः । न ऊतये रक्षणाय सोमपीतये सोमपानायात्रा यात । आगच्छतं । यद्वा । सरथमधितिष्ठतमारुह्य चायातमिति च वाक्यद्वयं ॥

या वां संति पुरुस्पृहो नियुतो दाशुषे नरा । अस्मे ता यज्ञवाहसेंद्रवायू नि यच्छतं ॥४॥

याः । वां । संति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा । अस्मे इति । ताः । यज्ञऽवाहसा ।
इंद्रवायू इति । नि । यच्छतं ॥४॥

हे नरा नेतारौ हे यज्ञवाहसा यज्ञवाहकाविंद्रवायू याः पुरुस्पृहो बहुभिः स्पृहणीया नियुतः संति अस्मे अस्मभ्यं दाशुषे हविर्दत्तवते यजमानाय मदर्थं ता नियुतो नि यच्छत ॥ ॥२३॥

विहि होत्रा इति पचर्चं तृतीयं सूक्तं वामदेवस्य वायव्यं । अत्रानुक्रमणिका । विहि पंच वायव्यमिति ॥ सूक्तविनियोगो लैंगिकः ॥ आद्या दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे वायव्यतृचस्य द्वितीया । तथा च सूत्रितं । विहि होत्रा अवीता वायो शतं हरीणां । आ° ७ ११ । इति ॥

विहि होत्रा अवीता विपो न रायो अर्यः । वायवा चंद्रेण रथेन याहि सुतस्य पीतये ॥१॥

विहि । होत्राः । अवीताः । विपः । न । रायः । अर्यः । वायो इति । आ । चंद्रेण । रथेन ।
याहि । सुतस्य । पीतये ॥१॥

हे वायो विहि । वीहि । भक्षय । होत्रा होमसाधिकाः सोमाहुतीरवीता अन्यैः पूर्वमभक्षिता विपो न शत्रूणां वेपयिता राजेव । किंचार्यः स्तोतुर्मम रायो धनानि संपादयेति शेषः । हे वायो चंद्रेणाह्लादकेन रथेना याहि सुतस्य सोमस्य पीतये पानाय ॥

निर्युवाणो अशस्तीर्नियुत्वाँ इंद्रसारथिः । वायवा चंद्रेण रथेन याहि सुतस्य पीतये ॥२॥

निःऽयुवानः । अशस्तीः । नियुत्वान् । इंद्रऽसारथिः । वायो इति । आ । चंद्रेण । रथेन ।
याहि । सुतस्य । पीतये ॥२॥

हे वायो त्वमशस्तीरभिशस्तीर्निर्युवाणो निःशेषेण नियोजयन्नियुत्वान्नियुत्संज्ञकाश्ववानिंद्रसारथिरिंद्रसहायः सन् आ याहि ॥

अनु कृष्णे वसुधिती येमाते विश्वपेशसा । वायवा चंद्रेण रथेन याहि सुतस्य पीतये ॥३॥

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । येमाते इति । विश्वऽपेशसा । वायो
इति । आ । चंद्रेण । रथेन । याहि । सुतस्य । पीतये ॥३॥

कृष्णे कृष्णवर्णे वसुधिती वसूनां धात्र्यौ विश्वपेशसा विश्वरूपे द्यावापृथिव्यौ त्वामनु येमाते । अनुगच्छतः ॥

वहंतु त्वा मनोयुजो युक्तासो नवतिर्नव । वायवा चंद्रेण रथेन याहि सुतस्य पीतये ॥४॥

वहंतु । त्वा । मनःऽयुजः । युक्तासः । नवतिः । नव । वायो इति । आ । चंद्रेण । रथेन ।
याहि । सुतस्य । पीतये ॥४॥

हे वायो त्वा त्वा मनोयुजो मनःसमानगतयो युक्तासः परस्परसंयुक्ता नवतिर्नव नवोत्तरनवतिसंख्याका अश्वा वहतु । धारयतु ॥

वायो शतमिति पंचमी पूर्वोक्त एव तृचे तृतीया । सूत्रं पूर्वमेवोक्तं ॥

वायो शतं हरीणां युवस्व पोष्याणां। उत वा ते सहस्रिणो रथ आ यातु पाजसा ॥५॥

वायो इति। शतं। हरीणां। युवस्व। पोष्याणां। उत। वा। ते। सहस्रिणः। रथः।
आ। यातु। पाजसा ॥५॥

हे वायो त्वं पोष्याणां पोषणीयानां हरीणां शतं युवस्व। योजय रथे। उत वा अथवा ते सहस्रिणः सहस्रसंख्यापूरका अश्वाः। तैर्युक्तो रथः पाजसा बलेन आ यातु। आगच्छतु ॥ ॥२४॥

इदं वामास्य इति षडृचं चतुर्थं सूक्तं वामदेवस्यार्षं गायत्रमैंद्राबार्हस्पत्यं। अत्रानुक्रमणिका। इदं वां षळैंद्राबार्हस्पत्यं गायत्रमिति। सूक्तविनियोगो लैंगिकः ॥

इदं वामास्ये हविः प्रियमिंद्राबृहस्पती। उक्थं मदश्च शस्यते ॥१॥

इदं। वां। आस्ये। हविः। प्रियं। इंद्राबृहस्पती इति। उक्थं। मदः। च। शस्यते ॥१॥

हे इंद्राबृहस्पती वामास्ये इदं प्रियं हविः सोमरूपं प्रक्षिपामीति शेषः। उक्थं शस्त्रं च मदो मदजनकं शस्यते ॥

अयं वां परि षिच्यते सोम इंद्राबृहस्पती। चारुर्मदाय पीतये ॥२॥

अयं। वां। परि। सिच्यते। सोमः। इंद्राबृहस्पती इति। चारुः। मदाय। पीतये ॥२॥

हे इंद्राबृहस्पती वामास्ये चारुः शोभनोऽयं सोमः परि षिच्यते। परितो दीयते। मदाय हर्षाय पीतये पानाय च ॥

ऐंद्राबार्हस्पत्यायामिष्टौ प्रधानस्या न इंद्रेति तृतीयानुवाक्योत्तरा याज्या। सूत्रितं च। आ न इंद्राबृहस्पती अस्मे इंद्राबृहस्पती। आ॰ ३ ११। इति ॥

आ नं इंद्राबृहस्पती गृहमिंद्रश्च गच्छतं। सोमपा सोमपीतये ॥३॥

आ। नः। इंद्राबृहस्पती इति। गृहं। इंद्रः। च। गच्छतं। सोमऽपा। सोमऽपीतये ॥३॥

हे इंद्राबृहस्पती। अथ विविच्योच्यते। हे बृहस्पते त्वं चेंद्रश्च सोमपा सोमपौ युवां सोमपीतये सोमपानाय नो गृहमस्मद्यागसंबंध्या गच्छतं ॥

अस्मे इंद्राबृहस्पती रयिं धत्तं शतग्विनं। अश्वावंतं सहस्रिणं ॥४॥

अस्मे इति। इंद्राबृहस्पती इति। रयिं। धत्तं। शतऽग्विनं। अश्वऽवंतं। सहस्रिणं ॥४॥

अस्या विनियोगः पूर्वमंत्रेण सहोक्तः। हे इंद्राबृहस्पती अस्मे अस्मभ्यं रयिं धनं धत्तं। कीदृशं रयिं। शतग्विनं शतसंख्याकाभिर्गोभिर्युक्तमश्वावंतमश्ववंतं सहस्रिणं सहस्रसंख्यायुक्तं ॥

इंद्राबृहस्पती वयं सुते गीर्भिर्हवामहे। अस्य सोमस्य पीतये ॥५॥

इंद्राबृहस्पती इति। वयं। सुते। गीःऽभिः। हवामहे। अस्य। सोमस्य। पीतये ॥५॥

सुते सोमेऽभिषुते गीर्भिः स्तुतिभिः। शिष्टं गतं ॥

सोममिंद्राबृहस्पती पिबतं दाशुषो गृहे। मादयेथां तदोकसा ॥६॥

सोमं। इंद्राबृहस्पती इति। पिबतं। दाशुषः। गृहे। मादयेथां। तत्ऽओकसा ॥६॥

हे इंद्राबृहस्पती युवां दाशुषो हविर्दातुर्यजमानस्य गृहे तदोकसा । तदेव यजमानगृहमोको निवासस्थानं ययोस्तौ । तादृशौ संतौ सोमं पिबतं । पीत्वा च मादयेथामिति ॥ ॥२५॥

यस्तस्तंभेत्येकादशर्चं पंचमं सूक्तं वामदेवस्यार्षं त्रैष्टुभं । दशमी जगती । दशम्येकादश्याविंद्राबृहस्पतिदेवताके शिष्टा नव बार्हस्पत्यः । अत्रानुक्रमणिका । यस्तस्तंभैकादश बार्हस्पत्यमंत्ये ऐंद्र्यौ चोपांत्या जगती ॥ आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिनः स्तोमवृद्धाविदं सूक्तमावापार्थं । तथा च सूत्रं । यस्तस्तंभ यो अद्रिभित । आ० ७ ९ । इति ॥ आद्ये बृहस्पतिसवने मरुत्वतीयनिष्केवल्ययोः सूक्तमुखीये । सूचितं च । यस्तस्तंभ धुनेतय इति सूक्तमुखीये । आ० ९.५. । इति ॥

यस्तस्तंभ सहसा वि ज्मो अंतान्बृहस्पतिस्त्रिषधस्थो रवेण ।
तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मंद्रजिह्वं ॥१॥
यः । तस्तंभ । सहसा । वि । ज्मः । अंतान् । बृहस्पतिः । त्रिऽसधस्थः । रवेण ।
तं । प्रत्नासः । ऋषयः । दीध्यानाः । पुरः । विप्राः । दधिरे । मंद्रऽजिह्वं ॥१॥

यो बृहस्पतिर्बृहतो देवस्य यज्ञस्य वा पालयिता देवः सहसा बलेन ज्मः पृथिव्या अंतान् । दश दिश इत्यर्थः । तान्वि तस्तंभ । विविध स्तंभितवान् । नियमितवान् । त्रिषधस्थस्त्रिषु स्थानेषु वर्तमानो रवेणैवं तिष्ठतित्यनेन शब्देन तं देवं प्रत्नासः पुराणा ऋषयोऽतींद्रियद्रष्टारो दीध्याना दीप्यमाना विप्रा मेधाविनो यजमानादयः पुरो दधिरे । पुरस्तात्स्थापितवंतः स्तुत्यादिना । मद्रजिह्वं मादनजिह्वं मोदनजिह्वं ॥

धुनेतयः सुप्रकेतं मदंतो बृहस्पते अभि ये नस्ततस्रे ।
पृषंतं सृप्रमदब्धमूर्वं बृहस्पते रक्षतादस्य योनिं ॥२॥
धुनऽइतयः । सुऽप्रकेतं । मदंतः । बृहस्पते । अभि । ये । नः । ततस्रे ।
पृषंतं । सृप्रं । अदब्धं । ऊर्वं । बृहस्पते । रक्षतात् । अस्य । योनिं ॥२॥

हे बृहस्पते धुनेतयः । धुना शत्रूणां कंपयित्रीतिर्गतिर्येषां ते । तादृशाः सुप्रकेतं शोभनप्रज्ञं त्वां मदंतो मादयंतो नोऽस्मत्संबंधिनो य ऋत्विजोऽभि ततस्रे आत्मानमुपक्षिपंति स्तुवंति वा अस्यैषां योनिं कारणं यज्ञं यजमानं वा मा रक्षतात् । रक्ष । योनिर्विशेष्यते । पृषंतं फलानि सिंचंतं सृप्रं सर्पणस्वभावमदब्धमहिंसितमूर्वमुरु ॥

बृहस्पते येत्यादिके द्वे बार्हस्पत्ये पशौ वपापुरोडाशयोरनुवाक्ये । बृहस्पते या परमा परावदिति द्वे । आ० ३ ७ । इति हि सूचितं ॥

बृहस्पते या परमा परावदत आ त ऋतस्पृशो नि षेदुः ।
तुभ्यं खाता अवता अद्रिदुग्धा मध्वः श्चोतंत्यभितो विरप्शं ॥३॥
बृहस्पते । या । परमा । पराऽवत् । अतः । आ । ते । ऋतऽस्पृशः । नि । सेदुः ।
तुभ्यं । खाताः । अवताः । अद्रिऽदुग्धाः । मध्वः । श्चोतंति । अभितः । विऽरप्शं ॥३॥

हे बृहस्पते या प्रसिद्धा परमोत्कृष्टा परावदत्यंतं दूरभूता वसतिः स्वर्गाख्यास्ति । यद्वा लिंगव्यत्ययः । परमं स्थानमस्ति । अतोऽस्माद्देशादा । आ इत्यर्वागर्थे । अधस्तात्ते तव संबंधिन ऋतस्पृशो यज्ञं स्पृशंतोऽश्वा नि षेदुः । निषण्णा भवंति । तुभ्यं खाता अवताः । लुप्तोपमैषा । यथा खाताः कूपा अभितः श्चोतंति तद्वदद्रिदुग्धा ग्रावभिरभिषुताः सोमा विरप्शं विशेषेण शब्देन स्तोत्रं यथा भवति तथा मध्वो मधुररसं श्चोतंति । स्रवंति ॥

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।
सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमांसि ॥४॥
बृहस्पतिः । प्रथमं । जायमानः । महः । ज्योतिषः । परमे । विऽओमन् ।
सप्तऽआस्यः । तुविऽजातः । रवेण । वि । सप्तऽरश्मिः । अधमत् । तमांसि ॥४॥

अयं बृहस्पतिर्मंत्राभिमानी देवो महो महतो ज्योतिषो दीप्तस्यादित्यस्य परमे निरतिशये व्योमन् व्योमनि प्रथमं जायमानः प्रादुर्भवन् सप्तास्यः सप्तच्छन्दोमयमुखस्तुविजातो बहुप्रकारं संभूतो रवेण शब्देन सप्तरश्मिः सर्पणस्वभावतेजोयुक्तस्तमांसि व्यधमत्। धमतिर्गतिकर्मेति निरुक्तं ।६.२। विविधं गच्छति। नाशयतीत्यर्थः ॥

स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥५॥
सः । सुऽस्तुभा । सः । ऋक्वता । गणेन । वलं । रुरोज । फलिऽगं । रवेण ।
बृहस्पतिः । उस्रियाः । हव्यऽसूदः । कनिक्रदत् । वावशतीः । उत् । आजत् ॥५॥

स बृहस्पतिः सुष्टुभा शोभनस्तुतिमतर्क्वता दीप्तिमता गणेनाङ्गिरसा रवेण शब्देन च सह फलिगं। ञिफला विशरणे॥ फलिर्भेदः। तेन गच्छतीति फलिगं। वलं वलनामानमसुरं रुरोज। बभञ्ज। द्वितीयः सशब्दः पूरणः। स एव देव उस्रिया भोगानामुत्स्राविणीर्हव्यसूदः क्षीरादिहविष्प्रेरिका वावशतीर्वावश्यमाना गाः कनिक्रदत् शब्दं कुर्वन्नुदाजत्। उद्घाटयति स्म॥ ॥२६॥

एवा पित्र इति बार्हस्पत्ये पशौ हविषो याज्या। एवा पित्रे विश्वदेवाय वृष्णे विश्वे अद्य मरुतो विश्व ऊती। आ० ३.७। इति सूत्रितत्वात्॥ अग्निष्टोमे वैश्वदेवशस्त्र एषैव धाय्या। तथा च सूत्रं। एवा पित्रे विश्वदेवाय वृष्ण आ नो भद्राः क्रतवो यंतु विश्वतः। आ० ५.१८.। इति॥

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवंतो वयं स्याम पतयो रयीणां ॥६॥
एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमसा । हविःऽभिः ।
बृहस्पते । सुऽप्रजाः । वीरऽवंतः । वयं । स्याम । पतयः । रयीणां ॥६॥

पित्रे पालकाय विश्वदेवाय सर्वदेवतारूपाय। देवानां मंत्रप्रतिपाद्यत्वादस्य च मंत्राभिमानित्वाद्विश्वदेवत्वं। यद्वा। अत्र देवशब्दः स्तुत्यर्थः। सर्वैः स्तुत्याय वृष्णे वर्षकाय बृहस्पतये देवायैवमुक्तप्रकारेण यज्ञैस्तत्साधनैर्हविर्भिराज्यचर्वादिलक्षणैर्नमसा स्तुत्या च विधेम। परिचरेम। हे बृहस्पते सुप्रजाः शोभनपुत्रा वीरवंतो वीर्योपेता वयं रयीणां धनानां पतयः स्याम॥

स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण ।
बृहस्पतिं यः सुभृतं बिभर्ति वल्गूयति वंदते पूर्वभाजं ॥७॥
सः । इत् । राजा । प्रतिऽजन्यानि । विश्वा । शुष्मेण । तस्थौ । अभि । वीर्येण ।
बृहस्पतिं । यः । सुऽभृतं । बिभर्ति । वल्गुऽयति । वंदते । पूर्वऽभाजं ॥७॥

इदमाद्युक्तयं पुरोहितप्रशंसेति ब्राह्मणं । ऐ० ब्रा० ८. २६. । अथवा सूक्तस्य ऋग्द्वयवर्जितस्य बार्हस्पत्यत्वाद्बृहस्पतेरेव स्तुतिः । स इत्स एव राजा मूर्धाभिषिक्तोऽन्यो वा राजमानः प्रतिजन्यानि । जन्यं युद्धं प्रति बलानीत्यर्थः । प्रत्यर्थिजनपदानि वा तानि विश्वा सर्वाणि शुष्मेण बलेन वीर्येण शरीरसामर्थ्येन वाभि अभिगम्याक्रम्य तस्थौ । तिष्ठति । स इत्युक्तं क इत्याह । यो बृहस्पतिं बृहतां महतां पालयितारं देवमुक्तलक्षणं पुरोहितं वा सभृतं सुष्ठु हविःस्तोत्रादिनान्नाच्छादनादिना वा बिभर्ति भरति । वल्गूयति स्तौति । वंदते नमस्करोति च पूर्वभाजमितरेभ्यः प्रथमसंभक्तारं कृत्वा । एवं यः करोति स एव तस्थाविति ॥

स इत्क्षेति सुधित ओकसि स्वे तस्मा इळा पिन्वते विश्वदानीं ।
तस्मै विशः स्वयमेवा नमंते यस्मिन्ब्रह्मा राजनि पूर्व एति ॥ ८ ॥
सः । इत् । क्षेति । सुऽधितः । ओकसि । स्वे । तस्मै । इळा । पिन्वते । विश्वऽदानीं ।
तस्मै । विशः । स्वयं । एव । नमंते । यस्मिन् । ब्रह्मा । राजनि । पूर्वः । एति ॥ ८ ॥

स इत्स एव क्षेति । निवसति । सुधितः सुष्ठु तृप्तः सन् स्वे स्वकीय एवौकसि सदने । स एव समृद्धो निर्बाधः सन् सुखेनास्ते । तस्मा इळा भूमिर्विश्वदानीं सर्वकालं पिन्वते । वर्धते फलैः । तस्मै विशः प्रजाः स्वयमेव नमंते । प्रणता भवंति । दंडनमंतरेण स्वयमेव दत्तकरा भवंति । यस्मिन्राजनि ब्रह्मा पूर्वः प्रथमं पूज्यः सन्नेति । गच्छति । वर्तत इत्यर्थः ॥

अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या ।
अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवंति देवाः ॥ ९ ॥
अप्रतिऽइतः । जयति । सं । धनानि । प्रतिऽजन्यानि । उत । या । सऽजन्या ।
अवस्यवे । यः । वरिवः । कृणोति । ब्रह्मणे । राजा । तं । अवंति । देवाः ॥ ९ ॥

स एवाप्रतीतोऽन्यैरप्रतिगतः सन् यानि धनानि प्रतिजन्यानि प्रतिस्पर्धिजनसंबधीनि उतापि च सजन्या जनसंबधीनि धनानि सं जयति । यो राजावस्यवेऽवसीयमं धनरहिताय रक्षणमिच्छते ब्रह्मणे ब्राह्मणाय वा प्रीणनमिच्छते बृहस्पतये वा वरिवो धनं कृणोति । करोति । ददाति । स उक्तप्रकारेण महान्भवति । तमेव देवा अवंति । रक्षंति ॥

इंद्रश्च सोममिति दशमी तृतीयसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्या । सूत्रितं च । इंद्रश्च सोमं पिबतं बृहस्पत आ वो वहंतु सप्तयो रघुष्यदः । आ० ५ ५ । इति ॥

इंद्रश्च सोमं पिबतं बृहस्पतेऽस्मिन्यज्ञे मंदसाना वृषण्वसू ।
आ वां विशंत्विंदवः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छतं ॥ १० ॥
इंद्रः । च । सोमं । पिबतं । बृहस्पते । अस्मिन् । यज्ञे । मंदसाना । वृषण्वसू इति वृषण्ऽवसू ।
आ । वां । विशंतु । इंदवः । सुऽआभुवः । अस्मे इति । रयिं । सर्वऽवीरं । नि । यच्छतं ॥ १० ॥

हे बृहस्पते त्वमिंद्रश्च सोमं पिबतं । कीदृशौ युवां । अस्मिन्यज्ञे मंदसाना हृष्यंतौ वृषण्वसू वर्षितृधनौ । यजमानेभ्यो दीयमानधनावित्यर्थः । वां युवां स्वाभुवः सुष्ठु सर्वतो भवतः । कृत्स्नशरीरव्यापनसमर्था इत्यर्थः । तादृशा इंदवः सोमा विशंतु । युवयोः शरीरं प्रविशंतु । अस्मे अस्मभ्यं रयिं धनं सर्ववीरं सर्वपुत्राद्युपेतं नि यच्छतं । दत्तं ॥

बृहस्पत इंद्र वर्धतं नः सचा सा वां सुमतिर्भूत्वस्मे ।
अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ॥ ११ ॥
बृहस्पते । इंद्र । वर्धतं । नः । सचा । सा । वां । सुऽमतिः । भूतु । अस्मे इति ।
अविष्टं । धियः । जिगृतं । पुरंऽधीः । जजस्तं । अर्यः । वनुषां । अरातीः ॥ ११ ॥

हे बृहस्पते हे इंद्र युवां नोऽस्मान्वर्धतं । वर्धयतं । प्रवृद्धान्कुरुतं । सा सुमतिर्युवयोरनुग्रहबुद्धिरस्मे अस्मासु सचा सह भूतु । भवतु । धियः कर्माण्यविष्टं । रक्षतं । पारं नयतं । पुरंधीः पुरं शरीरं धीयते स्थाप्यते याभिर्मतिभिस्ताः स्तुतीर्जिगृतं । प्रबुध्यतं । वनुषां संभक्तॄणामस्माकमर्यो गन्त्रीररातीः । शत्रूनित्यर्थः । जजस्तं । युध्यतं । क्षपयतमित्यर्थः ॥ छंदस्यरातिशब्दः स्त्रीलिंगः ॥ एवं स्तुतिं निगमय्याभीष्टं प्रार्थितवान् ॥ ॥ २१ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
श्रीमत्सायणमंत्रीशो दाशतय्यास्तृतीयके । अष्टके सप्तमाध्यायं व्याकार्षीदतिपेशलं ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके सप्तमोऽध्यायः समाप्तः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथाष्टमं व्याख्यातुमारभते । इदमु त्यदित्येकादशर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमुषोदेवताकं । इदमुषस्य त्वित्यनुक्रांतं ॥ प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे इदं सूक्तं । सूत्रितं च । उषो वाजेनेदमु त्यदिति । आ० ४. १४. । इति ॥

इदमु त्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥ १ ॥
इदं । ऊं इति । त्यत् । पुरुऽतमं । पुरस्तात् । ज्योतिः । तमसः । वयुनऽवत् । अस्थात् ।
नूनं । दिवः । दुहितरः । विऽभातीः । गातुं । कृणवन् । उषसः । जनाय ॥ १ ॥

इदमु पुरतो दृश्यमानमिदं त्यत्तदस्माभिः स्तुत्यं सर्वप्रसिद्धं पुरुतममत्यंतप्रभूतं ज्योतिस्तेजो वयुनावत् ॥ वेतेः कांतिकर्मण इदं ॥ प्रकृष्टकांतिमत् । अथवा वयुनमिति प्रज्ञानाम । प्रज्ञोपेतं । सर्वस्य प्रज्ञापकमित्यर्थः । कीदृक् तेजः । पुरस्तात् पूर्वस्यां दिशि तमसोऽधकारादस्थात् । उदतिष्ठत् । एवं सति नूनं सत्यं दिवं आदित्यस्य दुहितरो दुहितृस्थानीया विभातीर्विभानं कुर्वतीरुषसो जनाय यजमानानां गातुं गमनं गमनादिव्यापारमा मार्गं कृणवन् । अकुर्वन् ॥

अस्थुरु चित्रा उषसः पुरस्तान्मिता इव स्वरवोऽध्वरेषु ।
व्यू व्रजस्य तमसो द्वारोच्छंतीरव्रञ्छुचयः पावकाः ॥ २ ॥

अस्थुः । ऊं इति । चित्राः । उषसः । पुरस्तात् । मिताःऽइव । स्वरवः । अध्वरेषु ।
वि । ऊं इति । व्रजस्य । तमसः । द्वारा । उच्छंतीः । अव्रन् । शुचयः । पावकाः ॥२॥

चित्राश्चायनीया उषसः पुरस्तात्पूर्वस्यां दिश्यस्थुः । तिष्ठंति । व्याप्ता इत्यर्थः । तत्र दृष्टांतः । अध्वरेषु मिताः खाताः स्वरवो यूपा इव । ते यथा श्वेयाः पुरतो भासंते तद्वत् । यद्यपि स्वरुशब्दो यूपच्छेदपतितप्रथमशकलवाची यः प्रथमः शकलः परापतेत्स स्वरुः कार्य इत्युक्तत्वात् तथाप्यत्र मितशब्दश्रवणाद्यपालवंतः स्वरवः । ऋग्वे॰ ३ ८. १० । इत्यादौ तथा दर्शनाच्चात्र यूपवचनः । ता व्रजस्य वारकस्य तमसो द्वारा द्वाराणि व्युच्छंतीः शुचयो दीप्ताः पावकाः शोधिका अव्रन् । व्यवृण्वन् ॥

उच्छंतीरद्य चितयंत भोजान्राधोदेयायोषसो मघोनीः ।
अचित्रे अंतः पणयः ससंत्वबुध्यमानास्तमसो विमध्ये ॥३॥

उच्छंतीः । अद्य । चितयंत । भोजान् । राधःऽदेयाय । उषसः । मघोनीः ।
अचित्रे । अंतरिति । पणयः । ससंतु । अबुध्यमानाः । तमसः । विऽमध्ये ॥३॥

अद्यास्मिन्दिन उच्छंतीस्तमो विवासयंत्यो मघोनीर्धनवत्य उषसो भोजान् भोजयितॄन्यजमानान् तेषां राधोदेयाय सोमादिधनदानाय चितयंत । प्रज्ञापयंति । अचित्रेऽचायनीये तमसो विमध्ये । अत्यंतगाढांधकार इत्यर्थः । तत्र पणयो वणिज इवादातारोऽबुध्यमानाः ससंतु । स्वपतु ॥

कुवित्स देवीः सनयो नवो वा यामो बभूयादुषसो वो अद्य ।
येना नवग्वे अंगिरे दशग्वे सप्तास्ये रेवती रेवदूष ॥४॥

कुवित् । सः । देवीः । सनयः । नवः । वा । यामः । बभूयात् । उषसः । वः । अद्य ।
येन । नवऽग्वे । अंगिरे । दशऽग्वे । सप्तऽआस्ये । रेवतीः । रेवत् । ऊष ॥४॥

हे देवीर्द्योतमाना उषसो वो युष्मान् सनयः पुराणो नवो वा यामो गमनसाधनः स रथोऽद्यास्मिन्यागदिने कुविद्बहुवारं बभूयात् । भवतु । गच्छतादित्यर्थः । येन रथेन हे रेवतीर्धनवत्यो यूयं नवग्वे दशग्वे सप्तास्ये सप्तच्छंदोयुक्तमुखेऽगिरेऽगिरोगणे । तौ द्वौ तत्र येऽप्यंगिरसस्तेषां गणे । तथान्यत्र नवग्वो न दशग्वो अंगिरस्तमः । ऋग्वे॰ १० ६२ ६. । इति । रेवद्धनवद्यथा भवति तथोष । विभातं कृतवत्यः ॥ वसेर्व्युच्छनकर्मणो लिण्मध्यमबहुवचनस्येद् रूप ॥

यूयं हि देवीर्ऋतयुग्भिरश्वैः परिप्रयाथ भुवनानि सद्यः ।
प्रबोधयंतीरुषसः ससंतं द्विपाच्चतुष्पाच्चरथाय जीवं ॥५॥

यूयं । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ । भुवनानि । सद्यः ।
प्रऽबोधयंतीः । उषसः । ससंतं । द्विऽपात् । चतुःऽपात् । चरथाय । जीवं ॥५॥

हे देवीर्द्योतमाना उषसो यूयं हि खलु ऋतयुग्भिर्यज्ञगामिभिरश्वैर्भुवनानि सद्यः परिप्रयाथ । परितः प्रकृष्टं गच्छथ । किं कुर्वत्यः । ससंतं स्वपंतं द्विपाच्चतुष्पान्मनुष्यगवादिलक्षणं जीवं चरथाय चरणाय गमनादिव्यवहाराय प्रबोधयंतीः प्रबोधयत्यः सत्यः परिप्रयाथ ॥ ॥१॥

क्व स्विदासां कतमा पुराणी यया विधाना विदधुर्ऋभूणां ।
शुभं यच्छुभ्रा उषसश्चरंति न वि ज्ञायंते सदृशीरजुर्याः ॥६॥

क्व । स्वित् । आसां । कतमा । पुराणी । यया । विऽधाना । विऽदधुः । ऋभूणां ।
शुभं । यत् । शुभ्राः । उषसः । चरंति । न । वि । ज्ञायंते । सऽदृशीः । अजुर्याः ॥६॥

आसामुषसां मध्ये क्व स्विदभूदद्य कतमा पुराणी पुरातनी । यया ऋभूणा संबंधीनि विधाना चमसा दिनिर्माणानि विदधुः । अकुर्वन्नृभवः । यद्यास्योषसः शुभ्रा दीप्ताः शुभं चरंति । शोभां दीप्तिं कुर्वंति । ता अजुर्या अजीर्णा नित्यमूतना न वि ज्ञायंते । यतः सदृशीः सदृश्यः सर्वथ्वापि दिवसथ्वेकरूपा अतोऽद्यतन्य एता एताः पुराण्य इति न ज्ञायंते । उषासादृश्य सदृशीरद्य सदृशीरिदु श्वः । ऋग्वे॰ १ १२३. ८ । इत्यत्र प्रतिपादितं ॥

ता घा ता भद्रा उषसः पुरासुरभिष्टिद्युम्ना ऋतजातसत्याः ।
यास्वीजानः शशमान उक्थैः स्तुवञ्छंसन्द्रविणं सद्य आप ॥७॥

ताः । घ । ताः । भद्राः । उषसः । पुरा । आसुः । अभिष्टिऽद्युम्नाः । ऋतजातऽसत्याः ।
यासु । ईजानः । शशमानः । उक्थैः । स्तुवन् । शंसन् । द्रविणं । सद्यः । आप ॥७॥

ता घ । घेति प्रसिद्धौ । ताः खलूपकारिण्यस्ता भद्राः कल्याण्यः स्तुत्या वा उषसः पुरा पूर्वमासुः । अभवन् । अभिष्टिद्युम्नाः अभिगमनमात्रेण द्युम्नं धनं यासां ताः । ऋतजातसत्याः । ऋतार्थं यज्ञार्थं जाताश्च ताः सत्याः सत्यफलाश्च तादृश्यः । यासूषःस्वीजानो यागं कुर्वाण उक्थैः शस्त्रैः शशमानः शसमानः स्तुवन् सामभिः स्तोत्रं निष्पादयन् शंसन् शस्त्राणि कुर्वन् द्रविणं धनं सद्य आप । प्राप्नोति । ता भद्रा इति संबंध. ॥

ता आ चरंति समना पुरस्तात्समानतः समना पप्रथानाः ।
ऋतस्य देवीः सदसो बुधाना गवां न सर्गा उषसो जरंते ॥८॥

ताः । आ । चरंति । समना । पुरस्तात् । समानतः । समना । पप्रथानाः ।
ऋतस्य । देवीः । सदसः । बुधानाः । गवां । न । सर्गाः । उषसः । जरंते ॥८॥

ता उषस आ सर्वतश्चरंति । समना सर्वतः समानाः पुरस्तात्पूर्वस्यां दिशि समानतः समानाद्देशादंतरिक्षात्समना सर्वतः पप्रथानाः प्रथमाना ऋतस्य यज्ञस्य सदसः सदः । तत्रत्यमृत्विग्घविरादिकमित्यर्थः । बुधाना बोधयंत्यः ॥ अंतर्भावितण्यर्थोऽयं ॥ एवं महानुभावा उषसो जरंते । स्तूयंते । गवां सर्गा न उदकानां सृष्टय इव । गवां सर्गा न रश्मयः । ऋग्वे॰ ४ ५२ ५ । इति हि श्रुतं । ता यथा सर्वत्र प्रसरणादुपकारत्वाच्च स्तूयंते तद्वत् ॥

ता इन्न्वे३व समना समानीरमीतवर्णा उषसश्चरंति ।
गूहंतीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः ॥९॥

ताः । इत् । नु । एव । समना । समानीः । अमीतऽवर्णाः । उषसः । चरंति ।
गूहंतीः । अभ्वं । असितं । रुशत्ऽभिः । शुक्राः । तनूभिः । शुचयः । रुचानाः ॥९॥

ता एवोषसः । इदिति पूरणः । नु अद्य समना समानाः । एकधेत्यर्थः । समानीरेकरूपा अमीतवर्णा अहिंसितवर्णा अपरिमितवर्णा वा उषसश्चरंति सर्वतः । किं कुर्वत्यः । अभ्वं । महन्नामैतत् । अतिमहदसितं कृष्णं रूपं गूहंतीर्गोपयंत्यो रुशद्भी रोचमानैस्तनूभिः स्वशरीरैः शुक्रा दीप्ताः शुचयः शुद्धा रुचाना रोचमाना रोचयंत्यो वा ॥

रयिं दिवो दुहितरो विभातीः प्रजावंतं यच्छतास्मासु देवीः ।
स्योनादा वः प्रतिबुध्यमानाः सुवीर्यस्य पतयः स्याम ॥१०॥

रयिं। दिवः। दुहितरः। विऽभातीः। प्रजाऽवंतं। यच्छत। अस्मासुं। देवीः।
स्योनात्। आ। वः। प्रतिऽबुध्यमानाः। सुऽवीर्यस्य। पतयः। स्याम ॥१०॥

हे दिवो दुहितरो द्योतमानस्यादित्यस्य दुहितृस्थानीया विभातीर्विभात्यो विशेषेण भानं कुर्वत्योऽस्मासु प्रजावंतं रयिं पुत्राद्युपेतं धनं यच्छत। दत्त। हे देवीर्देव्यः स्योनात्सुखान्निमित्तभूताद्वो युष्मान् प्रतिबुध्यमानाः प्रतिबोधयंतो वयं सुवीर्यस्य पतयः स्याम। पुत्रादिसहितस्य धनस्य पालका भवेम ॥

तद्वो दिव इति व्युष्टाया जपेत ॥

तद्वो दिवो दुहितरो विभातीरुप ब्रुव उषसो यज्ञकेतुः।
वयं स्याम यशसो जनेषु तद्द्यौश्च धत्तां पृथिवी च देवी ॥११॥
तत्। वः। दिवः। दुहितरः। विऽभातीः। उपं। ब्रुवे। उषसः। यज्ञऽकेतुः।
वयं। स्याम। यशसः। जनेषु। तत्। द्यौः। च। धत्तां। पृथिवी। च। देवी ॥११॥

हे दिवो दुहितरो हे उषसो विभातीर्वो युष्मान् तदुत्तरार्धप्रथमपादेन वक्ष्यमाणं फलं यज्ञकेतुः। यज्ञ एव केतुः प्रज्ञापको यस्य तादृशोऽहमुप ब्रुवे। उपेत्य ब्रवीमि। अथ बहुवदुच्यते। वयं स्तुवंतो जनेष्वस्मत्समानेषु मध्ये यशसः कीर्तेरन्नस्य वा स्वामिनः स्याम। तद्यशो द्यौः पृथिवी च देवी धत्तां। धारयतां ॥ ॥ २ ॥

प्रति ष्येति सप्तर्चं सप्तमं सूक्तं गायत्रमुषोदेवताकं। प्रति ष्या सप्त गायत्रमित्यनुक्रमणिका ॥ प्रातरनुवाक उषस्ये क्रतौ गायत्रे छंदस्याश्विनशस्त्रे चेदं शस्यं। अथोषस्यः प्रति ष्या सूनरी। आ॰ ४. १४.। इति हि सूत्रितं ॥

प्रति ष्या सूनरी जनी व्युच्छंती परि स्वसुः। दिवो अदर्शि दुहिता ॥१॥
प्रति। स्या। सूनरी। जनी। विऽउच्छंती। परि। स्वसुः। दिवः। अदर्शि। दुहिता ॥१॥

स्या सा संस्तूयमाना सूनरी सुष्ठु प्राणिनां नेत्री जनी जनयित्री फलानां स्वसुः स्वसृस्थानीयाया रात्रेः परि उपरिभागे रात्रिपर्यवसानकाले व्युच्छंती तमो विवासयंती। स्वसा स्वस्रे ज्यायस्यै। ऋ॰सं॰ १ १२४. ८। इत्युक्तं। दिवो द्योतमानस्यादित्यस्य दुहितोषाः प्रत्यदर्शि। प्रतिदृश्यते सर्वैः ॥

अश्वेव चित्रारुषी माता गवामृतावरी। सखाभूदश्विनोरुषाः ॥२॥
अश्वाऽइव। चित्रा। अरुषी। माता। गवां। ऋतऽवरी। सखा। अभूत्। अश्विनोः।
उषाः ॥२॥

अश्वेव चित्रा चायनीयारुषी आरोचमाना गवां रश्मीनां माता निर्मात्री ऋतावरी यज्ञवत्युषा अश्विनोः सखा समानख्याना सह स्तूयमानाभूत्। भवति। अश्विनोरुषसा सह स्तूयमानत्वात्साखित्वं परस्परं ॥

उत सखास्यश्विनोरुत माता गवामसि। उतोषो वस्व ईशिषे ॥३॥
उत। सखा। असि। अश्विनोः। उत। माता। गवां। असि। उत। उषः। वस्वः। ईशिषे ॥३॥

उतापि चाश्विनोः सखासि। उतापि च गवां रश्मीनां मातासि। उतापि च हे उषो वस्वो धनस्येशिषे। ईश्वरा भवसि ॥

यावयद्द्वेषसं त्वा चिकित्वित्सूनृतावरि। प्रति स्तोमैरभुत्स्महि ॥४॥
यवयत्ऽद्वेषसं। त्वा। चिकित्वित्। सूनृताऽवरि। प्रति। स्तोमैः। अभुत्स्महि ॥४॥

यावयद्द्वेषसं। यवयंतो वियुज्यमाना द्वेषांसि द्वेष्टारो यस्यास्तादृशी। पृथक्क्रियंते द्वेषांस्यनयेति वा। रात्रौ हननायोद्युक्ता द्वेषिण उषःकाले हि पलायंते। तादृशी चिकित्वित् ज्ञापयंती त्वा त्वां सूनृतावरि। सूनृतेति वाङ्नाम। तद्वति देवि स्तोमैः स्तुतिभिः प्रत्यभुत्स्महि। प्रतिबोधयामः। स्तुम इत्यर्थः ॥

प्रति॑ भ॒द्रा अ॑दृक्षत॒ गवां॒ सर्गा॒ न र॒श्मयः॑। ओषा अ॑प्रा उ॒रु ज्रयः॑ ॥५॥

प्रति॑। भ॒द्राः। अ॒दृ॒क्ष॒त॒। गवा॑म्। सर्गाः॑। न। र॒श्मयः॑। आ। उ॒षाः। अ॒प्राः॒। उ॒रु। ज्रयः॑ ॥५॥

भद्राः स्तुत्या रश्मयः प्रत्यदृक्षत। प्रतिदृश्यंते। गवामुदकानां सर्गा न वर्षधारा इवेयमुषा उरु ज्रयो महत्तेज आप्राः। आपूरयत ॥

आ॒प॒प्रुषी॑ विभावरि॒ व्या॑व॒र्ज्योति॑षा॒ तमः॑। उषो॒ अनु॑ स्व॒धाम॑व ॥६॥

आ॒ऽप॒प्रुषी॑। वि॒भा॒ऽव॒रि॒। वि। आ॒वः॒। ज्योति॑षा। तमः॑। उषः॑। अनु॑। स्व॒धाम्। अ॒व॒ ॥६॥

हे विभावरि विभावत्युषस्त्वमापप्रुष्यापूरयंती तेजसा जगत् ज्योतिषा तेजसा तमोऽंधकारं व्यावः। व्यावृणोः। किंच अनु पश्चात् स्वधां हविर्लक्षणमन्नमव। रक्ष ॥

आ द्यां तनोषीत्येषा देवानां हविःपूषसोऽनुवाक्या। सूत्रितं च। आ द्यां तनोषि रश्मिभिरावहंती पोष्या वार्याणि। आ॰ ६. १४। इति ॥

आ द्यां त॑नोषि र॒श्मिभि॒रांतरि॑क्षमु॒रु प्रि॒यम्। उषः॑ शु॒क्रेण॑ शो॒चिषा॑ ॥७॥

आ। द्याम्। त॒नो॒षि॒। र॒श्मिऽभिः॑। आ। अं॒तरि॑क्षम्। उ॒रु। प्रि॒यम्। उषः॑। शु॒क्रेण॑। शो॒चिषा॑ ॥७॥

हे उषो रश्मिभिर्द्यां दिवमा तनोषि। उरु विस्तीर्णं प्रियमंतरिक्षं रश्मिभिरा तनोषि। शुक्रेण दीप्तेन शोचिषा प्रकाशेन युक्ता सत्येवं करोषि ॥ ॥३॥

तद्देवस्येति सप्तर्चमष्टमं सूक्तं वामदेवस्यार्षं जागतं सावित्रं। तथा चानुक्रम्यते। तद्देवस्य सावित्रं तु जागतमिति ॥ आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदं। तथा च सूत्रितं। तद्देवस्य घृतेन द्यावापृथिवी इति तिस्रः। आ॰ ७. ७.। इति ॥

तद्दे॒वस्य॑ सवि॒तुर्वार्यं॑ म॒हद्वृ॑णीमहे॒ असु॑रस्य॒ प्रचे॑तसः।
छ॒र्दिर्येन॑ दा॒शुषे॒ यच्छ॑ति॒ त्मना॒ तन्नो॑ म॒हाँ उद॑यान्दे॒वो अ॒क्तुभिः॑ ॥१॥

तत्। दे॒वस्य॑। स॒वि॒तुः। वार्य॑म्। म॒हत्। वृ॒णी॒म॒हे॒। असु॑रस्य। प्रऽचे॑तसः।
छ॒र्दिः। येन॑। दा॒शुषे॑। यच्छ॑ति। त्मना॑। तत्। नः॒। म॒हान्। उत्। अ॒या॒न्। दे॒वः।
अ॒क्तुऽभिः॑ ॥१॥

सवितुः प्रेरकस्य देवस्य वार्यं वरणीयं महत्पूज्यं तद्धनं वृणीमहे। प्रार्थयामः। असुरस्य। असुर्बलं। तद्वतः प्रचेतसः प्रकृष्टमतेः। देवस्येति संबंधः। येन धनेन युक्तः सन् छर्दिः। गृहनामैतत्। गृहोपलक्षितं धनजातं दाशुषे हविर्दत्तवते यजमानाय त्मनात्मनैव यच्छति तच्छर्दिर्महान्देवः सविताक्तुभी रात्रिभिः। एतदह्नामप्युपलक्षणं। सर्वैर्दिवसैः सर्वेषु दिवसेषु नोऽस्माकमुदयान्। उद्यच्छतु। करोत्वित्यर्थः। यद्वा। छर्दिरिति तेजोनाम। तत्तेज उद्यच्छत्विति ॥

दि॒वो ध॒र्ता भुव॑नस्य प्र॒जाप॑तिः पि॒शंगं॑ द्रा॒पिं प्रति॑ मुंचते क॒विः।
वि॒च॒क्ष॒णः प्र॒थय॑न्नापृ॒णन्नु॒र्व॑जीजनत्सवि॒ता सु॒म्नमु॒क्थ्य॑म् ॥२॥

दिवः । धर्ता । भुवनस्य । प्रजाऽपतिः । पिशंगं । द्रापिं । प्रति । मुंचते । कविः ।
विऽचक्षणः । प्रथयन् । आऽपृणन् । उरु । अजीजनत् । सविता । सुम्नं । उक्थ्यं ॥२॥

दिवो द्युलोकस्य धर्ता धारकः । न केवलं दिव एव अपि तु भुवनस्य कृत्स्नस्यापि लोकस्य धर्ता प्रजापतिः प्रजानां प्रकाशवृष्ट्यादिना पालयिता कविः प्राज्ञो देवः पिशंगं द्रापिं हिरण्मयं कवचं प्रति मुंचते । आच्छादयति प्रत्युदयं । विचक्षणो विविधं द्रष्टा स एव देवः प्रथयन् प्रख्यापयन् तेज आपृणन्नापूरयन् परित उरु प्रभूत सुम्नं सुखमुक्थ्य स्तुत्यमजीजनत् । उत्पादयति ॥

आप्रा रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे ।
प्र बाहू अस्राक्सविता सवीमनि निवेशयन्प्रसुवन्नक्तुभिर्जगत् ॥३॥
आ । अप्राः । रजांसि । दिव्यानि । पार्थिवा । श्लोकं । देवः । कृणुते । स्वाय । धर्मणे ।
प्र । बाहू इति । अस्राक् । सविता । सवीमनि । निऽवेशयन् । प्रऽसुवन् । अक्तुऽभिः ।
जगत् ॥३॥

अयं देवः सविता दिव्यानि द्युसंबंधीनि पार्थिवा पार्थिवानि रजांसि लोकान् । तिस्रः खलु द्यावः पृथिव्यश्च । तिस्रो भूमीर्धारयन् त्रीँरुत द्यून् । ऋग्वे॰ २. २७ ८ । इति हि श्रुतं । आप्राः । आपूरयति स्वाभिर्भाभिर्देवः । स्वाय धर्मणे स्वकीयाय धारणाय श्लोकं प्रशस्तिं कृणुते । करोति । सविता सवीमनि प्रसवेऽनुज्ञाया निमित्तायां बाहू स्वीयौ प्रास्राक् । प्रसृजति । प्रसारयतीत्यर्थः । किं कुर्वन् । अक्तुभिः कांतिभिर्जगन्निवेशयन् स्वस्वकार्ये स्थापयन् प्रसुवन् प्रेरयन् । अथवा अक्तुभिरिति रात्रिनाम । तदुपलक्षितैः सर्वैर्वासरैः सर्वेष्वपि दिनेष्वेवं करोतीत्यर्थः ॥

अदाभ्यो भुवनानि प्रचाकशद्व्रतानि देवः सविताभि रक्षते ।
प्रास्राग्बाहू भुवनस्य प्रजाभ्यो धृतव्रतो महो अज्मस्य राजति ॥४॥
अदाभ्यः । भुवनानि । प्रऽचाकशत् । व्रतानि । देवः । सविता । अभि । रक्षते ।
प्र । अस्राक् । बाहू इति । भुवनस्य । प्रऽजाभ्यः । धृतऽव्रतः । महः । अज्मस्य । राजति ॥४॥

सविता देवोऽदाभ्योऽन्यैरहिंसितः सन् भुवनानि प्रचाकशत् दीपयन् व्रतानि कर्माणि प्राणिनामभि रक्षते । भुवनस्य लोकस्य प्रजाभ्यस्तत्रत्याभ्यो बाहू स्वीयौ प्रास्राक् । प्रसारयति । स्वस्वकर्मणेऽनुजानातीत्यर्थः । सर्वव्यापाराणां सूर्याधीनत्वात् । सविता वै प्रसवानामीशे । ऐ॰ ब्रा॰ १. १६. । इति हि श्रुतिः । धृतव्रतो धृतकर्मा स तथा कुर्वन् महो महतोऽज्मस्य जगतो राजति । ईश्वरो भवति ॥

त्रिरंतरिक्षं सविता महित्वना त्री रजांसि परिभूस्त्रीणि रोचना ।
तिस्रो दिवः पृथिवीस्तिस्र इन्वति त्रिभिर्व्रतैरभि नो रक्षति त्मना ॥५॥
त्रिः । अंतरिक्षं । सविता । महिऽत्वना । त्री । रजांसि । परिऽभूः । त्रीणि । रोचना ।
तिस्रः । दिवः । पृथिवीः । तिस्रः । इन्वति । त्रिऽभिः । व्रतैः । अभि । नः । रक्षति । त्मना ॥५॥

अयं सविता त्रिस्त्रिभेदमंतरिक्षं । अंतरा क्षांतं भवति जगदित्यंतरिक्षं । परिभूः परिभविता सन् महित्वना महित्वेनेन्वति । व्याप्नोति । वायुविद्युद्वरुणाख्यास्त्रयो लोका अंतरिक्षभेदाः स वायुलोकं स वरुण-

लोकमित्यादिश्रुतेः । कौ० उ० १. ३. । त्री रजांसि रंजनात्मकानि त्रीणि चित्यंतरिक्षद्युस्थानान् त्रीन् लोकान्न्वति । पूर्वमंतरिक्षस्यैवावांतरभेद उक्त इह तु सामान्याकारेणेत्यपुनरुक्तिः । त्रीणि रोचना रोचनानि रोचमानानग्निवाय्वादित्यानुक्तस्थानत्रयस्थानिमित्येनिन्वति । पूर्वमंतरिक्षस्यैवावांतरभेद उक्तः । अथ द्युपृथिव्योरवांतरभेद उच्यते । तिस्रो दिव इंद्रप्रजापतिसत्याख्यान् त्रीन् लोकानिन्वति । तथा तिस्रः पृथिवीरिन्वति । क्षित्यवांतरभेदान् लोकानिन्वति । एवं सर्वत्र व्याप्तो देवस्त्रिभिर्व्रतैः कर्मभिरुष्णवर्षहिमाख्यैर्नोऽस्मान् त्मनात्मनैव स्वीयानुग्रहबुद्ध्यैवाभि रक्षति । अभिरक्षतु । परिपालयतु ॥

बृहत्सुम्नः प्रसवीता निवेशनो जगतः स्थातुरुभयस्य यो वशी ।
स नो देवः सविता शर्म यच्छत्वस्मे क्षयाय त्रिवरूथमंहसः ॥६॥
बृहत्ऽसुम्नः । प्रऽसविता । निऽवेशनः । जगतः । स्थातुः । उभयस्य । यः । वशी ।
सः । नः । देवः । सविता । शर्म । यच्छतु । अस्मे इति । क्षयाय । त्रिऽवरूथं । अंहसः ॥६॥

यो बृहत्सुम्नः प्रभूतधनः प्रभूतसुखो वा प्रसविता प्रकर्षेणानुज्ञाता कर्मणां निवेशनः सर्वगंतव्यः । जगतो जंगमस्य स्थातुः स्थावरस्योभयस्य यो वशी स महान् सविता देवो नोऽस्मभ्यं शर्म सुखं यच्छतु । कीदृशं शर्म । त्रिवरूथं । त्रीणि वरूथानि गृहाणि स्थानानि क्षित्यादीनि यस्य तत्तादृशं । अस्मे अस्माकमंहसः पापस्य क्षयाय भवत्विति शेषः ॥

राजक्रय आगन्देव इत्येषानुवचनीया । सूत्रितं च । आगन्देव ऋतुभिर्वर्धतु क्षयमित्यर्धर्च आरमेत । आ० ४ ४. । इति ॥

आगन्देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजामिषं ।
स नः क्षपाभिरहभिश्च जिन्वतु प्रजावंतं रयिमस्मे समिन्वतु ॥७॥
आ । अगन् । देवः । ऋतुऽभिः । वर्धतु । क्षयं । दधातु । नः । सविता । सुऽप्रजां । इषं ।
सः । नः । क्षपाभिः । अहऽभिः । च । जिन्वतु । प्रजाऽवंतं । रयिं । अस्मे इति । सं । इन्वतु ॥७॥

देवः सविता ऋतुभिः सहागन् । आगच्छतु ॥ गमेर्लुङि रूपं ॥ किंच क्षयं गृहं वर्धतु । वर्धयतु । नोऽस्माकं सुप्रजां शोभनपुत्राद्युपेतमिषमन्नं दधातु । ददातु । स एव नोऽस्मान् क्षपाभी रात्रिभिरहभिश्च । सर्वेष्व् दिनेष्वित्यर्थः । जिन्वतु । प्रीणयतु धनादिभिः । अस्मे अस्मासु प्रजावंतं रयिं समिन्वतु । व्याप्नोतु । प्रापयत्वित्यर्थः ॥ ॥४॥

अभूद्देव इति षडृचं नवमं सूक्तं वामदेवस्यार्षं सावित्रं । अंत्या त्रिष्टुप् शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः । तथा चानुक्रमणिका । अभूद्देवः षट् त्रिष्टुबंतमिति ॥ अग्निष्टोमे वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदं । तथा च सूत्रं । अभूद्देव एकया च दशभिश्च स्वभूते । आ० ५ १८ । इति ॥ आद्या सावित्रग्रहस्यानुवाक्या । तथा च सूत्रं । सावित्रेण ग्रहेण चरंत्यभूद्देवः सविता वंद्यो नु नः । आ० ५. १८ । इति ॥

अभूद्देवः सविता वंद्यो नु न इदानीमह्न उपवाच्यो नृभिः ।
वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधत् ॥१॥
अभूत् । देवः । सविता । वंद्यः । नु । नः । इदानीं । अह्नः । उपऽवाच्यः । नृऽभिः ।
वि । यः । रत्ना । भजति । मानवेभ्यः । श्रेष्ठं । नः । अत्र । द्रविणं । यथा । दधत् ॥१॥

स सविता देवोऽभूत् । प्रादुरासीत् । अतो नु क्षिप्रमेव नोऽस्माकं वंद्यो वंदनीयो भवति । इदानीं यागकालेऽह्नस्तृतीयसवने नृभिरस्मदीयैर्होतृभिरुपवाच्यः स्तुत्यो भवति । यो देवो मानवेभ्यो मनोरपत्येभ्यो

यजमानेभ्यस्तेषामर्थाय रत्ना रमणीयानि धनानि वि भजति स देवः श्रेष्ठं प्रशस्यं द्रविणं गवादिलक्षणं धनं नोऽस्मभ्यमत्रास्मिन्कर्मणि यथा दधत्। दद्यादित्यर्थः। तथा वंश उपवाच्यश्चाभूदिति ॥

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वं सुवसि भागमुत्तमं।
आदिद्दामानं सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥२॥
देवेभ्यः। हि। प्रथमं। यज्ञियेभ्यः। अमृतऽत्वं। सुवसि। भागं। उत्ऽतमं।
आत्। इत्। दामानं। सवितः। वि। ऊर्णुषे। अनूचीना। जीविता। मानुषेभ्यः ॥२॥

प्रथमं देवेभ्यो हि। हिशब्दः प्रसिद्धौ। देवेभ्यो यज्ञियेभ्यो यज्ञार्हेभ्योऽमृतत्वं तत्साधनमुत्तममुत्कृष्टतमं भागं सोमादिलक्षणं सुवसि। अनुजानासि। आदिदनंतरमेव दामानं हविषां दातारं हे सवितर्व्यूर्णुषे। प्रकाशयसि। मानुषेभ्यो यजमानेभ्यो जीविता जीवितान्यनूचीनान्यनुक्रमयुक्तानि। पितृपुत्रपौत्रा इत्यनुक्रमः। ईदृशानि जीवितानि पश्चाद्व्यूर्णुषे ॥

अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता।
देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः ॥३॥
अचित्ती। यत्। चकृम। दैव्ये। जने। दीनैः। दक्षैः। प्रऽभूती। पुरुषत्वता।
देवेषु। च। सवितः। मानुषेषु। च। त्वं। नः। अत्र। सुवतात्। अनागसः ॥३॥

हे सवितर्वयमचित्ती अप्रज्ञया दैव्ये जने देवे त्वयि दीनैर्दुर्बलैः पुत्रादिभिर्ऋत्विग्भिर्वा तथा दक्षैः प्रवृद्धैर्वा तैः प्रभूती प्रभूत्या। ऐश्वर्यमदेनेति यावत्। पुरुषत्वता पुरुषवत्तया च यदागश्चकृम। न केवलं त्वय्येव कृतमपि तु देवेष्वन्येषु मानुषेषु चावज्ञानादिभिर्यच्चकृम नः कृतवतोऽस्मान् त्वमत्रास्मिन्कर्मण्यनागसः सुवतात्। अनुजानीहि ॥

देवसुवां हविःषु सवितुः सत्यप्रसवस्य न प्रमिय इति याज्या। सूत्रितं च। न प्रमिये सवितुर्दैव्यस्य तद्बृहस्पते प्रथमं। आ० ४. ११.। इति ॥

न प्रमिये सवितुर्दैव्यस्य तद्यथा विश्वं भुवनं धारयिष्यति।
यत्पृथिव्या वरिमन्ना स्वंगुरिर्वर्ष्मन्दिवः सुवति सत्यमस्य तत् ॥४॥
न। प्रऽमिये। सवितुः। दैव्यस्य। तत्। यथा। विश्वं। भुवनं। धारयिष्यति।
यत्। पृथिव्याः। वरिमन्। आ। सुऽअंगुरिः। वर्ष्मन्। दिवः। सुवति। सत्यं।
अस्य। तत् ॥४॥

सवितुर्दैव्यस्य देवस्य तत्कर्म न प्रमिये। न प्रमीयेत। न प्रहिंस्येत। हिंसार्हं न भवतीत्यर्थः ॥ कृत्यार्थे केन्प्रत्ययः ॥ यद्वा। दैव्यस्येत्यधिकरणे षष्ठी। सा च कर्मार्था। दैव्यं कर्मेत्यर्थः। कथमहिंस्यमित्यत आह। यथा विश्वं भुवनं धारयिष्यति। धारयति। विश्वधारणरूपं यत्कर्मास्ति तन्न प्रमिये। तथा स्वंगुरिः शोभनांगुल्युपलक्षितहस्तो यत् यः पृथिव्या वरिमन्ना। आकारश्चार्थे। भूम्या उरुत्वे च सुवति। तथा दिवो द्युलोकस्य वर्ष्मन्नुरुत्वे च सुवति अस्य देवस्य तदुक्तं कर्म सत्यमबाध्यमिति ॥

इंद्रज्येष्ठान्बृहद्भ्यः पर्वतेभ्यः क्षयाँ एभ्यः सुवसि पस्त्यावतः।
यथायथा पतयंतो वियेमिर एवैव तस्थुः सवितः सवाय ते ॥५॥

इंद्रऽज्येष्ठान । बृहत्ऽभ्यः । पर्वतेभ्यः । क्षयान । एभ्यः । सुवसि । पस्त्यऽवतः ।
यथाऽयथा । पतयंतः । विऽयेमिरे । एव । एव । तस्थुः । सवितरिति । सवाय । ते ॥५॥

हे सवितरिंद्रज्येष्ठान । इंद्रः परमैश्वर्ययुक्तस्त्वमेवेंद्रो वा ज्येष्ठो ज्यायान पूज्यो येषां ते तादृशाः । तान स्मान्बृहद्भ्यो महद्भ्यः पर्वतेभ्योऽप्यधिकान सुवसि । प्रेरयसि । किंच एभ्यो यजमानेभ्यः पस्त्यावतो गृहवतः क्षयान्निवासान ग्रामनगरादीन सुवसि । प्रेरयसि । यथा यथा पतयंतो गच्छंतस्त्वा वियेमिरे । विनियम्यंते त्वया । ते तव सवायानुज्ञाया एवंविधमेव नियमनमनतिक्रम्य तस्थुः । तिष्ठंति ॥

ये ते त्रिरहन्त्सवितः सवासो दिवेदिवे सौभंगमासुवंति ।
इंद्रो द्यावापृथिवी सिंधुरद्भिरादित्यैर्नो अदितिः शर्म यंसत ॥६॥
ये । ते । त्रिः । अहन । सवितरिति । सवासः । दिवेऽदिवे । सौभंगं । आऽसुवंति ।
इंद्रः । द्यावापृथिवी इति । सिंधुः । अत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत ॥६॥

ये यजमाना हे सवितस्ते त्वदर्थं सवासः सवाः सोमाः । द्वितीयार्थे प्रथमा । सोमान । यद्वा । सवासः सवनानि प्रातरादीनि प्रति त्रिरहन्नभिषुण्वंति । न केवलमेकस्मिन्नेवाहनि सवनत्रयेषु अपि तु दिवे दिवे प्रतिदिनं सौभगं सौभाग्यजनकमासुवंति । अभिषुण्वंति । तेभ्यो नोऽस्मभ्यमिंद्रः शर्म यंसत । यच्छतु । द्यावापृथिव्यौ चाद्भिर्विशिष्टा सिंधुः सिंध्वभिमानिदेवता चादित्यैः सहितादितिश्च शर्म यंसत । सावित्रे सूक्ते इंद्रादीनां निपातमुक्त्वा तेषां प्रार्थना न विरुध्यते ॥ ॥५॥

को वस्त्रातेति दशर्चं दशमं सूक्तं वामदेवस्यार्षं विश्वदेवदेवताकं । अष्टम्याद्यास्तिस्रो गायत्र्यः शिष्टा अनादेशपरिभाषया त्रिष्टुभः । तथा चानुक्रम्यते । को वो दश वैश्वदेवं त्रिगायत्र्यंतं त्विति । विनियोगो लैंगिकः ॥

को वस्त्राता वसवः को वरूता द्यावाभूमी अदिते त्रासीथां नः ।
सहीयसो वरुण मित्र मर्तात्को वोऽध्वरे वरिवो धाति देवाः ॥१॥
कः । वः । त्राता । वसवः । कः । वरूता । द्यावाभूमी इति । अदिते । त्रासीथां । नः ।
सहीयसः । वरुण । मित्र । मर्तात् । कः । वः । अध्वरे । वरिवः । धाति । देवाः ॥१॥

हे वसवः सर्वस्य वासयितारो देवा वो युष्मान कस्त्रातास्ति । यतो यूयं वसवोऽत इत्यभिप्रायः । कश्च वरूता संभक्तास्ति । यद्वा । वो युष्माकं मध्ये कस्त्राता रक्षको देवः कश्च वरूता वारयिता दुःखानां वरणीयो वा भवति । हे द्यावाभूमी नोऽस्मान त्रासीथां । रक्षतं । हे अदिते अखंडनीये । एतदपि द्यावाभूम्योर्विशेषणं । संख्याव्यत्ययः । यदीदं पृथग्देवतामंत्रणं स्यात तर्हि निघातो न स्यात । आमंत्रितं पूर्वमविद्यमानवदिति पूर्वस्याविद्यमानवत्त्वेनास्यैव पादादित्वात । अदिते मित्र वरुणोत मृळ । ऋग्वे० २. २७. १४ । इति आदित्या रुद्रा वसवः सुदानवः । ऋग्वे० १० ६६ १२ । इतिवत । तस्यैव विशेषणत्वे समानाधिकरणे इति सामानाधिकरण्यात अग्ने पावक रोचिषा । ऋग्वे० ५. २६ १. । इतिवत अस्य निघातः सिध्यति । तस्मात द्यावाभूमी इत्येतस्य विशेषणं । हे वरुण हे मित्र युवां सहीयसो मर्तादभिभवितुर्मनुष्यात नस्त्रासीथां । हे देवा वो युष्मा कमध्वरे यागे को वरिवो धनं धाति । ददाति । यद्वा । वो युष्माकं मध्ये को वरिवो धाति । धारयति ॥

प्र ये धामानि पूर्व्याण्यर्चान्वि यदुच्छान्वियोतारो अमूराः ।
विधातारो वि ते दधुरजस्रा ऋतधीतयो रुरुचंत दस्माः ॥२॥

प्र । ये । धामानि । पूर्व्याणि । अर्चान् । वि । यत् । उच्छान् । विऽयोतारः । अमूराः ।
विऽधातारः । वि । ते । दधुः । अजस्राः । ऋतऽधीतयः । रुरुचंत । दस्माः ॥ २ ॥

ये देवाः पूर्व्याणि पुरातनानि धामानि स्थानानि वा प्रार्चान् । अर्चंति । प्रयच्छंति स्तोतृभ्यः । यत ये च वियोतारो दुःखानाममिश्रयितारोऽमूरा अमूढा व्युच्छान् । व्युच्छंति । तमो विवासयंति देवाः । ते विधातारः फलानां कर्तारोऽजस्रा नित्या वि दधुः । कुर्वंत्वभिमतं । किंच ऋतधीतयः सत्यकर्माणो दस्मा दर्शनीयास्ते रुरुचंत । रोचंते ॥

प्र पस्त्या३मदितिं सिंधुमर्कैः स्वस्तिमीळे सख्याय देवीं ।
उभे यथा नो अहनी निपात उषासानक्ता करतामदब्धे ॥ ३ ॥
प्र । पस्त्यां । अदितिं । सिंधुं । अर्कैः । स्वस्तिं । ईळे । सख्याय । देवीं ।
उभे इति । यथा । नः । अहनी इति । निऽपातः । उषसानक्ता । करतां । अदब्धे इति ॥ ३ ॥

पस्त्यां सर्वगतत्वामदितिमदीनां देवमातरं तां देवीं सिंधुं स्यंदनशीलां नद्यभिमानिदेवीं स्वस्तिं सुखनिवासामेतन्नामिका देवी सख्यायानुकूल्यायार्कैर्मंत्रैरीळे । स्तौमि । उभे अहनी द्यावापृथिव्यौ यथा नोऽस्मान्निपातः नितरां पातः तथा स्तौमि । उषासानक्ताहोरात्राभिमानिदेवते अदब्धे अदंभनीये करता । कुरुतां । अभिमतमिति शेषः ॥

व्यर्यमा वरुणश्चेति पंथामिषस्पतिः सुवितं गातुमग्निः ।
इंद्राविष्णू नृवदु षु स्तवाना शर्म नो यंतममवद्वरूथं ॥ ४ ॥
वि । अर्यमा । वरुणः । चेति । पंथां । इषः । पतिः । सुवितं । गातुं । अग्निः ।
इंद्राविष्णू इति । नृऽवत् । ऊं इति । सु । स्तवाना । शर्म । नः । यंतं । अमऽवत् । वरूथं ॥ ४ ॥

अर्यमा देवोऽस्माकं पथा यज्ञादिमार्गं वि चेति । ज्ञापयति । तथा वरुणो वि चेति । इषोऽन्नस्य हविर्लक्षणस्य पतिः पालकोऽग्निः सुवितं सुखकरं गातुं गमनं मार्गं वा स्वर्गादेर्वि चेति । इंद्राविष्णू सु सुष्ठु स्तवाना स्तूयमानौ नृवन्मनुष्यवन्मनुष्योपेतं वरूथं वरणीयममवद्बलोपेतं शर्म गृहं सुखं वा नोऽस्माकं यंतं । यच्छतं ॥

आ पर्वतस्य मरुतामवांसि देवस्य त्रातुरव्रि भगस्य ।
पात्पतिर्जन्यादंहसो नो मित्रो मित्रियादुत न उरुष्येत् ॥ ५ ॥
आ । पर्वतस्य । मरुतां । अवांसि । देवस्य । त्रातुः । अव्रि । भगस्य ।
पात् । पतिः । जन्यात् । अंहसः । नः । मित्रः । मित्रियात् । उत । नः । उरुष्येत् ॥ ५ ॥

पर्वतस्येंद्रसखस्यैतन्नामकस्य देवस्य मरुतां च त्रातू रक्षकस्य भगस्य देवस्य चावांसि रक्षणान्याव्रि । आवृणे । किंच पतिर्वरुणो देवो जन्याज्जनसंबंधादंहसः पापात् नोऽस्मान्पात । पातु । रक्षतु । उतापि च मित्रश्च मित्रियात् मित्रभावेन न उरुष्येत । रक्षतु ॥ ॥ ६ ॥

नू रोदसी अहिना बुध्न्येन स्तुवीत देवी अप्येभिरिष्टैः ।
समुद्रं न संचरणे सनिष्यवो घर्मस्वरसो नद्यो३ अप व्रन् ॥ ६ ॥

नु । रोदसी इति । अहिना । बुध्न्येन । स्तुवीत । देवी इति । अप्येभिः । इष्टैः ।
समुद्रं । न । संऽचरणे । सनिष्यवः । घर्मऽस्वरसः । नद्यः । अप । व्रन् ॥ ६ ॥

हे रोदसी द्यावापृथिव्यौ युवामहिना बुध्न्येनाहिर्बुध्न्यनामकेन देवेन सह नु क्षिप्रमप्येभिरापनीयैरिष्टैः कामैर्निमित्तभूतैः स्तुवीत । स्तुवे । सनिष्यवो धनानां सम्भक्तुमिच्छन्तः संचरणे सचाराय समुद्रमध्यगमनाय समुद्रमिव । ते यथा स्तुवंति तद्वत् । यस्मादेते देवा घर्मस्वरसो दीप्तध्वनयो नद्यो नदीरप व्रन् । अपवृण्वंतीति परोक्ष इव । अथवा ते देवा नदीरपवृण्वंत्वित्याशीः । तस्मात् स्तुव इति संबंधः ॥

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।
नहि मित्रस्य वरुणस्य धासिमर्हामसि प्रमियं सान्वग्नेः ॥ ७ ॥
देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायतां । अप्रऽयुच्छन् ।
नहि । मित्रस्य । वरुणस्य । धासिं । अर्हामसि । प्रऽमियं । सानु । अग्नेः ॥ ७ ॥

अदितिर्देव्यदीना देवमाता देवैरन्यैर्मित्रादिभिः सह नोऽस्मान्नि पातु । पालयतु । तथा त्राता पालको देवः । इंद्र इत्यर्थः । सोऽप्यप्रयुच्छन्नप्रमाद्यन् त्रायतां । वयं च मित्रस्य वरुणस्याग्नेश्च सानु समुच्छ्रितं धासिमन्नं सोमादिलक्षणं प्रमियं हिंसितुं नह्यर्हामसि । अर्हामः । समर्था भवामः । किंत्वनुष्ठानेन संवर्धयितुमर्हाम इत्यर्थः ॥

अग्निरीशे वसव्यस्याग्निर्महः सौभगस्य । तान्यस्मभ्यं रासते ॥ ८ ॥
अग्निः । ईशे । वसव्यस्य । अग्निः । महः । सौभगस्य । तानि । अस्मभ्यं । रासते ॥ ८ ॥

अग्निर्देवो वसव्यस्य धनसमूहस्येशे । ईष्टे दातुं । तथाग्निर्महो महतः सौभगस्य सुभगत्वस्यापीशे । अतस्तानि धनानि सौभाग्यं चास्मभ्यं रासते । ददातु ॥

उषो मघोन्या वह सूनृते वार्या पुरु । अस्मभ्यं वाजिनीवति ॥ ९ ॥
उषः । मघोनि । आ । वह । सूनृते । वार्या । पुरु । अस्मभ्यं । वाजिनीऽवति ॥ ९ ॥

हे उषो हे मघोनि धनवति हे सूनृते प्रियसत्यरूपवागभिमानिनि हे वाजिनीवत्यन्नवति देवि अस्मभ्यं वार्या वरणीयानि पुरु बहूनि धनान्या वह । प्रापय ॥

तत्सु नः सविता भगो वरुणो मित्रो अर्यमा । इंद्रो नो राधसा गमत् ॥ १० ॥
तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा । इंद्रः । नः । राधसा । आ । गमत् ॥ १० ॥

येन राधसा धनेन सह सविता भगो वरुणो मित्रोऽर्यमेंद्रः प्रत्येकमा गमत् । आगच्छति यज्ञं । तद्राधो धनं ते देवा नोऽस्मभ्यं सु सुष्ठु प्रयच्छंत्विति शेषः ॥ ॥ १ ॥

मही द्यावापृथिवी इति सप्तर्चमेकादशं सूक्तं वामदेवस्यार्षं द्यावापृथिव्यं । पूर्वस्त्रिगायत्र्यंतं त्विसृकत्वा त्पंचम्याद्यास्तिस्रो गायत्र्यः शिष्टास्त्रिष्टुभः । मही सप्त द्यावापृथिवीयमित्यनुक्रमणिका ॥ व्यूढे दशरात्रे पंचमेऽहनि वैश्वदेवशस्त्र आदितश्चतुर्ऋचं द्यावापृथिव्यनिविद्धानीयं । तथा च सूत्रितं । मही द्यावापृथिवी इति चतस्र ऋभुर्विभ्वा । आ० ८.८. । इति ॥

मही द्यावापृथिवी इह ज्येष्ठे रुचा भवतां शुचयद्भिरर्कैः ।
यत्सीं वरिष्ठे बृहती विमिन्वन्रुवद्धोक्षा पप्रथानेभिरेवैः ॥ १ ॥

मही इति । द्यावापृथिवी इति । इह । ज्येष्ठे इति । रुचा । भवतां । शुचयत्ऽभिः । अर्कैः ।
यत् । सीं । वरिष्ठे इति । बृहती इति । विऽमिन्वन् । रुवत् । ह । उक्षा । पप्रथानेभिः । एवैः ॥ १ ॥

इह यज्ञे मही महत्यौ ज्येष्ठे प्रशस्ये द्यावापृथिवी द्यावापृथिव्यौ रुचा दीप्त्या युक्ते शुचयद्भिर्दीपयद्भिरर्कैर्मंत्रैः सोमादिहविर्भिर्वा युक्ते भवतां । यत् यस्मात् सीं सर्वतो वरिष्ठे उरुतरे बृहती महत्यौ द्यावापृथिव्यौ विमिन्वन् परिच्छिंदन् स्थापयन् उक्षा सेक्ता पर्जन्यः पप्रथानेभिः प्रथमानैरेवैर्गमनशीलैर्मरुद्भिर्मेघैर्वा सह रुवत् । रौति । शब्दं करोति । हेति पूरणः । तस्माद्रुचा भवतामिति संबंधः ॥

देवी देवेभिर्यजते यजत्रैरमिनती तस्थतुरुक्षमाणे ।
ऋतावरी अद्रुहा देवपुत्रे यज्ञस्य नेत्री शुचयद्भिरर्कैः ॥ २ ॥

देवी इति । देवेभिः । यजते इति । यजत्रैः । अमिनती इति । तस्थतुः । उक्षमाणे इति ।
ऋतवरी इत्यृतऽवरी । अद्रुहा । देवपुत्रे इति देवऽपुत्रे । यज्ञस्य । नेत्री इति ।
शुचयत्ऽभिः । अर्कैः ॥ २ ॥

देवी देव्यौ यजते यष्टव्ये अमिनती प्रजा अहिंसत्यावुक्षमाणे सिंचत्यावृतावरी ऋतवत्यावद्रुहाद्रोग्ध्र्यौ द्रोहमकुर्वत्यौ देवपुत्रे देवोत्पादिक्यौ यज्ञस्य नेत्री निर्वाहयित्र्यौ द्यावापृथिव्यौ देवेभिर्देवैर्यजत्रैर्यष्टव्यैः सहिते शुचयद्भिः शोचयद्भिरर्कैर्मंत्रैर्हविर्भिर्वा युक्ते तस्थतुः । तिष्ठतः । स्यातामित्यर्थः ॥

स इत्स्वपा भुवनेष्वास य इमे द्यावापृथिवी जजान ।
उर्वी गभीरे रजसी सुमेके अवंशे धीरः शच्या समैरत् ॥ ३ ॥

सः । इत् । सुऽअपाः । भुवनेषु । आस । यः । इमे इति । द्यावापृथिवी इति । जजान ।
उर्वी इति । गभीरे इति । रजसी इति । सुमेके इति सुऽमेके । अवंशे । धीरः । शच्या ।
सं । ऐरत् ॥ ३ ॥

स इत्स एव स्वपाः शोभनकर्मा सन् भुवनेष्वास । आस्ते । य इमे द्यावापृथिवी द्यावापृथिव्यौ जजान उत्पादितवान् । यश्च प्रजापतिरुर्वी उर्व्यौ विस्तीर्णे गभीरे अविचले सुमेके शोभनरूपे अवंशे उत्पत्तिरहिते अनाधारे वांतरिक्षे धीरो धीमान् शच्या कुशलकर्मणा समैरत् । सम्यक् प्रेरितवान् । स एव स्वपा इति ॥

नू रोदसी बृहद्भिर्नो वरूथैः पत्नीवद्भिरिषयंती सजोषाः ।
उरूची विश्वे यजते नि पातं धिया स्याम रथ्यः सदासाः ॥ ४ ॥

नु । रोदसी इति । बृहत्ऽभिः । नः । वरूथैः । पत्नीवत्ऽभिः । इषयंती इति । सऽजोषाः ।
उरूची इति । विश्वे इति । यजते इति । नि । पातं । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ४ ॥

हे रोदसी द्यावापृथिव्यौ नु क्षिप्रं पत्नीवद्भिः पत्नीसहितैर्बृहद्भिर्महद्भिर्वरूथैर्गृहैर्धनैर्वा सहेषयंती अस्माकमन्नमिच्छंत्यौ सजोषाः परस्परं संगते उरूची उर्वंचने विश्वे व्याप्ते यजते यष्टव्ये सत्यौ नोऽस्मान् नि पातं । नितरां रक्षतं । धियेत्यादि गतं ॥

प्र वामित्यादिगायत्रमृचो व्यूढे दशरात्रे वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानीयत्वेन प्रक्षेप्यः । तथा च सूत्रितं । प्र वां महि द्यवी इति तृचौ । आ० ८.११ । इति ॥

प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे । शुची उप प्रशस्तये ॥ ५ ॥

प्र । वां । महि । द्यवी इति । अभि । उपऽस्तुतिं । भरामहे । शुची इति । उप । प्रऽशस्तये ॥ ५ ॥

हे द्यावापृथिव्यौ द्यवी द्योतमाने वां युवाभ्यामुपस्तुतिं स्तोत्रं महि महत्प्रभूतमभि प्र भरामहे । प्रकर्षेण संपादयामः । शुची शुद्धे युवां प्रशस्तये प्रशंसितुमुप । उपसर्गश्रुतेरुचितक्रियाध्याहारः । उप गच्छाम इति शेषः ॥

पुनाने तन्वा मिथः स्वेन दक्षेण राजथः । ऊह्याथे सनादृतं ॥ ६ ॥

पुनाने इति । तन्वा । मिथः । स्वेन । दक्षेण । राजथः । ऊह्याथे इति । सनात । ऋतं ॥ ६ ॥

हे देव्यौ तन्वा स्वकीयया मूर्त्या स्वेन दक्षेण बलेन च मिथः प्रत्येकं पुनाने शोधयन्त्यौ यज्ञं यजमानं वा युवां राजथः । यद्वा । तन्वा स्वस्वशरीरैकदेशेन मिथः परस्परं पुनाने शोधयन्त्यौ । द्यौः स्वीयेनासारेण भूवमा च स्वकीयेन कार्श्येन चन्द्रमसि स्थितेन दिवमिति विवेकः । सनात्सदा कालमृतं यज्ञमूह्याथे । वहथः ॥

मही मित्रस्य साधथस्तरन्ती पिप्रती ऋतं । परि यज्ञं नि षेदथुः ॥ ७ ॥

मही इति । मित्रस्य । साधथः । तरन्ती इति । पिप्रती इति । ऋतं । परि । यज्ञं । नि । सेदथुः ॥ ७ ॥

मही महत्यौ द्यावापृथिव्यौ मित्रस्य मित्रभूतस्य स्तोतुरभिमतं साधथः । ऋतमन्नं तरन्ती तारयन्त्यौ पिप्रती पूरयन्त्यौ यज्ञं परि परितो नि षेदथुः । आश्रयतः ॥ ॥ ८ ॥

क्षेत्रस्य पतिनेत्यष्टर्चं द्वादशं सूक्तं वामदेवस्यार्षं । आद्याचतुर्थीषष्ठीसप्तम्योऽनुष्टुभः पञ्चमी पुरउष्णिक् । आद्यश्चेत्पुरउष्णिगिति हि तल्लक्षणं । शिष्टास्तिस्रस्त्रिष्टुभः । आद्यास्तिस्रः क्षेत्रपतिदेवताकाश्चतुर्थी शुनादेवताका पंचम्यष्टम्यौ शुनासीरदेवताके षष्ठीसप्तम्यौ सीतादेवताके । तथा चानुक्रमणिका । क्षेत्रस्याष्टौ तिस्रः क्षेत्रपत्याः शुनार्थिका परा पुरउष्णिक् सांत्या च शुनासीराभ्यामुपान्त्ये सीतार्थे ते अनुष्टुभावाद्या च चतुर्थी चेति ॥ क्षेत्रस्य कर्षणेऽनेन सूक्तेन प्रत्यृचं जुहुयाज्जपेद्वा । तथा च सूत्रितं । क्षेत्रस्य पतिना वयमिति प्रत्यृचं जुहुयाज्जपेद्वा । आ० गृ० २ १०. । इति ॥ अप्तोर्यामे होतुरतिरिक्तोक्थ्य आश्विनशस्त्रादूर्ध्वं चत्वार्यतिरिक्तोक्थ्यानि । तत्राद्या परिधानीया । सूत्रितं च । क्षेत्रस्य पतिना वयमिति परिधानीया । आ० ९ ११ । इति ॥

क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥ १ ॥

क्षेत्रस्य । पतिना । वयं । हितेनऽइव । जयामसि । गां । अश्वं । पोषयित्नु । आ । सः । नः । मृळाति । ईदृशे ॥ १ ॥

वयं यजमानाः क्षेत्रस्य पतिना देवेन ॥ रुद्रं क्षेत्रपतिं प्राहुः केचिदग्निमथापरे । स्वतंत्र एव वा कश्चित्क्षेत्रस्य पतिरुच्यते ॥ हितेनेव । इवशब्द एवार्थे । सर्वप्राणिहितेनैव तेन । अथवा मित्रेणेव । यथा सख्युः साहाय्येन स्वकार्यं साधयति तद्वत् । जयामसि । जयामः क्षेत्रं । स देवो गामश्वं च पोषयित्नु पोषयितृ गवाश्वलक्षणं धनमा हरत्विति शेषः । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । स एव देवो नोऽस्मानीदृशे उक्तलक्षणे धने दातव्ये सति मृळाति । सुखयति । क्षेत्रस्य पतिनेत्यादि निरुक्तं । १० १५ । जानीयात् ॥

अप्तोर्यामे मैत्रावरुणस्यातिरिक्तोक्थ्ये परिधानीया । सूत्रितं च । क्षेत्रस्य पते मधुमन्तमूर्मिमिति परिधानीया । आ० ९.११ । इति ॥

क्षेत्रस्य पते मधुमंतमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयंतु ॥२॥
क्षेत्रस्य । पते । मधुऽमंतं । ऊर्मिं । धेनुःऽइव । पयः । अस्मासु । धुक्ष्व ।
मधुऽश्चुतं । घृतंऽइव । सुऽपूतं । ऋतस्य । नः । पतयः । मृळयंतु ॥२॥

हे क्षेत्रस्य पते त्वं मधुमंतं माधुर्योपेतमूर्मिं प्रवृद्धमुदकं धेनुः पय इव सा यथा दुग्धे तथास्मासु धुक्ष्व । मधुश्चुतं मधुस्रावि सुपूतं घृतमिवेत्युपमा । तादृशमुदकमित्यर्थः । ऋतस्य यज्ञस्योदकस्य वा पतयः स्वामिनो नोऽस्मान् मृळयंतु । सुखयंतु । यद्वा । ऋतस्येतत्कर्मणि षष्ठी । ऋतं मृळयंतु । प्रयच्छंतु । मृळतिरत्र दानकर्मा ॥

ब्राह्मणाच्छंसिनोऽतिरिक्तोक्थ्ये परिधानीयैषा । मधुमतीरोषधीर्द्याव आप इति परिधानीया । आ० ९. ११. । इति सूत्रितत्वात् ॥

मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वंतरिक्षं ।
क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यंतो अन्वेनं चरेम ॥३॥
मधुऽमतीः । ओषधीः । द्यावः । आपः । मधुऽमत् । नः । भवतु । अंतरिक्षं ।
क्षेत्रस्य । पतिः । मधुऽमान् । नः । अस्तु । अरिष्यंतः । अनु । एनं । चरेम ॥३॥

ओषधीरोषध्यो व्रीहिप्रियंग्वादयो नोऽस्मभ्यं मधुमतीर्मधुमत्यो भवंतु । तथा द्यावः । तिस्रो दिव इत्युक्तत्वाद्बहुवचनं युक्तं । तथापोऽतरिक्षं च नो मधुमद्भवतु । किंच क्षेत्रस्य पतिरपि मधुमान्नोऽस्तु । अरिष्यंतोऽन्यैरहिंस्यतो वयमेनं क्षेत्रपतिमनु अनुसृत्य चरेम । संचरेम सुखेन ॥

शुनं वाहाः शुनं नरः शुनं कृषतु लांगलं । शुनं वरत्रा बध्यंतां शुनमष्ट्रामुदिंगय ॥४॥
शुनं । वाहाः । शुनं । नरः । शुनं । कृषतु । लांगलं । शुनं । वरत्राः । बध्यंतां । शुनं ।
अष्ट्रां । उत् । इंगय ॥४॥

वाहा बलीवर्दाः शुनं । सुखनामैतत् । सुखं यथा भवति तथा वहंत्विति शेषः । तथा नरो नेतारो मनुष्याः कर्षकाः शुनं कुर्वंतु । तथा लांगलमपि शुनं कृषतु । वरत्रा वरणेन त्रायमाणाः प्रग्रहाः शुनं बध्यंतां । अष्ट्रां प्रतोदं शुनमुदिंगय । प्रेरय । शुनाख्यो वाय्विंद्रयोरन्यतमः सुखकृद्देवः । तदनुग्रहादेतत्सर्वं भवत्विति तस्य श्रुतिसामान्येन स्तुतिः ॥

शुनासीरीये पर्वणि शुनासीरदेवताकस्य हविषोऽनुवाक्यैषांत्या ऋक् याज्या । सूत्रितं च । शुनासीराविमां वाचं जुषेथां शुनं नः फालाः । आ० २. २०. । इति ॥

शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः । तेनेमामुप सिंचतं ॥५॥
शुनासीरौ । इमां । वाचं । जुषेथां । यत् । दिवि । चक्रथुः । पयः । तेन । इमां ।
उप । सिंचतं ॥५॥

द्युदेवः शुनदेवतेति शौनकः । अतः शुन इंद्रः सीरो वायुः । शुनो वायुः शु एत्यंतरिक्षे सीर आदित्यः सरणात् । नि० ९. ४०. । इति यास्कः । हे शुनासीरौ तौ युवामिमां वक्ष्यमाणां मदीयां वाचं जुषेथां । यत्पयो दिवि चक्रथुः तेनेमां भूमिमुप सिंचतं ॥

अर्वाची सुभगे भव सीते वंदामहे त्वा । यथा नः सुभगाससि यथा नः सुफलाससि ॥६॥
अर्वाची । सुऽभगे । भव । सीते । वंदामहे । त्वा । यथा । नः । सुऽभगा । असंसि ।
यथा । नः । सुऽफला । असंसि ॥६॥

हे सुभगे सीते त्वमर्वाच्यर्वागंचना भव । त्वा त्वां वंदामहे । स्तुवीमहि । यथा नः सुभगाससि । शोभनधना भवसि । यथा नः सुफलाससि तथा वंदामहे ॥

इंद्रः सीतां नि गृह्णातु तां पूषानु यच्छतु ।
सा नः पयस्वती दुहामुत्तरामुत्तरां समां ॥७॥
इंद्रः । सीतां । नि । गृह्णातु । तां । पूषा । अनु । यच्छतु ।
सा । नः । पयस्वती । दुहां । उत्तरांऽउत्तरां । समां ॥७॥

इंद्रो देवः सीतां सीताधारकाष्ठं नि गृह्णातु । तां सीतां पूषा देवोऽनु यच्छतु । नियमयतु । सा सीता पयस्वत्युदकवती दुहां । दुह्यात । किमिति तदुच्यते । उत्तरामुत्तरां समामुत्तरमुत्तरं संवत्सरं ॥

अस्या अष्टम्या विनियोगः शुनासीराविमामित्यत्रोक्तः ॥

शुनं नः फाला वि कृषंतु भूमिं शुनं कीनाशा अभि यंतु वाहैः ।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तं ॥८॥
शुनं । नः । फालाः । वि । कृषंतु । भूमिं । शुनं । कीनाशाः । अभि । यंतु । वाहैः ।
शुनं । पर्जन्यः । मधुना । पयःऽभिः । शुनासीरा । शुनं । अस्मासु । धत्तं ॥८॥

नो भूमिं फाला भूमिविदारककाष्ठाः शुनं वि कृषंतु । शुनं यथा भवति तथा । कीनाशाः कर्षका वाहैर्बलीवर्दैरभि यंतु । अभिगच्छंतु । शुनं यथा भवति तथा । पर्जन्यो मधुना मधुरैः पयोभिरुदकैः सिंचतु । हे शुनासीरा इंद्रवायू वाय्वादित्यौ वा शुनं सुखमस्मासु धत्तं । धारयतं ॥ ॥९॥

समुद्रादूर्मिरित्येकादशर्चं त्रयोदशं सूक्तं । अंत्या जगती शिष्टास्त्रिष्टुभः । अग्निसूर्याब्गोघृतानामन्यतमो देवता । वामदेव ऋषिः । अत्रानुक्रमणिका । समुद्रादूर्मिरेकादशाग्नेयं जगत्यंतं सौर्यं वाप वा गव्यं वा घृतस्तुतिर्वेति ॥ विषुवतीदं सूक्तमाज्यं । तथा च सूत्रं । समुद्रादूर्मिरित्याज्यं त्वं सुमंथं । आ० ८. ६. । इति ॥ व्यूढदशरात्रे सप्तमेऽहनीदमेव सूक्तमाज्यं । सूत्रितं च । अथ छंदोमाः समुद्रादूर्मिरित्याज्यं । आ० ८. ९. । इति ॥

समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥१॥
समुद्रात् । ऊर्मिः । मधुऽमान् । उत् । आरत् । उप । अंशुना । सं । अमृतऽत्वं । आनट् ।
घृतस्य । नाम । गुह्यं । यत् । अस्ति । जिह्वा । देवानां । अमृतस्य । नाभिः ॥१॥

संमोदंतेऽस्मिन्यज्यमाना इति वा समुद्रोऽग्निः पार्थिवः अथवा समुद्रवंत्यापोऽस्मादिति व्युत्पत्त्या वैद्युतोऽग्निः । तस्मादूर्मिरूर्मिवदुपर्युपर्युद्भूतो मधुमान्माधुर्योपेतफलसमूह उदारत । उद्गच्छति । अथवा वैद्युतादग्नेर्मधुत्पादको रस उदारत । उद्भूतः । अथवा समुद्रात्समुद्रवणसाधनादादित्यादूर्मी रस उदकलक्षण उदारत । आदित्याज्जायते वृष्टिरिति श्रुतेः । यद्वा । समुद्रादुदकस्योत्पत्तेरंतरिक्षादूर्मिरुदकमुदारत् । अथवा समुद्रादुद्क

लवणाद्भवामृधमः सकाशादूर्मिरुज्ज्वलः क्षीररसः । एतद्घृतपक्षेऽपि समानं । यद्यपि घृतं क्षीराज्जायते तथापि तस्योधस उत्पत्तेरेवमुपचर्यते । शिष्टं वाक्यमग्न्यादिपंचसु पक्षेष्वपि समानं । अंशुना दीप्त्यांशेन वामृतत्वं मोक्षमुपसमानट् । उपैति पुरुषः । प्राप्नोति नरः । घृतस्य दीप्तस्य क्षीरद्रव्यरूपस्य वा गुह्यं नाम गोपनीयं नमनसाधनं यदस्ति तद्ब्रवीमि । तद्देवानां जिह्वास्वादकजिह्वास्थानीयं भवति । तद्देवामृतस्य नाभिर्बंधकं भवति । तदुभयं घृतस्य नामेत्यर्थः । एवं सर्वमंत्रेषु तत्तत्पक्षानुसारेण योज्यं ॥

वयं नाम प्र ब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृंगोऽवमीद्गौर एतत् ॥२॥
वयं । नाम । प्र । ब्रवाम । घृतस्य । अस्मिन् । यज्ञे । धारयाम । नमःऽभिः ।
उप । ब्रह्मा । शृणवत् । शस्यमानं । चतुःऽशृंगः । अवमीत् । गौरः । एतत् ॥२॥

वयं यजमाना घृतस्य नाम प्र ब्रवाम । स्तुमः । अस्मिन्यज्ञे नमोभिर्नमस्कारैर्हविर्भिर्वा धारयाम च । ब्रह्मा परिवृढो देवः शस्यमानं स्तूयमानमिदमुप शृणवत् । शृणुयात् । चतुःशृंगः । चत्वारि शृंगाणि वेदचतुष्टयरूपाणि यस्य सः । आदित्याग्निपक्ष एवं । इतरेष्वपि यास्कोक्तव्युत्पत्त्या शृंगशब्दो व्याख्येयः । गौरोऽरुणवर्णस्तादृशो देव एतत्कर्म जगद्वावमीत् । उद्गिरति । निर्वहतीत्यर्थः ॥

चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥३॥
चत्वारि । शृंगा । त्रयः । अस्य । पादाः । द्वे इति । शीर्षे इति । सप्त । हस्तासः । अस्य ।
त्रिधा । बद्धः । वृषभः । रोरवीति । महः । देवः । मर्त्यान् । आ । विवेश ॥३॥

यद्यपि सूक्तस्याग्निसूर्यादिपंचदेवताकत्वात्पंचधायं मंत्रो व्याख्येयस्तथापि निरुक्ताद्युक्तनीत्या यज्ञात्मकाग्नेः सूर्यस्य च प्रकाशकत्वेन तत्परतया व्याख्यायते । अस्य यज्ञात्मकस्याग्नेश्चत्वारि शृंगा चत्वारो वेदाः शृंगस्थानीयाः । यद्यप्यापस्तंबेन यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैर्विधीयते । परिभा॰ १ ३ । इत्युक्तं तथाप्याथर्वणस्येतरानुपचर्यैव काम्यसाध्याना कृत्स्नकर्मणामभिधायकत्वात्तद्रूपतया चत्वारि शृंगेत्युक्तं । त्रयो अस्य पादाः सवनानि त्रीण्यस्य पादाः । प्रवृत्तिसाधनत्वात्पादा इत्युच्यंते । द्वे शीर्षे ब्रह्मौदनं प्रवर्ग्यश्च । इष्टिसोमप्राधान्येनेदमुक्तं । सप्त हस्तासः सप्त छंदांसि । हस्ता अनुष्ठानस्य मुख्यसाधनं । छंदांस्यपि देवताप्रीणनस्य मुख्यसाधनमिति हस्तव्यवहारः । त्रिधा बद्धो मंत्रकल्पब्राह्मणैस्त्रिप्रकारं बद्धः । बंधनमस्य तन्निष्पाद्यत्वं । वृषभः फलानां वर्षिता रोरवीति । भृशं शब्दायते । ऋग्यजुःसामोक्थैः शस्त्रयागस्तुतिरूपैर्होत्राद्युत्पादितैर्ध्वनिभिरसौ रौति । एवं महो देवो मर्त्याना विवेश । मर्त्यैर्यजमानैर्निष्पाद्यत्वात्प्रविश उपचर्यते ॥ अत्र यास्कश्चत्वारि शृंगेति वेदा वा एत उक्ताः । नि॰ १३. ७ । इत्यादिना निरवोचत । तदत्रानुसंधेयं ॥ अथ सूर्यपक्षे व्याख्यायते । अस्यादित्यस्य चत्वारि शृंगाणि चतस्रो दिशः । एताः श्रयणार्थत्वाच्छृंगाणीत्युपचर्यंते । त्रयो अस्य पादाः । त्रयो वेदाः पादस्थानीया भवंति गमनसाधनत्वात् । तथा ऋग्भिः पूर्वाह्णे दिवि देव ईयत इत्युपक्रम्य वेदैरशून्यस्त्रिभिरेति सूर्यः । तै॰ ब्रा॰ ३ १२ ९. १. । इति हि वेदत्रयेण गतिराम्नाता । द्वे शीर्षे । अहश्च रात्रिश्चेति द्वे शिरसी । सप्त हस्तासो अस्य । सप्त रश्मयः षड्वलक्षणा ऋतव एकः साधारण इति वा सप्त हस्ता भवंति । त्रिधा बद्धस्त्रिषु स्थानेषु क्षित्यादिष्वग्न्याद्यात्मकत्वेन संबद्धः । ग्रीष्मवर्षाहेमताख्यैस्त्रिभिस्त्रिधा बद्धो वा । वृषभो वर्षिता रोरवीति । शब्दं करोति वृष्ट्यादिद्वारा । स महो महान् देवो मर्त्याना विवेश तन्नियंतृतया । सूर्य आत्मा जगतस्तस्थुषश्च । ऋग्वे॰ १. ११५ १. । इति हि श्रुतं ॥ एवं त्वष्ट्रादिपक्षेऽपि योज्यं । शाब्दिकास्तु शब्दब्रह्मपरतया चत्वारि शृंगेति चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्चेत्यादिना व्याचक्षते । अपरं त्वपरथा । तत्सर्वमत्र द्रष्टव्यं ॥

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविंदन् ।
इंद्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥४॥
त्रिधा । हितं । पणिऽभिः । गुह्यमानं । गवि । देवासः । घृतं । अनु । अविंदन् ।
इंद्रः । एकं । सूर्यः । एकं । जजान । वेनात् । एकं । स्वधया । निः । ततक्षुः ॥४॥

पणिभिरसुरैर्गवि गोषु त्रिधा क्षीरदध्याज्यभेदेन त्रिप्रकारं हितं निहितं गुह्यमानं गोपितं घृतं दीप्तं रसरूपं वा द्रव्यं देवासो देवा अन्वविंदन् । अलभंत । तत्रेंद्र एकं क्षीरं जजान । उदपादयत् । सूर्य एकं जजान । वेनात्कांतिमतोऽग्नेर्गमनवतो वायोर्वैकं घृतं स्वधयान्नेन निमित्तेन द्रव्येण वा साधनेन निष्टतक्षुः । निरपादयन् देवाः ॥

एता अर्षंति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसां ॥५॥
एताः । अर्षंति । हृद्यात् । समुद्रात् । शतऽव्रजाः । रिपुणा । न । अवऽचक्षे ।
घृतस्य । धाराः । अभि । चाकशीमि । हिरण्ययः । वेतसः । मध्ये । आसां ॥५॥

एता आपो घृतधारा वार्षंति । अधः पतंति । शतव्रजा अपरिमितगतयः सत्यो हृद्याद्धृदयंगमात्समुद्रादंतरिक्षाद्रिपुणा जलमोक्षप्रतिबंधकारिणा शत्रुणा वृत्रेण नावचक्षे न अवदर्शनाय यथादृष्टं भवति तथार्षंति । ता घृतस्य धारा अभि चाकशीमि । अभिपश्यामि । कुर्वंति तदुच्यते । हिरण्ययो हिरण्मयो वेतसोऽपामग्निर्वैद्युत आसामपां मध्ये वर्तत इति शेषः । अत्र घृतस्य धारा अभि चाकशीमीत्यनेन चरमपादेन होमाधारोऽग्निर्वैद्युतोऽग्निरादित्यो वोक्तः ॥ ॥१०॥

सम्यक्स्रवंति सरितो न धेना अंतर्हृदा मनसा पूयमानाः ।
एते अर्षंत्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥६॥
सम्यक् । स्रवंति । सरितः । न । धेनाः । अंतः । हृदा । मनसा । पूयमानाः ।
एते । अर्षंति । ऊर्मयः । घृतस्य । मृगाःऽइव । क्षिपणोः । ईषमाणाः ॥६॥

अस्याग्नेरुपरि सम्यक् स्रवंति । क्षरंति । घृतस्य धाराः । किमिव । सरितो न धेनाः प्रीणयित्र्यो नद्य इव । अंतर्हृदा मनसा हृदयमध्यगतेन चित्तेन । भावनाभिर्विवेकेनेति यावत् । तेन पूयमानाः शुद्धीकृताः । तदेवोच्यते । एते घृतस्योर्मयो रसा अर्षंति । गच्छंति । जुह्वाः सकाशादग्नेरुपरि पतंति । किमिव । क्षिपणोः क्षेपकाद्व्याधाद्दीषमाणाः पलायमाना मृगा इव । ते यथा कक्षं प्रविशंति तद्वत् । अनेन शैघ्र्यमुक्तं भवति ॥

सिंधोरिव प्राध्वने शूघनासो वातप्रमियः पतयंति यह्वाः ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिंदन्नूर्मिभिः पिन्वमानः ॥७॥
सिंधोःऽइव । प्रऽअध्वने । शूघनासः । वातऽप्रमियः । पतयंति । यह्वाः ।
घृतस्य । धाराः । अरुषः । न । वाजी । काष्ठाः । भिंदन् । ऊर्मिभिः । पिन्वमानः ॥७॥

सिंधोः स्यंदमानाया नद्याः सकाशादिवोदकानीव प्राध्वने प्रवणवति देशे शूघनास आशुगत्यः । आशु इति च शु इति च क्षिप्रनामनी भवत इति निरुक्तं । ६. १ । वातप्रमियो वायुवत्प्रकृष्टवेगा यह्वा महत्यो घृतस्य

धाराः पतयंति । गच्छंत्यपिरूपांरि । घृतमुदकमिति पक्षे सिंधोरिवेत्यत्रेवशब्दोऽनर्थकः । स्यंदनसाधनादंतरि क्षादुत्क्रम्य भूमौ घृतधारा उदकधाराः पतयंति । गच्छंति भूमौ । किंच घृतसंस्त्यायः काष्ठा मर्यादाभूतान्परि धीन्भिंदन्नूर्मिभी रसैः पिन्वमानो वर्धमानो भवति । उदकमिति पक्षे काष्ठाः क्रांत्वा स्थिता दिशो भिंदन्नूर्मि- भिस्तरंगैः पिन्वमानो भवति । तत्र दृष्टांतः । अरुषो न वाजी आरोचमानो वेगेन गमनशीलोऽश्व इव । स यथा भिंदन्पिन्वमानश्च भवति तद्वत् ॥

अभि प्रवंत समनेव योषाः कल्याण्यः स्मयमानासो अग्निं ।
घृतस्य धाराः समिधो नसंत ता जुषाणो हर्यति जातवेदाः ॥८॥
अभि । प्रवंत । समनाऽइव । योषाः । कल्याण्यः । स्मयमानासः । अग्निं ।
घृतस्य । धाराः । संऽइधः । नसंत । ताः । जुषाणः । हर्यति । जातऽवेदाः ॥८॥

घृतस्य धारा अमुमग्निं समनेव समानमनस्का योषा योषितः पतिमिवाभि प्रवंत । अभिनमयंति । निमग्नं कुर्वंति । कीदृश्यस्ताः । कल्याण्यो भद्ररूपाः स्मयमानासो हसंत्यः । किंच ताः समिधः सम्यग्दीपयित्र्यः सत्यो नसंत । व्याप्नुवंति । ता एव धारा जुषाणः प्रीयमाणः सेवमानो वायं जातवेदा हर्यति । कामयते । घृतशब्द- स्योदकमिति पक्षेऽग्निजातवेदःशब्दाभ्यां वैद्युतोऽग्निरादित्यो वा गृह्यते । तं देवमुदकधारा अभि प्रवंत नसंत च । स ताश्च हर्यति ॥

कन्या इव वहतुमेतवा उ अंज्यंजाना अभि चाकशीमि ।
यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवंते ॥९॥
कन्याःऽइव । वहतुं । एतवै । ऊं इति । अंजि । अंजानाः । अभि । चाकशीमि ।
यत्र । सोमः । सूयते । यत्र । यज्ञः । घृतस्य । धाराः । अभि । तत् । पवंते ॥९॥

कन्या इवानूढा बालिका इव । ता यथा वहतुमुद्वाहं प्राप्तुमेतवा उ एतुं पतिं गंतुमंज्यंजकमाभरणं तेजो वाञ्जाना व्यंजयंत्यः । एवकुर्वंत्यः कन्या इव स्वभर्तृभूतमाध्वरं वैद्युतं वाग्निमादित्यं वा वहतुमेतुमंजि व्यंजकं तदीयं रूपमंजाना व्यंजयंतीर्घृतस्य धारा अभि चाकशीमि । अभिपश्यामि । घृतेनोदकेन च भौमस्य वैद्युतस्य चाग्नेः प्रज्वलनं प्रसिद्धं । किंच ता धाराः सोमः सूयते यत्र यत्र चेतरो यज्ञस्तायते तत्तं यज्ञमभिलक्ष्य पवंते । गच्छंति खलु ॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवंते ॥१०॥
अभि । अर्षत । सुऽस्तुतिं । गव्यं । आजिं । अस्मासु । भद्रा । द्रविणानि । धत्त ।
इमं । यज्ञं । नयत । देवता । नः । घृतस्य । धाराः । मधुऽमत् । पवंते ॥१०॥

हे मदीया ऋत्विजो गव्यं गोसमूहरूपं गोसंबंधिनं वाजिं संघातमभ्यर्षत । अभिगच्छत । अभिगमयत वा सुष्टुतिं शोभनां स्तुतिं । अत्र गोशब्देनोदकानि गावो वोच्यंते । तत्संघातोऽभिप्रेतः । अस्मासु यजमानेषु भद्रा स्तुत्यानि द्रविणानि धत्त । धारयत । स्तुत्या खलु फलं लप्स्यंते । किंच नोऽस्मदीयमिमं यज्ञं देवता अत्र यष्टव्यान्देवान्नयत । प्रापयत । घृतस्य धारा मधुमद्यथा तथा पवंते । गच्छंति ॥

धामन्त इत्येषोत्तरसूक्तस्याद्या स्वाध्यायोत्सर्जनोपाकरणयोर्विनियुक्ता । धामन्ते विश्वमिति प्रतीकमुक्त्वा तद्वंते तृचाः । आ॰ गृ॰ ३. ५. । इति सूचितत्वात् ॥

धामन्ते विश्वं भुवनमधि श्रितमंतः समुद्रे हृद्यं१तरायुषि ।
अपामनीके समिथे य आभृतस्तमश्याम मधुमंतं त ऊर्मिं ॥११॥

धामन । ते । विश्वं । भुवनं । अधि । श्रितं । अंतरिति । समुद्रे । हृदि । अंतः । आयुषि ।
अपां । अनीके । संऽइथे । यः । आऽभृतः । तं । अश्याम । मधुऽमंतं । ते । ऊर्मिं ॥११॥

ते त्वदीये धामन्धामनि तेजःस्थाने विश्वं भुवनमधि श्रितं। अंतः समुद्रे वडवाग्नित्वेन हृद्यंतः सर्वप्राणिनां हृदये वैश्वानरत्वेनायुष्यन्ने सर्वप्राण्याहारत्वेन। यद्वा। आयुषीत्येतद्धृद्विशेषणं। जठराग्निना ह्यन्नायुर्धार्यते। अपामनीके उदकसंस्थाने वैद्युताग्नित्वेन समिथे संग्रामे च शौर्याग्निरूपेण। एवं सर्वेषु स्थानेषु वर्तमाने धाम। तस्मिन्धामनि य ऊर्मिर्घृतरूप उदकरूपो वा रस आभृतः स्थापितः ते त्वदीयं तं रसं मधुमंतं माधुर्योपेतमश्याम। व्याप्नुयाम॥ ॥११॥ ॥५॥

इत्थं श्रीबुक्कभूपालसाम्राज्यैकधुरंधरः। विद्यातीर्थगुरोर्दृष्ट्या प्राप्तसार्वज्ञ्यवैभवः॥
श्रीमत्सायणमंत्रीशः सकलागमतत्त्ववित्। दाशतय्यां माधवीये वेदार्थस्य प्रकाशने॥
चतुर्थं मंडलं सम्यक् वामदेवेन वीक्षितं। अष्टोत्तरैस्तु पंचाशत्सूक्तैः पंच शतैरपि॥
एकोनया नवत्या च युक्तैर्मंत्रैश्च संमितं। व्याकार्षीत्सुखबोधार्थं पश्यंतस्तद्विमत्सराः॥

॥ इति चतुर्थं मंडलं समाप्तं ॥

## ॥ ऋग्वेदः ॥

### ॥ अथ पंचमं मंडलं ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

आत्रेये पंचमे मंडले षडनुवाकाः । तत्र प्रथमेऽनुवाके चतुर्दश सूक्तानि । तत्राबोध्यग्निरिति द्वादशर्चं प्रथमं सूक्तं । अत्रेयमनुक्रमणिका । अबोधि द्वादश बुधगविष्ठिरावित्ति । पंचमं मंडलेऽनुक्तगोत्रमात्रेयं विद्यादिति परिभाषितत्वादात्रेयौ बुधगविष्ठिरावृषी । अनादेशपरिभाषया त्रिष्टुप् । मंडलादिपरिभाषयाग्निर्देवता ॥ प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चैतदादिचत्वारि सूक्तानि । तथा च सूत्रितं । अबोध्यग्निः समिधेति चत्वारि । आ० ४. १३ । इति ॥ अध्यायोत्सर्जनोपाकरणयोर्धामंते विश्वामिति तृचत्वेन विनियोग उक्तः ॥

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासं ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥१॥
अबोधि । अग्निः । सम्ऽइधा । जनानां । प्रति । धेनुंऽइव । आऽयतीं । उषसं ।
यह्वाःऽइव । प्र । वयां । उत्ऽजिहानाः । प्र । भानवः । सिस्रते । नाकं । अच्छ ॥१॥

अयमग्निर्जनानामध्वर्य्वादीनां समिधा समिद्भिरबोधि । प्रबुद्धोऽभूत् । धेनुमिव । अग्निहोत्रार्थं धेनुं प्रति यथा प्रातर्बुध्यते तद्वदायतीमागच्छतीमुषसं प्रति । उषःकाल इत्यर्थः । अथ प्रबुद्धस्याग्नेर्भानवो ज्वाला यह्वा महांतो वया शाखा प्रोज्जिहानाः प्रोन्नमयंतो वृक्षा इव प्रोज्जिहानाः स्वाधिष्ठानं त्यजंतो नाकमंतरिक्षमच्छाभिमुख्येन प्र सिस्रते । प्रसरंति ॥

अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशददर्शि पाजो महान्देवस्तमसो निरमोचि ॥२॥
अबोधि । होता । यजथाय । देवान् । ऊर्ध्वः । अग्निः । सुऽमनाः । प्रातः । अस्थात् ।
सम्ऽइद्धस्य । रुशत् । अदर्शि । पाजः । महान् । देवः । तमसः । निः । अमोचि ॥२॥

अथ होता होमनिष्पादकोऽग्निर्देवान्यष्टव्यान्यजथाय यष्टुमबोधि । बुध्यते । सोऽग्निः प्रातःकाले सुमनाः शोभनमनस्को यजमानानुग्रहबुद्धिः सन् ऊर्ध्वोऽस्थात् । उत्तिष्ठति । समिद्धस्यास्य रुशद्रोचमानं पाजो बलं ज्वालालक्षणमदर्शि । दृश्यते । अथ तथाभूतो महान्देवस्तमसोऽधकारान्निरमोचि । निर्मुक्तोऽभूत् ॥

यदीं गणस्य रशनामजीगः शुचिरंक्ते शुचिभिर्गोभिरग्निः ।
आद्दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभिः ॥३॥
यत् । ईं । गणस्य । रशनां । अजीगरिति । शुचिः । अंक्ते । शुचिऽभिः । गोभिः । अग्निः ।
आत् । दक्षिणा । युज्यते । वाजऽयंती । उत्तानां । ऊर्ध्वः । अधयत् । जुहूभिः ॥३॥

यद्यदेमयमग्निर्गणस्य संघात्मकस्य जगतो रशनां रज्जुरिव व्यापारप्रतिबंधकं तमोऽजीगः । गिरति गृह्णाति वा । समिद्धो भवतीत्यर्थः । तदा शुचिर्दीप्तोऽग्निः शुचिभिर्गोभिर्दीप्तै रश्मिभिरंक्ते । व्यनक्ति विश्वं जगत् । आदनंतरमेव दक्षिणा प्रवृद्धा वाजयत्यन्नमिच्छत्याज्यधारा युज्यते । युक्ता भवति । अथवा दक्षिणा प्रवृद्धाज्यधारा युज्यते । तां च धारामुत्तानामूर्ध्वतानामुपरि विस्तृतामूर्ध्व उन्नतः सन् जुहूभिरधयत् । पिबति ॥

अग्निमच्छा देवयतां मनांसि चक्षूंषीव सूर्ये सं चरंति ।
यदीं सुवाते उषसा विरूपे श्वेतो वाजी जायते अग्रे अह्नां ॥४॥
अग्निं । अच्छ । देवऽयतां । मनांसि । चक्षूंषिऽइव । सूर्ये । सं । चरंति ।
यत् । ईं । सुवाते इति । उषसा । विरूपे इति विऽरूपे । श्वेतः । वाजी । जायते ।
अग्रे । अह्नां ॥४॥

अग्निं देवमच्छाभिमुख्येन देवयतां देवानात्मन इच्छतां यजमानानां मनांसि सं चरंति । देवा यष्टव्यास्तदर्थं कदायं वर्धिष्यतीति ध्यायंतीत्यर्थः । चक्षूंषीव सर्वेषां प्राणिनां यथा सूर्ये संचरंति तद्वत् । यद्यदेमेनमग्निमुषसा सह विरूपे नानारूपे द्यावापृथिव्यौ सुवाते । जनयतः । तदानीं श्वेतः प्रकृष्टवर्णोपेतो वाजी वेजनवानग्निरह्नामग्र उदयकाले जायते । प्रवर्धत इत्यर्थः ॥

जनिष्ट हि जेन्यो अग्रे अह्नां हितो हितेष्वरुषो वनेषु ।
दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान् ॥५॥
जनिष्ट । हि । जेन्यः । अग्रे । अह्नां । हितः । हितेषु । अरुषः । वनेषु ।
दमेऽदमे । सप्त । रत्ना । दधानः । अग्निः । होता । नि । ससाद । यजीयान् ॥५॥

अयमग्निर्जेन्य उत्पादनीयोऽह्नामग्र उदयकाले जनिष्ट । प्रादुरभूत् । पश्चात् हितेषु वनेषु वनोत्थेषु काष्ठेष्वरुष आरोचमानः सन् हितः । स्थापितः । पश्चाद्दमेदमे तत्तद्यागगृहे सप्त रत्ना रमणीयाः सप्त ज्वाला दधानो धारयमाणः । अथवा यजमानेभ्यः सप्तविधानि रत्नानि दधानोऽग्निर्होता होमनिष्पादकः सन् यजीयान्यष्टव्यः सन् नि षसाद । निषण्णो भवति ॥

जीवति यजमाने मृत इति शब्दो यदि स्यात्तदानीं सुरभिमतीष्टिः कार्या । तत्रेयमनुवाक्या । सूत्रितं च । अग्निर्होता न्यसीदद्यजीयान्त्साध्वीमकर्देववीतिं नो अद्य । ऐ॰ ब्रा॰ ६ ९ । इति ॥

अग्निर्होता न्यसीदद्यजीयानुपस्थे मातुः सुरभा उ लोके ।
युवा कविः पुरुनिःष्ठ ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ॥६॥
अग्निः । होता । नि । असीदत् । यजीयान् । उपऽस्थे । मातुः । सुरभौ । ऊं इति । लोके ।
युवा । कविः । पुरुनिःऽस्थः । ऋतऽवा । धर्ता । कृष्टीनां । उत । मध्ये । इद्धः ॥६॥

अयमग्निर्होता होमनिष्पादकः सन् यजीयान्यष्टव्यश्च सन् न्यसीदत् । निषसाद । कुत्रेति तदुच्यते । मातुः सर्वस्य निर्मातुर्भूम्या उपस्थ उत्संगे तत्रापि सुरभावाज्यादिसौरभ्ययुक्ते लोके सर्वैर्द्रष्टव्ये स्थाने वेदिलक्षणे । तत्रापि च युवा नित्यतरुणः सर्वत्र मिश्रितो वा कविर्मेधावी पुरुनिःष्ठो बहुस्थान ऋतावा यज्ञवान्धर्ता सर्वस्य धारक एवंभूतः सन् कृष्टीनामृत्विग्यजमानानां मध्य इद्धः समिद्धः सन् वर्तत इति शेषः ॥ ॥ १२ ॥

प्र णु त्यं विप्रमध्वरेषु साधुमग्निं होतारमीळते नमोभिः ।
आ यस्ततान रोदसी ऋतेन नित्यं मृजंति वाजिनं घृतेन ॥७॥
प्र । नु । त्यं । विप्रं । अध्वरेषु । साधुं । अग्निं । होतारं । ईळते । नमःऽभिः ।
आ । यः । ततान । रोदसी इति । ऋतेन । नित्यं । मृजंति । वाजिनं । घृतेन ॥७॥

त्वां तमग्निं नमोभिः स्तुतिभिर्नु क्षिप्रं प्रेळते। स्तुवंति। कीदृशं तं। विप्रं मेधाविनमध्वरेषु साधुं फलसाधकं होतारं होमनिष्पादकं। यो देवो रोदसी द्यावापृथिव्यावृतेनोदकेना ततान। विस्तारितवान्। अग्नौ प्रास्ता हुतिरादित्यद्वारा वृष्ट्युत्पादकत्वात्। अथवा ऋतेन सत्यभूतेन हविषा दिवं तथाभूतेन वृष्ट्यादिफलेन भुवं चा ततान। वाजिनमन्नवंतं देवं यजमाना नित्यं घृतेनोदकेनाज्येन वा मृजंति। परिचरंति॥

मार्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथिः शिवो नः।
सहस्रशृंगो वृषभस्तदोजा विश्वाँ अग्ने सहसा प्रास्यन्यान् ॥८॥
मार्जाल्यः। मृज्यते। स्वे। दमूनाः। कविऽप्रशस्तः। अतिथिः। शिवः। नः।
सहस्रऽशृंगः। वृषभः। ततऽओजाः। विश्वान्। अग्ने। सहसा। प्र। असि। अन्यान् ॥८॥

मार्जाल्यः संमार्जनीयोऽयमग्निर्मृज्यते। परिचर्यते। स्वे स्वकीये स्थाने। कीदृशोऽयं। दमूना दानमना दांतमना वा कविप्रशस्तः कविभिर्मेधाविभिः प्रशस्तः प्रकर्षेण स्तुत्यो नोऽस्माकमतिथिरतिथिवत्पूज्यः शिवः सुखकरश्च। सहस्रशृंगोऽपरिमितज्वालो वृषभो वर्षिता फलानां तदोजाः। यत्प्रसिद्धं बलं तेजो वास्ति तदेवौजो यस्य तादृशः। सर्वबलस्वरूप इत्यर्थः। अथ प्रत्यक्षवादः। हे अग्ने विश्वानन्यान्स्वव्यतिरिक्तान्सर्वान्सहसा बलेन प्रासि। प्रेति परेत्यर्थे। पराभवसि। व्याप्नु वा प्रभवसि॥

प्र सद्यो अग्ने अत्येष्यन्यानाविर्यस्मै चारुतमो बभूथ।
ईळेन्यो वपुष्यो विभावा प्रियो विशामतिथिर्मानुषीणां ॥९॥
प्र। सद्यः। अग्ने। अति। एषि। अन्यान्। आविः। यस्मै। चारुऽतमः। बभूथ।
ईळेन्यः। वपुष्यः। विभाऽवा। प्रियः। विशां। अतिथिः। मानुषीणां ॥९॥

हे अग्ने त्वं यजमानाय सद्यस्तदानीमेवान्यान्स्वसमानानत्येषि। अतिक्रामसि। यस्मै चारुतमः सन्नाविर्बभूथ। किंच त्वमीळेन्यः स्तुत्यो वपुष्यो वपुष्करो दीप्तिकरो वा विभावा विशिष्टदीप्तिमान्प्रियः प्रियभूतो विशां सर्वेषां प्राणिनां तथातिथिः पूज्यो मानुषीणां प्रजानां भवसि॥

तुभ्यं भरंति क्षितयो यविष्ठ बलिमग्ने अंतित ओत दूरात्।
आ भंदिष्ठस्य सुमतिं चिकिद्धि बृहत्ते अग्ने महि शर्म भद्रं ॥१०॥
तुभ्यं। भरंति। क्षितयः। यविष्ठ। बलिं। अग्ने। अंतितः। आ। उत। दूरात्।
आ। भंदिष्ठस्य। सुऽमतिं। चिकिद्धि। बृहत्। ते। अग्ने। महि। शर्म। भद्रं ॥१०॥

हे यविष्ठ युवतमाग्ने तुभ्यं क्षितयो मनुष्या भरंति। संपादयंति। किं। बलिं पूजां हविर्लक्षणामंतितोऽंतिकादुतापि च दूरात्। आ इति चार्थे। किंच भंदिष्ठस्यातिशयेन स्तोतुः सुमतिं स्तुतिमा चिकिद्धि। आजानीहि। हे अग्ने ते तव शर्म सुखमस्मभ्यं दातव्यं बृहन्महद्भद्रं स्तुत्यं च॥

आद्य रथं भानुमो भानुमंतमग्ने तिष्ठ यजतेभिः समंतं।
विद्वान्पथीनामुर्व१ंतरिक्षमेह देवान्हविरद्याय वक्षि ॥११॥
आ। अद्य। रथं। भानुऽमः। भानुऽमंतं। अग्ने। तिष्ठ। यजतेभिः। सम्ऽअंतं।
विद्वान्। पथीनां। उरु। अंतरिक्षं। आ। इह। देवान्। हविःऽअद्याय। वक्षि ॥११॥

हे भानुमो दीप्तिमन्नग्ने अद्यास्मिन्यागदिने भानुमंतं दीप्तिमंतं सुमतं समीचीनप्रांतोपेतं रथं यजतैर्यष्टव्यैर्देवैः सह तिष्ठ । आरोह । विद्वान्यष्टव्यदेवपरिज्ञानवांस्त्वं पथीना देवयजनमार्गान्प्रति ॥ द्वितीयार्थे षष्ठी ॥ उर्वंतरिक्षं प्रभृतं अंतरिक्षं देवान्यष्टव्यान्हविरद्याय हविर्भक्षणायेहा वक्षि । आवहसि ॥

अवो॑चाम क॒वये॒ मेध्या॑य॒ वचो॑ वं॒दारु॑ वृष॒भाय॒ वृष्णे॑ ।
गवि॑ष्ठिरो॒ नम॑सा॒ स्तोम॑म॒ग्नौ दि॒वी॑व रु॒क्मम॑रु॒व्यंच॑मश्रेत् ॥१२॥
अवो॑चाम । क॒वये॑ । मेध्या॑य । वचः॑ । वं॒दारु॑ । वृ॒ष॒भाय॑ । वृष्णे॑ ।
गवि॑ष्ठिरः । नम॑सा । स्तोम॑म् । अ॒ग्नौ । दि॒वि॒ऽइ॑व । रु॒क्मम् । उ॒रु॒ऽव्यंच॑म् । अ॒श्रे॒त् ॥१२॥

वयमात्रेयाः कवये मेधाविने मेध्याय मेधार्हाय वृषभाय वर्षकाय फलानां वृष्णे सेक्त्रे यूने वंदारु वंदनशीलं वचः स्तोत्रमवोचाम । अथ ऋषिरात्मानं परोक्षमिव निर्दिश्य स्तुतिमुपसंहरति । गविष्ठिरोऽयमृषिर्नमसा नमस्कारेण हविषा वा युक्तं स्तोमं स्तोत्रमग्नावश्रेत् । श्रयति स्म । दिवि रुक्मं रोचमानमुरुव्यंचमुरुगमनमादित्यमिव ॥ ॥१३॥

कुमारं मातेति द्वादशर्चं द्वितीयं सूक्तं । अत्रेः पुत्रः कुमार ऋषिर्जननाम्नः पुत्रो वृशो वोभौ वात्र ऋषी । कर्मेतं त्वं वि ज्योतिषेत्यनयोस्तु वृश एव नोभौ न कुमारः । अंत्या षट्पंचाशदक्षरा शक्वरी शिष्टास्त्रिष्टुभः । अग्निर्देवता । अत्रानुक्रमणिका । कुमारं कुमारो वृशो वा जान उभौ वा शक्वर्यंतं कर्मेत्यृचोस्तु वृश एवेति ॥ प्रातरनुवाकाश्विनशस्त्रयोरस्यापि सूक्तस्य विनियोग उक्तः पूर्वसूक्तेन सह ॥

कु॒मा॒रं मा॒ता यु॑व॒तिः समु॑ब्धं॒ गुहा॑ बिभर्ति॒ न द॑दाति पि॒त्रे ।
अनी॑कमस्य॒ न मि॒नज्जना॑सः पु॒रः प॑श्यंति॒ निहि॑तमर॒तौ ॥१॥
कु॒मा॒रम् । मा॒ता । यु॒व॒तिः । सम्ऽउ॑ब्धम् । गुहा॑ । बि॒भ॒र्ति॒ । न । द॒दा॒ति॒ । पि॒त्रे ।
अनी॑कम् । अ॒स्य॒ । न । मि॒नत् । जना॑सः । पु॒रः । प॒श्यं॒ति॒ । निऽहि॑तम् । अ॒र॒तौ ॥१॥

शाट्यायनब्राह्मणोक्त इतिहास इहोच्यते । राजा त्रैवृष्ण ऐक्ष्वाकस्त्र्यरुणोऽभवदस्य च ॥ पुरोहितो वृशो जान ऋषिरासीत्तदा खलु । संगृह्णाति रथान्राज्ञा रक्षणाय पुरोहिताः ॥ त्र्यरुणस्य वृशो रश्मीन्सजग्राह पुरोहितः । कुमारो वर्त्मनि क्रीडन्रथचक्रेण घातितः ॥ छिन्नः कुमारश्चक्रेण समाराध पुरोहितः । त्वं हतास्यैति राजानं राजा चापि पुरोहितं ॥ त्वं हंतास्य कुमारस्य नाहमित्यब्रवीत्तदा । यतस्त्वं रथवेगस्य नियतातस्त्वया हतः ॥ रथस्वामी यतो राजन् तस्मात्त्वं तस्य घातकः । एवं विवदमानौ तावित्याकून्प्रष्टुमागतौ ॥ तौ पप्रच्छतुरिक्ष्वाकून् केनासौ निहतो द्विजाः । तेऽब्रुवन्नथयंतारं हंतारं वृशसंज्ञकं ॥ स वृशो वार्शसाम्ना तं कुमारं समजीवयत् । एवमाख्याय तत्रैव पुनरन्यदुदीरितं ॥ यत इक्ष्वाकवो राजानं हंतारमृषिमब्रुवन् । तस्मात्तेषां गृहेष्वग्नेस्तेजो निर्गतमप्सु च ॥ गृहे पाकादयो नासन् तत्कारणमचिंतयन् । वृशं कुमारहंतारं यदवोचाम तेन नः ॥ अपाक्रमद्धरो वह्निराह्वयाम वृशं वयं । इति संचिंत्य तमृषिमाह्वयामासुरादरात् ॥ समागत्य ततः शीघ्रं तेषां समीहेहरो भवेत् । इति वार्शेन साम्नासावकामयत पूर्ववत् ॥ एवं गायन्स ऋषिर्ब्रह्महत्या भार्याजाता त्र्यरुणस्योर्नृपस्य । पिशाचवेषा हरः आदाय चाग्निर्गृहान्नीत्वा कशिपौ स्थापयती ॥ दृष्ट्वा सम्यक् तदुदरस्योपायित्वा साम्ना पश्चाद्योजयामास चापि । ततः सतेजाः संजातोऽभवत्पाकादिः पूर्ववत् ॥ एवं शाट्यायनेनोक्त ताड्यको क्रमथोच्यते । वृशः पुरोधा अभवत्त्र्यरुणस्य महीपतेः ॥ स रथं धावयन्राजा ब्राह्मणस्य कुमारकं । चिच्छेद रथचक्रेण प्रमादात्सोऽब्रवीद्वृशं ॥ पुरोहिते वर्तमाने त्वयि मां हंति रागतः । एषा त्वयार्पिता त्र्या ऋषिमित्यवदीन्नृपः ॥ स ऋषिर्वार्शसाम्ना तं कुमारमुदजीवयत् ॥ माता कुमारस्योत्पादयित्री युवतिर्यौवनोपेता कुमारं पथि संचरंतं समुब्धं चक्रेण हतं गुहा गुहायां बिभर्ति । धारयति । न ददाति पित्रे तस्य जनकाय । यद्वा । माता सर्वस्य निर्मात्री पृथिवी समुब्धं सम्यक् निगूढं गुहा बिभर्ति । न ददाति पित्रे । अस्य कुमारस्यानीक

रूपं मिनत हिंसितं जनासो जना न पश्यंति। किंतु अरतावरमणे देशे निहितं स्थितं पुरः पुरोदेशे पश्यंति। अथवायं वृशेन पुनरुज्जीवितः कुमार आत्मानमपरोक्षतया वक्ति। कथयति। जानो वा तं जीवयित्वा वक्ति। अथवा सूक्तस्याग्नेयत्वात्कुमार इत्यग्निरुच्यते। तं मातारणिर्युवतिर्निश्रयंती समृब्धं निगूढं गुहाया बिभर्ति। पित्र उत्पादकाय यजमानाय न ददाति। अस्याग्नेर्मिनत हिंसत दाहकमनीकं तेजो जना न पश्यंति। किंतु अरतावरण्यां हितं पश्यंति॥

कमेतं त्वं युवते कुमारं पेषी बिभर्षि महिषी जजान।
पूर्वीर्हि गर्भः शरदो ववर्धापश्यं जातं यदसूत माता॥२॥
कं। एतं। त्वं। युवते। कुमारं। पेषी। बिभर्षि। महिषी। जजान।
पूर्वीः। हि। गर्भः। शरदः। ववर्ध। अपश्यं। जातं। यत्। असूत। माता॥२॥

अत्राग्नेरुत्पाद्यमानत्वात्कुमारशब्देन व्यवहारः। हे युवते त्वं कमेतं कुमारं पेषी हिंसिका पिशाचिका सती बिभर्षि। एवं वृशाख्यो महर्षिः कशिपुनाच्छन्नमग्निंहरो ब्रूते। त्वयानुत्पादितत्वाद्धारणमनुचितमित्यर्थः। महिषी महती पूजनीयारणिरेन जजान। अजनयत। तदेवाह। गर्भः शिशोर्ग्राहकोऽरण्याः संबंधी गर्भो हि यस्मात्पूर्वीः शरदो गतानंनेकान संवत्सरान्ववर्ध। ववृधे। अहं च ततो जातमपश्यं। यद्यस्मान्मातारणिरसूत। उदपादयत। राजकुमारपक्षे हे युवते भूदेवि कमेतं कुमारं पेषी सती बिभर्षि। अवशिष्टं कुमारजननपरतया योज्यं। एवमुत्तरत्रापि कुमाराग्निहरसोः परत्वेन यथोचितं व्याख्येयं॥

हिरण्यदंतं शुचिवर्णमारात्क्षेत्रादपश्यमायुधा मिमानं।
ददानो अस्मा अमृतं विपृक्वत्किं मामनिंद्राः कृणवन्ननुक्थाः॥३॥
हिरण्यऽदंतं। शुचिऽवर्णं। आरात्। क्षेत्रात्। अपश्यं। आयुधा। मिमानं।
ददानः। अस्मै। अमृतं। विपृक्वत्। किं। मां। अनिंद्राः। कृणवन्। अनुक्थाः॥३॥

हिरण्यदंतं हिरण्यसदृशदंतस्थानीयज्वालोपेतं शुचिवर्णं प्रदीप्तवर्णमायुधायुधान्यायुधस्थानीयान स्फुलिंगान ज्वाला वा मिमानं निर्मिमाणमग्निमारात्समीपे क्षेत्रात क्षेत्रे देशेऽपश्यं। पश्येय। एवं वृशः कामयते। अहमस्मा अग्नयेऽमृतमविनाश्यमृतत्वसाधनं वा विपृक्वत्सर्वतो व्याप्तं हविः स्तोत्रं वा ददानः। दातास्मि। मामनिंद्राः। इंद्रः परमैश्वर्योऽग्निः। तद्रहिता अनिंद्राः। इंद्रमयजंत इत्यर्थः। अनुक्था अस्तुतय इंद्रमस्तुवतश्च किं कृणवन। किं कुर्युः॥

क्षेत्रादपश्यं सनुतश्चरंतं सुमद्यूथं न पुरु शोभमानं।
न ता अगृभ्रन्नजनिष्ट हि षः पलिक्नीरिद्युवतयो भवंति॥४॥
क्षेत्रात्। अपश्यं। सनुतः। चरंतं। सुऽमत्। यूथं। न। पुरु। शोभमानं।
न। ताः। अगृभ्रन। अजनिष्ट। हि। सः। पलिक्नीः। इत्। युवतयः। भवंति॥४॥

अहं वृश इदानीं क्षेत्रात क्षेत्रे सनुतः। अंतर्हितनामैतत। निगूढं चरंतमरण्यां यूथं न गवां समूहमिव सुमत्स्वयमेव पुरु बहु शोभमानमपश्यं। पश्यामि। पुरा हरसः पिशाच्याक्रमणकाले ता ज्वाला निर्वीर्या नागृभ्रन्। नागृह्णत नराः। इदानीं सोऽग्निरजनिष्ट हि। हरसा प्रादुरभूत्खलु। अत एव हेतोः पलिक्नीरित्पलिक्न्यः पलिता जीर्णा ज्वाला एवेदानीं युवतयो भवंति॥

के मे मर्यकं वि यवंत गोभिर्न येषां गोपा अरणश्चिदास ।
य ईं जगृभुरव ते सृजंत्वाजाति पश्व उप नश्चिकित्वान् ॥५॥
के । मे । मर्यकं । वि । यवंत । गोभिः । न । येषां । गोपाः । अरणः । चित् । आस ।
ये । ईं । जगृभुः । अव । ते । सृजंतु । आ । अजाति । पश्वः । उप । नः । चिकित्वान् ॥५॥

के मे मदीयं मर्यकं मर्त्यसंघं राष्ट्रं गोभिः सह वि यवत । वियुक्तमकुर्वन् । गा भृत्यांश्च व्ययोजयन् । येषां गोपा अस्माकं गोपयितारणश्चिदभिगता नाम । बभूव । सोऽयमग्निः । ये त्वपिण ईमेनं जनसंघं राष्ट्रं जगृभुः । गृह्णंति । तेऽव सृजंतु । नश्यंतु । किंच चिकित्वान् चेतनावानस्मद्विषयज्ञानवानग्निर्नोऽस्माकं पश्वः पशुनुपाजाति । उपागच्छति ॥

वसां राजानं वसतिं जनानामरातयो नि दधुर्मर्त्येषु ।
ब्रह्माण्यत्रेरव तं सृजंतु निंदितारो निंद्यासो भवंतु ॥६॥
वसां । राजानं । वसतिं । जनानां । अरातयः । नि । दधुः । मर्त्येषु ।
ब्रह्माणि । अत्रेः । अव । तं । सृजंतु । निंदितारः । निंद्यासः । भवंतु ॥६॥

वसां वसतां प्राणिनां राजानं स्वामिनं जनानां प्राणिनां वसतिमावासभूतं च्यवनमकृत्लक्षणमग्निं वाऽरातयो नि दधुः । अगोपयन् । मर्त्येषु लोकेषु मध्ये । अत्रेरत्रिगोत्रस्य वृशस्य ब्रह्माणि मंत्राः स्तोत्राणि वा तं कुमारमग्निं वाव सृजंतु । अथवात्रेरत्रिगोत्रस्य कुमारं ब्रह्माणि । यद्वा । वृशस्य ब्रह्माण्यत्रेरत्रिगोत्रं ॥ कर्मणि षष्ठी ॥ तं कुमारमव सृजंतु । विसृजंतु । निंदितारोऽस्मन्निंदका निंद्यासोऽस्माभिर्निंद्या भवंतु । अत्रेर्ब्रह्माणीत्यत्र दुपजीव्य वृशमप्यात्रेयं वदति । आत्रेयः कुमार इति पक्षे स एव प्राणमयमात्मानमवसृजंत्वित्याशास्ते ॥ ॥१४॥

अजःसव आहवनीयोपस्थाने शुनश्चिच्छेपमित्येषा । अग्निमाहवनीयमुपस्थापयाचकार शुनश्चिच्छेपं निदितं सहस्रात् । ऐ॰ ब्रा॰ ७ १७ । इति ब्राह्मणं ॥

शुनश्चिच्छेपं निदितं सहस्राद्यूपादमुंचो अशमिष्ट हि षः ।
एवास्मदग्ने वि मुमुग्धि पाशान्होतश्चिकित्व इह तू निषद्य ॥७॥
शुनःऽशेपं । चित् । निऽदितं । सहस्रात् । यूपात् । अमुंचः । अशमिष्ट । हि । सः ।
एव । अस्मत् । अग्ने । वि । मुमुग्धि । पाशान् । होतरिति । चिकित्वः । इह । तु । निऽसद्य ॥७॥

हे अग्ने निदितं नितरां बद्धं शुनःशेपमृषिं सहस्रादनेकपाशाद्यूपादमुंचः । अमोचयः । चिदिति पूरणः । शुनःशेपमिति पदस्य मध्ये पदांतरस्य संहितायां व्यत्ययेनावस्थितिः । स ऋषिरशमिष्ट हि । शांतवान् खलु । यद्वा । स हि यस्मादशमिष्ट । स्तुतिकर्मैतत् । अस्तावीत् । तस्मादमुच इति संबंधः । एवमेवमस्मदस्मत्तः पाशान्मुमुग्धि । विमोचय । हे होतर्हे चिकित्वश्चेतनावन्नग्ने इह तु वेद्यां निषद्यावस्थाय ॥

हृणीयमानो अप हि मदैयेः प्र मे देवानां व्रतपा उवाच ।
इंद्रो विद्वाँ अनु हि त्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगां ॥८॥
हृणीयमानः । अप । हि । मत् । ऐयेः । प्र । मे । देवानां । व्रतऽपाः । उवाच ।
इंद्रः । विद्वान् । अनु । हि । त्वा । चचक्ष । तेन । अहं । अग्ने । अनुऽशिष्टः । आ । अगां ॥८॥

हे अग्ने हृणीयमानः क्रुध्यंस्त्वं मत मत्तोऽपेयेहि। अपागाः खलु ॥ ईङ् गतावित्यस्मात् छान्दसे विकरणस्य लुक् मध्यमे छान्दसे परस्मैपदे आडागमे वृद्धौ व्यत्ययेन श्यनोऽकारस्य एकारे च कृते रूपं ॥ मे मह्यं देवानां व्रतपाः कर्मणः पालक इन्द्रः प्रोवाच हि। स एव विद्वान् त्वानु चचक्ष। त्वां ददर्श। तेनानुशिष्टोऽहं हे अग्ने त्वामागामिति। एवं वृश आह ॥

वि ज्योति॑षा बृह॒ता भा॑त्य॒ग्निरा॒विर्विश्वा॑नि कृणुते महि॒त्वा।
प्रादे॑वीर्मा॒याः स॑हते दु॒रेवाः॒ शिशी॑ते॒ शृङ्गे॒ रक्ष॑से वि॒निक्षे॑ ॥९॥
वि। ज्योति॑षा। बृ॒ह॒ता। भा॒ति॒। अ॒ग्निः। आ॒विः। विश्वा॑नि। कृ॒णु॒ते॒। म॒हि॒ऽत्वा।
प्र। अदे॑वीः। मा॒याः। स॒ह॒ते॒। दुः॒ऽएवाः॑। शिशी॑ते। शृङ्गे॒ इति॑। रक्ष॑से। वि॒ऽनिक्षे॑ ॥९॥

अयमग्निर्ज्योतिषा तेजसा बृहता महता वि भाति। विशेषेण दीप्यते। अथ तथाभूतः सन् महित्वा स्वमहत्त्वेन विश्वानि सर्वाणि पदार्थजातान्याविष्कृणुते। प्रकटीकरोति। एवं प्रवृद्धोऽग्निरदेवीरदेवनशीला आसुरीर्माया दुरेवा दुःखगमनाः प्रसहते। अभिभवति। किंच शिशीते। तीक्ष्णीकरोति। शृङ्गे शृङ्गाणि। शृङ्गसदृशीर्हिंसिका वा ज्वालाः शिशीते। तीक्ष्णीकरोति। किमर्थं। रक्षसे विनिक्षे रक्षसो नाशाय। निश्यति शृङ्गे रक्षसो विनिक्षणनाय। नि० ४ १८। इति यास्कः ॥

उ॒त स्वा॒नासो॑ दि॒वि ष॑न्त्व॒ग्नेस्ति॒ग्मायु॑धा॒ रक्ष॑से॒ हन्त॒वा उ॑।
मदे॑ चिदस्य॒ प्र रु॑जन्ति॒ भामा॒ न व॑रन्ते परि॒बाधो॒ अदे॑वीः ॥१०॥
उ॒त। स्वा॒नासः॑। दि॒वि। स॒न्तु॒। अ॒ग्नेः। ति॒ग्मऽआ॑युधाः। रक्ष॑से। हन्त॒वै। ऊं इति॑।
मदे॑। चि॒त्। अ॒स्य॒। प्र। रु॒ज॒न्ति॒। भामाः॑। न। व॒र॒न्ते॒। प॒रि॒ऽबाधः॑। अदे॑वीः ॥१०॥

उतापि चाग्नेः स्वानासः शब्दं कुर्वाणा ज्वाला दिवि षन्तु। द्युलोके प्रादुर्भवन्तु। किमर्थं। तिग्मायुधास्तीक्ष्णायुधस्थानीया ज्वालाः। रक्षसे हन्तवा उ रक्षसो हननाय। उ इति पूरणः। मदे चित् हर्षे सत्यस्याग्नेर्भामाः क्रोधा दीप्तयो वा प्र रुजन्ति। प्रकर्षेण भङ्गं गच्छन्ति पीडयन्ति वा रक्षांसि। परिबाधः परितो बाधिका अदेवीरदेवना आसुर्यः सेना न वरन्ते। न वारयन्त्येनं ॥

ए॒तं ते॒ स्तोमं॑ तुविजात॒ विप्रो॒ रथं॒ न धीरः॒ स्वपा॑ अतक्षं।
यदी॑दग्ने॒ प्रति॒ त्वं दे॑व॒ हर्याः॒ स्व॑र्वतीर॒प ए॑ना जयेम ॥११॥
ए॒तं। ते॒। स्तोमं॑। तु॒वि॒ऽजा॒त॒। विप्रः॑। रथं॑। न। धीरः॑। सु॒ऽअपाः॑। अ॒त॒क्ष॒म्।
यदि॑। इत्। अ॒ग्ने॒। प्रति॑। त्वं। दे॒व॒। हर्याः॑। स्वः॑ऽवतीः। अ॒पः। ए॒न॒। ज॒ये॒म॒ ॥११॥

हे तुविजात बहुभावमापन्नाग्ने ते त्वदर्थमेतं स्तोममेतत्स्तोत्रं विप्रो मेधावी स्तोता रथं न रथमिव धीरः स्वपाः शोभनकर्माहमतक्षं। समपादयं। हे अग्ने देव त्वं यदीदेनं स्तोमं प्रति हर्याः। प्रतिकामयेथाः। तर्हि स्वर्वतीः स्वरणवतीर्व्याप्तिमतीरप एनेनेन जयेम। प्राप्नुयाम ॥

तु॒वि॒ग्रीवो॑ वृष॒भो वा॑वृधा॒नो॑ऽश॒त्र्व१॒॑र्यः सम॑जाति॒ वेदः॑।
इती॒मम॒ग्निम॒मृता॑ अवोचन्ब॒र्हिष्म॑ते॒ मन॑वे॒ शर्म॑ यंसद्ध॒विष्म॑ते॒ मन॑वे॒ शर्म॑ यंसत् ॥१२॥

तुविऽग्रीवः । वृषभः । ववृधानः । अशत्रु । अर्यः । सं । अजाति । वेदः ।
इति । इमं । अग्निं । अमृताः । अवोचन । बर्हिष्मते । मनवे । शर्म । यंसत ।
हविष्मते । मनवे । शर्म । यंसत ॥१२॥

तुविग्रीवो बहुज्वालः प्रभूतग्रीवो वा वृषभो वर्षिता कामानां ववृधानो वर्धमानोऽग्निरर्योऽरेर्वेदो धनमशत्रुकंटकं समजाति । संयोजयति । इतीममर्थमग्निममृता अन्ये देवा अवोचन । यस्मादेव तस्माद्बर्हिष्मते यागवते मनवे मनुष्याय यजमानाय शर्म सुखं यंसत । यच्छतु । हविष्मते च शर्म यंसत ॥ ॥१५॥

त्वमग्ने वरुण इति द्वादशर्चं तृतीयं सूक्तमात्रेयस्य वसुश्रुतस्यार्षं त्रैष्टुभमाग्नेयं । त्वमग्ने वसुश्रुत इत्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगोऽबोध्यग्निरित्युक्तः ॥

त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः ।
त्वे विश्वे सहसस्पुत्र देवास्त्वमिंद्रो दाशुषे मर्त्याय ॥१॥
त्वं । अग्ने । वरुणः । जायसे । यत् । त्वं । मित्रः । भवसि । यत् । संऽइद्धः ।
त्वे इति । विश्वे । सहसः । पुत्र । देवाः । त्वं । इंद्रः । दाशुषे । मर्त्याय ॥१॥

हे अग्ने त्वं वरुणस्तमसां वारको रात्र्यभिमानी देवोऽपि त्वमेव यद्यदा जायसे । किंच त्वं मित्रोऽहरभिमानी देवः प्रमीतेस्त्राता यद्यदा समिद्धः । त्वमुत्पन्नमात्रः सन् तमो निवारयसि प्रवृद्धः सन् हितकारी भवसीत्यर्थः । त्वे त्वयि विश्वे सर्वेऽपि देवा वर्तंते । त्वद्दत्तेन हविषा तेषां जीवनात् । ते देवा विश्वतोऽग्नि प्राविशन्निति हि श्रुतेः । हे सहसस्पुत्र बलेन मथ्यमानत्वात् । किंच त्वमिंद्रः स्वामी दाशुषे हविर्दात्रे मर्त्याय यजमानाय ॥

विवाहे चतुर्थ्यामाज्याहुतौ त्वमर्यमेत्येषा । सूत्रितं च । त्वमर्यमा भवसि यत्कनीनामिति विवाहे चतुर्थी । आ° गृ° १ ४ । इति ॥

त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन्गुह्यं बिभर्षि ।
अंजंति मित्रं सुधितं न गोभिर्यद्दंपती समनसा कृणोषि ॥२॥
त्वं । अर्यमा । भवसि । यत् । कनीनां । नाम । स्वधाऽवन् । गुह्यं । बिभर्षि ।
अंजंति । मित्रं । सुऽधितं । न । गोभिः । यत् । दंपती इति दंऽपती । सऽमनसा । कृणोषि ॥२॥

हे अग्ने त्वमर्यमा भवसि । सर्वेषां नियमितासि । यद्यदा कनीनां कन्यकानां संबध्यसि । किंच हे स्वधावन् हविर्लक्षणान्नवन् गुह्यं गोपनीयं नाम बिभर्षि वैश्वानर इति तन्नाम । सुधितं सुष्ठु निहितं मित्रं न मित्रमिव गोभिः । विकारे प्रकृतिशब्दः । गोविकारैः क्षीरादिभिरंजंति । यद्यस्माद्दंपती जायापती समनसा समानमनस्कौ कृणोषि । करोषि ॥

तव श्रिये मरुतो मर्जयंत रुद्र यत्ते जनिम चारु चित्रं ।
पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनां ॥३॥
तव । श्रिये । मरुतः । मर्जयंत । रुद्र । यत् । ते । जनिम । चारु । चित्रं ।
पदं । यत् । विष्णोः । उपऽमं । निऽधायि । तेन । पासि । गुह्यं । नाम । गोनां ॥३॥

अनयाग्नेर्माध्यमिको मूर्तिरुच्यते। हे अग्ने तव श्रिये श्रयणाय मरुतोऽपोऽंतरिक्ष्या मर्जयंत। मार्जयंति। हे रुद्र वृष्ट्या रुद्रवद्वर्धितरग्ने ते तव यज्जनिम जन्म वैद्युतलक्षणं चारु चरणीयं चित्रं चायनीयं च। तत्कथमिति चेदुच्यते। विष्णोर्व्यापनशीलस्य देवस्योपम गृह्यमगम्यं यत्पदं निधायि। अनेनांतरिक्षमुक्तं। उपमेयमिव विष्णोर्मध्यम पदं तस्मान्नांतरिक्षं पश्यंतीति ब्राह्मणं। तेन गोनामुदकानां गुह्यं नाम नामानि पासि। रक्षसि॥

तव श्रिया सुदृशो देव देवाः पुरू दधाना अमृतं सपंत।
होतारमग्निं मनुषो नि षेदुर्दशस्यंत उशिजः शंसमायोः॥४॥
तव। श्रिया। सुऽदृशः। देव। देवाः। पुरु। दधानाः। अमृतं। सपंत।
होतारं। अग्निं। मनुषः। नि। सेदुः। दशस्यंतः। उशिजः। शंसं। आयोः॥४॥

हे देवाग्ने सुदृशस्तव श्रिया समृद्ध्या देवा इंद्रादयः पुर्वत्यधिकं दधानास्त्वयि प्रीति धारयंतोऽमृत सपंत। स्पृशंति। होतारं होमनिष्पादकमग्नि मनुषो मनुष्या नि षेदुः। परिचरंत्यृत्विजः। किं कुर्वंतः। दशस्यंतो हविर्वितरंतः शंसं फलमुशिजः कामयमानस्यायोर्मनुष्यस्य यजमानस्यार्थं॥

न त्वद्धोता पूर्वो अग्ने यजीयान्न काव्यैः परो अस्ति स्वधावः।
विशश्च यस्या अतिथिर्भवासि स यज्ञेन वनवद्देव मर्तान्॥५॥
न। त्वत्। होता। पूर्वः। अग्ने। यजीयान्। न। काव्यैः। परः। अस्ति। स्वधाऽवः।
विशः। च। यस्याः। अतिथिः। भवासि। सः। यज्ञेन। वनवत्। देव। मर्तान्॥५॥

हे अग्ने त्वत्त्वत्तोऽन्यो नास्ति होता पुर्वः पुरकः पुराणो वा यजीयान्यष्टा वा। काव्यैः स्तोत्रैः स्तुत्यः परः परस्मात्परस्मिन्नपि काले नास्ति। हे देव हे स्वधावोऽन्नवन् यस्या विशः प्रजाया ऋत्विग्रूपाया अतिथिर्भवासि। अतिथिवत्पूज्यो भवसि। स यज्ञेन मर्तानस्मद्विष्टून वनवत। वृश्चति। हिनस्ति। यद्वा। मर्तान्परिचारकान्वनवत। संभजेत॥

वयमग्ने वनुयाम त्वोता वसूयवो हविषा बुध्यमानाः।
वयं समर्ये विदथेष्वह्नां वयं राया सहसस्पुत्र मर्तान्॥६॥
वयं। अग्ने। वनुयाम। त्वाऽऊताः। वसुऽयवः। हविषा। बुध्यमानाः।
वयं। सऽमर्ये। विदथेषु। अह्नां। वयं। राया। सहसः। पुत्र। मर्तान्॥६॥

हे अग्ने वयं यजमानास्त्वोतास्त्वया रक्षिताः संतो वनुयाम। शत्रून्पीडयाम संभजेमहि वा धनं। कीदृशा वयं। वसूयवो वसुकामा हविषा त्वां बुध्यमाना बोधयंतो वयं समर्ये समरणे जयेम शत्रूनिति शेषः। विदथेषु यागेषु प्राप्नुयाम बलं। यद्वा। वनुयामेत्येतदनुषज्यते। अह्नां सर्वेष्वहःसु। किंच वयं हे सहसस्पुत्र बलस्य पुत्र पालक वाग्ने राया धनेन सह मर्त्यान्पुत्रभृत्यादीन लभेमहि॥ ॥१६॥

यो न आगो अभ्येनो भरात्यधीदघमघशंसे दधात।
जही चिकित्वो अभिशस्तिमेतामग्ने यो नो मर्चयति द्वयेन॥७॥
यः। नः। आगः। अभि। एनः। भराति। अधि। इत्। अघं। अघऽशंसे। दधात।
जहि। चिकित्वः। अभिऽशस्तिं। एतां। अग्ने। यः। नः। मर्चयति। द्वयेन॥७॥

यो मर्त्य आगोऽपराधमेनः पापं च नोऽस्मभ्यमभि भराति । अभितः करोति । तस्मिन्नघशंसेऽघं पापमधि दधात । ददात्वग्निः । इर्दिति पुरणः । आगोऽपराधं यो मर्त्यमिदं करोति तस्मा एवाग्निस्तत्करोत्वित्यर्थः । अथ प्रत्यक्षेणोच्यते । हे अग्ने एतामभिशस्तिं जहि । उत्तरत्र यच्छब्दश्रवणात्तदानुगुण्येनेनमभिशासकमिति व्याख्येयं । योऽभिशस्ता नोऽस्मान्कयेनचित्केनागसेनसा वा मर्चयति । बाधते । तमिति ॥

त्वाम॒स्या व्यु॒षि दे॑व॒ पूर्वे॑ दू॒तं कृ॑ण्वा॒ना अ॑यजंत ह॒व्यैः ।
सं॒स्थे यद॑ग्न ईय॑से रयी॒णां दे॒वो मर्तै॒र्वसु॑भिरि॒ध्यमा॑नः ॥८॥
त्वां । अ॒स्याः । वि॒ऽउषि॑ । दे॒व॒ । पूर्वे॑ । दू॒तं । कृ॒ण्वा॒नाः । अ॒य॒जं॒त॒ । ह॒व्यैः ।
सं॒ऽस्थे । यत् । अ॒ग्ने॒ । ईय॑से । र॒यी॒णां । दे॒वः । मर्तैः॑ । वसु॑ऽभिः । इ॒ध्यमा॑नः ॥८॥

हे अग्ने त्वामस्या रात्रेर्व्युषि । व्युष्टायामुपसीत्यर्थः । पूर्वे पुरातना यजमाना दूतं देवानां प्रेरकं कृण्वानाः कुर्वाणा अयजन्त हव्यैर्हविर्भिः साधनैः रयीणां हविर्लक्षणानां संस्थे सस्थाने आसादने सति हे अग्ने यद्यदीयसे । गच्छसि । देवो द्योतमानो मर्तैर्मनुष्यैर्ऋत्विग्भिर्वसुभिर्वासकैरिध्यमानः समिध्यमानः सन् ॥

अ॒वं स्पृ॑धि पि॒तरं॒ योधि॑ वि॒द्वान्पु॒त्रो यस्ते॑ सहसः सून ऊ॒हे ।
क॒दा चि॑कित्वो अ॒भि च॑क्षसे॒ नोऽग्ने॑ क॒दाँ ऋ॑तचिद्यातयासे ॥९॥
अ॒वं । स्पृ॒धि॒ । पि॒तरं॑ । योधि॑ । वि॒द्वान् । पु॒त्रः । यः । ते॒ । स॒ह॒सः॒ । सू॒नो॒ इति॑ । ऊ॒हे ।
क॒दा । चि॒कि॒त्वः॒ । अ॒भि । च॒क्ष॒से॒ । नः॒ । अ॒ग्ने॒ । क॒दा । ऋ॒त॒ऽचि॒त् । या॒त॒या॒से॒ ॥९॥

हे सहसः सूनो बलस्य पुत्राग्ने त्वमेव स्पृधि । पारय । योधि । पृथक्कुरु पापात् । यः पुत्रः पुत्रस्थानीयस्तव यो यजमानस्ते त्वा पितरं पालकं पितृभूतं विद्वान् जानन् ऊहे । वहति हविः । तमेव कुर्वित्यपरात्मानं परोक्षेणाह । हव्यवाळग्निरजरः पिता नः । ऋग्सं॰ ५. ४. २ । इति हि वक्ष्यति । यद्वा । पितृपुत्रभावो व्यत्ययेन । पितरं पितृवद्रक्षकं यजमानमेव स्पृधि योधि च यस्त्वं पुत्रः पुत्रवत्सदा रक्षणीयः । त्वं पुत्रो भवसि यस्मै ऽविधत । ऋग्सं॰ २. १. ९ । इति हि श्रुतिः । हे चिकित्वश्चेतनावन्नग्ने कदा नोऽस्मानभि चक्षसे । अभिपश्यसि । कदा च ऋतचिद्यज्ञस्योदकस्य वा चेतयिता यातयासे । प्रेरयसि सन्मार्गेण ॥

भूरि॒ नाम॒ वंद॑मानो दधाति पि॒ता व॑सो॒ यदि॒ तज्जो॒षया॑से ।
कु॒विद्दे॒वस्य॒ सह॑सा चका॒नः सु॒म्नम॒ग्निर्व॑नते वावृधा॒नः ॥१०॥
भूरि॑ । नाम॑ । वंद॑मानः । द॒धा॒ति॒ । पि॒ता । व॒सो॒ इति॑ । यदि॑ । तत् । जो॒षया॑से ।
कु॒वित् । दे॒वस्य॑ । सह॑सा । च॒का॒नः । सु॒म्नं । अ॒ग्निः । व॒न॒ते॒ । व॒वृ॒धा॒नः ॥१०॥

भूरि प्रभूतं नाम त्वदीयं नाम वंदमानः सन् दधाति । धारयति । सामर्थ्याद्धविः । अथवा नामकं हविः प्रभूतं धारयति दातुं । पिता पालकस्त्वं हे वसो वासकाग्ने यदि तद्धविर्जोषयासे । सेवसे । देवस्य व्यवहर्तुर्यजमानस्य कुविद्बहु हविः सहसा बलेन युक्तः सन् चकानः कामयमानः । यद्वा कर्मणि षष्ठी । देवं यजमानं कामयमानोऽग्निर्ववृधानो वर्धमानो यजमानं वर्धयन्वा सुम्नं वनते । प्रयच्छति ॥

त्वमं॒ग ज॑रि॒तारं॑ यविष्ठ॒ विश्वा॑न्यग्ने दुरि॒ताति॑ पर्षि ।
स्ते॒ना अ॑दृश्रन्रि॒पवो॒ जना॒सोऽज्ञा॑तकेता वृजि॒ना अ॑भूवन् ॥११॥

त्वं । अंग । जरितारं । यविष्ठ । विश्वानि । अग्ने । दुःऽइता । अति । पर्षि ।
स्तेनाः । अदृश्रन् । रिपवः । जनासः । अज्ञातऽकेताः । वृजिनाः । अभूवन् ॥११॥

हे अंग स्वामिन्यविष्ठ युवतमाग्ने जरितारं स्तोतारमनुग्रहीतुं विश्वानि दुरिता दुरितान्यति पर्षि । अतिपारयसि । स्तेनास्तस्करा अदृश्रन् । दृश्यंते । रिपवो जनासः शत्रुभूता मनुष्या अज्ञातकेता अप्रज्ञातचिह्ना वृजिना अस्माभिर्वर्जिता अभूवन् । भवंति ॥

इमे यामासस्त्वद्रिगभूवन्वसवे वा तदिदागो अवाचि ।
नाहायमग्निरभिशस्तये नो न रीषते वावृधानः परा दात् ॥१२॥
इमे । यामासः । त्वद्रिक् । अभूवन् । वसवे । वा । तत् । इत् । आगः । अवाचि ।
न । अह । अयं । अग्निः । अभिऽशस्तये । नः । न । रिषते । ववृधानः । परा । दात् ॥१२॥

इमे यामासो गंतारः स्तोमास्त्वद्रिक् त्वदभिमुखा अभूवन् । भवंति । वा अथवा वसवे वासकाय तदागोऽपराधमाशासनरूपमवाचि । उक्तवानहमस्मि । इदं देहीति याचनमेवापराधः । इदिति पूरणः । यद्वा । तदिदं वक्ष्यमाणं शत्रुभिः कृतमागोऽवाचि । किंचायमग्निर्ववृधानः स्तुत्या वर्धमानः सन् नाह नैवाभिशस्तये निंदकाय नोऽस्मान् परा दात् । परादद्यात् । तथा रिषते हिंसकाय नैव परा दात् ॥ ॥१७॥

त्वामग्न इत्येकादशर्चं चतुर्थं सूक्तमांगिरसस्य वसुश्रुतस्यार्षं त्रैष्टुभमाग्नेयं । अनुक्रांतं च । त्वामग्न एकादशेति ॥ प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगोऽबोध्यग्निरित्यत्रोक्तः ॥

त्वामग्ने वसुपतिं वसूनामभि प्र मंदे अध्वरेषु राजन् ।
त्वया वाजं वाजयंतो जयेमाभि ष्याम पृत्सुतीर्मर्त्यानां ॥१॥
त्वां । अग्ने । वसुऽपतिं । वसूनां । अभि । प्र । मंदे । अध्वरेषु । राजन् ।
त्वया । वाजं । वाजऽयंतः । जयेम । अभि । स्याम । पृत्सुतीः । मर्त्यानां ॥१॥

हे अग्ने वसूनां वसुपतिं । वृत्त्यवृत्तिभ्यां वसूनां बाहुल्यं तत्स्वामित्वं चोक्तं । बहूनां धनानां स्वामिनं त्वामध्वरेषु यागेष्वभि प्र मंदे । आभिमुख्येन स्तौमि हे राजन् । किंच त्वयानुकूलेन वाजयंतोऽन्नमिच्छंतो वयं वाजं जयेम । किंच मर्त्यानां मरणधर्मकाणां पृत्सुतीः सेना अभि ष्याम । अभिभवेम ॥

दर्शपूर्णमासे पत्नीसंयाजे गृहपतेर्याज्येषा । सूत्रितं च । हव्यवाळग्निरजरः पिता न इति पत्नीसंयाजाः । आ० १. १०. । इति ॥ देवसुवां हविःष्वप्येषैव याज्या । सूत्रितं च । हव्यवाळग्निरजरः पिता नस्त्वं च सोम नो वशः । आ० ४ ११ । इति ॥

हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे ।
सुगार्हपत्याः समिषो दिदीह्यस्मद्र्यक्सं मिमीहि श्रवांसि ॥२॥
हव्यऽवाट् । अग्निः । अजरः । पिता । नः । विऽभुः । विभाऽवा । सुऽदृशीकः । अस्मे इति ।
सुऽगार्हपत्याः । सं । इषः । दिदीहि । अस्मद्र्यक् । सं । मिमीहि । श्रवांसि ॥२॥

अयं हव्यवाडग्निरजरोऽजीर्णः सन् नः पिता भवत्विति शेषः । किंच विभुर्व्याप्तः विभावा दीप्तिमान् सुदृशीकः शोभनदर्शनोऽस्मे अस्माकं भवतु । अथ प्रत्यक्षवादः । सुगार्हपत्याः शोभनगार्हपत्ययुक्तानीषोऽन्नानि सं दिदीहि । सम्यक् प्रकाशय । ददस्व वा । अस्मद्र्यक् अस्मदभिमुखं श्रवांस्यन्नानि सं मिमीहि । सम्यक् प्रयच्छ ॥

विशां कविं विश्पतिं मानुषीणां शुचिं पावकं घृतपृष्ठमग्निं ।
नि होतारं विश्वविदं दधिध्वे स देवेषु वनते वार्याणि ॥३॥
विशां । कविं । विश्पतिं । मानुषीणां । शुचिं । पावकं । घृतऽपृष्ठं । अग्निं ।
नि । होतारं । विश्वऽविदं । दधिध्वे । सः । देवेषु । वनते । वार्याणि ॥३॥

मानुषीणां विशां विश्पतिं सर्वासां मनुष्यरूपाणां प्रजानां पालकं स्वामिनं वा कविं मेधाविनं शुचिं शुद्धं दीप्तं वा पावकमन्येषां शोधकं घृतपृष्ठं प्रदीप्तपृष्ठोपलक्षितशरीरं । अथवा उपरितनभागाज्योपेतं होतारं होमनिष्पादकं विश्वविदं विश्वस्य वेत्तारमग्निं नि दधिध्वे । धारयथ । हे ऋत्विजः । स देवो देवेषु मध्ये वार्याणि वरणीयानि धनानि वनते । संभजतेऽस्मदर्थं । स्वयं वा वार्याणि हवींषि वनते ॥

जुषस्वाग्न इळया सजोषा यतमानो रश्मिभिः सूर्यस्य ।
जुषस्व नः समिधं जातवेद आ च देवान्हविरद्याय वक्षि ॥४॥
जुषस्व । अग्ने । इळया । सऽजोषाः । यतमानः । रश्मिऽभिः । सूर्यस्य ।
जुषस्व । नः । संऽइधं । जातऽवेदः । आ । च । देवान् । हविःऽअद्याय । वक्षि ॥४॥

हे अग्ने जुषस्व । सेवस्व स्तुतिं । इळया वेदिलक्षणया भूम्या वाचा वा सजोषाः समानप्रीतिः । तथा सूर्यस्य रश्मिभिर्यतमानः प्रयत्नमुषःकाले कुर्वन् । किंच हे जातवेदो जातस्य वेदितरग्ने नोऽस्मदीयां समिधं जुषस्व । सेवस्व । आवह च देवान्हविरद्याय हविरदनाय । आवाह्य वक्षि । वहसि तद्धविः ॥

अथ पवित्रेष्ट्यां स्विष्टकृतोऽनुवाक्यैषा । सूत्रितं च । जुष्टो दमूना अग्ने शर्धं महते सौभगायेति सयाज्ये । आ॰ २. १२. । इति ॥ मरुद्भ्यः पुरोडाशं सप्तकपालमित्यत्रापि स्विष्टकृतोऽनुवाक्या । अत्यासो न ये मरुतः स्वञ्चो जुष्टो दमूनाः । आ॰ २. १८ । इति ॥

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ॥५॥
जुष्टः । दमूनाः । अतिथिः । दुरोणे । इमं । नः । यज्ञं । उप । याहि । विद्वान् ।
विश्वाः । अग्ने । अभिऽयुजः । विऽहत्य । शत्रुऽयतां । आ । भर । भोजनानि ॥५॥

जुष्टः पर्याप्तो दमूना दानमना दांतमना वा अतिथिस्तद्वद्दुरोणे गृहे पूज्यः सन् इमं नोऽस्मदीयं यज्ञमुप याहि । उपगच्छ । विद्वान् जानन् हे अग्ने विश्वा अभियुजो सर्वानभियोक्तॄन्विहत्य शत्रूयतां तेषां भोजनान्यन्नानि धनान्या भर । आहर । अतिथिरभ्यतितो गृहान्भवतीत्यादिनिरुक्तं । नि॰ ४. ५ । द्रष्टव्यं ॥ ॥१८॥

वधेन दस्युं प्र हि चातयस्व वयः कृण्वानस्तन्वे३ स्वायै ।
पिपर्षि यत्सहसस्पुत्र देवान्त्सो अग्ने पाहि नृतम वाजे अस्मान् ॥६॥
वधेन । दस्युं । प्र । हि । चातयस्व । वयः । कृण्वानः । तन्वे । स्वायै ।
पिपर्षि । यत् । सहसः । पुत्र । देवान् । सः । अग्ने । पाहि । नृतम । वाजे । अस्मान् ॥६॥

हे अग्ने वधेनायुधेन दस्युमुपक्षपयितारं प्र हि चातयस्व । प्रणाशय । हीति पूरणः । वयः कृण्वानः

कुर्वाणस्तन्वे शरीराय स्वार्थे स्वीयाय। अथवा स्वार्थे तन्वे यजमानादिरूपाय पुत्राय वयोऽन्नं कुर्वाणः। यद्यस्मात् सहसस्पुत्रासि देवान्पिपर्षि। तर्पयसि। हे नृतम नेतृतमाग्ने स त्वं वाजे संग्रामेऽस्मान् पाहि। रक्ष॥

वयं ते अग्न उक्थैर्विधेम वयं हव्यैः पावक भद्रशोचे।
अस्मे रयिं विश्ववारं समिन्वास्मे विश्वानि द्रविणानि धेहि॥७॥
वयं। ते। अग्ने। उक्थैः। विधेम। वयं। हव्यैः। पावक। भद्रऽशोचे।
अस्मे इति। रयिं। विश्वऽवारं। सं। इन्व। अस्मे इति। विश्वानि। द्रविणानि। धेहि॥७॥

हे अग्ने ते त्वां वयमुक्थैः शस्त्रैर्विधेम। परिचरेम। वयं हव्यैर्हविर्भिर्विधेम। पावक शोधक हे भद्रशोचे कल्याणदीप्ते अस्मे अस्मभ्यं विश्ववारं विश्वैर्वरणीयं रयिं धनं समिन्व। प्रापय। अस्मे अस्मभ्यं विश्वानि द्रविणानि धेहि। स्थापय॥

अस्माकमग्ने अध्वरं जुषस्व सहसः सूनो त्रिषधस्थ हव्यं।
वयं देवेषु सुकृतः स्याम शर्मणा नस्त्रिवरूथेन पाहि॥८॥
अस्माकं। अग्ने। अध्वरं। जुषस्व। सहसः। सूनो इति। त्रिऽसधस्थ। हव्यं।
वयं। देवेषु। सुऽकृतः। स्याम। शर्मणा। नः। त्रिऽवरूथेन। पाहि॥८॥

हे अग्ने अस्माकमध्वरं जुषस्व। सेवस्व। हे सहसः सूनो हे बलस्य पुत्र त्रिषधस्थ त्रिषु क्षित्यादिषु स्थानेषु स्थित हव्यं हविर्जुषस्व। यद्वा। अध्वरं हविरिति योज्यं। अहिंसितं हविरित्यर्थः। वयं यजमाना देवेषु मध्ये सुकृतः शोभनापूर्वकर्तारः स्याम। भवेम। त्रिवरूथेन वाचिकादिभेदेन त्रिधा वरणीयेन शर्मणा सुखेन त्रिकक्ष्येण गृहेण वा नः पाहि। रक्ष॥

विश्वानि नो दुर्गहा जातवेदः सिंधुं न नावा दुरितातिं पर्षि।
अग्ने अत्रिवन्नमसा गृणानो३स्माकं बोध्यविता तनूनां॥९॥
विश्वानि। नः। दुःऽगहा। जातऽवेदः। सिंधुं। न। नावा। दुःऽइता। अति। पर्षि।
अग्ने। अत्रिऽवत। नमसा। गृणानः। अस्माकं। बोधि। अविता। तनूनां॥९॥

हे जातवेदो नोऽस्माकं दुर्गहा दुःखेन गाह्यानि दुःखेन भोग्यानि विश्वानि दुरितान्यति पर्षि। अति पारय। सिंधुं न नावा नदीं नाविको यथा तद्वत्। हे अग्ने अत्रिवत् अत्रेर्यथा तथास्माकं नमसा स्तोत्रेण गृणानः स्तूयमानः सन् अस्माकं तनूनामविता रक्षको बोधि। बुध्यस्व॥

पुत्रकामेष्ट्या यस्त्वेत्येषा प्रधानस्य याज्या। सूत्रितं च। यस्त्वा हृदा कीरिणा मन्यमानोऽग्निस्तुविश्रवस्तम। आ॰ २. १० । इति॥

यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्यां॥१०॥
यः। त्वा। हृदा। कीरिणा। मन्यमानः। अमर्त्यं। मर्त्यः। जोहवीमि।
जातऽवेदः। यशः। अस्मासु। धेहि। प्रऽजाभिः। अग्ने। अमृतऽत्वं। अश्यां॥१०॥

यो मर्त्यो मरणधर्माहममर्त्यमविनाशं त्वा त्वां कीरिणा स्तुत्यादिषु विक्षिप्तेन हृदा हृदयेन युक्तो मन्यमानः स्तुवन् जोहवीमि । अत्यर्थमाह्वयामि । यद्वा । स्तोतृवाचकेन कीरिणाशब्देन स्तुतिरुपलक्ष्यते । स्तुतियुक्तेन मनसा त्वां मन्यमानो जोहवीमि । हे जातवेदो यशो धनं प्रजा वा मासु धेहि । प्रजाभिरस्वहन्ताभिरहं अग्ने ऽहममृतत्वं संतत्यविच्छेदलक्षणमश्याम् । प्राप्नुयाम् । प्रजामनु प्रजायसे तदु ते मर्त्यामृतं । तै० ब्रा० १ ५ ५ ६ । इति हि श्रुतिः ॥

तस्यामेव पुत्रकामेष्ट्यां यस्मै त्वमित्येषाग्नेः पुत्रवतोऽनुवाक्या । यस्मै त्वं सुकृते जातवेदो यस्त्वा हृदा कीरिणा मन्यमानः । आ० २ १० । इति हि सूत्रितं ॥

यस्मै त्वं सुकृते जातवेद उ लोकमग्ने कृणवः स्योनं ।
अश्विनं स पुत्रिणं वीरवंतं गोमंतं रयिं नशते स्वस्ति ॥११॥

यस्मै । त्वं । सुऽकृते । जातऽवेदः । ऊं इति । लोकं । अग्ने । कृणवः । स्योनं ।
अश्विनं । सः । पुत्रिणं । वीरऽवंतं । गोऽमंतं । रयिं । नशते । स्वस्ति ॥११॥

हे जातवेदोऽग्ने त्वं यस्मै सुकृते सुकर्मणे यजमानाय । उ इति पूरणः । लोकं स्योनं सुखकरं कृणवः । अकरोः । यद्वा । लोकमालोकेन स्योनं कृणवः । अनुग्रहेण कुर्वित्यर्थः । स यजमानोऽश्विनं बह्वश्वोपेतं पुत्रिणं बहुपुत्रोपेतं वीरवंतं वीरैर्वीर्येण वोपेतं गोमंतं रयिं धनं नशते । प्राप्नोति । स्वस्त्यविनश्वरं ॥ ॥१०॥

सुसमिद्धायेत्येकादशर्चं पंचमं सूक्तमात्रेयस्य वसुश्रुतस्यार्षं गायत्रमिध्माद्युक्तदेवताकं । आप्रमित्युक्तत्वात्तनूनपाद्वर्जितं । अनुक्र० म० १ सू० १३ । सुसमिद्धायाप्रं गायत्रमित्यनुक्रमणिका । अग्नीणामिदमाप्रीसूक्तं । समिधो अग्नीति सर्वेषां यथार्षि वा । आ० ३ २ । इत्युक्तत्वात् ॥

सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे ॥१॥

सुऽसमिद्धाय । शोचिषे । घृतं । तीव्रं । जुहोतन । अग्नये । जातऽवेदसे ॥१॥

सुसमिद्धाय सुष्ठु समिद्धायेतन्नामकायाग्नये शोचिषे दीप्तिमते घृतमाज्यं तीव्रं प्रभूतं जुहोतन हे ऋत्विजः अग्नयेऽगनादिगुणयुक्ताय जातवेदसे जातधनाय ॥

नराशंसः सुषूदतीमं यज्ञमदाभ्यः । कविर्हि मधुहस्त्यः ॥२॥

नराशंसः । सुसूदति । इमं । यज्ञं । अदाभ्यः । कविः । हि । मधुऽहस्त्यः ॥२॥

नराशंसः नरैः शंसनीयोऽयमग्निरिमं यज्ञमिदं हविर्वा सुषूदति । सुष्ठु प्रेरयति । स देवोऽदाभ्योऽहिंस्यः केनापि कविर्मेधावी मधुहस्त्यो मधुरहस्त्यः ॥

ईळितो अग्न आ वहेंद्रं चित्रमिह प्रियं । सुखै रथेभिरूतये ॥३॥

ईळितः । अग्ने । आ । वह । इंद्रं । चित्रं । इह । प्रियं । सुऽखैः । रथेभिः । ऊतये ॥३॥

हे अग्ने ईळितः स्तुतः सन्ना वहेंद्रं चित्रं चायनीयं प्रियमिहास्मिन्यज्ञे सुखै रथेभी रथैरूतयेऽस्मद्रक्षणाय ॥

ऊर्णम्रदा वि प्रथस्वाभ्य१र्का अनूषत । भवा नः शुभ्र सातये ॥४॥

ऊर्णऽम्रदाः । वि । प्रथस्व । अभि । अर्काः । अनूषत । भव । नः । शुभ्र । सातये ॥४॥

हे ऊर्णम्रदा ऊर्णाकंबलवत् मृदु हे बर्हिर्वि प्रथस्व । प्रथय । अर्काः स्तोतारोऽभ्यनूषत । स्तुवंति । हे शुभ्र दीप्त सातये धनाय तद्दानाय वा नोऽस्माकं भव ॥

देवीर्द्वारो वि श्रयध्वं सुप्रायणा न ऊतये । प्रप्र यज्ञं पृणीतन ॥५॥

देवीः । द्वारः । वि । श्रयध्वं । सुप्रऽअयनाः । नः । ऊतये । प्रऽप्र । यज्ञं । पृणीतन ॥५॥

हे द्वारो यज्ञस्य द्वाराभिमानिन्यो हे देवीर्देव्यो वि श्रयध्वं । वियुक्ता भवत । सुप्रायणाः शोभनगमनसाधना नोऽस्माकमूतये रक्षार्थं यज्ञं यजमानं प्रप्र पृणीतन । पूरयत कामैर्यज्ञमेव वा फलैः ॥ ॥२०॥

सुप्रतीके वयोवृधा यह्वी ऋतस्य मातरा । दोषामुषासमीमहे ॥६॥

सुप्रतीके इति सुऽप्रतीके । वयःऽवृधा । यह्वी इति । ऋतस्य । मातरा । दोषां ।
उषसं । ईमहे ॥६॥

हे अह्नो रात्रेश्चाभिमानिदेव्यौ सुप्रतीके सुरूपे शोभनांगे वा वयोवृधान्नस्य वर्धयित्र्यौ यह्वी महत्यावृतस्य यज्ञस्योदकस्य वा मातरा निर्मात्र्यौ तयोर्मध्ये प्रत्येकं दोषां रात्रिदेवीमुषसमहर्देवीमीमहे । स्तुमः ॥

वातस्य पत्मन्नीळिता दैव्या होतारा मनुषः । इमं नो यज्ञमा गतं ॥७॥

वातस्य । पत्मन् । ईळिता । दैव्या । होतारा । मनुषः । इमं । नः । यज्ञं । आ । गतं ॥७॥

वातस्य पत्मन् । लुप्तोपमैषा । वायुगमनसदृशगमनार्थमीळितावस्माभिः स्तुतौ । यद्वा । वातस्य पतनसाधनेऽंतरिक्षे गच्छंतौ दैव्या देवादग्नेरादित्याच्च समुद्भूतौ होतारा देवानामाह्वातारौ युवां मनुषो मनुष्यस्येमं नोऽस्माकं यज्ञमा गतं । आगच्छतं । नो मनुषो यज्ञमिति व्यधिकरणे षष्ठ्यौ । अस्माकं यजमानस्य यज्ञमित्यर्थः ॥

इळा सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिः सीदंत्वस्रिधः ॥८॥

इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदंतु । अस्रिधः ॥८॥

इळा पृथिवी सरस्वती । सर उदकं । तस्मात्सरस्वान्वायुः । तस्य स्त्री सरस्वती । मही महती भारती भरतस्यादित्यस्य पत्नी । अत्र यद्यप्येषा नोक्ता तथापि सर्वत्र सहदृष्टत्वात्त्रिसंख्याश्रवणाच्च सा गृह्यते । अथवैताः क्षित्यंतरिक्षद्युस्थाना वाग्देव्यः । एता मयोभुवः सुखस्य भावयित्र्योऽस्रिधोऽहिंसकाः सत्यो बर्हिर्बर्हिषि सीदंतु । उपविशंतु ॥

शिवस्त्वष्टरिहा गहि विभुः पोष उत त्मना । यज्ञेयज्ञे न उदव ॥९॥

शिवः । त्वष्टः । इह । आ । गहि । विऽभुः । पोषे । उत । त्मना । यज्ञेऽयज्ञे । नः । उत् । अव ॥९॥

हे त्वष्टर्देव शिवः सुखकरः सन्निहा गहि । अस्मद्यज्ञमागच्छ । विभुर्व्याप्तस्त्वं पोषे पोषकरणे । उतागत्य च त्मनात्मना स्वयमेव यज्ञे यज्ञे सर्वेषु यज्ञेषु नोऽस्मानुदव । उत्कृष्टं रक्ष ॥

अग्निहोत्र उत्तराहुतिस्कंदने यत्र वेत्थेत्यनया समिधमादध्यात् । सूत्रितं च । यत्र वेत्थ वनस्पत इत्युत्तरस्या आहुत्याः स्कंदने । आ० ३.११. । इति ॥

यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामय ॥१०॥

यत्र । वेत्थ । वनस्पते । देवानां । गुह्या । नामानि । तत्र । हव्यानि । गमय ॥१०॥

हे वनस्पते यूपाभिमानिदेव यत्र यस्मिन् स्थाने वेत्थ देवानां गुह्या गुह्यानि नामानि नामकानि रूपाणि तत्र हव्यानि गमय । प्रापय ॥

स्वाहाग्नये वरुणाय स्वाहेंद्राय मरुद्भ्यः । स्वाहा देवेभ्यो हविः ॥११॥
स्वाहा । अग्नये । वरुणाय । स्वाहा । इंद्राय । मरुत्ऽभ्यः । स्वाहा । देवेभ्यः । हविः ॥११॥

अग्न्यादि विश्वे देवाः । तेभ्यो देवेभ्य इदं हविः स्वाहा करोमीति शेषः । स्वाहुत करोमीत्यर्थः । एव स्वाहाकृतेः स्तुतिः ॥ ॥२१॥

अग्निं तं मन्य इति दशर्चं षष्ठं सूक्तं वसुश्रुतस्यार्षमाग्नेयं पाक्तं । अग्नि त दश पाक्तमित्यनुक्रमणिका ॥ प्रातरनुवाक आग्नेये क्रतौ पाक्ते छंदस्याश्विनशस्त्रे चेद सूक्तं । अग्नि तं मन्य इति पाक्त । आ॰ ४ १३ । इति हि सूत्रितं ॥ आश्वमेधिके मध्यमेऽहनीदमेवाज्यशस्त्रं । सूत्रितं च । अग्नि त मन्य इत्याज्य तस्यैकाहिकमुपरिष्टात । आ॰ १०. १०. । इति ॥ आद्य आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्यानुरूपस्तृचः । सूत्रित च । अग्नि त मन्ये यो वसुराग्ने स्थूरं रयि भर । आ॰ ७. ८ । इति ॥

अग्निं तं मन्ये यो वसुरस्तं यं यंति धेनवः ।
अस्तमर्वंत आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥१॥
अग्निं । तं । मन्ये । यः । वसुः । अस्तं । यं । यंति । धेनवः ।
अस्तं । अर्वंतः । आशवः । अस्तं । नित्यासः । वाजिनः । इषं । स्तोतृऽभ्यः । आ । भर ॥१॥

तमग्निं मन्ये । स्तौमि । योऽग्निर्वसुर्वासकः । यमस्तं सर्वेषां गृहवदाश्रयभूतं धनवो यंति । गच्छंति प्रीणयितुं । अस्तमुक्तलक्षणमर्वतोऽरणवतोऽश्वा आशवः शीघ्रगामिनो यंति । तथा नित्यासो नित्यप्रवृत्तयो वाजिनो हविर्लक्षणान्नवतो यजमाना यमस्त यंति त मन्ये । इषमन्न स्तोतृभ्योऽस्मभ्यमा भराग्ने ॥

सो अग्निर्यो वसुर्गृणे सं यमायंति धेनवः ।
समर्वंतो रघुद्रुवः सं सुजातासः सूरय इषं स्तोतृभ्य आ भर ॥२॥
सः । अग्निः । यः । वसुः । गृणे । सं । यं । आऽयंति । धेनवः ।
सं । अर्वंतः । रघुऽद्रुवः । सं । सुऽजातासः । सूरयः । इषं । स्तोतृऽभ्यः । आ । भर ॥२॥

सोऽग्निः स खल्वग्निर्यो वसुर्वासको गृणे । स्तूयते । य धेनवः समायंति होमार्थं । अर्वतोऽश्वा रघुद्रुवो लघुगमनाः समायंति । सुजातासः सूरयो मेधाविनश्च समायंति स खल्वग्निरिति ॥

अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भर ॥३॥
अग्निः । हि । वाजिनं । विशे । ददाति । विश्वऽचर्षणिः ।
अग्निः । राये । सुऽआभुवं । सः । प्रीतः । याति । वार्यं । इषं । स्तोतृऽभ्यः । आ । भर ॥३॥

अग्निर्ह्ययमग्निः खलु विशे यजमानाय वाजिनमन्नवंतं पुत्रमश्वमन्न वा ददाति । विश्वचर्षणिः । विश्वे चर्षणयो मनुष्या रक्षणीया अर्चका वा यस्य स तथोक्तः । यद्वा । पश्यतिकर्मैतत । सर्वस्य द्रष्टाग्नी राये धनार्थिने । अथवा द्वितीयार्थे चतुर्थी । धनं स्वाभुव सुष्ठु सर्वत्र व्याप्तं वार्यं संवरणीय प्रीतः सन याति । यमयति । दातुं वा गच्छति । इषमित्यादि गत ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोत्रियतृचस्या ते अग्न इधीमहीत्यादिके प्रथमाद्वितीये । सूत्रितं च भवति । आ ते अग्ने इधीमह्युभे सुश्चंद्र सर्पिष इति द्वे एका च । आ॰ ७ ८. । इति ॥

आ ते अग्न इधीमहि द्युमंतं देवाजरं ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥४॥
आ । ते । अग्ने । इधीमहि । द्युऽमंतं । देव । अजरं ।
यत् । ह । स्या । ते । पनीयसी । संऽइत् । दीदयति । द्यवि । इषं । स्तोतृऽभ्यः । आ । भर ॥४॥

हे अग्ने देव द्युमंतं दीप्तिमंतमजरमजीर्णं ते त्वामा सर्वत इधीमहि । दीपयामः । यद्ध खलु स्या सा ते तव पनीयसी स्तुत्या समिद्दीप्तिर्दीदयति । दीप्यते । द्यवि द्युलोके ॥

आ ते अग्न ऋचा हविः शुक्रस्य शोचिषस्पते ।
सुश्चंद्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आ भर ॥५॥
आ । ते । अग्ने । ऋचा । हविः । शुक्रस्य । शोचिषः । पते ।
सुऽचंद्र । दस्म । विश्पते । हव्यऽवाट् । तुभ्यं । हूयते । इषं । स्तोतृऽभ्यः । आ । भर ॥५॥

हे शोचिषो दीप्तेः पते स्वामिन्नग्ने शुक्रस्य दीप्तस्य ते तुभ्यमृचा मंत्रेण सह हविर्हूयते । हे सुश्चंद्र सुष्ठ्वाह्लादक शोभनहिरण्य वा हे दस्म शत्रूणामुपक्षपयितर्विश्पते विशां प्रजानां पालक हव्यवाट् हविषो वोढः । इषमिति गतं ॥ ॥२२॥

प्रो त्ये अग्नयोऽग्निषु विश्वं पुष्यंति वार्यं ।
ते हिन्विरे त इन्विरे त इषण्यंत्यानुषगिषं स्तोतृभ्य आ भर ॥६॥
प्रो इति । त्ये । अग्नयः । अग्निषु । विश्वं । पुष्यंति । वार्यं ।
ते । हिन्विरे । ते । इन्विरे । ते । इषण्यंति । आनुषक् । इषं । स्तोतृऽभ्यः । आ । भर ॥६॥

प्रो प्रैव पुष्यंति त्ये तेऽग्नयो धिष्ण्या अग्निषु गार्हपत्यादिषु । यद्वा । लौकिका अग्नयस्तेजःपदार्थोऽग्निषु वैदिकेषु विश्वं सर्वं वार्यं वरणीयमपेक्षितं धनं पुष्यंति । तेऽग्नयो हिन्विरे । प्रीणयंति । इन्विरे । व्याप्नुवंति च । त इषण्यंति । अन्नमिच्छंति । आनुषक् सर्वत्रानुषक्तं । तत्राग्निसामान्याभिप्रायेणैकवचनं ॥

तव त्ये अग्ने अर्चयो महि व्राधंत वाजिनः ।
ये पत्वभिः शफानां व्रजा भुरंत गोनामिषं स्तोतृभ्य आ भर ॥७॥
तव । त्ये । अग्ने । अर्चयः । महि । व्राधंत । वाजिनः ।
ये । पत्वऽभिः । शफानां । व्रजा । भुरंत । गोनां । इषं । स्तोतृऽभ्यः । आ । भर ॥७॥

हे अग्ने तव त्वदीयास्त्ये तेऽर्चयो रश्मयो महि महदत्यधिकं वाजिनोऽन्नवंतो वा व्राधंत । वर्धंते । यद्वा लुप्तोपमा । वाजिनोऽश्वा इव । ये रश्मयः पत्वभिः पतनैः शफानां गोनां व्रजा यूथानि भुरंत । इच्छंति । आयता ज्वाला होमाय कांक्षंत इत्यर्थः । ते वर्धंते ॥

नवा नो अग्न आ भर स्तोतृभ्यः सुक्षितीरिषः ।
ते स्याम य आनृचुस्त्वादूतासो दमेदम इषं स्तोतृभ्य आ भर ॥८॥

नवाः । नः । अग्ने । आ । भर । स्तोतृऽभ्यः । सुऽक्षितीः । इषः ।
ते । स्याम । ये । आनृचुः । त्वाऽदूतासः । दमेऽदमे । इषं । स्तोतृऽभ्यः । आ । भर ॥८॥

हे अग्ने स्तोतृभ्यो नोऽस्मभ्यं नवाः स्तुत्या नुत्या वा सुक्षितीः सुनिवासाः सुप्रजा वा इष उक्तलक्षणान्यन्नान्याभर । प्रयच्छ । ये वयं दमे दमे सर्वेषु यागगृहेषु त्वामानृचुः । अर्चयंति । ते वयं त्वाद्दूतासस्त्वा दूतं फलसूचकं लब्धवंतः संतः स्याम । समृद्धा भूयास्म । दमे दमे स्यामेति वा योज्यं ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने वैकल्पिकस्तोत्रियतृच उभे सुश्चंद्रेत्येषा तृतीया । सूत्रमुक्तं ॥

उभे सुश्चंद्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ॥९॥
उभे इति । सुऽचंद्र । सर्पिषः । दर्वी इति । श्रीणीषे । आसनि ।
उतो इति । नः । उत् । पुपूर्याः । उक्थेषु । शवसः । पते । इषं । स्तोतृऽभ्यः । आ । भर ॥९॥

हे सुश्चंद्र शोभनाह्लादन शोभनहिरण्य वाग्ने उभे सर्पिषः पूर्णे दर्वी जुहूपभृतावामन्यास्ये श्रीणीषे । श्रयसि पचसि वा । उतो अपि च नोऽस्मानुक्थेषु यागेषूत्पुपूर्याः । उत्पूरय फलैः । हे शवसस्पते बलस्य पालयितः ॥

एवाँ अग्निमजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक् ।
दधदस्मे सुवीर्यमुत त्यदाश्वश्व्यमिषं स्तोतृभ्य आ भर ॥१०॥
एव । अग्निं । अजुर्यमुः । गीःऽभिः । यज्ञेभिः । आनुषक् ।
दधत् । अस्मे इति । सुऽवीर्यं । उत । त्यत् । आशुऽअश्व्यं । इषं । स्तोतृऽभ्यः । आ । भर ॥१०॥

एवोक्तरीत्याग्निं गीर्भिः स्तुतिभिर्यज्ञेभिर्यज्ञैर्वा तत्साधनैर्हविर्भिर्वा आनुषगानुपक्रममजुः । गच्छंति । तथा कृत्वा यमुः । यमयंति । स्थापयंति । हविर्भिर्यजंतीत्यर्थः । एवमात्रेयाः स्वात्मपरोक्षतया निर्दिशंति ॥ अजुर्यमुरित्यत्राख्यातमाख्यातेन क्रियासातत्य इति समासः ॥ किंच अग्निरस्मासु सुवीर्यं शोभनपुत्रादिकमुतापि च त्यत्तदाश्वश्व्यं । आशवोऽश्वा यस्य भवंति स आश्वश्वः । तस्य भाव आश्वश्व्यं । तदपि दधत् । धारयति ॥ ॥२३॥

सखायः सं व इति दशर्चं सप्तमं सूक्तं । आत्रेय इष ऋषिः । अंत्या पंक्तिः शिष्टाः पंचानुष्टुभः । तथा चानुक्रांतं । सखाय इषः पंक्त्यंतमिति ॥ प्रातरनुवाक आग्नेये क्रतावानुष्टुभे छंदस्याश्विनशस्त्रे चोक्तमेवेदं सूक्तं । सूत्रितं च । सखायः सं वस्त्वामग्ने हविष्मंत इति सूक्ते । आ॰ ४. १३ । इति ॥

सखायः सं वः सम्यंचमिषं स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥१॥
सखायः । सं । वः । सम्यंचं । इषं । स्तोमं । च । अग्नये । वर्षिष्ठाय । क्षितीनां । ऊर्जः । नप्त्रे ।
सहस्वते ॥१॥

हे सखायः सखिभूता ऋत्विजो वो यूयं संस्कुरुत । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । किंच सम्यंचमिषमन्नं स्तोमं स्तोत्रं चाग्नये वर्षिष्ठायातिशयेन प्रवृद्धाय क्षितीनां यजमानानामर्थाय वर्षिष्ठाय प्रवृद्धतमायोर्जो नप्त्रे बलस्य न पातयित्रे तत्पुत्राय वा सहस्वते बलवते संस्कुरुतेति ॥

कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने। अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः ॥२॥
कुत्र। चित्। यस्य। सम्ऽऋतौ। रण्वाः। नरः। नृऽसदने। अर्हन्तः। चित्। यं। इन्धते।
संऽजनयन्ति। जन्तवः ॥२॥

सोऽग्निः कुत्र चिद्वर्तत इति शेषः। कुत्रास्ति। यस्याग्नेः समृतौ संप्राप्तौ रण्वा रममाणा नरो नेतार ऋत्विजः। नृषदने यागगृहेऽर्हन्तश्चित। चिदिति पूजायां। अर्हन्तः पूज्याः पूजयन्तो वा सन्तो यमिन्धते। दीपयन्ति। तदर्थं संजनयन्ति चारण्यां जन्तवः प्राणिनः। स कुत्रेति संबंधः ॥

सं यदिषो वनामहे सं हव्या मानुषाणां। उत द्युम्नस्य शवस ऋतस्य रश्मिमा ददे ॥३॥
सं। यत्। इषः। वनामहे। सं। हव्या। मानुषाणां। उत। द्युम्नस्य। शवसा। ऋतस्य।
रश्मिं। आ। ददे ॥३॥

यद्यदेषोऽन्नानि सं वनामहे। संभजामहे। यदा च मानुषाणामस्माकं हव्या हवींष्यग्निः संसेवते उत तदानीं द्युम्नस्य द्योतमानस्यान्नस्य शवसा बलेन सामर्थ्येन ऋतस्योदकस्य ग्राहकं रश्मिमा ददे। आदत्तेऽग्निः। फलजनकं तेजः स्वीकृतवानित्यर्थः। यद्वा। ऋतस्य यज्ञस्य रश्मिं रश्मिवद्ग्राहकं स्ववसा ददे। स्वीकरोति ॥

स स्मा कृणोति केतुमा नक्तं चिद्दूर आ सते। पावको यद्वनस्पतीन्प्र स्मा मिनात्यजरः ॥४॥
सः। स्म। कृणोति। केतुं। आ। नक्तं। चित्। दूरे। आ। सते। पावकः। यत्। वनस्पतीन्।
प्र। स्म। मिनाति। अजरः ॥४॥

स स्म स खल्वग्निः कृणोति। करोति। केतुं प्रज्ञानमा सर्वतः। कस्मैत्युच्यते। चिदप्यर्थे। नक्तं चिद्रात्रावपि दूर आ सते। आ इति चार्थे। दूरेऽपि वर्तमानाय मनुष्याय। कदा। यद्यदा पावकोऽयमग्निरजरोऽजीर्णोऽनभिभाव्यः सन वनस्पतीनधांसि प्र स्म मिनाति। प्रकर्षेण दहति। स्मेति पूरणः ॥

अव स्म यस्य वेषणे स्वेदं पथिषु जुह्वति। अभीमह स्वजेन्यं भूमा पृष्ठेव रुरुहुः ॥५॥
अव। स्म। यस्य। वेषणे। स्वेदं। पथिषु। जुह्वति। अभि। ईं। अह। स्वऽजेन्यं। भूमं।
पृष्ठाऽइव। रुरुहुः ॥५॥

यस्याग्नेर्वेषणे परिचर्यायां पथिषु होममार्गेषु रश्मिषु स्वेदं स्रवदाज्यमवाधोमुखं जुह्वत्यध्वर्यवः तदानीमीमेनमग्निमभि रुरुहुः। अभ्यारोहन्त्याज्यधाराः। अह इति विनिग्रहार्थीयः। स्वजेन्य स्वोत्पन्न भूम। बहु भवतीति भूमापत्य। तत्पृष्ठेव पितुः पृष्ठदेशानिव। पुत्रा यथा पितुरंकमारोहन्ति तद्वत् ॥ ॥२४॥

यं मर्त्यः पुरुस्पृहं विदद्विश्वस्य धायसे। प्र स्वादनं पितूनामस्ततातिं चिदायवे ॥६॥
यं। मर्त्यः। पुरुऽस्पृहं। विदत्। विश्वस्य। धायसे। प्र। स्वादनं। पितूनां। अस्तऽतातिं।
चित्। आयवे ॥६॥

यमग्निं पुरुस्पृहं बहुभिः स्पृहणीयं विदत। वेत्ति। मर्त्यो यजमानो विश्वस्य धायसे सर्वस्य व्याप्त्यर्थं पितूनामन्नानां प्र स्वादनं प्रकर्षेण स्वादुकर्तारमस्ततातिमस्ते गृहे निवासकर्तारमायवेऽन्नार्थं यजमानार्थं वा ॥

स हि ष्मा धन्वाक्षितं दाता न दात्या पशुः। हिरिश्मश्रुः शुचिदन्नृभुरनिभृष्टतविषिः ॥७॥
सः। हि। स्म। धन्व। आऽक्षितं। दाता। न। दाति। आ। पशुः। हिरिऽश्मश्रुः। शुचिऽदन्।
ऋभुः। अनिभृष्टऽतविषिः ॥७॥

स हि ष्म स खल्वग्निर्धन्व निरुदकप्रदेशमाक्षितं तृणकाष्ठादिभिराक्षिप्तमा दाति। सर्वतः खंडयति। दहतीत्यर्थः। दाता तृणादिखंडयिता पशुर्न पशुरिव। पशुर्यथा तृणजातं क्रमेण भक्षयति तद्वत्। हिरिश्मश्रुर्हिरण्यश्मश्रुः शुचिदन् दीप्तदन् ऋभुरुरु भवन्। महानित्यर्थः। अनिभृष्टतविषिरपीडितबलः ॥

शुचिः ष्म यस्मा अत्रिवत्प्र स्वधितीव रीयते। सुषूरसूत माता क्राणा यदानशे भगं ॥८॥
शुचिः। स्म। यस्मै। अत्रिऽवत्। प्र। स्वधितिःऽइव। रीयते। सुऽसूः। असूत। माता।
क्राणा। यत्। आनशे। भगं ॥८॥

अयमग्निः शुचिः ष्म दीप्तः खलु। यस्मा अग्नयेऽत्रिवदत्रिरिव यजमानो हविर्दात् प्र रीयते। प्रगच्छति। यद्वा। स्मेति पूरणः। शुचिर्यस्मै ॥ प्रथमार्थे चतुर्थी ॥ दीप्तो योऽत्रिवत्। अत्ति तृणामित्यत्रिः पशुः। स इव। स यथा तृणानि खादमानो गच्छति तद्वद्दहतीत्यर्थः। स्वधितिरिव परशुरिव छिदन्। सुषूः सुप्रसवा माता रणिरसूत क्राणा कुर्वाणं जगदुपकारकं। यद्यस्मात् य इति वा। योऽग्निर्भगमन्नमानशे। अश्नुते ॥

आ यस्ते सर्पिरासुतेऽग्ने शमस्ति धायसे। ऐषु द्युम्नमुत श्रव आ चित्तं मर्त्येषु धाः ॥९॥
आ। यः। ते। सर्पिःऽआसुते। अग्ने। शं। अस्ति। धायसे। आ। एषु। द्युम्नं। उत। श्रवः।
आ। चित्तं। मर्त्येषु। धाः ॥९॥

हे सर्पिरासुते घृताख्यान्नाग्ने यस्त्वमा सर्वतो भवसि तादृशाय धायसे सर्वस्य धात्रे ते तुभ्यं शमस्ति। सुखमस्ति। स्तुतेः सकाशात्। तथा चैत एषु मर्त्येषु स्तोतृष्वात्रेयेषु द्युम्नं यश आ धाः। आधेहि। उतापि च श्रवोऽन्नमा धाः। चित्तं त्वदीयामनुग्रहबुद्धिमप्या धाः ॥

इति चिन्मन्युमध्रिजस्त्वादातमा पशुं ददे।
आदग्ने अपृणतोऽत्रिः सासह्याद्दस्यूनिषः सासह्यान्नॄन् ॥१०॥
इति। चित्। मन्युं। अध्रिजः। त्वाऽदातं। आ। पशुं। ददे।
आत्। अग्ने। अपृणतः। अत्रिः। ससह्यात्। दस्यून्। इषः। ससह्यात्। नॄन् ॥१०॥

इति चित् इत्थं कृतप्रकारेण मन्युं मननसाधनं स्तोत्रमध्रिजः। अधृतमन्यैरग्निर्व्यतिरिक्तैरधृष्यं वा जनयिता ऋषिस्त्वादातं त्वया दातव्यं पशुमा ददे। आदत्ते। आददीत वा। आदनंतरमेवाग्नेरपृणतोऽददतो दस्यूनत्रिस्तव स्तोता इषः सासह्यात्। भृशमभिभवेत्। इष एष्टॄन्नॄन् विरोधिनः सासह्यात्। पुनरुक्तिरादरार्था ॥ ॥२५॥

त्वामग्न इति सप्तर्चमष्टमं सूक्तमात्रेयस्येषस्यार्षं जागतमाग्नेयं। त्वामग्ने सप्त जागतमित्यनुक्रमणिका ॥ प्रातरनुवाक आग्नेये क्रतौ जागते छंदस्याश्विनशस्त्रे चेदं सूक्तं। तथा च सूत्रं। जनस्य गोपास्त्वामग्न ऋतायव. । आ॰ ४. १३. । इति ॥

त्वामग्न ऋतायवः समीधिरे प्रत्नं प्रत्नास ऊतये सहस्कृत।
पुरुश्चंद्रं यजतं विश्वधायसं दमूनसं गृहपतिं वरेण्यं ॥१॥

त्वां। अग्ने। ऋतऽयवः। सं। ईधिरे। प्रत्नं। प्रत्नासः। ऊतये। सहःऽकृत।
पुरुऽचंद्रं। यजतं। विश्वऽधायसं। दमूनसं। गृहऽपतिं। वरेण्यं ॥१॥

हे सहस्कृत बलस्य कर्तरग्ने प्रत्नं पुरातनं त्वां प्रत्नासः पुरातना ऋतायवो यज्ञकामा ऋषय ऊतये रक्षणाय समीधिरे। सम्यग्दीपितवंतः। कीदृशं त्वां। पुरुश्चंद्रं बहुधनमतिशयेनाह्लादकं वा यजतं यष्टव्यं विश्वधायसं बह्वन्नं दमूनसं दानमनसं गृहपतिं यजमानगृहस्य पालकं वरेण्यं वरणीयं ॥

त्वामग्ने अतिथिं पूर्व्यं विशः शोचिष्केशं गृहपतिं नि षेदिरे।
बृहत्केतुं पुरुरूपं धनस्पृतं सुशर्माणं स्ववसं जरद्विषं ॥२॥
त्वां। अग्ने। अतिथिं। पूर्व्यं। विशः। शोचिःऽकेशं। गृहऽपतिं। नि। सेदिरे।
बृहत्ऽकेतुं। पुरुऽरूपं। धनऽस्पृतं। सुऽशर्माणं। सुऽअवसं। जरत्ऽविषं ॥२॥

हे अग्ने त्वां विशो यजमाना गृहपतिं गृहस्वामिनं नि षेदिरे। गार्हपत्यरूपेण स्थापितवंत इत्यर्थः। कीदृशं त्वा। अतिथिमतिथिवत्पूज्यं पूर्व्यं पुरातनं शोचिष्केशं दीप्तज्वालं बृहत्केतुं प्रभूतप्रज्ञानं पुरुरूपमाहवनीयादिरूपेण बहुरूपं धनस्पृतं धनानां स्पर्तारं सुशर्माणं शोभनसुखं स्ववसं सुरक्षणं जरद्विषं जरतां वृक्षाणां व्यापकं जीर्णादकं वा ॥

अग्नीनां परस्परं संसर्गे विविचयऽग्नये काचिदिष्टिः। तत्र त्वामग्ने मानुषीरिति याज्या। सूत्रितं च। त्वामग्ने मानुषीरीळते विशोऽग्न आयाहि वीतये। आ० ३ १३.। इति ॥

त्वामग्ने मानुषीरीळते विशो होत्राविदं विविचिं रत्नधातमं।
गुहा संतं सुभग विश्वदर्शतं तुविष्वणसं सुयजं घृतश्रियं ॥३॥
त्वां। अग्ने। मानुषीः। ईळते। विशः। होत्राऽविदं। विविचिं। रत्नऽधातमं।
गुहा। संतं। सुऽभग। विश्वऽदर्शतं। तुविऽस्वनसं। सुऽयजं। घृतऽश्रियं ॥३॥

हे अग्ने सुभग शोभनधन त्वां मानुषीर्विशो मानुषसंबंधिन्यः सर्वाः प्रजा ईळते। स्तुवंति। कीदृशं त्वा। होत्राविदं होमानां सप्तहोत्रकाणां वा वेत्तारं विविचिं विवेचकं सदसतोः रत्नधातमं रमणीयानां धनानां दातृतमं गुहा गुहायामरण्यां हृदयेषु वा संतं सर्वदा वर्तमानं विश्वदर्शतं सर्वैर्द्रष्टव्यं तुविष्वणसं प्रभूतध्वनिं सुयजं सुष्ठु यष्टारं घृतश्रियं घृतं श्रयंतं ॥

त्वामग्ने धर्णसिं विश्वधा वयं गीर्भिर्गृणंतो नमसोप सेदिम।
स नो जुषस्व समिधानो अंगिरो देवो मर्तस्य यशसा सुदीतिभिः ॥४॥
त्वां। अग्ने। धर्णसिं। विश्वधा। वयं। गीःऽभिः। गृणंतः। नमसा। उप। सेदिम।
सः। नः। जुषस्व। सम्ऽइधानः। अंगिरः। देवः। मर्तस्य। यशसा। सुदीतिऽभिः ॥४॥

हे अग्ने धर्णसिं सर्वस्य धारकं त्वां वयमात्रेया वा विश्वधा बहुप्रकारेण गीर्भिर्गृणंतः स्तुवंतो नमसा नमस्कारेणोप सेदिम। उपसन्ना भवेम। स त्वं नोऽस्मान् जुषस्व। सेवस्व धनादिभिः। समिधानः सम्यग्दीप्तो दीप्यमानोऽस्माभिर्हे अंगिरः सर्वत्र गंतरंगिरसः पुत्र वा देवो दीप्यमानस्त्वं मर्तस्य यजमानस्य यशसा सुदीतिभिर्ज्वालाभिः सह जुषस्व ॥

त्वमग्ने पुरुरूपो विशेविशे वयो दधासि प्रत्नथा पुरुष्टुत ।
पुरूण्यन्ना सहसा वि राजसि त्विषिः सा ते तित्विषाणस्य नाधृषे ॥५॥
त्वं । अग्ने । पुरुऽरूपः । विशेऽविशे । वयः । दधासि । प्रत्नऽथा । पुरुऽस्तुत ।
पुरूणि । अन्ना । सहसा । वि । राजसि । त्विषिः । सा । ते । तित्विषाणस्य । न । आऽधृषे ॥५॥

हे अग्ने त्वं पुरुरूपः सन् विशे विशे सर्वस्मै यजमानाय प्रत्नथा पुराण इव वयोऽन्नं दधासि । धारयसि । हे पुरुष्टुत बहुभिः स्तुत्य पुरूणि बहून्यन्नान्यन्नानि चरुपुरोडाशादीनि सहसा बलेन वि राजसि । ईश्वरो भवसि स्वीकर्तुं । तित्विषाणस्य दीप्तस्य ते तव सा प्रसिद्धा त्विषिर्दीप्तिर्नाधृषे । अन्यैरधृष्या भवति ॥

त्वामग्ने समिधानं यविष्ठ्य देवा दूतं चक्रिरे हव्यवाहनं ।
उरुज्रयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयन्मति ॥६॥
त्वां । अग्ने । सम्ऽइधानं । यविष्ठ्य । देवाः । दूतं । चक्रिरे । हव्यऽवाहनं ।
उरुऽज्रयसं । घृतऽयोनिं । आऽहुतं । त्वेषं । चक्षुः । दधिरे । चोदयत्ऽमति ॥६॥

हे यविष्ठ्य युवतमाग्ने समिधानं सम्यगिध्यमानं त्वा हव्यवाहनं हविषां वोढारं दूतं चक्रिरे । कृतवन्तो देवाः । त्रयाणामग्नीनां मध्ये हव्यवाहनः खलु पूर्वं देवैर्हविर्वहनाय दूतः कृतः । हव्यवाहनो देवानां । तै० सं० २ ५ ८. ६. । इति हि श्रुतिः । किंच उरुज्रयसं प्रभूतवेगं घृतयोनिं । घृतं योनिः कारणं यस्य तं । आहुतं त्वां चोदयन्मति । चोदयन्ती मतिर्यस्य तच्चोदयन्मति । त्वेषं दीप्तं चक्षुरुक्तलक्षणं सर्वप्रकाशकं चक्षुःस्थानीयं कृत्वा दधिरे देवा मनुष्याश्च । सत्या हि चक्षुषोऽयते ॥

त्वामग्ने प्रदिव आहुतं घृतैः सुम्नायवः सुषमिधा समीधिरे ।
स वावृधान ओषधीभिरुक्षितोऽभि ज्रयांसि पार्थिवा वि तिष्ठसे ॥७॥
त्वां । अग्ने । प्रऽदिवः । आऽहुतं । घृतैः । सुम्नऽयवः । सुऽसमिधा । सं । ईधिरे ।
सः । ववृधानः । ओषधीभिः । उक्षितः । अभि । ज्रयांसि । पार्थिवा । वि । तिष्ठसे ॥७॥

हे अग्ने घृतैराहुतं त्वां प्रदिवः पुरातनाः सुम्नायवः सुखमिच्छन्तो यजमानाः सुषमिधा शोभनेनेन्धनेन समीधिरे । सम्यक् दीपितवन्तः । स त्वं वावृधानो वर्धमान ओषधीभिरुक्षितः सिक्तो ज्रयांस्यन्नानि पार्थिवा पार्थिवान्वृक्षान् । यद्वा । पार्थिवेति ज्रयोविशेषणं । पार्थिवानि चरुपुरोडाशादिकान्यभि वि तिष्ठसे । अभिव्याप्य वर्तसे ॥ ॥२६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टकेऽष्टमोऽध्यायः समाप्तः ॥

ओं

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

पंचमे मंडले प्रथमेऽनुवाके पूर्वमष्टौ सूक्तानि व्याख्यातानि । त्वामग्ने हविष्मंत इति सप्तर्चं नवमं सूक्तमात्रेयस्य गयस्यार्षं । सप्तमीपंचम्यौ पंक्ती शिष्टा अनुष्टुभः । अग्निर्देवता । तथा चानुक्रम्यते । त्वामग्ने गयो ऽत्यापंचम्यौ पंक्ती इति ॥ प्रातरनुवाक आश्विनशस्त्रे चैतदादिके द्वे सूक्ते शंसनीये । तथैव सूचितं । त्वामग्ने हविष्मंत इति सूक्ते । आ० ४.१३. । इति ॥

त्वामग्ने हविष्मंतो देवं मर्तास ईळते । मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ॥१॥
त्वां । अग्ने । हविष्मंतः । देवं । मर्तासः । ईळते । मन्ये । त्वा । जातऽवेदसं । सः । हव्या । वक्षि । आनुषक् ॥१॥

हे अग्ने त्वां देवं दीप्यमानं हविष्मंतो होमसाधनद्रव्यसमेता मर्तासो मर्त्या ईळते । स्तुवंति । अहं च जातवेदसं । जातमुत्पन्नं चराचरं भूतजातं वेत्तीति जातवेदाः । अथवा जातानि स्थावरजंगमात्मकान्येनं विदुरिति जातवेदाः । यद्वा । वेद इति धननाम । जातं सर्वं वेदो धनं यस्मात्सो जातवेदाः । एवंविधं त्वा त्वां मन्ये । स्तौमि । मनिरत्र स्तुत्यर्थे वर्तते धातूनामनेकार्थत्वात् । स त्वं हव्या हवनसाधनानि हवींष्यानुषक् निरंतरतयानुषक्तं यथा तथा वक्षि । वहसि ॥ हविष्मंतः । हविःशब्द औणादिकइस्प्रत्ययांतत्वात्प्रत्ययस्वरेणांतोदात्तः । तदस्यास्तीति मतुप् । पदसंज्ञाया अपवादत्वेन तसौ मत्वर्थ इति भसंज्ञाया रुत्वाभावः । मतुब्ङसोरनुदात्तत्वात्प्रत्ययस्वर एव शिष्यते । देवं । अच्प्रत्ययांतत्वाद्देवशब्दोऽंतोदात्तः । मर्तासः । मृङ् प्राणत्यागे । असिहसिमृङित्यादिना तन् । गुणः । मर्तः । जसेरसुक् । मर्तासः । नित्त्वादाद्युदात्तः । ईळते । ईड स्तुतौ । अदादित्वाच्छपो लुक् । आत्मनेपदेष्वनत इति झस्यादादेशः । अत्र डकारस्याध्येतृसंप्रदायप्राप्तो ळकारः । तिङ्ङतिङ इति निघातः । सार्वधातुकानुदात्तत्वेन धातुस्वरे प्राप्ते आष्टमिको निघातः । मन्ये । श्यनो नित्त्वादाद्युदात्तत्वं । त्वा । युष मिश्रणे । मदिक्प्रत्ययांतो युष्मच्छब्दः प्रत्ययस्वरेणांतोदात्तः । त्वमावेकवचन इति मपर्यंतस्य त्वादेशः । द्वितीयायां च । पा० ७.२.८७ । इत्याकारः । एकादेश उदात्तेनोदात्त इत्येकादेशोऽप्युदात्त एव । त्वामौ द्वितीयाया इति त्वादेशः । स्थानिवद्भावेनांतोदात्तत्वे प्राप्तेऽनुदात्तं सर्वमपादादावित्यनुदात्तत्वं । जातवेदसं । जनी प्रादुर्भावे । क्तः । श्वीदितो निष्ठायामितीट्प्रतिषेधः । जनसनखनां सञ्झलोरित्यात्वं । प्रत्ययस्वरेणांतोदात्तः । वेदसशब्दोऽप्यसुन्प्रत्ययांतत्वादाद्युदात्तः । कर्मधारयपक्षे समासांतोदात्तापवादत्वेन तत्पुरुषे तुल्यार्थेत्यादिना पूर्वपदप्रकृतिस्वरे प्राप्ते कृदुत्तरपदप्रकृतिस्वरत्वं । तदपवादत्वेन गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेति पूर्वपदप्रकृतिस्वरत्वं । बहुव्रीहिपक्षे बहुव्रीहौ प्रकृत्या पूर्वपदमिति । हव्या । हवमर्हतीत्यस्मिन्नर्थे य इत्यनुवर्तमाने छंदसि चेति यः । नपुंसकत्वाच्छेः शिरादेशः । शेश्छंदसि बहुलमिति लोपः । प्रत्ययलक्षणेन नुम् । दीर्घनलोपौ । प्रत्ययस्वरेणांतोदात्तः । वक्षि । वह प्रापणे । सिप् । सुगनुवृत्तौ बहुलं छंदसीति शपो लुक् । ढत्वकत्वषत्वानि । सिपः पित्त्वादनुदात्तत्वेन धातुस्वरेणाद्युदात्तत्वे प्राप्ते निघातः । आनुषक् । अनुपूर्वस्य षञ्जेः क्विप् । नकारलोपः कुत्वं च । धात्वादेः षकारस्योपसर्गात्सुनोतीत्यादिना षत्वं । दीर्घः स्कांदसः । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

अग्निर्होता दास्वतः क्षयस्य वृक्तबर्हिषः। सं यज्ञासश्चरन्ति यं सं वाजासः श्रवस्यवः ॥२॥
अग्निः। होता। दास्वतः। क्षयस्य। वृक्तऽबर्हिषः। सं। यज्ञासः। चरन्ति। यं। सं। वाजासः।
श्रवस्यवः ॥२॥

यमग्निं यज्ञासः सर्वे यज्ञाः सं चरन्ति संहिता गच्छन्ति। श्रवस्यवो यजमानस्य प्रभूतां कीर्तिं संपादयन्तो वाजासो हवींषि यमग्निं सं चरन्ति प्राप्नुवन्ति। एवंविशिष्टोऽग्निर्दास्वतो हविष्प्रक्षेपणादिदानवतो वृक्तबर्हिषः। वृक्तानि लूनानि बर्हींषि दर्भा येनासौ वृक्तबर्हिः। तस्य क्षयस्य। क्षियन्ति निवसन्त्यस्मिन् स्वर्गसाधनफलानीति क्षयः। तस्य यजमानस्य यागार्थं होता देवानामाह्वाता भवति॥ दास्वतः। दा दाने। असुन्प्रत्ययान्तः। मतुपोऽदुपधात्वाद्वत्वं। धातुस्वरेणाद्युदात्त एव। क्षयस्य। क्षि निवासगत्योः। क्षयो निवास इत्याद्युदात्तत्वं। वृक्तबर्हिषः। वृजी वर्जने। वर्जनमत्रोपचाराच्छेदनं। निष्ठा। प्रत्ययस्वरेणान्तोदात्तः। बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वं। यज्ञासः। यज्ञशब्दो यजयाचेत्यादिना नङ्प्रत्ययान्तोऽन्तोदात्तः। चरन्ति। चर गतिभक्षणयोः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वं। यद्वृत्तान्नित्यमिति निघाताभावः। वाजासः। वज गतौ। वजेर्घञ्। वाजः। कर्षात्वत इत्यन्तोदात्तत्वं। छांदसत्वात् ञ्नित्यादिर्नित्यमित्याद्युदात्तः। श्रवस्यवः। छंदसि परेच्छायामिति क्यच्। क्याच्छंदसीत्युप्रत्ययः। प्रत्ययस्वरेणान्तोदात्तः॥

उत स्म यं शिशुं यथा नवं जनिष्टारणी। धर्तारं मानुषीणां विशामग्निं स्वध्वरं ॥३॥
उत। स्म। यं। शिशुं। यथा। नवं। जनिष्ट। अरणी इति। धर्तारं। मानुषीणां। विशां।
अग्निं। सुऽअध्वरं ॥३॥

उत स्म अपि च मानुषीणां मनोर्जातानां विशां। विशन्ति प्रविशन्ति गर्भाशयमिति विशः प्रजाः। तासां धर्तारमाहारादिपाकद्वारेण शरीरधातूनां पोषकं स्वध्वरं शोभनयज्ञं यमग्निमरणी द्वे अरणी नवं नूतनं शिशुं यथा अपत्यमिव जनिष्ट अजनिषातां। अरणी प्रजानां पोषणार्थं चैतमग्निमसृजतामित्यर्थः॥ शिशुं। शो तनूकरणे। आदेच इत्यादिना आत्वं। शः कित्सन्वच्चेत्युप्रत्ययः सन्वद्भावश्च। द्विर्भावोऽभ्यासस्य ह्रस्वश्च। सन्यत इतीत्वं। आतो धातोरित्याकारलोपः। कित्त्वादाद्युदात्तः। यथा। यथेति पादान्त इति सर्वानुदात्तः। जनिष्ट। जनी प्रादुर्भावे। लुङ्। छांदसत्वाद्वचनव्यत्ययः। अरणी। ऋ गतौ। अर्तिसृभृधृधम्यश्यवितृभ्योऽनिरित्यनिप्रत्यय आद्युदात्तः। आभ्यामग्निं गच्छन्त्यग्निरित्यरणी। कथमपादानार्थं औणादिकोऽनिः। ताभ्यामन्यत्रोणादयः। पा० ३ ४ ७५। इति नियमाद्बीमादित्वात्सिद्धं। मानुषीणां। मनोर्जातावञ्यतौ षुक्चेत्यञ्प्रत्ययः षुगागमश्च। ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं। विशां। विश प्रवेशने। कर्तरि क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं। स्वध्वरं। ह्वृ हिंसार्थस्य ध्वरतेः पचाद्यच्। न विद्यते ध्वरो यागहिंसा यस्मिन्नित्यध्वरः। बहुव्रीहिस्वरापवादत्वेन नञ्सुभ्यामित्यन्तोदात्तः॥

उत स्म दुर्गृभीयसे पुत्रो न ह्वार्याणां। पुरू यो दग्धासि वनाग्ने पशुर्न यवसे ॥४॥
उत। स्म। दुःऽगृभीयसे। पुत्रः। न। ह्वार्याणां। पुरु। यः। दग्धा। असि। वना।
अग्ने। पशुः। न। यवसे ॥४॥

उत स्म अपि च ह्वार्याणां कुटिलं गच्छतां सर्पाणां। यद्वा। आस्कंदितादिगतिविशेषेण वक्रगमनानामश्वानां पुत्रो न पुत्र इव बालसर्प इवाशिक्षितबालाश्व इव वा दुर्गृभीयसे। दुःखेन गृह्यसे। हे अग्ने यस्त्वं पुरु बहूनि वना वनानि दग्धासि दाहको भवसि। कथमिव। यवसे तृणे पशुर्न पशुरिव। अयमर्थः। अत्यन्तक्षुधार्तः पशुस्तृणविषये विसृष्टः सन् यथा सर्वं भक्षयति तद्वदित्यर्थः॥ दुर्गृभीयसे। ग्रह उपादाने। यक्। ध्रुव ईडित्यनुवृत्तौ बहुलं छंदसीतीडागमः। ग्रहीत्यादिना संप्रसारणं। हृग्रहोर्भश्छंदसीति भकारः। निघातः।

ह्वार्याणां। ह्वृ कौटिल्ये। ऋहलोर्ण्यत्। आदिवृद्धिः। तित्स्वरितमिति स्वरितत्वं। पुरु। पॄ पालनपूरणयोः। पॄभिदिव्यधिगृधिधृषिहृशिभ्य इति कुप्रत्ययः। उदोष्ठ्यपूर्वस्येत्युत्वं। प्रत्ययस्वरेणांतोदात्तत्वं। असि। यद्वृत्तान्नित्यमिति न निघातः॥

अध स्म यस्यार्चयः सम्यक्संयंति धूमिनः।
यदीमह त्रितो दिव्युप ध्मातेव धमति शिशीते ध्मातरी यथा॥५॥
अध। स्म। यस्य। अर्चयः। सम्यक्। सम्ऽयंति। धूमिनः।
यत्। ईं। अह। त्रितः। दिवि। उप। ध्माताऽइव। धमति। शिशीते। ध्मातरि। यथा॥५॥

अध स्म अपि च धूमिनो धूमवतो यस्याग्नेरर्चयोऽर्चींषि सम्यक् शोभनं संयंति सर्वतः प्राप्नुवंति त्रितस्त्रिषु स्थानेषु ततो व्याप्तः त्रीणि स्थानानि वातीत्य दिव्यंतरिक्षे यद्यदा ईमयमात्मानमुप धमति उपवर्धयति तदा ज्वालाः सर्वतो निर्गच्छंतीत्यर्थः। कथमिव। ध्मातेव। कर्मारो यथा भस्त्रादिभिरग्निं संवर्धयति तद्वत्स्वात्मानं वर्धयतीत्यर्थः। किंच ध्मातरि यथा। यथा ध्मातृसमीपे विद्यमानोऽग्निस्तेन ध्मायमानः स आत्मानं शिशीते तीक्ष्णीकरोति तद्वत्स्वयमेव स्वात्मानं तीक्ष्णीकरोतीत्यर्थः। अहेति पादपूरणः॥ यंति। इण् गतौ। यच्छब्दयोगान्निघाताभावः। धमति। ध्मा शब्दाग्निसंयोगयोः। पाघ्रादिना धमादेशः। पूर्ववन्निघाताभावः। शिशीते। शो तनूकरणे। व्यत्ययेनात्मनेपदी। श्नाविव्यनुवर्तमाने बहुलं छंदसीति विकरणस्य श्नुः। आदेच उपदेशे शितीत्यात्वं। श्लाविति द्विर्वचनं। बहुलं छंदसीत्यभ्यासस्येत्वं। उभे अभ्यस्तसंज्ञायामात ई हल्यघोरितीत्वं। तिङ उत्तरत्वान्निघाताभावः॥

तवाहमग्न ऊतिभिर्मित्रस्य च प्रशस्तिभिः। द्वेषोयुतो न दुरिता तुर्याम मर्त्यानां॥६॥
तव। अहं। अग्ने। ऊतिऽभिः। मित्रस्य। च। प्रशस्तिऽभिः। द्वेषःऽयुतः। न। दुःऽइता।
तुर्याम। मर्त्यानां॥६॥

हे अग्ने मित्रस्य सर्वेषां मित्रभूतस्य तवोतिभिर्युष्मत्कर्तृकरक्षणैर्युष्मत्प्रशस्तिभिश्चास्मत्कृतैः स्तोत्रैश्च मर्त्यानां शत्रुभूतानां मनुष्याणां दुरिता दुरितानि तत्कर्तृकाणि पापसाधनकर्माणि द्वेषोयुतो न द्वेषयुक्तान् शत्रूनिव तुर्याम। तरेय। अयमर्थः। त्वद्रक्षणैस्त्वत्संबंधिस्तुतिभिश्च बाह्याभ्यंतरशत्रून् तरेयमित्यर्थः॥ ऊतिभिः। अव रक्षणे। क्तिन्। ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यूट्। ऊतियूतिजूतिसातिहेतिकीर्तयश्चेत्यंतोदात्तो निपातितः। प्रशस्तिभिः। शंसु स्तुतौ। क्तिन्। कृदुत्तरपदप्रकृतिस्वरापवादत्वेन तादौ च निति कृत्यतौ इति गतेरुदात्तत्वं। द्वेषोयुतः। द्विष अप्रीतौ। भावेऽसुन्प्रत्ययः। यु मिश्रणे। कर्तरि क्विप्। तुक्। कृदुत्तरपदप्रकृतिस्वरत्वं। तुर्याम। तॄ प्लवनतरणयोः। प्रार्थनायां लिङ्। यासुट्। लिङः सलोपोऽनंत्यस्येति सकारलोपः। बहुलं छंदसीति शपो लुक्। उदोष्ठ्यपूर्वस्य बहुलं छंदसीत्युत्वं। यासुडागमस्योदात्तत्वात्क्रियानिघातः। अपादादाविति प्रतिषेधान्निघाताभावः॥

तं नो अग्ने अभी नरो रयिं सहस्व आ भर।
स क्षेपयत्स पोषयद्भुवद्वाजस्य सातय उतैधि पृत्सु नो वृधे॥७॥
तं। नः। अग्ने। अभि। नरः। रयिं। सहस्वः। आ। भर।
सः। क्षेपयत्। सः। पोषयत्। भुवत्। वाजस्य। सातये। उत। एधि। पृत्ऽसु। नः। वृधे॥७॥

हे अग्ने सहस्वो बलवन्नरो हविषां नेतारो नोऽस्माकं तं रयिं लोके प्रसिद्धं पश्वादिलक्षणं धनमभ्या भर। आभिमुख्येनाहर। पूर्वोक्तः सोऽग्निः क्षेपयत्। अस्मदीयान् शत्रून् क्षेपयतु। सोऽग्निः पोषयत्। अस्मान्पोषयतु।

वाजस्यान्नस्य सातये लाभाय भुवत । भवतु । उत अपि च हे अग्ने पृत्सु पृतनासु युद्धेषु नोऽस्माकं वृधे समृद्धय एधि । भव । संग्रामे शत्रुविजयार्थं स त्वं समृद्धिं कुर्वित्यर्थः ॥ सहस्वः । षह मर्षणे । असुन् । सहत्यनेन शत्रूनिति सहो बलं । मतुप् । मादुपधाया इति वत्वं । मतुवसो रुः संबुद्धौ छन्दसीति रुत्वं । आमंत्रितस्य चेति निघातः । जेषयत । क्षिप प्रेरणे । णिजंताल्लिट् । इतश्च लोपः । लेटोऽडाटावित्यडागमः । शकंध्वादित्वात् पररूपत्वं च । पोषयत । पुष पुष्टौ । भुवत । भू सत्तायां । भूसुवोस्तिङीति गुणप्रतिषेधः । उवङ् । एधि । अस भुवि । घ्वसोरेद्धावभ्यासलोपश्चेत्येत्वं । तस्यासिद्धत्वाद्धुझल्भ्यो हेर्धिरिति धिरादेशः । निघातः । पृत्सु । पदादिष्वित्यादिना पृतनाशब्दस्य पृदादेशः । सार्वकाचत्वादंतोदात्तत्वं ॥ ॥१॥

अग्न ओजिष्ठमिति सप्तर्चं दशमं सूक्तं । ऋष्यादि विनियोगश्च पूर्ववत् । चतुर्थीसप्तम्यौ पंक्ती । अग्न ओजिष्ठं सप्त चतुर्थ्यौ चेत्यनुक्रांतं ॥

अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो । प्र नो राया परीणसा रत्सि वाजाय पंथां ॥१॥

अग्ने । ओजिष्ठं । आ । भर । द्युम्नं । अस्मभ्यं । अध्रिगो इत्यध्रिऽगो । प्र । नः । राया ।
परीणसा । रत्सि । वाजाय । पंथां ॥१॥

हे अग्ने ओजिष्ठं बलवत्तमं द्युम्नं । द्योततं कटकमुकुटादिरूपेण सर्वत्र प्रकाशत इति द्युम्नं धनं । अस्मभ्यमा भर । आहर । हे अध्रिगो अधृतगमन । अधृतमप्रतिहतं गमनं यस्येत्यधृता अनिवारिता गावो रश्मयो यस्येति वाधृतगुरध्रिगुः । तस्य संबोधनं । नोऽस्मान् परीणसा परितो व्यापकेन राया धनेन प्र प्रकर्षेण योजय । वाजायान्नलाभाय पथा पंथानमन्नस्य मत्समीपप्राप्तिसाधनं मार्गं रत्सि । विलिख । कुर्वित्यर्थः ॥ ओजिष्ठं । उब्ज आर्जवे । उब्जेर्बलोपश्चेत्यसुन् बलोपश्च । गुणः । ओजः । तदस्यास्तीत्यर्थेऽस्मायामेधेत्यादिना विनिः । अतिशायने इतीष्ठन् । विन्मतोर्लुक् । टेरिति टिलोपः । नित्त्वादाद्युदात्तः । द्युम्नं । द्युत दीप्तावित्यस्माद्धातोः सुम्नद्युम्नेनिम्नेत्यादिना नक्प्रत्ययो मकारश्चांतादेशो निपात्यते । प्रत्ययस्वरेणांतोदात्तः । अध्रिगो । अधृतशब्दस्य अध्र्यादेशः । गोशब्दस्योपसर्जनह्रस्वत्वं । आमंत्रितस्य निघातः । परीणसा । णस कौटिल्येऽत्र व्याप्त्यर्थो धातूनामनेकार्थत्वात् । अस्मात्सपदादिलक्षणो भावे क्विप् । परि प्राप्तं नस व्यापनं यस्य तत्तथोक्तं । उपसर्गादसमासेऽपीति णत्वं । अत्र प्रापणक्रियया युक्तस्य परेर्नसिं प्रत्युपसर्गसंज्ञा नास्ति यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञाः । पा० १.४ ६० ३. । इति न्यायात् । अतः कथं णत्वं । एवं तर्ह्युपसर्गाद्बहुलमिति वचनात् णसो णत्वं भविष्यति । निपातस्य चेति पूर्वपदस्य दीर्घः । बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरत्वं । रत्सि । रद विलेखने । भौवादिकः । बहुलं छंदसीति शपो लुक् । पादादित्वान्निघाताभावः । पंथां । द्वितीयैकवचने इतोऽत् सर्वनामस्थाने इत्यत् । नकारलोपश्छांदसः । पथिमथोः सर्वनामस्थाने इत्याद्युदात्तत्वं ॥

त्वं नो अग्ने अद्भुत क्रत्वा दक्षस्य मंहना । त्वे असुर्य१मारुहत्क्राणा मित्रो न यज्ञियः ॥२॥

त्वं । नः । अग्ने । अद्भुत । क्रत्वा । दक्षस्य । मंहना । त्वे इति । असुर्यं । आ । अरुहत् ।
क्राणा । मित्रः । न । यज्ञियः ॥२॥

हे अग्ने अद्भुत सामर्थ्यातिशयेन सर्वेषामाश्चर्यभूत त्वं नोऽस्माकं क्रत्वा कर्मणास्मत्कृतेन यज्ञादिव्यापारेण प्रीतः सन् दक्षस्य बलस्य धनस्य वा मंहना मंहनं नाम दानं कुर्विति शेषः । यतः कारणात्त्वे त्वय्यसुर्यमसुरघ्नं बलमारुहत आरूढं अतो मित्रो न सूर्य इव यज्ञियो यज्ञार्हस्त्वं क्राणा यज्ञघातकराक्षसापनोदनलक्षणानि कर्माणि कुर्वाणो भव ॥ अद्भुत । आमंत्रितस्याद्युदात्तत्वं । क्रत्वा । डुकृञ् करणे । कृञः कतुरिति कतुप्रत्ययः । ककारो गुणवृद्धिप्रतिषेधार्थः । यणादेशः । क्रतुः कर्म । तृतीयैकवचने जसादिषु वावचनमिति वचनान्नाभावाभावः । दक्षस्य । दक्ष गतिहिंसनयोः । दक्ष्यते हिंस्यतेऽनेन शत्रव इति दक्षं बलं । करणाधिकरणयोश्चेति घञ् । ञित्त्वादाद्युदात्तः । मंहना । मंहतिर्दानकर्मा । सुपां सुलुगित्याकारादेशः । त्वे । सुपां सुलुगित्यादिना ङेः शेआदेशः । सुबादेशत्वादनुदात्तः । त्वशब्दः प्रत्ययस्वरेणांतोदात्तः । एकादेश उदात्तेनोदात्त इत्येकादेशस्यो

दात्तत्वं । आरुहत । रुहेर्धातोर्लुङि कृमृदृरुहिभ्यश्छंदसीति च्लेरङादेशः । ङित्वाद्गुणाभावः । क्राणा । डुकृञ् करणे । शानच् । बहुलं छंदसीति विकरणस्य लुक् । यणादेशः । सुपां सुलुगित्याल्व । चित इत्यंतोदात्तः । यज्ञियः । यज्ञमर्हतीत्यस्मिन्नर्थे यज्ञर्त्विग्भ्यां घखञाविति घः । प्रत्ययस्वरेणांतोदात्तः ॥

त्वं नो॑ अग्न एषां॒ गयं॑ पुष्टिं॑ च॑ वर्धय । ये स्तोमे॑भिः॒ प्र सू॒रयो॒ नरो॑ म॒घान्या॑न॒शुः ॥३॥

त्वं । नः॒ । अ॒ग्ने॒ । ए॒षां॒ । गयं॑ । पुष्टिं॑ । च॒ । व॒र्ध॒य॒ । ये । स्तोमे॑भिः । प्र । सू॒रयः॑ । नरः॑ ।
म॒घानि॑ । आ॒न॒शुः ॥३॥

हे अग्ने त्वमेषां नस्त्वत्स्तावकानामस्माकं गयं । गम्यते निवासार्थमिति गयं गृहं गीयते स्तूयत इति वा गयं धनं । पुष्टिं च गवादिविषया पुष्टिं च वर्धय । प्रापय । वृद्धिं प्रापय । ये लोके प्रसिद्धाः सूरयो लब्धवर्णा नरः स्तोतारो मनुष्याः स्तोमेभिः स्तोमैः स्तोत्रैर्मघानि मंहनीयानि गवादिधनानि यथा प्रानशुः प्राप्नुवन् तद्वद्य मपीत्यर्थः ॥ गयं । गृहपक्षे गमेरघ्न्यादयश्चेति यत्प्रत्ययांतो मकारलोपश्च निपात्यते । धनपक्षे गा स्तुतौ । अस्माद्यत्प्रत्ययः । ह्रस्वत्वं । यतोऽनाव इत्याद्युदात्तत्वं । पुष्टिं । पुष पुष्टौ । स्त्रियां क्तिन् । क्तादमत्वादंतोदात्तत्वं । स्तोमेभिः । ष्टुञ् स्तुतौ । अर्तिस्तुसु इत्यादिना मन् । गुणः । नित्वादाद्युदात्तः । आनशुः । अशू व्याप्तौ । लिट् । द्विर्वचनं । हलादिशेषः । अत आदेरित्यात्वं । अश्नोतेश्चेति नुडागमः । निघातः ॥

ये अ॑ग्ने चंद्र ते॒ गिरः॑ शुं॒भंत्यश्व॑राधसः ।
शुष्मे॑भिः शु॒ष्मिणो॒ नरो॑ दि॒वश्चि॒द्येषां॑ बृ॒हत्सु॑की॒र्तिर्बोध॑ति॒ त्मना॑ ॥४॥
ये । अ॒ग्ने॒ । चं॒द्र॒ । ते॒ । गिरः॑ । शुं॒भंति॑ । अश्व॑ऽराधसः ।
शुष्मे॑भिः । शु॒ष्मिणः॑ । नरः॑ । दि॒वः । चि॒त् । येषां॑ । बृ॒हत् । सु॒ऽकी॒र्तिः । बोध॑ति । त्मना॑ ॥४॥

हे अग्ने चंद्र सर्वेषां प्राणिनामाह्लादकर ये नरस्ते गिरस्त्वत्संबंधिस्तोत्ररूपा वाचः शुंभंति शोभना कुर्वंति तेऽश्वराधसोऽश्वधना भवंति । एतेन समृद्धिरुपलक्ष्यते । किंच । शुष्मिणो बलवंतः संतः शुष्मेभिः शुष्मैः स्वकीयैर्बलैः सत्त्वैः शत्रुशोषका भवंति । येषां त्वत्संबंधिनं स्तवं कुर्वतां दिवश्चिदाकाशादपि बृहन्महती सुकीर्तिर्भवति । सर्वदिगंतरावर्तिनी कीर्तिर्भवतीत्यर्थः । एवंविधं त्वां गयस्त्मनात्मना स्वयमेव बोधति । बोधयति ॥ शुंभंति । शुभ शुंभ दीप्तौ । तुदादिः । पादादित्वान्निघाताभावः । लसार्वधातुकानुदात्तत्वे प्राप्ते सति शिष्टत्वा द्विकरणस्वर एव । अश्वराधसः । अशू व्याप्तौ । अशूप्रुषीत्यादिना क्वन् । अश्नुते व्याप्नोत्यध्वानमित्यश्वः । नित्वा दाद्युदात्तः । राध साध संसिद्धौ । असुन् । राध्नुवंति साधयंत्यनेन धर्मादीनीति राधो धनं । बहुव्रीहित्वा त्पूर्वपदप्रकृतिस्वरत्वं । बृहत् । बृह बृहि वृद्धौ । शतृ । ङीपो लोपश्छांदसः । प्रत्ययस्वरः । बोधति । बुध अवगमने । ण्यंतात् शपि कृते तस्य छंदस्युभयथेति सार्वधातुकसंज्ञाया णिलोपः । यद्वृत्तान्नित्यमिति निघाता भावः । धातुस्वरेणाद्युदात्तः । त्मना । मंत्रेष्वाङ्यादेरात्मन इत्याकारलोपः ॥

तव॒ त्ये अ॑ग्ने अ॒र्चयो॒ भ्राजं॑तो यंति धृष्णु॒या ।
परि॑ज्मानो॒ न वि॒द्युतः॑ स्वा॒नो रथो॒ न वा॑ज॒युः ॥५॥
तव॑ । त्ये । अ॒ग्ने॒ । अ॒र्चयः॑ । भ्राजं॑तः । यं॒ति॒ । धृ॒ष्णु॒ऽया ।
परि॑ऽज्मानः । न । वि॒ऽद्युतः॑ । स्वा॒नः । रथः॑ । न । वा॒ज॒ऽयुः ॥५॥

हे अग्ने धृष्णुया धृष्णवोऽत्यंतप्रगल्भा भ्राजंतो दीप्यमानास्त्ये ते प्रसिद्धा अर्चयस्त्वदीया रश्मयो यंति । सर्वतो गच्छंति । कथमिव । परिज्मानः परितो गंतारः सर्वतो व्याप्ता विद्युतो नाचिरप्रभा इव । अनेन प्रकाशातिशय उक्तः । स्वानः शब्दायमानो रथो न रथ इव । अनेनार्चिषां स्वनाधिक्यमुक्तं । वाजयुर्

अन्नकाम इवान्नार्थं युद्धेषु शत्रुविजयाय यथा प्रवर्तते तद्वदित्यर्थः। अनेनाकृतिविषयोऽभिलाष उक्तः ॥ यंति। इण गतौ। धृष्णुया। ञिधृषा प्रागल्भ्ये। त्रसिगृधिधृषीत्यादिना क्नुप्रत्ययः। आदितश्च। पा० ७. २ १६.। इतीट्प्रतिषेधः। बहुवचने सुपा सुलुगित्यादिना याजादेशः। चित इत्यंतोदात्तत्वं। परिज्मानः। अज व्रज गतौ। परिपूर्वादजतेरन्येभ्योऽपि दृश्यंत इति मनिन्। अकारलोपश्छांदसः। नित्त्वादाद्युदात्तः। वाजयुः। वाजमात्मन इच्छतीति क्यच्। न छंदस्यपुत्रस्येतीत्वदीर्घयोः प्रतिषेधः। क्याच्छंदसीत्युप्रत्ययः ॥

नू नो॑ अग्न ऊ॒तये॑ स॒बाध॑सश्च रा॒तये॑। अ॒स्माका॑सश्च सू॒रयो॒ विश्वा॒ आशा॑स्तरी॒षणि॑ ॥६॥

नु। नः॒। अ॒ग्ने॒। ऊ॒तये॑। स॒ऽबाध॑सः। च॒। रा॒तये॑। अ॒स्माका॑सः। च॒। सू॒रयः॑। विश्वाः॑। आशाः॑। त॒री॒षणि॑ ॥६॥

हे अग्ने नोऽस्माकं नु क्षिप्रमूतये रक्षार्थं भव। सबाधसश्च दारिद्र्यनिमित्तबाधसहितस्य च रातये धनानां दानाय भव। किंच अस्माकासोऽस्माकाः पुत्रमित्रादयः सूरयः स्तोतारो विश्वाः सर्वा आशा दिशस्तरीषणि। तासां तरणे क्षमा भवंतु। अथवा आशाः कामाः। अयमर्थः। स्वाभिलषितप्रशस्तसमस्तवस्तुसंपादनकुर्वित्यर्थः ॥ सबाधसः। बाधेरसुन्। बाधसा सह वर्तत इति सबाधाः। वोपसर्जनस्येति सहस्य सभावः। कृदुत्तरपदप्रकृतिस्वरत्वं। रातये। रा दाने। क्तिन्। मंत्रे वृषेषपचमनविदभूवीरा उदात्त इत्यंतोदात्तः। अस्माकासः। तस्मिन्नणि च युष्माकास्माकाविति खञि कृतेऽस्माकादेशः। छांदसत्वादणो लोपः। बहुवचने ऽसुगागमः। षष्ठीबहुवचने मध्योदात्तत्वेन दृष्टत्वात्तथाविधमादेशमत्रापि कृतवानाचार्यः। विश्वाः। विशेरशिप्रुषीत्यादिना क्वन्। नित्त्वादाद्युदात्तः। तरीषणि। तॄ प्लवनतरणयोः। कृतॄभ्यामीषन्। उ० ४ २६। इतीषन्। बहुलवचनान्नलोपाभावः। अंतोदात्तश्छांदसः ॥

त्वं नो॑ अग्ने अंगिरः स्तु॒तः स्तवा॑न॒ आ भ॑र।
होत॑र्विभ्वा॒सहं॑ र॒यिं स्तो॒तृभ्यः॒ स्तव॑से च न उ॒तैधि॑ पृ॒त्सु नो॑ वृ॒धे ॥७॥

त्वं। नः॒। अ॒ग्ने॒। अं॒गि॒रः॒। स्तु॒तः। स्तवा॑नः। आ। भ॒र।
होत॒रिति॑। वि॒भ्व॒ऽसहं॑। र॒यिं। स्तो॒तृऽभ्यः॑। स्तव॑से। च॒। नः॒। उ॒त। ए॒धि॒। पृ॒त्ऽसु। नः॒। वृ॒धे ॥७॥

हे अग्ने अंगिरः। कार्यकारणयोरभेदोपचारादंगिरसां प्रकृतिभूतोऽप्यग्निरंगिरा इत्युच्यते। हे अंगिरः पूर्वैः पुरातनैर्महर्षिभिः स्तुतः स्तवान इदानीतनैश्च स्तूयमानस्त्वं विभ्वासहं महतामप्यभिभवितारं। अभिभवहेतुत्वादभिभवितृ धनमुच्यते। रयिं धनं नोऽस्माकमा भर। आहर। हे होतर्देवानामाह्वातः स्तोतृभ्यो नोऽस्मभ्यं स्तवसे स्तोतुं सामर्थ्यं च प्रयच्छ। उतापि च पृत्सु युद्धेषु नोऽस्माकं वृधे समृद्धय एधि। भव ॥ स्तवानः। ष्टुञ् स्तुतौ। शानचि कर्मणि व्यत्ययेन शप्प्रत्यय आद्युदात्तश्च। विभ्वासहं। संहितायां विभूनामिति षष्ठीबहुवचनस्य सुपामित्यादिना आकारादेशः। तत्पुरुषे कृति बहुलमिति षष्ठ्या अलुक्। पदकारास्तु विपूर्वाद्भवतेरणागमेऽन्येषामपि दृश्यत इति दीर्घत्वं च मत्वावग्रहं कुर्वंति। कृदुत्तरपदप्रकृतिस्वरत्वं। स्तवसे। ष्टुञ् स्तुतौ। तुमर्थेऽसेन्प्रत्ययः। नित्त्वादाद्युदात्तः ॥ ॥२॥

जनस्य गोपा इति षड्चमेकादशं सूक्तमात्रेयस्य सुतंभरस्यार्षं जागतमाग्नेयं। तथा चानुक्रांतं। जनस्य षट् सुतंभरो जागतमिति ॥ प्रातरनुवाक आश्विनशस्त्रे चास्य सूक्तस्य विनियोगः। जनस्य गोपास्त्वामग्न ऋतायव इति सूत्रितं। आ० ४. १३। इति ॥

जन॑स्य गो॒पा अ॑जनिष्ट॒ जागृ॑विर॒ग्निः सु॒दक्षः॑ सुवि॒ताय॒ नव्य॑से।
घृ॒तप्र॑तीको बृह॒ता दि॑वि॒स्पृशा॑ द्यु॒मद्वि भा॑ति भर॒तेभ्यः॒ शुचिः॑ ॥१॥

जनस्य । गोपाः । अजनिष्ट । जागृविः । अग्निः । सुऽदक्षः । सुविताय । नव्यसे ।
घृतऽप्रतीकः । बृहता । दिविऽस्पृशा । द्युऽमत् । वि । भाति । भरतेभ्यः । शुचिः ॥१॥

जनस्य गोपा गोपायिता रक्षिता जागृविर्जागरणशीलः सदा प्रबुद्धः सुदक्षः सुबलः सर्वैः श्लाघनीयबलः सोऽग्निर्नव्यसे नवतराय सुविताय लोकानां कल्याणायाजनिष्ट । जातः । घृतप्रतीको घृतेन प्रज्वलितांगो बृहता महता दिविस्पृशाभ्रंलिहेन तेजसा युक्तः शुचिः शुद्ध एवंविधोऽग्निर्भरतेभ्य ऋत्विग्भ्यस्तदर्थं द्युमद्दीप्तिमद्यथा भवति तथा वि भाति । प्रकाशते ॥ गोपाः । गुपू रक्षणे । आयप्रत्ययः । गोपायतेः क्विप् । परत्वादतो लोपः । अत्र परत्वादपृक्तलोपे कृते वर्णाश्रयत्वात् प्रत्ययलक्षणाभावेन यलोपो न स्यात् । लोपो व्योर्वलीति प्रथमं लोपग्रहणाज्ज्ञापकाद्यलोप एव भवति । लोपाजादेशस्य यलोपविधिं प्रति न स्थानिवद्भावः । प्रत्ययस्वरः । जागृविः । जागृ निद्राक्षये । जॄशॄस्तॄजागृभ्यः क्विन्निति क्विन्प्रत्ययः । जाग्रोऽविचिण्णल्ङित्स्विति प्रतिषेधाद्गुणाभावः । नित्त्वादाद्युदात्तः । सुदक्षः । आद्युदात्तं द्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वं । सुविताय । तन्वादीनां छन्दस्युपसंख्यानमिति सोरुवङादेशः । सूपमानात् क्त इत्युत्तरपदांतोदात्तत्वं । नव्यसे । नवशब्दादतिशायनेऽर्थे ईयसुन्प्रत्ययः । ईकारलोपश्छांदसः । अतो लोपः । आद्युदात्तः । दिविस्पृशा । हृद्द्युभ्यां ङेरुपसंख्यानमित्यलुक् । कृदुत्तरपदप्रकृतिस्वरत्वं । द्युमत् । ह्रस्वनुड्भ्यां मतुबिति ह्रस्वात्परस्य मतुपोंऽतोदात्तत्वं ॥

यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे ।
इंद्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥२॥

यज्ञस्य । केतुं । प्रथमं । पुरःऽहितं । अग्निं । नरः । त्रिऽसधस्थे । सं । ईधिरे ।
इंद्रेण । देवैः । सऽरथं । सः । बर्हिषि । सीदत् । नि । होता । यजथाय । सुऽक्रतुः ॥२॥

नर ऋत्विजो यज्ञस्य यागस्य केतुं प्रज्ञापकं पुरोहितं यजमानैः पुरस्कृतमिंद्रेण देवैश्च सरथं तेषां मान्यत्वात्समानरथमग्निं त्रिषधस्थे त्रिस्थाने विहारप्रदेशे प्रथमं समीधिरे । समैधत । सुक्रतुः शोभनकर्मा होता देवानामाह्वाता सोऽग्निर्बर्हिषि बर्हिर्युक्ते तस्मिन् स्थाने यजथाय यज्ञाय नि षीदत । प्रतिष्ठितोऽभवदिति यावत् ॥ केतुं । कित ज्ञाने । औणादिक उप्रत्ययः । अंतोदात्तः । पुरोहितं । पुरोऽव्ययमिति गतिसंज्ञाया गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वं । त्रिषधस्थे । आहवनीयादिलक्षणेन त्रिप्रकारेणाग्निना सह तिष्ठतीति त्रिषधस्थः । कप्रत्ययः । सध मादस्थयोश्छंदसीति सधादेशः । कृदुत्तरपदप्रकृतिस्वरत्वं । सीदत । षद पाघ्रादिना सीदादेशः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । पादादित्वान्निघाताभावः । यजथाय । यजेरौणादिकोऽथप्रत्ययः । प्रत्ययस्वरेण मध्योदात्तः ॥

असंमृष्टो जायसे मात्रोः शुचिर्मंद्रः कविरुदतिष्ठो विवस्वतः ।
घृतेन त्वावर्धयन्नग्न आहुत धूमस्ते केतुरभवद्दिवि श्रितः ॥३॥

असंऽमृष्टः । जायसे । मात्रोः । शुचिः । मंद्रः । कविः । उत् । अतिष्ठः । विवस्वतः ।
घृतेन । त्वा । अवर्धयन् । अग्ने । आऽहुत । धूमः । ते । केतुः । अभवत् । दिवि । श्रितः ॥३॥

हे अग्ने मात्रोररण्योः । स्वजननिमित्तत्वादरणी मातरावित्युच्येते । ताभ्यामसंसृष्टोऽबाधित एव जायसे । प्रादुर्भूतो भवसि । मंद्रः सर्वैः स्तुत्यः कविः क्रांतः सर्वत्र व्याप्तः । अथवा मेधावी शुचिः । विवस्वतोऽग्निहोत्रार्थं गृहे विशेषेण वसतो यजमानादुदतिष्ठः । उदितोऽभवः । पूर्वे महर्षयस्त्वा त्वां घृतेनावर्धयन् । वृद्धिमनयन् । हे आहुत आहुतिभिर्हुत ते तव दिव्यंतरिक्षे श्रितो व्याप्तो धूमः केतुः प्रज्ञापकोऽभवत् । अग्न्यनुमापकत्वाद्धूमस्य ॥ मात्रोः । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं । मंद्रः । मदि स्तुतिमोदमदस्वप्नकांतिगतिषु । अत्र स्तुत्यर्थादस्मात्स्फायितंचीत्यादिना रक् । अंतोदात्तः । कविः । कवतेः सर्वधातुभ्य इतीन्प्रत्ययः ।

बाहुलकत्वाम्मकारस्य वत्वं रेफलोपश्च । व्यत्ययेनांतोदात्तत्वं । उद्दतिषः । उत्पूर्वाद्दृ्ध्वंकर्मवाचिनस्तिष्ठतेरात्मनेपदाभावः । विवस्वतः । विपूर्वाद्वसतेः संपदादिलक्षणो भावे क्विप् । तदस्यास्तीति मतुप् । मादुपधायाश्चेति वत्वं । मतुपोऽनुदात्तत्वाद्धातुस्वरः ॥

अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरंते गृहेगृहे ।
अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतुं ॥४॥
अग्निः । नः । यज्ञं । उप । वेतु । साधुऽया । अग्निं । नरः । वि । भरंते । गृहेऽगृहे ।
अग्निः । दूतः । अभवत् । हव्यऽवाहनः । अग्निं । वृणानाः । वृणते । कविऽक्रतुं ॥४॥

साधुया सर्वपुरुषार्थानां साधकोऽग्निर्नो यज्ञमस्मदीयं यागं प्रत्युप वेतु । आगच्छतु । नरो मनुष्या गृहेगृहेऽनुगृहमग्निं वि भरंते । विहरंति । विहरणं कुर्वंतीत्यर्थः । हव्यवाहनो हव्यानां हविषां वोढाग्निर्दूतो देवानां दूतोऽभवत् । वृणानाः संभजमानाः संतः कविक्रतुं क्रांतयज्ञमग्निं वृणते । संभजंते ॥ साधुया । सुपां सुलुगित्यादिना विभक्तेर्यादेशः ॥

तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे ।
त्वां गिरः सिंधुमिवावनीर्महीरा पृणंति शवसा वर्धयंति च ॥५॥
तुभ्यं । इदं । अग्ने । मधुमत्ऽतमं । वचः । तुभ्यं । मनीषा । इयं । अस्तु । शं । हृदे ।
त्वां । गिरः । सिंधुंऽइव । अवनीः । महीः । आ । पृणंति । शवसा । वर्धयंति । च ॥५॥

हे अग्ने तुभ्य तुभ्यं त्वदर्थं मधुमत्तममत्यंतं मधुरमिदं वचः क्रियते । हृदे हृदि शं सुखं कुर्वतीयं मनीषा स्तुतिस्तुभ्यमस्तु । गिरः स्तुतिरूपा वाचस्त्वामा पृणंति । पूरयंति । शवसा बलेन वर्धयंति च । कथमिव । महीर्महत्योऽवनीरवन्यो नद्यः सिंधुमिव समुद्रमिव ॥

त्वामग्ने अंगिरसो गुहा हितमन्वविंदञ्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमंगिरः ॥६॥
त्वां । अग्ने । अंगिरसः । गुहा । हितं । अनु । अविंदन् । शिश्रियाणं । वनेऽवने ।
सः । जायसे । मथ्यमानः । सहः । महत् । त्वां । आहुः । सहसः । पुत्रं । अंगिरः ॥६॥

हे अग्नेऽंगिरस ऋषयो गुहा गुहायां हितं निहितं निगूढं वने वने वृक्षे वृक्षे शिश्रियाणमाश्रितं त्वामन्वविंदन् । अलभंत । महन्महता सहः सहसा बलेन युक्तः स त्वं मथ्यमानो जायसे । हे अंगिरोऽंगिरसां प्रकृतिभूत त्वां सहसः पुत्रमाहुः ॥ शिश्रियाणं । श्रिञ् सेवायां । लिटः कानच् । शपः श्लुः । श्लाविति द्विर्वचनं । इयङादेशः । चित्त्वादंतोदात्तः ॥ ॥३॥

प्राग्नये बृहत इति षड्टचं द्वादशं सूक्तं सुतंभरस्यार्षं त्रैष्टुभमाग्नेयं । प्राग्नय इत्यनुक्रांतं ॥ प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चेदं सूक्तं विनियुक्तं । सूचितं च । प्राग्नये बृहते प्र वेधस । आ० ४ १३ । इति ॥

प्राग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म ।
घृतं न यज्ञ आस्ये३सुपूतं गिरं भरे वृषभाय प्रतीचीं ॥१॥

प्र । अग्नये । बृहते । यज्ञियाय । ऋतस्य । वृष्णे । असुराय । मन्म ।
घृतं । न । यज्ञे । आस्ये । सुऽपूतं । गिरं । भरे । वृषभाय । प्रतीचीं ॥ १ ॥

बृहते सामर्थ्यातिशयेन महते यज्ञियाय यज्ञार्हाय ऋतस्योदकस्य वृष्णे वर्षित्रे । ऋतमित्युदकनामसु पाठात् । असुराय बलवते ॥ असेरौणादिक उरन्प्रत्ययः ॥ वृषभाय कामानां वर्षित्रेऽग्नये मन्म ज्ञानसाधनं प्रतीचीमभिमुखीं गिरं स्तुतिरूपां वाचं प्र भरे । प्रणयामि । कथमिव । सुपूतं सम्यक्संस्कृतमास्ये प्रहुतं यज्ञे घृतं न घृतमिव । आस्ये प्रहुतं घृतं यथा प्रीतिकरं भवति तथा प्रीतिकरीं स्तुतिमित्यर्थः ॥

ऋतं चिकित्व ऋतमिच्चिकिद्ध्यृतस्य धारा अनु तृंधि पूर्वीः ।
नाहं यातुं सहसा न द्वयेन ऋतं सपाम्यरुषस्य वृष्णः ॥ २ ॥
ऋतं । चिकित्वः । ऋतं । इत् । चिकिद्धि । ऋतस्य । धाराः । अनु । तृंधि । पूर्वीः ।
न । अहं । यातुं । सहसा । न । द्वयेन । ऋतं । सपामि । अरुषस्य । वृष्णः ॥ २ ॥

ऋतं स्तोत्रं हे चिकित्वो जानन्नग्ने त्वं ऋतं मया क्रियमाणमिदं स्तोत्रं चिकिद्धि । जानीहि ॥ कित ज्ञाने । जुहोत्यादिः । लोटि रूपं । इर्दिति पररूपं । ऋतमिति पदस्य परस्मिन्नामन्त्रिते विद्यमानेऽपि कादमत्वात्प्रागवद्भावाभावः ॥ किंच पूर्वीर्बह्वीर्ऋतस्योदकस्य धारास्तस्य पोषणार्थमुत्पादयितुमनु तृंधि । मेघाननुविध्य । सहसा बलेन युक्तोऽहं यातुं कर्मणा नाशकरीं हिंसां न सपामि । न स्पृशामि । न करोमीति यावत् । द्वयेन च सत्यानृताभ्यां यत्किंचिद्वैदिकं कृत्यं न सपामि ॥ षप समवाये इति धातुः ॥ किंतु अरुषस्य रोचमानस्य वृष्णः कामानां वर्षितुस्तव ऋतं स्तोत्रमेव सपामि ॥

कया नो अग्न ऋतयन्नृतेन भुवो नवेदा उचथस्य नव्यः ।
वेदा मे देव ऋतुपा ऋतूनां नाहं पतिं सनितुरस्य रायः ॥ ३ ॥
कया । नः । अग्ने । ऋतयन् । ऋतेन । भुवः । नवेदाः । उचथस्य । नव्यः ।
वेद । मे । देवः । ऋतुऽपाः । ऋतूनां । न । अहं । पतिं । सनितुः । अस्य । रायः ॥ ३ ॥

हे अग्ने ऋतयन् सर्वप्राणिनां जीवनहेतुकमुदकं कुर्वन् कया केनाप्यृतेन सत्येन क्रियमाणेन कर्मणा नः उचथस्यास्मदीयस्य स्तोत्रस्य नवेदा ज्ञाता भुवः । भवः । नव्यः स्तुत्य ऋतूनां ऋतुपाः । द्वितीय ऋतुशब्दोऽनुवादकः । देवो द्योतमानोऽग्निर्मे मा वेद । वेत्तु । सनितुर्भजमानस्यास्य मम रायः पश्वादिलक्षणस्य पतिं स्वामिनं तमग्निमहं न जानामि ॥ भुवः । भू सत्तायां । लिङर्थे लेट्यडागमः । उवङादेशः । नवेदाः । न न वेत्तीति वेत्तीत्यस्मिन्नर्थे वर्तते । कथमेतल्लभ्यते । निपातनात् । द्विनञ्पूर्वस्यासुन्प्रत्ययान्तस्य वेदेरेकस्य नञो लोपोऽन्यस्य प्रकृतिभावश्च स्कंदस्वामिना निपातितः । पाणिनिना तु नभ्राण्नपादिति सूत्रेण वेत्तीतिनञ्स्मिन्नर्थे निपातितः । अस्यार्थस्यानुपपन्नत्वात् स्कंदस्वामिपक्ष एवाश्रीयते ॥

के ते अग्ने रिपवे बंधनासः के पायवः सनिषंत द्युमंतः ।
के धासिमग्ने अनृतस्य पांति क आसतो वचसः संति गोपाः ॥ ४ ॥
के । ते । अग्ने । रिपवे । बंधनासः । के । पायवः । सनिषंत । द्युऽमंतः ।
के । धासिं । अग्ने । अनृतस्य । पांति । के । असतः । वचसः । संति । गोपाः ॥ ४ ॥

हे अग्ने ये रिपवे स्वकीयस्य शत्रोः बंधनासो बंधकाः स्युस्ते त्वत्संबंधिनस्ते पुरुषाः के कीदृशाः । साम

बाहुलकत्वात्सकारस्य वत्वं रेफलोपश्च । व्यत्ययेनांतोदात्तत्वं । उद्रतिष्ठः । उत्पूर्वादूर्ध्वकर्मवाचिनस्तिष्ठतेरात्मनेपदाभावः । विवस्वतः । विपूर्वाद्वसतेः संपदादिलक्षणो भावे क्विप् । तदस्यास्तीति मतुप् । मादुपधायाश्चेति वत्वं । मतुपोऽनुदात्तत्वाद्धातुस्वरः ॥

अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरंते गृहेगृहे ।
अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतुं ॥४॥
अग्निः । नः । यज्ञं । उप । वेतु । साधुऽया । अग्निं । नरः । वि । भरंते । गृहेऽगृहे ।
अग्निः । दूतः । अभवत् । हव्यऽवाहनः । अग्निं । वृणानाः । वृणते । कविऽक्रतुं ॥४॥

साधुया सर्वपुरुषार्थानां साधकोऽग्निर्नो यज्ञमस्मदीयं यागं प्रत्युप वेतु । आगच्छतु । नरो मनुष्या गृहेगृहेऽनुगृहमग्निं वि भरंते । विहरंति । विहरणं कुर्वंतीत्यर्थः । हव्यवाहनो हव्यानां हविषां वोढाग्निर्दूतो देवानां दूतोऽभवत् । वृणानाः संभजमानाः संतः कविक्रतुं क्रांतयज्ञमग्निं वृणते । संभजंते ॥ साधुया । सुपां सुलुगित्यादिना विभक्तेर्यादेशः ॥

तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे ।
त्वां गिरः सिंधुमिवावनीर्महीरा पृणंति शवसा वर्धयंति च ॥५॥
तुभ्यं । इदं । अग्ने । मधुमत्ऽतमं । वचः । तुभ्यं । मनीषा । इयं । अस्तु । शं । हृदे ।
त्वां । गिरः । सिंधुंऽइव । अवनीः । महीः । आ । पृणंति । शवसा । वर्धयंति । च ॥५॥

हे अग्ने तुभ्य तुभ्यं त्वदर्थं मधुमत्तममत्यंतं मधुरमिदं वचः क्रियते । हृदे हृदि शं सुखं कुर्वतीयं मनीषा स्तुतिस्तुभ्यमस्तु । गिरः स्तुतिरूपा वाचस्त्वामा पृणंति । पूरयंति । शवसा बलेन वर्धयंति च । कथमिव । महीर्महत्योऽवनीरवन्यो नद्यः सिंधुमिव समुद्रमिव ॥

त्वामग्ने अंगिरसो गुहा हितमन्वविंदञ्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमंगिरः ॥६॥
त्वां । अग्ने । अंगिरसः । गुहा । हितं । अनु । अविंदन् । शिश्रियाणं । वनेऽवने ।
सः । जायसे । मथ्यमानः । सहः । महत् । त्वां । आहुः । सहसः । पुत्रं । अंगिरः ॥६॥

हे अग्नेऽगिरस ऋषयो गुहा गुहायां हितं निहितं निगूढं वने वने वृक्षे वृक्षे शिश्रियाणमाश्रितं त्वामन्वविदन् । अलभंत । महन्महता सहः सहसा बलेन युक्तः स त्वं मथ्यमानो जायसे । हे अंगिरोऽगिरसां प्रकृतिभूत त्वां सहसः पुत्रमाहुः ॥ शिश्रियाणं । श्रिञ् सेवायां । लिटः कानच् । शपः श्लुः । श्लाविति द्विर्वचनं । इयङादेशः । चित्त्वादंतोदात्तः ॥ ॥३॥

प्राग्नये बृहत इति षड्चं द्वादशं सूक्तं सुतंभरस्यार्षं त्रैष्टुभमाग्नेयं । प्राग्नय इत्यनुक्रांतं ॥ प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चेदं सूक्तं विनियुक्तं । सूत्रितं च । प्राग्नये बृहते प्र वेधसे । आ॰ ४ १३ । इति ॥

प्राग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म ।
घृतं न यज्ञ आस्ये३ सुपूतं गिरं भरे वृषभाय प्रतीचीं ॥१॥

प्र । अग्नये । बृहते । यज्ञियाय । ऋतस्य । वृष्णे । असुराय । मन्म ।
घृतं । न । यज्ञे । आस्ये । सुऽपूतं । गिरं । भर । वृषभाय । प्रतीचीं ॥ १ ॥

बृहते सामर्थ्यातिशयेन महते यज्ञियाय यज्ञार्हाय ऋतस्योदकस्य वृष्णे वर्षित्रे । ऋतमित्युदकनामसु पाठात् । असुराय बलवते ॥ असेरुरन् इत्याणादिक उरन्प्रत्ययः ॥ वृषभाय कामानां वर्षित्रेऽग्नये मन्म ज्ञानसाधनं प्रतीचीमभिमुखीं गिरं स्तुतिरूपां वाचं प्र भर । प्रणयामि । कथमिव । सुपूतं सम्यक्संस्कृतमास्ये प्रक्षेप्तं यज्ञे घृतं न घृतमिव । आस्ये प्रहुतं घृतं यथा प्रीतिकरं भवति तथा प्रीतिकरीं स्तुतिमित्यर्थः ॥

ऋतं चिकित्व ऋतमिच्चिकिद्ध्यृतस्य धारा अनु तृंधि पूर्वीः ।
नाहं यातुं सहसा न द्वयेन ऋतं सपाम्यरुषस्य वृष्णः ॥ २ ॥
ऋतं । चिकित्वः । ऋतं । इत् । चिकिद्धि । ऋतस्य । धाराः । अनु । तृंधि । पूर्वीः ।
न । अहं । यातुं । सहसा । न । द्वयेन । ऋतं । सपामि । अरुषस्य । वृष्णः ॥ २ ॥

ऋतं स्तोत्रं हे चिकित्वो जानन्नग्ने त्वं ऋतं मया क्रियमाणमिदं स्तोत्रं चिकिद्धि । जानीहि ॥ कित ज्ञाने । जुहोत्यादिः । लोटि रूपं । इर्दिति पररूपं । ऋतमिति पदस्य परस्मिन्नामन्त्रिते विद्यमानेऽपि कादमत्वात्पराङ्गवद्भावाभावः ॥ किंच पूर्वीर्बह्वीरृतस्योदकस्य धारास्तस्य पोषणार्थमुत्पादयितुमनु तृंधि । मेघाननुविध्य । सहसा बलेन युक्तोऽहं यातुं कर्मणा नाशकरीं हिंसां न सपामि । न स्पृशामि । न करोमीति यावत् । द्वयेन च सत्यानृताभ्यां यत्किंचिद्वैदिकं कृत्यं न सपामि ॥ षप समवाये इति धातुः ॥ किंतु अरुषस्य रोचमानस्य वृष्णः कामानां वर्षितुस्तव ऋतं स्तोत्रमेव सपामि ॥

कया नो अग्न ऋतयन्नृतेन भुवो नवेदा उचथस्य नव्यः ।
वेदा मे देव ऋतुपा ऋतूनां नाहं पतिं सनितुरस्य रायः ॥ ३ ॥
कया । नः । अग्ने । ऋतयन् । ऋतेन । भुवः । नवेदाः । उचथस्य । नव्यः ।
वेद । मे । देवः । ऋतुऽपाः । ऋतूनां । न । अहं । पतिं । सनितुः । अस्य । रायः ॥ ३ ॥

हे अग्ने ऋतयन् सर्वप्राणिनां जीवनहेतुकमुदकं कुर्वन् कया केनाप्यृतेन सत्येन क्रियमाणेन कर्मणा नः उचथस्यास्मदीयस्य स्तोत्रस्य नवेदा ज्ञाता भुवः । भवेः । नव्यः स्तुत्य ऋतूनां ऋतुपाः । द्वितीय ऋतुशब्दोऽनुवादकः । देवो द्योतमानोऽग्निर्मे मा वेद । वेत्तु । सनितुर्भजमानस्यास्य मम रायः पश्वादिलक्षणस्य पतिं स्वामिनं तमपि महं न जानामि ॥ भुवः । भू सत्तायां । लिङर्थे लेट्यडागमः । उवङादेशः । नवेदाः । न न वेत्तीति वेत्तीत्यस्मिन्नर्थे वर्तते । कथमेतल्लभ्यते । निपातनात् । द्विनञ्पूर्वस्यासुन्प्रत्ययान्तस्य वेदेरेकस्य नञो लोपोऽन्यस्य प्रकृतिभावश्च स्कंदस्वामिना निपातितः । पाणिनिना तु नभ्राण्नपादिति सूत्रेण वेत्तीत्येतस्मिन्नर्थे निपातितः । अस्यार्थस्यानुपपन्नत्वात् स्कंदस्वामिपक्ष एवाश्रीयते ॥

के ते अग्ने रिपवे बंधनासः के पायवः सनिषंत द्युमंतः ।
के धासिमग्ने अनृतस्य पांति क आसतो वचसः संति गोपाः ॥ ४ ॥
के । ते । अग्ने । रिपवे । बंधनासः । के । पायवः । सनिषंत । द्युऽमंतः ।
के । धासिं । अग्ने । अनृतस्य । पांति । के । असतः । वचसः । संति । गोपाः ॥ ४ ॥

हे अग्ने ये रिपवे स्वकीयस्य शत्रोः बंधनासो बंधकाः सन्ति ते त्वत्संबंधिनस्ते पुरुषाः के कीदृशाः । साम

र्थातिशयादेवंविधा इति केनापि ज्ञातुं न शक्यंत इत्यर्थः। ये पायवो जनानां रक्षितारो द्युमंतो दीप्तिमंतः सनिषंत दीनेभ्यो धनं प्रयच्छंति त्वदीयाः के कीदृशाः। येऽनृतस्यामत्यस्य धासिं धारकं जनं पांति रक्षंति ते त्वदीया जनाः के संति। न केऽपीत्यर्थः। येऽसतो दुष्टस्याभिशापादिलक्षणस्य वचसो गोपा गोपायितारो रक्षितारस्ते त्वदीयाः के संति। न केऽपीत्यर्थः। अथवा ये के जना रिपोर्वधकाः। ये के पायवो रक्षितारः सनिषंत धनं प्रयच्छंति द्युमंतः। ये केऽनृतस्यासत्यस्य धासिं धारकं जनं पांति अनृतजनितपापात्परिहृत्य सन्मार्गप्रदानेन रक्षंति। ये केऽसतोऽभिशापादिलक्षणाद्वचसो गोपा गोपायितारः संति ते सर्वे त्वदीयाः। त्वदुपासका इत्यर्थः॥

सखा॑यस्ते॒ विषु॑णा अग्न ए॒ते शि॒वासः॒ संतो॒ अशि॑वा अभूवन्।
अधू॑र्षत स्व॒यमे॒ते वचो॑भिर्ऋजूय॒ते वृ॑जि॒नानि॑ ब्रु॒वंतः॑॥५॥
सखा॑यः। ते॒। विषु॑णाः। अ॒ग्ने॒। ए॒ते। शि॒वासः॑। संतः॑। अशि॑वाः। अ॒भू॒व॒न्।
अधू॑र्षत। स्व॒यं। ए॒ते। वचः॑ऽभिः। ऋ॒जु॒ऽय॒ते। वृ॒जि॒नानि॑। ब्रु॒वंतः॑॥५॥

हे अग्ने ते तव सखायः स्तोतारो विषुणा विप्रकीर्णाः सर्वत्र व्याप्ता एते पूर्वमशिवाः परनिंदादिकुर्वाणा स्त्वत्परिचर्या त्यजंतोऽभद्राः संत इदानीं त्वत्परिचर्यां कुर्वतः शिवासः शिवा आढ्या अभुवन्। किंच य ऋजूयत ऋजु सम्यगाचरतेऽपि मह्यं वचोभिरसाधुभिर्वृजिनानि कुटिलानि ब्रुवंतस्त एते मम सपत्नाः स्वय मेवाधूर्षत। अहिंस्यत॥ धुर्वतिर्हिंसाकर्मेण इद् रूप॥

यस्ते॑ अग्ने॒ नम॑सा य॒ज्ञमीट्ट॑ ऋ॒तं स पा॒त्यरु॒षस्य॒ वृष्णः॑।
तस्य॒ क्षयः॑ पृ॒थुरा सा॒धुरे॑तु प्र॒सर्स्रा॑णस्य॒ नहु॑षस्य॒ शेषः॑॥६॥
यः। ते॒। अ॒ग्ने॒। नम॑सा। य॒ज्ञं। ईट्टे॑। ऋ॒तं। सः। पा॒ति॒। अ॒रु॒षस्य॑। वृष्णः॑।
तस्य॑। क्षयः॑। पृ॒थुः। आ। सा॒धुः। ए॒तु॒। प्र॒ऽसर्स्रा॑णस्य। नहु॑षस्य। शेषः॑॥६॥

हे अग्ने यो मनुष्यो यज्ञं यजनीयं ते त्वां नमसा स्तोत्रेणेट्टे स्तौति। यद्वा। ते तुभ्यं यज्ञं यागं नमसा नमस्कारेण हविषेट्टे यजति॥ अस्मिन् पक्षे यजेर्बहुलं छंदसीति शपः श्लुः। श्लाविति द्विर्वचनं। बहुलं छंदसीति संप्रसारणं। सवर्णदीर्घः। जकारस्य टकारः॥ योऽरुषस्य रोचमानस्य वृष्णः कामानां वर्षितुरग्नेर्ऋतं स्तोत्रं पाति रक्षति तस्य यजमानस्य क्षयो गृहं पृथुर्विस्तीर्णं भवति। पश्वादिलक्षणैर्धनैः संपूर्णं भवतीत्यर्थः। प्रसर्स्रा णस्य प्रकर्षेण परिचर्यां गच्छतो नहुषस्य मनुष्यस्य साधुः कामानां साधकः शेषः। शिष्यत इति शेषः। पुत्र ऐतु। आगच्छतु। भवत्वित्यर्थः॥ ॥४॥

अर्चंतस्त्वेति षड्ऋचं त्रयोदशं सूक्तं सुतंभरस्यार्षं गायत्रमाग्नेयं। अनुक्रांतं च। अर्चंतो गायत्रं त्विति॥ प्रातरनुवाके आग्नेयक्रतौ गायत्रे छंदस्याश्विनशस्त्रे इदमादिके द्वे सूक्ते। सूत्रितं च। अर्चंतस्त्वेति सूक्ते। आ॰ ४. १३.। इति॥ आहवनीयोपस्थाने त्वमग्ने सप्रथा असीत्येका। सूत्रितं च। सं नः सृज सुमत्या वाजवत्या त्वमग्ने सप्रथा असीति च। आ॰ ३. १०.। इति॥ अग्न्याधेये पौर्णमास्यां त्वमग्ने सप्रथा इति प्रथमाज्यभागानुवाक्या। त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्वंतौ। आ॰ १० ६.। इति॥

अर्चं॑तस्त्वा हवामहेऽर्चं॑तः॒ समि॑धीमहि। अग्ने॒ अर्चं॑त ऊ॒तये॑॥१॥
अर्चं॑तः। त्वा॒। ह॒वा॒म॒हे॒। अर्चं॑तः। सं। इ॒धी॒म॒हि॒। अग्ने॑। अर्चं॑तः। ऊ॒तये॑॥१॥

हे अग्ने त्वा त्वामर्चंतः पूजयंतो वयं हवामहे। आह्वयामः। अर्चंतः स्तुवतो वयमूतये रक्षणाय तर्पणाय वा त्वां समिधीमहि। समिद्भिः संदीपयामः। अर्चंत इति तृतीयं पदमादरातिशयार्थं॥

अग्नेः स्तोमं मनामहे सिध्रमद्य दिविस्पृशः । देवस्य द्रविणस्यवः ॥२॥

अग्नेः । स्तोमं । मनामहे । सिध्रं । अद्य । दिविऽस्पृशः । देवस्य । द्रविणस्यवः ॥२॥

द्रविणस्यवो द्रविणं धनमिच्छंतो वयं दिविस्पृशः सूर्यरूपेणाकाशं व्याप्नुवतो देवस्य द्योतमानस्याग्नेः सिध्रं पुरुषार्थानां साधकं स्तोमं स्तोत्रमद्यास्मिन्नहनि मनामहे । ब्रूमः ॥

अग्निर्जुषत नो गिरो होता यो मानुषेष्वा । स यक्षद्दैव्यं जनं ॥३॥

अग्निः । जुषत । नः । गिरः । होता । यः । मानुषेषु । आ । सः । यक्षत् । दैव्यं । जनं ॥३॥

होता देवानामाह्वाता योऽग्निर्मानुषेष्वा वसति सोऽग्निर्नोऽस्माकं गिरः स्तुतीर्जुषत । सेवतां । सो ऽग्निर्दैव्यं जनं देवसंबंधिनं जनं यक्षत । यजतु ॥

त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वि तन्वते ॥४॥

त्वं । अग्ने । सऽप्रथाः । असि । जुष्टः । होता । वरेण्यः । त्वया । यज्ञं । वि । तन्वते ॥४॥

हे अग्ने जुष्टः सर्वदा प्रीतो वरेण्यः सर्वैर्वरणीयो होता त्वं सप्रथाः सर्वतः पृथुरसि । भवसि । तथाह यास्कः । सप्रथाः सर्वतः पृथुः । नि० ६. ७. । इति । किंच सर्वे यजमानास्त्वया साधनेन यज्ञं वि तन्वते ॥

त्वामग्ने वाजसातमं विप्रा वर्धंति सुष्टुतं । स नो रास्व सुवीर्यं ॥५॥

त्वां । अग्ने । वाजऽसातमं । विप्राः । वर्धंति । सुऽस्तुतं । सः । नः । रास्व । सुऽवीर्यं ॥५॥

हे अग्ने विप्रा मेधाविनः स्तोतारो वाजसातमं । वाजोऽन्नं । तद्दातृतमं सुष्टुतं पूर्वैर्महर्षिभिः सम्यक् स्तुतं त्वां वर्धंति । स्तोत्रैर्वर्धयंति । स त्वं नोऽस्मभ्यं सुवीर्यं सर्वैः श्लाघनीयं बलं रास्व । देहि ॥

अग्ने नेमिरराँ इव देवांस्त्वं परिभूरसि । आ राधश्चित्रमृंजसे ॥६॥

अग्ने । नेमिः । अरान्ऽइव । देवान् । त्वं । परिऽभूः । असि । आ । राधः । चित्रं । ऋंजसे ॥६॥

हे अग्ने त्वं देवान् परिभूरसि । स्वतेजसा परिभवसि । कथमिव । नेमिः प्रकाशमानश्चक्रस्य बाह्यो वलयो ऽरानिव नाभावर्पितान् सूक्ष्मान् स्थासकानिव । किंच त्वं चित्रं नानाविधं राधः । साधयत्यनेन पुरुषार्थानिति राधो धनं । आ ऋंजसे । स्तोतृभ्यः प्रसाधय । धननामसु पाठाद्राधो धनमित्युक्तं ॥ ॥५॥

अग्निं स्तोमेनेति षड़ृचं चतुर्दशं सूक्तं सुतंभरस्यार्षं गायत्रमाग्नेयं । अग्निं स्तोमेनेत्यनुक्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

अग्निं स्तोमेन बोधय समिधानो अमर्त्यं । हव्या देवेषु नो दधत् ॥१॥

अग्निं । स्तोमेन । बोधय । सम्ऽइधानः । अमर्त्यं । हव्या । देवेषु । नः । दधत् ॥१॥

हे स्तोतरमर्त्यममरणधर्माणमग्निं स्तोमेन स्तोत्रेण बोधय । स्वाभिलपितार्थसिद्धये प्रबोधय । योऽग्निः समिधानः स्तोत्रैः सम्यक् प्रकाशमानः स नो हव्यास्मदीयानि हव्यानि हवींषि देवेषु दधत् । निदधातु ॥

तमध्वरेष्वीळते देवं मर्ता अमर्त्यं । यजिष्ठं मानुषे जने ॥२॥

तं । अध्वरेषु । ईळते । देवं । मर्ताः । अमर्त्यं । यजिष्ठं । मानुषे । जने ॥२॥

मर्ता मनुष्या देवं द्योतमानममर्त्यममरणधर्माणं मानुषे मनुष्याणां संबंधिनि जने लोके यजिष्ठं यष्टृतमं तमग्निमध्वरेषु सप्ततन्तुष्वीळते । स्तुवंति ॥

तं हि शश्वंत ईळते स्रुचा देवं घृतश्चुता । अग्निं हव्याय वोळ्हवे ॥३॥

तं । हि । शश्वंतः । ईळते । स्रुचा । देवं । घृतऽश्चुता । अग्निं । हव्याय । वोळ्हवे ॥३॥

शश्वंतो बहवः स्तोतारस्तं देवमग्निमीळते । स्तुवंति । कीदृशास्ते । घृतश्चुता घृतं क्षरंत्या स्रुचा सहिताः । किमर्थं स्तुवंति । हव्याय हव्यवहनार्थं चरुपुरोडाशादिलक्षणं हविर्वोढवे वोढुं ॥

अग्निर्जातो अरोचत घ्नन्दस्यूञ्ज्योतिषा तमः । अविंदद्गा अपः स्वः ॥४॥

अग्निः । जातः । अरोचत । घ्नन् । दस्यून् । ज्योतिषा । तमः । अविंदत् । गाः । अपः । स्व१रिति स्वः ॥४॥

जातोऽरण्योर्मथनेन प्रादुर्भूतोऽग्निर्दस्यून् यज्ञविघ्नकारिणः शत्रून् घ्नन् हिंसन् ज्योतिषा स्वेन तेजसा तमो घ्नन्नरोचत । अदीप्यत । किंच गा अप उदकानि स्वः सूर्यं चाविंदत । अवेदयत ॥

अग्निमीळेन्यं कविं घृतपृष्ठं सपर्यत । वेतु मे शृणवद्धवं ॥५॥

अग्निं । ईळेन्यं । कविं । घृतऽपृष्ठं । सपर्यत । वेतु । मे । शृणवत् । हवं ॥५॥

हे जना ईळेन्यं स्तुत्यं कविं क्रांतदर्शिनं घृतपृष्ठं दीप्तोपरिभागमग्निं सपर्यत । पूजयत । सोऽग्निर्मे हवं मदीयमाह्वानं वेतु । कामयतां । शृणवत् । शृणोतु च ॥

अग्निं घृतेन वावृधुः स्तोमेभिर्विश्वचर्षणिं । स्वाधीभिर्वचस्युभिः ॥६॥

अग्निं । घृतेन । ववृधुः । स्तोमेभिः । विश्वऽचर्षणिं । सुऽआधीभिः । वचस्युऽभिः ॥६॥

ऋत्विजो विश्वचर्षणिं विश्वस्य द्रष्टारं स्वाधीभिः शोभनाध्यानैर्वचस्युभिः स्तुतिकामैर्देवैः समेतमग्निं घृतेन स्तोमेभिः स्तोमैः स्तोत्रैर्ववृधुः । अवर्धयन् ॥ ॥६॥ ॥१॥

द्वितीयेऽनुवाके दश सूक्तानि । तत्र प्र वेधस इति पंचर्चं प्रथमं सूक्तमांगिरसस्य धरुणस्यार्षं त्रैष्टुभमाग्नेयं । अत्रानुक्रमणिका । प्र वेधसे पंचांगिरसो धरुण इति ॥ प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चेदं सूक्तं । सूत्रितं च । प्र वेधसे कवये त्वं नो अग्ने वरुणस्य विद्वान् । आ० ४ १३. । इति ॥

प्र वेधसे कवये वेद्याय गिरं भरे यशसे पूर्व्याय ।

घृतप्रसत्तो असुरः सुशेवो रायो धर्ता धरुणो वस्वो अग्निः ॥१॥

प्र । वेधसे । कवये । वेद्याय । गिरं । भरे । यशसे । पूर्व्याय ।

घृतऽप्रसत्तः । असुरः । सुऽशेवः । रायः । धर्ता । धरुणः । वस्वः । अग्निः ॥१॥

योऽग्निर्घृतप्रसत्तो हवीरूपेण घृतेन प्रसन्नोऽसुरो बलवान् सुशेवः । शोभनं शेवं सुखं यस्मात्सो सुशेवः शेवमिति सुखनामसु पाठात् । रायो धनस्य धर्ता पोषको धरुणो हविषां धारको वस्वो वासकोऽग्निर्भवति वेधसे विधात्रे कवये क्रांतदृशे वेद्याय स्तुत्याय ॥ विदिरयं मनिना समानार्थो मनिश्च स्तुतिकर्मा ॥ यशसे यशस्विने पूर्व्याय मुख्याय तस्मा अग्नये गिरं स्तुतिं प्र भरे । प्रणयामि ॥

ऋतेन॑ ऋ॒तं ध॒रुणं॑ धारयन्त य॒ज्ञस्य॑ शा॒के प॑र॒मे व्यो॑मन् ।
दि॒वो धर्म॒न्धरु॑णे से॒दुषो॒ नॄञ्जा॒तैरजा॑ताँ अ॒भि ये न॑न॒क्षुः ॥२॥
ऋते॑न । ऋ॒तम् । ध॒रुण॑म् । धा॒र॒य॒न्त॒ । य॒ज्ञस्य॑ । शा॒के । प॒र॒मे । वि॒ऽओ॑मन् ।
दि॒वः । धर्म॑न् । ध॒रुणे॑ । से॒दुषः॑ । नॄन् । जा॒तैः । अज॑तान् । अ॒भि । ये । न॒न॒क्षुः ॥२॥

ये यजमाना दिवो द्युलोकस्य धरुणे धारके धर्मन्धर्मे सेदुष आसीनान् नॄनजातान्देवान् जातैर्मनुष्यैर्ऋत्विग्भिरभि ननक्षुः अभिप्राप्नुवन्ति ते यजमाना यज्ञस्य धरुणं धारकमृतं सत्यरूपमग्निं शाके कर्मणि निमित्ते परमे उत्कृष्टे व्योमन् स्थाने उत्तरवेद्यामृतेन स्तोत्रेण धारयन्त । धारयन्ति ॥

अं॒हो॒युव॑स्त॒न्व॑स्तन्वते॒ वि वयो॑ म॒हद्दु॒ष्टरं॑ पू॒र्व्याय॑ ।
स सं॒वतो॒ नव॑जातस्तुतुर्यात्सिं॒हं न क्रु॒द्धम॒भितः॒ परि॑ ष्ठुः ॥३॥
अं॒हः॒ऽयुवः॑ । त॒न्वः॑ । त॒न्व॒ते॒ । वि । वयः॑ । म॒हत् । दु॒स्तर॑म् । पू॒र्व्याय॑ ।
सः । स॒म्ऽवतः॑ । नव॑ऽजातः । तु॒तु॒र्या॒त् । सिं॒हम् । न । क्रु॒द्धम् । अ॒भितः॑ । परि॑ । स्थुः॒ ॥३॥

ये यजमानाः पूर्व्याय मुख्यायास्मा अग्नये महदधिकं दुष्टरं राक्षसैर्दुष्प्रापं वयो हवीरूपमन्नं प्रयच्छन्ति ते यजमानास्तन्वः स्वास्तनूरंहोयुवोऽंहसां वियोजिका वि तन्वते । विस्तारयन्ति । नवजातः सोऽग्निः संवतः संगतान् शत्रून् तुतुर्यात् । तरतु । किंचाभितः सर्वतो वर्तमानाः शत्रवो मां परि वर्जयित्वा स्थुः । तिष्ठन्तु । कथमिव । मृगाः क्रुद्धं सिंहं न सिंहमिव ॥

मा॒तेव॒ यद्भर॑से पप्रथा॒नो जनं॑जनं॒ धाय॑से॒ चक्ष॑से च ।
वयो॑वयो जरसे॒ यद्दधा॑नः॒ परि॒ त्मना॒ विषु॑रूपो जिगासि ॥४॥
मा॒ताऽइ॑व । यत् । भर॑से । प॒प्र॒था॒नः । जन॑म्ऽजनम् । धाय॑से । चक्ष॑से । च ।
वयः॑ऽवयः । ज॒र॒से॒ । यत् । दधा॑नः । परि॑ । त्मना॑ । विषु॑ऽरूपः । जि॒गा॒सि॒ ॥४॥

पप्रथानः सर्वत्र प्रथमानो यद्यस्त्वं मातेव जननीव जनं जनं सर्वं जनं भरसे बिभर्षि । किंच धायसे धारणाय चक्षसे दर्शनाय च सर्वैः प्रार्थ्यसे । यद्यदा दधानो धार्यमाणो भवसि तदा वयो वयः सर्वमन्नं जरसे । जरयसि । अपि च विषुरूपो नानारूपः सन् त्मनात्मना परि जिगासि । सर्वभूतानि परिगच्छसि ॥

वाजो॒ नु ते॒ शव॑सस्पा॒त्वन्त॑मु॒रुं दोघं॑ ध॒रुणं॑ देव रा॒यः ।
प॒दं न ता॒युर्गुहा॒ दधा॑नो म॒हो रा॒ये चि॒तय॒न्नत्रि॑मस्पः ॥५॥
वाजः॑ । नु । ते॒ । शव॑सः । पा॒तु॒ । अन्त॑म् । उ॒रुम् । दोघ॑म् । ध॒रुण॑म् । दे॒व॒ । रा॒यः ।
प॒दम् । न । ता॒युः । गुहा॑ । दधा॑नः । म॒हः । रा॒ये । चि॒तय॑न् । अत्रि॑म् । अ॒स्प॒रित्य॑स्पः ॥५॥

हे देव द्योतमानाग्ने उरुं पृथुं दोघं कामानां दोग्धारं रायो धनस्य धरुणं धारकं वाजो हविर्लक्षणमन्नं ते त्वदीयस्य शवसो बलस्यान्तं समाप्तिं संपूर्तिं नु अद्य पातु । रक्षतु । तायुर्न तस्करो यथा गुहा गुहायां पदं द्रव्यं दधानो धारयन् रक्षति तद्वत् महो महते राये धनाय धनलाभार्थं चितयन् सन्मार्गं प्रकाशयन् अत्रिमस्पः । अत्रिमृषिमप्रीणयः ॥ स्पृ प्रीणनपालनयोरिति धातुः ॥ ॥५॥

बृहद्वय इति पंचर्चं द्वितीयं सूक्तमात्रेयस्य पुरोरार्षं। अंत्या पंक्तिः शिष्टा अनुष्टुभः। अग्निर्देवता। तथा चानुक्रांतं। बृहत्पूरुः पंक्त्यंत हीति॥ प्रातरनुवाक आग्नेये क्रतावानुष्टुभे छंदस्याश्विनशस्त्रे चेदमादीनि दश सूक्तानि चतुर्थनवमवर्जितानि। आदितस्त्रिषु सूक्तेष्वंत्यामुद्धरेत्। तथा च सूत्रितं। बृहद्वय इति दशाना चतुर्थनवमे उद्धरन्नुत्तमामुत्तमां चादितस्त्रयाणां। आ॰ ४ १३.। इति॥

बृहद्वयो हि भानवेऽर्चा देवायाग्नये। यं मित्रं न प्रशस्तिभिर्मर्तासो दधिरे पुरः॥१॥
बृहत्। वयः। हि। भानवे। अर्च। देवाय। अग्नये। यं। मित्रं। न। प्रशस्तिऽभिः। मर्तासः। दधिरे। पुरः॥१॥

यस्मै भानवे दीप्तिमतेऽग्नये बृहद्वयो हवीरूपमन्नं दीयते हि। अतस्त्वमपि देवाय द्योतमानायाग्नये वयोऽर्च। प्रयच्छ। मर्तासो मनुष्या यमग्निं मित्रं न सखायमिव प्रशस्तिभिः प्रकृष्टाभिः स्तुतिभिः पुरो दधिरे पुरस्कुर्वंति॥

स हि द्युभिर्जनानां होता दक्षस्य बाह्वोः। वि हव्यमग्निरानुषग्भगो न वारमृण्वति॥२॥
सः। हि। द्युऽभिः। जनानां। होता। दक्षस्य। बाह्वोः। वि। हव्यं। अग्निः। आनुषक्। भगः। न। वारं। ऋण्वति॥२॥

योऽग्निर्हव्यं हविर्देवेष्वानुषक् देवेष्वनुषक्तं करोति बाह्वोर्भुजयोर्दक्षस्य बलस्य द्युभिर्दीप्तिभिर्युक्तः सोऽग्निर्जनानां यजमानानां होता देवानामाह्वाता भवति। भगो न सूर्य इव वारं वरणीयं धनं व्यृण्वति। विशेषेण प्रयच्छति मनुष्येषु॥

अस्य स्तोमे मघोनः सख्ये वृद्धशोचिषः।
विश्वा यस्मिन्तुविष्वणि समर्ये शुष्ममादधुः॥३॥
अस्य। स्तोमे। मघोनः। सख्ये। वृद्धऽशोचिषः।
विश्वा। यस्मिन्। तुविऽस्वनि। सं। अर्ये। शुष्मं। आऽदधुः॥३॥

मघोनो मघवतो धनवतो वृद्धशोचिषः। वृद्धानि शोचींषि तेजांसि यस्यासौ वृद्धशोचिः। तस्यैवंविधस्याग्नेः स्तोमे स्तोत्रे सख्ये च स्याम। तुविष्वणि बहुशब्देऽर्ये स्वामिनि यस्मिन्नग्नौ विश्वा॥ सुपां सुलुगिति डादेशः॥ विश्वे सर्व ऋत्विजः शुष्मं बलं हविर्भिः स्तोत्रैश्च समादधुः सम्यगादधति॥

अधा ह्यग्न एषां सुवीर्यस्य मंहना। तमिद्यह्वं न रोदसी परि श्रवो बभूवतुः॥४॥
अध। हि। अग्ने। एषां। सुऽवीर्यस्य। मंहना। तं। इत्। यह्वं। न। रोदसी इति। परि। श्रवः। बभूवतुः॥४॥

हे अग्ने अध अथैषामस्माकं यजमानानां सुवीर्यस्य सर्वैः स्पृहणीयस्य बलस्य मंहना मंहनायै दानाय भव॥ मंहतिर्दानकर्मा॥ रोदसी द्यावापृथिव्यौ यह्वं न महांतं सूर्यमिव श्रवः सर्वैः श्रवणीयं तमित्तमग्निमेव परि बभूवतुः। परिगृह्णीतः॥

नू न एहि वार्यमग्ने गृणान आ भर।
ये वयं ये च सूरयः स्वस्ति धामहे सचोतैधि पृत्सु नो वृधे॥५॥

नु। नः। आ। इहि। वार्यं। अग्ने। गृणानः। आ। भर।
ये। वयं। ये। च। सूरयः। स्वस्ति। धामहे। सचा। उत। एधि। पृत्ऽसु। नः। वृधे ॥५॥

हे अग्ने गृणानः स्तूयमानः सन् नु क्षिप्रमेहि। यज्ञं प्रत्यागच्छ। आगत्य च नोऽस्मभ्यं वार्यं वरणीयं धनमाभर। संपादय। ये वयं यजमाना ये च सूरयः स्तोतारः सचा हविर्भिः सहिता उभे ये वयं स्वस्ति स्तोत्रं धामहे। कुर्मः। उतापि च पृत्सु पृतनासु नोऽस्माकं वृधे समृद्धय एधि। भव ॥ ॥८॥

आ यज्ञैरिति पंचर्चं तृतीयं सूक्तमात्रेयस्य पूरोरार्षमाग्नेयं। अंत्या पंक्तिः शिष्टाः पत्यूतपरिभाषयानुष्टुभः। आ यज्ञैरित्यनुक्रमणिका ॥ अंत्यावर्जं प्रातरनुवाकाश्विनशस्त्रयोर्बृहद्वय इत्यादिदशसूक्तमध्ये विनियोग उक्तः ॥

आ यज्ञैर्देव मर्त्य इत्था तव्यांसमूतये। अग्निं कृते स्वध्वरे पूरुरीळीतावसे ॥१॥
आ। यज्ञैः। देव। मर्त्यः। इत्था। तव्यांसं। ऊतये। अग्निं। कृते। सुऽअध्वरे। पूरुः।
ईळीत। अवसे ॥१॥

हे देव मर्त्यो मनुष्य ऋत्विगित्थेत्थं तव्यांसं स्वतेजोभिः प्रवृद्धमग्निमूतये तर्पणाय यज्ञैः स्तोत्रैरा इयति। किंच पूरुर्मनुष्यः स्तोता कृते स्वध्वरे शोभने क्रतौ तमग्निमवसे रक्षणायेळीत। स्तौति ॥

अस्य हि स्वयशस्तर आसा विधर्मन्मन्यसे।
तं नाकं चित्रशोचिषं मंद्रं परो मनीषया ॥२॥
अस्य। हि। स्वयशःऽतरः। आसा। विऽधर्मन। मन्यसे।
तं। नाकं। चित्रऽशोचिषं। मंद्रं। परः। मनीषया ॥२॥

हे विधर्मन्। विशिष्टो धर्मो यस्यासौ विधर्मा स्तोता। तस्य संबोधनं। हे स्तोतः स्वयशस्तरः सुयशसां मध्येऽतिशयेन सुयशास्त्वं मनीषया प्रकृष्टबुद्ध्या साधनेन प्रसिद्धमस्याग्नेरिममासास्येन वाचा मन्यसे। स्तौषि। किंविशिष्टमग्निं। नाकं सुखं। अकं दुःखं। न विद्यतेऽकं यस्य सः। तं चित्रशोचिषं चित्रतेजसं मंद्रं स्तुत्यं परः परस्मात्स्थितं ॥

अस्य वासा उ अर्चिषा य आयुक्त तुजा गिरा।
दिवो न यस्य रेतसा बृहच्छोचंत्यर्चयः ॥३॥
अस्य। वै। असौ। ऊं इति। अर्चिषा। यः। अयुक्त। तुजा। गिरा।
दिवः। न। यस्य। रेतसा। बृहत्। शोचंति। अर्चयः ॥३॥

योऽग्निस्तुजा जगद्रक्षणसमर्थेन बलेन गिरा स्तुत्यायुक्त संबद्धो भवति दिवो न द्योतमानस्यादित्यस्येव यस्यापि रेतसा प्रभया कृत्स्नं जगद्व्याप्तं यस्याग्नेर्बृहद्बृहंतोऽर्चयो दीप्तयः शोचंति प्रकाशंते अस्य वै एतस्याग्नेरर्चिषा प्रभयासावादित्योऽर्चिष्मान्भवति। उ इति पूरणः ॥

अस्य क्रत्वा विचेतसो दस्मस्य वसु रथ आ।
अधा विश्वासु हव्योऽग्निर्विक्षु प्र शस्यते ॥४॥
अस्य। क्रत्वा। विऽचेतसः। दस्मस्य। वसु। रथे। आ।
अध। विश्वासु। हव्यः। अग्निः। विक्षु। प्र। शस्यते ॥४॥

विचेतसः सुमतय ऋत्विजोऽस्य दस्मस्य दर्शनीयस्यास्याग्नेः क्रत्वा कर्मणा यज्ञादिना वसु वसूनि धनानि रथ आ दधति। हव्यो यज्ञार्थमाह्वातव्यः सोऽग्निरध अथ उत्पत्त्यनंतरमेव विश्वासु सर्वासु विक्षु प्रजासु प्रशस्यते। स्तूयते ॥

नू न इद्धि वार्यमासा सचंत सूरयः।
ऊर्जो नपादभिष्टये पाहि शग्धि स्वस्तय उतैधि पृत्सु नो वृधे ॥५॥
नु। नः। इत। हि। वार्यं। आसा। सचंत। सूरयः।
ऊर्जः। नपात्। अभिष्टये। पाहि। शग्धि। स्वस्तये। उत। एधि। पृत्ऽसु। नः। वृधे ॥५॥

हे अग्ने नोऽस्मभ्यं वार्यं वरणीयं धनं नु क्षिप्रं यच्छ। इणीति पूरणौ। यतः सूरयः स्तोतारस्त्वत्तः सकाशादासास्येन स्तोत्रेण सचंत धनं लभते। किंच हे ऊर्जो नपादन्नस्य न पातयितर्बलस्य पुत्र वा अभिष्टये ऽभीच्छते मह्यमन्नं प्रयच्छति शेषः। पाहि। अस्मानापद्भ्यो रक्ष। स्वस्तये क्षेमाय पश्वादिलक्षणस्य धनस्य क्षेमार्थं शग्धि। त्वां याचे ॥ व्यत्ययेन मध्यमः ॥ शक्तो भवति वा। हे अग्ने उतापि च पृत्सु पृतनासु नो वृधे समृद्धय एधि। भव ॥ ॥९॥

प्रातरग्निरिति पंचर्चं चतुर्थं सूक्तं। अत्रेयमनुक्रमणिका। प्रातर्मृक्तवाहा द्वित इति। मृक्तवाहा इति विशेषणविशिष्ट आत्रेयो द्वित ऋषिः। पङ्क्त्यंतं हीति हिशब्दादस्यापि सूक्तस्य पंचमी पंक्तिः। पङ्क्त्यंतपरिभाषया शिष्टा अनुष्टुभः ॥ उक्तो विनियोगः प्रातरनुवाकाश्विनशस्त्रयोः ॥

प्रातरग्निः पुरुप्रियो विशः स्तवेतातिथिः।
विश्वानि यो अमर्त्यो हव्या मर्तेषु रण्यति ॥१॥
प्रातः। अग्निः। पुरुऽप्रियः। विशः। स्तवेत। अतिथिः।
विश्वानि। यः। अमर्त्यः। हव्या। मर्तेषु। रण्यति ॥१॥

पुरुप्रियो बहुप्रियो विशो यजमाने धनस्य निवेशकोऽतिथिः। यजमानानां गृहान्प्रति तिथिष्वभ्येतीत्य तिथिः। तथाह यास्कः। अतिथिरभ्यतितो गृहान्भवत्यभ्येति तिथिषु परकुलानीति वा परगृहाणीति वा। नि० ४ ५। इति ॥ एवंविधोऽग्निः प्रातः स्तवेत। स्तूयते। अमर्त्योऽमरणधर्मा योऽग्निर्मर्तेषु मनुष्येषु यजमानेषु स्थितानि विश्वानि सर्वाणि हव्या हव्यानि हवींषि रण्यति कामयते ॥

द्विताय मृक्तवाहसे स्वस्य दक्षस्य मंहना। इंदुं स धत्त आनुषक्स्तोता चित्ते अमर्त्य ॥२॥
द्विताय। मृक्तऽवाहसे। स्वस्य। दक्षस्य। मंहना। इंदुं। सः। धत्ते। आनुषक्। स्तोता।
चित। ते। अमर्त्य ॥२॥

हे अग्ने द्विताय द्वितपुत्राय मृक्तवाहसे। मृक्तं शुद्धं हविर्देवेभ्यो वहति प्रापयतीति मृक्तवाहाः। तस्मै स्वस्यात्मीयस्य दक्षस्य बलस्य धनस्य वा मंहना मंहनार्थं दानाय भव। हे अमर्त्य नित्याग्ने यतः कारणात्ते तुभ्यं स मृक्तवाहा आनुषक् सर्वदानुषक्तमिंदुं सोमं धत्ते धारयति स्तोता चित स्तोता च भवति ॥

तं वो दीर्घायुशोचिषं गिरा हुवे मघोनां। अरिष्टो येषां रथो व्यश्वदावन्नीयते ॥३॥
तं। वः। दीर्घायुऽशोचिषं। गिरा। हुवे। मघोनां। अरिष्टः। येषां। रथः। वि।
अश्वऽदावन्। ईयते ॥३॥

हे अग्ने दीर्घायुशोचिषं दीर्घगमनदीप्तिं तं वः । पूजायां बहुवचनं । त्वा मघोना धनिनां कृते गिरा स्तोत्रेण हुवे । आह्वयामि । हे अश्वदावन्नश्वानां दातर्येषां धनिनां रथो युद्धेष्वरिष्टः शत्रुभिरहिंसितो वीयते विगच्छतु ॥

चित्रा वा येषु दीधितिरासन्नुक्था पांति ये ।
स्तीर्णं बर्हिः स्वर्णरे श्रवांसि दधिरे परि ॥४॥
चित्रा । वा । येषु । दीधितिः । आसन् । उक्था । पांति । ये ।
स्तीर्णं । बर्हिः । स्वः ऽनरे । श्रवांसि । दधिरे । परि ॥४॥

येष्वृत्विक्षु चित्रा नानाविधा दीधितिर्यज्ञविषया क्रिया भवति । ये आसन्नास्य उक्थोक्थानि स्तोत्राणि पांति रक्षंति तैर्ऋत्विग्भिः स्तीर्णं स्तीर्णस्य बर्हिर्बर्हिषः पर्युपरि श्रवांस्यन्नानि हवींषि स्वर्णरे । स्वः स्वर्गं नर यजमानं नयतीति स्वर्णरो यज्ञः । तस्मिन्दधिरे । निधीयंते ॥

ये मे पंचाशतं दुदुरश्वानां सधस्तुति ।
द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणां ॥५॥
ये । मे । पंचाशतं । ददुः । अश्वानां । सधऽस्तुति ।
द्युऽमत् । अग्ने । महि । श्रवः । बृहत् । कृधि । मघोनां । नृऽवत् । अमृत । नृणां ॥५॥

ये मघवानो दातारो मे मह्यं सधस्तुति स्तुत्या सहितं त्वत्स्तोत्रसमनंतरमश्वानां पंचाशतं ददुः हे अमृताग्ने त्वं तेषां मघोनां नृणां द्युमत् दीप्तिमन्महि महद्बृहत्परिवृढं नृवत्परिचारकमनुष्ययुक्तं श्रवोऽन्नं कृधि । कुरु । देहीत्यर्थः ॥ ॥१०॥

अभ्यवस्था इति पंचर्चं पंचमं सूक्तं । अत्रेयमनुक्रमणिका । अभ्यवस्था वव्रिर्गायत्र्यावनुष्टुभौ विराड्रूपांते । आत्रेयो वव्रिर्ऋषिः । प्रथमाद्वितीये गायत्र्यौ तृतीयाचतुर्थ्यावनुष्टुभौ पंचमी विराड्रूपा एकादशिनस्त्रयो ऽष्टकश्च विराड्रूपेत्युक्तलक्षणोपेतत्वात् ॥

अभ्यवस्थाः प्र जायंते प्र वव्रेर्वव्रिश्चिकेत । उपस्थे मातुर्वि चष्टे ॥१॥
अभि । अवऽस्थाः । प्र । जायंते । प्र । वव्रेः । वव्रिः । चिकेत । उपऽस्थे । मातुः । वि । चष्टे ॥१॥

वव्रेर्ऋषेरभ्युत्तरोत्तरमवस्था अशोभना दशाः प्र जायंते । तादृशीर्वव्रिर्हविषा समक्तः सोऽग्निः प्र चिकेत । प्रजानीयात् । ज्ञात्वा चापनयत्वित्यि भावः । योऽग्निर्मातुः पृथिव्या उपस्थे समीपे स्थितं पदार्थजातं वि चष्टे पश्यति ॥

जुहुरे वि चितयंतोऽनिमिषं नृम्णं पांति । आ दृळ्हां पुरं विविशुः ॥२॥
जुहुरे । वि । चितयंतः । अनिऽमिषं । नृम्णं । पांति । आ । दृळ्हां । पुरं । विविशुः ॥२॥

ये वि चितयंतस्तव प्रभावं जानंतो जनास्त्वामनिमिषं सर्वदा जुहुरे यज्ञार्थं त्वामाह्वयंति आहूय च नृम्णं तव बलं हविर्भिः स्तोत्रैश्च पांति रक्षंति ते दृळ्हां शत्रुभिः साधयितुमशक्यां पुरं पुरीमा विविशुः । प्रविशंति । शतं पूर्भिरायसीभिर्नि पाहि । ऋग्वे० १.३ ७ । इति निगमः ॥

आ श्वित्रेयस्य जंतवो द्युमद्वर्धंत कृष्टयः ।
निष्कग्रीवो बृहदुक्थ एना मध्वा न वाजयुः ॥३॥
आ । श्वित्रेयस्य । जंतवः । द्युऽमत् । वर्धंत । कृष्टयः ।
निष्कऽग्रीवः । बृहत्ऽउक्थः । एना । मध्वा । न । वाजऽयुः ॥३॥

जायंत इति जंतवः । कृष्टयो मनुष्या ऋत्विजो मध्वा न मधुनेव एनेनया स्तुत्या । यद्वा नकारश्चार्थः । मधुना च श्वित्रेयस्य । श्वित्रमतरिक्षं । तत्र भवस्य वैद्युतस्याग्नेर्द्युमद्दीप्तिमद्बलमा वर्धंत । अभिवर्धयंति । किंविधाः कृष्टयः । निष्कग्रीवो निष्केण सुवर्णेनालंकृतग्रीवाः ॥ व्यत्ययेनैकवचनं ॥ बृहदुक्थो बृहत्स्तोत्रा वाजयुरन्नकामाः ॥

प्रियं दुग्धं न काम्यमजामि जाम्योः सचा । घर्मो न वाजजठरोऽदब्धः शश्वतो दभः ॥४॥
प्रियं । दुग्धं । न । काम्यं । अजामि । जाम्योः । सचा । घर्मः । न । वाजऽजठरः । अदब्धः ।
शश्वतः । दभः ॥४॥

जाम्योर्द्यावापृथिव्योः सचा सहायभूतोऽग्निर्दुग्ध न पय इव काम्य कमनीयमजामि दोषरहितं प्रियम स्मदीय स्तोत्रं शृणोतु । किंविधोऽग्निः । घर्मो न प्रवर्ग्य इव वाजजठरः । वाजोऽन्न जठरे यस्य सः । घर्मो यथा हव्यनाश्विन पयसाभिक्तो वाजजठरस्तद्वत् । हविर्जठर इत्यर्थः । अदब्धः शत्रुभिः स्वयमहिंसितः शश्वतः शाश्वतो नित्यो दभः शत्रूणा हिंसकः ॥

क्रीळन्नो रश्म आ भुवः सं भस्मना वायुना वेविदानः ।
ता अस्य सन्धृषजो न तिग्माः सुसंशिता वक्ष्यो वक्षणेस्थाः ॥५॥
क्रीळन् । नः । रश्मे । आ । भुवः । सं । भस्मना । वायुना । वेविदानः ।
ताः । अस्य । सन् । धृषजः । न । तिग्माः । सुऽसंशिताः । वक्ष्यः । वक्षणेऽस्थाः ॥५॥

हे रश्मे रश्मिमन्नग्ने क्रीळन् वनेषु क्रीडन भस्मना स्वकार्येण भसितेन वायुना प्रेरकेण मरुता च सं वेविदानः सम्यक् ज्ञायमानस्त्वं नोऽस्माकमा भुवः । अभिमुखो भव । वक्षणेस्था वक्षणे वह्नौ स्थिता वक्ष्यः । हविर्वहंतीति वक्ष्यो ज्वालाः । सुसंशिताः सुतीक्ष्णा धृषजः शत्रूणा धर्षिकास्ता ज्वाला अस्य यजमानस्य मम न तिग्मा न तीक्ष्णाः सन । संतु ॥ अस्तेर्लोटि रूपं ॥ ॥११॥

यमग्न इति चतुर्ऋचं षष्ठ सूक्तमत्रीणा प्रयस्वतामार्षमाग्नेयं । अंत्या पंक्तिः शिष्टा अनुष्टुभः । तथा चानुक्रांत । यमग्ने चतुष्कं प्रयस्वतः पंक्त्यंतं हेति ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥ अग्निश्चतुर्वीराख्येऽहीने द्वितीयेऽहनीदं सूक्तमाज्यशस्त्र । सूत्रितं च । यमग्ने वाजसातमेति द्वितीयेऽहन्याज्य । आ० १० २ । इति ॥

यमग्ने वाजसातम त्वं चिन्मन्यसे रयिं । तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजं ॥१॥
यं । अग्ने । वाजऽसातम । त्वं । चित् । मन्यसे । रयिं । तं । नः । गीःऽभिः । श्रवाय्यं ।
देवऽत्रा । पनय । युजं ॥१॥

हे अग्ने हे वाजसातमात्यतमन्नद त्वं यं रयिं धनमस्माभिर्दीयमानं हवीरूपं धनं मन्यसे बुध्यसे । चिदिति पादपूरणः । श्रवाय्यं श्रवणीयं शस्य गीर्भिः स्तुतिभिर्युज युक्त नोऽस्मदीयं हविर्लक्षणं धनं तं देवत्रा देवेषु पनय । प्रापयेत्यर्थः ॥

ये अग्ने नेरयंति ते वृद्धा उग्रस्य शवसः । अप द्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिरे ॥२॥
ये । अग्ने । न । ईरयंति । ते । वृद्धाः । उग्रस्य । शवसः । अप । द्वेषः । अप । ह्वरः ।
अन्यऽव्रतस्य । सश्चिरे ॥२॥

हे अग्ने ये जना वृद्धाः पश्वादिलक्षणैर्धनैः समृद्धाः सन्तस्ते तुभ्यं नेरयंति हवींषि न प्रयच्छंति ते उग्रस्याधिकेन शवसो बलेनात्मेन वाप नीताः । बलाद्धीना भवंतीत्यर्थः । किंचान्यव्रतस्यान्यदेवादिकार्यविभक्तं व्रतं कर्म यस्य तस्यासुरस्य द्वेषस्त्वत्सबाधनं विरोधं ह्वरोऽतिहिंसां चाप सश्चिरे । आत्मानं प्रापयंति ॥

होतारं त्वा वृणीमहेऽग्ने दक्षस्य साधनं । यज्ञेषु पूर्व्यं गिरा प्रयस्वंतो हवामहे ॥३॥
होतारं । त्वा । वृणीमहे । अग्ने । दक्षस्य । साधनं । यज्ञेषु । पूर्व्यं । गिरा । प्रयस्वंतः ।
हवामहे ॥३॥

हे अग्ने प्रयस्वंतोऽन्नवंत एतन्नामका वयं दक्षस्य बलस्य साधनं साधकं साधयितारं त्वा होतारं देवानामाह्वातारं वृणीमहे । किंच यज्ञेषु पूर्व्यं मुख्यं त्वां गिरा स्तुतिरूपया वाचा हवामहे । स्तुमः ॥

इत्था यथा त ऊतये सहसावन्दिवेदिवे ।
राय ऋताय सुक्रतो गोभिः ष्याम सधमादो वीरैः स्याम सधमादः ॥४॥
इत्था । यथा । ते । ऊतये । सहसाऽवन् । दिवेऽदिवे ।
राये । ऋताय । सुक्रतो इति सुऽक्रतो । गोभिः । स्याम । सधऽमादः । वीरैः ।
स्याम । सधऽमादः ॥४॥

हे सहसावन् बलवन्नग्ने दिवे दिवेऽन्वहं वयं ते तवोतये रक्षणाय यथा स्याम तथेत्थेत्थं कुरु । हे सुक्रतो राये धनाय ऋताय यज्ञाय च यथा स्याम तथा कुरु । किंच वयं गोभिः सधमादः सह माद्यतः स्याम । वीरैः पुत्रैश्च सधमादः सह माद्यतः स्याम । तथा कुरु ॥ ॥१०॥

मनुष्वत्त्वेति चतुर्ऋचं सप्तमं सूक्तमात्रेयस्य ससस्यार्षं । मनुष्वत्ससेत्यनुक्रमणिका । पंक्त्यंतं हीति पूर्वत्रोक्तत्वादिदमादीनि त्रीणि सूक्तानि पंक्त्यंतानि । शिष्टा अनुष्टुभः । अग्निर्देवता ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

मनुष्वत्त्वा नि धीमहि मनुष्वत्समिधीमहि । अग्ने मनुष्वदंगिरो देवान्देवयते यज ॥१॥
मनुष्वत् । त्वा । नि । धीमहि । मनुष्वत् । सं । इधीमहि । अग्ने । मनुष्वत् । अंगिरः ।
देवान् । देवऽयते । यज ॥१॥

हे अग्ने त्वा त्वां मनुष्वन्मनुरिव नि धीमहि । मनुःशब्दो मनुपर्यायः ॥ नभोऽङ्गिरोमनुषां वत्युपसंख्यानमिति भसंज्ञाया रुत्वाभावः ॥ मनुष्वन्मनुरिव त्वा समिधीमहि । समिद्धिः संदीपयामः । हे अंगिरोऽङ्गारात्मकाग्ने देवयते देवकामाय यजमानाय मनुष्वन्मनवे मनोरपत्याय देवान् यज ॥

त्वं हि मानुषे जनेऽग्ने सुप्रीत इध्यसे । स्रुचस्त्वा यंत्यानुषक्सुजात सर्पिरासुते ॥२॥
त्वं । हि । मानुषे । जने । अग्ने । सुऽप्रीतः । इध्यसे । स्रुचः । त्वा । यंति । आनुषक् ।
सुऽजात । सर्पिःऽआसुते ॥२॥

हे अग्ने त्वं मानुषे जने मनुष्यलोके सुप्रीतः स्तोत्रैः सुष्ठु प्रीतः सन् इध्यसे। दीप्यसे। स्रुचो हविर्भिः संपूर्णा आनुषक् अनुषक्तं यथा भवति तथा त्वा त्वां यंति। प्राप्नुवंति। हे सुजात हे सर्पिरासुते घृतयुक्तान्नेति ॥

त्वां विश्वे स॒जोष॑सो दे॒वासो॑ दू॒तम॑क्रत। स॒प॒र्यंत॑स्त्वा कवे य॒ज्ञेषु॑ दे॒वमी॑ळते ॥३॥
त्वां। विश्वे॑। स॒ऽजोष॑सः। दे॒वासः॑। दू॒तं। अ॒क्र॒त। स॒प॒र्यंतः॑। त्वा॒। क॒वे॒। य॒ज्ञेषु॑।
दे॒वं। ई॒ळ॒ते॒ ॥३॥

सजोषसः सह प्रीयमाणा विश्वे सर्वे देवासो देवास्त्वां दूतमक्रत। अकुर्वन्। अतः कारणात् हे कवे क्रांतदर्शिन् देवं द्योतमानं त्वा त्वां सपर्यंतः परिचरंतो यजमाना यज्ञेष्वीळते। देवानाह्वातुं याचंते ॥

दे॒वं वो॑ देवय॒ज्यया॒ग्निमी॑ळीत॒ मर्त्यः॑।
समि॑द्धः शुक्र दीदिह्यृ॒तस्य॒ योनि॒मास॑दः स॒सस्य॒ योनि॒मास॑दः ॥४॥
दे॒वं। वः॒। दे॒व॒ऽय॒ज्यया॑। अ॒ग्निं। ई॒ळी॒त॒। मर्त्यः॑।
सम्ऽइ॑द्धः। शु॒क्र॒। दी॒दि॒हि॒। ऋ॒तस्य॑। योनिं॑। आ। अ॒स॒दः॒। स॒सस्य॑। योनिं॑।
आ। अ॒स॒दः॒ ॥४॥

मर्त्यो मनुष्यो देवं द्योतमानमग्निमग्रण्यं वस्त्वा देवयज्यया देवयज्यायै देवयागार्थमीळीत। स्तोतुमर्हति। हे शुक्र शोचिष्मन् समिद्धो हविर्भिः प्रवृद्धः सन् दीदिहि। दीप्यस्व। ऋतस्य सत्यभूतस्य ससस्य ऋषपर्ममं योनिं योनिकारणं स्वर्गसाधनं यज्ञस्थानमासदः। देवतार्पणामीद। आदरातिशयद्योतनार्थं पुनर्वचनं ॥ ॥१३॥

प्र विश्वसामन्निति चतुर्ऋचमष्टमं सूक्तं। अत्रियो विश्वसामा ऋषिः। चतुर्थी पंक्तिः शिष्टा अनुष्टुभः। अग्निर्देवता। तथा चानुक्रांतं। प्र विश्वसामन्विश्वसामेति ॥ उक्तो विनियोगः प्रातरनुवाकाश्विनशस्त्रयोः ॥

प्र वि॑श्वसामन्नत्रि॒वद॑र्चा पाव॒कशो॑चिषे। यो अ॑ध्व॒रेष्वीड्यो॒ होता॑ म॒न्द्रत॑मो वि॒शि ॥१॥
प्र। वि॒श्व॒ऽसा॒म॒न्। अ॒त्रि॒ऽव॒त्। अर्च॑। पा॒व॒कऽशो॑चिषे। यः। अ॒ध्व॒रेषु॑। ईड्यः॑। होता॑।
म॒न्द्रऽत॑मः। वि॒शि ॥१॥

हे विश्वसामन्। ऋषेः संबोधनमेतत्। त्वमत्रिवदत्रिरिव पावकशोचिषे शोधकदीप्तये तस्मा अग्नये प्रार्च। प्रगाय। योऽग्निरध्वरेष्वीड्यः सर्वैर्यज्वभिः स्तुत्यो होता देवानामाह्वाता विशि जने मद्रतमः स्तुत्यतमः ॥

न्य१॒ग्निं जा॒तवे॑दसं॒ दधा॑ता दे॒वमृ॒त्विज॑म्। प्र य॒ज्ञ ए॒त्वानु॒षग॒द्या दे॒वव्य॑चस्तमः ॥२॥
नि। अ॒ग्निं। जा॒तऽवे॑दसं। दधा॑त। दे॒वं। ऋ॒त्विजं॑। प्र। य॒ज्ञः। ए॒तु॒। आ॒नु॒षक्।
अ॒द्य। दे॒वव्य॑चःऽतमः ॥२॥

हे यजमाना जातवेदसं जातप्रज्ञं जातधनं वा देवं द्योतमानमृत्विजमृतुयष्टारमग्निं नि दधात। निधत्त। किंच देवव्यचस्तमो देवानामाप्ततमो यज्ञो यज्ञसाधनमस्माभिर्दीयमानं हविरानुषक् अनुषक्तं यथा भवति तथाद्यास्मिन्नहनि तमग्निं प्रैतु। गच्छतु ॥

चि॒कि॒त्विन्म॑नसं त्वा दे॒वं मर्ता॑स ऊ॒तये॑। वरे॑ण्यस्य॒ तेऽव॑स इया॒नासो॑ अमन्महि ॥३॥
चि॒कि॒त्वित्ऽम॑नसं। त्वा॒। दे॒वं। मर्ता॑सः। ऊ॒तये॑। वरे॑ण्यस्य। ते॒। अव॑सः। इ॒या॒नासः॑।
अ॒म॒न्म॒हि॒ ॥३॥

हे अग्ने चिकित्विन्मनसं। चिकित्विज्ज्ञानन्मनो यस्यासौ चिकित्विन्मनाः। तं देवं त्वा त्वामियानास उपगच्छंतो मर्तासो मनुष्या वयमूतये रक्षणार्थं वरेण्यस्य संभजनीयस्य ते तवावसोऽवसे तर्पणायामन्महि। स्तुमः॥

अग्ने चिकिद्ध्य१स्य न इदं वचः सहस्य।
तं त्वा सुशिप्र दंपते स्तोमैर्वर्धंत्यत्रयो गीर्भिः शुंभंत्यत्रयः॥४॥

अग्ने। चिकिद्धि। अस्य। नः। इदं। वचः। सहस्य।
तं। त्वा। सुऽशिप्र। दंऽपते। स्तोमैः। वर्धंति। अत्रयः। गीःऽभिः। शुंभंति। अत्रयः॥४॥

हे अग्ने हे सहस्य सहसो बलस्य पुत्र नोऽस्मदीयमस्येदं परिचरणमिदं वचः स्तोत्रं चिकिद्धि। जानीहि। हे सुशिप्र। शोभने शिप्रे हनू नासिके वा यस्यासौ सुशिप्रः। तस्य संबोधनं। सुशिप्र सुहनो दंपते गृहपते तं त्वामत्रयोऽत्रिपुत्राः स्तोमैः स्तोत्रैर्वर्धंति। वर्धयंति। अत्रयो गीर्भिः शुंभंति। अलंकुर्वंति॥ ॥१४॥

अग्ने सहंतमिति चतुर्ऋचं नवमं सूक्तं। अत्रानुक्रमणिका। अग्ने द्युम्नो विश्वचर्षणिरिति। द्युम्न ऋषिः। चतुर्थी पंक्तिः। आद्यास्तिस्रोऽनुष्टुभः। अग्निर्देवता॥ प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तात्पातित्वादुक्तो विनियोगः॥

अग्ने सहंतमा भर द्युम्नस्य प्रासहा रयिं। विश्वा यश्चर्षणीरभ्या३सा वाजेषु सासहत्॥१॥

अग्ने। सहंतं। आ। भर। द्युम्नस्य। प्रऽसहा। रयिं। विश्वाः। यः। चर्षणीः। अभि।
आसा। वाजेषु। ससहत्॥१॥

हे अग्ने प्रासहा प्रकृष्टेन बलेन सहंतं शत्रूनभिभवंतं रयिं पुत्रं द्युम्नस्य द्युम्नाय मम ऋषय आ भर। आहर॥ चतुर्थ्यर्थे षष्ठी॥ एतदेव विवृणोति। यः पुत्र आसास्येन स्तोत्रेण युक्तः सन् वाजेषु युद्धेष्वभि आभिमुख्येन गतान् विश्वाः सर्वान् चर्षणीर्मनुष्यान् शत्रून् सासहत् अभिभवति॥

तमग्ने पृतनाषहं रयिं सहस्व आ भर। त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमतः॥२॥

तं। अग्ने। पृतनाऽसहं। रयिं। सहस्वः। आ। भर,। त्वं। हि। सत्यः। अद्भुतः। दाता।
वाजस्य। गोऽमतः॥२॥

हे अग्ने सहस्वो बलवन् पृतनासहं पृतनाः सेना अभिभवितारं रयिं पुत्रं त्वमा भर। आहर। त्वं हि सत्यः सत्यभूतोऽद्भुतो महान् गोमतो गोभिर्युक्तस्य वाजस्यान्नस्य दाता॥

विश्वे हि त्वा सजोषसो जनासो वृक्तबर्हिषः। होतारं सद्मसु प्रियं व्यंति वार्या पुरु॥३॥

विश्वे। हि। त्वा। सऽजोषसः। जनासः। वृक्तऽबर्हिषः। होतारं। सद्मऽसु। प्रियं।
व्यंति। वार्या। पुरु॥३॥

हे अग्ने सजोषसः सह प्रीयमाणा वृक्तबर्हिषो लूनबर्हिषो विश्वे सर्वे जनासो जना ऋत्विजः सद्मसु यज्ञगृहेषु होतारं देवानामाह्वातारं प्रियं सर्वेषां प्रीतिकरं त्वा त्वां पुरु पुरूणि बहूनि वार्या वरणीयानि धनानि व्यंति। याचंते॥

स हि ष्मा विश्वचर्षणिरभिमाति सहो दधे।
अग्न एषु क्षयेष्वा रेवन्नः शुक्र दीदिहि द्युमत्पावक दीदिहि॥४॥

सः । हि । स्म । विश्वऽचर्षणिः । अभिऽमाति । सहः । दधे ।

अग्ने । एषु । क्षयेषु । आ । रेवत् । नः । शुक्र । दीदिहि । द्युऽमत् । पावक । दीदिहि ॥ ४ ॥

हे अग्ने स लोकेषु प्रसिद्धो विश्वचर्षणिर्विश्वैर्मनुष्यैर्दृष्टः सोऽग्निरभिमाति शत्रूणां हिंसकं सहो बलं दधे । धारयतु । हि स्मेति पूरणौ । हे शुक्र शोचिष्मन् त्वं नोऽस्मदीयेषु क्षयेषु गृहेषु रेवत् धनयुक्तं यथा भवति तथा दीदिहि । दीप्यस्व । हे पावक पापानां शोधकाग्ने त्वं द्युमद्दीप्तियुक्तं यशोयुक्तं च दीदिहि । दीप्यस्व ॥ ॥ १५ ॥

अग्ने त्वं न इति चतुर्ऋचं दशमं सूक्तं । अत्रानुक्रमणिका । अग्ने त्वं गौपायना लौपायना वा बंधुः सुबंधुः श्रुतबंधुर्विप्रबंधुश्चैकर्चा द्वैपदमिति । विंशतिका द्विपदा विराज इत्युक्तत्वाच्च । अग्निर्देवता ॥ महापितृयज्ञे आहवनीयं प्रति गच्छंत ऋत्विज इदं सूक्तं जपेयुः । तथा च सूत्रितं । अथैनमभिसमायंति मा प्र गामाग्ने त्वं न इति जपंतः । आ० २. १९ । इति ॥ दशरात्रे पंचमेऽहनि तृतीयसवने मैत्रावरुणस्याग्ने त्वमिति द्वे तं त्वा शोचिष्ठेत्येका । एवं मिलितो द्वैपदस्तृचः स्तोत्रियः । तथैव सूत्रितं । अग्ने त्वं नो अंतमोऽग्ने भव सुषमिधा । आ० ८ २ । इति ॥

अग्ने त्वं नो अंतम उत त्राता शिवो भवा वरूथ्यः ।

वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥ १ ॥ २ ॥

अग्ने । त्वं । नः । अंतमः । उत । त्राता । शिवः । भव । वरूथ्यः ।

वसुः । अग्निः । वसुऽश्रवाः । अच्छ । नक्षि । द्युमत्ऽतमं । रयिं । दाः ॥ १ ॥ २ ॥

हे अग्ने वरूथ्यो वरणीयः संभजनीयः । यद्वा । वरूथैः परिधिभिर्वृतस्त्वं नोऽस्माकमंतमोऽतिकतमो भव । उतापि च त्राता रक्षकः शिवः सुखकरश्च भव । वसुर्वासकोऽग्निः सर्वेषामग्रणीर्वसुश्रवा व्याप्तान्नस्त्वमच्छाभिमुख्येन नक्षि । अस्मान्व्याप्नुहि । द्युमत्तममतिशयेन दीप्तिमत् रयिं पश्वादिलक्षणं धनं दाः । अस्मभ्यं देहि ॥

स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् ।

तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ ३ ॥ ४ ॥

सः । नः । बोधि । श्रुधि । हवं । उरुष्य । नः । अघऽयतः । समस्मात् ।

तं । त्वा । शोचिष्ठ । दीदिऽवः । सुम्नाय । नूनं । ईमहे । सखिऽभ्यः ॥ ३ ॥ ४ ॥

हे अग्ने स त्वं नोऽस्मान् बोधि । बुध्यस्व । हवमस्मदीयमाह्वानं श्रुधि । शृणु । अघायतोऽघमिच्छतः समस्मात्सर्वस्माज्जनान्नोऽस्मानुरुष्य । रक्ष । हे शोचिष्ठातिशोचिष्मन् दीदिवः स्वतेजोभिर्दीप्ताग्ने तं त्वां सुम्नाय सुखाय । सुम्नमिति सुखनाम । तदर्थं सखिभ्यः समानख्यातिभ्यः पुत्रेभ्यस्तदर्थं च नूनमीमहे । याचामहे ॥ ॥ १६ ॥

अच्छा वो अग्निमिति नवर्चमेकादशं सूक्तं । अत्रानुक्रमणिका । अच्छा वो नव वसूयव आनुष्टुभमिति । आत्रेया वसूयुनामान ऋषयः । अनुष्टुप् । मंडलादिपरिभाषयाग्निर्देवता ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥ प्रातःसवनेऽच्छावाक वदस्वेत्युक्तेऽच्छा वो अग्निमवस इत्यृचमनुब्रूयात । तथा च सूत्रितं । अच्छा वो अग्निमवस इत्यृचमन्वाह । आ० ५ ७ । इति ॥

अच्छा वो अग्निमवसे देवं गासि स नो वसुः ।

रासत्पुत्र ऋषूणामृतावा पर्षति द्विषः ॥ १ ॥

अच्छ । वः । अग्निं । अवसे । देवं । गासि । सः । नः । वसुः ।

रासत् । पुत्रः । ऋषूणां । ऋतऽवा । पर्षति । द्विषः ॥ १ ॥

हे वसूयवो वो यूयं देवमग्निमवसे रक्षणायाच्छा गासि। अभिप्रगायत। वसुरग्निर्होत्रार्थं यजमानानां गृहे वासयिता सोऽग्निर्नोऽस्मभ्यं रासत। कामान्ददातु। ऋषूणामृषीणां पुत्रः। ऋषिभिर्मथनेन जनितत्वात्पुत्र इत्युपचर्यते। ऋतावा ऋतवान् सत्यवानुदकवान्वा सोऽग्निर्द्विषोऽस्माकं शत्रून्पर्षति। पारयतु ॥

स हि सत्यो यं पूर्वे चिद्देवासश्चिद्यमीधिरे। होतारं मंद्रजिह्वमित्सुदीतिभिर्विभावसुं ॥२॥

सः। हि। सत्यः। यं। पूर्वे। चित्। देवासः। चित्। यं। ईधिरे। होतारं। मंद्रऽजिह्वं। इत्। सुदीतिऽभिः। विभाऽवसुं ॥२॥

पूर्वे चित्पूर्वे महर्षयो होतारं देवानामाह्वातारं मंद्रजिह्वं। हविषा प्रदानेन देवानां मादयित्री जिह्वा यस्य सः। तं। यद्वा मोदनजिह्वं। तथाह यास्कः। मंद्रजिह्वं मंदनजिह्वं मोदनजिह्वमिति वा। नि° ६. २३। इति। सुदीतिभिः शोभनदीप्तिभिर्युक्तं विभावसुं प्रभाधनं यमग्निमीधिरे समंधत देवासश्चिद्देवा अपि यमग्निमीधिरे समंधत स ह्यग्निः सत्यो भवति। सत्यप्रतिश्रवो भवति। इदिति पूरणः ॥

स नो धीती वरिष्ठया श्रेष्ठया च सुमत्या। अग्ने रायो दिदीहि नः सुवृक्तिभिर्वरेण्य ॥३॥

सः। नः। धीती। वरिष्ठया। श्रेष्ठया। च। सुऽमत्या। अग्ने। रायः। दिदीहि। नः। सुवृक्तिऽभिः। वरेण्य ॥३॥

सुवृक्तिभिः स्तुतिभिः स्तूयमान वरेण्य वरणीय हे अग्ने स त्वं वरिष्ठया वरतमेन श्रेष्ठयातिशयेन प्रशस्येन नो धीती धीत्यास्मदीयेन परिचरणात्मकेन कर्मणा सुमत्या च। सुमतिरिति शस्त्रमुच्यते। शस्त्रेण च प्रीतः सन् रायो धनानि नोऽस्मभ्यं दीदिहि। देहि ॥

अग्निर्देवेषु राजत्यग्निर्मर्तेष्वाविशन्। अग्निर्नो हव्यवाहनोऽग्निं धीभिः सपर्यत ॥४॥

अग्निः। देवेषु। राजति। अग्निः। मर्तेषु। आऽविशन्। अग्निः। नः। हव्यऽवाहनः। अग्निं। धीभिः। सपर्यत ॥४॥

योऽग्निर्देवेषु देवानां मध्ये राजति देवतारूपेण प्रकाशते। योऽग्निर्मर्तेषु मनुष्येष्वाविशन् आहवनीयादिरूपेण प्रविष्टो भवति। योऽग्निर्नोऽस्माकं हव्यवाहनो भवति अस्मदीयेषु यज्ञेषु देवतार्थं हव्यानां वोढा भवति हे यजमानास्तमग्निं धीभिः स्तुतिभिः सपर्यत। परिचरत ॥

पुत्रकामेष्ट्यामग्निस्तुविश्रवस्तममिति द्वे स्विष्टकृतो याज्यानुवाक्ये। सूत्रितं च। अग्निस्तुविश्रवस्तममिति द्वे संयाज्ये। आ° ३. १०। इति ॥

अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमं। अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥५॥

अग्निः। तुविश्रवःऽतमं। तुविऽब्रह्माणं। उत्ऽतमं। अतूर्तं। श्रवयत्ऽपतिं। पुत्रं। ददाति। दाशुषे ॥५॥

अग्निस्तुविश्रवस्तममतिशयेन बह्वन्नं तुविब्रह्माणं बहुस्तोत्रमुत्तममुत्कृष्टमतूर्तं शत्रुभिरहिंसितं श्रावयत्पतिं। श्रावयति विश्रुतान् करोति पतीन् पालयितॄन्पितॄनिति स्वकर्मणा पितॄणां प्रख्यापक इति श्रावयत्पतिः। तथाविधं पुत्रं दाशुषे हवींषि दत्तवते यजमानाय ददाति। ददातु ॥ ॥१७॥

अग्निर्ददाति सत्पतिं सासाह यो युधा नृभिः। अग्निरत्यं रघुष्यदं जेतारमपराजितं ॥ ६॥
अग्निः। ददाति। सत्ऽपतिं। ससाह। यः। युधा। नृऽभिः। अग्निः। अत्यं। रघुऽस्यदं।
जेतारं। अपराऽजितं ॥ ६॥

यः पुत्रो युधा युद्धेन नृभिः परिजनैः ससाह शत्रूनभिभवति सत्पतिं सतां पालयितारं तथाविधं पुत्रमग्निर्ददाति। अस्मभ्यं ददातु। किंचाग्नी रघुष्यदं। रघुर्लघुः स्यदो जवो यस्य तं। जेतारं शत्रूणामपराजितं शत्रुभिरत्यं। अतति सततं गच्छतीत्यत्योऽश्वः। तं ददातु ॥

अश्वमेधे पौष्णयामिष्टौ यद्वाहिष्ठमिति स्विष्टकृतो याज्या। सूत्रितं च। यद्वाहिष्ठं तदग्नय इति संयाज्ये। आ॰ १० ६। इति ॥

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो। महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥ ७॥
यत्। वाहिष्ठं। तत्। अग्नये। बृहत्। अर्च। विभावसो इति विभाऽवसो। महिषीऽइव।
त्वत्। रयिः। त्वत्। वाजाः। उत्। ईरते ॥ ७॥

वाहिष्ठं वोढृतमं यत्स्तोत्रं तदग्नये क्रियते। अतो हे विभावसो प्रभाधनाग्ने बृहद्बृहन्तं धनं वार्च। अस्मभ्य प्रयच्छ। कथमस्यान्नधनप्रदातृत्वमित्यपेक्षायामाह। यतस्त्वत्त्वत्तः सकाशान्महिषी महती रयिर्धनमुदीरते उद्गच्छति। वाजा अन्नानि च त्वत्त्वत्त उदीरते उद्गच्छंति। इवेति पूरणः ॥

तव द्युमंतो अर्चयो ग्रावेवोच्यते बृहत्।
उतो ते तन्यतुर्यथा स्वानो अर्त त्मना दिवः ॥ ८॥
तव। द्युऽमंतः। अर्चयः। ग्रावाऽइव। उच्यते। बृहत्।
उतो इति। ते। तन्यतुः। यथा। स्वानः। अर्त। त्मना। दिवः ॥ ८॥

हे अग्ने तवार्चयो रश्मयो द्युमंतो दीप्तिमंतो भवंति। बृहन्महान् त्वं ग्रावेवाभिषवग्रावेवोच्यते। स्तूयसे। उतो अपि च त्मनात्मना दिवो द्योतमानस्य ते तव स्वानः शब्दस्तन्यतुर्यथा मेघगर्जितमिवार्त। उद्गच्छति ॥

एवाँ अग्निं वसूयवः सहसानं ववंदिम। स नो विश्वा अति द्विषः पर्षन्नावेव सुक्रतुः ॥ ९॥
एव। अग्निं। वसुऽयवः। सहसानं। ववंदिम। सः। नः। विश्वाः। अति। द्विषः। पर्षत्।
नावाऽइव। सुऽक्रतुः ॥ ९॥

वसूयवो वसुकामा वयं सहसानमस्माकं बलमिवाचरंतमग्निमेवमुक्तप्रकारेण ववंदिम। स्तुमः। सुक्रतुः शोभनकर्मा सोऽग्निर्नोऽस्मान् विश्वाः सर्वान् द्विषः शत्रूनति पर्षत्। अतिपारयतु। कथमिव। नावा साधनेन सिंधुमिव ॥ ॥ १८ ॥

अग्ने पावकेति नवर्चं द्वादशं सूक्तं। वसूयव ऋषयः। गायत्री छंदः। अग्निर्देवता। तथा चानुक्रांतं। अग्ने गायत्रमिति ॥ प्रातरनुवाक आग्नेये क्रतौ गायत्रे छंदस्याश्विनशस्त्रे चेदं सूक्तं। सूत्रितं च। अग्ने पावक दूतं व इति सूक्ते। आ॰ ४. १३। इति ॥ आधाने द्वितीयायामिष्टौ प्रथमस्य हविषोऽग्ने पावकेत्येषा याज्या। सूत्रितं च। स नः पावक दीदिवोऽग्ने पावक रोचिषा। आ॰ २ १.। इति ॥

अग्ने पावक रोचिषा मंद्रया देव जिह्वया। आ देवान्वक्षि यक्षि च ॥ १॥
अग्ने। पावक। रोचिषा। मंद्रया। देव। जिह्वया। आ। देवान्। वक्षि। यक्षि। च ॥ १॥

हे पावक शोधक शोचिषा स्वदीप्त्या मंद्रया देवानां मादयित्र्या जिह्वया च हे देव द्योतमानाग्ने देवाना वक्षि । यज्ञार्थमावह । यक्षि च । तान्यज ॥

तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशं । देवाँ आ वीतये वह ॥२॥

तं । त्वा । घृतस्नो इति घृतऽस्नो । ईमहे । चित्रभानो इति चित्रऽभानो । स्वःऽदृशं । देवान् । आ । वीतये । वह ॥२॥

हे घृतस्नो घृतस्य प्रेरक । यद्वा । घृतेन जनित । हे चित्रभानो । चित्रा नानाविधा भानवो रश्मयो यस्यासौ चित्रभानुः । तस्य संबोधनं । स्वर्दृशं सर्वद्रष्टारं तं त्वा त्वामीमहे । याचामहे । अतो वीतये हविषा भक्षणाय देवाना वह ॥

वीतिहोत्रं त्वा कवे द्युमंतं समिधीमहि । अग्ने बृहंतमध्वरे ॥३॥

वीतिऽहोत्रं । त्वा । कवे । द्युऽमंतं । सं । इधीमहि । अग्ने । बृहंतं । अध्वरे ॥३॥

हे कवे क्रांतदर्शिन्नग्ने वीतिहोत्र कांतयज्ञ द्युमंतं दीप्तिमंतं बृहंत महांतं त्वा त्वामध्वरे यज्ञे समिधीमहि । समिद्भिः संदीपयामः ॥

अग्ने विश्वेभिरा गहि देवेभिर्हव्यदातये । होतारं त्वा वृणीमहे ॥४॥

अग्ने । विश्वेभिः । आ । गहि । देवेभिः । हव्यऽदातये । होतारं । त्वा । वृणीमहे ॥४॥

हे अग्ने विश्वेभिः सर्वैर्देवेभिर्देवैः सह त्वं हव्यदातये हविषा दात्रे यजमानाय तदर्थमा गहि । यज्ञं प्रत्या गच्छ । यतो होतारं देवानामाह्वातारं त्वा त्वा वृणीमहे । प्रार्थयामहे ॥

यजमानाय सुन्वत आग्ने सुवीर्यं वह । देवैरा सत्सि बर्हिषि ॥५॥

यजमानाय । सुन्वते । आ । अग्ने । सुऽवीर्यं । वह । देवैः । आ । सत्सि । बर्हिषि ॥५॥

हे अग्ने सुन्वतेऽभिषवं कुर्वते यजमानाय सुवीर्यं शोभनं बलमा वह । प्रापय । किंच देवैः सह बर्हिषि यज्ञ आ सत्सि । आसीदेति ॥ ॥१९॥

समिधानः सहस्रजिदग्ने धर्माणि पुष्यसि । देवानां दूत उक्थ्यः ॥६॥

संऽइधानः । सहस्रऽजित् । अग्ने । धर्माणि । पुष्यसि । देवानां । दूतः । उक्थ्यः ॥६॥

हे सहस्रजित्सहस्रस्य जेतरग्ने समिधानो हविर्भिः समिध्यमान उक्थ्यः प्रशस्यस्त्वं देवाना दूतः सन् धर्माणि नः कर्माणि यज्ञादिक्रियाः पुष्यसि । पोषयसि ॥

न्य१ग्निं जातवेदसं होत्रवाहं यविष्ठ्यं । दधाता देवमृत्विजं ॥७॥

नि । अग्निं । जातऽवेदसं । होत्रऽवाहं । यविष्ठ्यं । दधात । देवं । ऋत्विजं ॥७॥

हे यजमाना जातवेदसं । जातानि भूतानि वेत्तीति जातवेदाः । तं होत्रवाहं होत्रस्य यज्ञस्य वोढारं यविष्ठ्यं युवतमं देवं द्योतमानमृत्विजमृतौ यष्टारमग्निं नि दधात । निधत्त ॥

प्र यज्ञ एत्वानुषगद्या देवव्यचस्तमः । स्तृणीत बर्हिरासदे ॥८॥

प्र । यज्ञः । एतु । आनुषक् । अद्य । देवव्यचःऽतमः । स्तृणीत । बर्हिः । आऽसदे ॥८॥

अथास्मिन्नहनि देवव्यचस्तमो देवैः प्रकाशमानैः स्तोतृभिर्व्याप्ततमो यज्ञो यज्ञसाधनं हविरानुषगानुपक्षं यथा भवति तथा प्रैतु। देवान् गच्छतु। हे ऋत्विज आसदेऽग्नेरासदनार्थं बर्हिः स्तृणीत ॥

एदं मरुतो अश्विना मित्रः सीदंतु वरुणः। देवासः सर्वया विशा ॥९॥
आ। इदं। मरुतः। अश्विना। मित्रः। सीदंतु। वरुणः। देवासः। सर्वया। विशा ॥९॥

मरुतो मरुद्गणा अश्विनावश्विनौ देवानां भिषजौ मित्रः सूर्यो वरुणश्च देवास एते सर्वे देवाः सर्वया विशा समस्तेन स्वीयेन परिजनेन सार्धमिदं बर्हिरा सीदतु ॥ ॥२०॥

अनस्वंतेति षडृच त्रयोदशं सूक्तं। अत्रानुक्रमणिका। अनस्वंता षट् त्रैवृष्णः पौरुकुत्स्यो द्वौ त्र्यरुणत्रसदस्यू राजानौ भारतश्चाश्वमेधोऽत्यास्तिस्रोऽनुष्टुभो नात्मात्मने दद्यादिति सर्वास्वत्रि केचिदत्यंद्राग्नीति। त्रिवृष्णस्य पुत्रस्त्र्यरुणः पुरुकुत्सस्य पुत्रस्त्रसदस्युर्भरतस्य पुत्रोऽश्वमेध एते त्रयोऽपि राजानः संभूयास्य सूक्तस्य ऋषयः। यद्वा। अत्रिरेव ऋषिः। आद्यास्तिस्रस्त्रिष्टुभश्चतुर्थाद्यास्तिस्रोऽनुष्टुभः। षष्ठीन्द्राग्निदेवत्या शिष्टाः पञ्चाग्नेय्यः ॥ विनियोगो लैंगिकः ॥

अनस्वंता सत्पतिर्मामहे मे गावा चेतिष्ठो असुरो मघोनः।
त्रैवृष्णो अग्ने दशभिः सहस्रैर्वैश्वानर त्र्यरुणश्चिकेत ॥१॥
अनस्वंता। सत्ऽपतिः। ममहे। मे। गावा। चेतिष्ठः। असुरः। मघोनः।
त्रैवृष्णः। अग्ने। दशऽभिः। सहस्रैः। वैश्वानर। त्रिऽअरुणः। चिकेत ॥१॥

अत्रो राजर्षीणां दानमग्नेः पुरतोऽनेन सूक्तेनावर्णयत। हे वैश्वानर विश्वेषां नराणां नेतरग्ने सत्पतिः सतां साधूनां पालयिता चेतिष्ठो ज्ञातृतमोऽसुरो बलवान्मघोनो मघवा धनवान् ॥ प्रथमार्थे ङसिः ॥ त्रैवृष्णस्त्रिवृष्णपुत्रस्त्र्यरुणस्त्र्यरुण इत्येतन्नामा राजर्षिरनस्वंतावनस्वंतावनसा शकटेन संयुक्तौ गावा गावावनड्वाहौ गवा हिरण्यादीनां दशभिः सहस्रैः सह मे मह्यं ममहे। ददौ ॥ महि दाने ॥ स राजर्षिश्चिकेत। सर्वैर्जनैरनेन दानेन ज्ञायते ॥

यो मे शता च विंशतिं च गोनां हरी च युक्ता सुधुरा ददाति।
वैश्वानर सुष्टुतो वावृधानोऽग्ने यच्छ त्र्यरुणाय शर्म ॥२॥
यः। मे। शता। च। विंशतिं। च। गोनां। हरी इति। च। युक्ता। सुऽधुरा। ददाति।
वैश्वानर। सुऽस्तुतः। ववृधानः। अग्ने। यच्छ। त्रिऽअरुणाय। शर्म ॥२॥

यस्त्र्यरुणः शता च शतानि सुवर्णानां गोनां गवां विंशतिं च युक्ता रथेन युक्तौ सुधुरा सुधुरौ सुष्ठु धुरं वहंतौ हरी अश्वौ च मे मह्यं ददाति अददात् हे वैश्वानराग्ने सुष्टुतोऽस्माभिः सम्यक्स्तुतो ववृधानो हविर्भिर्वर्धमानस्त्वं तस्मै त्र्यरुणाय शर्म सुखं यच्छ। प्रयच्छ ॥

एवा ते अग्ने सुमतिं चकानो नविष्ठाय नवमं त्रसदस्युः।
यो मे गिरस्तुविजातस्य पूर्वीर्युक्तेनाभि त्र्यरुणो गृणाति ॥३॥
एव। ते। अग्ने। सुऽमतिं। चकानः। नविष्ठाय। नवमं। त्रसदस्युः।
यः। मे। गिरः। तुविऽजातस्य। पूर्वीः। युक्तेन। अभि। त्रिऽअरुणः। गृणाति ॥३॥

यस्य्वक्षणस्तुविजातस्य बहुपत्यस्य मे पुर्वीर्बह्वीर्गिरः स्तुतीः श्रुत्वा प्रीतः मन युक्तेनाभियुक्तेन मनसाभि गृणाति इदं गृहाणेदं गृहाणेति तथा मां ब्रवीति एवंव हे अग्ने नविष्ठायात्यंत स्तुत्याय ते तुभ्यं नवम नवतमा सुमति स्तुतिं चकानः कामयमानस्त्रसदस्युरपीदं गृहाणेदं गृहाणेति मां प्रार्थितवान् ॥

यो म इति प्रवोचत्यश्वमेधाय सूरये। दददृचा सनिं यते ददन्मेधामृतायते ॥४॥
यः। मे। इति। प्रऽवोचति। अश्वऽमेधाय। सूरये। ददत्। ऋचा। सनिं। यते। ददत्। मेधां। ऋतऽयते ॥४॥

यो भिक्षमाणोऽर्थी सूरये प्रेरकाय धनानां दात्रे वास्मा अश्वमेधाय राजर्षये मे मह्यं देहीति प्रवोचति प्रब्रवीति। योऽश्वमेधं धनानि भिक्षत इत्यर्थः। ऋचाग्नेः स्तोत्रेण सह यते आत्मनः समीपं गच्छते तस्मा अर्थिनेऽश्वमेधः सनिं धनं ददत्। ददाति। हे अग्ने ऋतायते यज्ञमिच्छते तस्मा अश्वमेधाय मेधां यज्ञविषया प्रज्ञां ददत्। देहि ॥

यस्य मा परुषाः शतमुद्धर्षयंत्युक्षणः। अश्वमेधस्य दानाः सोमा इव त्र्याशिरः ॥५॥
यस्य। मा। परुषाः। शतं। उत्ऽहर्षयंति। उक्षणः। अश्वऽमेधस्य। दानाः। सोमाःऽइव। त्रिऽआशिरः ॥५॥

यस्य येनाश्वमेधस्याश्वमेधेन दाना दत्ताः परुषाः कामानां पूरकाः शतसंख्याका उक्षाणो बलीवर्दा मा मामुद्धर्षयंति उत्कर्षेण हर्षयंति हे अग्ने ते उक्षाणस्त्र्याशिरः। दधिसक्तुपयोरूपास्तिस्र आशिरोऽधिश्रयणसा धनभूता येषां ते त्र्याशिरः। सोमा इव तव प्रीणनाय भवंतु ॥

इंद्राग्नी शतदाव्न्यश्वमेधे सुवीर्यं। क्षत्रं धारयतं बृहद्दिवि सूर्यमिवाजरं ॥६॥
इंद्राग्नी इति। शतऽदाव्नि। अश्वऽमेधे। सुऽवीर्यं। क्षत्रं। धारयतं। बृहत्। दिवि। सूर्यंऽइव। अजरं ॥६॥

हे इंद्राग्नी शतदाव्नि। शतमपरिमितमर्थिभ्यो धनं ददातीति शतदावा। तस्मिन्नश्वमेधे राजर्षौ सुवीर्यं शोभनवीर्यसहितं बृहन्महदजरं जरारहितं क्षत्रं धनं धारयतं। निधारयत। कथमिव। दिव्यंतरिक्षे सूर्यमिव ॥ ॥२१॥

समिद्धो अग्निरिति षडृचं चतुर्दशं सूक्तं। अत्रेयमनुक्रमणिका। समिद्धो विश्ववारात्रेयी त्रिष्टुब्जगती त्रिष्टुबनुष्टुब्गायत्र्यावित। अत्रिगोत्रोत्पन्ना विश्ववारानामिकास्य सूक्तस्य ऋषिः। आद्यातृतीये त्रिष्टुभौ द्वितीया जगती चतुर्थ्यनुष्टुप् अंत्ये गायत्र्यौ। अग्निर्देवता ॥ सूक्तविनियोगो लैंगिकः ॥

समिद्धो अग्निर्दिवि शोचिरश्रेत्प्रत्यङ्ङुषसमुर्विया वि भाति।
एति प्राची विश्ववारा नमोभिर्देवाँ ईळाना हविषा घृताची ॥१॥
संऽइद्धः। अग्निः। दिवि। शोचिः। अश्रेत्। प्रत्यङ्। उषसं। उर्विया। वि। भाति।
एति। प्राची। विश्वऽवारा। नमःऽभिः। देवान्। ईळाना। हविषा। घृताची ॥१॥

समिद्धः सम्यग्दीप्तोऽग्निर्दिवि द्योतमानेऽतरिक्षे शोचिस्तेजोऽश्रेत्। अश्रयति। तथोषसं प्रत्यङ् उषसमभिमुखः सन् उर्विया उर्विया विस्तीर्णं वि भाति। विशेषेण भ्राजते। नमोभिः स्तोत्रैर्देवानिंद्रादीनीळाना स्तुवती हविषा पुरोडाशादिलक्षणेन युक्तया घृताची घृताच्या स्रुचा सहिता विश्ववारा सर्वमपि पापरूपं शत्रुं वारयित्र्येतन्नामिका प्राची प्राङ्मुखी सत्येति। एवंभूतमग्निं प्रतिगच्छति ॥

समिध्यमानो अमृतस्य राजसि हविष्कृण्वंतं सचसे स्वस्तये।
विश्वं स धत्ते द्रविणं यमिन्वस्यातिथ्यमग्ने नि च धत्त इत्पुरः ॥२॥
संऽइध्यमानः। अमृतस्य। राजसि। हविः। कृण्वंतं। सचसे। स्वस्तये।
विश्वं। सः। धत्ते। द्रविणं। यं। इन्वसि। आतिथ्यं। अग्ने। नि। च। धत्ते। इत। पुरः ॥२॥

हे अग्ने समिध्यमानः सम्यगिध्यमानस्त्वममृतस्योदकस्य राजसि। ईशिषे। तथा हविष्कृण्वंतं पुरोडाशादिहविष्कर्तारं यजमानं स्वस्तयेऽविनाशाय सचसे। सेवसे। किंच यं यजमानमिन्वसि गच्छसि स यजमानो विश्वं समस्तं द्रविणं पश्वादिलक्षणं धनं धत्ते। धारयति। अपि च हे अग्ने आतिथ्यमतिथिरूपस्य तव योग्यं हविः पुर इत तव पुरस्तादेव नि धत्ते च। स्थापयति च॥

पवित्रेष्टौ स्विष्टकृतोऽग्ने शर्धेति याज्या। सूत्र्यते हि। जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये। आ० २. १२.। इति॥ साकमेधेषु मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालमित्यत्राप्येषैव स्विष्टकृतो याज्या। सूत्रितं च। जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये। आ० २. १८.। इति॥

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि संतु।
सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ॥३॥
अग्ने। शर्ध। महते। सौभगाय। तव। द्युम्नानि। उतऽतमानि। संतु।
सं। जाःपत्यं। सुऽयमं। आ। कृणुष्व। शत्रुऽयतां। अभि। तिष्ठ। महांसि ॥३॥

हे अग्ने त्वं महते प्रभूताय सौभगायास्माकं शोभनधनत्वाय शर्ध। शत्रून्सहस्व। तथा तव संबंधीनि द्युम्नानि धनानि तेजांसि वा उत्तमान्युत्कृष्टानि संतु। भवंतु। किंच हे अग्ने सं जास्पत्यं। जा जाया च पतिश्च जायापती। तयोः कर्म जास्पत्यं। तत्सुयमं सुष्ठु नियमनोपेतं। अन्योन्यसंश्लिष्टमित्यर्थः। समा कृणुष्व। सम्यक्कुरुष्व। अपि च शत्रूयतां शत्रुमात्मन इच्छतां सपत्नानां महांसि तेजांस्यभि तिष्ठ। आक्रमस्व॥

समिद्धस्य प्रमहसोऽग्ने वंदे तव श्रियं। वृषभो द्युम्नवाँ असि समध्वरेष्विध्यसे ॥४॥
संऽइद्धस्य। प्रऽमहसः। अग्ने। वंदे। तव। श्रियं। वृषभः। द्युम्नऽवान। असि। सं।
अध्वरेषु। इध्यसे ॥४॥

हे अग्ने समिद्धस्य प्रवृद्धस्य प्रमहसः प्रकृष्टतेजसस्तव संबंधिनीं श्रियं दीप्तिं वंदे। अहं यजमानः स्तौमि। वृषभः कामानां वर्षिता त्वं द्युम्नवानसि। धनवान्भवसि। अध्वरेषु यज्ञेषु समिध्यसे। सम्यग्दीप्यसे॥

दर्शपूर्णमासयोः समिद्धो अग्न आहुतेति द्वे सामिधेन्यौ। सूत्रितं च। समिद्धो अग्न आहुतेति द्वे। आ० १. २.। इति॥

समिद्धो अग्न आहुत देवान्यक्षि स्वध्वर। त्वं हि हव्यवाळसि ॥५॥
संऽइद्धः। अग्ने। आऽहुत। देवान्। यक्षि। सुऽअध्वर। त्वं। हि। हव्यऽवाट्। असि ॥५॥

हे आहुत यजमानैरा समंताद्धुत हे स्वध्वर शोभनयज्ञोपेत हे अग्ने समिद्धः सम्यग्दीप्तस्त्वं देवान्द्योतमानानिंद्रादीन्यक्षि। यजस्व। हि यस्मात्कारणात् हे अग्ने त्वं हव्यवाडसि हव्यानां वोढा भवसि। अतः कारणाद्देवान्यजस्वेति संबंधः॥

आ जुहोता दुवस्यताग्निं प्रयत्यध्वरे । वृणीध्वं हव्यवाहनं ॥ ६ ॥

आ । जुहोत । दुवस्यत । अग्निं । प्रऽयति । अध्वरे । वृणीध्वं । हव्यऽवाहनं ॥ ६ ॥

हे ऋत्विजो यूयमध्वरेऽस्मदीययागे प्रयति प्रवृत्ते सति हव्यवाहनं हविषां वोढारमेतन्नामकमग्निमा जुहोत । आ समंताज्जुहोत । तथा दुवस्यत । परिचरत । वृणीध्वं । संभजध्वं च हव्यवाहनं । हव्यवाहननाम कस्यैवाग्नेर्देवतासंबंधो यजमानैर्वरणीयत्वं च तैत्तिरीये स्पष्टमाम्नातं । त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणां । त एतर्ह्याशंसंते मां वरिष्यंते मामिति वृणीध्वं हव्यवाहनमित्याह य एव देवानां तं वृणीते । तै० सं० २. ५. ८. ६. । इति ॥ ॥ २२ ॥

त्र्यर्यमेति पंचदशर्चं पंचदशं सूक्तं । अत्रानुक्रमणिका । त्र्यर्यमा पंचोना गौरिवीतिः शाक्त्य ऐंद्रमुशना यदौशनसो वा पाद इति । शक्तिगोत्रोत्पन्नो गौरिवीतिर्नाम ऋषिः । अनुक्तत्वात्त्रिष्टुप् । इंद्रो देवता मंडलादिपरिभाषाया निवृत्तत्वात् । उशना यत्सहस्यैरिति पाद औशनस ऐंद्रो वा ॥ आभिप्लविके तृतीयेऽहनि मरुत्वतीय एतन्निविद्धानं । सूत्रितं च । तृतीयस्य त्र्यर्यमा यो जात एवेति मध्यंदिनः । आ० ७. ७. । इति ॥

त्र्यर्यमा मनुषो देवताता त्री रोचना दिव्या धारयंत ।
अर्चंति त्वा मरुतः पूतदक्षास्त्वमेषामृषिरिंद्रासि धीरः ॥ १ ॥

त्री । अर्यमा । मनुषः । देवऽताता । त्री । रोचना । दिव्या । धारयंत ।
अर्चंति । त्वा । मरुतः । पूतऽदक्षाः । त्वं । एषां । ऋषिः । इंद्र । असि । धीरः ॥ १ ॥

मनुषो मनोः संबंधिनि देवताता देवतातौ यज्ञे त्री त्रीण्यर्यमार्यमाणि यानि तेजांसि संति । तथा त्री त्रीणि रोचना रोचमानानि वाय्वग्निसूर्यात्मकानि दिव्या दिव्यान्यंतरिक्षे भवानि तानि तेजांसि धारयत । मरुतो धारयंति । पूतदक्षाः शुद्धबला मरुतस्त्वा त्वामर्चंति । स्तुवंति । हे इंद्र धीरो धीमांस्त्वमेषां मरुतामृषिरसि । द्रष्टा भवसि ॥

अनु यदीं मरुतो मंदसानमार्चन्निंद्रं पपिवांसं सुतस्य ।
आदत्त वज्रमभि यदहिं हन्नपो यह्वीरसृजत्सर्तवा उं ॥ २ ॥

अनु । यत् । ईं । मरुतः । मंदसानं । आर्चन् । इंद्रं । पपिऽवांसं । सुतस्य ।
आ । अदत्त । वज्रं । अभि । यत् । अहिं । हन् । अपः । यह्वीः । असृजत । सर्तवै । ऊं इति ॥ २ ॥

यद्यदा मरुतो मंदसानं तृप्यंतं सुतस्याभिषुतं सोमं पपिवांसं पीतवंतमीमेनमिंद्रमन्वार्चन् अन्वस्तुवन् तदेंद्रो वज्रमादत्त । आददौ । ततो यद्यदाहिं वृत्रमभि हन् अभ्यहन् अभिहतवान् तदा यह्वीर्महतीरपो वृत्रेण निरुद्धान्युदकानि सर्तवै सरत्वेन सर्तुं गंतुमसृजत । निरोधादमुंचत ॥

उत ब्रह्माणो मरुतो मे अस्येंद्रः सोमस्य सुषुतस्य पेयाः ।
तद्धि हव्यं मनुषे गा अविंददहन्नहिं पपिवाँ इंद्रो अस्य ॥ ३ ॥

उत । ब्रह्माणः । मरुतः । मे । अस्य । इंद्रः । सोमस्य । सुऽसुतस्य । पेयाः ।
तत् । हि । हव्यं । मनुषे । गाः । अविंदत् । अहन् । अहिं । पपिऽवान् । इंद्रः । अस्य ॥ ३ ॥

उतापि च हे ब्रह्माणो बृहंतो हे मरुतो यूयमिंद्रश्च सुसुतस्य सुष्ठभिषुतस्य मे मदीयस्यास्य सोमस्येमं सोमं ॥ द्वितीयार्थे षष्ठी ॥ पेयाः । पिबत ॥ पिबतेराशीर्लिङि मध्यमबहुवचनस्यैकवचनं ॥ तद्धि तदेवन्नु हव्य

युष्माभिः पीतं सोमात्मकं हविर्मनुषे मनुष्याय यजमानाय गा धेनूर्वृष्टिलक्षणान्युदकानि वा अविंदत। वेदयति। यजमानं गा लंभयतीत्यर्थः। किंचास्येम सोमं पपिवान् पीतवानिंद्रोऽहिं वृत्रमहन्। अवधीत॥

आद्रोदसी वितरं वि ष्कभायत्संविव्यानश्चिद्भियसे मृगं कः।
जिगर्तिमिंद्रो अपजर्गुराणः प्रति श्वसंतमव दानवं हन्॥४॥
आत्। रोदसी इति। विऽतरं। वि। स्कभायत्। संऽविव्यानः। चित्। भियसे। मृगं। करिति कः।
जिगर्तिं। इंद्रः। अपऽजर्गुराणः। प्रति। श्वसंतं। अव। दानवं। हन्निति हन्॥४॥

इंद्रः परमैश्वर्ययुक्त आत्सोमपानानंतरं रोदसी द्यावापृथिव्यौ वितरमतिशयेन॥ अमु च छंदसीति विस्तरपि छतेऽमुप्रत्ययः॥ वि ष्कभायत। व्यस्तभ्नात। चलनरहिते अकरोत। संविव्यानश्चित संवृण्वानः संगच्छमानो वेंद्रः॥ व्ययतेर्वा संवरणकर्मणो वेतेर्वा गतिकर्मणो रूप। चिदित्यवेत्यस्यार्थे वर्तते॥ मृग मृगवत्पलायमानं वृत्रं भियसे भयाय कः। अकार्षीत॥ करोतेर्लुङि मंत्रे घसह्वरेत्यादिना च्लेर्लोपः। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः॥ इंद्रो जिगर्ति गिरतमाच्छादयंतं श्वसंतं भयार्थं श्वासं कुर्वंतं दानवं दनोः पुत्रं वृत्रमपजर्गुराण आच्छादनाद्विमोचयन् प्रति प्रतिगत्याव हन। अवहतवान्॥

अध क्रत्वा मघवन्तुभ्यं देवा अनु विश्वे अददुः सोमपेयं।
यत्सूर्यस्य हरितः पतंतीः पुरः सतीरुपरा एतशे कः॥५॥
अध। क्रत्वा। मघऽवन। तुभ्यं। देवाः। अनु। विश्वे। अददुः। सोमऽपेयं।
यत्। सूर्यस्य। हरितः। पतंतीः। पुरः। सतीः। उपराः। एतशे। करिति कः॥५॥

अधापि च हे मघवन धनवन्निंद्र क्रत्वा क्रतुना त्वदीयेन कर्मणा विश्वे सर्वे देवा द्योतमाना वह्न्यादयस्तुभ्यं त्वदर्थं सोमपेय सोमपानमन्वददुः। आनुपूर्व्येण दत्तवंतः। ततः प्रभृतींद्रो देवेभ्यः सर्वेभ्योऽधिकोऽभवदित्यर्थः। तथा च श्रूयते। स महान्भूत्वा देवता अब्रवीदुद्धारं म उद्धरतेत्यादि। ऐ॰ ब्रा॰ ३ २१। हे इंद्र यद्यस्त्वं पतंतीरागच्छंतीः पुरः सतीः पुरस्ताद्भवंतीः सूर्यस्य संबंधिनीर्हरितो वडवा उपरा उपरता मंदगतीरेतश एतशाख्याय ऋषये कः अकार्षीः। एतशो हि स्वश्वपुत्रेण सूर्येण सह स्पर्धामकरोदिति यावत। तथा च निगमांतरे। प्रैतश सूर्ये पस्पृधान सौवश्व्ये सुष्विमावदिंद्रः। ऋग्वे॰ १. ६१. १५. इति॥ ॥२३॥

नव यदस्य नवतिं च भोगान्साकं वज्रेण मघवा विवृश्चत्।
अर्चंतींद्रं मरुतः सधस्थे त्रैष्टुभेन वचसा बाधत द्यां॥६॥
नव। यत्। अस्य। नवतिं। च। भोगान्। साकं। वज्रेण। मघऽवा। विऽवृश्चत्।
अर्चंति। इंद्रं। मरुतः। सधऽस्थे। त्रैस्तुभेन। वचसा। बाधत। द्यां॥६॥

यद्यदा मघवा धनवानिंद्रः। अस्येत्यनेन शंबर उच्यते। अस्य शंबरस्य संबंधीनि नव नवसंख्याकानि नवतिं च नवतिसंख्याकानि च भोगान्पुराणि। भोगानित्यंतोदात्तः पुरवचनः। साकं युगपदेव वज्रेण विवृश्चत व्यवृश्चत अभिनत तदा मरुतः सधस्थे सहस्थाने युद्धे वा स्थितमिंद्रं त्रैष्टुभेन त्रिष्टुप्छंदस्केन वचसा वायुरूपस्तोत्रेणार्चंति। अस्तुवन्। इंद्र एवं स्तुतः सन् द्यां महद्भिः प्रयुज्यमानेन मंत्रेण दीप्तं शंबराख्यमसुरं बाधत। अबाधत। पिपीडे॥

सखा सख्ये अपचत्तूयमग्निरस्य क्रत्वा महिषा त्री शतानि।
त्री साकमिंद्रो मनुषः सरांसि सुतं पिबद्वृत्रहत्याय सोमं ॥७॥
सखा। सख्ये। अपचत्। तूयं। अग्निः। अस्य। क्रत्वा। महिषा। त्री। शतानि।
त्री। साकं। इंद्रः। मनुषः। सरांसि। सुतं। पिबत्। वृत्रऽहत्याय। सोमं ॥७॥

सखींद्रस्य मित्रभूतोऽग्निर्महिषा महिषाणां पशूनां त्री त्रीणि शतानि शतसंख्याकानि सख्ये सख्युर्मित्रभूतस्यास्येंद्रस्य क्रत्वा कर्मणा निमित्तभूतेन तूयं क्षिप्रमपचत। पपाच। किंच इंद्रः परमैश्वर्ययुक्तो मनुषो मनोः संबंधीनि त्री त्रीणि सरांसि पात्राणि। अत्र सरःशब्देन पूतभृदाधवनीयद्रोणकलशसंज्ञानि पात्राण्युच्यंते। तेषु स्थितं सुतमभिषुतं सोमं साकं युगपदेव वृत्रहत्याय वृत्रहननाय पिबत। अपिबत्। पपौ ॥

त्री यच्छता महिषाणामघो मास्त्री सरांसि मघवा सोम्यापाः।
कारं न विश्वे अह्वंत देवा भरमिंद्राय यदहिं जघानं ॥८॥
त्री। यत्। शता। महिषाणां। अघः। माः। त्री। सरांसि। मघऽवा। सोम्या। अपाः।
कारं। न। विश्वे। अह्वंत। देवाः। भरं। इंद्राय। यत्। अहिं। जघानं ॥८॥

हे इंद्र त्वं यद्यदा त्री त्रयाणां शता शतसंख्याकानां महिषाणां पशूनां माः मांसान्यघः भक्षितवानसि॥ घसेर्लुङि रूपं॥ यदा च मघवा धनवांस्त्वं सोम्या सोममयानि त्री त्रीणि सरांसि पात्राण्यपाः पीतवानसि। यद्यदेंद्रोऽहिं वृत्रं जघान हतवान् तदा विश्वे सर्वे देवा भरं सोमपानादिना पूर्णमिंद्रायेंद्रं युद्धार्थमह्वंत। आह्वयंत। तत्र दृष्टांतः। कारं न। स्वामिनः कर्मकरमिव तद्वत् ॥

उशनसः स्तोमं उशना यत्सहस्यैरिति सकलत्वतीये सूक्तमृक्षीया। सूचितं च। उशनसः स्तोमेन गरगीर्णमिवात्मानं मन्यमानो यजेतोशना यत्सहस्यैरयातं। आ° ९ ५। इति ॥

उशना यत्सहस्यै३रयातं गृहमिंद्र जूजुवानेभिरश्वैः।
वन्वानो अत्र सरथं ययाथ कुत्सेन देवैरवनोर्ह शुष्णं ॥९॥
उशना। यत्। सहस्यैः। अयातं। गृहं। इंद्र। जूजुवानेभिः। अश्वैः।
वन्वानः। अत्र। सऽरथं। ययाथ। कुत्सेन। देवैः। अवनोः। ह। शुष्णं ॥९॥

यद्यदा हे इंद्र त्वमुशना काव्यश्च सहस्यैरभिभवनशीलैर्जूजुवानेभिर्जूजुवानैर्गंतुमिच्छद्भिरश्वैः कुत्सस्य गृहमयात अगच्छतं तदा हे इंद्र त्वमत्रास्मिन्कार्ये वन्वानः शत्रून् हिंसन् कुत्सेन देवैश्च सह सरथं समानमेकं रथं ययाथ। जगथ। किंच शुष्णमेतन्नामकमसुरमवनोर्ह। अहिंसीः खलु ॥

प्रान्यच्चक्रमवृहः सूर्यस्य कुत्सायान्यद्वरिवो यातवेऽकः।
अनासो दस्यूँरमृणो वधेन नि दुर्योण आवृणङ्मृध्रवाचः ॥१०॥
प्र। अन्यत्। चक्रं। अवृहः। सूर्यस्य। कुत्साय। अन्यत्। वरिवः। यातवे। अकरित्यकः।
अनासः। दस्यून्। अमृणः। वधेन। नि। दुर्योणे। अवृणक्। मृध्रऽवाचः ॥१०॥

हे इंद्र पूर्वं द्विचक्रस्य सूर्यस्यान्यदेकं चक्रं प्रावृहः। पृथक् चकर्थ। अन्यदेकं चक्रं कुत्साय कुत्सस्य वरिवो धनं यातवे प्राप्तुमकः। अकार्षीः। किंच अनासः आस्यरहितान्। आस्यशब्देन शब्दो लक्ष्यते। अशब्दान्मूकान्

दस्यूनसुरान् वधेनायुधेन वज्रेणामृणः । अहिंसीः । दुर्योणि संग्रामे मृध्रवाचो हिंसितवागिंद्रियानसुरान्यवृणक् । नितरां छिन्नवानसि । अमृणो न्यवृणगिति द्विरुक्तिरादरार्था ॥ ॥ २४ ॥

स्तोमा॑सस्त्वा गौरिवी॑तेरवर्धन्नरं॑धयो वैदथि॒नाय॒ पिप्रुं॑ ।
आ त्वामृजिश्वा॑ स॒ख्याय॑ चक्रे॒ पच॑न्प॒क्तीरपि॑बः॒ सोम॑मस्य ॥ ११ ॥
स्तोमा॑सः । त्वा॒ । गौरि॑ऽवीतेः । अ॒व॒र्ध॒न् । अरं॑धयः । वै॒द॒थि॒नाय॑ । पिप्रुं॑ ।
आ । त्वां । ऋ॒जिश्वा॑ । स॒ख्याय॑ । च॒क्रे॒ । पच॑न् । प॒क्तीः । अपि॑बः । सोमं॑ । अ॒स्य ॥ ११ ॥

हे इंद्र गौरिवीतेरेतन्नामकस्य मंत्रद्रष्टुर्मम संबंधीनि स्तोमासः स्तोत्राणि त्वा त्वामवर्धन् । वर्धयंतु । वैदथिनाय विदथिनः पुत्राय ऋजिश्वनाम्ने पिप्रुमेतन्नामकमसुरमरंधयः । वशमनयः । हे इंद्र ऋजिश्वनामा कश्चिद्राजर्षिः सख्याय तव सखित्वाय पक्तीः पक्तव्यानि पुरोडाशादीनि पचन् पाकं कुर्वन् त्वामा चक्रे । अभिमुखीचकार । किंच त्वमस्य ऋजिश्वनः संबंधिनं सोममपिबः । अपाः ॥

दशपेयेऽहनि मरुत्वतीये शस्त्रे नवग्वास इति सूक्तमुखीया । सूत्रितं च । नवग्वासः सुतसोमास इंद्र सखा ह यत्र सखिभिर्नवग्वैरिति निविद्धानयोरादी । आ॰ ९. ३. । इति ॥

नव॑ग्वासः सु॒तसो॑मास॒ इंद्रं॒ दश॑ग्वासो अ॒भ्य॑र्चंत्य॒र्कैः ।
गव्यं॑ चिदू॒र्वम॑पि॒धान॑वंतं॒ तं चि॒न्नरः॑ शशमा॒ना अप॑ व्रन् ॥ १२ ॥
नव॑ऽग्वासः । सु॒तऽसो॑मासः । इंद्रं॑ । दश॑ऽग्वासः । अ॒भि । अ॒र्च॒ंति॒ । अ॒र्कैः ।
गव्यं॑ । चि॒त् । ऊ॒र्वं । अ॒पि॒धान॑ऽवंतं । तं । चि॒त् । नरः॑ । श॒श॒मा॒नाः । अप॑ । व्र॒न् ॥ १२ ॥

नवग्वासः । सत्रयागमनुतिष्ठंतो ये नवभिर्मासैः समाप्य गतास्ते नवग्वाः । दशभिर्मासैः समाप्य ये गतास्ते दशग्वाः । एते उभयविधा अंगिरसः सुतसोमासोऽभिषुतसोमाः संत इंद्रमर्कैरर्चनीयैः स्तोत्रैरभ्यर्चंति । अभिष्टुवंति । तथा शशमानाः स्तुवंतो नरो नेतारोंऽगिरसोऽपिधानवंतं वलेनासुरेणाच्छादितवंतं तं चित् बहुषु प्रदेशेषु प्रसिद्धमपि गव्यं चित् गोसंबंधिनमप्यूर्वं समूहमप व्रन् । अपावृण्वन् ॥

परिक्रीनाम्न्येकाहे मरुत्वतीयनिष्केवल्ययोः सूक्तमुखीये कथो नु त इत्याद्ये द्वे ऋचौ । सूत्रितं च । कथो नु ते परि चराणि विद्वानिति द्वे । आ॰ ९. ५. । इति ॥

कथो॒ नु ते॒ परि॑ चराणि वि॒द्वान्वी॒र्या॑ मघव॒न्या च॒कर्थ॑ ।
या चो॒ नु नव्या॑ कृ॒णवः॑ शविष्ठ॒ प्रेदु॒ ता ते॑ वि॒दथे॑षु ब्रवाम ॥ १३ ॥
कथो इति॑ । नु । ते॒ । परि॑ । च॒रा॒णि॒ । वि॒द्वान् । वी॒र्या॑ । म॒घ॒ऽव॒न् । या । च॒कर्थ॑ ।
या । चो॒ इति॑ । नु । नव्या॑ । कृ॒णवः॑ । श॒वि॒ष्ठ॒ । प्र । इत् । ऊं॒ इति॑ । ता । ते॒ । वि॒दथे॑षु ।
ब्र॒वा॒म॒ ॥ १३ ॥

हे मघवन् धनवन्निंद्र त्वं या यानि वीर्या वीर्याणि चकर्थ चकृषे अहं तानि वीर्याणि विद्वान् जानन् ते तुभ्यं कथो नु कथं नु परि चराणि । परिचर्यां करवाणि । हे शविष्ठ बलवत्तमेंद्र त्वं या चो यानि चैव नव्या नव्यानि नूतनानि वीर्याणि नु क्षिप्रं कृणवः कुर्याः ते त्वदीयानि ता तानि वीर्याणि विदथेषु यज्ञेषु प्रेदु ब्रवाम । प्रैव वदाम ॥

एता विश्वा चकृवाँ इंद्र भूर्यपरीतो जनुषा वीर्येण ।
या चिन्नु वज्रिन्कृणवो दधृष्वान्न ते वर्ता तविष्या अस्ति तस्याः ॥१४॥
एता । विश्वा । चकृऽवान् । इंद्र । भूरि । अपरिऽइतः । जनुषा । वीर्येण ।
या । चित् । नु । वज्रिन् । कृणवः । दधृष्वान् । न । ते । वर्ता । तविष्याः । अस्ति । तस्याः ॥१४॥

हे इंद्र अपरीतः शत्रुभिरपरिगतस्त्वं जनुषा जननसिद्धेनात्मीयेन वीर्येण बलेन भूरि भूरीणि बहून्येतानि प्रत्यक्षेणोपलभ्यमानानि विश्वा विश्वानि व्याप्तानि भुवनजातानि चकृवान् । कृतवानसि । हे वज्रिन् वज्रवन्निंद्र दधृष्वान् सपत्नान्धर्षयंस्त्वं नु क्षिप्रं या चिद्यानि च विश्वानि कृणवः कुर्याः ते त्वदीयस्य तस्यास्तविष्यास्तस्य बलस्य वर्ता निवारयिता न कोऽप्यस्ति ॥

इंद्र ब्रह्म क्रियमाणा जुषस्व या ते शविष्ठ नव्या अकर्म ।
वस्त्रेव भद्रा सुकृता वसूयू रथं न धीरः स्वपा अतक्षं ॥१५॥
इंद्र । ब्रह्म । क्रियमाणा । जुषस्व । या । ते । शविष्ठ । नव्याः । अकर्म ।
वस्त्राऽइव । भद्रा । सुऽकृता । वसुऽयुः । रथं । न । धीरः । सुऽअपाः । अतक्षं ॥१५॥

हे शविष्ठ बलवत्तम शूरतम वेंद्र ते तुभ्यं या यानि स्तोत्राणि नव्या नूतनान्यद्यतना वयमकर्म अकर्म हे इंद्र त्वं क्रियमाणास्माभिः क्रियमाणानि ब्रह्म ब्रह्माणि तानि स्तोत्राणि जुषस्व । सेवस्व । धीरो धीमान् स्वपाः शोभनकर्मा वसूयुर्धनकामोऽहं वस्त्रेव वस्त्राणीव भद्रा भद्राणि भजनीयानि सुकृता सुष्ठु कृतानि स्तोत्राणि रथं न रथमिवातक्षं । अकरवं । स्तोत्राण्युपसहारवदाह्याणीत्यभिप्रायेण वस्त्रनिदर्शनमुक्तं । रथदृष्टांतस्त्वागमनसाधनत्वप्रतिपादनाय । स्तोत्राणि स्वीकृत्य मह्यं धनं प्रयच्छेत्यर्थः ॥ ॥१५॥

क्व स्य वीर इति पंचदशर्चं षोडशं सूक्तं । अत्रानुक्रमणिका । क्व स्य बभ्रुर्ऋणंचयोऽप्यत्र राजा स्तुत इति । बभ्रुर्ऋषिः । अनुक्तत्वात्त्रिष्टुप् । इंद्रो देवता । ऋणंचयनामा राजापि क्वचित्स्तूयते । अतः सोऽपि देवता ॥ तीव्रसोमाख्य एकाहे मरुत्वतीयशस्त्र इदं सूक्तं निविद्धानं । सूत्रितं च । तीव्रसोमेनान्नाद्यकामः क्व स्य वीर । आ० ९. ७. । इति ॥

क्व१ स्य वीरः को अपश्यदिंद्रं सुखरथमीयमानं हरिभ्यां ।
यो राया वज्री सुतसोममिच्छन्तदोको गंता पुरुहूत ऊती ॥१॥
क्व । स्यः । वीरः । कः । अपश्यत् । इंद्रं । सुखऽरथं । ईयमानं । हरिऽभ्यां ।
यः । राया । वज्री । सुतऽसोमं । इच्छन् । तत् । ओकः । गंता । पुरुऽहूतः । ऊती ॥१॥

वज्री वज्रवान् पुरुहूतो बहुभिराहूतो य इंद्रो राया देयेन धनेन सह सुतसोममिच्छन् अभिषुतसोमं यजमानमन्विच्छन् ऊती ऊत्यै रक्षार्थं तत्तस्य यजमानस्यौको गृहं गंता प्राप्तो भवति वीरो विक्रांतः स्य स इंद्रः क्व कुत्र विद्यते । सुखरथं शोभनाक्षद्वारो रथो यस्य स सुखरथः । सुष्ठु सनोति स्रवति भूमिमिति वा सुखं । तादृग्रथं । सुहितं खेभ्यः खं पुनः खनतेरिति यास्कः । नि० ३ १३ । हरिभ्यां स्ववाहनाभ्यामश्वाभ्यामीयमानं गच्छंतमिंद्रं कोऽपश्यत् । कश्च ददृशे ॥

अवाचचक्षं पदमस्य सस्वरुग्रं निधातुरन्वायमिच्छन् ।
अपृच्छमन्याँ उत ते म आहुरिंद्रं नरो बुबुधाना अशेम ॥२॥

अवं। अचचक्षं। पदं। अस्य। सस्वः। उग्रं। निऽधातुः। अनुं। आयं। इच्छन्।
अपृच्छं। अन्यान्। उत। ते। मे। आहुः। इंद्रं। नरः। बुबुधानाः। अशेम ॥ २॥

अस्येंद्रस्य पदं स्थानमवाचचक्षं। अहमवाद्राक्षं। कीदृशं। सस्वोऽन्तर्हितमुग्रमुद्गूर्णं। किंच इच्छन्निंद्रमन्विच्छन्नहं निधातुः स्व स्थापयितुरस्येंद्रस्य पदमन्वायं। अन्वगमं। अन्यानृतान्यान्विदुषोऽपि मार्ग इंद्रमपृच्छं। पृष्टवानस्मि। पृष्टास्ते मे मह्यमिंद्रमाहुः। किमाहुरित्युच्यते। नरो यज्ञानां नेतारो बुबुधाना बुभुत्समाना वयमशेम। इंद्रं प्राप्तवंतः स्मः। यद्यपींद्रो विद्यते तथापि दुर्लभश्चेदनुपगतव्य इति बुभुत्समानः स्वभावमपृच्छत पृष्टैश्च सुलभ इत्युक्ते इंद्रप्राप्त्यर्थं सूक्तशेषमपश्यदित्यर्थः ॥

प्र नु वयं सुते या ते कृतानींद्र ब्रवाम यानि नो जुजोषः।
वेददविद्वाञ्छृणवच्च विद्वान्वहतेऽयं मघवा सर्वसेनः ॥ ३॥
प्र। नु। वयं। सुते। या। ते। कृतानि। इंद्र। ब्रवाम। यानि। नः। जुजोषः।
वेदत्। अविद्वान्। शृणवत्। च। विद्वान्। वहते। अयं। मघऽवा। सर्वऽसेनः ॥ ३॥

हे इंद्र ते त्वदीयानि यानि कृतानि कर्माणि संति नु अद्य वयं स्तोतारः सुते सोमेऽभिषुते सति तानि कर्माणि प्र ब्रवाम। प्रकर्षेण वदाम। त्वमपि नोऽस्मदर्थं यानि कर्माणि जुजोषः असेवथाः तानि कर्माण्यविद्वान् इतः पूर्वमजानन् जनो वेदत्। जानातु। विद्वान् शृणवच्च। शृणुयाच्च। यद्वा। विद्वान् जानन् पुरुषः शृणवच्च। अजानतमपि जनं श्रावयेच्च। सर्वसेनः सर्वाभिः सेनाभिर्युक्तो मघवा धनवान् विद्वान् जानन्नयमिंद्रो जानतश्च शृण्वतश्च तान् जनान् प्रति वहते। अश्वैरुह्यते ॥ व्यत्ययेन कर्तृप्रत्ययः ॥ प्रापयति ॥

स्थिरं मनश्चकृषे जात इंद्र वेषीदेको युधये भूयसश्चित्।
अश्मानं चिच्छवसा दिद्युतो वि विदो गवामूर्वमुस्रियाणां ॥ ४॥
स्थिरं। मनः। चकृषे। जातः। इंद्र। वेषि। इत्। एकः। युधये। भूयसः। चित्।
अश्मानं। चित्। शवसा। दिद्युतः। वि। विदः। गवां। ऊर्वं। उस्रियाणां ॥ ४॥

हे इंद्र जात उत्पन्नमात्र एव त्वं स्थिरं चलनरहितं मनश्चित्तं चकृषे। चकर्थ। सर्वान् बलिष्ठान् जयेयमितीदृशं। तथा हे इंद्र एक इदसहाय एव त्वं युधये युद्धाय भूयसश्चित् बहुतरान् राक्षसादीनपि वेषि। अवैः। अगमः। किंच अश्मानं चित् गवामावरकं पर्वतमपि शवसा बलेन वि दिद्युतः। व्यभिनः। किंच उस्रियाणां क्षीरमुत्सारयंतीनां गवां धेनूनामूर्वं समूहं विदः। अविदयः। अलंभयः ॥

परो यत्त्वं परम आजनिष्ठाः परावति श्रुत्यं नाम बिभ्रत्।
अतश्चिदिंद्रादभयंत देवा विश्वा अपो अजयद्दासपत्नीः ॥ ५॥
परः। यत्। त्वं। परमः। आऽजनिष्ठाः। पराऽवति। श्रुत्यं। नाम। बिभ्रत्।
अतः। चित्। इंद्रात्। अभयंत। देवाः। विश्वाः। अपः। अजयत्। दासऽपत्नीः ॥ ५॥

यद्यदा हे इंद्र परः परस्तादुपरिष्टात्स्थितः परम उत्कृष्टतमस्त्वं परावति दूरे श्रुत्यं श्रवणीयं नाम नामधेयं बिभ्रत् धारयन्नाजनिष्ठाः आ समंतादजायथाः। शेषः परोक्षकृतः। अतश्चिदत आरभ्यैव देवा द्योतमाना अग्न्यादय इंद्रादभयंत। बिभ्युः। विश्वा अपः सर्वाण्युदकानींद्रोऽजयत। वशीचक्रे। कीदृशीः। दासपत्नीः। दासो वृत्रः पतिः पालयिता यासामपां ता इति ॥ ॥ २६ ॥

तुभ्येदेते मरुतः सुशेवा अर्चंत्यर्कं सुन्वंत्यंधः ।
अहिमोहानमप आशयानं प्र मायाभिर्मायिनं सक्षदिंद्रः ॥ ६ ॥
तुभ्यं । इत् । एते । मरुतः । सुऽशेवाः । अर्चंति । अर्कं । सुन्वंति । अंधः ।
अहिं । ओहानं । अपः । आऽशयानं । प्र । मायाभिः । मायिनं । सक्षत् । इंद्रः ॥ ६ ॥

एते मरुतः । महद्द्रवंति वदंतीति मरुतः स्तोतारः । सुशेवाः । शेवमिति सुखनामैतत् । शोभनसुखाः संतः । स्तोत्रेण शोभनं सुखमुत्पादयंत इत्यर्थः । हे इंद्र तुभ्येत्तुभ्यमेवार्कमर्चनीयं स्तोत्रमर्चंति । सुन्वंति । कुर्वंतीत्यर्थः । अंधः सोमलक्षणमन्नं सुन्वंति । अभिषवं कुर्वंति । इंद्रः परमैश्वर्ययुक्तो मायाभिः स्वकीयाभिः शक्तिभिरहिं वृत्रं प्र सक्षत । अभ्यभवत् । कीदृशं । ओहानं देवान्बाधमानमप उदकान्याशयानमावृत्य शयनं कुर्वंतं मायिनं कपटवंतमिति ॥

वि षू मृधो जनुषा दानमिन्वन्नहन्गवा मघवन्संचकानः ।
अत्रा दासस्य नमुचेः शिरो यदवर्तयो मनवे गातुमिच्छन् ॥ ७ ॥
वि । सु । मृधः । जनुषा । दानं । इन्वन् । अहन् । गवा । मघऽवन् । संऽचकानः ।
अत्र । दासस्य । नमुचेः । शिरः । यत् । अवर्तयः । मनवे । गातुं । इच्छन् ॥ ७ ॥

हे मघवन्धनवन्निंद्र संचकानोऽस्माभिः स्तूयमानस्त्वं ॥ संपूर्वः कायतिः शब्दकर्मा । तस्य लडर्थे लिटि रूपं ॥ दानं देवानां बाधकं वृत्रमसुरं गवा वज्रेणेन्वन् प्रेरयन् हिंसन् जनुषा जन्मना मृधस्तदनुचरान्नमुच्यादीन् शत्रून् सु सुष्ठु व्यहन् । विजघंथ । इंद्रस्यासुरा जन्मारभ्य शत्रव इत्यर्थः । हे इंद्र त्वमत्रास्मिन्युद्धे मनवे नमुचिनापहृतगोधनाय मह्यं गातुं सुखमिच्छन् अभिलषन् नमुचेरेतन्नामकस्योपक्षपयितुरसुरस्य सर्वाधि शिरः शीर्षं यद्यदावर्तयः अचूर्णयः तदा शत्रून् विजघंथेति पूर्वेण संबंधः ॥

युजं हि मामकृथा आदिदिंद्र शिरो दासस्य नमुचेर्मथायन् ।
अश्मानं चित्स्वर्यं१ वर्तमानं प्र चक्रियेव रोदसी मरुद्भ्यः ॥ ८ ॥
युजं । हि । मां । अकृथाः । आत् । इत् । इंद्र । शिरः । दासस्य । नमुचेः । मथायन् ।
अश्मानं । चित् । स्वर्यं । वर्तमानं । प्र । चक्रियाऽइव । रोदसी इति । मरुतऽभ्यः ॥ ८ ॥

हे इंद्र त्वं स्वर्यं स्वरेण सहितं वर्तमानं भ्रमंतमश्मानं चित् मेघमिव स्थितं दासस्योपक्षपयितुर्नमुचेरसुरस्य शिरो मथायन् चूर्णयन् आदिदनंतरमेव मा युजं सखायमकृथा हि । चकार्थ खलु । तदानीं मरुद्भ्यस्त्वत्सहायेभ्यो रोदसी द्यावापृथिव्यौ चक्रियेव चक्रे इव प्राप्तां ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥

स्त्रियो हि दास आयुधानि चक्रे किं मा करन्नबला अस्य सेनाः ।
अंतर्ह्यख्यदुभे अस्य धेने अथोप प्रैद्युधये दस्युमिंद्रः ॥ ९ ॥
स्त्रियः । हि । दासः । आयुधानि । चक्रे । किं । मा । करन् । अबलाः । अस्य । सेनाः ।
अंतः । हि । अख्यत् । उभे इति । अस्य । धेने इति । अथ । उप । प्र । ऐत् । युधये ।
दस्युं । इंद्रः ॥ ९ ॥

दास उपक्षपयिता नमुचिरसुरः स्त्रियः स्त्रीरायुधानि युद्धसाधनानि चक्रे हि। कृतवान् खलु। इंद्रेण सह योद्धुं प्रतिहितवानित्यर्थः। अस्यासुरस्य संबंधिन्योऽबलाः स्त्रीरूपाः सेना मा मां किं करन् किं कुर्युरिति मन्यमान इंद्रस्तासां मध्येऽस्यासुरस्य धेने प्रीणयित्र्यौ सुरूपे उभे द्वे स्त्रियावंतरख्यद्धि। गृहमध्ये निदधे खलु। अथानंतरमिंद्रो दस्युं नमुचिं युधये युद्धायोप प्रैत्। उपप्रागच्छत् ॥

सम॑त्र॒ गावो॑ऽभि॒तो॑ऽनवंते॒हेह॑ व॒त्सैर्वियु॑ता॒ यदास॑न् ।
सं ता इंद्रो॑ असृजदस्य॒ शा॒कैर्यदीं॒ सोमा॑सः॒ सुषु॑ता॒ अमं॑दन् ॥१०॥
सं। अत्र॑। गावः॑। अ॒भितः॑। अ॒न॒वं॒त॒। इ॒ह॒ऽइ॑ह। व॒त्सैः॑। विऽयु॑ताः। यत्। आस॑न्।
सं। ताः। इंद्रः॑। अ॒सृ॒ज॒त॒। अ॒स्य॒। शा॒कैः। यत्। ई॒। सोमा॑सः। सुऽसु॑ताः। अमं॑दन् ॥१०॥

यद्यदा गावो वत्सैर्वियुता आसन् वियुक्ता अभवन् अत्रास्मिन्कालेऽभितः सर्वतो नमुचिनापहृता गाव इहेह इह चेह च सर्वतः समनवत। अत्यंतमगच्छन्। यद्यदा सुषुता बभ्रुनाम्ना ऋषिणा सुष्ठुभिषुताः सोमासः सोमा ईमेनमिंद्रममंदन् अमादयन् तदेंद्रः शाकैः शक्तैर्मरुद्भिः सहास्य बभ्रोः संबंधिनीर्नमुचिनापहृतास्ता गाः समसृजत। वत्सैः सह समयोजयत ॥ ॥ २७॥

यदीं॒ सोमा॑ ब॒भ्रुधू॑ता॒ अमं॑दन्नरो॑रवीद्वृष॒भः साद॑नेषु ।
पु॒रं॒द॒रः प॑पि॒वाँ इंद्रो॑ अस्य॒ पुन॒र्गवा॑मददादु॒स्रिया॑णां ॥११॥
यत्। ई॒। सोमाः॑। ब॒भ्रुऽधू॑ताः। अमं॑दन्। अरो॑रवीत्। वृ॒ष॒भः। सद॑नेषु।
पु॒रं॒ऽद॒रः। प॒पि॒ऽवान्। इंद्रः॑। अ॒स्य॒। पुनः॑। गवां॑। अ॒द॒दा॒त्। उ॒स्रिया॑णां ॥११॥

यद्यदा बभ्रुधुता बभ्रुणाभिषुताः सोमा ईमेनमिंद्रममंदन् अमादयन् तदा वृषभः कामानां वर्षितेंद्रः सदनेषु युद्धेष्वरोरवीत्। अत्यर्थं शब्दमकरोत्। पुरंदरः पुरां दारयितास्येमं सोमं पपिवान् पीतवानिंद्रः पुनरुस्रियाणां क्षीरमुत्स्राविणीर्गवां गा अददात्। बभ्रवे ददौ ॥

भ॒द्रमि॒दं रु॒शमा॑ अग्ने अक्र॒न्गवां॑ च॒त्वारि॒ दद॑तः स॒हस्रा॑ ।
ऋ॒णं॒च॒यस्य॒ प्रयं॑ता म॒घानि॒ प्रत्य॑ग्रभीष्म॒ नृत॑मस्य नृ॒णां ॥१२॥
भ॒द्रं। इ॒दं। रु॒शमाः॑। अग्ने॑। अ॒क्र॒न्। गवां॑। च॒त्वारि॑। दद॑तः। स॒हस्रा॑।
ऋ॒णं॒ऽच॒यस्य॑। प्रऽयं॑ता। म॒घानि॑। प्रति॑। अ॒ग्र॒भी॒ष्म॒। नृऽत॑मस्य। नृ॒णां ॥१२॥

रुशम इति कश्चिज्जनपदविशेषः। अत्र रुशमशब्देन तत्रत्या जना उच्यंते। रुशमा ऋणंचयनाम्नो राज्ञः किंकरा हे अग्ने भद्रं कल्याणमिदं कर्माक्रन्। अकुर्वन्। कीदृशाः। गवां धेनूनां चत्वारि चतुःसंख्यायुक्तानि सहस्रा सहस्राणि ददतो मह्यं प्रयच्छंतः। राज्ञा हि दीयमानानि धनानि राजपुरुषा एव प्रयच्छंतीत्यर्थः। नृणां नेतॄणां मध्ये नृतमस्यातिशयेन नेतृतमस्य ऋणंचयस्यैतन्नामकेन राज्ञा प्रयता प्रयतानि दत्तानि मघानि गोरूपाणि धनानि वयं प्रत्यग्रभीष्म। प्रतिगृहीतवंतः स्मः। पूजार्थं बहुवचनं ॥

सु॒पेश॑सं॒ माव॑ सृजं॒त्यस्तं॒ गवां॑ स॒हस्रै॑ रु॒शमा॑सो अग्ने ।
ती॒व्रा इंद्र॑ममंदुः सु॒तासो॒ऽक्तोर्व्यु॑ष्टौ॒ परि॑तक्म्यायाः ॥१३॥
सुऽपेश॑सं। मा। अव॑। सृ॒जं॒ति॒। अस्तं॑। गवां॑। स॒हस्रैः॑। रु॒शमा॑सः। अग्ने॑।
ती॒व्राः। इंद्रं॑। अ॒म॒मं॒दुः॒। सु॒तासः॑। अ॒क्तोः। विऽउ॑ष्टौ। परि॑ऽतक्म्यायाः ॥१३॥

हे अग्ने ऋणमासो ऋणमा ऋणंचयस्य किंकराः सुपेशसं सुरूपमलंकाराच्छादनादिभिः संस्कृतं मा मामस्त गृहं गवां धेनूनां सहस्रैः सहाव सृजति । प्रापयंति स्म । तदनंतरमेव तीव्रा रसवतः सुतासो लब्धबहुधनेन मयाभिषुताः सोमाः परितक्म्यायाः । तमसा भूतानि परितस्कति गच्छतीति परितक्म्या । तस्या अक्तो रात्रेर्व्युष्टौ व्युच्छने सति । उषःकाल इत्यर्थः । इंद्रममदुः । अमादयन । बभ्रुर्गवां प्राप्त्यनंतरमविलंबितमेव सोमैरिंद्र इत्यर्थः ॥

औच्छत्सा रात्री परितक्म्या याँ ऋणंचये राजनि रुशमानां ।
अत्यो न वाजी रघुरज्यमानो बभ्रुश्चत्वार्यसनत्सहस्रा ॥१४॥
औच्छत् । सा । रात्री । परिऽतक्म्या । या । ऋणंऽचये । राजनि । रुशमानां ।
अत्यः । न । वाजी । रघुः । अज्यमानः । बभ्रुः । चत्वारि । असनंत । सहस्रा ॥१४॥

रुशमानां रुशमनाम्नां जनानां राजनि प्रभावृणंचये एतत्संज्ञके तत्समीप एव या रात्रिः परितक्म्या परितो गंत्री भवति सा रात्र्यौच्छत । व्युष्टाभवत । अत्यः सततगामी वाजी न अश्व इव रघुः शीघ्रगाम्यज्यमानः प्रेर्यमाणो बभ्रुरेतन्नामक ऋषिश्चत्वारि चतुःसंख्याकानि सहस्रा सहस्राणि गोरूपाणि धनान्यसनत । अलभत ॥

चतुःसहस्रं गव्यस्य पश्वः प्रत्यग्रभीष्म रुशमेष्वग्ने ।
घर्मश्चित्तप्तः प्रवृजे य आसीदयस्मयस्तम्वादाम विप्राः ॥१५॥
चतुःऽसहस्रं । गव्यस्य । पश्वः । प्रति । अग्रभीष्म । रुशमेषु । अग्ने ।
घर्मः । चित् । तप्तः । प्रऽवृजे । यः । आसीत् । अयस्मयः । तं । ऊं इति । आदाम । विप्राः ॥१५॥

हे अग्ने वयं रुशमेष्वेतत्संज्ञकेषु जनेषु गव्यस्य गवात्मकस्य पश्वः पशोः पशूनां । जातावेकवचनं । चतुःसहस्रं चत्वारि सहस्राणि प्रत्यग्रभीष्म । प्रतिगृहीतवतः स्मः । प्रवृजे प्रवृजनार्थं तप्तः संतप्तः शोभनवर्णो घर्मश्चिन्महावीर इवायस्मयोऽयोमयो हिरण्मयो यः कलश आसीत अभवत तमु दोहनार्थं कलशं च विप्रा मेधाविनो वयं रुशमेष्वादाम । आदत्तवंतः ॥ ॥ २८ ॥

इंद्रो रथायेति त्रयोदशर्चं सप्तदशं सूक्तं । अवस्युर्नामात्रेय ऋषिः । त्रिष्टुप् छंदः । इंद्रो देवता । उग्रमयात सं ह यद्वामिति पादयोः क्रमेण कुत्सोशनसौ विकल्पेन देवता । इंद्राकुत्सा वहमानेत्यस्या इंद्रः कुत्सश्च । तथा चानुक्रांतं । इंद्रो रथाय सप्तोनावस्युरुग्रमिति कौत्स्यौशनसौ वा पादौ परेंद्राकौत्सीति ॥ विनियोगो लैंगिकः ॥

इंद्रो रथाय प्रवतं कृणोति यमध्यस्थान्मघवा वाजयंतं ।
यूथेव पश्वो व्युनोति गोपा अरिष्टो याति प्रथमः सिषासन ॥१॥
इंद्रः । रथाय । प्रऽवतं । कृणोति । यं । अधिऽअस्थात् । मघऽवा । वाजऽयंतं ।
यूथाऽइव । पश्वः । वि । उनोति । गोपाः । अरिष्टः । याति । प्रथमः । सिसासन ॥१॥

मघवा धनवानिंद्रो वाजयंतमन्नमिच्छंतं यं रथमध्यस्थात अधितिष्ठति तस्मै रथाय प्रवतं प्रवणमार्गं कृणोति । करोति । अपि च गोपा गोपालः पश्वो यूथेव पशोः पशूनां यूथानि यथा व्युनोति प्रेरयति तथा शत्रुसैन्यानि प्रेरयति । अरिष्टः शत्रुभिः स्वयमहिंसितः प्रथमो देवानां मुख्य इंद्रः सिषासन शत्रुधनानीच्छन याति । गच्छति ॥

आ प्र द्रव हरिवो मा वि वेनः पिशंगराते अभि नः सचस्व ।
नहि त्वदिंद्र वस्यो अन्यदस्त्यमेनांश्चिज्जनिवतश्चकर्थ ॥ २ ॥
आ । प्र । द्रव । हरिऽवः । मा । वि । वेनः । पिशंगऽराते । अभि । नः । सचस्व ।
नहि । त्वत् । इंद्र । वस्यः । अन्यत् । अस्ति । अमेनान् । चित् । जनिऽवतः । चकर्थ ॥ २ ॥

हे हरिवो हरिवन्निंद्र त्वमास्मानभिमुखं प्र द्रव । प्रकर्षेण गच्छ । किंतु मा वि वेनः । वेनतिः कांतिकर्मा । अस्मासु विगतकामो मा भूः । किंच हे पिशंगराते बहुरूपधनेंद्र नोऽस्मानभि सचस्व । अभिसेवस्व । अपि च हे इंद्र वस्यो वसीयः श्रेयस्करं त्वत्त्वत्तोऽन्यन्नह्यस्ति । अन्यद्वसुजातं नास्ति । अमेनांश्चित । मेनाशब्दः स्त्रीवाची । अपगतस्त्रीकांश्चित जनिवतो जायावतश्चकर्थ । करोषि ॥

उद्यत्सहः सहस आजनिष्ट देदिष्ट इंद्र इंद्रियाणि विश्वा ।
प्राचोदयत्सुदुघा वव्रे अंतर्वि ज्योतिषा संववृत्वत्तमोऽवः ॥ ३ ॥
उत् । यत् । सहः । सहसः । आ । अजनिष्ट । देदिष्ट । इंद्रः । इंद्रियाणि । विश्वा ।
प्र । अचोदयत् । सुऽदुघाः । वव्रे । अंतः । वि । ज्योतिषा । संऽववृत्वत् । तमः ।
अवरित्यवः ॥ ३ ॥

यद्यदा सहः सूर्यसंबंधि तेजः सहस उषःसंबंधिनस्तेजस उदाजनिष्ट उपरिष्टात प्रादुर्बभूव तदिंद्रो विश्वा विश्वानि सर्वाणींद्रियाणि धनानि । इंद्रियमिति धननामैतत । देदिष्ट । यजमानेभ्यो दिशति । वव्रे निवारके पर्वतेऽतर्मध्ये बलेन निरुद्धाः सुदुघाः सुष्ठु दोग्ध्रीर्गाः प्राचोदयत । प्रेरयत । ज्योतिषा तेजसा संववृत्वत संवरणशीलं तमो व्यवः । निवारितवान ॥

अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमंतं ।
ब्रह्माण इंद्रं महयंतो अर्कैरवर्धयन्नहये हंतवा उं ॥ ४ ॥
अनवः । ते । रथं । अश्वाय । तक्षन् । त्वष्टा । वज्रं । पुरुऽहूत । द्युऽमंतं ।
ब्रह्माणः । इंद्रं । महयंतः । अर्कैः । अवर्धयन् । अहये । हंतवे । ऊं इति ॥ ४ ॥

हे पुरुहूत बहुभिराहूतेंद्र ते त्वदीयं रथमश्वायाश्वाभ्यां संयोगार्हमनवः । अनवो मनुष्याः । ऋभवस्त क्षन । अतक्षन । अकुर्वन । त्वष्टा च त्वदीयं वज्रं द्युमंतं दीप्तिमतमकरोत । उ अपि च महयंत इंद्रं पूजयतो ब्रह्माणोऽगिरसः परिवृढा मरुतो वा अहयेऽहि वृत्र हतवे हंतुमर्कैः स्तोत्रैरवर्धयन । वर्धितवंतः ॥

वृष्णे यत्ते वृषणो अर्कमर्चानिंद्र ग्रावाणो अदितिः सजोषाः ।
अनश्वासो ये पवयोऽरथा इंद्रेषिता अभ्यवर्तंत दस्यून् ॥ ५ ॥
वृष्णे । यत् । ते । वृषणः । अर्कं । अर्चान् । इंद्र । ग्रावाणः । अदितिः । सऽजोषाः ।
अनश्वासः । ये । पवयः । अरथाः । इंद्रऽइषिताः । अभि । अवर्तंत । दस्यून् ॥ ५ ॥

हे इंद्र यद्यदा वृषणः सेचनसमर्था मरुतो वृष्णे कामानां वर्षित्रे ते तुभ्यमर्कं स्तोत्रमर्चान अस्तुवन । अकुर्वन्नित्यर्थः । तदादितिरदीनाः ॥ वचनव्यत्ययः ॥ ग्रावाणोऽभिषवपाषाणाः सजोषाः संगता बभुवुरिति

शेषः । अनश्वासोऽश्ववर्जिता अरथा रथहीना इंद्रेषिता इंद्रेण प्रेषिताः पवयः पवमाना गच्छंतो ये मरुतो दस्यून् शत्रूनभ्यवर्तंत अभिभूतान् कुर्वंतो वर्तंते स्म ते मरुतोऽर्चानिति संबंधः ॥ ॥ २९ ॥

प्र ते पूर्वाणि करणानि वोचं प्र नूतना मघवन्या चकर्थ ।
शक्तीवो यद्विभरा रोदसी उभे जयन्नपो मनवे दानुचित्राः ॥ ६ ॥

प्र । ते । पूर्वाणि । करणानि । वोचं । प्र । नूतना । मघऽवन् । या । चकर्थ ।
शक्तिऽवः । यत् । विऽभराः । रोदसी इति । उभे इति । जयन् । अपः । मनवे ।
दानुऽचित्राः ॥ ६ ॥

हे इंद्र ते त्वदीयानि पूर्वाणि पुरातनानि करणानि कर्माणि प्र वोचं । अहं प्रकर्षेण ब्रवीमि । नूतना नूतनानि नवानि कर्माणि प्र वोचं । प्रब्रवीमि । हे मघवन् धनवन्निंद्र या यानि कर्माणि चकर्थ कृतवानसि तानि प्र वोचमिति संबंधः । हे शक्तीवः शक्तिमन् । शक्तिर्वज्रं कर्म वा । तद्वन्निंद्र यत् यस्त्वमुभे रोदसी द्यावापृथिव्यौ जयन्वशीकुर्वन् अपः उदकानि मनवे मनुष्याय विभराः विविच्य बिभर्षि । कीदृशीः । दानुचित्राः चित्रदानाः ॥

तदिन्नु ते करणं दस्म विप्राहिं यद्घ्नन्नोजो अत्रामिमीथाः ।
शुष्णस्य चित्परि माया अगृभ्णाः प्रपित्वं यन्नप दस्यूँरसेधः ॥ ७ ॥

तत् । इत् । नु । ते । करणं । दस्म । विप्र । अहिं । यत् । घ्नन् । ओजः । अत्र । अमिमीथाः ।
शुष्णस्य । चित् । परि । मायाः । अगृभ्णाः । प्रऽपित्वं । यन् । अप । दस्यून् । असेधः ॥ ७ ॥

हे दस्म दर्शनीय विप्र मेधाविन्निंद्र त्वमत्रास्मिंल्लोकेऽहिं वृत्रमसुरं घ्नन् हिंसन् यदोजो यद्बलममिमीथाः प्रकाशितवानसि तदिन्नु तत्खलु ते त्वदीयं करणं कर्म विद्यते । अपि च शुष्णस्य चित् तन्नामकस्यापि असुरस्य संबंधिनीर्माया प्रज्ञाः पर्यगृभ्णाः । परिगृहीतवानसि । हे इंद्र त्वं प्रपित्वं संग्रामं समीपं वा यन् प्राप्नुवन् दस्यूनसुरानपासेधः । अपावाधथाः ॥

त्वमपो यदवे तुर्वशायारमयः सुदुघाः पार इंद्र ।
उग्रमयातमवहो ह कुत्सं सं ह यद्वामुशनारंत देवाः ॥ ८ ॥

त्वं । अपः । यदवे । तुर्वशाय । अरमयः । सुऽदुघाः । पारः । इंद्र ।
उग्रं । अयातं । अवहः । ह । कुत्सं । सं । ह । यत् । वां । उशना । अरंत । देवाः ॥ ८ ॥

हे इंद्र त्वं पारे नदीनां तीरे । प्रवृद्धाः इति शेषः । सुदुघा ओषधिवनस्पतीन् सुष्ठु दुहतीरपः उदकानि यदवे यदुनामकाय राज्ञे तुर्वशाय एतन्नामकाय राज्ञे चारमयः । रमितवानसि । हे इंद्र युवां । त्वं कुत्सश्चेति शेषः । उग्रमुद्गूर्णं शुष्णमयातं । आगच्छतं । तदनंतरं त्वं शुष्णं हत्वा कुत्समवहो ह । स्वगृहं प्रापितवानसि खलु । यद्यदा वा युवामिंद्राकुत्सावुशना भार्गवो देवाश्च समरंत ह संभजंते खलु ॥

इंद्राकुत्सा वहमाना रथेना वामत्या अपि कर्णे वहंतु ।
निः षीमद्भ्यो धमथो निः षधस्थान्मघोनो हृदो वरथस्तमांसि ॥ ९ ॥

इंद्राकुत्सा । वहमाना । रथेन । आ । वां । अत्याः । अपि । कर्णे । वहंतु ।
निः । सीं । अत्ऽभ्यः । धमथः । निः । सधऽस्थात् । मघोनः । हृदः । वरथः । तमांसि ॥ ९ ॥

हे इंद्राकुत्साविंद्राकुत्सौ रथेन वहमाना वहमानावुह्यमानौ वां युवामत्या अश्वाः कर्णेऽपि । स्तोत्राणि कृणोति करोतीति कर्णः स्तोता यजमानो वा । तत्समीपेऽपीति यावत् । आ वहंतु । आ समंताद्वाहका भवंतु । युवामप्स्वंतोऽप्सु प्रविष्टं सीमिनं शुष्णासुरं निर्धमथः । अबाधेथां । सीमिति शुष्णासुरो बुद्धिस्थः परामृश्यते । सधस्थात्स्वकीयात्स्थानान्निरबाधेथां । मघोनो मघवतो हविष्मतो यजमानस्य हृदो हृदयात्तमांस्यज्ञानरूपाणि पापानि वरथः । निवारयथः ॥

वात॑स्य यु॒क्तान्त्सु॒युज॑श्चि॒दश्वा॑न्क॒विश्चि॑दे॒षो अ॑जग॒न्नव॒स्युः ।
विश्वे॑ ते॒ अत्र॑ म॒रुतः॒ सखा॑य इंद्र॒ ब्रह्मा॑णि तवि॒षीम॑वर्धन् ॥१०॥
वात॑स्य । यु॒क्तान् । सु॒ऽयुजः॑ । चि॒त् । अश्वा॑न् । क॒विः । चि॒त् । ए॒षः । अ॒ज॒ग॒न् । अ॒व॒स्युः ।
विश्वे॑ । ते॒ । अत्र॑ । म॒रुतः॑ । सखा॑यः । इंद्र॑ । ब्रह्मा॑णि । तवि॒षीं । अ॒व॒र्ध॒न् ॥१०॥

कविश्चित्प्राज्ञोऽप्यवस्युरेतन्नामक एष मंत्रद्रष्टा वातस्य वायोर्वेगेन युक्तान् संयुक्तान् सुयुजश्चित्सुष्ठु योजनीयानश्वानजगन् । प्राप्नोत् । अवस्योः सखायो विश्वे सर्वे मरुतो बहवः स्तोतारो हे इंद्र अत्रास्मिँल्लोके ते त्वदीयां तविषीं बलं ब्रह्माणि ब्रह्मभिः स्तोत्रैरवर्धन् । अवर्धयन् ॥ ॥ ३० ॥

सूर॑श्चि॒द्रथं॒ परि॑तक्म्यायां॒ पूर्वं॑ कर॒दुप॑रं जूजु॒वांस॑म् ।
भर॑च्च॒क्रमेत॑शः॒ सं रि॑णाति पु॒रो दध॑त्सनिष्यति॒ क्रतुं॑ नः ॥११॥
सूरः॑ । चि॒त् । रथ॑म् । परि॑ऽतक्म्यायां । पूर्वं॑ । क॒र॒त् । उप॑रं । जू॒जु॒ऽवांस॑म् ।
भर॑त् । च॒क्रं । एत॑शः । सं । रि॒णा॒ति॒ । पु॒रः । दध॑त् । स॒नि॒ष्य॒ति॒ । क्रतु॑म् । नः॒ ॥११॥

इंद्रः परितक्म्यायां संग्रामे । परितो गच्छंत्यस्यां भय इति परितक्म्या संग्रामः । एतशाख्येन ऋषिणा सह योद्धुः सूरश्चित्सूर्यस्यापि संबंधिनं जूजुवांसं वेगेन गच्छंतं रथमुपरमुपरतव्यापारं पूर्वं करत् । पुरोऽकरोत् । एतश एतशाय ॥ विभक्तिव्यत्ययः ॥ इंद्रः पूर्वं विचक्रस्य रथस्यैकं चक्रं भरत् । अहरत् । स इंद्रस्तेन चक्रेणासुरान् सं रिणाति । हिनस्ति । अपि च पुरो दधदस्मान्पुरस्कुर्वन् नोऽस्मदीयं क्रतुं यज्ञं सनिष्यति । संभजतु ॥

आयं ज॑ना अभि॒चक्षे॑ जगा॒मेंद्रः॒ सखा॑यं सु॒तसो॑ममि॒च्छन् ।
वद॒न्ग्रावाव॒ वेदिं॑ भ्रियाते॒ यस्य॑ जी॒रम॑ध्व॒र्यव॒श्चर॑न्ति ॥१२॥
आ । अ॒यं । ज॒नाः॒ । अ॒भि॒ऽचक्षे॑ । ज॒गा॒म॒ । इंद्रः॑ । सखा॑यं । सु॒तऽसो॑मं । इ॒च्छन् ।
वद॑न् । ग्रावा॑ । अव॑ । वेदि॑म् । भ्रि॒या॒ते॒ । यस्य॑ । जी॒रं । अ॒ध्व॒र्यवः॑ । चर॑न्ति ॥१२॥

हे जना अभिचक्षे युष्मानभिद्रष्टुमयमिंद्रः सखायं स्तोतारं सुतसोममभिषुतसोमं यजमानमिच्छन्नभिलषन्ना जगाम । आगच्छति । अध्वर्यवो यस्य ग्राव्णो जीरं क्षेपणं प्रेरणं चरंति स ग्रावा सोमाभिषवपाषाणो वदन् शब्दं कुर्वन् वेदिमव भ्रियाते । अभिह्रियते ॥

ये चा॑क॒नंत॑ चाक॒नंत॒ नू ते मर्ता॑ अमृत॒ मो ते अंह॒ आर॑न् ।
वा॒वं॒धि यज्यूँ॑रु॒त तेषु॑ धे॒ह्योजो॒ जने॑षु॒ येषु॑ ते॒ स्याम॑ ॥१३॥
ये । चा॒क॒नंत॑ । चा॒क॒नंत॑ । नु । ते । मर्ताः॑ । अ॒मृ॒त॒ । मो इति॑ । ते । अंहः॑ । आ । अ॒र॒न् ।
व॒वं॒धि । य॒ज्यून् । उ॒त । तेषु॑ । धे॒हि॒ । ओजः॑ । जने॑षु । येषु॑ । ते॒ । स्याम॑ ॥१३॥

हे इंद्र धनार्थं ये जनास्त्वां चाकनंत अकामयंत पुनश्च ते नु क्षिप्रमेव त्वां चाकनंत हे अमृत अमरणशीलेंद्र मर्ता मरणधर्माणस्ते जना अहोऽनर्थं मो आरन्। मा गमन् ॥ मा उ इति निपातसमुदायो मेत्येकनिपातार्थे वर्तते ॥ उतापि च यज्वून्यजमानान्त्वर्षधि। संभजस्व। येषु जनेषु येषां जनानां मध्ये वयं स्तोतारस्त्वदीयाः स्याम भवाम हे इंद्र त्वं तेषु जनेष्वोजो बलं धेहि ॥ ॥ ३१ ॥

अदर्दरुत्समिति द्वादशर्चमष्टादशं सूक्तं। गातुर्नामात्रेय ऋषिः। त्रिष्टुप् छंदः। इंद्रो देवता। तथा चानुक्रांतं। अदर्दर्द्वादश गातुरिति ॥ गतो विनियोगः ॥

अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः।
महांतमिंद्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥१॥
अदर्दः। उत्सं। असृजः। वि। खानि। त्वं। अर्णवान्। बद्बधानान्। अरम्णाः।
महांतं। इंद्र। पर्वतं। वि। यत्। वरिति वः। सृजः। वि। धाराः। अव। दानवं।
हन्निति हन् ॥१॥

हे इंद्र त्वमुत्समुत्स्यंदमानं मेघमदर्दः। विदारितवानसि। तदनंतरं खानि मेघस्थोदकानां निर्गमनद्वाराणि व्यसृजः। विशेषेण सृष्टवानसि। किंच बद्बधानान्बाध्यमानानर्णवानुदकवतो मेघानरम्णाः। विसर्जयसि। वारयसीत्यर्थः ॥ अत्र रम्णातिर्विसर्जनकर्मा ॥ हे इंद्र यद्यस्त्वं ॥ यदिति लिंगव्यत्ययः ॥ महांतं प्रभूतं पर्वतं मेघं वि वः। विवृतवानसि। धारा अपां वि सृजः। विसृष्टवानसि। अपि च दानवं दनोः पुत्रं वृत्रमसुरं यद्वोदकस्य दातारं मेघं वाव हन्। अभिहतवानसि। अत्र निरुक्तं। अदृणा उत्सं। उत्स उत्सदनाद्वोत्स्यदनाद्वोनत्तेर्वा स्यात्। व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत एतानित्यादि। नि० १० ९ ॥

त्वमुत्साँ ऋतुभिर्बद्बधानाँ अरंह ऊधः पर्वतस्य वज्रिन्।
अहिं चिदुग्र प्रयुतं शयानं जघन्वाँ इंद्र तविषीमधत्थाः ॥२॥
त्वं। उत्सान्। ऋतुऽभिः। बद्बधानान्। अरंहः। ऊधः। पर्वतस्य। वज्रिन्।
अहिं। चित्। उग्र। प्रऽयुतं। शयानं। जघन्वान्। इंद्र। तविषीं। अधत्थाः ॥२॥

हे वज्रिन् वज्रवन्निंद्र त्वमृतुभिर्ऋतुषु वृष्टिकालेषु बद्बधानान्प्रतिबध्यमानानुत्सान्मेघान्प्रतिबंधनादमोचय इति शेषः। अपि च पर्वतस्य मेघस्य संबंध्यूधो बलमरंहः। अगमयः। हे उग्र उद्गूर्णबलेंद्र प्रयुतमपृक्तं शयानं जले शयनं कुर्वंतमहिं चिद्वृत्रं च जघन्वान् हतवानसि। हे इंद्र त्वं तविषीं बलमधत्थाः। अधारयः। वृत्रवधानंतरमिंद्रो लोके प्रख्यातो भवतीत्यर्थः ॥

त्यस्य चिन्महतो निर्मृगस्य वधर्जघान तविषीभिरिंद्रः।
य एक इदप्रतिर्मन्यमान आदस्मादन्यो अजनिष्ट तव्यान् ॥३॥
त्यस्य। चित्। महतः। निः। मृगस्य। वधः। जघान। तविषीभिः। इंद्रः।
यः। एकः। इत्। अप्रतिः। मन्यमानः। आत्। अस्मात्। अन्यः। अजनिष्ट। तव्यान् ॥३॥

निर्जघानायुधं शक्रो वृत्रेण क्षिप्रमोजसा। वृत्रस्य गात्रादन्यो यः प्रादुर्भूतो महासुरः ॥ वृत्रं पूर्वं निहत्येंद्रो द्वितीयं शुष्णसंज्ञकं। पुनर्जघानेंद्र इति पराभिः कीर्तयत्यपि रिति ॥ इंद्रो महतः प्रभूतस्य मृगस्य मृगवच्छीघ्रगामिनस्त्यस्य चित् तस्य वृत्रस्य संबंधि वधरायुधं तविषीभिः स्वकीयैर्बलैर्निर्जघान। निःशेषेणावधीत्।

एकं इदमहाय एवाप्रतिः प्रतिद्वंद्विरहितो मन्यमान आत्मानं योऽस्मीति शेषः । आत्तदानीमस्माद्वृत्रात्तव्यान्प्रवृद्धतरोऽन्योऽसुरोऽजनिष्ट । प्रादुरभूत् ॥

त्यं चिदेषां स्वधया मदंतं मिहो नपातं सुवृधं तमोगां ।
वृषप्रभर्मा दानवस्य भामं वज्रेण वज्री नि जघान शुष्णं ॥४॥
त्यं । चित् । एषां । स्वधया । मदंतं । मिहः । नपातं । सुऽवृधं । तमःऽगां ।
वृषऽप्रभर्मा । दानवस्य । भामं । वज्रेण । वज्री । नि । जघान । शुष्णं ॥४॥

एषां प्राणिनां स्वधयान्नेन मदंतं मोदमानं सर्वप्राणिनामन्नं स्वयमेव भुंजानं मिहः सेचनसमर्थस्य मेघस्य नपातं पातारं रक्षितारं । अत्र नपाच्छब्दः पातरि वर्तते । प्राणो वै तनूनपात्स हि तन्वः पाति । ऐ॰ ब्रा॰ २. ४ । इति ब्राह्मणं । सुवृधं प्रवृद्धं तमोगा तमोऽंधकारं गच्छंतं त्यं चित्तं च वृत्रं निजघानेति शेषः । वृषप्रभर्मा वर्षणशीलस्य मेघस्य प्रहर्ता वज्री वज्रवानिंद्रो वज्रेण स्वकीयेनायुधेन दानवस्य दनुजस्य भामं । अत्र क्रोधवाचिभामशब्देन क्रोधादुत्पन्नः शुष्णासुरो लक्ष्यते । तं शुष्णासुरं नि जघान । हतवान् ॥

त्यं चिदस्य क्रतुभिर्निषत्तममर्मणो विददिदस्य मर्म ।
यदीं सुक्षत्र प्रभृता मदस्य युयुत्संतं तमसि हर्म्ये धाः ॥५॥
त्यं । चित् । अस्य । क्रतुऽभिः । निऽसत्तं । अमर्मणः । विदत् । इत् । अस्य । मर्म ।
यत् । ईं । सुऽक्षत्र । प्रऽभृता । मदस्य । युयुत्संतं । तमसि । हर्म्ये । धाः ॥५॥

अमर्मणो मर्महीनमात्मानं मन्यमानस्यास्य वृत्रस्य निषत्तं निषण्णं त्यं चित् त्यत्तदेव ॥ लिंगव्यत्ययः ॥ मर्म प्राणस्थानं । यत्र स्थाने विद्धो म्रियते तन्मर्मेत्युच्यते । अस्य वृत्रस्य क्रतुभिः प्रज्ञानैर्हे इंद्र त्वं विददित । अज्ञासीरेव । यद्यदा हे सुक्षत्र सुबलेंद्र त्वं मदस्य मादकस्य सोमस्य प्रभृता प्रभृतौ संभरणे सति युयुत्संतं योद्धुमिच्छंतमीमेनं वृत्रं हर्म्ये हारके तमसि धाः न्यदधाः । वृत्र इंद्रस्य भयात्तमसि प्राविशदित्यर्थः ॥

त्यं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानं ।
तं चिन्मंदानो वृषभः सुतस्योच्चैरिंद्रो अपगूर्या जघान ॥६॥
त्यं । चित् । इत्था । कत्पयं । शयानं । असूर्ये । तमसि । ववृधानं ।
तं । चित् । मंदानः । वृषभः । सुतस्य । उच्चैः । इंद्रः । अपऽगूर्य । जघान ॥६॥

सुतस्याभिषुतेन सोमेन मंदानो मोदमानो वृषभः कामानां वर्षितेंद्र उच्चैरूर्ध्वमपगूर्य वज्रमुद्यम्य तं चित्तमेव वृत्रासुरं जघान । अवधीत् । कीदृशं । इत्थामुत्रांतरिक्षलोके कत्पयं । कत्सुखकरं पयो यस्य तं । शयानमप्सु शयनं कुर्वंतमसूर्यं सूर्यरहितं तमस्यंधकारे ववृधानं वर्धमानं । त्यं चिदिति पुनर्वचनं पूरणार्थं ॥ ॥३२॥

उद्यदिंद्रो महते दानवाय वधर्यमिष्ट सहो अप्रतीतं ।
यदीं वज्रस्य प्रभृतौ ददाभ विश्वस्य जंतोरधमं चकार ॥७॥
उत् । यत् । इंद्रः । महते । दानवाय । वधः । यमिष्ट । सहः । अप्रतिऽइतं ।
यत् । ईं । वज्रस्य । प्रऽभृतौ । ददाभ । विश्वस्य । जंतोः । अधमं । चकार ॥७॥

यद्यदिंद्रो महते प्रभूताय दानवाय वृत्रासुराय सहः शत्रूणामभिभवितृ अप्रतीतं केनाप्यप्रतिगतं वधं वज्रं मृधमिष्ट उदयच्छत । यद्यदा वज्रस्य प्रभर्ता प्रहर्ता प्रहरणे सति ॥ हृग्रहोर्भ इति भत्व ॥ ईमेनं वृत्रं ददाम अहिंसीत तदा विश्वस्य सर्वस्य जंतोः प्राणिनोऽधमं नीचं चकार । अकरोत ॥

त्यं चिदर्णं मधुपं शयानमसिन्वं वव्रं मह्याददुग्रः ।
अपादमत्रं महता वधेन नि दुर्योण आवृणङ्मृध्रवाचं ॥८॥

त्यं । चित् । अर्णं । मधुऽपं । शयानं । असिन्वं । वव्रं । महि । आदत । उग्रः ।
अपादं । अत्रं । महता । वधेन । नि । दुर्योणे । अवृणक् । मृध्रऽवाचं ॥८॥

उग्र उद्गूर्णबल इंद्रो महि महांतं त्यं चित्तमेव वृत्रमादत । आददे । प्रत्यग्रहीत । कीदृशं । अर्णं गंतारं जलं मेघं वावृत्य शयानं शयनं कुर्वंत । स्थितवंतमित्यर्थः । मधुपं मधुनोऽमृतस्य पातारं पालयितारमसिन्वं सपत्नानामवर्जयितारं ॥ अस्यतेरिदं रूपं ॥ वव्रं वृण्वंत सर्वमप्याच्छादयंत । स इमाँल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वं । तै॰सं॰ २ ५. २ २. । इति हि तैत्तिरीयकं । तदनंतरमिंद्रो दुर्योणे सग्रामे महता प्रभूतेन वधेन वज्रेणापादं पादरहितममत्रममात्रं परिमाणरहितं मध्रवाचं हिंसितवागिंद्रियं । जृंभाभिभूतमित्यर्थः । वृत्रं न्यवृणक् । नितरामहिंसीत । तस्माज्जजभ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदजहितां । तै॰ सं॰ २ ५ २ ४ । इति हि तैत्तिरीयकं ॥

को अस्य शुष्मं तविषीं वरात एको धना भरते अप्रतीतः ।
इमे चिदस्य ज्रयसो नु देवी इंद्रस्यौजसो भियसा जिहाते ॥९॥

कः । अस्य । शुष्मं । तविषीं । वराते । एकः । धना । भरते । अप्रतिऽइतः ।
इमे इति । चित् । अस्य । ज्रयसः । नु । देवी इति । इंद्रस्य । ओजसः । भियसा । जिहाते इति ॥९॥

अस्येंद्रस्य संबंधिनी शुष्मं शोषणं तविषीं बलं को वराते । निवारयेत ॥ शुष्मशब्दस्य स[...]णत्वेऽपि नियतलिंगत्वात्पुंल्लिंगत्वमेव । अप्रतीतः केनाप्यप्रतिगत इंद्र एकोऽसहाय [...]शत्रूणां वसूनि भरते । बिभर्ति हरते वा । देवी देव्यौ द्योतमाने इमे चिदेव द्यावापृथि[व्यौ] धना धनानि [...]ऽस्येंद्रस्य संबंधिन ओजसो बलादुद्गतेन भियसा भयेन नु क्षिप्रं जिहाते । गच्छतः [...]र्यो ज्रयसो वेगवतो । चलत इत्यर्थः ॥

न्यस्मै देवी स्वधितिर्जिहीत इंद्राय गातुरुशतीव येमे ।
सं यदोजो युवते विश्वमाभिरनु स्वधाव्ने क्षितयो नमंत ॥१०॥

नि । अस्मै । देवी । स्वऽधितिः । जिहीते । इंद्राय । गातुः । उशतीऽइव । येमे ।
सं । यत् । ओजः । युवते । विश्वं । आभिः । अनु । स्वधाऽव्ने । क्षितयः । नमंत ॥१०॥

स्वधितिः स्वधृतिः स्वेन धृता देवी द्योतमाना द्यौरस्मा इंद्राय [न्य]क् जिहीते । नीचत्वेन याति । गातुर्भू[मि]रुशतीव कामयमाना योषिदिवेंद्राय येमे । आत्मानं नियच्छति । [...]र्थमात्मानं विनियोक्तुं योग्या भवतीत्यर्थः । यद्यदेंद्रो विश्वं समस्तमोजो बलमाभिः प्रजाभिः सं युवते [सं]योजयति । इंद्रः स्वकीयं बलं सर्वासु प्रजासु निहितवानित्यर्थः । पुनरानुकूल्येन वर्तमानाः क्षितयो मनुष्याः[...]क्षितय इति मनुष्यनामैतत । स्वधाव्ने बलवत इंद्राय नमंत । सन्नमंति । नम्रीभवंति ॥

एकं नु त्वा सत्पतिं पांचजन्यं जातं शृणोमि यशसं जनेषु।
तं मे जगृभ्र आशसो नविष्ठं दोषा वस्तोर्हवमानास इंद्रं ॥११॥
एकं। नु। त्वा। सत्ऽपतिं। पांचऽजन्यं। जातं। शृणोमि। यशसं। जनेषु।
तं। मे। जगृभ्रे। आऽशसः। नविष्ठं। दोषा। वस्तोः। हवमानासः। इंद्रं ॥११॥

हे इंद्र त्वा त्वामेकं मुख्यमेव जनेषु सर्वेषु मनुष्येषु मध्येऽहं मंत्रद्रष्टा शृणोम्यृषिमुख्येभ्यः। कीदृशं। सत्पतिं सतां साधूनां पालकं पांचजन्यं पंचजनेभ्यो मनुष्येभ्यो हितं जातमुत्पन्नं यशसं यशोयुक्तं। दोषा क्षपायां वस्तोर्वासरे च हवमानासः स्तुवत आशसः कामानां शंसमाना मे मदीयाः प्रजा नविष्ठमतिशयेन स्तुत्यं तमिंद्रं जगृभ्रे। गृह्णंतु। स्वीकुर्वंतु ॥

एवा हि त्वामृतुथा यातयंतं मघा विप्रेभ्यो ददतं शृणोमि।
किं ते ब्रह्माणो गृहते सखायो ये त्वाया निदधुः काममिंद्र ॥१२॥
एव। हि। त्वां। ऋतुऽथा। यातयंतं। मघा। विप्रेभ्यः। ददतं। शृणोमि।
किं। ते। ब्रह्माणः। गृहते। सखायः। ये। त्वाऽया। निऽदधुः। कामं। इंद्र ॥१२॥

एवैवमुक्तप्रकारेण हि ऋतुथा काले काले यातयंतं जंतून्प्रेरयंतं हे इंद्र त्वां विप्रेभ्यः स्तोतृभ्यो मघा मघानि धनानि ददतं यच्छंतं शृणोमि। निशामयामि। एतन्मर्षेव प्रतिभाति। हे इंद्र त्वाया त्वयि ये स्तोतारः कामं स्वकीयाभिलाषं निदधुः न्यक्षिपन् ब्रह्माणो बृहंतस्ते त्वदीयाः सखायः स्तोतारः किं गृहते। त्वत्तः किं गृह्णंते। ऋषिः स्वकीयाभिलाषप्राप्तिविलंबनादेवमुक्तवानित्यर्थः ॥ ॥३३॥ ॥२॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके प्रथमोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्। निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥
चतुर्थे प्रथमाध्यायं व्याख्याय व्याकृतिक्षमः। सुधीः श्रीसायणाचार्यो द्वितीयं व्याचिकीर्षति ॥

तत्रात्रिः पंचमे मंडले तृतीयेऽनुवाके द्वादश सूक्तानि। तत्र महि महे इति दशर्चं प्रथमं सूक्तं प्रजापतिपुत्रस्य संवरणस्यार्षं। इंद्रो देवता। त्रिष्टुप् छंदः। महि द्वादश प्राजापत्यः संवरण इत्यनुक्रांतं। विनियोगो लैंगिकः ॥

महि महे तवसे दीध्ये नॄनिंद्रायेत्था तवसे अतव्यान्।
यो अस्मै सुमतिं वाजसातौ स्तुतो जने समर्यश्चिकेत ॥१॥
महि। महे। तवसे। दीध्ये। नॄन्। इंद्राय। इत्था। तवसे। अतव्यान्।
यः। अस्मै। सुऽमतिं। वाजऽसातौ। स्तुतः। जने। सऽमर्यः। चिकेत ॥१॥

अहं संवरणोऽत्यानत्यर्तमिव दुर्बलः सन् महि महत् प्रभूतं स्तोत्रं महे महते तवसे बलवत इंद्रायेत्थेत्थं वक्ष्यमाणप्रकारेण दीध्यं । दीपयामि । प्रकाशयामि । किमर्थं । नॄन् ॥ षष्ठ्यर्थे द्वितीया ॥ मनुष्याणामस्मदीयानां तवसे बलाय । यद्वा । नॄनस्मद्विरोधिनामभिभवायेति शेषः । तदर्थं तवसेऽस्मद्बलाय । य इंद्रोऽस्मै जनं जनाय संवरणाय वाजसातौ संग्रामे वाजस्यान्नस्य वा लाभे निमित्ते सति स्तुतः सन् सुमतिं समर्यो मर्यैः स्तोतृभिः सहितो यद्वा सह स्रियमाणैर्युध्यमानैर्मरुदादिभिरथवा समराईश्चिकेत जानाति ॥

स त्वं न इंद्र धियसानो अर्कैर्हरीणां वृषन्योक्त्रमश्रेः ।
या इत्था मघवन्ननु जोषं वक्षो अभि प्रार्यः सक्षि जनान् ॥२॥

सः । त्वं । नः । इंद्र । धियसानः । अर्कैः । हरीणां । वृषन् । योक्त्रं । अश्रेः ।
याः । इत्था । मघऽवन् । अनु । जोषं । वक्षः । अभि । प्र । अर्यः । सक्षि । जनान् ॥२॥

हे वृषन् वर्षकेंद्र स प्रसिद्धस्त्वं नोऽस्मान्धियसानो ध्यायन् अर्कैरर्चनसाधनैः स्तोत्रैर्निमित्तभूतैर्हरीणां रथे नियोज्यानामश्वानां योक्त्रं नियोजनरज्जुमश्रेः । आश्रयसि । याः ॥ लिंगव्यत्ययः ॥ यानश्वान् हे मघवन्नित्थेत्थं जोषं प्रीतिमनु वक्षोऽवहः तैर्निमित्तैर्योक्त्रमश्रेरिति । तथा कृत्वार्योऽस्मदरीन् जनानभि आभिमुख्येन प्र प्रकृष्टं सक्षि । पराभव ॥

न ते त इंद्राभ्य१स्मदृष्वायुक्तासो अब्रह्मता यदसन् ।
तिष्ठा रथमधि तं वज्रहस्ता रश्मिं देव यमसे स्वश्वः ॥३॥

न । ते । ते । इंद्र । अभि । अस्मत् । ऋष्व । अयुक्तासः । अब्रह्मता । यत् । असन् ।
तिष्ठ । रथं । अधि । तं । वज्रऽहस्त । आ । रश्मिं । देव । यमसे । सुऽअश्वः ॥३॥

हे ऋष्व महन्निंद्र यत् येऽस्मदस्मत्तस्त्वद्भक्तेभ्योऽन्येऽयुक्तासस्त्वयासंयुक्ता असन् आसन् अभवन् अब्रह्मता । ब्रह्म परिवृढं कर्म । तद्रहितत्वात् ते नरास्ते त्वदीया न भवंति । अतोऽस्मद्यज्ञमभ्यागत्य तं प्रसिद्धं रथमधि तिष्ठ । हे वज्रहस्तेंद्र देव स्वश्वस्त्वं यं रथमारोढुं रश्मिं प्रग्रहमा यमसे नियमयसि तमधि तिष्ठ ॥

पुरू यत्त इंद्र संत्युक्था गवे चकर्थोर्वरासु युध्यन् ।
ततक्षे सूर्याय चिदोकसि स्वे वृषा समत्सु दासस्य नाम चित् ॥४॥

पुरु । यत् । ते । इंद्र । संति । उक्था । गवे । चकर्थ । उर्वरासु । युध्यन् ।
ततक्षे । सूर्याय । चित् । ओकसि । स्वे । वृषा । समत्ऽसु । दासस्य । नाम । चित् ॥४॥

हे इंद्र ते तव यद्यदा त्वभूतानि पुरु पुरूणि बहून्युक्थान्युक्थानि शस्त्राणि संति तदोर्वरासु सस्योपेतासु भूमिषु निमित्तभूतासु गवे वृष्ट्युदकाय युध्यन् जलप्रतिबंधकान् संहरन् चकर्थ । करोषि भेदनं । कृंतसि । सूर्याय सूर्यस्य स्वे स्वकीय ओकसि स्थाने । वृषा वर्षिता सन् ततक्ष । संपादयसि । समत्सु संग्रामेषु दासस्य वृष्टिप्रतिबंधकर्तुरेतन्नामकस्यासुरस्य नाम चिन्नामापि ततक्ष । नाशयसीत्यर्थः ॥

वयं ते त इंद्र ये च नरः शर्धो जज्ञाना याताश्च रथाः ।
आस्माञ्जगम्यादहिशुष्म सत्वा भगो न हव्यः प्रभृथेषु चारुः ॥५॥

वयं । ते । ते । इंद्र । ये । च । नरः । शर्धः । जज्ञानाः । याताः । च । रथाः ।
आ । अस्मान् । जगम्यात् । अहिऽशुष्म । सत्वा । भगः । न । हव्यः । प्रऽभृथेषु । चारुः ॥५॥

हे इंद्र ये च नरः कर्मणां नेतार ऋत्विग्यजमाना वयं स्मः ते वयं ते त्वदीयाः । कीदृशा वयं । शर्धो बलं जज्ञाना उत्पादयतः स्तुतिभिर्धोताश्च होतुं त्वां प्राप्ताश्च रथा रंहणशीलाश्च । किंच हे अहिशुष्म । अहिरयनात । सर्वतो व्याप्तबलेंद्र त्वदनुग्रहाद्दव्यः स्तुत्यः प्रतिभटैराह्वातव्यो वा चारुः संगता सखा भृत्यादिः प्रभृथेषु संग्रामेषु यज्ञेषु वास्माना जगम्यात । आगच्छेत । भगो न भग इव हव्यश्चारुः । भगदेवो यथास्मत्सहाय आगच्छति तथा भृत्यादिरागच्छेदित्यर्थः ॥ ॥१॥

पपृक्षेण्यमिंद्र त्वे ह्योजो नृम्णानि च नृतमानो अमर्तः ।
स न एनीं वसवानो रयिं दाः प्रार्यः स्तुषे तुविमघस्य दानं ॥६॥
पपृक्षेण्यं । इंद्र । त्वे इति । हि । ओजः । नृम्णानि । च । नृतमानः । अमर्तः ।
सः । नः । एनीं । वसवानः । रयिं । दाः । प्र । अर्यः । स्तुषे । तुविऽमघस्य । दानं ॥६॥

हे इंद्र पपृक्षेण्य संपर्कार्हं पूज्य वौजो बलं त्वे हि त्वयि खलु । त्वदधीनमित्यर्थः । नृतमानो नृत्यन् अमर्तोऽमरणधर्मा स त्वं वसवान आच्छादयन स्वतेजसा जगत नृम्णानि नमनानि द्रविणानि । वक्ष्यमाणरय्यपेक्षया चशब्दः । एनीमेनवर्णां श्वेतवर्णां रयिं धनं दाः । देहि । अहं च अर्य ईश्वरस्य तुविमघस्य प्रभूतधनस्य च दानं प्र स्तुषे । स्तौमि ॥

एवा न इंद्रोतिभिरव पाहि गृणतः शूर कारून ।
उत त्वचं ददतो वाजसातौ पिप्रीहि मध्वः सुषुतस्य चारोः ॥७॥
एव । नः । इंद्र । ऊतिऽभिः । अव । पाहि । गृणतः । शूर । कारून ।
उत । त्वचं । ददतः । वाजऽसातौ । पिप्रीहि । मध्वः । सुऽसुतस्य । चारोः ॥७॥

हे शूरेंद्र एवैवं नोऽस्मान गृणतः स्तुवतः कारून कर्तृनृत्विज ऊतिभी रक्षणैरव । पालय । उतापि च वाजसातौ संग्रामे त्वचमाच्छादकं रूप ददतः प्रयच्छतः सुषुतस्य सुष्ठभिषुतस्य चारोर्मनोहरस्य मध्वः सोमस्य पिप्रीहि । प्रीणयात्मान । द्वितीयार्थे षष्ठी । उक्तलक्षणं सोमं पिबेत्यर्थः । अथवा तृतीयार्थे षष्ठी । उक्तलक्षणेन सोमपानेन प्रीणय ॥

उत त्ये मा पौरुकुत्स्यस्य सूरेस्त्रसदस्योर्हिरणिनो रराणाः ।
वहंतु मा दश श्येतासो अस्य गैरिक्षितस्य क्रतुभिर्नु सश्चे ॥८॥
उत । त्ये । मा । पौरुऽकुत्स्यस्य । सूरेः । त्रसदस्योः । हिरणिनः । रराणाः ।
वहंतु । मा । दश । श्येतासः । अस्य । गैरिऽक्षितस्य । क्रतुऽभिः । नु । सश्चे ॥८॥

त्रसदस्युश्च विदथो ध्वन्यश्चेति त्रयो नृपाः । अस्मान्धनानि गाथादत्र्यपये तद्ददत्यृषिः ॥ उतापि च त्ये ते मा । चतुर्थ्यर्थे द्वितीया । मह्यमित्यर्थः । रराणाः ॥ रातिर्दानार्थस्य कर्मणि लिटः कानचि रूपं ॥ दत्ता इत्यर्थः । पौरुकुत्स्यस्य पुरुकुत्सापत्यस्य सूरेः प्रेरकस्य हिरणिनो हिरण्यवतोऽस्य त्रसदस्योरेतन्नामकस्य राजर्षेर्गैरिक्षितस्य गिरिक्षितगोत्रोत्पन्नस्य श्येतासः शुभ्रवर्णा दशाश्वा मा मां वहंतु । प्रापयंतु । अहं च क्रतुभिः कर्मभी रथनियोजनादिभिर्यज्ञादिभिर्वा नु क्षिप्रं सश्चे । गच्छेयं ॥

उत त्ये मा मारुताश्वस्य शोणाः क्रत्वामघासो विदथस्य रातौ ।
सहस्रा मे च्यवतानो ददान आनूकमर्यो वपुषे नार्चत् ॥९॥

उत । त्ये । मा । मारुतऽअश्वस्य । शोणाः । क्रत्वाऽमघासः । विदथस्य । रातौ ।
सहस्रा । मे । च्यवतानः । ददानः । आनूकं । अर्यः । वपुषे । न । आर्चत् ॥९॥

उतापि च त्ये तेऽश्वा वक्ष्यमाणा मारुताश्वस्य । मरुत्सदृशवेगाश्ववान्मरुताश्वः । तदपत्यस्य विदथस्येति नामकस्य राज्ञः शोणाः शोणवर्णाः क्रत्वामघासः क्रतुना कर्मणा शीघ्रगमनादिलक्षणेन माहनीया अश्वा रातौ दाने विनियुक्ता मा वहतीति शेषः । किंच सहस्रा सहस्राण्यपरिमितानि धनान्यर्यः पूज्यस्य मे । चतुर्थ्यर्थे षष्ठी । पूज्याय मह्यं च्यवतानश्च्यावयन् ददानः प्रयच्छन् स आनूकमाभरणं च वपुषे स्वशरीरालंकारायार्चत् । प्रायच्छत् । नेति चार्थे ॥

उत त्ये मा ध्वन्यस्य जुष्टा लक्ष्मण्यस्य सुरुचो यतानाः ।
मह्ना रायः संवरणस्य ऋषेर्व्रजं न गावः प्रयता अपि ग्मन् ॥१०॥
उत । त्ये । मा । ध्वन्यस्य । जुष्टाः । लक्ष्मण्यस्य । सुऽरुचः । यतानाः ।
मह्ना । रायः । सम्ऽवरणस्य । ऋषेः । व्रजं । न । गावः । प्रऽयताः । अपि । ग्मन् ॥१०॥

उतापि च त्ये ते वक्ष्यमाणा रायो ध्वन्यस्य ध्वन्यनामकस्य लक्ष्मण्यस्य लक्ष्मणपुत्रस्य राज्ञः सकाशात् जुष्टा मा प्राप्ताः सुरुचः शोभनदीप्तयो यताना वर्तमानाय यतमानाः । रायो मह्ना महत्त्वेन युक्ता रायः प्रयता दत्ताः सन्तः संवरणस्य ऋषेरपि ग्मन् । अपिगताः । प्राप्ता मद्गृहमिति शेषः । व्रजं न गावो गोष्ठं गाव इव । यद्वा । नेति चार्थे । गावश्च मम व्रजमपिग्मन् । अत्रेदं सूक्तं प्रार्थयन्ते मरुतां राज्ञां च दानस्तुतयः । अनु० २ २२. । इत्युक्तत्वाद्राज्ञां दानस्तुतिरविरुद्धा ॥ ॥२॥

अजातशत्रुमिति नवर्चं द्वितीयं सूक्तं प्राजापत्यस्य संवरणस्यार्षमैन्द्रं । नवमी त्रिष्टुप् शिष्टास्त्वष्टौ जगत्यः । अजातशत्रुं नव त्रिष्टुबन्तमित्यनुक्रमणिका ॥ विनियोगो लैंगिकः ॥

अजातशत्रुमजरा स्वर्वत्यनु स्वधामिता दस्ममीयते ।
सुनोतन पचत ब्रह्मवाहसे पुरुष्टुताय प्रतरं दधातन ॥१॥
अजातऽशत्रुं । अजरा । स्वःऽवती । अनु । स्वधा । अमिता । दस्मं । ईयते ।
सुनोतन । पचत । ब्रह्मऽवाहसे । पुरुऽस्तुताय । प्रऽतरं । दधातन ॥१॥

अजातशत्रुं । अनुत्पन्नाः शातयितारो यस्य तं । दस्मं शत्रूणामुपक्षपयितारमजराजीर्णा स्वर्वती सरणवत्यमितापरिमिता स्वधान्नं हविरन्वीयते । अनुप्राप्नोति । तदर्थं हे ऋत्विजः सुनोतन । अभिषुणुत । पचत पुरोडाशादिकं । कस्मै । ब्रह्मवाहसे ब्रह्मणः परिवृढस्य स्तोत्रस्य वाहकाय पुरुष्टुताय बहुभिः स्तुतायेंद्राय । प्रतरं प्रकृष्टतरं दधातन । धारयत स्वस्वोचितकर्म ॥

आ यः सोमेन जठरमपिप्रतामंदत मघवा मध्वो अंधसः ।
यदीं मृगाय हंतवे महावधः सहस्रभृष्टिमुशना वधं यमत् ॥२॥
आ । यः । सोमेन । जठरं । अपिप्रत । अमंदत । मघऽवा । मध्वः । अंधसः ।
यत् । ईं । मृगाय । हंतवे । महाऽवधः । सहस्रऽभृष्टिं । उशना । वधं । यमत् ॥२॥

यो मघवा सोमेन जठरं स्वकीयोदरमा सर्वतोऽपिप्रत अपूरयत् मध्वो मधुरस्यास्यांधसः सोमस्य पानेनामंदत । अतृप्यत । यद्यदेमयं मृगाय मृगनामकायासुराय हंतवे तं हंतुं महावधो महावज्रः सहस्रभृष्टिमपरिमिततेजा उशना कामयमानः शत्रु यदोशनसा सह वधं वज्रं यमत् उदयच्छत् तदापिप्रत् अमंदत च ॥

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह ।
अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः ॥३॥
यः । अस्मै । घ्रंसे । उत । वा । यः । ऊधनि । सोमं । सुनोति । भवति । द्युऽमान् । अह ।
अपऽअप । शक्रः । ततनुष्टिं । ऊहति । तनूऽशुभ्रं । मघऽवा । यः । कवऽसखः ॥३॥

यो यजमानोऽस्मा इंद्राय घ्रंसे । अहर्नामैतत् । गृह्यंतेऽस्मिन्नसा इति घ्रंसः । तस्मिन् । उत वा अथवा यो यजमान ऊधनि । उद्धततरं भवत्युन्नद्धमिति वोधो रात्रिः । स्नेहप्रदानरसाभ्यामूधसि रात्रौ च समत्वाद्रात्रिरप्यूध उच्यते । अहनि रात्रौ च सोमं सुनोति स भवति द्युमान् दीप्तिमान् । अहेति विनिग्रहार्थीयः । किंच शक्रः शक्तोऽयमिंद्रस्ततनुष्टिं । ततं धर्मसंततिं नुदति वष्टि कामयते कामानिति ततनुष्टिः । तं तनूशुभ्रं । तनुः शुभ्रा शोभनीयालंकारादिभिर्यस्य तं । तादृशं स्वपोषकमयज्वानमपोहति । अपपरोऽपशब्दः पूरणार्थः । मघवा धनवान्यश्च कवासखः कुत्सितपुरुषसहायस्तमपोहतीति ॥

यस्यावधीत्पितरं यस्य मातरं यस्य शक्रो भ्रातरं नात ईषते ।
वेतीद्वस्य प्रयता यतंकरो न किल्बिषादीषते वस्व आकरः ॥४॥
यस्य । अवधीत् । पितरं । यस्य । मातरं । यस्य । शक्रः । भ्रातरं । न । अतः । ईषते ।
वेति । इत् । ऊं इति । अस्य । प्रऽयता । यतंऽकरः । न । किल्बिषात् । ईषते । वस्वः ।
आऽकरः ॥४॥

शक्रो शक्तोऽयं यस्यायज्वनः पितरमवधीत् हतवान् । यस्य च मातरमवधीत् । यस्य च भ्रातरं अतोऽस्मादयज्वनः सकाशान्नेषते । न बिभेति न गच्छति वा । किंत्वस्य प्रयता दत्तानि हवींषि वेतीद् । कामयत एव । अयज्वानं शिक्षयित्वा नियोजयतीत्यर्थः । यतंकरो यमनकर्ता वस्वो वसुनो धनस्याकर आभिमुख्यकर्ता यः किल्बिषात्पित्रादिवधयुक्तान्नेषते न चलति न बिभेति वा । इंद्रस्याप्तोर्तृणा हतिरिंद्रो यतीन् सालावृकेभ्यः प्रायच्छत् अंतरिक्षे पौलोमान्पृथिव्यां कालकाञ्जानरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छमित्यादिश्रुतिषु प्रसिद्धा ॥

न पंचभिर्दशभिर्वष्ट्यारभं नासुन्वता सचते पुष्यता चन ।
जिनाति वेदमुया हंति वा धुनिरा देवयुं भजति गोमति व्रजे ॥५॥
न । पंचऽभिः । दशऽभिः । वष्टि । आऽरभं । न । असुन्वता । सचते । पुष्यता । चन ।
जिनाति । वा । इत् । अमुया । हंति । वा । धुनिः । आ । देवऽयुं । भजति । गोऽमति । व्रजे ॥५॥

अयमिंद्रः पंचभिर्दशभिर्वा सहायैरारभमारभं शत्रुहननायालंबनं न वष्टि । साहाय्यं नापेक्षत इत्यर्थः । यद्वा । अयमिंद्रः पंचभिर्दशभिर्वा यज्ञादन्यैरुपायैरारभमारब्धुमुद्योगं कर्तुं न वष्टि । न कामयते । असुन्वताभिषवमकुर्वता सह पुष्यता चन बंध्वादीनपोषयतापि न सचते । न संगच्छते । असुन्वंतमभिषवमकुर्वाणमयष्टारमपृणत च न प्राप्नोतीत्यर्थः । न केवलमप्राप्तिमात्रं किंतु जिनाति वा । वाशब्दश्चार्थे । जिनाति च । बाधते । इदिति पूरणः । हंति वामुयामुमयष्टारं धुनिः कंपकः शत्रूणां । देवयुं देवमिंद्रं कामयमानं यजमानं गोमति व्रज आ भजति । योजयतीत्यर्थः ॥ ॥३॥

वित्वक्षणः समृतौ चक्रमासजोऽसुन्वतो विषुणः सुन्वतो वृधः ।
इंद्रो विश्वस्य दमिता विभीषणो यथावशं नयति दासमार्यः ॥६॥

विऽत्वक्षणः । संऽऋता । चक्रंऽआसजः । असुन्वतः । विषुणः । सुन्वतः । वृधः ।
इंद्रः । विश्वस्य । दमिता । विऽभीषणः । यथाऽवशं । नयति । दासं । आर्यः ॥ ६॥

समृता संग्रामे वित्वक्षणो विशेषेण तनूकर्ता शत्रूणां तदर्थं चक्रमासजो रथचक्रस्यासंजयितासुन्वतोऽयजमानस्य विषुणः पराङ्मुखः सुन्वतो यजमानस्य वृधो वर्धयितेंद्रो विश्वस्य दमिता शिक्षयिता विभीषणो भयजनक आर्यः स्वामी यथावशं यथेच्छं दासं दासकर्माणं जनं नयति ॥ ६ ॥

समीं पणेरजति भोजनं मुषे वि दाशुषे भजति सूनरं वसु ।
दुर्गे चन ध्रियते विश्व आ पुरु जनो यो अस्य तविषीमचुक्रुधत ॥ ७॥
सं । ईं । पणेः । अजति । भोजनं । मुषे । वि । दाशुषे । भजति । सूनरं । वसु ।
दुःऽगे । चन । ध्रियते । विश्वः । आ । पुरु । जनः । यः । अस्य । तविषीं । अचुक्रुधत ॥ ७॥

ईमयमिंद्रः पणेर्वणिज इव लुब्धकस्यादातुर्भोजनं धनमन्नं वा मुषे चोरयितुं समजति । सम्यक् गच्छति । गत्वा चादाय दाशुषे हविर्दात्रे यजमानाय वि भजति सूनरं शोभनमनुष्यं वसु धनं । प्रयच्छंधनमाहृत्य यष्ट्रे प्रयच्छतीत्यर्थः । न केवलं वणिग्धनप्रदानमात्रं किंतु पुरु पुरूणि दुर्गे चन दुःखेन गंतव्य आपद्यपि विश्वः सर्वोऽपि दातृजन आ ध्रियते । आस्थाप्यते । यो जनोऽस्येंद्रस्य तविषीं बलमचुक्रुधत् निंदाकरणादिना तस्य पणेरजतीति पूर्वेणान्वयः । यद्वा । योऽस्य तविषीमचुक्रुधत् स सर्वोऽपि जनो दुर्गे चनाध्रियत इंद्रेण ॥ चनेत्येकपदमध्येतृसंप्रदायप्राप्तं ॥

सं यज्जनौ सुधनौ विश्वशर्धसाववेदिंद्रो मघवा गोषु शुभ्रिषु ।
युजं ह्यन्यमकृत प्रवेपन्युदीं गव्यं सृजते सत्वभिर्धुनिः ॥ ८॥
सं । यत् । जनौ । सुऽधनौ । विश्वऽशर्धसौ । अवेत् । इंद्रः । मघऽवा । गोषु । शुभ्रिषु ।
युजं । हि । अन्यं । अकृत । प्रऽवेपनी । उत । ईं । गव्यं । सृजते । सत्वऽभिः । धुनिः ॥ ८॥

समवैत्संजानाति यद्यदा जनौ परस्परं प्रतिद्वंद्विनौ सुधनौ शोभनधनौ विश्वशर्धसौ व्याप्तबलौ उक्तलक्षणौ द्वौ वा मघवा धनवानिंद्रो गोषु शुभ्रिषु शोभनासु गोषु निमित्तभूतासु अन्यं यष्टारं युजं सहायमकृत कृतवान् प्रवेपनी शत्रूणां प्रवेपनवान् । ईमस्मै गव्यं गोसमूहमुत्सृजते सत्वभिर्मरुद्भिः सह धुनिर्मेघानां कंपयिता । इंद्रो यजमानमयजमानं वा यः जानाति गोनिमित्तं ज्ञात्वा यज्वने गोसमूहं प्रयच्छतीत्यर्थः ॥

सहस्रसामाग्निवेशिं गृणीषे शत्रिमग्न उपमां केतुमर्यः ।
तस्मा आपः संयतः पीपयंत तस्मिन्क्षत्रममवत्त्वेषमस्तु ॥ ९॥
सहस्रऽसां । आग्निऽवेशिं । गृणीषे । शत्रिं । अग्ने । उपऽमां । केतुं । अर्यः ।
तस्मै । आपः । संऽयतः । पीपयंत । तस्मिन् । क्षत्रं । अमऽवत् । त्वेषं । अस्तु ॥ ९॥

आग्निवेशिमुत शत्रिमसंख्यातधनप्रदं । आशास्ते ऋषिरत्यर्थं प्रजाश्रितमुतः मूर्धा ॥ अर्योऽह सहस्रसामपरिमितधनप्रदमाग्निवेशिमग्निवेशिपुत्रं शत्रिमेतन्नामकं राजर्षिं गृणीषे । गृणे । स्तौमि । हे अग्ने अगनादिगुणविशिष्टेंद्र । कीदृशं तं । उपमामुपमानभूतं केतुं प्रज्ञापकं । प्रख्यातमित्यर्थः । तस्मा आपः संयतः सम्यक् गच्छंत्यः पीपयंत । प्याययंतां । तस्मिन्क्षात्रं च धनममवद्बलसहितं त्वेषं दीप्तमस्त्विति ॥ ॥ ४॥

यस्ते साधिष्ठ इत्यष्टर्चं तृतीयं सूक्तं । आंगिरसगोत्रः प्रभूवसुर्नाम ऋषिः । अंत्या पंक्तिः । पंक्त्यंतपरिभाषया शिष्टा अनुष्टुभः । इंद्रो देवता । यस्तेऽष्टौ प्रभूवसुरांगिरसः पंक्त्यंतमित्यनुक्रांतं ॥ सूक्तविनियोगो लैंगिकः ॥ आभिप्लविकपृष्ठ्येषु तृतीयसवन आद्यस्तृचोऽच्छावाकस्य वैकल्पिकोऽनुरूपः । सूत्रितं च । यस्ते साधिष्ठोऽवसे पुरां भिन्दुर्युवा कविः । आ० ७ ८ । इति ॥ द्वितीयतृतीययोः स्वरसाम्नोरन्त्यौ तृचावनुरूपौ । यस्ते साधिष्ठोऽवस इति पञ्चानुष्टुभः । आ० ८ ५ । इति हि सूत्रितं ॥

यस्ते साधिष्ठोऽवस इंद्र क्रतुष्टमा भर । अस्मभ्यं चर्षणीसहं सस्निं वाजेषु दुष्टरं ॥१॥
यः । ते । साधिष्ठः । अवसे । इंद्र । क्रतुः । तं । आ । भर । अस्मभ्यं । चर्षणिऽसहं । सस्निं । वाजेषु । दुस्तरं ॥१॥

हे इंद्र ते तव यः साधिष्ठोऽतिशयेन साधकः क्रतुः कललक्षणं कर्म प्रज्ञा वास्ति ... गायास्मभ्यमा भर । आहर । कीदृशं तं । चर्षणीसहं सर्वेषां मनुष्याणामपोह... ... नाऽवसेऽस्माद्रक्ष ... ...मपोहतीति ... णामभिभवितारं सस्निं संस्नातं शुद्धं वाजेषु संग्रामेषु दुष्टरमन्यैरनभिभाव्यं ॥

यदिंद्र ते चतस्रो यत् ... यस्य मा...
...षतीर्वस्य प्रयं... शूर संति तिस्रः । यद्वा पंच क्षितीनामवस्तत्सु न आ भर ॥२॥
यत् । इंद्र । ते । चतस्रः । यत् । शूर । संति । तिस्रः । यत् । वा । पंच । क्षितीनां ।
अवः । तत् । सु । नः । आ । भर ॥२॥

हे इंद्र ते तव यत् या ऊतयश्चतस्रश्चतुर्षु वर्णेषु संश्रिताः संति याश्च हे शूर तिस्रस्त्रिषु लोकेषु वर्तमानाः । यद्वा । वाशब्दश्चार्थे । यश्चाश्च पंच क्षितीनां पंचजनसंबंधिन्य ऊतयः संति तत्सर्वमवो रक्षणं सु सुष्ठु नोऽस्मभ्यमा भर । आहरेति ॥

आ तेऽवो वरेण्यं वृषंतमस्य हूमहे । वृषजूतिर्हि जज्ञिष आभूभिरिंद्र तुर्वणिः ॥३॥
आ । ते । अवः । वरेण्यं । वृषन्ऽतमस्य । हूमहे । वृषऽजूतिः । हि । जज्ञिषे । आ ऽभूभिः । इंद्र । तुर्वणिः ॥३॥

हे इंद्र वृषतमस्य फलानां वर्षकतमस्य ते तवावो रक्षणं गमनं वा वरेण्यं वरणीयमा हूमहे । आह्वयामः । हे इंद्र वृषजूतिर्वर्षणगमनस्तुर्वणिस्तूर्णवनिर्हिंसको वा त्वमाभूभिः सर्वतो भवद्भिर्व्याप्नुवद्भिर्मरुद्भिः सहावो हि जज्ञिषे । उत्पादयसि खलु । तदेव आह्वयाम इति । यद्वा । वृषगमनः सन्यस्माद्यज्ञमागत्य फलं जज्ञिषे तस्मात्तेऽवो हूमह इति ॥

वृषा ह्यसि राधसे जज्ञिषे वृष्णि ते शवः । स्वक्षत्रं ते धृषन्मनः सत्राहमिंद्र पौंस्यं ॥४॥
वृषा । हि । असि । राधसे । जज्ञिषे । वृष्णि । ते । शवः । स्वऽक्षत्रं । ते । धृषत् । मनः । सत्राऽहं । इंद्र । पौंस्यं ॥४॥

हे इंद्र राधसे यजमानानां समृद्ध्यै वृषा ह्यसि । फलस्य वर्षकोऽसि खलु । यद्वा । वृषा खल्वसि । राधसे धनार्थं जज्ञिषे । उत्पद्यसे । ते शवो बलं वृष्णि वर्षितृ । ते मनः स्वक्षत्रं स्वायत्तबलं धृषत् धर्षकं विरोधिनां । हे इंद्र ते पौंस्यं पुंस्त्वं सत्राहं संघहंतृ ॥

त्वं तमिंद्र मर्त्यममित्रयंतमद्रिवः । सर्वरथा शतक्रतो नि याहि शवसस्पते ॥५॥
त्वं । तं । इंद्र । मर्त्यं । अमित्रऽयंतं । अद्रिऽवः । सर्वऽरथा । शतक्रतो इति शतऽक्रतो । नि । याहि । शवसः । पते ॥५॥

हे इंद्र त्वं तममित्रयत शत्रुत्वमाचरंतं शत्रुं विजहत मर्त्य हे अद्रिवो वज्रवन्निंद्र सर्वरथा सर्वत्र व्याप्तेन रथेन ॥ सुपां सुलुगित्याकारः ॥ हे शतक्रतो हे शवसस्पते बलस्य पालकेंद्र नि याहि । नितरां गत्वा अभिभवितुं ॥ ॥५॥

त्वामिद्वृत्रहंतम जनासो वृक्तबर्हिषः । उग्रं पूर्वीषु पूर्व्यं हवंते वाजसातये ॥६॥
त्वां । इत् । वृत्रहनऽतम । जनासः । वृक्तऽबर्हिषः । उग्रं । पूर्वीषु । पूर्व्यं । हवंते । वाजऽसातये ॥६॥

हे वृत्रहंतमातिशयेन वृत्राणां हंतरिंद्र त्वामित्त्वामेव जनासो जना वृक्तबर्हिष आच्छादितदर्भाः । प्रवृत्तयज्ञा इत्यर्थः । उग्रमुद्गूर्णबलं पूर्वीषु बह्वीषु प्रजासु मध्ये पूर्व्यं पुरातनं संतं वाजसातये संग्रामाय हवंते । आह्वयंते ॥

अस्माकमिंद्र दुष्टरं पुरोयावानमाजिषु । सयावानं धनेधने वाजयंतमवा रथं ॥७॥
अस्माकं । इंद्र । दुस्तरं । पुरःऽयावानं । आजिषु । सऽयावानं । धनेऽधने । वाजऽयंतं । अव । रथं ॥७॥

हे इंद्र अस्माकं रथं रंहणस्वभावं वा पुत्रमव । रक्ष । कीदृशं रथं । दुष्टरं दुःखेन तरणीयमाजिषु संग्रामेषु पुरोयावानं पुरतो मिश्रयितारं सयावानमनुचरैः सह गंतारं धने धने सर्वेषु धनेषु वाजयंतं संग्रामं धनं वेच्छंतं ॥

अस्माकमिंद्रेहि नो रथमवा पुरंध्या ।
वयं शविष्ठ वार्यं दिवि श्रवो दधीमहि दिवि स्तोमं मनामहे ॥८॥
अस्माकं । इंद्र । आ । इहि । नः । रथं । अव । पुरंऽध्या ।
वयं । शविष्ठ । वार्यं । दिवि । श्रवः । दधीमहि । दिवि । स्तोमं । मनामहे ॥८॥

हे इंद्र अस्माकमस्मदीय एव सन् एहि । आगच्छ । आगत्य च पुरंध्या शोभनबुद्ध्या नोऽस्माकं रथमव । रक्ष । वयं च हे शविष्ठ अतिशयेन बलवन् त्वदनुग्रहाद्वार्यं वरणीयं श्रवोऽन्नं कीर्तिं वा दिवि द्योतमाने त्वयि दधीमहि । स्थापयामः । तथा दिवि त्वयि स्तोमं स्तोत्रं मनामहे । करवामहै इत्यर्थः ॥ ॥६॥

स आ गमदिति षड्टचं चतुर्थं सूक्तं । आंगिरसः प्रभूवसुर्ऋषिः । तृतीया जगती शिष्टा अनुक्तत्वात् त्रिष्टुभः । इंद्रो देवता । अनुक्रांतं च । स आ गमत् षट् तृतीया जगतीति ॥ विनियोगो लैंगिकः ॥

स आ गमदिंद्रो यो वसूनां चिकेतद्दातुं दामनो रयीणां ।
धन्वचरो न वंसगस्तृषाणश्चकमानः पिबतु दुग्धमंशुं ॥१॥
सः । आ । गमत् । इंद्रः । यः । वसूनां । चिकेतत । दातुं । दामनः । रयीणां ।
धन्वऽचरः । न । वंसगः । तृषाणः । चकमानः । पिबतु । दुग्धं । अंशुं ॥१॥

स इंद्रोऽस्मद्यज्ञं प्रत्या गमत् । आगच्छतु । यो देवो वसूनां धनानां ॥ कर्मणि षष्ठी ॥ वसूनि धनानि चिकेतत जानाति प्रदातुं । स कीदृशः । दामनो दातुः दानमनसो वा रयीणां धनानां । गमने दृष्टांतः । धन्वचरो न धनुषा सह संचरन् धानुष्क इव वंसगो वननीयगमनस्तृषाणोऽत्यंतं तृषितश्चकमानः कामयमानश्च सन् दुग्धमभिषुतमंशुं सोमं पिबतु ॥

आ ते हनू हरिवः शूर शिप्रे रुहत्सोमो न पर्वतस्य पृष्ठे ।
अनु त्वा राजन्नर्वतो न हिन्वन् गीर्भिर्मदेम पुरुहूत विश्वे ॥२॥
आ । ते । हनू इति । हरिऽवः । शूर । शिप्रे इति । रुहत् । सोमः । न । पर्वतस्य । पृष्ठे ।
अनु । त्वा । राजन् । अर्वतः । न । हिन्वन् । गीःऽभिः । मदेम । पुरुऽहूत । विश्वे ॥२॥

हे इंद्र हे हरिवो हरिभ्यां तद्वन् शूर ते तव हनू हननसाधने । यद्यप्ययं शिप्रावचनस्तथापि पुनः शिप्राभिधानाद्घ्राणोऽवगंतव्यः । उक्तरूपे संहते वा शिप्रे आ रुहत आरोहतु प्राप्नोतु सोमोऽस्मद्दत्तः । पर्वतस्य पृष्ठे न रुहत । नारोहति । तत्र न तिष्ठतीत्यर्थः । यद्वा । नशब्दः पुरस्तात्प्रयुक्तोऽप्यत्रोपमार्थः । पर्वतस्य पृष्ठ उपरिप्रदेशे सोमो न । तत्र यथा विस्रंभेण प्रसरति तद्वत् । हे राजन् राजमानेंद्र त्वा त्वामनु त्वया सह ॥ तृतीयार्थ इत्यनोः कर्मप्रवचनीयत्वं ॥ विश्वे वयमर्वतो नाश्वानिव तृणादिभिर्गीर्भिः स्तुतिभिर्हिन्वन् हिन्वंतस्त्वां प्रीणयंतः संतो मदेम । हृष्येम । हे पुरुहूत बहुप्रकारं बहुभिर्वाहूतेंद्र ॥

चक्रं न वृत्तं पुरुहूत वेपते मनो भिया मे अमतेरिदद्रिवः ।
रथादधि त्वा जरिता सदावृध कुविन्नु स्तोषन्मघवन्पुरूवसुः ॥३॥
चक्रं । न । वृत्तं । पुरुऽहूत । वेपते । मनः । भिया । मे । अमतेः । इत् । अद्रिऽवः ।
रथात् । अधि । त्वा । जरिता । सदाऽवृध । कुवित् । नु । स्तोषत् । मघऽवन् । पुरुऽवसुः ॥३॥

हे पुरुहूत बहुभिराहूत हे अद्रिवो वज्रवन्निंद्र मे मनोऽमतेरिद्दारिद्र्यादस्तोतुर्वा सकाशाद्भिया भीत्या वेपते । कंपते । वृत्तं चक्रं न भूमौ वर्तमानं चक्रमिव । यस्मादेवं तस्माद्रथादध्युपरि स्थितं त्वा त्वा हे सदावृध सर्वदा वर्धमान हे मघवन्निंद्र जरिता स्तोता पुरूवसुरहमृषिः कुविद्बहु नु क्षिप्रं स्तोषत् । स्तोष्यति । स्तुयात् ॥ अत्र कुविच्छब्दयोगेऽप्याख्यातस्य बहुलग्रहणान्निघातः ॥

एष ग्रावेव जरिता त इंद्रेयर्ति वाचं बृहदाशुषाणः ।
प्र सव्येन मघवन्यंसि रायः प्र दक्षिणिद्धरिवो मा वि वेनः ॥४॥
एषः । ग्रावाऽइव । जरिता । ते । इंद्र । इयर्ति । वाचं । बृहत् । आशुषाणः ।
प्र । सव्येन । मघऽवन् । यंसि । रायः । प्र । दक्षिणित् । हरिऽवः । मा । वि । वेनः ॥४॥

एष जरिता गरिता स्तोता ग्रावेवाभिषवाश्मेव । स यथा रसं जनयति तद्वत् हे इंद्र ते तुभ्यं वाचं स्तुतिमियर्ति । प्रेरयतीत्यर्थः । बृहन्महत्प्रभूतं फलमाशुषाण आशु संभक्ता सन् हे मघवन् सव्येन हस्तेन रायो धनानि प्र यंसि । प्रयच्छसि । दक्षिणिद्दक्षिणेनापि प्र यंसीति शेषः । मा वि वेनः । विगतकामं मा कार्षीः ॥

वृषा त्वा वृषणं वर्धतु द्यौर्वृषा वृषभ्यां वहसे हरिभ्यां ।
स नो वृषा वृषरथः सुशिप्र वृषक्रतो वृषा वज्रिन्भरे धाः ॥५॥
वृषा । त्वा । वृषणं । वर्धतु । द्यौः । वृषा । वृषऽभ्यां । वहसे । हरिऽभ्यां ।
सः । नः । वृषा । वृषऽरथः । सुऽशिप्र । वृषक्रतो इति वृषऽक्रतो । वृषा । वज्रिन् ।
भरे । धाः ॥५॥

हे इंद्र त्वा त्वां वृषा वर्षित्री द्योतयित्री स्तुतिः ॥ द्योततेर्दीव्यतेर्वा स्तुत्यर्थस्येदं रूपं ॥ वृषणं कामानां वर्षकं त्वां वर्धतु । वर्धयतु । वृषा त्वं वृषभ्यां सेक्तृभ्यां हरिभ्यां वहसे । यत्र प्रत्यूह्यसे । हे सुशिप्र शोभनहनो वृषकृतो वर्षणकर्मन् हे वज्रिन् वज्रयुक्तेंद्र स त्वं वृषा वृषरथश्च सन् नोऽस्मान् भरे संग्रामे भरणवति यज्ञे वा धाः । धारय ॥

यो रोहितौ वाजिनौ वाजिनीवान्त्रिभिः शतैः सचमानावदिष्ट ।
यूने समस्मै क्षितयो नमंतां श्रुतरथाय मरुतो दुवोया ॥६॥
यः । रोहितौ । वाजिनौ । वाजिनीऽवान् । त्रिऽभिः । शतैः । सचमानौ । अदिष्ट ।
यूने । सं । अस्मै । क्षितयः । नमंतां । श्रुतऽरथाय । मरुतः । दुवःऽया ॥६॥

इयं श्रुतरथस्य राज्ञो दानस्तुतिः । यो राजा वाजिनीवानन्नवान् श्रुतरथो रोहितौ रोहितवर्णौ वाजिनौ वेजनवंतावश्वौ त्रिभिः शतैर्गवां धनानां वा उक्तसंख्याभिः सचमानौ सगच्छमानावदिष्ट ॥ ददा तेर्दिशतेर्वा लुङीदं रूपं ॥ यूने सर्वत्र मिश्रयित्रे नित्यतरुणाय वास्मै श्रुतरथाय क्षितयः सर्वाः प्रजा दुवोया ॥ तृतीयैकवचनस्य याजादेशः ॥ परिचर्यया सं नमतां । प्रणता भवतु । सेवतामित्यर्थः । हे मरुत इतीद्रसहाय भूतानां मरुतां संबोधनं ॥ ॥ १ ॥

सं भानुनेति पंचर्चं पंचमं सूक्तमत्रेरार्षं त्रैष्टुभमैंद्रं । सं भानुना पंचात्रिरित्यनुक्रमणिका ॥ विनियोगो लैंगिकः ॥

सं भानुना यतते सूर्यस्याजुह्वानो घृतपृष्ठः स्वंचाः ।
तस्मा अमृध्रा उषसो व्युच्छान्य इंद्राय सुनवामेत्याह ॥१॥
सं । भानुना । यतते । सूर्यस्य । आऽजुह्वानः । घृतऽपृष्ठः । सुऽअंचाः ।
तस्मै । अमृध्राः । उषसः । वि । उच्छान् । यः । इंद्राय । सुनवाम । इति । आह ॥१॥

सूर्यस्य भानुना तेजसा सहाजुह्वानः सर्वत्र हूयमानः ॥ कर्मणि कर्तृप्रत्ययः ॥ घृतपृष्ठः प्रदीप्तज्वालो घृतयुक्तपृष्ठप्रदेशो वा स्वचाः स्वंचनोऽग्निः सं यतते । सम्यक् प्रयत्नं करोति । उदयकाले ह्यग्नयः प्रज्वाल्यंते । तस्मात्कारणाद्यो यजमान इंद्राय सुनवामेत्याह ब्रूतेऽध्वर्युं प्रति तस्मै यजमानायामृध्रा अहिंसिता उषसो व्युच्छान् । व्युच्छंतु । उदयकालेऽग्निः प्रज्वालितस्तस्मात्सोमयागं कर्म इति यो ब्रूते तस्य सुदिनानि भवंतीत्यर्थः ॥

समिद्धाग्निर्वनवत्स्तीर्णबर्हिर्युक्तग्रावा सुतसोमो जराते ।
ग्रावाणो यस्येषिरं वदंत्ययदध्वर्युर्हविषाव सिंधुं ॥२॥
समिद्धऽअग्निः । वनवत् । स्तीर्णऽबर्हिः । युक्तऽग्रावा । सुतऽसोमः । जराते ।
ग्रावाणः । यस्य । इषिरं । वदंति । अयत् । अध्वर्युः । हविषा । अव । सिंधुं ॥२॥

समिद्धाग्निः प्रदीप्ताग्निः स्तीर्णबर्हिः प्रस्तृतदर्भोऽयं यजमानो वनवत् । संभजते । युक्तग्रावा नियुक्ताभिषवपाषाणः सुतसोमोऽभिषुतसोमो जराते । जरति । स्तौति । यस्याध्वर्योर्ग्रावाणोऽभिषवसाधना इषिरमेषणीयं गमनशीलं वा शब्दं वदंति सोऽध्वर्युर्हविषा सहावायत् सिंधुं । पत्नीजनीरवगच्छति ॥

वधूरियं पतिमिच्छंत्येति य ईं वहाते महिषीमिषिरां ।
आस्य श्रवस्याद्रथ आ च घोषात्पुरू सहस्रा परि वर्तयाते ॥३॥

वधूः। इयं। पतिं। इच्छंती। एति। यः। ईं। वहाते। महिषीं। इषिरां।
आ। अस्य। श्रवस्यात्। रथः। आ। च। घोषात्। पुरु। सहस्रा। परि। वर्तयाते ॥ ३॥

इयं वधूरिंद्रस्य पत्नी पतिमिच्छंती स्वप्रियं यज्ञगमनाय प्रवृत्तमिच्छंत्येति। अनुगच्छति। य इंद्र ईमेना महिषी वहाति वहतीषिरा गमनवती अस्येंद्रस्य रथ आ अर्वागस्मदभिमुखं श्रवस्यात। अन्नमिच्छति। आ च घोषात। आघुष्यति। शब्दयति। पुर्वत्यधिक सहस्रा सहस्राणि धनानि परि परितो वर्तयाति। वर्तयति। प्रापयति। श्रवस्यादा च घुष्यादिति वा ॥

न स राजा व्यथते यस्मिन्निंद्रस्तीव्रं सोमं पिबति गोसखायं।
आ सत्वनैरजति हंति वृत्रं क्षेति क्षितीः सुभगो नाम पुष्यन् ॥ ४॥
न। सः। राजा। व्यथते। यस्मिन्। इंद्रः। तीव्रं। सोमं। पिबति। गोऽसखायं।
आ। सत्वनैः। अजति। हंति। वृत्रं। क्षेति। क्षितीः। सुऽभगः। नाम। पुष्यन् ॥ ४॥

स राजा न व्यथते। व्यथितो न भवति। यस्मिन्राजनि तदीये यज्ञ इंद्रस्तीव्रं मदजनकं सोमं पिबति गोसखायं। विकारे प्रकृतिशब्दः। क्षीरादिमिश्रणवत। स राजा सत्वनैः सत्वभिरनुचरैरा सर्वतोऽजति। गच्छति। हंति च वृत्रं पापं वैरिणं वा। क्षेति गच्छति क्षितीः प्रजाः। अथवा क्षितीर्निवासान्निवसति। सुभगः शोभनमुखो नाम नामकं धनमिंद्रस्य स्तोत्रं वा पुष्यन् पोषयन् ॥

पुष्यात्क्षेमे अभि योगे भवात्युभे वृतौ संयती सं जयाति।
प्रियः सूर्ये प्रियो अग्ना भवाति य इंद्राय सुतसोमो ददाशत् ॥ ५॥
पुष्यात्। क्षेमे। अभि। योगे। भवाति। उभे इति। वृतौ। संयती इति संऽयती। सं। जयाति।
प्रियः। सूर्ये। प्रियः। अग्ना। भवाति। यः। इंद्राय। सुतऽसोमः। ददाशत् ॥ ५॥

पुष्यात पोषयेद्बंध्वादीन। क्षेमे प्राप्तस्य धनस्य रक्षणे योगेऽलब्धस्य प्राप्तौ चाभि भवाति। भवति। अभीत्यनर्थको धात्वर्थानुवादी वा। प्रभुर्भवतीत्यर्थः। तथोभे वृतौ वर्तमाने संयती नियते अहोरात्रे सं जयाति। सम्यक् जयति। ते सुखकरे स्यातामित्यर्थः। किंच स प्रियो भवति सूर्ये तथाग्नावग्नौ प्रियो भवति य इंद्राय सुतसोमो ददाशत सोमं ददाति ॥ ॥ ८॥

उरोष्ट इति पंचर्चं षष्ठं सूक्तमत्रेरार्षमानुष्टुभमैंद्रं। उरोरानुष्टुभमित्यनुक्रांतं ॥ विनियोगो लैंगिकः ॥

उरोष्ट इंद्र राधसो विभ्वी रातिः शतक्रतो। अधा नो विश्वचर्षणे द्युम्ना सुक्षत्र मंहय ॥ १॥
उरोः। ते। इंद्र। राधसः। विऽभ्वी। रातिः। शतक्रतो इति शतऽक्रतो। अध। नः।
विश्वऽचर्षणे। द्युम्ना। सुऽक्षत्र। मंहय ॥ १॥

हे इंद्र शतक्रतो बहुकर्मन् ते तवोरोः प्रभूतस्य राधसो धनस्य रातिर्दानं विभ्वी महती। अधातः कारणात नोऽस्मभ्यं हे विश्वचर्षणे सर्वस्य द्रष्टः सुक्षत्र शोभनधनेंद्र। क्षत्रमिति धननाम। द्युम्ना द्युम्नानि धनानि मंहय। प्रयच्छ ॥

यदीमिंद्र श्रवाय्यमिषं शविष्ठ दधिषे। पप्रथे दीर्घश्रुत्तमं हिरण्यवर्ण दुष्टरं ॥ २॥
यत्। ईं। इंद्र। श्रवाय्यं। इषं। शविष्ठ। दधिषे। पप्रथे। दीर्घश्रुत्ऽतमं। हिरण्यऽवर्ण।
दुस्तरं ॥ २॥

हे इंद्र शविष्ठ अतिशयेन बलवन् यदिषमन्नं अवाय्य श्रवणीयमीं सर्वतो दधिषे धारयसि ददासि वा ॥ इषशब्दो नपुंसकलिंगोऽप्यस्ति ॥ हे हिरण्यवर्णेंद्र तदन्नं पप्रथे । प्रथते । कथं । दीर्घश्रुत्तममतिदूरश्रवणीयतमं । सर्वत्र कीर्त्यमित्यर्थः । दुष्टरमनभिभाव्यमुक्तलक्षणं प्रथते ॥

शुष्मासो ये ते अद्रिवो मेहना केतसापः । उभा देवावभिष्टये दिवश्च ग्मश्च राजथः ॥३॥

शुष्मासः । ये । ते । अद्रिऽवः । मेहना । केतऽसापः । उभा । देवौ । अभिष्टये । दिवः । च । ग्मः । च । राजथः ॥३॥

हे अद्रिवो वज्रवन्निंद्र ते त्वदीया ये शुष्मासो बलभूता मरुतः संति । कीदृशास्ते । मेहना महनीयाः केतसापः प्रज्ञापकं कर्मांतरिक्षं वा स्पृशंतः । उभा देवौ त्वं च मरुत्समूहश्चेत्युभौ युवां दिवश्च द्युलोकात् ग्मश्च भूमेः सकाशादभिष्टयेऽभितो गमनाय राजथः । ईशाथे ॥

उतो नो अस्य कस्य चिद्दक्षस्य तव वृत्रहन् ।
अस्मभ्यं नृम्णमा भरास्मभ्यं नृमणस्यसे ॥४॥

उतो इति । नः । अस्य । कस्य । चित् । दक्षस्य । तव । वृत्रऽहन् ।
अस्मभ्यं । नृम्णं । आ । भर । अस्मभ्यं । नृऽमनस्यसे ॥४॥

उतो अपि च हे वृत्रहन्निंद्र नोऽस्मभ्यं कस्य चिदनिर्देश्यस्य दक्षस्य प्रवृद्धस्य दातृर्वास्य तव स्वभूतमस्मभ्यं । पुनःश्रुतिरादरार्था । नृम्णं नृमणं धनमा भर । आहर । हे इंद्र यतस्त्वमस्मभ्यं नृमणस्यसि धनमिच्छसि ॥

नू त आभिरभिष्टिभिस्तव शर्मञ्छतक्रतो ।
इंद्र स्याम सुगोपाः शूर स्याम सुगोपाः ॥५॥

नु । ते । आभिः । अभिष्टिऽभिः । तव । शर्मन् । शतक्रतो इति शतऽक्रतो ।
इंद्र । स्याम । सुऽगोपाः । शूर । स्याम । सुऽगोपाः ॥५॥

हे शतक्रतो इंद्र ते तवाभिरभिष्टिभिरभिगमनैर्नु शीघ्रं समृद्धा भवेमेति शेषः । हे इंद्र तव शर्मन् शर्मणि सुखे सति सुगोपाः स्याम । भवेम । हे शूर तव शर्मणि सुगोपाः शोभनरक्षणाः स्याम । भवेम । पुनरुक्तिरादरार्था ॥ ॥९॥

यदिंद्र चित्रेति पंचर्चं सप्तमं सूक्तमत्रेरार्षमैंद्रं । अंत्या पंक्तिः शिष्टाः पंक्त्यंतपरिभाषयानुष्टुभः । यदिंद्र पंक्त्यंतमित्यनुक्रमणिका ॥ आभिप्लविकेषूक्थ्येषु तृतीयसवन आद्यस्तृचोऽच्छावाकस्य वैकल्पिकः स्तोत्रियः । सूचितं च । यदिंद्र चित्र मेहना यस्ति साधिष्ठोऽवसे । आ॰ ७ ८ । इति ॥

यदिंद्र चित्र मेहनास्ति त्वादातमद्रिवः । राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥१॥

यत् । इंद्र । चित्र । मेहना । अस्ति । त्वाऽदातं । अद्रिऽवः । राधः । तत् । नः । विदद्वसो इति विदत्ऽवसो । उभयाहस्ति । आ । भर ॥१॥

हे इंद्र हे चित्र चायनीय हे अद्रिवो वज्रवन्निंद्र यन्मेहना महनीयं त्वादातं त्वया दातव्यं राधो धनमस्ति तद्धनं हे विदद्वसो लब्धधनेंद्र नोऽस्मभ्यमुभयाहस्त्युभाभ्यां हस्ताभ्यामा भर । आहर । अत्र यदिंद्र चित्र चायनीय मंहनीयं धनमस्तीत्यादिनिरुक्तं द्रष्टव्यं । नि॰ ४. ४. ॥

यन्मन्यसे वरेण्यमिंद्र द्युक्षं तदा भर। विद्याम तस्य ते वयमकूपारस्य दावने ॥२॥

यत्। मन्यसे। वरेण्यं। इंद्र। द्युक्षं। तत्। आ। भर। विद्याम। तस्य। ते। वयं। अकूपारस्य। दावने ॥२॥

हे इंद्र यत् द्युक्षमन्नं वरेण्यं वरणीयं मन्यसे तत् द्युक्षमा भरास्मभ्यं। ते तव संबंधिनो वयं तस्य तादृशस्योक्तलक्षणस्याकूपारस्य। अकुत्सितः पारोऽतो यस्य तादृशस्यान्नस्य दावने दाने विद्याम। स्याम ॥

वाजपेयेऽतिरिक्तोक्थ्ये यत्ते दित्स्वित्येषा। सूत्रितं च। यत्ते दित्सु प्रराध्यं त्वामिच्छवसस्पते। आ० ९.९.। इति ॥

यत्ते दित्सु प्रराध्यं मनो अस्ति श्रुतं बृहत्। तेन दृळ्हा चिदद्रिव आ वाजं दर्षि सातये ॥३॥

यत्। ते। दित्सु। प्रऽराध्यं। मनः। अस्ति। श्रुतं। बृहत्। तेन। दृळ्हा। चित्। अद्रिऽवः। आ। वाजं। दर्षि। सातये ॥३॥

हे इंद्र ते तव यद्दित्सु दानेच्छु प्रराध्यं प्रकर्षेण स्तुत्यं श्रुतं विश्रुतं बृहन्महन्मनोऽस्ति तेन मनसा हे अद्रिवो वज्रवन्निंद्र दृळ्हा चिद्दृढमपि वाजमन्नमा दर्षि। आदरयसि सातयेऽस्मत्संभजनाय लाभाय वा ॥

मंहिष्ठं वो मघोनां राजानं चर्षणीनां। इंद्रमुप प्रशस्तये पूर्वीभिर्जुजुषे गिरः ॥४॥

मंहिष्ठं। वः। मघोनां। राजानं। चर्षणीनां। इंद्रं। उप। प्रऽशस्तये। पूर्वीभिः। जुजुषे। गिरः ॥४॥

मघोनां हविर्लक्षणधनवतां वो युष्माकं मंहिष्ठमतिशयेन पूज्यं चर्षणीनां मनुष्याणां राजानमिंद्रमुपोपेत्य प्रशस्तये प्रशंसितुं पूर्वीभिः पुरातनीभिर्वाग्भिर्गिरः स्तोतारो जुजुषे। सेवंते ॥

अस्मा इत्काव्यं वच उक्थमिंद्राय शंस्यं।
तस्मा उ ब्रह्मवाहसे गिरो वर्धंत्यत्रयो गिरः शुंभंत्यत्रयः ॥५॥

अस्मै। इत। काव्यं। वचः। उक्थं। इंद्राय। शंस्यं।
तस्मै। ऊं इति। ब्रह्मऽवाहसे। गिरः। वर्धंति। अत्रयः। गिरः। शुंभंति। अत्रयः ॥५॥

अस्मा इदस्मा एवेंद्राय काव्यं कवेः स्तोतुः संबंधि। यद्वा। कु शब्दे। शब्दनीयं वचो वाग्रूपमुक्थं शस्त्रं शंस्यं शंसनीयं। यस्मादेव तस्मात्तस्मा उ तस्मा इंद्रायैव ब्रह्मवाहसे परिवृढस्य स्तोत्रस्य वाहकाय गिरः स्तुतीरत्रयोऽत्रिगोत्रा वर्धंति। वर्धयंति। अत्रयो गिरः शुंभंति। दीपयंति। पुनरुक्तिरादरार्था ॥ ॥१०॥

आ याह्यद्रिभिरिति नवर्चमष्टमं सूक्तं। अत्रेयमनुक्रमणिका। आ याहि नव त्र्युष्णिगाद्यंत्यानुष्टुम्मध्ये च सा सौरी तदादीतिहासः स्तुतिकर्मत्वादत्रिर्देवतेति। इत्यस्य ऋषिश्चान्यस्मात्। अनु० १२ १। इति परिभाषयात्रिर्ऋषिः। आद्यास्तिस्र उष्णिहः पंचमीनवम्यावनुष्टुभौ शिष्टाश्चतस्रस्त्रिष्टुभः। अत्रेः स्तूयमानत्वात् षष्ठ्याद्या अत्रिदेवताकाः अन्त्यार्धयाश्च पंचमी सूर्यदेवत्या शिष्टा ऐंद्र्यः॥ दशरात्रे तृतीयेऽहनि प्रउगशस्त्र आद्यस्तृच ऐंद्रः पंचमः। सूत्रितं च। आ याह्यद्रिभिः सुतं सजूर्विश्वेभिर्देवेभिः। आ० ७.१०.। इति ॥ महाव्रतेऽप्यौष्णिहतृचाशीतावयं तृचः ॥

आ याह्यद्रिभिः सुतं सोमं सोमपते पिब। वृषन्निंद्र वृषभिर्वृत्रहंतम ॥१॥

आ। याहि। अद्रिऽभिः। सुतं। सोमं। सोमऽपते। पिब। वृषन्। इंद्र। वृषऽभिः। वृत्रहन्ऽतम ॥१॥

हे इंद्र आ याहि । अस्मद्यज्ञमागच्छ । आगत्य च हे सोमपते सोमस्य स्वामिन्निंद्र अद्रिभिर्ग्रावभिः सुतमभिषुतं सोमं पिब । हे वृषन् फलस्य वर्षयितर्वृत्रहंतमातिशयेन शत्रूणां हंतृतम वृषभिर्वर्षकैर्मरुद्भिः सह याहि पिब च ॥

वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः । वृषन्निंद्र वृषभिर्वृत्रहंतम ॥२॥
वृषा । ग्रावा । वृषा । मदः । वृषा । सोमः । अयं । सुतः । वृषन् । इंद्र । वृषऽभिः । वृत्रहनऽतम ॥२॥

ग्रावाभिषवसाधनः पाषाणो वृषा वर्षकः सोमरसस्य फलस्य वा । मदः सोमपानेन जनितो वृषा वर्षकः । अयं सुतोऽभिषुतः सोमो वृषा । त सोम वृषभिः सह पिब ॥

वृषा त्वा वृषणं हुवे वज्रिंञ्चित्राभिरूतिभिः । वृषन्निंद्र वृषभिर्वृत्रहंतम ॥३॥
वृषा । त्वा । वृषणं । हुवे । वज्रिन् । चित्राभिः । ऊतिऽभिः । वृषन् । इंद्र । वृषऽभिः । वृत्रहनऽतम ॥३॥

हे वज्रिन् वज्रवन्निंद्र वृषा सोमरसस्य सेक्ताहं वृषणं त्वां हुवे । आह्वयामि । किमर्थं । चित्राभिश्चायनीयाभिरूतिभी रक्षाभिर्निमित्तभूताभिः । शिष्टं गतं ॥

ऋजीषी वज्रीत्येषा ब्राह्मणाच्छंसिनः शस्त्रयाज्या । ऋजीषी वज्री वृषभस्तुराषाळिति याज्या । आ० ५ ५६ । इति हि सूत्रितं ॥

ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा ।
युक्त्वा हरिभ्यामुप यासदर्वाङ्माध्यंदिने सवने मत्सदिंद्रः ॥४॥
ऋजीषी । वज्री । वृषभः । तुराषाट् । शुष्मी । राजा । वृत्रऽहा । सोमऽपावा ।
युक्त्वा । हरिऽभ्यां । उप । यासत् । अर्वाङ् । माध्यंदिने । सवने । मत्सत् । इंद्रः ॥४॥

ऋजीषी । सवनद्वयेऽभिषुतस्य गतसारस्य सोमरसस्य तृतीयसवन आप्यायाभिषुतो योऽस्ति स ऋजीषः सोमः । सोऽस्यास्तीत्यृजीषी । वज्री वज्रवान् वृषभो वर्षिता तुराषाट् तुराणां त्वरमाणानां शत्रूणां सोढा शुष्मी बलवान् राजेश्वरः सर्वस्य वृत्रहा वृत्रस्य हंता सोमपावा सोमरसस्य पाता एव महानुभाव इंद्रो हरिभ्यां युक्त्वा रथं योजयित्वोप यासत् । उपगच्छतु । अर्वाङस्मदभिमुखमागच्छतु । माध्यंदिने सवने मत्सत् माद्यतु सोमेनेंद्रः ॥

यत्त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः । अक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयुः ॥५॥
यत् । त्वा । सूर्य । स्वःऽभानुः । तमसा । अविध्यत् । आसुरः । अक्षेत्रऽवित् । यथा । मुग्धः । भुवनानि । अदीधयुः ॥५॥

इदमादिचतुर्भिर्मंत्रैरत्रीणां कर्म कीर्त्यते । हे सूर्य प्रेरक देव त्वा त्वां यद्यदासुरोऽसुरस्य प्राणापहर्तुरसुर्या वा पुत्रः स्वर्भानुः स्वर्भानुसंज्ञकस्तमसा मायानिर्मितेनाविध्यत् । आवृणोदित्यर्थः । तदा भुवनानि सर्वाण्यदीधयुः । दृश्यंते । यथा तत्रत्यः सर्वो जनोऽक्षेत्रवित् स्वस्थानमजानन् मुग्धो मूढो भवति तथा ॥ ॥११॥

स्वर्भानोरध यदिंद्र माया अवो दिवो वर्तमाना अवाहन् ।
गूळ्हं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविंददत्रिः ॥६॥

स्वः॑ऽभानोः । अध॑ । यत् । इ॒न्द्र॒ । मा॒याः । अ॒वः । दि॒वः । वर्त॑मानाः । अ॒व॒ऽअह॑न् ।
गू॒ळ्हं । सूर्यं॑ । तम॑सा । अप॑ऽव्रतेन । तु॒रीये॑ण । ब्रह्म॑णा । अ॒वि॒न्द॒त् । अत्रिः॑ ॥ ६ ॥

अधाथ जगन्मोह्यानंतरं स्वर्भानोरसुरस्य यत् या मायाः संति । कीदृश्यस्ताः । दिवो द्योतमानादादित्यादवाऽवस्ताद्वर्तमानाः । तदुपरितिरोधानासामर्थ्यादिति भावः । हे इंद्र ताः सर्वा अवाहन् । अवहंसि । अथात्रिरेव परोक्षवादः । तमसाधकारेणापव्रतेनापगतकर्मणा गूळ्हं सूर्यं । अंधकारस्यावरणरूपत्वादपव्रतत्वं । तथाविधं तुरीयेण ब्रह्मणा ग्राव्णो ब्रह्मेत्यनेनात्रिरविंदत् । लब्धवान् आवरणापगमोपायं निवारणं गूढं वा सूर्यमिति । पूर्वमंत्रापेक्षयास्य तुरीयत्वं । एकैक मायाशमकैकेन मंत्रेणापनोद्य चतुर्थेन मंत्रेण निलीनं तमोऽप्यनुददित्यर्थः ॥

मा मामि॒मं तव॒ सन्त॑मत्र इर॒स्या द्रु॒ग्धो भि॒यसा॒ नि गा॑रीत् ।
त्वं मि॒त्रो अ॑सि स॒त्यरा॑धा॒स्तौ मे॒हाव॑तं॒ वरु॑णश्च॒ राजा॑ ॥ ७ ॥
मा । माम् । इ॒मम् । तव॑ । सन्त॑म् । अ॒त्रे॒ । इ॒र॒स्या । द्रु॒ग्धः । भि॒यसा॑ । नि । गा॒री॒त् ।
त्वम् । मि॒त्रः । अ॒सि॒ । स॒त्यऽरा॑धाः । तौ । मा॒ । इ॒ह । अ॒व॒त॒म् । वरु॑णः । च॒ । राजा॑ ॥ ७ ॥

इदं सूर्यवाक्यं । हे अत्रे मामिममीदृगवस्थं मां तव संतं तव स्वभूतमिरस्यान्नेच्छया द्रुग्धो द्रोग्धासुरो भियसा भयजनकेन तमसांधकारेण मा नि गारीत् । मा गिरतु । किंच हे मित्र त्वं मित्रोऽसि । प्रमीतेः सकाशात्त्राता भवसि । सत्यराधाः सत्यधनश्च । तौ राजा वरुणश्च त्वं च तौ युवां मा मामिहावतं । रक्षतं । यद्वा । अत्रिरेव मित्र उच्यते । वरुणश्च युवां ॥

ग्राव्णो॑ ब्र॒ह्मा यु॑युजा॒नः स॑प॒र्यन् की॒रिणा॑ दे॒वान्नम॑सोप॒शिक्ष॑न् ।
अत्रिः॒ सूर्य॑स्य दि॒वि चक्षु॒राधा॒त्स्व॑र्भानो॒रप॑ मा॒या अ॑घुक्षत् ॥ ८ ॥
ग्राव्णः॑ । ब्र॒ह्मा । यु॒यु॒जा॒नः । स॒प॒र्यन् । की॒रिणा॑ । दे॒वान् । नम॑सा । उ॒प॒ऽशिक्ष॑न् ।
अत्रिः॑ । सूर्य॑स्य । दि॒वि । चक्षुः॑ । आ । अ॒धा॒त् । स्वः॑ऽभानोः । अप॑ । मा॒याः । अ॒घु॒क्ष॒त् ॥ ८ ॥

ब्रह्मा ब्राह्मणोऽत्रिर्मामिहावतमित्युपशिक्षन् ग्राव्णोऽभिषवसाधनाय युयुजानो युंजन् । इंद्रार्थं सोममभिषुण्वन्नित्यर्थः । तथा कीरिणा । कीर्यते विक्षिप्यत इति कीरि स्तोत्रं । तेन देवान् सपर्यन् पूजयन्नमसा । उक्तैः साधनैः सूर्यस्य सर्वप्रकाशकस्य चक्षुः सर्वस्य व्यापकं मंडलं दिव्यंतरिक्ष आधात् । निस्तमस्कं कृतवानित्यर्थः । तदेव स्पष्टयति । स्वर्भानोरेतन्नामकस्यासुरस्य मायाः । स्वाश्रयमया मोहयंती परानन्यथा कुर्वती मायेत्युच्यते । तादृशीर्मायाः । तुरीयेण ब्रह्मणेत्युक्तं । तदेतदुक्तं यत्तुरीयं ब्रह्म । तेनात्रिसहाय इंद्रोऽपाघुक्षत् । अपजुगोप । न्यवारयदित्यर्थः । अथवा तृतीयपाद एव व्याख्येयः । सूर्यस्य दिवि पूर्वमावृते प्रकाशे तदपनोद्य स्वकीयं चक्षुराधात् । निवारणं तेजःसंस्थाप्य दृष्टवानित्यर्थः । स्वर्भानुमायया सूर्यस्यावृतिर्हारिद्रविके समाम्नाता । स्वर्भानुर्वा आसुरः सूर्यं तमसाविध्यत्तस्मै देवाः प्रायश्चित्तमैच्छन् तस्य यत्प्रथमं तमोऽपाघ्नन् सा कृष्णाविरभवत् यद्द्वितीयं सा फाल्गुनी यत्तृतीयं सा वलक्षी यदध्यस्थादपाकृंतन्नित्यादि ॥

यं वै सूर्यं॒ स्व॑र्भानु॒स्तम॒साविध्य॑दासु॒रः । अत्र॑य॒स्तमन्व॑विन्दन्न॒ह्य१॒॑न्ये अश॑क्नुवन् ॥ ९ ॥
यम् । वै । सूर्य॑म् । स्वः॑ऽभानुः । तम॑सा । अवि॑ध्यत् । आ॒सु॒रः । अत्र॑यः । तम् । अनु॑ ।
अ॒वि॒न्द॒न् । न॒हि । अ॒न्ये । अश॑क्नुवन् ॥ ९ ॥

अविकृतं सामर्थ्यमनुवदति यं वै सूर्यमिति । निगदव्याख्येषा । अत्रयस्तु सूर्यमन्वविन्दन् । इन्द्रार्थं सोमयागदेवतास्तुतिनमस्कारैरनुक्रमेणापदीपत्तमो विरुध्य लब्धवत इत्यर्थः । अन्ये नह्यशक्नुवन् । न लब्धवत खलु ॥ ॥१०॥

को नु वामिति विंशत्यृचं नवमं सूक्तं भौमस्यात्रेरार्षं । षोडशीसप्तदश्यावतिजगत्यौ विंशैकपदा विराट् शिष्टाः सप्तदश त्रिष्टुभः । विश्वे देवा देवता । तथा चानुक्रांतं । को नु विंशतिर्वैश्वदेवं वै तत षोडश्याद्यतिजगत्यावंत्यैकपदेति ॥ विनियोगो लैंगिकः ॥

को नु वां मित्रावरुणावृतायन्दिवो वा महः पार्थिवस्य वा दे ।
ऋतस्य वा सदसि त्रासीथां नो यज्ञायते वा पशुषो न वाजान् ॥१॥
कः । नु । वां । मित्रावरुणा । ऋतऽयन् । दिवः । वा । महः । पार्थिवस्य । वा । दे ।
ऋतस्य । वा । सदसि । त्रासीथां । नः । यज्ञऽयते । वा । पशुऽसः । न । वाजान् ॥१॥

हे मित्रावरुणौ देवौ वा युवां को नु कः खलु यजमान ऋतायन्यज्ञमिच्छन् शक्नुयादिति शेषः । तस्मात्कृतमेव । दिवः सदसि द्युलोकसंबंधिनि स्थाने महो महतः पार्थिवस्य सदस्यतस्थोत्पादकस्यांतरिक्षस्य सदसि । तद्धितुल्यात्तात्कृत्स्ना । त्रिषु स्थानेषु नोऽस्मान् त्रासीथां । रक्षतं । वाशब्दश्चार्थे । किंच यज्ञायते दे वा हविर्दाने च मह्यं पशुषो न वाजान् पशुप्रेरितो वाजानन्नानि क्षीरदध्यादीनीव । तानि यथा प्रयच्छथ तद्वदेवमिति । यद्वा । नशब्दश्चार्थे । पशुषः पशून्वाजांश्च दत्तमित्यर्थः ॥

ते नो मित्रो वरुणो अर्यमायुरिंद्र ऋभुक्षा मरुतो जुषंत ।
नमोभिर्वा ये दधते सुवृक्तिं स्तोमं रुद्राय मीळ्हुषे सजोषाः ॥२॥
ते । नः । मित्रः । वरुणः । अर्यमा । आयुः । इंद्रः । ऋभुक्षाः । मरुतः । जुषंत ।
नमःऽभिः । वा । ये । दधते । सुऽवृक्तिं । स्तोमं । रुद्राय । मीळ्हुषे । सऽजोषाः ॥२॥

ते मित्रादयो देवा नोऽस्माकं सुवृक्तिं स्तोमं शोभनपापादिवर्जनवत्स्तोत्रं नमोभिर्वा हविर्भिश्च जुषंत । सेवतां । ये दधते धारयंत्युक्तलक्षणं स्तोत्रं । देवा द्विविधाः स्तोत्रभाजो हविर्भाजश्च । अत्र स्तोत्रभाज उच्यंते । आयुः सततगतिर्वायुरुच्यते । अथ मरुत एव विशेष्यंते । रुद्राय मीळ्हुषे ॥ तृतीयार्थे चतुर्थी ॥ रुद्रेण सह सजोषाः सजोषसः सह प्रीयमाणाः । तेषां पुत्रत्वादिति भावः । केचन रुद्राय सजोषा इत्येतन्मित्रादिसर्वदेवताविशेषणमिति कथयंति ॥

आ वां येष्ठाश्विना हुवध्यै वातस्य पत्मन्रथ्यस्य पुष्टौ ।
उत वा दिवो असुराय मन्म प्रांधांसीव यज्यवे भरध्वं ॥३॥
आ । वां । येष्ठा । अश्विना । हुवध्यै । वातस्य । पत्मन् । रथ्यस्य । पुष्टौ ।
उत । वा । दिवः । असुराय । मन्म । प्र । अंधांसिऽइव । यज्यवे । भरध्वं ॥३॥

अनयाश्विनौ रुद्रश्चोच्यते । हे अश्विनावश्विनौ येष्ठा कामानां यष्टृतमौ वा युवां वातस्य पत्मन् । धर्मसाम्याद्धर्मिलक्षणा । वायुसमानगतेरश्वस्य नमने प्राप्ते रथ्यस्य रथस्य पुष्टौ च निमित्ते सति हुवध्यै । हवे । आह्वयामि । आह्वातुं प्रभवामि । अथवा वायुवद्गुवयोः शीघ्रगमनसाधनस्याश्वस्य पोषे च निमित्ते सति । उत वा किंचेत्यर्थः । दिवो द्योतमानाय ॥ चतुर्थ्यर्थे षष्ठी ॥ असुराय प्राणापहर्त्रे रुद्राय । यद्वा । द्युलोकसंबंधिनेऽसुराय प्राणदात्रे सर्वस्य वायवे वा यज्यवे यागसाधकाय मन्म मननीयं स्तोत्रं प्र भरध्वं । संपादयत हे ऋत्विजः । अंधांसीवान्नानि हविर्लक्षणानि हवींषि स्तोत्रं चेत्यर्थः ॥

प्र सक्षणो दिव्यः कण्वहोता त्रितो दिवः सजोषा वातो अग्निः ।
पूषा भगः प्रभृथे विश्वभोजा आजिं न जग्मुराश्वश्वतमाः ॥४॥
प्र । सक्षणः । दिव्यः । कण्वऽहोता । त्रितः । दिवः । सऽजोषाः । वातः । अग्निः ।
पूषा । भगः । प्रऽभृथे । विश्वऽभोजाः । आजिं । न । जग्मुः । आश्वश्वऽतमाः ॥४॥

अत्र लिंगोक्तदेवताः । प्र जग्मुरिति संबंधः । सक्षणो यज्ञं सेवमानः शत्रूणां सोढा वा दिव्यो दिवि भवः कण्वहोता । कण्वा ऋषयो मेधाविनो वा होतार आह्वातारो यस्य स तथोक्तः । त्रितस्त्रिषु क्षित्यादिस्थानेषु तायमानो दिवः सूर्येण सह सजोषाः समानगतिः समानप्रीतिर्वा वात उक्तलक्षणको वायुरग्निः पूषा पोषक एतन्नामा भगश्च प्रभृथे प्रभरणवत्यस्मिन्यज्ञ उक्ताः सर्वदेवा विश्वभोजा विश्वरक्षकाः कृत्स्नात्तारो वा आश्वश्वतमाः प्रकृष्टगमनाश्ववतां श्रेष्ठाः संत आजिं न संग्राममिव प्र जग्मुः । प्रगच्छंति ॥

प्र वो रयिं युक्ताश्वं भरध्वं राय एषेऽवसे दधीत धीः ।
सुशेव एवैरौशिजस्य होता ये व एवा मरुतस्तुराणां ॥५॥
प्र । वः । रयिं । युक्तऽअश्वं । भरध्वं । रायः । एषे । अवसे । दधीत । धीः ।
सुऽशेवः । एवैः । औशिजस्य । होता । ये । वः । एवाः । मरुतः । तुराणां ॥५॥

हे मरुतो वो यूयं रयिं धनं युक्ताश्वमश्वसहितमश्वयोग्यं पुत्रं वा प्र भरध्वं । संपादयत । रायो धनानि गवाश्वादिलक्षणान्येषे प्राप्तुं । अवसे । अव इत्यन्ननाम । अन्नाय प्राप्तानां धनानां रक्षणाय वा धीः स्तोता दधीत । धारयति स्तुतिं । स चौशिजस्य कक्षीवतो होतार्त्विग्विगतव्यैः कामैर्गमनसाधनैरश्वैर्वा सुशेवः । शेवमिति सुखनाम । सुसुखो भवतु । हे मरुतस्तुराणां त्वरमाणानां वो युष्माकं य एवाः कामा अश्वा वा संति तैरिति ॥ ॥१३॥

प्र वो वायुमिति षष्ठी वायव्ये पशौ हविषो याज्या । प्र वो वायुं रथयुजं कृणुध्वमुत त्वामदितेर्महि । आ० ३ ८ । इति सूत्रितं ॥

प्र वो वायुं रथयुजं कृणुध्वं प्र देवं विप्रं पनितारमर्कैः ।
इषुध्यव ऋतसापः पुरंधीर्वस्वीर्नो अत्र पत्नीरा धिये धुः ॥६॥
प्र । वः । वायुं । रथऽयुजं । कृणुध्वं । प्र । देवं । विप्रं । पनितारं । अर्कैः ।
इषुध्यवः । ऋतऽसापः । पुरंऽधीः । वस्वीः । नः । अत्र । पत्नीः । आ । धिये । धुरिति धुः ॥६॥

हे मदीया ऋत्विजो वो यूयं वायुं वायुदेवं रथयुजं यज्ञगमनाय रथसंबद्धं कृणुध्वं । कुरुध्व । प्र देवं द्योतमानं विप्रं विशेषेण कामानां पूरकं विप्रवत्पूज्यं वा पनितारं ॥ कर्मणि कर्तृप्रत्ययः ॥ स्तुत्यमित्यर्थः । फलप्रदातारं वा अर्कैरर्चनसाधनैर्मंत्रैः प्र कृणुध्व । स्तुत । किंचेषुध्यवो गंत्र्य ऋतसापो यज्ञस्पृशः पुरंधीः पुरंध्यः स्त्रीरूपा रूपवत्यो वा वस्वीः प्रशस्याः पत्नीर्देवपत्न्योऽत्रास्मिन्यज्ञे नोऽस्मदीयाय धिये कर्मणे तन्निष्पत्तय आ धुः । आगतवत्यः ॥

उप व एषे वंद्येभिः शूषैः प्र यह्वी दिवश्चितयद्भिरर्कैः ।
उषासानक्ता विदुषीव विश्वमा हा वहतो मर्त्याय यज्ञं ॥७॥
उप । वः । एषे । वंद्येभिः । शूषैः । प्र । यह्वी इति । दिवः । चितयत्ऽभिः । अर्कैः ।
उषसानक्ता । विदुषी इवेति विदुषीऽइव । विश्वं । आ । ह । वहतः । मर्त्याय । यज्ञं ॥७॥

हे उषासानक्ता अहोरात्राभिमानिदेवते यह्वी महत्यौ वयोभिर्वयनैर्हविर्भिरितरैर्देवैः सह दिवोऽंतरिक्षादि विशेषेण सर्वप्रदेशाद्वो युष्मभ्यमुप प्रेषे । उपप्रापयामि हविः ॥ ईषिः प्रापणकर्मा स्यादुपप्राभिः समन्वित ॥ शुषैः सुखकरैः चितयद्भिर्ज्ञापयद्भिरर्कैर्मंत्रैः सहोपप्रापयामि । हे उक्तदेवते विश्वं सर्वं कर्तव्यजातं विदुषी इव जानंत्याविव मर्त्याय यजमानाय यज्ञमा वहतः । अभिमुखं प्रापयतः । इति पूरणः । यद्वा । शुषैरित्यादीनि तृतीयाबहुवचनांतानि वयोभिरित्यस्य विशेषणानीति केचिदाहुः ॥

अभि वो अर्चे पोष्यावतो नॄन्वास्तोष्पतिं त्वष्टारं रराणः ।
धन्या सजोषा धिषणा नमोभिर्वनस्पतीँरोषधी राय एषे ॥८॥

अभि । वः । अर्चे । पोष्याऽवतः । नॄन् । वास्तोः । पतिं । त्वष्टारं । रराणः ।
धन्या । सऽजोषाः । धिषणा । नमःऽभिः । वनस्पतीन् । ओषधीः । रायः । एषे ॥८॥

अहं पोष्यावतो बहुपोष्यजनयुक्तान्नॄन्कर्मनेतॄन् वो युष्मानभ्यर्चे । अभिपूजयामि । स्तौमीत्यर्थः । के पुनस्ते यूयं । उच्यते । वास्तोष्पतिं त्वष्टारं रराणः स्तोत्रादिभिः क्रीडन् हविर्ददद्वाहं । धन्या धनकरी सजोषा इतरैर्देवैः सह गच्छती प्रीणयती वा धिषणा । वाङ्नामैतत् । वाग्देवता ॥ एता द्वितीयार्थे प्रथमाः ॥ उक्तलक्षणां वाणीं वनस्पतीनोषधीश्च नमोभिः सहार्चे इति संबंधः । किमर्थं । राय एषे धनानि प्राप्तुं ॥

तुजे नस्तने पर्वताः संतु स्वैतवो ये वसवो न वीराः ।
पनित आप्त्यो यजतः सदा नो वर्धान्नः शंसं नर्यो अभिष्टौ ॥९॥

तुजे । नः । तने । पर्वताः । संतु । स्वऽएतवः । ये । वसवः । न । वीराः ।
पनितः । आप्त्यः । यजतः । सदा । नः । वर्धात् । नः । शंसं । नर्यः । अभिष्टौ ॥९॥

पर्वताः पर्ववतः पूरणवतो वा मेघास्तेन विसृते तुजे दाने । यद्वा । तनेति पुत्रनाम ॥ षष्ठ्यर्थे चतुर्थी ॥ पुत्रस्य दाने इत्यर्थः । अथवा नस्तुजे पुत्रे तने तत्पुत्रे च स्वैतवः शोभनगमनाः संतु । भवंतु । कीदृशास्ते । ये वसवो जगतो वासयितारो वीरा न वीरा इव । किंच पनितः स्तुत आप्त्य आप्त्यः सर्वैर्यजतो यजनीय आदित्यः सदा सर्वदा नः शंसमस्माकं स्तुतिं नर्यो नरेभ्यो हितो देवोऽभिष्टावभित एषणेऽभिगमने वा सति वर्धात् । वर्धयेत् ॥

वृष्णो अस्तोषि भूम्यस्य गर्भं त्रितो नपातमपां सुवृक्ति ।
गृणीते अग्निरेतरी न शूषैः शोचिष्केशो नि रिणाति वना ॥१०॥

वृष्णः । अस्तोषि । भूम्यस्य । गर्भं । त्रितः । नपातं । अपां । सुऽवृक्ति ।
गृणीते । अग्निः । एतरि । न । शूषैः । शोचिःऽकेशः । नि । रिणाति । वना ॥१०॥

भूम्यस्य । भूमिरंतरिक्षं । तदर्हस्य । तादृशस्य वृष्णो वर्षकस्य पर्जन्यस्य । अथवा भूम्यो भूमेर्वाहं तदुचितवृष्टिप्रदानात् । तादृशस्य मेघस्य गर्भं गर्भस्थानीयमपां नपातं रक्षकं वैद्युतमग्निं सुवृक्ति । स्तोत्रकर्मैतत् । शोभनपापादिवर्जनवता स्तोत्रेणास्तोषि । स्तुतवानहं । स त्रितस्तीर्णतमेष्वपि स्थानेष्वन्येषु त्रिलोकेषु तायमानोऽग्निरेतरि गंतरि मयि शूषैः सुखकरै रश्मिभिर्न गृणीते । न शरणं कुरुते । न कृध्यतीत्यर्थः । किंतु शोचिष्केशः प्रदीप्तरश्मिः सन् वना वनानि नि रिणाति । हिनस्ति । दहतीत्यर्थः ॥ ॥१४॥

कथा महे रुद्रियाय ब्रवाम कद्राये चिकितुषे भगाय ।
आप ओषधीरुत नोऽवंतु द्यौर्वना गिरयो वृक्षकेशाः ॥११॥

कथा। महे। रुद्रियाय। ब्रवाम। कत्। राये। चिकितुषे। भगाय।
आपः। ओषधीः। उत। नः। अवंतु। द्यौः। वना। गिरयः। वृक्षऽकेशाः ॥११॥

वयमत्रयः कथा केन प्रकारेण महे महते रुद्रियाय रुद्रपुत्राय मरुद्गणाय ब्रवाम स्तुतीः। कत् किं च स्तोत्रं राये धनलाभाय चिकितुषे सर्वं जानते भगायैतन्नामकाय देवाय ब्रवाम। उतापि चापोऽब्देवता ओषधीरोषधयो द्यौर्द्युदेवता वना वनानि गिरयो वृक्षकेशाः। वृक्षा एव केशस्थानीया येषां ते। एता उक्ता देवता नोऽस्मानवंतु। रक्षंतु ॥

शृणोतु न ऊर्जां पतिर्गिरः स नभस्तरीयाँ इषिरः परिज्मा।
शृण्वंत्वापः पुरो न शुभ्राः परि स्रुचो बबृहाणस्याद्रेः ॥१२॥
शृणोतु। नः। ऊर्जां। पतिः। गिरः। सः। नभः। तरीयान्। इषिरः। परिऽज्मा।
शृण्वंतु। आपः। पुरः। न। शुभ्राः। परि। स्रुचः। बबृहाणस्य। अद्रेः ॥१२॥

नोऽस्माकं गिरः स्तुतीः शृणोतु। कः। ऊर्जां बलानां पतिर्वायुः। अथवा ऊर्जामन्नानां पतिः। प्राणोपाधिकस्य वायोः कृत्स्नान्नत्वं प्रसिद्धं। श्रुतिश्च भवति। प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत। मनु० ५ २८। इति। स नभो नभसि चारी तरीयान् तरितव्य इषिरो गमनशीलः परिज्मा परितो गंता। किंचापः शृण्वंतु गिरः। कीदृश्यस्ताः। पुरो न पुराणीव शुभ्रा दीप्ता बबृहाणस्य वर्धमानस्याद्रेर्मेघस्य वा पर्वतस्य वा परि परितः स्रुचः सरणशीलाः ॥

विदा चिन्नु महांतो ये व एवा ब्रवाम दस्मा वार्यं दधानाः।
वयश्चन सुभ्व१ आव यंति क्षुभा मर्तमनुयतं वधस्नैः ॥१३॥
विद। चित्। नु। महांतः। ये। वः। एवाः। ब्रवाम। दस्माः। वार्यं। दधानाः।
वयः। चन। सुऽभ्वः। आ। अव। यंति। क्षुभा। मर्तं। अनुऽयतं। वधऽस्नैः ॥१३॥

हे महांतो मरुतो नु क्षिप्रं यूयं विद। जानीथ स्तोत्रं। हे दस्मा दर्शनीया वो युष्मान्य एवा गंतारो युष्मान्भजमाना वार्यं वरणीयं हविर्दधाना ददाना धारयंतो वा वयं ब्रवाम स्तुतिं। यद्वा। ये वो यूयमित्यर्थः। ये यूयमेवा अस्मद्यज्ञमभिगंतारस्ते विद। चिदिति पूरणः। वयश्चनागंतारश्चैते मरुतः सुभ्वः सुष्ठु भवंतः प्रवृद्धा आ अस्मदभिमुखमेव यंति। गच्छंति। किं कुर्वंतः। क्षुभा क्षोभकेण सहितं मर्तं मरणधर्माणं वैरिणमनुयतमभिगतं वधस्नैरायुधैः परिहरंतोऽव यंति ॥

आ दैव्यानि पार्थिवानि जन्मापश्चाच्छा सुमखाय वोचं।
वर्धंतां द्यावो गिरश्चंद्राग्रा उदा वर्धंतामभिषाता अर्णाः ॥१४॥
आ। दैव्यानि। पार्थिवानि। जन्म। अपः। च। अच्छ। सुऽमखाय। वोचं।
वर्धंतां। द्यावः। गिरः। चंद्रऽअग्राः। उदा। वर्धंतां। अभिऽसाताः। अर्णाः ॥१४॥

दैव्यानि देवसंबंधीनि पार्थिवानि पृथिवीसंबंधीनि च जन्म जन्मान्यपश्चापश्चाभिप्राप्तुं सुमखाय शोभनयज्ञाय मरुद्गणाय वोचं। ब्रवीमि। गिरः स्तुतयो वर्धंतां। द्यावो द्योतमानाः स्वप्रतिपाद्यार्थप्रकाशिन्यश्चंद्राग्राः। आह्लादनं हिरण्यं वाग्रे यासां ताः। तादृश्यः सत्यो वर्धंतां। अर्णा नद्यश्चाभिषाता मरुद्भिः संभक्ता उदोदकेन वर्धंतां। समृद्धा भवंतु ॥

पदेपदे मे जरिमा नि धायि वरूत्री वा शक्रा या पायुभिश्च ।
सिषक्तु माता मही रसा नः स्मत्सूरिभिर्ऋजुहस्त ऋजुवनिः ॥१५॥
पदेऽपदे । मे । जरिमा । नि । धायि । वरूत्री । वा । शक्रा । या । पायुऽभिः । च ।
सिसक्तु । माता । मही । रसा । नः । स्मत् । सूरिऽभिः । ऋजुऽहस्ता । ऋजुऽवनिः ॥१५॥

जरिमा स्तुतिर्मे मदीया पदे पदे तदा तदा भूमौ नि धायि । निधीयते । स्थाप्यते । क्रियत इत्यर्थः । या च शक्रा शक्ता सती पायुभी रक्षणैर्वरूत्र्यस्मदुपद्रववारयित्री भवति । वाशब्दश्चार्थे । माता सर्वस्य निर्मात्री मही महती पूज्या रसा सारभूता भूमिः सिषक्तु सेवतां नोऽस्माकं स्तुतिं । अथवा स्तुता नोऽस्मान् सिषक्तु । स्मच्छब्दः प्रशस्तवचनः । प्रशस्तैः सूरिभिर्मेधाविभिः स्तोतृभिर्निमित्तैः । तेषां परिचर्यया प्रीतेत्यर्थः । ऋजुहस्ता अस्मदनुकूलहस्ता ऋजुर्वनिः कल्याणदाना भवतु ॥ ॥१५॥

कथा दाशेम नमसा सुदानूनेवया मरुतो अच्छोक्तौ प्रश्रवसो मरुतो अच्छोक्तौ ।
मा नोऽहिर्बुध्न्यो रिषे धादस्माकं भूदुपमातिवनिः ॥१६॥
कथा । दाशेम । नमसा । सुऽदानून् । एवऽया । मरुतः । अच्छऽउक्तौ । प्रऽश्रवसः ।
मरुतः । अच्छऽउक्तौ ।
मा । नः । अहिः । बुध्न्यः । रिषे । धात् । अस्माकं । भूत् । उपमातिऽवनिः ॥१६॥

वयं कथा केन प्रकारेण दाशेम परिचरेम नमसा स्तोत्रेणान्नेन वा सुदानून् शोभनदानान्मरुतः । एवयैवं क्रियमाणप्रकारेणाच्छोक्तावभिमुख्येन वचने निमित्ते सति तान्मरुतः कथं परिचरेम । तेषां दुराराध्यत्वादिति भावः । कथं । प्रश्रवसः प्रकृष्टान्ना भवति । अच्छोक्तौ । अभिगत्योक्तिः स्तुतिर्यस्य तादृशे मयि । यद्वा । प्रश्रवसः प्रकृष्टान्नस्य ममाच्छोक्तौ स्तोत्रनिमित्ते सति मरुतः कथा केन प्रकारेण दाशेम । पुनरुक्तिरादरार्था । अहिर्बुध्न्यो देवो नोऽस्मान् रिषे हिंसकाय मा धात् । मा स्थापयतु । स देवोऽस्माकं भूत् भवतूपमातिवनिः शत्रूणां हंता ॥

इति चिन्नु प्रजायै पशुमत्यै देवासो वनते मर्त्यो व आ देवासो वनते मर्त्यो वः ।
अत्रा शिवां तन्वो धासिमस्या जरां चिन्मे निर्ऋतिर्जग्रसीत ॥१७॥
इति । चित् । नु । प्रऽजायै । पशुऽमत्यै । देवासः । वनते । मर्त्यः । वः । आ । देवासः ।
वनते । मर्त्यः । वः ।
अत्र । शिवां । तन्वः । धासिं । अस्याः । जरां । चित् । मे । निःऽऋतिः । जग्रसीत ॥१७॥

हे देवासो देवा वो युष्मानिति चिदित्थमेव नु क्षिप्रं प्रजायै पशुमत्यै पशुसहितायापत्यार्थं वनते भजते मर्त्यो मनुष्यो यजमानः । आ देवास इति पुनरुक्तिरादरार्था । अत्रास्मिन्यज्ञे शिवां धासिमन्नं मे ममास्यास्तन्वो देवैरनुगृहीतस्य पुत्रस्य करोतु निर्ऋतिर्देवता । जरां चिज्जरां च जग्रसीत । ग्रसतु ॥

तां वो देवाः सुमतिमूर्जयंतीमिषमश्याम वसवः शसा गोः ।
सा नः सुदानुर्मृळयंती देवी प्रति द्रवंती सुविताय गम्याः ॥१८॥

तां। वः। देवाः। सुऽमतिं। ऊर्जयंतीं। इषं। अश्याम। वसवः। शसा। गोः।
सा। नः। सुऽदानुः। मृळयंती। देवी। प्रति। द्रवंती। सुविताय। गम्याः ॥१८॥

हे देवा हे वसवो वासयितारो वो युष्माकं स्वभूतां तां प्रसिद्धां सुमतिं शोभनमननसाधनां। अन्नेन मतिवृद्धिरन्नमय हि सोम्य मनः। छां० उ० ६.५.४.। इत्यादिषु प्रसिद्धा। ऊर्जयंतीं बलकारीमिषमेषणसाधनमन्नं क्षीरदध्यादिलक्षणं शसा स्तुत्या गोः सकाशादश्याम। प्राप्नुयाम। सा देवी नोऽस्मान सुविताय सुखाय प्रति गम्याः। गम्यात। अभिगच्छत। सैव देवता विशेष्यते। सुदानुः शोभनदाना मृळयंती सुखयंती द्रवंत्यस्मदभिमुखं गच्छंती ॥

अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु।
उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ॥१९॥
अभि। नः। इळा। यूथस्य। माता। स्मत्। नदीभिः। उर्वशी। वा। गृणातु।
उर्वशी। वा। बृहत्ऽदिवा। गृणाना। अभिऽऊर्ण्वाना। प्रऽभृथस्य। आयोः ॥१९॥

अभि गृणातु नोऽस्मानिळा भूमिर्यूथस्य गोसंघस्य माता निर्मात्री। यद्वेळा गोरूपधरा मनोः पुत्री त्याहुः। यद्वा यूथस्य मरुद्गणस्य निर्मात्रीळा माध्यमिकी वाक्। अथवोर्वशी माध्यमिकी वाक्। नदीभिर्गंगादिभिः सह गृणातु। स्मच्छब्दः प्रशस्तवचन इत्युक्तं। प्राशस्त्ये गृणातु। वाथवोर्वशी बृहद्दिवा प्रभूतदीप्तिर्गृणाना शब्दयंत्यस्मदीयं कर्म प्रशंसंत्यभ्यूर्ण्वानाच्छादयंती। कं। आयोरायुं मनुष्यं यजमानं। केन। प्रभृथस्य तेजसो वोदकस्य वा दानेन। प्रभृथस्य तेजसो वोदकस्येति निरुक्तं।११.४९.। अथवा प्रभृथस्य प्रभरणवत आयोर्यज्ञसभ्यूर्ण्वानाच्छादयंती ॥

सिषक्तु न ऊर्जव्यस्य पुष्टेः ॥२०॥
सिसक्तु। नः। ऊर्जव्यस्य। पुष्टेः ॥२०॥

ऊर्जव्यस्येतन्नामकस्य राज्ञः पुष्टेः पोषकस्य संबंधिनो नोऽस्मान सिषक्तु। सेवतां। सामर्थ्याद्देवसंघ इति गम्यते। अथवोर्वशी मरुद्गणो वा गृह्यते प्रकृतत्वादिति ॥ ॥१६॥

प्र शंतमेत्यष्टादशर्चं दशमं सूक्तं भौमस्यात्रेरार्षं त्रैष्टुभं। पूर्वसूक्ते वै तदित्युक्तत्वादिदमपि वैश्वदेवं। तस्य पृहीत्येकादशी रुद्रदेवत्या। सप्तदश्येकपदैतयोरुपांत्यैकपदेत्यनुक्रमिष्यमाणत्वात। अत्रानुक्रमणिका। प्र शंतमा ह्यूनैकादशी रौद्रीति ॥ विनियोगो लैंगिकः ॥

प्र शंतमा वरुणं दीधिती गीर्मित्रं भगमदितिं नूनमश्याः।
पृषद्योनिः पंचहोता शृणोत्वतूर्तपंथा असुरो मयोभुः ॥१॥
प्र। शंऽतमा। वरुणं। दीधिती। गीः। मित्रं। भगं। अदितिं। नूनं। अश्याः।
पृषत्ऽयोनिः। पंचऽहोता। शृणोतु। अतूर्तऽपंथाः। असुरः। मयःऽभुः ॥१॥

प्र शंतमात्यंतं सुखकरी गीः स्तुतिरूपा वाग्वरुणं मित्रं भगमदितिं च दीधिती दीधित्या कर्मणा हविष्प्रक्षेपणात्मकेन सह नूनमवितथं प्राश्याः। प्राप्नोतु। किंच पृषद्योनिः पृषद्वर्णांतरिक्षस्थः पंचहोता पंचविधस्य प्राणापानादिहोमस्य साधको वायुः। यद्वा। पंचहोतेति वायोर्नाम। वायुः पंचहोता स प्राण इति हि श्रुतेः। स चातूर्तपथा अहिंसितगतिरसुरः प्राणस्य दाता मयोभुः सुखस्यास्पदभूतः। एवमुक्तलक्षणो वायुः शृणोतु स्तोत्रमिति ॥

प्रति मे स्तोममदितिर्जगृभ्यात्सूनुं न माता हृद्यं सुशेवं ।
ब्रह्म प्रियं देवहितं यदस्त्यहं मित्रे वरुणे यन्मयोभु ॥२॥
प्रति । मे । स्तोमं । अदितिः । जगृभ्यात् । सूनुं । न । माता । हृद्यं । सुऽशेवं ।
ब्रह्म । प्रियं । देवऽहितं । यत् । अस्ति । अहं । मित्रे । वरुणे । यत् । मयःऽभु ॥२॥

मे मदीयं स्तोमं स्तोत्रमदितिर्देवता प्रति जगृभ्यात् । प्रतिगृह्णातु । सूनुं न माता स्वतनुजं जननीव । सा यथा प्रतिगृह्यालिंग्य परितुष्यति तद्वदित्यर्थः । कीदृशं तं । हृद्यं हृदयंगमं सुशेवं शोभनसुखकरं । एतद्द्वयं साधारणं । किंच ब्रह्म मंत्रजातं प्रियं प्रियकरं देवहितं देवैः प्राप्यं यदस्ति यद्ब्रह्म मयोभु सुखसाधनं तदहं मित्रे वरुणे च प्रापयामीति शेषः । यद्वा । मित्रे वरुणे चाहोरात्राभिमानिदेवयोर्युद्धकालचणं ब्रह्म परिवृढं यज्ञादिरूपं कर्मास्ति तदहं धारयामीति ॥

उदीरयेत्यपैकादशिनं सावित्रे पशौ वपायाज्या । सूत्रितं च । उदीरय कवितमं कवीनां भगं धियं वाजयतः पुरंधिमिति द्वे । आ० ३. ८. । इति ॥

उदीरय कवितमं कवीनामुनत्तैनमभि मध्वा घृतेन ।
स नो वसूनि प्रयता हितानि चंद्राणि देवः सविता सुवाति ॥३॥
उत् । ईरय । कविऽतमं । कवीनां । उनत्त । एनं । अभि । मध्वा । घृतेन ।
सः । नः । वसूनि । प्रऽयता । हितानि । चंद्राणि । देवः । सविता । सुवाति ॥३॥

अनयां सविता च स्तूयते । हे ऋत्विजः कवीनां कवितमं क्रांतदर्शिनमस्य पुरोवर्तिनमग्निं सवितारं वोदीरय । ऊर्ध्वं प्रापयत । हर्षयतेत्यर्थः । एनं देवं मध्वा मधुरेण सोमरसेन घृतेन चाभ्युनत्त । अभिषिंचत । तर्पयतेत्यर्थः । स सविता देवो नोऽस्मभ्यं वसूनि निवासयोग्यानि गवादिधनानि प्रयता प्रयतानि हितानि चंद्राण्याह्लादकानि हिरण्यानि सुवाति । प्रयच्छत्वित्यर्थः ॥

समिंद्र णो मनसा नेषि गोभिः सं सूरिभिर्हरिवः सं स्वस्ति ।
सं ब्रह्मणा देवहितं यदस्ति सं देवानां सुमत्या यज्ञियानां ॥४॥
सं । इंद्र । नः । मनसा । नेषि । गोभिः । सं । सूरिऽभिः । हरिऽवः । सं । स्वस्ति ।
सं । ब्रह्मणा । देवऽहितं । यत् । अस्ति । सं । देवानां । सुऽमत्या । यज्ञियानां ॥४॥

हे इंद्र नोऽस्मान्मनसा प्रकृष्टेन चेतसा गोभिः सह सं नेषि । नयसि । अस्मान् गाः प्रापयसीत्यर्थः । एवं सर्वत्र । हे हरिवो हरिभ्यां तद्वन्निंद्र सूरिभिर्मेधाविभिः पुत्रैर्ऋत्विग्भिर्वा सं नेषि । तथा स्वस्ति स्वस्तिमंतं मां सं नेषि । ब्रह्मणा प्रभूतेनान्नेन सं नेषि । यदन्नं देवहितमस्ति तेन । किंच यज्ञियानां यज्ञार्हाणां देवानां सुमत्यानुग्रहबुद्ध्या सं नेषि ॥

देवो भगः सविता रायो अंश इंद्रो वृत्रस्य संजितो धनानां ।
ऋभुक्षा वाज उत वा पुरंधिरवंतु नो अमृतासस्तुरासः ॥५॥
देवः । भगः । सविता । रायः । अंशः । इंद्रः । वृत्रस्य । सम्ऽजितः । धनानां ।
ऋभुक्षाः । वाजः । उत । वा । पुरंऽधिः । अवंतु । नः । अमृतासः । तुरासः ॥५॥

अत्र लिंगोक्ता देवताः। भगो देवः सविता च रायो धनस्य स्वाम्यंशस्त्वष्टा वृत्रस्य हंतेंद्रश्च एते देवा धनानां संजितः सम्यग्जेतार ऋभुक्षा ऋभुर्वाजश्च उत वापि च पुरंधिः बहुधीः। विश्वोच्यते। एते चामृतासोऽमृता अमरणधर्माणो भगादिदेवास्तुरासोऽस्मद्यज्ञं प्रति त्वरमाणाः संतो नोऽस्मानवंतु। रक्षंतु॥ ॥१७॥

मरुत्वंतो अप्रतीतस्य जिष्णोरजूर्यतः प्र ब्रवामा कृतानि।
न ते पूर्वे मघवन्नापरासो न वीर्यं१नूतनः कश्चनाप ॥६॥
मरुत्वंतः। अप्रतिऽइतस्य। जिष्णोः। अजूर्यतः। प्र। ब्रवाम। कृतानि।
न। ते। पूर्वे। मघऽवन्। न। अपरासः। न। वीर्यं। नूतनः। कः। चन। आप ॥६॥

वयं यजमाना मरुत्वतो मरुद्भिस्तद्वत इंद्रस्य कृतानि कर्माणि प्र ब्रवाम। प्रख्यापयाम। कीदृशस्य तस्य। अप्रतीतस्याप्रतिगतस्य युद्धेऽपलायमानस्य। न केवलं तावन्मात्रं। जिष्णोर्जयनशीलस्याजूर्यतोऽजीर्यमाणस्य। सर्वदा युन इत्यर्थः। अथ प्रत्यक्षेणोच्यते। हे मघवन्निंद्र ते तव वीर्यं पराक्रमं पूर्वे पुरातनाः पुरुषा नापुः। नापरासोऽपरेऽपि नापुः। किं बहुना। नूतनः कश्चनाश्चर्यभूतो यः कोऽपि वीर्यं नाप। न प्राप्नोति॥

उप स्तुहि प्रथमं रत्नधेयं बृहस्पतिं सनितारं धनानां।
यः शंसते स्तुवते शंभविष्ठः पुरूवसुरागमज्जोहुवानं ॥७॥
उप। स्तुहि। प्रथमं। रत्नऽधेयं। बृहस्पतिं। सनितारं। धनानां।
यः। शंसते। स्तुवते। शंऽभविष्ठः। पुरुऽवसुः। आऽगमत्। जोहुवानं ॥७॥

हे अंतरात्मन् त्वं प्रथमं मुख्यं। प्रकृष्टतममित्यर्थः। रत्नधेयं रमणीयधनदातारं धनानां हविर्लक्षणानां सनितारं संभक्तारं। अथवा रत्नशब्देन मणिमुक्तादयो गृहीता इह धनशब्देन गवादयः। गवादिदातारं बृहस्पतिं बृहतो मंत्रस्य पतिं स्वामिनं देवमुप स्तुहि। यो देवः शंसते शस्त्रैः स्तुवते सामभिर्यजमानाय शंभविष्ठः सुखस्य भावयितृतमो भवति। यश्च जोहुवानमाह्वयंतं यजमानं पुरूवसुः प्रभूतधनः सन्नागमत् आगच्छति तमुप स्तुहि॥

तवोतिभिः सचमाना अरिष्टा बृहस्पते मघवानः सुवीराः।
ये अश्वदा उत वा संति गोदा ये वस्त्रदाः सुभगास्तेषु रायः ॥८॥
तव। ऊतिऽभिः। सचमानाः। अरिष्टाः। बृहस्पते। मघऽवानः। सुऽवीराः।
ये। अश्वऽदाः। उत। वा। संति। गोऽदाः। ये। वस्त्रऽदाः। सुऽभगाः। तेषु। रायः ॥८॥

हे बृहस्पते तवोतिभी रक्षाभिः सचमानाः संगच्छमाना अरिष्टा अहिंसिता मघवानो धनवंतः सुवीराः शोभनपुत्राश्च भवंति। ये त्वदनुगृहीता अश्वदा बहूनामश्वानां दातारः संति। उत वाथवा गोदाः संति। ये च वस्त्रदाः सुभगाः शोभनधनाः संति तेषु सर्वेषु रायो धनानि संभवंत्विति शेषः॥

विसर्माणं कृणुहि वित्तमेषां ये भुंजते अपृणंतो न उक्थैः।
अपव्रतान्प्रसवे वावृधानान्ब्रह्मद्विषः सूर्याद्यावयस्व ॥९॥
विऽसर्माणं। कृणुहि। वित्तं। एषां। ये। भुंजते। अपृणंतः। नः। उक्थैः।
अपऽव्रतान्। प्रऽसवे। ववृधानान्। ब्रह्मऽद्विषः। सूर्यात्। यवयस्व ॥९॥

एषां वक्ष्यमाणानां वित्तं धनं विसर्माणं विसरणशीलं कृणुहि । कुरु । हे ब्रह्मणस्पते । एषामित्युक्तं केषामित्याह । ये भुजंतोऽपृणंतोऽप्रयच्छंतः । केभ्यः । उक्थैः स्तुतिप्रतिपादकैः शस्त्रैर्विशिष्टेभ्यो नोऽस्मभ्यं । तानप व्रतानपगतकर्मणः प्रसवे उत्पत्तिमति मनुष्यलोके ववृधानान् वर्धमानान्ब्रह्मद्विषो ब्राह्मणद्वेष्टॄन्मंत्रद्वेष्टॄन् वा सूर्यादाववयस्व । पृथक्कुरु । अंधकारे स्थापयेत्यर्थः ॥

य ओहते रक्षसो देववीतावचक्रेभिस्तं मरुतो नि यात ।
यो वः शमीं शशमानस्य निंदात्तुच्छ्यान्कामान्करते सिष्विदानः ॥१०॥
यः । आऽहते । रक्षसः । देवऽवीतौ । अचक्रेभिः । तं । मरुतः । नि । यात ।
यः । वः । शमीं । शशमानस्य । निंदात् । तुच्छ्यान् । कामान् । करते । सिस्विदानः ॥१०॥

यो यजमानो रक्षसो बलिनो राक्षसानोहते प्रापयति देववीतौ । देवाना वीतिः प्राप्तिर्भक्षणं वा यत्र स तथोक्तः । तस्मिन्यज्ञे । अन्यथानुष्ठानादिनासुरं करोतीत्यर्थः । तं यजमानमचक्रेभिरचक्रै रथैर्हे मरुतो नि यात । नितरां प्रापयतांधकारं । यद्वा । अचक्रेभिरिति पूर्वत्रान्वयः । चक्रशब्देनांगान्युच्यंते । पुनःपुनरंगरहितैः केवलैरेव प्रधानैरोहते प्रापयति । सांगं हि कर्म देवानर्हति । यश्च वो युष्माकं शमीं कर्म स्तुतिलक्षणं शशमानस्य मम संबंधि निंदात् निंदति वैदिकं ज्योतिष्टोमादिरूपं कर्म निंदति स्वयं च तुच्छ्यांस्तुच्छान् कामान् कृष्यादिजनितभोगान् करते कुरुते सिष्विदानः स्विद्यन्नात्मानं क्लेशयन् । अथवा युष्मासु कमनीयान्भोगान् तुच्छ्यान् करोति ॥ ॥१८॥

तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य ।
यक्ष्वा महे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य ॥११॥
तं । ऊं इति । स्तुहि । यः । सुऽइषुः । सुऽधन्वा । यः । विश्वस्य । क्षयति । भेषजस्य ।
यक्ष्व । महे । सौमनसाय । रुद्रं । नमःऽभिः । देवं । असुरं । दुवस्य ॥११॥

हे आत्मन् तमु तमेव रुद्रं स्तुहि । स्तुतिं कुरु । यः स्विषुः शोभनबाणः सुधन्वा च । विरोधिहंतृत्वात्सुष्ठुत्वं । यश्च विश्वस्य भेषजस्यौषधस्य क्षयति ईश्वरो भवति । शारीरस्य सांसारिकस्य वा रोगस्य शमनाद्रुद्रव्यतिरिक्तस्यौषधस्याभावाद्भिषक्तमत्वाच्चास्य भेषजस्वामित्वं । भिषक्तमं त्वा भिषजां शृणोमि । ऋ॰ २ ३३ ४ । इत्यादिश्रुतेः । किंच तमेव रुद्रं दुःखात्तत्साधनाद्दुरिताद्वा मोचयितारं देवं यक्ष्व यज च महे महते सौमनसाय सुमनस्त्वाय । ईश्वराराधनाच्चित्तशांतिः प्रसिद्धा । किंच नमोभिर्हविर्भिर्नमस्कारैर्वा देवं द्योतमानमसुरं प्रज्ञावंतं । बलवंतमित्यर्थः । यद्वा । प्राणदातारं रुद्रं दुवस्य । परिचरेति ॥

दमूनसो अपसो ये सुहस्ता वृष्णः पत्नीर्नद्यो विभ्वतष्टाः ।
सरस्वती बृहद्दिवोत राका दशस्यंतीर्वरिवस्यंतु शुभ्राः ॥१२॥
दमूनसः । अपसः । ये । सुऽहस्ताः । वृष्णः । पत्नीः । नद्यः । विभ्वऽतष्टाः ।
सरस्वती । बृहत्ऽदिवा । उत । राका । दशस्यंतीः । वरिवस्यंतु । शुभ्राः ॥१२॥

अत्र लिंगोक्तदेवताः । दमूनसो दानमनसो दांतमनसो वापसश्चापसा अश्वरथगवादिशोभनकर्मवंतः ॥ मत्वर्थो लुप्यते ॥ अत एव सुहस्ताः कुशलहस्ता ये संति त ऋभवो वृष्णो वर्षकस्येंद्रस्य पत्नीः पत्न्यः पालयित्र्यो नद्यो नदनशीला गंगाद्या विभ्वतष्टा ऋभूणां मध्यमेन कृताः सरस्वत्येतन्नामिका नदी वाग्देवी वा बृहद्दिवा प्रभूतदीप्तिरुतापि च राका देवी च दशस्यंतीर्दशस्यंत्यः कामान्प्रयच्छंत्यः शुभ्रा दीप्ताः ताश्च वरिवस्यतु । अस्मभ्यं धनमिच्छंतु ॥

प्र सू मुहे सुशरणाय मेधां गिरं भरे नव्यसीं जायमानां ।
य आहना दुहितुर्वक्षणासु रूपा मिनानो अकृणोदिदं नः ॥१३॥
प्र । सु । महे । सुऽशरणाय । मेधां । गिरं । भरे । नव्यसीं । जायमानां ।
यः । आहनाः । दुहितुः । वक्षणासु । रूपा । मिनानः । अकृणोत् । इदं । नः ॥१३॥

सु सुष्ठु प्र भरे प्रकर्षेण संपादयामि महे महते सुशरणाय शोभनरक्षकायेंद्राय पर्जन्याय वा सुसुखाय वा। किं। मेधां मतौ धीयमानां गिरं स्तुतिं। कीदृशीं। नव्यसीं नवतरामतिशयेन स्तुत्यां वा जायमानामिदानीमुत्पद्यमानां। नूतनामित्यर्थः। य इंद्रः पर्जन्यो वा आहना आहता सेक्ता दुहितुर्दुहितृस्थानीयायाः पृथिव्या हिताय वक्षणासु नदीषु रूपा रूपाणि मिनानः कुर्वाण इदमुदकं नोऽस्मभ्यमकृणोत करोतु ॥

प्र सुष्टुतिः स्तनयंतं रुवंतमिळस्पतिं जरितर्नूनमश्याः ।
यो अब्दिमाँ उदनिमाँ इयर्ति प्र विद्युता रोदसी उक्षमाणः ॥१४॥
प्र । सुऽस्तुतिः । स्तनयंतं । रुवंतं । इळः । पतिं । जरितः । नूनं । अश्याः ।
यः । अब्दिऽमान् । उदनिऽमान् । इयर्ति । प्र । विऽद्युता । रोदसी इति । उक्षमाणः ॥१४॥

अत्र पर्जन्यः स्तूयते। सुष्टुतिः शोभना स्तुतिः स्तनयंतं गर्जंतं रुवंतं वर्षणजनितं शब्दं कुर्वाणमिळोऽन्नस्योदकस्य वा पतिं स्वामिनं हे जरितः स्तोतस्त्वदीया स्तुतिर्नूनं प्राश्याः। प्रकर्षेण व्याप्नोतु। यश्च पर्जन्योऽब्दिमान्। अब्दिरपां दानवान्मेघः। तद्वान्। उदनिमानुदकवान्विद्युता तडिता रोदसी द्यावापृथिव्यावुक्षमाणः सिंचन् प्रेयर्ति गच्छति ॥

एष स्तोमो मारुतं शर्धो अच्छा रुद्रस्य सूनूँर्युवन्यूँरुदश्याः ।
कामो राये हवते मा स्वस्त्युप स्तुहि पृषदश्वाँ अयासः ॥१५॥
एषः । स्तोमः । मारुतं । शर्धः । अच्छ । रुद्रस्य । सूनून् । युवन्यून् । उत् । अश्याः ।
कामः । राये । हवते । मा । स्वस्ति । उप । स्तुहि । पृषत्ऽअश्वान् । अयासः ॥१५॥

एष मया संपादितः स्तोमः स्तोत्रं मारुतं शर्धो मरुतां बलमच्छाभिमुखमश्याः। प्राप्नोतु। समुदायरूपेण स्तुत्वा समुदायिरूपेणाह। रुद्रस्य सूनून्। एषां रुद्रेण पुत्रत्वेन परिकल्पितत्वादुक्ता। युवन्यून्यौवनं मिश्रणं कुर्वन्त्वादुन्नतमत्यधिकमश्याः। व्याप्नुहि हे मनः। कामः संकल्पो राये धनार्थं मा मां स्वस्त्यविनश्वरं हवते। आह्वयति। प्रेरयतीत्यर्थः। यस्मादेवं तस्मात्पृषदश्वान्पृषद्वर्णाश्वोपेतानयासो यज्ञगतॄनुपोपेत्य स्तुहि ॥

प्रैष स्तोमः पृथिवीमंतरिक्षं वनस्पतीँरोषधी राये अश्याः ।
देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात् ॥१६॥
प्र । एषः । स्तोमः । पृथिवीं । अंतरिक्षं । वनस्पतीन् । ओषधीः । राये । अश्याः ।
देवःऽदेवः । सुऽहवः । भूतु । मह्यं । मा । नः । माता । पृथिवी । दुःऽमतौ । धात् ॥१६॥

एष स्तोमः स्तुतिः पृथिव्यादिदेवताः प्राश्याः। प्राप्नोतु। किमर्थं। राये धनार्थं। देवो देवः सर्वोऽपि देवो मह्यं मदर्थं सुहवो भूतु। स्वाह्वानो भवतु। नोऽस्मान्दुर्मतौ माता सर्वस्य निर्मात्री। यद्वा। अत्रैर्भौमत्वाद्विशेषेण माता। तादृशी पृथिवी मा धात। मा स्थापयतु ॥

उरौ देवा अनिबाधे स्याम ॥१७॥
उरौ । देवाः । अनिऽबाधे । स्याम ॥१७॥

हे देवा युष्माकं संवन्धिन्युरौ महत्यनिबाधे नितरां बाधरहिते सुखे स्याम । भवेम वयमत्रयः ॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥१८॥
सं । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।
आ । नः । रयिं । वहतं । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥१८॥

वयमश्विनोर्नूतनेन पूर्वमन्यैरननुभूतेन मयोभुवा सुखस्य भावयित्रा सुप्रणीती शोभनप्रणयनवतावसा रक्षणेन सं गमेम । संगच्छेमहि । हे अमृतावमरणावश्विनौ नोऽस्मभ्यं रयिं धनमा वहतं । प्रापयतं । अपि च वीरान् सुवीर्यवतः पुत्रानप्या वहतं । विश्वानि सौभगान्यप्या वहतं ॥ ॥१९॥

आ धेनव इति सप्तदशर्चमेकादशं सूक्तमत्रेरार्षं त्रैष्टुभं वैश्वदेवं । अत्रानुक्रमणिका । आ धेनवस्सप्तोनेत्यौक पाङ्क्तिकपदेति ॥ विनियोगो लैङ्गिकः ॥ अपोनप्त्रीय एकधनासु हविर्धानं प्रति नीयमानास्वाद्यानुवचनीया । सूत्रितं च । आ धेनवः पयसा तूर्ण्यर्था अमन्या यन्त्युप यत्यन्याः । आ० ५ १ । इति ॥

आ धेनवः पयसा तूर्ण्यर्था अमर्धन्तीरुप नो यंतु मध्वा ।
महो राये बृहतीः सप्त विप्रो मयोभुवो जरिता जोहवीति ॥१॥
आ । धेनवः । पयसा । तूर्णिऽअर्थाः । अमर्धन्तीः । उप । नः । यंतु । मध्वा ।
महः । राये । बृहतीः । सप्त । विप्रः । मयःऽभुवः । जरिता । जोहवीति ॥१॥

धेनवः प्रीणयित्र्यो नद्यो मध्वा मधुरेण पयसा रसेन सहितास्तूर्ण्यर्थास्त्वरमाणगमना । अर्थोऽर्तेः । नि० १ १८ । इति यास्कः । अमर्धन्तीरहिंसन्त्यः सत्यो नोऽस्मानुपा यन्तु । उपागच्छन्तु । तदर्थं महो महते राये धनाय बृहतीर्महतीः सप्त सर्पणस्वभावाः सप्तसंख्याका इमं मे गङ्गे । ऋ० १० ७५ ५ । इति सप्तोक्ता गङ्गाद्या वा । तत्र हि प्राधान्येन सप्तैवोक्ताः । मयोभुवः सुखस्य भावयित्रीर्विप्रो विशेषेण प्रीणयिता जरिता स्तोता जोहवीति । आह्वयति ॥

आ सुष्टुती नमसा वर्तयध्यै द्यावा वाजाय पृथिवी अमृध्रे ।
पिता माता मधुवचाः सुहस्ता भरेभरे नो यशसावविष्टां ॥२॥
आ । सुऽस्तुती । नमसा । वर्तयध्यै । द्यावा । वाजाय । पृथिवी इति । अमृध्रे इति ।
पिता । माता । मधुऽवचाः । सुऽहस्ता । भरेऽभरे । नः । यशसा । अविष्टां ॥२॥

अहं सुष्टुती सुष्टुत्या शोभनस्तोत्रेण नमसा हविषा चामृध्रे हिंसारहिते द्यावा पृथिवी द्यावापृथिव्यावा वर्तयध्यै । आवर्तयितुमिच्छामि वाजायान्नार्थं । अन्नं वै वाज इति हि श्रुतिः । पिता पालयित्री द्यौर्माता निर्मात्री पृथिवी मधुवचाः प्रियवचना सुहस्ताभिमतदानेन शोभनहस्ता । एते उभयविशेषणे । यशसौ यशोयुक्तौ द्यावापृथिव्यौ भरेभरे सर्वेषु संग्रामेषु यज्ञेषु वा नोऽस्मानविष्टां । रक्षतां ॥

प्र सू महे सुशरणाय मेधां गिरं भरे नव्यसीं जायमानां ।
य आहना दुहितुर्वक्षणासु रूपा मिनानो अकृणोदिदं नः ॥१३॥
प्र । सु । महे । सुऽशरणाय । मेधां । गिरं । भरे । नव्यसीं । जायमानां ।
यः । आहनाः । दुहितुः । वक्षणासु । रूपा । मिनानः । अकृणोत् । इदं । नः ॥१३॥

सु सुष्ठु प्र भरे प्रकर्षेण संपादयामि महे महते सुशरणाय शोभनरक्षकायेंद्राय पर्जन्याय वा सुसुखाय वा। किं। मेधां मतिं धीयमानां गिरं स्तुतिं। कीदृशीं। नव्यसीं नवतरामतिशयेन स्तुत्यां वा जायमानामिदानीमुत्पद्यमानां। नूतनामित्यर्थः। य इंद्रः पर्जन्यो वा आहना आहंता सेक्ता दुहितुर्दुहितृस्थानीयायाः पृथिव्या हिताय वक्षणासु नदीषु रूपा रूपाणि मिनानः कुर्वाण इदमुदकं नोऽस्मभ्यमकृणोत करोतु ॥

प्र सुष्टुतिः स्तनयंतं रुवंतमिळस्पतिं जरितर्नूनमश्याः ।
यो अब्दिमाँ उदनिमाँ इयर्ति प्र विद्युता रोदसी उक्षमाणः ॥१४॥
प्र । सुऽस्तुतिः । स्तनयंतं । रुवंतं । इळः । पतिं । जरितः । नूनं । अश्याः ।
यः । अब्दिऽमान् । उदनिऽमान् । इयर्ति । प्र । विऽद्युता । रोदसी इति । उक्षमाणः ॥१४॥

अत्र पर्जन्यः स्तूयते। सुष्टुतिः शोभना स्तुतिः स्तनयंतं गर्जंतं रुवंतं वर्षणजनितं शब्दं कुर्वाणमिळोऽन्नस्योदकस्य वा पतिं स्वामिनं हे जरितः स्तोतस्त्वदीया स्तुतिर्नूनं प्राश्याः। प्रकर्षेण व्याप्नोतु। यश्च पर्जन्योऽब्दिमान्। अब्दिरपां दानवान्मेघः। तद्वान्। उदनिमानुदकवान्विद्युता तडिता रोदसी द्यावापृथिव्यावुक्षमाणः सिंचन् प्रेयर्ति गच्छति ॥

एष स्तोमो मारुतं शर्धो अच्छा रुद्रस्य सूनूँर्युवन्यूँरुदश्याः ।
कामो राये हवते मा स्वस्त्युप स्तुहि पृषदश्वाँ अयासः ॥१५॥
एषः । स्तोमः । मारुतं । शर्धः । अच्छ । रुद्रस्य । सूनून् । युवन्यून् । उत् । अश्याः ।
कामः । राये । हवते । मा । स्वस्ति । उप । स्तुहि । पृषत्ऽअश्वान् । अयासः ॥१५॥

एष मया संपादितः स्तोमः स्तोत्रं मारुतं शर्धो मरुतां बलमच्छाभिमुख्यमश्याः। प्राप्नोतु। समुदायरूपेण स्तुत्वा समुदायिरूपेणाह। रुद्रस्य सूनून्। एषा रुद्रेण पुत्रत्वेन परिकल्पितत्वमसकृदुक्तं। युवन्यून्मिश्रणं कुर्वाणान् उदश्याः। व्याप्नुहि हे मनः। कामः संकल्पो राये धनार्थं मा मां स्वस्त्यविनश्वरं हवते। आह्वयति। प्रेरयतीत्यर्थः। यस्मादेवं तस्मात्पृषदश्वान्पृषद्वर्णाश्वोपेतानयासो यज्ञगतॄनुपेत्य स्तुहि ॥

एष स्तोमः पृथिवीमंतरिक्षं वनस्पतीँरोषधी राये अश्याः ।
देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात् ॥१६॥
प्र । एषः । स्तोमः । पृथिवीं । अंतरिक्षं । वनस्पतीन् । ओषधीः । राये । अश्याः ।
देवःऽदेवः । सुऽहवः । भूतु । मह्यं । मा । नः । माता । पृथिवी । दुःऽमतौ । धात् ॥१६॥

एष स्तोमः स्तुतिः पृथिव्यादिदेवताः प्राश्याः। प्राप्नोतु। किमर्थं। राये धनार्थं। देवो देवः सर्वोऽपि देवो मह्यं मदर्थं सुहवो भूतु। स्वाह्वानो भवतु। नोऽस्मान्दुर्मतौ माता सर्वस्य निर्मात्री। यद्वा। अन्नभौमत्वादिगुणेन माता। तादृशी पृथिवी मा धात्। मा स्थापयतु ॥

उरौ देवा अनिबाधे स्याम ॥१७॥
उरौ । देवाः । अनिऽबाधे । स्याम ॥१७॥

हे देवा युष्माकं संवरिस्युरा महत्यनिबाधे नितरां बाधरहिते सुखे स्याम । भवेम वयमवयः ॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥१८॥
सं । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।
आ । नः । रयिं । वहतं । आ । उत । वीरान । आ । विश्वानि । अमृता । सौभगानि ॥१८॥

वयमश्विनोर्नूतनेन पूर्वमन्यैरननुभूतेन मयोभुवा सुखस्य भावयित्रा सुप्रणीती शोभनप्रणयनवतावसा रक्षणेन सं गमेम । सगच्छेमहि । हे अमृतामरणावश्विनौ नोऽस्मभ्यं रयिं धनमा वहतं । प्रापयतं । अपि च वीरान सुवीर्यवतः पुत्रानप्या वहतं । विश्वानि सौभगान्यप्या वहतं ॥ ॥१९॥

आ धेनव इति सप्तदशर्चमेकादशं सूक्तमत्रेरार्षं त्रैष्टुभं वैश्वदेवं । अत्रानुक्रमणिका । आ धेनवस्सप्तोनैतयोरु पाङ्क्त्येकपदेति ॥ विनियोगो लैंगिकः ॥ अग्नीषोमीये पशौ हविर्धानं प्रति नीयमानास्वप्स्वनुवचनीया । सूत्रितं च । आ धेनवः पयसा तूर्ण्यर्थाः समन्या यन्त्युप यन्त्यन्याः । आ° ५ १ । इति ॥

आ धेनवः पयसा तूर्ण्यर्था अमर्धन्तीरुप नो यन्तु मध्वा ।
महो राये बृहतीः सप्त विप्रो मयोभुवो जरिता जोहवीति ॥१॥
आ । धेनवः । पयसा । तूर्णिऽअर्थाः । अमर्धन्तीः । उप । नः । यन्तु । मध्वा ।
महः । राये । बृहतीः । सप्त । विप्रः । मयःऽभुवः । जरिता । जोहवीति ॥१॥

धेनवः प्रीणयित्र्यो नद्यो मध्वा मधुरेण पयसा रसेन सहितास्तूर्ण्यर्थास्त्वरमाणगमनाः । अर्थोऽरिः । नि° १ १८ । इति यास्कः । अमर्धन्तीरहिंसन्त्यः सत्यो नोऽस्मानुपा यन्तु । उपागच्छन्तु । तदर्थं महो महते राये धनाय बृहतीर्महतीः सप्त सर्पणस्वभावाः सप्तसंख्याका इमं मे गंगे । ऋसं° १० ७५ ५ । इति मन्त्रोक्ता गङ्गाद्या वा । तत्र हि प्राधान्येन सप्तैवोक्ताः । मयोभुवः सुखस्य भावयित्रीर्विप्रो विशेषेण प्रीणयिता जरिता स्तोता जोहवीति । आह्वयति ॥

आ सुष्टुती नमसा वर्तयध्यै द्यावा वाजाय पृथिवी अमृध्रे ।
पिता माता मधुवचाः सुहस्ता भरेभरे नो यशसावविष्टां ॥२॥
आ । सुऽस्तुती । नमसा । वर्तयध्यै । द्यावा । वाजाय । पृथिवी इति । अमृध्रे इति ।
पिता । माता । मधुऽवचाः । सुऽहस्ता । भरेऽभरे । नः । यशसा । अविष्टां ॥२॥

अहं सुष्टुती सुष्टुत्या शोभनस्तोत्रेण नमसा हविषा चामृध्रे हिंसारहिते द्यावा पृथिवी द्यावापृथिव्यावा वर्तयध्यै । आवर्तयितुमिच्छामि वाजायान्नार्थं । अन्नं वै वाज इति हि श्रुतिः । पिता पालयित्री द्यौर्माता निर्मात्री पृथिवी मधुवचाः प्रियवचना सुहस्ताभिमतदानेन शोभनहस्ता । एते उभयोर्विशेषणे । यशसौ यशो युक्तौ द्यावापृथिव्यौ भरे भरे सर्वेषु संग्रामेषु यज्ञेषु वा नोऽस्मानविष्टां । रक्षतां ॥

अध्वर्यवश्चकृवांसो मधूनि प्र वायवे भरत चारु शुक्रं।
होतेव नः प्रथमः पाह्यस्य देव मध्वो ररिमा ते मदाय ॥३॥
अध्वर्यवः। चकृऽवांसः। मधूनि। प्र। वायवे। भरत। चारु। शुक्रं।
होताऽइव। नः। प्रथमः। पाहि। अस्य। देव। मध्वः। ररिम। ते। मदाय ॥३॥

हे अध्वर्यवोऽध्वरं युंजाना मधूनि मधुररसानि सोमाज्यादीनि चकृवांसः कुर्वाणा यूयं वायवे प्रथमं प्र भरत प्रकर्षेण संपादयत चारु चरणीयं शुक्रं दीप्तं सोमं। हे वायो त्वं च होतेव होता यथा प्रथमं पिबति तद्वन्नोऽस्मदर्थमस्यामुं सोमं प्रथम इतरदेवेभ्यः पूर्वं पाहि। पिब। हे देव वायो मध्वो मधुरं सोमरसं ते मदाय ररिम। ददाम। वायोः पूर्वपानमसकृत्प्रपंचितं ॥

दश क्षिपो युंजते बाहू अद्रिं सोमस्य या शमितारा सुहस्ता।
मध्वो रसं सुगभस्तिर्गिरिष्ठां चनिश्चदद्दुदुहे शुक्रमंशुः ॥४॥
दश। क्षिपः। युंजते। बाहू इति। अद्रिं। सोमस्य। या। शमितारा। सुऽहस्ता।
मध्वः। रसं। सुऽगभस्तिः। गिरिऽस्थां। चनिश्चदत्। दुदुहे। शुक्रं। अंशुः ॥४॥

अत्राभिषवस्य प्रतिपाद्यमानत्वात्सोमो देवता। यद्वा ऐंद्री। अद्रिमभिषवग्रावाणं दश क्षिपो दशसंख्याकाः क्षिप्योऽगुलयो युंजते। गृह्णंति। यद्वा। परस्परं युक्ता भवंति। बाहू अप्यध्वर्युसंबंधिनावद्रिं युंजाते। या यौ सुहस्ता शोभनहननौ सोमस्य शमितारावभिषोतारौ तौ बाहू युंजाते। मध्वो मधुरस्य सोमस्य रसं गिरिष्ठां गिरिस्थायिनं गिरिवदुन्नतप्रदेशस्थितं वा सुगभस्तिः शोभनांगुलिरध्वर्युश्चनिश्चदद्आह्लादयन्॥ चदि आह्लादन इत्यस्माद्यङ्लुकि छांदसं रूपं॥ दुदुहे। दोग्धि। स चांशुः शुक्रं निर्मलं रसं दुदुहे। दुग्धे। यद्वैकं वाक्यं। अंशुर्व्याप्तः सुगभस्तिः सुहस्तोऽध्वर्युर्मध्वो रसं दुदुहे। दोग्धि ॥

असावि ते जुजुषाणाय सोमः क्रत्वे दक्षाय बृहते मदाय।
हरी रथे सुधुरा योगे अर्वागिंद्र प्रिया कृणुहि हूयमानः ॥५॥
असावि। ते। जुजुषाणाय। सोमः। क्रत्वे। दक्षाय। बृहते। मदाय।
हरी इति। रथे। सुऽधुरा। योगे। अर्वाक्। इंद्र। प्रिया। कृणुहि। हूयमानः ॥५॥

हे इंद्र ते तुभ्यं जुजुषाणाय सेवमानाय सोमोऽसावि। अभिषुतः। किमर्थं। क्रत्वे क्रतवे वृत्रवधादिकर्मणे दक्षाय बलाय बृहते मदाय च। यस्मादेवं तस्मात् हे इंद्र त्वं हूयमानः सन् सुधुरा शोभनायां धुरि नियुक्तौ प्रिया प्रियौ हरी अश्वौ योगे योगार्हे युक्तौ वा रथे योजयित्वा तं रथमर्वागस्मदभिमुखं कृणुहि। कुरु॥ ॥२०॥

आ नो महीमरमतिं सजोषा ग्नां देवीं नमसा रातहव्यां।
मधोर्मदाय बृहतीमृतज्ञामाग्ने वह पथिभिर्देवयानैः ॥६॥
आ। नः। महीं। अरमतिं। सऽजोषाः। ग्नां। देवीं। नमसा। रातऽहव्यां।
मधोः। मदाय। बृहतीं। ऋतऽज्ञां। आ। अग्ने। वह। पथिऽभिः। देवऽयानैः ॥६॥

अत्रापि संबोध्य यादेवताया आवाह्यत्वादस्याग्निर्ग्ना वा देवता। हे अग्ने सजोषा अस्माभिः सह प्रीयमाणस्त्वं ग्नां देवीं सर्वगतव्याप्तिमतन्नासिकां देवतां। मेना ग्ना इति स्त्रीणां। नि॰ ३.२१.। इति यास्कः। नोऽस्म-

इयं देवयानैर्देवैर्गंतव्यैः पथिभिर्मार्गैरा अभिमुखमा वह । कीदृशीं । महीं महतीमरमतिमा समंताद्रममाणां सर्वत्र गंत्रीं वा नमसा स्तोत्रेण सह रातहव्यां । रातं दत्तं दानाय संकल्पितं हव्यं यस्यास्तां । दत्तहविष्कामित्यर्थः । किमर्थं । मधोर्मधुरस्य सोमस्य मदाय । पुनः कीदृशी । बृहती प्रवृद्धामृतज्ञां यज्ञमभिजानती ॥

प्रवर्ग्ये महावीरेऽज्यमानेंऽजंति यमित्येषा । सूत्रितं च । अंजंति यं प्रथयंतो न विप्रा इत्यज्यमाने । आ॰ ४. ६. । इति ॥

अंजंति यं प्रथयंतो न विप्रा वपावंतं नाग्निना तपंतः ।
पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादि ॥७॥
अंजंति । यं । प्रथयंतः । न । विप्राः । वपाऽवंतं । न । अग्निना । तपंतः ।
पितुः । न । पुत्रः । उपसि । प्रेष्ठः । आ । घर्मः । अग्निं । ऋतयन् । असादि ॥७॥

यं घर्मं महावीरं प्रथयंतो न ॥ नेति संप्रत्यर्थीयः । अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः ॥ इदानीं प्रथयंतो विप्रा मेधाविन ऋत्विजोऽध्वर्य्वादयो वपावंतं न । वपावंतं प्रवृद्धं पशुं यथाग्नौ तपंति तद्वदग्निना तपंतोऽंजंति । पितुर्न पुत्र उपसि प्रेष्ठः पितुरुपस्थे प्रियतमः पुत्र इव घर्मो महावीरः । यत् इत्यपतत्तद्घर्मस्य घर्मत्वं । तै॰ ५॰ ५ १ ५ । इति हि श्रुतिः । स ऋतयन्यज्ञमिच्छन्नग्निमग्नावासादि । आसादितः । अत्र पितृपुत्रदृष्टांतः स्फोटादिराहित्येन सुखवासप्रख्यापनार्थः ॥

अच्छा मही बृहती शंतमा गीर्दूतो न गंत्वश्विना हुवध्यै ।
मयोभुवा सरथा यातमर्वाग्गंतं निधिं धुरमाणिर्न नाभिं ॥८॥
अच्छ । मही । बृहती । शंऽतमा । गीः । दूतः । न । गंतु । अश्विना । हुवध्यै ।
मयःऽभुवा । सऽरथा । आ । यातं । अर्वाक् । गंतं । निऽधिं । धुरं । आणिः । न । नाभिं ॥८॥

अच्छाभिमुखमश्विनावश्विनौ हुवध्या आह्वातुं गीरस्मदीया स्तुतिर्दूतो न दूत इवाह्वातेव गंतु । गच्छतु । गीर्विशेष्यते । मही पूज्या बृहती महती शंतमा सुखतमा । हे अश्विनौ मयोभुवा सुखस्य भावयितारौ सरथौ करथौ संतौ निधिं निहितं सोममर्वागभिमुखं यातं । गच्छतं । धुरं भारवाहिकां नाभिमाणिर्न कीलं इव । यथा निष्कीला नाभी रथं न निर्वहति तद्वत् युवाभ्यां वियुक्तः सोमो यागं न निर्वहतीति ज्ञापयितुमेव दृष्टांतितं ॥

प्र तव्यसो नमउक्तिं तुरस्याहं पूष्ण उत वायोरदिक्षि ।
या राधसा चोदितारा मतीनां या वाजस्य द्रविणोदा उत त्मन् ॥९॥
प्र । तव्यसः । नमःऽउक्तिं । तुरस्य । अहं । पूष्णः । उत । वायोः । अदिक्षि ।
या । राधसा । चोदितारा । मतीनां । या । वाजस्य । द्रविणःऽदा । उत । त्मन् ॥९॥

अहमृषिस्तव्यसः प्रवृद्धबलस्य तुरस्य त्वरमाणस्य पूष्णः पोषकस्य देवस्य । उक्तगुणकाय देवाय उतापि च वायोरुक्तलक्षणाय च नमउक्तिं नम इति वचनं स्तोत्रं प्रादिक्षि । प्रदिशामि । या यौ पूषवायू राधसा हविर्लक्षणेन निमित्तेन मतीनां चोदितारा प्रेरयितारौ । यद्वा । राधसेति षष्ठ्यर्थे तृतीया । राधसो धनस्य मतीनां च चोदयितारौ । यौ च वाजस्यान्नस्य संग्रामस्य वा चोदयितारौ तौ देवावुतापि च त्मन्नात्मन्यन्यप्रेरणायैव द्रविणोदौ भवतामिति शेषः ॥

आ नामभिर्मरुतो वक्षि विश्वाना रूपेभिर्जातवेदो हुवानः ।
यज्ञं गिरो जरितुः सुष्टुतिं च विश्वे गंत मरुतो विश्व ऊती ॥१०॥

आ । नामऽभिः । मरुतः । वक्षि । विश्वान् । आ । रूपेभिः । जातऽवेदः । हुवानः ।
यज्ञं । गिरः । जरितुः । सुऽस्तुतिं । च । विश्वे । गंत । मरुतः । विश्वे । ऊती ॥१०॥

हे जातवेदो जातप्रज्ञाग्ने हुवानोऽस्माभिराहूयमानः सन् विश्वान्मरुतः सर्वानपि स्तोत्रभाजो हविर्भाजश्च देवान् नामभिरिंद्रवरुणेत्यादिलक्षणैरा वक्षि । आवहसि । रूपेभिः सहस्राक्षवज्रहस्तत्वादिलक्षणैः रूपैरा वक्षि । वहसि यज्ञं । किंच हे मरुतो विश्वे सर्वे यूयं यज्ञमस्मदीयं यज्ञसंबंधि हविर्वा जरितुः स्तोतुः संबंधिनीर्गिरः स्तुतिवचांसि सुष्टुतिं तत्साध्यां शोभनफलां स्तुतिं च ॥ अवयविन्याः स्तुतेरेकत्वादेकवचनं । अवयवानां बहुत्वाद्बहुवचनं ॥ उक्तं यज्ञस्तुती अभिलक्ष्य गंत । आगच्छत । विश्वे च यूयमूती ऊत्या रक्षया च सह गत ॥ ॥२१॥

आ नो दिव इत्येकादशी व्यूढे दशरात्रे नवमेऽहनि प्रउगशस्त्रे सारस्वततृचे द्वितीया । सूत्रितं च । आ नो दिवो बृहतः पर्वतादा सरस्वत्यभि नो नेषि वस्यः । आ० ८. ११ । इति ॥

आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गंतु यज्ञं ।
हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥११॥

आ । नः । दिवः । बृहतः । पर्वतात् । आ । सरस्वती । यजता । गंतु । यज्ञं ।
हवं । देवी । जुजुषाणा । घृताची । शग्मां । नः । वाचं । उशती । शृणोतु ॥११॥

नोऽस्माकं यज्ञं यजता यष्टव्या देवी सरस्वती दिवो द्योतमानाद्द्युलोकादा गंतु । आगच्छतु । तथा बृहतो महतः पर्वतात्पर्ववतः पूरणवतः प्रीणनवतो वांतरिक्षान्मेघाद्वा सरस्वत्या गंतु । आगच्छतु । अनेन माध्यमिकी वागुच्यते । यद्वैतद्दिव इत्यस्य विशेषणं । संति हि द्युलोकस्य त्रीणि पर्वाणि तिस्रो दिवः पृथिवीरित्यादि श्रुतेः । अस्मिन्पक्षे द्वितीय आकारः पूरणः । तदर्थं हवमस्मदीयमाह्वानं देवी सरस्वती जुजुषाणा स्तुतिं सेवमाना घृताची घृतमुदकमंचती नोऽस्मदीयां शग्मां सुखकरीं वाचं स्तुतिमुशती कामयमाना सती शृणोतु ॥

आ वेधसं नीलपृष्ठं बृहंतं बृहस्पतिं सदने सादयध्वं ।
सादद्योनिं दम आ दीदिवांसं हिरण्यवर्णमरुषं सपेम ॥१२॥

आ । वेधसं । नीलऽपृष्ठं । बृहंतं । बृहस्पतिं । सदने । सादयध्वं ।
सादतऽयोनिं । दमे । आ । दीदिऽवांसं । हिरण्यऽवर्णं । अरुषं । सपेम ॥१२॥

एषा बार्हस्पत्या । हे ऋत्विजो यूयं बृहस्पतिं बृहतो मंत्रस्य स्वामिनं देवं सदनेऽस्मद्यागगृह आ सादयध्वं । स्थापयध्वं । कीदृशं देवं । वेधसं विविधकर्तारं नीलपृष्ठं स्निग्धांगं बृहंतं महांतं । तथा संतं वयमृत्विग्यजमानाः सपेम । परिचरेम । स एव विशेष्यते । सादद्योनिं योनौ सीदंतं दमे यागगृह आ सर्वतो दीदिवांसं दीप्यमानं हिरण्यवर्णमरुषमारोचमानं । अथर्वयमाग्नेयी । बृहतः परिवृढस्य कर्मणः स्वामीति बृहस्पतिरग्निरुच्यते । तथा नीलवर्णधूमपृष्ठत्वसदनसादनहिरण्यवर्णत्वादिलिंगैरप्यग्निरेव बृहस्पतिः ॥

आ धर्णसिर्बृहद्दिवो रराणो विश्वेभिर्गंत्वोमभिर्हुवानः ।
ग्ना वसान ओषधीरमृध्रस्त्रिधातुशृंगो वृषभो वयोधाः ॥१३॥

आ। धर्णसिः। बृहत्ऽदिवः। रराणः। विश्वेभिः। गंतु। ओमंऽभिः। हुवानः।
ग्नाः। वसानः। ओषधीः। अमृध्रः। त्रिधातुऽशृंगः। वृषभः। वयःऽधाः ॥१३॥

इदमाद्यृक्त्रयमाग्नेयं। अग्निः। गंतु आगच्छत्वस्मद्यज्ञं धर्णसिः सर्वस्य धारको बृहद्दिवः प्रभूतदीप्ती रराणो रममाणः कामान् प्रयच्छन् आ विश्वेभिः सर्वैरोमभी रक्षणैः सह हुवान आह्वयमानः। ग्ना गत्रीर्ज्वाला ओषधीश्च वसानोऽमृध्रोऽहिंसितस्त्रिधातुशृंगस्त्रिप्रकारशृंगवदुन्नतज्वालो लोहितशुक्लकृष्णवर्णज्वालो वृषभो वर्षिता वयोधा अन्नस्य दाता हविषो वा धारकः ॥

मातुष्पदे परमे शुक्र आयोर्विपन्यवो रास्पिरासो अग्मन्।
सुशेव्यं नमसा रातहव्याः शिशुं मृजंत्यायवो न वासे ॥१४॥
मातुः। पदे। परमे। शुक्रे। आयोः। विपन्यवः। रास्पिरासः। अग्मन्।
सुऽशेव्यं। नमसा। रातऽहव्याः। शिशुं। मृजंति। आयवः। न। वासे ॥१४॥

आयोर्मनुष्यस्य यजमानस्य विपन्यवः। स्तोतृनामैतत्। स्तोतारो होत्रादयो रास्पिरास ॥ रा धन हविर्लक्षणं। तत्स्पृशंति रास्पा जुह्वादयः। तद्वान् रास्पी। तद्वंतो रास्पिराः ॥ उक्तविधा ऋत्विजो मातुर्निर्मातुः पृथिव्याः शुक्रे दीप्ते परमे पदे उत्तरवेद्या स्थितमग्मन्। अगमन्। भजंते। तदर्थं सुशेव्यं सुखाय हितं शिशुमुत्पन्नमात्रं वासे वासाय नमसा स्तोत्रेण रातहव्या दत्तहव्याः। हविष्का इत्यर्थः। तादृशाग्निं मृजंति। संमार्जयंति। तत्र दृष्टांतः। आयवो न लौकिका मनुष्या इव। ते यथा शिशुं वासाय मृजंति तद्वत् ॥

बृहद्वयो बृहते तुभ्यमग्ने धियाजुरो मिथुनासः सचंत।
देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात् ॥१५॥
बृहत्। वयः। बृहते। तुभ्यं। अग्ने। धियाऽजुरः। मिथुनासः। सचंत।
देवःऽदेवः। सुऽहवः। भूतु। मह्यं। मा। नः। माता। पृथिवी। दुःऽमतौ। धात् ॥१५॥

बृहत्प्रभूतं वयोऽन्नं हे अग्ने बृहते तुभ्यं धियाजुरः कर्मणा जीर्णा मिथुनासः पत्नीभिः सहिताः सचंत। सेवंते। जायापती अग्निमादधीयातामित्यादिश्रुतेः। आधिकाराध्याये षष्ठे स्त्रिया अप्यधिकारः स च पत्न्या संहति हि प्रतिपादितं। पू॰ मी॰ ६ १ २४। अवशिष्टं गतं ॥

उरौ देवा अनिबाधे स्याम ॥१६॥
उरौ। देवाः। अनिऽबाधे। स्याम ॥१६॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥१७॥
सं। अश्विनोः। अवसा। नूतनेन। मयःऽभुवा। सुऽप्रनीती। गमेम।
आ। नः। रयिं। वहतं। आ। उत। वीरान्। आ। विश्वानि। अमृता। सौभगानि ॥१७॥

व्याख्यातं द्वे ॥ ॥२२॥

तं प्रत्नथेति पंचदशर्चं द्वादशं सूक्तं। अवत्सारो नाम ऋषिः स च काश्यपगोत्रः। याभ्यृक्षु सदापृणबाहुवृक्तादयः श्रुतास्तासु तेऽपि समुच्चीयंते। चतुर्दशीपंचदश्यौ त्रिष्टुभौ शिष्टास्त्विष्टुबित्परिभाषया जगत्यः। विश्वे

देवा देवता। अनुक्रांतं च। तं प्रत्नथा पंचोना काश्यपोऽवत्सारोऽन्ये च ऋषयोऽच दृष्टलिंगा द्विविष्टुबंतमिति॥ वाजपेयेऽतिरिक्तोक्थ आदितस्त्रयोदशर्चः शंसनीयाः। सूत्रितं च। तं प्रत्नथेति त्रयोदशानामेकां शिष्टाह्वय दूरोहणं रोहेत। आ॰ ९. ९.। इति॥

तं प्र॒त्नथा॑ पू॒र्वथा॑ वि॒श्वथे॒मथा॑ ज्ये॒ष्ठता॑तिं बर्हि॒षदं॑ स्व॒र्विदं॑।
प्र॒ती॒ची॒नं वृ॒जनं॑ दोहसे गि॒राशुं जयं॑त॒मनु॒ यासु॒ वर्ध॑से॥१॥
तं। प्र॒त्नऽथा॑। पू॒र्वऽथा॑। वि॒श्वऽथा॑। इ॒मऽथा॑। ज्ये॒ष्ठऽता॑तिं। ब॒र्हि॒ऽसदं॑। स्वः॒ऽविदं॑।
प्र॒ती॒ची॒नं। वृ॒जनं॑। दो॒ह॒से॒। गि॒रा। आ॒शुं। जयं॑तं। अनु॑। यासु॑। वर्ध॑से॥१॥

इयमुत्तरा च द्वे ऐंद्र्यावित्याहुः। तत्रोपपत्तिमेवाहुः। तं प्रत्नथेत्येषा शुक्रामंथिग्रहणे विनियुक्ता। ऐंद्रौ च शुक्रामंथिनौ। यदिंद्रं शंसति तेन शुक्रामंथिना उक्थवंतौ। ऐ॰ ब्रा॰ ३ १। इति हि ब्राह्मणं। अध्वर्युसंप्रैषोऽपि भवति। प्रातःप्रातः सवस्य शुक्रवतो मधुश्चुत इंद्राय सोमान्प्रस्थितान्प्रेष्य। शत॰ ब्रा॰ ४. २ १ २३.। इति। प्रशास्तृप्रैषश्च भवति। होता यक्षदिंद्रं प्रातः प्रातः सावस्य। आ॰ ५. ५.। इत्यादि। प्रस्थिता इंद्राय सोमा इति याज्या चैंद्री। इदं ते सोम्यं मधु। आ॰ ५. ५। इति। तस्मादैंद्री॥ तमिंद्रं प्रत्नथा पुरातना यजमाना इव पूर्वथास्मदीयाः पूर्वे यथा विश्वथा विश्वे सर्वे प्राणिनो यथेमथेम इदानीं वर्तमाना यजमानाः। ते यथेंद्रस्य स्तुत्या फलमलभंत तद्वदयमपि हे अंतरात्मन् त्वमपि ज्येष्ठतातिं ज्येष्ठं बर्हिषदं बर्हिषि सीदंतं स्वर्विदं सर्वज्ञं सर्वस्य लंभयितारं वा प्रतीचीनं प्रत्यस्मदभिमुखमंचतं वृजनं। बलनामैतद्बलवति वर्तते। बलवंतमाशुं शीघ्रगामिनं व्याप्तं वा जयंतं सर्वमभिभवंतमिंद्रं गिरा स्तुत्या साधनेन दोहसे। धुक्ष्व सर्वदा सर्वान् कामान्। इत्यंतरात्मनः प्रैषः। यासु स्तुतिषु वर्धसे प्रवृद्धो भवसि वर्धयसि वेंद्रं यया स्तुत्येति। भास्विति व्यत्ययेन बहुवचनं॥

श्रि॒ये सु॒दृशी॑रु॒पर॑स्य॒ याः स्व॑र्वि॒रोच॑मानः क॒कुभा॑मचो॒दते॑।
सु॒गो॒पा अ॑सि॒ न दभा॑य सुक्रतो प॒रो मा॒याभि॑र्ऋ॒त आ॑स॒ नाम॑ ते॥२॥
श्रि॒ये। सु॒ऽदृशीः॑। उ॒पर॑स्य। याः। स्वः॑। वि॒ऽरोच॑मानः। क॒कुभा॑ं। अ॒चो॒दते॑।
सु॒ऽगो॒पाः। अ॒सि॒। न। दभा॑य। सु॒क्र॒तो॒ इति॑ सुऽक्रतो। प॒रः। मा॒याभिः॑। ऋ॒ते।
आ॒स॒। नाम॑। ते॒॥२॥

हे इंद्र स्वः स्वर्गे विरोचमानस्त्वमचोदतेऽप्रेरयितुः॥ षष्ठ्यर्थे चतुर्थी॥ उपरस्य मेघस्य संबंधिन्यः सुदृशीः सुरोचमाना या आपः संति तासामपां ककुभां सर्वासां दिशां मध्ये श्रिये प्राणिनां श्रयणाय प्रेरको भवति शेषः। हे सुक्रतो शोभनवृष्टिप्रदानादिकर्मकेंद्र त्वं सुगोपाः प्राणिनां सुष्ठु गोपायितासि। अतो न दभाय न दभनाय वधाय प्राणिनां नासि। न प्रभवसि। त्वं च मायाभिरासुरीभिः परो मायाभ्यः परस्ताद्वर्तमानः। यस्मात्ते त्वदीयं नाम नामकं रूपमृते सत्यलोक आस आस्ते॥

अत्यं॑ ह॒विः स॑चते॒ सच्च॒ धातु॒ चारि॑ष्टगातुः॒ स होता॑ सहो॒भरिः॑।
प्र॒स॒र्स्रा॒णो॒ अनु॑ ब॒र्हिर्वृषा॒ शिशु॑र्म॒ध्ये॑ युवा॒जरो॑ वि॒स्रुहा॑ हि॒तः॥३॥
अत्यं॑। ह॒विः। स॒च॒ते॒। सत्। च॒। धातु॑। च॒। अरि॑ष्टऽगातुः। सः। होता॑। स॒हः॒ऽभरिः॑।
प्र॒ऽस॒र्स्रा॒णः। अनु॑। ब॒र्हिः। वृषा॑। शिशुः॑। म॒ध्ये॑। युवा॑। अ॒जरः॑। वि॒ऽस्रुहा॑। हि॒तः॥३॥

इयमाग्नेयी होतृत्वयुवत्वादिलिंगैः। अयमग्निरत्यं सततमतनार्हं हविराज्यादिकं सचते। सेवते। कीदृशं हविः। सत। सत्फलसाधनत्वाद्धविरपि सत्। धातृ च धारकं सर्वस्य। हूयमानस्य हविष आदित्यद्वारा वृष्टिसाधनत्वात् तया च वृष्ट्या प्रजोत्पत्तेर्धारकत्वं। तथा हि। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः। मनु॰ ३ ७६। इति। अरिष्टगातुरहिंसितगमनः। सति तस्य गमने यज्ञनिष्पत्त्या फलसिद्धेररिष्टगमनत्वं। तदेवाह। स खलु होता होमनिष्पादकः सहोभरिर्बलस्य भर्ता बर्हिरन् प्रसर्स्राणः प्रकर्षेण सरन् वृषा वर्षकः फलस्य शिशुः स इव रक्षणीयोऽप्रौढो वा युवा सर्वत्र मिश्रयिताजरो जरारहितो विरुहां विरूहाणामोषधीनां मध्ये हितो निहितः स्थापितः। एवंभूतः सचते॥

प्र वं एते सुयुजो यामन्निष्टये नीचीरमुष्मै यम्य ऋतावृधः।
सुयंतुभिः सर्वशासैरभीशुभिः क्रिविर्नामानि प्रवणे मुषायति॥४॥

प्र। वः। एते। सुऽयुजः। यामन्। इष्टये। नीचीः। अमुष्मै। यम्यः। ऋतऽवृधः।
सुयंतुऽभिः। सर्वऽशासैः। अभीशुऽभिः। क्रिविः। नामानि। प्रवणे। मुषायति॥४॥

एषा सौरी वा। एते रश्मयः सुयुजः सुष्ठु परस्परं संयुक्ता यामन्यज्ञगमने इष्टय एषणाय नीचीः। नीचं गच्छंतीति शेषः। अमुष्मै यजमानाय यम्यो यम्या गमनार्हाः। अथवा यमो नियमितादित्यः। तस्य सबाधिनः। ऋतावृधो यज्ञस्य वर्धयितारश्च। अयमादित्यः सुयंतृभिः सुगमनैः सर्वशासैः सर्वस्य शासकैरभीशुभी रश्मिभिः क्रिविः कर्ता नामानि नामकान्युदकानि प्रवणे निम्ने भूप्रदेशे मुषायति। मुष्णाति। आदत्त इत्यर्थः। अथवा प्रिनावाह्यस्याग्नेरेतेऽश्वा इष्टये यज्ञगमनाय यामनि रथे सुयुजः प्रगच्छंति। शिष्टं समानं। क्रिविः क्रिविम दृशोऽग्निः प्रवणे नामानि हवींष्युत्कलज्वालाभिर्ज्वालाभिर्मुषायति। आदत्ते॥

संजर्भुराणस्तरुभिः सुतेगृभं वयाकिनं चित्तगर्भासु सुस्वरुः।
धारवाकेष्वृजुगाथ शोभसे वर्धस्व पत्नीरभि जीवो अध्वरे॥५॥

संऽजर्भुराणः। तरुऽभिः। सुतेऽगृभं। वयाकिनं। चित्तऽगर्भासु। सुऽस्वरुः।
धारऽवाकेषु। ऋजुऽगाथ। शोभसे। वर्धस्व। पत्नीः। अभि। जीवः। अध्वरे॥५॥

हे ऋजुगाथ शोभनस्तुतिकाग्ने तरुभिस्तरुविकारैर्ग्रहैः सुतेगृभमभिषुतेन रसेन गृहीतं वयाकिनं। कुत्सिता वयाः शाखा वयाका लताः। तद्वंतं सोमं चित्तगर्भासु चित्तयाहिणीषु स्तुतिषु स्तुतिभिः सह संजर्भुराणो गृभ्णान गृह्णन् सुस्वरुः शोभनगमनः शोभनस्तुतिको वा त्वं धारवाकेषु। धारयंति वाकान् स्तोत्राणीति धारवाका ऋत्विग्यजमानाः। तेषु मध्ये शोभसे। किंचाध्वरे जीवः सर्वस्य जीवयिता पत्नीः पालयित्रीरोषधीर्ज्वाला वा अभि अभिमुखं वर्धस्व। अभिवर्धय॥ ॥२३॥

यादृगेव ददृशे तादृगुच्यते सं छायया दधिरे सिध्रयाप्स्वा।
महीमस्मभ्यमुरुषामुरु ज्रयो बृहत्सुवीरमनपच्युतं सहः॥६॥

यादृक्। एव। ददृशे। तादृक्। उच्यते। सं। छायया। दधिरे। सिध्रया। अप्ऽसु। आ।
महीं। अस्मभ्यं। उरुऽसां। उरु। ज्रयः। बृहत्। सुऽवीरं। अनपऽच्युतं। सहः॥६॥

एषा वैश्वदेवी। यादृगेव ददृशे यादृग्रूपमेव दृश्यते तादृगुच्यते। तादृग्रूपमेवोच्यते। यथादृष्टमेव स्तूयते न तु परवचनप्रत्ययेन। यस्माच्छायया दीप्त्या सिध्रया साधिकया महाप्सु व्यापिकासु स्तुतिषु अप्स्विव वा आ सं दधिरे सम्यग्धारयंति स्वीय रूपं स्तुतिं वा। ते देवा महीं महतीं पृथ्वीमुरुषां बहुदात्रीं रयिमुरु प्रभूतं ज्रयो वेगं बृहन्महत्सुवीरं शोभनवीर्यमपत्यमनपच्युतमनुपक्षीणं सहो बलं चाभिभावुकमस्मभ्यं प्रयच्छंत्वित्यर्थः॥

वेत्यग्रुर्जनिवान्वा अति स्पृधः समर्यता मनसा सूर्यः कविः ।
घ्रंसं रक्षंतं परि विश्वतो गयमस्माकं शर्म वनवत्स्वावसुः ॥७॥
वेति । अग्रुः । जनिऽवान् । वै । अति । स्पृधः । सऽमर्यता । मनसा । सूर्यः । कविः ।
घ्रंसं । रक्षंतं । परि । विश्वतः । गयं । अस्माकं । शर्म । वनवत् । स्वऽवसुः ॥७॥

इयं सौरी । सूर्यो देवोऽग्रुरग्रगामी जनिवान्वै जन्मवान् जायावान्वा । उषा ह्यस्य जाया । वा इति प्रसिद्धौ । कविः क्रांतदर्शी समर्यता समरमिच्छता मनसा स्पृधः संग्रामानति वेति । अतिगच्छति मंदेहानसुरान्योद्धुं । घ्रंसं दीप्तं गयं गृहमंतरिक्षं वा विश्वतः सर्वतो रक्षंतं । परिचरमिति शेषः । स देवोऽस्माकं शर्म सुखं परि सम्यग्वनवत् । दद्यात् । स्वावसुः स्वायत्तधनः सन् ॥

ज्यायांसमस्य यतुनस्य केतुन ऋषिस्वरं चरति यासु नाम ते ।
यादृश्मिन्धायि तमपस्यया विदद्य उ स्वयं वहते सो अरं करत् ॥८॥
ज्यायांसं । अस्य । यतुनस्य । केतुना । ऋषिऽस्वरं । चरति । यासु । नाम । ते ।
यादृश्मिन् । धायि । तं । अपस्यया । विदत् । यः । ऊं इति । स्वयं । वहते । सः ।
अरं । करत् ॥८॥

इयमाग्नेयी सौरी वा । हे देव ज्यायासमतिशयेन प्रवृद्धमस्य यतुनस्य । यततिर्गतिकर्मा । गंतुरस्य सूर्यस्य ॥ कर्मणि षष्ठी ॥ अमुं गंतारं केतुना प्रज्ञापकेन कर्मणोदयादिलक्षणेन विशिष्टमृषिस्वरमृषिभिः स्तुत्यं त्वां चरति । गच्छति । भजते यजमानः । केन साधनेन । यासु स्तुतिषु ते त्वदीयं नाम नमनं नामकं वा रूपं वर्तते ताभिरित्यर्थः । यद्वा । अस्य यतुनस्य गमनशीलस्य तव केतुना तमोनिर्हरणादिकर्मणा विशिष्टं त्वा चरति । यादृश्मिन्यादृशे कामे धायि धत्ते ॥ कर्तरि चिण् ॥ सामर्थ्यान्मनो गम्यते । तं । यथानिर्देशं प्रतिनिर्दिष्टव्यत्वात्तादृशमित्यर्थो ज्ञातव्यः । तादृशं काममपस्यया कर्मणा हविःस्तुत्यादिलक्षणेन विदत् । विंदते । य उ य एव स्वयमनन्यप्रेरितः सन् स्वमनीषयैव वहते धारयति फलं सोऽरमलमत्यर्थं करत् । करोति । अथवा य उ य एव स्वयं वहते स्वयमेवानुतिष्ठति सोऽत्यर्थं कुर्यात् । न ह्यन्येन कारितं फलवद्भवति ॥

समुद्रमासामव तस्थे अग्रिमा न रिष्यति सवनं यस्मिन्नायता ।
अत्रा न हार्दि क्रवणस्य रेजते यत्रा मतिर्विद्यते पूतबंधनी ॥९॥
समुद्रं । आसां । अव । तस्थे । अग्रिमा । न । रिष्यति । सवनं । यस्मिन् । आऽयता ।
अत्र । न । हार्दि । क्रवणस्य । रेजते । यत्र । मतिः । विद्यते । पूतऽबंधनी ॥९॥

इयमपि सौरी । आसां स्तुतीनां समुद्रं समुद्रवत्पर्यवमानभूतं सूर्यमग्रिमात्यंत श्रेष्ठास्मदीया स्तुतिरव तस्थे । अवगच्छति । यद्वा । आसां प्रजानामृत्विजां स्तुतिरिति संबंधः । सवनं । सूयते सोमोऽत्रेति सवनं यज्ञगृहं । न रिष्यति । न हिंस्यते । किंतु प्रवर्धत इत्यर्थः । यस्मिन्नायता विस्तीर्णानि स्तोत्राणि तत्सवनमिति । अत्रास्मिन्यजमानगृहे क्रवणस्य स्तुतिकर्तुर्हार्दि हृदयसंबंधि हृदयगतं काम्यं फलं न रेजते । न विचलति । न मृषा भवति । यत्र यस्मिन् स्तोतृगृहे मतिः स्तुतिः पूतबंधनी पूतं सूर्यमनुबध्नती विद्यते अत्र न रेजत इति ॥

स हि क्षत्रस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रेः ।
अवत्सारस्य स्पृणवाम रण्वभिः शविष्ठं वाजं विदुषा चिदर्ध्यं ॥१०॥

सः । हि । क्षत्रस्य॑ । मनसस्य॑ । चित्ति॑ऽभिः । एवऽवदस्य॑ । यजतस्य॑ । सध्रेः॑ ।
अवऽत्सारस्य॑ । स्पृणवाम । रण्व॑ऽभिः । शविष्ठं॑ । वाजं॑ । विदुषा॑ । चित् । अर्ध्यं॑ ॥१०॥

इयमपि सौरी । स हि स खलु सविता देवः सर्वैः स्तुत्यः । सर्वकामपूरक इत्यर्थः । हिशब्दो लोकवेदयोः प्रसिद्धिद्योतकः । तस्मात्सकाशात् । अत्रान्ये च ऋषयोऽत्र दृष्टलिंगा इत्युक्तत्वात् क्षत्रादय ऋषयः । क्षत्रस्य मनसस्यैवावदस्य यजतस्य सध्रेरवत्सारस्य चैषामृषीणामस्माकं रण्वभी रमणीयाभिश्चित्तिभिः स्पृणवाम । पूरयाम । किं । शविष्ठं बाजमतिशयेन बलवदन्नं । अन्नं वै वाज इति श्रुतेः । विदुषा चिद्विदुषाश्चितार्ध्यं समर्धनीयं स्पृणवाम । क्षत्रादयो वयमिति संबंधः ॥ ॥२४॥

श्येन आसामदितिः कक्ष्यो३मदो विश्ववारस्य यजतस्य मायिनः ।
सम॒न्यम॑न्यमर्थयंत्येतवे विदुर्विषाणं परिपानमंति ते ॥११॥

श्येनः । आसां । अदितिः । कक्ष्यः॑ । मदः॑ । विश्वऽवारस्य । यजतस्य॑ । मायिनः॑ ।
सं । अन्यंऽअन्यं । अर्थयंति । एतवे । विदुः । विऽसानं॑ । परिऽपानं॑ । अंति॑ । ते ॥११॥

मददेवत्येयं । विश्ववारादीनां त्रयाणामृषीणां स्वभूत आसामपां सोमरसलक्षणानां मदः श्येनः शंसनीयगमनः शीघ्रं पात्रसकाशं गतादितिरदीनोऽतिसमृद्धः कक्ष्यः कक्ष्यपूरकश्च भवतीति शेषः । ते विश्ववारादयः सत्रे प्रवृत्ता एतवे सोमं प्राप्तुं तत्पानायान्यमन्यं परस्परं समर्थयंति । याचंतेऽनुज्ञां । ते विषाणं विशेषेण मदस्य दातारं परिपानमत्यंतिके विदुः । जानंति लभंते वा ॥

सदापृणो यजतो वि द्विषो वधीद्वाहुवृक्तः श्रुतवित्तर्यो वः सचा ।
उभा स वरा प्रत्येति भाति च यदीं गणं भजते सुप्रयावभिः ॥१२॥

सदाऽपृणः । यजतः । वि । द्विषः॑ । वधीत । बाहुऽवृक्तः । श्रुतऽवित । तर्यः॑ । वः । सचा॑ ।
उभा । सः । वरा॑ । प्रति॑ । एति । भाति॑ । च । यत । ईं । गणं॑ । भजते । सुप्रयाव॑ऽभिः ॥१२॥

सदापृणः सर्वदा दानशील एतन्नामा यजतो यष्टा च बाहुवृक्तो बाहुभ्यां वृक्तदर्भश्च श्रुतवित् श्रुतस्य वेत्ता च तर्यश्च । एतेषां पंचानां परस्परापेक्षया प्रत्येकमेकवचनं । स स ऋषिर्द्विषः शत्रून् वधीत् हिंस्यात् वो युष्माकं सचा सहितः । युष्माभिः सहित इत्यर्थः । स ऋषिर्वरा श्रेष्ठावुभौ ऐहिकपारलौकिकविषयौ कामौ प्रत्येति । अभिगच्छति । भाति च । यद्यस्मादीमेनं गणं देवसंघं सुप्रयावभिः सुष्ठु प्रकर्षेण मिश्रयितृभिः सोमैर्भजते तस्मादेव भातीति ॥

सुतंभरो यजमानस्य सत्पतिर्विश्वासामूधः स धियामुदंचनः ।
भरद्धेनू रसवच्छिश्रिये पयोऽनुब्रुवाणो अध्येति न स्वपन् ॥१३॥

सुतंऽभरः । यजमानस्य । सतऽपतिः । विश्वासां । ऊधः । सः । धियां । उतऽअंचनः ।
भरत् । धेनुः । रसऽवत् । शिश्रिये । पयः । अनुऽब्रुवाणः । अधि । एति । न । स्वपन् ॥१३॥

यजमानस्यावत्सारस्य मम सुतंभरो यागनिर्वाहक एतन्नामा ऋषिः सत्पतिः सतां विद्यमानानां फलानां पालयिता होता भवतीत्यर्थः । स च विश्वासां धियां सर्वेषां कर्मणामूधः उद्धततरं फलमुदंचनः ऊर्ध्वमुन्नमयिता । फलप्रापक इत्यर्थः । धेनुर्गौ रसवत्सारवत्पयो भरत् । अहरत् । तत्पयः शिश्रिये । श्रयति चास्य सामर्थ्यात् । तत्सर्वमनुब्रुवाणोऽनुक्रमेण संकीर्तयन् न स्वपन् स्वापमकुर्वन् अनवरतमध्येति । स्मरत्यवत्सारः । सुतंभरस्तादृश इति ॥

यो जागार तमृचः कामयंते यो जागार तमु सामानि यंति ।
यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥१४॥
यः । जागार । तं । ऋचः । कामयंते । यः । जागार । तं । ऊं इति । सामानि । यंति ।
यः । जागार । तं । अयं । सोमः । आह । तव । अहं । अस्मि । सख्ये । निऽओकाः ॥१४॥

यो देवो जागार सर्वदा विनिद्रो जागरूको गृहे वर्तते तमृचः सर्वशास्त्रात्मिकाः कामयंते । यश्च जागार तमु तमेव सामानि स्तोत्ररूपाणि यंति । प्राप्नुवंति । यो जागार तमयमभिषुतः सोम आह वक्ति मां स्वीकुर्विति । हे अग्ने तादृशस्य तव सख्ये समानख्याने हितकरणे न्योका नियतस्थानोऽहमस्मि । भवामि ॥

अग्निर्जागार तमृचः कामयंतेऽग्निर्जागार तमु सामानि यंति ।
अग्निर्जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥१५॥
अग्निः । जागार । तं । ऋचः । कामयंते । अग्निः । जागार । तं । ऊं इति । सामानि । यंति ।
अग्निः । जागार । तं । अयं । सोमः । आह । तव । अहं । अस्मि । सख्ये । निऽओकाः ॥१५॥

पूर्वयैव निगदितव्याख्या । य इत्यस्य स्थानेऽग्निरिति विशेषः ॥ ॥२५॥ ॥३॥

अथ चतुर्थेऽनुवाके द्वादश सूक्तानि । तत्र विदा दिव इत्येकादशर्चं प्रथमं सूक्तं । सदापृणो नामात्रेय ऋषिः । त्रिष्टुप् छंदः । वै तदित्युक्तत्वादिदमपि वैश्वदेवं । विदा एकादश सदापृण इत्यनुक्रमणिका । विनियोगो लैंगिकः ॥

विदा दिवो विष्यन्नद्रिमुक्थैरायत्या उषसो अर्चिनो गुः ।
अपावृत व्रजिनीरुत्स्वर्गाद्वि दुरो मानुषीर्देव आवः ॥१॥
विदाः । दिवः । विऽस्यन । अद्रिं । उक्थैः । आऽयत्याः । उषसः । अर्चिनः । गुः ।
अप । अवृत । व्रजिनीः । उत । स्वः । गात । वि । दुरः । मानुषीः । देवः । आवरित्यावः ॥१॥

अत्रेंद्रादयो लिंगोक्तदेवताः । अत्रांगिरसा पणिभिरपहृत्य गिरेरधः स्थापितानां गवामिंद्रेण विमोक्षः प्रतिपाद्यते । विदाः । अविदद्यदिंद्रः । किं । गा निगूढा इति संबंधः । किं कुर्वन् । उक्थैरंगिरसां स्तुतिभिर्निमित्तभूताभिरद्रिं वज्रं विष्यन् प्रक्षिपन् । रक्षकाणामुपरि गिरिभेदनाय च विष्यन् । आयत्या आगामिन्या उषसः संबंधिनोऽर्चिनो रश्मयो गुः । अगच्छन् । सर्वत्र प्रसृता अभवन् । अपावृत अपावृणोद्व्रजिनीस्तमःपुंजवतीर्निशाः । स्वः स्वरणशील आदित्य उद्गात । उदगात । तथा कृत्वा मानुषीर्मनुष्यसंबंधिनीर्दुरो द्वाराणि देवः सूर्यो व्यावः । व्यवृणोत् । अंधकारापनयनेन मनुष्यादिव्यवहारायाकरोदित्यर्थः ॥

वि सूर्यो अमतिं न श्रियं सादोर्वाद्गवां माता जानती गात् ।
धन्वर्णसो नद्य१ः खादोअर्णाः स्थूणेव सुमिता दृंहत द्यौः ॥२॥
वि । सूर्यः । अमतिं । न । श्रियं । सात् । आ । ऊर्वात् । गवां । माता । जानती । गात् ।
धन्वऽअर्णसः । नद्यः । खादःऽअर्णाः । स्थूणाऽइव । सुऽमिता । दृंहत । द्यौः ॥२॥

सूर्यो देवः श्रियं दीप्तिं वि सात । विभजते । प्रकाशयतीत्यर्थः । अमतिं न । रूपनामैतत् । रूपमिव द्रव्यं । यथा द्रव्याणि घटपटादीनि नीलपीतादिरूपं लभंते तद्वत् । तथा गवां रश्मीनां मातोषा जानती सूर्य

उदेष्यति मया च व्युच्छनं कर्तव्यमिति जानत्यूर्वान्महतोऽंतरिक्षादा गात। आगच्छति। तथा नद्यश्च धन्वर्णसः॥ धन्वतिर्गतिकर्मा। धन्वंति गच्छंत्यर्णांसि यासु तास्तथोक्ताः। दीर्घाभावश्छांदसः॥ खादोअर्णा भक्षितकूलोदकाः। कूलंकषा इत्यर्थः। चर्यश्चैवंरूपा भवति। किंच द्यौश्च सुमिता सुष्ठु गृहे स्थापिता स्थूणेव गृहाधारस्तंभ इव दृंहत। दृढाभवत। एतत्सर्वं सूर्यस्यागच्छतीति भावः॥

अस्मा उक्थाय पर्वतस्य गर्भो महीनां जनुषे पूर्व्याय।

वि पर्वता जिहीत साधत द्यौराविवासंतो दसयंत भूम ॥३॥

अस्मै। उक्थाय। पर्वतस्य। गर्भः। महीनां। जनुषे। पूर्व्याय।

वि। पर्वतः। जिहीत। साधत। द्यौः। आऽविवासंतः। दसयंत। भूम ॥३॥

अस्मै मह्यमुक्थाय स्तोत्रे पर्वतस्य पर्ववतो मेघस्य गर्भो गर्भस्थानीयमुदकं जिहीते। गच्छति। चालयति वेंद्रः। कीदृशायास्मै। महीनां महतीनां स्तुतीनां जनुषे उत्पादयित्रे पूर्व्याय प्रत्नाय। तदेव पुनरुच्यते। पर्वतो मेघो वि जिहीत। द्यौश्च साधत। साधयति वृष्टिं। आविवासंतः सर्वतः परिचरंतोऽंगिरसो भूमात्यधिक दसयंत। उपक्षपयंत्यात्मानं कर्मभिः॥

सूक्तेभिर्वो वचोभिर्देवजुष्टैरिंद्रा न्व१ग्नी अवसे हुवध्यै।

उक्थेभिर्हि ष्मा कवयः सुयज्ञा आविवासंतो मरुतो यजंति ॥४॥

सुऽउक्तेभिः। वः। वचःऽभिः। देवऽजुष्टैः। इंद्रा। नु। अग्नी इति। अवसे। हुवध्यै।

उक्थेभिः। हि। स्म। कवयः। सुऽयज्ञाः। आऽविवासंतः। मरुतः। यजंति ॥४॥

हे इंद्रा हे अग्नी॥ परस्परापेक्षया प्रत्येकं द्विवचनं। यद्यप्येकमेव पदं मध्ये व्यवधानं छांदसं॥ हे इंद्राग्नी वो युवां॥ व्यत्ययेन बहुवचनं॥ देवजुष्टैर्देवैः सेवनीयैः सूक्तेभिः सूक्तैः सुवचनैः शोभनगुणप्रकाशनप्रवणैर्वचोभिरवसेऽस्मद्रक्षणाय हुवध्यै। आह्वयामि। नु क्षिप्रं युवामुक्थेभिः स्तोत्रैः कवयोऽनूचानाः पर्वं ऋषयः सुयज्ञाः शोभनयागा आविवासंतः स्तुत्यादिना परिचरंतो मरुतो मरुत्सदृशाः कर्मसु शीघ्रा यजंति। पूजयंति॥ हि स्मेति पूरणौ॥

एतो न्व१द्य सुध्यो३भवाम प्र दुच्छुना मिनवामा वरीयः।

आरे द्वेषांसि सनुतर्दधामायाम प्रांचो यजमानमच्छ ॥५॥

एतो इति। नु। अद्य। सुऽध्यः। भवाम। प्र। दुच्छुनाः। मिनवाम। वरीयः।

आरे। द्वेषांसि। सनुतः। दधाम। अयाम। प्रांचः। यजमानं। अच्छ ॥५॥

अयमंगिरसां वादः। अद्यास्मिन्यागदिने नु क्षिप्रमेतो। एत। गच्छत। सुध्यः शोभनकर्माणो भवाम। दुच्छुना द्विषः प्र मिनवाम। प्रकर्षेण हिंसाम वरीयः। अत्यंतमित्यर्थः। तदेवोच्यते। सनुतः सर्वतः द्वेषांसि यजमानस्य द्वेष्टॄणामारे दूरे दधाम। स्थापयाम। यद्वा। सनुतरित्यंतर्हितनाम। पूर्वं प्रकाशवैरिणां वध उक्त इदानीं प्रच्छन्नानामिति विवेकः। तदर्थं यजमानं प्राचः सदापूर्णमस्मात्स्थानाच्चाच्छाभिमुखमयाम। गच्छाम॥ ॥२६॥

एता धियं कृणवामा सखायोऽप या माताँ ऋणुत व्रजं गोः।

यया मनुर्विशिशिप्रं जिगाय यया वणिग्वंकुरापा पुरीषं ॥६॥

आ । इत । धियं । कृणवाम । सखायः । अप । या । माता । ऋणुत । व्रजं । गोः ।
यया । मनुः । विशिऽशिप्रं । जिगाय । यया । वणिक् । वंकुः । आप । पुरीषं ॥६॥

इदमप्यंगिरसां वाक्यं । एत । आगच्छत । आगत्य च धियं स्तुतिं कृणवाम । करवाम । हे सखायः परस्परं सखिभूता अंगिरस इत्यंगिरसां वचनं । या धीर्माता गवां निर्मात्री गोर्गवां व्रजं पणिभिरपहृतमप ऋणुत अपावृणोत । यया च मनुर्विशिशिप्रं विगतहनुं शत्रुं जिगाय जितवान । यद्वा । मनुः सर्वस्य मंतेंद्रो विशिशिप्रो वृत्रः । स तमस्माभिः कृतया स्तोमलक्षणया धिया जिगाय । यया च वणिक् वणिगिवान्येन कर्मणा बहुफलाकांक्षी कक्षीवान वंकुर्जलेच्छया वनगामी पुरीषं पुरकमुदकमाप । याभिः सुदासं औशिजाय वणिजे दीर्घश्रवसे मधु कोशः । ऋग्वे० १. ११२ ११. । इति हि श्रुतं ॥

अनूनोदत्र हस्तयतो अद्रिरार्चन्येन दश मासो नवग्वाः ।
ऋतं यती सरमा गा अविंदद्विश्वानि सत्यांगिराश्चकार ॥७॥
अनूनोत । अत्र । हस्तऽयतः । अद्रिः । आर्चन् । येन । दश । मासः । नवऽग्वाः ।
ऋतं । यती । सरमा । गाः । अविंदत । विश्वानि । सत्या । अंगिराः । चकार ॥७॥

अत्रास्मिन्यज्ञेऽद्रिरभिषवग्रावा हस्तयतो हस्तेन संहतः सन् अनूनोत । नोतिरत्र शब्दमात्रे वर्तते । अशब्दयत । येन ग्राव्णा तदभिषवेण दश मासो मासान दशमासपर्यंत नवग्वाः । नवमासपर्यंतं गवार्थमनुतिष्ठंतोऽंगिरसो नवग्वाः । नवगोयुक्ता वार्चन अपूजयन्निंद्रं । यद्वा । दशसंख्याकमासोपेता दशमासानुष्ठाना अंगिरसोऽपरं नवग्वाश्चेति सर्वेऽपि येनार्चंति । नवग्वासः सुतसोमास इंद्रं । ऋग्वे० ५. २९ १२. । इति हि निगमः । ऋतं सत्यं यज्ञं वा यती प्राप्नुवती सरमा सरणशीला स्तुतिरूपा वागंगिरसां गवार्थमिंद्रेण प्रहिता देवशुनी वा गा अविदत पणिभिरपहृताः । विश्वानि सर्वाणि स्तुत्यादिलक्षणानि सत्या सत्यानि चकारांगिराः ॥

विश्वे अस्या व्युषि माहिनायाः सं यद्गोभिरंगिरसो नवंत ।
उत्स आसां परमे सधस्थ ऋतस्य पथा सरमा विदद्गाः ॥८॥
विश्वे । अस्याः । विऽउषि । माहिनायाः । सं । यत् । गोभिः । अंगिरसः । नवंत ।
उत्सः । आसां । परमे । सधऽस्थे । ऋतस्य । पथा । सरमा । विदत् । गाः ॥८॥

विश्वे सर्वेऽंगिरसो माहिनाया महनीयाया अस्या उषसो व्युषि व्युच्छने सति गवामावरकेऽंधकारेऽपवृत्ते सति यद्यदा गोभिः सं नवंत संजग्मिरे तदासां गवामुत्सः क्षीराद्युत्स्रावः परमे उत्कृष्टे सधस्थे सहस्थाने यज्ञ उपयुक्तोऽभवदित्यर्थः । ऋतस्य सत्यस्य पथा मार्गेण सरमा वाक् देवशुनी वा गा निगूढा विदत । अलभत । यद्वा । आसां गवां परमे सधस्थे सहस्थाने व्रजस्य निगूहनप्रदेश उत्स उदकस्य प्रस्रवणो वर्तते । बिलमित्यर्थः । तेन ऋतस्योदकस्य पथा मार्गेण सरमा गा विदत ॥

आ सूर्यो यातु सप्ताश्वः क्षेत्रं यदस्योर्विया दीर्घयाथे ।
रघुः श्येनः पतयदंधो अच्छा युवा कविर्दीदयद्गोषु गच्छन् ॥९॥
आ । सूर्यः । यातु । सप्तऽअश्वः । क्षेत्रं । यत् । अस्य । उर्विया । दीर्घऽयाथे ।
रघुः । श्येनः । पतयत् । अंधः । अच्छ । युवा । कविः । दीदयत् । गोषु । गच्छन् ॥९॥

सूर्यः सर्वस्य प्रेरको देवः सप्ताश्वः सर्पणस्वभावाश्वोपेतः सप्तसंख्याकाश्वो वा आ यातु। अस्मदभिमुखमागच्छतु। यद्यस्मादस्य सूर्यस्य दीर्घयाथे दीर्घगमने चैत्र गन्तव्यप्रदेशं उर्व्योरु अतिप्रभूतायामः। स एव देवो रघुर्लघुगमनः सन् श्येनः शंसनीयगमनोऽधो दीयमानं हविरुद्दिश्याभिलक्ष्य पतयत्। आगच्छति। युवा सर्वत्र मिश्रयिता कविः क्रान्तदर्शी सन् गोषु रश्मिषु गच्छन्मध्ये वर्तयन् दीदयत्। दीप्यते। यद्वा। श्येनः सुपर्णोऽधोऽक्र पतयत्। द्युलोकस्थं सोमलक्षणं देवानामन्नमस्मद्यागार्थमानेतुं तदभिमुखमगात्। पूर्ववत्यादि शिष्टं समानं॥

आ सूर्यो अरुहच्छुक्रमर्णोऽयुक्त यद्धरितो वीतपृष्ठाः।
उद्ना न नावमनयंत धीरा आशृण्वतीरापो अर्वागतिष्ठन् ॥१०॥

आ। सूर्यः। अरुहत्। शुक्रं। अर्णः। अयुक्त। यत्। हरितः। वीतऽपृष्ठाः।
उद्ना। न। नावं। अनयंत। धीराः। आऽशृण्वतीः। आपः। अर्वाक्। अतिष्ठन् ॥१०॥

सूर्यो देवः शुक्रं दीप्तमर्णः उदकं प्रत्यारुहत्। सर्वतः प्रादुर्भवति। यद्यस्माद्यदा वा हरितोऽश्वान्वीतपृष्ठाः कान्तपृष्ठानयुक्त रथेऽयोजयत् तदा तं सूर्यं धीरा धीमन्तो यजमानादय उद्नोदकेन नावं न नावमिवानयन्। तदाशृण्वतीः सर्वतोऽनुज्ञां कुर्वाणा आपोऽर्वागवाङ्मुखा अतिष्ठन्। अभवन्॥

धियं वो अप्सु दधिषे स्वर्षां ययातरन्दश मासो नवग्वाः।
अया धिया स्याम देवगोपा अया धिया तुतुर्यामात्यंहः ॥११॥

धियं। वः। अप्ऽसु। दधिषे। स्वःऽसां। यया। अतरन्। दश। मासः। नवऽग्वाः।
अया। धिया। स्याम। देवऽगोपाः। अया। धिया। तुतुर्याम। अति। अंहः ॥११॥

हे देवा वो युष्माकं धियं स्तुतिमप्स्वन्तरिक्षे मिता स्वर्षां सर्वस्य दात्रीं दधिषे। धारयामि॥ व्यत्ययेन मध्यमः॥ यया धिया कर्मणा नवग्वा अंगिरसो दश मासोऽतरन् समनुतिष्ठन् अयानया धिया देवगोपा देवैर्गुप्ताः स्याम। भवेम। अया धियांहः पापमति तुतुर्याम। अतितरेम॥ ॥[illegible]॥

हयो नेत्यष्टर्चं द्वितीयं सूक्तं प्रतिक्षत्रस्यार्षं। अष्टमी द्वितीया च त्रिष्टुभौ शिष्टाः षट् जगत्यः। आदितः षड्ऋग्भिर्देवाः सप्तम्यष्टम्योर्देवपत्न्यो देवता। तथा चानुक्रान्तं। हयोऽष्टौ प्रतिक्षत्रोऽन्त्ये द्वे देवपत्नीभ्योऽन्त्या त्रिष्टुप् द्वितीया चेति॥ सूक्तविनियोगो लैङ्गिकः॥

हयो न विद्वाँ अयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवं।
नास्या वश्मि विमुचं नावृतं पुनर्विद्वान्पथः पुरएत ऋजु नेषति ॥१॥

हयः। न। विद्वान्। अयुजि। स्वयं। धुरि। तां। वहामि। प्रऽतरणीं। अवस्युवं।
न। अस्याः। वश्मि। विऽमुचं। न। आऽवृतं। पुनः। विद्वान्। पथः। पुरःऽएता।
ऋजु। नेषति ॥१॥

हयो न अश्व इव विद्वान् सर्वज्ञः प्रतिक्षत्रः स्वयमनन्यप्रेरितः सन् धुरि यज्ञात्मिकायामयुजि। युक्तोऽभवत्। तां धुरं प्रतरणीं प्रकर्षेण तारयित्रीमवस्युवं रक्षयित्रीं वहामि। धारयाम्यहमश्वयुक्तो वा। अस्या धुरो विमुचं विमोचनं परित्यागं न वश्मि। न कामये। नावृतं पुनः पुनरावर्तनं धारणमपि नैव वश्मि। मम को भार इति तदेवोच्यते। विद्वान्मार्गाभिज्ञोऽन्तर्यामी देवः पुरएता पुरतो गता सन् पथो यज्ञमार्गान् ऋज्वकुटिलं नेषति। प्रापयति॥

अग्न इंद्र वरुण मित्र देवाः शर्धः प्र यंत मारुतोत विष्णो ।
उभा नासत्या रुद्रो अध ग्नाः पूषा भगः सरस्वती जुषंत ॥२॥
अग्ने । इंद्र । वरुण । मित्र । देवाः । शर्धः । प्र । यंत । मारुत । उत । विष्णो इति ।
उभा । नासत्या । रुद्रः । अध । ग्नाः । पूषा । भगः । सरस्वती । जुषंत ॥२॥

हे अग्न इंद्र वरुण मित्र देवा यूयं शर्धो बलमस्माकं प्र यंत । प्रापयत ॥ अत्र सर्वत्र पूर्वस्याविद्यमानत्वेनोत्तरस्योत्तरस्य पादादित्वादनिघातः । प्रथमस्य तु स्वत एव पादादित्वं ॥ उतापि च हे मारुत मारुतानि मरुतां बलानि हे विष्णो यूयं शर्धः प्र यंत ॥ विष्णो इत्यस्योतेत्यनेन व्यवधानान्निघातः ॥ किंचोभोभौ नासत्या सत्यभूतौ रुद्रोऽध अथ ग्ना एतेषां देवानां स्त्रियश्च पूषा भगः सरस्वती च जुषंत । सेवंतामस्मदीयं यज्ञं स्तुतिं वा ॥

इंद्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ अपः ।
हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये ॥३॥
इंद्राग्नी इति । मित्रावरुणा । अदितिं । स्व१रिति स्वः । पृथिवीं । द्यां । मरुतः ।
पर्वतान । अपः ।
हुवे । विष्णुं । पूषणं । ब्रह्मणः । पतिं । भगं । नु । शंसं । सवितारं । ऊतये ॥३॥

इंद्रादिसवित्रंतान चतुर्दश देवानूतयेऽस्मद्रक्षणाय हुवे । आह्वयामि स्तौमि वा ॥ स्वरित्यादित्य उच्यते स्वरणात ॥

उत नो विष्णुरुत वातो अस्रिधो द्रविणोदा उत सोमो मयस्करत् ।
उत ऋभव उत राये नो अश्विनोत त्वष्टोत विभ्वानु मंसते ॥४॥
उत । नः । विष्णुः । उत । वातः । अस्रिधः । द्रविणःऽदाः । उत । सोमः । मयः । करत् ।
उत । ऋभवः । उत । राये । नः । अश्विना । उत । त्वष्टा । उत । विऽभ्वा । अनु । मंसते ॥४॥

उतापि च नोऽस्माकं विष्णुर्व्यापको देवो मयस्करत । मय इति सुखनाम । सुखं करोतु । उतापि च वातो वायुरस्रिधोऽहिंसकः सन मयस्करत । किंच द्रविणोदा धनस्य दाता सोमोऽपि मयस्करत । उतापि च ऋभवो नोऽस्मभ्यं राये धनायानु मसंत । अनुमन्यंतां । उताश्विनाश्विनौ च उत त्वष्टा देव उत विभ्वा ऋभूणामन्यतमो देवः । एते सर्वेऽप्यनु मसंत । यद्वा । अनुमस्त इति प्रत्येकं संबंधनीयं ॥

उत त्यन्नो मारुतं शर्ध आ गमद्दिविक्षयं यजतं बर्हिरासदे ।
बृहस्पतिः शर्म पूषोत नो यमद्वरूथ्यं१ वरुणो मित्रो अर्यमा ॥५॥
उत । त्यत् । नः । मारुतं । शर्धः । आ । गमत् । दिविऽक्षयं । यजतं । बर्हिः । आऽसदे ।
बृहस्पतिः । शर्म । पूषा । उत । नः । यमत् । वरूथ्यं । वरुणः । मित्रः । अर्यमा ॥५॥

उतापि च त्यत्तन्मारुतं शर्धो मरुतां बलं संघो नोऽस्माना गमत । आगच्छतु । कीदृशं तच्छर्धः । दिविक्षयं द्युलोके वर्तमानं यजतं पूज्यं । किमर्थमागमनमिति तदुच्यते । बर्हिर्बर्हिष्यासदे उपवेष्टुं । उपविश्य हविःस्वीका-

रायेत्यर्थः । किंच बृहस्पतिर्देवः शर्म सुखं यमत । यच्छतु । उत नोऽस्मभ्यं पूषापि यमत । कीदृशं शर्म । वरूथ्यं । वारयति शीतवातादिकमिति वरूथं गृहं । तदर्हं वरूथ्यं । किंच वरुणादयस्त्रयोऽपि प्रत्येकं शर्म यच्छंतु ॥

उत त्ये नः पर्वतासः सुशस्तयः सुदीतयो नद्य१स्त्रामणे भुवन ।
भगो विभक्ता शवसावसा गमदुरुव्यचा अदितिः श्रोतु मे हवं ॥६॥
उत । त्ये । नः । पर्वतासः । सुऽशस्तयः । सुऽदीतयः । नद्यः । त्रामणे । भुवन ।
भगः । विऽभक्ता । शवसा । अवसा । आ । गमत । उरुऽव्यचाः । अदितिः । श्रोतु ।
मे । हवं ॥६॥

उतापि च त्ये ते पर्वतासः पर्ववंतोऽद्रयः सुशस्तयः शोभनस्तुतयः किंच सुदीतयः सुदाना नद्यश्च त्रामणे पालनेऽस्माकं भुवन । भवतु । भगो देवो विभक्ता धनानां विभागकर्ता दाता सन् शवसान्नेनावसा रक्षणेन च सहा गमत । आगच्छतु । उरुव्यचाः प्रभूतव्याप्तिरदितिरदीना देवमाता मे हवं स्तुतिमाह्वानं वा श्रोतु । शृणोतु ॥

पत्नीसंयाजेषु देवपत्नीनां देवानां पत्नीरित्यादिके द्वे याज्यानुवाक्ये । सूत्रितं च । देवानां पत्नीरुशतीरवंतु न इति द्वे । आ० १ १० । इति ॥ आग्निमारुतशस्त्रेऽप्येते । देवानां पत्नीरुशतीरवंतु न इति द्वे राकामहमिति द्वे । आ० ५ २० । इति ॥

देवानां पत्नीरुशतीरवंतु नः प्रावंतु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥७॥
देवानां । पत्नीः । उशतीः । अवंतु । नः । प्र । अवंतु । नः । तुजये । वाजऽसातये ।
याः । पार्थिवासः । याः । अपां । अपि । व्रते । ताः । नः । देवीः । सुऽहवाः ।
शर्म । यच्छत ॥७॥

देवानामिंद्रादीनां पत्नीः पत्न्य उशतीरुशत्योऽस्मदीयां स्तुतिं कर्म वा कामयमाना नोऽस्मानवंतु । रक्षंतु । तथा नोऽस्माकं तुजये बलवते पुत्राय वाजसातयेऽन्नलाभाय संग्रामाय वा प्रावंतु । प्रकर्षेण रक्षंतु गच्छंतु वा । याः पार्थिवासः पृथिवीसंबंधिन्यो याश्चापामुदकानां व्रते कर्मण्यंतरिक्षे वर्तंते ता हे देव्यो हे सुहवाः शोभनाह्वाना यूयं नोऽस्मभ्यं शर्म यच्छत ॥

उत ग्ना व्यंतु देवपत्नीरिंद्राण्य१ग्नाय्यश्विनी राट ।
आ रोदसी वरुणानी शृणोतु व्यंतु देवीर्य ऋतुर्जनीनां ॥८॥
उत । ग्नाः । व्यंतु । देवऽपत्नीः । इंद्राणी । अग्नायी । अश्विनी । राट ।
आ । रोदसी इति । वरुणानी । शृणोतु । व्यंतु । देवीः । यः । ऋतुः । जनीनां ॥८॥

उतापि च ग्नाः स्त्रियो देवपत्नीर्देवपत्न्यो देवाः पतयो यासां तास्तादृश्यो व्यंतु । हविर्भक्षयंतु । ता विविच्योच्यंते । इंद्राणींद्रस्य पत्न्यग्नाय्यग्नेः पत्न्यश्विन्यश्विनोः पत्नी राट राजमाना । किंच रोदसी । रुद्रस्य पत्नीति यास्केनोक्तं । एवं सति विपितस्तुका रोदसी । ऋग्सं० १ १६७ ५ । इत्यत्र यथाप्रगृह्यत्वं न स्यात्तद्वदत्रापि भाव्यं । तथापि शाकल्येन महर्षिणैवमुक्तत्वात्तथैव द्रष्टव्यं । वरुणानी वरुणस्य पत्न्या सर्वत

प्रत्येकं शृणोतु । किंच देवीः पत्नीसंयाजदेव्यो व्यंतु । खादंतु हविः । यो जनीनां देवजायानामृतुः कालस्तदभिमानी देवोऽपि शृणोतु वेतु च । अत्रापि च ग्ना व्यंतु देवपत्न्यः । नि० १२. ४६. । इत्यादि निरुक्तं द्रष्टव्यं ॥ ॥२८॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके द्वितीयोऽध्यायः समाप्तः ॥

॥ श्रीभारत्यै नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथ तृतीयोऽध्याय आरभ्यते । तत्र प्रयुंजतीति सप्तर्चं तृतीयं सूक्तं प्रतिरथस्यार्षं त्रैष्टुभं । पूर्वत्र वैश्वदेवं वैतदित्युक्तत्वादिदमपि वैश्वदेवं । प्रयुंजती सप्त प्रतिरथ इत्यनुक्रमणिका ॥ विनियोगो लैंगिकः ॥

प्रयुंजती दिव एति ब्रुवाणा मही माता दुहितुर्बोधयंती ।
आविवासंती युवतिर्मनीषा पितृभ्य आ सदने जोहुवाना ॥१॥
प्रऽयुंजती । दिवः । एति । ब्रुवाणा । मही । माता । दुहितुः । बोधयंती ।
आऽविवासंती । युवतिः । मनीषा । पितृऽभ्यः । आ । सदने । जोहुवाना ॥१॥

उषोषस्या । प्रयुंजती प्राणिनः प्रस्तुतेषु कर्मसु दिवो द्युलोकादेति । आगच्छति ब्रुवाणा स्तूयमाना ॥ कर्मणि कर्तृप्रत्ययः ॥ मही महती माता प्रकाशस्य देवानां वा निर्मात्री दुहितुर्भूम्या बोधयंती बोधं कुर्वाणा । तदुपजीव्यत्वात् दुहितृत्वमुपचर्यते । यद्वा दुहितुर्दिव इति संबंधः ॥ उषसो दिवो दुहितृत्वं व्युच्छा दुहितर्दिवः । ऋग्वे० १ ४८ १ । इत्यादिषु प्रसिद्धं । अन्यत्र च दिवो दुहिता भुवनस्य पत्नी । ऋग्वे० ७. ७५ ४ । इत्युषसो द्युदुहितृत्वमाम्नातं । अत इदमधिगम्यते । कदाचिद्द्यौरुषसो जायत उषाश्च दिव इति । प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये । ऐ० ब्रा० ३ ३३ । इति हि श्रूयते । लिंगं च दृश्यते कार्यकारणभावव्यत्ययेऽदितेर्दक्षो अजायत दक्षाद्वदितिः । ऋग्वे० १०. ७२ ४ । इति ॥ किंच आविवासंती परिचरंती युवतिर्मिश्रयंती सर्वत्र नित्यतरुणी वा मनीषा स्तुतिमती पितृभ्यः ॥ तृतीयार्थे पंचमी ॥ पितृभिः पालकैर्देवैः सह सदने यागगृह आ सर्वतो जोहुवानाह्वयमाना । यद्वा । पितृभ्यः कर्मणां पालकेभ्यो यजमानेभ्य इष्टप्रापणेन पालकेभ्यो वा तेषामर्थाय जोहुवाना ॥

अजिरासस्तदप ईयमाना आतस्थिवांसो अमृतस्य नाभिं ।
अनंतास उरवो विश्वतः सीं परि द्यावापृथिवी यंति पंथाः ॥२॥
अजिरासः । तत्ऽअपसः । ईयमानाः । आतस्थिऽवांसः । अमृतस्य । नाभिं ।
अनंतासः । उरवः । विश्वतः । सीं । परि । द्यावापृथिवी इति । यंति । पंथाः ॥२॥

अजिरासो गमनशीलाः ॥ अजिरशिशिरेत्यादिना निपातितः ॥ अजिरशिशिरेत्यादिना निपातितः ॥ तदपसस्तदेव प्रकाशनरूपं कर्म यस्य तत्तादृशमहरीयमाना गच्छंतोऽमृतस्य सूर्यस्य नाभिं संनाहकं मंडलं अमृतस्योदकस्य वा

नाभिमंतरिक्षमातस्थिवांस आतिष्ठंतोऽनंतासोऽपरिमिता उरवो व्याप्ताः पंथाः पतनशीला रश्मयो द्यावापृथिवी परि दिवं च पृथिवीं चांतरिक्षं च विश्वतः परितो यंति । गच्छंति । सीमिति पूरणः ॥

उक्षा समुद्रो अरुषः सुपर्णः पूर्वस्य योनिं पितुरा विवेश ।
मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसस्पात्यंतौ ॥३॥

उक्षा । समुद्रः । अरुषः । सुऽपर्णः । पूर्वस्य । योनिं । पितुः । आ । विवेश ।
मध्ये । दिवः । निऽहितः । पृश्निः । अश्मा । वि । चक्रमे । रजसः । पाति । अंतौ ॥३॥

सौर्योऽयं तृचः । उक्षोदकस्य कामाना वा सेक्ता समुद्रः समुद्रनः । यद्वा । समोदंते तस्मिन्देवा इति समुद्रः । अरुष आरोचमानः सुपर्णः सुगमनः पूर्वस्य । अवयवत्वबंधे । पूर्वदिगवयवस्य पितुः पालकस्यांतरिक्षस्य योनिमुत्पादकमवयवमा विवेश । आविष्टवान् । पश्चाद्दिवो मध्ये निहितः पृश्निः । प्राशुत एनं वर्णं इति पृश्निरादित्यः । अश्मा सर्वत्र व्याप्तः । लुप्तोपमा वा । अश्मसदृशो रजसोऽतरिक्षस्यांतौ पूर्वापरभागौ वि चक्रमे । विक्रमते । पाति च जगत् । जगद्रक्षार्थं क्रमत इत्यर्थः ॥

चत्वार ईं बिभ्रति क्षेमयंतो दश गर्भं चरसे धापयंते ।
त्रिधातवः परमा अस्य गावो दिवश्चरंति परि सद्यो अंतान् ॥४॥

चत्वारः । ईं । बिभ्रति । क्षेमऽयंतः । दश । गर्भं । चरसे । धापयंते ।
त्रिऽधातवः । परमाः । अस्य । गावः । दिवः । चरंति । परि । सद्यः । अंतान् ॥४॥

चत्वार ऋत्विज ईमेनमादित्यं क्षेमयंतः क्षेममात्मन इच्छंतो बिभ्रति । धारयंति हविर्भिः स्तुतिभिश्च । किंच दश दिशो गर्भं गर्भवन्मध्य उत्पन्नमेनं चरसे चरणायोदयास्तमयव्यवहाराय धापयंते । गमयंति । त्रिधातवस्त्रिप्रकाराः शीतोष्णवर्षभेदेन त्रिविधा अस्यादित्यस्य परमा उत्कृष्टा गावो रश्मयो दिवोऽतरिक्षस्यांतान् परि परितः सद्य उदयानंतरमेव चरंति । गच्छंति ॥

इदं वपुर्निवचनं जनासश्चरंति यन्नद्यस्तस्थुरापः ।
द्वे यदीं बिभृतो मातुरन्ये इहेह जाते यम्या३ सबंधू ॥५॥

इदं । वपुः । निऽवचनं । जनासः । चरंति । यत् । नद्यः । तस्थुः । आपः ।
द्वे इति । यत् । ईं । बिभृतः । मातुः । अन्ये इति । इहऽइह । जाते इति । यम्या ।
सबंधू इति सऽबंधू ॥५॥

जनासो हे जना ऋत्विज इदं पुरतो दृश्यमानं वपुः शरीरं मंडलं निवचनं स्तुत्यं भवतीति शेषः । यन्मंडलमुपजीव्य नद्यश्चरंति प्रवहंति । आपश्च यन्मंडलमधितस्थुः । मंडलाधीनत्वात्तासां । किंचैतद्वक्ष्यमाणं यन्मंडलं द्वे अहोरात्रे मातुर्निर्मातुर्मातृस्थानीयादंतरिक्षादन्ये इहेह जाते इह चेह च सृष्टे जाते निष्पन्ने यम्या यम्ये नियमनीये युग्मभूते वा सबंधू समानबंधे समानबंधने उभयोरप्येक एव सूर्यो बंधकोऽनयोर्यस्मादीदृशौ बिभृतः धारयतः ॥

वि तन्वते धियो अस्मा अपांसि वस्त्रा पुत्राय मातरो वयंति ।
उपप्रक्षे वृषणो मोदमाना दिवस्पथा वध्वो यंत्यच्छ ॥६॥

वि । तन्वते । धियः । अस्मै । अपांसि । वस्त्रा । पुत्राय । मातरः । वयंति ।
उपऽप्रक्षे । वृषणः । मोदमानाः । दिवः । पथा । वध्वः । यंति । अच्छ ॥ ६ ॥

अस्मै सूर्याय धियः स्तुतीरपांसि कर्माणि च वि तन्वते । विस्तारयंति यजमानाः । पुत्राय पुत्रस्थानीयाय मातरो निर्मात्र्य उषसो दिशो वा वस्त्रा वस्त्राणि वयंति । निष्पादयंति । वस्त्रसदृशानि तेजांसि निबिडानि संपादयंतीत्यर्थः । वृषणः सेक्तुः सूर्यस्योपप्रक्षे उपपर्चने संपर्के सति मोदमाना हृष्यंतो वध्वो वधूस्थानीया रश्मयो दिवस्पथा सूर्यसंबंधिना मार्गेणाच्छास्मदभिमुखं यंति । गच्छंति । प्रसरंति ॥

तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तं ।
अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥ ७ ॥
तत् । अस्तु । मित्रावरुणा । तत् । अग्ने । शं । योः । अस्मभ्यं । इदं । अस्तु । शस्तं ।
अशीमहि । गाधं । उत । प्रतिऽस्थां । नमः । दिवे । बृहते । सदनाय ॥ ७ ॥

अत्र लिंगमिश्रा देवताः । हे मित्रावरुणा मित्रावरुणौ तदिदं सूक्तं शस्तं स्तुतमस्तु । भवतु । हे अग्ने तत्सूक्तं शस्तमस्तु । अस्मभ्यं शं सुखाय योर्दुःखानामभिश्रणायेद शस्तमस्तु । वयं चाशीमहि प्राप्नुयाम गाधं स्थितिं । उतापि च प्रतिष्ठां स्थितेरविच्छित्तिं चाशीमहि । नमो नमस्करोमि दिवे द्योतमानाय सूर्याय बृहते महते सादनायाश्रयाय विश्वस्य ॥ ॥ १ ॥

कदु प्रियायेति पंचर्चं चतुर्थं सूक्तं । प्रतिभानुर्नामात्रेय ऋषिः । जगती छंदः । विश्वे देवा देवता । अत्रानुक्रमणिका । कदु पंच प्रतिभानुर्जागतमिति ॥ आभिप्लविके पंचमेऽहनि वैश्वदेवशस्त्र इदं सूक्तं निविद्धानं । सूत्रितं च । कदु प्रियायेति वैश्वदेवं । आ॰ ७ ७ । इति ॥

कदु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयं ।
आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति मायिनी ॥ १ ॥
कत् । ऊं इति । प्रियाय । धाम्ने । मनामहे । स्वऽक्षत्राय । स्वऽयशसे । महे । वयं ।
आऽमेन्यस्य । रजसः । यत् । अभ्रे । आ । अपः । वृणाना । विऽतनोति । मायिनी ॥ १ ॥

अत्र वैद्युताग्निसंस्तवः । कदु कदा । उ इति पूरणः । प्रियाय सर्वेषां प्रियभूताय । वृष्टिद्वारा हविरादिप्रयोजकत्वात्सर्वप्रियत्वमस्य प्रसिद्धं । तादृशाय धाम्ने तेजसे वैद्युताय । उत्तरवाक्येऽभ्रेऽपो वितनोतीति वक्ष्यमाणत्वादिदं लभ्यते । कीदृशाय । स्वक्षत्राय स्वभूतबलाय किंच स्वयशसे स्वभूतान्नाय । सर्वमप्यन्नं ह्यस्य स्व । महे महते पूज्याय वयं कदा मनामहे । स्तवाम । यत् ॥ उत्तरत्र स्त्रीलिंगनिर्देशाद्येति विपरिणामयितव्यं ॥ यास्यैषी शक्तिरामेन्यस्य समतान्मातव्यस्य रजसोऽतरिक्षस्य । अपरिमितमपि नभ इयदिति सर्वैर्मीयते । संबंधिन्यभ्रे मेघ आ अधि मेघस्योपर्यप उदकानि वृष्टिलक्षणानि वितनोति विस्तारयति वृणानाच्छादयंती भज्यमाना वा मायिनी । मायेति प्रज्ञानाम । प्रज्ञावती सती । यद्वास्य संबंधिनी माध्यमिकी वागिति वा योज्यं ॥

ता अत्नत वयुनं वीरवक्षणं समान्या वृतया विश्वमा रजः ।
अपो अपाचीरपरा अपेजते प्र पूर्वाभिस्तिरते देवयुर्जनः ॥ २ ॥
ताः । अत्नत । वयुनं । वीरऽवक्षणं । समान्या । वृतया । विश्वं । आ । रजः ।
अपो इति । अपाचीः । अपराः । अप । ईजते । प्र । पूर्वाभिः । तिरते । देवऽयुः । जनः ॥ २ ॥

इयमुपस्था । ता उपसोऽतनत । वितन्वंति । किं । वयुनं प्रज्ञानं । कीदृशं । वीरवक्षणं वीरैर्ऋत्विग्भिर्वहनीयं । यद्वा । वक्षणाः कार्यवोढारो येन प्रयंति तत्तादृशं । किंच समान्यरूपया वृतयावरकया दीप्त्या विश्वमा सर्वमपि रजो जगदतनत । एवं सति देवयुर्देवकामो जनोऽपाचीरपाचनाः प्रतिनिवृत्तमुखीरपरा अन्या आगामिनीरुपसोऽपजंत । अपचालयति । अपरोऽपशब्दः पुरणः । पूर्वाभिस्ताभिः प्र तिरते । प्रपूर्वस्तिरतिर्वर्धनार्थः । वर्धयति स्वमनीषां वर्धते वा स्वयं ॥

आ ग्राव॑भिरह॒न्ये॑भिर॒क्तुभि॒र्वरि॑ष्ठं॒ वज्र॒मा जि॑घर्ति मा॒यिनि॑ ।
श॒तं वा॒ यस्य॑ प्र॒चर॒न्त्स्वे दमे॑ संव॒र्तय॑न्तो॒ वि च॑ व॒र्तय॒न्नहा॑ ॥३॥

आ । ग्राव॑ऽभिः । अ॒ह॒न्ये॑भिः । अ॒क्तुऽभिः॑ । वरि॑ष्ठं । वज्रं॑ । आ । जि॒घ॒र्ति॒ । मा॒यिनि॑ ।
श॒तं । वा॒ । यस्य॑ । प्र॒ऽचर॑न् । स्वे । दमे॑ । सं॒ऽव॒र्तय॑न्तः । वि । च॒ । व॒र्तय॑न् । अहा॑ ॥३॥

अत्र पूर्वार्धे इंद्र उच्यते उत्तरार्धे इंद्रात्मा सूर्यः । आ इत्युत इति शेषः । कैः । अहन्येभिरहनि भवादिनैरक्तुभी रात्रिभिः । तत्र निष्पन्नैरित्यर्थः । तथाविधैर्ग्रावभिः । साधौ साधनशब्दः । ग्रावसाध्यैरभिषवैर्निमित्तभूतैः । अत्र ग्राव सोमी सन् मायिनि वृत्रे निमित्ते सति वरिष्ठमुरुतरं वज्रमा सर्वतो जिघर्ति । दीपयति । वा किंच । वाशब्दश्चार्थे । यस्येंद्रात्मकस्यादित्यस्य शतं शतसंख्याका रश्मयः स्वे दमे स्वकीये गृहे आकाशे प्रचरन् प्रचरंति । किं कुर्वंतः । संवर्तयंतः प्राणिनो नाशयंतः । यद्वा । अहाहानि दिवसान् संवर्तयंतः सम्यक् प्रवर्तयंतो वि च वर्तयन् अहाहानि निवर्तयंति गतान्येव पुनः प्रापयंति च । तपनपरिस्पंदाधीनत्वात्प्राणिनामायुःक्षयस्याहोरात्रादिव्यवहारस्य ॥

ताम॑स्य री॒तिं प॑र॒शोरि॑व॒ प्रत्यनी॑कमख्यं भु॒जे अ॑स्य॒ वर्प॑सः ।
सचा॒ यदि॑ पितु॒मन्त॑मिव॒ क्षयं॒ रत्नं॒ दधा॑ति॒ भर॑हूतये वि॒शे ॥४॥

तां । अ॒स्य॒ । री॒तिं । प॒र॒शोःऽइ॑व । प्रति॑ । अनी॑कं । अ॒ख्य॒म् । भु॒जे । अ॒स्य॒ । वर्प॑सः ।
सचा॑ । यदि॑ । पि॒तु॒मन्तं॑ऽइव । क्षयं॑ । रत्नं॑ । दधा॑ति । भर॑ऽहूतये । वि॒शे ॥४॥

इयमाग्नेयी । तां प्रसिद्धामस्याग्ने रीतिं स्वभावं गतिं वा परशोरिव प्रति परशोः प्रतिनिधिमिव पश्यामि । परशुर्यथा स्वस्वामिन्यभिमतं साधयति तद्वदित्यर्थः । अस्य वर्पसो रूपवतोऽस्याग्नेरित्यस्यानीकं रश्मिसमूहं भुजे भोगायाख्यं । कथयाम्यहं । यदि यस्मात्स च देवः सचास्मत्सहायः सन् पितुमंतमन्नवंतं क्षयमिव निवासमिव भरहूतये संग्रामे यज्ञे वाह्वानयुक्ताय विशे यजमानाय रत्नं रमणीयं धनं दधाति धारयति । उभयमपि ददातीत्यर्थः ॥

स जि॒ह्वया॒ चतु॑रनीक ऋञ्जते॒ चारु॒ वसा॑नो॒ वरु॑णो॒ यत॑न्न॒रिम् ।
न तस्य॑ विद्म पुरुष॒त्वता॑ व॒यं यतो॒ भगः॑ सवि॒ता दाति॒ वार्य॑म् ॥५॥

सः । जि॒ह्वया॑ । चतुः॑ऽअनीकः । ऋ॒ञ्ज॒ते॒ । चारु॑ । वसा॑नः । वरु॑णः । यत॑न् । अ॒रिम् ।
न । तस्य॑ । वि॒द्म॒ । पु॒रु॒ष॒त्वता॑ । व॒यं । यतः॑ । भगः॑ । स॒वि॒ता । दाति॑ । वार्य॑म् ॥५॥

सोऽग्निश्चतुरनीकश्चतुर्दिक्षु प्रसृतज्वालः सन् जिह्वया ऋंजते । गच्छति घृतादिकं । यद्वा । जिह्वया चतुरनीकः सन् ऋंजते । अलंकरोति स्वात्मानं । किं कुर्वन् । चारु रमणीयं तेजो वसान आच्छादयन् वरुणस्तमोवारकः सन् अरिमसमित्रं यतन् उद्धरन् । तस्य । तमित्यर्थः । तं न विद्म । न जानीमो वयं पुरुषत्वता पुरुषत्वेन कामानां पूरकत्वेन वा युक्तं ॥ अपरो भावप्रत्ययः पुरणः ॥ यतोऽयं भगो महान् भजनीयः सविता प्रेरको देवो दाति यच्छति वार्यं वरणीयं धनं ॥ ० ॥ २ ॥

देवं व इति पंचर्चं पंचमं सूक्तमात्रेयस्य प्रतिप्रभस्यार्षं त्रैष्टुभं वैश्वदेवं। देवं वः प्रतिप्रभो ऽत्या तृणपाणि-रित्यनुक्रमणिका ॥ विनियोगो लैंगिकः ॥

देवं वो अद्य सवितारमेषे भगं च रत्नं विभजंतमायोः ।
आ वां नरा पुरुभुजा ववृत्यां दिवेदिवे चिदश्विना सखीयन् ॥१॥
देवं। वः। अद्य। सवितारं। आ। ईषे। भगं। च। रत्नं। विऽभजंतं। आयोः।
आ। वां। नरा। पुरुऽभुजा। ववृत्यां। दिवेऽदिवे। चित्। अश्विना। सखिऽयन् ॥१॥

देवं द्योतमानं सवितारं सर्वस्याभ्यनुज्ञातारं वः। त्वामित्यर्थः। यद्वा होतुरिदं वाक्यं। वो यजमानेभ्यो युष्मभ्यमर्थायाद्येदानीमेषे। उपगच्छामि। भगं च भजनीयं देवमायोर्मनुष्यस्य यजमानस्य रत्नं रमणीयं हविर्विभजंतं। भगो वां विभजत्विति हि भगस्य विभजनं प्रसिद्धं। रायो विभक्ता संभरश्च वस्वः। ऋग्वे० ४ १७ ११.। भगो विभक्ता शवसा। ऋग्वे० ५ ४६. ६.। इति च श्रुतिः। यद्वा। चतुर्थ्यर्थे षष्ठी। यजमानार्थं रत्नं रमणीयं धनं विभजंतं। हे नरा नेतारौ हे पुरुभुजा। पुरु भुंजाते इति पुरुभुजौ। हे अश्विनावश्विनौ वां युवां दिवे दिवे प्रतिदिनमा ववृत्यां। आवर्तयाम्यस्मदभिमुखं। सखीयन् युवयोः सखित्वमिच्छन्। चिदिति पूरणः ॥

प्रति प्रयाणमसुरस्य विद्वान्त्सूक्तैर्देवं सवितारं दुवस्य ।
उप ब्रुवीत नमसा विजानञ्ज्येष्ठं च रत्नं विभजंतमायोः ॥२॥
प्रति। प्रऽयानं। असुरस्य। विद्वान्। सुऽउक्तैः। देवं। सवितारं। दुवस्य।
उप। ब्रुवीत। नमसा। विऽजानन्। ज्येष्ठं। च। रत्नं। विऽभजंतं। आयोः ॥२॥

असुरस्य शत्रूणां निरसितुः सवितुः प्रति प्रयाणं प्रत्यागतिं विद्वान् जानन् सूक्तैः सवितारं देवं दुवस्य। परिचर हे अंतरात्मन्। किंचायोर्मनुष्याय ज्येष्ठं रत्नं धनं च विभजंतं। गमयंतमित्यर्थः। नमसा नमस्कारेण हविषा वा विजानन्। विशेषेण भावयन्नित्यर्थः ॥ यद्वांतर्णीतण्यर्थो ऽयं ॥ ज्ञापयन्नुप ब्रुवीत। स्तौतु भवान् ॥

अदत्रया दयते वार्याणि पूषा भगो अदितिर्वस्त उस्रः ।
इंद्रो विष्णुर्वरुणो मित्रो अग्निरहानि भद्रा जनयंत दस्माः ॥३॥
अदत्रऽया। दयते। वार्याणि। पूषा। भगः। अदितिः। वस्ते। उस्रः।
इंद्रः। विष्णुः। वरुणः। मित्रः। अग्निः। अहानि। भद्रा। जनयंत। दस्माः ॥३॥

अयमग्निरदत्रयादनीयानि ॥ अदेरौणादिकोऽत्रप्रत्ययः। सुपां सुलुगिति याजादेशः ॥ अथवात्तीत्यदत्रा जिह्वा। तया वार्याणि वरणीयानि काष्ठानि दयते। दयतिरनेककर्मात्र दहने वर्तते। दहतीत्यर्थः। सामर्थ्यादग्निरिति गम्यते। यद्वा। अदनीयानि वरणीयान्यन्नानि दयते। ददाति यजमानाय ॥ दय दानगतिहिंसावलादानेषु ॥ कीदृशोऽग्निः। पूषा पोषको भगो भजनीयोऽदितिरखंडनीयः। यद्वा। पूषादयस्त्रयोऽपि प्रत्येकमदनीयानि वार्याणि चान्नानि दयते। उस्रः सूर्यो वस्ते। आच्छादयति। सामर्थ्यात्तेजांसि। इंद्रादयः पंचापि देवा दस्मा दर्शनीया अहानि सर्वाण्यागतानि भद्रा शोभनीयानि जनयंत। जनयंति। दिवसानां यागदानादिविशिष्टत्वमेव भद्रत्वं ॥

तन्नो अनर्वा सविता वरूथं तत्सिंधव इषयंतो अनु ग्मन् ।
उप यद्वोचे अध्वरस्य होता रायः स्याम पतयो वाजरत्नाः ॥४॥

तत् । नः । अनर्वा । सविता । वरूथं । तत् । सिंधवः । इषयंतः । अनु । ग्मन् ।
उप । यत् । वोचे । अध्वरस्य । होता । रायः । स्याम । पतयः । वाजऽरत्नाः ॥४॥

तत्प्रसिद्धं वरूथं वरणीयमस्मदभिमतं धनं नोऽस्मभ्यमनर्वाप्रत्यृतः केनाप्यतिरस्कृतः सविता देवः प्रयच्छत्विति शेषः । तद्धनं सिंधवः स्यंदनशीला इषयंतो गच्छंत्यो नद्योऽनु अनुसृत्य ग्मन् । गच्छंतु । धनं दातुं गच्छंत्वित्यर्थः । यद्यस्मादध्वरस्य यागस्य होता होमनिष्पादकोऽहमुप वोचे उपेत्य ब्रवीमि तस्मात्तत्प्रयच्छंत्विति शेषः । वयं चात्रयो रायो धनस्य बहुविधस्य पतयः स्वामिनः स्याम । भवेम । वाजरत्ना अन्नेन बलेन वा रमणीयाः । अथवा यद्यस्माद्वोचे स्तौमि तस्मात्सविता नो वरूथमागच्छतु । तस्मान्नद्यश्च नो वरूथं यज्ञमनु ग्मन् अनुगच्छंत्विति वा योज्यं ॥

प्र ये वसुभ्य ईवदा नमो दुर्ये मित्रे वरुणे सूक्तवाचः ।
अवैत्वभ्वं कृणुता वरीयो दिवस्पृथिव्योरवसा मदेम ॥५॥
प्र । ये । वसुऽभ्यः । ईवत् । आ । नमः । दुः । ये । मित्रे । वरुणे । सूक्तऽवाचः ।
अव । एतु । अभ्वं । कृणुत । वरीयः । दिवःपृथिव्योः । अवसा । मदेम ॥५॥

ये यजमाना वसुभ्यो यज्ञनिवासिभ्यो देवेभ्य ईवद्गमनवन्नमोऽन्नं पश्वात्मकं प्र दुः प्रादुः । ये च मित्रे देवे वरुणे च सूक्तवाचः सूक्तवचसो भवंति तानस्मानभ्वं महदन्नं तेजो वावैतु । अवगच्छतु । हे देवाः कृणुत कुरुत चैतेभ्यो वरीय उरुतरं सुखं । दिवस्पृथिव्योर्द्यावापृथिव्योरवसा रक्षणेन मदेम । हृष्येम ॥ ॥३॥

विश्वो देवस्येति पंचर्चं षष्ठं सूक्तं स्वस्त्यात्रेयस्यार्षं वैश्वदेवं । पंचमी पंक्तिराद्याश्चतस्रोऽनुष्टुभः । तदुक्तमनुक्रमण्यां । विश्वः स्वस्त्यात्रेयः पंक्त्यंतमिति ॥ पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि वैश्वदेवशस्त्रे विश्वो देवस्येति प्रतिपत्तृचस्याद्यः । सूत्रितं च । विश्वो देवस्य नेतुरित्येका । आ० ७. ६. । इति ॥ आभिप्लविकेषु द्वितीयचतुर्थपंचमेष्वहःस्वप्येषैव वैश्वदेवस्य शस्त्रस्य प्रतिपत् । युंजंत्येवमभिप्लवे । आ० ७. ६. । इति सूत्रितत्वात् ॥

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यं । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे ॥१॥
विश्वः । देवस्य । नेतुः । मर्तः । वुरीत । सख्यं । विश्वः । राये । इषुध्यति । द्युम्नं । वृणीत ।
पुष्यसे ॥१॥

विश्वः सर्वो मर्तो नेतुर्देवस्य । सवितुरित्यर्थः । तस्य सख्यं वुरीत । वृणीत । विश्वो जनो राये धनस्येषुध्यति ॥ पंचमलकारः ॥ ईशीत । तस्यानुग्रहात्सर्वो जनो द्युम्नं धनं वृणीत पुष्यसे पुष्ट्यै पर्याप्तं धनं ॥

ते ते देव नेतर्ये चेमाँ अनुशसे । ते राया ते ह्या३पृचे सचेमहि सचथ्यैः ॥२॥
ते । ते । देव । नेतः । ये । च । इमान् । अनुऽशसे । ते । राया । ते । हि । आऽपृचे ।
सचेमहि । सचथ्यैः ॥२॥

हे नेतर्देव ते तव स्वभूतास्ते वयं यजमाना ये चान्य इमान् ॥ विभक्तिव्यत्ययः ॥ इमे होत्रादयोऽनुशसे शंसितुं प्रभवंति तेऽपि त्वदीयाः । यद्वा । इमानन्यानिंद्रादीननुशसे क्रमेण शंसितुं प्रभवंति । एकेन वा महानात्मा देवता स सूर्यः स हि सर्वभूतात्मत्वात्कल्पादितराः सा देवतानां तदंतर्भावादिति भावः । न केवलं त्वदात्मका एवेत्यर्थः । त उभये वयं राया धनेन सचेमहीति संबंधः । ते हि ते स्वभ्यापृचे आपर्चनीयाः ॥ कृत्यार्थे केन्प्रत्ययः । छंदसि जत इत्यव्ययत्वाद्विभक्त्यदर्शनं ॥ सचथ्यैः सर्वैः कामैः सचेमहि । संगच्छेमहि ॥

अतो न आ नॄनतिथीनतः पत्नीर्दशस्यत। आरे विश्वं पथेष्ठां द्विषो युयोतु यूयुविः॥३॥

अतः। नः। आ। नॄन्। अतिथीन्। अतः। पत्नीः। दशस्यत। आरे। विश्वं। पथेऽस्थां। द्विषः। युयोतु। यूयुविः॥३॥

अतोऽस्मिन्यज्ञे ॥ सार्वविभक्तिकस्तसिः ॥ नोऽस्माकमृत्विजां नॄन्नेतॄनतिथीन तद्वत्पूज्यान्देवाना दशस्यत। सर्वतः परिचरत। अतोऽस्मिन्यज्ञे पत्नीर्देवानां पत्नीरपि दशस्यत हविष्प्रदानादिना। यद्वा। नोऽस्मभ्यं नॄन पुत्रभृत्यादीनतिथीन पत्नीश्चैतत्त्रयमत्र दशस्यत। हे देवाः प्रयच्छत। आरे दूरे विश्वं सर्वं पथेष्ठा मार्गे वर्तमानं वैरिणं द्विषोऽन्यानपि द्विषो द्वेष्टॄन्युयोतु पृथक्करोतु देवसंघः सविता वा यूयुविः सर्वस्यामिश्रयिता पृथक्कर्ता ॥

यत्र वह्निरभिहितो दुद्रवद्द्रोण्यः पशुः। नृमणा वीरपस्त्योऽर्णा धीरेव सनिता ॥४॥

यत्र। वह्निः। अभिऽहितः। दुद्रवत्। द्रोण्यः। पशुः। नृऽमनाः। वीरऽपस्त्यः। अर्णा। धीराऽइव। सनिता ॥४॥

यत्र यस्मिन्यज्ञे वह्निर्यज्ञस्य वोढाभिहितो यूपं प्रापितो द्रोण्यो यूपार्हः पशुर्दुद्रवत गच्छति यूपं प्रति तत्र नृमणा यजमानमनाः सविता वीरपस्त्यः। वीरा ऋत्विग्यजमानाः पुत्रभृत्यादयो वा तद्वत्पस्त्यं गृहं यस्य स तादृशः। प्रेरितगृहो वा। पुत्राद्युपेतगृहप्रद इत्यर्थः। सनिता संभक्ता भवति। अर्णा रणकुशला धीरेव योषिदिव। यद्वा। अर्णानि हवींष्यभिलक्ष्य सनिता भवति ॥

एष ते देव नेता रथस्पतिः शं रयिः।
शं राये शं स्वस्तय इषःस्तुतो मनामहे देवस्तुतो मनामहे ॥५॥

एषः। ते। देव। नेतरिति। रथःपतिः। शं। रयिः।
शं। राये। शं। स्वस्तये। इषःऽस्तुतः। मनामहे। देवऽस्तुतः। मनामहे ॥५॥

हे नेतर्देव सवितस्ते तवैष रथःपतिः सर्वस्य पालको रयिर्दातव्यधनवान ॥ मत्वर्थो लुप्यते ॥ शं करोत्विति शेषः। वयं च राये धनस्य शं सुखाय। यद्वा। राये धनाय शं सुखाय च स्वस्तयेऽविनाशायेषःस्तुत एषणीयस्य सवितुः स्तोतारो वयं मनामहे। स्तुमः। देवस्तुतो देवानां देवस्य वा सवितुः स्तोतारो मनामहे। स्तुमः ॥ ॥४॥

अग्ने सुतस्येति पञ्चदशर्चं सप्तमं सूक्तं। अत्रेयमनुक्रमणिका। अग्ने पञ्चोना चतस्रो गायत्र्यः षडुष्णिहस्तिस्रो जगत्यस्त्रिष्टुभो वान्त्ये अनुष्टुभाविति। ऋषिश्चान्यस्मादिति परिभाषया स्वस्त्यात्रेय ऋषिः। आदितश्चतस्रो गायत्र्यः पञ्चम्याद्याः षडुष्णिह एकादश्याद्यास्तिस्रो जगत्यस्त्रिष्टुभो वा चतुर्दशीपंचदश्यावनुष्टुभौ। विश्वे देवा देवता ॥

अग्ने सुतस्य पीतये विश्वैरूमेभिरा गहि। देवेभिर्हव्यदातये ॥१॥

अग्ने। सुतस्य। पीतये। विश्वैः। ऊमेभिः। आ। गहि। देवेभिः। हव्यऽदातये ॥१॥

हे अग्ने त्वं सुतस्य पीतये सोमपानाय विश्वैरूमेभिरूमैः सर्वैरपि रक्षकैर्देवेभिर्देवैरिन्द्रादिभिः सह हव्यदातयेऽस्माकं हविर्दानाय तद्दात्रे यजमानाय वा आ गहि। आगच्छ ॥

ऋतधीतय आ गत सत्यधर्माणो अध्वरं। अग्नेः पिबत जिह्वया ॥२॥

ऋतऽधीतयः। आ। गत। सत्यऽधर्माणः। अध्वरं। अग्नेः। पिबत। जिह्वया ॥२॥

हे ऋतधीतयः सत्यस्तुतयोऽबाध्यकर्माणो वा देवा अध्वरमस्मदीयमा गत । आगच्छत । आगत्य च हे सत्यधर्माणः सत्यस्य धारयितारो यूयमग्नेर्जिह्वया पिबताज्यसोमादिकं ॥

विप्रेभिर्विप्र संत्य प्रातर्यावंभिरा गंहि । देवेभिः सोमंपीतये ॥३॥

विप्रेभिः । विप्र । संत्य । प्रातर्यावंऽभिः । आ । गहि । देवेभिः । सोमंऽपीतये ॥३॥

हे विप्र मेधाविन् विविधकामानां वा पूरक हे सत्य संभजनीयाग्ने विप्रेभिर्मेधाविभिः प्रातर्यावभिः प्रातःकाल आगन्तृभिर्देवैर्देवैः सार्धमा गहि । आगच्छ । किमर्थं । सोमपीतये सोमपानाय ॥

अयं सोमंश्चमू सुतोऽमंत्रे परि षिच्यते । प्रिय इंद्राय वायवे ॥४॥

अयं । सोमः । चमू इति । सुतः । अमंत्रे । परि । सिच्यते । प्रियः । इंद्राय । वायवे ॥४॥

अयं पुरतो वर्तमानः सोमश्चमू चर्मणोरधिषवणफलकयोः सुतोऽभिषुतः सन् अमत्रे पात्रे परि षिच्यते । पूर्यते । स चेन्द्राय वायवे च प्रियः । तं पातुं हे इन्द्रवायू आगच्छतमिति शेषः ॥

वायवा याहीत्येषा पृष्ठ्यस्य तृतीयेऽहनि प्रउगशस्त्रे वायव्यतृचस्याद्या । सूत्रितं च । वायवा याहि वीतय इत्येका वायो याहि शिवा दिव इति द्वे । आ॰ ७. १०. । इति ॥

वायवा याहि वीतये जुषाणो हव्यदातये । पिबा सुतस्यांधसो अभि प्रयः ॥५॥

वायो इति । आ । याहि । वीतये । जुषाणः । हव्यऽदातये । पिब । सुतस्य । अंधसः । अभि । प्रयः ॥५॥

हे वायो प्रयोऽन्नं सोमाख्यमभि अभिलक्ष्य आ याहि वीतये भक्षणाय जुषाणः प्रीयमाणो हव्यदातये हविर्दात्रे यजमानाय तदर्थं । आगत्य च सुतस्यान्धसोऽभिषुतमन्धोऽन्नं सोमलक्षणं पिब ॥ ॥५॥

पृष्ठ्यस्य तृतीयेऽहनि प्रउगशस्त्र ऐन्द्रवायवतृच इन्द्रश्चेत्यादिके द्वे ऋचौ शंसेत् । तयोः प्रथमा द्वितीया वा तृचं संपादयेत् । तथा च सूत्रितं । इन्द्रश्च वायवेषां सुतानामिति द्वयोरन्यतरा द्वे । आ॰ ७. १०. । इति ॥

इंद्रश्च वायवेषां सुतानां पीतिमर्हथः । ताञ्जुषेथामरेपसावभि प्रयः ॥६॥

इंद्रः । च । वायो इति । एषां । सुतानां । पीतिं । अर्हथः । तान् । जुषेथां । अरेपसौ । अभि । प्रयः ॥६॥

हे वायो त्वं चेन्द्रश्चैषां पुरतो गृहीतानां सुतानामभिषुतानां सोमानां पीतिं पानमर्हथ । यस्मादेवं तस्मात्तान् सोमानस्मान् जुषेथां सेवेथामरेपसावहिंसकौ । तदर्थं प्रयः सोमाख्यमन्नमभिलक्ष्यागच्छतमिति शेषः । यद्वा । प्रयोऽन्नरूपान् ॥

सुता इंद्राय वायवे सोमासो दध्याशिरः । निम्नं न यंति सिंधवोऽभि प्रयः ॥७॥

सुताः । इंद्राय । वायवे । सोमासः । दधिऽआशिरः । निम्नं । न । यंति । सिंधवः । अभि । प्रयः ॥७॥

इंद्राय वायवे च सोमासः सोमा दध्याशिरो दध्याश्रयणाः सुताः । अभिषुताः । संपादिताः । ते च निम्नं गर्तं सिंधवो न नद्य इव हे इन्द्रवायू युवामभि यंति प्रयोऽन्नरूपाः ॥

तृतीयेऽहनि प्रउगशस्त्रे सजूर्विश्वेभिरिति वैश्वदेवस्तृचः । सूत्रितं च । सजूर्विश्वेभिर्देवेभिरुत नः प्रिया प्रियासु । आ० ७ १०. । इति ॥

सजूर्विश्वेभिर्देवेभिरश्विभ्यामुषसा सजूः । आ याह्यग्ने अत्रिवत्सुते रण ॥८॥
सऽजूः । विश्वेभिः । देवेभिः । अश्विऽभ्यां । उषसा । सऽजूः । आ । याहि । अग्ने ।
अत्रिऽवत् । सुते । रण ॥८॥

हे अग्ने विश्वेभिः सर्वैर्देवेभिर्देवैः सजूः संगतः सन् अश्विभ्यामुषसा च सजूः समानप्रीतिः सन् आ याहि । आगहि । अत्रिवदत्रिरिव । अत्रेर्यज्ञे यथा तथेत्यर्थः । यद्वा । अत्रिर्यथा यज्ञे रमते तद्वत्सुतेऽभिषुते सोमे रण । रमस्व ॥

उत्तरे द्वे नवमीदशम्यौ स्पष्टे ॥

सजूर्मित्रावरुणाभ्यां सजूः सोमेन विष्णुना । आ याह्यग्ने अत्रिवत्सुते रण ॥९॥
सऽजूः । मित्रावरुणाभ्यां । सऽजूः । सोमेन । विष्णुना । आ । याहि । अग्ने ।
अत्रिऽवत् । सुते । रण ॥९॥

सजूरादित्यैर्वसुभिः सजूरिंद्रेण वायुना । आ याह्यग्ने अत्रिवत्सुते रण ॥१०॥
सऽजूः । आदित्यैः । वसुऽभिः । सऽजूः । इंद्रेण । वायुना । आ । याहि । अग्ने ।
अत्रिऽवत् । सुते । रण ॥१०॥ ॥६॥

पृष्ठ्यस्य षष्ठेऽहनि वैश्वदेवशस्त्रे स्वस्ति न इति तृचः । सूत्रितं च । स्वस्ति नो मिमीतामश्विना भग इति तृच इति वैश्वदेव । आ० ८ १ । इति ॥ तथा बृहस्पतिसवे वैश्वदेवनिविद्धानार्थोऽयं तृचः । स्वस्ति नो मिमीतामश्विना भग इति वैश्वदेव । आ० ९ ५. । इति सूत्रितत्वात् ॥

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥११॥
स्वस्ति । नः । मिमीतां । अश्विना । भगः । स्वस्ति । देवी । अदितिः । अनर्वणः ।
स्वस्ति । पूषा । असुरः । दधातु । नः । स्वस्ति । द्यावापृथिवी इति । सुऽचेतुना ॥११॥

नोऽस्मभ्यमश्विनावश्विनौ स्वस्त्यविनाशं क्षेमं मिमीतां । कुरुतां । भगश्च स्वस्ति क्षेमं मिमीतां । तथा देव्यदितिश्च स्वस्ति मिमीतां । अनर्वणोऽप्रत्यृतः पूषा असुरः शत्रूणां निरसिता प्राणानां बलानां दाता वा नः स्वस्ति दधातु । नोऽस्मभ्यं द्यावापृथिवी द्यावापृथिव्यावपि सुचेतुना शोभनेन प्रज्ञानेन विशिष्टे स्वस्ति मिमीतां ॥

स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवंतु नः ॥१२॥
स्वस्तये । वायुं । उप । ब्रवामहै । सोमं । स्वस्ति । भुवनस्य । यः । पतिः ।
बृहस्पतिं । सर्वऽगणं । स्वस्तये । स्वस्तये । आदित्यासः । भवंतु । नः ॥१२॥

स्वस्तये क्षेमाय वायुमुप ब्रवामहै। स्तुम इत्यर्थः। सोमं चोप ब्रवामहै। यश्च सोमो भुवनस्य पतिः पालकः। सर्वलोकजीवनस्य सोमायत्तत्वात्। तथा सर्वगणं सर्वदेवगणोपेतं बृहस्पतिं बृहतः कर्मणो मंत्रस्य पालयितारं स्वस्तये स्तुमः। आदित्यास आदित्या अदितेः पुत्राः सर्वे देवा अरुणादयो द्वादश वा नोऽस्माकं स्वस्तये भवतु॥

सत्रमध्ये दीक्षिते व्याधिते सति तस्मिन्नहनि वैश्वदेवशस्त्रेऽयं तृचो निविद्धानार्थः। सूत्रितं च। स्वस्त्यात्रेयं निविद् दध्यात्। आ॰ ६.९.। इति। स्वस्त्यात्रेयशब्देनायं तृचो विवक्षित इति तत्र व्याख्यातं। तथाक्षपादिके सत्रेऽयं तृचो जप्यः॥

विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये।
देवा अवंत्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः॥१३॥
विश्वे। देवाः। नः। अद्य। स्वस्तये। वैश्वानरः। वसुः। अग्निः। स्वस्तये।
देवाः। अवंतु। ऋभवः। स्वस्तये। स्वस्ति। नः। रुद्रः। पातु। अंहसः॥१३॥

विश्वे सर्वेऽपि देवा नोऽस्मानद्यास्मिन्यागदिने स्वस्तये क्षेमायावतु। वैश्वानरः। विश्व एनं नरा नयंतीति वैश्वानरः। वसुः सर्वस्य वासयिताग्निर्देवः। अयमेवाग्निर्वैश्वानर इति शाकपूणिः। नि॰ ७.२३। इति यास्कः। सोऽपि स्वस्तयेऽवतु। देवा ऋभवोऽपि स्वस्तयेऽवतु। रुद्रो दुःखाद्द्रावयिता देवोंऽहसः पापात् स्वस्ति पातु नोऽस्मान्॥

स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति।
स्वस्ति न इंद्रश्चाग्निश्च स्वस्ति नो अदिते कृधि॥१४॥
स्वस्ति। मित्रावरुणा। स्वस्ति। पथ्ये। रेवति।
स्वस्ति। नः। इंद्रः। च। अग्निः। च। स्वस्ति। नः। अदिते। कृधि॥१४॥

हे मित्रावरुणा अहोरात्राभिमानिदेवौ स्वस्ति कुरुतं। हे पथ्ये। पथ्या अंतरिक्षमार्गः। तत्र हिता मार्गाभिमानिनी देवी। हे तादृशि रेवति धनवति देवि स्वस्ति कृधि। इंद्रश्चाग्निश्च प्रत्येकं नोऽस्मभ्यं स्वस्ति कृधि। हे अदिते देवि नः स्वस्ति कृधि। कुरु॥

स्वस्ति पंथामनु चरेम सूर्याचंद्रमसाविव। पुनर्ददताघ्नता जानता सं गमेमहि॥१५॥
स्वस्ति। पंथां। अनु। चरेम। सूर्याचंद्रमसौऽइव। पुनः। ददता। अघ्नता। जानता। सं।
गमेमहि॥१५॥

पंथां पथानं स्वस्ति क्षेमेणानु चरेम सूर्याचंद्रमसाविव। तौ यथा निरालंबे मार्गे राक्षसादिभिरनुपद्रुतौ संचरतस्तद्वत्। किंच वयं प्रवसंतः पुनर्ददताभिमतमघ्नता चिरकालविलंबकोपेनाहिंसता जानताविस्मरता मदीयश्चिरकालं गतः कोऽयमिति संदेहमकुर्वता। मदीयोऽयमिति बुध्यमानेनेत्यर्थः। उक्तलक्षणेन बंधुजनेन सं गमेमहि। यद्वा। पूर्वार्धं प्रवसतां वाक्यमुत्तरार्धं बंधूनां। वयं बंधवो ददताभिमतमुपार्जितं यच्छताघ्नता प्रयासकोपेनाहिंसता जानता सम्यगस्मदधिगच्छता प्रवसता सं गमेमहि॥ ॥७॥

प्र श्यावाश्वेति सप्तदशर्चमष्टमं सूक्तं। अत्रेयमनुक्रमणिका। प्र श्यावाश्व त्र्यूना श्यावाश्वो मारुतं ह सत्पंक्तिः पथ्यंत्या चेति। आत्रेयः श्यावाश्व ऋषिः। ह तादिति प्रयोगादिदमादीनि दश सूक्तानि मरुद्देवत्यानि। षष्ठी सप्तदशी च पंक्त्यौ शिष्टाः पथ्यंतपरिभाषयानुष्टुभः॥ गतो विनियोगः॥

प्र श्यावाश्व धृष्णुयार्चा मरुद्भिर्ऋक्वभिः। ये अद्रोघमनुष्वधं श्रवो मदंति यज्ञियाः ॥१॥
प्र। श्यावऽअश्व। धृष्णुऽया। अर्च। मरुत्ऽभिः। ऋक्वऽभिः। ये। अद्रोघं। अनुऽस्वधं।
श्रवः। मदंति। यज्ञियाः ॥१॥

हे श्यावाश्व एतन्नामक ऋषे धृष्णुया धृष्णुस्त्वमृक्वभिः स्तुत्यान्मरुद्भिर्मरुतः प्रार्च ॥ द्वितीयार्थे तृतीया ॥ एवं स्वयमेव संप्रेष्यति। यद्वा। यजमानो होतारं श्यावाश्वं ब्रूते। यद्वा। मरुद्भिर्मरुत्सदृशैर्ऋक्वभिः स्तोतृभिः सह स्तोत्रैर्वार्च। स्तुहीत्यर्थः। ये मरुतो यज्ञिया यज्ञार्हा अनुष्वधं प्रत्यहं। हविर्लक्षणान्नप्रदानं स्वधा। अनु पश्चाद्वा। अद्रोघमहिंसकं श्रवोऽन्नं लब्ध्वा मदंति हृष्यंति ॥

ते हि स्थिरस्य शवसः सखायः संति धृष्णुया।
ते यामन्ना धृषद्विनस्त्मना पांति शश्वतः ॥२॥
ते। हि। स्थिरस्य। शवसः। सखायः। संति। धृष्णुऽया।
ते। यामन्। आ। धृषत्ऽविनः। त्मना। पांति। शश्वतः ॥२॥

ते हि ते खलु स्थिरस्याविचलितस्य शवसो बलस्य सखायः संति। भवंति सह्यं। धृष्णुया धृष्णवः। ते च यामन्ना। आ इति चार्थे। गमनेऽपि धृषद्विनो धर्षणवंतस्त्मनात्मनानुग्रहेणैवास्मदुपकारमनपेक्ष्यैव शश्वतो बहूनस्मान्पुत्रभृत्यादीन्पांति। रक्षंति ॥

ते स्यंद्रासो नोक्षणोऽति ष्कंदंति शर्वरीः। मरुतामधा महो दिवि क्षमा च मन्महे ॥३॥
ते। स्यंद्रासः। न। उक्षणः। अति। स्कंदंति। शर्वरीः। मरुतां। अध। महः। दिवि। क्षमा।
च। मन्महे ॥३॥

ते मरुतः स्यंद्रासः स्यंदनशीला उक्षणो जलस्य सेक्तारश्च। नेति चार्थे। यस्मात्स्यंद्रा अन्येषां तस्मात् शर्वरीः। शर्वर्यो रात्रयः। कालावयवानित्यर्थः। तानति स्कंदंति। अतिक्रम्य गच्छंति। नित्या इत्यर्थः। यस्मादेते एवंविधास्तस्मान्मरुतामधाधुना महस्तेजो दिवि द्युलोके क्षमा क्षमायां भूमौ च वर्तमानं मन्महे। स्तुमः ॥

मरुत्सु वो दधीमहि स्तोमं यज्ञं च धृष्णुया। विश्वे ये मानुषा युगा पांति मर्त्यं रिषः ॥४॥
मरुत्ऽसु। वः। दधीमहि। स्तोमं। यज्ञं। च। धृष्णुऽया। विश्वे। ये। मानुषा। युगा।
पांति। मर्त्यं। रिषः ॥४॥

हे अध्वर्युहोत्रादयो वो यूयं मरुत्सु धृष्णुया धर्षकेषु दधीमहि ॥ व्यत्ययेनोत्तमः ॥ धत्त। किं। स्तोमं स्तोत्रं यज्ञं च। इज्यतेऽनेनेति यज्ञो हविः। तदुभयं किमर्थं दीयत इति। ये मरुतो विश्वे सर्वेऽपि मानुषा मानुषाणि युगा युगानि। सर्वेषु कालेष्वित्यर्थः। मर्त्यं मरणधर्माणं यजमानं रिषो हिंसकात्सकाशात्पांति रक्षंति ॥

अर्हंतो ये सुदानवो नरो असामिशवसः। प्र यज्ञं यज्ञियेभ्यो दिवो अर्चा मरुद्भ्यः ॥५॥
अर्हंतः। ये। सुऽदानवः। नरः। असामिऽशवसः। प्र। यज्ञं। यज्ञियेभ्यः। दिवः। अर्च।
मरुत्ऽभ्यः ॥५॥

हे होतः हे आत्मन्वा येऽर्हंतः पूज्याः सुदानवः शोभनदाना नरो नेतारः कर्मणामसामिशवसोऽनल्पबलाः

संति तेभ्यो यज्ञियेभ्यो यज्ञार्हेभ्यो दिवो द्योतमानेभ्यो मरुद्भ्यः ॥ विभक्तिवचनयोर्व्यत्ययः ॥ यद्वा कर्मणि षष्ठी ॥ दीप्तं यज्ञं यज्ञसाधनं हविः प्रार्च । पूजय । प्रयच्छेत्यर्थः । अथवा दिवोऽंतरिक्षादागतेभ्य इति संबंधः ॥ ॥ ८ ॥

आ रुक्मैरा युधा नर ऋष्वा ऋष्टीरसृक्षत ।
अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः ॥६॥

आ । रुक्मैः । आ । युधा । नरः । ऋष्वाः । ऋष्टीः । असृक्षत ।
अनु । एनान् । अह । विऽद्युतः । मरुतः । जज्झतीःऽइव । भानुः । अर्त । त्मना । दिवः ॥६॥

नरो वृष्टेर्नेतार ऋष्वा महांतो मरुतो रुक्मै रोचमानैराभरणविशेषैरा रोचंत इति शेषः ॥ उपसर्गश्रुतेः स्वगतक्रियाध्याहारः ॥ तथा युधा प्रहरणसाधनेनायुधेना रोचंते । एते मरुत ऋष्टीरायुधविशेषानसृक्षत । प्रक्षिपंति मेघभेदार्थं । एनान्मरुतो विद्युतोऽपि जज्झतीरिव शब्दकारिण्य आप इव । जज्झतीरापो भवंति शब्दकारिण्यः । नि० ६. १६. । इति निरुक्तं । अन्वह अनुगच्छंत्येव । दिवो द्योतमानस्य मरुद्गणस्य भानुर्दीप्तिस्त्मना स्वयमेवार्त । निरगात् ॥

ये वावृधंत पार्थिवा य उरावंतरिक्ष आ । वृजने वा नदीनां सधस्थे वा महो दिवः ॥७॥

ये । ववृधंत । पार्थिवाः । ये । उरौ । अंतरिक्षे । आ । वृजने । वा । नदीनां । सधऽस्थे । वा । महः । दिवः ॥७॥

ये मरुतः पार्थिवाः पृथिवीसंबद्धाः संतो ववृधंत वर्धंते । ये चोरौ महत्यंतरिक्षे च ववृधंत । आ इति चार्थे । नदीनां स्पंदनवतीनां वृजने वा बले ववृधंत । महो महतो दिवो द्युलोकस्य सधस्थे सहस्थाने च ववृधंत । उभयत्र वाशब्दश्चार्थे । एवं सर्वत्र वर्धमाना मरुतो वृष्ट्यर्थमृष्टीरसृक्षतेति पूर्वत्र संबंधः ॥

शर्धो मारुतमुच्छंस सत्यशवसमृभ्वसं । उत स्म ते शुभे नरः प्र स्पंद्रा युजत त्मना ॥८॥

शर्धः । मारुतं । उत् । शंस । सत्यऽशवसं । ऋभ्वसं । उत । स्म । ते । शुभे । नरः । प्र । स्पंद्राः । युजत । त्मना ॥८॥

हे स्तोतर्मारुतं शर्धो बलमुत उत्कृष्टं शंस । स्तुहि । कीदृशं शर्धः । सत्यशवसं सत्यबलमृभ्वसं महदिति प्रवृद्धं । उत स्मापि च नरो वृष्टेर्नेतारस्ते मरुतः शुभे उदकार्थं प्र युजत प्रायुंजत समयोजयन् त्मनात्मनैव जगद्रक्षाबुद्ध्यैव स्पंद्राश्चलनस्वभावाः पृषतीरित्यर्थः ॥

उत स्म ते परुष्ण्यामूर्णा वसत शुंध्यवः । उत पव्या रथानामद्रिं भिंदंत्योजसा ॥९॥

उत । स्म । ते । परुष्ण्यां । ऊर्णाः । वसत । शुंध्यवः । उत । पव्या । रथानां । अद्रिं । भिंदंति । ओजसा ॥९॥

उत स्मापि च ते मरुतः परुष्ण्यामेतन्नामिकायां नद्यां वर्तंते । ये ऊर्णा दीप्तीः शुंध्यवः शोधका वसत आच्छादयंति ते । उतापि च पव्या नेम्या रथानां स्वकीयानां रथचक्रेणौजसा बलेनाद्रिं भिंदंति । मेघं गिरिं वा विदारयंति ॥

आपथयो विपथयोऽंतस्पथा अनुपथाः । एतेभिर्मह्यं नामभिर्यज्ञं विष्टार ओहते ॥१०॥

आऽपथयः । विऽपथयः । अंतःऽपथाः । अनुऽपथाः । एतेभिः । मह्यं । नामऽभिः ।
यज्ञं । विऽस्तारः । ओहते ॥१०॥

आपथयः। अस्मदभिमुखा मार्गा येषां ते तादृशाः। विपथयो विष्वङ्मार्गा अंतस्पथा दरीसुपिरादिमार्गा अनुपथा अनुकूलमार्गाश्च ये मरुतः संति त एतैर्भिरेतैश्चतुर्विधैर्नामभिर्नामकैः स्वरूपैर्मह्यं मदर्थं यज्ञं विस्तारो विस्तृताः संत ओहते। वहति। यद्वा। एतैर्नामभिरुदकैः सार्धं यज्ञमोहते॥ ॥९॥

अधा नरो न्योहतेऽधा नियुत ओहते।
अधा पारावता इति चित्रा रूपाणि दर्श्या ॥११॥
अध। नरः। नि। ओहते। अध। निऽयुतः। ओहते।
अध। पारावताः। इति। चित्रा। रूपाणि। दर्श्या ॥११॥

अधाथ नरोऽभिमतवृष्ट्यादिनेतारो न्योहते। नितरां वहति जगत्। अध नियुतः स्वयमेव मिश्रयितारः सत ओहते। अधाथ पारावताः। परावद्दूरदेशः। तत्संबंधिनश्चांतरिक्षादिदूरदेशे ग्रहतारामेघादिधारकाः सत ओहत इत्यर्थः। इत्युक्तप्रकारेण तेषां रूपाणि चित्रा नानाविधानि चायनीयानि वा दर्श्या स्वव्यापारैर्दर्शनीयानि भवंत्विति शेषः॥

छंदःस्तुभः कुभन्यव उत्समा कीरिणो नृतुः।
ते मे के चिन्न तायव ऊमा आसन्दृशि त्विषे ॥१२॥
छंदःऽस्तुभः। कुभन्यवः। उत्सं। आ। कीरिणः। नृतुः।
ते। मे। के। चित। न। तायवः। ऊमाः। आसन। दृशि। त्विषे ॥१२॥

छंदःस्तुभश्छंदोभिः स्तोतारः कुभन्यव उदकेच्छवः कीरिणः स्तोतार उत्सं कूपमंपत्य तृषिताय गोतमाय यान्मरुत आ नृतुः सर्वतोऽकुर्वन अनयन्वा स्तोत्रं। यद्वा। ये छंदःस्तुभश्छंदोभिः स्तुत्याः॥ स्तोभतिः स्तुतिकर्मा॥ कुभन्यवः संस्कारो वृष्ट्युदकस्य॥ कुभिरुंदनकर्मा॥ कीरिणः स्तोतुर्गोतमस्य पानार्थमुत्सं कूपमा नृतुः आनीतवंतः। असिंचन्नुत्सं गोतमाय तृष्णजे। ऋसं॰ १. ८५ ११। इति ह्युक्तं॥ नृ नय इत्यस्य वा नर्ततेर्वा विक्षेपमात्रार्थस्येदं रूपं॥ ते मरुतः के चिन्न मह्यं तायवो न कदाचिदप्यदृश्यास्तस्करा इव स्थिता ऊमा रक्षका दृशि दर्शने आसन। विषयभूता अभवन। केचित्त्विषे शरीरदीप्त्यै बलाय वासन। प्राणरूपेणेति भावः॥

य ऋष्वा ऋष्टिविद्युतः कवयः संति वेधसः।
तमृषे मारुतं गणं नमस्या रमया गिरा ॥१३॥
ये। ऋष्वाः। ऋष्टिऽविद्युतः। कवयः। संति। वेधसः।
तं। ऋषे। मारुतं। गणं। नमस्य। रमय। गिरा ॥१३॥

ये मरुत ऋष्वा दर्शनीया ऋष्टिविद्युत आयुधैर्विद्योतमानाः कवयो मेधाविनो वेधसः सर्वस्य विधातारः संति तं तेषां मारुतं गणं रमया रमणीयया गिरा स्तुत्या हे ऋषे श्यावाश्व नमस्य। परिचर। स्तुहि॥

अच्छ ऋषे मारुतं गणं दाना मित्रं न योषणा।
दिवो वा धृष्णव ओजसा स्तुता धीभिरिषण्यत ॥१४॥
अच्छ। ऋषे। मारुतं। गणं। दाना। मित्रं। न। योषणा।
दिवः। वा। धृष्णवः। ओजसा। स्तुताः। धीभिः। इषण्यत ॥१४॥

हे ऋषे मारुतं गणं मरुत्संघं मित्रं न आदित्यमिव दाना हविर्दानेन योषणा ॥ यौतेरिदं रूपं । यौतीति योषा स्तुतिः ॥ तया चाच्छ अभिगच्छेति शेषः । ऋषेरुत्तरार्धः प्रत्यक्षवादः । ओजसा बलेन हे धृष्णवो धर्षका मरुतो दिवो वा द्युलोकाद्वा । वाशब्दश्रुतेरितरलोकद्वयाद्वा । धीभिरस्मदीयाभिः स्तुतिभिः स्तुता इषण्यत । गच्छत यज्ञं ॥

नू मन्वान एषां देवाँ अच्छा न वक्षणा । दाना सचेत सूरिभिर्यामश्रुतेभिरञ्जिभिः ॥१५॥

नु । मन्वानः । एषां । देवान् । अच्छ । न । वक्षणा । दाना । सचेत । सूरिऽभिः । यामऽश्रुतेभिः । अंजिऽभिः ॥१५॥

नु क्षिप्रमेषां मरुतां । एतान्मरुत इत्यर्थः । मन्वानः स्तुवन् देवान्मरुद्व्यतिरिक्तान्वक्षणा वहनेन निमित्तेनाच्छ अभिप्राप्य न मनुते । स स्तोता सूरिभिर्मेधाविभिर्यामश्रुतेभिः शीघ्रगमनेन विश्रुतैरंजिभिः फलस्य व्यंजकैर्मरुद्भिः ॥ सर्वाः पंचम्यर्थे तृतीयाः ॥ उक्तलक्षणेभ्यो मरुद्भ्यो दानाभिमतदानानि सचेत । सगच्छते ॥

प्र ये मे बन्ध्वेषे गां वोचन्त सूरयः पृश्निं वोचन्त मातरं ।
अधा पितरमिष्मिणं रुद्रं वोचन्त शिक्वसः ॥१६॥

प्र । ये । मे । बंधुऽएषे । गां । वोचंत । सूरयः । पृश्निं । वोचंत । मातरं ।
अध । पितरं । इष्मिणं । रुद्रं । वोचंत । शिक्वसः ॥१६॥

ये मरुतो मे मह्यं बन्ध्वेषे एषां बंधूनामन्वेषणे सति सूरयः प्रेरका गां माध्यमिकां वाचं गोदेवतां वा प्र वोचंत प्रावोचन् ॥ अर्वाचीनपदमध्याहार्यं । ऋषिर्मरुद्वाक्यमनुवदति । तस्मादुत्तरयोराख्यातयोर्व्यवधानेनाद्या निघातः ॥ ते पृश्निं पृश्निवर्णां गां वा मातरं वोचंत । अब्रुवन् । पृश्नियै वै पयसो मरुतो जाता इति श्रुतेः । अधाथ पितरं स्वकीयमिष्मिणं गमनवंतमन्नवंतं वा रुद्रं वोचंत शिक्वसः शक्ताः । मरुतां रुद्रेण पुत्रत्वपरिग्रहो बहुकृत्व उपपादितः ॥

सप्त मे सप्त शाकिन एकमेका शता ददुः ।
यमुनायामधि श्रुतमुद्राधो गव्यं मृजे नि राधो अश्व्यं मृजे ॥१७॥

सप्त । मे । सप्त । शाकिनः । एकंऽएका । शता । ददुः ।
यमुनायां । अधि । श्रुतं । उत् । राधः । गव्यं । मृजे । नि । राधः । अश्व्यं । मृजे ॥१७॥

सप्त सप्तसंख्याकाः संघाः । सप्तगणा वै मरुत इति श्रुतेः । अदितिगर्भं वर्तमानं वायुमिंद्रः प्रविश्य सप्तधा विदार्य पुनरेकैकं सप्तधा व्यदारयत् त एकोनपंचाशन्मरुद्गणा अभवन्निति पुराणेषु प्रसिद्धं । ते च सप्तसंख्याकाः शाकिनः सर्वमपि कर्तुं शक्ताः । ते चैकमेकैको गणो मे मह्यं शता शतसंख्याकानि गवाश्वयूथानि ददुः । दत्तवतः । प्रयच्छन्त्विति वाशीः । तदेव यमुनाया नद्यामधि । ऋषेः सप्तम्यर्थानुवादो । तत्र श्रुतं प्रसिद्धं गव्यं गोसमूहात्मकं गोसंबंधि वा राधो धनमुन्मृजे । उन्मार्जयामि । तथा तदेवाश्वसमूहात्मकं तत्संबंधि वा राधो धनं नि मृजे । निमार्ज्मि ॥ ॥१७॥

को वेद जानमिति षोडशर्चं नवमं सूक्तं श्यावाश्व आर्षं । आद्याष्टम्यादशम्येकादशीपंचदश्यः ककुभः षष्ठीसप्तमीनवमीत्रयोदशीचतुर्दशीषोडश्यः सतोबृहत्यो द्वादशी च गायत्र्यौ द्वितीया बृहती तृतीयानुष्टुप् चतुर्थी पुरउष्णिक् । मरुतो देवता । तथा चानुक्रांतं । को वेद षोळश ककुब्बृहत्यनुष्टुप् पुरउष्णिक् ककुप्सतोबृहत्यौ गायत्री सतोबृहती ककुभौ गायत्री सतोबृहत्यौ ककुप्सतोबृहतीति ॥ विनियोगो लैंगिकः ॥

को वेद जानमेषां को वा पुरा सुम्नेष्वास मरुतां । यद्युयुज्रे किलास्यः ॥१॥

कः । वेद । जानं । एषां । कः । वा । पुरा । सुम्नेषु । आस । मरुतां । यत् । युयुज्रे ।
किलास्यः ॥१॥

एषा ॥ मरुतां पूर्वसूक्ते प्रस्तुतत्वादत्रान्वादेशविषयत्वादेषामित्यस्य निघातता ॥ जानमुत्पत्तिं को वेद । जानाति कः पुमान । को वा पुरा पूर्वमप्येषां मरुतां सुम्नेषु सुखेष्वास । भवति । यद्यदेते किलास्यः किलासीः । पृषतीरित्यर्थः । ता युयुज्रे रथे योजितवंतः तदेषां स्थितिं बललक्षणानि सुखानि च को जानातीत्यर्थः । वेगविषये सर्वत्र वायोरुपमास्पदत्वादिति भावः ॥

एतान्रथेषु तस्थुषः कः शुश्राव कथा ययुः ।
कस्मै सस्रुः सुदासे अन्वापय इळाभिर्वृष्टयः सह ॥२॥

आ । एतान । रथेषु । तस्थुषः । कः । शुश्राव । कथा । ययुः ।
कस्मै । सस्रुः । सुऽदासे । अनु । आपयः । इळाभिः । वृष्टयः । सह ॥२॥

एतान्मरुतो रथेषु तस्थुषः स्थितवतः क आ शुश्राव । श्रावयेदित्यर्थः । यद्वा । एतेषां क्रोशध्वनिं रथध्वनिं च कः शृणुयात । कथा कथं ययुर्गच्छंति तदपि को जानाति । यद्वा । तान कथमन्ये देवादयोऽनुगच्छेयुः । कस्मै सुदासे सुदानायापयो बंधुभूता व्याप्ता वृष्टयो वर्षकाः ॥ अयं कर्तरि क्तिच ॥ इळाभिरन्नैर्विधैरन्नैः सह सहिता अनु सस्रुः । अनुक्रमेणावतेरुः ॥

ते म आहुर्य आययुरुप द्युभिर्विभिर्मदे । नरो मर्या अरेपस इमान्पश्यन्निति ष्टुहि ॥३॥

ते । मे । आहुः । ये । आऽययुः । उप । द्युऽभिः । विऽभिः । मदे । नरः । मर्याः । अरेपसः ।
इमान । पश्यन । इति । स्तुहि ॥३॥

ऋषिर्ऋग्द्वयाभ्यां मरुत्प्रादुर्भावमाख्यास्यन्ननया प्रादुर्भूतान्पश्यन्नाह । ते मरुत इत्थं लपंते मे मह्यमाहुः य उपाययुः ये मरुतो मा प्राप्ताः । कैः साधनैः । द्युभिर्द्योतमानैर्विभिर्गंतृभिरश्वैः । किमर्थं । मदे मदाय सोमपानजनिताय । किमाहुरिति तदनूद्यते । नरो नेतारो मर्या मनुष्येभ्यो हिता अरेपसोऽल्पपापाः । हे ऋषे इमानस्मान पश्यन तथा स्थितान चक्षुषावलोकयन स्तुहीत्याहुः । यद्वा । इतीत्थं पश्यन स्तुहीति ॥

ये अंजिषु ये वाशीषु स्वभानवः स्रक्षु रुक्मेषु खादिषु । श्राया रथेषु धन्वसु ॥४॥

ये । अंजिषु । ये । वाशीषु । स्वऽभानवः । स्रक्षु । रुक्मेषु । खादिषु । श्रायाः । रथेषु ।
धन्वऽसु ॥४॥

अनया मरुतां स्वरूपं निरूपयति । हे मरुतो युष्माकं ये प्रसिद्धाः स्वभानवः स्वदीप्तयोऽजिष्वाभरणेषु श्राया आश्रयभूता संति । ये च वाशीष्वायुधेषु । ये च स्रक्षु माल्येषु । ये रुक्मेषूरोभूषणेषु । ये च खादिषु हस्तपादस्थितकटकेषु । हस्तेषु खादिश्च कृतिश्च । ऋसं॰ १ १६८. ३ । पत्सु खादयः । ऋसं॰ ५ ५४. ११ । इति हि श्रुती भवतः । रथेषु धन्वसु च ये च स्वभानवः श्रायाः संति । सुधन्वान इषुमंतः सुरथाः पृश्निमातरः । ऋसं॰ ५ ५७. २. । इति च निगमः । तान सर्वान स्तुम इति शेषः । यद्वा । ये स्वभानवः स्वायत्तदीप्तयो मरुतोऽजिष्वाभरणेषु निमित्तेषु श्राया आश्रया भविष्यामः । ये च वाशीषु निमित्तेषु । एवं सर्वत्र योज्यं । तादृग्विधानिमान्पश्यन् स्तुहीति पूर्वत्र संबंधः । तेषामेवेदं वाक्यं ॥.

युष्माकं स्मा रथाँ अनु मुदे दधे मरुतो जीरदानवः। वृष्टी द्यावो यतीरिव॥५॥

युष्माकं। स्म। रथान्। अनु। मुदे। दधे। मरुतः। जीरऽदानवः। वृष्टी। द्यावः। यतीःऽइव॥५॥

हे जीरदानवः शीघ्रदाना हे मरुतो युष्माकं रथाननूद्दिश्य मुदे मोदाय दधे। धारयामि। करोमीत्यर्थः। सामर्थ्यात्स्तुतीरिति लभ्यते। स्मेति पूरणः। वृष्टी वृष्ट्या यतीः सर्वत्र गच्छन्तीर्द्यावो दीप्तीरिव दृश्यमानान् रथानिति संबंधः॥ ॥११॥

कारीर्यां तिस्रः पिण्ड्यो होतव्याः। तत्र द्वितीयाया आ यं नर इत्यनुवाक्या। सूत्रितं च। आ यं नरः सुदानवो ददाशुषे विद्युन्महसो नरो अश्मदिद्यवः। आ० २ १३। इति॥

आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः।
वि पर्जन्यं सृजंति रोदसी अनु धन्वना यंति वृष्टयः॥६॥

आ। यं। नरः। सुऽदानवः। ददाशुषे। दिवः। कोशं। अचुच्यवुः।
वि। पर्जन्यं। सृजंति। रोदसी इति। अनु। धन्वना। यंति। वृष्टयः॥६॥

नरो नेतारः सुदानवः शोभनदाना मरुतो यं कोशं। मेघनामैतत्। अपां कोशवद्धारकं मेघं ददाशुषे हविर्दत्तवते यजमानाय दिवोऽन्तरिक्षादाचुच्यवुः आच्यावयन्ति पर्जन्यं मेघं रोदसी अनु द्यावापृथिव्यावनुसृत्य वि सृजन्ति। विमोचयन्ति। पश्चात् धन्वना सर्वत्र गच्छतोदकेन सह वृष्टयो वृष्टिप्रदा मरुतो यन्ति। सर्वत्र व्याप्नुवन्ति॥

ततृदानाः सिंधवः क्षोदसा रजः प्र सस्रुर्धेनवो यथा।
स्यन्ना अश्वा इवाध्वनो विमोचने वि यद्वर्तंत एन्यः॥७॥

ततृदानाः। सिंधवः। क्षोदसा। रजः। प्र। सस्रुः। धेनवः। यथा।
स्यन्नाः। अश्वाःऽइव। अध्वनः। विऽमोचने। वि। यत्। वर्तंते। एन्यः॥७॥

सिंधवः स्यन्दमाना अपस्ततृदाना निर्भिन्दन्तो मेघान्मरुतः क्षोदसोदकेन सह रजोऽन्तरिक्षं प्र सस्रुः। प्रसरन्ति। धेनवो यथा पयः सिंचन्त्यो नवप्रसूता गाव इव। किंच दृष्टान्तान्तरं। स्यन्ना आशुगतयोऽश्वा इव यथाध्वनो विमोचने मनुष्याणामध्वविमोकाय संचरन्ति तद्वदित्यर्थः। यद्यदेन्यः। नदीनामैतत्। नद्यो वि वर्तन्ते विविधं संचरन्ति। अथवा प्रतिनिवृत्य वर्तन्ते। प्रवर्धन्त इत्यर्थः। तदेव कुर्वन्तीति पूर्वेणान्वयः॥

आ यात मरुतो दिव आंतरिक्षादमादुत। माव स्थात परावतः॥८॥

आ। यात। मरुतः। दिवः। आ। अंतरिक्षात्। अमात्। उत। मा। अव। स्थात। पराऽवतः॥८॥

हे मरुतः परावतोऽत्यन्तदूरदेशात् दिवो द्युलोकादा यात। तथान्तरिक्षादा यात। उतापि चामादस्माल्लोकादा यात। परावत इत्यत्रापि वा योज्यं। परावतो दूरदेशे तत्र तत्र द्युलोकादौ माव स्थात। अवस्थितिं मा कुरुत॥

मा वो रसानितभा कुभा क्रुमुर्मा वः सिंधुर्नि रीरमत्।
मा वः परि ष्ठात्सरयुः पुरीषिण्यस्मे इत्सुम्नमस्तु वः॥९॥

मा। वः। रसा। अनितभा। कुभा। क्रुमुः। मा। वः। सिंधुः। नि। रीरमत्।
मा। वः। परि। स्थात्। सरयुः। पुरीषिणी। अस्मे इति। इत्। सुम्नं। अस्तु। वः ॥९॥

हे मरुतो वो युष्मान् रसा। नदीनामैतत्। रसा नदी भवति। नि॰ ११. २५.। इति निरुक्तं। रसनवती शब्दवती। अनितभा। इता प्राप्ता भा यस्याः सेतभा। न तादृश्यनितभा। कुभा कुत्सितदीप्तिश्च मा नि रीरमत्। मा निकृष्टं रमतु। क्रुमुः सर्वत्रक्रमणः सिंधुः समुद्रश्च मा नि रीरमत्। तथा पुरीषिणी। पुरीषमुदकं। तद्वती सरयुरपि मा परि ष्ठात्। परितस्तिष्ठतु। मा निरुणद्धु। अस्मे इत् अस्मास्वेवास्तु सुम्नं त्वदागमनजनितं सुखं वो युष्माकं संबंधि युष्मत्स्वभूतं ॥

तं वः शर्धं रथानां त्वेषं गणं मारुतं नव्यसीनां। अनु प्र यंति वृष्टयः ॥१०॥
तं। वः। शर्धं। रथानां। त्वेषं। गणं। मारुतं। नव्यसीनां। अनु। प्र। यंति। वृष्टयः ॥१०॥

तं मारुतमित्यनेन संबध्यते। वो युष्माकं प्रेरकं नव्यसीनां नूतनानां रथानां शर्धं बलं त्वेषं दीप्तं तं मारुतं गणं च स्तौमीत्यर्थः। यद्वा। रथानां रंहणशीलानां वो युष्माकं शर्धं परेषामभिभावुकं गणं स्तौमीत्येकमेव वाक्यं। अथ परोक्षकृतः। वृष्टयो युष्माननु प्र यात। प्रकर्षेण गच्छति। यद्वा। वर्षका मरुतोऽनु अनुकूलं प्रकृष्टं यंति। गच्छंति ॥ ॥१२॥

शर्धंशर्धं व एषां व्रातंव्रातं गणंगणं सुशस्तिभिः। अनु क्रामेम धीतिभिः ॥११॥
शर्धंऽशर्धं। वः। एषां। व्रातंऽव्रातं। गणंऽगणं। सुशस्तिऽभिः। अनु। क्रामेम।
धीतिऽभिः ॥११॥

हे मरुत एषां वो युष्माकं शर्धं शर्धं तत्तद्बलं व्रातं व्रातं। अविवक्षितगणो व्रातः। तं तं व्रातं वो गणं गणं तं तं सप्तसप्तसमुदायात्मकं गणं गणं च सुशस्तिभिः शोभनस्तुतिभिर्धीतिभिः कर्मभिर्हविष्प्रदानादिलक्षणैरनु क्रामेम। अनुगच्छेम ॥

कस्मा अद्य सुजाताय रातहव्याय प्र ययुः। एना यामेन मरुतः ॥१२॥
कस्मै। अद्य। सुऽजाताय। रातऽहव्याय। प्र। ययुः। एना। यामेन। मरुतः ॥१२॥

अद्यास्मिन्दिने कस्मै सुजाताय रातहव्याय दत्तहविष्काय प्र ययुः प्रकर्षेण गच्छेयुरनानेन यामेन रथेन मरुतः ॥

येन तोकाय तनयाय धान्यं१बीजं वहध्वे अक्षितं।
अस्मभ्यं तद्धत्तन यद्व ईमहे राधो विश्वायु सौभगं ॥१३॥
येन। तोकाय। तनयाय। धान्यं। बीजं। वहध्वे। अक्षितं।
अस्मभ्यं। तत्। धत्तन। यत्। वः। ईमहे। राधः। विश्वऽआयु। सौभगं ॥१३॥

हे मरुतो येन सदयेन मनसा तोकाय पुत्राय तनयाय तत्पुत्राय धनाय वा धान्यं बीजमक्षितमक्षीणं वहध्वे धारयध्वे तेन चित्तेनास्मभ्यं तद्धान्यं बीजं धत्तन। यच्च वो युष्मानीमहे याचामहे राधो धनं विश्वायु सर्वान्नोपेत कृत्स्नायुष्योपेतं वा सौभगं सौभाग्यं च तद्धत्तनेति समन्वयः ॥

अतीयाम निदस्तिरः स्वस्तिभिर्हित्वावद्यमरातीः।
वृष्ट्वी शं योराप उस्रि भेषजं स्याम मरुतः सह ॥१४॥

अति । इयाम । निदः । तिरः । स्वस्तिऽभिः । हित्वा । अवद्यं । अरातीः ।
वृष्टी । शं । योः । आपः । उस्रि । भेषजं । स्याम । मरुतः । सह ॥१४॥

हे मरुतो वयं स्वस्तिभिः क्षेमैरवद्यं पापं हित्वा परित्यज्य निदो निंदकानरातीः शत्रूंश्च तिरः प्राप्नाम । यद्वा तिरोऽंतर्हितं । अतीयाम । अतिक्रम्य गच्छेम । तिरस्कुर्म इत्यर्थः । अनेनानिष्टपरिहारः प्रार्थित उत्तरेणेष्टप्राप्तिरुच्यते । वृष्टी वृष्टिषु युष्मत्प्रेरितासु सतीषु शं सुखं योः पापानां यावनं चाप उदकानि ॥ शमः स्याभिजस ॥ उस्रि गोयुक्तं भेषजं । यद्यप्येतदुदकनाम तथापि पृथगपामभिधानादत्र तद्धेतुकार्यमन्नमुच्यते । तत सर्वं सह स्याम लभेमहि हे मरुतो वयं । यद्वा । आपो युष्मत्प्रेरिता उक्तं सर्वं कुर्वंतु । वयं सर्वं सहैव स्याम । भवेम युष्मत्स्वभूताः ॥

सुदेवः समहासति सुवीरो नरो मरुतः स मर्त्यः । यं त्रायध्वे स्याम ते ॥१५॥
सुऽदेवः । समह । असति । सुऽवीरः । नरः । मरुतः । सः । मर्त्यः । यं । त्रायध्वे ।
स्याम । ते ॥१५॥

हे समह । प्रशस्तवचनः समहशब्दः । हे पूजित मरुतां गण सुदेवः कल्याणमरुत्सकदेवोपेतोऽसति । भवति । हे नरो नेतारो हे मरुतः स मर्त्यः सुवीरः शोभनपुत्राद्युपेतश्चासति । भवति । यं मर्त्यं त्रायध्वे पालयध्वे । एवं भवति ते वयं स्याम युष्मदीयाः ॥

स्तुहि भोजान्स्तुवतो अस्य यामनि रणन्गावो न यवसे ।
यतः पूर्वाँ इव सखीँरनु ह्वय गिरा गृणीहि कामिनः ॥१६॥
स्तुहि । भोजान । स्तुवतः । अस्य । यामनि । रणन । गावः । न । यवसे ।
यतः । पूर्वानऽइव । सखीन । अनु । ह्वय । गिरा । गृणीहि । कामिनः ॥१६॥

हे ऋषे स्तुवतः स्तुतिं कुर्वतोऽस्य यजमानस्य यामनि यज्ञे भोजान दातॄन्मरुतः स्तुहि । गावो न यवसे । तृणादिभक्षणाय गच्छंत्यो गावो यथा रमंते तद्वन्मरुतोऽपि रणन । रमंता । यतो गच्छंतो मरुतः पूर्वान पुरातनान सखीनिवानु ह्वय । आह्वय । कामिनः स्तुतीर्धावतो मरुतो गिरा स्तुत्या गृणीहि । स्तुहि ॥ ॥१३॥

प्र शर्धायेति पंचदशर्चं दशमं सूक्तं श्यावाश्वस्यार्षं मरुद्देवताकं । चतुर्दशी त्रिष्टुप् शिष्टा जगत्यः । प्र शर्धाय पंचोना जागतमुपात्या त्रिष्टुबित्यनुक्रांतं ॥ सूक्तविनियोगो लैंगिकः ॥ आग्निमारुत्या प्रधानस्य याज्या । सूत्रितं च । प्र शर्धाय मारुताय स्वभानव इत्यद्रीमनुच्य मारुत्या यजेत । आ॰ २ ११ । इति ॥

प्र शर्धाय मारुताय स्वभानव इमां वाचमनजा पर्वतच्युते ।
घर्मस्तुभे दिव आ पृष्ठयज्वने द्युम्नश्रवसे महि नृम्णमर्चत ॥१॥
प्र । शर्धाय । मारुताय । स्वऽभानवे । इमां । वाचं । अनज । पर्वतऽच्युते ।
घर्मऽस्तुभे । दिवः । आ । पृष्ठऽयज्वने । द्युम्नऽश्रवसे । महि । नृम्णं । अर्चत ॥१॥

प्र अनजेति संबंधः । मारुताय मरुत्संबंधिने शर्धाय बलायेमां क्रियमाणां वाचं स्तुतिं प्रानज । प्रापय । स्वभानवे स्वायत्ततेजसे पर्वतच्युते पर्वतस्य च्यावयित्रे घर्मस्तुभे घर्मस्य स्तोभयित्रे दिव आ द्युलोकादागच्छते पृष्ठयज्वने पट्‌ पृष्ठं रथंतरबृहदादिभिरीज्यमानाय द्युम्नश्रवसे द्योतमानान्नाय महि महत प्रभूतं नृम्णं धनं हविर्लक्षणमर्चत । ददतेत्यर्थः ॥

कारीर्यां प्रथमस्याः पिंड्याः प्र वो मरुत इति याज्या । सूत्रितं च । प्र वो मरुतस्तविषा आ य नरः । आ० २ १३ । इति ॥

प्र वो मरुतस्तविषा उदन्यवो वयोवृधो अश्वयुजः परिज्रयः ।
सं विद्युता दधति वाशति त्रितः स्वरंत्यापोऽवना परिज्रयः ॥२॥
प्र । वः । मरुतः । तविषाः । उदन्यवः । वयःऽवृधः । अश्वऽयुजः । परिऽज्रयः ।
सं । विऽद्युता । दधति । वाशति । त्रितः । स्वरंति । आपः । अवना । परिऽज्रयः ॥२॥

हे मरुतो वो युष्माकं गणाः प्र प्रादुर्भवंति । कीदृशा गणाः । तविषा दीप्ता महांतो वा उदन्यव उदकेच्छवो जगद्रक्षणार्थं वयोवृधोऽन्नस्य वर्धयितारोऽश्वयुजो गमनाय रथेऽश्वानां योक्तारः परिज्रयः परितो गंतारो विद्युता सं दधति । संगच्छंते । तदानीं त्रितस्त्रिषु स्थानेषु तायमानो मेघो मरुद्गणो वा वाशति । शब्दयति । अस्मिन्पक्षे संघवादोऽयं । तदापः परिज्रयः परितो गंत्र्य आपोऽवनावनौ भूमौ स्वरंति । अधः पतंति ॥

विद्युन्महस इति तृतीया कारीर्यामेव द्वितीयस्याः पिंड्या याज्या । सूत्रितं च । विद्युन्महसो नरोऽश्मदिद्यवः कृष्णं नियानं हरयः सुपर्णाः । आ० २ १३ । इति ॥

विद्युन्महसो नरो अश्मदिद्यवो वातत्विषो मरुतः पर्वतच्युतः ।
अब्दया चिन्मुहुरा ह्रादुनीवृतः स्तनयदमा रभसा उदोजसः ॥३॥
विद्युत्ऽमहसः । नरः । अश्मऽदिद्यवः । वातऽत्विषः । मरुतः । पर्वतऽच्युतः ।
अब्दऽया । चित् । मुहुः । आ । ह्रादुनिऽवृतः । स्तनयत्ऽअमाः । रभसाः ।
उत्ऽओजसः ॥३॥

विद्युन्महसो विद्योतमानतेजसो नरो वृष्ट्यादेर्नेतारोऽश्मदिद्यवो व्याप्तायुधा अश्ममयायुधा वा वातत्विषः प्राप्तदीप्तयः पर्वतच्युतः पर्वतानां मेघानां वा च्यावयितारोऽब्दया चिन्मुहुरुदकानां दातारः ॥ शसो याजादेशः । चिदिति पूरणः ॥ ह्रादुनीवृतो ह्रादुन्या अशनेः प्रवर्तकाः स्तनयदमाः । अमाशब्दः साहित्यवाची । शब्दोपेतगणा इत्यर्थः । रभसा वृष्ट्यर्थमुद्युञ्जाना उदोजस उद्गतबला मरुतो वृष्ट्यर्थं प्रादुर्भवंतीत्यर्थः ॥

व्य१क्तून्रुद्रा व्यहानि शिक्वसो व्य१न्तरिक्षं वि रजांसि धूतयः ।
वि यदज्राँ अजथ नाव ईं यथा वि दुर्गाणि मरुतो नाह रिष्यथ ॥४॥
वि । अक्तून् । रुद्राः । वि । अहानि । शिक्वसः । वि । अंतरिक्षं । वि । रजांसि । धूतयः ।
वि । यत् । अज्रान् । अजथ । नावः । ईं । यथा । वि । दुःऽगानि । मरुतः । न । अह ।
रिष्यथ ॥४॥

हे रुद्रा रुद्रपुत्रा मरुतः अक्तून् रात्रीर्व्यजथेत्युत्तरार्धगतेन संबध्यते । एवं सर्वत्रेति । विपर्येति तस्यार्थः । अहान्यपि व्यजथ । हे शिक्वसः शक्ताः सर्वमपि कर्तुमंतरिक्षं व्यजथ । तथा रजांसि व्यजथ । हे धूतयः कंपका यद्यदाज्रान्मेघान् व्यजथ गमयथ नाव ईं ता यथा समुद्रं तद्वत् दुर्गाणि शत्रुनगराणि व्यजथ हे मरुतो माह रिष्यथ । नैव हिंसथ ॥

तद्वीर्यं॑ वो मरुतो महित्व॒नं दी॒र्घं त॑तान॒ सूर्यो॒ न योज॑नं ।
एता॒ न यामे॒ अगृ॑भीतशोचिषोऽनश्वदां॒ यन्न्यया॑तना गि॒रिं ॥५॥
तत् । वी॒र्यं॑ । वः॒ । मरु॒तः॒ । म॒हि॒ऽत्व॒नं । दी॒र्घं । त॒ता॒न॒ । सूर्यः॑ । न । योज॑नं ।
एताः॑ । न । यामे॑ । अगृ॑भीतऽशोचिषः । अन॑श्वऽदां । यत् । नि । अया॑तन । गि॒रिं ॥५॥

हे मरुतो वो युष्माकं तद्वीर्यं प्रसिद्धं सामर्थ्यं महित्वनं महत्त्वं दीर्घमत्यन्तमायतं ततान । तनोति । लोके सूर्यो न योजनं सूर्यस्तेज इव । एता न एतवर्णा देवानामश्वा इव । ते यथा यामे गमने योजनं दीर्घं तन्वन्ति तद्वदित्यपरो दृष्टान्तः । ते चागृभीतशोचिषोऽगृहीततेजस्काः । यद्वैतन्मरुतां विशेषणं । हे मरुतो यूयमगृभीतशोचिषः सन्तो यद्यदानश्वदां व्यापकोदकादातारं पर्णिभिरपहृतानामश्वानामप्रदातारं वा गिरिं मेघं पर्वतं वा न्ययातन निहतवन्तः ॥ ॥१४॥

अभ्रा॑जि॒ शर्धो॑ मरुतो॒ यद॑र्ण॒सं मोष॑था वृ॒क्षं क॑प॒नेव॑ वेधसः ।
अध॑ स्मा नो अ॒रम॑तिं सजोषस॒श्चक्षु॑रिव॒ यन्त॒मनु॑ नेषथा सु॒गं ॥६॥
अभ्रा॑जि । शर्धः॑ । मरु॒तः॒ । यत् । अ॒र्ण॒सं । मोष॑थ । वृ॒क्षं । क॒प॒नाऽइ॑व । वे॒ध॒सः॒ ।
अध॑ । स्म॒ । नः॒ । अ॒रम॑तिं । स॒ऽजो॒ष॒सः॒ । चक्षुः॑ऽइव । यन्तं॑ । अनु॑ । ने॒ष॒थ॒ । सु॒ऽगं ॥६॥

हे वेधसो वृष्टेर्विधातारो हे मरुतः शर्धो भवतां गणमभ्राजि । भ्राजते । यद्यस्मादर्णसमुदकवन्तं वृक्षं । वृश्च्यते विदार्यत इति वृक्षो मेघः । तं मोषथ । ताडयथेत्यर्थः । कपनेव । इवेत्यनर्थकः । कपना मत । यद्वा । कपनाः क्रिमयो वृक्षं घुणादयः । ते यथा मुष्णन्ति तद्वत् । अधापि च । स्मेति पूरणः । नोऽस्मान् । मामित्यर्थः । हे सजोषसो युष्मासु परस्परं समानप्रीतयो यूयमरमतिमारमणं धनादिकं प्रति यन्तं गच्छन्तमनु नेषथ अनुक्रमेण नयथ सुगं सुगमनं मार्गं । तत्र दृष्टान्तः । चक्षुरिव । तद्यथा मार्गप्रदर्शनेन नायकं भवति तद्वत् ॥

न स जी॑यते मरुतो॒ न ह॑न्यते॒ न स्रे॑धति॒ न व्य॑थते॒ न रि॑ष्यति ।
नास्य॒ राय॒ उप॑ दस्यन्ति॒ नोतय॒ ऋषिं॑ वा॒ यं राजा॑नं वा॒ सुषू॑दथ ॥७॥
न । सः॒ । जी॒य॒ते॒ । मरु॒तः॒ । न । ह॒न्य॒ते॒ । न । स्रे॒ध॒ति॒ । न । व्य॒थ॒ते॒ । न । रि॒ष्य॒ति॒ ।
न । अ॒स्य॒ । रायः॑ । उप॑ । द॒स्य॒न्ति॒ । न । ऊ॒तयः॑ । ऋषिं॑ । वा॒ । यं । राजा॑नं । वा॒ । सु॒सूद॑थ ॥७॥

हे मरुतो यूयं यमृषिं मन्त्रद्रष्टारं ब्राह्मणं राजानं वा सुषूदथ चारयथ प्रेरयथ सत्कर्मसु स ऋषी राजा वा न जीयते । अन्येन पराभाव्यते ॥ जि जये ज्या वयोहानावित्यस्य वा रूपं ॥ हे मरुतो न हन्यते । न हिंस्यते । अत्यर्थं प्राणैर्न वियुज्यते । न स्रेधति । न क्षीयते । न व्यथते । न पीड्यते । न रिष्यति । न हिंस्यते । अत्र हिंसा बाधमात्रं । अस्य रायो धनानि नोप दस्यन्ति । नोपक्षीयन्ते । तथा नोतयो रक्षा अप्युप दस्यन्ति ॥

कारीर्यामेव तृतीयस्याः पिण्ड्या याज्या नियुत्वन्त इत्येषा । सूत्रितं च । नियुत्वन्तो ग्रामजितो यथा नरोऽर्य बाधस्व वि मृधो वि दुर्गहा । आ॰ २ १३ । इति ॥

नि॒यु॒त्वन्तो॑ ग्राम॒जितो॒ यथा॒ नरो॑ऽर्य॒मणो॒ न म॒रुतः॑ कब॒न्धिनः॑ ।
पिन्व॑न्त्यु॒त्सं यदि॒नासो॒ अस्व॑र॒न्व्यु॑न्दन्ति पृथि॒वीं मध्वो॒ अन्ध॑सा ॥८॥
नि॒यु॒त्वन्तः॑ । ग्रा॒म॒ऽजितः॑ । यथा॑ । नरः॑ । अ॒र्य॒मणः॑ । न । म॒रुतः॑ । क॒ब॒न्धिनः॑ ।
पिन्व॑न्ति । उत्सं॑ । यत् । इ॒नासः॑ । अस्व॑रन् । वि । उ॒न्द॒न्ति॒ । पृ॒थि॒वीं । मध्वः॑ । अन्ध॑सा ॥८॥

नियुत्वंतो नियुत्संज्ञकैरश्वैस्तद्वंतो मरुतो ग्रामजितः संघातात्मकस्य पदार्थस्य विश्लेषयितारो नरो नराकारा नेतारो वा । मरुतो नियुत्वंतः । अयं शब्दोऽश्वसामान्ये वर्तते । नितरां यवनवंतोऽश्ववंतो ग्रामजितो ग्रामस्य जेतारो नर इव मनुष्या इव तथा भवंति । अर्यमणो न अर्यमप्रभृतय आदित्या इव । दीप्ता इति शेषः । तादृशा मरुतः कबंधिन उदकवंतो भवंति । यद्यदेनाम ईश्वरा उत्सं कूपादिनिम्नप्रदेशं मेघं वा पिन्वंति प्याययंत्युदकेन । यदास्वरन शब्दयंति यदा व्युंदंति पृथिवीं मध्वो मधुरस्योदकस्यांधसा सारेण तदैव भवंति । यद्वा । यदास्वरन तदा पिन्वंत्युत्समिनासः तदांधसः पृथिवीं व्युंदंतीति ॥

प्रवत्वतीयं पृथिवी मरुद्भ्यः प्रवत्वती द्यौर्भवति प्रयद्भ्यः ।
प्रवत्वतीः पथ्या अंतरिक्ष्याः प्रवत्वंतः पर्वता जीरदानवः ॥९॥
प्रवत्वती । इयं । पृथिवी । मरुत्ऽभ्यः । प्रवत्वती । द्यौः । भवति । प्रयत्ऽभ्यः ।
प्रवत्वतीः । पथ्याः । अंतरिक्ष्याः । प्रवत्वंतः । पर्वताः । जीरऽदानवः ॥९॥

इयं पृथिवी मरुद्भ्यो मरुतामर्थाय प्रवत्वती । प्रवंतः प्रकर्षवंतो विस्तीर्णाः प्रदेशा यस्यां सा प्रवत्वती । तादृशी भवति । कृत्स्नापि भूमिर्मरुत्परा भवतीत्यर्थः । तां सर्वामपि व्याप्नुवंतीति यावत । तथा द्यौरपि प्रयद्भ्यः प्रकर्षेण गच्छद्भ्यस्तेभ्यः प्रवत्वती भवति । सापि मरुतां संचाराय । तथांतरिक्ष्या अंतरिक्षे भवाः पथ्याः स्वगतयोऽपि प्रवत्वतीः प्रवत्यो मरुद्भ्यो भवंति । पर्वता अद्रयो मेघा वा प्रवत्वंतो भवंति जीरदानवः क्षिप्रदाना मरुद्भ्यः ॥

यन्मरुतः सभरसः स्वर्णरः सूर्य उदिते मदथा दिवो नरः ।
न वोऽश्वाः श्रथयंताह सिस्रतः सद्यो अस्याध्वनः पारमश्नुथ ॥१०॥
यत् । मरुतः । सऽभरसः । स्वःऽनरः । सूर्ये । उत्ऽइते । मदथ । दिवः । नरः ।
न । वः । अश्वाः । श्रथयंत । अह । सिस्रतः । सद्यः । अस्य । अध्वनः । पारं । अश्नुथ ॥१०॥

हे मरुतः सभरसः सहबलाः स्वर्णरः सर्वस्य नेतारो यूयं यद्यदा सूर्य उदित उद्गते मध्याह्ने मदथ सोमेन हे दिवो द्युलोकस्य नरो नेतारः । यदा सोमं पातुमिच्छथेत्यर्थः । तदा वोऽश्वाः सिस्रतः सरंतो नाह श्रथयंत । नैव श्रथयंति । सद्यस्तदानीमेवास्याध्वनो देवयजनमार्गस्य पारमश्नुथ । व्याप्नुथ । यद्वा । यदा सोमेन मदथ तदा त्वदीया अश्वा न शिथिला भवंति । यूयं च कृत्स्नस्य लोकत्रयमार्गस्य पारमश्नुथ ॥ ॥१५॥

अंसेषु व ऋष्टयः पत्सु खादयो वक्षःसु रुक्मा मरुतो रथे शुभः ।
अग्निभ्राजसो विद्युतो गभस्त्योः शिप्राः शीर्षसु वितता हिरण्ययीः ॥११॥
अंसेषु । वः । ऋष्टयः । पत्ऽसु । खादयः । वक्षःऽसु । रुक्माः । मरुतः । रथे । शुभः ।
अग्निऽभ्राजसः । विऽद्युतः । गभस्त्योः । शिप्राः । शीर्षऽसु । विऽतताः । हिरण्ययीः ॥११॥

हे मरुतो वो युष्माकमंसेष्वृष्टय आयुधानि भासंत इति शेषः । पत्सु खादयः कटकाः । वक्षःसु रुक्मा हाराः । रथे शुभो मधुराप्सुषा आपः । अग्निभ्राजसोऽग्निदीप्ता विद्युतो गभस्त्योर्हस्तयोर्भासंत इत्यर्थः । शीर्षसु शिरःसु हिरण्ययीर्हिरण्मय्यः शिप्रा उष्णीषमय्यो वितता विस्तृताः । प्रतिवाक्यं वितता इति वा संबंधनीयं ॥

तं नाकमर्यो अगृभीतशोचिषं रुशत्पिप्पलं मरुतो वि धूनुथ ।
समच्यंत वृजनातित्विषंत यत्स्वरंति घोषं विततमृतायवः ॥१२॥

तं । नाकं । अर्यः । अगृभीतऽशोचिषं । रुशत् । पिप्पलं । मरुतः । वि । धूनुथ ।
सं । अच्यंत । वृजना । अतित्विषंत । यत् । स्वरंति । घोषं । विऽततं । ऋतऽयवः ॥१२॥

हे मरुतोऽर्यो गंतारो यूयं तं प्रसिद्धं नाकमादित्यं । नास्मिन्नकमस्तीति नाकः । अगृभीतशोचिषमसुरैरनपहृततेजस्कं तं रुशत्शुभ्रवर्णं पिप्पलमुदकं वि धूनुथ । विविधं चालयथ ॥ अयं द्विकर्मकः ॥ यद्यदा वृजना बलानि समच्यंत संगता बलिनो भवथ । हविर्भिरस्मद्दत्तैरिति भावः । पश्चादतित्विषंत दीप्ता भवथ ॥ उभयत्र पुरुषव्यत्ययः ॥ यद्वा । यदासुरा वृजना बलैः समच्यत अतित्विषंत तदा घोषं भयजनकं शब्दं विततं विस्तृतं स्वरति । कुरुतेत्यर्थः । ऋतायव उदकमिच्छंतो यूयं । यद्वा । उत्तरार्धं ऋत्विग्यजमानपरतया व्याख्येयः । यद्यदा ऋतायवो यज्ञकामा यजमानादयो यदा समच्यंत संगता वृजना बलान्यतित्विषंत च स्वरंति घोषं स्तोत्रं विततं तदानीं पिप्पलं वि धूनुथेति संबंधः ॥

युष्मादत्तस्य मरुतो विचेतसो रायः स्याम रथ्यो३ वयस्वतः ।
न यो युच्छति तिष्यो३ यथा दिवो३ऽस्मे रारंत मरुतः सहस्रिणं ॥१३॥
युष्माऽदत्तस्य । मरुतः । विऽचेतसः । रायः । स्याम । रथ्यः । वयस्वतः ।
न । यः । युच्छति । तिष्यः । यथा । दिवः । अस्मे इति । ररंत । मरुतः । सहस्रिणं ॥१३॥

हे विचेतसो विविधप्रज्ञा हे मरुतो युष्मादत्तस्य युष्माभिर्दत्तस्य वयस्वतोऽन्नवतो रायो धनस्य स्याम । भवेम स्वामिनः । के । रथ्यो रथस्वामिनो वयं । यो युष्माभिर्दत्तो रा न युच्छति न च्यवते । यथा दिवः सकाशात्तिष्य आदित्यो न युच्छति । तथास्मे अस्मासु सहस्रिणमपरिमितं ररंत । रमयत हे मरुतः ॥

यूयं रयिं मरुतः स्पार्हवीरं यूयमृषिमवथ सामविप्रं ।
यूयमर्वंतं भरताय वाजं यूयं धत्थ राजानं श्रुष्टिमंतं ॥१४॥
यूयं । रयिं । मरुतः । स्पार्हऽवीरं । यूयं । ऋषिं । अवथ । सामऽविप्रं ।
यूयं । अर्वंतं । भरताय । वाजं । यूयं । धत्थ । राजानं । श्रुष्टिऽमंतं ॥१४॥

हे मरुतो यूयं रयिं धनं स्पार्हवीरं स्पृहणीयवीरं पुत्रभृत्यादिभिरुपेतं धत्थ । दत्थ । हे मरुतो यूयं सामविप्रं साम्ना विविधं प्रेरयितारं यद्वा सामसहिता विप्रा यस्य तादृशमृषिमवथ । रक्षथ । हे यूयमर्वंतमश्वं वाजमन्नं च भरताय देवान् बिभर्ते स्थावास्याय धत्थ । हे मरुतो यूयं राजानं दीप्तं स्वामिनं वा श्रुष्टिमंतं सुखवंतं । पुत्रमित्यर्थः । धत्थ ॥

तद्वो यामि द्रविणं सद्यऊतयो येना स्व१र्ण ततनाम नॄँरभि ।
इदं सु मे मरुतो हर्यता वचो यस्य तरेम तरसा शतं हिमाः ॥१५॥
तत् । वः । यामि । द्रविणं । सद्यःऽऊतयः । येन । स्वः । न । ततनाम । नॄन् । अभि ।
इदं । सु । मे । मरुतः । हर्यत । वचः । यस्य । तरेम । तरसा । शतं । हिमाः ॥१५॥

हे सद्यऊतयः । तदानीमेव रक्षा येषां ते तादृशाः । सद्योगमना वा वो युष्मान् तद्द्रविणं धनं यामि । याचामहे । येन धनेन नॄनस्मत्पुत्रभृत्यादीनभि ततनाम स्वर्ण आदित्य इव रश्मीन् । हे मरुतो मे मम स्वभूतमिदमिदानीं क्रियमाणं वचः स्तोत्रं सु सुष्ठु हर्यत । कामयध्वं । यस्य स्तोत्रवचसस्तरसा बलेन शतं शतसंख्याकान् हिमा हेमंतान् तरेम । शतसंवत्सरं जीवेमेत्यर्थः ॥ ॥१६॥

प्रयज्यव इति दशर्चमेकादशं सूक्तं श्यावाश्वस्यार्षं मारुतं। दशमी त्रिष्टुप् शिष्टा जगत्यः। प्रयज्यवो दशात्या त्रिष्टुबित्यनुक्रमणिका॥ आभिप्लविके षष्ठेऽहन्याग्निमारुत इदं सूक्तं मारुतनिविद्धानीयं। सूत्रितं च। प्रयज्यव इम स्तोममित्याग्निमारुत। आ० ७. ७.। इति॥

प्रयज्यवो मरुतो भ्राजदृष्टयो बृहद्वयो दधिरे रुक्मवक्षसः।
ईयन्ते अश्वैः सुयमेभिराशुभिः शुभं यातामनु रथा अवृत्सत॥१॥

प्रऽयज्यवः। मरुतः। भ्राजत्ऽऋष्टयः। बृहत्। वयः। दधिरे। रुक्मऽवक्षसः।
ईयन्ते। अश्वैः। सुऽयमेभिः। आशुऽभिः। शुभं। यातां। अनु। रथाः। अवृत्सत॥१॥

प्रयज्यवः प्रकर्षेण यष्टारो भ्राजदृष्टयो दीप्तायुधा मरुतो बृहत् प्रभूतं वयो यौवनलक्षणं प्रभूतमन्नं वा दधिरे। धारयंति। रुक्मवक्षसो हारायत्तवक्षस्काः। ते मरुतः सुयमेभिः सुखेन नियमितुं शक्यैराशुभिः शीघ्रगैरश्वैरीयंते। प्राप्यंते। शुभं शोभनं यथा भवति तथा। यद्वा। उदकमभिलक्ष्य यातां गच्छतां मरुतां रथा अप्यन्ववृत्सत। अनुवर्तंते॥

स्वयं दधिध्वे तविषीं यथा विद बृहन्महान्त उर्विया वि राजथ।
उतान्तरिक्षं ममिरे व्योजसा शुभं यातामनु रथा अवृत्सत॥२॥

स्वयं। दधिध्वे। तविषीं। यथा। विद। बृहत्। महान्तः। उर्विया। वि। राजथ।
उत। अन्तरिक्षं। ममिरे। वि। ओजसा। शुभं। यातां। अनु। रथाः। अवृत्सत॥२॥

हे मरुतो यूयं स्वयमसहायेनैव दधिध्वे। धारयध्वे। कुरुध्व इत्यर्थः। किं। तविषीं बलं सामर्थ्यं। यथा विद जानीथ। अप्रतिबद्धसामर्थ्या इत्यर्थः। हे महान्तो यूयमुर्वियोरवः सन्तो वि राजथ। उतापि चान्तरिक्षमोजसा बलेन वि ममिरे। व्याप्नुथ। शुभमित्यादि गतं॥

साकं जाताः सुभ्वः साकमुक्षिताः श्रिये चिदा प्रतरं वावृधुर्नरः।
विरोकिणः सूर्यस्येव रश्मयः शुभं यातामनु रथा अवृत्सत॥३॥

साकं। जाताः। सुऽभ्वः। साकं। उक्षिताः। श्रिये। चित्। आ। प्रऽतरं। ववृधुः। नरः।
विऽरोकिणः। सूर्यस्यऽइव। रश्मयः। शुभं। यातां। अनु। रथाः। अवृत्सत॥३॥

साकं सहैव जाता उत्पन्नाः सुभ्वः सुष्ठु भवन्तः। महान्त इत्यर्थः। तथैव साकं सहैवोक्षिताः सेक्तारो वर्षकाः श्रियै चित् शोभाया एव प्रतरं प्रकृष्टतरमा सर्वतो ववृधुः। अवर्धयन्। नरः कर्मणां नेतारो विरोकिणः विरोचमानाः सूर्यस्येव रश्मयः सूर्यरश्मय इव। शुभमित्यादि गतं॥

आभूषेण्यं वो मरुतो महित्वनं दिदृक्षेण्यं सूर्यस्येव चक्षणं।
उतो अस्माँ अमृतत्वे दधातन शुभं यातामनु रथा अवृत्सत॥४॥

आऽभूषेण्यं। वः। मरुतः। महिऽत्वनं। दिदृक्षेण्यं। सूर्यस्यऽइव। चक्षणं।
उतो इति। अस्मान्। अमृतऽत्वे। दधातन। शुभं। यातां। अनु। रथाः। अवृत्सत॥४॥

हे मरुतो वो युष्माकं महित्वनं महत्त्वमाभूषेण्यं स्तुत्यं। किंच सूर्यस्येव चक्षणं रूपमिव दिदृक्षेण्यं दर्शनीयं। उतो अपि चास्मानमृतत्वे मोक्षे। स्वर्ग इत्यर्थः। तत्र दधातन। धारयत। शिष्टं गतं॥

कारीर्यां प्रथमस्याः पिड्या उदीरयथेत्यनुवाक्या । सूत्रितं च । उदीरयथा मरुतः समुद्रतः प्र वो मरुत स्तविषा उदन्यवः । आ॰ २. १३ । इति ॥

उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।
न वो दस्रा उप दस्यंति धेनवः शुभं यातामनु रथा अवृत्सत ॥५॥
उत् । ईरयथ । मरुतः । समुद्रतः । यूयं । वृष्टिं । वर्षयथ । पुरीषिणः ।
न । वः । दस्राः । उप । दस्यंति । धेनवः । शुभं । यातां । अनु । रथाः । अवृत्सत ॥५॥

हे मरुतो यूयं समुद्रतः समुद्रवणसाधनादंतरिक्षादुदीरयथ । प्रेरयथ वृष्टिं । अयमेवार्थः पुनरुच्यते । हे पुरीषिणः । पृणातेः प्रीणातेर्वा पुरीषमुदकं । हे तद्वंतो यूयं वृष्टिं वर्षयथ । हे दस्रा दर्शनीयाः शत्रूणामुपक्षप यितारो वा वो युष्माकं धेनवः प्रीणयितारो मेघा नोप दस्यंति । न शुष्यंति ॥ ॥१७॥

यदश्वान्धूर्षु पृषतीरयुग्ध्वं हिरण्ययान्प्रत्यत्काँ अमुग्ध्वं ।
विश्वा इत्स्पृधो मरुतो व्यस्यथ शुभं यातामनु रथा अवृत्सत ॥६॥
यत् । अश्वान् । धूःऽसु । पृषतीः । अयुग्ध्वं । हिरण्ययान् । प्रति । अत्कान् । अमुग्ध्वं ।
विश्वाः । इत् । स्पृधः । मरुतः । वि । अस्यथ । शुभं । यातां । अनु । रथाः । अवृत्सत ॥६॥

हे मरुतो यूयं यद्यदाश्वान् धूर्षु रथसंबंधिनीष्वयुग्ध्वं योजितवंतः स्थ । कीदृशानश्वान् । पृषतीः । पृषत्यो मरुतामित्युक्तत्वात् । पृषद्वर्णा वडवाः । सारंगी वाश्वाशब्दवाच्या । हिरण्ययान्हिरण्यवर्णानत्कान्कवचान् प्रत्यमुग्ध्वं प्रत्यमुंचत । एवं कृत्वा विश्वा इत् स्पृधः सर्वानपि संग्रामान् हे मरुतो व्यस्यथ । विक्षिपथ । शुभमि त्यादि गतं ॥

न पर्वता न नद्यो वरंत वो यत्राचिध्वं मरुतो गच्छथेदु तत् ।
उत द्यावापृथिवी याथना परि शुभं यातामनु रथा अवृत्सत ॥७॥
न । पर्वताः । न । नद्यः । वरंत । वः । यत्र । अचिध्वं । मरुतः । गच्छथ । इत् । ऊं इति । तत् ।
उत । द्यावापृथिवी इति । याथन । परि । शुभं । यातां । अनु । रथाः । अवृत्सत ॥७॥

हे मरुतो वो युष्मान् पर्वताः शिलोच्चया न वरंत । न वारयंतु । तथा नद्यश्च न वारयंतु । किंतु यत्र यस्मिन्यज्ञादिस्थानेऽचिध्वं जानीथ संकल्पयथ तत्स्थानं गच्छथेदु । गच्छथैव । उतापि च द्यावापृथिवी च परि परितो याथन । याथ वृष्ट्यर्थमिति ॥

यत्पूर्व्यं मरुतो यच्च नूतनं यदुद्यते वसवो यच्च शस्यते ।
विश्वस्य तस्य भवथा नवेदसः शुभं यातामनु रथा अवृत्सत ॥८॥
यत् । पूर्व्यं । मरुतः । यत् । च । नूतनं । यत् । उद्यते । वसवः । यत् । च । शस्यते ।
विश्वस्य । तस्य । भवथ । नवेदसः । शुभं । यातां । अनु । रथाः । अवृत्सत ॥८॥

हे मरुतो यूयं यत्पूर्व्यं पूर्वतनं पूर्वमनुष्ठितं यत्कर्मास्ति तदित्यर्थः । यच्च नूतनं कर्मास्ति । यच्चोद्यत ऊर्ध्वं प्राप्यते । स्तूयत इत्यर्थः । हे वसवो वासका यच्च शस्यते शंसनं क्रियते तस्य विश्वस्योत्कृष्टस्य नवेदसो ज्ञा तारो भवथ ॥

मृळत नो मरुतो मा वधिष्टनास्मभ्यं शर्म बहुलं वि यंतन ।
अधि स्तोत्रस्य सख्यस्य गातन शुभं यातामनु रथा अवृत्सत ॥९॥
मृळत । नः । मरुतः । मा । वधिष्टन । अस्मभ्यं । शर्म । बहुलं । वि । यंतन ।
अधि । स्तोत्रस्य । सख्यस्य । गातन । शुभं । यातां । अनु । रथाः । अवृत्सत ॥९॥

हे मरुतो नोऽस्मान मृळत । सुखयत । मा वधिष्टन । असम्यक्करणादिजनितेन कोपेन मा वधिष्ठं । किंत्वस्मभ्यं शर्म सुखं बहुलमत्यधिकं वि यंतन । कुरुत । किंच स्तोत्रस्य स्तोत्रं सख्यस्य सख्यमधि गातन । अधिगच्छत । स्तुतिमनुभूयास्मासु सख्यं कुरुतेत्यर्थः ॥

यूयमस्मान्नयत वस्यो अच्छा निरंहतिभ्यो मरुतो गृणानाः ।
जुषध्वं नो हव्यदातिं यजत्रा वयं स्याम पतयो रयीणां ॥१०॥
यूयं । अस्मान । नयत । वस्यः । अच्छ । निः । अंहतिऽभ्यः । मरुतः । गृणानाः ।
जुषध्वं । नः । हव्यऽदातिं । यजत्राः । वयं । स्याम । पतयः । रयीणां ॥१०॥

हे मरुतो यूयमस्मान्वस्यो वसीयो धनं स्वर्गादिलक्षणं स्थानं वाच्छाभिमुख्येन नयत । प्रापयत । किंचांहतिभ्यः पापेभ्यो निर्णयत । निर्गमयत गृणानाः स्तूयमानाः ॥ कर्मणि कर्तृप्रत्ययः ॥ जुषध्वं सेवध्वं नोऽस्माकं हव्यदातिं हविर्दानवंतं यज्ञं हे यजत्रा यष्टव्या यूयं । वयं च रयीणां बहुविधानां धनानां पतयः स्याम । भवेम ॥ ॥१८॥

अग्ने शर्धंतमिति नवर्चं द्वादशं सूक्तं श्यावाश्वस्यार्षं मारुतं । तृतीयासप्तम्यौ सतोबृहत्यौ शिष्टा बृहत्यः । अग्ने नव बार्हतं तृतीयासप्तम्यौ सतोबृहत्यावित्यनुक्रमणिका ॥

अग्ने शर्धंतमा गणं पिष्टं रुक्मेभिरंजिभिः ।
विशो अद्य मरुतामव ह्वये दिवश्चिद्रोचनादधि ॥१॥
अग्ने । शर्धंतं । आ । गणं । पिष्टं । रुक्मेभिः । अंजिभिः ।
विशः । अद्य । मरुतां । अव । ह्वये । दिवः । चित् । रोचनात् । अधि ॥१॥

हे अग्ने शर्धंतं शत्रूनभिभवंतं यज्ञायोत्सहमानं वा गणं मरुतां गणमा ह्वयेति शेषः । कीदृशं गणं । रुक्मेभी रुक्मै रोचमानैरंजिभिराभरणैश्च पिष्टमवयवितं । युक्तमित्यर्थः । अद्यास्मिन्यागदिने मरुतां विशः प्रजाः । गणानित्यर्थः । तान्रोचनाद्रोचमानात दिवो द्युलोकात् । अधीति पंचम्यर्थानुवादी । चित्पूरणः । अवावस्तादस्मदभिमुखं ह्वये । आह्वयामि ॥

यथा चिन्मन्यसे हृदा तदिन्मे जग्मुराशसः ।
ये ते नेदिष्ठं हवनान्यागमन्तान्वर्ध भीमसंदृशः ॥२॥
यथा । चित । मन्यसे । हृदा । तत् । इत् । मे । जग्मुः । आऽशसः ।
ये । ते । नेदिष्ठं । हवनानि । आऽगमन । तान् । वर्ध । भीमऽसंदृशः ॥२॥

हे अग्ने त्वं हृदा हृदयेन मरुतो यथा चिन्मन्यसे । चिदिति पूजायां । येन प्रकारेणातिपूजितं जानासि । तथ्यादरं करोषीत्यर्थः । तदित्तथैव मे मदर्थं जग्मुर्गच्छंत्वाशस आशंसितार इच्छंतः शत्रून हिंसंतो वा ।

अनंतरं ये मरुतो नेदिष्ठमत्यंतांतिकं संनिधावेव ते तव हवनान्याह्वानानि श्रुत्वागमन आगच्छंति तान् भीमसंदृशः कालविलंबासहनेन भयंकरदर्शनान्वर्ध। वर्धय हविष्प्रापणेन ॥

मीळ्हुष्मंतीव पृथिवी पराहता मदंत्येत्यस्मदा।
ऋक्षो न वो मरुतः शिमीवाँ अमो दुध्रो गौरिव भीमयुः ॥३॥
मीळ्हुष्मंतीऽइव। पृथिवी। पराऽहता। मदंती। एति। अस्मत। आ।
ऋक्षः। न। वः। मरुतः। शिमीऽवान। अमः। दुध्रः। गौःऽइव। भीमऽयुः ॥३॥

मीळ्हुष्मती प्रबलस्वामिका पराहतान्यैरभिभूता पृथिवीव। अत्र पृथिवीशब्दस्तदधिष्ठिता प्रजा लक्षयति। सा यथा स्वस्वामिनमुपद्रुताभिगच्छति तद्वदिति। मरुता साकल्येन सर्वथा प्राप्तिर्दृष्टातः। एव मदंती हृष्यती मरुत्सेनास्मत। अस्मानित्यर्थः। एति। आगच्छति। हे मरुतो वो युष्माकममो बल गण ऋक्षो न अग्निरिव शिमीवान कर्मवान दुध्रो दुर्धरो गौरिव भीमयुर्भीमैर्वृषभैर्युक्तो गौरिव। स यथा शिमीवान कर्मवान ॥

नि ये रिणंत्योजसा वृथा गावो न दुर्धुरः।
अश्मानं चित्स्वर्यं१ पर्वतं गिरिं प्र च्यावयंति यामभिः ॥४॥
नि। ये। रिणंति। ओजसा। वृथा। गावः। न। दुःऽधुरः।
अश्मानं। चित्। स्वर्यं। पर्वतं। गिरिं। प्र। च्यवयंति। यामऽभिः ॥४॥

ये मरुत ओजसा स्वीयेन बलेन नि रिणंति हिंसंति शत्रून् वृथानायासेन स्वसंचारमात्रेण गावो न दुर्धुरो दुःखेन हिंस्या अश्वा इव। ते मरुतः स्वर्य शब्दयतमश्मानं व्याप्त पर्वत जगत्पूरकोदकवत। पर्ववान्पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वा। नि॰ १. २०। इति निरुक्त। तादृश गिरि मेघ। यद्वा। पर्वतमिति विशेष्य गिरिमिति विशेषण। निगिरत्युदकमिति गिरिः। त यामभिर्गमनैः प्र च्यावयत्युदकनिर्गमनार्थं ॥

उत्तिष्ठ नूनमेषां स्तोमैः समुक्षितानां। मरुतां पुरुतममपूर्व्यं गवां सर्गमिव ह्वये ॥५॥
उत्। तिष्ठ। नूनं। एषां। स्तोमैः। संऽउक्षितानां। मरुतां। पुरुऽतमं। अपूर्व्यं। गवां।
सर्गंऽइव। ह्वये ॥५॥

हे मरुतो यूयमुत्तिष्ठ। उत्तिष्ठत ॥ व्यत्ययेनैकवचनं ॥ नूनं निश्चयमेषा स्तोमैः स्तोत्रैः समुक्षिताना वर्धितानां मरुतां। यद्वा। स्तोमैरुपह्वय इति संबंधः। तादृशां मरुता पुरुतम प्रभूततममपूर्व्यं। न विद्यते पूर्वो येभ्यस्तमपूर्व्यं सर्ग संघं गवामुदकानां प्रसिद्धाना गवा वा सर्ग संघमिव ह्वये। आह्वये ॥ ॥१०॥

युंग्ध्वं ह्यरुषी रथे युंग्ध्वं रथेषु रोहितः।
युंग्ध्वं हरी अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे ॥६॥
युंग्ध्वं। हि। अरुषीः। रथे। युंग्ध्वं। रथेषु। रोहितः।
युंग्ध्वं। हरी इति। अजिरा। धुरि। वोळ्हवे। वहिष्ठा। धुरि। वोळ्हवे ॥६॥

हे मरुतो यूयं रथे युष्मदीये सर्वेषा साधारणभूतेऽरुषीरारोचमाना वडवा युंग्ध्व। योजयध्व। तथा रथेषु युष्मदीयेषु रोहितो रोहितवर्णा युंग्ध्वं। हरी अश्वावजिरावजिरौ वाशुगमनौ धुरि वोळ्हवे वहनाय युंग्ध्वं। आदरार्थं पुनर्वचनं। वहिष्ठा वोढृतमावश्वौ धुरि वोळ्हवे ॥

उत स्य वाज्यरुषस्तुविष्वणिरिह स्म धायि दर्शतः ।
मा वो यामेषु मरुतश्चिरं करत्प्र तं रथेषु चोदत ॥७॥
उत । स्यः । वाजी । अरुषः । तुविऽस्वनिः । इह । स्म । धायि । दर्शतः ।
मा । वः । यामेषु । मरुतः । चिरं । करत् । प्र । तं । रथेषु । चोदत ॥७॥

उतापि च स्य स वाजी वेजनवानरुष आरोचमानस्तुविष्वणिः प्रभूतध्वनिरश्वः । अरुष इत्यनेन रोहित इत्युक्तं भवति । प्रष्टिर्वहति रोहितः । ऋग्वे॰ १. ३९. ६ । इति ह्युक्तं । इहेदानीं दर्शतो दर्शनीयः सन् धायि । रथे नियोजितः । स्मेति पूरणः । हे मरुतो वो यामेषु गमनेषु सोऽश्वश्चिरं विलंबं मा करत । मा करोतु । तं रथेषु । रथे युक्तमिति शेषः । प्र चोदत । प्रेरयत । यथा विलंबं न कुर्यात्तथा प्रेरयत ॥

रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।
आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥८॥
रथं । नु । मारुतं । वयं । श्रवस्युं । आ । हुवामहे ।
आ । यस्मिन् । तस्थौ । सुऽरणानि । बिभ्रती । सचा । मरुत्ऽसु । रोदसी ॥८॥

वयमात्रेया रथं रंहणस्वभावं मारुतं मरुतां संबंधिनं रथं श्रवस्युमन्नेच्छुं नु अद्य आ हुवामहे । आह्वयामः । यस्मिन्रथे सुरणानि सुरमणानि जलानि बिभ्रती धारयंती रोदसी रुद्रस्य पत्नी मरुतां माता । यद्वा । रुद्रो वायुः । तत्पत्नी माध्यमिका देवी मरुत्सु सचा सहिता आ तस्थौ आस्थितवती तं रथमाह्वे ॥

तं वः शर्धं रथेशुभं त्वेषं पनस्युमा हुवे ।
यस्मिन्त्सुजाता सुभगा महीयते सचा मरुत्सु मीळ्हुषी ॥९॥
तं । वः । शर्धं । रथेऽशुभं । त्वेषं । पनस्युं । आ । हुवे ।
यस्मिन् । सुऽजाता । सुऽभगा । महीयते । सचा । मरुत्ऽसु । मीळ्हुषी ॥९॥

हे मरुतो वः शर्धं युष्मदीयं बलं गणं रथेशुभं रथे शोभनं त्वेषं दीप्तं पनस्युं स्तुत्यमा हुवे । आह्वये । यस्मिन् शर्धे सुजाता सुष्ठु प्रवृद्धा सुभगा शोभनभाग्यातिमहती मीळ्हुषी । मीळ्हुष्टम शिवतमेत्यादौ दर्शना-न्मीढ्वान्रुद्रः । तत्पत्नी मीळ्हुषी । मरुत्सु सचा सह महीयते पूज्यते तं शर्धमा ह्वे । आपस्तंबोऽपि रुद्रपत्नी मीळ्हुषीसंज्ञया व्यवजहार । उत्तरया दक्षिणस्यामीशानमावाहयति लौकिक्या वाचोत्तरस्यां मीळ्हुषी मध्ये जयंतं । आप॰ गृ॰ २०. १ ३ । इति ॥ ॥२०॥ ॥४॥

पंचमेऽनुवाके षोडश सूक्तानि । तत्र रुद्रास इत्यष्टर्चं प्रथमं सूक्तं श्यावाश्वस्यार्षं मारुतं । सप्तम्यष्टम्यौ त्रिष्टुभौ शिष्टाः षट् जगत्यः । आ रुद्रासोऽष्टौ द्विन्त्रिष्टुबंतमित्यनुक्रमणिका ॥ विनियोगो लैंगिकः ॥

आ रुद्रास इंद्रवंतः सजोषसो हिरण्यरथाः सुविताय गंतन ।
इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥१॥
आ । रुद्रासः । इंद्रऽवंतः । सऽजोषसः । हिरण्यऽरथाः । सुविताय । गंतन ।
इयं । वः । अस्मत् । प्रति । हर्यते । मतिः । तृष्णऽजे । न । दिवः । उत्साः । उदन्यवे ॥१॥

हे रुद्रासो रुद्रपुत्रा इंद्रवंत इंद्रेण युष्मत्स्वामिना तद्वंतः सजोषसः परस्परं समानप्रीतयो हिरण्यरथा हिरण्मयरथाः संतः सुविताय सुगमनाय तत्साधनाय सुष्ठु सर्वैर्गंतव्याय यज्ञाय तदर्थमा गतन। आगच्छत। किमत्र विद्यत इति तदुच्यते। इयमस्मदस्मदीया मतिः स्तुतिर्वो युष्मान् प्रति हर्यते। कामयते। तस्मादागच्छत। उदन्यव उदकेच्छवे तृष्णजे गोतमाय दिवो द्युलोकसकाशादुत्सा उदकानिष्यदा यथा युष्माभिः प्रेरितास्तद्वदस्मदर्थमप्यागत्याभिमतं ददतेत्यर्थः ॥

वाशीमंत ऋष्टिमंतो मनीषिणः सुधन्वान इषुमंतो निषंगिणः ।
स्वश्वाः स्थ सुरथाः पृश्निमातरः स्वायुधा मरुतो याथना शुभं ॥२॥
वाशीऽमंतः । ऋष्टिऽमंतः । मनीषिणः । सुऽधन्वानः । इषुऽमंतः । निषंगिणः ।
सुऽअश्वाः । स्थ । सुऽरथाः । पृश्निऽमातरः । सुऽआयुधाः । मरुतः । याथन । शुभं ॥२॥

हे मरुतो यूयं वाशीमंतः। वाशीति तक्षणसाधनमायुधं। तद्वंतः स्थ। ऋष्टिमंतः। ऋष्टिर्नाम छुरिका। तद्वंतः स्थ। एवं सर्वत्र योज्यं। मनीषिणो मनस ईश्वरा मनस्विनः सुधन्वानः शोभनधनुष्का इषुमंतो बाणवंतो निषंगिणो निषंगवंतः स्वश्वाः स्थ। शोभनाश्वा भवथ। सुरथाः शोभनरथाः पृश्निमातरः पृश्नेः पुत्राः स्वायुधाः खड्गपरश्वादिसकलायुधोपेताः। एवं महात्मानः संतः शुभं शोभनं यथा भवति तथा शुभमुदकाय वा रथेन याथन। गच्छथ ॥

धूनुथ द्यां पर्वतान्दाशुषे वसु नि वो वना जिहते यामनो भिया ।
कोपयथ पृथिवीं पृश्निमातरः शुभे यदुग्राः पृषतीरयुग्ध्वं ॥३॥
धूनुथ । द्यां । पर्वतान् । दाशुषे । वसु । नि । वः । वना । जिहते । यामनः । भिया ।
कोपयथ । पृथिवीं । पृश्निऽमातरः । शुभे । यत् । उग्राः । पृषतीः । अयुग्ध्वं ॥३॥

हे मरुतो द्यां। दिवीत्यर्थः। पर्वतान्मेघान्दाशुषे हविर्दात्रे यजमानाय वसु धनानि च धूनुथ। प्रापयथ। वो युष्माकं यामनो गमनस्य भिया भीत्या वना वनानि वृक्षादिसमूहा नि जिहते। नितरां कंपते। एवंभूता भृशं शंसंतीत्यर्थः। हे पृश्निमातरः पृश्नेः पुत्राः। पृश्निर्वै पयसो मरुतो जाता इति हि श्रुतिः। हे मरुत पृथिवीं कोपयथ। अभिवृष्ट्या क्षोभयथ। हे उग्रा उद्गूर्णबला यूयं यदा शुभे उदकार्थं पृषतीर्युष्मदीया अश्वा अयुग्ध्वं योजयथ तदा कोपयथ पृथिवीं ॥

वातत्विषो मरुतो वर्षनिर्णिजो यमा इव सुसदृशः सुपेशसः ।
पिशंगाश्वा अरुणाश्वा अरेपसः प्रत्वक्षसो महिना द्यौरिवोरवः ॥४॥
वातऽत्विषः । मरुतः । वर्षऽनिर्णिजः । यमाःऽइव । सुऽसदृशः । सुऽपेशसः ।
पिशंगऽअश्वाः । अरुणऽअश्वाः । अरेपसः । प्रऽत्वक्षसः । महिना । द्यौःऽइव । उरवः ॥४॥

वातत्विषः सर्वदा संप्राप्तदीप्तयो वर्षनिर्णिजो वृष्टेः शोधयितारः। अथवा निर्णिगिति रूपनाम। वर्षमेव रूपं येषां ते तादृशाः। वृष्टिप्रदा इत्यर्थः। यमा इव युगलोत्पन्ना इव सुसदृशाः परस्परं बलरूपादिभिस्तुल्यरूपाः सुपेशसः शोभनरूपाः पिशंगाश्वाः पिशंगवर्णाश्वोपेतास्तथारुणाश्वा अरेपसोऽपापाः प्रत्वक्षसः प्रकृष्टतनूकर्तारो द्वेष्टृणां महिना महत्त्वेन द्यौरिवांतरिक्षमिवोरवो विस्तीर्णाः। उक्तलक्षणा नाम भजिर इत्युत्तरेण संबंधः ॥

पुरुद्रप्सा अंजिमंतः सुदानवस्त्वेषसंदृशो अनवभ्रराधसः ।
सुजातासो जनुषा रुक्मवक्षसो दिवो अर्का अमृतं नाम भेजिरे ॥५॥
पुरुऽद्रप्साः । अंजिऽमंतः । सुऽदानवः । त्वेषऽसंदृशः । अनवभ्रऽराधसः ।
सुऽजातासः । जनुषा । रुक्मऽवक्षसः । दिवः । अर्काः । अमृतं । नाम । भेजिरे ॥५॥

पुरुद्रप्साः प्रभूतोदका अंजिमंत आभरणवंतः सुदानवः शोभनदानास्त्वेषसंदृशो दीप्तरूपा अनवभ्रराधसो ऽनवभ्रष्टधनाः सुजातासः शोभनजनना जनुषा जन्मनैवोत्कृष्टरूपा रुक्मवक्षसो हारवक्षस्का अर्काः पूज्या मरुतो दिवो द्युलोकादागत्यामृतममरणसाधनं नामोदकं नमनहेतुकमुक्तलक्षणं हविर्वा भेजिरे । लब्धवंतः ॥ ॥२१॥

ऋष्टयो वो मरुतो अंसयोरधि सह ओजो बाह्वोर्वो बलं हितं ।
नृम्णा शीर्षस्वायुधा रथेषु वो विश्वा वः श्रीरधि तनूषु पिपिशे ॥६॥
ऋष्टयः । वः । मरुतः । अंसयोः । अधि । सहः । ओजः । बाह्वोः । वः । बलं । हितं ।
नृम्णा । शीर्षऽसु । आयुधा । रथेषु । वः । विश्वा । वः । श्रीः । अधि । तनूषु । पिपिशे ॥६॥

हे मरुतो वो युष्माकमंसयोरध्यृष्टय आयुधविशेषा हिताः । आश्रिताः । वक्ष्यमाणहितशब्दो विपरिणंतव्यः । अधीति सप्तम्यर्थानुवादी । तथा वो बाह्वोरधि सहः शत्रूणामभिभावुकमोजः । ओज नामाष्टमो धातुः । तद्रूपं बलं हितं । निहितं । शीर्षसु शिरःसु नृम्णा नृम्णानि हिरण्मयानि पट्टोष्णीषादीनि निहितानि । रथेष्वायुधायुधानि युद्धसाधनानि निहितानि । वः श्रीर्युष्माकं कांतिस्तनूषु तदीयेष्वधि पिपिशे । अधिष्ठिता । आश्रिता ॥

गोमदश्वावद्रथवत्सुवीरं चंद्रवद्राधो मरुतो ददा नः ।
प्रशस्तिं नः कृणुत रुद्रियासो भक्षीय वोऽवसो दैव्यस्य ॥७॥
गोऽमत् । अश्वऽवत् । रथऽवत् । सुऽवीरं । चंद्रऽवत् । राधः । मरुतः । दद । नः ।
प्रऽशस्तिं । नः । कृणुत । रुद्रियासः । भक्षीय । वः । अवसः । दैव्यस्य ॥७॥

हे मरुतो नोऽस्मभ्यं गोमद्बहुभिर्गोभिरुपेतमश्वावद्बहुभिरश्वैरुपेतं रथवद्रथोपेतं सुवीरं सुपुत्रोपेतं चंद्रवद्धिरण्योपेतं राधोऽन्नं दद । ददत ॥ व्यत्ययेनैकवचनं । अथवा लोडर्थस्य लिटो मध्यमबहुवचनं ॥ हे रुद्रियासो रुद्रपुत्रा मरुतो नोऽस्मदीयां प्रशस्तिं । समृद्धिमित्यर्थः । तां कृणुत । कुरुत । वो युष्माकं स्वभूतमवसोऽवो रक्षणं दैव्यस्य दैव्यं देवाहं भक्षीय । भजेय ॥

हये नरो मरुतो मृळता नस्तुवीमघासो अमृता ऋतज्ञाः ।
सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥८॥
हये । नरः । मरुतः । मृळत । नः । तुविऽमघासः । अमृताः । ऋतऽज्ञाः ।
सत्यऽश्रुतः । कवयः । युवानः । बृहत्ऽगिरयः । बृहत् । उक्षमाणाः ॥८॥

हये हे नरो नेतारो मरुतो नोऽस्मान्मृळत । सुखयत । अस्मभ्यं हिताय वा सुखिनो भवत । हे तुवीमघासः प्रभूतधना अमृता अमरणस्वभावा ऋतज्ञा उदकस्य यज्ञस्य वा ज्ञातारः । कर्तार इत्यर्थः । सत्यश्रुतः सत्येन

सत्यफलत्वेन प्रसिद्धाः कवयो मेधाविनो युवानो नित्यतरुणा बृहद्गिरयः प्रभूतस्तुतयो बृहदत्यधिकमुक्षमाणा हविर्भिः सेविता उदकं वा सिंचंतो यूयं मृळत ॥ ॥२२॥

तमु नूनमित्यष्टर्चं द्वितीयं सूक्तं श्यावाश्वस्यार्षं त्रैष्टुभं मारुतं। तमित्यनुक्रमणिका। विनियोगो लैंगिकः॥

तमु नूनं तविषीमंतमेषां स्तुषे गणं मारुतं नव्यसीनां।
य आश्वश्वा अमवद्वहंत उतेशिरे अमृतस्य स्वराजः ॥१॥
तं। ऊं इति। नूनं। तविषीऽमंतं। एषां। स्तुषे। गणं। मारुतं। नव्यसीनां।
ये। आशुऽअश्वाः। अमऽवत। वहंते। उत। ईशिरे। अमृतस्य। स्वऽराजः ॥१॥

तमु तमेव पूर्वं स्तुतमेव मारुतं मरुतां संबंधिनं तं गणं तविषीमंतं दीप्तिमंतं नूनमद्य स्तुषे। कीदृशानां मरुतां। नव्यसीनां॥ लिंगव्यत्ययः॥ नवतराणां स्तुत्यानां वा। एषां मारुतं गणं। गणावयवभूता मरुतः। कीदृशा इत्युच्यते। ये मरुत आश्वश्वाः शीघ्रगाम्यश्वोपेता अमवत् बलवंतो यथा भवंति तथा वहंते गच्छंति। उतापि चेशिरे ईश्वरा भवंत्यमृतस्योदकस्य स्वराजः स्वायत्तदीप्तयः स्वयमेव राजमानाः तेषां गणं स्तुषे॥

त्वेषं गणं तवसं खादिहस्तं धुनिव्रतं मायिनं दातिवारं।
मयोभुवो ये अमिता महित्वा वंदस्व विप्र तुविराधसो नॄन् ॥२॥
त्वेषं। गणं। तवसं। खादिऽहस्तं। धुनिऽव्रतं। मायिनं। दातिऽवारं।
मयःऽभुवः। ये। अमिताः। महिऽत्वा। वंदस्व। विप्र। तुविऽराधसः। नॄन् ॥२॥

त्वेषं दीप्तं गणं मारुतं तवसं बलवंतं खादिहस्तं कटकहस्तं धुनिव्रतं कंपयितृकर्माणं मायिनं प्रज्ञावंतं दातिवारं दत्तधनं हे विप्र होतर्वंदस्व। स्तुहीति संबंधः। ये मरुतो मयोभुवः सुखस्य भावयितारो महित्वा महत्त्वेनामिता अपरिच्छिन्नाः। तान् तुविराधसः प्रभूतधनान् नॄन् नेतॄन् वंदस्व॥

आ वो यंतूदवाहासो अद्य वृष्टिं ये विश्वे मरुतो जुनंति।
अयं यो अग्निर्मरुतः समिद्ध एतं जुषध्वं कवयो युवानः ॥३॥
आ। वः। यंतु। उदऽवाहासः। अद्य। वृष्टिं। ये। विश्वे। मरुतः। जुनंति।
अयं। यः। अग्निः। मरुतः। संऽइद्धः। एतं। जुषध्वं। कवयः। युवानः ॥३॥

ये विश्वे व्याप्ता मरुतो वृष्टिं जुनंति प्रेरयंति त उदवाहास उदकस्य वोढारो मरुतोऽद्यानीं वो युष्मानायंतु आगच्छंतु हे ऋत्विग्यजमानाः। अथ प्रत्यक्षवादः। हे मरुतो यः प्रसिद्धोऽयमग्निः समिद्धः सम्यक् दीपितः एतमपि जुषध्वं सेवध्वं हे कवयो मेधाविनो हे युवानो नित्यतरुणाः सर्वत्र व्याप्ता वा॥

यूयं राजानमिर्यं जनाय विभ्वतष्टं जनयथा यजत्राः।
युष्मदेति मुष्टिहा बाहुजूतो युष्मत्सदश्वो मरुतः सुवीरः ॥४॥
यूयं। राजानं। इर्यं। जनाय। विभ्वऽतष्टं। जनयथ। यजत्राः।
युष्मत्। एति। मुष्टिऽहा। बाहुऽजूतः। युष्मत्। सतऽअश्वः। मरुतः। सुऽवीरः ॥४॥

हे मरुतो यूयं जनाय यजमानाय राजानं स्वामिनं राजमानं वीर्यं शत्रूणां प्रेरकं चावयितारं विभ्वतष्टं। विभ्वा नाम ऋभूणां मध्यमः। स कुशली। तेन निर्मितं। अत्यंतरूपवंतमित्यर्थः। तादृशं पुत्रं जनयथ।

उत्पादयथ हे यजत्रा यष्टव्याः । हे मरुतो युष्मद्युष्मत्त एति गच्छति पुत्रः । कीदृशः । मुष्टिहा । मुष्टिशब्दो बाहूपलक्षकः । स्वभुजबलेनैव हंता शत्रूणां । तदेवोच्यते । बाहूजूतः । बाहूः प्रेरकः शत्रूणां यस्य तादृशः पुत्र एति । तथा युष्मद्युष्मत्तः सदश्वो विद्यमानाश्वः । बह्वश्व इत्यर्थः । सुवीरः शोभनवीर्यः पुत्र एति । जायत इत्यर्थः ॥

वरुणप्रघासे मारुत्या आमिक्षाया अरा इवेति याज्या । सूत्रितं च । अरा इवेदचरमा अहेवेमं मे वरुण श्रुधि । आ० २ १७. । इति ॥ एकादशिनें मारुते पशावेषैव पशुपुरोडाशस्य याज्या । सूत्रितं च । अरा इवेदचरमा अहेव या वः शर्म शशमानाय संति । आ० ३. ७. । इति ॥

अरा इवेदचरमा अहेव प्रप्र जायंते अकवा महोभिः ।
पृश्नेः पुत्रा उपमासो रभिष्ठाः स्वया मत्या मरुतः सं मिमिक्षुः ॥५॥
अराःऽइव । इत् । अचरमाः । अहाऽइव । प्रऽप्र । जायंते । अकवाः । महःऽभिः ।
पृश्नेः । पुत्राः । उपऽमासः । रभिष्ठाः । स्वया । मत्या । मरुतः । सं । मिमिक्षुः ॥५॥

अरा इवेत रथचक्रस्य इवाचरमा अनिकृष्टाः । सर्वसमाः सहैवोत्पन्नाश्चेत्यर्थः । अहेवाहानीव । दिवसा यथा सर्वेऽपि षष्टिघटिकात्मकास्तद्वत्सप्तसंख्योपेतसप्तगणरूपेण समा इत्यर्थः । अनेन दृष्टांतद्वयेन वैसदृश्याभावः प्रतिपादितः । एवमुक्तलक्षणा महोभिस्तेजोभिः प्रप्र जायंते । प्रकर्षेण प्रादुर्भवंति ॥ एकः प्रसमुपोदः पादपूरण इत्युपसर्गाभ्यासः स च पूरणः ॥ ते चाकवा अनल्पाः । यद्वा महोभिरित्यस्य विशेषणं । पृश्नेर्माध्यमिकाया वाचो गोरूपाया अंतरिक्षस्य वा पुत्रस्थानीया उपमासः प्रत्येकं समाना रभिष्ठाः प्रकृष्टवेगाः । एवं महानुभावा मरुतः स्वया मत्या स्वकीययैवानुग्रहबुद्ध्या सं मिमिक्षुः । वृष्ट्या सम्यक् सिंचंति ॥

यत्प्रायासिष्ट पृषतीभिरश्वैर्वीळुपविभिर्मरुतो रथेभिः ।
क्षोदंत आपो रिणते वनान्यवोस्रियो वृषभः क्रंदतु द्यौः ॥६॥
यत् । प्र । अयासिष्ट । पृषतीभिः । अश्वैः । वीळुपविऽभिः । मरुतः । रथेभिः ।
क्षोदंते । आपः । रिणते । वनानि । अव । उस्रियः । वृषभः । क्रंदतु । द्यौः ॥६॥

हे मरुतो यद्यदा प्रायासिष्ट प्रगच्छथ पृषतीभिः पृषत्संज्ञकैरश्वैर्वाहनसाधनैरश्वैः । अश्वशब्दोऽत्र वाहनसामान्यवचनः ; अतः पुंल्लिंगता । तथान्यत्र । यदश्वान्धूर्षु पृषतीरयुग्ध्वं । ऋग्वे० ५. ५५ ६. । रोहिदश्वोऽजाश्व इति समानाधिकरण्यप्रयोगः । एवंभुताश्वयुक्तैर्वीळुपविभिर्दृढरथनेमिभी रथेभिः प्रायासिष्ट । यद्वा । अश्वै रथैश्च सह मरुतो यदा प्रायासिष्ट तदापः क्षोदंते । चरंति । वनानि वृक्षसमूहा रिणंते । हिंस्यंते । वेगेन भज्यंते । उस्रियः । उस्राः सूर्यरश्मयः । तत्संबंधी पर्जन्यो वृषभोऽपां वर्षिता द्यौर्द्योतमानोऽव क्रंदतु । अवाङ्मुख शब्दयतु वृष्ट्यर्थं ॥

प्रथिष्ट यामन्पृथिवी चिदेषां भर्तेव गर्भं स्वमिच्छवो धुः ।
वातान्ह्यश्वान्धुर्यायुयुज्रे वर्षं स्वेदं चक्रिरे रुद्रियासः ॥७॥
प्रथिष्ट । यामन् । पृथिवी । चित् । एषां । भर्ताऽइव । गर्भं । स्वं । इत् । शवः । धुः ।
वातान् । हि । अश्वान् । धुरि । आऽयुयुज्रे । वर्षं । स्वेदं । चक्रिरे । रुद्रियासः ॥७॥

एषां मरुतां यामन्यामनि गमने पृथिवी चित भूमिः । चिदिति पूरणः । प्रथिष्ट । प्रख्याताभवत । गर्भयोग्याभवदित्यर्थः । ते च मरुतो भर्ता लौकिकः पतिर्गर्भमिव भार्यायास्तथा भूम्याः स्वमित्स्वभूतं गर्भं गर्भस्था-

नीयं शव उदकं धुः। स्थापितवंतः। हि यस्माद्वातान् गंतृनश्वान् धुरि रथसंबंधिन्यामायुयुज्रे आयोजितवंत तस्माद्वर्षं स्वेदं स्वेदस्थानीयं वृष्टिसंस्त्याय चक्रिरे कुर्वंति रुद्रियासो रुद्रपुत्राः ॥

हये नरो मरुतो मृळता नस्तुवीमघासो अमृता ऋतज्ञाः।
सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥८॥
हये। नरः। मरुतः। मृळत। नः। तुविऽमघासः। अमृताः। ऋतऽज्ञाः।
सत्यऽश्रुतः। कवयः। युवानः। बृहत्ऽगिरयः। बृहत्। उक्षमाणाः ॥८॥

हये नर इत्यष्टमी गता ॥ ॥२३॥

प्र वः स्पळित्यष्टर्चं तृतीयं सूक्तं श्यावाश्वस्यार्षं मारुतं। अष्टमी त्रिष्टुप् शिष्टाः सप्त जगत्यः। प्र वः स्पट् त्रिष्टुबंतमित्यनुक्रमणिका ॥ विनियोगो लैंगिकः ॥

प्र वः स्पळक्रन्त्सुविताय दावनेऽर्चा दिवे प्र पृथिव्या ऋतं भरे।
उक्षंते अश्वान्तरुषंत आ रजोऽनु स्वं भानुं श्रथयंते अर्णवैः ॥१॥
प्र। वः। स्पट्। अक्रन्। सुविताय। दावने। अर्च। दिवे। प्र। पृथिव्यै। ऋतं। भरे।
उक्षंते। अश्वान्। तरुषंते। आ। रजः। अनु। स्वं। भानुं। श्रथयंते। अर्णवैः ॥१॥

हे मरुतो वो युष्मभ्यं सुविताय सुष्ठु प्राप्तव्याय दावने हविष्प्रदानाय स्पट् स्पष्टा होता प्रकंपणमक्रन्। क्रंदति। स्तौति। वो युष्मान् वा सुष्ठु प्राप्तव्याय दानायाक्रन् ॥ क्रंदतेः शब्दकर्मणो लडर्थे लुङि तिपि रूपं ॥ हे होतर्दिवे द्योतमानाय देवायार्च। प्रकंपणं स्तुहि हे आत्मन्। तथा पृथिव्यै पृथिव्याश्च ऋतं स्तोत्रं भरे। संपादयामि। द्यावापृथिव्यावपि मरुतामाधारत्वादत्र निपातभाजौ भवतः। किंच ते मरुतोऽश्वान् व्यापकानुदकसंघानुक्षंते। सिंचंति। रज आ अंतरिक्षमा सर्वतस्तरुषंते। तरंति। संचरंति। स्वं भानुं स्वकीयं तेजोऽर्णवैर्मेघैः महान् श्रथयंते। अनुश्रथयंति। अनुकूलं प्रापयंतीत्यर्थः ॥

अमादेषां भियसा भूमिरेजति नौर्न पूर्णा क्षरति व्यथिर्यती।
दूरेदृशो ये चितयंत एमभिरंतर्महे विदथे येतिरे नरः ॥२॥
अमात्। एषां। भियसा। भूमिः। एजति। नौः। न। पूर्णा। क्षरति। व्यथिः। यती।
दूरेऽदृशः। ये। चितयंते। एमऽभिः। अंतः। महे। विदथे। येतिरे। नरः ॥२॥

एषां ॥ अन्वादेशविषयत्वादनुदात्तः ॥ एषां मरुतां भियसा भयेन भूमिरेजति। कंपते नौर्न पूर्णा प्राणिभिः। सा यथोदकमध्ये क्षरति चलति व्यथिर्व्यथिता यती गच्छंती। एतदुभयं नोविशेषणं। दूरेदृशो दूरे दृश्यमाना अपि ये मरुत एमभिर्गमनैश्चितयंते ज्ञायंते ते महांतो मरुतो विदथे यज्ञे महे महते हविषे हविर्भजनायांतर्द्यावापृथिव्योर्मध्ये येतिरे। यतंते। नरो नेतारो मरुतः ॥

गवामिव श्रियसे शृंगमुत्तमं सूर्यो न चक्षू रजसो विसर्जने।
अत्या इव सुभ्वश्चारवः स्थन मर्या इव श्रियसे चेतथा नरः ॥३॥
गवांऽइव। श्रियसे। शृंगं। उत्ऽतमं। सूर्यः। न। चक्षुः। रजसः। विऽसर्जने।
अत्याःऽइव। सुऽभ्वः। चारवः। स्थन। मर्याःऽइव। श्रियसे। चेतथ। नरः ॥३॥

हे मरुतो यूयं गवा शृंगमिवोत्तममुत्कृष्टमुष्णीषपट्टादिकं श्रियसे श्रियै धारयथेति शेषः। सूर्यो न सूर्य इव। स यथा रजसस्तेजसो विसर्जने चक्षुर्दर्शनसाधनं मंडलं धत्ते तद्वद्रजसो वृष्टिविसर्जने विसर्जनाय चक्षुः सर्वस्य प्रकाशकं तेजो धारयथ। अत्या इवाश्वा इव सुभ्वः सुष्ठु सर्वत्र भवंतो वेगवंतश्चारवो दर्शनीयाः स्थन। भवथ। मर्या मर्त्या यजमाना इव। ते यथा श्रियसे जानंति यज्ञादिकं तद्वच्छ्रियं चेतथ हे नरो नेतारो मरुतः॥

को वो॑ म॒हान्ति॑ मह॒ताम॒द॑श्नव॒त्कस्काव्या॑ मरुतः॒ को ह॒ पौंस्या॑।
यू॒यं ह॑ भूमिं॑ कि॒रणं॒ न रे॑जथ॒ प्र यद्भर॑ध्वे सुवि॒ताय॑ दा॒वने॑ ॥४॥

कः। वः॒। म॒हान्ति॑। म॒ह॒ताम्। उत्। अ॒श्न॒व॒त्। कः। काव्या॑। म॒रु॒तः॒। कः। ह॒। पौंस्या॑।
यू॒यम्। ह॒। भूमि॑म्। कि॒रण॑म्। न। रे॒ज॒थ॒। प्र। यत्। भर॑ध्वे। सु॒वि॒ताय॑। दा॒वने॑ ॥४॥

हे मरुतो वो युष्माकं महतां पूज्यानां को यजमानो महांति श्रेयांस्युदश्नवत्। उत्कृष्टं प्राप्नुयात्। कश्च तदर्थं काव्या काव्यानि कवीनां युष्माकं संबंधीनि स्तोत्राण्युदश्नवत्। को ह कश्च पौंस्या पौंस्यानि पराक्रमानुदश्नवत्। आदरार्थं पुनर्वचनं। यूयं ह यूयं खलु भूमिं किरणं न किरणमिव रेजथ। किरणं यथा वृष्ट्यर्थं चालयथ तद्वद्भूमिं रेजथ। यद्यस्मात् सुविताय सुष्ठु प्राप्तव्याय। प्राप्तव्यस्येत्यर्थः। तादृशस्य धनस्य वृष्ट्युदकस्य वा दावने दानाय प्र भरध्वे प्रकर्षेण संपादयथ वृष्टिं। यस्माद्यूयमेवं कुरुथ तस्मात्क एवं करोतीत्यर्थः॥

अश्वा॑ इ॒वेद॑रु॒षासः॒ सब॑न्धवः॒ शूरा॑ इव प्र॒युधः॒ प्रोत यु॑युधुः।
मर्या॑ इव सु॒वृधो॑ वावृधु॒र्नरः॒ सूर्य॑स्य॒ चक्षुः॒ प्र मि॑नन्ति वृ॒ष्टिभिः॑ ॥५॥

अश्वाः॑ऽइव। इत्। अ॒रु॒षासः॑। सऽब॑न्धवः। शूराः॑ऽइव। प्रऽयु॒धः॑। प्र। उ॒त। यु॒यु॒धुः॒।
मर्याः॑ऽइव। सु॒ऽवृधः॑। व॒वृ॒धुः॒। नरः॑। सूर्य॑स्य। चक्षुः॑। प्र। मि॒न॒न्ति॒। वृ॒ष्टिऽभिः॑ ॥५॥

मरुत एते ऽश्वा इव शीघ्रगंतारो ऽरुषास आरोचमानाः सबंधवः। समान एक एव बंधुर्बंधको रुद्रो येषां ते तादृशाः। परस्परं बंधवः स्नेहयुक्ता वा शूरा भटा इव प्रयुधः प्रयोद्धारो वैरिभिः सह तादृशा उतापि च प्र युयुधुः। प्रकर्षेण युध्यंते। मर्या इव मनुष्या यथा वर्धंते तथा सुवृधः सुष्ठु वर्धयितारो वर्धमाना वा नरो नेतारो ववृधुः। वर्धंते। एवं महात्मानः सूर्यस्य चक्षुस्तेजःसमूहं मंडलं वा वृष्टिभिः प्र मिनंति। प्रकर्षेण हिंसंति। आवृण्वंतीत्यर्थः॥

ते अ॑ज्ये॒ष्ठा अक॑निष्ठास उ॒द्भिदो॑ऽमध्य॒मासो॒ मह॑सा॒ वि वा॑वृधुः।
सु॒जा॒तासो॑ ज॒नुषा॒ पृश्नि॑मातरो दि॒वो मर्या॒ आ नो॒ अच्छा॑ जिगातन ॥६॥

ते। अ॒ज्ये॒ष्ठाः। अक॑निष्ठासः। उ॒त्ऽभिदः॑। अम॑ध्यमासः। मह॑सा। वि। व॒वृ॒धुः॒।
सु॒ऽजा॒तासः॑। ज॒नुषा॑। पृश्नि॑ऽमातरः। दि॒वः। मर्याः॑। आ। नः॒। अच्छ॑। जि॒गा॒त॒न॒ ॥६॥

ते मरुतो ऽज्येष्ठा अकनिष्ठासो ऽकनिष्ठा उद्भिद उद्भेदयितारः शत्रूणाममध्यमासो ऽमध्यमाः सर्वप्रकारैः समा महसा तेजसा वि ववृधुः। विवर्धंते। सुजातासः सुष्ठु संभूता जनुषा जन्मना पृश्निमातरः पृश्नेः पुत्रा मर्या मनुष्येभ्यो हिता यूयं दिवः सकाशान्नो ऽस्मानच्छाभिमुख्येना जिगातन। सर्वतः प्रशमत साध्वनुष्ठितमिति। उत्तरार्धः प्रत्यक्षकृतः। यद्वा। ये सुजाता जनुषा पृश्निमातरश्च तान् दिव आगतान् हे ऋत्विजो मर्या यूयमा जिगातन आगच्छत ते नो ऽच्छ। आगच्छतास्मदभिमुखं॥

वयो॒ न ये श्रेणीः॑ प॒प्तुरोज॒सान्ता॑न्दि॒वो बृ॑ह॒तः सानु॑न॒स्परि॑।
अश्वा॑स एषामु॒भये॒ यथा॑ वि॒दुः प्र पर्व॑तस्य नभ॒नूँर॑चुच्यवुः ॥७॥

वयः । न । ये । श्रेणीः । पप्तुः । ओजसा । अन्तान् । दिवः । बृहतः । सानुनः । परि ।
अश्वासः । एषां । उभये । यथा । विदुः । प्र । पर्वतस्य । नभनून् । अचुच्यवुः ॥ ७॥

ये मरुतो वयो न पक्षिण इव श्रेणीः पङ्क्तयः सन्त ओजसा बलेन दिवोऽन्तरिक्षस्यादित्यस्य वान्तान् पर्यन्तान् बृहतो महतः सानुनः समुन्नतस्याकाशवलयस्य परि परितः पप्तुः पतन्ति एषामश्वासोऽश्वाः पर्वतस्य मेघस्य नभनून् ॥ नभतेः शब्दकर्मणो नभ्राडितिवत् नभनवः ॥ उदकानि प्राचुच्यवुः । च्यावयन्ति । उभये देवा मनुष्याश्च यथा विदुर्जानन्ति तथा । मनुष्याणां ज्ञानं प्रसिद्धं । देवाश्च वृष्टिं मत्वाग्रायणादौ हविष्प्रदानेन जानन्ति । देवानां वृष्टिसंपूर्तिपरिज्ञानमाश्वलायनेनोक्तं । यदा वर्षस्य तृप्तः स्यादथाग्रयणेन यजेतात्युपक्रम्यापि हि देवा आक्रन्पृष्टो नूनं वर्षस्याग्रयणेन हि यजते । आ० २ ९ । इति ॥

मिमातु द्यौरदितिर्वीतये नः सं दानुचित्रा उषसो यतन्तां ।
आचुच्यवुर्दिव्यं कोशमेत ऋषे रुद्रस्य मरुतो गृणानाः ॥ ८॥
मिमातु । द्यौः । अदितिः । वीतये । नः । सं । दानुऽचित्राः । उषसः । यतन्तां ।
आ । अचुच्यवुः । दिव्यं । कोशं । एते । ऋषे । रुद्रस्य । मरुतः । गृणानाः ॥ ८॥

नोऽस्मदर्थं द्यौरन्तरिक्षं मिमातु । निर्मिमातु वृष्टिं । तदनुकूलं करोत्वित्यर्थः । कीदृशी । अदितिरदीना । यद्वा । द्यौर्निर्मात्वदितिर्भूमिश्च मिमातु सुखं । किमर्थं । वीतये उत्पत्त्यर्थं प्रजननाय वा । दानुचित्रा विचित्रप्रकाशादिदाना उषसः सं यतन्तां । हे ऋषे त्वया गृणानाः स्तूयमाना मरुतः । रुद्रस्य पुत्रा इत्यर्थः । एते दिव्यं कोशं मेघमुदकमाचुच्यवुः । आच्यावयन्ति ॥ द्विकर्मकोऽयं ॥ ॥ २४॥

ईळे अग्निं स्ववसमित्यष्टर्चं चतुर्थं सूक्तं श्यावाश्वस्यार्षं । सप्तम्यष्टम्यौ जगत्यौ शिष्टाः षट् त्रिष्टुभः । मरुद्देवताकमग्निमरुद्देवताकं वा । ईळे द्विजगत्यन्तमित्यनुक्रान्तं च वेति ॥ सूक्तविनियोगो लैंगिकः ॥ आद्या कारीर्यां सामिधेनीषु याज्या । सूत्रितं च । ईळे अग्निं स्ववसं नमोभिरिति धाय्ये । आ० २ १३ । इति ॥

ईळे अग्निं स्ववसं नमोभिरिह प्रसत्तो वि चयत्कृतं नः ।
रथैरिव प्र भरे वाजयद्भिः प्रदक्षिणिन्मरुतां स्तोममृध्यां ॥ १॥
ईळे । अग्निं । सुऽअवसं । नमःऽभिः । इह । प्रऽसत्तः । वि । चयत । कृतं । नः ।
रथैःऽइव । प्र । भरे । वाजयत्ऽभिः । प्रऽदक्षिणित् । मरुतां । स्तोमं । ऋध्यां ॥ १॥

अहं श्यावाश्वोऽग्निं स्ववसं स्वायत्तरक्षणं नमोभिः स्तोत्रैरीळे । स्तौमि । तत्स्तोत्र कृतमिहेदानीं प्रसत्तः प्रसन्नः प्रकर्षेण यज्ञं प्राप्तो वा सन् नोऽस्मदर्थं वि चयत । विजानातु । वाजयद्भिरन्नमिच्छद्भिः स्तोत्रै रथैरिव रथैर्यथाभिमतं प्राप्नुवन्ति तद्वद्रंहणसाधनैः प्र भरे । प्रकर्षेण संपादयाम्यभिमतं । प्रदक्षिणित् प्रादक्षिण्येन गच्छन् मरुतां स्तोमं स्तोत्रमृध्यां । वर्धयेयं ॥

आ ये तस्थुः पृषतीषु श्रुतासु सुखेषु रुद्रा मरुतो रथेषु ।
वना चिदुग्रा जिहते नि वो भिया पृथिवी चिद्रेजते पर्वतश्चित् ॥ २॥
आ । ये । तस्थुः । पृषतीषु । श्रुतासु । सुऽखेषु । रुद्राः । मरुतः । रथेषु ।
वना । चित् । उग्राः । जिहते । नि । वः । भिया । पृथिवी । चित् । रेजते । पर्वतः । चित् ॥ २॥

ये मरुतो रुद्रा रुद्रपुत्रा आ तस्थुः आतिष्ठंति पृषतीषु मरुतां वाहनेषु श्वेतासु श्यांतासु प्रसिद्धासु वा सुखेषु। खमाकाशं छिद्रं। शोभनरथावद्वारेषु रथेषु रथाना तस्थुः आतिष्ठंति। हे उग्रा उद्गूर्णबला मरुतो यूयं यदा रथमारूढाः स्थ तदानीं वना चित् वनान्यपि नि जिहते न्यग्गच्छंति वो युष्माकं भिया भीत्या। पृथिवी चित् पृथिव्यपि रेजते। पर्वतश्चित् पर्वतोऽपि रेजते। कंपते। उत्तरार्धः प्रत्यक्षकृतः। पूर्वार्धे य एवम् कुर्वन् तेषा स्तोममृध्यामिति पूर्वेणान्वयः॥

कारीर्यां मारुतस्य सप्तकपालस्य पर्वतश्चिदित्येषा याज्या। सूत्रितं च। पर्वतश्चिन्महि वृद्धो बिभाय सृजंति रश्मिमोजसा। आ० २ १३। इति॥

पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानु रेजत स्वने वः।
यत्क्रीळथ मरुत ऋष्टिमंत आप इव सध्र्यंचो धवध्वे॥३॥
पर्वतः। चित्। महि। वृद्धः। बिभाय। दिवः। चित्। सानु। रेजत। स्वने। वः।
यत्। क्रीळथ। मरुतः। ऋष्टिऽमंतः। आपःऽइव। सध्र्यंचः। धवध्वे॥३॥

हे मरुतो वो युष्माकं स्वने भयकरशब्दे सति पर्वतश्चित् पर्वतोऽपि महि महान्वृद्धः सन्नपि बिभाय। बिभेति। दिवश्चित् अंतरिक्षस्यापि सानु समुच्छ्रितः प्रदेशो रेजत। कंपते। यद्यदा क्रीळथ हे मरुतो यूयमृष्टिमंत आयुधवंतः संतस्तदापि इवोदकानीव सध्र्यचः सहांचना धवध्वे। धावध्वे। गच्छथ॥

वरा इवेद्रैवतासो हिरण्यैरभि स्वधाभिस्तन्वः पिपिश्रे।
श्रिये श्रेयांसस्तवसो रथेषु सत्रा महांसि चक्रिरे तनूषु॥४॥
वराःऽइव। इत्। रैवतासः। हिरण्यैः। अभि। स्वधाभिः। तन्वः। पिपिश्रे।
श्रिये। श्रेयांसः। तवसः। रथेषु। सत्रा। महांसि। चक्रिरे। तनूषु॥४॥

वरा इव विवाहयोग्या युवान इव। ते यथा रैवतासो धनवंतो हिरण्यैर्हिरण्मयैराभरणविशेषैः स्वधाभिरुदकैश्च तन्वः स्वीयानि शरीराण्यभि पिपिश्रे संयोजयंति अलंकुर्वंति तद्वदेते मरुतोऽपि रैवतासो धनवंतो हिरण्यैर्हिरण्मयस्थानीयैर्विद्युदाद्यैराभरणैः स्वधाभिश्च तन्वः स्वीयानि शरीराणि पिपिश्रे। श्रिये शोभार्थं श्रेयांसः श्रेष्ठास्तवसो बलवंतो मरुतो रथेषु सत्रा सत्यं सह वा तनूषु महांसि चक्रिरे। कृतवंतः। सर्वाभरणैरुदकैश्चार्पिता रथानधिष्ठाय शरीरेषु तेजांस्यधारयन्नित्यर्थः॥

अज्येष्ठासो अकनिष्ठास एते सं भ्रातरो वावृधुः सौभगाय।
युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः॥५॥
अज्येष्ठासः। अकनिष्ठासः। एते। सं। भ्रातरः। ववृधुः। सौभगाय।
युवा। पिता। सुऽअपाः। रुद्रः। एषां। सुऽदुघा। पृश्निः। सुऽदिना। मरुत्ऽभ्यः॥५॥

अज्येष्ठासोऽकनिष्ठासः परस्परं ज्येष्ठकनिष्ठभावरहिताः सहैवोत्पन्नाः समानबला एते मरुतो भ्रातरः परस्परं भ्रातृभूताः संतः सौभगाय सुभगत्वाय सं ववृधुः। वर्धंते। युवा नित्यतरुणः स्वपाः शोभनकर्मैषां मरुतां रुद्रः पिता सुदुघा सुष्ठु दोग्ध्री पृश्निर्गोदेवता मातृभूता मरुद्भ्यो मरुदर्थं सुदिना शोभनदिनानि। अकुर्वतामिति शेषः॥

यदुत्तमे मरुतो मध्यमे वा यद्वावमे सुभगासो दिवि ष्ठ।
अतो नो रुद्रा उत वा न्व१स्याग्ने वित्ताद्धविषो यद्यजाम॥६॥

यत्। उत्ऽतमे। मरुतः। मध्यमे। वा। यत्। वा। अवमे। सुऽभगासः। दिवि। स्थ।
अतः। नः। रुद्राः। उत। वा। नु। अस्य। अग्ने। वित्तात्। हविषः। यत्। यजाम ॥ ६॥

हे मरुतो यूयं यदुत्तम उत्कृष्ट उत्तमे चरमे वा दिवि द्युलोके मध्यमे वा दिवि यद्वावमे दिवि हे सुभगासः स्थ भवथ। त्रयो वा इमे त्रिवृतो लोका अस्मिन्नो दिवः पृथिवीरित्यादिश्रुतेर्द्युलोकस्य त्रैविध्यं। अतो ऽस्मात् स्थानत्रयान्नो ऽस्मदर्थं हे रुद्रा आगन्तेति शेषः। उत वा अथवा नु अद्य यद्यजाम यद्धविः प्रक्षिपामः हे अग्ने त्वमस्य हविष एतद्धविर्वित्तात्। विद्धि ॥

अग्निश्च यन्मरुतो विश्ववेदसो दिवो वहध्व उत्तरादधि ष्णुभिः।
ते मंदसाना धुनयो रिशादसो वामं धत्त यजमानाय सुन्वते ॥ ७॥
अग्निः। च। यत्। मरुतः। विश्वऽवेदसः। दिवः। वहध्वे। उत्ऽतरात्। अधि। स्नुऽभिः।
ते। मंदसानाः। धुनयः। रिशादसः। वामं। धत्त। यजमानाय। सुन्वते ॥ ७॥

हे विश्ववेदसः सर्वस्य ज्ञातारो विश्वधना वा हे मरुतो यद्यूयमग्निश्च दिवो द्युलोकादुत्तरादुत्कृष्टतरादधि उपरि स्नुभिः सानुभिरुपरिप्रदेशैर्वहध्वे उह्यध्वे। तत्र निवसथेत्यर्थः। यद्वा स्नुशब्देन तत्सदृशा अश्वा उच्यन्ते। तैर्वोह्यध्वे। ते यूयं मंदसाना मोदमाना अस्मदीयैः स्तोत्रैर्हविर्भिश्च धुनयः शत्रूणां कंपयितारो रिशादसो ऽस्मद्धिंसकानामत्तारः संतो वामं वननीयं धनं धत्त दत्त यजमानाय सुन्वते ऽभिषवं कुर्वते ॥

अग्ने मरुद्भिरित्यष्टम्याग्निमारुतस्य याज्या। अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः। आ० ५.२०। इति सूत्रितत्वात् ॥

अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मंदसानो गणश्रिभिः।
पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ॥ ८॥
अग्ने। मरुत्ऽभिः। शुभयत्ऽभिः। ऋक्वऽभिः। सोमं। पिब। मंदसानः। गणश्रिऽभिः।
पावकेभिः। विश्वंऽइन्वेभिः। आयुऽभिः। वैश्वानर। प्रऽदिवा। केतुना। सऽजूः ॥ ८॥

हे अग्ने मरुद्भिः सह मंदसानः सन् सोमं पिब। कीदृशैर्मरुद्भिः। शुभयद्भिः शोभमानैरन्यान् शोभयद्भिर्वा ऋक्वभिः स्तुत्यैर्गणश्रिभिर्गणभावमाश्रयद्भिः पावकेभिः शोधकैर्विश्वमिन्वेभिर्विश्वं वृष्ट्या प्रीणयद्भिरायुभिरायुष्मद्भिः। हे वैश्वानर विश्वनरहिताग्ने प्रदिवा पुराणेन केतुना ज्ञापकेन सजूः सहितः ॥ ॥ २५॥

क ष्ठा नर इत्येकोनविंशत्यृचं पंचमं सूक्तं। अत्रानुक्रमणिका। क ष्ठैकोना गायत्रं श्यावाश्वो ऽत्र वैददश्विस्तरन्तपुरुमीळ्हौ दार्भ्यं रथवीतिं मरुतश्च दानतुष्टः प्रशशंस वृद्धा च तरंतमहिषी शशीयसी पंचम्यनुष्टुप् नवमी सतोबृहतीति। श्यावाश्व ऋषिः। पंचम्यनुष्टुप् नवमी सतोबृहती शिष्टा गायत्र्यः। आद्यादशमी मरुद्देवताकाः। सनत्सेत्यादीनां चतसृणां शशीयसी नाम तरंतस्य राज्ञो भार्या देवता। उत मे ऽरपदित्यस्या वैददश्विः पुरुमीळ्हो देवता। यो मे धेनूनामित्यस्या वैददश्विस्तरंतो राजा देवता। य ईं वहन्त इत्याद्याः पंचमारुत्यः। एतं मे इत्यस्य तृचस्य दार्भ्यो रथवीतिर्नाम राजा देवता ॥ विनियोगो लैंगिकः ॥

अत्राश्चर्यं पुरावृत्तमाहुरागमपारगाः। अर्चनानाः पुरात्रेयो दार्भ्येण रथवीतिना ॥ आर्त्विज्याय वृतो यज्ञे विततं होत्र आस्थितः। रथवीतिसुता कन्या ददर्श पितुरंतिके ॥ ययाचे स्वकुमाराय श्यावाश्वाय च तां सुतां। स प्रदानमना भार्यामपृच्छत्किं प्रयच्छामि ॥ इति पृष्टा पुनः प्राह कथमस्मै प्रदास्यसि। इतः पूर्वं सुता दत्ता नासीदनृषये क्वचित् ॥ तत्तथेति निश्चित्य प्रत्याचष्टार्चनानसं। श्यावाश्वः संस्थिते यज्ञे तेन राज्ञा निराकृतः ॥ तत्प्रत्याशान्वितो विप्रस्तपस्येव सुदारुणं। ब्रह्मचर्यरतः शांतो भिक्षार्थं पर्यटन् द्विजः ॥ तरंतम-

ह्रिषी साध्वी बिभिक्षेऽर्मा शशीयसी । सा संप्राप्यांतिकं पत्युः प्रोवाचागतवानृषिः ॥ इत्युक्तो नृपतिर्भार्यां प्रत्याहैनं प्रपूजय । सानुज्ञाता गवां यूथं प्रादादाभरणानि च ॥ तरंतोऽपि पुनस्तस्मै प्रादाद्वसु समर्पयितं । दत्त्वा च पुरुमीळ्हस्य स्वानुजस्यांतिकं प्रति ॥ प्रेरयामास तमृषिं सोऽपि त्वां मामर्पयिष्यति ॥ तथेति राज्ञो वचनं निशम्य तद्भार्यया दर्शितसर्वमार्गः । गच्छन् शनैरर्धपथे मरुद्गणान् समानरूपान् स्वदिदृक्षयागतान् ॥ विलोक्य विप्रः सभयः प्रणम्य कृतांजलिः कंटकितांगसंघः । तुष्टाव हृष्टान्मरुतो विशिष्टैरर्थैर्वचोभिः परितुष्टचित्तः ॥ संप्राप्य सर्वं स्वमनीषितं तदा मरुद्गणेभ्यो मुदितात्मवद्वा ॥ तदाभवदृषिः सूक्तद्रष्टा श्यावाश्वनामकः । पश्चात्पुनर्गृहं गत्वा भूयो लब्ध्वा गवां शतं ॥ दार्भ्यो मंत्रदृशे राज्ञ्या चोदितः स्वसुतां ददौ । पुरुमीळ्हस्तरंतश्च तद्भार्या च शशीयसी ॥ दार्भ्यो यो रथवीत्याख्यः सप्त ये मरुतां गणाः । ते तस्मै यद्ददुस्तुष्टास्तत्के ष्ठेत्यत्र वर्ण्यते ॥

के ष्ठा नरः श्रेष्ठतमा य एकएक आयय । परमस्याः परावतः ॥१॥
के । स्थ । नरः । श्रेष्ठऽतमाः । ये । एकःऽएकः । आऽयय । परमस्याः । पराऽवतः ॥१॥

हे नरो नेतारो मरुतः श्रेष्ठतमा अत्यंतं श्रेष्ठा यूयं के ष्ठ । के स्थ । के भवथ । एवं स्वरूपानिश्चयात्संदिह्य ब्रवीति । ये यूयमेक एकः प्रत्येकमायय आगच्छथ । कस्मादित्युच्यते । परमस्याः परावतोऽत्यंतदूरदेशात् । अंतरिक्षादित्यर्थः ॥

क्व१ वोऽश्वाः क्वा३भीशवः कथं शेक कथा यय । पृष्ठे सदो नसोर्यमः ॥२॥
क्व । वः । अश्वाः । क्व । अभीशवः । कथं । शेक । कथा । यय । पृष्ठे । सदः । नसोः । यमः ॥२॥

हे मरुतो वो युष्माकमश्वाः क्व कुत्रत्याः । क्व चाभीशवो बंधनरज्जवः । कथं च शेक । शीघ्रं गंतुं शक्ता भवथ । कथा कथं यय । याताः स्थ । पृष्ठेऽश्वानां पृष्ठदेशे सदः । सीदंति तिष्ठंत्यत्रेति सदः पर्याणं । तत्र दृश्यते । तथा नसोर्नासिकयोर्यमो नियमिता पलायनप्रतिबंधकारी पशोर्नासिकयोर्दृश्यते । तस्मादश्वादिलिंगैः कुत्रापि त्वरितगमना इव प्रतिभाति के यूयमिति देवत्वमनवधार्याह ॥

जघने चोद एषां वि सक्थानि नरो यमुः । पुत्रकृथे न जनयः ॥३॥
जघने । चोदः । एषां । वि । सक्थानि । नरः । यमुः । पुत्रऽकृथे । न । जनयः ॥३॥

एषामश्वानां जघने हतव्यप्रदेशे चोदः प्रेरिका कशा अराग्रकाष्ठविशेषो वा वर्तते । शीघ्रगमनाय ताडयन्वर्तत इत्यर्थः । सक्थान्यूरुप्रदेशान्नरो नेतारो मरुतो वि विविच्य यमुः । नियच्छंति । आशुधावनेन विवृता भवतीत्यर्थः । विवृतौ दृष्टांतः । पुत्रकृथे पुत्रकरण उत्पादने जनयो नापत्योत्पादयित्र्यो योषित इव । ता यथा पुत्रोत्पादनकाले सगमसमय ऊरू विवृतौ कुर्वंति तद्वदित्यर्थः ॥

परा वीरास एतन मर्यासो भद्रजानयः । अग्नितपो यथासथ ॥४॥
परा । वीरासः । इतन । मर्यासः । भद्रऽजानयः । अग्निऽतपः । यथा । असथ ॥४॥

कशाताडनादिलिंगेन जिगमिषून्मत्वा ब्रूते । हे वीरासो वीरा अमित्राणामीरयितारो हे मर्यासो मर्त्येभ्यो हिता हे भद्रजानयः । भद्रः स्तुत्यो जानिर्जन्म येषां ते तथोक्ताः । रुद्रपुत्रा इत्यर्थः । अग्नितपोऽग्निना तप्तास्ताम्रादयो यथा दीप्तास्तद्वत् प्रदीप्ता असथ । भवथ । अथवाग्नितप्ता दग्धदेहा यथा पलायंते तथा भवथेति ॥

सनत्साश्व्यं पशुमुत गव्यं शतावयं । श्यावाश्वस्तुताय या दोर्वीरायोपबर्बृहत् ॥५॥
सनत् । सा । अश्व्यं । पशुं । उत । गव्यं । शतऽअवयं । श्यावाश्वऽस्तुताय । या । दोः ।
वीराय । उपऽबर्बृहत् ॥५॥

सा तरंतमहिषी मह्यं सनत । प्रादात । किं । अश्व्यमश्वात्मकं गव्यमृहात्मकं वा पशुं । जातावेकवचनं । उतापि च गव्यं गोसमूहात्मकं पशुं शतावयमनेकैरविभिर्युक्तं सनदिति । सत्युक्तं केत्याह । या श्यावाश्वस्तुताय श्यावाश्वेन मया स्तुताय वीराय तरंताय दोः स्वकीयं भुजमुपवर्बृहत उपोदयत्कदालिंगनाय सा सनदिति । यतो भर्तृप्रेमास्पदा तस्मादेव बहु धनं दातुं शक्तेत्यर्थः ॥ ॥ २६ ॥

उत त्वा स्त्री शशीयसी पुंसो भवति वस्यसी । अदेवत्रादराधसः ॥ ६ ॥

उत । त्वा । स्त्री । शशीयसी । पुंसः । भवति । वस्यसी । अदेवऽत्रात । अराधसः ॥ ६ ॥

उतापि च त्वेका शशीयसी । शशीयसीत्येतन्महिष्या नाम । सैव स्त्री । यद्वा । उतेत्ययमेवकारार्थे । स्त्रीषु सैव प्रशस्येत्यर्थः ॥ त्वसमसिमनेमेत्यनुच्चानीति वचनात् त्वेति निघातः ॥ सैव पुंसः पुरुषाद्वस्यसी वसीयसी भवति । कस्मात्पुंस इत्युच्यते । अदेवत्रात । देवा न येन त्रायंते स्तुत्यादिना सोऽदेवत्रः । तस्मादराधसः । राधो धनं । दानार्हधनरहितात । लुब्धकादित्यर्थः ॥

वि या जानाति जसुरिं वि तृष्यंतं वि कामिनं । देवत्रा कृणुते मनः ॥ ७ ॥

वि । या । जानाति । जसुरिं । वि । तृष्यंतं । वि । कामिनं । देवऽत्रा । कृणुते । मनः ॥ ७ ॥

या शशीयसी जसुरिं व्यथितं ॥ जसिस्तादनकर्मोपक्षपणकर्मा वा ॥ तं वि जानाति । तथा तृष्यंतं वि जानाति । कामिनं धनाद्यभिलाषवंतं वि जानाति । अनुकंपयाभिमतं दत्तवतीत्यर्थः । देवत्रा देवेषु मनः कृणुते कुरुते देवप्रीत्यर्थं प्रदानबुद्धिं करोति या सैव स्त्रीति पूर्वेण संबंधः ॥

उत घा नेमो अस्तुतः पुमाँ इति ब्रुवे पणिः । स वैरदेय इत्समः ॥ ८ ॥

उत । घ । नेमः । अस्तुतः । पुमान् । इति । ब्रुवे । पणिः । सः । वैरऽदेये । इत् । समः ॥ ८ ॥

उत घापि च । घेति पूरणः । नेमः । त्वो नेम इत्यर्धस्येति निरुक्तं । ३ २० । नेमोऽर्धः । जायापत्योर्मिलित्वैककार्यकर्तृत्वादेक एव पदार्थः । अर्धं शरीरस्य भार्येत्यादि स्मृतेः । शशीयस्या अर्धभूतस्तरंतः पुमानस्तुत इति ब्रुवे । बहुधा स्तुतोऽपि गुणस्यातिबाहुल्यादस्तुत एवेति ब्रुवे पणिः स्तोताह । स च तरंतो वैरदेये । वीरा धनानां प्रेरयितारो दानशीलाः । तैर्दातव्यं धनं देयं । तस्मिन्धने समः । सर्वेभ्यो दातेत्यर्थः । इदिति पूरणः ॥

उत मेऽरपद्युवतिर्ममंदुषी प्रति श्यावाय वर्तनिं ।
वि रोहिता पुरुमीळ्हाय येमतुर्विप्राय दीर्घयशसे ॥ ९ ॥

उत । मे । अरपत् । युवतिः । ममंदुषी । प्रति । श्यावाय । वर्तनिं ।
वि । रोहिता । पुरुऽमीळ्हाय । येमतुः । विप्राय । दीर्घऽयशसे ॥ ९ ॥

उतापि च श्यावाय श्यावाश्वाय मे मह्यमरपत् । अजल्पत् । स्पष्टमाचष्ट । किं । वर्तनिं मार्गं । कीदृशी सा । युवतिः प्रवृत्तयौवना प्रति ममंदुषी प्रतिमोदमाना । कस्मै । दीर्घयशसे प्रभूतान्नाय प्रभूतकीर्तये वा पुरुमीळ्हायैतन्नामकाय प्रभूतगृहाय विप्राय ॥ क्रियार्थोपपदस्य च कर्मणि स्थानिनः । पा॰ २ ३ १४ । इति चतुर्थी ॥ पुरुमीळ्हं प्राप्तुमित्यर्थः । तदर्थं रोहिता रोहितवर्णावश्वौ शशीयस्या दत्तौ वि येमतुः । धृतवंतावित्यर्थः । याभ्यामश्वाभ्यां युक्तं रथं स्थापयित्वा पुरुमीळ्हगृहस्य मार्गं प्रदर्शयंती पुरतो गता सैव पुंसो भवति वस्यसीति पूर्वेण संबंधः ॥

यो मे धेनूनां शतं वैददश्विर्यथा ददत् । तरंत इव मंहना ॥ १० ॥

यः । मे । धेनूनां । शतं । वैदत्ऽअश्विः । यथा । ददत् । तरंतःऽइव । मंहना ॥ १० ॥

इयं पुरुमीळ्हस्तुतिः । वैददश्विः पुरुमीळ्होऽपि यो मे मह्यं धेनूनां शतं यथा येन प्रकारेण ददत् दत्तवान् । तथा महना महनीयानि धनान्यपि ददत् तरत इव । स यथा धेनुशतं बहुविधं धनं च दत्तवान् तद्वद्वैददश्विः पुरुमीळ्होऽपि ददत् । तं स्तुव इति शेषः ॥ ॥ २७ ॥

य ईं वहंत आशुभिः पिबंतो मदिरं मधु । अत्र श्रवांसि दधिरे ॥ ११ ॥

ये । ईं । वहंते । आशुऽभिः । पिबंतः । मदिरं । मधु । अत्र । श्रवांसि । दधिरे ॥ ११ ॥

इदानीं मरुत एवैत इति निश्चित्य जनप्रसिद्धिमाहात्म्यं स्तौति । ये मरुत ईमिदानीमाशुभिः शीघ्रगामिभिरश्वैर्वहंते उह्यंते । किं कुर्वंतः । मदिरं मदकरं मधु सोमरसं पिबंतः । पाथेयत्वेन धृतं सोममित्यर्थः । ते मरुतोऽत्रास्मिन्देशे श्रवांसि स्तुतिजनितानि यशांसि दधिरे । धारयंति ॥

येषां श्रियाधि रोदंसी विभ्राजंते रथेष्वा । दिवि रुक्मइवोपरि ॥ १२ ॥

येषां । श्रिया । अधि । रोदसी इति । विऽभ्राजंते । रथेषु । आ । दिवि । रुक्मःऽइव । उपरि ॥ १२ ॥

येषां मरुतां श्रिया कांत्या रोदसी द्यावापृथिव्यावधि । अधिश्रिते भवत इति शेषः । यस्मादेते मरुतो रथेषु विभ्राजंते विशेषेण दीप्यंते । आ इति चार्थे । तत्र दृष्टांतः । उपर्युपरिभूते दिवि द्युलोके रुक्मो रोचमान आदित्य इव । यद्वा । उपरि रथस्योपरीति वा योज्यं ॥

युवा स मारुतो गणस्त्वेषरथो अनेद्यः । शुभंयावाप्रतिष्कुतः ॥ १३ ॥

युवा । सः । मारुतः । गणः । त्वेषऽरथः । अनेद्यः । शुभंऽयावा । अप्रतिऽस्कुतः ॥ १३ ॥

स मारुतो गणो युवा सर्वत्र मिश्रयिता नित्यतरुणो वा त्वेषरथो दीप्तरथोऽनेद्योऽनिंद्यः शुभंयावा शोभनं गताप्रतिष्कुतोऽप्रतिगतोऽप्रतिशब्दितो वा । एव महानुभावो गणो दीप्यत इति ॥

को वेद नूनमेषां यत्रा मदंति धूतयः । ऋतजाता अरेपसः ॥ १४ ॥

कः । वेद । नूनं । एषां । यत्र । मदंति । धूतयः । ऋतऽजाताः । अरेपसः ॥ १४ ॥

एषां मरुतां स्थानं को वेद । को जानाति । नूनमिदानीं यत्र स्थाने धूतयः शत्रूणां कंपका मदंति हृष्यंति ऋतजाता जलार्थमुत्पन्ना यज्ञे वा प्रादुर्भूता अरेपसोऽपापाः ॥

यूयं मर्तं विपन्यवः प्रणेतार इत्था धिया । श्रोतारो यामहूतिषु ॥ १५ ॥

यूयं । मर्तं । विपन्यवः । प्रऽनेतारः । इत्था । धिया । श्रोतारः । यामऽहूतिषु ॥ १५ ॥

हे विपन्यवः स्तुतिकामा मरुतो यूयं मर्तं मरणस्वभावं यजमानमित्थानया धियेदानीं कृतप्रकारयानुग्रहबुद्ध्या ईदृशेन स्तुतिकर्मणा वा निमित्तेन प्रणेतारः प्रकर्षेण प्रापयितारोऽभिमतं स्वर्गादिकं । यामहूतिषु । यामो गमनं । तदर्था हूतयो यस्मिन्निति यामहूतयो यज्ञाः । तेषु श्रोतार आह्वानानां ॥ ॥ २८ ॥

ते नो वसूनि काम्या पुरुश्चंद्रा रिशादसः । आ यज्ञियासो ववृत्तन ॥ १६ ॥

ते । नः । वसूनि । काम्या । पुरुऽचंद्राः । रिशादसः । आ । यज्ञियासः । ववृत्तन ॥ १६ ॥

हे रिशादसो हिंसकानां शत्रूणामत्तारो हे यज्ञियासो यज्ञार्हाः पुरुश्चंद्राः प्रभूताह्लादकधनास्ते यूयं नोऽस्मभ्यं वसूनि निवासयोग्यानि धनानि काम्या स्पृहणीयान्या ववृत्तन । आवर्तयथेत्यर्थः । मरुतां दानप्रशंसाया अपेक्षितत्वान्न प्रार्थनोचिता ॥

एतं मे स्तोममूर्म्ये दार्भ्याय परा वह । गिरो देवि रथीरिव ॥१७॥

एतं । मे । स्तोमं । ऊर्म्ये । दार्भ्याय । परा । वह । गिरः । देवि । रथीःऽइव ॥१७॥

संपन्नऋषिभावस्य श्यावाश्वस्यार्चनानसः । रथवीतिसुतायाश्च विवाहं शौनकोऽब्रवीत ॥ कथं । मरुत्सु तु प्रयातेषु श्यावाश्वः सुमहायशाः । प्रादुर्भूतार्षमात्मानं ज्ञात्वा त्रिकुलनंदनः ॥ रथवीतिर्दुहितरमगच्छन्मनसा तदा । स सत्यमृषिमात्मानं प्रवक्ष्यन्रथवीतये ॥ एतं मे स्तोममित्याभ्यां दाल्भ्ये रात्रिं न्यवेदयत । ऋषिर्नियोग माज्ञाय देव्या राज्ञ्या प्रचोदितः ॥ आदाय कन्यकां दातुमुपयायार्चनानसं । पादौ तस्योपसंगृह्य स्थित्वा प्रह्वः कृतांजलिः ॥ रथवीतिरहं दार्भ्य इति नाम शशास सः । मया संयोगमिच्छंतं त्वा प्रत्याचक्षि यत्पुरा ॥ तत्क्षमस्व नमस्तेऽस्तु मे मा स्म भगवन् क्रुधः ॥ ऋषेः पुत्रः स्वयमृषिः पितासि भगवानृषेः । हंत प्रतिगृहाणेमां स्नुषामि त्येनमब्रवीत ॥ तस्मै ददावश्वशतं स राजा स्वलंकृतां चापि सुतां स्नुषार्थं । विवाहकालेऽपि ददौ नरेंद्रः शतं हयानां दुहितुः सहस्रं ॥ गवां सहस्रं वसु च प्रभूतं तस्यौ तपोऽतेऽथ वनं जगामेति ॥ हे ऊर्म्ये रात्रि देवि । ऊर्म्येति रात्रिनाम । मे मदीयमेतं स्तोमं मरुद्भ्यः कृतं स्तोत्रमहं मत्रदृक् भूत्वा मरुतः स्तुतवानित्येव दार्भ्याय श्यावाश्वाय परा पराङ्मुखी दार्भ्याभिमुखी सती वह । प्रापयेत्यर्थः । तदेवादरार्थमुच्यते । हे रात्रि देवि गिरः स्तुतीर्मद्विषयाः परा वह रथीरिव । रथी यथा रथेऽभिप्रेतं वसु स्थापयित्वाभिमतं देशं प्रापयति तद्वत् ॥

उत मे वोचतादिति सुतसोमे रथवीतौ । न कामो अप वेति मे ॥१८॥

उत । मे । वोचतात् । इति । सुतऽसोमे । रथऽवीतौ । न । कामः । अप । वेति । मे ॥१८॥

हे ऊर्म्ये उतापि च मे मां वोचतात् । ब्रूहि । किमित्युच्यते । इतीत्थं । कथमिति । सुतसोमे कृतसोमयागे रथवीतौ राज्ञि मे कामस्तत्पुत्रीविषयो नाप वेति । नापगच्छति न विरमते इतीत्थं वोचतात् ॥

एष क्षेति रथवीतिर्मघवा गोमतीरनु । पर्वतेष्वपश्रितः ॥१९॥

एषः । क्षेति । रथऽवीतिः । मघऽवा । गोऽमतीः । अनु । पर्वतेषु । अपऽश्रितः ॥१९॥

कन्यां दत्त्वा कृतार्थं तं श्यावाश्वोऽथ वनं गतं । रथवीतिं तपस्यंतं संप्रत्यर्षेण चक्षुषा । रम्ये हिमवतः पृष्ठे एष क्षेतीति सोऽब्रवीत ॥ एष रथवीतिर्मघवा धनवान् गोमतीरुदकवतीर्नदीरनु अनुसृत्य नदीनां तीरे क्षेति निवसति पर्वतेषु हिमवत्पर्वतप्रांतेष्वपश्रितः आश्रितः ॥ ॥२०॥

ऋतेन ऋतमिति नवर्चं षष्ठं सूक्तमात्रेयस्य श्रुतविद आर्षं त्रैष्टुभं मैत्रावरुणं । तथा चानुक्रम्यते । ऋतेन नव श्रुतविन्मैत्रावरुणं वै तदिति । वै तदित्युभयोः प्रयोगात्तुह्यादिपरिभाषयैतदादीन्येकादश सूक्तानि मित्रावरुणदेवत्यानि ॥ विनियोगो लैंगिकः ॥

ऋतेन ऋतमपिहितं ध्रुवं वां सूर्यस्य यत्र विमुचंत्यश्वान् ।
दश शता सह तस्थुस्तदेकं देवानां श्रेष्ठं वपुषामपश्यं ॥१॥

ऋतेन । ऋतं । अपिऽहितं । ध्रुवं । वां । सूर्यस्य । यत्र । विऽमुचंति । अश्वान् ।
दश । शता । सह । तस्थुः । तत् । एकं । देवानां । श्रेष्ठं । वपुषां । अपश्यं ॥१॥

सूर्यस्य ऋतं सत्यभूतं मंडलमृतेनोदकेनापिहितमाच्छादितं ध्रुवं शाश्वतमपश्यमिति संबंधः । यत्र वां युवाभ्यां स्थितिस्तदित्यर्थः । सूर्यमंडले मित्रावरुणयोः स्थितिश्चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । ऋ॰सं॰ १. ११५ १. । उद्वां चक्षुर्वरुण सुप्रतीकं देवयोः । ऋ॰सं॰ ७.६१ १ । इति चक्षुर्मित्रस्य वरुणस्य । ऋ॰सं॰ ७ ६३ १. । इत्यादिषु प्रसिद्धा । यत्र यस्मिन्मंडले स्थितानश्वान् विमुचंति विमोचयंति स्तोतारः । मंदेहादिभिर्निरुद्धानित्यर्थः । अथवा शीघ्रधावनाय स्तुत्या प्रेरयंति । यस्मिंश्च मंडले दश शता शतानि

सहस्रसंख्याका रश्मयस्तस्थुः तिष्ठंति तादृशं देवानां वपुषां वपुष्मतां तेजोवतामग्न्यादीनां श्रेष्ठं प्रशस्यं ॥ मत्वर्थलक्षणा अथवा व्यधिकरणषष्ठी ॥ देवानां वपुषां शरीराणां श्रेष्ठं । मंडलं हि सूर्यस्य वपुःस्थानीयं । तन्मंडलमपश्यं । अथवा वा युवयोर्मध्ये सूर्यस्य मंडलमपश्यमिति व्याख्येयं मैत्रं वा अहः । तै॰ब्रा॰ १.७.१०.१. । इति श्रुतेर्मित्रस्यैव सूर्यत्वादित्याशयेन ॥

तत्सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुह्रे ।
विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त ॥२॥
तत् । सु । वां । मित्रावरुणा । महिऽत्वं । ईर्मा । तस्थुषीः । अहऽभिः । दुदुह्रे ।
विश्वाः । पिन्वथः । स्वसरस्य । धेनाः । अनु । वां । एकः । पविः । आ । ववर्त ॥२॥

हे मित्रावरुणा वां युवयोस्तन्महित्वं महत्त्वं सु सुष्ठु । अतिप्रशस्तमित्यर्थः । किं तदित्युच्यते । ईर्मा सततगंता सर्वस्य प्रेरको वादित्योऽहभिरहोभिर्वर्षर्तुसंबंधिभिस्तस्थुषीः स्थावरभूता अपो दुदुह्रे । दुग्धे । किंच स्वसरस्य स्वयं सर्तुरादित्यस्य विश्वाः सर्वा धेना लोकानां प्रीणयित्रीर्वृतीः पिन्वथः । वर्धयथः । वां युवयोरेकोऽप्रतियोगी पविः । पविरिति रथस्य नेमिः पवी रथनेमिर्भवति । नि॰ ५ ५ । इति यास्कवचनात् । तथाप्यत्र लक्षितलक्षणया रथे वर्तते केवलचक्रस्यावर्तनायोगात् । युवयोरेको रथोऽन्वा ववर्त । अनुक्रमेण परिभ्रमति ॥

अधारयतं पृथिवीमुत द्यां मित्रराजाना वरुणा महोभिः ।
वर्धयतमोषधीः पिन्वतं गा अव वृष्टिं सृजतं जीरदानू ॥३॥
अधारयतं । पृथिवीं । उत । द्यां । मित्रऽराजाना । वरुणा । महःऽभिः ।
वर्धयतं । ओषधीः । पिन्वतं । गाः । अव । वृष्टिं । सृजतं । जीरदानू इति जीरऽदानू ॥३॥

हे मित्रराजाना । मित्रभूताः स्तोतारो राजानः स्वामिन ईश्वरा भवंति ययोः सकाशात्तौ मित्रराजानौ । हे वरुणा ॥ प्रतियोग्यपेक्षया द्विवचनं । अत्र पादादित्वादाद्यं पदं न निहन्यते । वरुणेत्येतस्य त्वामंत्रितं पूर्वमविद्यमानवदिति पूर्वस्याविद्यमानवत्त्वेनास्यैव पादादित्वादनिघातत्वं युक्तं । नैव भवति । नामंत्रिते समानाधिकरणे सामान्यवचनमिति वरुणेत्येतस्यामंत्रितसमानाधिकरणत्वादस्य च सामान्यवचनत्वादविद्यमानवत्त्वाभावेन पादादित्वाभावादुत्तरस्य निघातत्वं युक्तं ॥ हे देवौ महोभिस्तेजोभिः स्वसामर्थ्यैः पृथिवीमुतापि च द्यामधारयतं । हे देवौ युवामोषधीर्वर्धयतं वृष्टिप्रेरणेन । गाः पिन्वतं । गवाश्वादीन्वर्धयतं । तदर्थं वृष्टिमव सृजतं । अवाङ्मुखं प्रेरयतं हे जीरदानू क्षिप्रदानौ ॥

आ वामश्वासः सुयुजो वहंतु यतरश्मय उप यंत्वर्वाक् ।
घृतस्य निर्णिगनु वर्तते वामुप सिंधवः प्रदिवि क्षरंति ॥४॥
आ । वां । अश्वासः । सुऽयुजः । वहंतु । यतऽरश्मयः । उप । यंतु । अर्वाक् ।
घृतस्य । निःऽनिक् । अनु । वर्तते । वां । उप । सिंधवः । प्रऽदिवि । क्षरंति ॥४॥

हे मित्रावरुणौ वां युवामश्वासोऽश्वाः सुयुजः सुष्ठु रथे युक्ताः संत आ वहंतु । यतरश्मयः सारथिनियतप्रग्रहास्तेऽर्वागुप यंतु । घृतस्योदकस्य निर्णिग्रूपं वामनु वर्तते । अनुगच्छति । किंच प्रदिवि । पुराणनामैतत् । पुराणाः सिंधव उप क्षरंति । उपगच्छंति युवयोरनुग्रहात् ॥

अनु श्रुताममतिं वर्धदुर्वीं बर्हिरिव यजुषा रक्षमाणा ।
नमस्वंता धृतदक्षाधि गर्ते मित्रासाथे वरुणेळास्वंतः ॥५॥

अनु । श्रुतां । अमतिं । वर्धत । उर्वीं । बर्हिःऽइव । यजुषा । रक्षमाणा ।
नमस्वंता । धृतऽदक्षा । अधि । गर्ते । मित्र । आसाथे इति । वरुण । इळासु ।
अंतरिति ॥५॥

श्रुतां विश्रुताममतिं । रूपनामैतत । शरीरदीप्तिमित्यर्थः । तामनु वर्धदनुवर्धयतां । बर्हिर्यज्ञः । स इव । स यथा यजुषा मंत्रेण रक्ष्यते तद्वदुर्वीं रक्षमाणा पालयंतौ नमस्वंतावन्नवंतौ हे धृतदक्षावुत्तबलौ हे मित्र हे वरुण हे मित्रावरुणौ युवामुरुबलवंतौ संताविळासु यागभूमिष्वंतर्मध्ये गर्तेऽधि रथ आसाथे । उपविशथः । रथोऽपि गर्त उच्यते । नि० ३. ५ । इति यास्कः । आ रोहथो वरुण मित्र गर्तं । ऋ॰सं॰ ५ ६२ ८ । इति ॥ ॥३०॥

अक्रविहस्ता सुकृते परस्पा यं त्रासाथे वरुणेळास्वंतः ।
राजाना क्षत्रमहृणीयमाना सहस्रस्थूणं बिभृथः सह द्वौ ॥६॥

अक्रविऽहस्ता । सुऽकृते । परःऽपा । यं । त्रासाथे इति । वरुणा । इळासु । अंतरिति ।
राजाना । क्षत्रं । अहृणीयमाना । सहस्रऽस्थूणं । बिभृथः । सह । द्वौ ॥६॥

अक्रविहस्ता अकृपणहस्तौ । दानशूरावित्यर्थः । कस्मै । सुकृते शोभनस्तुतिकर्त्रे परस्पा परस्मात्पातारौ रक्षितारौ हे वरुणा मित्रवरुणा युवा यं यजमानमिळासु यागभूमिष्वंतर्मध्ये त्रासाथे रक्षथः तस्मै सुकृतेऽक्रविहस्ता परस्पा च भवथ इति संबधः । किंच युवा राजाना राजमानावहृणीयमानावक्रुध्यंतौ द्वौ परस्पर सह साहित्येन क्षत्रं धन सहस्रस्थूणमनेकावष्टंभकस्तंभोपेत सौधादिरूप गृह च बिभृथः । धारयथः सुकृते यजमानाय । अथवा क्षत्रं बलमपरिमिताभिः स्थूणाभिरुपेत रथ चागमनार्थं सह धारयथः ॥

हिरण्यनिर्णिगयो अस्य स्थूणा वि भ्राजते दिव्य१श्वाजनीव ।
भद्रे क्षेत्रे निमिता तिल्विले वा सनेम मध्वो अधिगर्त्यस्य ॥७॥

हिरण्यऽनिर्निक् । अयः । अस्य । स्थूणा । वि । भ्राजते । दिवि । अश्वाजनीऽइव ।
भद्रे । क्षेत्रे । निऽमिता । तिल्विले । वा । सनेम । मध्वः । अधिऽगर्त्यस्य ॥७॥

अनयो रथो हिरण्यनिर्णिक हिरण्यरूपः । निर्णिगिति रूपनाम । अस्य रथस्य स्थूणा कीलकादयोऽयः । हिरण्यनामैतत । अयोविकारा इत्यर्थः । अयोमया वा । तादृशो रथो दिव्यंतरिक्षे वि भ्राजते । किमिव । अश्वाजनीव । अश्वा व्यापनशीला मेघाः । तानजति गच्छतीत्यश्वाजनी विद्युत । सेव दिवि भ्राजते । किंच भद्रे कल्याणे सत्ये वा क्षेत्रे देवयजने तिल्विले वा ॥ तिल स्नेहने ॥ तिलुः स्निग्धा इला भूमिर्यस्य तत क्षेत्रं तिल्विलं देवयजनं । घृतसोमादिना स्निग्धे भद्रे च क्षेत्रे निमिता स्थूणा यूपयाप्रिरवस्थितः । मध्वो मधुपूर्णं गर्तस्य गर्तं रथं सनेम । संभजेम ॥ कर्मणि षष्ठ्यौ । अधीति पूरणः ॥ अथवा गर्तस्याधि रथस्योपरि मध्वो मधु सोमरसं सनेम । स्थापयेमेत्यर्थः ॥

हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य ।
आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च ॥८॥

हिरण्यऽरूपं। उषसः। विऽउष्टौ। अयःऽस्थूणं। उत्ऽइता। सूर्यस्य।
आ। रोहथः। वरुण। मित्र। गर्तं। अतः। चक्षाथे इति। अदितिं। दितिं। च ॥८॥

उषसो व्युष्टौ। प्रातःकाल इत्यर्थः। सूर्यस्योदितोदितावुदये। स एव कालः प्रकारांतरेणोक्तः। तस्मिन् काले हिरण्यरूपमयःस्थूणमयोमयशंकुं गर्तं रथं हे वरुण हे मित्र युवां गर्तमा रोहथो यज्ञं प्राप्नुं। अतो ऽस्माद्गर्तादितिमखंडनीयां भूमिं दितिं खंडितां प्रजादिकां च चक्षाथे। पश्यथः॥

दाक्षायणयज्ञे यद्बंहिष्ठमिति नवमी द्वितीयस्याममावास्यायां मैत्रावरुणस्य हविषो याज्या। सूत्रितं च। आ नो मित्रावरुणा यद्बंहिष्ठं नातिविधे सुदानू। आ० २.१४। इति॥ मैत्रावरुणे पशौ हविष एषैव याज्या। सूत्रितं च। यद्बंहिष्ठं नातिविधे सुदानू हिरण्यगर्भः समवर्तताग्रे। आ० ३.८। इति॥

यद्बंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा।
तेन नो मित्रावरुणावविष्टं सिषासंतो जिगीवांसः स्याम ॥९॥
यत्। बंहिष्ठं। न। अतिऽविधे। सुदानू इति सुऽदानू। अच्छिद्रं। शर्म। भुवनस्य। गोपा।
तेन। नः। मित्रावरुणौ। अविष्टं। सिसासंतः। जिगीवांसः। स्याम ॥९॥

हे सुदानू शोभनदानौ हे भुवनस्य गोपा युवां बंहिष्ठं बहुतमं यदच्छिद्रमनवच्छिन्नं शर्म सुखं गृहं वा नातिविधेऽतिवेद्धुमशक्यं शर्मेति शर्मविशेषणं॥ व्यध ताडन इत्यस्मादल्पुपपदे कृत्यार्थे केन संप्रसारणं च॥ तादृशं शर्म धारयथः तेन शर्मणा नोऽस्मानविष्टं। रक्षतं। हे मित्रावरुणौ सिषासंतो धनानि संभक्तुमिच्छंतो वयं जिगीवांसः शत्रूणां धनानि जेतुमिच्छतः स्याम। भवेम॥ ॥३१॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके तृतीयोऽध्यायः समाप्तः॥

---

॥ श्रीभारत्यै नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्। निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं॥
अष्टकस्य चतुर्थस्य तृतीयो व्याकृतः स्फुटं। अध्यायः सायणार्येण चतुर्थो व्याकरिष्यते॥

ऋतस्य गोपाविति सप्तर्चं सप्तमं सूक्तं। अत्रेयमनुक्रमणिका। ऋतस्य सप्तार्चनाना जागतमिति। आत्रेयो ऽर्चनाना नाम ऋषिः। जगती छंदः। तुह्यादिपरिभाषया मित्रावरुणौ देवता॥ विनियोगो लैंगिकः॥

ऋतस्य गोपावधि तिष्ठथो रथं सत्यधर्माणा परमे व्योमनि।
यमत्र मित्रावरुणावथो युवं तस्मै वृष्टिर्मधुमत्पिन्वते दिवः ॥१॥
ऋतस्य। गोपौ। अधि। तिष्ठथः। रथं। सत्यऽधर्माणा। परमे। विऽओमनि।
यं। अत्र। मित्रावरुणा। अवथः। युवं। तस्मै। वृष्टिः। मधुऽमत्। पिन्वते। दिवः ॥१॥

हे ऋतस्योदकस्य गोपा रक्षितारौ सत्यधर्माणा सत्यधर्माणौ युवां रथमधि तिष्ठथः । आरोहथोऽस्मद्यज्ञमागमनार्थं । कुत्र । परमे व्योमनि निरतिशय आकाशे । हे मित्रावरुणौ युवं युवामत्रास्मिन्यज्ञे यं यजमानमवथो रक्षथः तस्मै यजमानाय वृष्टिः पर्जन्यो मधुमदुदकं दिवो द्युलोकात्पिन्वते । सिंचति । वर्धयति ॥

सम्राजावस्य भुवनस्य राजथो मित्रावरुणा विदथे स्वर्दृशा ।
वृष्टिं वां राधो अमृतत्वमीमहे द्यावापृथिवी वि चरंति तन्यवः ॥२॥
सं॒ऽराजौ । अस्य । भुवनस्य । राजथः । मित्रावरुणा । विदथे । स्वः॑ऽदृशा ।
वृष्टिं । वां । राधः । अमृतऽत्वं । ईमहे । द्यावापृथिवी इति । वि । चरंति । तन्यवः ॥२॥

हे मित्रावरुणा मित्रावरुणौ सम्राजौ सम्यग्राजमानौ युवामस्य भुवनस्य राजथः । ईशाथे । स्वर्दृशा स्वर्गस्य द्रष्टारौ युवां विदथेऽस्मद्यज्ञे सम्राजाविति संबंधः । वां युवां वृष्टिं राधो धनं वृष्ट्याख्यं धनममृतत्वं स्वर्गं चेमहे । प्रार्थयामहे । युवयोस्तन्यवो विस्तृता रश्मयो द्यावापृथिवी वि चरंति । विविधं प्राप्नुवंति । अथवा वृष्टिं धनममृतत्वं चेमहे ॥

सम्राजा उग्रा वृषभा दिवस्पती पृथिव्या मित्रावरुणा विचर्षणी ।
चित्रेभिरभ्रैरुप तिष्ठथो रवं द्यां वर्षयथो असुरस्य मायया ॥३॥
सं॒ऽराजा । उग्रा । वृषभा । दिवः । पती इति । पृथिव्याः । मित्रावरुणा । विचर्षणी
इति विऽचर्षणी ।
चित्रेभिः । अभ्रैः । उप । तिष्ठथः । रवं । द्यां । वर्षयथः । असुरस्य । मायया ॥३॥

सम्राजौ सम्यग्राजमानावुग्रावुद्गूर्णबलौ वृषभा वर्षितारौ दिवो द्युलोकस्य पती स्वामिनौ पृथिव्याश्च पती विचर्षणी सर्वस्य द्रष्टारौ मित्रावरुणा । एवं महानुभावौ चित्रैश्चायनीयैरभ्रैर्मेघैः सह रवं स्तोत्रमुप तिष्ठथः । पश्चात् द्यां च वर्षयथोऽसुरस्योदकानिरसितुः पर्जन्यस्य मायया प्रज्ञया सामर्थ्येन ॥

माया वां मित्रावरुणा दिवि श्रिता सूर्यो ज्योतिश्चरति चित्रमायुधं ।
तमभ्रेण वृष्ट्या गूहथो दिवि पर्जन्य द्रप्सा मधुमंत ईरते ॥४॥
माया । वां । मित्रावरुणा । दिवि । श्रिता । सूर्यः । ज्योतिः । चरति । चित्रं । आयुधं ।
तं । अभ्रेण । वृष्ट्या । गूहथः । दिवि । पर्जन्य । द्रप्साः । मधुऽमंतः । ईरते ॥४॥

हे मित्रावरुणा वां युवयोर्माया दिवि श्रिता । आश्रिता । केया युवयोर्मायोच्यते । सूर्यः सर्वस्य प्रकाशको ज्योतिर्दीप्यमानश्चित्रं चायनीयमायुधमुक्तलक्षणायुधरूपश्चरति । परिभ्रमत्यंतरिक्षे । शत्रुमारकत्वादायुधमुच्यते । तं सूर्यमभ्रेण मेघेन वृष्ट्या दिवि गूहथः । गोपायथः । हे पर्जन्य देव त्वया मित्रावरुणाभ्यां वृष्ट्यर्थं प्रेरितेन मधुमंतो द्रप्सा ईरते । ईर्यंते । त्वत्सृष्टा वा गच्छंति ॥

रथं युंजते मरुतः शुभे सुखं शूरो न मित्रावरुणा गविष्टिषु ।
रजांसि चित्रा वि चरंति तन्यवो दिवः सम्राजा पयसा न उक्षतं ॥५॥
रथं । युंजते । मरुतः । शुभे । सुऽखं । शूरः । न । मित्रावरुणा । गोऽइष्टिषु ।
रजांसि । चित्रा । वि । चरंति । तन्यवः । दिवः । सं॒ऽराजा । पयसा । नः । उक्षतं ॥५॥

हे मित्रावरुणा युवयोरनुग्रहात् मरुतः शुभ उदकार्थं सुखं शोभनावद्वारं रथं युंजते। अश्वैर्योजयंति। शूरो न शूर इव। स यथा युद्धार्थं रथं युनक्ति तद्वत्। गविष्टिषु गवामुदकानामेषणेषु निमित्तेषु चित्रा चायनीयानि रजांसि लोकान् तन्यवस्तनयितारो मरुतो वि चरंति। विविधं चरंति। तस्मात्तैः सहितौ हे सम्राजा युवां दिवो द्युलोकात्पयसोदकेन नोऽस्मानुक्षतं। सिंचतं॥

वाचं सु मित्रावरुणाविरावतीं पर्जन्यश्चित्रां वदति त्विषीमतीं।
अभ्रा वसत मरुतः सु मायया द्यां वर्षयतमरुणामरेपसं॥६॥
वाचं। सु। मित्रावरुणा। इराऽवतीं। पर्जन्यः। चित्रां। वदति। त्विषिऽमतीं।
अभ्रा। वसत। मरुतः। सु। मायया। द्यां। वर्षयतं। अरुणां। अरेपसं॥६॥

हे मित्रावरुणौ युवयोरनुग्रहात् पर्जन्यो मेघः सु सुष्ठिरावतीमन्नवतीमन्नसाधिकां चित्रां चायनीयां त्विषीमतीं दीप्तिमतीं वाचं गर्जनशब्दं वदति। शब्दयति वृष्ट्यर्थं। मरुतश्चाभ्राभ्राणि मेघान् सु सुष्ठु वसत आच्छादयंति मायया स्वप्रज्ञया। युवां च पर्जन्येन मरुद्भिश्च सहारुणामरुणवर्णामरेपसमपापां वृष्टिविघातिनीं द्यां वर्षयतं॥

धर्मणा मित्रावरुणा विपश्चिता व्रता रक्षेथे असुरस्य मायया।
ऋतेन विश्वं भुवनं वि राजथः सूर्यमा धत्थो दिवि चित्र्यं रथं॥७॥
धर्मणा। मित्रावरुणा। विपःऽचिता। व्रता। रक्षेथे इति। असुरस्य। मायया।
ऋतेन। विश्वं। भुवनं। वि। राजथः। सूर्यं। आ। धत्थः। दिवि। चित्र्यं। रथं॥७॥

हे मित्रावरुणा विपश्चिता प्राज्ञौ युवां धर्मणा जगद्धारकेण वृष्ट्यादिलक्षणेन कर्मणा व्रता यज्ञादिकर्माणि रक्षेथे। पालयथः। असुरस्य मेघानां निरसितुः पर्जन्यस्य मायया प्रज्ञया च ऋतेनोदकेन यज्ञेन वा निमित्तेन विश्वं भुवनं सर्वं भूतजातं वि राजथः। विदीपयथ इत्यर्थः। सूर्यमा सूर्यं च चित्र्यं पूज्यं रथं रंहणस्वभावं दिवि द्युलोके धत्थः। धारयथो जगदुपकारार्थं॥ ॥१॥

वरुणं व इति सप्तर्चमष्टमं सूक्तमर्चनानस आर्षं मैत्रावरुणं। पंक्त्यंतपरिभाषयानुष्टुभं। अत्या पंक्तिः। वरुणं पत्यंत त्वित्यनुक्रमणिका। विनियोगो लैंगिकः॥

वरुणं वो रिशादसमृचा मित्रं हवामहे। परि व्रजेव बाह्वोर्जगन्वांसा स्वर्णरं॥१॥
वरुणं। वः। रिशादसं। ऋचा। मित्रं। हवामहे। परि। व्रजाऽइव। बाह्वोः। जगन्वांसा।
स्वःऽनरं॥१॥

वो युवयोर्मध्ये॥ व्यत्ययेन बहुवचनं॥ रिशादसं। रिशंति हिंसंतीति रिशाः शत्रवः। तेषां प्रेरकं स्वर्णरं स्वर्गस्य नेतारं। एतद्व्यवहितमप्युभयत्र संबध्यते। एवंविधं वरुणमुक्तलक्षणं मित्रं च ऋचा मंत्रेण हवामहे। आह्वयामः। अथावयुत्योच्यते। व्रजेव गोयूथानीव बाह्वोर्बलेन परि जगन्वांसा परिगच्छंतौ॥

ता बाहवा सुचेतुना प्र यंतमस्मा अर्चते। शेवं हि जार्यं वां विश्वासु क्षासु जोगुवे॥२॥
ता। बाहवा। सुऽचेतुना। प्र। यंतं। अस्मै। अर्चते। शेवं। हि। जार्यं। वां। विश्वासु।
क्षासु। जोगुवे॥२॥

ता तौ युवां बाहवा बाहुना सुचेतुना सुष्ठु प्रज्ञात्रा। प्रयासभूयस्त्वं आमतेत्यर्थः। यद्यप्यात्मेव ज्ञाता न

हस्तस्तथापि तद्धर्ममत्रारोप्य स्तूयते । यद्वृतत्तावित्यस्य विशेषणं । मुक्तानावित्यर्थः । शोभनहस्तेनास्मा अर्चंत स्तुवते मह्यं प्र यंतं । अभिमतं सुखं प्रगमयतं ॥ अंतर्भावितण्यर्थो द्रष्टव्यः । यमिर्दानकर्मा वा द्रष्टव्यः ॥ प्रयच्छतमित्यर्थः । जार्यं स्तुत्यं शेवं सुखं वा युवयोः संबंधि युवाभ्यां कृतं वा विश्वासु सर्वासु तासु भूमिषु जोगुवे । गच्छति । व्याप्नोति । अवते गवत इति गतिकर्मसु पाठादयमपि गतिकर्मा । अथवा जोगुवे सर्वत्र शब्दयामीत्यर्थः ॥

यन्नूनमश्यां गतिं मित्रस्य यायां पथा । अस्य प्रियस्य शर्मण्यहिंसानस्य सश्चिरे ॥३॥
यत् । नूनं । अश्यां । गतिं । मित्रस्य । यायां । पथा । अस्य । प्रियस्य । शर्मणि । अहिंसानस्य ।
सश्चिरे ॥३॥

यद्यदा नूनमिदानीं गतिं गमनमश्यां प्राप्नुयां ॥ यद्योगादनिघातः ॥ तदा मित्रस्य मित्रभूतस्य पथा मार्गेण मित्रप्रापकेण मार्गेण यायां । गच्छेयं । मित्रो नयतु विद्वान् । ऋग्वे० १ ९० १ । इत्यादिषु मित्रस्यैष्टदेशगमयितृत्वं प्रसिद्धं । न केवलमहमेक एव गता किंतु सर्वेऽपि तथागमन्नित्याह । अस्य प्रियस्य । मित्रस्येत्यर्थः । अहिंसानस्याहिंसतः । यतोऽयमहंतातः प्रिय इत्यर्थः । तस्य शर्मणि सुखे गृहे स्थाने वा सश्चिरे । सगताः ॥

युवाभ्यां मित्रावरुणोपमं धेयामृचा । यद्ध क्षये मघोनां स्तोतॄणां च स्पूर्धसे ॥४॥
युवाभ्यां । मित्रावरुणा । उपऽमं । धेयां । ऋचा । यत् । ह । क्षये । मघोनां । स्तोतॄणां ।
च । स्पूर्धसे ॥४॥

हे मित्रावरुणा युवाभ्यां दातव्यमुपममुप समीपे मीयमानं धनमृचा स्तुत्या साधनेन धेयां । धारयामि । यद्ध यत्खलु युवाभ्यां सकाशादाप्तं धनं मघोनां धनवतामदातॄणां स्तोतॄणां च क्षये गृहे स्पूर्धसे स्पर्धनाय भवति । धनिकानां स्तोतॄणां च धनाधिक्यविषये स्पर्धा भवतीत्यर्थः । अपरिमितं धनं भवतीति भावः ॥

आ नो मित्र सुदीतिभिर्वरुणश्च सधस्थ आ । स्वे क्षये मघोनां सखीनां च वृधसे ॥५॥
आ । नः । मित्र । सुदीतिऽभिः । वरुणः । च । सधऽस्थे । आ । स्वे । क्षये । मघोनां ।
सखीनां । च । वृधसे ॥५॥

हे मित्र त्वं च वरुणश्च सुदीतिभिः सुदीप्तिभिर्युक्तौ युवां नोऽस्मभ्यं सधस्थे सहस्थाने यज्ञे आ गच्छतं । द्वितीय आकारोऽनर्थक आदरार्थो वा । किमर्थमित्युच्यते । मघोनां धनवतां हविष्मतां सखीनां च युवयोः सखिभूतानामस्माकं क्षये गृहे स्वे स्वकीये वृधसे वर्धनाय ॥

युवं नो येषु वरुण क्षत्रं बृहच्च बिभृथः । उरु णो वाजसातये कृतं राये स्वस्तये ॥६॥
युवं । नः । येषु । वरुणा । क्षत्रं । बृहत् । च । बिभृथः । उरु । नः । वाजऽसातये । कृतं ।
राये । स्वस्तये ॥६॥

हे वरुणा मित्रावरुणौ युवं युवां नोऽस्माकं क्षत्रं बलं बृहत् प्रभूतं परिवृढमन्नं च येषु स्तोत्रेषु निमित्तेषु बिभृथः धारयथः युवाभ्यां धृतमन्नं च नोऽस्मभ्यं वाजसातयेऽन्नस्य लाभाय यज्ञाय वा राये धनाय स्वस्तये क्षेमाय चोरु विस्तीर्णं कृतं । कुरुतं ॥

उच्छंत्यां मे यजता देवक्षत्रे रुशद्गवि ।
सुतं सोमं न हस्तिभिरा पड्भिर्धावतं नरा बिभ्रतावर्चनानसं ॥७॥

उच्छन्त्याम् । मे । यजता । देवऽक्षत्रे । रुशत्ऽगवि ।
सुतम् । सोमम् । न । हस्तिऽभिः । आ । पट्ऽभिः । धावतम् । नरा । बिभ्रतौ । अर्चनानसम् ॥७॥

उच्छन्त्यामुषसि । मे सोममिति संबंधः । यजता यष्टव्यौ रुशद्गवि रोचमानरश्मौ प्रातःसवने देवक्षत्रे । देवानां क्षत्रं बलं यस्मिन् यज्ञे तद्देवक्षत्रं । तस्मिन्मे मदीयं सुतमभिषुतं सोमं न । नेति संप्रत्यर्थे । इदानीं हस्तिभिर्हस्तवद्भिः ॥ हस्तेर्गतिकर्मणो हस्तशब्दः ॥ गमनसाधनपादवद्भिरित्यर्थः । पद्भिः पादवद्भिश्च पादचतुष्टयोपेतैरश्वैरा धावतं आगच्छतं नरा हे नेतारौ मित्रावरुणौ ॥ ॥७॥

यश्चिकेतेति षडृचं नवमं सूक्तं रातहव्यस्यात्रेयस्यार्षं मैत्रावरुणं । यश्चिकेत षड्रातहव्य इत्यनुक्रमणिका । पञ्चम्यंतं त्वित्युक्तत्वात् पंचम्यंतपरिभाषयानुष्टुभं । अन्त्या पङ्क्तिः ॥ विनियोगो लैंगिकः ॥

यश्चिकेत स सुक्रतुर्देवत्रा स ब्रवीतु नः । वरुणो यस्य दर्शतो मित्रो वा वनते गिरः ॥१॥
यः । चिकेत । सः । सुऽक्रतुः । देवऽत्रा । सः । ब्रवीतु । नः । वरुणः । यस्य । दर्शतः ।
मित्रः । वा । वनते । गिरः ॥१॥

यः स्तोता चिकेत जानाति स्तुतिं युवयोः स सुक्रतुः स एव शोभनकर्मा देवत्रा देवेषु स्तोतृमध्ये । यद्वा । देवेषु मध्ये । युवयोरेव स्तुतिं यश्चिकेत स सुक्रतुरिति । स सुकर्मा नोऽस्मभ्यं ब्रवीतु । स्तुतिं परमुपदिशतु । यस्य दर्शतो दर्शनीयो वरुणो दर्शनीयो मित्रो वा मित्रश्च । वाशब्दश्चार्थे । गिरोऽस्मदीयाः स्तुतीर्वनते संभजते ॥

ता हि श्रेष्ठवर्चसा राजाना दीर्घश्रुत्तमा ।
ता सत्पती ऋतावृध ऋतावाना जनेजने ॥२॥
ता । हि । श्रेष्ठऽवर्चसा । राजाना । दीर्घश्रुत्ऽतमा ।
ता । सत्पती इति सत्ऽपती । ऋतऽवृधा । ऋतऽवाना । जनेऽजने ॥२॥

ता हि तौ खलु मित्रावरुणौ श्रेष्ठवर्चसा प्रशस्ततेजस्कौ राजानेश्वरौ दीर्घश्रुत्तमा दूरदेशादाक्रान्तश्रोतृतमौ । ता तौ सत्पती सतां यजमानानां स्वामिनावृतावृधा यज्ञस्योदकस्य वा वर्धयितारौ जने जने सर्वेषु स्तोतृषु निमित्तेष्वृतावाना गमनवन्तौ ॥

ता वामियानोऽवसे पूर्वा उप ब्रुवे सचा ।
स्वश्वासः सु चेतुना वाजाँ अभि प्र दावने ॥३॥
ता । वाम् । इयानः । अवसे । पूर्वौ । उप । ब्रुवे । सचा ।
सुऽअश्वासः । सु । चेतुना । वाजान् । अभि । प्र । दावने ॥३॥

ता तौ पूर्वौ पुरातनौ वां युवामियानो गच्छन्नवसे रक्षणाय सचा सहोप ब्रुवे । उपेत्य स्तौमि । स्वश्वासः स्वश्वा वयमात्रेयाः सुचेतुना शोभनप्रज्ञानौ युवां वाजानभि अन्नान्यभिलक्ष्य प्र प्रकर्षेण दावने दानाय स्तुम इति शेषः । यद्वा । स्वश्वासः स्वश्वौ ॥ द्वितीयाद्विवचनस्य जसादेशः ॥ उप ब्रुव इति संबंधः ॥

मित्रो अंहोश्चिदादुरु क्षयाय गातुं वनते ।
मित्रस्य हि प्रतूर्वतः सुमतिरस्ति विधतः ॥४॥

मित्रः । अंहोः । चित् । आत् । उरु । क्षयाय । गातुम् । वनते ।
मित्रस्य । हि । प्रऽतूर्वतः । सुऽमतिः । अस्ति । विधतः ॥ ४ ॥

मित्रो देवोऽंहोश्चित् अंहस्वतोऽपि स्तोतुरादनंतरमेवोरु उरवे क्षयाय गृहाय निवासाय वा गातुमुपाय वनते । प्रयच्छति । मित्रस्य हि मित्रस्य खलु देवस्य सुमतिः शोभनबुद्धिः प्रतूर्वतः प्रकर्षेण हिंसतोऽपि विधतः परिचरतः शुश्रूषकस्यास्ति हि । भवति खलु ॥

वयं मित्रस्यावसि स्याम सप्रथस्तमे । अनेहसस्त्वोतयः सत्रा वरुणशेषसः ॥ ५ ॥
वयम् । मित्रस्य । अवसि । स्याम । सप्रथःऽतमे । अनेहसः । त्वाऽऊतयः । सत्रा ।
वरुणऽशेषसः ॥ ५ ॥

वयं यजमाना मित्रस्य दुःखनिवारकस्य देवस्य सप्रथस्तमे सर्वतः पृथुतमेऽवसि रक्षणे वयं स्याम । भवेम । किंचानेहसोऽपापास्त्वोतयस्त्वया रक्षिता वरुणशेषसः । शेष इत्यपत्यनाम । वारकाः पुत्रा येषां ते । तादृशाः सत्रा वयं सर्वे सहैव भवेम ॥

युवं मित्रेमं जनं यतथः सं च नयथः ।
मा मघोनः परि ख्यतं मो अस्माकमृषीणां गोपीथे न उरुष्यतं ॥ ६ ॥
युवम् । मित्रा । इमम् । जनम् । यतथः । सम् । च । नयथः ।
मा । मघोनः । परि । ख्यतम् । मो इति । अस्माकम् । ऋषीणाम् । गोऽपीथे । नः । उरुष्यतम् ॥ ६ ॥

हे मित्रा मित्रावरुणौ युवं युवामिमं जनं स्तोतारं मां प्रति यतथः । गच्छथः । आगत्य च सं च नयथः । संनयथश्च । कामान् प्रापयथः । यद्वा । यतथ इत्यंतर्णीतण्यर्थोऽयं । अहनि यतथः । व्यापारेषु गमयथः । रात्रौ च सं नयथः । निर्व्यापारं कारयथः । मघोनो हविर्लक्षणान्नवतोऽस्मान्मा परि ख्यतं । मा परित्यजतं । मो मैव ऋषीणामस्माकं पुत्रानपि परि ख्यतं । किंतु गोपीथे । गौः सोमरसः । तस्य पानं यस्मिन् स गोपीथो यज्ञः । तस्मिन् उरुष्यतं । रक्षतं ॥ ॥ ३ ॥

आ चिकितानेति षडृचं दशमं सूक्तं रातहव्यस्यार्षमानुष्टुभं मैत्रावरुणं । अत्रानुक्रमणिका । आ चिकिता नानुष्टुभं त्विति ॥ आद्यमृचो दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे मैत्रावरुणस्य । सूत्रितं च । आ चिकितान सुक्रतू त्यमु वो अप्रहणं । आ० ७. ११ । इति ॥

आ चिकितान सुक्रतू देवौ मर्त रिशादसा । वरुणाय ऋतपेशसे दधीत प्रयसे महे ॥ १ ॥
आ । चिकितान । सुक्रतू इति सुऽक्रतू । देवौ । मर्त । रिशादसा । वरुणाय । ऋतऽपेशसे ।
दधीत । प्रयसे । महे ॥ १ ॥

हे चिकितान जानन् स्तुतिं हे मर्त मनुष्य रातहव्य त्वमिति तस्यैव संबोधनं । सुक्रतू शोभनकर्माणौ रिशादसा हिंसकानां हिंसकौ देवावा । आकारयेति शेषः । आहूय च ऋतपेशसे । पेश इति रूपनाम । ऋतमुदकं । उदकमेव रूपं यस्य तादृशाय वरुणाय प्रयसे ॥ मत्वर्थो लुप्यते ॥ हविर्लक्षणान्नवते महे महते पूज्याय दधीत । दद्याः । हविरिति शेषः । द्वितीयार्थे वा चतुर्थी । महद्धविर्दधीत । महतोऽन्नस्य लाभायेति वा योज्यं ॥

ता हि क्षत्रमविह्रुतं सम्यगसुर्य१माशाते। अध व्रतेव मानुषं स्व१र्ण धायि दर्शतं ॥२॥

ता। हि। क्षत्रं। अविऽह्रुतं। सम्यक्। असुर्यं। आशाते इति। अध। व्रताऽइव। मानुषं।
स्वः। न। धायि। दर्शतं ॥२॥

ता हि। हीति हेतौ। यस्मात्ता तौ क्षत्रं बलमविह्रुतमहिंस्यमसुर्यमसुरतिघाति महद्बलं सम्यगाशाते व्याप्नुतः अध अतो हेतोर्मानुषं मनुष्येषु प्रवृत्तं व्रतेव कर्मेव तद्यथा मनुष्येषु नियतं स्वर्ण सूर्य इव स यथा दिवि दृश्यते तद्वद्दर्शतं दर्शनीयं बलं धायि। यज्ञे निहितं ॥

ता वामेषे रथानामुर्वीं गव्यूतिमेषां। रातहव्यस्य सुष्टुतिं दधृक्स्तोमैर्मनामहे ॥३॥

ता। वां। एषे। रथानां। उर्वीं। गव्यूतिं। एषां। रातऽहव्यस्य। सुऽस्तुतिं। दधृक्।
स्तोमैः। मनामहे ॥३॥

हे मित्रावरुणौ ता तौ प्रसिद्धौ वां युवां रथानामस्मदीयानामेषां पुरतो वर्तमानानामुर्वीं प्रभूतां गव्यूतिमतिविस्तृतं मार्गमेषे गंतुं। मार्गरक्षणायेत्यर्थः ॥ तुमर्थेऽसेन्प्रत्ययः ॥ तदर्थं वां मनामहे स्तुमो रातहव्यस्य ऋषे रातहव्यसंबंधिभिः सुष्टुतिं सुष्टुतिभिः शोभनस्तुतिसाधनैः स्तोमैः दधृक् धर्षकौ युवां ॥

अधा हि काव्या युवं दक्षस्य पूर्भिरद्भुता। नि केतुना जनानां चिकेथे पूतदक्षसा ॥४॥

अध। हि। काव्या। युवं। दक्षस्य। पूःऽभिः। अद्भुता। नि। केतुना। जनानां। चिकेथे
इति। पूतऽदक्षसा ॥४॥

अध अपि च। हि प्रसिद्धौ। काव्या स्तुत्यौ युवं युवां दक्षस्य प्रवृद्धस्य मम पूर्भिः पूरकैः स्तवैर्हे अद्भुता महांतावाश्चर्यभूतौ संतौ केतुना प्रज्ञानेनानुकूलेन मनसा जनाना। यजमानानामित्यर्थः। स्तोत्रं नि चिकेथ। नितरां जानीथः। हे पूतदक्षसा शुद्धबलौ युवां ॥

तदृतं पृथिवि बृहच्छ्रवएष ऋषीणां। ज्रयसानावरं पृथ्वति क्षरंति यामभिः ॥५॥

तत्। ऋतं। पृथिवि। बृहत्। श्रवःऽएषे। ऋषीणां। ज्रयसाना। अरं। पृथु। अति।
क्षरंति। यामऽभिः ॥५॥

हे पृथिवि देवि त्वयि तत्सर्वैरर्च्यमानत्वेन प्रसिद्धं बृहत् प्रभूतमृतमुदकमृषीणां स्तोतॄणामस्माकं श्रवएषे ऽन्नस्यैषणे सति ज्रयसानौ गच्छंतौ ॥ ऋंदस्यसानच शुजृभ्यां। उ॰ २. ८६.। इत्यसानच ज्रयतेरपि भवति। चित इत्यंतोदात्तः ॥ अरमलमत्यर्थं पृथु यथा भवति तथा यामभिर्गमनैरति क्षरंति। अत्यर्थं वर्षतः ॥ व्यत्ययेन बहुवचनं ॥

आ यद्वामीयचक्षसा मित्र वयं च सूरयः। व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये ॥६॥

आ। यत्। वां। ईयऽचक्षसा। मित्रा। वयं। च। सूरयः। व्यचिष्ठे। बहुऽपाय्ये।
यतेमहि। स्वऽराज्ये ॥६॥

हे ईयचक्षसा व्याप्तदर्शनौ हे मित्रा मित्रावरुणौ वां युवां यत् ये वयं च सूरयः स्तोतार आ आह्वयामः। व्यचिष्ठेऽत्यंतविस्तृते बहुपाय्ये बहुभिर्गंतव्ये बहुभी रक्षितव्ये वा स्वराज्ये स्वराट्त्वाय एवंविधराज्यार्थं यतेमहि। गच्छेम ॥ ॥४॥

बळित्था देवेति पंचर्चमेकादशं सूक्तं । अत्रेयमनुक्रमणिका । बळित्था पंच यजत इति । यजतो नामात्रेय ऋषिः । मित्रावरुणौ देवता । आनुष्टुभं त्वित्युक्तत्वादिदमप्यानुष्टुभं । विनियोगो लैंगिकः ॥

बळित्था देव निष्कृतमादित्या यजतं बृहत् ।
वरुण मित्रार्यमन्वर्षिष्ठं क्षत्रमाशाथे ॥१॥
बट् । इत्था । देवा । निःऽकृतं । आदित्या । यजतं । बृहत् ।
वरुण । मित्र । अर्यमन् । वर्षिष्ठं । क्षत्रं । आशाथे इति ॥१॥

हे देवा द्योतमानौ हे आदित्यावदितेः पुत्रौ हे वरुण हे अर्यमन् अरीणां नियमितर्मित्र देव युवां बट् सत्यं निष्कृतमबाध्यमित्थेत्थमिदानीवर्तमानप्रकारेण यजत यष्टव्यं बृहदतिप्रवृद्धं वर्षिष्ठं प्रवृद्धतमं क्षत्रं बलमाशाथे । अश्नुवाथे । यद्वार्यमा पृथगेव निर्देष्टव्यः । द्विवचनं बहुवचनीकर्तव्यं ॥

आ यद्योनिं हिरण्ययं वरुण मित्र सदथः । धर्तारा चर्षणीनां यंतं सुम्नं रिशादसा ॥२॥
आ । यत् । योनिं । हिरण्ययं । वरुण । मित्र । सदथः । धर्तारा । चर्षणीनां । यंतं ।
सुम्नं । रिशादसा ॥२॥

यद्यस्माद्धिरण्ययं हितरमणीयं योनिं यज्ञभूमिं हे वरुण हे मित्र आ सदथः आगच्छथः तस्माच्चर्षणीनां मनुष्याणां धर्तारा धारकौ च हे रिशादसा हिंसकानां क्षेप्तारौ युवामस्मभ्यं सुम्नं सुखं यंत । दत्तमित्यर्थः ॥

विश्वे हि विश्ववेदसो वरुणो मित्रो अर्यमा । व्रता पदेव सश्चिरे पांति मर्त्यं रिषः ॥३॥
विश्वे । हि । विश्वऽवेदसः । वरुणः । मित्रः । अर्यमा । व्रता । पदाऽइव । सश्चिरे ।
पांति । मर्त्यं । रिषः ॥३॥

विश्वे हि सर्वेऽपि । हीति चार्थे । विश्ववेदसः सर्वविदः सर्वधना वा वरुणो मित्रोऽर्यमा चेति त्रयः सर्वे व्रतान्यस्मदीयानि कर्माणि पदेव पदानीव स्थानानीव सश्चिरे । संगता भवंति । आगत्य च मा मर्त्यं रिषो हिंसकात्पांति । रक्षंति ॥

ते हि सत्या ऋतस्पृश ऋतावानो जनेजने ।
सुनीथासः सुदानवोंऽहोश्चिदुरुचक्रयः ॥४॥
ते । हि । सत्याः । ऋतऽस्पृशः । ऋतऽवानः । जनेऽजने ।
सुऽनीथासः । सुऽदानवः । अंहोः । चित् । उरुऽचक्रयः ॥४॥

ते हि खलु सत्याः सत्यभूताः सत्यफला वा ऋतस्पृश उदकस्पर्शत्वस्य कर्तार ऋतावानो यज्ञवंतो जने जने सर्वेषु यजमानेषु सुनीथासः सुनयनाः सुदानवः सुदानाः । हीति प्रसिद्धवाची सर्वत्र संबध्नीयः । एवं महानुभावा वरुणादयोंऽहोश्चित । चिदप्यर्थे । पापिनोऽपि स्वस्तोतुरुरुचक्रयः प्रभूतधनादिकर्तारः ॥

को नु वां मित्रास्तुतो वरुणो वा तनूनां । तत्सु वामेषते मतिरत्रिभ्य एषते मतिः ॥५॥
कः । नु । वां । मित्र । अस्तुतः । वरुणः । वा । तनूनां । तत् । सु । वां । आ । ईषते । मतिः ।
अत्रिऽभ्यः । आ । ईषते । मतिः ॥५॥

हे मित्र वां युवयोर्मध्ये त्वं च वरुणो वा को नु अस्तुतः। सर्वैरस्तूयमानः कोऽस्ति। उभावपि स्तुत्यावित्यर्थः। तनूनामिति तृतीयार्थे षष्ठी। तनूभिः स्तुतिभिरस्तुत इति संबंधः॥ अत्र मित्रशब्देन मित्रस्यैकस्यैव संबोधनं वरुणेऽकाम्वंतः। ऋग्वे॰ ५. ६२. ६.। इत्यत्रेवात्र द्विवचनसूचकस्याकारस्यानाम्नानात। लोकेषु बहुषु संनिहितेष्वेकमेव संबोध्य युवयोरिदं युष्माकमिदमिति प्रयुंजते॥ तत्तस्मात यस्मात्सर्वे स्तुवंति तस्मात्। तनूनामित्येतद्व्यवहितमप्युत्तरत्र वा योज्यं। तनूनामल्पमतीनामस्माकं मतिः स्तुतिर्वा युवां सुष्ठु एषते। अभिगच्छति। अत्रिभ्योऽत्रिगोत्रेभ्योऽस्मभ्यमस्मदीयमतिरषते। आदरार्थं पुनर्वचनं॥ ॥५॥

प्र वो मित्रायेति पंचर्चं द्वादशं सूक्तमात्रेयस्य यजतस्यार्षं गायत्रं मैत्रावरुणं। तथा चानुक्रम्यते। प्र वो गायत्रमिति॥ अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्र एतत्सूक्तं। सूत्रितं च। प्र वो मित्राय प्र मित्रयोर्वरुणयोः। आ॰ ५. १०.। इति॥ अभिप्लवषडहे पृष्ठ्यषडहे च स्तोमनिमित्तावापार्थमिदमादीनि द्वितीयवर्जितानि चत्वारि सूक्तानि। तथैव सूत्रितं। प्र वो मित्रायेति चतुर्णां द्वितीयमुद्धरेत्। आ॰ ७. ५। इति॥

प्र वो॑ मि॒त्राय॑ गायत॒ वरु॑णाय वि॒पा गि॒रा। महि॑क्षत्रावृ॒तं बृ॒हत् ॥१॥

प्र। वः॒। मि॒त्राय॑। गा॒य॒त॒। वरु॑णाय। वि॒पा। गि॒रा। महि॑ऽक्षत्रौ। ऋ॒तं। बृ॒हत् ॥१॥

हे मदीया ऋत्विजो वो। यूयमित्यर्थः। मित्राय वरुणाय च विपा व्याप्तया गिरा स्तुत्या प्र गायत। स्तुतिं कुरुत। स्तुत्या स्तुवतेत्येतत्पाकं पचतीतिवत। हे महिक्षत्रौ प्रभूतबलौ युवामृतं यज्ञं बृहन्महदतिप्रशस्तं। स्तुत्यर्थमागच्छतमिति शेषः। अथवा महत प्रभूतमृतं स्तोत्रं शृणुतमिति शेषः॥

स॒म्राजा॒ या घृ॒तयो॑नी मि॒त्रश्चो॒भा वरु॑णश्च। दे॒वा दे॒वेषु॑ प्रश॒स्ता ॥२॥

स॒म्ऽराजा॑। या। घृ॒तयो॑नी॒ इति॑ घृ॒तऽयो॑नी। मि॒त्रः। च॒। उ॒भा। वरु॑णः। च॒। दे॒वा। दे॒वेषु॑। प्र॒ऽश॒स्ता ॥२॥

या यौ मित्रश्च वरुणश्च। परस्परापेक्षया चशब्दः। उभोभौ सम्राजा सर्वस्य स्वामिनौ घृतयोनी उदकस्योत्पादकौ देवा द्योतमानौ देवेषु मध्ये प्रशस्ता प्रकर्षेण स्तुत्यौ। तौ गायतेति पूर्वत्रान्वयः॥

ता नः॑ शक्तं॒ पार्थि॑वस्य म॒हो रा॒यो दि॒व्यस्य॑। महि॑ वां क्ष॒त्रं दे॒वेषु॑ ॥३॥

ता। नः॒। श॒क्तं॒। पार्थि॑वस्य। म॒हः। रा॒यः। दि॒व्यस्य॑। महि॑। वां॒। क्ष॒त्रं। दे॒वेषु॑ ॥३॥

ता तौ देवौ नोऽस्मदर्थं पार्थिवस्य पृथिवीसंबद्धस्य दिव्यस्य दिवि भवस्य च महो महतो रायो धनस्य शक्त। समर्थौ भवत। दातुमिति शेषः। हे देवौ वां युवयोर्महि महत्पूज्यं क्षत्रं बलं देवेषु प्रसिद्धं स्तुम इति शेषः॥

ऋ॒तमृ॒तेन॒ सप॑न्तेषि॒रं दक्ष॑माशाते। अ॒द्रुहा॑ दे॒वौ व॑र्धते ॥४॥

ऋ॒तं। ऋ॒तेन॑। सप॑न्ता। इ॒षि॒रं। दक्षं॑। आ॒शा॒ते॒ इति॑। अ॒द्रुहा॑। दे॒वौ। व॒र्धे॒ते॒ इति॑ ॥४॥

ऋतेनोदकेन निमित्तेन ऋतं यज्ञं सपंता स्पृशंताविषिरमेषणवंतं दक्षं प्रवृद्धं यजमानं हविर्वाशाते। व्याप्नुतः। अद्रुहाद्रोग्धारौ देवौ मित्रावरुणौ युवां वर्धेते। प्रवृद्धौ भवतः॥

वृ॒ष्टिद्या॑वा री॒त्या॑पे॒षस्पती॒ दानु॑मत्याः। बृ॒हन्तं॒ गर्त॑माशाते ॥५॥

वृ॒ष्टिऽद्या॑वा। री॒तिऽआ॑पा। इ॒षः। पती॒ इति॑। दानु॑ऽमत्याः। बृ॒हन्तं॑। गर्तं॑। आ॒शा॒ते॒ इति॑ ॥५॥

वृष्टिद्यावा। वृष्ट्यर्था द्यौः स्तुतिर्ययोस्तौ वृष्टिद्यावा। अथवा वृष्टेर्वर्षिका द्यौरंतरिक्षं याभ्यां तौ तादृशौ। रीत्यापा॥ री गतिरेषणयोः॥ रीतिः प्राप्तिः। सैवापाप्तिरभिमतप्राप्तिर्ययोस्तौ तादृशौ। इषोऽन्नस्य पती स्वामिनौ। वृष्टिप्रदत्वात्स्वामित्वं। दानुमत्या दानवत्याः। दातृप्रचितताया इत्यर्थः। एतद्दिवृशेषणं। एव महानुभावौ बृहंतं महांतं गर्तं रथमारोहते। व्याप्नुतः। अधितिष्ठतो यागार्थं॥ ॥६॥

त्री रोचनेति चतुर्ऋचं त्रयोदशं सूक्तं। उरुचक्रिर्नामात्रेय ऋषिः। त्रिष्टुप् छंदः। मित्रावरुणौ देवता। अनुक्रम्यते च। त्री रोचना चतुष्कमुरुचक्रिरिति॥ विनियोगो लैंगिकः॥

त्री रो॑च॒ना व॑रुण॒ त्रीँरु॒त द्यून्त्रीणि॑ मित्र धारयथो॒ रजां॑सि।
वा॒वृ॒धा॒नाव॒मतिं॑ क्षत्रि॑य॒स्यानु॑ व्र॒तं रक्ष॑माणावजु॒र्यं॥१॥
त्री। रो॒च॒ना। व॒रु॒ण॒। त्रीन्। उ॒त। द्यून्। त्रीणि॑। मि॒त्र॒। धा॒र॒य॒थः॒। रजां॑सि।
व॒वृ॒धा॒नौ। अ॒मतिं॑। क्ष॒त्रिय॑स्य। अनु॑। व्र॒तं। रक्ष॑माणौ। अ॒जु॒र्यं॥१॥

हे वरुण हे मित्र युवां त्री त्रीणि रोचना रोचनानि द्युलोकान् धारयथ इति संबंधः। उतापि च त्रीन्द्यून् द्योतमानानंतरिक्षलोकान्धारयथः। तथा त्रीणि रजांसि भूलोकान्। कीदृशौ युवां। वावृधानौ वर्धमानौ क्षत्रियस्य। क्षत्रं बलं। तद्वत इंद्रस्य। यद्वा। क्षत्रियजातीयस्य यजमानस्यामतिं। रूपनामैतत्। रूपं व्रतं कर्म चाजुर्यमजीर्णमविरतं वा रक्षमाणौ॥

इरा॑वती॒र्वरुण धे॒नवो॑ वां॒ मधु॑मद्वां॒ सिंध॑वो मित्र दुह्रे।
त्रय॑स्तस्थुर्वृष॒भास॑स्तिसृ॒णां धि॒षणा॑नां रेतो॒धा वि द्यु॒मंतः॑॥२॥
इरा॑वतीः। व॒रु॒ण॒। धे॒नवः॑। वां॒। मधु॑ऽमत्। वां॒। सिंध॑वः। मि॒त्र॒। दु॒ह्रे॒।
त्रयः॑। त॒स्थुः॒। वृ॒ष॒भासः॑। ति॒सृ॒णां। धि॒षणा॑नां। रे॒तः॒ऽधाः। वि। द्यु॒ऽमंतः॑॥२॥

हे वरुण हे मित्र वां युवयोराज्ञया धेनवो गाव इरावतीः। इरा क्षीरलक्षणा। तद्वत्यो भवंति। तथा सिंधवः स्यंदनशीला मेघा नद्यो वा मधुमन्मधुररसमुदकं दुह्रे। दुहंति। तथा त्रयस्त्रिसंख्याका वृषभासो वर्षितारो रेतोधा उदकस्य धारका द्युमंतो दीप्तिमंतोऽग्निवाय्वादित्यास्तिसृणां त्रिसंख्याकानां धिषणानां स्थानानां पृथिव्यंतरिक्षद्युलोकानां स्वामिनः संतो वि विविधं प्रत्येकं तस्थुः। तिष्ठंति। युवयोरनुग्रहात् त्रयोऽपि देवास्त्रिषु स्थानेषु वर्तंत इत्यर्थः॥

प्रा॒तर्दे॒वीमदि॑तिं जोहवीमि म॒ध्यंदि॑न॒ उदि॑ता॒ सूर्य॑स्य।
रा॒ये मि॑त्रावरुणा स॒र्वता॒तेळे॑ तो॒काय॒ तन॑याय॒ शं योः॥३॥
प्रा॒तः। दे॒वीं। अदि॑तिं। जो॒ह॒वी॒मि॒। म॒ध्यंदि॑ने। उत्ऽइ॑ता। सूर्य॑स्य।
रा॒ये। मि॒त्रा॒व॒रु॒णा॒। स॒र्वऽता॑ता। ईळे॑। तो॒काय॑। तन॑याय। शं। योः॥३॥

अहमृषिः प्रातः प्रातःकालेऽदितिमखंडनीयां देवानां जननीं देवीं द्योतमानां जोहवीमि। आह्वयामि। तथा मध्यंदिने सूर्यस्योदितोदितौ तत्समृद्धिकाले माध्यंदिने सवने जोहवीमि। हे मित्रावरुणा युवां राये धनप्राप्तये सर्वतातौ यज्ञ ईळे। स्तौमि। पुनः किमर्थं। तोकाय पुत्राय तनयाय तत्पुत्राय च शमरिष्टशमनाय योः सुखस्य मिश्रणाय चेळ इति॥

या ध॒र्तारा॒ रज॑सो रोच॒नस्यो॒तादि॒त्या दि॒व्या पार्थि॑वस्य।
न वां॑ दे॒वा अ॒मृता॒ आ मि॑नंति व्र॒तानि॑ मित्रावरुणा ध्रु॒वाणि॑॥४॥

या। धर्तारा। रजसः। रोचनस्य। उत। आदित्या। दिव्या। पार्थिवस्य।
न। वां। देवाः। अमृताः। आ। मिनंति। व्रतानि। मित्रावरुणा। ध्रुवाणि ॥४॥

या यौ रोचनस्य रोचमानस्य रजसो लोकस्य। स्वर्गाख्यस्येत्यर्थः। उतापि च पार्थिवस्य रजसो या यौ धर्तारावादित्यादितेः पुत्रौ दिव्या दिवि भवौ तौ युवामीळ इति पूर्वत्र संबंधः। हे मित्रावरुणा वां युवयोर्ध्रुवाणि व्रतानि कर्माणि देवा अन्य इंद्रादयोऽमृता अमरणधर्माणोऽपि ना मिनंति। न हिंसंति। यतो ध्रुवाण्यत इत्यभिप्रायः॥ ॥७॥

पुरूरुणेति चतुर्ऋचं चतुर्दशं सूक्तमुरुचक्रेरार्षं गायत्रं मैत्रावरुणं। पुरूरुणा गायत्रं त्वित्यनुक्रमणिका॥ पृष्ठ्याभिप्लवषडहयोः प्रातःसवन आवापार्थत्वेनेदमपि सूक्तं पूर्वसूक्तेन सह प्र वो मित्रायेति चतुर्णां द्वितीयमुद्वंदिति ह्युक्तं॥ चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणशस्त्र आद्यस्तृचः षडहस्तोत्रियसंज्ञकः। सूत्रितं च। पुरूरुणा चिद्ध्यस्ति प्रति वां सूर उदिते। आ० ७.२.। इति॥

पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण। मित्र वंसि वां सुमतिं ॥१॥
पुरुऽउरुणा। चित्। हि। अस्ति। अवः। नूनं। वां। वरुण। मित्र। वंसि। वां। सुऽमतिं ॥१॥

हे मित्रावरुणौ वां युवयोः पुरूरुणा चित॥ अत्र सोः सुपां सुलुगित्याकारः॥ पुरोरपि बह्व उरु बहुतरं। अथवा पुरु च तदुरु च पुरूरु। अत्यंतमुरुतरमित्यर्थः। तादृगवो रक्षणं नूनं निश्चयेनास्ति। हि प्रसिद्धौ। चिदिति पूरणः। हे वरुण हे मित्र वां युवयोः सुमतिमनुग्रहबुद्धिं वंसि। संभजेय। यस्मादवोऽस्ति तस्माद्वसीति भावः॥

ता वां सम्यगद्रुह्वाणेषमश्याम धायसे। वयं ते रुद्रा स्याम ॥२॥
ता। वां। सम्यक्। अद्रुह्वाणा। इषं। अश्याम। धायसे। वयं। ते। रुद्रा। स्याम ॥२॥

हे अद्रुह्वाणा हे अद्रोग्धारौ ता तौ प्रसिद्धौ वां युवां सम्यक् स्तुम इति शेषः। स्तोतारो वयमिषमन्नं धायसे पानाय भोजनायाश्याम। प्राप्नुयाम। हे रुद्रा दुःखाद्द्रावयितारौ रुद्राभ्यां द्रवणीयौ वा ते स्तोतारो वय स्याम। भवेम। समृद्धा इति शेषः। युवाभ्यां स्वभूता वा स्याम॥

पातं नो रुद्रा पायुभिरुत त्रायेथां सुत्रात्रा। तुर्याम दस्यून्तनूभिः ॥३॥
पातं। नः। रुद्रा। पायुऽभिः। उत। त्रायेथां। सुऽत्रात्रा। तुर्याम। दस्यून्। तनूभिः ॥३॥

हे रुद्रोक्तरूपौ देवौ युवा नोऽस्मान् पायुभी रक्षणैः पातं। रक्षतं। उतापि च सुत्रात्रा शोभनेन त्राणेन त्रायेथां। पालयेत। इष्टप्राप्त्यनिष्टपरिहारभेदेन भेदः। स्तोत्रादिविकल्याच्छत्रोर्वा त्रायेथां अभिमतप्रापणेन रक्षतमित्यर्थः। वयं च तनूभिः पुत्रादिभिः सहिताः स्वीयैरंगैर्वा दस्यून् शत्रून् तुर्याम। हिंस्याम तरेम वा॥

मा कस्याद्भुतक्रतू यक्षं भुजेमा तनूभिः। मा शेषसा मा तनसा ॥४॥
मा। कस्य। अद्भुतक्रतू इत्यद्भुतऽक्रतू। यक्षं। भुजेम। तनूभिः। मा। शेषसा। मा।
तनसा ॥४॥

हे अद्भुतक्रतू आश्चर्यकर्माणौ वय कस्यान्यस्य कस्यचन यक्षं पूजितं धनं मा भुजेम। मा भुंजीमहि तनूभिरस्मदीयैरवयवैः। युवयोरनुग्रहात्समृद्धा वयमन्ययाचितधनेन शरीरपोषं न कुर्म इत्यर्थः। तथा शेषसापत्येन सहिता मा भुजेम। तनसा पौत्रादिना सहिता मा भुजेम। अस्मत्कुले न कोऽपि भुंजीमहीत्यर्थः॥ ॥८॥

आ नो गंतमिति तृचात्मकं पंचदशं सूक्तं बाहुवृक्तस्यात्रेयस्यार्षं गायत्रं मैत्रावरुणं। आ नस्तृच बाहुवृक्त इत्यनुक्रमणिका ॥ उक्तः सूक्तविनियोगः ॥ अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रेऽयमनुरूपस्तृचः। सूत्रितं च। आ नो मित्रावरुणा नो गंतं रिशादसा। आ० ५ १० । इति ॥

आ नो गंतं रिशादसा वरुण मित्र बर्हणा। उपेमं चारुमध्वरं ॥१॥

आ। नः। गंतं। रिशादसा। वरुण। मित्र। बर्हणा। उप। इमं। चारुं। अध्वरं ॥१॥

हे वरुण हे मित्र हे रिशादसा शत्रूणां प्रेरकौ युवां नोऽस्माकमिमं चारुं चरणीयमध्वरमहिंसकं यज्ञमुपागंतं। उपागच्छतं। कीदृशौ। बर्हणा परिवर्हणौ निबर्हणौ हंतारौ शत्रूणां ॥

विश्वस्य हि प्रचेतसा वरुण मित्र राजथः। ईशाना पिप्यतं धियः ॥२॥

विश्वस्य। हि। प्रऽचेतसा। वरुण। मित्र। राजथः। ईशाना। पिप्यतं। धियः ॥२॥

हे मित्र हे वरुण प्रचेतसा प्रकृष्टज्ञानौ युवां विश्वस्य राजथः। सर्वस्य स्वामिनौ भवथः। हीति प्रसिद्धौ। हे ईशाना अस्माकमीश्वरौ युवां धियोऽस्मदीयानि कर्माणि पिप्यतं। प्याययतं फलैः ॥

उप नः सुतमा गंतं वरुण मित्र दाशुषः। अस्य सोमस्य पीतये ॥३॥

उप। नः। सुतं। आ। गतं। वरुण। मित्र। दाशुषः। अस्य। सोमस्य। पीतये ॥३॥

नोऽस्माकं सुतमभिषुतं सोमं प्रति हे वरुण हे मित्र युवामुपा गतं। उपागच्छतं। दाशुषो हविर्दातुर्ममास्य सोमस्य पीतये पानाय ॥ ॥९॥

आ मित्रे वरुण इति तृचात्मकं षोडशं सूक्तं बाहुवृक्तस्यार्षमौष्णिहं मैत्रावरुणं। आ मित्र औष्णिहमित्यनुक्रमणिका ॥ दशरात्रे तृतीयेऽहनि प्रउगशस्त्रेऽयं मैत्रावरुणस्य तृचः। सूत्रितं च। आ मित्रे वरुणे वयमश्विनाविह गच्छतं। आ० ७ १० । इति ॥

आ मित्रे वरुणे वयं गीर्भिर्जुहुमो अत्रिवत्। नि बर्हिषि सदतं सोमपीतये ॥१॥

आ। मित्रे। वरुणे। वयं। गीःऽभिः। जुहुमः। अत्रिऽवत्। नि। बर्हिषि। सदतं। सोमऽपीतये ॥१॥

वयमात्रेया मित्रे वरुणे मित्रावरुणयोरर्थाय गीर्भिर्मंत्रैरा जुहुमः अत्रिवत् अस्मन्मंत्रप्रवर्तकोऽत्रिरिव। तस्माद्धे मित्रावरुणौ सोमपीतये बर्हिषि नि षदतं। निषीदतं ॥

व्रतेन स्थो ध्रुवक्षेमा धर्मणा यातयज्जना। नि बर्हिषि सदतं सोमपीतये ॥२॥

व्रतेन। स्थः। ध्रुवऽक्षेमा। धर्मणा। यातयत्ऽजना। नि। बर्हिषि। सदतं। सोमऽपीतये ॥२॥

हे मित्रावरुणौ युवां धर्मणा जगद्धारकेण व्रतेन कर्मणा योगेन ध्रुवक्षेमा स्थः। अविचलितस्थानौ भवथ। यातयज्जना। यातयंतः कर्मसु प्रवर्तयंतो जना ऋत्विजो ययोस्तौ यातयज्जनौ। अथवा यातयतः शत्रून् हिंसंतो जना भृत्या ययोस्तौ। शिष्टं गतं ॥

मित्रश्च नो वरुणश्च जुषेतां यज्ञमिष्टये। नि बर्हिषि सदतां सोमपीतये ॥३॥

मित्रः। च। नः। वरुणः। च। जुषेतां। यज्ञं। इष्टये। नि। बर्हिषि। सदतां। सोमऽपीतये ॥३॥

मित्रश्च वरुणश्चोभौ नोऽस्माकं यज्ञमिष्टयेऽभीष्टाय जुषेतां। सेवेतां। आगत्य च बर्हिषि नि षदतां निषीदतां सोमपानाय॥ ॥१०॥ ॥५॥

षष्ठेऽनुवाके पंचदश सूक्तानि। तत्र यदद्य स्थ इति दशर्चं प्रथमं सूक्तमत्रेयस्य पौरनाम्न आर्षमानुष्टुभमाश्विनं। अनुक्रांतं च। यदद्य दश पौर आश्विनं तदानुष्टुभं त्विति। तदित्युक्तत्वादिदमादीनि षट् सूक्तान्याश्विनानि। आनुष्टुभं त्विति तुशब्दादिदमुत्तरं च द्वे आनुष्टुभे॥ प्रातरनुवाक आश्विने क्रतावानुष्टुभे छंदस्याश्विनशस्त्रे चेदमादिके द्वे सूक्ते। यदद्य स्थ इति सूक्ते। आ० ४. १५.। इति सूत्रितं॥

यदद्य स्थः परावति यदर्वावत्यश्विना। यद्वा पुरू पुरुभुजा यदंतरिक्ष आ गतं ॥१॥
यत्। अद्य। स्थः। पराऽवति। यत्। अर्वाऽवति। अश्विना। यत्। वा। पुरु। पुरुऽभुजा। यत्। अंतरिक्षे। आ। गतं ॥१॥

हे पुरुभुजा बहुषु यज्ञेषु भोक्तारावधिकं रक्षितारौ वा हे अश्विना यद्यद्यास्मिन् काले परावत्यत्यंतं दूरदेशे द्युलोके स्थो भवथः। यद्वा। अर्वावत्यरणावति गंतुं शक्ये प्रदेशेऽंतिके स्थः। यद्यदि वा अथवा पुरु बहुप्रदेशेषु स्थः। यद्यद्यंतरिक्षे स्थः तस्मात्सर्वस्मादद्य गतं। आगच्छतं॥

इह त्या पुरुभूतमा पुरू दंसांसि बिभ्रता। वरस्या याम्यध्रिगू हुवे तुविष्टमा भुजे ॥२॥
इह। त्या। पुरुऽभूतमा। पुरु। दंसांसि। बिभ्रता। वरस्या। यामि। अध्रिगू इत्यध्रिऽगू। हुवे। तुविःऽतमा। भुजे ॥२॥

इहास्मिन्यज्ञे त्या तौ पुरुभूतमा पुरूणां बहूनां यजमानानां भावयितृतमौ पुरु पुरूणि दंसांसि कर्माणि बिभ्रता धारयंतौ वरस्या वरणीयावध्रिगू अन्यैरधृतगमनकर्माणौ यामि। उपागच्छामि। तुविष्टमा प्रभूततमौ भुजे भोगाय पालनाय वा हुवे। आह्वयामि॥

ईर्मान्यद्वपुषे वपुश्चक्रं रथस्य येमथुः। पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथः ॥३॥
ईर्मा। अन्यत्। वपुषे। वपुः। चक्रं। रथस्य। येमथुः। परि। अन्या। नाहुषा। युगा। मह्ना। रजांसि। दीयथः ॥३॥

हे अश्विनौ युवां रथस्य युष्मदीयस्यान्यच्चक्रमीर्मा॥ ईर्तेरीर्मेति रूपं॥ गंतव्यादित्यं वपुषे तस्य शोभायै वपुर्वपुष्मत् तेजोवत् चक्रं येमथुः। नियमितवंतौ स्थः। अन्यान्येन चक्रेण मह्ना महत्त्वेन स्वसामर्थ्येन नाहुषा युगा। नहुषा मनुष्याः। तेषां युगा युगोपलक्षितान् कालान् प्रातरादिसवनान् अहोरात्रादिकालान्वा रजांसि लोकांश्च परि दीयथः। परिगच्छथः। न्य१घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः। ऋग्वे० १. ३०. १९.। इत्युक्तं॥

तदू षु वामेना कृतं विश्वा यद्वामनु ष्टवे। नाना जातावरेपसा समस्मे बंधुमेयथुः ॥४॥
तत्। ऊं इति। सु। वां। एना। कृतं। विश्वा। यत्। वां। अनु। स्तवे। नाना। जातौ। अरेपसा। सं। अस्मे इति। बंधुं। आ। ईयथुः ॥४॥

हे विश्वा व्याप्तौ यत् येन स्तोत्रेण वा युवामनु ष्टवे अनुस्तुवे तदु। उ इति पूरणः। एनानेन पौरेण सु सुष्ठु वा युवाभ्यां कृतं संपादितं भवतु। नाना पृथगेव जातौ समुद्भूतावरेपसावपापावस्मे अस्मभ्यं बंधुमन्नं धनं वा समेयथुः। सम्यक् गमयथः। सम्यक् प्रयच्छतमित्यर्थः॥

आ यद्वां सूर्या रथं तिष्ठंद्रघुष्यदं सदा । परि वामरुषा वयो घृणा वरंत आतपः ॥५॥
आ । यत् । वां । सूर्या । रथं । तिष्ठंत् । रघुऽस्यदं । सदा । परि । वां । अरुषाः । वयः ।
घृणा । वरंते । आऽतपः ॥५॥

हे अश्विनौ वां युवयोः सदा सर्वदा रघुष्यदं शीघ्रगं रथं सूर्या युवयोः पत्नी यद्यदा आ तिष्ठत् आस्थितवती तदा वां परि वरंते । परितो वृण्वंति । के । अरुषा आरोचमाना घृणा दीप्ता आतपः आतापनाः शत्रूणां वयोऽश्वाः । अथवातप इति विशेष्यं । वयो गंतार उक्तलक्षणा आतपः सर्वतस्तापयित्र्यो दीप्तयः परि वरंते ॥ ॥११॥

युवोरत्रिश्चिकेतति नरा सुम्नेन चेतंसा । घर्मं यद्वांमरेपसं नासंत्यास्ना भुरण्यति ॥६॥
युवोः । अत्रिः । चिकेतति । नरा । सुम्नेनं । चेतंसा । घर्मं । यत् । वां । अरेपसं । नासंत्या ।
आस्ना । भुरण्यति ॥६॥

हे नरा नेतारावश्विनौ युवोर्युवयोः । युवामित्यर्थः । अत्रिरस्मत्पिता ऋषिः सुम्नेन सुखेनाग्निदाहोपशमरूपेण हेतुना चेतसा दरयुक्तेन मनसा चिकेतति । जानाति । स्तुतवानित्यर्थः । सति दुःखे सुखमुत्पन्नं । दुःखस्य कः प्रसंग इत्यत आह । यद्यस्मात् हे नासत्या वां युवयोरास्नास्येन तन्निष्पन्नेन स्तोत्रेण घर्मं दीप्तं दहंतमपि असुरैः स्वदाहाय प्रक्षिप्तमरेपसमपापं सुखकरं भुरण्यति प्राप्तवान् ॥ भुरण्यतिर्गतिकर्मा ॥ अत्रेरग्नेः सकाशात्त्राणं हिमेनाग्निं घ्रंसं । ऋग्वे० १ ११६. ८ । युवमृबीसमुत तप्तमत्रये । ऋग्वे० १० ३९ ९ । इत्यादिभिः स्पष्टं प्रदर्शितं ॥

उग्रो वां ककुहो ययिः शृण्वे यामेषु संतनिः । यद्वां दंसोभिरश्विनात्रिर्नरावर्वतति ॥७॥
उग्रः । वां । ककुहः । ययिः । शृण्वे । यामेषु । संऽतनिः । यत् । वां । दंसःऽभिः । अश्विना ।
अत्रिः । नरा । आऽववर्तति ॥७॥

उग्र उद्गूर्णबलो वां युवयोः ककुहः उच्छ्रितो महान् ययिर्गंता संतनिः सततं गच्छन् रथो यामेषु गमनेषु यज्ञेषु वा शृण्वे । श्रूयते । हे अश्विना हे नरा यद्यस्माद्वां युवां दंसोभिः कर्मभिरत्रिरस्मत्पितावर्वर्तति आवर्तयति ॥

मध्वं ऊ षु मंधूयुवा रुद्रा सिषंक्ति पिप्युषी ।
यत्संमुद्राति पर्षंथः पक्काः पृक्षो भरंत वां ॥८॥
मध्वः । ऊं इति । सु । मधुऽयुवा । रुद्रा । सिसंक्ति । पिप्युषी ।
यत् । समुद्रा । अति । पर्षंथः । पक्काः । पृक्षः । भरंत । वां ॥८॥

हे मधूयुवा मधुरस्य सोमादेर्मिश्रयितारौ हे रुद्रा । रुत स्तुतिः । तया द्रवणीयौ रुद्रपुत्रौ वा वां मध्वो मधुररसेन सु पिप्युषी सुष्ठु प्याययंती स्तुतिरस्मत्कृता सिषक्ति । सेवते । यद्यदा समुद्रा समुद्रवणसाधनान्यंतरिक्षाण्यति पर्षथः अतिपारयथः । यज्ञं प्राप्नुथ इत्यर्थः । पक्काः पृक्षोऽन्नानि हविर्लक्षणानि वां भरंत । भ्रियंते यजमानैः ॥

सत्यमिद्वा उं अश्विना युवामाहुर्मयोभुवा ।
ता यामन्यामहूतमा यामन्ना मृळयत्तमा ॥९॥

सत्यं । इत् । वै । ऊं इति । अश्विना । युवां । आहुः । मयःऽभुवा ।
ता । यामन् । यामऽहूतमा । यामन् । आ । मृळयत्ऽतमा ॥ ९ ॥

हे अश्विना युवां सत्यमित् सत्यमेव । वा इति पादपूरणः । मयोभुवा सुखस्य भावयितारावाहुः पुराविदः । ता तौ सुखकरत्वेन प्रसिद्धौ युवां यामन्यज्ञे यामहूतमा गमनार्थं भृशमाह्वातव्यौ भवतमिति शेषः । यामन्नस्मदर्थागमने वा मृळयत्तमा चातिशयेन सुखयितारौ भवत । आकारश्चार्थे ॥

इमा ब्रह्माणि वर्धनाश्विभ्यां संतु शंतमा । या तक्षाम रथाँ इवावोचाम बृहन्नमः ॥ १० ॥
इमा । ब्रह्माणि । वर्धना । अश्विऽभ्यां । संतु । शंऽतमा । या । तक्षाम । रथान्ऽइव ।
अवोचाम । बृहत् । नमः ॥ १० ॥

अथ स्तुतिं निगमयति । इमानीदानीं कृतानि ब्रह्माणि परिवृढानि स्तोत्राण्यश्विभ्यां वर्धना वर्धनानि समर्धकानि शंतमा सुखतमानि संतु । या यानि तक्षाम संपादयाम रथानिव शिल्पी तद्वत्तक्षाम तानि संतु । वयं बृहत् प्रभूतं प्रभूतफलप्रदं नमो नमस्कारोक्तिमवोचाम ॥ ॥ १३ ॥

कूष्ठ इति दशर्चं द्वितीयं सूक्तं पौरस्यार्षं । कूष्ठ इत्यनुक्रमणिका । पूर्ववत् तृशब्दादिदमप्यानुष्टुभं । आश्विनं तदिति पूर्वोक्तत्वात् ॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

कूष्ठो देवावश्विनाद्या दिवो मनावसू । तच्छ्रवथो वृषण्वसू अत्रिर्वामा विवासति ॥ १ ॥
कूऽस्थः । देवा । अश्विना । अद्य । दिवः । मनावसू इति । तत् । श्रवथः । वृषण्वसू इति
वृषणऽवसू । अत्रिः । वां । आ । विवासति ॥ १ ॥

हे देवौ हे मनावसू स्तुतिधनावश्विनावद्यास्मिन्यागदिने दिवो द्युलोकादागत्य कूष्ठः ॥ व्यत्ययेनैकवचनं ॥ कौ भूमौ तिष्ठतौ संतौ तत्स्तोत्रं श्रवथः । शृणुथः । हे वृषण्वसू वर्षकधनौ वामत्रिरत्रिः पुत्र आ विवासति । सर्वतः परिचरति ॥ अथवा कु इत्यस्य निपातस्य स्थ इत्याख्यातेन सहेति योगविभागात्समासः । एकस्वर्यं चाध्येतृसमयप्राप्तं । अरा इव । ऋग्वे० ५ ५८ ५ । इत्यत्र यथेवशब्दः क्वचिज्जायते । ऋग्वे० १०. ४ ५ । क्वचित्संत । ऋग्वे० १० ९३ ११ । इत्यादिवदत्रापि द्रष्टव्यं ॥ कु स्थितौ भवथः । अत्रिर्युवां स्तौति तं शृणुथ इत्यर्थः ॥

कुह त्या कुह नु श्रुता दिवि देवा नासत्या ।
कस्मिन्ना यतथो जने को वां नदीनां सचा ॥ २ ॥
कुह । त्या । कुह । नु । श्रुता । दिवि । देवा । नासत्या ।
कस्मिन् । आ । यतथः । जने । कः । वां । नदीनां । सचा ॥ २ ॥

त्या तौ देवा देवौ नासत्याश्विनौ कुह कुत्र तिष्ठतः । नु अद्य कुह श्रुता कुत्र श्रुतौ दिवि द्युलोके निवसत इति शेषः । अथ प्रत्यक्षकृतः । हे देवौ युवां कस्मिन् जने यजमान आ यतथः । आगच्छथः । कः स्तोता वां युवयोर्नदीनां स्तुतीनां सचा सहायः स्यात् ॥

कं याथः कं ह गच्छथः कमच्छा युंजाथे रथं ।
कस्य ब्रह्माणि रण्यथो वयं वामुश्मसीष्टये ॥ ३ ॥

कं । याथः । कं । ह । गच्छथः । कं । अच्छ । युंजाथे इति । रथं ।
कस्य । ब्रह्माणि । रण्यथः । वयं । वां । उश्मसि । इष्टये ॥३॥

हे अश्विनौ युवां कं यजमानं यज्ञं वा प्रति याथः । अध्वानमुल्लंघ्य याथः । कं ह कं च प्रति गच्छथः । गत्वा च केन सह संगतौ भवथः । कं चाच्छाभिप्राप्तुं युंजाथे योजयथो रथमश्वैः । कस्य ब्रह्माणि परिवृढानि स्तोत्राणि रण्यथः । रमेथे । वयं च वां युवामिष्टये गमनायैषणाय वोश्मसि । कामयामहे । तस्मात्कस्य च यागं प्रति न गंतव्यमित्यर्थः ॥

पौरं चिद्ध्युदप्रुतं पौर पौराय जिन्वथः । यदीं गृभीततातये सिंहमिव द्रुहस्पदे ॥४॥
पौरं । चित् । हि । उदऽप्रुतं । पौर । पौराय । जिन्वथः । यत् । ईं । गृभीतऽतातये ।
सिंहंऽइव । द्रुहः । पदे ॥४॥

हे पौर । इदमश्विनोः संबोधनं । पौरिणा स्तुत्यत्वेन मत्संबंधादश्विनावपि पौरौ ॥ उभयोरेकवदेकवचनं ॥ हे पौरसंबंधिनावश्विनौ युवां पौरं । चिदिति पूरणः । पौरिणा वृष्ट्यर्थं प्रार्थ्यमानत्वेन मत्संबंधोऽपि पौरः । तमुदप्रुतमुदकप्लावकं मेघं पौराय ऋषये मह्यं जिन्वथः । प्रेरयथः । यद्यां युवां गृभीततातये गृहीतयज्ञमतानाय पौरायेमं मेघं प्रतिगच्छथो द्रुहो द्रोहस्य पदे स्थानेऽरण्यदेशे सिंहमिव । गर्जंतं प्रबलं सिंहं यथा वनाद्व्यावर्तयंति शूराः तद्वज्जिन्वथ इति ॥

प्र च्यवानाज्जुजुरुषो वव्रिमत्कं न मुंचथः । युवा यदी कृथः पुनरा काममृण्वे वध्वः ॥५॥
प्र । च्यवानात् । जुजुरुषः । वव्रिं । अत्कं । न । मुंचथः । युवा । यदि । कृथः । पुनः ।
आ । कामं । ऋण्वे । वध्वः ॥५॥

च्यवानादृषेर्जुजुरुषो जरसा जीर्णात्मकायाद्वव्रिं हेयं पुराणं रूपमत्कं न कवचमिव प्र मुंचथः । प्रमुंचत । प्रामुंचतं द्रापिमिव च्यवानादित्यादि मंत्रांतरं । ऋग्सं॰ १ ११६ १० । यदि यदा पुनर्युवा कृथः । युवानं कुरुथ इत्यर्थः । तदा वध्वः सुरूपायाः स्त्रियः कामं कमनीयं रूपमा ऋण्वे । प्राप्नवान ॥ ॥१३॥

अस्ति हि वामिह स्तोता स्मसि वां संदृशि श्रिये ।
नू श्रुतं म आ गतमवोभिर्वाजिनीवसू ॥६॥
अस्ति । हि । वां । इह । स्तोता । स्मसि । वां । संऽदृशि । श्रिये ।
नु । श्रुतं । मे । आ । गतं । अवःऽभिः । वाजिनीवसू इति वाजिनीऽवसू ॥६॥

हे अश्विनौ वां स्तोता पौरोऽस्ति हि । वर्तते खलु । हे देवौ वां संदृशि संदर्शने संनिधाने स्मसि । स्मः । भवेम । किमर्थं । श्रिये । नु अद्य मे मदीयमाह्वानं श्रुतं । शृणुतं । श्रुत्वा आ गतं । आगच्छतं । किं तूष्णीं नेत्याह । अवोभी रक्षणैः सह वाजिनीवसू अन्नवसू ॥

को वामद्य पुरूणामा वव्ने मर्त्यानां । को विप्रो विप्रवाहसा को यज्ञैर्वाजिनीवसू ॥७॥
कः । वां । अद्य । पुरूणां । आ । वव्ने । मर्त्यानां । कः । विप्रः । विप्रऽवाहसा । कः ।
यज्ञैः । वाजिनीवसू इति वाजिनीऽवसू ॥७॥

हे वाजिनीवसू अन्नवसू वां युवामद्यास्मिन्दिने पुरूणां मर्त्यानां मध्ये क आ वव्ने । सर्वतो भजति । हे

विप्रवाहसा विप्रैर्मेधाविभिर्वहनीयौ को विप्रो मेधावी ववे। को यजमानो यज्ञैर्ववे। अत्यंतविलंबमसहमानः पुनः पुनर्ब्रूते ॥

आ वां रथो रथानां येष्ठो यात्वश्विना। पुरू चिदस्मयुस्तिर आंगूषो मर्त्येष्वा ॥८॥

आ। वां। रथः। रथानां। येष्ठः। यातु। अश्विना। पुरु। चित्। अस्मऽयुः। तिरः।
आंगूषः। मर्त्येषु। आ ॥८॥

मध्येऽतिशयेन गंता सन् आ
हे अश्विनाश्विनौ वां युवयो रथ एको रथो रथानां येष्ठ इतरदेवरथानां
यातु। कीदृशः सन्। पुरू चिद्बहून्यप्यस्मद्विरोधिनस्तिरो हिंसकस्तिरस्कर्ता वास्मयुरस्मान् कामयमानो मर्त्येषु
सर्वेषु यजमानेषु मध्य आंगूषः स्तुत्यः। आकारः पूरणः। अथवा आंगूषः स्तोमः। स्तवोऽस्मयुरस्मान् बलैर्योक्तुं
कामयमानो मर्त्येषु मर्त्यैरस्मदीयैर्ऋत्विग्भिः प्रेरितः सन्। उक्तलक्षणाश्विनो रथस्य वा स्तुतिरा सर्वतः पुरू
चित् पुरूण्यपि शत्रुबलानि तिरः। तिरस्करोति ॥

शमू षु वां मधूयुवास्माकमस्तु चर्कृतिः।
अर्वाचीना विचेतसा विभिः श्येनेव दीयतं ॥९॥

शं। ऊं इति। सु। वां। मधुऽयुवा। अस्माकं। अस्तु। चर्कृतिः।
अर्वाचीना। विऽचेतसा। विऽभिः। श्येनाऽइव। दीयतं ॥९॥

हे मधूयुवा मधुमंता वां युवाभ्यां चर्कृतिः पुनःपुनः करणं युवाभ्यामर्थाय पुनःपुनः क्रियमाणं स्तोत्रं
युवयोरागमनस्याभ्यासो वास्माकं सु सुष्ठु शमु सुखकरमेवास्तु। भवतु। हे अर्वाचीनार्वागस्मदभिमुखांचनौ हे
विचेतसा विशिष्टप्रज्ञौ श्येनेव श्येनाविव विभिर्गंतृभिरश्वैर्दीयतं। गच्छतं ॥

अश्विना यद्ध कर्हि चिच्छुश्रूयातमिमं हवं।
वस्वीरू षु वां भुजः पृंचंति सु वां पृचः ॥१०॥

अश्विना। यत्। ह। कर्हि। चित्। शुश्रूयातं। इमं। हवं।
वस्वीः। ऊं इति। सु। वां। भुजः। पृंचंति। सु। वां। पृचः ॥१०॥

हे अश्विना युवां यत्र यत्र कर्हि चित् स्थितवंतौ भवथः तत्रेमं मे हवमाह्वानं शुश्रूयातं। शृणुतं। श्रुत्वाग-
हे अश्विना युवां यत्र यत्र कर्हि चित् स्थितवंतौ भवथः तत्रेमं मे हवमाह्वानं शुश्रूयातं। शृणुतं। श्रुत्वाग-
च्छतमित्यर्थः। किमर्थमित्युच्यते। वस्वीः प्रशस्या भुजो धनानि हविर्लक्षणानि सु सुष्ठु वां युवां पृंचंति। मिश्र-
यंति। प्राप्नुवंति। उ इति पूरणः। कीदृश्यो भुजः। वा युवां सु सुष्ठु पृचः संपर्चनाः। युवां प्राप्तुं कामयमाना
इत्यर्थः। अथवा सु पृचः सुसंपर्चनाः स्तोतारो वस्वीर्भुजो वां सुष्ठु पृंचंति। संपर्चयंति ॥ ॥१४॥

प्रति प्रियतममिति नवर्चं तृतीयं सूक्तं। अवस्युर्नामात्रेय ऋषिः। पंक्तिश्छंदः। आश्विनौ देवता। अनु-
क्रांतं च। प्रति नवावस्युः पांक्तमिति ॥ प्रातरनुवाक आश्विने क्रतौ पांक्ते छंदस्याश्विनशस्त्रे चेदं सूक्तं। प्रति
प्रियतममिति पांक्तं। आ० ४. १५.। इति हि सूत्रितं ॥

प्रति प्रियतमं रथं वृषणं वसुवाहनं।
स्तोता वामश्विनावृषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवं ॥१॥

प्रति। प्रियऽतमं। रथं। वृषणं। वसुऽवाहनं।
स्तोता। वां। अश्विना। ऋषिः। स्तोमेन। प्रति। भूषति। माध्वी इति। मम। श्रुतं। हवं ॥१

हे अश्विनौ। एकः प्रतिशब्दोऽनुवादः। वां युवयोः प्रियतमं रथं स्तोता अपिरवस्युः स्तोमेन प्रति भूषति। अलंकरोति। कीदृशं रथं। वृषणं वर्षितारं फलानां वसुवाहनं धनानां वाहकं। ईदृशं रथमागमनाय स्तौतीत्यर्थः। तस्मात् हे माध्वी मधुविद्याविदितारौ मम हवमाह्वानं श्रुतं। शृणुतं॥

अत्यायातमश्विना तिरो विश्वा अहं सना।
दस्रा हिरण्यवर्तनी सुषुम्ना सिंधुवाहसा माध्वी मम श्रुतं हवं ॥२॥
अतिऽआयातं। अश्विना। तिरः। विश्वाः। अहं। सना।
दस्रा। हिरण्यवर्तनी इति हिरण्यऽवर्तनी। सुऽसुम्ना। सिंधुऽवाहसा। माध्वी इति। मम। श्रुतं। हवं ॥२॥

हे अश्विना अत्यायातं। सर्वान्यजमानानतिक्रम्यागच्छतं। यथाहमपि विश्वाः सर्वा अस्मत्तिरोधिप्रजाः सना सदा तिरस्करोमि। अथवाहं तिरः। तिरः सत इति प्राप्तस्येति निरुक्तं।३.२०। प्राप्ता विश्वाः सर्वाः क्रिया युष्मदीया अनुतिष्ठेयमित्यर्थः। सना सनातनौ दस्रा शत्रूणामुपक्षपयितारौ हिरण्यवर्तनी हिरण्मयरथौ सुषुम्ना सुधनौ सिंधुवाहसा नदीनां प्रवाहयितारौ वृष्टिप्रेरणेन। तादृशौ युवामत्यायातं॥

आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवं।
रुद्रा हिरण्यवर्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुतं हवं ॥३॥
आ। नः। रत्नानि। बिभ्रता। अश्विना। गच्छतं। युवं।
रुद्रा। हिरण्यवर्तनी इति हिरण्यऽवर्तनी। जुषाणा। वाजिनीवसू इति वाजिनीऽवसू। माध्वी इति। मम। श्रुतं। हवं ॥३॥

हे अश्विना नोऽस्मभ्यं रत्नानि रमणीयानि धनानि बिभ्रतौ धारयंतौ युवं युवां नोऽस्मान्प्रत्या गच्छतं। हे रुद्रा रुद्रपुत्रौ स्तुत्यौ वा हे वाजिनीवसू वाजिनधनौ युवां हिरण्यवर्तनी हिरण्मयरथौ जुषाणा यज्ञं सेवमानौ संतावा गच्छतमिति। माध्वी इत्यादि गतं॥

सुष्टुभो वां वृषण्वसू रथे वाणीच्याहिता।
उत वां ककुहो मृगः पृक्षः कृणोति वापुषो माध्वी मम श्रुतं हवं ॥४॥
सुऽस्तुभः। वां। वृषण्वसू इति वृषण्ऽवसू। रथे। वाणीची। आऽहिता।
उत। वां। ककुहः। मृगः। पृक्षः। कृणोति। वापुषः। माध्वी इति। मम। श्रुतं। हवं ॥४॥

हे वृषण्वसू वर्षधनौ वर्षितारौ वा वसूनां हे अश्विनौ सुष्टुभः सुस्तोतुर्मम वाणीची वाग्रूपा स्तुतिर्वां युवयो रथ आहिता। स्थापिता। अस्माभिः कृतेत्यर्थः। उतापि च वां युवाभ्यां ककुहो महान् मृगो मृगयिता वापुषो वपुष्मान्यजमानः पृक्षोऽन्नं हविः कृणोति। करोति। तस्मान्मम हवं श्रुतमिति॥

बोधिन्मनसा रथ्येषिरा हवनश्रुता।
विभिश्च्यवानमश्विना नि याथो अद्वयाविनं माध्वी मम श्रुतं हवं ॥५॥

बोधित्ऽमनसा । रथ्या । इषिरा । हवन्ऽश्रुता ।
विऽभिः । च्यवानं । अश्विना । नि । याथः । अद्वयाविनं । माध्वी इति । मम । श्रुतं । हवं ॥५॥

हे अश्विना बोधिन्मनसा बुध्यमानमनस्कौ रथ्या रथस्वामिनाविषिरा शीघ्रगतारौ सर्वगतव्यौ वा हवनश्रुता हवनस्य स्तुतेः श्रोतारौ युवा विभिरश्वैश्च्यवानमृषिमद्वयाविनं मायारहितं नि याथः । यथा तमृषि प्राप्नवतां तद्वन्मा प्रति पथि नि याथः । नितरामागच्छतं । प्र च्यवानाज्जुजुरुषो वव्रिं । ऋग्सं॰ ५ ७४.५ । इति ह्युक्तं ॥ ॥१५॥

आ वां नरा मनोयुजोऽश्वासः प्रुषितप्सवः ।
वयो वहंतु पीतये सह सुम्नेभिरश्विना माध्वी मम श्रुतं हवं ॥६॥
आ । वां । नरा । मनःऽयुजः । अश्वासः । प्रुषितऽप्सवः ।
वयः । वहंतु । पीतये । सह । सुम्नेभिः । अश्विना । माध्वी इति । मम । श्रुतं । हवं ॥६॥

हे नरा कर्मणां नेतारा हे अश्विनौ वां युवां मनोयुजो मनोमात्रेण युज्यमानाः । सुशिक्षिता इत्यर्थः । प्रुषितप्सवो विचित्ररूपा वयः शीघ्रगतारोऽश्वासोऽश्वा आ वहंतु पीतये सोमपानाय । सुम्नेभिः सह अस्मभ्यं देयैः सुखैस्तत्साधनैर्धनादिभिर्वा सह वहंतु ॥

अश्विनावेह गच्छतं नासत्या मा वि वेनतं ।
तिरश्चिदर्यया परि वर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवं ॥७॥
अश्विना । आ । इह । गच्छतं । नासत्या । मा । वि । वेनतं ।
तिरः । चित । अर्यऽया । परि । वर्तिः । यातं । अदाभ्या । माध्वी इति । मम । श्रुतं । हवं ॥७॥

हे अश्विनाविहास्मिन्यज्ञे आ गच्छतं । हे नासत्या मा वि वेनतं । विगतकामौ मा भवतं ॥ वेनतिः कांतिकर्मा ॥ हे अदाभ्यावहिंस्यौ पूज्यौ अर्यया अर्यौ स्वामिनौ युवां ॥ सुपां सुलुगित्यादिना सुपो याजादेशः ॥ तिरश्चित अंतर्हितादूरदेशादपि युवां वर्तिरस्मद्यज्ञगृहं परि यातं । आगच्छतं ॥

अस्मिन्यज्ञे अदाभ्या जरितारं शुभस्पती ।
अवस्युमश्विना युवं गृणंतमुप भूषथो माध्वी मम श्रुतं हवं ॥८॥
अस्मिन् । यज्ञे । अदाभ्या । जरितारं । शुभः । पती इति ।
अवस्युं । अश्विना । युवं । गृणंतं । उप । भूषथः । माध्वी इति । मम । श्रुतं । हवं ॥८॥

हे अदाभ्या अहिंस्यौ हे शुभस्पती उदकस्य स्वामिनावश्विना युवं युवामस्मिन्यज्ञे जरितारं स्तोतारमवस्युं गृणंतं स्तुवंतं मामुप भूषथः । उपप्राप्नुतं ॥

अभूदुषा रुशत्पशुराग्निरधाय्यृत्वियः ।
अयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हवं ॥९॥

अभूत् । उषाः । रुशत्ऽपशुः । आ । अग्निः । अधायि । ऋत्वियः ।
अयोजि । वां । वृषण्वसू इति वृषण्ऽवसू । रथः । दस्रौ । अमर्त्यः । माध्वी इति । मम । श्रुतं । हवं ॥९॥

उषा व्युष्टिरभूत् । अग्निश्च रुशत्पशुर्दीप्तपशुमान् । प्रकाशितहविरित्यर्थः । अथवा पशवः किरणाः । रुशद्रश्मिः सन् अधायि । वेद्यामधीयत अग्निराहवनीय ऋत्विय ऋतौ काले भव । हे वृषण्वसू प्रदत्तधनौ हे दस्रौ वां युवयोरमर्त्योऽमरणधर्मा ध्रुवो रथोऽयोजि । अश्वैर्युक्तो भवत्वित्यर्थः ॥ छन्दसि लुङ्लङ्लिट इत्यनेन प्रार्थने लुङ् भवति । इह प्रार्थनायां ॥ माध्वी इत्यादि गतं ॥ ॥१६॥

आ भात्यग्निरिति पंचर्चं चतुर्थं सूक्तं भौमस्यात्रेरार्षं त्रैष्टुभमाश्विनं । अत्रानुक्रमणिका । आ भाति पंचात्रिरिति ॥ प्रवर्ग्येऽभिष्टवार्थमिदं सूक्तं । सूत्रितं च । आ भात्यग्निर्ग्रावाणेव । आ॰ ४ ६ । इति ॥ प्रातरनुवाक आश्विने क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चेदमादिकं द्वे सूक्ते । सूत्र्यते हि । आ भात्यग्निरिति सूक्ते । आ॰ ४ १५ । इति ॥ अप्तोर्यामे होतुरतिरिक्तोक्थ्य इदं सूक्तं । सूत्रितं च । आ भात्यग्निरित्यस्य पतिना वयमिति परिधानीया । आ॰ ९ ११ । इति ॥

आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥१॥
आ । भाति । अग्निः । उषसां । अनीकं । उत् । विप्राणां । देवऽयाः । वाचः । अस्थुः ।
अर्वाञ्चा । नूनं । रथ्या । इह । यातं । पीपिऽवांसं । अश्विना । घर्मं । अच्छ ॥१॥

उषसामनीकमनीकभूतः । अनीकं मुखं । उषसि प्रबुध्यमान इत्यर्थः । तादृशोऽग्निरा भाति । दीप्यते । यद्वा । उषसां मुखमा भाति । दीपयति । उषःकाले ह्यग्नयः प्रतिबोध्यन्ते । किंच विप्राणां मेधाविनां स्तोतॄणां देवया देवकामा वाचः स्तोत्राण्युदस्थुः । उत्तिष्ठंति । यस्मादेवं तस्मात् हे रथ्या रथस्वामिनावश्विनावर्वाञ्चा अस्मदभिमुखांचनौ नूनमद्यास्मिन्यागदिन इहा यातं । कं प्रति । पीपिवांसं स्वांगैः परिवृद्धं घर्मं प्रदीप्तं यज्ञं । यद्वा । पीपिवांसमाप्यायितं वसतीवरीभिः क्लृप्तं सोमरसं । अथवा घृतादिना पीपिवांसं घर्मं प्रवर्ग्यमच्छाभिलक्ष्येह यातं । प्रवर्ग्येऽस्य सूक्तस्य विनियोगः ॥

न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शंभविष्ठा ॥२॥
न । संस्कृतं । प्र । मिमीतः । गमिष्ठा । अंति । नूनं । अश्विना । उपऽस्तुता । इह ।
दिवा । अभिऽपित्वे । अवसा । आऽगमिष्ठा । प्रति । अवर्तिं । दाशुषे । शंऽभविष्ठा ॥२॥

अश्विनौ संस्कृतं घर्मं न प्र मिमीतः । न हिंस्तः । किंतु अत्यंतिकं घर्मसमीपं नूनमिदानीमिह यज्ञे गमिष्ठा गंतृतमावश्विनावश्विनावुपस्तुतोपस्तुतौ भवतः । दिवाभिपित्वे दिवसस्याभिपतने प्रातःकालेऽवसा रक्षणेन सह गमिष्ठागंतृतमौ । अवर्तिं प्रति वृद्धभूतां । वर्तिर्जीवनं । तदभावोऽवर्तिः । तद्रहितमन्नं यथा भवति तथागततमौ । आगत्य च दाशुषे हविर्दत्तवते यजमानाय शंभविष्ठा सुखस्य भावयितारौ भवतः ॥

उता यातं संगवे प्रातरह्नो मध्यंदिन उदिता सूर्यस्य ।
दिवा नक्तमवसा शंतमेन नेदानीं पीतिरश्विना ततान ॥३॥

उत । आ । यातं । सम्ऽगवे । प्रातः । अह्नः । मध्यंदिने । उत्ऽइता । सूर्यस्य ।
दिवा । नक्तं । अवसा । शम्ऽतमेन । न । इदानीं । पीतिः । अश्विना । आ । ततान ॥ ३ ॥

अह्नो द्वेधा त्रेधा पंचधा पंचदशधा समाना विभागाः संति । इह पंचधा विभाग आत्तः ॥ उतापि चा यात । आगच्छतं । कदा । संगवे संगवकाले । संगच्छंते गावो दोहनभूमिं यस्मिन्काले स संगवः । रात्र्यपरकाले हि गावो वने हिमतृणानि भक्षयित्वा पुनर्दोहाय संगवे प्रतिनिवर्तंते । तथा प्रातः प्रातःकालेऽपि । तथा मध्यंदिनेऽह्नो मध्यकाले सूर्यस्योदितोदितावभ्युदयेऽत्यंतप्रवृद्धसमये । अपराह्ण इत्यर्थः । एतत्सायाह्नस्याप्युपलक्षणं । न केवलमुक्तेष्वेव कालेषु किंतर्हि दिवा नक्तं सर्वदा शंतमेन सुखतमेनावसा रक्षणेन हविषा वा निमित्तेना यातं । किमर्थमागम्यते पूर्वमेवान्यैर्देवैः स्वीकृतत्वात् नेत्याह । इदानीमपि पीतिरितरदेवानां पानं ना ततान न तनोत्यश्विनावश्विनौ विहायेति शेषः ॥

इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणं ।
आ नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहंता ॥ ४ ॥
इदं । हि । वां । प्रऽदिवि । स्थानं । ओकः । इमे । गृहाः । अश्विना । इदं । दुरोणं ।
आ । नः । दिवः । बृहतः । पर्वतात् । आ । अत्ऽभ्यः । यातं । इषं । ऊर्जं । वहंता ॥ ४ ॥

हे अश्विना वां युवयोः प्रदिवि पुराणमिदं द्युलोको निवासयोग्यं स्थानमुत्तरवेद्याख्यं । अथ सामिकवेद्यभिप्रायेणाह । इमे गृहाः प्राचीनवंशादयः । इदं दुरोणं देवयजनगृहं । नोऽस्मदर्थं दिवो द्युलोकाद्बृहतः पर्वतात् पर्ववतो मेघादद्भ्योऽपां कारणादंतरिक्षाद्वा यातं । आगच्छतं । किं तूष्णीं । न । इषमूर्जं चान्नं बलं च । बलसाधनमन्नं सारभूतमित्यर्थः । तादृशं वहंता वहंतौ ॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ ५ ॥
सं । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।
आ । नः । रयिं । वहतं । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥ ५ ॥

वयं सं गमेम संगच्छेमाश्विनोर्नूतनेनावमानव्यक्तेन रक्षणेन मयोभुवा सुखस्य भावयित्र्या सुप्रणीती सुप्रणीत्या सुष्ठागमनेन च । अपि वेते उभे अवसो विशेषणे । उक्तलक्षणेन सं गमेम । नोऽस्मभ्यं रयिमा वहतं । उत वीरान् पुत्रादीना वहत । हे अमृतामरणधर्माणौ विश्वानि सौभगानि सुभगत्वान्या वहतं ॥ ॥ १८ ॥

प्रातर्यावाणेति पंचर्चं पंचमं सूक्तमात्रेयं त्रैष्टुभमाश्विनं । प्रातर्यावाणेति ह्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥ अप्तोर्यामे मैत्रावरुणातिरिक्तोक्थ्ये इदमेव शस्यं । तथा च सूत्रितं । प्रातर्यावाणा क्षत्रस्य पते मधुमतमूर्मिं । आ० ९ ११. । इति ॥

प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः ।
प्रातर्हि यज्ञमश्विना दधाते प्र शंसंति कवयः पूर्वभाजः ॥ १ ॥
प्रातःऽयावाना । प्रथमा । यजध्वं । पुरा । गृध्रात् । अररुषः । पिबातः ।
प्रातः । हि । यज्ञं । अश्विना । दधाते इति । प्र । शंसंति । कवयः । पूर्वऽभाजः ॥ १ ॥

हे मदीया ऋत्विजः प्रातर्यावाणा प्रातरेव यज्ञगन्तारौ प्रथमा एवेतरेभ्यो देवेभ्यः पूर्वभाविनौ प्रकृष्टतमौ वाश्विनौ यजध्वं । किमर्थं । प्रथमयागनियोग उच्यते । गृध्रादभिकाङ्क्षतोऽररुषोऽदातू रक्षःप्रभृतेः पुरा पूर्वं पिबातः । पिबतां । अनागतौ कथं यष्टुं शक्यावित्यत आह । अश्विनावश्विनौ प्रातर्हि यज्ञं दधाते । धारयतः । संभजतः । पूर्वभाजः पूर्वकालीनाः कवयोऽनूचाना ऋषयः प्रातरेवैतौ प्र शंसन्ति । ये वा अनूचानास्ते कवयः । ऐ० ब्रा० २ ३८ । इति हि निगमः ॥

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टं ।
उतान्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान ॥२॥
प्रातः । यजध्वं । अश्विना । हिनोत । न । सायं । अस्ति । देवऽयाः । अजुष्टं ।
उत । अन्यः । अस्मत । यजते । वि । च । आवः । पूर्वःऽपूर्वः । यजमानः । वनीयान ॥२॥

हे मदीयाः पुरुषा अश्विनावश्विनौ प्रातः प्रातरेव यजध्वं । पूजयत । स्तुध्वं । हिनोत । प्रहिणुत हवींषि । सायं सायंकाले हविर्देवया देवगामि नास्ति । न विद्यते । देवा न स्वीकुर्वन्तीत्यर्थः । अजुष्टमसेव्यं तद्भवति । पूर्वाह्णो वै देवानामिति हि श्रुतिः । उतास्मदस्मत्तोऽन्यः कोऽपि यजते यजति सोमेन वि चावः वितर्पयत्य हविषा । अतोऽस्मास्वन्येषु च मध्ये पूर्वः पूर्वो यजमानो यः पूर्वः पूर्वो यष्टा भवति स वनीयान देवानां संभजनीयः संभाव्यो भवति ॥

हिरण्यत्वगित्येषाश्विने पशौ हविषो याज्या । हिरण्यत्वङ्मधुवर्णो घृतस्नुरभि क्रत्विद्र गुरध जमन । आ० ३ ८ । इति हि सूत्रितं ॥

हिरण्यत्वङ्मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वां ।
मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा ॥३॥
हिरण्यऽत्वक् । मधुऽवर्णः । घृतऽस्नुः । पृक्षः । वहन् । आ । रथः । वर्तते । वां ।
मनःऽजवाः । अश्विना । वातऽरंहाः । येन । अतिऽयाथः । दुःऽइतानि । विश्वा ॥३॥

वां युवयो रथः पृक्षोऽन्नममृतं वहन्ना वर्तते । अस्मदभिमुखमागच्छति । कीदृशो रथः । हिरण्यत्वक् हिरण्याच्छादितरूपो हिरण्यावृतो मधुवर्णो मनोहरवर्णो घृतस्नुरुदकस्य प्रस्रवणो मनोजवा मनोवेगो वातरंहा वातसदृशवेगः । हे अश्विना येन रथेन विश्वा सर्वाणि दुरितानि दुर्गमनान्मार्गानतियाथः अतिक्रम्य गच्छथः ॥

यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे ।
स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित्तुतुर्यात ॥४॥
यः । भूयिष्ठं । नासत्याभ्यां । विवेष । चनिष्ठं । पित्वः । ररते । विऽभागे ।
सः । तोकं । अस्य । पीपरत । शमीभिः । अनूर्ध्वऽभासः । सदं । इत । तुतुर्यात ॥४॥

यो यजमानो विभागे हविर्विभागवति यागे नासत्याभ्यामश्विभ्यां भूयिष्ठं चनिष्ठं । चन इत्यन्ननाम । नि० ६. १६. । बह्वन्नं कर्म विवेष करोति । पित्वः ॥ कर्मणि षष्ठी ॥ अन्नं च ररते ददाति स यजमानो ऽस्यात्मन एव तोकं पुत्रं पीपरत पालयेत शमीभिः कर्मभिः । अनूर्ध्वभासो ऽनुन्नततेजस्कान् । यद्वा । ऊर्ध्वभासो ऽग्नयः । अपरिहितानयष्टॄन सदमित् सदैव तुतुर्यात । हिंस्यात ॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥५॥
सं । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।
आ । नः । रयिं । वहतं । आ । उत । वीरान । आ । विश्वानि । अमृता । सौभगानि ॥५॥

समश्विनोरिति पंचमी गता ॥ ॥१८॥

अश्विनाविहेति नवर्चं षष्ठं सूक्तं । अत्रानुक्रमणिका । अश्विनौ नव सप्तवध्रिस्त्युष्णिगादि चतुर्थी त्रिष्टुप्पंचानुष्टुभ इति । सप्तवध्रिर्नामात्रेय ऋषिः । आदितस्तिस्र उष्णिहश्चतुर्थी त्रिष्टुप् शिष्टाः पंचानुष्टुभः ॥ प्रातरनुवाक आश्विने क्रतावौष्णिहे छंदस्याश्विने शस्त्रे चाद्यस्तृचो विनियुक्तः । सूत्रितं च । अश्विना वर्तिरस्मदाश्विनाविह गच्छतमिति तृचौ । आ० ४ १५ । इति ॥ दशरात्रे तृतीयेऽहनि प्रउगशस्त्रेऽयमाश्विनस्तृचः । सूत्रितं च । अश्विनाविह गच्छतमा याह्यद्रिभिः सुतं । आ० ७. १० । इति ॥

अश्विनाविह गच्छतं नासत्या मा वि वेनतं । हंसाविव पततमा सुताँ उप ॥१॥
अश्विना । आ । इह । गच्छतं । नासत्या । मा । वि । वेनतं । हंसाऽइव । पततं ।
आ । सुतान । उप ॥१॥

हे अश्विनाविहास्मिन्याग आ गच्छतं । हे नासत्या मा वि वेनतं । वेनतिः कांतिकर्मा । मा विकामौ भवतं । निःस्पृहाववकामौ वा न भवतमित्यर्थः । हंसाविव तौ यथा निर्मलोदकमागच्छतस्तद्वत सुतानभिषुतान सोमानुपा पतत । उपागच्छत ॥

अश्विना हरिणाविव गौराविवानु यवसं । हंसाविव पततमा सुताँ उप ॥२॥
अश्विना । हरिणाऽइव । गौराऽइव । अनु । यवसं । हंसाऽइव । पततं । आ ।
सुतान । उप ॥२॥

हे अश्विना हरिणाविव गौराविव गौरमृगाविव च । तौ यथा यवसं घासमनु धावतः ताविव हंसाविव च सोममागच्छतं ॥

अश्विना वाजिनीवसू जुषेथां यज्ञमिष्टये । हंसाविव पततमा सुताँ उप ॥३॥
अश्विना । वाजिनीवसू इति वाजिनीऽवसू । जुषेथां । यज्ञं । इष्टये । हंसाऽइव ।
पततं । आ । सुतान । उप ॥३॥

हे वाजिनीवसू अन्नार्थं वासयितारावश्विना यज्ञमस्मदीयमिष्टयेऽभीष्टार्थैषणाय वा जुषेथां । सेवथा ॥

अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेव योषा ।
श्येनस्य चिज्जवसा नूतनेनागच्छतमश्विना शंतमेन ॥४॥
अत्रिः । यत् । वां । अवऽरोहन । ऋबीसं । अजोहवीत् । नाधमानाऽइव । योषा ।
श्येनस्य । चित् । जवसा । नूतनेन । आ । अगच्छतं । अश्विना । शंऽतमेन ॥४॥

अत्रिरस्मत्पिता यद्यदा वां युवामजोहवीत् अस्तोषीत नाधमाना याचमाना योषा योषिदिव । सा यथा पतिं प्रीणयति तद्वत्कुर्वन् ऋबीसं तप्ताग्निमग्निकुंडं क्षिप्तः सन् अवरोहन् विमुंचन् अजोहवीत् । श्येनस्य चिज्जवसा श्येनस्य गरुत्मत इव वेगेन । चिदित्युपमार्थे । अथवा श्येनस्य जवसा वेगेन नूतनेन प्रथमोत्पन्नेन सततं गच्छतः श्येनस्य प्रथमजवेन शंतमेनास्माकं सुखतमेन च रथेन तं रक्षितुमागच्छतं हे अश्विना ॥ ॥१०॥

अत्र ब्रुवंतीतिहासं सप्तवध्रेः पुराविदः ॥ भ्रातृव्याः पेटिकायां तमृषिं प्रक्षिप्य यत्नतः । मुद्रां कृत्वा गृहे स्वीये रक्षयित्वा न्यवेशयन् ॥ न सगच्छेत भार्यां स्वां यथा रात्रौ तथा कृतं । प्रातः प्रातः समुद्घाट्य निर्मोचयंति तं मुनिं ॥ एवं स्थित्वा चिरं कालं पेटायां दुःखितः कृशः । उपायं चिंतयामास निर्गमस्य चिरं मुनिः ॥ हृदि निश्चित्य नासत्यावस्तोषीदृष्टमानसः । तमश्विनौ समागत्य समुद्घाट्य च पेटिकां ॥ उद्धृत्य तमपि शीघ्रं तावदृष्टौ बभूवतुः । स ऋषिर्भार्यया सार्धं रमित्वाथ पुनर्भयात् ॥ प्रातरेत्य पुनः पेटां प्रविश्य प्रागिव स्थितः । पेटानिवाससमये दृष्टवानृग्द्वयं तदा ॥

वि जिहीष्व वनस्पते योनिः सूष्यंत्या इव ।
श्रुतं मे अश्विना हवं सप्तवध्रिं च मुंचतं ॥५॥
वि । जिहीष्व । वनस्पते । योनिः । सूष्यंत्याःऽइव ।
श्रुतं । मे । अश्विना । हवं । सप्तऽवध्रिं । च । मुंचतं ॥५॥

हे वनस्पते वनस्पतिविकाररूपे पेटिके वि जिहीष्व । विगच्छ । विवृता भव । सूष्यंत्या इव प्रसवोन्मुख्याः स्त्रिया योनिरिव भगो यथा विव्रियते तथा त्वमपि विवृता भव । तदर्थं हे अश्विनावश्विनौ मे हवमाह्वानं श्रुतं । शृणुतं । श्रुत्वा च सप्तवध्रिं च मामृषिं मुंचतं । मोचयतं ॥

भीताय नाधमानाय ऋषये सप्तवध्रये ।
मायाभिरश्विना युवं वृक्षं सं च वि चाचथः ॥६॥
भीताय । नाधमानाय । ऋषये । सप्तऽवध्रये ।
मायाभिः । अश्विना । युवं । वृक्षं । सं । च । वि । च । अचथः ॥६॥

भीताय निर्गमाद्बिभ्युषे नाधमानाय विमोकं याचमानाय सप्तवध्रये ऋषये हे अश्विनावश्विनौ युवं युवां मायाभिर्वृक्षं वृक्षविकारां पेटिकां सं चाचथः । सम निर्गमार्थं समगच्छथः । व्यचथश्च । विभक्तां कुरुथः ॥

यथा वातः पुष्करिणीं समिंगयति सर्वतः ।
एवा ते गर्भ एजतु निरैतु दशमास्यः ॥७॥
यथा । वातः । पुष्करिणीं । संऽइंगयति । सर्वतः ।
एव । ते । गर्भः । एजतु । निःऽएतु । दशऽमास्यः ॥७॥

एतदाद्यृक्त्रयं गर्भस्राविण्युपनिषत् ॥ एतदाद्यृक्त्रयेणासौ सप्तवध्रिः स्वयोषितः । गर्भिण्याः प्रसवायाशु स्तुतवानश्विनावृषिः ॥ यथा वातः पुष्करिणीं सरस्यादिकं सर्वतः समिंगयति सम्यक् चालयति एवैवं तव गर्भ एजतु । कंपतां । इतस्ततः संचरतु । दशमास्यो दश मासान् गर्भे स्थितो निरैतु । निर्गच्छतु ॥

यथा वातो यथा वनं यथा समुद्र एजति ।
एवा त्वं दशमास्य सहावेहि जरायुणा ॥८॥

यथा । वातः । यथा । वनं । यथा । समुद्रः । एजति ।
एव । त्वं । दशऽमास्य । सह । अव । इहि । जरायुणा ॥ ८ ॥

वातो यथा कंपमानो वनं कंपयति स्वयं । यथा समुद्रश्चलति चाल्यते वाथ वायुना ॥ स्थित्वा दशैव मासांस्त्वं गर्भान्तिक सुवेष्टितः । निर्गच्छ जठरान्मातुर्जरायुजस्ततः पतंत ॥

दश मासाञ्छशयानः कुमारो अधि मातरि ।
निरैतु जीवो अक्षतो जीवो जीवंत्या अधि ॥ ९ ॥
दश । मासान् । शशयानः । कुमारः । अधि । मातरि ।
निःऽएतु । जीवः । अक्षतः । जीवः । जीवंत्याः । अधि ॥ ९ ॥

दश मासानुषित्वासौ जननीजठरे सुखं । निर्गच्छतु सुखं जीवो जननी चापि जीवतु ॥ ॥ २० ॥

महे नो अद्येति दशर्चं सप्तमं सूक्तमात्रेयस्य सत्यश्रवस आर्षं पांक्तमुषस्यं । अनुक्रम्यते च । महे दश सत्यश्रवा उषस्यं तु पांक्तमिति ॥ प्रातरनुवाक उषस्ये क्रतौ पांक्ते छंदस्याश्विनशस्त्रे चेदं सूक्तं । सूत्र्यते हि । महे नो अद्येति पांक्तं । आ॰ ४ १४ । इति ॥

महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १ ॥
महे । नः । अद्य । बोधय । उषः । राये । दिवित्मती ।
यथा । चित् । नः । अबोधयः । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥ १ ॥

अद्यास्मिन्यागदिने हे उष उषोदेवि दिवित्मती दीप्तिमती त्वं नोऽस्मान्महे महते राये धनप्राप्तये बोधय । प्रज्ञापय । प्रकाशयेत्यर्थः । सति प्रकाशे क्रतुद्वारा द्रव्यस्योपार्जयितुं शक्यत्वात् । यथा चित् यथैव पूर्वं नोऽस्मानबोधयः अतीतेषु दिवसेषु यथा बोधितवती तद्वदद्यापीत्यर्थः । हे सुजाते शोभनप्रादुर्भूते अश्वसूनृते । अश्वार्था प्रियसत्यात्मिका स्तुतिवाग्यस्याः सा । हे तादृशि देवि वाय्ये वय्यपुत्रे सत्यश्रवसि मय्यनुगृहाणेत्यर्थः ॥

या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।
सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ २ ॥
या । सुऽनीथे । शौचत्ऽरथे । वि । औच्छः । दुहितः । दिवः ।
सा । वि । उच्छ । सहीयसि । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥ २ ॥

हे दिवो दुहितर्दिवः सूर्यस्य पुत्र्युषो या त्वं सुनीथे एतन्नामके शौचद्रथे शुचद्रथस्यापत्ये पूर्वं व्यौच्छः व्यवासयस्तमांसि सा त्वं सहीयस्यतिशयेन बलवति वाय्ये वय्यपुत्रे सत्यश्रवसि मयि व्युच्छ । तमो विवासय । उच्छी विवासे । विवासो वर्जनं । शिष्टमुक्तं ॥

सा नो अद्याभरद्वसुर्व्युच्छा दुहितर्दिवः ।
यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ३ ॥
सा । नः । अद्य । आभरत्ऽवसुः । वि । उच्छ । दुहितः । दिवः ।
यो इति । वि । औच्छः । सहीयसि । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥ ३ ॥

हे दुहितर्दिव उष आभरद्वसुराहृतधना सा प्रमिद्धा त्वं नोऽस्माकमद्यास्मिन्दिने व्युच्छ । तमो विवासय । हे सहीयसि यो या । उकारोऽनर्थकः । या त्वं पूर्व व्यौच्छः साद्यापीति ॥

अभि ये त्वा विभावरि स्तोमैर्गृणन्ति वह्नयः ।
मघैर्मघोनि सुश्रियो दामन्वंतः सुरातयः सुजाते अश्वसूनृते ॥४॥
अभि । ये । त्वा । विभाऽवरि । स्तोमैः । गृणंति । वह्नयः ।
मघैः । मघोनि । सुऽश्रियः । दामनऽवंतः । सुऽरातयः । सुऽजाते । अश्वऽसूनृते ॥४॥

हे विभावरि प्रकाशोपेते ॥ विभाशब्दाच्छंदसीवनिपाविति वनिप । भातेर्वा कर्तरि वनिप ॥ उषस्त्वा त्वामभि प्रति ये वह्नयो वोढार ऋत्विजः स्तोतारः स्तोमैः स्तोत्रैर्गृणन्ति स्तुवंति ते स्तोतारो मघैर्हे मघोनि धनैर्धनवति त्वदनुग्रहात सुश्रियो भवंति । सुष्ठुर्थिभिराश्रयणीया भवंति । दामन्वंतो दानवंतो भवंति । सुरातयः । रातिर्दानं । सुदानाश्च भवंति ॥

यच्चिद्धि ते गणा इमे छदयंति मघत्तये ।
परि चिद्वष्टयो दधुर्ददतो राधो अह्रयं सुजाते अश्वसूनृते ॥५॥
यत् । चित् । हि । ते । गणाः । इमे । छदयंति । मघत्तये ।
परि । चित् । वष्टयः । दधुः । ददतः । राधः । अह्रयं । सुऽजाते । अश्वऽसूनृते ॥५॥

हे उषो यच्चिद्धि । हीति पूरणः । यत ये केचन ते तव संभृता इमे पुरतो वर्तमाना गणा मघभूता मघत्तये धनदातये धनदानाय धनवत्त्वाय वा छदयंति उपच्छदयंति ते सर्वेऽप्यस्मान परि दधुः परितो धारयंति वष्टयोऽस्मानेव कामयमानाः । किं कुर्वंतः । अह्रयमह्रियमाणमक्षीणमलज्जावह वा राधो धनं हविर्लक्षणं ददतो यजंत इत्यर्थः । अर्थिभ्योऽक्षीणं ददतो वा । ये त्वा हविर्ददतः स्तुवंति ते सर्वेऽप्यस्मदर्थमेव फलं धारयंति । स्तुवतीत्यर्थः । अथवा यद्धीत्यत्र यद्यपीति व्याख्येय । तस्मिन पक्ष उत्तरवाक्ये तथापीत्यध्याहार्यं । अवशिष्टं समान ॥ ॥२१॥

ऐषु धा वीरवद्यश उषो मघोनि सूरिषु ।
ये नो राधांस्यह्रया मघवानो अरासत सुजाते अश्वसूनृते ॥६॥
आ । एषु । धाः । वीरऽवंत् । यशः । उषः । मघोनि । सूरिषु ।
ये । नः । राधांसि । अह्रया । मघऽवानः । अरासत । सुऽजाते । अश्वऽसूनृते ॥६॥

हे उषो देवि मघोनि मघवति त्वमेषु सूरिषु स्तोतृषु वा वीरवद्यशो वीरैः पुत्रादिभिरुपेतमन्न यशो वा आ धाः । आधेहि । आदेहि । आनय । ये मघवानो धनवंतो सूरयो नोऽस्मभ्य तव स्तोतृभ्यो राधांसि धनान्यह्रयाक्षीणान्यरासत दद्युः तेष्वित्यर्थः ॥

तेभ्यो द्युम्नं बृहद्यश उषो मघोन्या वह ।
ये नो राधांस्यश्व्या गव्या भजंत सूरयः सुजाते अश्वसूनृते ॥७॥
तेभ्यः । द्युम्नं । बृहत् । यशः । उषः । मघोनि । आ । वह ।
ये । नः । राधांसि । अश्व्या । गव्या । भजंत । सूरयः । सुऽजाते । अश्वऽसूनृते ॥७॥

हे उषो मघोनि त्व तेभ्यो द्युम्न द्योतमानं हिरण्यादिरूपं धनं बृहद्यशो महदन्नं महतीं कीर्तिं वा तेभ्यो यजमानेभ्य आ वह। य आढ्या नोऽस्मभ्यं राधांसि धनान्यश्व्यान्यश्वैर्युक्तानि गव्या गोभिर्युक्तानि गोसमूहानश्वसमूहान च भजत भजेरन ददुः सूरयो दातारः ॥

उत नो गोमतीरिष आ वहा दुहितर्दिवः ।
साकं सूर्यस्य रश्मिभिः शुक्रैः शोचद्भिरर्चिभिः सुजाते अश्वसूनृते ॥८॥
उत । नः । गोऽमतीः । इषः । आ । वह । दुहितः । दिवः ।
साकं । सूर्यस्य । रश्मिऽभिः । शुक्रैः । शोचत्ऽभिः । अर्चिऽभिः । सुऽजाते । अश्वऽसूनृते ॥८॥

उतापि च नोऽस्मभ्यं गोमतीर्गोभिरुपेतानीषोऽन्नान्या वह आनय हे दिवो दुहितरुषः। कदा। सूर्यस्य रश्मिभिः साकं शोचद्भिर्दीपयद्भिः शुक्रैर्निर्मलैरर्चिभिरग्नेस्तेजोभिश्च साकं। सूर्योदयकालेऽग्नीधनकाले चेत्यर्थः ॥

व्युच्छा दुहितर्दिवो मा चिरं तनुथा अपः ।
नेत्त्वा स्तेनं यथा रिपुं तपाति सूरो अर्चिषा सुजाते अश्वसूनृते ॥९॥
वि । उच्छ । दुहितः । दिवः । मा । चिरं । तनुथाः । अपः ।
न । इत् । त्वा । स्तेनं । यथा । रिपुं । तपाति । सूरः । अर्चिषा । सुऽजाते । अश्वऽसूनृते ॥९॥

हे दिवो दुहितरुषः त्व व्युच्छ। विभातं कुरु। अपोऽस्मदीयं कर्म प्रति चिर विलंब मा तनुथाः। त्वा त्वां रिपुं स्तेनं यथा संतापयति राजादिस्तद्वत्सूरः सूर्योऽर्चिषा तेजसा नेत नैव तपाति। तप्यात। शीघ्र नो देहीत्यर्थः ॥

एतावद्वेदुषस्त्वं भूयो वा दातुमर्हसि ।
या स्तोतृभ्यो विभावर्युच्छन्ती न प्रमीयसे सुजाते अश्वसूनृते ॥१०॥
एतावत् । वा । इत् । उषः । त्वं । भूयः । वा । दातुं । अर्हसि ।
या । स्तोतृऽभ्यः । विभाऽवरि । उच्छन्ती । न । प्रऽमीयसे । सुऽजाते । अश्वऽसूनृते ॥१०॥

हे उषस्त्वमस्मभ्यं वाथवा दित्सित किमेतावदेव। इच्छब्द एवकारार्थः। अस्मिन सूक्ते प्रार्थितमेवेत्यर्थः। अथवा भूयो दातुमर्हसि। अप्रार्थितमपि। यद्दातव्यमस्ति तत्सर्वं देहीत्यर्थः। हे विभावर्युषो या त्व स्तोतृभ्यस्तेषां लौकिकवैदिकव्यवहारार्थं व्युच्छन्ती तमो विवासयंती न प्रमीयसे। न हंसि। न क्रुध्यसीत्यर्थः। सा त्वं दातुमर्हसीति ॥ मीञ् हिंसायामित्यस्मात श्नाप्स्थाने व्यत्ययेन श्यन ॥ ॥२२॥

द्युतद्यामानमिति षड्टचमष्टम सूक्तं। तत्रानुक्रमणिका। द्युतद्यामानं षडिति। सत्यश्रवा ऋषिः। अनुक्तत्वात त्रिष्टुप। उषस्य त्वित्युक्तत्वादुषा देवता ॥ प्रातरनुवाक उषस्ये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चेदं सूक्तं। सूत्रित च। द्युतद्यामानमुषो वाजेन। आ० ४ १४.। इति ॥

द्युतद्यामानं बृहतीमृतेन ऋतावरीमरुणप्सुं विभातीं ।
देवीमुषसं स्वरावहन्तीं प्रति विप्रासो मतिभिर्जरन्ते ॥१॥
द्युतत्ऽयामानं । बृहतीं । ऋतेन । ऋतऽवरीं । अरुणऽप्सुं । विऽभातीं ।
देवीं । उषसं । स्वः । आऽवहन्तीं । प्रति । विप्रासः । मतिऽभिः । जरन्ते ॥१॥

द्युतद्यामानं दीप्तरथां बृहतीं महतीमृतेन सत्येन यज्ञेन वर्तावरीमृतवतीमरुणप्सुमरुणरूपां विभातीं व्युच्छंतीं देवीं द्योतमानामुषसं स्वरावहंतीं सूर्यं गच्छंतीं । एवं महानुभावामुषसं विप्रासो मेधाविन ऋत्विजो मतिभिः स्तुतिभिः प्रति जरंते । स्तुवंति ॥

एषा जनं दर्शता बोधयंती सुगान्पथः कृण्वती यात्यग्रे ।
बृहद्रथा बृहती विश्वमिन्वोषा ज्योतिर्यच्छत्यग्रे अह्नां ॥२॥
एषा । जनं । दर्शता । बोधयंती । सुऽगान । पथः । कृण्वती । याति । अग्रे ।
बृहत्ऽरथा । बृहती । विश्वंऽइन्वा । उषाः । ज्योतिः । यच्छति । अग्रे । अह्नां ॥२॥

दर्शता दर्शनीयैषोषा बोधयती । कं । जनं । प्रसुप्तमित्यर्थः । पथः सुगान सुगमनान कृण्वत्ययं सूर्यस्य पुरस्ताद्याति । गच्छति । कीदृश्युषाः । बृहद्रथा प्रभूतरथा बृहती महती विश्वमिन्वा विश्व व्याप्नुवाना विश्व तर्पणा वा । ईदृश्युषा अह्नामग्रे ज्योतिस्तेजो यच्छति ॥

एषा गोभिररुणेभिर्युजानास्रेधंती रयिमप्रायु चक्रे ।
पथो रदंती सुविताय देवी पुरुष्टुता विश्ववारा वि भाति ॥३॥
एषा । गोभिः । अरुणेभिः । युजाना । अस्रेधंती । रयिं । अप्रऽआयु । चक्रे ।
पथः । रदंती । सुविताय । देवी । पुरुऽस्तुता । विश्वऽवारा । वि । भाति ॥३॥

एषोषा अरुणेभिररुणवर्णैर्गोभिर्बलीवर्दै रथं युजाना योजयत्यस्रेधत्यशुष्यत्यक्षीणा वा । किं । रयिं धनमप्रायुप्रगंतृ अविचलितं चक्रे । करोति । किं कुर्वती । पथो मार्गान रदती प्रकाशयती । किमर्थं । सुविताय सुष्ठु गमनाय देवी द्योतमाना पुरुष्टुता बहुभिः स्तुता विश्ववारा सर्ववरणीया वि भाति । प्रकाशं करोति ॥

एषा व्येनी भवति द्विबर्हा आविष्कृण्वाना तन्वं पुरस्तात ।
ऋतस्य पंथामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥४॥
एषा । विऽएनी । भवति । द्विऽबर्हाः । आविःऽकृण्वाना । तन्वं । पुरस्तात ।
ऋतस्य । पंथां । अनु । एति । साधु । प्रजानतीऽइव । न । दिशः । मिनाति ॥४॥

एषोषा व्येनी भवति विशेषेण श्वेता भवति द्विबर्हा द्वयोः प्रथममध्यमयोः परिवृढोषाः पश्चात्तन्वं स्वीयां तनूमाविष्कृण्वाना प्रकटीकुर्वती । कुत्र । पुरस्तात पूर्वस्यां दिशि । किंच ऋतस्यादित्यस्य पंथां पंथान साधु सम्यगन्वेति । किंच प्रजानतीव विश्वं प्रज्ञापयती । इवेति सम्प्रत्यर्थे । न दिशो मिनाति । न हिनस्ति । प्रत्युत दिशः प्रकाशयति । अथवा प्रजानतीवानुगतव्यमिति प्रकर्षेणावगच्छंती ऋतस्य पंथामन्वेति ॥

एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात ।
अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात ॥५॥
एषा । शुभ्रा । न । तन्वः । विदाना । ऊर्ध्वाऽइव । स्नाती । दृशये । नः । अस्थात ।
अप । द्वेषः । बाधमाना । तमांसि । उषाः । दिवः । दुहिता । ज्योतिषा । आ । अगात ॥५॥

एषोषाः शुभ्रा न शुभ्रवर्णा निर्मला स्वलंकृता योषिदिव तन्वोऽङ्गानि विदाना प्रज्ञापयती स्नाती स्नानं कुर्वाणोर्ध्वेवोन्नतेव स्नानादुत्तिष्ठंतीव नोऽस्मदर्थमस्माकं पुरतो वा दृशये सर्वेषां दर्शनायोदस्थात । पूर्वस्यां

दिश्युत्तिष्ठति। किं कुर्वती। द्विषो द्वेष्याणि तमांस्यप बाधमाना दिवो दुहितोषा ज्योतिषा तेजसा सहागात्। आगच्छति॥

एषा प्रतीची दुहिता दिवो नॄन्योषेव भद्रा नि रिणीते अप्सः।
व्यूर्ण्वती दाशुषे वार्याणि पुनर्ज्योतिर्युवतिः पूर्वथाकः॥६॥
एषा। प्रतीची। दुहिता। दिवः। नॄन्। योषाऽइव। भद्रा। नि। रिणीते। अप्सः।
विऽऊर्ण्वती। दाशुषे। वार्याणि। पुनः। ज्योतिः। युवतिः। पूर्वऽथा। अकरित्यकः॥६॥

एषोषाः प्रतीच्यभिमुखा सती दिवो दुहिता नॄन्सर्वान्प्राणिनः प्रति भद्रा योषेव कल्याणवेषा योषि-दिवाप्सो रूप नि रिणीते। प्रेरयति। किंच दाशुषे हविर्दात्रे यजमानाय वार्याणि वरणीयानि धनानि व्यूर्ण्वती प्रयच्छती युवतिर्नित्ययौवना सर्वत्र मिश्रयती वा पुनरद्यापि पूर्वथा पूर्वमिव ज्योतिस्तेजोऽकः। करोति॥ ॥२३॥

युंजते मन इति पंचर्चं नवमं सूक्तं। अत्रेयमनुक्रमणिका। युंजते पंच श्यावाश्वः सावित्रं तु जागतमिति। श्यावाश्वो नामात्रेय ऋषिः। जगती छंदः। सविता देवता॥ पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदं। सूत्रितं च। युंजते मन इहेह व इति चतस्रः। आ० ७.५.। इति॥ आद्या यावस्तोत्रेऽपि। सूत्रितं च। युंजते मन उत युंजते धिय आ तू न इंद्र क्षुमंतं। आ० ५.१२। इति॥

युंजते मन उत युंजते धियो विप्रा विप्रस्य बृहतो विपश्चितः।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः॥१॥
युंजते। मनः। उत। युंजते। धियः। विप्राः। विप्रस्य। बृहतः। विपःऽचितः।
वि। होत्राः। दधे। वयुनऽवित्। एकः। इत्। मही। देवस्य। सवितुः। परिऽस्तुतिः॥१॥

विप्रा मेधाविन ऋत्विग्यजमाना मनः स्वीयं सर्वेषु कर्मसु युंजते। योजयंति। सवित्रनुग्रहाय संकल्पं कुर्वतीत्यर्थः। उतापि च धियः कर्माण्यपि युंजते। प्रायुंजते। कस्यानुज्ञयेत्युच्यते। विप्रस्य मेधाविनो बृहतो महतो विपश्चितः स्तुत्यस्य ज्ञानवतो वा सवितुरनुज्ञयेति। सविता वै प्रसवानामीश इति हि श्रुतिः। स एव सविता होत्राः सप्त होत्रकाणामुचिताः क्रिया वयुनावित्। वयुनमिति प्रज्ञानाम। तत्तदनुष्ठानविषयप्रज्ञा-वेत्तैक इत एक एव वि दधे। करोति। पृथक् पृथगवधारयति। किंच तस्य सवितुर्देवस्य परिष्टुतिः स्तुतिर्मही महत्यतिप्रभूता। स्तुत्यगोचरेत्यर्थः॥

हविर्धानप्रवर्तने रराट्यामवनद्धायां विश्वा रूपाणीत्येषानुवचनीया। सूत्रितं च। विश्वा रूपाणि प्रति मुंचते कविरिति व्यवस्तायां। आ० ४.९.। इति॥

विश्वा रूपाणि प्रति मुंचते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे।
वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति॥२॥
विश्वा। रूपाणि। प्रति। मुंचते। कविः। प्र। असावीत्। भद्रं। द्विऽपदे। चतुःऽपदे।
वि। नाकं। अख्यत्। सविता। वरेण्यः। अनु। प्रऽयानं। उषसः। वि। राजति॥२॥

कविर्मेधावी सविता विश्वा सर्वाणि रूपाण्यात्मनि प्रति मुंचते। बध्नाति। धारयति। किंच भद्रं कल्याणं गमनादिविषयं प्रासावीत्। अनुजानाति। कस्मै। द्विपदे मनुष्याय चतुष्पदे गवाश्वादिकाय। किंच सविता

सर्वस्य प्रेरको देवो वरेण्यो वरणीयः सन् व्यख्यत् । ख्यापयति । प्रकाशयति । किं । नाकं । नास्मिन्नकं दुःखम् स्तीति नाकः स्वर्गः । यजमानार्थं स्वर्गं प्रकाशयतीत्यर्थः । स देव उषसः प्रयाणमुदयमनु वि राजति । प्रकाशते । सवितुरुदयात्पूर्वं ह्युषा उदेति ॥

यस्य॑ प्र॒याण॒मन्व॒न्य इद्य॒युर्दे॒वा दे॒वस्य॑ महि॒मान॒मोज॑सा ।
यः पार्थि॑वानि विम॒मे स एत॑शो॒ रजां॑सि दे॒वः स॑वि॒ता म॑हित्व॒ना ॥ ३ ॥
यस्य॑ । प्र॒ऽयान॑म् । अनु॑ । अ॒न्ये । इत् । य॒युः । दे॒वाः । दे॒वस्य॑ । म॒हि॒मान॑म् । ओज॑सा ।
यः । पार्थि॑वानि । वि॒ऽम॒मे । सः । एत॑शः । रजां॑सि । दे॒वः । स॒वि॒ता । म॒हि॒ऽत्व॒ना ॥ ३ ॥

अन्ये इद्देवा अन्येऽप्यग्न्यादयो यस्य देवस्य द्योतमानस्य सवितुः प्रयाणमनु ययुर्गच्छन्ति प्राप्नुवन्ति । किं । महिमानं महत्त्वं । सवितुरुदयाभावेऽग्निहोत्राद्यनिष्पत्तेस्तेषां हविःस्तुत्याद्यभावात् । ओजसा बलेन च युक्ता भवन्ति । यः सविता पार्थिवानि रजांसि पृथिव्यादिलोकान्महित्वना स्वमहत्त्वेन विममे परिच्छिनत्ति स देव एतश एतवर्णः शुभ्रः शोभमानः सन् । राजत इति शेषः ॥ युवशा ताकुशोतेन । ऋग्वे॰ १ १६१ ७ । इत्यादिवदेतश इत्यादिशकारोपजनश्छान्दसः ॥

उ॒त या॑सि सवित॒स्त्रीणि॑ रोच॒नोत सूर्य॑स्य र॒श्मिभिः॒ सम॑च्यसि ।
उ॒त रात्री॑मुभ॒यतः॒ परी॑यस उ॒त मि॒त्रो भ॑वसि देव॒ धर्म॑भिः ॥ ४ ॥
उ॒त । या॒सि॒ । स॒वि॒त॒रिति॑ । त्रीणि॑ । रो॒च॒ना । उ॒त । सूर्य॑स्य । र॒श्मिऽभिः॑ । सम् । उ॒च्य॒सि॒ ।
उ॒त । रात्री॑म् । उ॒भ॒यतः॑ । परि॑ । ई॒य॒से॒ । उ॒त । मि॒त्रः । भ॒व॒सि॒ । दे॒व॒ । धर्म॑ऽभिः ॥ ४ ॥

हे सवितर्देव उतापि च त्रीणि रोचना रोचमानान्द्युलोकान्यासि । गच्छसि । तिस्रो दिवः पृथिवी । ऋग्वे॰ ४ ५३ ५ । इत्युक्तं । उतापि च सूर्यस्य रश्मिभिः समुच्यसि । संगच्छसि ॥ उत समवाय इत्यस्येदं रूपं ॥ उदयात्पूर्वभावी सवितोदयास्तमयवर्ती सूर्य इति । उतापि च रात्रीमुभयत उभयपार्श्वे परीयसे । परिगच्छसि । उतापि च हे देव सवितस्त्वं धर्मभिर्जगद्धारकैः कर्मभिर्मित्रो भवसि । मित्राख्यो देवो भवसि । अथवा प्रकाशादिप्रदानेन सखा भवसि सर्वजगतः ॥

उ॒तेशि॑षे प्रस॒वस्य॒ त्वमेक॒ इदु॒त पू॒षा भ॑वसि देव॒ याम॑भिः ।
उ॒तेदं विश्वं॒ भुव॑नं॒ वि रा॑जसि श्या॒वाश्व॑स्ते सवितः॒ स्तोम॑मानशे ॥ ५ ॥
उ॒त । ई॒शि॒षे॒ । प्र॒ऽस॒वस्य॑ । त्वम् । एकः॑ । इत् । उ॒त । पू॒षा । भ॒व॒सि॒ । दे॒व॒ । याम॑ऽभिः ।
उ॒त । इ॒दम् । विश्व॑म् । भुव॑नम् । वि । रा॒ज॒सि॒ । श्या॒व॒ऽअ॒श्वः । ते॒ । स॒वि॒त॒रिति॑ । स्तोम॑म् । आ॒न॒शे॒ ॥ ५ ॥

हे सवितस्त्वमेक इत एक एव प्रसवस्य सर्वकर्मानुज्ञाकरणस्येशिषे । समर्थो भवसि । ये लौकिकं गमनादिरूपं वैदिकमग्निहोत्रादिरूपं कर्मानुतिष्ठन्ति तेषां सर्वेषामनुज्ञातृत्वमेक एव प्रभवसि । उतापि च पूषा पोषको भवसि हे देव यामभिर्गमनैः । उतापि चेदं विश्वं भुवनं भूतजातं वि राजसि । ईशिषे धारयितुं । यस्माद्देव महानुभावस्तस्मात् हे सवितस्ते तुभ्यं श्यावाश्व ऋषिः स्तोमं स्तोत्रमानशे । व्याप्नोति । करोतीत्येवमात्मानं परोक्षतया निर्दिशन्नाह ॥ ॥ २४ ॥

तत्सवितुरिति नवर्चं दशमं सूक्तं श्यावाश्वस्यार्षं । अत्रेयमनुक्रमणिका । तत्सवितुर्नव गायत्रमाद्यानुष्टुबिति । अत्र प्रथमानुष्टुप् शिष्टा गायत्र्यः । सावित्रं त्वित्युक्तत्वात्सावित्रं ॥ अग्निष्टोमे वैश्वदेवशस्त्रस्यादावृचः प्रतिपत् अद्या

नो देवेत्यनुचरः। सूत्रितं च। तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ। आ० ५. १८। इति॥

तत्स॑वि॒तुर्वृ॑णीमहे व॒यं दे॒वस्य॒ भोज॑नं। श्रेष्ठं॑ सर्व॒धात॑मं॒ तुरं॒ भग॑स्य धीमहि ॥१॥

तत्। स॒वि॒तुः। वृ॒णी॒म॒हे॒। व॒यं। दे॒वस्य॑। भोज॑नं। श्रेष्ठं॑। स॒र्व॒ऽधात॑मं। तुरं॑। भग॑स्य। धी॒म॒हि॒ ॥१॥

तत प्राप्यत्वेन प्रसिद्धं भोजनं भोग्यं धनं वयं स्तोतारो वृणीमहे। प्रार्थयामः। कस्य धनं। सवितुः प्रेरकस्य देवस्य स्वभूतं। लब्ध्वा च श्रेष्ठं प्रशस्यं सर्वधातमं सर्वधातृतमं। सर्वभोगप्रदमित्यर्थः। तुरं शत्रूणां हिंसकं। धनेन शत्रून्हंतुं शक्यत्वात्। तादृशं धनं भगस्य भजनीयस्य सवितुरनुग्रहाद्धीमहि। धारयाम। उपभोगं करवामेत्यर्थः। अथवा धनं वृणीमहेऽर्थित्वाच्च लभेमहीति॥

अस्य॒ हि स्वय॑शस्तरं स॒वि॒तुः कच्च॒न प्रि॒यं। न मि॒नन्ति॑ स्व॒राज्यं॑ ॥२॥

अस्य॑। हि। स्वय॑शःऽतरं। स॒वि॒तुः। कत्। च॒न। प्रि॒यं। न। मि॒नन्ति॑। स्व॒ऽराज्यं॑ ॥२॥

अस्य सवितुः स्वयशस्तरं स्वयमसाधारणं यशो यस्यातिशयेन भवति तत्तादृशं प्रियं सर्वेषां प्रियभूतं स्वराज्यं स्वयमेव राजमानत्वमैश्वर्यं कच्चन केचिदप्यसुरादयो न मिनंति। न हिंसंति॥

स हि रत्ना॑नि दा॒शुषे॑ सु॒वाति॑ सवि॒ता भगः॑। तं भा॒गं चि॒त्रमी॑महे ॥३॥

सः। हि। रत्ना॑नि। दा॒शुषे॑। सु॒वाति॑। स॒वि॒ता। भगः॑। तं। भा॒गं। चि॒त्रं। ई॒म॒हे॒ ॥३॥

स हि स खलु सविता भगो भजनीयो देवो दाशुषे हविर्दात्रे मह्यं रत्नानि रमणीयानि धनानि सुवाति। प्रेरयति। प्रयच्छति। तं देवं भाग भजनीयं चित्रं चायनीयं धनमीमहे। याचामहे॥

अद्या न इति चतुर्थीपंचमीभ्यामनोज्ञस्वप्नदर्शने प्रत्यृचं जुहुयात्। अद्या नो देव सवितरिति द्वाभ्या। आ० गृ० ३. ६. ६.। इति हि सूत्रितं॥

अ॒द्या नो॑ देव सवितः प्र॒जाव॑त्सावीः॒ सौभ॑गं। परा॑ दुः॒ष्वप्न्यं॑ सुव ॥४॥

अ॒द्य। नः॒। दे॒व॒। स॒वि॒त॒रिति॑। प्र॒जाऽव॑त्। सा॒वीः॒। सौभ॑गं। परा॑। दुः॒ऽस्वप्न्यं॑। सु॒व॒ ॥४॥

हे सवितर्देव नोऽस्मभ्यमद्यास्मिन्यागदिने प्रजावत्पुत्राद्युपेतं सौभगं धनं सावीः। प्रेरय। दुःष्वप्न्यं दुःस्वप्नं दुःस्वप्नवद्दुःखकर दारिद्र्यं परा सुव। दूरं प्रेरय॥

विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑ सुव। यद्भ॒द्रं तन्न॒ आ सु॑व ॥५॥

विश्वा॑नि। दे॒व॒। स॒वि॒तः॒। दुः॒ऽइ॒तानि॑। परा॑। सु॒व॒। यत्। भ॒द्रं। तत्। नः॒। आ। सु॒व॒ ॥५॥

हे सवितर्देव त्वं विश्वानि दुरितानि परा सुव। यद्भद्रं प्रजापशुगृहादिकं तन्नोऽस्मभ्यमा सुव। अस्मदभिमुखं प्रेरय। प्रजा वै भद्रं पशवो भद्रं गृहं भद्रमिति हि श्रुतिः॥ ॥२५॥

अना॑गसो॒ अदि॑तये दे॒वस्य॑ सवि॒तुः स॒वे। विश्वा॑ वा॒मानि॑ धीमहि ॥६॥

अना॑गसः। अदि॑तये। दे॒वस्य॑। स॒वि॒तुः। स॒वे। विश्वा॑। वा॒मानि॑। धी॒म॒हि॒ ॥६॥

वयमनुष्ठातारः सवितुः प्रेरकस्य देवस्य सवेऽनुज्ञायां सत्यामदितयेऽखंडनीयायै देव्यै भूम्या अनागसः

स्याम। अनपराधिनो भवेम। भूम्यां हि पापाः संभवंति। अपगतेष्वागःसु विश्वा सर्वाणि वामानि वननीयानि धनानि धीमहि। धारयाम ॥

चातुर्मास्येषु वैश्वदेवे पर्वणि सावित्रस्य द्वादशकपालस्या विश्वदेवमित्यनुवाक्या। सूत्रितं च। आ विश्वदेवं सत्पतिं वाममद्य सवितः। आ॰ २ १६.। इति ॥ प्रायणीये एषैव सवितुरनुवाक्या। सूत्रितं च। आ विश्वदेवं सत्पतिं य इमा विश्वा जातानि। आ॰ ४ ३। इति ॥ देवसुवां हविःष्वेषैव सवितुरनुवाक्या। सूत्रितं च। आ विश्वदेवं सत्पतिं न प्रमिये सवितुर्दैव्यस्य तत। आ॰ ४. ११.। इति ॥

आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे। सत्यसवं सवितारं ॥७॥
आ। विश्वऽदेवं। सत्ऽपतिं। सुऽउक्तैः। अद्य। वृणीमहे। सत्यऽसवं। सवितारं ॥७॥

विश्वदेवं। विश्वे देवा यस्य वशे भवंति स तादृशं। स हि सर्वात्मत्वादिंद्रं मित्रं वरुणमग्निमाहुरित्यादिश्रुतेरितरेषां तद्विभूतित्वात्। सत्पतिं सतामनुष्ठातॄणां पालकं सत्यसवं सत्यानुज्ञं सवितारं देवमद्यास्मिन्यागदिने सूक्तैरा वृणीमहे। संभजामहे ॥

य इमे उभे अहनी पुर एत्यप्रयुच्छन्। स्वाधीर्देवः सविता ॥८॥
यः। इमे इति। उभे इति। अहनी इति। पुरः। एति। अप्रऽयुच्छन्। सुऽआधीः।
देवः। सविता ॥८॥

यः सविता देवः स्वाधीः शोभनाध्यानः सुकर्मा वा सन् इमे अहनी रात्र्यहनी तयोः पुरः पुरस्तादप्रयुच्छन् अप्रमाद्यन्नेति गच्छति तमा वृणीमह इति संबंधः ॥

प्रायणीये य इमा विश्वेति सवितुर्याज्या। सूत्रितं च। य इमा विश्वा जातानि सुत्रामाणं पृथिवीं द्याम नेहसं। आ॰ ४ ३.। इति ॥ अश्वमेधेऽश्वमुत्सृज्यानु सवनं सावित्रीष्टिः कार्या। तस्यामेषा माध्यंदिने सवनेऽनुवाक्या। सूत्रितं च। य इमा विश्वा जातान्या देवो यातु सविता सुरत्नः। आ॰ १० ६। इति ॥

य इमा विश्वा जातान्याश्रावयति श्लोकेन। प्र च सुवाति सविता ॥९॥
यः। इमा। विश्वा। जातानि। आऽश्रवयति। श्लोकेन। प्र। च। सुवाति। सविता ॥९॥

यो देव इमेमानि विश्वा सर्वाणि जातान्युत्पन्नान प्राणिनः। जंगमानित्यर्थः। तान् श्लोकेन यशसाश्रावयति। सर्वेऽप्यस्य स्तुतिं शृण्वतीत्यर्थः। अथवा गर्जनशब्देन सर्वाणीमान्युत्पन्नान्याश्रावयति वृष्ट्युन्मुखः सन्। किंच सविता प्र सुवाति प्रेरयति तं वृणीमह इत्यर्थः ॥ ॥२६॥

अच्छा वदेति दशर्चमेकादशं सूक्तं भौमस्यात्रेरार्षं। अत्रेयमनुक्रमणिका। अच्छ दशात्रिः पार्जन्यमुपाद्यास्तिस्रो जगत्य उपांत्यानुष्टुप्त्रिष्टुबिति। यत्पर्जन्येत्येषा नवम्यनुष्टुप् वि वृक्षानित्याद्यास्तिस्रो जगत्यः शिष्टाः षट् त्रिष्टुभः। पर्जन्यो देवता ॥ अनेन सूक्तेन प्रत्यृचं वा दिश उपस्थेयाः। सूत्रितं च। संस्थितायां सर्वा दिश उपतिष्ठेताच्छा वद तवसं गीर्भिराभिरिति चतसृभिः प्रत्यृचं सूक्तेन वा। आ॰ २ १३। इति ॥

अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास।
कनिक्रदद्वृषभो जीरदानू रेतो दधात्योषधीषु गर्भं ॥१॥
अच्छ। वद। तवसं। गीःऽभिः। आभिः। स्तुहि। पर्जन्यं। नमसा। आ। विवास।
कनिक्रदत्। वृषभः। जीरऽदानुः। रेतः। दधाति। ओषधीषु। गर्भं ॥१॥

हे स्तोतस्तवसं बलवंतं पर्जन्यमच्छाभिप्राप्य वद । प्रार्थय ॥ पर्जन्यशब्दो यास्केन बहुधा निरुक्तः । पर्जन्यस्तृपेराद्यंतविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानां । नि० १०. १० । इति ॥ आभिर्गीर्भिः स्तुतिवाग्भिः स्तुहि । नमसान्नेन हविर्लक्षणेन विवास । सर्वतः परिचर । यः पर्जन्यो वृषभोऽपां वर्षिता जीरदानुः क्षिप्रदानः कनिक्रदत् गर्जनशब्दं कुर्वन्नोषधीषु गर्भं गर्भस्थानीयं रेत उदकं दधाति स्थापयति तं स्तुहि ॥

वि वृक्षान् हंत्युत हंति रक्षसो विश्वं बिभाय भुवनं महावधात् ।
उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हंति दुष्कृतः ॥२॥
वि । वृक्षान् । हंति । उत । हंति । रक्षसः । विश्वं । बिभाय । भुवनं । महाऽवधात् ।
उत । अनागाः । ईषते । वृष्ण्यऽवतः । यत् । पर्जन्यः । स्तनयन् । हंति । दुःऽकृतः ॥२॥

अयं मंत्रो निरुक्ते स्पष्टं व्याख्यातः । तदेवात्र लिख्यते । पर्जन्यो विहंति वृक्षान्विहंति च रक्षांसि सर्वाणि चास्माद्भूतानि बिभ्यति महावधात् महान् ह्यस्य वधः । अप्यनपराधो भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन्हंति दुष्कृतः पापकृतः । नि० १०. ११ । इति ॥

रथीव कशयाश्वाँ अभिक्षिपन्नाविर्दूतान्कृणुते वर्ष्याँ३ अह ।
दूरात्सिंहस्य स्तनथा उदीरते यत्पर्जन्यः कृणुते वर्ष्यं१ नभः ॥३॥
रथीऽइव । कशया । अश्वान् । अभिऽक्षिपन् । आविः । दूतान् । कृणुते । वर्ष्यान् । अह ।
दूरात् । सिंहस्य । स्तनथाः । उत् । ईरते । यत् । पर्जन्यः । कृणुते । वर्ष्यं । नभः ॥३॥

रथीव रथस्वामीव । स यथा कशयाश्वानभिक्षिपन् दूतान् भटानाविष्करोति तद्वदसौ पर्जन्योऽपि कशयाश्वान्मेघानभिक्षिपन् अभिप्रेरयन् वर्ष्यान् वर्षकान् दूतान् दूतवद्वृष्टिप्रेरकान्मेघान् मरुतो वाविष्कृणुते । प्रकटयति । अहेति पूरणः । एवं सति सिंहस्य ॥ सहतेर्हिंसतेर्वा शब्दकर्मणः सिंहशब्दः ॥ अवर्षणेनाभिभवितुः शब्दयितुर्वा मेघस्य स्तनथा गर्जनशब्दा दूरादुदीरते । उद्गच्छंति । कदा । यद्यदा पर्जन्यो नभोंऽतरिक्षं वर्ष्यं वर्षोपेतं कृणुते करोति तदा ॥

प्र वाता इति चतुर्थी पर्जन्यस्य चरोर्याज्या । सूत्रितं च । प्र वाता वांति पतयंति विद्युत इत्यग्न्याधेयप्रभृति । आ० २. १५ । इति ॥

प्र वाता वांति पतयंति विद्युत उदोषधीर्जिहते पिन्वते स्वः ।
इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति ॥४॥
प्र । वाताः । वांति । पतयंति । विऽद्युतः । उत् । ओषधीः । जिहते । पिन्वते । स्व१रिति स्वः ।
इरा । विश्वस्मै । भुवनाय । जायते । यत् । पर्जन्यः । पृथिवीं । रेतसा । अवति ॥४॥

प्र वांति वाता वृष्ट्यर्थं । पतयंति गच्छंति समंतात्संचरंति विद्युतः । ओषधीरोषधय उज्जिहते । उद्गच्छंति । प्रवर्धंते । स्वरंतरिक्षं पिन्वते । क्षरति । इरा भूमिर्विश्वस्मै सर्वस्मै भुवनाय सर्वजगद्धिताय जायते । समर्था भवति । कदैवमिति । यद्यदा पर्जन्यो देवः पृथिवीं रेतसोदकेनावति रक्षति अभिगच्छति वा तदैव भवति ॥

यस्य व्रते पृथिवी नंनमीति यस्य व्रते शफवज्जर्भुरीति ।
यस्य व्रत ओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ ॥५॥

यस्य । व्रते । पृथिवी । नंनमीति । यस्य । व्रते । शफऽवंत् । जर्भुरीति ।
यस्य । व्रते । ओषधीः । विश्वऽरूपाः । सः । नः । पर्जन्य । महिं । शर्म । यच्छ ॥५॥

यस्य पर्जन्यस्य व्रते कर्मणि पृथिवी ननमीति अत्यर्थं नमति सर्वेषामधो भवति । यस्य व्रते शफवत् पादोपेतं गवादिकं जर्भुरीति भ्रियते पुष्यते गच्छतीति वा । यस्य व्रते कर्मण्योषधीरोषध्यो विश्वरूपा नानारूपा भवंति हे पर्जन्य स महांस्त्वं नोऽस्मभ्यं महि शर्म महत् सुखं यच्छ । प्रयच्छ ॥ ॥२७॥

दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः ।
अर्वाङेतेन स्तनयित्नुनेह्यपो निषिंचन्नसुरः पिता नः ॥६॥
दिवः । नः । वृष्टिं । मरुतः । ररीध्वं । प्र । पिन्वत । वृष्णः । अश्वस्य । धाराः ।
अर्वाङ् । एतेन । स्तनयित्नुना । आ । इहि । अपः । निऽसिंचन । असुरः । पिता । नः ॥६॥

हे मरुतो यूयं दिवोऽतरिक्षमकाशात् नोऽस्मदर्थं वृष्टिं ररीध्वं । दत्त । वृष्णो वर्षकस्याश्वस्य व्यापकस्य मेघस्य संबंधिन्यो धारा उदकधारा प्र पिन्वत । प्रक्षरत । हे पर्जन्य त्वमेतेन स्तनयित्नुना गर्जता मेघेन सहार्वाङ् अस्मदभिमुखमेहि । आगच्छ । किं कुर्वन् । अपोऽस्मासु निषिंचन् स देवोऽसुर उदकानां निरसिताऽपि सन् नोऽस्माकं पिता पालकश्च ॥

अभि क्रंद स्तनय गर्भमा धा उदन्वता परि दीया रथेन ।
दृतिं सु कर्ष विषितं न्यंचं समा भवंतूद्वतो निपादाः ॥७॥
अभि । क्रंद । स्तनयं । गर्भं । आ । धाः । उदनऽवता । परि । दीय । रथेन ।
दृतिं । सु । कर्ष । विऽसितं । न्यंचं । समाः । भवंतु । उतऽवतः । निऽपादाः ॥७॥

अभि सुस्थमभिमुखं क्रंद । शब्दय । तदेव पुनरुच्यते दार्ढ्याय । स्तनय । गर्ज । गर्भं गर्भस्थानीयमुदकमोषधीष्वा धाः । आधेहि । तदर्थमुदन्वतोदकवता रथेन परि दीय । परितो गच्छ । दृतिं दृतिवदुदकधारकं मेघं विषितं विशेषेण सितं बद्धं न्यंचं न्यक् अधोमुखं सु सुष्ठु कर्ष । आकर्ष वृष्ट्यर्थं । यद्वा । विषितं विमुक्तबंधनमेव कुर्व । एवं कृते उद्वत ऊर्ध्ववत उन्नतप्रदेशा निपादा न्यग्भूतपादा निकृष्टपादा वा निम्नोन्नतप्रदेशाः समा एकरूपा भवंतु । उदकपूर्णा भवंत्वित्यर्थः ॥

महांतं कोशमुदंचा नि षिंच स्यंदंतां कुल्या विषिताः पुरस्तात् ।
घृतेन द्यावापृथिवी व्युंधि सुप्रपाणं भवत्वघ्न्याभ्यः ॥८॥
महांतं । कोशं । उत् । अच । नि । सिंच । स्यंदंतां । कुल्याः । विऽसिताः । पुरस्तात् ।
घृतेनं । द्यावापृथिवी इति । वि । उंधि । सुऽप्रपानं । भवतु । अघ्न्याभ्यः ॥८॥

हे पर्जन्य त्वं महांतं प्रवृद्धं कोशं कोशस्थानीयं मेघमुदच । उद्गमय । उद्गमय वा । तथा कृत्वा नि षिंच । नीचैः चारय । कुल्या नद्यो विषिता विप्लुता सत्यः स्यंदतां प्रवहंतु पुरस्तात् पूर्वाभिमुखं । प्रायेण नद्यः प्राच्यः स्यंदंते । घृतेनोदकेन द्यावापृथिवी दिवं च पृथिवीं च व्युंधि । क्लेदयात्यधिकं । अघ्न्याभ्यो गोभ्यः सुप्रपाणं सुष्ठु प्रकर्षेण पातव्यमुदकं भवतु ॥

यत्पर्जन्य कनिक्रदत्स्तनयन् हंसि दुष्कृतः ।
प्रतीदं विश्वं मोदते यत्किं च पृथिव्यामधि ॥९॥
यत् । पर्जन्य । कनिक्रदत् । स्तनयन् । हंसि । दुःऽकृतः ।
प्रति । इदं । विश्वं । मोदते । यत् । किं । च । पृथिव्यां । अधि ॥९॥

हे पर्जन्य यद्यदा त्वं कनिक्रदत्यर्थं शब्दयन् स्तनयन् दुष्कृतः पापकृतो मेघान् हंसि विदारयसि तदा नीमिदं विश्वं जगत् प्रति मोदते । विश्वं विशेष्यते । यत्किंच पृथिव्यामधि भूम्यामधिष्ठितं यच्चराचरात्मकं तदिदं विश्वं मोदते । हृष्यति । वृष्टेः सर्वजगत्प्रीतिकारणत्वं प्रसिद्धं ॥

अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उं ।
अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषां ॥१०॥
अवर्षीः । वर्षं । उत् । ऊं इति । सु । गृभाय । अकः । धन्वानि । अतिऽएतवे । ऊं इति ।
अजीजनः । ओषधीः । भोजनाय । कं । उत । प्रऽजाभ्यः । अविदः । मनीषां ॥१०॥

इयमतिवृष्टिविमोचनी ॥ हे पर्जन्य त्वमवर्षीः । वृष्टवानसि । वर्षमुदु षू गृभाय । उत्कृष्टं सु सुष्ठु गृभाय । गृहाण । परिहरेत्यर्थः । धन्वानि निरुदकप्रदेशानकः । जलवतः कृतवानसि । किमर्थं । अत्येतवा उ । अतिक्रम्य गंतुं । ओषधीरजीजनः । उदपादयः । किमर्थः । भोजनाय धनाय भोगाय वा । कमित्ययं शिशिरं जीवनाय कं । नि० १. १०. । इतिवत्पादपूरणः । उतापि च प्रजाभ्यः सकाशात् मनीषां स्तुतिमविदः । प्राप्तवानसि ॥ ॥२८॥

बळित्थेति तृचात्मकं द्वादशं सूक्तं भौमस्यात्रेरार्षं पृथिवीदेवताकमानुष्टुभं । अनुक्रांतं च । बळित्था तृचं पार्थिवमानुष्टुभमिति ॥ सूक्तविनियोगो लैंगिकः । आद्या देवानां हविःषु पृथिव्या अनुवाक्या । बळित्था पर्वतानां दृळ्हा चिद्या वनस्पतीन् । आ० ६. १४. । इति हि सूत्रितं ॥ भूमिस्तोमे चैषा मरुत्वतीयशस्त्रे सूक्तमुखीया । आ० ९. ५. ॥

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥१॥
बट् । इत्था । पर्वतानां । खिद्रं । बिभर्षि । पृथिवि ।
प्र । या । भूमिं । प्रवत्वति । मह्ना । जिनोषि । महिनि ॥१॥

द्विरूपा पृथिवी चैषा प्रत्यक्षदेवतापि च । मध्यस्थाना देवतोक्ता सात्र संबोध्य वर्ण्यते ॥ हे पृथिवि प्रथनवति मध्यस्थानदेवते । त्वमित्थेत्थममुत्रांतरिक्षे वा बट् सत्यं पर्वतानां मेघानां वा खिद्रं खेदनं भेदनं बिभर्षि । धारयसि । हे महिनि महति हे प्रवत्वति प्रकर्षवति प्रवणोदकवति वा या त्वं भूमिं प्रत्यक्षां पृथिवीं मह्ना महत्त्वेन महतोद्केन वा प्र जिनोषि प्रकर्षेण प्रीणयसि ॥

स्तोमासस्त्वा विचारिणि प्रति ष्टोभंत्यक्तुभिः । प्र या वाजं न हेषंतं पेरुमस्यस्यर्जुनि ॥२॥
स्तोमासः । त्वा । विऽचारिणि । प्रति । स्तोभंति । अक्तुऽभिः । प्र । या । वाजं । न ।
हेषंतं । पेरुं । अस्यसि । अर्जुनि ॥२॥

हे विचारिणि विविधचरणशीले पृथिवि देवि त्वा त्वां स्तोमासः स्तोतारोऽक्तुभिर्गमनशीलैः स्तोत्रैः प्रति

ष्टोभंति। अभिष्टुवंति। किंच या त्वं हेषंतं शब्दयंतं वाजं न अश्वमिवोद्वृत्तं पेरुं पूरकं मेघं प्रास्यसि प्रक्षिपसि हे अर्जुनि शुभ्रवर्णे गमनशीले वा ॥

देवानां हविःषु दृळ्हा चिदिति पृथिव्या याज्या। एषैव भूमिस्तोमे निष्केवल्ये सूक्तमुखीया। सूत्रं तु पूर्वमेवोदाहृतं ॥

दृ॒ळ्हा चि॒द्या वन॒स्पती॑न्क्ष्म॒या दर्ध॑र्ष्योज॑सा।
यत्ते॑ अ॒भ्रस्य॑ वि॒द्युतो॑ दि॒वो वर्ष॑न्ति वृ॒ष्टयः॑ ॥३॥
दृ॒ळ्हा। चि॒त्। या। वन॒स्पती॑न्। क्ष्म॒या। दर्ध॑र्षि। ओज॑सा।
यत्। ते॒। अ॒भ्रस्य॑। वि॒ऽद्युतः॑। दि॒वः। वर्ष॑न्ति। वृ॒ष्टयः॑ ॥३॥

हे पृथिवि या त्वं दृळ्हा चित् ॥ सुपां सुलुगिति तृतीयाया आकारः ॥ दृढया क्ष्मया भूम्या सह वनस्पतीन् वृक्षानोजसा बलेन दर्धर्षि धारयसि। अथवा दृढेति विधेयविशेषणं। वनस्पतीन् दृढान् कृत्वा धारयसीत्यर्थः। यद्यस्मात्ते तव संबंधिनो वृष्टयो वर्षका मेघा विद्युतो विद्योतमानादभ्रस्य ॥ पंचम्यर्थे षष्ठी ॥ अभ्रादपां हर्तुर्दिवोऽन्तरिक्षादादित्याद्वा वर्षति। अथवा यद्यस्मात्ते तवाभ्रस्य मेघस्य वृष्टय उदकसंघाता विद्युतो विद्योतमानाया दिवः सकाशाद्वर्षति पतति ॥ ॥२९॥

प्र सम्राज इत्यष्टर्चं त्रयोदशं सूक्तमात्रेयस्यात्रेस्त्रैष्टुभं वारुणं। अनुक्रम्यते च। प्र सम्राजेऽष्टौ वारुणमिति। विनियोगो लैंगिकः ॥

प्र स॒म्राजे॑ बृ॒हद॑र्चा गभी॒रं ब्रह्म॑ प्रि॒यं वरु॑णाय श्रु॒ताय॑।
वि यो ज॒घान॑ शमि॒तेव॒ चर्मो॑प॒स्तिरे॑ पृथि॒वीं सूर्या॑य ॥१॥
प्र। स॒म्ऽराजे॑। बृ॒हत्। अ॒र्च॒। ग॒भी॒रम्। ब्रह्म॑। प्रि॒यम्। वरु॑णाय। श्रु॒ताय॑।
वि। यः। ज॒घान॑। श॒मि॒ताऽइ॑व। चर्म॑। उ॒प॒ऽस्तिरे॑। पृ॒थि॒वीम्। सूर्या॑य ॥१॥

ऋषिः स्वात्मानं संबोध्य ब्रवीति। हे अत्रे त्वं सम्राजे सम्यग्राजमानायेश्वराय श्रुताय सर्वत्र श्रूयमाणाय वरुणायोपद्रवस्य निवारकाय जनानामावरकायेतन्नामकाय देवाय बृहत् प्रभूतं गभीरं दूरवगाहं बहुर्थोपेतं प्रियं प्रियभूतं ब्रह्म स्तोत्ररूपं कर्म प्रार्च। प्रार्चय। प्रोच्चारयेत्यर्थः। यो वरुणः शमितेव चर्म शमिता पशुविशसनकर्ता यथोपस्तरणाय चर्म हंति तद्वत्पृथिवीं विस्तीर्णमंतरिक्षं ॥ तृतीयस्यां पृथिव्यामिति श्रुतेरंतरिक्षस्यापि पृथिवीशब्दवाच्यत्वं ॥ सूर्याय सूर्यस्योपस्तिरे आस्तरणाय वि जघान विस्तारयामास। विस्तृतं हि व्यवहारयोग्यं भवति तस्माद्व्यवहारायांतरिक्षं विस्तारितवान्। उरुं हि राजा वरुणश्चकार। ऋग्सं॰ १. २४. ८. इति ह्युक्तं ॥

वने॑षु॒ व्य१॑न्तरि॑क्षं ततान॒ वाज॒मर्व॑त्सु॒ पय॑ उ॒स्रिया॑सु।
हृ॒त्सु क्रतुं॒ वरु॑णो अ॒प्स्व१॑ग्निं दि॒वि सूर्य॑मदधा॒त्सोम॒मद्रौ॑ ॥२॥
वने॑षु। वि। अ॒न्तरि॑क्षम्। त॒ता॒न॒। वाज॑म्। अर्व॑त्ऽसु। पयः॑। उ॒स्रिया॑सु।
हृ॒त्ऽसु। क्रतु॑म्। वरु॑णः। अ॒प्ऽसु। अ॒ग्निम्। दि॒वि। सूर्य॑म्। अ॒द॒धा॒त्। सोम॑म्। अद्रौ॑ ॥२॥

अयं वरुणो वनेषु वृक्षाग्रेष्वंतरिक्षं वि ततान। विस्तारितवान्। तथा वाजसनेयकं। वनेषु हीदं वृक्षाग्रेष्वंतरिक्षं विततं तस्मादाह वनेषु व्यंतरिक्षं ततानेति। वाजं बलमर्वत्स्वश्वेषु वि ततान। पयः क्षीरमुस्रियासु गोषु। उस्रियेति गोनाम। उत्स्राविणोऽस्या भोगा इति तद्व्युत्पत्तिः। हृत्सु हृदयेषु क्रतुं कर्मसंकल्पं।

यद्धि मनसा ध्यायति तत्कर्मणा करोति । अप्सूदकेष्वग्निं वैद्युतमग्निं वा । सर्वत्र वि ततानेति संबंधः । किंच दिवि द्युलोके सूर्यमदधात् । स्थापितवान् । सोमं चाद्रौ पर्वतेऽदधात् ॥

नीचीनवारं वरुणः कवंधं प्र ससर्ज रोदसी अंतरिक्षं ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूमं ॥ ३ ॥

नीचीनऽवारं । वरुणः । कवंधं । प्र । ससर्ज । रोदसी इति । अंतरिक्षं ।
तेन । विश्वस्य । भुवनस्य । राजा । यवं । न । वृष्टिः । वि । उनत्ति । भूम ॥ ३ ॥

नीचीनवारमधोमुखबिलं प्र ससर्ज । कृतवान् । कं । कवंधं । कवनमुदकं । तद्धीयतेऽत्रेति कवंधो मेघः । तं तथाकरोत् । अथवा कवंधमुदकं । तदुदकं नीचीनवारं नीचीनं निर्गमनबिलं चकार । मेघं विदार्योदकमधोमुखं चकारेत्यर्थः । किं प्रतीत्युच्यते । रोदसी द्यावापृथिव्यावंतरिक्षं च प्रति । लोकत्रयहितार्थमित्यर्थः । तेनोदकेन विश्वस्य सर्वस्य भुवनस्य भूतजातस्य राजा स्वामी वरुणो भूम भूमिं व्युनत्ति । क्लेदयति । वृष्टिः सेक्ता पुमान्यवं न यवमिव यथान्यथा परिहाय सर्वत्र प्रसारयति तद्वद्भूमिं सर्वत्रोनत्ति । अथवा वृष्टिर्वरुण इति संबंधः । वर्षकः पर्जन्य इत्यर्थः । अस्मिन्पक्षे यवं पुरुष इवेति पुरुषशब्दोऽध्याहार्यः । अत्र नीचीनवारं वरुणः कवंधं । नि॰ १० ४ । इत्यादिनिरुक्तं द्रष्टव्यं ॥

उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित् ।
समभ्रेण वसत पर्वतासस्तविषीयंतः श्रथयंत वीराः ॥ ४ ॥

उनत्ति । भूमिं । पृथिवीं । उत । द्यां । यदा । दुग्धं । वरुणः । वष्टि । आत् । इत् ।
सं । अभ्रेण । वसत । पर्वतासः । तविषीऽयंतः । श्रथयंत । वीराः ॥ ४ ॥

वरुणो भूमिं पृथिवीं प्रथितमंतरिक्षं । अंतरिक्षस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुक्तं । उतापि च द्यां द्युलोकमुनत्ति । क्लेदयति । यदायं दुग्धमुदकपूरणं वष्टि कामयते । अथवा दुग्धमुदकं । तेन तत्कार्यमोषध्यादिकं लक्ष्यते । ओषध्यादयः प्रवर्धतामिति यदा कामयते आदिदनंतरमेव सं वसत । समाच्छादयति । कं । पर्वतासः पर्ववंतोऽद्रयः । केन । अभ्रेण मेघेन । किंच तविषीयंतो बलमिच्छंतो वीरा विशेषेण वृष्टेः प्रेरयितारो मरुतः श्रथयंत । श्रथयंति मेघान् ॥

इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचं ।
मानेनेव तस्थिवाँ अंतरिक्षे वि यो ममे पृथिवीं सूर्येण ॥ ५ ॥

इमां । ऊं इति । सु । आसुरस्य । श्रुतस्य । महीं । मायां । वरुणस्य । प्र । वोचं ।
मानेनऽइव । तस्थिऽवान् । अंतरिक्षे । वि । यः । ममे । पृथिवीं । सूर्येण ॥ ५ ॥

आसुरस्यासुरसंबंधिनः । असुराणामस्य च वध्यघातकभावः संबंधः । असुरहंतुरित्यर्थः । अथवासुरो मेघः । प्राणदानात्तत्संबंधिनः श्रुतस्य विश्रुतस्य महीं महतीमिमां मायां प्रज्ञां प्र वोचं । प्रब्रवीमि । केषा मायेति सोच्यते । यो वरुणोऽतरिक्षे तस्थिवान् तिष्ठन्मानेनेव दंडेनेव सूर्येण पृथिवीमंतरिक्षं वि ममे परिच्छिनत्ति तस्यैषा माया ॥ ॥ ३० ॥

इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष ।
एकं यदुद्ना न पृणंत्येनीरासिंचंतीरवनयः समुद्रं ॥ ६ ॥

इमां । ऊं इति । नु । कविऽतमस्य । मायां । महीं । देवस्य । नकिः । आ । दधर्ष ।
एकं । यत् । उद्ना । न । पृणंति । एनीः । आऽसिंचंतीः । अवनयः । समुद्रं ॥ ६ ॥

कवितमस्य प्रकृष्टप्रज्ञस्य देवस्य द्योतमानस्य स्तुत्यस्य वा वरुणस्येमां सर्वप्रसिद्धां महीं महतीं मायां प्रज्ञां नकिर्नैव दधर्ष । न हिनस्ति कश्चिदपि । ऊ न्विति पूरणौ । यद्यस्मादेकं समुद्रमुद्नोदकेन न पृणंति न पूरयंति । काः । एनीरेन्यः शुभ्रा गमनशीला वासिंचंतीरुदकमासिंचयंत्योऽवनयो नद्यः । बह्व्यो नद्यः सर्वदोदकेन पूरयंत्योऽपि नैकमपि समुद्रं पूरयंतीति । इदं वरुणस्य महत्कर्मेति । अत्रातिरिक्तविस्तारादिसमुद्रापूरणपर्यंतं कर्म परमेश्वरस्यैवोचितं न वरुणस्येति न वाच्यं तस्य वरुणादिरूपावस्थानात् । एष ब्रह्मेत्यादि श्रुतेः ॥

अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद्भ्रातरं वा ।
वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत् ॥ ७ ॥

अर्यम्यं । वरुण । मित्र्यं । वा । सखायं । वा । सदं । इत् । भ्रातरं । वा ।
वेशं । वा । नित्यं । वरुण । अरणं । वा । यत् । सीं । आगः । चकृम । शिश्रथः । तत् ॥ ७ ॥

हे वरुण अर्यम्यं । अर्यमैवार्यम्यः ॥ स्वार्थिको यत् । अंतेरिद रूप ॥ प्रदातारमित्यर्थः । अर्थेश्वरणात्मननास्त्र शास्तीत्यर्यमा गुरुः । तं । वा अथवा मित्र्यं ॥ त्रिमिदा स्नेहन इत्यस्मान्मित्रः । स्वार्थिको यत् ॥ अनुरक्तमित्यर्थः । वा अथवा सखायं समानख्यानं सदमित्सर्वदैव भ्रातरं वा । नित्यं निरंतरं वेशं निकटनिकेतनवर्तिनं वा । अरणं वा । अशब्दमित्यर्थः । अथवारणमदातारं वा नित्यं निरंतरं । एतान्प्रति यत्सीं यदेतदागोऽपराधं चकृम तच्छिश्रथः । अस्मत्तो विनाशय ॥

कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता वि ष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥ ८ ॥

कितवासः । यत् । रिरिपुः । न । दीवि । यत् । वा । घ । सत्यं । उत । यत् । न । विद्म ।
सर्वा । ता । वि । स्य । शिथिराऽइव । देव । अध । ते । स्याम । वरुण । प्रियासः ॥ ८ ॥

कितवासः कितवा द्यूतकृतः । किं तवास्ति सर्वं मया जितमिति वदतीति कितवः । न दीवि न देवने द्यूते यथा यद्रिरिपुर्लेपयंति पापमारोपयंति तथास्मासु दुष्टो मयि त्वमेतत्पापमकरोरित्याक्षिपंति ॥ अत्र पुरस्तादुपचारोऽपि नकार उपमार्थीयः ॥ वा अथवा । घेति पूरणः । यत्पापं सत्यमारोपमंतरेण कृतवंतः स्मः । उतापि च यत्कृतं एनः न विद्म न जानीमः ता तानि सर्वा सर्वाणि शिथिरेव शिथिलानि शिथिलबंधनानि फलानीव वि ष्य । विमोचय ॥ स्यतिरुपसृष्टो विमोचने ॥ हे देव अधानंतरं ते तव प्रियासः प्रियाः स्याम । भवेम ॥ ॥ ३१ ॥

इंद्राग्नी यमिति षड्चं चतुर्दशं सूक्तमत्रेरार्षमानुष्टुभमैंद्राग्नं । षष्ठी विराट्पूर्वा । आद्यौ दशकावष्टकाश्चेत्यनु॰ ९ ११ । इति परिभाषितत्वात् । तथा चानुक्रांतं । इंद्राग्नी षळैंद्राग्नमानुष्टुभं विराट्पूर्वांतमिति ॥ विनियोगो लैंगिकः ॥

इंद्राग्नी यमवथ उभा वाजेषु मर्त्यं । दृळ्हा चित्स प्र भेदति द्युम्ना वाणीरिव त्रितः ॥ १ ॥

इंद्राग्नी इति । यं । अवथः । उभा । वाजेषु । मर्त्यं । दृळ्हा । चित् । सः । प्र । भेदति ।
द्युम्ना । वाणीःऽइव । त्रितः ॥ १ ॥

हे इंद्राग्नी उभौभौ परस्पराविमुक्तौ युवां यं मर्त्यमवथो रक्षथो वाजेषु संग्रामेषु स मर्त्यो दृळ्हा चित् दृढान्यपि द्युम्ना द्योतमानानि धनानि शत्रुसंबंधीनि भेदति । भिनत्ति । चित् ऋषिर्वाणीरिव प्रतिवादिवाक्यानीव । अथवा त्रिषु स्थानेषु वर्तमानोऽग्निः शत्रूणां वाक्यानीव ॥

या पृतनासु दुष्टरा या वाजेषु श्रवाय्या । या पंच चर्षणीरभींद्राग्नी ता हवामहे ॥२॥

या । पृतनासु । दुस्तरा । या । वाजेषु । श्रवाय्या । या । पंच । चर्षणीः । अभि । इंद्राग्नी इति । ता । हवामहे ॥२॥

या याविंद्राग्नी पृतनासु दुष्टरा दुष्टरावनभिभाव्यौ । या यौ च वाजेषु संग्रामेष्वन्नेषु वा श्रवाय्या श्रवाय्यौ स्तुत्यौ । या यौ पंच चर्षणीः । चर्षणयो मनुष्याः । तानभि । रक्षत इति शेषः । ता तौ महानुभावौ हवामहे । स्तुमः ॥

तयोरिदमवच्छवस्तिग्मा दिद्युन्मघोनोः । प्रति द्रुणा गभस्त्योर्गवां वृत्रघ्न एषते ॥३॥

तयोः । इत् । अमऽवत् । शवः । तिग्मा । दिद्युत् । मघोनोः । प्रति । द्रुणा । गभस्त्योः । गवां । वृत्रऽघ्ने । आ । ईषते ॥३॥

अमवदभिभावुकं शवो बलं तयोरित् तयोरेव । मघोनोर्मघवतोरन्नवतोर्धनवतोर्वा तयोर्दिद्युत् वज्रं तिग्मा तीक्ष्णा वर्तते गभस्त्योर्हस्तयोः । एवभूतौ देवौ गवामुदकानां पणिभिरपहृतानां वा गवां लाभाय द्रुणा द्रुविकारेण गमनशीलेन वैकेन रथेन वृत्रघ्ने आवरकमेघहननाय तथाविधवृत्रासुरवधाय वा प्रतीषते । प्रतिगच्छतः ॥

ता वामेषे रथानामिंद्राग्नी हवामहे । पती तुरस्य राधसो विद्वांसा गिर्वणस्तमा ॥४॥

ता । वां । एषे । रथानां । इंद्राग्नी इति । हवामहे । पती इति । तुरस्य । राधसः । विद्वांसा । गिर्वणःऽतमा ॥४॥

हे देवौ ता तौ वक्ष्यमाणगुणौ वां युवां हवामहे । स्तुमः । किमर्थं । रथानामेषे युद्धे रथानां प्रेरणाय । कीदृशौ युवां । इंद्राग्नी इंद्रमग्निं च परस्परयुग्मभूतौ तुरस्य जंगमरूपस्य राधसो धनादिलक्षणस्य पती स्वामिनौ विद्वांसा सर्वज्ञौ गिर्वणस्तमा गीर्भिर्वननीयतमौ । ईदृशौ युवां हवामहे ॥

ता वृधंतावनु द्यून्मर्ताय देवावदभा । अर्हंता चित्पुरो दधेंऽशेव देवावर्वते ॥५॥

ता । वृधंता । अनु । द्यून् । मर्ताय । देवा । अदभा । अर्हंता । चित् । पुरः । दधे । अंशाऽइव । देवा । अर्वते ॥५॥

ता तावनु द्यून् प्रतिदिनं वृधंतौ वर्धमानौ । सर्वदा प्रवृद्धावित्यर्थः । वर्धने दृष्टांतः । मर्तेव मनुष्याविव । तौ यथा प्रतिदिनं वर्धेते । देवौ द्योतमानावदभावहिंस्यावर्हंता चित् प्रकर्षेण पूज्यौ । चिदिति पूजायां । तादृशौ महानुभावौ देवावर्वतेऽश्वलाभाय पुरो दधे पुरस्कुर्वे । अंशेव । अंशो नाम द्वादशादित्यमध्यवर्ती देवः । स भगस्याप्युपलक्षकः । अंशाविव । आदित्याविव । दीप्तावित्यर्थः ॥

एवेंद्राग्निभ्यामहावि हव्यं शूष्यं घृतं न पूतमद्रिभिः ।
ता सूरिषु श्रवो बृहद्रयिं गृणत्सु दिधृतमिषं गृणत्सु दिधृतं ॥६॥

एव। इंद्राग्निऽभ्यां। अहावि। हव्यं। शूष्यं। घृतं। न। पूतं। अद्रिऽभिः।
ता। सूरिषु। श्रवः। बृहत्। रयिं। गृणत्ऽसु। दिधृतं। इषं। गृणत्ऽसु। दिधृतं ॥६॥

एवैवमिदानीं क्रियमाणप्रकारेण। स्तुतिसाहित्येनेत्यर्थः। इंद्राग्निभ्यां हव्यं हविरहावि। परित्यक्तमासीत्। कीदृशं तत्। शूष्यं बलकरं। किमिव। अद्रिभिर्ग्रावभिः पूतमभिपूतं घृतं न सोमरसमिव। तद्यथा॰ युवाभ्यां प्रदीयते तद्वच्चरुपुरोडाशादिकमपि। ता तौ देवौ सूरिषु मेधाविष्वस्मासु बृहत् प्रभूतं श्रवोऽन्नं यशो वा रयिं धनं च दिधृतं। धारयतं। इषमन्नं गृणत्सु स्तुवत्सु दिधृतं। पुनरुक्तिरादरार्था ॥ ॥३०॥

प्र वो मह इति नवर्चं पंचदशं सूक्तमेवयामरुदाख्यस्यात्रेयस्य मुनेरार्षं मरुद्देवताकमतिजगतीछंदस्कं। तथा चानुक्रमणिका। प्र वो नवैवयामरुन्मारुतमतिजागतमिति ॥ दशरात्रे पंचमेऽहनि तृतीयसवने जागता॰ कशंस्त्र इदं सूक्तं। सूत्रितं च। एवयामरुदुक्थो वृषाकपिना। आ॰ ८ ४। इति ॥

प्र वो महे मतयो यंतु विष्णवे मरुत्वते गिरिजा एवयामरुत्।
प्र शर्धाय प्रयज्यवे सुखादये तवसे भंददिष्टये धुनिव्रताय शवसे ॥१॥
प्र। वः। महे। मतयः। यंतु। विष्णवे। मरुत्वते। गिरिऽजाः। एवयामरुत्।
प्र। शर्धाय। प्रऽयज्यवे। सुऽखादये। तवसे। भंदत्ऽइष्टये। धुनिऽव्रताय। शवसे ॥१॥

प्र यंतु प्रगच्छंतु गिरिजा वाचि निष्पन्ना मतयः स्तुतयः। कस्मै। वस्तुभ्यं ॥ वचनव्यत्ययः ॥ विष्णवे व्यापा॰ यिंद्राय विष्णवे॰वा मरुत्वते मरुद्भिस्तद्वते। कस्य स्तुतय इत्युच्यते। एवयामरुत एतन्नामकस्य ऋषेः ॥ षष्ठ्या लुक् ॥ अथवायमृषिर्गिरिजाः स्तुतेर्जनयिता भवति। उत्तरार्धं मरुत्स्तुतिः। किंच प्र यंतु स्तुतयः। कस्मै। शर्धाय बलाय मारुताय। इतरत्सर्वं बलविशेषणं। प्रयज्यवे प्रकर्षेण यष्टव्याय सुखादये शोभनाभरणाय। खादिरा॰ भरणविशेषः। हस्तेषु खादिश्च। ऋग्वे॰ १ १६८ ३। पत्सु खादयः। ऋग्वे॰ ५ ५४ ११। इति च श्रुतेः। तवसे बलवते भंददिष्टये। स्तुतिरूपेष्टिर्यस्य तद्भंददिष्टि। तस्मै धुनिव्रताय मेघानां चालनं कर्म यस्य तादृशाय शवसे गमनवते ॥

प्र ये जाता महिना ये च नु स्वयं प्र विद्मना ब्रुवत एवयामरुत्।
क्रत्वा तद्वो मरुतो नाधृषे शवो दाना मह्ना तदेषामधृष्टासो नाद्रयः ॥२॥
प्र। ये। जाताः। महिना। ये। च। नु। स्वयं। प्र। विद्मना। ब्रुवते। एवयामरुत्।
क्रत्वा। तत्। वः। मरुतः। न। आऽधृषे। शवः। दाना। मह्ना। तत्। एषां। अधृष्टासः।
न। अद्रयः ॥२॥

ये महिना महता विष्णुनेंद्रेण वा सह प्र जाताः प्रादुर्भूतास्तान्ब्रुवते। ये च नु क्षिप्रं स्वयमेव विद्मना यज्ञगमनविषयज्ञानेन सह प्र जाताः प्रादुर्भूतास्तान्मरुत एवयामरुद्ब्रुवते। स्तौति। प्रत्ययमाख्यातेन वा संबंधनीयः। ब्रुवत इति व्यत्ययेन बहुवचनं। एकवचने वा छांदसः शः। निघाताभावश्छांदसः ॥ अथ प्रत्य॰ क्षवादः। हे मरुतो वो युष्माकं तत्प्रसिद्धं शवो बलं क्रत्वा चालनादिरूपेण कर्मणा युक्तं नाधृषे। केनचिदप्या॰ धर्षणीयं न भवति। अन्येषामसुरादीनां क्रत्वा कर्मणा वाभिभाव्यं भवति ॥ छत्वार्थे केन ॥ किंचैषां वो तत् बलं दानाभिमतदानेन मह्ना महत्त्वेन चोपेतं। यूयं प्रबलाः। अधृष्टासोऽधर्षणीयाः। तत्र दृष्टांतः। अद्रयो न। ते यथाधृष्यास्तद्वद्यूयमपि ॥

प्र ये दिवो बृहतः शृण्विरे गिरा सुशुक्वानः सुभ्व एवयामरुत् ।
न येषामिरी सधस्थ ईष्ट आँ अग्नयो न स्वविद्युतः प्र स्यंद्रासो धुनीनां ॥३॥
प्र । ये । दिवः । बृहतः । शृण्विरे । गिरा । सुऽशुक्वानः । सुऽभ्वः । एवयामरुत् ।
न । येषां । इरी । सधऽस्थे । ईष्टे । आ । अग्नयः । न । स्वऽविद्युतः । प्र । स्यंद्रासः ।
धुनीनां ॥३॥

ये मरुतो बृहतो दिवो द्युलोकादागच्छंतः प्र शृण्विरे शृण्वंति तान्मरुतो गिरैवयामरुत्स्तुतवान् । कीदृशास्ते । शुशुक्वानो दीप्ताः सुभ्वः सुष्ठु भवंतः । येषां मरुता सधस्थे सहस्थाने स्वकीये निवासे तिष्ठतामिरीरिता प्रेरिता नेष्ट आ । नेशते च चालयितुं । आ इति चार्थे । अग्नयो न अग्नय इव स्वविद्युतः स्वयमेव विद्योतमाना धुनीना नदीनां स्यंद्रासो वर्षणेन चालयितारश्च ॥

स चक्रमे महतो निरुरुक्रमः समानस्मात्सदस एवयामरुत् ।
यदायुक्त त्मना स्वादधि ष्णुभिर्विष्पर्धसो विमहसो जिगाति शेवृधो नृभिः ॥४॥
स । चक्रमे । महतः । निः । उरुऽक्रमः । समानस्मात् । सदसः । एवयामरुत् ।
यदा । अयुक्त । त्मना । स्वात् । अधि । स्नुऽभिः । विऽस्पर्धसः । विऽमहसः ।
जिगाति । शेऽवृधः । नृऽभिः ॥४॥

स मरुद्गणो महतः प्रवृद्धात्समानस्मात्सर्वेषां साधारणात्सदसः स्थानादंतरिक्षादुरुक्रमो विस्तीर्णक्रमणः सन् निश्चक्रमे । निरगच्छत । एवयामरुदृषिर्यदा स्वात्स्वकीयस्थानात् । अधीति पंचम्यर्थानुवादी । त्मनात्मनैव स्नुभिर्गंतृभिर्नृभिः स्वनेतृभिरश्वैरयुक्त युक्तोऽभवदागमनप्रार्थनाय । अथ बहुवदुच्यते । तदानीं विस्पर्धसो विविधस्पर्धाः । अहं पुरतो गच्छाम्यहं पुरतो गच्छामीति तेषां स्पर्धा । अथवा विगतस्पर्धाः । न ह्येषां सार्धं स्पर्धकाः संति । विमहसो विशिष्टबलाः शेवृधः शेवस्य सुखस्य वर्धयितारो जिगाति । निर्गच्छंति ॥ व्यत्ययेनैकवचनं ॥

स्वनो न वोऽमवान्रेजयद्वृषा त्वेषो ययिस्तविष एवयामरुत् ।
येना सहंत ऋंजत स्वरोचिषः स्थारश्मानो हिरण्ययाः स्वायुधास इष्मिणः ॥५॥
स्वनः । न । वः । अमऽवान् । रेजयत् । वृषा । त्वेषः । ययिः । तविषः । एवयामरुत् ।
येन । सहंतः । ऋंजत । स्वऽरोचिषः । स्थाःऽरश्मानः । हिरण्ययाः । सुऽआयुधासः ।
इष्मिणः ॥५॥

हे मरुतो वो युष्माकं स्वनो वेगजनितः शब्दो न रेजयत न कंपयत्वेवयामरुतं मां ॥ सुपां सुलुगिति द्वितीयालुक् ॥ स्वनो विशेष्यते । अमवान् बलवान् वृषा वर्षिता वृष्टेस्त्वेषो दीप्तो ययिर्गंता तविषः प्रवृद्धः । येन स्वनेन सहंतः शत्रूनभिभवंतो यूयमृंजत । प्रसाधयथ ॥ लडर्थे लोट् ॥ कीदृशा यूयं । स्वरोचिषः स्वायत्तरश्मयः स्थारश्मानः स्थिररश्मयो हिरण्यया हिरण्याभरणाः स्वायुधासः स्वायत्तायुधा इष्मिणोऽन्नवंतो गमनवंतो वा ॥ ॥३३॥

अपारो वो महिमा वृद्धशवसस्त्वेषं शवोऽवत्वेवयामरुत् ।
स्यातारो हि प्रसितौ संदृशि स्थन ते नं उरुष्यता निदः शुशुक्वांसो नाग्नयः ॥ ६ ॥
अपारः । वः । महिमा । वृद्धऽशवसः । त्वेषं । शवः । अवतु । एवयामरुत् ।
स्यातारः । हि । प्रऽसितौ । संऽदृशि । स्थन । ते । नः । उरुष्यत । निदः । शुशुक्वांसः ।
न । अग्नयः ॥ ६ ॥

हे मरुतो वो युष्माकं महिमापारोऽनवधिकः । हे वृद्धशवसः प्रवृद्धबलास्त्वेषं दीप्तं शवो युष्माकं बलमवतु रक्षत्वेवयामरुत मां ॥ द्वितीयैकवचनस्य लुक् ॥ यूयं प्रसितौ प्रबलबंधने नियमनवति यज्ञे संदृशि संदर्शने निमित्ते स्यातारो हि स्थाननियमेन तिष्ठंतो भवथ खलु । ते नोऽस्मान्निदो निंदकाच्छत्रोः सकाशादुरुष्यत । रक्षत । अग्नय इव शुशुक्वांसो यूयमिति ॥

ते रुद्रासः सुमखा अग्नयो यथा तुविद्युम्ना अवंत्वेवयामरुत ।
दीर्घं पृथु पप्रथे सद्म पार्थिवं येषामज्मेष्वा महः शर्धांस्यद्भुतैनसां ॥ ७ ॥
ते । रुद्रासः । सुऽमखाः । अग्नयः । यथा । तुविऽद्युम्नाः । अवंतु । एवयामरुत ।
दीर्घं । पृथु । पप्रथे । सद्म । पार्थिवं । येषां । अज्मेषु । आ । महः । शर्धांसि ।
अद्भुतऽएनसां ॥ ७ ॥

हे मरुतो रुद्रासो रुद्रपुत्राः सुमखाः शोभनयज्ञा अग्नयो यथा अग्नय इव तुविद्युम्नाः प्रभूतदीप्तयः । अथवा अग्निसदृशास्तुविद्युम्नाः प्रभूतधना अवंतु रक्षंत्वेवयामरुदेतन्नामानमपि मां । पार्थिवं । पृथिव्यंतरिक्षं । तत्संबंधि दीर्घमायतं पृथु विस्तीर्णं सद्म सदनं पप्रथे । मरुद्भिः प्रथितमभूत । अद्भुतैनसामपापानां येषामज्मेषु गमनेषु महो महांति शर्धांसि बलान्यागच्छंतीति शेषः ॥

अद्वेषो नो मरुतो गातुमेतन श्रोता हवं जरितुरेवयामरुत ।
विष्णोर्महः समन्यवो युयोतन स्मद्रथ्यो३ न दंसनाप द्वेषांसि सनुतः ॥ ८ ॥
अद्वेषः । नः । मरुतः । गातुं । आ । इतन । श्रोत । हवं । जरितुः । एवयामरुत ।
विष्णोः । महः । सऽमन्यवः । युयोतन । स्मत् । रथ्यः । न । दंसना । अप । द्वेषांसि ।
सनुतरिति ॥ ८ ॥

हे मरुतो अद्वेषोऽद्वेषसो यूयं नोऽस्माकं गातुं गमनस्वभावं स्तोत्रं प्रत्येतन । आगच्छत । तदर्थं जरितुः स्तोतुरेवयामरुदेवयामरुतो मम हवं श्रोत । शृणुत । विष्णोर्व्यापकस्येंद्रस्य महो महतो हे समन्यवः समानयज्ञा यूयं स्मत । अयं प्रशस्तनाम । प्रशस्ता रथ्यो न रथिनो योद्धार इव । ते यथा शत्रूनपाकुर्वंति तद्वदस्माकं दंसना कर्मणा सनुतः । अंतर्हितनामैतत् । अंतर्हितान् द्वेषांसि द्वेष्टॄन् अप युयोतन । दूरं वियोजयत । पृथक्कुरुत ॥

अध्यायोपाकरणोत्सर्गयोर्विनियुक्ता । आ० गृ० ३. ५ ॥

गंता नो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्ष एवयामरुत ।
ज्येष्ठासो न पर्वतासो व्योमनि यूयं तस्य प्रचेतसः स्यात दुर्धर्तवो निदः ॥ ९ ॥

गंत । नः । यज्ञं । यज्ञियाः । सुऽशमि । श्रोत । हवं । अरक्षः । एवयामरुत् ।
ज्येष्ठासः । न । पर्वतासः । विऽओमनि । यूयं । तस्य । प्रऽचेतसः । स्यात । दुःऽधर्तवः ।
निदः ॥९॥

हे यज्ञिया मरुतो यूयं नोऽस्माकं यज्ञं गंत । आगच्छत । सुशमि शोभनकर्म यथा भवति तथा । सुकर्मत्वायेत्यर्थः । तदर्थं नो हवमस्मदीयमाह्वानं श्रोत । शृणुत । अरक्षो रक्षोवर्जिता यूयं ॥ लिंगवचनयोर्व्यत्ययः ॥ ज्येष्ठासो न ज्येष्ठा इव पर्वतासो विंध्यादय इवातिप्रवृद्धा व्योमन्यंतरिक्षे वर्तमानाः प्रचेतसो यूयं तस्य निदो निंदकस्य दुर्धर्तवो दुर्धराः स्यात । भवत ॥ ॥३४॥

॥ इति पंचमे मंडले षष्ठोऽनुवाकः समाप्तः चायं पंचमं मंडलं ॥

---

## ॥ अथ षष्ठं मंडलं ॥

भारद्वाजे षष्ठे मंडले षडनुवाकाः। तत्र प्रथमेऽनुवाके पंचदश सूक्तानि। तत्र त्वं ह्यग्न इति त्रयोदशर्चं प्रथमं सूक्तं। त्वं ह्यग्ने सप्तोनेति बार्हस्पत्यो भरद्वाजः षष्ठं मंडलमपश्यदित्यनुक्रांतत्वात् मंडलद्रष्टा स एव भरद्वाज ऋषिः। अनादेशपरिभाषया त्रिष्टुप्। मंडलादिपरिभाषयाग्निर्देवता॥ पशौ हविष्यवदीयमाने मैत्रावरुणेनानुवचनीयमिदं मनोतासूक्तं। सूत्रितं च। त्वं ह्यग्ने प्रथम इत्यन्वाह। आ० ३.६। इति॥ प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्येतदादिसूक्तषट्कं द्वितीयवर्जं। सूत्रितं च। त्वं ह्यग्ने प्रथम इति पंच द्वितीयमुद्धरेत्। आ० ४.१३। इति॥ आद्योपाकरणे विनियुक्ता। सूत्रं तु पूर्वं मत्र उक्तं॥

त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै॥१॥
त्वं। हि। अग्ने। प्रथमः। मनोता। अस्याः। धियः। अभवः। दस्म। होता।
त्वं। सीं। वृषन्। अकृणोः। दुस्तरीतु। सहः। विश्वस्मै। सहसे। सहध्यै॥१॥

हे अग्ने प्रथमो देवानां मध्ये प्रथमः प्रतमः प्रकृष्टतमः पूर्वभावी वा त्वं मनोता हि देवानां मनो यत्रोतं संबद्धं भवति तादृशो भवसि। हिशब्दोऽग्निः सर्वा मनोतास्तु मनोताः संगच्छंते। ऐ० ब्रा० २.१०। इत्यादिब्राह्मणप्रसिद्धिद्योतनार्थः। हे दस्म दर्शनीय अस्या धियोऽस्य कर्मणो होता देवानामाह्वाताभवः। भवसि। हे वृषन् कामानां वर्षितः त्वं सीं सर्वतो दुष्टरीतु दुर्हिंस्यमहिंस्यं सहो बलमकृणोः। अकरोः। किमर्थं। विश्वस्मै सहसे सर्वस्यापि बलवतः शत्रोः सहध्या अभिभवनाय॥

अधा होता न्यसीदो यजीयानिळस्पद इषयन्नीड्यः सन्।
तं त्वा नरः प्रथमं देवयंतो महो राये चितयंतो अनु ग्मन्॥२॥
अध। होता। नि। असीदः। यजीयान्। इळः। पदे। इषयन्। ईड्यः। सन्।
तं। त्वा। नरः। प्रथमं। देवऽयंतः। महः। राये। चितयंतः। अनु। ग्मन्॥२॥

अधाधुना हे अग्ने यजीयानतिशयेन यष्टा त्वं होता होमनिष्पादकः सन् इळः भूम्या वेदिलक्षणायाः पदे स्थाने न्यसीदः। निषण्णवानसि। किं कुर्वन्। इषयन् पशुपुरोडाशादिलक्षणमन्नमिच्छन् ईड्यः स्तुत्यः सन्। तं तादृशं त्वा त्वां प्रथममितरदेवताभ्यः पूर्वं देवयंतो देवं त्वामात्मन इच्छंतो नरो नेतारो मनुष्या ऋत्विग्यजमाना महो महते राये धनाय चितयंतो जानंतः स्तुत्या ज्ञापयंतो वा अनु ग्मन्। अन्वगच्छन् पूर्वं॥

वृतेव यंतं बहुभिर्वसव्यै३स्त्वे रयिं जागृवांसो अनु ग्मन्।
रुशंतमग्निं दर्शतं बृहंतं वपावंतं विश्वहा दीदिवांसं॥३॥
वृताऽइव। यंतं। बहुऽभिः। वसव्यैः। त्वे इति। रयिं। जागृऽवांसः। अनु। ग्मन्।
रुशंतं। अग्निं। दर्शतं। बृहंतं। वपाऽवंतं। विश्वहा। दीदिऽवांसं॥३॥

वृतेव मार्गेण। इवेति संप्रत्यर्थं। लोकद्वयमध्यवर्तिना मार्गेण बहुभिरनेकैर्वसव्यैर्वसुभिः॥ स्वार्थिकस्तद्धित प्रत्ययः॥ यजमानानां निवासयोग्यैर्वा सार्धं यंतं गच्छंतं त्वामनु ग्मन्। अनुगच्छंति। सभजंते यजमानाः।

कीदृशास्ते। त्वे त्वयि देवे रयिं धनं आशृण्वांसः। प्रयच्छंत इत्यर्थः। कीदृशं त्वामित्युच्यते। रुशंतं दीप्तवर्णमभिमंगनादिगुणविशिष्टं दर्शतं दर्शनीयं बृहंतं महांतं वपावंतं विश्वहा सर्वेषु कालेषु दीदिवांसं दीप्यमानं ॥

पदं देवस्य नमसा व्यंतः श्रवस्यवः श्रव आपन्नमृक्तं।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयंत संदृष्टौ ॥४॥
पदं। देवस्य। नमसा। व्यंतः। श्रवस्यवः। श्रवः। आपन्। अमृक्तं।
नामानि। चित्। दधिरे। यज्ञियानि। भद्रायां। ते। रणयंत। संऽदृष्टौ ॥४॥

देवस्य द्योतमानस्याग्नेः पदमाहवनीयस्थानं नमसा हविषा स्तोत्रेण वा व्यंतो गच्छंतः श्रवस्यवोऽन्नमिच्छंतः पूर्वे यजमानाः श्रवः सर्वत्र श्रूयमाणमन्नममृक्तमन्यैरपरिबाध्यमापन्। आप्नुवंति। हे अग्ने ते तव भद्रायां स्तुत्यायां संदृष्टौ निमित्तायां रणयंत। रमयंति। यज्ञियानि यज्ञयोग्यानि नामानि नमनीयानि वैश्वानरो जातवेदा इत्यादीनि दधिरे। धारयंति। अथवा नमनसाधनानि स्तोत्राणि दधिरे ॥

त्वां वर्धंति क्षितयः पृथिव्यां त्वां राय उभयासो जनानां।
त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणां ॥५॥
त्वां। वर्धंति। क्षितयः। पृथिव्यां। त्वां। रायः। उभयासः। जनानां।
त्वं। त्राता। तरणे। चेत्यः। भूः। पिता। माता। सदं। इत्। मानुषाणां ॥५॥

हे अग्ने त्वां क्षितयो मनुष्या ऋत्विजः पृथिव्यां वेदिलक्षणायां वर्धंति। वर्धयंति। उभयास उभयविधानि पश्वपशुरूपाणि जनानां यजमानानां संबंधीनि रायो धनान्यृत्विजोऽध्वर्य्वादयस्त्वां त्वामुद्दिश्य वर्धंति। अथवोभयविधानि धनानि गवादीनि जनानां पुत्रादीनामर्थाय प्राप्तुं त्वा वर्धंति। हे तरणे दुःखात्तारकाग्ने त्वं चेत्यो ज्ञातव्यः स्तुत्यः सन् त्राता रक्षिता भूः। भवसि। किंच मानुषाणां मनुष्याणां स्तोतॄणामस्माकं सदमित्सर्वदा पिता माता च मातापितृस्थानीयो भूः। भवसि ॥ ॥३५॥

सपर्येण्यः स प्रियो विक्ष्व१ग्निर्होता मंद्रो नि षसादा यजीयान्।
तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदेम ॥६॥
सपर्येण्यः। सः। प्रियः। विक्षु। अग्निः। होता। मंद्रः। नि। ससाद। यजीयान्।
तं। त्वा। वयं। दमे। आ। दीदिऽवांसं। उप। ज्ञुऽबाधः। नमसा। सदेम ॥६॥

सोऽग्निः सपर्येण्यः पूज्यः प्रियः कामानां पूरको विक्षु प्रजासु होता होमनिष्पादको मंद्रो मदनीयो यजीयानतिशयेनेतरदेवानां यष्टा यजनीयो वा। एवं महानुभावोऽग्निर्नि षसाद। निषण्णोऽभूत्। अथ प्रत्यक्षकृतः। तं त्वा तादृशं त्वा वयं यजमाना दमे गृहे दीदिवांसं दीप्यमानं ज्ञुबाधः जानुनी बाधयंतोऽवनतजानवः प्रणताः संतो नमसा स्तोत्रेणोप सदेम। आसादयेम। अथवोपासीदेमेत्येवमाशास्ते ॥

तं त्वा वयं सुध्यो३ नव्यमग्ने सुम्नायव ईमहे देवयंतः।
त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥७॥
तं। त्वा। वयं। सुऽध्यः। नव्यं। अग्ने। सुम्नऽयवः। ईमहे। देवऽयंतः।
त्वं। विशः। अनयः। दीद्यानः। दिवः। अग्ने। बृहता। रोचनेन ॥७॥

हे अग्ने तं तादृशं महानुभावं नव्यं स्तुत्यं त्वा त्वां सुध्यः शोभनबुद्धयः सुम्नायवः सुखमिच्छंतो देवयंतो देवं त्वामिच्छंतो वयमीमहे। याचामहे। स्तुम इत्यर्थः। हे अग्ने त्वं दीद्यानो दीप्यमानः सन्। केन। बृहता महता रोचनेन रोचमानेन तेजसा दीद्यानो विशः प्रजाः स्तोतृनस्मान् दिवः स्वर्गमनयः। अगमयः। रोचनेनादित्येन दिवमगमय इति वा संबंधः। आदित्यमार्गेणेत्यर्थः॥

विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनां।
प्रेतीषणिमिषयंतं पावकं राजंतमग्निं यजतं रयीणां॥८॥
विशां। कविं। विश्पतिं। शश्वतीनां। नि॒ऽतोशनं। वृषभं। चर्षणीनां।
प्रेतिऽइषणिं। इषयंतं। पावकं। राजंतं। अग्निं। यजतं। रयीणां॥८॥

शश्वतीनां नित्यानां विशामृत्विग्यजमानलक्षणानां विश्पतिं स्वामिनं कविं क्रांतदर्शिनं नितोशनं शत्रूणां हिंसकं वृषभं कामानां वर्षकं चर्षणीनां स्तोतृणां मनुष्याणां प्रेतीषणिं प्राप्तगमनमिषयंतमन्नं कुर्वंतं पावकं शोधकं राजंतं दीप्यमानं दीपयंतं वा रयीणां लाभाय यजतं यष्टव्यमग्निं स्तुम इति शेषः॥

सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिं।
य आहुतिं परि वेदा नमोभिर्विश्वेत्स वामा दधते त्वोतः॥९॥
सः। अग्ने। ईजे। शशमे। च। मर्तः। यः। ते। आनट्। सम्ऽइधा। हव्यऽदातिं।
यः। आऽहुतिं। परि। वेद। नमःऽभिः। विश्वा। इत्। सः। वामा। दधते। त्वाऽऊतः॥९॥

हे अग्ने त्वां स मर्तः स यजमान ईजे। यजते। शशमे च। स्तौति। शशमान इति स्तुतिकर्मसु पाठादिदमपि स्तुतिकर्म। यो यजमानस्ते तव समिधा सह हव्यदातिं हविषा दानमानट् करोति। किंच यो यजमानो नमोभिः स्तुतिभिराहुतिमाज्यादिलक्षणां परि वेद परितो वेत्ति। ददातीत्यर्थः। स यजमानस्त्वोतस्त्वया रक्षितः सन् विश्वेत् सर्वाणि वामा वननीयानि धनानि दधते। धारयति॥

अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः।
वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेम॥१०॥
अस्मै। ऊं इति। ते। महि। महे। विधेम। नमःऽभिः। अग्ने। सम्ऽइधा। उत। हव्यैः।
वेदी। सूनो इति। सहसः। गीःऽभिः। उक्थैः। आ। ते। भद्रायां। सुऽमतौ। यतेम॥१०॥

हे अग्ने महे महतेऽस्मै ते तुभ्यं महि महदत्यधिकं विधेम। परिचरेम। केनेत्युच्यते। नमोभिर्नमस्कारैः समिधा वा उतापि च हव्यैर्हविर्भिः। हे सहसः सूनो वेदी वेद्यां गीर्भिः स्तोत्रैरुक्थैः शस्त्रैश्च विधेमेति संबंधः। किंच ते तव भद्रायां स्तुत्यायां सुमतौ शोभनानुग्रहबुद्धावा यतेम। आगच्छेम। भवेमेत्यर्थः॥

आ यस्ततंथ रोदसी वि भासा श्रवोभिश्च श्रवस्य१स्तरुत्रः।
बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवद्भिरग्ने वितरं वि भाहि॥११॥
आ। यः। ततंथ। रोदसी इति। वि। भासा। श्रवःऽभिः। च। श्रवस्यः। तरुत्रः।
बृहत्ऽभिः। वाजैः। स्थविरेभिः। अस्मे इति। रेवत्ऽभिः। अग्ने। विऽतरं।
वि। भाहि॥११॥

हे अग्ने यस्त्वं रोदसी द्यावापृथिव्यौ भासा दीप्त्या व्या ततंथ व्यतनोः। किंच तरुत्रस्तारकस्त्वं श्रवोभिः स्तुतिभिः श्रवस्यश्च भवसि हे तादृशाग्ने बृहद्भिर्महद्भिर्वाजेरन्नैः स्थविरेभिः स्थविरैः स्थूलै रयिभी रयिमद्भिरस्मे अस्मदर्थं वितर विशिष्टतरं वि भाहि। विशेषेण दीप्यस्व ॥

नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः।
पूर्वीरिषो बृहतीरारेअघा अस्मे भद्रा सौश्रवसानि संतु ॥१२॥

नृऽवत्। वसो इति। सदं। इत। धेहि। अस्मे इति। भूरि। तोकाय। तनयाय। पश्वः।
पूर्वीः। इषः। बृहतीः। आरेऽअघाः। अस्मे इति। भद्रा। सौश्रवसानि। संतु ॥१२॥

हे वसो वासक धनवन्वाग्ने नृवत् मनुष्यैरुपेतं धनं सदमित्सर्वदास्मे अस्मासु धेहि। स्थापय। किंच भूरि प्रभूतान् पश्वः पशूंश्च धेहि। किमर्थं। तोकायास्मत्पुत्राय तनयाय तत्पुत्राय। किंच पूर्वीः पूरयित्र्यः कामानां बह्व्यो वा बृहतीर्महत्य आरेअघाः। आरे दूरेऽघानि यासु ताः। तादृश्य इष उक्तलक्षणान्यन्नानि भद्रा भद्राणि सौश्रवसानि सुश्रवस्त्वान्यस्मे अस्मासु संतु। भवतु ॥

पुरूण्यग्न इति त्रयोदश्यृचामंभरणीयेष्टावग्नेः सत्रवतोऽनुवाक्या। सूत्रितं च। पुरूण्यग्ने पुरुधा त्वाया स चित्र चित्र चितयंतमस्मे। आ॰ ४ १। इति ॥

पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते अश्यां।
पुरूणि हि त्वे पुरुवार संत्यग्ने वसु विधते राजनि त्वे ॥१३॥

पुरूणि। अग्ने। पुरुधा। त्वाऽया। वसूनि। राजन्। वसुता। ते। अश्यां।
पुरूणि। हि। त्वे इति। पुरुऽवार। संति। अग्ने। वसु। विधते। राजनि। त्वे इति ॥१३॥

हे अग्ने राजन् ते तव पुरूणि बहूनि पुरुधा गवाश्वादिरूपेण बहुप्रकाराणि वसूनि धनानि वसुता वसुतायै वसुमत्त्वायाश्यां। व्याप्नुयां भुंजीय वा ॥ अत्र भरतस्वामी वसुतात् इत्येकपदं समाम्नातं चकार भट्टभास्करमिश्रोऽप्येकपदं संवृतं चकार ॥ हे पुरुवार बहुभिर्वरणीयाग्ने राजनि राजमाने त्वे त्वयि पुरूणि बहूनि वसु वसूनि त्वं त्वा विधते परिचरते मह्यं दातव्यानि संति ॥ ॥३६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके चतुर्थोऽध्यायः समाप्तः ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथ पंचमोऽध्याय आरभ्यते ॥ षष्ठमंडलस्य षडनुवाकात्मकस्य प्रथमेऽनुवाके पंचदश सूक्तानि। तत्र त्वं हीत्येकादशर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षमाग्नेयं। अत्या षट्पंचाशदक्षरा शक्वर्यादितो दशानुष्टुभः। अनुक्रम्यते हि। त्वं ह्येकादशानुष्टुभं शक्वर्यंतमिति ॥ प्रातरनुवाक आग्नेये क्रतावानुष्टुभे छंदसीदं सूक्तमुत्तमावर्जं विनियुक्तं। सूत्र्यते हि। त्वं हि क्षैतवदिमा यो होता जनिष्ट। आ॰ ४ १३। इति ॥ आश्विनशस्त्रे चैतत् शंसनीयं प्रातरनुवाकन्यायेनेत्यतिदिष्टत्वात् ॥ आंगिरसां द्विरात्रे द्वितीयेऽहनीदमेव सूक्तमाज्यशस्त्रं। सूत्रितं च। त्वं हि क्षैतवदिति चाज्यं। आ॰ १० २। इति ॥

त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे । त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥१॥

त्वं । हि । क्षैतऽवत् । यशः । अग्ने । मित्रः । न । पत्यसे । त्वं । विऽचर्षणे । श्रवः । वसो इति । पुष्टिं । न । पुष्यसि ॥१॥

हे अग्ने त्वं हि त्वं खलु क्षैतवत् । क्षितिः क्षयोऽपचयः । तत्संबंधि क्षैतं शुष्कं काष्ठं । तद्युक्तं यशोऽन्नं हविर्लक्षणं पत्यसे । अभिपतसि । गच्छसि । तत्र दृष्टांतः । मित्रो न । अहरभिमानी देवो मित्रः । स इव । यद्वा यश इति गृहनाम । क्षैतवत् । क्षैतं निवासकं हविर्लक्षणमन्नं । तद्युक्तं यजमानगृहं मित्रभूतः पुरुष इवाभिपतसि । यद्वा पत्यतिरैश्वर्यकर्मा । ईदृशमन्नं पत्यसे । ईशिषे । अतः कारणात् हे विचर्षणे विशेषेण सर्वस्य द्रष्टर्वसो वासकाग्ने त्वं श्रवः श्रवणीयमन्नं यजमानगृहस्थं न । अत्र नशब्दश्चार्थे । अन्नकार्यभूतां पुष्टिं च पुष्यसि । वर्धयसि ॥

त्वां हि ष्मा चर्षणयो यज्ञेभिर्गीर्भिरीळते ।
त्वां वाजी यात्यवृको रजस्तूर्विश्वचर्षणिः ॥२॥

त्वां । हि । स्म । चर्षणयः । यज्ञेभिः । गीःऽभिः । ईळते ।
त्वां । वाजी । याति । अवृकः । रजःऽतूः । विश्वऽचर्षणिः ॥२॥

हे अग्ने त्वां हि स्म त्वामेव खलु चर्षणयो मनुष्या यज्ञेभिर्यज्ञसाधनैर्हविर्भिर्गीर्भिः स्तुतिभिरीळते । स्तुवंति । अपि च वाजी । वाजो गमनं । तद्वान् सूर्यस्त्वा याति । गच्छति । प्रविशतीत्यर्थः । तथा च श्रूयते । अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे इति । वाजिशब्दस्य सूर्यवाचकत्वेन क्वचित् श्रूयते । अग्निर्वायुः सूर्यस्ते वै वाजिनः । तै० ब्रा० १. ६. ३. ९ । इति वायुरग्निरादित्यो वाजीति च । कीदृशो वाजी । अवृको हिंसकरहितो रजस्तूः । उदकमत्र रज उच्यते । तस्य वृष्टिलक्षणस्य प्रेरयिता । यद्वा । रजसां लोकानां तरिता गंता विश्वचर्षणिः सर्वस्य द्रष्टा ॥

सजोषस्त्वा दिवो नरो यज्ञस्य केतुमिंधते ।
यद्ध स्य मानुषो जनः सुम्नायुर्जुह्वे अध्वरे ॥३॥

सऽजोषः । त्वा । दिवः । नरः । यज्ञस्य । केतुं । इंधते ।
यत् । ह । स्यः । मानुषः । जनः । सुम्नऽयुः । जुह्वे । अध्वरे ॥३॥

हे अग्ने सजोषः सजोषसः सह प्रीयमाणा दिवः स्तुतेर्नरो नेतार ऋत्विजो यज्ञस्य केतुं प्रज्ञापकं त्वा त्वामिंधते । समिद्धं कुर्वंति । कदेति चेदुच्यते । यत् यदा खलु स्य स मानुषो मनोरपत्यभूतो जनो जातो यजमानो होता वा सुम्नायुः सुम्नं सुखमात्मन इच्छन् अध्वरे हिंसाप्रत्यवायरहिते यज्ञे जुह्वे त्वामाह्वयति तदेत्यर्थः ॥

ऋधद्यस्ते सुदानवे धिया मर्तः शशमते ।
ऊती ष बृहतो दिवो द्विषो अंहो न तरति ॥४॥

ऋधत् । यः । ते । सुऽदानवे । धिया । मर्तः । शशमते ।
ऊती । सः । बृहतः । दिवः । द्विषः । अंहः । न । तरति ॥४॥

ऋधत् । स यजमान ऋध्नुयात् हे अग्ने सुदानवे शोभनदानाय तुभ्यं ॥ षष्ठ्यर्थे चतुर्थी ॥ तव सर्वाधिना

धिया कर्मणा यो मर्तो मरणधर्मा यजमानः शशमते शाम्यति। यद्वा। शमतिः स्तुतिकर्मा। त्वदर्थं कर्मणा युक्तः सन् स्तौति। स यजमानो बृहतो महतो दिवो दीप्तस्य तव संबंधिन्योती ऊत्या रक्षया द्विषो द्वेष्टूनंहो न आहननशीलं पापमिव तरति। अतिक्रामति॥

समिधा यस्त आहुतिं निशितिं मर्त्यो नशत्।
वयावंतं स पुष्यति क्षयमग्ने शतायुषं॥५॥
संऽइधा। यः। ते। आऽहुतिं। निऽशितिं। मर्त्यः। नशत्।
वयाऽवंतं। सः। पुष्यति। क्षयं। अग्ने। शतऽआयुषं॥५॥

हे अग्ने समिधा समिंधनहेतुभूतेनेध्मेन सह ते त्वदीयां निशितिं निशितां तनूकृतां मंत्रसंस्कृतामाहुतिं यो मर्त्यो मनुष्यो नशत् व्याप्नुयात्। नशतिर्व्याप्तिकर्मा। स मनुष्यो यजमानो वयावंतं। वयाः शाखाः पुत्रपौत्रादिलक्षणाः। तद्युक्तं शतायुषं बहुविधान्नं चिरकालजीवनं वा क्षयं गृहं पुष्यति। पोषयति। वर्धयति। तत्र चिरकालमवतिष्ठत इत्यर्थः॥ ॥१॥

त्वेषस्ते धूम ऋण्वति दिवि षञ्छुक्र आततः।
सूरो न हि द्युता त्वं कृपा पावक रोचसे॥६॥
त्वेषः। ते। धूमः। ऋण्वति। दिवि। सन्। शुक्रः। आऽततः।
सूरः। न। हि। द्युता। त्वं। कृपा। पावक। रोचसे॥६॥

हे अग्ने त्वेषो दीप्तस्य ते तव शुक्रो निर्मलः शुभ्रवर्णो वा धूमो दिव्यंतरिक्ष आततो विस्तीर्णः सन् ऋण्वति। मेघात्मना परिणतो गच्छति। अपि च हे पावक शोधकाग्ने सूरो न सूर्य इव कृपाभिमुखीकरणसमर्थया स्तुत्या स्तूयमानस्त्वं द्युता दीप्त्या रोचसे हि। दीप्यसे खलु॥

अधा हि विक्ष्वीड्योऽसि प्रियो नो अतिथिः।
रण्वः पुरीव जूर्यः सूनुर्न त्रययाय्यः॥७॥
अध। हि। विक्षु। ईड्यः। असि। प्रियः। नः। अतिथिः।
रण्वः। पुरिऽइव। जूर्यः। सूनुः। न। त्रययाय्यः॥७॥

अधापि च विक्षु प्रजासु हे अग्ने त्वमीड्यः स्तुत्योऽसि। भवसि। हि यस्मादर्थे। यस्मादेवं तस्मान्नोऽस्माकमतिथिः। लुप्तोपममेतत्। अतिथिरिव प्रियोऽसि। यद्वा। हविर्वहनाय सततगामी भूत्वास्माकं प्रियोऽसि। तथा पुरीव नगर्यां जूर्यो जीर्णो वृद्धो हितोपदेष्टा राजेव रण्वो रमणीयो गंतव्यो वा भवसि। तथा सूनुर्न पुत्र इव त्रययाय्यो यजमानैस्त्रातव्यः पालयितव्यो भवसि॥ त्रायतेरेतद्रूपं॥ यद्वैतत्सूनोर्विशेषणं। विद्यातपःकर्मलक्षणं त्रयं यातीति त्रययाय्यः॥ यातेरौणादिक आय्यप्रत्ययः। स्पृहयाय्य इति यथा। अथवा त्रययाय्यो जन्मत्रयं प्राप्तः। जन्मत्रयं स्मर्यते। मातुरग्रेऽधिजननं द्वितीयं मौंजिबंधनात्। तृतीयं यज्ञदीक्षाया इति जन्मत्रयं स्मृतं। मनु० २. १६९। इति। तादृशः पुत्र इति। रण्वो रमणीयोऽसि॥

क्रत्वा हि द्रोणे अज्यसेऽग्ने वाजी न कृत्व्यः।
परिज्मेव स्वधा गयोऽत्यो न ह्वार्यः शिशुः॥८॥

क्रत्वा । हि । द्रोणे । अज्यसे । अग्ने । वाजी । न । कृत्व्यः ।
परिज्माऽइव । स्वधा । गयः । अत्यः । न । ह्वार्यः । शिशुः ॥ ८ ॥

हे अग्ने क्रत्वा कर्मणा मथनरूपेण द्रोणे द्रुमे काष्ठेऽरण्यां विद्यमानस्त्वमज्यसे हि । व्यज्यसे खलु । तथा वाजी न वेजनवानश्व इव कृत्व्यः । क्रत्वीति कर्मनाम । हविर्वहनादीना कर्मणा कर्ता । स यथा पुरुषं वहति तद्वद्धविर्वहनमपेरश्वसादृश्यं । तथा परिज्मेव परितः सर्वत्र गता वायुरिव दावानलादिरूपेण सर्वत्र गता त्वं स्वधा । अन्ननामैतत । अन्नं गयो गृहं च भवसि । उभयोर्दातेत्यर्थः । अपि च शिशुर्जातमात्रो बालोऽपि त्वमत्यो न सततगामी जात्यश्व इव ह्वार्यः कुटिलमितस्ततो गतासि ॥ ह्रृ कौटिल्य इत्यस्यैतद्रूप ॥

कारीर्यामग्नेर्धामच्छदो वैकल्पिक्यनुवाक्या त्वं त्येति । सूत्रितं च । त्वं त्या चिदच्युता धामन्ते विश्वं भुवनमधिश्रितं । आ॰ २ १३ । इति ॥

त्वं त्या चिदच्युताग्ने पशुर्न यवसे । धामा ह यत्ते अजर वना वृश्चंति शिक्वसः ॥ ९ ॥
त्वं । त्या । चित् । अच्युता । अग्ने । पशुः । न । यवसे । धाम । ह । यत् । ते । अजर ।
वना । वृश्चंति । शिक्वसः ॥ ९ ॥

हे अग्ने त्वं त्या तानि काष्ठानि । चिच्छब्दोऽपिशब्दसमानार्थो भिन्नक्रमः । अच्युताच्युतानि च्यावयितुमशक्यान्यपि । अत्सीति शेषः । तत्र दृष्टांतः । यवसे घासे विसृष्टः पशुर्न पशुरिव । स यथा सर्वं भक्षयति तथा त्वं प्रौढकाष्ठादीनि क्षणमात्रेण दहसीत्यर्थः । हे अजर जरारहिताग्ने यदास्य ॥ सुपा सुलुगिति पष्ठ्या लुक् ॥ शिक्वसो दीप्तस्य ते तव धाम धामानि तेजांसि वना वननीयानि संभजनीयान्यरण्यानि वृश्चंति छिंदंति तदापि स त्वमिति पूर्वत्रान्वयः । हेत्यतत्पादपूरण ॥

वेषि ह्यध्वरीयतामग्ने होता दमे विशां ।
समृधो विश्पते कृणु जुषस्व हव्यमंगिरः ॥ १० ॥
वेषि । हि । अध्वरिऽयतां । अग्ने । होता । दमे । विशां ।
संऽऋधः । विश्पते । कृणु । जुषस्व । हव्यं । अंगिरः ॥ १० ॥

हे अग्ने अध्वरीयतामध्वरं यज्ञमात्मन इच्छतां विशां यजमानानां दमे गृहे त्वं होता देवानामाह्वाता सन् वेषि हि स्तुतिं हवींषि वा यतः कामयसे अतः कारणाद्विश्पते विशां पालकाग्ने समृधः समृद्धानस्मान्यजमानान् कृणु । कुरु । कृत्वा च हे अंगिरोऽगनादिगुणयुक्त अंगाररूप वाग्ने हव्यमस्मदीयं हविर्जुषस्व । सेवस्व ॥

अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्तिं सुक्षितिं दिवो नृन्द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा
तरेम ॥ ११ ॥
अच्छ । नः । मित्रऽमहः । देव । देवान् । अग्ने । वोचः । सुऽमतिं । रोदस्योः ।
वीहि । स्वस्तिं । सुऽक्षितिं । दिवः । नृन् । द्विषः । अंहांसि । दुःऽइता । तरेम । ता ।
तरेम । तव । अवसा । तरेम ॥ ११ ॥

हे मित्रमहोऽनुकूलदीप्ते देव दानादिगुणयुक्ताग्ने रोदस्योर्द्यावापृथिव्योर्वर्तमानस्त्वं देवान्यष्टव्यानिंद्रादीनच्छाभिमुख्येन नोऽस्माकं सुमतिं स्तुतिं वोचः । ब्रूहि । दिवः स्तुतेर्नॄन्नेतॄनस्मान् सुक्षितिं शोभननिवासयुक्त

स्वस्तिमविनाश वीहि । गमय ॥ वितिरत्वातर्भावितण्यर्थो द्रष्टव्यः ॥ वयं च द्विषो द्वेष्टॄन् शत्रूनंहांसि पापानि दुरिता तत्फलरूपाणि दुर्गमनानि तरेम । अतिक्रामेम । तथा ता तानि व्यवहितानि जन्मांतरकृतानि च पापादीनि तरेम । उक्त एवार्थो दार्ढ्याय पुनरुच्यते । हे अग्ने तवावसा रक्षणेन द्वेष्टृप्रभृतीनत्यंतं तरेम ॥ ॥२॥

अग्ने स क्षेषदित्यष्टर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं । अनुक्रांतं च । अग्नेऽष्टाविति ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

अग्ने॒ स क्षे॑षदृत॒पा ऋ॑ते॒जा उ॒रु ज्योति॑र्नशते देव॒युष्टे॑ ।
यं त्वं मि॒त्रेण॒ वरु॑णः स॒जोषा॒ देव॒ पासि॒ त्यज॑सा॒ मर्त॒मंहः॑ ॥१॥

अग्ने॑ । सः । क्षे॒षत् । ऋ॒त॒ऽपाः । ऋ॒ते॒ऽजाः । उ॒रु । ज्योतिः॑ । न॒श॒ते॒ । दे॒व॒ऽयुः । ते॒ ।
यं । त्वं । मि॒त्रेण॑ । वरु॑णः । स॒ऽजोषाः॑ । देव॑ । पासि॑ । त्यज॑सा । मर्तं॑ । अंहः॑ ॥१॥

हे अग्ने स यजमानः क्षेषत् । क्षियति । निवसति । चिरकालं जीवेदित्यर्थः । कीदृशो यजमानः । ऋतपा ऋतस्य यज्ञस्य पालक ऋतेजा यज्ञनिमित्तं जातः । उषित्वा च ते त्वदीय देवयुर्देवानात्मन इच्छन् स यजमान उरु विस्तीर्णं ज्योतिः सूर्याख्यं नशते । प्राप्नोति । हे देव द्योतमानाग्ने यं मर्तं मनुष्यं यजमानं मित्रेण वरुणः ॥ तृतीयार्थे प्रथमा ॥ वरुणेन च सजोषाः सह प्रीयमाणस्त्वं त्यजसा त्याजनसाधनेनायुधेनांहोऽंहसः पापात्पासि रक्षसि स यजमान इति पूर्वत्र संबंधः ॥

ईजे॑ य॒ज्ञेभिः॑ शश॒मे शमी॑भिर्ऋ॒धद्वा॑राया॒ग्नये॑ ददाश ।
ए॒वा च॒न तं य॒शसा॒मजु॑ष्टि॒र्नांहो॒ मर्तं॑ नशते॒ न प्र॒दृ॑प्तिः ॥२॥

ईजे॑ । य॒ज्ञेभिः॑ । श॒श॒मे । शमी॑भिः । ऋ॒धत्ऽवा॑राय । अ॒ग्नये॑ । द॒दा॒श॒ ।
ए॒व । च॒न । तं । य॒शसा॑ं । अजु॑ष्टिः । न । अंहः॑ । मर्तं॑ । न॒श॒ते॒ । न । प्र॒ऽदृ॑प्तिः ॥२॥

यो यजमान ऋधद्वाराय ऋधत्समृद्धं वारं वरणीयं धनं यस्य तादृशायाग्नये ददाश हवींषि ददाति स यजमानो यज्ञेभिः सर्वैर्यज्ञैरीजे । इष्टवान् भवति । तथा शमीभिः कर्मभिः कृच्छ्रचान्द्रायणादिभिः शशमे । शांतश्च भवति । आग्नेयेन यागेन सर्वं फलं लभत इत्यर्थः । अपि च तं यजमानं यशसां यशस्विनां पुत्राणामजुष्टिरप्राप्तिर्नैव नशते । नैव प्राप्नोति । पुत्रवान्भवत्येवेत्यर्थः । तथा मर्तं मनुष्यं तमंहः पापं न नशते । तथा प्रदृप्तिरनर्थहेतुः प्रदर्पश्च तं न प्राप्नोति ॥

सूरो॒ न यस्य॑ दृश॒तिर॑रे॒पा भी॒मा यदेति॑ शुच॒तस्त॒ आ धीः ।
हेष॑स्वतः शु॒रुधो॒ नायम॒क्तोः कुत्रा॑ चिद्र॒ण्वो व॑स॒तिर्व॑ने॒जाः ॥३॥

सूरः॑ । न । यस्य॑ । दृ॒श॒तिः । अ॒रे॒पाः । भी॒मा । यत् । एति॑ । शु॒च॒तः । ते॒ । आ । धीः ।
हेष॑स्वतः । शु॒रुधः॑ । न । अ॒यं । अ॒क्तोः । कुत्र॑ । चि॒त् । र॒ण्वः । व॒स॒तिः । व॒ने॒ऽजाः ॥३॥

सूरो न सूर्यस्येव यस्याग्नेर्दृशतिर्दर्शनमरेपाः पापरहितं । हे अग्ने यत् यस्य ते तव शुचतो ज्वलतो धीर्धारयित्री ज्वाला भीमा भयंकरा सती आ समंतादेति गच्छति । योऽयमग्निर्हेषस्वतः शब्दयुक्ताः शुरुधो न शुचः शोकस्य रोधयित्रीर्गा इवाक्तोः । अक्तुरिति रात्रिनाम । तेन च तत्र संचारी राक्षसादिर्लक्ष्यते । राक्षसादेः स्वभूता ददातीति शेषः । सोऽयं वसतिः सर्वेषामावासभूतो वनेजा अरण्ये जायमानः कुत्रा चित् क्वचिदेव स्थाने पर्वताग्रादौ रण्वो रमणीयो भवति ॥

तिग्मं चिदेम महि वर्पो अस्य भसदश्वो न यमसान आसा ।
विजेहमानः परशुर्न जिह्वां द्रविर्न द्रावयति दारु धक्षत् ॥४॥
तिग्मम् । चित् । एम । महि । वर्पः । अस्य । भसत् । अश्वः । न । यमसानः । आसा ।
विऽजेहमानः । परशुः । न । जिह्वाम् । द्रविः । न । द्रवयति । दारु । धक्षत् ॥४॥

अस्याग्नेरेम गमनभूतो मार्गस्तिग्मं तीक्ष्णं स्प्रष्टुमशक्यत्वात् । अस्य च वर्पो रूपं महि महत् प्रभूतं भसत् । दीप्यते ॥ भस भर्त्सनदीप्त्योरिति धातुः ॥ कीदृशोऽग्निः । अश्वो न अश्व इवासा आस्येन यमसानस्तृणादिकं नियच्छन् । तथा परशुर्न । यथा परशुः स्वकीयां धारां काष्ठे प्रक्षिपति तथा स्वकीयां जिह्वां ज्वालां विजेहमानस्तृणगुल्मादौ प्रक्षिपन् । तथा दारु काष्ठं धक्षत् दहन् द्रविर्न । द्रविर्द्रावयिता स्वर्णकारः । स यथा स्वर्णादिकं द्रावयति तथा सर्वं वनं द्रावयति । मृतभूतं भस्मसात्करोतीत्यर्थः ॥

स इदस्तेव प्रति धादसिष्यञ्छिशीत तेजोऽयसो न धाराम् ।
चित्रध्रजतिररतिर्यो अक्तोर्वेर्न द्रुषद्वा रघुपत्मजंहाः ॥५॥
सः । इत् । अस्ताऽइव । प्रति । धात् । असिष्यन् । शिशीत । तेजः । अयसः । न । धाराम् ।
चित्रऽध्रजतिः । अरतिः । यः । अक्तोः । वेः । न । द्रुऽसद्वा । रघुपत्मऽजंहाः ॥५॥

स इत् स खल्वग्निरस्तेव बाणादेः क्षेप्तेव प्रति धात् । स्वकीयज्वालां प्रतिधत्ते । यथा धन्वी लक्ष्याभिमुख्येन बाणं संधत्ते तथा ज्वालां संधत्त इत्यर्थः । प्रतिधाय चासिष्यन् ज्वालां प्रक्षेप्स्यन् तेजः स्वकीयं शिशीत । निश्यति । तीक्ष्णीकरोति । तत्र दृष्टान्तः । अयसो न धाराम् । यथायोमयस्य परश्वादेर्धारां प्रक्षेप्तुकामस्तीक्ष्णीकरोति तद्वत् । तीक्ष्णीकृत्य च चित्रध्रजतिर्विचित्रगतिरक्तो रात्रेररतिरभिगन्ता वेर्न पक्षीव द्रुषद्वा वृक्षेषु सीदन् रघुपत्मजंहा लघुपतनसमर्थपादः । एवंभूतः सन् योऽग्निर्वर्तते स इति पूर्वेणान्वयः ॥ ॥३॥

स ईं रेभो न प्रति वस्त उस्राः शोचिषा रारपीति मित्रमहाः ।
नक्तं य ईमरुषो यो दिवा नॄनमर्त्यो अरुषो यो दिवा नॄन् ॥६॥
सः । ईम् । रेभः । न । प्रति । वस्ते । उस्राः । शोचिषा । रारपीति । मित्रऽमहाः ।
नक्तम् । यः । ईम् । अरुषः । यः । दिवा । नॄन् । अमर्त्यः । अरुषः । यः । दिवा । नॄन् ॥६॥

स ईं सोऽयमग्नी रेभो न स्तुत्यः सूर्य इवोस्रा दीप्ता ज्वालाः प्रति वस्ते । आच्छादयति । तथा मित्रमहाः सर्वेषामनुकूलप्रकाशः सन् शोचिषा तेजसा रारपीति । भृशं शब्दं करोति । य ईमयमग्निर्नक्तं रात्रावरुष आरोचमानः सन् दिवाह्नीव नॄन्मनुष्यान्स्वस्वकार्ये प्रेरयति । पुनर्यन्ता द. पुरु. । तथामर्त्योऽमरणधर्मारुष आरोचमानो रोषरहितो वा योऽग्निर्दिवा द्योतमानेन तेजसा नॄन्नेतॄनात्मीयान्रश्मीन् प्रेरयति स इति पूर्वत्र संबंधः । यद्वा । नक्तं रात्रौ योऽयमग्निररुष आरोचमानो यश्च मरणरहितोऽग्निर्दिवाह्नि नॄन्नेतॄन्देवान्हविर्भिः संयोजयति । यो दिवा नॄनिति पुनरुक्तिरादरार्था ॥

दिवो न यस्य विधतो नवीनोद्वृषा रुक्ष ओषधीषु नूनोत् ।
घृणा न यो ध्रजसा पत्मना यन्ना रोदसी वसुना दं सुपत्नी ॥७॥
दिवः । न । यस्य । विधतः । नवीनोत् । वृषा । रुक्षः । ओषधीषु । नूनोत् ।
घृणा । न । यः । ध्रजसा । पत्मना । यन् । आ । रोदसी इति । वसुना । दम् । सुपत्नी
इति सुऽपत्नी ॥७॥

दिवो न दीप्तस्य सूर्यस्येव विधतो विधातू रश्मीकुर्वतो यस्याग्नेर्नवीनोत् भृशं शब्दोऽभूत् । एतदेव व्याचष्टे । वृषा कामानां वर्षिता रुक्मो दीप्तः सोऽग्निरोषधीषु दह्यमानासु नूनोत् । भृशं शब्दमकरोत् । यश्च घृणा न संचलनशीलेन दीप्त्येनेव भ्राजसा गमनशीलेन तेजसा पतयन्नेतस्तत उत्पतता धन्व गच्छन् वर्तते सोऽग्निर्दस्मक्षतून् दमयन् सुपत्नी शोभनपतिके रोदसी द्यावापृथिव्यौ वसुना धनेना पूरयति ॥

धार्योभिर्वा यो युज्येभिरर्कैर्विद्युन्न दविद्योत्स्वेभिः शुष्मैः ।
शर्धो वा यो मरुतां ततक्ष ऋभुर्न त्वेषो रभसानो अद्यौत् ॥८॥
धायःऽभिः । वा । यः । युज्येभिः । अर्कैः । विऽद्युत् । न । दविद्योत् । स्वेभिः । शुष्मैः ।
शर्धः । वा । यः । मरुताम् । ततक्ष । ऋभुः । न । त्वेषः । रभसानः । अद्यौत् ॥८॥

योऽग्निर्धायोभिर्वा धारकैरश्वैरिव युज्येभिर्युज्यैः स्वयमेव युज्यमानैरर्कैरर्चनीयैर्दीप्तिभिर्गच्छति सोऽग्निर्विद्युन्न विद्युदिव स्वेभिः स्वकीयैः शुष्मैः शोषकैस्तेजोभिर्दविद्योत । विद्योतते । यश्च मरुतामेतत्संज्ञकानां देवानां शर्धो वा बलमिव ततक्ष तनूकरोति सर्वं तीक्ष्णीकरोति । शोषयतीति यावत् । सोऽयमृभुर्न उरु भासमानः सूर्य इव त्वेषो दीप्तो रभसानो वेगं कुर्वन्नद्यौत । विद्योतते । प्रकाशते ॥ ॥४॥

यथा होतरित्यष्टर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं । यथा होतरित्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

यथा होतर्मनुषो देवताता यज्ञेभिः सूनो सहसो यजासि ।
एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान् ॥१॥
यथा । होतः । मनुषः । देवऽताता । यज्ञेभिः । सूनो इति । सहसः । यजासि ।
एव । नः । अद्य । समना । समानान् । उशन् । अग्ने । उशतः । यक्षि । देवान् ॥१॥

हे होतर्देवानामाह्वातः सहसः सूनो बलस्य पुत्राग्ने यथा येन प्रकारेण मनुषो मनोः प्रजापतेर्यजमानस्य देवताता । यज्ञनामैतत् । देवताते यज्ञे यज्ञेभिर्यजमानसाधनैर्हविर्भिर्यजासि देवान्यजसि एवैवं हे अग्ने नोऽस्माकमद्यास्मिन्यज्ञे समानान् त्वत्सदृशानिन्द्रादीनुशन् कामयमानस्त्वमुशतः कामयमानान्यष्टव्यान् देवान् समना क्षिप्रं यक्षि । यज । यद्वा । समानं मन्यंतेऽस्मिन् देवा इति समनो यज्ञः । तस्मिन्निति योज्यं ॥

स नो विभावा चक्षणिर्न वस्तोरग्निर्वन्दारु वेद्यश्चनो धात् ।
विश्वायुर्यो अमृतो मर्त्येषूषर्भुद्भूदतिथिर्जातवेदाः ॥२॥
सः । नः । विभाऽवा । चक्षणिः । न । वस्तोः । अग्निः । वंदारु । वेद्यः । चनः । धात् ।
विश्वऽआयुः । यः । अमृतः । मर्त्येषु । उषःऽभुत् । भूत् । अतिथिः । जातऽवेदाः ॥२॥

वस्तोरहनि चक्षणिर्न प्रकाशकः सूर्य इव विभावा विशेषेण दीप्यमानो वेद्यः सर्वैर्ज्ञातव्यो लंभनीयो वा सोऽग्निर्नोऽस्मभ्यं वंदारु वंदनीयं स्तुत्यं चनोऽन्नं धात् । दधातु । प्रयच्छत्वित्यर्थः । विश्वायुः सर्वान्नः सर्वेषां जीवनहेतुर्वामृतो मरणरहितोऽतिथिर्हविर्वहनाय सततगामी जातवेदा जातानां वेदिता जातधनो वा एवंभूतो योऽग्निर्मर्त्येषु मनुष्येषु यजमानेषूषर्भुद्भूत् उषःकालेऽग्निहोत्रहोमार्थं प्रबुद्धो भवति स इति पूर्वत्रान्वयः ॥

द्यावो न यस्य पनयंत्यभ्वं भासांसि वस्ते सूर्यो न शुक्रः ।
वि य इनोत्यजरः पावकोऽश्नस्य चिच्छिश्नथत्पूर्व्याणि ॥३॥

द्यावः । न । यस्य॑ । पनय॑न्ति । अभ्व॑म् । भासां॑सि । वस्ते । सूर्यः॑ । न । शुक्रः ।
वि । यः । इनोति॑ । अजरः॑ । पावकः । अश्न॑स्य । चित् । शिश्नथत् । पूर्व्याणि॑ ॥३॥

नेति संप्रत्यर्थे । उक्तं च । अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः । नि॰ ७ ३१ । इति ॥ द्यावः स्तोतारः संप्रतीदानीं यस्याग्नेरभ्वं महत्कर्म पनयंति स्तुवंति सोऽग्निः सूर्यो न सूर्य इव शुक्रः शुक्लवर्णः सन् भासांसि तेजांसि वस्ते । आच्छादयति । यश्चाजरो जरारहितः पावकः सर्वस्य शोधकोऽग्निर्वीनोति भासा सर्वं व्याप्नोति सोऽयमश्नस्य चित् व्यापनशीलस्यापि राक्षसादेः पूर्व्याणि चिरंतनानि पुराणि शिश्नथत् । हिनस्ति ॥ श्नथ क्नथ हिंसायामिति धातुः ॥

वद्मा हि सू॑नो अस्यंद्मसद्वा॑ च॒क्रे अ॒ग्निर्जनुषाज्मान्न॑म् ।
स त्वं न॑ ऊर्जसन ऊर्जं॑ धा राजे॑व जेरवृके क्षेष्यंतः ॥४॥
वद्मा । हि । सूनो इति॑ । असि॑ । अद्मऽसद्वा॑ । च॒क्रे । अग्निः । जनुषा॑ । अज्म॑ । अन्न॑म् ।
सः । त्वम् । नः । ऊर्जऽसने । ऊर्ज॑म् । धाः । राजा॑ऽइव । जेः । अवृके॑ । क्षेषि । अंतरिति॑ ॥४॥

हे सूनो सहसः पुत्र । यद्वा षू प्रेरणे । सर्वस्य प्रेरकाग्ने वद्मा वदनीयः स्तुत्योऽसि हि । परः पादः परोक्षकृतः । अद्मसद्वाद्मस्वदनीयेषु हविःषु सीदन् हविःस्वीकरणायोपविशन्नग्निर्जनुषा जन्मना स्वभावत एवाज्म । गृहनामैतत् । गृहमन्नं च यजमानानां चक्रे । करोति । ऊर्जसन ऊर्जस्यान्नस्य दातरग्ने नोऽस्मभ्यं स तादृशस्त्वमूर्जमन्नं धाः । देहि । तथा राजेव जेः । अस्मच्छत्रून् जय । एतत्सर्वार्थमवृके राक्षसादिभिर्बाधकैर्वियुक्तेऽस्मदीयेऽग्न्यागारेऽंतर्मध्ये क्षेषि । निवस ॥

निति॑क्ति यो वा॑रणमन्नमत्ति॑ वायुर्न राष्ट्र्यत्येत्यक्तून् ।
तुर्याम॑ यस्त॑ आदिशामरा॑तीरत्यो॑ न हुतः पत॑तः परिह्रुत् ॥५॥
निऽति॑क्ति । यः । वारणम् । अन्न॑म् । अत्ति॑ । वायुः । न । राष्ट्री॑ । अति॑ । एति॑ । अक्तून् ।
तुर्याम॑ । यः । ते॑ । आऽदिशा॑म् । अराती॑ः । अत्यः॑ । न । हुतः॑ । पत॑तः । परिऽह्रुत् ॥५॥

योऽग्निर्वारणं तमसां निवारकं स्वकीयं तेजो नितिक्ति निश्यति तीक्ष्णीकरोति ॥ तिज निशान इति धातुः ॥ यश्चान्नं यष्टृभिर्दीयमानं हविर्लक्षणमत्ति भक्षयति । तथा च श्रूयते । अन्नादो वा एषोऽन्नपतिर्यदग्निरिति । सोऽग्निर्वायुर्न वायुरिव राष्ट्री । ईश्वरनामैतत् । राष्ट्रं राज्यं । तद्वान् । वायुर्यथा स्वमाहात्म्येन सर्वमीष्टे तद्वत् । सर्वस्येश्वर इत्यर्थः । तादृशः सन् अक्तून् रात्रीरत्येति । अतिक्रामति । तत्रत्यमंधकारं तिरस्करोतीत्यर्थः । वयं च त्वत्प्रसादात्तुर्याम तं हिंस्याम यो जनस्ते तुभ्यमादिशामादिश्यमानानां दीयमानानां हविषामरातीररातिरदाता ॥ कादसो दीर्घः ॥ यद्वा । अरातीर्धनस्यादातॄन् ते त्वा प्रत्यादिशामादिष्टॄणामाचक्षाणानामस्माकं यो जनो विरोधी तं हिंस्याम । त्वं चात्यो न शीघ्रगामी जात्यश्व इव हुतो हिंसकान्पततः आभिमुख्येन गच्छतः शत्रून् परिह्रुत परिगत्य हंता भव ॥ ह्रुरतिर्हिंसार्थस्तस्यैतद्रूपं ॥ ॥५॥

आ सूर्यो न भानुमद्भिरर्कैरग्ने ततंथ रोदसी वि भासा ।
चित्रो नयत्परि तमांस्यक्तः शोचिषा पत्मन्नौशिजो न दीयन् ॥६॥
आ । सूर्यः॑ । न । भानुमत्ऽभिः । अर्कैः । अग्ने॑ । ततंथ॑ । रोदसी इति॑ । वि । भासा ।
चित्रः । नयत् । परि॑ । तमां॑सि । अक्तः । शोचिषा॑ । पत्म॑न् । औशिजः । न । दीय॑न् ॥६॥

हे अग्ने रोदसी द्यावापृथिव्यौ भासा दीप्त्या व्या ततंथ। विशेषेणाच्छादयसि। तत्र दृष्टांतः। भानुमद्भिः प्रभावद्भिरर्कैरर्चनीयैः किरणैः सूर्यो न। यथा सूर्य आतनोति तद्वत्। परोऽर्धचः परोक्षकृतः। पत्मन्। पतत्यस्मिन्निति पत्म मार्गः। तस्मिन्नौशिजो न। उशिजः स्तोतारः। स्तुत्यतया तत्संबंध्यौशिजः सूर्यः। स इव दीयन् गच्छन् शोचिषा तेजसाक्तः संश्लिष्टः अत एव चित्रश्चायनीयोऽग्निस्तमांसि नैशान्यंधकाराणि परि णयत। परिणयति। परितो गमयति। सर्वस्मादपि दिग्भागान्निवर्तयतीत्यर्थः॥

त्वां हि मंद्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने।
इंद्रं न त्वा शवसा देवता वायुं पृणंति राधसा नृतमाः॥७॥
त्वां। हि। मंद्रऽतमं। अर्कऽशोकैः। ववृमहे। महि। नः। श्रोषि। अग्ने।
इंद्रं। न। त्वा। शवसा। देवता। वायुं। पृणंति। राधसा। नृऽतमाः॥७॥

हे अग्ने मंद्रतमं स्तुत्यतमं त्वामर्कशोकैरर्चनीयैः पूजनीयैः शोकैर्दीप्तिभिर्युक्तं हि यस्मात् ववृमहे वृणीमहे संभजामहे। यद्वा। अर्कशोकैरर्चनीयैः प्रशस्यैर्दीप्तिकरणैः स्तोत्रैः साधनभूतैस्त्वां संभजामहे तस्मान्महि महन्नोऽस्मदीयं स्तोत्रं श्रोषि। शृणु। हे अग्ने नृतमाः स्तुतीनां नेतृतमा ऋत्विजः शवसा बलेन वायुं गंतारं। यद्वा। वायुमिव शवसा युक्तमिंद्रं न इंद्रमिव देवता देवतात्मानं त्वा राधसा हविर्लक्षणेन धनेन पृणंति। प्रीणयंति॥ देवताशब्दात् द्वितीयायाः सुपां सुलुगिति लुक्॥

नू नो अग्नेऽवृकेभिः स्वस्ति वेषि रायः पथिभिः पर्ष्यंहः।
ता सूरिभ्यो गृणते रासि सुम्नं मदेम शतहिमाः सुवीराः॥८॥
नु। नः। अग्ने। अवृकेभिः। स्वस्ति। वेषि। रायः। पथिऽभिः। पर्षि। अंहः।
ता। सूरिऽभ्यः। गृणते। रासि। सुम्नं। मदेम। शतऽहिमाः। सुऽवीराः॥८॥

हे अग्ने नोऽस्मानवृकेभिः। वृकाः स्तेनाः। तद्रहितैः पथिभिर्मार्गै रायो धनानि नु क्षिप्रं स्वस्ति क्षेमेण वेषि। गमय। प्रापय। अंहोऽंहसः पापात्पर्षि। उक्तलक्षणैर्मार्गैः पारय चास्मान्। यानि त्वया सूरिभ्यः स्तोतृभ्यो देयानि सुम्नानि ता तानि सुम्न सुम्नानि सुखानि गृणते स्तुवते मह्यं रासि। देहि। वयं च शतहिमाः शतं हेमंतान् संवत्सरान् सुवीराः। वीर्याज्जायंत इति वीराः पुत्रादयः। शोभनपुत्रपौत्रादिसहिताः संतो मदेम। हृष्याम॥ ॥६॥

हुवे व इति सप्तर्चं पंचमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं। तथा चानुक्रम्यते। हुवे वः सप्तेति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

हुवे वः सूनुं सहसो युवानमद्रोघवाचं मतिभिर्यविष्ठं।
य इन्वति द्रविणानि प्रचेता विश्ववाराणि पुरुवारो अध्रुक्॥१॥
हुवे। वः। सूनुं। सहसः। युवानं। अद्रोघऽवाचं। मतिऽभिः। यविष्ठं।
यः। इन्वति। द्रविणानि। प्रऽचेताः। विश्वऽवाराणि। पुरुऽवारः। अध्रुक्॥१॥

हे अग्ने वः॥ व्यत्ययेन बहुवचनं॥ त्वा मतिभिर्मननीयैः स्तोत्रैर्हुवे। आह्वयामि। कीदृशं। सहसो बलस्य सूनुं पुत्रं। अग्निर्हि बलेन मथ्यमानो जायते। युवानं नित्यतरुणं फलस्य मिश्रयितारं वा अद्रोघवाचं। अद्रोग्धव्या प्रशस्ता स्तुतिरूपा वाक् यस्मिन् प्रयुज्यते तादृशं। यविष्ठमतिशयेन युवानं। प्रचेताः प्रकृष्टज्ञानः पुरुवारः पुरुभिर्बहुभिर्वरणीयः संभजनीयोऽध्रुगद्रोग्धा यजमानानां एवंभूतो योऽग्निर्विश्ववाराणि सर्ववर-

णीयानि संभजनीयानि प्रशस्यानि द्रविणानि धनानीन्वति प्रेरयति। स्तोतृभ्यो ददातीति यावत। तं त्वा ज्ञव इति पूर्वत्र संबंधः ॥

त्वे वसूनि पुर्वणीक होतर्दोषा वस्तोरेरिरे यज्ञियासः ।
क्षामेव विश्वा भुवनानि यस्मिन्त्सं सौभगानि दधिरे पावके ॥२॥

त्वे इति। वसूनि। पुरुऽअनीक। होतः। दोषा। वस्तोः। आ। ईरिरे। यज्ञियासः।
क्षामऽइव। विश्वा। भुवनानि। यस्मिन्। सं। सौभगानि। दधिरे। पावके ॥२॥

हे पुर्वणीक बहुज्वाल होतर्देवानामाह्वातरग्ने त्वे त्वयि दोषा रात्रौ वस्तोरहनि च यज्ञियासो यज्ञार्हा यजमाना वसूनि हविर्लक्षणानि धनान्येरिरे। आभिमुख्येन प्रेरयंति। प्रापयंति। जुह्वतीत्यर्थः। विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि क्षामिव क्षमाया भूम्यामिव यस्मिन् पावके शोधकेऽग्नौ सौभगानि धनानि सं दधिरे देवाः सम्यग्निहितवंतः। अग्नौ वामं वसु सं न्यदधत। तै॰ सं॰ १ ५ १ १। इति ब्राह्मणं। तस्मिंस्त्वयीति पूर्वत्र योज्यं ॥

त्वं विक्षु प्रदिवः सीद आसु क्रत्वा रथीरभवो वार्याणां।
अत इनोषि विधते चिकित्वो व्यानुषग्जातवेदो वसूनि ॥३॥

त्वं। विक्षु। प्रऽदिवः। सीदः। आसु। क्रत्वा। रथीः। अभवः। वार्याणां।
अतः। इनोषि। विधते। चिकित्वः। वि। आनुषक्। जातऽवेदः। वसूनि ॥३॥

हे अग्ने त्वं प्रदिवः। पुराणनामैतत। पुरातनकालीनाम् विक्षु प्रजास्वासु परिदृश्यमानासु च सीदः। सीदसि। विश्वातरात्मना वर्तसे। तथा क्रत्वात्मीयेन कर्मणा वार्याणां वरणीयानां धनानां रथीरभवः। रंहयिता यजमानेभ्यः प्रापयिताभूः। अतः कारणात् हे चिकित्वो विद्वन् जातवेदो जातानां प्राणिनां वेदितरग्ने विधते परिचरते यजमानाय वसूनि धनान्यानुषगनुपक्तं सततं यथा भवति तथा वीनोषि। विविधं प्रेरयसि ॥

प्रवर्ग्येऽभिष्टवे यो नः सनुत्य इति तृचः। सूत्रितं च। यो नः सनुत्यो अभिदासदग्ने भवा नो अग्ने सुमना उपेताविति तृचाः। आ॰ ४ ६। इति ॥

यो नः सनुत्यो अभिदासदग्ने यो अंतरो मित्रमहो वनुष्यात्।
तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान् ॥४॥

यः। नः। सनुत्यः। अभिऽदासत्। अग्ने। यः। अंतरः। मित्रऽमहः। वनुष्यात्।
तं। अजरेभिः। वृषऽभिः। तव। स्वैः। तप। तपिष्ठ। तपसा। तपस्वान् ॥४॥

हे अग्ने यः शत्रुः सनुत्यः। सनुतरित्यंतर्हितनाम। अंतर्हिते देशे वर्तमानः सन् नोऽस्मानभिदासत् उपक्षयति बाधते। यश्चांतरोऽभ्यंतरवर्ती सन् हे मित्रमहोऽनुकूलदीप्ते मित्राणां महयितर्वाग्ने वनुष्यात्। हिंस्यात् तमुभयविधं हे तपिष्ठ तृप्ततमाग्ने तपसा तेजसा तपस्वान् तेजस्वी त्वमजरेभिर्जरारहितैर्वृषभिर्वर्षितृभिर्वृष्टिहेतुभूतैस्तव स्वैः स्वभूतैरसाधारणैस्तेजोभिस्तप। दह ॥

यस्ते यज्ञेन समिधा य उक्थैरर्केभिः सूनो सहसो ददाशत्।
स मर्त्येष्वमृत प्रचेता राया द्युम्नेन श्रवसा वि भाति ॥५॥

यः। ते। यज्ञेन। सम्ऽइधा। यः। उक्थैः। अर्केभिः। सूनो इति। सहसः। ददाशत्।
सः। मर्त्येषु। अमृत। प्रऽचेताः। राया। द्युम्नेन। श्रवसा। वि। भाति ॥ ५ ॥

हे सहसः सूनो बलस्य पुत्राग्ने ते त्वां यो यजमानो यज्ञेन यागेन ददाशत् परिचरति। यश्च समिधा समिंधनसाधनेनेध्मेन। यश्चोक्थैः शस्त्रैरर्केभिरर्चनीयैः स्तोत्रैश्च परिचरति हे अमृत मरणधर्मरहिताग्ने स यजमानो मर्त्येषु मनुष्येषु प्रचेताः प्रकृष्टज्ञानः सन् राया धनेन द्युम्नेन द्योतमानेन श्रवसा श्रवणीयेनान्नेन यशसा वा वि भाति। विशेषेण प्रकाशते ॥

स तत्कृधीषितस्तूयमग्ने स्पृधो बाधस्व सहसा सहस्वान्।
यच्छस्यसे द्युभिरक्तो वचोभिस्तज्जुषस्व जरितुर्घोषि मन्म ॥ ६ ॥
सः। तत्। कृधि। इषितः। तूयं। अग्ने। स्पृधः। बाधस्व। सहसा। सहस्वान्।
यत्। शस्यसे। द्युऽभिः। अक्तः। वचःऽभिः। तत्। जुषस्व। जरितुः। घोषि। मन्म ॥ ६ ॥

हे अग्ने स त्वमिषितः प्रेषितः सन् तूयं क्षिप्रं तत्कृधि। कुरु। किं तदित्यत आह। सहस्वान् बलवांस्त्वं स्पृधः स्पर्धमानान् सहसा बलेन परेषामभिभवनसमर्थेन तेजसा वा बाधस्व। विनाशय। द्युभिर्द्योतमानैस्तेजोभिरक्तः संसिक्तस्त्वं वचोभिः स्तुतिरूपैर्वाक्यैर्यच्छस्यसे यत्स्तूयसे। त्वामुद्दिश्य यत् स्तोत्रं स्तोतृभिः क्रियत इत्यर्थः। तन्मन्म मननीयं घोषि घोषणीयं जरितुः स्तोत्रं जुषस्व। सेवस्व ॥

अग्नये कामाय पुरोडाशमष्टाकपालमित्यस्यामश्यामेत्येषा याज्या। सूत्रितं च। अश्याम तं काममग्ने तवोतीति कामाय। आ० २. १०.। इति ॥

अश्याम तं काममग्ने तवोती अश्याम रयिं रयिवः सुवीरं।
अश्याम वाजमभि वाजयंतोऽश्याम द्युम्नमजराजरं ते ॥ ७ ॥
अश्याम। तं। कामं। अग्ने। तव। ऊती। अश्याम। रयिं। रयिऽवः। सुवीरं।
अश्याम। वाजं। अभि। वाजयंतः। अश्याम। द्युम्नं। अजर। अजरं। ते ॥ ७ ॥

हे अग्ने तव संबंधिन्योती ऊत्या रक्षया तं काममश्याम। प्राप्नुयाम। तमेव कामं विवृणोति। हे रयिवो धनवन्नग्ने सुवीरं शोभनपुत्रादियुक्तं रयिं धनमश्याम। प्राप्नुयाम। तथा वाजयंतो वाजमन्नमात्मन इच्छंतो वयं वाजं त्वया दत्तमन्नमभि आभिमुख्येनाश्याम। प्राप्नुयाम। हे अजर जरारहिताग्ने त्वदीयमजरं जरारहितं द्युम्नं द्योतमानं यशश्चाश्याम। प्राप्नुयाम ॥ ॥ ८ ॥

प्र नव्यसेति सप्तर्चं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं। प्र नव्यसेत्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

प्र नव्यसा सहसः सूनुमच्छा यज्ञेन गातुमव इच्छमानः।
वृश्चद्वनं कृष्णयामं रुशंतं वीती होतारं दिव्यं जिगाति ॥ १ ॥
प्र। नव्यसा। सहसः। सूनुं। अच्छ। यज्ञेन। गातुं। अवः। इच्छमानः।
वृश्चत्ऽवनं। कृष्णऽयामं। रुशंतं। वीती। होतारं। दिव्यं। जिगाति ॥ १ ॥

गातुमुपगंतव्यं स्तोतव्यं वा सहसः सूनुं बलस्य पुत्रमग्निमवोऽन्नं रक्षणं वा इच्छमान इच्छन् स्तोता नव्यसा

नवतरेण यज्ञेन युक्तः सन् अच्छाभिमुख्येन प्र जिगाति । प्रकर्षेण गच्छति । कीदृशमग्निं । वृश्चद्वनं वृक्णं छिन्नं दग्धं वनं येन तादृशं कृष्णयामं कृष्णवर्त्मानं रुशंतं श्वेतवर्णं वीती वीत्या कांतेन यज्ञेन होतारं यष्टारं दिव्यं दिवि भवं ॥

स श्वि॒ता॒नस्त॑न्य॒तू रो॑चन॒स्था अ॒जरे॑भि॒र्नान॑दद्भि॒र्यवि॑ष्ठः ।
यः पा॑व॒कः पु॑रु॒तमः॑ पु॒रूणि॑ पृ॒थून्य॒ग्निर॑नु॒याति॒ भर्व॑न् ॥२॥
सः । श्वि॒ता॒नः । त॒न्य॒तुः । रो॒च॒न॒ऽस्थाः । अ॒जरे॑भिः । नान॑दत्ऽभिः । यवि॑ष्ठः ।
यः । पा॒व॒कः । पु॒रु॒ऽतमः॑ । पु॒रूणि॑ । पृ॒थूनि॑ । अ॒ग्निः । अ॒नु॒ऽयाति॑ । भर्व॑न् ॥२॥

सोऽग्निः श्वितानः श्वेतमानः श्वेतवर्णो वर्तते । तन्यतुः शब्दकारी रोचनस्थाः । रोचतेऽस्मिन् ग्रहनक्षत्रादीनीति रोचनमंतरिक्षं । तत्र स्थितोऽजरेभिर्जरारहितैर्नानदद्भिरत्यर्थं शब्दं कुर्वद्भिर्मरुद्भिर्युक्तो रश्मिभिर्वा यविष्ठो युवतमः । यः पावकः शोधकोऽग्निः पुरुतमोऽतिशयेन प्रभूतः सन् पुरूणि बहूनि पृथूनि स्थूलानि काष्ठानि भर्वन् भक्षयन् अनुयाति अनुगच्छति स इत्थमित्थं वर्तत इति पूर्वत्र संबंधः ॥

गार्हपत्यादीनां मिथः संसर्गेऽग्नये विविचय इष्टिः कर्तव्या । तत्र वि त इत्येषानुवाक्या । आ॰ ३ १३ ॥

वि ते॒ विष्व॒ग्वात॑जूतासो अग्ने॒ भामा॑सः शुचे॒ शुच॑यश्चरंति ।
तु॒वि॒म्र॒क्षासो॑ दि॒व्या नव॑ग्वा॒ वना॑ वनंति धृष॒ता रु॒जंतः॑ ॥३॥
वि । ते॒ । विष्व॑क् । वात॑ऽजूतासः । अ॒ग्ने॒ । भामा॑सः । शु॒चे॒ । शुच॑यः । चरं॑ति ।
तु॒वि॒ऽम्र॒क्षासः॑ । दि॒व्याः । नव॑ऽग्वाः । वना॑ । व॒नं॒ति॒ । धृ॒ष॒ता । रु॒जंतः॑ ॥३॥

हे शुचे शुद्ध दीप्त वाग्ने ते त्वदीया वातजूतासो वातेन प्रेरिताः शुचयो निर्मला भामासो दीप्तयो विष्वक् सर्वतो वि चरंति । विविधं गच्छंति । तुविम्रक्षासो बहुकाष्ठानि मृशंतो दिव्या दिवि द्योतमानोऽग्नौ भवा नवग्वा नूतनगमनास्ते रश्मयो वना वनानि वनंति । संभजंते । दहंतीत्यर्थः । किं कुर्वंतः । धृषता धर्षकेण तेजसा रुजंतो वनानि भंजयंतः ॥

ये ते॑ शु॒क्रासः॒ शुच॑यः शुचिष्मः॒ क्षां वपं॑ति॒ विषि॑तासो॒ अश्वाः॑ ।
अध॑ भ्र॒मस्त॑ उर्वि॒या वि भा॑ति या॒तय॑मानो॒ अधि॒ सानु॒ पृश्नेः॑ ॥४॥
ये । ते॒ । शु॒क्रासः॑ । शुच॑यः । शु॒चि॒ष्मः॒ । क्षाम् । वप॑ंति । विऽसि॑तासः । अश्वाः॑ ।
अध॑ । भ्र॒मः । ते॒ । उ॒र्वि॒या । वि । भा॒ति॒ । या॒तय॑मानः । अधि॑ । सानु॑ । पृश्नेः॑ ॥४॥

हे शुचिष्मो दीप्तिमन्नग्ने ते तव शुक्रासः शुभ्रा ये शुचयो दीप्तयो क्षां पृथिवीं भूमिं वपंति मुंडयंति । केशस्थानीयानोषधिवनस्पतीन् दहंतीत्यर्थः । अग्निर्ह दाति रोमा पृथिव्याः । ऋग्वे॰ १ ६५ ४ । इति निगमांतरं । ते रश्मयो विषितासो विमुक्ता अश्वा इव । इतस्ततो गच्छंतीति शेषः । अधानंतरमग्ने ते त्वदीयो भ्रमो भ्रमणशीलो ज्वालासमूहः पृश्नेर्नानारूपाया भूमेरधि उपरि सानु समुच्छ्रितं देशं पर्वताग्रादिकं प्रति यातयमानः स्वकीयमग्रं व्यापारयन् उर्विया उरु बहुलं वि भाति । विशेषेण प्रकाशते ॥

अध॑ जि॒ह्वा पा॑पतीति॒ प्र वृष्णो॑ गोषु॒युधो॒ नाशनिः॑ सृजा॒ना ।
शूर॑स्येव॒ प्रसि॑तिः क्षा॒तिर॒ग्नेर्दु॒र्वर्तु॑र्भी॒मो द॑यते॒ वना॑नि ॥५॥

अध । जिह्वा । पापतीति । प्र । वृष्णः । गोषुऽयुधः । न । अशनिः । सृजाना ।
शूरस्यऽइव । प्रऽसितिः । क्षातिः । अग्नेः । दुःऽवर्तुः । भीमः । दयते । वनानि ॥५॥

अधापि च वृष्णो वर्षितुरग्नेर्जिह्वा ज्वाला प्र पापतीति । प्रकर्षेण पुनःपुनः पतति । गच्छति । तत्र दृष्टांतः । गोषुयुधो नाशनिः सृजाना । असुरप्रहृतासु गोषु युध्यतींद्रो गोषुयुत् । तस्मात्सृज्यमानाशनिर्वज्र इव । तथा शूरस्येव शौर्योपेतस्य नरस्य प्रसितिः प्रबंधनं यथान्यैर्दुःसहमेवमग्नेः क्षातिर्ज्वाला सोढुमशक्येत्यर्थः ॥ क्षीयंते दह्यंतेऽस्यामोषधिवनस्पतय इति क्षायतेरधिकरणे क्तिन् ॥ अपि च दुर्वर्तुर्दुर्वारोऽन्यैर्वारयितुमशक्यो भीमो भयंकरोऽग्निर्वनानि दयते । दहति ॥ दयतिरत्र दहतिकर्मा ॥

आ भानुना पार्थिवानि ज्रयांसि महस्तोदस्य धृषता ततंथ ।
स बाधस्वाप भया सहोभिः स्पृधो वनुष्यन्वनुषो नि जूर्व ॥६॥
आ । भानुना । पार्थिवानि । ज्रयांसि । महः । तोदस्य । धृषता । ततंथ ।
सः । बाधस्व । अप । भया । सहःऽभिः । स्पृधः । वनुष्यन् । वनुषः । नि । जूर्व ॥६॥

हे अग्ने भानुना दीप्त्या पार्थिवानि पृथिव्यां भवानि ज्रयांसि ॥ ज्रयतिर्गतिकर्मा ॥ गंतव्यानि स्थानानि महो महतस्तोदस्य प्रेरकस्य धृषता धर्षकेण रश्मिना महा ततंथ । आस्तृणासि । आच्छादयसि । स त्वं भया भयकरणान्यप बाधस्व । तथा सहोभिरभिभवनसमर्थैर्बलैस्तेजोभिर्वा स्पृधः स्पर्धमानान्वनुष्यन् हिंसन् वनुषो हिंसकान् । शत्रूनिति । नि जूर्व । निजहि ॥ जूर्वतिर्हंतिकर्मा ॥

उक्थ्यासंभरणीयेष्टावग्नेः क्षत्रवतः स चित्रेत्येषा याज्या । सूत्रितं च । स चित्र चित्रं चितयंतमस्मे अग्निरीशे बृहतः क्षत्रियस्य । आ॰ ४ १. । इति ॥

स चित्र चित्रं चितयंतमस्मे चित्रक्षत्र चित्रतमं वयोधां ।
चंद्रं रयिं पुरुवीरं बृहंतं चंद्र चंद्राभिर्गृणते युवस्व ॥७॥
सः । चित्र । चित्रं । चितयंतं । अस्मे इति । चित्रऽक्षत्र । चित्रऽतमं । वयःऽधां ।
चंद्रं । रयिं । पुरुऽवीरं । बृहंतं । चंद्र । चंद्राभिः । गृणते । युवस्व ॥७॥

हे चित्र चायनीय हे चित्रक्षत्र विचित्रबल चायनीयधन वा हे चंद्राह्लादकाग्ने स तादृशस्त्वं चंद्राभिराह्लादयित्रीभिः स्तुतिभिर्गृणते स्तुवते । वचनव्यत्ययः । स्तुवद्भ्योऽस्मे अस्मभ्य दातुं रयिं धन युवस्व । पृथक्कुरु । कीदृशं रयिं । चित्र चायनीयं चितयंतं ज्ञापयंतं । धनेन हि पुरुषः प्रख्यायते । चित्रतममतिशयेनाश्चर्यभूतं वयोधा वयसोऽन्नस्य धातार प्रदातारं चंद्रमाह्लादकं पुरुवीर पुरुभिर्बहुभिर्वीरैः पुत्रपौत्रादिभिर्युक्तं बृहतं महांतं । ईदृशं धनमस्मभ्यं प्रयच्छेत्यर्थः ॥ ॥८॥

मूर्धानमिति सप्तर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकं । षष्ठीसप्तम्यौ जगत्यौ शिष्टाः पंच त्रिष्टुभः । तथा चानुक्रांत । मूर्धानं वैश्वानरीयं हि द्विजगत्यंतमिति ॥ गतः सूक्तविनियोगः ॥ विषुवत्याग्निमारुत आद्यस्तृचो वैकल्पिकः स्तोत्रियः । तथैव सूत्रितं च । मूर्धानं दिवो अरतिं पृथिव्या मूर्धा दिवो नाभिरग्निः पृथिव्या इति वा । आ॰ ८ ६. । इति ॥

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निं ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयंत देवाः ॥१॥

मूर्धानं । दिवः । अरतिं । पृथिव्याः । वैश्वानरं । ऋते । आ । जातं । अग्निं ।
कविं । संऽराजं । अतिथिं । जनानां । आसन् । आ । पात्रं । जनयंत । देवाः ॥१॥

मूर्धानं शिरोभूतं । कस्य । दिवो द्युलोकस्य पृथिव्याः प्रथितायाः भूमेररतिं गंतारं । यद्वा । गंतव्यं स्वामिनं वैश्वानरं विश्वेषां नराणां सर्वाधिनमृतं । ऋतमिति सत्यस्य यज्ञस्य वा नाम । निमित्तसप्तम्येषा । ऋतनिमित्तमा आभिमुख्येन जातं मथ्यादावुत्पन्नं कविं क्रांतदर्शिनं सम्राजं सम्यग्राजमानं जनानां यजमानानामतिथिं हविर्वहनाय सततं गंतारं । यद्वा । अतिथिवत्पूज्यं । आसन्नासन्यास्ये ॥ द्वितीयार्थे सप्तमी ॥ आस्यभूतं । अग्निलक्षणेनास्येन हि देवा हवींषि भुंजते । पात्रं पातारं रक्षकं । यद्वा । आस्येन धारकं । एवंगुणविशिष्टं वैश्वानराग्निं देवाः स्तोतार ऋत्विजो देवा एव वा आ जनयंत । यज्ञाभिमुख्येनाजीजनन् । अरण्योः सकाशादुदपादयन् ॥

नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवंत ।
वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयंत देवाः ॥२॥
नाभिं । यज्ञानां । सदनं । रयीणां । महां । आऽहावं । अभि । सं । नवंत ।
वैश्वानरं । रथ्यं । अध्वराणां । यज्ञस्य । केतुं । जनयंत । देवाः ॥२॥

यज्ञानां ज्योतिष्टोमादियागानां नाभिं नहनं बंधकं तथा रयीणां धनानां सदनं स्थानमेकनिलयं महां महांतमाहावं । आह्वयंतेऽस्मिन्नाहुतय इत्याहावः । तादृशं । यद्वा । कूपोदकधारणमाहावं निपानस्थानीयं । एवंभूतमग्निमभि अभितः सं नवंत । स्तोतारः सम्यक् स्तुवंति । तथा वैश्वानरं विश्वेषां नराणां सर्वाधिनमध्वराणां यज्ञानां रथ्यं रथिनं । यथा रथी स्वरथं नयति तद्वन्नेतारं याहयितारं गमयितारं यज्ञस्य केतुं प्रज्ञापकं । एवंविधमग्निं देवाः स्तोतार ऋत्विजो देवा एव वा जनयंत जनयंति । मथनेनोत्पादयंति ॥

त्वद्विप्रो जायते वाज्यग्ने त्वद्वीरासो अभिमातिषाहः ।
वैश्वानर त्वमस्मासु धेहि वसूनि राजन्त्स्पृहयाय्याणि ॥३॥
त्वत् । विप्रः । जायते । वाजी । अग्ने । त्वत् । वीरासः । अभिमातिऽसहः ।
वैश्वानर । त्वं । अस्मासु । धेहि । वसूनि । राजन् । स्पृहयाय्याणि ॥३॥

हे अग्ने वाजी हविर्लक्षणान्नवान्पुरुषस्त्वत् त्वत्तः सकाशात् विप्रो मेधावी जायते । तुभ्यं हविर्दानेन मेधावी भवति । तथा वीरासो वीरास्त्वत् त्वत्तोऽभिमातिषाहोऽभिमातीनां शत्रूणामभिभवितारो जायंते । यस्मादेवं तस्मात् हे वैश्वानर राजन् राजमानाग्ने त्वमस्मासु त्वद्भक्तेषु स्पृहयाय्याणि स्पृहणीयानि वसूनि धनानि धेहि । निधेहि ॥

त्वां विश्वे अमृत जायमानं शिशुं न देवा अभि सं नवंते ।
तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः ॥४॥
त्वां । विश्वे । अमृत । जायमानं । शिशुं । न । देवाः । अभि । सं । नवंते ।
तव । क्रतुऽभिः । अमृतऽत्वं । आयन् । वैश्वानर । यत् । पित्रोः । अदीदेः ॥४॥

हे अमृत मरणधर्मरहिताग्ने विश्वे सर्वे देवाः स्तोतारो जायमानमरण्योः सकाशादुत्पद्यमानं त्वा शिशुं न पुत्रमिवाभि सं नवंते । अभिसंस्तुवंति । यद्वा । दीव्यंतीति देवा रश्मयः । ते सर्वे जायमानं त्वामभि सं

नवंते अभिसंगच्छंते यथा पितरः पुत्रमभिगच्छंति। अपि च हे वैश्वानराग्ने यद्यदा पित्रोः पालयित्र्योर्द्यावापृथिव्योर्मध्येऽदीदेः दीप्यसे तदानीं तव त्वदीयैः क्रतुभिः कर्मभिर्ज्योतिष्टोमादिभिर्यागैरमृतत्वं देवत्वमायन्। यजमानाः प्राप्नुवंति ॥

वैश्वानर तव तानि व्रतानि महान्यग्ने नकिरा दधर्ष।
यज्जायमानः पित्रोरुपस्थेऽविंदः केतुं वयुनेष्वह्नां ॥५॥
वैश्वानर। तव। तानि। व्रतानि। महानि। अग्ने। नकिः। आ। दधर्ष।
यत्। जायमानः। पित्रोः। उपऽस्थे। अविंदः। केतुं। वयुनेषु। अह्नां ॥५॥

हे वैश्वानर विश्वेषां नराणां संबंधिन्नग्ने तव त्वदीयानि तानि प्रसिद्धानि व्रतानि कर्माणि महानि महांति नकिरा दधर्ष। न कश्चनान्यो धर्षयति। बाधते। यद्यदा त्वं पित्रोर्द्यावापृथिव्योरुपस्थ उपस्थानेऽतरिक्षे वयुनेषु गंतव्येषु मार्गेषु जायमानः सन्नह्नां केतुं प्रज्ञापकं सूर्यं स्वर्भानुनावृतमविंदः अलंभयः। तमोरूपमसुरं स्वतेजसा निवारयन्नस्थापय इत्यर्थः। तदा तानि व्रतानीति पूर्वत्रान्वयः ॥

वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना।
तस्येदु विश्वा भुवनाधि मूर्धनि वया इव रुरुहुः सप्त विस्रुहः ॥६॥
वैश्वानरस्य। विऽमितानि। चक्षसा। सानूनि। दिवः। अमृतस्य। केतुना।
तस्य। इत्। ऊं इति। विश्वा। भुवना। अधि। मूर्धनि। वयाःऽइव। रुरुहुः। सप्त।
विऽस्रुहः ॥६॥

वैश्वानरस्य विश्वनरहितस्याग्नेश्चक्षसा तेजसामृतस्योदकस्य केतुना प्रज्ञापकेन दिवो द्युलोकस्य सानूनि समुच्छ्रितस्थलानि नक्षत्ररूपाणि विमितानि निर्मितानि। यद्वा। दिवोऽतरिक्षस्य सानूनि समुच्छ्रितप्रदेशा मेघात्मका विमितानि निर्मिताः। धूमविकारत्वात्तेषां। तस्येदु तस्यैव वैश्वानरस्य मूर्धनि मूर्धस्थानीय उपरिवर्तमाने धूमे मेघात्मना परिणते विश्वा विश्वानि व्याप्तानि भुवना भुवनान्युदकान्यधि वसंति। यद्वा। वैश्वानरात्मकस्य परब्रह्मणो मूर्धन्युपरिप्रदेशे सर्वाणि भूतजातान्यधिवसंति। तथा वयाः शाखा इव सप्त सर्पणशीलाः सप्तसंख्या वा विस्रुहो नद्यश्च गंगाद्या रुरुहुः। रोहंति। अस्मादेव वैश्वानरात् प्रादुर्भवंति। आहुतिद्वारा सकलं जगदग्नेः सकाशादुत्पद्यत इत्यर्थः ॥

वि यो रजांस्यमिमीत सुक्रतुर्वैश्वानरो वि दिवो रोचना कविः।
परि यो विश्वा भुवनानि पप्रथेऽदब्धो गोपा अमृतस्य रक्षिता ॥७॥
वि। यः। रजांसि। अमिमीत। सुऽक्रतुः। वैश्वानरः। वि। दिवः। रोचना। कविः।
परि। यः। विश्वा। भुवनानि। पप्रथे। अदब्धः। गोपाः। अमृतस्य। रक्षिता ॥७॥

सुक्रतुः सुकर्मा वैश्वानरो विश्वेषां नराणां हितो योऽग्नी रजांस्युदकानि लोकान्वा व्यमिमीत निर्मितवान्। तथा दिवो द्युलोकस्य संबंधीनि रोचना रोचमानानि दीप्यमानानि नक्षत्रादीनि कविः क्रांतदर्शी सन् योऽग्निर्व्यमिमीत। यश्च विश्वा सर्वाणि भुवनानि भूतजातानि व्याप्तान्युदकानि वा परि पप्रथे परितोऽप्रथयत सोऽयमदब्धः केनाप्यहिंसितो गोपाः सर्वस्य गोपायिता रक्षितामृतस्यामरणहेतोरुदकस्य रक्षिता पालयिता सन् वर्तत इति शेषः ॥ ॥९॥

पृक्षस्येति सप्तर्चमष्टमं सूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकं। आदितः षड्जगत्यः सप्तमी त्रिष्टुप्। तथा चानुक्रांतं। पृक्षस्यात्या त्रिष्टुबिति॥ चातुर्विंशिकेऽहन्याग्निमारुत इदं सूक्तं वैश्वानरीयनिविद्धानं। सूत्रितं च। पृक्षस्य वृष्णो वृष्णे शर्धाय। आ० ७.४। इति॥ आभिप्लविके पृष्ठ्याभिप्लवषडहयोः पंचमेऽहनीदमेव सूक्तं वैश्वानरनिविद्धानं। सूत्रितं च। पृक्षस्य वृष्णो वृष्णे शर्धाय नू चित्सहोजा इत्याग्निमारुतं। आ० ७.७। इति॥ विषुवत्याग्निमारुत आद्या तृचा स्तोत्रियानुरूपौ। सूत्रितं च। पृक्षस्य वृष्णो अरुषस्य नू सह इति स्तोत्रियानुरूपौ। आ० ८.६। इति॥

पृक्षस्य वृष्णो अरुषस्य नू सहः प्र नु वोचं विदथा जातवेदसः।
वैश्वानराय मतिर्नव्यसी शुचिः सोम इव पवते चारुरग्नये॥१॥
पृक्षस्य। वृष्णः। अरुषस्य। नु। सहः। प्र। नु। वोचं। विदथा। जातऽवेदसः।
वैश्वानराय। मतिः। नव्यसी। शुचिः। सोमःऽइव। पवते। चारुः। अग्नये॥१॥

पृक्षस्य संपृक्तस्य व्याप्तस्य। यद्वा। पृक्षं हविर्लक्षणमन्नं। तद्वतः। वृष्णो वर्षितुररुषस्यारोचमानस्य जातवेदसो जातानां वेदितुर्वैश्वानराग्नेः सहो बलमभिभवनसमर्थं विदथा विदथे यज्ञे नु क्षिप्रं प्र वोचं। प्रब्रवीमि। प्रकर्षेण स्तौमीत्यर्थः। एको नुशब्दः पूरकः। नव्यसी नवतरा शुचिर्निर्मला यद्वा स्तोतॄणां शोधयित्री चारुः शोभना मतिर्मननीया स्तुतिश्चास्मै वैश्वानरायाग्नये पवते। मत्सकाशात्स्रवति। स्वयमेव निर्गच्छतीत्यर्थः। सोम इव। यथा सोमो दशापवित्रात्स्रवति तद्वत्॥

स जायमानः परमे व्योमनि व्रतान्यग्निर्व्रतपा अरक्षत।
व्यं१तरिक्षममिमीत सुक्रतुर्वैश्वानरो महिना नाकमस्पृशत्॥२॥
सः। जायमानः। परमे। विऽओमनि। व्रतानि। अग्निः। व्रतऽपाः। अरक्षत।
वि। अंतरिक्षं। अमिमीत। सुऽक्रतुः। वैश्वानरः। महिना। नाकं। अस्पृशत्॥२॥

स वैश्वानरोऽग्निर्व्रतपा व्रतस्य पालकः परमे उत्कृष्टे व्योमनि व्योम्न्याकाशे जायमानः सूर्यात्मना प्रादुर्भवन् व्रतानि कर्माणि लौकिकानि वैदिकानि चारक्षत। रक्षति। अंतरिक्षं च व्यमिमीत। एतदुपलक्षितांस्त्रीन् लोकान्निर्मितवान्। तथा सुक्रतुः शोभनकर्मा वैश्वानरोऽग्निर्महिना स्वमहिम्ना तेजसा नाकं द्युलोकमस्पृशत्। स्पृशति स्म॥

व्यस्तभ्नाद्रोदसी मित्रो अद्भुतोऽन्तर्वावदकृणोज्ज्योतिषा तमः।
वि चर्मणीव धिषणे अवर्तयद्वैश्वानरो विश्वमधत्त वृष्ण्यं॥३॥
वि। अस्तभ्नात्। रोदसी इति। मित्रः। अद्भुतः। अंतःऽवावत्। अकृणोत्। ज्योतिषा। तमः।
वि। चर्मणी इवेति चर्मणीऽइव। धिषणे इति। अवर्तयत्। वैश्वानरः। विश्वं। अधत्त।
वृष्ण्यं॥३॥

मित्रो मित्रभूतः सर्वेषामद्भुतो महान् आश्चर्यभूतो वा वैश्वानरोऽग्नी रोदसी द्यावापृथिव्यौ व्यस्तभ्नात्। विशेषेण स्तंभितवान्। यथाधो न पततस्तथा स्वकीयदेशे स्थापितवानित्यर्थः। तथा ज्योतिषा तेजसा तमोऽन्धकारं चांतर्वावत् अंतर्हितं तिरोहितमकृणोत्। अकरोत्॥ वावदिति वातेर्गतिकर्मणो यङ्लुगंतस्य रूपं॥ अपि च धिषणे धारयित्र्यौ द्यावापृथिव्यौ चर्मणी इव यथा पशोर्विशसिता द्वे चर्मणी शोषणार्थं प्रसारयति

तथा व्यवर्तयत। विवृते विस्तृते अकरोत्। किं बहुना वैश्वानरोऽयमग्निर्विश्वं सर्वं वृष्ण्यं वीर्यमधत्त। धत्ते। धारयति॥

अपामुपस्थे महिषा अगृभ्णत विशो राजानमुप तस्थुर्ऋग्मियं।
आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः॥४॥
अपां। उपऽस्थे। महिषाः। अगृभ्णत। विशः। राजानं। उप। तस्थुः। ऋग्मियं।
आ। दूतः। अग्निं। अभरत्। विवस्वतः। वैश्वानरं। मातरिश्वा। पराऽवतः॥४॥

आप इत्यंतरिक्षनाम। अपामंतरिक्षस्योपस्थ उपस्थाने मध्ये महिषाः। महन्नामैतत्। महांतो मरुतोऽगृभ्णत। अगृह्णन्। इमं वैश्वानरं वैद्युतात्मना वर्तमानमजानन्नित्यर्थः। गृहीत्वा च विशः प्रजा राजानं स्वामिनमृग्मियमर्चनीयमुप तस्थुः। अस्तुवन्। अपि चेमं वैश्वानरमग्निं पुरा सूर्यसमीपे विद्यमानं दूतो वेगवान्देवानां दूतो वा मातरिश्वा वायुः परावतो दूरदेशाद्विवस्वत आदित्यादाभरत्। इमं लोकं प्रत्याजहार॥

युगेयुगे विदथ्यं गृणद्भ्योऽग्ने रयिं यशसं धेहि नव्यसीं।
पव्येव राजन्नघशंसमजर नीचा नि वृश्च वनिनं न तेजसा॥५॥
युगेऽयुगे। विदथ्यं। गृणत्ऽभ्यः। अग्ने। रयिं। यशसं। धेहि। नव्यसीं।
पव्याऽइव। राजन्। अघऽशंसं। अजर। नीचा। नि। वृश्च। वनिनं। न। तेजसा॥५॥

हे अग्ने युगे युगे काले काले विदथ्यं। विदथो यज्ञः। तदर्हं त्वामुद्दिश्य नव्यसीं नवतरां स्तुतिं गृणद्भ्य उच्चारयितृभ्योऽस्मभ्यं रयिं धनं यशसं यशस्विनं पुत्रं च धेहि। विधेहि। कुरु। किंच हे राजन् राजमानाजर जरारहिताग्ने पव्येव वज्रेणेवात्मीयेन तेजसा वनिनं न वृक्षमिवाघशंसमघस्यानर्थस्य शंसितारं शत्रुं नीचा नीचीनो न्यग्भूतो यथा भवति तथा नि वृश्च। निजहि॥

अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरं सुवीर्यं।
वयं जयेम शतिनं सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः॥६॥
अस्माकं। अग्ने। मघवत्ऽसु। धारय। अनामि। क्षत्रं। अजरं। सुऽवीर्यं।
वयं। जयेम। शतिनं। सहस्रिणं। वैश्वानर। वाजं। अग्ने। तव। ऊतिऽभिः॥६॥

हे अग्ने अस्माकं॥ सप्तम्यर्थे षष्ठी॥ अस्मासु मघवत्सु हविर्लक्षणेन धनेन युक्तेषु क्षत्रं धनं धारय। स्थापय। कीदृशं। अनाम्यनमनीयमनपहार्यमजरं जरारहितमनश्वरं सुवीर्यं शोभनवीर्योपेतं। किंच हे वैश्वानराग्ने तवोतिभिस्त्वत्संबंधिभी रक्षणैर्वयं शतिनं शतसंख्यायुक्तं शतपुरुषयुक्तं वा तथा सहस्रिणं वाजमन्नं जयेम। लभेमहि॥

अदब्धेभिस्तव गोपाभिरिष्टेऽस्माकं पाहि त्रिषधस्थ सूरीन्।
रक्षा च नो ददुषां शर्धो अग्ने वैश्वानर प्र च तारीः स्तवानः॥७॥
अदब्धेभिः। तव। गोपाभिः। इष्टे। अस्माकं। पाहि। त्रिऽसधस्थ। सूरीन्।
रक्ष। च। नः। ददुषां। शर्धः। अग्ने। वैश्वानर। प्र। च। तारीः। स्तवानः॥७॥

हे इष्टे यष्टव्य एषणीय वा त्रिषधस्थ त्रिषु लोकेषु सहावस्थायिन् यद्वाहवनीयादिषु त्रिष्वायतनेषु यष्टव्यैर्देवैः सहावतिष्ठमानाग्ने अदब्धेभिः केनाप्यहिंसितैस्तव त्वदीयैर्गोपाभिर्गोपकै रक्षकैस्तेजोभिरस्माकं सूरीन्-

स्मदीयान्स्तोतॄन्पाहि। रक्ष। हे वैश्वानराग्ने दद्रुषां हवींषि दत्तवतां नोऽस्माकं शर्धो बलं रक्ष च। स्तवानः स्तूयमानस्त्वं प्र च तारीः। प्रवर्धय च॥ ॥१०॥

अहश्चेति सप्तर्चं नवमं सूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकं। अनुक्रांतं च। अहश्चेति॥ व्यूळ्हे दशरात्रे षष्ठेऽहन्याग्निमारुतशस्त्रे वैश्वानरनिविद्धानमिदं। सूत्र्यते हि। अहश्च कृष्णं मध्वो वो नाम। आ० ८. ८। इति॥

अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः।
वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥१॥
अहरिति। च। कृष्णं। अहः। अर्जुनं। च। वि। वर्तेते इति। रजसी इति। वेद्याभिः।
वैश्वानरः। जायमानः। न। राजा। अव। अतिरत्। ज्योतिषा। अग्निः। तमांसि ॥१॥

आहरति पुरुषोऽस्मिन्कर्माणीत्यहः। कृष्णं कृष्णवर्णं। एतत्सामानाधिकरण्यादहःशब्दो रात्रिवाचकः। तमसा कृष्णवर्णा रात्रिश्चार्जुनं च श्वेतेन तेजसा शुक्लवर्णमहो दिवसश्च रजसी स्वस्वभासा सर्वं जगद्रंजयंती वेद्याभिर्वेदितव्याभिरनुकूलतया ज्ञातव्याभिः स्वप्रवृत्तिभिर्वि वर्तेते। विविधं पर्यावर्तेते। यद्वा। रजसी द्यावापृथिव्यौ। उपलक्षणमेतत्। लोकत्रयं प्रत्यावर्तेते। एतच्च वैश्वानराग्नेराज्ञयेति शेषः। स हि देवतात्वेनात्र प्रतिपाद्यः। स च वैश्वानरोऽग्निर्जायमानो न राजा प्रादुर्भवन्प्रवर्धमानो राजेव ज्योतिषा तेजसा तमांस्यवातिरत्॥ अवतिरतिर्वधकर्मा॥ अवातिरत्। विनाशयति॥

नाहं तंतुं न वि जानाम्योतुं न यं वयंति समरेऽतमानाः।
कस्य स्वित्पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा ॥२॥
न। अहं। तंतुं। न। वि। जानामि। ओतुं। न। यं। वयंति। सम्ऽअरे। अतमानाः।
कस्य। स्वित्। पुत्रः। इह। वक्त्वानि। परः। वदाति। अवरेण। पित्रा ॥२॥

वैश्वानरस्य महत्त्वमाख्यास्यन्नृषिरिदं यज्ञं वस्त्रात्मकतया रूपयन् तस्य दुर्ज्ञानत्वमनया प्रतिपादयतीति यज्ञवादिनो मन्यंते। तंतुं। तंतवः पटस्य प्रागायतानि सूत्राणि। तानि च यज्ञात्मकस्य वस्त्रस्य गायत्र्यादीनि छंदांसि स्तुतशस्त्राणि च। तान्यहं न वि जानामि। तथोतुं। ओतवस्तिरश्चीनानि सूत्राणि। तानि चात्र यजूंष्याध्वर्यवाणि कर्माणि च। तान्यहं न वि जानामि। अपि चैतदुभयमाध्यं तं पटं यज्ञलक्षणं न वि जानामि यं पटं यज्ञलक्षणं समरे संगमने देवयजनेऽतमानाः सततं चेष्टमाना ऋत्विजो वयंति तंतून् ओतूंश्च संतन्वंति। वस्त्ररूपेण निष्पादयंतीत्यर्थः। इहास्मिंल्लोके कस्य स्वित्। स्विदिति वितर्के। कस्य नाम पुत्रो मनुष्यो वक्त्वानि वक्तव्यानि तानीमानि परः परस्तादमुष्मिंल्लोके वर्तमानो यः सूर्यस्तस्य पित्रावरेणावस्तादस्मिंल्लोके वर्तमानेन वैश्वानराग्निनानुशिष्टः सन् वदाति। वदेत्। न कश्चिदपि प्रवदितुं शक्नोतीत्यर्थः॥ एतच्च संप्रदायविद्भिरुक्तं। वैश्वानरस्य पुत्रोऽसौ परस्ताद्दिवि यः स्थितः। तस्यास्य वस्त्रस्य स्तुतशस्त्राणि तंतवः॥ यजूंषि चेष्टाश्चोतुः स्यादस्य वातयमध्वरः। परः परं स्थितः सूर्यः पिताग्निः पार्थिवो मत इति॥ रूपकतया जगत्सृष्टेर्दुर्ज्ञानत्वमनया प्रतिपादयतीत्यात्मविदो मन्यंते। तंतुं तंतून् तंतुस्थानानि सूक्ष्माणि वियदादीन्यपंचीकृतानि भूतानि न विजानामि। ओतुमोतून् पंचीकृतानि स्थूलान्योतुस्थानीयान्यपि वियदादीनि न विजानामि। न च तत्कार्यं पटस्थानीयं प्रपंचं विजानामि यं प्रपंचं समरे तंतूनामोतूनां च संगमनेऽतमानाः सततं चेष्टमानाः संसारिणो वयंति उत्पादयंति। तेषां भोगार्थमीश्वरः सृजतीति कर्तृत्वमुपचर्यते। इहास्मिन्विषये परः परस्तादुद्दिरविषये वर्तमानानि वक्त्वानि वक्तव्यानीमान्यवरेणार्वाचीनेन सृष्ट्युत्तरकालमुत्पन्नेन पित्रा स्वजनकेनानुशिष्टः सन् कस्य खलु पुत्रो वदाति। वदेत्। स्वोत्पत्तेः प्राचीनं वृत्तांतमजानानः कश्चिदपि न वदेदित्यर्थः॥

स इत्तंतुं स वि जानात्योतुं स वक्त्वान्यृतुथा वंदाति ।
य ईं चिकेतदमृतस्य गोपा अवश्चरन्परो अन्येन पश्यन् ॥३॥
सः । इत् । तंतुं । सः । वि । जानाति । ओतुं । सः । वक्त्वानि । ऋतुऽथा । वदाति ।
यः । ईं । चिकेतत् । अमृतस्य । गोपाः । अवः । चरन् । परः । अन्येन । पश्यन् ॥३॥

यद्यप्युक्तेन प्रकारेण दुर्ज्ञानानि तथाप्येतानि वैश्वानरोऽग्निर्जानाति वदति चेत्यनया प्रतिपादयति । स इत स एव वैश्वानरोऽग्निस्तंतुं तंतुस्थानीयानि गायत्र्यादीनि छंदांसि स्तुतशस्त्राणि वि जानाति । तथा स एवोतुमोतुस्थानीयानि यजूंष्याध्वर्यवाणि च कर्माणि वि जानाति । ऋतुथा काले काले तत्तदनुष्ठानसमये वक्त्वानि वक्तव्यानि च तानि वदाति । वदति । वदेत । योऽय वैश्वानरोऽमृतस्य गोपा उदकस्य गोपायिता रक्षितावोऽवस्ताद्भूलोके चरन् पार्थिवाग्निरूपेण संचरन् परः परस्ताद्दिव्यन्येन सूर्यात्मना पश्यन् सर्वं जगत्प्रकाशयन् ईमिमानि परि दृश्यमानानि सर्वाणि भूतानि चिकेतत् जानाति स एवेति पूर्वत्र संबंधः । यद्वा । स इत स एव तंतुं तंतुस्थानीयानि सूक्ष्मभूतानि वि जानाति नान्यः कश्चित । तथोतुमोतुस्थानीयानि स्थूलभूतानि च स एव वि जानाति । स एव वक्त्वानि । वक्तव्यान्युपदेष्टव्यानीमान्यृतुथा काले काले यदा यदा विद्यासंप्रदायोच्छेदस्तदा तदा वदाति । वदेत । कोऽसौ यो विजानीयाद्वदेच्चेत्यत आह । यो वैश्वानरो विश्वनरात्मकः परमात्मामृतस्यामृतत्वस्य विमोक्षणस्य गोपा रक्षितावोऽवस्तात्संसारदशायां चरन् अंतःकरणोपेतो जीवात्मभावेन संचरन् परः परस्तादविद्याया ऊर्ध्वं वर्तमानेनान्येनोक्तविलक्षणेन निरुपाधिकेन सच्चिदादिलक्षणेन रूपेण पश्यन् सर्वं जगत्प्रकाशयन् ईमिमानि चिकेतत् जानाति । तथा च परमात्मानं प्रकृत्य श्रूयते । तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । श्वे० उ० ६. १४. । इति ॥

अयं होता प्रथमः पश्यतेममिदं ज्योतिरमृतं मर्त्येषु ।
अयं स जज्ञे ध्रुव आ निषत्तोऽमर्त्यस्तन्वा३ वर्धमानः ॥४॥
अयं । होता । प्रथमः । पश्यत । इमं । इदं । ज्योतिः । अमृतं । मर्त्येषु ।
अयं । सः । जज्ञे । ध्रुवः । आ । निऽसत्तः । अमर्त्यः । तन्वा । वर्धमानः ॥४॥

अय वैश्वानरोऽग्निः प्रथम आद्यो होता । मानुषो हि होता द्वितीयः । हे मनुष्यास्तमिमं पश्यत । भजतेत्यर्थः । मर्त्येषु मरणस्वभावेषु शरीरेष्वमृतं मरणरहितमिदं वैश्वानराख्यं ज्योतिर्जाठररूपेण वर्तत इत्यर्थः । अपि च सोऽयमग्निर्ध्रुवो निश्चल आ समंतान्निषत्तो निषण्णः सर्वव्यापी अत एवामर्त्यो मरणरहितोऽपि तन्वा शरीरेण संबधात जज्ञे । जायते । वर्धमानश्च भवतीत्युपचर्यते ॥

ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वंतः ।
विश्वे देवाः समनसः सकेता एकं क्रतुमभि वि यंति साधु ॥५॥
ध्रुवं । ज्योतिः । निऽहितं । दृशये । कं । मनः । जविष्ठं । पतयत्ऽसु । अंतरिति ।
विश्वे । देवाः । सऽमनसः । सऽकेताः । एकं । क्रतुं । अभि । वि । यंति । साधु ॥५॥

ध्रुवं निश्चलं मनो मननः तस्मादपि जविष्ठमतिशयेन वेगवत ईदृशं वैश्वानराख्यं ज्योतिः पतयत्सु गच्छत्सु जंगमेषु प्राणिष्वंतर्मध्ये निहितं । प्रजापतिना स्थापितं । किमर्थं । दृशये कं । दर्शनार्थं । किंच विश्वे सर्वे देवाश्च समनसः समानमनस्काः सकेताः समानप्रज्ञाश्च संत एकं मुख्यं गंतारं वा क्रतुं कर्मणां कर्तारं साधु सम्यक् अभि वि यंति । आभिमुख्येन विविधं प्राप्नुवंति । सेवंत इत्यर्थः । यद्वा । पतयत्सु गच्छत्सु प्राणिष्वंतर्मध्ये हृदये मनो जविष्ठं मनसोऽप्यतिशयेन वेगयुक्तं ध्रुवं निश्चलं निर्विकल्पं । तथा च वाजसनेयकं । अनेजदेकं

मनसो जवीयः। वा॰ सं॰ ४०. ४.। इति। ज्योतिर्ब्रह्म चैतन्यं निहितं। न केनचित् स्थापितं। यो वेद निहितं गुहायां परमे व्योमन्। तै॰ आ॰ ८. १.। इति हि श्रूयते। किमर्थं। दृशये दर्शनार्थं। ज्ञानेन हि सर्वं जानाति। अपि च। दीव्यंतीति देवा इंद्रियाणि। विश्वे सर्वे देवा सर्वाणींद्रियाणि चक्षुराद्याः समनसो मनसा सह वर्तमानाः संकेताः सतेजस्काः संत एकमद्वितीयं क्रतुं सृष्ट्यादीनां कर्मणां कर्तारं विश्वनरात्मकं परमात्मानमभिलक्ष्य साधु सम्यक् वि यंति। विविधं गच्छंति। देवा एव वेममभि वि यंति। आभिमुख्येन विविधमुपयंति। उपासत इत्यर्थः। तथा च श्रूयते। तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतं। श॰ ब्रा॰ १४. ७ २ २० । इति॥

वि मे कर्णा पतयतो वि चक्षुर्वी३दं ज्योतिर्हृदय आहितं यत्।
वि मे मनश्चरति दूरआधीः किं स्विद्वक्ष्यामि किमु नू मनिष्ये ॥६॥
वि। मे। कर्णा। पतयतः। वि। चक्षुः। वि। इदं। ज्योतिः। हृदये। आऽहितं। यत्।
वि। मे। मनः। चरति। दूरेऽआधीः। किं। स्वित्। वक्ष्यामि। किं। ऊं इति। नु। मनिष्ये ॥६॥

वैश्वानरं श्रोतुकामस्य मे मम कर्णा कर्णौ वि पतयतः। विविधं गच्छतः। श्रोतव्यानां तदीयगुणानां बहुत्वात्। तथा वैश्वानरं दिदृक्षमाणस्य मम चक्षुरिंद्रियं वि पतयति। विविधं गच्छति। द्रष्टव्यानां तदीयरूपाणां बहुत्वात्। तथा ज्योतिः प्रकाशकं हृदये हृदयपुंडरीक आहितं निहितं यद्बुद्ध्याख्यं तत्त्वमिदमपि वि पतयति। विविधं गच्छति वैश्वानरात्मानं ज्ञातुं। अपि च दूरआधीः। दूरे विप्रकृष्टे विषये आधीराध्यानं यस्य तादृशं॥ छांदसो लिंगव्यत्ययः॥ मे मदीयं मनश्च वि चरति। विविधं प्रवर्तते। एवमहमहमिकया सर्वेष्विंद्रियेषु प्रवृत्तेषु किं स्विदहं वैश्वानरस्य रूपमिति वक्ष्यामि। किमु नु किमु खलु संप्रति मनिष्ये। मनसा प्रपत्स्ये। वैश्वानरस्य गुणानामनंतत्वात् मंदप्रज्ञेन मया ज्ञातुं न शक्यत इत्यर्थः॥

विश्वे देवा अनमस्यन्भियानास्त्वामग्ने तमसि तस्थिवांसं।
वैश्वानरोऽवतूतये नोऽमर्त्योऽवतूतये नः ॥७॥
विश्वे। देवाः। अनमस्यन्। भियानाः। त्वां। अग्ने। तमसि। तस्थिऽवांसं।
वैश्वानरः। अवतु। ऊतये। नः। अमर्त्यः। अवतु। ऊतये। नः ॥७॥

हे वैश्वानर तमस्यंधकारे तस्थिवांसं स्थितवंतं त्वा विश्वे सर्वे देवा अनमस्यन्। नमस्कुर्वंति। कुतो हेतोः। भियाना अंधकाराद्भीताः। तादृशोऽमर्त्यो मरणरहितो वैश्वानरोऽग्निर्नोऽस्मानूतय ऊत्या रक्षणेनावतु। रक्षतु। पुनरुक्तिरादरार्था॥ ॥११॥

पुरो व इति सप्तर्चं दशमं सूक्तं भरद्वाजस्यार्षमाग्नेयं। सप्तमी विराट्का द्विपदा विराट् शिष्टास्त्रिष्टुभः। तथा चानुक्रांतं। पुरो वो द्विपदांतं॥ प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदसीदमादीनि चत्वारि सूक्तानि। सूत्रितं च। पुरो वो मंद्रमिति चत्वारि त्वं सुप्रतीकमिति षट्। आ॰ ४ १३। इति॥

पुरो वो मंद्रं दिव्यं सुवृक्तिं प्रयति यज्ञे अग्निमध्वरे दधिध्वं।
पुर उक्थेभिः स हि नो विभावा स्वध्वरा करति जातवेदाः ॥१॥
पुरः। वः। मंद्रं। दिव्यं। सुऽवृक्तिं। प्रऽयति। यज्ञे। अग्निं। अध्वरे। दधिध्वं।
पुरः। उक्थेभिः। सः। हि। नः। विभाऽवा। सुऽअध्वरा। करति। जातऽवेदाः ॥१॥

हे ऋत्विग्यजमाना वो यूयं मंद्रं मोदनं स्तुत्यं वा दिव्यं दिवि भवं सुवृक्तिं सुष्ठु दोषैर्वर्जितं सुष्ठु वर्जनीय

वा एवंगुणमग्निं प्रयति प्रगच्छति प्रवर्तमानेऽध्वरे रक्षःप्रभृतिभिरहिंस्ये हिंसाप्रत्यवायरहिते वास्मिन्यज्ञे पुरो दधिध्वं। पुरस्तादाहवनीयरूपेण धारयत। यद्वा। पुरोधसं कुरुत। उक्थेभिः स्तुतशस्त्रैश्च पुरो दधिध्वं। विभावा विशेषेण दीप्यमानो जातवेदा जातानां वेदिता सोऽग्निर्हि यस्मात् नोऽस्मान् स्वध्वरा शोभनयागान् करति करोति तस्मात्पुरो दधिध्वमित्यन्वयः॥

तमु द्युमः पुर्वणीक होतरग्ने अग्निभिर्मनुष इधानः।
स्तोमं यमस्मै ममतेव शूषं घृतं न शुचि मतयः पवंते॥२॥
तं। ऊं इति। द्युऽमः। पुरुऽअनीक। होतः। अग्ने। अग्निऽभिः। मनुषः। इधानः।
स्तोमं। यं। अस्मै। ममताऽइव। शूषं। घृतं। न। शुचिं। मतयः। पवंते॥२॥

हे द्युमो दीप्तिमन् पुर्वणीक बहुज्वाल होतर्देवानामाह्वातरग्ने अग्निभिस्तवावयवभूतैरन्यैरग्निभिः सार्धमिधानः समिध्यमानो दीप्तः सन् मनुषो मनुष्यस्य स्तोतुस्तम् तं स्तोमं शृणुवति शेषः। उ इति पादपूरणं। यं स्तोमं स्तोत्रं शूषं सुखकरं घृतं न पवित्राभ्यामुत्पूतं घृतमिव शुचि शुद्धमस्मा अस्मै मतयो मंतारः स्तोतारो ममतेव। ममता नाम ब्रह्मवादिनी दीर्घतमसो माता। सेव पवंते पुनंति संस्कुर्वंति। दोषवर्जितमुच्चारयंतीत्यर्थः। तं स्तोममित्यन्वयः॥

पीपाय स श्रवसा मर्त्येषु यो अग्नये ददाश विप्र उक्थैः।
चित्राभिस्तमूतिभिश्चित्रशोचिर्व्रजस्य साता गोमतो दधाति॥३॥
पीपाय। सः। श्रवसा। मर्त्येषु। यः। अग्नये। ददाश। विप्रः। उक्थैः।
चित्राभिः। तं। ऊतिऽभिः। चित्रऽशोचिः। व्रजस्य। साता। गोऽमतः। दधाति॥३॥

स यजमानो मर्त्येषु मनुष्येषु मध्ये श्रवसान्नेन पीपाय वर्धते विप्रो मेधावी यो यजमान उक्थैः स्तुतिभिः सार्धं हवींषि ददाश प्रयच्छति। तं यजमानं चित्रशोचिर्विचित्रदीप्तिरग्निश्चित्राभिराश्चर्यभूताभिरूतिभी रक्षाभिर्गोमतो गोभिर्युक्तस्य व्रजस्य गोष्ठस्य साता सातौ संभजने दधाति। धारयति॥

आ यः पप्रौ जायमान उर्वी दूरेदृशा भासा कृष्णाध्वा।
अध बहु चित्तम ऊर्म्यायास्तिरः शोचिषा ददृशे पावकः॥४॥
आ। यः। पप्रौ। जायमानः। उर्वी इति। दूरेऽदृशा। भासा। कृष्णऽअध्वा।
अध। बहु। चित्। तमः। ऊर्म्यायाः। तिरः। शोचिषा। ददृशे। पावकः॥४॥

कृष्णाध्वा कृष्णवर्त्मा योऽग्निर्जायमानः प्रादुर्भवन् उर्वी विस्तीर्णे द्यावापृथिव्यौ दूरेदृशा दूरे दृश्यमानया भासा दीप्त्या आ पप्रौ आपूरयति स पावकोऽग्निरधानंतरमूर्म्यायाः। रात्रिनामैतत्। रात्रेः संबंधि बहु चित् बहून्यपि तमोऽधकारं शोचिषा दीप्त्या तिरस्कुर्वन् ददृशे। दृश्यते॥

नू नश्चित्रं पुरुवाजाभिरूती अग्ने रयिं मघवद्भ्यश्च धेहि।
ये राधसा श्रवसा चात्यन्यान्सुवीर्येभिश्चाभि संति जनान्॥५॥
नु। नः। चित्रं। पुरुऽवाजाभिः। ऊती। अग्ने। रयिं। मघवत्ऽभ्यः। च। धेहि।
ये। राधसा। श्रवसा। च। अति। अन्यान्। सुऽवीर्येभिः। च। अभि। संति। जनान्॥५॥

हे अग्ने मघवद्भ्यो हविर्लक्षणधनयुक्तेभ्यो नोऽस्मभ्यं पुरुवाजाभिर्बह्वन्नवती ऊतिभी रक्षणैः सह चित्रं चायनीयं रयिं धनं नु क्षिप्रं धेहि। देहि। प्रयच्छ। चशब्दो वक्ष्यमाणेन समुच्चयार्थः। ये राधसा धनेन श्रवसान्नेन च सुवीर्यैः शोभनैर्वीर्यैश्चान्यान् जनान्मनुष्यानति अतिशयेनाभि संति अभिभवंति तादृशान्पुत्रांश्चास्मभ्यं देहीत्यर्थः॥

इमं यज्ञं चनो धा अग्न उशन्यं त आसानो जुहुते हविष्मान्।
भरद्वाजेषु दधिषे सुवृक्तिमवीर्वाजस्य गध्यस्य सातौ॥६॥
इमं। यज्ञं। चनः। धाः। अग्ने। उशन्। यं। ते। आसानः। जुहुते। हविष्मान्।
भरत्ऽवाजेषु। दधिषे। सुऽवृक्तिं। अवीः। वाजस्य। गध्यस्य। सातौ॥६॥

हे अग्ने उशन् कामयमानस्त्वमिमं पुरोवर्ति यज्ञं यागसाधनं चनो हविर्लक्षणमन्नं धाः। धेहि। स्वात्मनि धारय। यं च पुरोडाशादिकमासान आसीन उपविशन् हविष्मान्हविर्युक्तो यजमानस्ते तुभ्यं त्वदर्थं जुहुते जुहोति तमिममित्यन्वयः। अपि च भरद्वाजेष्वृषिषु सुवृक्तिं सुष्ठु दोषैर्वर्जितां स्तुतिं दधिषे। धारय। गध्यस्य। गध्यतिर्मिश्रीभावकर्मा॥ मिश्रणीयस्य प्राप्यस्य वाजस्यान्नस्य सातौ संभजने निमित्तभूतेऽवीः। तानपीत्यर्थः च॥

वि द्वेषांसीनुहि वर्धयेळां मदेम शतहिमाः सुवीराः॥७॥
वि। द्वेषांसि। इनुहि। वर्धय। इळां। मदेम। शतऽहिमाः। सुऽवीराः॥७॥

हे अग्ने द्वेषांसि द्वेष्टॄन् शत्रून् वीनुहि। विविधं गमय। इळामन्नं चास्मदीयं वर्धय। वयं च सुवीराः शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेताः सतः शतहिमाः शतं हेमंतान् संवत्सरान्मदेम। मोदेम। तथा भूयास्म॥ ॥१२॥

यजस्व होतरिति षडृचमेकादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं। अनुक्रम्यते च। यजस्व षडिति॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

यजस्व होतरिषितो यजीयानग्ने बाधो मरुतां न प्रयुक्ति।
आ नो मित्रावरुणा नासत्या द्यावा होत्राय पृथिवी ववृत्याः॥१॥
यजस्व। होतः। इषितः। यजीयान्। अग्ने। बाधः। मरुतां। न। प्रऽयुक्ति।
आ। नः। मित्रावरुणा। नासत्या। द्यावा। होत्राय। पृथिवी इति। ववृत्याः॥१॥

हे होतर्देवानामाह्वातरग्ने यजीयान्यष्टृतमस्त्वमिषितः प्रेषितोऽस्माभिः प्रार्थितः सन्। नेति संप्रत्यर्थे। संप्रति प्रयुक्ति प्रयुक्तौ प्रयुज्यमाने यज्ञे मरुतां देवानां बाधः शत्रूणां बाधकं गणं यजस्व। यजेति वाक्यद्वयं। हे होतरग्ने यजस्व देवानित्येकं वाक्यं। प्रयुज्यत इति प्रयुक्ति बलं। मरुतां न प्रयुक्ति मरुतां बलमिवास्मच्छत्रून् बाधः बाधस्वेति द्वितीयं वाक्यं। अपि च मित्रावरुणौ। अहरभिमानी देवो मित्रो वरुणो रात्र्यभिमानी। तौ च नासत्या सत्यस्य नेतारौ सत्यस्वभावावेव वा नासिकाप्रभवौ वाश्विनौ द्यावापृथिवी दिवं च पृथिवीं च एतांश्च देवान् होत्रायास्मदीयाय यज्ञाय तदर्थमा ववृत्याः। आवर्तय। आवहेत्यर्थः॥

त्वं होता मंद्रतमो नो अध्रुगंतर्देवो विदथा मर्त्येषु।
पावकया जुह्वा३ वह्निरासाग्ने यजस्व तन्वं१ तव स्वां॥२॥
त्वं। होता। मंद्रऽतमः। नः। अध्रुक्। अंतः। देवः। विदथा। मर्त्येषु।
पावकया। जुह्वा। वह्निः। आसा। अग्ने। यजस्व। तन्वं। तव। स्वां॥२॥

हे अग्ने त्वं मर्त्येषु मनुष्येष्वंतर्मध्ये वर्तमानो विदथा विदथे यज्ञे होता देवानामाह्वाता भवसि । कीदृशस्त्वं । मंद्रतमः स्तुत्यतमो नोऽस्माकमध्रुगद्रोग्धास्मदर्थं द्रोहरहितो वा । सर्वदा मित्रभूत इत्यर्थः । देवो दानादिगुणयुक्तः । अपि च हे अग्ने जुह्वा । ह्वयंतेऽस्यामाहुतय इति जुहूर्ज्वाला । तया पावकया शोधयित्र्यास्येन देवानामास्यभूतया वह्निर्हविषां वोढा त्वं तव स्वां स्वभूतां स्विष्टकृदाख्यां तन्वं तनूं यजस्व ॥

धन्या॑ चि॒द्धि त्वे धि॒षणा॒ वष्टि॒ प्र दे॒वाञ्जन्म॑ गृण॒ते यज॑ध्यै ।
वेपि॑ष्ठो॒ अंगि॑रसां॒ यद्ध॒ विप्रो॒ मधु॑ छं॒दो भन॑ति॒ रेभ॑ इ॒ष्टौ ॥३॥

धन्या॑ । चि॒त् । हि । त्वे इति॑ । धि॒षणा॑ । वष्टि॑ । प्र । दे॒वान् । जन्म॑ । गृ॒ण॒ते । यज॑ध्यै ।
वेपि॑ष्ठः । अंगि॑रसां । यत् । ह॒ । विप्रः॑ । मधु॑ । छं॒दः॑ । भन॑ति । रे॒भः॑ । इ॒ष्टौ ॥३॥

धन्या धनमिच्छंती धनहेतुभूता धिषणा स्तुतिर्हे अग्ने त्वे त्वां वष्टि । कामयते । चिदित्येतत्पादपूरणं । किमर्थं । देवान्यष्टव्यानिंद्रादीन प्र यजध्यै प्रकर्षेण यष्टुं त्वदीयं जन्म प्रादुर्भावं गृणते स्तुवते यजमानायेदृग्भूतयजमानार्थं । यद्ध यदा खल्वंगिरसामृषीणां मध्ये वेपिष्ठोऽतिशयेन स्तुतः प्रेरयिता विप्रो मेधावी रेभः स्तोता भरद्वाज इष्टौ यज्ञे मधु मधुमन्मदकरं छंदः स्तोत्रं भनति उच्चारयति तदा धिषणा वष्टीत्यन्वयः ॥

अदि॑द्युत॒त्स्वपा॑को वि॒भावाग्ने॒ यज॑स्व॒ रोद॑सी उ॒रूची॑ ।
आ॒युं न यं नम॑सा रा॒तह॑व्या अं॒जंति॑ सु॒प्रय॑सं॒ पंच॒ जनाः॑ ॥४॥

अदि॑द्युतत् । सु । अ॒पाकः॑ । वि॒ऽभावा॑ । अग्ने॑ । यज॑स्व । रोद॑सी॒ इति॑ । उ॒रू॒ची इति॑ ।
आ॒युं । न । यं । नम॑सा । रा॒तऽह॑व्याः । अं॒जंति॑ । सु॒ऽप्रय॑सं । पंच॑ । जनाः॑ ॥४॥

अयमग्निः स्वदिद्युतत । सुष्ठु द्योतते । दीप्यते । कथंभूतः । अपाकः । पाकः पक्तव्यप्रज्ञो मूर्खः । तद्विलक्षणोऽपाकः । विभावा दीप्यमानः । शेषः प्रत्यक्षकृतः । हे अग्ने स त्वमुरूची उरु विस्तीर्णमंचंत्यौ विस्तृते रोदसी द्यावापृथिव्यौ यजस्व । हविषा पूजय । आयुं न मनुष्यमतिथिमिव यं पंच जना मनुष्या ऋत्विग्यजमानलक्षणा रातहव्या दत्तहविष्काः संतः सुप्रयसं शोभनहविर्लक्षणमग्निं नमसान्नेन हविर्लक्षणेनाजंति सिंचंति तर्पयंति स त्वं यजस्वेत्यन्वयः ॥

वृं॒जे ह॒ यन्नम॑सा ब॒र्हिर॒ग्नावया॑मि॒ स्रुग्घृ॒तव॑ती सु॒वृक्तिः॑ ।
अम्य॑क्षि॒ सद्म॒ सद॑ने पृथि॒व्या अश्रा॑यि य॒ज्ञः सूर्ये॒ न चक्षुः॑ ॥५॥

वृं॒जे । ह॒ । यत् । नम॑सा । ब॒र्हिः । अ॒ग्नौ । अया॑मि । स्रुक् । घृ॒तऽव॑ती । सु॒ऽवृ॒क्तिः ।
अम्य॑क्षि । सद्म॑ । सद॑ने । पृ॒थि॒व्याः । अश्रा॑यि । य॒ज्ञः । सूर्ये॑ । न । चक्षुः॑ ॥५॥

यद्ध यदा खलु नमसा हविषा सहाग्नावग्निसमीपे बर्हिर्वृंजे ॥ वृजिर्वर्जनार्थः ॥ छिद्यते । आह्रियत इत्यर्थः । सुवृक्तिः सुष्ठु दोषवर्जिता घृतवती घृतपूर्णा स्रुगयामि । नियम्यते । बर्हिष्यासाद्यते । तथा पृथिव्या भूमेः सदने स्थाने सद्म हविरासादनार्था वेदिरम्यक्षि ॥ म्यक्षतिर्गतिकर्मा ॥ गम्यते । परिगृह्यते । तदानीं यज्ञोऽश्रायि । यजमान आश्रितो भवति । तत्र दृष्टांतः । सूर्ये न चक्षुः । यथा सूर्ये सर्वस्य प्रेरक आदित्ये प्रकाशकं तेजः समवैति तद्वत् ॥

द॒श॒स्या नः॑ पुर्वणीक होतर्दे॒वेभि॑रग्ने अ॒ग्निभि॑रिधा॒नः ।
रा॒यः सू॑नो सहसो वावसा॒ना अति॑ स्रसेम वृ॒जनं॒ नांहः॑ ॥६॥

दशस्य । नः । पुरुऽअनीक । होतः । देवेभिः । अग्ने । अग्निऽभिः । इधानः ।
रायः । सूनो इति । सहसः । ववसानाः । अति । स्रसेम । वृजनं । न । अंहः ॥६॥

हे पुर्वणीक बहुज्वाल होतर्देवानामाह्वातरग्ने देवेभिर्देवैर्दीप्यमानैरन्यैरग्निभिस्त्वद्विभूतिभूतैः सार्धमिधान इध्यमानो दीप्यमानः सन नोऽस्मभ्यं रायो धनानि दशस्य। प्रयच्छ। हे सहसः सूनो बलस्य पुत्राग्ने वावसाना हविषा त्वामाच्छादयंतो वयं वृजनं न शत्रुमिवांहः पापमति स्रसेम। अतिगच्छेम। अतिक्रामेमेत्यर्थः॥ ॥१३॥

मध्ये होतेति षडृचं द्वादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं। मध्य इत्यनुक्रांतं॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

मध्ये होता दुरोणे बर्हिषो राळग्निस्तोदस्य रोदसी यजध्यै।
अयं स सूनुः सहस ऋतावा दूरात्सूर्यो न शोचिषा ततान ॥१॥
मध्ये । होता । दुरोणे । बर्हिषः । राट् । अग्निः । तोदस्य । रोदसी इति । यजध्यै ।
अयं । सः । सूनुः । सहसः । ऋतऽवा । दूरात् । सूर्यः । न । शोचिषा । ततान ॥१॥

होता देवानामाह्वाता बर्हिषो यज्ञस्य राट् राजाग्निस्तोदस्य। तुद्यते तपसा पीड्यत इति तोदो यजमानः। तस्य दुरोणे गृहे मध्ये निषीदतीति शेषः। किमर्थं। रोदसी द्यावापृथिव्यौ यजध्यै यष्टुं। स तादृशो ऽयं सहसः सूनुः सहसस्पुत्र ऋतावा सत्यवान्यज्ञवान्वाग्निः सूर्यो न सूर्य इव दूराद्दूरत एव शोचिषा तेजसा ततान। आतनोति। विस्तारयति। दूरदेशे वर्तमानोऽपि सूर्य इव सर्वं जगद्भासयतीत्यर्थः॥

आ यस्मिन्त्वे स्वपाके यजत्र यक्षद्राजन्त्सर्वतातेव नु द्यौः।
त्रिषधस्थस्ततरुषो न जंहो हव्या मघानि मानुषा यजध्यै ॥२॥
आ । यस्मिन् । त्वे इति । सु । अपाके । यजत्र । यक्षत् । राजन् । सर्वताताऽइव । नु । द्यौः ।
त्रिऽसधस्थः । ततरुषः । न । जंहः । हव्या । मघानि । मानुषा । यजध्यै ॥२॥

द्यौः स्तोता सर्वतातेव। इवशब्दः पूरकः। यज्ञनामैतत्। सर्वतातौ सर्वैस्तायमाने यज्ञे। यद्वा। सर्वशब्दात्स्वार्थिकस्तातिल्प्रत्ययः। सर्वः स्तोता हे यजत्र यष्टव्य राजन् राजमानाग्ने अपाके प्राज्ञे त्वे यस्मिंस्त्वयि सु अत्यंतं नु क्षिप्रमा यक्षत् आयजति हवींषि जुहोति त्रिषधस्थस्त्रिषु लोकेषु सह स्थितः। यद्वा। गार्हपत्यादिरूपेण त्रिधावस्थितः। तादृशस्त्वं ततरुषो न तरिता सूर्य इव जंहः शीघ्रं गंता भव॥ जंह इति हंतेर्गतिकर्मणो रूपं॥ यद्वा॥ तॄ प्लवनतरणयोरित्यस्मात्क्वसौ रूपं ततर्वानिति। तस्य षष्ठ्या रूपमेतत्ततरुष इति॥ तरितुः सूर्यस्येव जंहो वेगस्तव भवत्वित्यर्थः। किमर्थं। मघानि महनीयानि प्रशस्यानि मानुषा मनुष्याणां संबंधीनि हव्या हव्यानि हवींषि यजध्यै यष्टुं देवेभ्यो दातुं॥

तेजिष्ठा यस्यारतिर्वनेराट् तोदो अध्वन्न वृधसानो अद्यौत्।
अद्रोघो न द्रविता चेतति त्मन्नमर्त्योऽवर्त्र ओषधीषु ॥३॥
तेजिष्ठा । यस्य । अरतिः । वनेऽराट् । तोदः । अध्वन् । न । वृधसानः । अद्यौत् ।
अद्रोघः । न । द्रविता । चेतति । त्मन् । अमर्त्यः । अवर्त्रः । ओषधीषु ॥३॥

यस्याग्नेररतिर्गंत्री ज्वाला तेजिष्ठातिशयेन तेजस्विनी सती वनेराट् दावरूपेणारण्ये राजमाना वर्तते वृधसानो वर्धमानः सोऽग्निस्तोदो अध्वन्न। तोदः सर्वस्य प्रेरकः सूर्यः। स इवाध्वनि स्वमार्गे तारिते द्यौत।

प्रकाशते। अपि चाद्रोघो न अद्रोग्धव्यः। यद्वा। प्राणरूपेण सर्वेषामद्रोग्धा वायुरिव तादृशोऽमर्त्यो मरणरहितः सोऽग्निरोषधीषु। ओषः पाक एषु धीयत इत्योषधयो वनानि। तेषु द्रविता शीघ्रगामी सन् अवर्त्रः केनाप्यवारणीयश्च भवन् त्मन्नात्मना स्वप्रकाशेनेव चेतति। चेतयति। सर्वं जगत् ज्ञापयति॥

साम्माकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः।
द्र्वन्नो वन्वन् क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः॥४॥
सः। अस्माकेभिः। एतरि। न। शूषैः। अग्निः। स्तवे। दमे। आ। जातऽवेदाः।
द्रुऽअन्नः। वन्वन्। क्रत्वा। न। अर्वा। उस्रः। पिताऽइव। जारयायि। यज्ञैः॥४॥

जातवेदा जातधनो ज्ञातप्रज्ञो वा सोऽग्निरस्माकेभिरस्मदीयैः स्तोतृभिरेतरी न। एतरि गंतरि याचमाने पुरुषे विद्यमानानि स्तोत्राणि यथात्यंतं सुखकराणि तथा शूषैः सुखकरैः स्तोत्रैर्दमेऽस्मदीये यज्ञगृह आ आभिमुख्येन स्तवे। स्तूयते। अपि च द्रुन्नः। द्रुर्द्रुमः। स एवान्नं यस्य स तथोक्तः। अत एव वन्वन् वनानि संभजन् क्रत्वा न क्रतुनात्मीयेन कर्मणा चार्वा गंता च भवति। तत्र दृष्टांतः। उस्रः पितेव। पिता पालयिता वत्सानां जनको वोस्रो वृषभ इव। स यथा मैथुनार्थं शीघ्रं गच्छति तद्वत्। यज्ञैर्यज्ञवद्भिर्यजमानैश्च जारयायि। स्तूयते॥ जरतिः स्तुतिकर्मण एतद्रूपं॥

अध स्मास्य पनयंति भासो वृथा यत्तक्षदनुयाति पृथ्वीं।
सद्यो यः स्यंद्रो विषितो धवीयानृणो न तायुरति धन्वा राट्॥५॥
अध। स्म। अस्य। पनयंति। भासः। वृथा। यत्। तक्षत्। अनुऽयाति। पृथ्वीं।
सद्यः। यः। स्यंद्रः। विऽसितः। धवीयान्। ऋणः। न। तायुः। अति। धन्व। राट्॥५॥

अधाग्निर्लोके। स्मेति पूरकः। अस्याग्नेर्भासो रश्मीन् पनयंति। स्तोतारः स्तुवंति। यद्यदा वृथानायासेन तक्षत् तक्षन् तनूकुर्वन् वनानि सम्यग्दहन् पृथ्वीं विस्तीर्णामरण्यभुवमनुयात्यनुगच्छति तदानीं पनयंतीत्यन्वयः। योऽग्निः स्यंद्रः स्यंदनवान् विषितो विमुक्तः प्रतिबंधरहितः अत एव सद्यः शीघ्रं धवीयान् गंतृतमो भवति। क इव। ऋणो न तायुः॥ ऋणोतिर्गतिकर्मा॥ तायुरिति स्तेननाम। यथा स्तेनः शीघ्रं गंता भवति तद्वत्सोऽयमग्निर्धन्व मरुभूमिमतिक्रम्य राट्। राजते। यद्वा। धन्वत्यस्मादाप इति धन्वांतरिक्षं। अतिशयेनांतरिक्षमाक्रम्य राजते॥

स त्वं नो अर्वन्निदाया विश्वेभिरग्ने अग्निभिरिधानः।
वेषि रायो वि यासि दुच्छुना मदेम शतहिमाः सुवीराः॥६॥
सः। त्वं। नः। अर्वन्। निदायाः। विश्वेभिः। अग्ने। अग्निऽभिः। इधानः।
वेषि। रायः। वि। यासि। दुच्छुनाः। मदेम। शतऽहिमाः। सुऽवीराः॥६॥

हे अर्वन् गंतरग्ने स तादृशस्त्वं निदाया निंदित्र्याः प्रजाया निदाया एव वा पाहीति शेषः। कथंभूतः सन्। विश्वेभिः सर्वैरग्निभिस्त्वत्कार्याभूतैरिधान इध्यमानः सन्। रायो धनानि चास्मान् वेषि। गमय। यद्वा। हविर्लक्षणानि धनानि वेषि। कामयसे। दुच्छुना दुःखकारिणीः शत्रुसेना वि यासि च। विविधं गमयसि च। वयं च सुवीराः शोभनपुत्रपौत्राः संतः शतहिमाः शतं संवत्सरान्मदेम। मोदेम॥ ॥१४॥

त्वद्विश्वेति षड़ृचं त्रयोदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं। त्वद्विश्वेत्यनुक्रांतं॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

त्वद्विश्वा॑ सुभग॒ सौभ॑गा॒न्यग्ने॒ वि य॑न्ति व॒निनो॒ न व॒याः ।
श्रु॒ष्टी र॒यिर्वाजो॑ वृत्र॒तूर्ये॑ दि॒वो वृ॒ष्टिरीड्यो॑ री॒तिर॒पां ॥१॥

त्वत् । विश्वा॑ । सु॒ऽभ॒ग॒ । सौभ॑गानि । अग्ने॑ । वि । य॒न्ति॒ । व॒निनः॑ । न । व॒याः ।
श्रु॒ष्टी । र॒यिः । वाजः॑ । वृ॒त्र॒ऽतूर्ये॑ । दि॒वः । वृ॒ष्टिः । ईड्यः॑ । री॒तिः । अ॒पां ॥१॥

हे सुभग शोभनधनाग्ने विश्वा विश्वानि सर्वाणि सौभगानि धनानि त्वत्त्वत्तो वि यंति । विविध निर्गच्छंति । हिरण्यमूलत्वात्सर्वेषां धनानां हिरण्यं चाग्नेः सकाशादुत्पन्नं । तस्य रेतः परापतत्तद्धिरण्यमभवत् ।तै० ब्रा० १. १. ३. ८. । इति श्रुतेः । निर्गमने दृष्टांतः । वनिनो न वयाः । यथा वृक्षाच्छाखा विविधं निर्गच्छंति तद्वत् । तथा रयिः पशुसंघश्च त्वत्सकाशादेव श्रुष्टी क्षिप्रं येति । निर्गच्छति । पशवो वै रयिः पशूनेवावरुंध इति तैत्तिरीयके । वृत्रतूर्ये वृत्राणां शत्रूणां हिंसके संग्रामे शत्रून् जेतुं वाजो बलं च त्वत्तो येति । दिवो ऽंतरिक्षाद्या वृष्टिः सापि त्वत्त एव येति । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति स्मरणात् । अतस्त्वमीड्यः सर्वैः स्तुत्यः सन् अपामुदकानां रीतिर्गमयिता भवसि ॥

त्वं भगो॑ न॒ आ हि रत्न॑मि॒षे परि॑ज्मेव क्षयसि द॒स्मव॑र्चाः ।
अग्ने॑ मि॒त्रो न बृ॑ह॒त ऋ॒तस्या॑सि क्ष॒त्ता वा॒मस्य॑ देव॒ भूरेः॑ ॥२॥

त्वं । भगः॑ । नः॒ । आ । हि । रत्नं॑ । इ॒षे । परि॑ज्माऽइव । क्ष॒य॒सि॒ । द॒स्मऽव॑र्चाः ।
अग्ने॑ । मि॒त्रः । न । बृ॒ह॒तः । ऋ॒तस्य॑ । असि॑ । क्ष॒त्ता । वा॒मस्य॑ । दे॒व॒ । भूरेः॑ ॥२॥

हे अग्ने भगो भजनीयस्त्वं नोऽस्मभ्यं रत्नं रमणीयं धनमिषे । आगमय । प्रयच्छ ॥ इष गताविच्छायां च । तदृप । हीति पूरकः ॥ दस्मवर्चा दर्शनीयदीप्तिस्त्वं परिज्मेव परितो गता वायुरिव क्षयसि । सर्वत्र निवससि । यद्वा । क्षयतिरैश्वर्यकर्मा । सर्वस्येशिषे । हे अग्ने मित्रो न प्रमीतेस्त्रायको देव इव बृहतो महत ऋतस्योदकस्य यज्ञस्य वा क्षत्तासि ॥ क्षदतिरत्र दानकर्मा ॥ दाता भवसि । तथा हे देव द्योतमानाग्ने भूरेर्बहुलस्य वामस्य वननीयस्य धनस्य च दाता भवसीत्यनुषंगः ॥

स सत्प॑तिः॒ शव॑सा हन्ति वृ॒त्रमग्ने॒ विप्रो॒ वि प॒णेर्भ॑र्ति॒ वाजं॑ ।
यं त्वं प्र॑चेत ऋतजात रा॒या स॒जोषा॒ नप्त्रा॒पां हि॒नोषि॑ ॥३॥

सः । सत्ऽप॑तिः । शव॑सा । हन्ति॑ । वृ॒त्रं । अ॒ग्ने॒ । विप्रः॑ । वि । प॒णेः । भ॒र्ति॒ । वाजं॑ ।
यं । त्वं । प्र॒ऽचे॒तः॒ । ऋ॒त॒ऽजा॒त॒ । रा॒या । स॒ऽजोषाः॑ । नप्त्रा॑ । अ॒पां । हि॒नोषि॑ ॥३॥

हे अग्ने सत्पतिः सतां पालयिता स पुरुषो वृत्रमावरकं शत्रुं शवसा बलेन हंति । स च विप्रो मेधावी सन् पणेर्वणिज एतन्नाम्नोऽसुरस्य वाजमन्नं बलं वा वि भर्ति । वियुज्य हरति ॥ हृग्रहोर्भ इति भत्वं ॥ हे प्रचेतः प्रकृष्टज्ञान ऋतजात । ऋतमिति यज्ञनाम । तदर्थं जाताग्ने अपां नप्त्रा न पातयित्रा पुत्रेण मध्यमस्थानेन वैद्युताग्निना सजोषाः संगतस्त्वं यं पुरुषं राया ॥ चतुर्थ्यर्थे तृतीया ॥ धनार्थं हिनोषि प्रेरयसि स हंतीत्यन्वयः ॥

यस्ते॑ सूनो सहसो गी॒र्भिरु॒क्थैर्य॒ज्ञैर्मर्तो॒ निशि॑तिं वे॒द्यान॑ट् ।
विश्वं॒ स दे॑व॒ प्रति॒ वार॑मग्ने ध॒त्ते धा॒न्यं१॒॑ पत्य॑ते वस॒व्यैः॑ ॥४॥

यः। ते। सूनो इति। सहसः। गीःऽभिः। उक्थैः। यज्ञैः। मर्तः। निऽशितिं। वेद्या। आनट्।
विश्वं। सः। देव। प्रति। वा। अरं। अग्ने। धत्ते। धान्यं। पत्यते। वसव्यैः ॥४॥

हे सहसः सूनो बलस्य पुत्राग्ने ते तव निशितिं तैक्ष्ण्यं यो मर्तो मनुष्यो यजमानो गीर्भिः स्तुतिभिरुक्थैः शस्त्रैर्यज्ञैर्यजमानसाधनैर्हविर्भिश्च वेद्या वेद्यायां यज्ञभूमावानट् प्रापयति स मर्तो हे देव द्योतमानाग्ने विश्वं सर्वमरं पर्याप्तं। वाशब्दश्चार्थे। धान्यं च प्रति धत्ते। प्रतिधारयति। वसव्यैर्वसुभिश्च पत्यते। संगच्छते॥

ता नृभ्य आ सौश्रवसा सुवीराग्ने सूनो सहसः पुष्यसे धाः।
कृणोषि यच्छवसा भूरि पश्वो वयो वृकायारये जसुरये ॥५॥
ता। नृऽभ्यः। आ। सौश्रवसा। सुऽवीरा। अग्ने। सूनो इति। सहसः। पुष्यसे। धाः।
कृणोषि। यत्। शवसा। भूरि। पश्वः। वयः। वृकाय। अरये। जसुरये ॥५॥

हे सहसः सूनो सहसस्पुत्राग्ने सुवीरा शोभनैः पुत्रैरुपेतानि सौश्रवसा सुश्रवांसि शोभनान्यन्नानि ता तानि नृभ्यः शत्रुजनेभ्य आहृत्य धाः। अस्मासु धेहि। किमर्थं। पुष्यसे पोषार्थं। यद्वा। नृभ्यः स्तोतॄणां नेतृभ्योऽस्मभ्यमाधेहि। आभिमुख्येन प्रयच्छ। शवसा बलेन युक्तस्त्वं भूरि बहुलं पश्वः पशोः सबंधि दध्यादिलक्षणं यद्वयोऽन्नं वृकायादात्रे जसुरयं उपक्षपयित्रे अरये शत्रवे कृणोषि करोषि तदन्नमाहृत्य प्रयच्छेत्यर्थः॥

वद्मा सूनो सहसो नो विहाया अग्ने तोकं तनयं वाजि नो दाः।
विश्वाभिर्गीर्भिरभि पूर्तिमश्यां मदेम शतहिमाः सुवीराः ॥६॥
वद्मा। सूनो इति। सहसः। नः। विऽहायाः। अग्ने। तोकं। तनयं। वाजि। नः। दाः।
विश्वाभिः। गीःऽभिः। अभि। पूर्तिं। अश्यां। मदेम। शतऽहिमाः। सुऽवीराः ॥६॥

हे सहसः सूनोऽग्ने विहायाः। महन्नामैतत्। महांस्त्वं नोऽस्माकं वद्मा वदिता हितोपदेष्टा भव। अपि च तोकं पुत्रं तनयं तत्पुत्रं च वाजि अन्नयुक्तं नोऽस्मभ्यं दाः। देहि। अहं स्तोता विश्वाभिः सर्वाभिर्गीर्भिस्त्वद्विषयाभिः पूर्तिं कामानां पूर्तिमभ्यश्यां। अभिप्राप्नुयां। अन्यद्गतं॥ ॥१५॥

अग्ना य इति षडृचं चतुर्दशं सूक्तं भरद्वाजस्यार्षमाग्नेयं। षष्ठी शक्वरी शिष्टाः पंचानुष्टुभः। तथा चानुक्रांतं। अग्ना यः आनुष्टुभं शक्वर्यंतमिति॥ प्रातरनुवाके आग्नेये क्रतावाश्विनशस्त्रे चेदं सूक्तं। सूत्रितं च। अग्ना यो होताजनिष्ट। आ॰४ १३। इति॥ अभिप्लवे चतुर्वीराख्ये चतुरात्रेऽहीने तृतीयेऽहनीदं सूक्तमाज्यशस्त्रं। सूत्रितं च। अग्ना यो मर्त्यो दुव इति तृतीये। आ॰ १० २। इति॥

अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः। भसन्नु ष प्र पूर्व्य इषं वुरीतावसे ॥१॥
अग्ना। यः। मर्त्यः। दुवः। धियं। जुजोष। धीतिऽभिः। भसत्। नु। सः। प्र। पूर्व्यः।
इषं। वुरीत। अवसे ॥१॥

यो मर्त्यो मनुष्योऽग्नावग्निविषयं दुवः परिचरणं धियं कर्म च यज्ञादिलक्षणं धीतिभिः स्तुतिभिः सार्धं जुजोष सेवते आचरति स मर्त्यः पूर्व्यः पूर्वेषां मुख्यः सन् नु क्षिप्रं प्र भसत्। प्रभासेत। प्रकृष्टप्रकाशवान् भवेत। अवसे पुत्रादीनां रक्षणार्थमिषमन्नं च वुरीत। वृणीत। संभजेत। शत्रुसकाशात्संभजेतेत्यर्थः॥

अग्निरिद्धि प्रचेता अग्निर्वेधस्तम ऋषिः।
अग्निं होतारमीळते यज्ञेषु मनुषो विशः ॥२॥

अग्निः । इत् । हि । प्रऽचेतसः । अग्निः । वेधःऽतमः । ऋषिः ।
अग्निं । होतारं । ईळते । यज्ञेषु । मनुषः । विशः ॥२॥

अग्निरिदग्निरेव प्रचेताः प्रकृष्टज्ञानवान नान्यः कश्चित । हि यस्मादेवं तस्माद्वेधस्तमो विधातृतमोऽतिशयेन हविर्वहनादीनां कर्मणां कर्ता ऋषिः सर्वस्य द्रष्टा च भवति । मनुषो मनुष्यस्य यजमानस्य विशः प्रजा ऋत्विग्लक्षणा होतारं देवानामाह्वातारं तादृशमग्निं यज्ञेषु यागेष्वीळते । स्तुवंति ॥

नाना ह्य१ग्नेऽवसे स्पर्धंते रायो अर्यः । तूर्वंतो दस्युमायवो व्रतैः सीक्षंतो अव्रतं ॥३॥
नाना । हि । अग्ने । अवसे । स्पर्धंते । रायः । अर्यः । तूर्वंतः । दस्युं । आयवः । व्रतैः ।
सीक्षंतः । अव्रतं ॥३॥

हे अग्ने अर्योऽरः शत्रो रायो धनान्यवसे त्वत्स्तोतृणां रक्षणार्थं नाना शत्रुसकाशात्पृथग्भूताः स्पर्धंते । अहमेव पालयाम्यहमेव पालयामीति स्पर्धां कुर्वंति । आयवो मनुष्यास्ते च स्तोतारो दस्युमुपक्षपयितारं शत्रुं तूर्वंतो हिंसंतो व्रतैस्त्वद्देवत्यैर्यागैरव्रतं व्रतविरोधिनं च पुरुषं सीक्षंतः सोढुमभिभवितुमिच्छंतो भवंति ॥

अग्निरप्सामृतीषहं वीरं ददाति सत्पतिं ।
यस्य त्रसंति शवसः संचक्षि शत्रवो भिया ॥४॥
अग्निः । अप्सां । ऋतिऽसहं । वीरं । ददाति । सतऽपतिं ।
यस्य॑ । त्रसंति । शवसः । संऽचक्षि । शत्रवः । भिया ॥४॥

अयमग्निर्वीरं पुत्रं ददाति । स्तोतृभ्यः प्रयच्छति । कीदृशं पुत्रं । अप्सामपामाप्तव्यानां कर्मणां संनितारं संभक्तारमृतीषहमृतीनामरातीनां सोढारमभिभवितारं सत्पतिं सतां कर्मणां पालयितारं । यस्य वीरस्य संचक्षि संदर्शने सति शवसो बलात् भिया भीत्या शत्रवस्त्रसंति उद्विजंते तं वीरमित्यन्वयः ॥

अग्निर्हि विद्मना निदो देवो मर्तमुरुष्यति । सहावा यस्यावृतो रयिर्वाजेष्ववृतः ॥५॥
अग्निः । हि । विद्मना । निदः । देवः । मर्तं । उरुष्यति । सहऽवा । यस्य । अवृतः ।
रयिः । वाजेषु । अवृतः ॥५॥

सहावा । सहो बलं । तद्वान् देवो दानादिगुणयुक्तोऽग्निर्विद्मना ज्ञानेन युक्तः सन् तं मर्तं मनुष्यं यजमानं निदो निंदकादुरुष्यति । रक्षति । हीति पूरकः । यस्य मर्तस्य रयिर्हविर्लक्षणं धनमवृतो रक्षःप्रभृतिभिरनाच्छादितं वाजेषु यज्ञेष्ववृतोऽन्यैर्यजमानैरसंभक्तं तं हविष्मंतं यजमानमुरुष्यतीत्यन्वयः ॥

अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्तिं सुक्षितिं दिवो नॄन्द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा
तरेम ॥६॥
अच्छ । नः । मित्रऽमहः । देव । देवान । अग्ने । वोचः । सुऽमतिं । रोदस्योः ।
वीहि । स्वस्तिं । सुऽक्षितिं । दिवः । नॄन । द्विषः । अंहांसि । दुःऽइता । तरेम । ता ।
तरेम । तव । अवसा । तरेम ॥६॥

व्याख्यातेयं ॥ अक्षरार्थस्तु । अनुकूलदीप्ते दानादिगुणयुक्ताग्ने द्यावापृथिव्योरभिगतस्त्वमस्मदीयां सुष्टुतिं यष्टव्यान् देवान्प्रति वोचः । प्रब्रूहि । स्तुतिभिर्तृनस्मांश्च सुनिवासमविनाशं गमय । वयं च त्वत्प्रसादाद्विष्टैन पापानि तत्फलानि दुर्गमनानि चातिक्रामेम । व्यवहितानि जन्मांतरकृतानि च तान्यतिक्रामेम । त्वदीयेन रक्षणेनात्यंतमतिक्रामेमेति ॥ ॥१६॥

इमम् षु व इत्येकोनविंशत्यृचं पंचदशं सूक्तमांगिरसस्य वीतहव्यस्य भरद्वाजस्य वार्षमाग्नेयं । आदौ नव जगत्यस्तृतीयापष्ठ्यौ तु शक्वर्यतिशक्वर्यौ पंचदशी शक्वरी सप्तदश्यनुष्टुबष्टादशी बृहती दशम्याद्याः पंच षोडश्येकोनविंशी चेति सप्त त्रिष्टुभः । तथा चानुक्रांतं । इमम् त्र्येकोना वीतहव्य ऋषिर्वा जागतं प्राग्दशम्यास्तृतीयापंचदश्यौ शक्वर्यौ षष्ठ्यतिशक्वर्यनुष्टुब्बृहत्या उपांत्ये इति ॥ प्रातरनुवाक आग्नेये क्रतावाश्विनशस्त्रे चादितो नवर्चः । सूत्रितं च । इमम् षु वो अतिथिमुषर्बुधमिति नव । आ॰ ४.१३. । इति ॥ दशरात्रे पंचमेऽहनि नव र्चमाज्यशस्त्रं । सूत्रितं च । इमम् षु वो अतिथिमुषर्बुधमिति नवाज्य । आ॰ ७.१२. । इति ॥

इमम् षु वो अतिथिमुषर्बुधं विश्वासां विशां पतिमृंजसे गिरा ।
वेतीद्दिवो जनुषा कच्चिदा शुचिर्ज्योक्चिदत्ति गर्भो यदच्युतं ॥१॥
इमं । ऊं इति । सु । वः । अतिथिं । उषःऽबुधं । विश्वासां । विशां । पतिं । ऋंजसे । गिरा ।
वेति । इत । दिवः । जनुषा । कत् । चित । आ । शुचिः । ज्योक् । चित् । अत्ति । गर्भः ।
यत् । अच्युतं ॥१॥

हे वीतहव्य ऋषे भरद्वाज वा वस्त्वं ॥ विभक्तिवचनयोर्व्यत्ययः ॥ इमम् इममेवाग्निं गिरा स्तुत्या स्वृंजसे । सुष्ठु प्रसाधय ॥ ऋजतिः प्रसाधनकर्मेति यास्कः ॥ कीदृशं । अतिथिं सततं गंतारं । यद्वा । अतिथिवत्पूज्य । उषर्बुधमुषसि प्रबुद्धं विश्वासां सर्वासां विशां प्रजानां पतिं पालयितारं । जनुषा जन्मना स्वत एव शुचिः शुद्धो निर्मलो वाग्निः कच्चित् कदाचित् कस्मिंश्चिद्यागकाले दिवो द्युलोकादा वेति । आगच्छति । तदानीं प्रसाधयेत्यन्वयः । एवं प्रसाधितोऽग्निर्गर्भोऽरण्योर्मध्ये गर्भवद्वर्तमानः । यद्वा । द्यावापृथिव्योर्गर्भभूतः सन् यद्यदविरच्युतं च्युतिरहितं नित्यमग्निहोत्रादिसाधनभूतं पयःप्रभृतिकं तत् ज्योक्चित् चिरकालमत्ति । भक्षयति ॥

मित्रं न यं सुधितं भृगवो दधुर्वनस्पतावीड्यमूर्ध्वशोचिषं ।
स त्वं सुप्रीतो वीतहव्ये अद्भुत प्रशस्तिभिर्महयसे दिवेदिवे ॥२॥
मित्रं । न । यं । सुऽधितं । भृगवः । दधुः । वनस्पतौ । ईड्यं । ऊर्ध्वऽशोचिषं ।
स । त्वं । सुऽप्रीतः । वीतऽहव्ये । अद्भुत । प्रशस्तिऽभिः । महयसे । दिवेऽदिवे ॥२॥

वनस्पतावरण्यां सुधितं सुष्ठु निहितमीड्यं स्तुत्यमूर्ध्वशोचिषमुच्छ्रिततेजस्कं यमग्निं त्वां मित्रं न मित्रमिव सखिभूतमिव भृगवो महर्षयो दधुः आदधुः गृहे स्थापितवंतः हे अद्भुत महन्नग्ने स तादृशस्त्वं वीतहव्य एतत्संज्ञ ऋषौ सुप्रीतः सुष्ठु प्रीयमाणो भव । यतो दिवे दिवे प्रतिदिनं प्रशस्तिभिः प्रकृष्टैः स्तोत्रैर्महयसे पूज्यसे । भरद्वाज ऋषिपक्षे वीतहव्ये इत्यत्र हविष्के भरद्वाज इति योजनीयं ॥

स त्वं दक्षस्यावृको वृधो भूरर्यः परस्यांतरस्य तरुषः ।
रायः सूनो सहसो मर्त्येष्वा छर्दिर्यच्छ वीतहव्याय सप्रथो भरद्वाजाय सप्रथः ॥३॥

सः । त्वं । दक्षस्य । अवृकः । वृधः । भूः । अर्यः । परस्य । अंतरस्य । तरुषः ।
रायः । सूनो इति । सहसः । मर्त्येषु । आ । छर्दिः । यच्छ । वीतऽहव्याय । सऽप्रथः ।
भरत्ऽवाजाय । सऽप्रथः ॥३॥

हे अग्ने स तादृशोऽवृको बाधकरहितस्त्वं दक्षस्यानुष्ठानसमर्थस्य वृधो वर्धयिता भूः । भवसि । तथा परस्य विप्रकृष्टस्यार्योऽरेः शत्रोरंतरस्यांतिकतरस्य संनिकृष्टस्य शत्रोस्तरुषस्तरिता भवसि । अतः कारणात् हे सहसः सूनो सप्रथः सर्वतः पृथुस्त्वं मर्त्येषु मनुष्येषु मध्ये भरद्वाजाय संभृतहविर्लक्षणान्नाय वीतहव्याय । वीतं गमितं हव्यं हविर्येन तादृशाय भरद्वाजायेति वा योज्यं । रायो धनानि छर्दिर्गृहमा यच्छ । प्रयच्छ । सप्रथ इति पुनरुक्तिरादरार्था ॥

द्युतानं वो अतिथिं स्वर्णरमग्निं होतारं मनुषः स्वध्वरं ।
विप्रं न द्युक्षवचसं सुवृक्तिभिर्हव्यवाहमरतिं देवमृंजसे ॥४॥

द्युतानं । वः । अतिथिं । स्वःऽनरं । अग्निं । होतारं । मनुषः । सुऽअध्वरं ।
विप्रं । न । द्युक्षऽवचसं । सुवृक्तिऽभिः । हव्यऽवाहं । अरतिं । देवं । ऋंजसे ॥४॥

हे वीतहव्य त्वं सुवृक्तिभिः शोभनाभिः स्तुतिभिर्हव्यवाहं हविषां वोढारं देवमग्निमृंजसे । प्रसाधय । कीदृशं । द्युतानं दीप्यमानं वो युष्माकमतिथिमतिथिवत्पूज्यं स्वर्णरं स्वर्गस्य नेतारं मनुषो मनोः प्रजापतेर्यज्ञे होतारं देवानामाह्वातारं स्वध्वरं शोभनयज्ञं विप्रं न मेधाविनं विपश्चितमिव द्युक्षवचसं । दीप्तिनिवासभूतवचसं । तादृशवाक्यशोपेतमरतिमर्यं स्वामिनं ॥

पावकया यश्चितयंत्या कृपा क्षामन्रुरुच उषसो न भानुना ।
तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥५॥

पावकया । यः । चितयंत्या । कृपा । क्षामन् । रुरुचे । उषसः । न । भानुना ।
तूर्वन् । न । यामन् । एतशस्य । नु । रणे । आ । यः । घृणे । न । ततृषाणः । अजरः ॥५॥

योऽग्निः पावकया शोधयित्र्या चितयंत्या चेतयंत्या प्रज्ञापयंत्या कृपा दीप्त्या क्षामन् भूम्यां रुरुचे दीप्यते । उषसो न भानुना । यथोषसः प्रकाशेन भासंते तद्वत् । अपि च यामन् यामनि संग्रामे तूर्वन्न शत्रून् हिंसन् पुरुष इवैतशस्यैतत्संज्ञस्य ऋषेः रणे सूर्येण सह संग्रामे सहायार्थं योऽग्निर्नु क्षिप्रमा घृणे आदीप्यते । प्रैतशं सूर्ये पस्पृधानं । ऋग्वे० १ ६१ १५ । इति निगमांतरं । नूनं सर्वे देवास्तस्य माहात्म्यमकार्षुः । यश्च ततृषाणस्तृषितः प्रभावेन सर्वभक्षणशीलोऽजरो जरारहितश्च भवति तं देवमृंजसे इति पूर्वस्यामृचि संबंधः ॥ ॥१५॥

अग्निमग्निं वः समिधा दुवस्यत प्रियंप्रियं वो अतिथिं गृणीषणि ।
उप वो गीर्भिरमृतं विवासत देवो देवेषु वनते हि वार्यं देवो देवेषु वनते हि
नो दुवः ॥६॥

अग्निंऽअग्निं । वः । संऽइधा । दुवस्यत । प्रियंऽप्रियं । वः । अतिथिं । गृणीषणि ।
उप । वः । गीःऽभिः । अमृतं । विवासत । देवः । देवेषु । वनते । हि । वार्यं । देवः ।
देवेषु । वनते । हि । नः । दुवः ॥६॥

हे अस्मदीयाः स्तोतारो वो यूयं प्रियं प्रियमत्यंतं प्रियं वो युष्माकमतिथिमतिथिवत्पूज्यं गृणीषणि शब्दनीयं स्तुत्यमग्निमग्निमग्निमेव । नान्यं देवमित्यर्थः । समिधा समिंधनेन समिद्भिर्वा दुवस्यत । परिचरत । यद्वा । गृणीषणीति सप्तम्यंतं । गृणीषणि स्तोत्रे विषयतया वर्तमानं । अपि च वो यूयममृतममरणमग्निं गीर्भिः स्तुतिभिरुपेत्य विवासत । परिचरत । हि यस्मात् देवेषु मध्ये देवो दानादिगुणयुक्तोऽग्निर्वार्यं वरणीयं समिदादिकं वनते संभजते । हि यस्माच्च देवेषु मध्ये देवोऽग्निर्नोऽस्माकं दुवः परिचरणं वनते संभजते तस्माद्दुवस्यतेत्यन्वयः ॥

दशमेऽहन्याग्निमारुते समिद्धमिति तृचो जातवेदस्यनिविद्धानार्थः । सूत्रितं च । समिद्धमग्निं समिधा गिरा गृण इति तृचश्च । आ० ८ १२. । इति ॥

समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवं ।
विप्रं होतारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसं ॥७॥
संऽइद्धं । अग्निं । संऽइधा । गिरा । गृणे । शुचिं । पावकं । पुरः । अध्वरे । ध्रुवं ।
विप्रं । होतारं । पुरुऽवारं । अद्रुहं । कविं । सुम्नैः । ईमहे । जातऽवेदसं ॥७॥

समिद्धं सम्यग्दीप्तमग्निं समिधा समिधनहेतुभूतया गिरा स्तुत्या गृणे । स्तौमि । यद्वा । समिधा समिद्धिः काष्ठैः समिद्धं सम्यगिद्धं । अपि च शुचिं स्वयं शुद्धं पावकं सर्वेषां शोधकं ध्रुवं निश्चलं तमग्निमध्वरे यज्ञे पुरस्करोमीति शेषः । तथा विप्रं मेधाविनं होतारं देवानामाह्वातारं पुरुवारं बहुभिर्वरणीयमद्रुहमद्रोग्धारं सर्वेषामनुकूलं कविं क्रांतदर्शिनं जातवेदसं जातानां वेदितारमग्निं सुम्नैः सुखकरैः स्तोत्रैरीमहे । संभजामहे । यद्वा द्वितीयार्थे तृतीया । सुम्नानि धनानीमहे । याचामहे ॥

त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यं ।
देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे ॥८॥
त्वां । दूतं । अग्ने । अमृतं । युगेऽयुगे । हव्यऽवाहं । दधिरे । पायुं । ईड्यं ।
देवासः । च । मर्तासः । च । जागृविं । विऽभुं । विश्पतिं । नमसा । नि । सेदिरे ॥८॥

हे अग्ने त्वां देवासो देवाश्च मर्तासो मनुष्याश्च दूतं दधिरे । विदधिरे । कृतवंतः । कीदृशं त्वां । अमृतममरणं युगे युगे काले काले तत्तद्यागानुष्ठानसमये हव्यवाहं हव्यानां हविषां वोढारं पायुं पालयितारमीड्यं स्तुत्यं । अपि च ते उभयविधा जागृविं जागरणशीलं विभुं व्याप्तं विश्पतिं विशां प्रजानां पालयितारं तमग्निं नमसा नमस्कारेण हविर्लक्षणान्नेन वा नि षेदिरे । उपसेदिरे ॥

विभूषन्नग्न उभयाँ अनु व्रता दूतो देवानां रजसी समीयसे ।
यत्ते धीतिं सुमतिमावृणीमहेऽध स्मा नस्त्रिवरूथः शिवो भव ॥९॥
विऽभूषन् । अग्ने । उभयान् । अनु । व्रता । दूतः । देवानां । रजसी इति । सं । ईयसे ।
यत् । ते । धीतिं । सुऽमतिं । आऽवृणीमहे । अध । स्म । नः । त्रिऽवरूथः । शिवः । भव ॥९॥

हे अग्ने उभयानुभयविधान् देवान्मनुष्यांश्च विभूषन् विशेषेण भूषयन् अलंकुर्वन् त्वमनु व्रता व्रतान्यनु व्रतेषु कर्मसु यागेषु देवानां दूतः सन् रजसी द्यावापृथिव्यौ समीयसे । संचरसि । देवानानेतुं द्युलोकं गच्छसि हवींषि च नेतुमिमं लोकं । किंच यद्यस्मात्ते तुभ्यं त्वदर्थं धीतिं कर्म सुमतिं शोभनां स्तुतिं चावृणीमहे वयं संभजामहे अधातः कारणात् त्रिवरूथस्त्रिस्थानस्त्वं नोऽस्माकं शिवः सुखकरो भव ॥ स्मेत्येतत्पादपूरणं ॥

प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छंदसि तं सुप्रतीकमित्याद्याः षड्चः । सूचितं च । तं सुप्रतीकमिति षट् । आ॰ ४. १३. । इति ॥

तं सुप्रतीकं सुदृशं स्वंचमविद्वांसो विदुष्टरं सपेम ।
स यक्षद्विश्वा वयुनानि विद्वान्प्र हव्यमग्निरमृतेषु वोचत् ॥१०॥
तं । सुऽप्रतीकं । सुऽदृशं । सुऽअंचं । अविद्वांसः । विदुःऽतरं । सपेम ।
सः । यक्षत् । विश्वा । वयुनानि । विद्वान् । प्र । हव्यं । अग्निः । अमृतेषु । वोचत् ॥१०॥

अविद्वांसो वैदुष्यरहिता अल्पमतयो वयं विदुष्टरं विद्वत्तरं सर्वज्ञं तमग्निं सपेम । परिचरेम । कीदृशं । सुप्रतीकं शोभनांगं सुदृशं शोभनद्रष्टारं स्वंचं सुष्ठंचतं गच्छंतं । किंच स तादृशोऽग्निर्यक्षत् । देवान्यजतु । विश्वा सर्वाणि वयुनानि । ज्ञाननामैतत् । इह तु ज्ञातव्ये वर्तते । ज्ञातव्यान्यर्थजातानि विद्वान् जानन्नग्निर मृतेषु मरणरहितेषु देवेषु हव्यमस्मदीयं हविः प्र वोचत् । प्रब्रवीतु । युष्मदर्थं हविः कल्पितं तदर्थं यूयमाग च्छतेत्येवं कथयतु ॥ ॥१८॥

तमग्ने पास्युत तं पिपर्षि यस्त आनट्कवये शूर धीतिं ।
यज्ञस्य वा निशितिं वोदितिं वा तमित्पृणक्षि शवसोत राया ॥११॥
तं । अग्ने । पासि । उत । तं । पिपर्षि । यः । ते । आनट् । कवये । शूर । धीतिं ।
यज्ञस्य । वा । निऽशितिं । वा । उतऽइतिं । वा । तं । इत् । पृणक्षि । शवसा । उत । राया ॥११॥

हे अग्ने तं पुरुषं पासि । रक्षसि । उतापि च तं पिपर्षि । कामैः पूरयसि । यः पुरुषो हे शूर शौर्यवन्नग्ने कवये क्रांतदर्शनाय ते तुभ्यं त्वदर्थं धीतिं कर्म स्तुतिं वानट् प्राप्नोति । यद्वा । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी । कविं त्वा धीतिमानट् प्रापयति । तं पासीत्यन्वयः । अपि च यज्ञस्य यागस्य वा तत्सा धनभूतस्य हविषो वा निशितिं वा । निशितिः संस्कारः । तं वोदितिमुद्गमनं वानट् प्रापयति तमित्तमेव शवसा बलेन पृणक्षि । पूरयसि । उतापि च राया धनेन पूरयसि ॥

त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्नवद्यात् ।
सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयिः स्पृहयाय्यः सहस्री ॥१२॥
त्वं । अग्ने । वनुष्यतः । नि । पाहि । त्वं । ऊं इति । नः । सहसाऽवन् । अवद्यात् ।
सं । त्वा । ध्वस्मन्ऽवत् । अभि । एतु । पाथः । सं । रयिः । स्पृहयाय्यः । सहस्री ॥१२॥

हे अग्ने त्वं वनुष्यतो हिंसकाच्छत्रोर्नि नितरामस्मान्रक्ष । हे सहसावन् बलवन्नग्ने त्वमु त्वमेव नोऽस्मानव द्यात्पापात् नि पाहि । त्वा त्वां ध्वस्मन्वत् ध्वसनवत् ध्वस्तदोषं पाथो हविर्लक्षणमस्माभिर्दत्तमन्नं समभ्येतु । सम्यगभिगच्छतु । स्पृहयाय्यः स्पृहणीयः सहस्री सहस्रसंख्यायुक्तो रयिस्त्वया दत्तं धनं सम्यगभिगच्छतु ॥

व्यूळ्हे दशरात्रे पंचमेऽहन्याग्निमारुतेऽग्निर्होतेति तृचो जातवेदसनिविद्धानीयः । सूचितं च । अग्निर्होता गृहपतिः स राजेति तिस्रः । आ॰ ८. ८. । इति ॥ पत्नीसंयाजेषु गृहपतेराद्यानुवाक्या । सूचितं च । अग्निर्होता गृहपतिः स राजा हव्यवाळग्निरजरः पिता न इति पत्नीसंयाजाः । आ॰ १. १० । इति ॥ आश्विनशस्त्रेऽप्येषैव प्रतिपत् । सूचितं च । अग्निर्होता गृहपतिः स राजेति प्रतिपदेकपातिनी पक्षः । आ॰ ६. ५. । इति ॥

अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः ।
देवानां उत यो मर्त्यानां यजिष्ठः स प्र यजतामृतावा ॥१३॥
अग्निः । होता । गृहऽपतिः । सः । राजा । विश्वा । वेद । जनिम । जातऽवेदाः ।
देवानां । उत । यः । मर्त्यानां । यजिष्ठः । सः । प्र । यजतां । ऋतऽवा ॥१३॥

होता देवानामाह्वाता राजा राजमानः सोऽग्निर्गृहपतिर्गृहाणां पतिरधिपतिर्भवति । तथा विश्वा विश्वानि सर्वाणि जनिम जन्मानि जन्मवंति भूतजातानि जातवेदा जातप्रज्ञः सन वेद । वेत्ति । जानाति । योऽग्निर्देवानामिंद्रादीनामृतापि च मर्त्यानां मनुष्याणां च मध्ये यजिष्ठोऽतिशयेन यष्टा भवति ऋतावा । ऋत सत्य यज्ञो वा । तद्वान सोऽग्निः प्र यजतां । प्रकर्षेण देवान्यजतु ॥

अग्ने यदद्येति दर्शपूर्णमासयोः स्विष्टकृतो याज्या । सूत्रितं च । अग्ने यदद्य विशो अध्वरस्य होतरित्यन वानं यजति । आ॰ १. ६ । इति ॥

अग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।
ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य ॥१४॥
अग्ने । यत् । अद्य । विशः । अध्वरस्य । होतरिति । पावकऽशोचे । वेः । त्वं । हि । यज्वा ।
ऋता । यजासि । महिना । वि । यत् । भूः । हव्या । वह । यविष्ठ । या । ते । अद्य ॥१४॥

हे अध्वरस्य होतर्यज्ञस्य निष्पादक पावकशोचे शोधकदीप्ते एवंभूत हे अग्ने अद्यास्मिन्काले विशो मनुष्यस्य यजमानस्य यत्कर्तव्य तद्वेः । कामयस्व । हि यस्मात्त्वं यज्वा देवाना यष्टा भवसि तस्मात्त्वमृता ऋते यज्ञे यजासि । देवान्यज । अपि च महिना महिम्ना स्वमाहात्म्येन यद्यस्माद्वि भूः विभवसि व्याप्तो भवसि अतः कारणात हे यविष्ठ युवतमाग्ने ते तुभ्यं त्वदर्थमद्येदानीं या यानि हव्यानि जुहुमस्तानि हव्या हव्यानि हवींषि वह । स्वकीया स्विष्टकृदाख्या तनुं प्रापय ॥

अभि प्रयांसि सुधितानि हि ख्यो नि त्वा दधीत रोदसी यजध्यै ।
अवा नो मघवन्वाजसातावग्ने विश्वानि दुरिता तरेम ता तरेम तवावसा तरेम ॥१५॥
अभि । प्रयांसि । सुऽधितानि । हि । ख्यः । नि । त्वा । दधीत । रोदसी इति । यजध्यै ।
अव । नः । मघऽवन् । वाजऽसातौ । अग्ने । विश्वानि । दुःऽइता । तरेम । ता ।
तरेम । तव । अवसा । तरेम ॥१५॥

हे अग्ने सुधितानि सुनिहितानि विद्यामासादितानि प्रयांस्यन्नानि हविर्लक्षणान्यभि ख्यः । अभिपश्यसि । हि पूरकः । तादृशं त्वा रोदसी द्यावापृथिव्यावितदुपलक्षितान सर्वान देवान्यजध्यै यष्टुं नि दधीत । अयं यजमानो निहितवान । हे मघवन्नग्ने नोऽस्मान्वाजसाता संग्रामेऽन्नस्य संभजने वा निमित्तभूतेऽव । रक्ष । वय च विश्वानि सर्वाणि दुरिता दुरितानि दुःखानि तरेम । अतिक्रामेम । अन्यद्गतं ॥ ॥१९॥

अग्निप्रणयनेऽग्ने विश्वेभिरित्येषानुवक्तव्या । सूत्रितं च । अग्ने विश्वेभिः स्वनीक देवैरित्यर्धर्चे आरमेत । आ॰ २ १७. । इति ॥

अग्ने विश्वेभिः स्वनीक देवैरूर्णावंतं प्रथमः सीद योनिं ।
कुलायिनं घृतवंतं सवित्रे यज्ञं नय यजमानाय साधु ॥१६॥

अग्ने॑। विश्वे॑भिः। सु॒ऽअ॒नी॒क॒। दे॒वैः। ऊर्णा॑ऽवंतं। प्र॒थ॒मः। सी॒द॒। योनिं॑।
कु॒ला॒यिनं॑। घृ॒त॒ऽवं॑तं। स॒वि॒त्रे। य॒ज्ञं। न॒य॒। यज॑मानाय। सा॒धु ॥१६॥

हे स्वनीक सुज्वालाग्ने विश्वेभिर्विश्वैः सर्वैर्देवैः सहोर्णावतमूर्णात्मकावंतं योनिमुत्तरवेदिलक्षणं स्थानं प्रथमः सर्वेषु देवेषु मुख्यस्त्वं सीद। उपविश। कीदृशं योनिं। कुलायिनं। कुलायो नीडः। तत्सदृशं गुल्गुल्वादिसंभरणोपेतं। तथा च श्रूयते। कुलायमिव ह्येतद्यज्ञे क्रियते यत्पैतुदारवाः परिधयो गुल्गुलूर्णास्तुकाः सुगंधितेजनानि। ऐ॰ ब्रा॰ १ २८। इति। घृतवंतं व्याघारणाज्ययुक्तं। एवमुक्तरूपया निषण्णस्त्वं सवित्रे हविषा प्रेरयित्रे यजमानाय॥ षष्ठ्यर्थे चतुर्थ्येषा॥ ईदृशस्य यजमानस्य यज्ञं साध्वार्जवेन नय। देवान्प्रापय॥

इ॒मम् त्यमथ॑र्व॒वद॒ग्निं मं॑थंति वे॒धसः॑। यमं॑कू॒यंत॒मान॑य॒न्नमू॑रं श्या॒व्याभ्यः॑ ॥१७॥
इ॒मं। ऊं इति॑। त्यं। अ॒थ॒र्व॒ऽवत्। अ॒ग्निं। मं॒थं॒ति॒। वे॒धसः॑। यं। अं॒कु॒ऽयंतं॑। आ।
अन॑यन्। अमू॑रं। श्या॒व्याभ्यः॑ ॥१७॥

वेधसः कर्मणां विधातार ऋत्विज इमं दृश्यमानं त्यं तं पूर्वोक्तगुणमग्निमथर्ववत् यथाथर्वाख्य ऋषिः पुरामथ्नात्तथा मंथंति। मथ्नंति। अरण्योः सकाशाज्जनयंति। अंकूयंतं। कुत्सितमंचनं गमनमंकुः। तदात्मन इच्छंतं देवेभ्यो निर्गत्य ततस्ततः पलायमानममूरममूढं यमग्निं श्याव्याभ्यः। श्यावीति रात्रिनाम। तत्र भवास्तमिस्रसंहतयः श्याव्याः। ताभ्यः सकाशादानयन् आगमयन् तं मथंतीत्यन्वयः॥

ज॒नि॒ष्वा दे॒ववी॑तये स॒र्वता॑ता स्व॒स्तये॑।
आ दे॒वान्व॑क्ष्य॒मृताँ॑ ऋता॒वृधो॑ य॒ज्ञं दे॒वेषु॑ पिस्पृशः ॥१८॥
ज॒नि॒ष्व। दे॒व॒ऽवी॑तये। स॒र्व॒ऽता॑ता। स्व॒स्तये॑।
आ। दे॒वान्। व॒क्षि॒। अ॒मृता॑न्। ऋ॒त॒ऽवृधः॑। य॒ज्ञं। दे॒वेषु॑। पि॒स्पृ॒शः॒ ॥१८॥

हे अग्ने सर्वताता सर्वैस्तायमाने यज्ञे मथ्यमानस्त्वं जनिष्व। प्रादुर्भव। किमर्थं। देववीतये देवकामाय यजमानाय॥ षष्ठ्यर्थे चतुर्थ्येषा॥ ईदृशस्य यजमानस्य स्वस्तयेऽविनाशार्थं। जनित्वा चामृतान्मरणरहितान् ऋतावृधो यज्ञस्य वर्धयितॄन् देवाना वक्षि। आवह। तदनंतरं तेषु देवेष्वस्मदीयं यज्ञं पिस्पृशः। स्पर्शय। प्रापयेत्यर्थः॥

व॒यमु॑ त्वा गृहपते जनाना॒मग्ने॒ अक॑र्म स॒मिधा॑ बृ॒हंतं॑।
अ॒स्थू॒रि नो॒ गार्ह॑पत्यानि संतु ति॒ग्मेन॑ न॒स्तेज॑सा॒ सं शि॑शाधि ॥१९॥
व॒यं। ऊं इति॑। त्वा॒। गृ॒ह॒ऽप॒ते॒। ज॒ना॒नां॒। अग्ने॑। अक॑र्म। स॒म्ऽइधा॑। बृ॒हंतं॑।
अ॒स्थू॒रि। नः॒। गार्ह॑ऽपत्यानि। सं॒तु॒। ति॒ग्मेन॑। नः॒। तेज॑सा। सं। शि॒शा॒धि॒ ॥१९॥

हे गृहपते यज्ञानां पालकाग्ने जनानां प्राणिनां मध्ये वयमु वयमेव त्वा त्वां समिधा समिंधनेन बृहंतं महांतमकर्म। कृतवंतः स्मः। अतः कारणात् नोऽस्माकं गार्हपत्यानि गृहपतित्वान्यस्थूरीण्यस्थूरीणि। एकाश्वयुक्तः शकटः स्थूरिरित्युच्यते तद्विपरीतो बहुभिरश्वैरुपेतः शकटोऽस्थूरिः। तेन च संपूर्णता लक्ष्यते। अस्थूरीणि पुत्रपशुधनादिभिः संपूर्णानि भवंतु। अपि च नोऽस्मान् तिग्मेन तीक्ष्णेन तेजसा सं शिशाधि। सम्यग्शाधि। सम्यक् तीक्ष्णीकुरु। संयोजयेत्यर्थः॥ ॥२०॥ ॥१॥

द्वितीयेऽनुवाकेऽष्ट सूक्तानि । तत्र त्वमग्ने यज्ञानामित्यष्टाचत्वारिंशदृचं प्रथमं सूक्तं भरद्वाजस्यार्षमाग्नेयं । आद्या षष्ठी च वर्धमाना गायत्री षट्कसप्तकाष्टकाः सा वर्धमानेत्युक्तलक्षणोपेतत्वात । सप्तविंश्यनुष्टुप् । आ ते अग्ने ऋचा हविरिति ऋचावनुष्टुभौ । तयोः पूर्वा वीती यो देवमिति त्रिष्टुप् । शिष्टा द्वाचत्वारिंशदृचो गायत्र्यः । तथा चानुक्रम्यते । त्वमग्नेऽष्टाचत्वारिंशद्गायत्रं वर्धमानाद्या षष्ठी च सप्तविंश्यनुष्टुप् त्रिष्टुप्पूर्वे चांत्ये इति ॥ प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ गायत्रे छंदसीदं सूक्तमुच्यते । तत्रांत्यास्तिस्र ऋचं उद्धर्तव्याः । सूत्र्यते हि । त्वमग्ने यज्ञानामिति तिस्र उत्तमा उद्धरेत । आ० ४. १३. । इति ॥ विश्वजित्याग्निमारुते बृहत्साम यद्यग्निष्टोमसाम स्यात्तदानीमाद्याः षडृचः स्तोत्रियानुरूपार्थाः । सूत्रितं हि । त्वमग्ने यज्ञानामिति स्तोत्रियानुरूपौ । आ० ८. ७. । इति ॥

त्वम॑ग्ने य॒ज्ञानां॒ होता॒ विश्वे॑षां हि॒तः । दे॒वेभि॒र्मानु॑षे॒ जने॑ ॥ १ ॥

त्वं । अ॒ग्ने॒ । य॒ज्ञानां॑ । होता॑ । विश्वे॑षां । हि॒तः । दे॒वेभिः॑ । मानु॑षे । जने॑ ॥ १ ॥

हे अग्ने त्वं विश्वेषां सर्वेषां सप्तसंस्थारूपेण भिन्नानां यज्ञानां होता होमनिष्पादकोऽसि । यद्वा । यज्ञानां संबंधी देवानामाह्वाता भवसि । कुत इत्यत आह । यस्मात्त्वं मानुषे मनोः संबंधिनि मनुष्ये जने यजमाने देवेभिर्देवैर्हितो होतृत्वेन निहितोऽसि तस्मादित्यर्थः ॥

स नो॑ म॒न्द्राभि॑रध्व॒रे जि॒ह्वाभि॑र्यजा म॒हः । आ दे॒वान्व॑क्षि॒ यक्षि॑ च ॥ २ ॥

सः । नः॒ । म॒न्द्राभिः॑ । अ॒ध्व॒रे । जि॒ह्वाभिः॑ । य॒ज॒ । म॒हः । आ । दे॒वान् । व॒क्षि॒ । यक्षि॑ । च॒ ॥ २ ॥

हे अग्ने स त्वं नोऽस्माकमध्वरे यज्ञे मंद्राभिर्मदकरीभिः स्तुत्याभिर्वा जिह्वाभिर्ज्वालाभिर्महो महतो देवान्यज । हविर्भिस्तर्पय । कथं तदित्युच्यते । देवान्यष्टव्यानिंद्रादीना वक्षि । आवह । ततो यक्षि च । यज च । हवींषि तेभ्यो देहीत्यर्थः ॥

पाथिकृत्यामग्नेः पथिकृतोऽनुवाक्या वेत्थेत्येषा । सूत्रितं च । वेत्था हि वेधो अध्वन आ देवानामपि पंथामगन्म । आ० ३. १०. । इति ॥

वेत्था॒ हि वे॑धो॒ अध्व॑नः प॒थश्च॑ दे॒वाञ्ज॑सा । अग्ने॑ य॒ज्ञेषु॑ सुक्रतो ॥ ३ ॥

वेत्थ॑ । हि । वे॒धः॒ । अध्व॑नः । प॒थः । च॒ । दे॒व॒ । अञ्ज॑सा । अग्ने॑ । य॒ज्ञेषु॑ । सु॒क्र॒तो॒ इति॑ सुऽक्रतो ॥ ३ ॥

हे वेधो विधातः सुक्रतो शोभनकर्मन्देव दानादिगुणयुक्ताग्ने त्वं यज्ञेषु दर्शपूर्णमासादियागेष्वध्वनो महामार्गान पथश्च क्षुद्रमार्गांश्चाञ्जसार्जवेन वेत्थ । जानासि । हि यस्मादेवं तस्मात्कारणाद्यज्ञमार्गाद्भ्रष्टं यजमानं पुनस्तं मार्गं प्रापयेत्यर्थः ॥

त्वामी॑ळे॒ अध॑ द्वि॒ता भ॑र॒तो वा॒जिभिः॑ शु॒नं । ई॒जे य॒ज्ञेषु॑ य॒ज्ञियं॑ ॥ ४ ॥

त्वां । ई॒ळे॒ । अध॑ । द्वि॒ता । भ॒र॒तः । वा॒जिऽभिः॑ । शु॒नं । ई॒जे । य॒ज्ञेषु॑ । य॒ज्ञियं॑ ॥ ४ ॥

हे अग्ने त्वां भरतो दौष्यंतिरेतत्संज्ञो राजा वाजिभिः । वाजो हविर्लक्षणमन्नं । तद्वद्भिर्ऋत्विग्भिः सह द्विता द्विविधमिष्टप्राप्त्यनिष्टपरिहाररूपेण द्विधा भिन्नं शुनं सुखमुद्दिश्येळे । स्तुतवान् । स्तुत्वा च यज्ञियं यज्ञार्हं त्वां यज्ञेषु ॥ तृतीयार्थे सप्तमी ॥ यज्ञैरीजे । इष्टवान् । तस्मै त्वमुभयविधं सुखं प्रादा इत्यर्थः ॥

त्वमि॒मा वार्या॑ पु॒रु दिवो॑दासाय सुन्व॒ते । भ॒रद्वा॑जाय दा॒शुषे॑ ॥ ५ ॥

त्वं । इ॒मा । वार्या॑ । पु॒रु । दिवः॑ऽदासाय । सु॒न्व॒ते । भ॒रत्ऽवा॑जाय । दा॒शुषे॑ ॥ ५ ॥

हे अग्ने त्वमिमा इमानि वृश्च्यमानानि पुरु पुरूणि बहूनि वार्या वार्याणि वरणीयानि संभजनीयानि धनानि दिवोदासाय सुन्वते। लुप्तोपममेतत्। यथा सोमाभिषवं कुर्वते दिवोदासाख्याय राज्ञे प्रादास्तथा दाशुषे हवींषि दत्तवते भरद्वाजाय ऋषये देहीति शेषः॥ ॥२१॥

त्वं दूतो अमर्त्य आ वहा दैव्यं जनं। शृण्वन्विप्रस्य सुष्टुतिं॥६॥

त्वं। दूतः। अमर्त्यः। आ। वह। दैव्यं। जनं। शृण्वन्। विप्रस्य। सुऽस्तुतिं॥६॥

अमर्त्योऽमरणधर्मस्त्वं दूतो भूत्वा दैव्यं देवसंबंधिनं जनमा वह। अस्मद्यज्ञ आनय। किं कुर्वन्। विप्रस्य मेधाविनो भरद्वाजस्य सुष्टुतिं शोभनां स्तुतिं शृण्वन्॥

त्वामग्ने स्वाध्यो३मर्तासो देववीतये। यज्ञेषु देवमीळते॥७॥

त्वां। अग्ने। सुऽआध्यः। मर्तासः। देवऽवीतये। यज्ञेषु। देवं। ईळते॥७॥

हे अग्ने देवं द्योतमानं त्वां स्वाध्यः शोभनाध्याना मर्तासो मनुष्या देववीतये देवानां तर्पणार्थं यज्ञेष्वीळते। स्तुवंति याचंते वा॥

तव प्र यक्षि संदृशमुत क्रतुं सुदानवः। विश्वे जुषंत कामिनः॥८॥

तव। प्र। यक्षि। संऽदृशं। उत। क्रतुं। सुऽदानवः। विश्वे। जुषंत। कामिनः॥८॥

हे अग्ने तव संदृशं सम्यग्दर्शनीयं यद्वा सम्यग्द्रष्टारं सर्वस्य भासकं तेजः प्र यक्षि। प्रयजे। प्रकर्षेण पूजयामि। उतापि च सुदानवः सुदानोः शोभनदानस्य तव क्रतुं कर्म प्रज्ञानं वा पूजयामि। न केवलमहमेव किंत्वन्ये विश्वे सर्वेऽपि यजमानाः कामिनस्त्वदनुग्रहात्तैस्तैः कामैरुपेताः संतो जुषंत। त्वदीयं संदृशं क्रतुं च सेवंते॥

त्वं होता मनुर्हितो वह्निरासा विदुष्टरः। अग्ने यक्षि दिवो विशः॥९॥

त्वं। होता। मनुःऽहितः। वह्निः। आसा। विदुःऽतरः। अग्ने। यक्षि। दिवः। विशः॥९॥

हे अग्ने त्वं होता होतृत्वेन मनुर्हितो मनुनाहितोऽसि। आसास्येनास्यभूतया ज्वालया वह्निर्हविषां वोढा विदुष्टरोऽतिशयेन विद्वान्। अतः कारणात्त्वं दिवो द्युलोकसंबंधिनीर्विशो दैवीः प्रजा यक्षि। यज॥

दर्शपूर्णमासयोः सामिधेनीष्वग्न आ याहीत्याद्यास्तिस्रः। सूत्रितं च। अग्न आ याहि वीतये गृणानः ईळेन्यो नमस्यस्तिरः। आ० १ २.। इति॥ गार्हपत्याहवनीययोर्मिथः संसर्गेऽग्नये वीतयेऽष्टाकपालः पुरोडाशः। तस्याग्न आ याहीत्येषानुवाक्या। सूत्रितं च। अग्न आ याहि वीतये यो अग्निं देववीतये। आ० ३ १३। इति॥

अग्न आ याहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि॥१०॥

अग्ने। आ। याहि। वीतये। गृणानः। हव्यऽदातये। नि। होता। सत्सि। बर्हिषि॥१०॥

हे अग्ने त्वमा याहि। आगच्छ। किमर्थं। वीतये हविषां भक्षणार्थं। किंच हव्यदातये हव्यानि हवींषि देवेभ्यो दातुं। गृणानः स्तूयमानस्त्वं बर्हिष्यास्तीर्णे दर्भे होता सन् नि षत्सि। निषीद। उपविश॥ ॥२२॥

तं त्वा समिद्भिरंगिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य॥११॥

तं। त्वा। समित्ऽभिः। अंगिरः। घृतेन। वर्धयामसि। बृहत्। शोच। यविष्ठ्य॥११॥

हे अंगिरोऽगनादिगुणयुक्त अंगाररूप वाग्निरसः पुत्र वाग्ने तं पूर्वोक्तगुणं त्वा त्वां समिद्भिः समिधनहेतुभिर्दारुभिर्घृतेनाज्येन च वर्धयामसि। वर्धयामः। अतो हे यविष्ठ्य युवतमाग्ने बृहन्महद्यथा तथा शोच। दीप्यस्व॥

स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यं ॥१२॥

सः । नः । पृथु । श्रवाय्यं । अच्छ । देव । विवाससि । बृहत् । अग्ने । सुऽवीर्यं ॥१२॥

हे देव द्योतमानाग्ने स पूर्वोक्तगुणस्त्वं पृथु विस्तीर्णं श्रवाय्यं श्रवणीयं प्रशस्यं बृहन्महत्सुवीर्यं शोभनवीर्योपेतं धनं नोऽस्मानच्छ विवाससि । अभिगमय । अत्र वाजसनेयकं । अच्छा देव विवाससीति तन्नो गमयत्येतदाहेति ॥

अग्निमंथने त्वामग्ने पुष्करादधीत्याद्यास्तिस्र ऋचोऽनूच्याः । सूत्रितं च । त्वामग्ने पुष्करादधीति तिस्र गायत्र्यर्धर्च शिष्टारमेत । आ० २ १६ । इति ॥

त्वामग्ने पुष्करादध्यथर्वा निरमंथत । मूर्ध्नो विश्वस्य वाघतः ॥१३॥

त्वां । अग्ने । पुष्करात् । अधि । अथर्वा । निः । अमंथत । मूर्ध्नः । विश्वस्य । वाघतः ॥१३॥

हे अग्ने अथर्वैतत्संज्ञक ऋषिस्त्वां पुष्करादधि पुष्करपर्णे निरमंथत । अरण्योः सकाशादजनयत । कीदृशात्पुष्करात् । मूर्ध्नो मूर्धवद्धारकाद्विश्वस्य सर्वस्य जगतो वाघतो वाहकात् । पुष्करपर्णे हि प्रजापतिर्भूमिमप्रथयत तत्पुष्करपर्णेऽप्रथयत । तै० ब्रा० १ १ ३ ६ । इति श्रुतेः । भूमिश्च सर्वजगत आधारभूतेति पुष्करपर्णस्य सर्वजगद्धारकत्वं । अत्र पुष्करशब्देन पुष्करपर्णमभिधीयत इति । एतच्च तैत्तिरीयके विस्पष्टमाम्नातं । त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येनमुपश्रितमविंदत् । तै० सं० ५ १ ४ ४ । इति ॥

तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरंदरं ॥१४॥

तं । ऊं इति । त्वा । दध्यङ् । ऋषिः । पुत्रः । ईधे । अथर्वणः । वृत्रऽहनं । पुरंऽदरं ॥१४॥

हे अग्ने य उक्तगुणस्तमु तमेव त्वामथर्वणः पुत्रो दध्यङ् एतत्संज्ञ ऋषिरीधे । दीपितवान् । कीदृशं । वृत्रहणमावरकाणां शत्रूणां हंतारं पुरंदरमसुरपुराणां दारयितारं ॥

तमु त्वा पाथ्यो वृषा समीधे दस्युहंतमं । धनंजयं रणेरणे ॥१५॥

तं । ऊं इति । त्वा । पाथ्यः । वृषा । सं । ईधे । दस्युहन्ऽतमं । धनंऽजयं । रणेऽरणे ॥१५॥

पाथ्यो वृषा नाम कश्चिदृषिः तमु तमेव त्वा त्वां हे अग्ने समीधे । समैंध । समदीपयत । कीदृशं । दस्युहंतममतिशयेन दस्यूनामुपक्षपयितॄणां शत्रूणां हंतारं रणे रणे युद्धे युद्धे धनंजयं धनानां जेतारं ॥ ॥२३॥

उक्थ्ये क्रतौ तृतीयसवने मैत्रावरुणस्येह्यू ष्वित्यादिका तृचा स्तोत्रियानुरूपौ । आ० ६. १. ॥ आभिप्लविकेषूक्थ्येषु त्वेता वैकल्पिकौ स्तोत्रियानुरूपौ । आभिप्लविकेषूक्थ्येषु सूत्रितं च । एह्यू षु ब्रवाणि त आग्निरगामि भारतः । आ० ७ ८. । इति ॥ पौनराधेयिक्यामिष्टावुत्तराज्यभागस्येह्यू ष्वित्यनुवाक्या । सूत्रितं च । एह्यू षु ब्रवाणि त इत्याग्नेयावाज्यभागौ । आ० २ ८. । इति ॥

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इंदुभिः ॥१६॥

आ । इहि । ऊं इति । सु । ब्रवाणि । ते । अग्ने । इत्था । इतराः । गिरः । एभिः ।
वर्धासे । इंदुऽभिः ॥१६॥

हे अग्न एहि । आगच्छ । ते तुभ्यं त्वदर्थं गिरः स्तुतीरित्थेत्थमनेन प्रकारेण सु सुष्ठु ब्रवाणीत्याशास्यते । ताः स्तुतीः शृणिवत्यर्थः । उ इत्येतत्पूरकं । इतरा अमुरैः कृताः स्तुतीः शृणोतीति शेषः । तथा च ब्राह्मणं । अप इत्येतरा गिर इत्यसुर्या ह वा इतरा गिरः । ऐ० ब्रा० ३. ४९. । इति । अपि चागतस्त्वमेभिरेतैरिंदुभिः सोमैर्वर्धासे । वर्धस्व ॥

यत्र क्क च ते मनो दक्षं दधस उत्तरं । तत्रा सदः कृणवसे ॥१७॥
यत्र । क्क । च । ते । मनः । दक्षं । दधसे । उत्ऽतरं । तत्र । सदः । कृणवसे ॥१७॥

हे अग्ने ते तव मनोऽनुग्रहात्मकमंतःकरणं यत्र यस्मिन्देशे क्क च कस्मिंश्चिद्यजमाने वर्तते तत्र तस्मिन्यजमान उत्तरमुद्गततरं श्रेष्ठं दक्षं बलकरमन्नं वा दधसे । धारयसि । तथा सदः स्थानं च कृणवसे । तस्मिन्यजमाने करोषि ॥

नहि ते पूर्तमक्षिपद्भुवन्नेमानां वसो । अथा दुवो वनवसे ॥१८॥
नहि । ते । पूर्तं । अक्षिऽपत् । भुवत् । नेमानां । वसो इति । अथ । दुवः । वनवसे ॥१८॥

हे अग्ने ते त्वदीयं पूर्तं पूरकं तेजोऽक्षिपदक्ष्णोः पातकं विनाशकं नहि भुवत् । न भवतु । सर्वदास्माकं दर्शनसामर्थ्यं करोतु । हे नेमानां वसो । नेमशब्दोऽन्यवाची । मनुष्याणां मध्ये कतिपयानां यजमानानां वासक । अथातः कारणात् दुवोऽस्माभिर्यजमानैः कृतं परिचरणं वनवसे । संभजस्व ॥

आग्निरगामि भारतो वृत्रहा पुरुचेतनः । दिवोदासस्य सत्पतिः ॥१९॥
आ । अग्निः । अगामि । भारतः । वृत्रऽहा । पुरुऽचेतनः । दिवःऽदासस्य । सत्ऽपतिः ॥१९॥

अयमग्निरागामि । अस्माभिः स्तुतिभिरभ्यगम्यत । कीदृशः । भारतो हविषां भर्ता दिवोदासस्यैतन्नामकस्य राज्ञो वृत्रहा वृत्राणां शत्रूणां हंता पुरुचेतनः पुरूणां बहूनां चेतयिता ज्ञाता । सर्वज्ञ इत्यर्थः । सत्पतिः सतां यजमानानां पालयिता ॥

स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना । वन्वन्नवातो अस्तृतः ॥२०॥
सः । हि । विश्वा । अति । पार्थिवा । रयिं । दाशत् । महिऽत्वना । वन्वन् । अवातः ।
अस्तृतः ॥२०॥

स हि खल्वग्निर्विश्वा विश्वानि सर्वाणि पार्थिवा पृथिव्यां भवानि भूतजातानि महित्वना महत्त्वेन स्वमहिम्नातिक्रामन् रयिं धनं दाशत् । अस्मभ्यं ददातु । यद्वा । विश्वं सर्वं पार्थिवं पृथिव्यां विद्यमानं रयिं धनमति अतिशयेन दाशत् । ददातु । कीदृशोऽग्निः । महित्वना महत्त्वेन तेजसा वन्वन् काष्ठानि शत्रून्वा हिंसन् अवातोऽन्यैः शत्रुभिरप्रतिगतोऽस्तृतः केनाप्यहिंसितः ॥ ॥२४॥

स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता । बृहत्ततंथ भानुना ॥२१॥
सः । प्रत्नऽवत् । नवीयसा । अग्ने । द्युम्नेन । संऽयता । बृहत् । ततंथ । भानुना ॥२१॥

हे अग्ने यः पूर्वोक्तगुणविशिष्टः स तादृशस्त्वं प्रत्नवत् प्रत्नेन पुराणेन नवीयसा नवतरेण द्युम्नेन द्योतमानेन संयता संगच्छता सम्यग्व्याप्नुवता भानुना तेजसा बृहन्महदंतरिक्षं ततंथ । विस्तारयसि ॥

प्र वः सखायो अग्नये स्तोमं यज्ञं च धृष्णुया । अर्च गाय च वेधसे ॥२२॥
प्र । वः । सखायः । अग्नये । स्तोमं । यज्ञं । च । धृष्णुऽया । अर्च । गाय । च । वेधसे ॥२२॥

हे सखायः समानख्याना ऋत्विजो वो यूयं धृष्णुया शत्रूणां धर्षकाय वेधसे विधात्रेऽग्नये स्तोमं स्तोत्रं गाय । गायत । तथा यज्ञं यजनसाधनं हविश्च प्रार्च । प्रयच्छत ॥

स हि यो मानुषा युगा सीदद्धोता कविक्रतुः । दूतश्च हव्यवाहनः ॥२३॥
सः । हि । यः । मानुषा । युगा । सीदत् । होता । कविऽक्रतुः । दूतः । च । हव्यऽवाहनः ॥२३॥

स हि स खल्वग्निः सीदत । सीदतु । अस्मदीये यज्ञे बर्हिष्युपविशतु । योऽग्निर्होता देवानामाह्वाता कविक्रतुः क्रांतप्रज्ञो मानुषा युगा मानुषाणि युगानि मनुष्यसंबंधिनो यज्ञार्हान्कालविशेषान् येषु यागा अनुष्ठीयंते ॥ अत्यंतसंयोगे द्वितीया ॥ एतावंतं कालं देवानां दूतः । स हव्यवाहनो हविषां वोढा च भवति ॥

ता राजाना शुचिव्रतादित्यान्मारुतं गणं । वसो यक्षीह रोदसी ॥२४॥
ता । राजाना । शुचिऽव्रता । आदित्यान । मारुतं । गणं । वसो इति । यक्षि । इह । रोदसी इति ॥२४॥

ता तौ प्रसिद्धौ राजाना राजमानौ शुचिव्रता शुचिकर्माणौ मित्रावरुणावादित्यानदितेः पुत्रान् धात्रादीन्मारुतं गणं मरुतां संघं च रोदसी द्यावापृथिव्यौ च एतान्देवान् हे वसो वासकाग्ने इहास्मिन्यज्ञे यक्षि । यज ॥

वस्वी ते अग्ने संदृष्टिरिषयते मर्त्याय । ऊर्जो नपादमृतस्य ॥२५॥
वस्वी । ते । अग्ने । संऽदृष्टिः । इषऽयते । मर्त्याय । ऊर्जः । नपात् । अमृतस्य ॥२५॥

हे ऊर्जो नपाद्बलस्य पुत्राग्ने अमृतस्य मरणरहितस्य ते तव संदृष्टिर्दीप्तिर्वस्वी वासयित्री । प्रशस्तेत्यर्थः । सा मर्त्याय मनुष्याय यजमानायेषयते । इषमन्नमिच्छति । ददातीत्यर्थः ॥ ॥२५॥

क्रत्वा दा अस्तु श्रेष्ठोऽद्य त्वा वन्वन्सुरेक्णाः । मर्त आनाश सुवृक्तिं ॥२६॥
क्रत्वा । दाः । अस्तु । श्रेष्ठः । अद्य । त्वा । वन्वन । सुऽरेक्णाः । मर्तः । आनाश । सुऽवृक्तिं ॥२६॥

हे अग्ने अद्येदानीं क्रत्वा कर्मणा परिचरणात्मना त्वां वन्वन् संभजन् दा हवींषि दाता यजमानः श्रेष्ठोऽतिशयेन प्रशस्योऽस्तु । सुरेक्णाः शोभनधनश्चास्तु । तथा स मर्तो मनुष्यः सुवृक्तिं त्वद्विषयां सुष्टुतिं चानाश । व्याप्नोतु । तव सर्वदा स्तोता भवत्वित्यर्थः ॥

ते ते अग्ने त्वोता इषयंतो विश्वमायुः । तरंतो अर्यो अरातीर्वन्वंतो अर्यो अरातीः ॥२७॥
ते । ते । अग्ने । त्वाऽऊताः । इषयंतः । विश्वं । आयुः । तरंतः । अर्यः । अरातीः । वन्वंतः । अर्यः । अरातीः ॥२७॥

हे अग्ने ते त्वदीया ये त्वा स्तुवंति ते स्तोतारस्त्वोतास्त्वयोता रक्षिता अत एवेषयंत इषमात्मन इच्छंतः संतो विश्वं सर्वमायुरन्नं लभंत इति शेषः । आयुरेव वा शतवर्षलक्षणमिषयंत इच्छंतः प्राप्नुवंतीति शेषः । तथार्योऽरीनभिगत्रीररातीः काश्चिच्छत्रुसेनास्तरतोऽतिक्रामतोऽर्योऽभिगंत्रीररातीः काश्चन शत्रुसेना वन्वंतो हिंसंतश्च भवंतीति शेषः ॥

अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्यत्रिणं । अग्निर्नो वनते रयिं ॥२८॥
अग्निः । तिग्मेन । शोचिषा । यासत् । विश्वं । नि । अत्रिणं । अग्निः । नः । वनते । रयिं ॥२८॥

अयमग्निस्तिग्मेन तीक्ष्णेन शोचिषा तेजसा विश्वं सर्वमत्रिणमत्तारं राक्षसादिकं नि यासत् । निहंतु । अपि च नोऽस्मभ्यमग्नी रयिं धनं वनते । ददातु ॥

सुवीरं रयिमा भर जातवेदो विचर्षणे । जहि रक्षांसि सुक्रतो ॥२९॥

सुऽवीरं । रयिं । आ । भर । जातऽवेदः । विऽचर्षणे । जहि । रक्षांसि । सुक्रतो इति सुऽक्रतो ॥२९॥

हे जातवेदो जातप्रज्ञान जातधन वा विचर्षणे विशेषेण द्रष्टरग्ने सुवीरं शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेतं रयिं धनमा भर । आहर । तथा हे सुक्रतो सुकर्मन्नग्ने रक्षांसि च जहि । विनाशय ॥

त्वं नः पाह्यंहसो जातवेदो अघायतः । रक्षा णो ब्रह्मणस्कवे ॥३०॥

त्वं । नः । पाहि । अंहसः । जातऽवेदः । अघऽयतः । रक्ष । नः । ब्रह्मणः । कवे ॥३०॥

हे जातवेदस्त्वं नोऽस्मानंहसः पापात्पाहि । रक्ष । तथा हे ब्रह्मणस्कवे स्तुतिरूपस्य मन्त्रस्य कवे कावयितः शब्दयितरग्ने । अग्निर्हि शब्दमुत्पादयति । तथा च स्मर्यते । मनः कायाग्निमाहन्ति स प्रेरयति मारुतं । मारुतस्तूरसि चरन् मंद्रं जनयति स्वरमिति । तादृशाग्नेऽघायतोऽघमनर्थमस्माकमिच्छतः शत्रोश्च नोऽस्मान्रक्ष ॥ ॥२६॥

यो नो अग्ने दुरेव आ मर्तो वधाय दाशति । तस्मान्नः पाह्यंहसः ॥३१॥

यः । नः । अग्ने । दुःऽएवः । आ । मर्तः । वधाय । दाशति । तस्मात् । नः । पाहि । अंहसः ॥३१॥

हे अग्ने दुरेवो दुष्टाभिप्रायो यो मर्तो मनुष्यो वधाय स्वस्यायुधाय नोऽस्माना दाशति अभिप्रयच्छति । आयुधेनास्मान्हन्तीत्यर्थः । तस्मान्मनुष्यादंहसः पापाच्च नोऽस्मान्पाहि । रक्ष ॥

त्वं तं देव जिह्वया परि बाधस्व दुष्कृतं । मर्तो यो नो जिघांसति ॥३२॥

त्वं । तं । देव । जिह्वया । परि । बाधस्व । दुःऽकृतं । मर्तः । यः । नः । जिघांसति ॥३२॥

हे देव द्योतमानाग्ने त्वं तं वक्ष्यमाणं दुष्कृतं दुष्कर्मकारिणं मनुष्यं जिह्वया ज्वालया परि बाधस्व । सर्वतो जहि । यो मर्तो मनुष्यो नोऽस्मान् जिघांसति हन्तुमिच्छति ॥

भरद्वाजाय सप्रथः शर्म यच्छ सहन्त्य । अग्ने वरेण्यं वसु ॥३३॥

भरत्ऽवाजाय । सऽप्रथः । शर्म । यच्छ । सहन्त्य । अग्ने । वरेण्यं । वसु ॥३३॥

हे सहन्त्य शत्रूणामभिभवितरग्ने भरद्वाजाय मह्यमृषये सप्रथः सर्वतः पृथु विस्तीर्णं शर्म सुखं गृहं वा यच्छ । देहि । तथा वरेण्यं वरणीयं वसु धनं च देहि ॥

पौर्णमास्यामाग्नेयाज्यभागस्यानुवाक्याग्निर्वृत्राणीत्येषा । सूत्रितं च । अग्निर्वृत्राणि जङ्घनदिति पूर्वस्याज्यभागस्यानुवाक्या । आ॰ १.५ । इति ॥ दर्शपूर्णमासयोश्च यत्र वृधन्वतौ पुरस्तादित्यादिविशेषविधिर्न दृश्यते तत्र सर्वत्रैषैव प्रथमाज्यभागानुवाक्या ॥ उपसदाग्नेयस्यैषानुवाक्या सायंकालीनस्य सैषैव प्रातः । सूत्रितं च । अग्निर्वृत्राणि जङ्घनत् उग्र इव शर्यहेति विपर्यासो याज्यानुवाक्यानां । आ॰ ४.८ । इति ॥

अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः ॥३४॥

अग्निः । वृत्राणि । जङ्घनत् । द्रविणस्युः । विपन्यया । संऽइद्धः । शुक्रः । आऽहुतः ॥३४॥

विपन्यया स्तुत्या स्तूयमानो द्रविणस्युर्द्रविणं धनं स्तोतृणामिच्छन् यद्वा हविर्लक्षणं धनमात्मन इच्छन्नग्निर्वृत्राण्यावरकाणि रक्षःप्रभृतीनि तमांसि वा जङ्घनत् । भृशं हन्तु । कीदृशोऽग्निः । समिद्धः सम्यग्दीप्तः अत एव शुक्रः शुक्लवर्ण आहुतो हविर्भिरभिहुतः ॥

गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे । सीदन्नृतस्य योनिमा ॥३५॥
गर्भे । मातुः । पितुः । पिता । विऽदिद्युतानः । अक्षरे । सीदन् । ऋतस्य । योनिं । आ ॥३५॥

अत्र मातृपितृशब्दाभ्यां भूमिद्यावाभिधीयेते । द्यौर्वः पिता पृथिवी माता । ऋग्वे॰ १. १९१. ६. । इति श्रुतेः । मातुर्भूम्या गर्भे गर्भस्थाने मध्येऽक्षरे क्षरणरहिते वेद्याख्ये स्थाने विदिद्युतानो विशेषेण दीप्यमानः पितुः पिता द्युलोकस्य पालयिता हविषां प्रदानेन । एवंभूतोऽग्निरृतस्य यज्ञस्य योनिमुत्तरवेद्याख्यं धिष्ण्यं ॥ सप्तम्यर्थे द्वितीया ॥ आ सीदन् उत्तरवेदीमुपविशन् अग्निर्वृत्राणि जङ्घनदित्यन्वयः ॥ ॥२७॥

ब्रह्म प्रजावदा भर जातवेदो विचर्षणे । अग्ने यद्दीदयद्दिवि ॥३६॥
ब्रह्म । प्रजाऽवंत । आ । भर । जातऽवेदः । विऽचर्षणे । अग्ने । यत । दीदयत । दिवि ॥३६॥

हे जातवेदो जातानां वेदितर्विचर्षणे विशेषेण द्रष्टरग्ने प्रजावत्पुत्रपौत्रसहितं ब्रह्मान्नमा भर । आहर । यद्ब्रह्म दिवि द्युलोके दीदयद्दीप्यते देवेषु मध्ये यत्प्रशस्तमन्नं राजते तदाहरेत्यर्थः ॥

उप त्वा रण्वसंदृशं प्रयस्वंतः सहस्कृत । अग्ने ससृज्महे गिरः ॥३७॥
उप । त्वा । रण्वऽसंदृशं । प्रयस्वंतः । सहःऽकृत । अग्ने । ससृज्महे । गिरः ॥३७॥

हे सहस्कृत सहसा बलेनोत्पन्नाग्ने प्रयस्वंतो हविर्लक्षणान्नवंतो वयं रण्वसंदृशं रमणीयसंदर्शनं स्तोतव्यसंदर्शनं वा त्वा त्वामुप प्रति गिरः स्तुतीः ससृज्महे । विसृजामः । उच्चारयाम इत्यर्थः ॥

उप छायामिव घृणेरगन्म शर्म ते वयं । अग्ने हिरण्यऽसंदृशः ॥३८॥
उप । छायांऽइव । घृणेः । अगन्म । शर्म । ते । वयं । अग्ने । हिरण्यऽसंदृशः ॥३८॥

हे अग्ने हिरण्यसंदृशो हितरमणीयतेजसो हिरण्यवद्रोचमानतेजसो वा घृणेर्दीप्तस्य ते तव शर्म शरणमाश्रयणमुपागन्म । उपगच्छाम । तत्र दृष्टांतः । छायामिव । यथा घर्मार्ताः सतप्ताश्छायामुपागच्छंति तद्वत् ॥

उपसदि प्रातःकालीनस्याग्नेयस्य य उग्र इवेति याज्या सायंकालीनस्य सैषैवानुवाक्या । सूत्रितं च । अग्निर्वृत्राणि जङ्घनद्य उग्र इव शर्यहा । आ॰ ४. ८. । इति ॥

य उग्र इव शर्यहा तिग्मशृंगो न वंसगः । अग्ने पुरो रुरोजिथ ॥३९॥
यः । उग्रःऽइव । शर्यऽहा । तिग्मऽशृंगः । न । वंसगः । अग्ने । पुरः । रुरोजिथ ॥३९॥

योऽग्निरुग्र इवोद्गूर्णबलो धन्वीव शर्यहा शर्यैर्बाणैः शत्रूणां हंता तिग्मशृंगो न ध्वंसगस्तीक्ष्णशृंगो वननीयगतिर्वृषभ इव हे अग्ने स त्वं पुर आसुरीस्त्रिस्रः पुरो रुरोजिथ । भग्नवानसि । रुद्रो वा एष यदग्निः । तै॰ ब्रा॰ २. १. ३. १. । इति श्रुतेः । रुद्रकृतमपि त्रिपुरदहनमग्निकृतमेवेत्यग्निः स्तूयते । यद्वा । त्रिपुरदहनसाधनभूते बाणेऽग्निरनीकत्वेनावस्थानादग्निः पुराणि भग्नवानित्युच्यते । देवासुरा वा एषु लोकेषु समयतंत । ऐ॰ ब्रा॰ १. २३. । इत्यादिकं ब्राह्मणमनुसंधेयं ॥

अग्निमथने जायमानेऽग्नावा यं हस्त इत्येषानुवाक्या । सूत्रितं च । आ यं हस्ते न खादिनमित्यर्धर्चं आरमेत । आ॰ २. १६. । इति ॥

आ यं हस्ते न खादिनं शिशुं जातं न बिभ्रति । विशामग्निं स्वध्वरं ॥४०॥
आ । यं । हस्ते । न । खादिनं । शिशुं । जातं । न । बिभ्रति । विशां । अग्निं । सुऽअध्वरं ॥४०॥

मंथनोत्पन्नं यमग्निं शिशुं जातं न जातं पुत्रमिव हस्ते आ बिभ्रति हस्तेनाभिमुखं धारयत्यध्वर्यवः । पूर्वो नशब्दः पुरस्तादुपचारोऽप्युपमार्थीयः । खादिनं न भक्षकं व्याघ्रादिमिव । यथा तं बिभ्रतः स्वरूपा अवहिता तथाभूता इत्यर्थः । यद्वा संप्रत्यर्थे । संप्रतीदानीं खादिनं हविषां भक्षकं यमग्निं हस्ते धारयंति विशां जनानां स्वध्वरं शोभनयागस्य निष्पादकं तमग्निं हे ऋत्विजः परिचरतेति शेषः ॥ ॥ २८ ॥

अग्निमंथने जातस्याग्नेराहवनीये प्रहरणसमये प्र देवं देववीतय इति तृचोऽनुवक्तव्यः । सूत्रितं च । प्र देवं देववीतय इति द्वे अग्निनाग्निः समिध्यते । आ० २ १६ । इति ॥

•प्र दे॒वं दे॑ववी॒तये॒ भर॑ता वसु॒वित्त॑मं । आ स्वे योनौ॒ नि षी॑दतु ॥४१॥

प्र । दे॒वं । दे॒व॒ऽवी॑तये । भर॑त । व॒सु॒वित्ऽत॑मं । आ । स्वे । योनौ॑ । नि । सी॒द॒तु॒ ॥४१॥

हे अध्वर्यवो देवं द्योतमानं वसुवित्तमं वसूनां धनानां वेदयितारं लंभयितारमग्निं प्र भरत । प्रहरत । आहवनीयेऽग्निं प्रक्षिपत । किमर्थं । देववीतये । देवानां भक्षणार्थं । तथा च ब्राह्मणं । प्र देवं देववीतये भरता वसुवित्तममिति प्रह्रियमाणायाभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धं । ऐ० ब्रा० १ १६ । इति । स चाग्निः स्वे योनौ कारणे स्थाने आहवनीये आ नि षीदतु । आभिनिषण्णो भवतु । ब्राह्मणं च भवति । एष ह वा अस्य स्वो योनिर्यदग्निरग्नेः । ऐ० ब्रा० १ १६ । इति ॥

आ जा॒तं जा॒तवे॑दसि प्रि॒यं शि॑शी॒ताति॑थिं । स्यो॒न आ गृ॒हप॑तिं ॥४२॥

आ । जा॒तं । जा॒तऽवे॑दसि । प्रि॒यं । शि॒शी॒त॒ । अति॑थिं । स्यो॒ने । आ । गृ॒हऽप॑तिं ॥४२॥

हे अध्वर्यवो जातं प्रादुर्भूतमतिथिं । लुप्तोपममेतत् । अतिथिमिव प्रियं अत एव गृहपतिं गृहाणां स्वामिनमग्निं जातवेदसि जातप्रज्ञे स्योने सुखकरे आहवनीयेऽग्नावा शिशीत ॥ अतर्णोतिकर्मणः शीङ् एतद्रूपं ॥ शाययत । स्थापयत ॥ यद्वा । श्यैङ् गतावित्यस्य छांदसं रूपं ॥ गमयत । प्रापयतेत्यर्थः ॥ शो तनूकरण इत्यस्य वा रूपं ॥ श्यत । तीक्ष्णीकुरुत । संस्कुरुत । प्रहरतेति यावत् । द्वितीय आकारः पूरकः । जात इतरो जातवेदा इतरः । ऐ० ब्रा० १ १६ । इत्यादिकं ब्राह्मणमत्रानुसंधेयं ॥

अग्ने॑ यु॒क्ष्वा हि ये तवाश्वा॑सो देव सा॒धवः॑ । अरं॒ वह॑न्ति म॒न्यवे॑ ॥४३॥

अग्ने॑ । यु॒क्ष्व । हि । ये । तव॑ । अश्वा॑सः । दे॒व॒ । सा॒धवः॑ । अरं॑ । वह॑न्ति । म॒न्यवे॑ ॥४३॥

हे देव द्योतमानाग्ने तानश्वान्युक्ष्व । आत्मीये रथे योजय । ये तव त्वदीयाः साधवः साधकाः सुशीला वाश्वासोऽश्वा अरमलं पर्याप्तं वहंति । किमर्थं । मन्यवे । मन्यते यष्टव्यत्वेन देवानिति मन्युर्यागः । तदर्थं तानश्वान्रथे युंक्ष्वेत्यर्थः । हि खलु ॥

अच्छा॑ नो या॒ह्या व॑हा॒भि प्रयां॑सि वी॒तये॑ । आ दे॒वान्त्सोम॑पीतये ॥४४॥

अच्छ॑ । नः॒ । या॒हि॒ । आ । व॒ह॒ । अ॒भि । प्रयां॑सि । वी॒तये॑ । आ । दे॒वान् । सोम॑ऽपीतये ॥४४॥

हे अग्ने नोऽस्मानच्छाभिमुख्येन याहि । आगच्छ । तथा प्रयांसि हविर्लक्षणान्यन्नान्यभिलक्ष्य देवानां वह । किमर्थं । वीतये तेषां हविषां स्वादनार्थं । तथा सोमपीतये सोमपानार्थं च तान्देवाना वह ॥

उद॑ग्ने भारत द्यु॒मदज॑स्रेण॒ दवि॑द्युतत् । शोचा॒ वि भा॑ह्यजर ॥४५॥

उत् । अ॒ग्ने॒ । भा॒र॒त॒ । द्यु॒ऽमत् । अज॑स्रेण । दवि॑द्युतत् । शोच॑ । वि । भा॒हि॒ । अ॒ज॒र॒ ॥४५॥

हे भारत हविषां भर्तरग्ने उच्छोच । उन्नततरं दीप्यस्व । तदेव विवृणोति । हे अजर जरारहिताग्ने दविद्युतत् भृशं द्योतमानस्त्वं द्युमत् द्युमता दीप्तिमता ॥ सुपां सुलुगिति तृतीयाया लुक् ॥ अजस्रेणाविच्छेदेन

तेजसा वि भाहि । विशेषेण प्रकाशस्व ॥ यद्वा । भातिरत्रांतर्णीतण्यर्थः ॥ त्वं प्रथममुद्दीप्यस्व पश्चादात्मीयेन तेजसा सर्वं जगत्प्रकाशयेति योजनीयं ॥ ॥ २९ ॥

वीती यो देवं मर्तो दुवस्येदग्निमीळीताध्वरे हविष्मान् ।
होतारं सत्ययजं रोदस्योरुत्तानहस्तो नमसा विवासेत् ॥ ४६ ॥
वीती । यः । देवं । मर्तः । दुवस्येत् । अग्निं । ईळीत । अध्वरे । हविष्मान् ।
होतारं । सत्यऽयजं । रोदस्योः । उत्तानऽहस्तः । नमसा । आ । विवासेत् ॥ ४६ ॥

यो मर्तो मनुष्यो हविष्मान्हविर्भिर्युक्तो यजमानो वीती वीत्या कांतेन हविर्लक्षणेनान्नेन यं कंचन देवं दुवस्येत परिचरेत तस्मिन्नध्वरे यज्ञेऽग्निमीळीत । स्तुवीत । सर्वेषु यागेष्वग्निः पूज्यत इत्यर्थः । कीदृशमग्निं । रोदस्योर्द्यावापृथिव्योर्लोकद्वये वर्तमानानां होतारमाह्वातारं सत्ययजं सत्येनावितथेन हविषा यष्टारं । किंचायं यजमान ईदृशमग्निमुत्तानहस्तः कृताञ्जलिपुटः सन् नमसा नमस्कारेण हविषा वा आ विवासेत् । परिचरेत ॥

आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि ।
ते ते भवंतूक्षण ऋषभासो वशा उत ॥ ४७ ॥
आ । ते । अग्ने । ऋचा । हविः । हृदा । तष्टं । भरामसि ।
ते । ते । भवंतु । उक्षणः । ऋषभासः । वशाः । उत ॥ ४७ ॥

अनयाध्ययनं प्रशस्यत इत्याश्वलायनो मन्यते । गृ० १ १.५ । हे अग्ने ते तुभ्यं हृदा हृदयेन तष्टं संस्कृतमृचा ऋग्रूपेण वर्तमानं हविर्ऋचमेव हविः कृत्वा आ भरामसि । आहरामः । त इति तच्छब्देन प्रकृतमृग्रूपं हविः परामृश्यते । प्रतिनिर्दिश्यमानापेक्षया पुंस्त्वबहुत्वे । ऋग्रूप तद्धविस्ते तुभ्यमुक्षण उक्षाणः सेचनसमर्था ऋषभास ऋषभा उतापि च वशाश्च भवतु । ऋषभवशारूपेण परिणतं सत् त्वद्भक्षणाय भवत्विति शेषः ॥

अग्निं देवासो अग्रियमिंधते वृत्रहंतमं ।
येना वसून्याभृता तृळ्हा रक्षांसि वाजिना ॥ ४८ ॥
अग्निं । देवासः । अग्रियं । इंधते । वृत्रहन्ऽतमं ।
येन । वसूनि । आऽभृता । तृळ्हा । रक्षांसि । वाजिना ॥ ४८ ॥

अग्रियं मुख्यं वृत्रहंतममतिशयेन वृत्रस्य हंतारमिममग्निं देवासो देवा इंधते । दीपयंति । येनाग्निना वसून्यसुरैरपहृतानि धनानि हविर्लक्षणान्यन्नानि वाभृतान्यसुरसकाशाद्यजमानाद्वाहृतानि । येन च वाजिना बलवताग्निना रक्षांसि यज्ञविरोधीनि तृळ्हा तृढानि हिंसितानि तमग्निमिंधत इत्यन्वयः ॥ ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके पंचमोऽध्यायः समाप्तः ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

चतुर्थाष्टके षष्ठोऽध्याय आरभ्यते ॥ षष्ठे मंडले द्वितीयेऽनुवाके प्रथमं सूक्तं व्याख्यातं । तत्र पिबा सोम-
मिति द्वितीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं । अंत्या द्विपदा त्रिष्टुप् । तथा चानुक्रांतं । पिब पंचोनेंद्रं त्रैष्टुभं
द्विपदांतमिति ॥ अभिजिति मरुत्वतीयशस्त्र एतन्निविद्धानं । सूत्रितं च । पिबा सोमं तमु ष्टुहीति मध्यंदिनः
। आ० ८. ५ । इति ॥ समूळ्हे दशरात्रेऽष्टमेऽहनि मरुत्वतीयशस्त्र एतत्सूक्तं । सूत्रितं च । पिबा सोममभि
तमस्य द्यावापृथिवी । आ० ८. ७. । इति ॥ सूर्यस्तुताख्येऽप्येकाहे मरुत्वतीय एतत्सूक्तं निविद्धानं । सूत्र्यते हि ।
सूर्यस्तुता यशस्कामः पिबा सोममभि । आ० ९. ८. । इति ॥ महाव्रतेऽपि मरुत्वतीय एतत्सूक्तं । तथैव पंचमा
रण्यके सूत्रितं । पिबा सोममभि यमुग्र तर्द इति कया शुभा सवयसः सनीळाः । ऐ० आ० ५. १. १ । इति ॥ माध्यं
दिने सवन आद्यास्तिस्रो होतृमैत्रावरुणब्राह्मणाच्छंसिनां प्रस्थितयाज्याः । सूत्रितं च । पिबा सोममभि यमुग्र
तर्द इति तिस्रोऽर्वाङेहि सोमकामं त्वाहुः । आ० ५. ५ । इति ॥

पिबा सोममभि यमुग्र तर्द ऊर्वं गव्यं महि गृणान इंद्र ।
वि यो धृष्णो वधिषो वज्रहस्त विश्वा वृत्रममित्रिया शवोभिः ॥१॥

पिब । सोमं । अभि । यं । उग्र । तर्दः । ऊर्वं । गव्यं । महि । गृणानः । इंद्र ।
वि । यः । धृष्णो इति । वधिषः । वज्रऽहस्त । विश्वा । वृत्रं । अमित्रिया । शवःऽभिः ॥१॥

हे उग्रोद्गूर्णबलेंद्र गृणानोऽगिरोभिः स्तूयमानस्त्वं यं सोममभ्युद्दिश्य । पातुमित्यर्थः । महि महत्
गोसंबंध्यूर्वं पणिभिराहृतं समूहं तर्दः प्रकाशितवानसि ॥ तुर्दिर्हिंसाकर्मात्र प्रकाशनार्थः ॥ तं सोमं पिब ।
पानं कुरु । हे धृष्णो शत्रूणां धर्षक वज्रहस्त वज्रपाणे हे इंद्र यस्त्वं शवोभिर्बलैः सहितः सन् विश्वा विश्वं
वृत्रमावरकममित्रियामित्रियं शत्रुं ॥ अमित्रशब्दात् द्वितीयैकवचनस्येयादेशः ॥ वि वधिषः व्यवधीः स त्वं
सोमं पिबेति संबंधः ॥

स ईं पाहि य ऋजीषी तरुत्रो यः शिप्रवान्वृषभो यो मतीनां ।
यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः स इंद्र चित्राँ अभि तृंधि वाजान् ॥२॥

सः । ईं । पाहि । यः । ऋजीषी । तरुत्रः । यः । शिप्रऽवान् । वृषभः । यः । मतीनां ।
यः । गोत्रऽभित् । वज्रऽभृत् । यः । हरिऽस्थाः । सः । इंद्र । चित्रान् । अभि । तृंधि ।
वाजान् ॥२॥

हे इंद्र ऋजीषी । ऋजीषशब्देन गतरसः सोमोऽभिधीयते । तद्वान्यस्त्वं तरुत्रः शत्रूणां तारकोऽसि
यस्त्वं शिप्रवान् शोभनहनुरसि यस्त्वं मतीनां स्तोतॄणां ॥ मन्यतेः स्तुतिकर्मणः कर्तरि क्तिच् ॥ वृषभः कामानां
वर्षितासि स त्वमीमेनं सोमं पाहि । पिब । हे इंद्र यस्त्वं वज्रभृद्वज्रधरो यस्त्वं गोत्रभिद्गोत्राणां पर्वतानां
मेघानां वा भेत्तासि यस्त्वं हरिष्ठा हर्योः स्थातासि हे इंद्र स त्वं चित्रान् विचित्रान् वाजानन्नान्यभि तृंधि ।
अस्मभ्यं प्रकाशय ॥

एवा पाहि प्रत्नथा मंदतु त्वा श्रुधि ब्रह्म वावृधस्वोत गीर्भिः ।
आविः सूर्यं कृणुहि पीपिहीषो जहि शत्रूँरभि गा इंद्र तृंधि ॥३॥

एव । पाहि । प्रत्नऽथा । मंदतु । त्वा । श्रुधि । ब्रह्म । ववृधस्व । उत । गीःऽभिः ।
आविः । सूर्यं । कृणुहि । पीपिहि । इषः । जहि । शत्रून् । अभि । गाः । इंद्र । तृंधि ॥३॥

हे इंद्र त्वं प्रत्नथा प्रत्नान्पुराणान् सोमान्यथापिबस्तथैवैवमिममस्मदीयं सोमं पाहि । पिब । स च सोमस्त्वया पीतः सन् त्वा त्वां मंदतु । मदयतु । ब्रह्मास्माभिः कृतं स्तोत्रं श्रुधि । शृणु । उतापि च गीर्भिः स्तुतिरूपाभिर्वाग्भिर्ववृधस्व । त्वं वर्धस्व । अपि च सूर्यं सर्वस्य प्रेरकं देवमाविष्कृणुहि । आविष्कुरु । वयं सूर्यं यथा पश्येम तथा कुर्वित्यर्थः । इषोऽन्नानि च पीपिहि । अस्मभ्यं प्यायय । शत्रूनस्मत्सपत्नान् जहि । नाशय । हे इंद्र त्वं पणिभिरपहृता गा अभि तृंधि । प्रकाशय ॥

ते त्वा मदा बृहदिंद्र स्वधाव इमे पीता उक्षयंत द्युमंतं ।
महामनूनं तवसं विभूतिं मत्सरासो जर्हृषंत प्रसाहं ॥४॥
ते । त्वा । मदाः । बृहत् । इंद्र । स्वधाऽवः । इमे । पीताः । उक्षयंत । द्युऽमंतं ।
महां । अनूनं । तवसं । विऽभूतिं । मत्सरासः । जर्हृषंत । प्रऽसहं ॥४॥

हे स्वधावोऽन्नवन्निंद्र मदा मदकरास्त इमे पीताः सोमा द्युमंतं दीप्तिमंतं त्वा त्वां बृहदत्यंतमुक्षयंत । सेचयंतु । अपि च हे इंद्र त्वा मत्सरासो मदकराः सोमा जर्हृषंत । भृशं हर्षयंतु । कीदृशं । महां महांतं प्रभूतमनूनं सर्वगुणैर्न्यूनतारहितं । संपूर्णगुणमित्यर्थः । तवसं प्रवृद्धं विभूतिं विभवंतं प्रसाहं शत्रूणामभिभवितारं ॥

येभिः सूर्यमुषसं मंदसानोऽवासयोऽप दृळ्हानि दर्द्रत् ।
महामद्रिं परि गा इंद्र संतं नुत्था अच्युतं सदसः परि स्वात् ॥५॥
येभिः । सूर्यं । उषसं । मंदसानः । अवासयः । अप । दृळ्हानि । दर्द्रत् ।
महां । अद्रिं । परि । गाः । इंद्र । संतं । नुत्थाः । अच्युतं । सदसः । परि । स्वात् ॥५॥

हे इंद्र येभिर्यैः सोमैर्मंदसानो मोदमानस्त्वं सूर्यं सर्वस्य प्रेरकं देवमुषसमुषोदेवतां चावासयः स्वस्थाने न्यवासयः । अथवा सूर्योषसौ यथा तमांसि विवासयतस्तथाकार्षीः । किं कुर्वन् । दृळ्हानि दृढानि तमांस्यप दर्द्रत् अपदारयन् । किंच हे इंद्र त्वं पणिभिरपहृता गाः परि संतं परितो विद्यमानं महां महांतमद्रिं पर्वतं नुत्थाः । अनुदः । कीदृशं । स्वात्स्वकीयात्सदसः स्थानात्परि परितोऽच्युतमविचालितं विनाशरहितं । स्थिरमित्यर्थः ॥ ॥१॥

तव क्रत्वा तव तद्दंसनाभिरामासु पक्वं शच्या नि दीधः ।
और्णोर्दुर उस्रियाभ्यो वि दृळ्होदूर्वाद्गा असृजो अंगिरस्वान् ॥६॥
तव । क्रत्वा । तव । तत् । दंसनाभिः । आमासु । पक्वं । शच्या । नि । दीधरिति दीधः ।
और्णोः । दुरः । उस्रियाभ्यः । वि । दृळ्हा । उत् । ऊर्वात् । गाः । असृजः । अंगिरस्वान् ॥६॥

हे इंद्र तव क्रत्वा त्वदीयया प्रज्ञया तव दंसनाभिस्त्वदीयैः कर्मभिः शच्या सामर्थ्येनामास्वपक्वासु गोषु पक्वं परिणतं तत्प्रसिद्धं पयो नि दीधः । नितरां धारयसि । अपि च हे इंद्र त्वमुस्रियाभ्यो गोभ्यः । गा निर्गमयितुमित्यर्थः । दृळ्हा दृढानि । बलेन पाषाणादिभिर्दृढीकृतानीत्यर्थः । दुरो द्वाराणि व्यौर्णोः । उद्घाटितवानसि । अंगिरस्वानंगिरोभिर्युक्तस्त्वमूर्वात्समूहात् । गोष्ठादित्यर्थः । गा उदसृजः । उदगमयः ॥

पप्राथ क्षां महि दंसो व्यु१र्वीमुप द्यामृष्वो बृहदिंद्र स्तभायः ।
अधारयो रोदसी देवपुत्रे प्रत्ने मातरा यह्वी ऋतस्य ॥७॥

पप्राथ । क्षां । महि । दंसः । वि । उर्वीं । उप । द्यां । ऋष्वः । बृहत् । इंद्र । स्तभायः ।
अधारयः । रोदसी इति । देवपुत्रे इति देवऽपुत्रे । प्रत्ने इति । मातरा । यह्वी इति ।
ऋतस्य ॥७॥

हे इंद्र त्वं महि महता दंसो दंससा कर्मणोर्वीं विस्तीर्णां क्षां भूमिं वि पप्राथ । विशेषेण पूरितवानसि ॥ प्रा पूरणे इति धातुः ॥ हे इंद्र ऋष्वो महांस्त्वं बृहद्बृहतीं द्यां दिवमुप स्तभायः । उपस्तभ्नासि । निरालंब वितिष्ठती द्यौर्यथा न पततीद्रस्तथा करोतीत्यर्थः । अपि च त्वं रोदसी द्यावापृथिव्यावधारयः । पोषणेर्धारयसि । कीदृश्यौ । देवपुत्रे । देवाः पुत्रा ययोस्ते । प्रत्ने पुराणे मातरा मातरौ निर्मात्र्यावृतस्योदकस्य यज्ञस्य वा यह्वी यह्व्यौ महत्यौ । यद्वा । विश्वस्य मातरावृतस्य ब्रह्मणो यह्वी पुत्र्यौ । यह्व इत्यपत्यनामैतत् ॥

अध त्वा विश्वे पुर इंद्र देवा एकं तवसं दधिरे भराय ।
अदेवो यदभ्यौहिष्ट देवान्त्स्वर्षाता वृणत इंद्रमत्र ॥८॥

अध । त्वा । विश्वे । पुरः । इंद्र । देवाः । एकं । तवसं । दधिरे । भराय ।
अदेवः । यत् । अभि । औहिष्ट । देवान् । स्वःऽसाता । वृणते । इंद्रं । अत्र ॥८॥

अधाधुनास्मिन्काले विश्वे देवाः सर्वे ब्रह्मादयो हे इंद्र एकं मुख्यं तवसं प्रवृद्धबलमेतं त्वा त्वां भराय संग्रामाय पुरो दधिरे । पुरस्तादकुर्वन् । यद्यदादेवो वृत्रोऽसुरो देवानभ्यौहिष्ट संग्रामार्थमभिगतवान् ॥ ओहतिर्गतिकर्मा ॥ किंचास्मिन्काले स्वर्षाता स्वर्षातौ संग्रामे इंद्रं वृणते । समभजंत स्म । मरुत इति शेषः । मरुतो हीद्रं देवेषु पलायितेषु समभजन्नित्यर्थः । अधुना पुरो दधिरे इति संबंधः ॥

अध द्यौश्चित्ते अप सा नु वज्राद्द्वितानमद्भियसा स्वस्य मन्योः ।
अहिं यदिंद्रो अभ्योहसानं नि चिद्विश्वायुः शयथे जघान ॥९॥

अध । द्यौः । चित् । ते । अप । सा । नु । वज्रात् । द्विता । अनमत् । भियसा । स्वस्य । मन्योः ।
अहिं । यत् । इंद्रः । अभि । ओहसानं । नि । चित् । विश्वऽआयुः । शयथे । जघान ॥९॥

सा प्रसिद्धा देवानामाश्रयत्वेन दीपिता द्युलोकोऽपि हे इंद्र अधाधुनास्मिन्काले द्विता द्विधा द्विप्रकारात्ते त्वदीयाद्वज्रात्स्वस्यात्मीयान्मन्योः क्रोधाच्च भियसा भयेनापानमत् । अपननाम । नु इति पूरणः । विश्वायुर्वृद्धान्न इंद्रो यद्यदाभ्योहसानमभिगच्छंतमहिं वृत्रं शयथे शयननिमित्तं । मरणायेत्यर्थः । नि जघान न्यवधीत् । चिदिति पूरणः । यदा वृत्रं जघानास्मिन्काले द्यौर्ननामेति संबंधः ॥

अध त्वष्टा ते मह उग्र वज्रं सहस्रभृष्टिं ववृतच्छताश्रिं ।
निकाममरमणसं येन नवंतमहिं सं पिणगृजीषिन् ॥१०॥

अध । त्वष्टा । ते । महः । उग्र । वज्रं । सहस्रऽभृष्टिं । ववृतत् । शतऽअश्रिं ।
निऽकामं । अरऽमनसं । येन । नवंतं । अहिं । सं । पिणक् । ऋजीषिन् ॥१०॥

अथाधुना हे उग्रोद्गूर्णबलेंद्र मह्नो महतस्ते तव त्वष्टा देवशिल्पी वज्रं ववृतत। न्यवर्तयत। निष्पन्नं कृतवान। कीदृशं। सहस्रभृष्टिं सहस्रधारं शताश्रिं शतपर्वाणं। हे ऋजीषिन् गतरससोमवन्निंद्र त्वं येन वज्रेण निकामं। नियतः कामो यस्य तं। अरमणसं। शत्रूणामरममभिगतं मनो यस्य तं। नवंतं शब्दायमानमहिं वृत्रमसुरं सं पिणक् संपिष्टवानसि तं वज्रं कृतवानित्यर्थः॥ ॥२॥

वर्धान्यं विश्वे मरुतः सजोषाः पचच्छतं महिषाँ इंद्र तुभ्यं।
पूषा विष्णुस्त्रीणि सरांसि धावन्वृत्रहणं मदिरमंशुमस्मै ॥११॥

वर्धान्। यं। विश्वे। मरुतः। सऽजोषाः। पचत्। शतं। महिषान्। इंद्र। तुभ्यं।
पूषा। विष्णुः। त्रीणि। सरांसि। धावन्। वृत्रऽहनं। मदिरं। अंशुं। अस्मै ॥११॥

सजोषाः सह प्रीयमाणा विश्वे मरुतः सर्वे देवा हे इंद्र यं त्वां वर्धान् स्तोत्रैर्वर्धयंति हे इंद्र तस्मै तुभ्यं पूषेतन्नामको देवो विष्णुरेतन्नामकश्च शतं शतसंख्याकान्महिषान् पुंपशून् पचत। पचेत। अपि चास्मै तुभ्यं सरांसि द्रोणकलशपूतभृदाधवनीयाख्यानि त्रीणि पात्राण्यंशुं सोमं धावन्। अगच्छन्। सोमैः पात्राणि पूर्यंत इत्यर्थः। कीदृशं सोमं। मदिरं मदकरं वृत्रहणं वृत्राणां शत्रूणां हंतारं। अत्र वृत्रहन्शब्देन सोमोऽभिधीयते। पीते हि सति सोमे वृत्राणि हंतुमिंद्रः समर्थो भवतीति यावत्॥

आ क्षोदो महि वृतं नदीनां परिष्ठितमसृज ऊर्मिमपां।
तासामनु प्रवत इंद्र पंथां प्रार्दयो नीचीरपसः समुद्रं ॥१२॥

आ। क्षोदः। महि। वृतं। नदीनां। परिऽस्थितं। असृजः। ऊर्मिं। अपां।
तासां। अनु। प्रऽवतः। इंद्र। पंथां। प्र। आर्दयः। नीचीः। अपसः। समुद्रं ॥१२॥

हे इंद्र त्वं महि महद्वृतं वृत्रेण परिवृतमाच्छादितं परिष्ठितं परितः स्थितं नदीनां सिंधूनां संबंधि क्षोद उदकमासृजः। आ समंतात्सृष्टवानसि। येन नद्यः पूर्णाः प्रवहेयुस्तादित्यर्थः। अपामुदकानामूर्मिं समूहं सृष्टवानसि। पुनर्वचनमादरार्थं। हे इंद्र तासां नदीनां संबंधिनः पंथां पथो मार्गान् प्रवतः प्रवणानन्वकार्षीरिति शेषः। अन्वित्युपसर्गयोग्यक्रियाध्याहारः। किंच नीचीः प्रवणाभिमुखीः। वेगयुक्ता इत्यर्थः। अपसोऽप उदकानि। अपस इत्यप एवार्थे वर्तते। समुद्रमुदधिं प्रार्दयः। प्रागमयः। अत्रार्दयतिर्नयनकर्मा॥

एवा ता विश्वा चकृवांसमिंद्रं महामुग्रमजुर्यं सहोदां।
सुवीरं त्वा स्वायुधं सुवज्रमा ब्रह्म नव्यमवसे ववृत्यात् ॥१३॥

एव। ता। विश्वा। चकृऽवांसं। इंद्रं। महां। उग्रं। अजुर्यं। सहःऽदां।
सुऽवीरं। त्वा। सुऽआयुधं। सुऽवज्रं। आ। ब्रह्म। नव्यं। अवसे। ववृत्यात् ॥१३॥

हे इंद्र त्वा त्वां नव्यं नूतनमन्यैरकृतपूर्वं ब्रह्मास्माभिः कृतं स्तोत्रमवसेऽस्माकं रक्षणाय ववृत्यात्। आवर्तयतु। कीदृशं त्वां। एवैवमुक्तप्रकारेण ता तानि प्रसिद्धानि विश्वा विश्वानि सर्वाणि कर्माणि चकृवांसं कृतवंतमिंद्रमीश्वरं महां महांतमुग्रमोजस्विनमजुर्यमजरं सहोदां सहसो बलस्य दातारं सुवीरं शोभना वीरा मरुतो यस्य तं स्वायुधं शोभनायुधं सुवज्रं शोभनवज्रोपेतं॥

स नो वाजाय श्रवस इषे च राये धेहि द्युमत इंद्र विप्रान्।
भरद्वाजे नृवत इंद्र सूरीन्दिवि च स्मैधि पार्ये न इंद्र ॥१४॥

सः । नः । वाजाय । श्रवसे । इषे । च । राये । धेहि । द्युऽमतः । इंद्र । विप्रान् ।
भरत्ऽवाजे । नृऽवतः । इंद्र । सूरीन् । दिवि । च । स्म । एधि । पार्ये । नः । इंद्र ॥१४॥

हे इंद्र स त्वं द्युमतो दीप्तिमतो विप्रान्मेधाविनो नोऽस्मान्वाजाय बलाय श्रवसे यशसे इषे चान्नाय च राये धनाय धेहि । धारय । अपि च हे इंद्र भरद्वाजे मयि नृवतो मनुष्यवतः । परिचारकयुक्तानित्यर्थः । सूरीन् तव स्तोतॄन् पुत्रपौत्रान् कुर्विति शेषः । हे इंद्र त्वं पार्ये पारणीये आगामिनि च दिवि दिवसे एधि स्म नः । अस्माकं रक्षिता खलु भवेत्यर्थः ॥

षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिशस्त्रेऽनुरूपतृचस्याया वाजमिति तृतीया । सूत्रितं च । अया वाजं देवहितं सनेमेति स्तोत्रियानुरूपौ । आ० ८ ३ । इति ॥

अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥१५॥
अया । वाजं । देवऽहितं । सनेम । मदेम । शतऽहिमाः । सुऽवीराः ॥१५॥

अयानया स्तुत्या देवहितं देवेन द्योतमानेनेंद्रेण दत्तं वाजमन्नं सनेम । वयं संभजेम । अपि च सुवीराः शोभनपुत्रोपेता वयं शतहिमाः शतं संवत्सरान् मदेम । तृप्याम ॥ ॥३॥

तमु ष्टुहीति पंचदशर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं । तथा चानुक्रम्यते । तमु ष्टुहीति ॥ अभिजिति निष्केवल्य एतन्निविद्धानं । सूत्रितं च । तमु ष्टुहीति मध्यंदिन । आ० ८ ५ । इति ॥ इंद्राग्न्योः कुलायनाम्न्येकाहेऽपि निष्केवल्य एतन्निविद्धानं । सूत्रितं च । तिष्ठा हरी तमु ष्टुहीति मध्यंदिनः । आ० ९ ७ । इति ॥ महाव्रतेऽपि निष्केवल्ये । तथैव पंचमारण्यके सूत्रितं । तमु ष्टुहि यो अभिभूत्योजाः सुत इत्थ निमिश्ल इंद्र सोम इति त्रीणि । ऐ० आ० ५ २.२ । इति ॥

तमु ष्टुहि यो अभिभूत्योजा वन्वन्नवातः पुरुहूत इंद्रः ।
अषाळ्हमुग्रं सहमानमाभिर्गीर्भिर्वर्ध वृषभं चर्षणीनां ॥१॥
तं । ऊं इति । स्तुहि । यः । अभिभूतिऽओजाः । वन्वन् । अवातः । पुरुऽहूतः । इंद्रः ।
अषाळ्हं । उग्रं । सहमानं । आभिः । गीःऽभिः । वर्ध । वृषभं । चर्षणीनां ॥१॥

अभिभूत्योजा अभिभावुकतेजा वन्वन् शत्रून्हिंसन् अवातः शत्रुभिरहिंसितः ॥ वनोतेर्निष्ठातस्य नञ्पूर्वस्य रूपं । यद्वा वातेर्वातं ॥ अनभिगतः पुरुहूतो बहुभिराहूतो य इंद्रोऽस्तीति शेषः । हे भरद्वाज तमु ष्टुहि । तमेवेंद्रं स्तुहि । अपि चाभिर्वक्ष्यमाणाभिर्गीर्भिः स्तुतिरूपाभिर्वाग्भिस्तमिंद्रं वर्ध । वर्धय । कीदृशं । अषाळ्हमनभिभूतमुग्रमुद्गूर्णमोजस्विनं वा सहमानं शत्रूनभिभवंतं चर्षणीनां प्रजानां सर्वासां वृषभं वर्षितारं ॥

स युध्मः सत्वा खजकृत्समद्वा तुविम्रक्षो नदनुमाँ ऋजीषी ।
बृहद्रेणुश्च्यवनो मानुषीणामेकः कृष्टीनामभवत्सहावा ॥२॥
सः । युध्मः । सत्वा । खजऽकृत् । समत्ऽवा । तुविऽम्रक्षः । नदनुऽमान् । ऋजीषी ।
बृहत्ऽरेणुः । च्यवनः । मानुषीणां । एकः । कृष्टीनां । अभवत् । सहऽवा ॥२॥

बृहद्रेणुर्बृहतो महतो रेणोः पांसोरुत्थापकः । संग्रामेष्विति यावत् । एको मुख्यः सहावा बलवान् स इंद्रो मानुषीणां मनोः संबंधिनीनां कृष्टीनां प्रजानां यजमानानां च्यवनोऽभिगंताभवत् । आसीत् । कीदृशः । युध्मो योद्धा सत्वा दाता ॥ सनोतेरिदं रूपं ॥ खजकृत् खजानां संग्रामाणां कर्ता ॥ खज इति संग्रामनामैतत् ॥

समद्वा । यजमानैः सह मदः समत तद्वान । तुविम्रक्षः ॥ मृक्षतिः संम्लेहनकर्मा ॥ तुवीनां बहूनां वर्षणेन संम्लेहनकर्ता नदनुमान शब्दवानृजीषी । ऋजीषशब्देन सवनद्वयाभिषुतः पुनस्तृतीयसवनेऽप्यभिषुतः सोम उच्यते । तद्वान ॥

त्वं ह नु त्यददमायो दस्यूँरेकः कृष्टीरवनोरार्याय ।
अस्ति स्विन्नु वीर्यं१ तत्त इंद्र न स्विदस्ति तदृतुथा वि वोचः ॥३॥
त्वं । ह । नु । त्यत । अदमय । दस्यून । एकः । कृष्टीः । अवनोः । आर्याय ।
अस्ति । स्वित । नु । वीर्यं । तत । ते । इंद्र । न । स्वित । अस्ति । तत । ऋतुऽथा ।
वि । वोचः ॥३॥

हे इंद्र त्यत्स स त्वं । त्यदिति तच्छब्दपर्यायः । अत्र लिंगव्यत्ययः । दस्यून कर्महीनान जनान नु क्षिप्रम-दमयः । दातानकरोः । हशब्दः पूरणार्थः । अपि चैको मुख्यस्त्वं कृष्टीः पुत्रदासादीनार्याय कर्मकृते जनायाा-वनोः । अददाः । एवं स्तुवन्नप्यृषिरिंद्रं यदा नाद्राक्षीत्तदा तस्य वीर्यसद्भावे विचिकित्समानः परार्धर्चमाह । हे इंद्र ते तव यत्पूर्वमुक्तं तद्वीर्यं सामर्थ्यं स्विन्त्वस्ति । किंस्विद्भवति । स्विच्चिति विचिकित्सायां । यद्वा नास्ति स्वित । तद्बलमृतुथा काले काले वि वोचः । विशेषेण ब्रूहि ॥

सदिद्धि ते तुविजातस्य मन्ये सहः सहिष्ठ तुरतस्तुरस्य ।
उग्रमुग्रस्य तवसस्तवीयोऽरध्रस्य रध्रतुरो बभूव ॥४॥
सत । इत । हि । ते । तुविऽजातस्य । मन्ये । सहः । सहिष्ठ । तुरतः । तुरस्य ।
उग्रं । उग्रस्य । तवसः । तवीयः । अरध्रस्य । रध्रऽतुरः । बभूव ॥४॥

पूर्वमंत्र इंद्रस्य बलसदसद्भावं संदिह्यानया बलमस्त्येवेत्यवधारयन्नाह । हि यस्मादर्थे । हि यस्मात्कार-णात हे सहिष्ठ बलवत्तमेंद्र तुविजातस्य बहुयज्ञेषु प्रादुर्भूतस्य तुरतोऽस्मान हिंसतस्तुरस्य शत्रूणां हिंसितुर्ब-लवता वा ते तव सहो बलं सदिद्विद्यमानमेवाहं मन्ये । उग्रस्योजस्विनस्तवसः प्रवृद्धस्यारध्रस्य शत्रुभिर्वशीकर्तु-मशक्यस्य ॥ रध्रिर्वशीकरणार्थस्य रूपं ॥ रध्रतुरो वशीकरणीयानां सपत्नानां हिंसकस्य तव बलं बभूव । भवत्येव । कीदृश । उग्रमुद्गूर्णं तवीयः प्रवृद्धतरं । यतस्त्वं वृत्रादीन शत्रून हंस्यतस्ते बलं विद्यत एवेत्यर्थः ॥

तन्नः प्रत्नं सख्यमस्तु युष्मे इत्था वदद्भिर्वलमंगिरोभिः ।
हन्नच्युतच्युद्दस्मेषयंतमृणोः पुरो वि दुरो अस्य विश्वाः ॥५॥
तत । नः । प्रत्नं । सख्यं । अस्तु । युष्मे इति । इत्था । वदतऽभिः । वलं । अंगिरःऽभिः ।
हन । अच्युतऽच्युत । दस्म । इषयंतं । ऋणोः । पुरः । वि । दुरः । अस्य । विश्वाः ॥५॥

प्रत्नं पुराणं । चिरकालानुवर्तीत्यर्थः । तत्प्रसिद्धं नोऽस्मदीयं सख्यं स्तुत्यस्तोतृलक्षणं सखित्वं हे इंद्र युष्मे युष्मास्वस्तु । पूजार्थं बहुवचनं । हे अच्युतच्युदच्युतानामविचलितानां च्यावक हे दस्म दर्शनीयेंद्र त्वमिषयंत मायुधानि प्रेरयंतं वलमेतन्नामानमसुरमित्था सत्यमेव वदद्भिस्त्वां स्तुवद्भिरंगिरोभिः सह हन । हतवानसि । अपि चास्य वलस्य पुरो नगराणि व्यृणोः । व्यगमयः । वियुक्तान्यकार्षीरित्यर्थः । विश्वाः सर्वा दुरः पुरीणां द्वारश्च व्यृणोः ॥ ॥४॥

स हि धीभिर्हव्यो अस्त्युग्र ईशानकृन्महति वृत्रतूर्ये।
स तोकसाता तनये स वज्री वितंतसाय्यो अभवत्समत्सु ॥ ६॥
सः। हि। धीभिः। हव्यः। अस्ति। उग्रः। ईशानऽकृत्। महति। वृत्रऽतूर्ये।
सः। तोकऽसाता। तनये। सः। वज्री। वितंतसाय्यः। अभवत्। समत्ऽसु ॥ ६॥

उग्र ओजस्वीशानकृत्। स्तोतॄनीशानान् समर्थान्करोतीतीशानकृत्। स इंद्रो महति प्रभूते वृत्रतूर्ये संग्रामे। वृत्रतूर्य इति संग्रामनामैतत्। धीभिः स्तोतृभिः स्तुतिभिर्वा हव्यो जयार्थिभिराह्वातव्योऽस्ति। भवति। हिशब्दः पादपूरणः। तोकसाता तोकस्य पुत्रस्य सातौ लाभे निमित्ते तनये तत्पुत्रे निमित्ते सति स इंद्र आह्वातव्योऽस्ति। वज्री वज्रवान् स इंद्रः समत्सु संग्रामेषु वितंतसाय्यो विशेषेण विस्तार्यः सर्वैर्वंदनीयोऽभवत्। भवति। यद्वा। वितंतसाय्यः शत्रूणां हिंसकः॥ ततस इति धातुर्हिंसाकर्मा। तस्य कर्तरि रूपं॥

स मज्मना जनिम मानुषाणाममर्त्येन नाम्नाति प्र सर्स्रे।
स द्युम्नेन स शवसोत राया स वीर्येण नृतमः समोकाः ॥ ७॥
सः। मज्मना। जनिम। मानुषाणां। अमर्त्येन। नाम्ना। अति। प्र। सर्स्रे।
सः। द्युम्नेन। सः। शवसा। उत। राया। सः। वीर्येण। नृऽतमः। संऽओकाः ॥ ७॥

स इंद्रोऽमर्त्येन विनाशरहितेन नाम्ना शत्रूणां नमयित्रा मज्मना बलेन। मज्मनेति बलनामैतत्। मानुषाणां मनुष्याणां जनिम जन्म। संघमित्यर्थः। अति प्र सर्स्रे। अतिप्रपेदे। स इंद्रो द्युम्नेन यशसा समोकाः समानस्थानो भवति। किंच स इंद्रः शवसा बलेन समोका भवति। उतापि च नृतमो नेतृतमः स इंद्रो राया धनेन वीर्येण सामर्थ्येन च समोका भवति॥

स यो न मुहे न मिथू जनो भूत्सुमंतुनामा चुमुरिं धुनिं च।
वृणक्पिप्रुं शंबरं शुष्णमिंद्रः पुरां च्यौत्नाय शयथाय नू चित् ॥ ८॥
सः। यः। न। मुहे। न। मिथु। जनः। भूत्। सुमंतुऽनामा। चुमुरिं। धुनिं। च।
वृणक्। पिप्रुं। शंबरं। शुष्णं। इंद्रः। पुरां। च्यौत्नाय। शयथाय। नु। चित् ॥ ८॥

य इंद्रो न मुहे संग्रामे कदापि न मुह्यति। यश्च मिथु मिथ्या वृथा जनो जनयिता न भूत् न भवति किंतु सुमंतुनामा प्रज्ञाननामा। प्रख्याननामेत्यर्थः। स इंद्रः पुरां शत्रुसंबंधिनीनां पुरीणां च्यौत्नाय च्यावनाय नाशनाय शयथाय शत्रूणां मरणाय च नू चित् शीघ्रमेव कर्म कुरुत इति शेषः। तथा चुमुरिं धुनिं चैतन्नामकावसुरौ वृणक्। अवृणक्। हिंसितवानसि॥ वृणक्तिर्हिंसाकर्मा॥ अपि च पिप्रुं शंबरं शुष्णमेतन्नामकान्त्रीनसुरान् हिंसितवानसि॥

उदावता त्वक्षसा पन्यसा च वृत्रहत्याय रथमिंद्र तिष्ठ।
धिष्व वज्रं हस्त आ दक्षिणत्राभि प्र मंद पुरुदत्र मायाः ॥ ९॥
उत्ऽअवता। त्वक्षसा। पन्यसा। च। वृत्रऽहत्याय। रथं। इंद्र। तिष्ठ।
धिष्व। वज्रं। हस्ते। आ। दक्षिणऽत्रा। अभि। प्र। मंद। पुरुऽदत्र। मायाः ॥ ९॥

हे इंद्र उदवतोद्गच्छता॥ अवतिरत्र गतिकर्मा॥ त्वक्षसा शत्रूणां तनूकर्त्रा पन्यसा स्तुत्यतरेण बलेन

युक्तस्त्वं वृत्रहत्याय शत्रुहननाय स्वकीयं रथं च तिष्ठ। आरोह। तथा दक्षिणवा दक्षिणे हस्ते पाणौ वज्रं स्वकीयमायुधमा धिष्व। आधत्स्व। तदनंतरं हे पुरुदत्र बहुधनेंद्र त्वमासुरीर्माया अभ्यभिगम्य प्र मंद। प्रकर्षेण जहि। अत्र मंदतिर्वधकर्मा ॥

अग्निर्न शुष्कं वनमिंद्र हेती रक्षो नि धक्ष्यशनिर्न भीमा।
गंभीरय ऋष्वया यो रुरोजाध्वानयद्दुरिता दंभयच्च ॥१०॥
अग्निः। न। शुष्कं। वनं। इंद्र। हेतिः। रक्षः। नि। धक्षि। अशनिः। न। भीमा।
गंभीरया। ऋष्वया। यः। रुरोज। अध्वनयत्। दुःऽइता। दंभयत्। च ॥१०॥

अग्निर्नाग्निरिव। नशब्द उपमार्थीयः। यथाग्निः शुष्कं नीरसं वनं वृक्षसमूहं दहति हे इंद्र हेतिस्त्वदीयं वज्रं तद्वच्छत्रून्नाशयति। तदेवाह। अशनिर्न भीमा। यथाशनिर्भीमा भवति तद्वद्भयंकरस्त्वं रक्षो राक्षसं नि धक्षि। वज्रेण नितरां दह। य इंद्रो गंभीरया शत्रुभिरधर्षणीयया ऋष्वया महत्या ॥ ऋष्व इति महन्नामैतत् ॥ हेत्या रुरोज शत्रून्बभंज। अध्वनयत् युद्धे गर्जनलक्षणं शब्दं करोति। तथा च दुरिता दुरितानि दंभयच्च भिनत्ति च। स त्वं रक्षो नि धक्षीति पूर्वेणान्वयः ॥ ॥५॥

आ सहस्रं पथिभिरिंद्र राया तुविद्युम्न तुविवाजेभिरर्वाक्।
याहि सूनो सहसो यस्य नू चिददेव ईशे पुरुहूत योतोः ॥११॥
आ। सहस्रं। पथिऽभिः। इंद्र। राया। तुविऽद्युम्न। तुविऽवाजेभिः। अर्वाक्।
याहि। सूनो इति। सहसः। यस्य। नु। चित्। अदेवः। ईशे। पुरुऽहूत। योतोः ॥११॥

हे तुविद्युम्न बहुधन हे सहसः सूनो बलस्य पुत्रेंद्र। ओजसो जातमुत मन्य एनं। ऋग्वे० १०. ७३. १०। इति निगमांतरे बलपुत्रत्वं सिद्धं। राया धनेन युक्तस्त्वं सहस्रं सहस्रेण। बहुभिरित्यर्थः। तुविवाजेभिर्बहुबलैः पथिभिः। पतंति गच्छंत्यमीभिरिति पथानो वाहाः। तैरर्वाक् मदभिमुखः सन् आ याहि। आगच्छ। हे पुरुहूत बहुभिराहूतेंद्र यस्य तव योतोर्बलादिभिः पृथक्कर्तुमदेवः कश्चिदसुरो नू चिदीशे नेष्टे। अत्र नू चिदिति निषेधार्थे वर्तते ॥

प्र तुविद्युम्नस्य स्थविरस्य घृष्वेर्दिवो ररप्शे महिमा पृथिव्याः।
नास्य शत्रुर्न प्रतिमानमस्ति न प्रतिष्ठिः पुरुमायस्य सह्योः ॥१२॥
प्र। तुविऽद्युम्नस्य। स्थविरस्य। घृष्वेः। दिवः। ररप्शे। महिमा। पृथिव्याः।
न। अस्य। शत्रुः। न। प्रतिऽमानं। अस्ति। न। प्रतिऽस्थिः। पुरुऽमायस्य। सह्योः ॥१२॥

तुविद्युम्नस्य बहुयशसो बहुधनस्य वा स्थविरस्य प्रवृद्धस्य घृष्वेः शत्रूणां घर्षकस्येंद्रस्य महिमा महत्त्वं दिवो द्युलोकात्पृथिव्या भूमेश्च प्र ररप्शे। प्ररिरिचे। विरप्शीति महन्नामसु पाठात् नाम्ना च प्रायेण धातुजन्यत्वात् रप्शतिरत्रातिशयवाची। पुरुमायस्य बहुप्रज्ञस्य सह्योः शत्रूणामभिभवितुरस्येंद्रस्य शत्रुः शातयिता नास्ति। प्रतिमानं प्रतिनिधिर्नास्ति। अस्य प्रतिष्ठिः प्रतिष्ठाश्रयो नास्ति। स एव सर्वस्य प्रतिष्ठेत्यर्थः ॥

प्र तत्ते अद्या करणं कृतं भूत्कुत्सं यदायुमतिथिग्वमस्मै।
पुरू सहस्रा नि शिशा अभि क्षामुत्तूर्वयाणं धृषता निनेथ ॥१३॥

प्र। तत्। ते। अद्य। करणं। कृतं। भूत्। कुत्सं। यत्। आयुं। अतिथिऽग्वं। अस्मै।
पुरु। सहस्रा। नि। शिशाः। अभि। क्षां। उत्। तूर्वयाणं। धृषता। निनेथं ॥१३॥

अद्येदानीमपि हे इंद्र ते त्वया कृतं करणं तत्कर्म प्र भूत। प्रभवति। प्रकाशते। किं तदित्युच्यते। कुत्सं शुष्णाद्राक्षसादेतन्नामानमृषिं चायुं शत्रुभ्यः सकाशादेतत्संज्ञकं पौरुरवसमतिथिग्वमतिथीनामभिगंतारं दिवोदासं च शंबराद्दरक्षिथेति यत्करणं तत्प्रभवतीति पूर्वेण संबंधः। ररक्षिथेति द्वितीयाश्रुतेरौचितक्रियाध्याहारः। अपि चास्मा अनंतरोक्तायातिथिग्वाय पुरु पुरूणि बहूनि सहस्रा सहस्राणि शंबरस्य धनानि नि शिशाः। अददाः। इंद्रः शंबरं हत्वा तस्य धनानि दिवोदासाय ददावित्यर्थः। तथा हे इंद्र धृषता धर्षणेन त्वदीयेन वज्रेण शंबरं हत्वा क्षां पृथिवीमभि अभिलक्ष्य पृथिव्या वर्तमानं तूर्वयाणं त्वरितगमनं दिवोदासम् उन्निनेथ। आपद्भ्य उदगमयः॥

अनुक्रीनाम्न्येकाहे मरुत्वतीयशस्त्रेऽनु त्वाहिघ्न इति सूक्तमुखीया। सूत्रितं च। अनु त्वाहिघ्ने अध देव देवा अनु ते दायि मह इंद्रियाय। आ॰ ९ ५। इति॥

अनु त्वाहिघ्ने अध देव देवा मदन्विश्वे कवितमं कवीनां।
करो यत्र वरिवो बाधिताय दिवे जनाय तन्वे गृणानः ॥१४॥
अनु। त्वा। अहिऽघ्ने। अध। देव। देवाः। मदन्। विश्वे। कविऽतमं। कवीनां।
करः। यत्र। वरिवः। बाधिताय। दिवे। जनाय। तन्वे। गृणानः ॥१४॥

हे देव द्योतमानेंद्र त्वा त्वामधास्मिन्काले विश्वे सर्वे देवाः स्तोतारोऽहिघ्ने मेघहननाय। वृष्टिप्रदानायेत्यर्थः। अनु मदन्। अनुमदंति। अनुस्तुवंति। कीदृशं त्वा। कवीनां मेधाविनां मध्ये कवितममतिशयेन कविं। यत्र यस्मिन्काले गृणानः स्तोतृभिः स्तूयमानस्त्वं बाधिताय दारिद्र्यादिभिः पीडिताय दिवे स्तोत्रे जनाय तन्वे स्तोतॄणां तनयाय च वरिवो धनं करः अकरोः अददाः। अथवा हे देवेंद्र अधास्मिन्काले विश्वे सर्वे देवाः सुराः। अहिर्वृत्र एवोच्यते। तस्य हननाय कवीनां कवितमं त्वामनुमदंति। यत्र यस्मिन्स्तोत्रे सति बाधिताय असुरैः पीडिताय दिवे द्युलोकनिवासाय जनाय तन्वे शोभायै वृत्रहननेन तव शोभार्थं वरिवश्चकर्थ॥

अनु द्यावापृथिवी तत्त ओजोऽमर्त्या जिहत इंद्र देवाः।
कृष्वा कृत्नो अकृतं यत्ते अस्त्युक्थं नवीयो जनयस्व यज्ञैः ॥१५॥
अनु। द्यावापृथिवी इति। तत्। ते। ओजः। अमर्त्याः। जिहते। इंद्र। देवाः।
कृष्व। कृत्नो इति। अकृतं। यत्। ते। अस्ति। उक्थं। नवीयः। जनयस्व। यज्ञैः ॥१५॥

हे इंद्र ते त्वदीयं तत्प्रसिद्धमोजो बलं द्यावापृथिवी अनु जिहाते। अमर्त्या अमरणधर्माणो देवास्त्वदीयं बलमनु जिहते। अनुगच्छंति। हे क्रतो बहूनां कर्मणां कर्तस्त्वं त्वदीयमकृतं यत्कर्मास्ति तत्कृष्व। कुरुष्व। तदनंतरं यज्ञैर्यज्ञेषु नवीयो नवतरमुक्थं स्तोत्रं जनयस्व॥ ॥६॥

महाँ इंद्र इति त्रयोदशर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं। अनुक्रांतं च। महांस्त्रयोनेति॥ माध्यंदिने सवने सोमातिरेके शस्त्रं भवति। तत्रेदं सूक्तं। सूत्रितं च। महाँ इंद्रो नृवदिच्यर्षणिप्रा क। आ॰ ६ ७। इति॥ समूळ्हे द्वितीये छंदोमे मरुत्वतीयशस्त्र एतत्सूक्तं। सूत्रितं च। महाँ इंद्रो नृवदिति मरुत्वतीयं। आ॰ ८.७.। इति॥

महाँ इंद्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥१॥
महान् । इंद्रः । नृऽवत् । आ । चर्षणिऽप्राः । उत । द्विऽबर्हाः । अमिनः । सहःऽभिः ।
अस्मद्र्यक् । ववृधे । वीर्याय । उरुः । पृथुः । सुऽकृतः । कर्तृऽभिः । भूत् ॥१॥

नृवत् यथा नेता राजा भृत्यादीनां कामानां पूरयिता तद्वत् चर्षणिप्राश्चर्षणीनां स्तोतृजनानां कामानां पूरको महान्प्रभूत इंद्र आ गच्छतु । आ इत्युपसर्गदर्शनाद्गच्छत्वित्याख्यातस्याध्याहारः । उतापि च द्विबर्हा द्वयोर्लोकयोः परिवृढः सहोभिः शत्रुबलैरमिनोऽहिंसनीय इंद्रोऽस्मद्र्यगस्मदभिमुखं यथा भवति तथा वीर्याय वीरकर्मकरणाय ववृधे । वर्धते । उरुः शरीरेण विस्तीर्णः पृथुर्गुणैः प्रथितः कर्तृभिर्यजमानैः सुकृतो भूत् । सुष्ठु परिचरितो भवति ॥

इंद्रमेव धिषणा सातये धाद्बृहंतमृष्वमजरं युवानं ।
अषाळ्हेन शवसा शूशुवांसं सद्यश्चिद्यो वावृधे असामि ॥२॥
इंद्रं । एव । धिषणा । सातये । धात् । बृहंतं । ऋष्वं । अजरं । युवानं ।
अषाळ्हेन । शवसा । शूशुऽवांसं । सद्यः । चित् । यः । ववृधे । असामि ॥२॥

धिषणास्मदीया स्तुतिः सातये दानायेंद्रमेव धात् । धारयति । कीदृशं । बृहंतं महांतमृष्वं गंतारमजरं जरारहितं युवानं नित्यतरुणमषाळ्हेन शत्रुभिरनभिभूतेन शवसा बलेन शूशुवांसं प्रवृद्धं ॥ श्वयतेरिदं रूपं ॥ य इंद्रः सद्यश्चित्सद्य एव जातमात्रः सन् असाम्यनल्पमधिकं यथा भवति तथा ववृधे वर्धते ॥

पृथू करस्ना बहुला गभस्ती अस्मद्र्य१क्सं मिमीहि श्रवांसि ।
यूथेव पश्वः पशुपा दमूना अस्माँ इंद्राभ्या ववृत्स्वाजौ ॥३॥
पृथू इति । करस्ना । बहुला । गभस्ती इति । अस्मद्र्यक् । सं । मिमीहि । श्रवांसि ।
यूथाऽइव । पश्वः । पशुऽपाः । दमूनाः । अस्मान् । इंद्र । अभि । आ । ववृत्स्व । आजौ ॥३॥

हे इंद्र त्वं पृथू विस्तीर्णौ करस्ना कर्मणां कर्तारौ बहुला बहुप्रदौ गभस्ती त्वदीयौ बाहू श्रवांस्यन्नानि । दातुमिति शेषः । अस्मद्र्यगस्मदभिमुखं सं मिमीहि । कुरु । किंच हे इंद्र दमूना दांतमनास्त्वमाजौ संग्रामेऽस्मानभ्या ववृत्स्व । अभ्यावर्तस्व । तत्र दृष्टांतः । पशुपाः पशूनां पालकः पश्वः पशूनां यूथेव यूथानि यथावर्तयति तद्वत् ॥

तं व इंद्रं चतिनमस्य शाकैरिह नूनं वाजयंतो हुवेम ।
यथा चित्पूर्वे जरितार आसुरनेद्या अनवद्या अरिष्टाः ॥४॥
तं । वः । इंद्रं । चतिनं । अस्य । शाकैः । इह । नूनं । वाजऽयंतः । हुवेम ।
यथा । चित् । पूर्वे । जरितारः । आसुः । अनेद्याः । अनवद्याः । अरिष्टाः ॥४॥

नूनमद्येहास्मिन्यज्ञे वाजयंतोऽन्नमिच्छतो वयं स्तोतारः शाकैः शक्तैः समर्थैरस्य तव सहायैर्मरुद्भिः सहितं चतिनं शत्रूणां चातकं । नाशकमित्यर्थः । इंद्रं परमेश्वरं तं वः प्रसिद्धं त्वां हुवेम । स्तुमः । यथा चिद्यथैव पूर्वे पुरातना जरितारः स्तोतारोऽनेद्या अनिंद्या अनवद्याः पापरहिता अरिष्टा अहिंसिताश्चासुः बभूवुः हे इंद्र त्वत्प्रसादाद्वयमपि तथैव भवेमेत्यर्थः ॥

धृतव्रतो धनदाः सोमवृद्धः स हि वामस्य वसुनः पुरुक्षुः ।
सं जग्मिरे पथ्या३ रायो अस्मिन्त्समुद्रे न सिंधवो यादमानाः ॥५॥
धृतऽव्रतः । धनऽदाः । सोमऽवृद्धः । सः । हि । वामस्य । वसुनः । पुरुऽक्षुः ।
सं । जग्मिरे । पथ्याः । रायः । अस्मिन् । समुद्रे । न । सिंधवः । यादमानाः ॥५॥

स हि स खल्विंद्रो धृतव्रतो धृतकर्मा । धनदाः स एव धनप्रदः । कीदृशस्य धनस्येत्याकांक्षायामुपसर्जनीभूतस्यापि धनस्य विशेषणं वामस्य वसुन इति । वामस्य वननीयस्य वसुनः श्रेष्ठस्य । यद्वा । वसुनो धनस्य स्वामीति शेषः । सोमवृद्धः स एव सोमेन प्रवृद्धः । पुरुक्षुर्बह्वन्नः स एव । अस्मिन्निंद्र एव पथ्याः स्तोतृणां हितानि रायो धनानि सं जग्मिरे । संगच्छंते । तत्र दृष्टांतः । सिंधवो नद्यः समुद्रे न यथा समुद्रं यादमाना अभिगच्छंत्यस्तद्वत् ॥ ॥ ७ ॥

शविष्ठं न आ भर शूर शव ओजिष्ठमोजो अभिभूत उग्रं ।
विश्वा द्युम्ना वृष्ण्या मानुषाणामस्मभ्यं दा हरिवो मादयध्यै ॥६॥
शविष्ठं । नः । आ । भर । शूर । शवः । ओजिष्ठं । ओजः । अभिऽभूते । उग्रं ।
विश्वा । द्युम्ना । वृष्ण्या । मानुषाणां । अस्मभ्यं । दाः । हरिऽवः । मादयध्यै ॥६॥

हे शूर विक्रांतेंद्र शविष्ठं बलवत्तमं शवो बलं नोऽस्मभ्यमा भर । आहर । हे अभिभूते शत्रूणामभिभावुकेंद्र उग्रमप्रसह्यमोजिष्ठमोजस्वितममोजो दीप्तिमस्मभ्यमा भर । विश्वा विश्वानि सर्वाणि वृष्ण्या वृष्ण्यानि सेचनसमर्थानि द्युम्ना द्युम्नानि द्योतमानानि यानि धनानि मानुषाणां मनुष्याणां भोग्यतया कल्पितानि हे हरिवो हरिवन्निंद्र तानि धनानि मादयध्यै अस्मान्मादयितुमस्मभ्यं दाः । प्रयच्छ ॥

यस्ते मदः पृतनाषाळमृध्र इंद्र तं न आ भर शूशुवांसं ।
येन तोकस्य तनयस्य साता मंसीमहि जिगीवांसस्त्वोताः ॥७॥
यः । ते । मदः । पृतनाषाट् । अमृध्रः । इंद्र । तं । नः । आ । भर । शूशुऽवांसं ।
येन । तोकस्य । तनयस्य । साता । मंसीमहि । जिगीवांसः । त्वाऽऊताः ॥७॥

पृतनाषाट् शत्रुसेनानामभिभविताऽमृध्रोऽहिंसितो यो मदो हर्षो हे इंद्र ते त्वया देयः शूशुवांसं प्रवृद्धं तं मदं नोऽस्मभ्यमा भर । आहर । त्वोतास्त्वया रक्षिता जिगीवांसो जितवंतो वयं तोकस्य पुत्रस्य तनयस्य तत्पुत्रस्य च साता लाभे निमित्तभूते सति येन हर्षेण मंसीमहि त्वा स्तुवीमहि तमा भरेति पूर्वेणान्वयः ॥

आ नो भर वृषणं शुष्ममिंद्र धनस्पृतं शूशुवांसं सुदक्षं ।
येन वंसाम पृतनासु शत्रून्तवोतिभिरुत जामीँरजामीन् ॥८॥
आ । नः । भर । वृषणं । शुष्मं । इंद्र । धनऽस्पृतं । शूशुऽवांसं । सुऽदक्षं ।
येन । वंसाम । पृतनासु । शत्रून् । तव । ऊतिऽभिः । उत । जामीन् । अजामीन् ॥८॥

हे इंद्र त्वं वृषणं वर्षितारं शुष्मं सेनालक्षणं बलं नोऽस्मभ्यमा भर । आहर । कीदृशं । धनस्पृतं धनस्य पालकं शूशुवांसं प्रवृद्धं सुदक्षं शोभनबलं । हे इंद्र तवोतिभिस्त्वदीयाभी रक्षाभिः पृतनासु संग्रामेषु ॥ पृतना

इति संग्रामनाम ॥ येन बलेन शत्रून्वंसाम हनाम । उतेत्यक्र भिन्नक्रमः । जामीन्बंधुनुतापि चाजामीन् शत्रूंश्च येन शुष्मेण वंसाम तं शुष्ममा भरेति पूर्वेण संबंधः ॥

आ ते शुष्मो वृषभ एतु पश्चादोत्तरादधरादा पुरस्तात् ।
आ विश्वतो अभि समेत्वर्वाङिंद्र द्युम्नं स्वर्वद्धेह्यस्मे ॥९॥
आ । ते । शुष्मः । वृषभः । एतु । पश्चात् । आ । उत्तरात् । अधरात् । आ । पुरस्तात् ।
आ । विश्वतः । अभि । सं । एतु । अर्वाङ् । इंद्र । द्युम्नं । स्वःऽवत् । धेहि । अस्मे इति ॥९॥

हे इंद्र वृषभो वर्षिता ते त्वदीयं शुष्मो बलमर्वाङस्मदभिमुखः सन पश्चात्पश्चिमभागादेतु । आगच्छतु । उत्तरादुत्तरभागादागच्छतु । अधरादृक्षिणादेतु । पुरस्तात्पूर्वभागाच्चागच्छतु । विश्वतः सर्वस्मादिग्भागादभि अस्मानभिलच्या समेतु । सम्यगागच्छतु । हे इंद्र त्वं स्वर्वत्सुखयुक्तं द्युम्नं धनमस्मे अस्मभ्यं धेहि । प्रयच्छ ॥

नृवत्त इंद्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः ।
ईक्षे हि वस्व उभयस्य राजन्धा रत्नं महि स्थूरं बृहंतं ॥१०॥
नृऽवत् । ते । इंद्र । नृऽतमाभिः । ऊती । वंसीमहि । वामं । श्रोमतेभिः ।
ईक्षे । हि । वस्वः । उभयस्य । राजन् । धाः । रत्नं । महि । स्थूरं । बृहंतं ॥१०॥

नृवन्मनुष्यैः परिचारकजनैर्युक्तं श्रोमतेभिः श्रोतव्यैर्यशोभिः सहितं वामं वननीयं धनं हे इंद्र ते त्वत्तो नृतमाभिर्नेतृतमाभिरूती ऊतिभी रक्षाभिर्वंसीमहि । वयं संभजेमहि । हि यस्मात्कारणात् हे राजन् राजमानेंद्र त्वमुभयस्य पार्थिवस्य दिव्यस्य च वस्वो धनस्येक्षे ईशिषे तस्मात्कारणान्महि महांतं स्थूरं विपुलं बृहंतं गुणैः परिवृढं रत्नं रमणीयं धनं ॥ अत्र रत्नशब्दः पुंलिंगः ॥ धाः । धेहि ॥

मरुत्वंतं वृषभं वावृधानमकवारिं दिव्यं शासमिंद्रं ।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥११॥
मरुत्वंतं । वृषभं । ववृधानं । अकवऽअरिं । दिव्यं । शासं । इंद्रं ।
विश्वऽसहं । अवसे । नूतनाय । उग्रं । सहःऽदां । इह । तं । हुवेम ॥११॥

इहास्मिन्यज्ञे नूतनायाभिनवायावसे रक्षणाय तं प्रसिद्धमिंद्रं हुवेम । स्तुमः । आह्वयामो वा । कीदृशं । मरुत्वंत मरुद्भिर्युक्तं वृषभ कामाना वर्षितारं ववृधानं प्रवृद्धमकवारिमकुत्सितशत्रुं दिव्यं द्योतमानं शासं शासितारं विश्वसहं विश्वस्य लोकस्याभिभवितारमुग्रमोजस्विनं सहोदां बलप्रदं ॥

जनं वज्रिन्महि चिन्मन्यमानमेभ्यो नृभ्यो रंधया येष्वस्मि ।
अधा हि त्वा पृथिव्यां शूरसातौ हवामहे तनये गोष्वप्सु ॥१२॥
जनं । वज्रिन् । महि । चित् । मन्यमानं । एभ्यः । नृऽभ्यः । रंधय । येषु । अस्मि ।
अध । हि । त्वा । पृथिव्यां । शूरऽसातौ । हवामहे । तनये । गोषु । अपऽसु ॥१२॥

येषु येषां नृणां मध्येऽहमस्मि एको भवामि हे वज्रिन् वज्रवन्निंद्र त्वमेभ्यो नृभ्यो मनुष्येभ्यो महि महदत्यंतमात्मानं मन्यमानं जनं । बहुमन्यमानमित्यर्थः । रंधय । वशीकुरु । चिदिति पादपूरणः । अधाधुना

पृथिव्यां भूम्यां शूरसातौ युद्धे प्रवृत्ते सति तनये पुत्रे निमित्ते च गोषु पशुष्वप्सूदकेषु च निमित्तेषु हे इंद्र त्वा द्युलोके स्थितं त्वा हवामहे। वयमाह्वयामः ॥

वयं त एभिः पुरुहूत सख्यैः शत्रोःशत्रोरुत्तर इत्स्याम।
घ्नंतो वृत्राण्युभयानि शूर राया मदेम बृहता त्वोताः ॥१३॥

वयं। ते। एभिः। पुरुऽहूत। सख्यैः। शत्रोःऽशत्रोः। उत्ऽतरे। इत्। स्याम।
घ्नंतः। वृत्राणि। उभयानि। शूर। राया। मदेम। बृहता। त्वाऽऊताः ॥१३॥

हे पुरुहूत पुरुभिराहूतेंद्र एभिः प्रसिद्धैः सख्यैः स्तोतृलक्षणैः सखिकर्मभिस्ते त्वया सह वयमुभयानि जामिरूपाण्यजामिरूपाणि वृत्राण्यमित्राणि घ्नंतो हिंसंतः शत्रोःशत्रोः सर्वस्माच्छत्रोरुत्तर इत्स्याम। अधिका एव भवेम। हे शूर विक्रांतेंद्र त्वोता वयं त्वया रक्षिताः संतो बृहता महता राया धनेन मदेम। हृष्याम ॥ ॥८॥

द्यौर्न य इंद्रेति त्रयोदशर्चं पंचमं सूक्तं भरद्वाजस्यार्षमैंद्रं त्रैष्टुभं। वि पिप्रोरित्येषा सप्तमी दशाक्षरचतुष्पदयुक्ता विराट्। अनुक्रम्यते च। द्यौर्न वि पिप्रोर्विराडिति ॥ पृष्ठ्यषडहस्य पंचमेऽहनि तृतीयसवन उक्थ्यस्तोत्राणि यदि द्विपदासु स्तुवीरन् यदि वाग्निष्टोमसंस्थः स्यात्तदानीं माध्यंदिने सवनेऽच्छावाकः स्तोत्रशस्त्र आरंभणीयाभ्य ऊर्ध्वमेतत्सूक्तं शंसेत। सूत्रितं च। द्यौर्न य इंद्रेत्यच्छावाकः। आ० ८. ४। इति ॥ इदमेव सूक्तमिंद्राविष्ण्वोरुत्क्रांतिनाम्न्येकाहे निष्केवल्यनिविद्धानं। द्यौर्न य इंद्रेति मध्यंदिनः। आ० ९. ७। इति ॥

द्यौर्न य इंद्राभि भूमार्यस्तस्थौ रयिः शवसा पृत्सु जनान्।
तं नः सहस्रभरमुर्वरासां दद्धि सूनो सहसो वृत्रतुरं ॥१॥

द्यौः। न। यः। इंद्र। अभि। भूम। अर्यः। तस्थौ। रयिः। शवसा। पृत्ऽसु। जनान्।
तं। नः। सहस्रऽभरं। उर्वराऽसां। दद्धि। सूनो इति। सहसः। वृत्रऽतुरं ॥१॥

यो रयिः पुत्ररूपं धनं शवसा बलेन पृत्सु संग्रामेष्वर्योऽरीन् शत्रून् जनानभि तस्थौ आक्रामति। तत्र दृष्टांतः। द्यौर्न। द्योतमानः सूर्यो यथा भूम भूतान्याक्रामति तद्वत्। हे सहसः सूनो बलस्य पुत्रेंद्र त्वं तं पुत्रं नोऽस्मभ्यं दद्धि। देहि। कीदृशं। सहस्रभरं सहस्रस्य धनस्य भर्तारमुर्वरासामुर्वराणां सस्याढ्यानां भूमीनां सनितारं संभक्तारं वृत्रतुरं वृत्राणां शत्रूणां तरितारं तूर्वितारं वा ॥

दिवो न तुभ्यमन्विंद्र सत्रासुर्यं देवेभिर्धायि विश्वं।
अहिं यद्वृत्रमपो वव्रिवांसं हन्नृजीषिन्विष्णुना सचानः ॥२॥

दिवः। न। तुभ्यं। अनु। इंद्र। सत्रा। असुर्यं। देवेभिः। धायि। विश्वं।
अहिं। यत्। वृत्रं। अपः। वव्रिऽवांसं। हन्। ऋजीषिन्। विष्णुना। सचानः ॥२॥

दिवो न सूर्यायेव हे इंद्र तुभ्यं सत्रा सत्यमेव विश्वं व्याप्तमसुर्यमसुरत्वं बलं देवेभिर्देवैः स्तोतृभिरनु धायि। व्यधायि। अकारि। स्तोत्रैः स्तूयमाना देवता बलवती भवतीत्यर्थः। हे ऋजीषिन् विगतरसंसोमेंद्र विष्णुना सचानः संगच्छमानस्त्वं ॥ षच समवाय इति धातो रूपं ॥ यद्यदापामुदकानि वव्रिवांसं परिवृण्वंतमहिमागत्य हंतारं वृत्रमसुरं हन् अवधीः तद्बलं व्यधायीति पूर्वेण संबंधः ॥

तूर्वन्नोजीयान्तवसस्तवीयान्कृतब्रह्मेंद्रो वृद्धमहाः ।
राजाभवन्मधुनः सोम्यस्य विश्वासां यत्पुरां दर्त्नुमावत् ॥३॥

तूर्वन् । ओजीयान् । तवसः । तवीयान् । कृतऽब्रह्मा । इंद्रः । वृद्धऽमहाः ।
राजा । अभवत् । मधुनः । सोम्यस्य । विश्वासां । यत् । पुरां । दर्त्नुं । आवत् ॥३॥

यद्यदिंद्रो विश्वासां सर्वासां पुरां पुरीणां दर्त्नुं दारकं वज्रमावत् प्रापत् तदा सोम्यस्य सोममयस्य मधुनो मधुररसस्य राजाभवत् । स्वाम्यासीत् । कीदृशः । तूर्वन् हिंसकान् हिंसन्नोजीयानतिशयेनौजस्वी तवसो बलवतस्तवीयान्बलवत्तरः कृतब्रह्मा । कृतं ब्रह्म स्तोत्रं यस्मै स्तोतृभिः सः । अथवा कृतं दत्तं ब्रह्मान्नं येन स्तोतृभ्यः सः । वृद्धमहा वृद्धतेजाः । एवंभूत इंद्रो राजाभवदिति ॥

शतैरपद्रन्पणय इंद्रात्र दशोणये कवयेऽर्कसातौ ।
वधैः शुष्णस्याशुषस्य मायाः पित्वो नारिरेचीत्किं चन प्र ॥४॥

शतैः । अपद्रन् । पणयः । इंद्र । अत्र । दशऽओणये । कवये । अर्कऽसातौ ।
वधैः । शुष्णस्य । अशुषस्य । मायाः । पित्वः । न । अरिरेचीत् । किं । चन । प्र ॥४॥

अत्रास्मिन्नर्कसातौ । अर्कोऽन्नं प्राप्यतेऽस्मिन्नित्यर्कसातिर्युद्धं । तस्मिन्दशोणये बहुहविष्कात्कवये मेधाविनः ॥ पंचम्यर्थे चतुर्थी ॥ हे इंद्र त्वत्सहायात्कुत्साद्बिभ्यतः पणय एतन्नामकासुराः शतैः शतसंख्याकैर्बलैः सार्धमपद्रन् । अपाद्रवन् । अपलायंत । अपि चेंद्रोऽशुषस्याशुष्कस्य । संपूर्णबलस्येत्यर्थः । शुष्णस्यैतन्नामकासुरस्य कुत्सस्य शत्रोर्मायाः कपटान्वधैर्हननसाधनैरायुधैर्नं प्रारिरेचीत् । प्ररिक्तानतिरिक्तान्नाकरोत् । पित्वोऽन्नस्य । पितुरित्यन्ननामैतत् । किंचन किंचिदपि न प्रारिरेचीत् । तदीयमन्नं सर्वमप्यपाहारयत् ॥

महो द्रुहो अप विश्वायु धायि वज्रस्य यत्पतने पादि शुष्णः ।
उरु ष सरथं सारथये करिंद्रः कुत्साय सूर्यस्य सातौ ॥५॥

महः । द्रुहः । अप । विश्वऽआयु । धायि । वज्रस्य । यत् । पतने । पादि । शुष्णः ।
उरु । सः । सऽरथं । सारथये । कः । इंद्रः । कुत्साय । सूर्यस्य । सातौ ॥५॥

यद्यदा स शुष्णोऽसुरो वज्रस्य पतने पाते पादि अगच्छत् । अम्रियतेत्यर्थः । तदा महो महतो द्रुहो द्रोग्धुः शुष्णस्य संबंधि विश्वायु सर्वगतं । बलमिति शेषः । अप धायि । अपाहितमकारि । तिरस्कृतमित्यर्थः । स इंद्रः सारथये सारथिभूताय कुत्साय सरथं समानरथं सूर्यस्य सातौ भजने निमित्तभूते उरु विस्तीर्णं यथा भवति तथा कः । अकरोत् । तथा चोक्तं । कुत्सायेंद्रोऽसुरं शुष्णं जिघांसुः कुत्समात्मनः सारथिं कल्पयित्वा । अस्य शत्रुं शुष्णमहंस्ततश्च कुत्सस्य रक्षां बहुलां चकारेत्यनयोच्यत इति ॥ ॥९॥

प्र श्येनो न मदिरमंशुमस्मै शिरो दासस्य नमुचेर्मथायन् ।
प्रावन्नमीं साप्यं ससंतं पृणग्राया समिषा सं स्वस्ति ॥६॥

प्र । श्येनः । न । मदिरं । अंशुं । अस्मै । शिरः । दासस्य । नमुचेः । मथायन् ।
प्र । आवत् । नमीं । साप्यं । ससंतं । पृणक् । राया । सं । इषा । सं । स्वस्ति ॥६॥

श्येनः सुपर्णश्च । नेत्ययं शब्दः समुच्चये वर्तते । अस्मा इंद्राय मदिरं मदकरमंशुं सोमं । प्रेति आ इत्यस्यार्थे

वर्तते । आहरत । उपसर्गदर्शनादाख्यातमध्याह्रियते । किंचायमिंद्रोऽपि दासस्य प्राणिनामुपक्षपयितुर्नमुचेर्तन्नाम्नोऽसुरस्य शिरः शीर्षं मथायन् मंथनं कुर्वन् साप्य सपस्य पुत्रं समंत स्वपंतं नमीमितसाक्कमृषिं प्रावत । प्रारक्षत् । स्वस्त्यविनाशेन राया पश्चादिधनेनेषान्नेन च तमृषिं सं पृणक् । समयोजयत ॥

वि पिप्रोरहिमायस्य दृळ्हाः पुरो वज्रिञ्छवसा न दर्दः ।
सुदामन्तद्रेक्णो अप्रमृष्यमृजिश्वने दात्रं दाशुषे दाः ॥७॥
वि । पिप्रोः । अहिऽमायस्य । दृळ्हाः । पुरः । वज्रिन् । शवसा । न । दर्दरिति दर्दः ।
सुऽदामन् । तत् । रेक्णः । अप्रऽमृष्यं । ऋजिश्वने । दात्रं । दाशुषे । दाः ॥७॥

हे वज्रिन् वज्रवन्निंद्र त्वमहिमायस्याहन्त्री माया यस्य पिप्रोरेतन्नाम्नोऽसुरस्य सबंधिनीर्दृळ्हा दृढानि पुरः प्राकारादीनि दुर्गाणि शवसा बलेन वि दर्दः । विदारितवानसि । नेति पादपूरणः । त्वं पिप्रोर्मृगयः प्रारुजः पुरः । ऋ॰सं॰ १ ५१ ५ । शतं पूर्भिरायसीभिर्नि पाहि । ऋ॰सं॰ ७.३ ७. । इति दर्शनात् । अपि च हे सुदामन् शोभनदानेंद्र त्वं दात्रं हविर्लक्षणं धनं दाशुषे दत्तवते ऋजिश्वने एतन्नामकाय राजर्षयेऽप्रमृष्यं केनाप्यबाध्यं तत्तस्य स्वभूतं रेक्णो धनं दाः । अदाः । दत्तवानसि ॥

स वेतसुं दशमायं दशोणिं तूतुजिमिंद्रः स्वभिष्टिसुम्नः ।
आ तुग्रं शश्वदिभं द्योतनाय मातुर्न सीमुप सृजा इयध्यै ॥८॥
सः । वेतसुं । दशऽमायं । दशऽओणिं । तूतुजिं । इंद्रः । स्वभिष्टिऽसुम्नः ।
आ । तुग्रं । शश्वत् । इभं । द्योतनाय । मातुः । न । सीं । उप । सृज । इयध्यै ॥८॥

स्वभिष्टिसुम्नः सुष्ठुभ्येषणीयान्यभिगम्यानि सुम्नानि सुखानि येन दयानि स इंद्रो दशमायं बहुवचनं वेतसुं वेतसुनामानमसुरं दशोणिमेतन्नामकं च तूतुजिं तूतुजिनामकं च आ अपि च तुग्रं तुग्रनामकमसुरं तथेभमेतन्नामकमसुरं चेयध्या एतुं द्योतनायैतत्संज्ञाय राज्ञे शश्वदुप सृज । उपासृजत । वशीचकार । तत्र दृष्टांतः । मातुर्न मातुर्जनन्या इव पुत्रं । यथा मात्रे पुत्रो वशीभवति तद्वद्वशंचकारेत्यर्थः । सीमिति पादपूरणः ॥

स ईं स्पृधो वनते अप्रतीतो बिभ्रद्वज्रं वृत्रहणं गभस्तौ ।
तिष्ठद्धरी अध्यस्तेव गर्ते वचोयुजा वहत इंद्रमृष्वं ॥९॥
सः । ईं । स्पृधः । वनते । अप्रतिऽइतः । बिभ्रत् । वज्रं । वृत्रऽहनं । गभस्तौ ।
तिष्ठत् । हरी इति । अधि । अस्ताऽइव । गर्ते । वचःऽयुजा । वहतः । इंद्रं । ऋष्वं ॥९॥

गभस्तौ हस्ते वृत्रहणं वृत्राणां शत्रूणां हंतारं वज्रं स्वकीयमायुधं बिभ्रद्धारयन् अप्रतीतः शत्रुभिरप्रतिगतः स इंद्रः स्पृधः स्पर्धमानानीमिमान्वृत्रप्रभृतीन् शत्रून् वनते । हंति । हरी स्वकीयावश्वावधि तिष्ठत् । आरोहति । तत्र दृष्टांतः । अस्तेव गर्ते । यथा क्षेप्ता शूरो रथेऽधितिष्ठति तद्वत् । तथा वचोयुजा वचोमात्रेण युज्यमानौ । यद्वा । स्तोतॄणां स्तुतिभिर्युज्यमानौ तौ हरी च ऋष्वं महांतमिंद्रं वहतः ॥

सनेम तेऽवसा नव्य इंद्र प्र पूरवः स्तवंत एना यज्ञैः ।
सप्त यत्पुरः शर्म शारदीर्दर्द्धन्दासीः पुरुकुत्साय शिक्षन् ॥१०॥
सनेम । ते । अवसा । नव्यः । इंद्र । प्र । पूरवः । स्तवंते । एना । यज्ञैः ।
सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् । हन् । दासीः । पुरुऽकुत्साय । शिक्षन् ॥१०॥

हे इंद्र ते त्वदीयेनावसा रक्षणेन नव्यो नवीयो नवतरं त्वया दीयमानं धनं सनेम । वयं स्तोतारो भजेमहि । पूरवो मनुष्याः स्तोतार एनानेन स्तोत्रेण युक्तैर्यज्ञैः प्र स्तवंत । त्वां स्तुवंति । यद्यस्मात्कारणाद्दासीः कर्मणामुपक्षपयित्रीः शत्रुप्रजा हन घ्नन हिंसन पुरुकुत्सायैतन्नामकाय राज्ञे शिक्षन् धनानि प्रयच्छन हे इंद्र त्वं शारदीः शरन्नाम्नोऽसुरस्य संबंधिनीः सप्त सप्तसंख्याकाः पुरः पुरीः शर्म शर्मणा वज्रेण दर्त् विदारितवानसि तस्मात्कारणात्त्वा स्तोतारः स्तुवंतीत्यर्थः ॥

त्वं वृध इंद्र पूर्व्यो भूर्वरिवस्यन्नुशने काव्याय ।
परा नववास्त्वमनुदेयं महे पित्रे ददाथ स्वं नपातं ॥११॥
त्वं । वृधः । इंद्र । पूर्व्यः । भूः । वरिवस्यन । उशने । काव्याय ।
परा । नवऽवास्त्वं । अनुऽदेयं । महे । पित्रे । ददाथ । स्वं । नपातं ॥११॥

हे इंद्र पूर्व्यः पुरातनस्त्वं काव्याय कविपुत्रायोशन उशनसे भार्गवाय वरिवस्यन धनमिच्छन वृधो भूः । स्तोतॄणां वर्धको भवसि । अनुदेयमनुदानव्यं धनं नववास्त्वमेतन्नामकमसुरं पराहत्य त्वं स्वकीयमौशनसं नपातं पुत्रं शत्रुभिर्गृहीतं पुत्र महे महते पित्रे पालयितव्यायोशनसे परा ददाथ । तस्य शत्रुं हत्वा प्रत्यर्पणं दत्तवानसि ॥

त्वं धुनिरिंद्र धुनिमतीर्ऋणोरपः सीरा न स्रवंतीः ।
प्र यत्समुद्रमति शूर पर्षि पारया तुर्वशं यदुं स्वस्ति ॥१२॥
त्वं । धुनिः । इंद्र । धुनिऽमतीः । ऋणोः । अपः । सीराः । न । स्रवंतीः ।
प्र । यत् । समुद्रं । अति । शूर । पर्षि । पारय । तुर्वशं । यदुं । स्वस्ति ॥१२॥

हे इंद्र धुनिः शत्रूणां कंपयिता त्वं धुनिमतीर्धुनिर्नामासुरो यासु निरोधकतया विद्यते ता अप उदकानि सीरा न नदीरिव स्रवतीः प्रवहतीर्ऋणोः । अगमयः । धुनिं हत्वा तेन निरोधितान्युदकानि प्रवाहयतीत्यर्थः । हे शूर वीरेंद्र यद्यदा समुद्रमति अतिक्रम्य प्र पर्षि प्रतीर्णो भवसि तदा समुद्रपारे तिष्ठंतौ तुर्वशं यदुं च स्वस्ति क्षेमेण पारय । अपारयः । समुद्रमतारयः ॥

तव ह त्यदिंद्र विश्वमाजौ सस्तो धुनीचुमुरी या ह सिष्वप ।
दीदयदित्तुभ्यं सोमेभिः सुन्वन्दभीतिरिध्मभृतिः पक्थ्य१र्कैः ॥१३॥
तव । ह । त्यत् । इंद्र । विश्वं । आजौ । सस्तः । धुनीचुमुरी इति । या । ह । सिस्वप ।
दीदयत् । इत । तुभ्यं । सोमेभिः । सुन्वन । दभीतिः । इध्मऽभृतिः । पक्थी । अर्कैः ॥१३॥

हे इंद्र आजौ संग्रामे तव ह तवैव विश्वं व्याप्तं त्यत्तादृशं कर्म भवति । कीदृशमिति तदुच्यते । या यौ धुनीचुमुरी । धुनिश्च चुमुरिश्चेत्येतन्नामकावसुरौ । सिष्वप त्वमस्वापयः तावसुरौ सस्तः । संग्रामे सुप्तवंतौ । सुप्तावित्यर्थः ॥ भूतार्थे व्यत्ययेन लट् । द्वितीयो हशब्दः पादपूरणः ॥ तदनंतरं हे इंद्र तुभ्यं त्वदर्थं सुन्वन सोमानभिषुण्वन पक्थी पक्थवान हवींषि पक्ववानिध्मभृतिरिध्मानां भर्ताहर्ता वा दभीतिर्नाम राजर्षिः सोमेभिः सोमैरर्कैर्हविर्लक्षणैरन्नैर्दीदयदित । दीप्यत एव । धुनिं चुमुरिं तस्मै जघंथेत्यर्थः । त्वं नि दस्युं चुमुरिं धुनिं च । ऋग्वे० २ १९ ४. । इति हि दर्शनात ॥ ॥१०॥

इमा उ त्वेति द्वादशर्चं पष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं । नवम्येकादशी च वैश्वदेव्यौ । तथा चानुक्रम्यते । इमा उ द्वादश नवम्येकादश्यौ वैश्वदेव्याविति ॥ उपहव्यनाम्न्येकाह इदं सूक्तं मरुत्वतीयनिविद्धानं । सूचितं

च । इमा उ त्वा य एक इदिति मध्यंदिनः । आ० ९. ९. । इति ॥ इंद्राविष्णवोरुत्क्रांतिनाम्न्येकाहेऽपीद मरुत्वतीयनिविद्धानं । सूचितं च । इमा उ त्वा यानि य इंद्रेति मध्यंदिनः । आ० ९. ७. । इति ॥ तृतीये छंदोमेऽपि मरुत्वतीय इदं सूक्तं । सूचितं च । प्र मंदिन इमा उ त्वेति मरुत्वतीयं । आ० ८. ७. । इति ॥

इमा उ त्वा पुरुतमस्य कारोर्हव्यं वीर हव्या हवंते ।
धियो रथेष्ठामजरं नवीयो रयिर्विभूतिरीयते वचस्या ॥१॥
इमाः । ऊं इति । त्वा । पुरुऽतमस्य । कारोः । हव्यं । वीर । हव्याः । हवंते ।
धियः । रथेऽस्थां । अजरं । नवीयः । रयिः । विऽभूतिः । ईयते । वचस्या ॥१॥

पुरुतमस्य बहुतमं कामं कांक्षतः ॥ तमु अभिकांक्षायामिति धातुः ॥ कारोः स्तोतुर्भरद्वाजस्य संबंधिन्यो हव्याः स्तुत्याः प्रशस्या इमा धियः स्तुतयो हे वीर शूरेंद्र हव्य त्वा त्वां हवंते । ह्वयंति । कीदृशं । रथेष्ठा रथे स्थितमजरं जरारहितं नवीयो नवीयांसं नवतरं । उ इति पूरणः । अपि च वचस्या स्तुत्या श्रेष्ठा विभूतिर्जगतो विभवहेतू रयिर्हविर्लक्षणं धनमीयते । त्वामभिगच्छति ॥

तमु स्तुष इंद्रं यो विदानो गिर्वाहसं गीर्भिर्यज्ञवृद्धं ।
यस्य दिवमति मह्ना पृथिव्याः पुरुमायस्य रिरिचे महित्वं ॥२॥
तं । ऊं इति । स्तुषे । इंद्रं । यः । विदानः । गिर्वाहसं । गीःऽभिः । यज्ञऽवृद्धं ।
यस्य । दिवं । अति । मह्ना । पृथिव्याः । पुरुऽमायस्य । रिरिचे । महिऽत्वं ॥२॥

य इंद्रो विदानः सर्वं विद्वान् सर्वैर्ज्ञायमानो वा गिर्वाहसं गीर्भिर्वहनीयं यज्ञवृद्धं यज्ञैः प्रवृद्धं तमु तमेवेंद्रं स्तुषे । स्तुवे । पुरुमायस्य बहुप्रज्ञस्य बहुवचनस्य वा यस्येंद्रस्य महित्वं माहात्म्यं दिवं दिवो द्युलोकात् ॥ पंचम्यर्थे द्वितीया ॥ पृथिव्या भूलोकान्मह्ना महिम्नाति रिरिचे अतिरिच्यते तं स्तुव इति संबंधः ॥

स इन्नमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार ।
कदा ते मर्ता अमृतस्य धामेयक्षंतो न मिनंति स्वधावः ॥३॥
सः । इत् । तमः । अवयुनं । ततन्वत् । सूर्येण । वयुनऽवत् । चकार ।
कदा । ते । मर्ताः । अमृतस्य । धाम । इयक्षंतः । न । मिनंति । स्वधाऽवः ॥३॥

स इत्स एवेंद्रोऽवयुनमप्रज्ञानं । प्रज्ञाननाशनमित्यर्थः । ततन्वत् तननेन विस्तीर्यमाणं तमोंऽधकारं दिवि सूर्येण दिव्यारोपितेन देवेन वयुनवत् प्रकाशवच्चकार । कृतवान् । परोऽर्धर्चः प्रत्यक्षकृतः । हे स्वधावो बलवन्निंद्र मर्ता मनुष्या अमृतस्य नित्यस्य ते त्वदीयं धाम स्वर्गाख्यं स्थानं । तत्रस्थान्देवानित्यर्थः । इयक्षंतो यष्टुमिच्छंतः कदा कदाचित् । सर्वदेत्यर्थः । न मिनंति । किमपि प्राणिजातं न हिंसंति ॥

यस्ता चकार स कुह स्विदिंद्रः कमा जनं चरति कासु विक्षु ।
कस्ते यज्ञो मनसे शं वराय को अर्क इंद्र कतमः स होता ॥४॥
यः । ता । चकार । सः । कुह । स्वित् । इंद्रः । कं । आ । जनं । चरति । कासु । विक्षु ।
कः । ते । यज्ञः । मनसे । शं । वराय । कः । अर्कः । इंद्र । कतमः । सः । होता ॥४॥

य इंद्रस्ता तान्युक्तप्रसिद्धानि वृत्रवधादीनि कर्माणि चकार अकरोत् स इंद्रोऽद्य कुह स्वित् क्व स्विद्वर्तते

कं जनं कमपि देशमा चरति कासु विक्षु प्रजासु वर्तत इतींद्रस्य विभूतिमहत्त्वान्न निश्चेतुं शक्यं। अथ प्रत्यक्षस्तुतिः। हे इंद्र कः कीदृशो यज्ञस्ते तव मनसे चेतसे शं सुखकरो भवति। वराय तव वरणाय कः कीदृशोऽर्को मंत्रः समर्थो भवति। होताह्वाता तव वरणाय यः समर्थो भवति स होता कतमश्च भवति ॥

इदा हि ते वेविषतः पुराजाः प्रत्नास आसुः पुरुकृत्सखायः।
ये मध्यमास उत नूतनास उतावमस्य पुरुहूत बोधि ॥५॥
इदा। हि। ते। वेविषतः। पुराऽजाः। प्रत्नासः। आसुः। पुरुऽकृत्। सखायः।
ये। मध्यमासः। उत। नूतनासः। उत। अवमस्य। पुरुऽहूत। बोधि ॥५॥

पुराजाः पूर्वस्मिन्काले जाताः प्रत्नासः पुराणा अंगिरःप्रभृतय इदा हीदानीमिव। हिशब्द उपमार्थे वर्तते। वेविषतः कर्माणि प्राप्नुवतो हे पुरुकृत बहूनां कर्मणां कर्तरिंद्र ते तव सखायः स्तोतार आसुः। बभूवुः। ये मध्यमासो मध्यमकालजा उतापि च ये नूतनासोऽद्यतना यतमास्तेऽपि सर्वे ते स्तोतारो बभूवुः अतः कारणादुतापि चावमस्यार्वाचीनस्य ममापि स्तोत्रं हे पुरुहूत बहुभिराहूतेंद्र त्व बोधि। बुध्यस्व ॥ ॥११॥

तं पृच्छंतोऽवरासः पराणि प्रत्ना त इंद्र श्रुत्यानु येमुः।
अर्चामसि वीर ब्रह्मवाहो यादेव विद्म तात्त्वा महांतं ॥६॥
तं। पृच्छंतः। अवरासः। पराणि। प्रत्ना। ते। इंद्र। श्रुत्या। अनु। येमुः।
अर्चामसि। वीर। ब्रह्मऽवाहः। यात्। एव। विद्म। तात्। त्वा। महांतं ॥६॥

हे वीर शूर ब्रह्मवाहो ब्रह्मभिर्मंत्रैर्वहनीयेंद्र अवरासोऽर्वाचीना मनुष्यास्तमुक्तगुणोपेतं त्वां पृच्छंतोऽर्चंतः॥ पृच्छतिरर्चतिकर्मा ॥ पराणि प्रकृष्टानि प्रत्ना प्रत्नानि पुराणानि श्रुत्या श्रुत्यानि श्रोतव्यानि ते त्वदीयानि कर्माण्यनु येमुः। अनुयमनं निबंधनं। स्तुतिरूपाभिर्वाग्भिर्निबबंधुः। तथा वयमपि महांतं प्रभूतं त्वा त्वामर्चामसि। अर्चामः। स्तुमः। यादेव यान्येव कर्माणि विद्म जानीमः तात्तैः कर्मभिः स्तुम इति संबंधः ॥

अभि त्वा पाजो रक्षसो वि तस्थे महि जज्ञानमभि तत्सु तिष्ठ।
तव प्रत्नेन युज्येन सख्या वज्रेण धृष्णो अप ता नुदस्व ॥७॥
अभि। त्वा। पाजः। रक्षसः। वि। तस्थे। महि। जज्ञानं। अभि। तत्। सु। तिष्ठ।
तव। प्रत्नेन। युज्येन। सख्या। वज्रेण। धृष्णो इति। अप। ता। नुदस्व ॥७॥

रक्षसो रक्षसां संबंधि पाजः सेनालक्षणं बलं हे इंद्र त्वाभि त्वामभिमुखं वि तस्थे। प्रतिष्ठते। तथा त्वमपि महि महज्जज्ञानं प्रादुर्भवत्तद्बलमभि अभिमुखः सन् सु सुष्ठु तिष्ठ। स्थिरो भव। स्थित्वा च हे धृष्णो शत्रूणां धर्षकेंद्र तव त्वदीयेन वज्रेण ता तद्बलमप नुदस्व। अपगतं प्रेरय। क्षिंधीत्यर्थः। कीदृशेन। प्रत्नेन पुराणेन युज्येन योज्येन सख्या नित्यसहायेन ॥

स तु श्रुधींद्र नूतनस्य ब्रह्मण्यतो वीर कारुधायः।
त्वं ह्या३पिः प्रदिवि पितॄणां शश्वद्बभूथ सुहव एष्टौ ॥८॥
सः। तु। श्रुधि। इंद्र। नूतनस्य। ब्रह्मण्यतः। वीर। कारुऽधायः।
त्वं। हि। आपिः। प्रऽदिवि। पितॄणां। शश्वत्। बभूथ। सुऽहवः। आऽइष्टौ ॥८॥

हे कारुधायः कारूणां स्तोतॄणां धारक हे वीरेंद्र स प्रसिद्धस्त्वं नूतनस्येदानींतनस्य ब्रह्मण्यतो ब्रह्म स्तोत्रं कर्तुमिच्छतो मम स्तोत्रं तु क्षिप्रं श्रुधि। शृणुहि। यस्मात्कारणात् हे इंद्र त्वमिष्टावायजमानेऽभिकामेन वा सति सुहवः शोभनाह्वानः सन् प्रदिवि पूर्वस्मिन्काले पितॄणामंगिरसामापिर्बंधुः शश्वच्चिरकालं बभूथ अभूः तस्मात्कारणान्मदीयं स्तोत्रं श्रुधीति संबंधः ॥

प्रोतये वरुणं मित्रमिंद्रं मरुतः कृष्वावसे नो अद्य।
प्र पूषणं विष्णुमग्निं पुरंधिं सवितारमोषधीः पर्वताँश्च ॥९॥

प्र। ऊतये। वरुणं। मित्रं। इंद्रं। मरुतः। कृष्व। अवसे। नः। अद्य।
प्र। पूषणं। विष्णुं। अग्निं। पुरंऽधिं। सवितारं। ओषधीः। पर्वतान्। च ॥९॥

अस्यामृचि विश्वे देवाः स्तूयंते। हे भरद्वाज अद्येदानीं वरुणं राज्यभिमानिनं च मित्रमहरभिमानिनं चेंद्रं च प्रसिद्धं मरुतो मरुद्गणांश्च नोऽस्माकमूतये तर्पणायावसे रक्षणाय च प्र कृष्व। अभिमुखीकुरुष्व। किंच पूषणमेतत्संज्ञकं च विष्णुं सर्वव्यापिनं देवं च पुरंधिं पुरुधियं पुरुकर्माणमग्निं च सवितारं सर्वस्य प्रेरकं देवमोषधीरोषध्यभिमानिनो देवान् पर्वतांश्चाद्रीनिरस्थितान् देवानस्माकं तर्पणाय रक्षणाय च प्र कृष्व। स्तुत्याभिमुखीकुरु ॥

इम उ त्वा पुरुशाक प्रयज्यो जरितारो अभ्यर्चंत्यर्कैः।
श्रुधी हवमा हुवतो हुवानो न त्वावाँ अन्यो अमृत त्वदस्ति ॥१०॥

इमे। ऊं इति। त्वा। पुरुऽशाक। प्रयज्यो इति प्रऽयज्यो। जरितारः। अभि। अर्चंति। अर्कैः।
श्रुधि। हवं। आ। हुवतः। हुवानः। न। त्वाऽवान्। अन्यः। अमृत। त्वत्। अस्ति ॥१०॥

हे पुरुशाक बहुशक्ते हे प्रयज्यो प्रकृष्टेन यजनीयेंद्र त्वा त्वामिमे जरितारः स्तोतारोऽर्कैरर्चनीयैः स्तोत्रैरभ्यर्चंति। अभिष्टुवंति। तथा हे अमृत अमरणशीलेंद्र हुवानः स्तूयमानस्त्वमा हुवतोऽभिष्टुवतो मम हवं स्तोत्रं श्रुधि। शृणु। किंच त्वावान् त्वत्सदृशो देवस्त्वदन्यो नास्ति ॥

नू म आ वाचमुप याहि विद्वान्विश्वेभिः सूनो सहसो यजत्रैः।
ये अग्निजिह्वा ऋतसाप आसुर्ये मनुं चक्रुरुपरं दसाय ॥११॥

नु। मे। आ। वाचं। उप। याहि। विद्वान्। विश्वेभिः। सूनो इति। सहसः। यजत्रैः।
ये। अग्निऽजिह्वाः। ऋतऽसापः। आसुः। ये। मनुं। चक्रुः। उपरं। दसाय ॥११॥

इयं च वैश्वदेवीत्युक्तं। हे सहसः सूनो बलस्य पुत्रेंद्र विद्वान् सर्वज्ञस्त्वं यजत्रैर्यजनीयैर्विश्वेभिः सर्वैर्देवैः सह नु क्षिप्रं मे मदीया वाचः स्तुतिरूपाणि वचांस्युपाभि आ याहि। आगच्छ। एवंभूतमिंद्रं प्रार्थयत ऐंद्रत्वात्सूक्तस्य। ये देवा अग्निजिह्वाः। अग्निर्जिह्वास्थानीयो येषां ते। ऋतसाप ऋतं यज्ञं स्पृशंत आसुर्भवंति ये च देवा दसाय शत्रूणामुपक्षपणाय मनुं राजर्षिमुपरं दस्यूनामुपरिभवं चक्रुः कृतवंतः तैः सहागच्छेति पूर्वेण संबंधः ॥

स नो बोधि पुरएता सुगेषूत दुर्गेषु पथिकृद्विदानः।
ये अश्रमास उरवो वहिष्ठास्तेभिर्न इंद्राभि वक्षि वाजं ॥१२॥

सः। नः। बोधि। पुरःऽएता। सुऽगेषु। उत। दुःऽगेषु। पथिऽकृत्। विदानः।
ये। अश्रमासः। उरवः। वहिष्ठाः। तेभिः। नः। इंद्र। अभि। वक्षि। वाजं ॥१२॥

हे इंद्र पथिकृद्वर्त्मनां कर्ता विदानः सर्वं विद्वान् स त्वं सुगेषु सुखेन गंतव्येषूतापि च दुर्गेषु दुःखेन गंतव्येषु च मार्गेषु नोऽस्माकं पुरएता पुरो गंता बोधि। भव ॥ बोधीति भवतेर्लोण्मध्यमपुरुषैकवचनस्य छांदसं रूपं ॥ अश्रमासः श्रमरहिता उरवो महांतो वहिष्ठा वोढृतमास्तव येऽश्वाः संति हे इंद्र तेभिस्तैरश्वैर्नोऽस्मभ्यं वाजमन्नमभि वक्षि। अभिवह ॥ ॥१२॥

य एक इदित्येकादशर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं। तथा चानुक्रांतं। य एक एकादशेति ॥ आभिप्लविके प्रथमेऽहनि दशरात्रस्य प्रथमेऽहनि च माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रेऽहीनसूक्तस्य स्थाने त्रीणि संपातसूक्तानि। तेष्विदं द्वितीयं सूक्तं। सूत्रितं च। य एक इद्यास्तिग्मशृंगः। आ० ७ ५। इति ॥ उपहव्यनाम्न्येकाहेऽपीदं निष्केवल्यनिविद्धानं। सूत्रितं च। य एक इदिति मध्यंदिनः। आ० ९ ७। इति ॥

य एक इद्धव्यश्चर्षणीनामिंद्रं तं गीर्भिरभ्यर्च आभिः।
यः पत्यते वृषभो वृष्ण्यावान्त्सत्यः सत्वा पुरुमायः सहस्वान् ॥१॥
यः। एकः। इत्। हव्यः। चर्षणीनां। इंद्रं। तं। गीःऽभिः। अभि। अर्च। आभिः।
यः। पत्यते। वृषभः। वृष्ण्यऽवान्। सत्यः। सत्वा। पुरुऽमायः। सहस्वान् ॥१॥

य इंद्रश्चर्षणीनां प्रजानामापत्स्वेक इदेक एव हव्यो ह्वातव्य आभिर्गीर्भिः स्तुतिरूपाभिर्वाग्भिस्तमिंद्रमभ्यर्च। अभिष्टौमि। य इंद्रः पत्यते स्तोतॄनभिगच्छति। यद्वा। पत्यते लोकानामीष्टे। कीदृशः। वृषभः कामानां वर्षिता वृष्ण्यावान्बलवान् सत्योऽविसंवादी सत्वा शत्रूणां सादयिता कामानां दाता वा ॥ सदेर्वा सनोतेर्वेदं रूपं ॥ पुरुमायो बहुप्रज्ञः सहस्वानभिभवनवान् तमिंद्रमभिष्टौमीति संबंधः ॥

तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयंतः।
नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठं ॥२॥
तं। ऊं इति। नः। पूर्वे। पितरः। नवऽग्वाः। सप्त। विप्रासः। अभि। वाजयंतः।
नक्षत्ऽदाभं। ततुरिं। पर्वतेऽस्थां। अद्रोघऽवाचं। मतिऽभिः। शविष्ठं ॥२॥

पूर्वे प्रत्ना नवग्वा नवभिर्मासैः सत्रमनुष्ठितवंतः सप्त सप्तसंख्याका विप्रासो विप्रा मेधाविनो वाजयंतो वाजमन्नं हविर्लक्षणमिंद्रस्य कुर्वंतः। इंद्रं वा वाजिनं बलिनं कुर्वंतः ॥ तत्करोतीति णिच् ॥ एवंभूता नोऽस्माकं पितरोऽगिरसस्तमु तमेवेंद्रं मतिभिः स्तुतिभिरभि। तुष्टुवुरिति शेषः। कीदृशं। नक्षद्दाभं ॥ नक्षतिर्गतिकर्मा ॥ अभिगच्छता शत्रूणां दभितारं हिंसितारं ततुरिं तरितारं पर्वतेष्ठां पर्वतेष्ववस्थितमद्रोघवाचं। अद्रोग्धव्यानतिक्रमणीया वागाज्ञारूपा यस्य तं। शविष्ठं बलवत्तमं ॥

तमीमह इंद्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः।
यो अस्कृधोयुरजरः स्वर्वान्तमा भर हरिवो मादयध्यै ॥३॥
तं। ईमहे। इंद्रं। अस्य। रायः। पुरुऽवीरस्य। नृऽवतः। पुरुऽक्षोः।
यः। अस्कृधोयुः। अजरः। स्वःऽवान्। तं। आ। भर। हरिऽवः। मादयध्यै ॥३॥

पुरुवीरस्य बहुपुत्रपौत्रयुक्तस्य तुवतः परिचारकजनसहितस्य पुरुक्षोर्बहन्नस्य बहुयशसो वास्य रायं इद धनं ॥ द्वितीयार्थे षष्ठी ॥ तमिंद्रमीमहे । याचामहे । यो रयिरस्कृधोयुरविच्छिन्नोऽजरो जराहानिरहित: सर्वान सुखयुक्तो हे हरिवो हरिवन स्वकीयाश्वोपेतेंद्र त्वं तं रयिं मादयध्या अस्मान्मादयितुमाभर । आहर ॥

तन्नो॒ वि वो॑चो॒ यदि॒ ते पु॒रा चि॑ज्जरि॒तार॑ आन॒शुः सु॒म्नमिं॑द्र ।
कस्ते॑ भा॒गः किं वयो॑ दुध्र खिद्वः॒ पुरु॑हूत पुरूवसोऽसुर॒घ्नः ॥४॥

तत् । नः॒ । वि । वो॒चः॒ । यदि॑ । ते॒ । पु॒रा । चि॒त् । ज॒रि॒तारः॑ । आ॒न॒शुः । सु॒म्नं । इं॒द्र॒ ।
कः । ते॒ । भा॒गः । किं । वयः॑ । दु॒ध्र॒ । खि॒द्वः॒ । पुरु॑ऽहूत । पुरूवसो इति॑ पुरु॑ऽवसो । अ॒सु॒र॒ऽघ्नः ॥४॥

हे इंद्र यदि ते तव पुरा चित्पूर्वस्मिन्काले जरितारः स्तोतारः सुम्नं सुखमानशुः तत्तत्सुखं नोऽस्माकं वि वोचः । विब्रूहि । दुध्र दुर्धर हे खिद्वः शत्रूणां खेदयितर्हे पुरुहूत हे पुरूवसो इंद्र असुरघ्नोऽसुराणां हंतुस्ते तव यज्ञेषु को भागः क्लृप्तः । वयो हविर्लक्षणमन्नं किं क्लृप्तं । यदि केचिच्चिरंतनाः पूर्वकालेऽपि त्वत्तः सकाशात्सुखं लेभिरे तर्ह्यहमपि तत्सुखं लप्स्य इति विचार्य सुखप्राप्तिविलंबो ममासोढव्यो भवेदित्यर्थः ॥

तं पृ॒च्छंती॒ वज्र॑हस्तं रथे॒ष्ठामिंद्रं॒ वेपी॒ वक्व॑री॒ यस्य॒ नू गीः ।
तु॒वि॒ग्रा॒भं तु॑विकू॒र्मिं र॑भो॒दां गा॒तुमि॑षे॒ नक्ष॑ते॒ तुम्र॒मच्छ॑ ॥५॥

तं । पृ॒च्छंती॑ । वज्र॑ऽहस्तं । र॒थे॒ऽस्थां । इंद्रं॑ । वेपी॑ । वक्व॑री । यस्य॑ । नु । गीः ।
तु॒वि॒ऽग्रा॒भं । तु॒वि॒ऽकू॒र्मिं । र॒भः॒ऽदां । गा॒तुं । इ॒षे॒ । नक्ष॑ते । तुम्रं॑ । अच्छ॑ ॥५॥

पूर्वयोपालब्ध इंद्र ऋषये कामान्प्रायच्छत ततः स कामपूर्ण ऋषिराह । वज्रहस्तं वज्रपाणिं रथेष्ठां रथे स्थितं तमिंद्रं पृच्छत्यर्चयंती ॥ पृच्छतिरर्चतिकर्मा ॥ वेपी । वेपो यागादिलक्षणं कर्म । तद्वती वक्वरी गुणानां वक्त्री गीरीदृशी स्तुतिर्यस्य यजमानस्य भवति । कीदृशमिंद्रं पृच्छंती । तुविग्राभं तुवीनां बहूनां ग्रहीतारं तुविकूर्मिं बहुकर्माणं रभोदां रभसो बलस्य दातारं । नु इति पूरणः । स यजमानो गातुं सुखमिषे । गच्छति । किंच तुम्रं स्नापयितारं शत्रुमच्छाभिमुखं नक्षते । गच्छति ॥ ॥१३॥

अ॒या ह॒ त्यं मा॒यया॑ वावृधा॒नं म॑नो॒जुवा॑ स्वतवः॒ पर्व॑तेन ।
अच्यु॑ता चिद्वीळि॒ता स्वो॑जो रु॒जो वि दृ॒ळ्हा धृ॑ष॒ता वि॑रप्शिन् ॥६॥

अ॒या । ह॒ । त्यं । मा॒यया॑ । व॒वृ॒धा॒नं । म॒नः॒ऽजुवा॑ । स्व॒ऽत॒वः॒ । पर्व॑तेन ।
अच्यु॑ता । चि॒त् । वी॒ळि॒ता । सु॒ऽओ॒जः॒ । रु॒जः । वि । दृ॒ळ्हा । धृ॒ष॒ता । वि॒ऽर॒प्शि॒न् ॥६॥

हे स्वतवः स्वभूतबलेंद्र त्वं मनोजुवा मनोवद्गच्छता तेन पर्वतेन बहुपर्वणा स्वकीयेनायुधेन वज्रेण । वज्रेण शतपर्वणा । ऋग्सं० १ ८० ६ । इति दर्शनात । अयानया मायया वावृधानं वर्धमानं त्यं प्रसिद्धं वृत्रं वि रुजः । विशीर्णमभांक्षीः । तथा हे स्वोजः शोभनतेजो हे विरप्शिन हे महन्निंद्र त्वमच्युताच्युतानि च्युतिनाशरहितान्यपि वीळिता वीळितान्यशिथिलीकृतानि दृळ्हा दृढानि पुराणि धृषता धर्षकेण वज्रेण वि रुजः । भग्नवानसि ॥

तं वो॑ धि॒या नव्य॑स्या॒ शवि॑ष्ठं प्र॒त्नं प्र॑त्न॒वत्प॑रितंस॒यध्यै॑ ।
स नो॑ वक्षदनिमा॒नः सु॒वह्मेंद्रो॒ विश्वा॒न्यति॑ दु॒र्गहा॑णि ॥७॥

तं । वः । धिया । नव्यस्या । शविष्ठं । प्रत्नं । प्रत्नऽवत् । परिऽतंसयध्यै ।
सः । नः । वक्षत् । अनिऽमानः । सुऽवक्ष्मा । इंद्रः । विश्वानि । अति । दुःऽगहानि ॥७॥

नव्यस्या नवतरया धिया स्तुत्या शविष्ठं बलवत्तमं प्रत्नं पुराणं हे इंद्र तं वस्त्वां प्रत्नवत् चिरंतना ऋषय इव परितंसयध्यै परितो विस्तारयितुं। अहं प्रवृत्तोऽस्मीति शेषः। अनिमानोऽपरिमाणः सुवक्ष्मा शोभनवहनः स इंद्रो विश्वानि समस्तानि दुर्गहाणि दुर्गाणि नोऽस्मभ्यमति वक्षत्। अतिवहतु ॥

आ जनाय द्रुह्वणे पार्थिवानि दिव्यानि दीपयोऽंतरिक्षा ।
तपा वृषन्विश्वतः शोचिषा तान्ब्रह्मद्विषे शोचय क्षामपश्च ॥८॥
आ । जनाय । द्रुह्वणे । पार्थिवानि । दिव्यानि । दीपयः । अंतरिक्षा ।
तप । वृषन् । विश्वतः । शोचिषा । तान् । ब्रह्मऽद्विषे । शोचय । क्षां । अपः । च ॥८॥

हे इंद्र त्वं द्रुह्वणे साधुजनानां द्रोग्धुर्जनाय जनस्य राक्षसादेः ॥ षष्ठ्यर्थे चतुर्थी ॥ पार्थिवानि पृथिव्यां भवानि दिव्यानि दिवि भवान्यंतरिक्षांतरिक्षे भवानि च स्थानान्या दीपयः। आ समंतात्तापय। हे वृषन् कामानां वर्षितरिंद्र त्वं विश्वतः सर्वतो विद्यमानान् तान्राक्षसादीन् शोचिषा त्वदीयया दीप्त्या तप। दह। किंच ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे राक्षसादये। ब्रह्मद्विषं दग्धुमित्यर्थः। क्षां पृथिवीमपश्चांतरिक्षं शोचय। दीपय। आप इत्यंतरिक्षनामैतत् ॥

भुवो जनस्य दिव्यस्य राजा पार्थिवस्य जगतस्त्वेषसंदृक् ।
धिष्व वज्रं दक्षिण इंद्र हस्ते विश्वा अजुर्य दयसे वि मायाः ॥९॥
भुवः । जनस्य । दिव्यस्य । राजा । पार्थिवस्य । जगतः । त्वेषऽसंदृक् ।
धिष्व । वज्रं । दक्षिणे । इंद्र । हस्ते । विश्वाः । अजुर्य । दयसे । वि । मायाः ॥९॥

हे त्वेषसंदृक् दीप्तदर्शनेंद्र दिव्यस्य दिवि भवस्य जनस्य राजेश्वरो भुवः। भवसि। जगतो जंगमस्य पार्थिवस्य च राजा भवसि। दक्षिणे हस्ते वज्रं धिष्व। निधेहि। तेन च निहितेन वज्रेण विश्वाः सर्वा आसुरी माया वि दयसे। विबाधसे ॥ दय दानहिंसागतिरक्षणेष्विति धातुः ॥ हे इंद्राजुर्य जरयितुमशक्येंद्र त्वमिति ॥

आ संयतमिंद्र णः स्वस्तिं शत्रुतूर्याय बृहतीममृध्रां ।
यया दासान्यार्याणि वृत्रा करो वज्रिन्त्सुतुका नाहुषाणि ॥१०॥
आ । संऽयतं । इंद्र । नः । स्वस्तिं । शत्रुऽतूर्याय । बृहतीं । अमृध्रां ।
यया । दासानि । आर्याणि । वृत्रा । करः । वज्रिन् । सुऽतुका । नाहुषाणि ॥१०॥

हे इंद्र शत्रुतूर्याय शत्रूणां तारणाय बृहतीं महतीममृध्रामहिंसितां संयतं संयतीं संगच्छमानां स्वस्तिं क्षेमलक्षणां संपदं हे इंद्र नोऽस्मभ्यमा भर। वज्रिन्वज्रवन्निंद्र यया स्वस्त्या दासानि कर्महीनानि मनुष्यजातान्यार्याणि कर्मयुक्तानि करः अकरोः। नाहुषाणि मनुष्यसंबंधीनि। नहुषा इति मनुष्यनामैतत्। वृत्रा वृत्राणि शत्रून् सुतुका सुतुकानि शोभनहिंसोपेतान्यकरोः ॥

स नो नियुद्भिः पुरुहूत वेधो विश्ववाराभिरा गहि प्रयज्यो ।
न या अदेवो वरते न देव आभिर्याहि तूयमा मद्र्यद्रिक् ॥११॥

सः। नः। नियुत्ऽभिः। पुरुऽहूत। वेधः। विश्वऽवाराभिः। आ। गहि। प्रयज्यो इति प्रऽयज्यो।
न। याः। अदेवः। वरते। न। देवः। आ। आभिः। याहि। तूयं। आ। मद्र्यद्रिक ॥११॥

हे पुरुहूत हे वेधो विधातर्हे प्रयज्यो प्रकृष्टेन यजनीयेंद्र स त्वं विश्ववाराभिर्विश्वैर्वरणीयाभिः संभजनीयाभिर्नियुद्भिरश्वैर्नोऽस्मान् आ गहि। आगच्छ। अदेवोऽसुरो या नियुतो यानश्चान्न वरते न वारयति देवश्च न वरते आभिर्नियुद्भिस्तूयमा. क्षिप्रमेव मद्र्यद्रिक मदभिमुखः सन् आ याहि। आगच्छ ॥ अत्यागमस्य द्विर्वचनमादरार्थं ॥ ॥१४॥

सुत इदिति दशर्चमष्टमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं। सुत इद्दशेत्यनुक्रांतं ॥ विषुवति निष्केवल्य इदं सूक्तं। सूत्रितं च। सुत इत्त्वमिंद्र प्र पूर्वीः। आ० ८. ६। इति ॥ महाव्रतेऽपि निष्केवल्य इदमादीनि त्रीणि सूक्तानि। तथैव पंचमारण्यके सूत्रितं। सुत इत्त्वं निमिश्ल इंद्र सोम इति त्रीणि। ऐ० आ० ५. २. २। इति ॥

सुत इत्त्वं निमिश्ल इंद्र सोमे स्तोमे ब्रह्मणि शस्यमान उक्थे।
यद्वा युक्ताभ्यां मघवन्हरिभ्यां बिभ्रद्वज्रं बाह्वोरिंद्र यासि ॥१॥
सुते। इत्। त्वं। निऽमिश्लः। इंद्र। सोमे। स्तोमे। ब्रह्मणि। शस्यमाने। उक्थे।
यत्। वा। युक्ताभ्यां। मघऽवन्। हरिऽभ्यां। बिभ्रत्। वज्रं। बाह्वोः। इंद्र। यासि ॥१॥

सोमे सुत इदभिषुत एव सति ब्रह्मणि बृहति महति सोमे स्तोत्रे उच्चार्यमाणे सत्युक्थे शस्त्रे शस्यमाने सति हे इंद्र त्वं निमिश्लो निमिश्रः सन् हरी संयोजयन् हे मघवन्धनवन्निंद्र त्वं बाह्वोर्हस्तयोर्वज्रं स्वकीयमायुधं बिभ्रद्धारयन् युक्ताभ्यां रथे नियुक्ताभ्यां हरिभ्यामश्वाभ्यां यासि यद्वागच्छसीति यच्च तत्सोमेऽभिषुत इति संबंधः ॥

यद्वा दिवि पार्ये सुष्विमिंद्र वृत्रहत्येऽवसि शूरसातौ।
यद्वा दक्षस्य बिभ्युषो अबिभ्यदरंधयः शर्धत इंद्र दस्यून् ॥२॥
यत्। वा। दिवि। पार्ये। सुस्विं। इंद्र। वृत्रऽहत्ये। अवसि। शूरऽसातौ।
यत्। वा। दक्षस्य। बिभ्युषः। अबिभ्यत्। अरंधयः। शर्धतः। इंद्र। दस्यून् ॥२॥

हे इंद्र त्वं दिवि द्युलोके शूरसातौ शूरैर्भटैः संभजनीये वृत्रहत्ये युद्धे च पार्ये प्रापणीये सति सुष्विमभिषोतारं यजमानमवसि यद्वा रक्षसीति यच्च। वेति समुच्चये। दक्षस्य यज्ञादिषु समर्थस्य बिभ्युषः शत्रुभ्यो बिभ्यतो जनस्य शर्धतः संग्राम उत्सहमानान्दस्यूनुपक्षपयितॄन् शत्रून् हे इंद्र त्वमबिभ्यद्भीतिरहितः सन्नरंधयो यद्वा वशीकरोषीति यच्च तत्सर्वं सोमेऽभिषुत इति पूर्वेण संबंधः ॥ तथा चोक्तं। यद्वाह्वोर्धारयन्वज्रं हरिभ्यां यासि वृत्रहन्। यच्च रक्षसि संग्रामे नॄन् सोममभिषुण्वतः ॥ यच्च कर्म सुदक्षस्य यजमानस्यापारयः। वशीकरोषि तान्सर्वान् बिभ्यत् भीतिवर्जितः ॥ तत्सोमेऽभिषुते स्तोत्रशस्त्रयोश्च प्रवृत्तयोः। इति द्वयोऽयमर्थः सुत इत्त्वमिति द्वयमिति ॥

पाता सुतमिंद्रो अस्तु सोमं प्रणेनीरुग्रो जरितारमूती।
कर्ता वीराय सुष्वय उ लोकं दाता वसु स्तुवते कीरये चित् ॥३॥
पाता। सुतं। इंद्रः। अस्तु। सोमं। प्रऽनेनीः। उग्रः। जरितारं। ऊती।
कर्ता। वीराय। सुस्वये। ऊं इति। लोकं। दाता। वसु। स्तुवते। कीरये। चित् ॥३॥

इंद्रः सुतमभिषुतं सोमं पातात्। पानशीलो भवतु ॥ तृनंतत्वान्न लोकाव्ययनिष्ठेति षष्ठीप्रतिषेधः ॥ कीदृशः। ऊती ऊत्या मार्गेण जरितारं स्तोतारं प्रणीनीः प्रकर्षेण नेतोग्र उग्रूर्णो वीराय यज्ञादिकर्मसु दक्षाय सुष्वये सोमाभिषवं कुर्वते यजमानाय लोकं स्थान कर्ता। दातेत्यर्थः। उ इति पादपूरणः। स्तुवते स्तोत्रं कुर्वते कीरये चित ॥ चिदिति चार्थे ॥ स्तोत्रे च। कीरिरिति स्तोतृनामैतत्। वसु धनं दातास्तु ॥

गंतेयांति सवना हरिभ्यां बभ्रिर्वज्रं पपिः सोमं ददिर्गाः।
कर्ता वीरं नर्यं सर्ववीरं श्रोता हवं गृणतः स्तोमवाहाः ॥४॥
गंता। इयंति। सवना। हरिऽभ्यां। बभ्रिः। वज्रं। पपिः। सोमं। ददिः। गाः।
कर्ता। वीरं। नर्यं। सर्वऽवीरं। श्रोता। हवं। गृणतः। स्तोमऽवाहाः ॥४॥

इंद्रो हरिभ्यां स्वकीयाभ्यामियंति हृदयस्थानि त्रीणि सवना सवनानि गंता गमनशीलो भवतु। कीदृशः। वज्रं स्वकीयमायुधं बभ्रिर्भर्ता धारकः सोममभिषुतं पपिः पाता गा ददिर्दाता नर्यं मनुष्यहितं सर्ववीरं बहुपुत्रोपेतं वीरं पुत्रं कर्ता यजमानाय दाता गृणतः स्तुवतः स्तोतुः संबधि हवं स्तोत्रं श्रोता श्रावकः स्तोमवाहाः स्तोमैः स्तोत्रैर्वहनीयः ॥

अस्मै वयं यद्वावान तद्विविष्म इंद्राय यो नः प्रदिवो अपस्कः।
सुते सोमे स्तुमसि शंसदुक्थेंद्राय ब्रह्म वर्धनं यथासत् ॥५॥
अस्मै। वयं। यत्। ववान। तत्। विविष्मः। इंद्राय। यः। नः। प्रऽदिवः। अपः। करिति कः।
सुते। सोमे। स्तुमसि। शंसत्। उक्था। इंद्राय। ब्रह्म। वर्धनं। यथा। असत् ॥५॥

प्रदिवः पुराणो य इंद्रो नोऽस्मदर्थमपः पोषणादिकं कर्म कः करोति अयमिंद्रो यत्स्तोत्रादिकं ववान कामयतेऽस्मा इंद्राय वयं तद्विविष्मः। व्याप्नुमः। कुर्म इत्यर्थः। सोमे सुतेऽभिषुते सति स्तुमसि। स्तुमः। इंद्राय स्तोत्राणि कुर्मः। उक्थोक्थानि शस्त्राणि शंसत शंसंतः ॥ प्रथमाबहुवचनस्य लुक् ॥ ब्रह्म हविर्लक्षणमन्नमिंद्राय इंद्रार्थं वर्धनं यथा वृद्धिकरमसत् स्यात् तथा कुर्म इत्यर्थः ॥ ॥१५॥

ब्रह्माणि हि चकृषे वर्धनानि तावत्त इंद्र मतिभिर्विविष्मः।
सुते सोमे सुतपाः शंतमानि रांद्र्या क्रियास्म वक्षणानि यज्ञैः ॥६॥
ब्रह्माणि। हि। चकृषे। वर्धनानि। तावत्। ते। इंद्र। मतिऽभिः। विविष्मः।
सुते। सोमे। सुतऽपाः। शंऽतमानि। रांद्र्या। क्रियास्म। वक्षणानि। यज्ञैः ॥६॥

हे इंद्र त्वं हि यस्मात्कारणात् ब्रह्माणि स्तोत्राणि वर्धनानि स्वयमेव वृद्धिकराणि चकृषे कृतवानसि तस्मात्कारणात्तावत्तावंति तादृशानि स्तोत्राणि ते तुभ्यं मतिभिर्बुद्धिभिर्वयं विविष्मः। व्याप्नुमः। वर्धनानि स्तोत्राणि मम यथा भवेयुस्त्वं तादृशानि कल्पितवानसीत्यर्थः। अपि च हे सुतपा अभिषुतस्य सोमस्य पातस्त्वं शंतमानि सुखकृत्तमानि रांद्र्या रांद्र्याणि रमणीयानि यज्ञैर्हविर्भिर्युक्तानि वक्षणानि वाहकानि स्तोत्राणि क्रियास्म। करवाम ॥

स नो बोधि पुरोळाशं रराणः पिबा तु सोमं गोऋजीकमिंद्र।
एदं बर्हिर्यजमानस्य सीदोरुं कृधि त्वायत उ लोकं ॥७॥

सः । नः । बोधि । पुरोळाशं । रराणः । पिब । तु । सोमं । गोऽऋजीकं । इंद्र ।
आ । इदं । बर्हिः । यजमानस्य । सीद । उरुं । कृधि । त्वाऽयतः । ऊं इति । लोकं ॥ ७॥

हे इंद्र रराणो रममाणः स त्वं नोऽस्मदीयं पुरोडाशमेतल्लक्षणं हविर्बोधि । बुध्यस्व । किंच गोऋजीकं गोविकारदध्यादिभिः संस्कृतमभिषुतं सोमं तु क्षिप्रं पिब । पिब ॥ तदर्थं च यजमानस्य संबंधीदं बर्हिरासीद । अभिविश । तदनंतरं त्वायतस्त्वामिच्छतो यजमानस्य लोकं स्थानमुरुं विस्तीर्णं कृधि । कुरु ॥ उ इति पूरणः ॥

स मंदस्वा ह्यनु जोषमुग्र प्र त्वा यज्ञास इमे अश्नुवंतु ।
प्रेमे हवासः पुरुहूतमस्मे आ त्वेयं धीरवस इंद्र यम्याः ॥ ८॥
सः । मंदस्व । हि । अनु । जोषं । उग्र । प्र । त्वा । यज्ञासः । इमे । अश्नुवंतु ।
प्र । इमे । हवासः । पुरुऽहूतं । अस्मे इति । आ । त्वा । इयं । धीः । अवसे । इंद्र । यम्याः ॥ ८॥

हे उग्रोद्गूर्णबलेंद्र स त्वमनु जोषं कामानुगुणं यथा भवति तथा मंदस्व । मोदस्व ॥ हिशब्दः पादपूरणः । हियोगे मदस्वेत्याख्यातस्य व्यत्ययात्सर्वानुदात्तत्वं ॥ इमे यज्ञासो यज्ञाः सोमास्त्वा त्वा प्राश्नुवंतु । प्राप्नुवंतु । हे पुरुहूत बहुभिराहूतेंद्र त्वामस्मे अस्मदीयानीमे हवासो हवाः स्तोत्राणि प्राप्नुवंतु । इयं धीः स्तुतिस्त्वा त्वामवसेऽस्माकं रक्षणाय यम्याः । आयच्छतु । नियच्छतु ॥

तं वः सखायः सं यथा सुतेषु सोमेभिरीं पृणता भोजमिंद्रं ।
कुवित्तस्मा असति नो भराय न सुष्विमिंद्रोऽवसे मृधाति ॥ ९॥
तं । वः । सखायः । सं । यथा । सुतेषु । सोमेभिः । ईं । पृणत । भोजं । इंद्रं ।
कुवित । तस्मै । असति । नः । भराय । न । सुस्विं । इंद्रः । अवसे । मृधाति ॥ ९॥

हे सखायः स्तोतारो वो यूयं सोमेषु सुतेष्वभिषुतेषु सत्सु भोजं दातारं तमीमेतमिंद्रं सोमेभिः सोमैर्यथा कामं सं पृणत । संपूरयत । तस्मा इंद्राय कुविद्बहूपकरणं । कुविदिति बहुनामैतत् । असति । अस्तु । किमर्थं । नोऽस्माकं भराय भरणाय पोषणाय । इंद्रः सुष्विमभिषवणशीलं यजमानमवसे तर्पणाय न मृधाति । न बाधते ॥

एवेदिंद्रः सुते अस्तावि सोमे भरद्वाजेषु क्षयदिन्मघोनः ।
असद्यथा जरित्र उत सूरिरिंद्रो रायो विश्ववारस्य दाता ॥ १०॥
एव । इत् । इंद्रः । सुते । अस्तावि । सोमे । भरतऽवाजेषु । क्षयत । इत । मघोनः ।
असत । यथा । जरित्रे । उत । सूरिः । इंद्रः । रायः । विश्वऽवारस्य । दाता ॥ १०॥

मघोनो धनवतो हविष्मतो यजमानस्य क्षयदीश्वर इंद्रः सोमे सुतेऽभिषुते सति भरद्वाजेषु भरद्वाजेष्वेवमस्तावि । स्तुतोऽभूत । इंद्रो जरित्रे स्तोत्रे सूरिः सन्मार्गप्रेरको यथासत भवेत । उतापि च विश्ववारस्य विश्वैर्वरणीयस्य रायो धनस्य दाता यथा भवेत तथास्तावीति संबंधः ॥ इदिति द्वयं पूरणं ॥ ॥१६॥ ॥३॥

तृतीयेऽनुवाके विंशति सूक्तानि । तत्र वृषा मद इति दशर्चं प्रथमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं । वृषेत्यनुक्रांतं ॥ विषुवति निष्केवल्य एतत्सूक्तं । सूत्रितं च । वृषा मदः प्र मंहिष्ठाय । आ० ८. ६ । इति ॥

वृषा मद इंद्रे श्लोक उक्था सचा सोमेषु सुतपा ऋजीषी ।
अर्चत्र्यो मघवा नृभ्य उक्थैर्द्युक्षो राजा गिरामक्षितोतिः ॥१॥
वृषा । मदः । इंद्रे । श्लोकः । उक्था । सचा । सोमेषु । सुतऽपाः । ऋजीषी ।
अर्चत्र्यः । मघऽवा । नृऽभ्यः । उक्थैः । द्युक्षः । राजा । गिरां । अक्षितऽऊतिः ॥१॥

सोमेषु सोमवत्सु यागेष्विंद्रे सोमपानजनितो मदो वृषा यजमानस्य कामानां वर्षको भवति । यद्वा । सर्वजनाह्लादकस्य वर्षणस्य कर्ता भवति । उक्थोक्थेन शस्त्रेण सचा सह श्लोकः स्तोत्ररूपः शब्दो वृषा भवति । सुतपा अभिषुतस्य सोमस्य पाता ऋजीष्यृजीषं गतरसमपि सोमं न परित्यजन्मघवा धनवान् स चेंद्रो नृभ्यः स्तुतीनां नेतृभ्य उक्थैः स्तोत्रैरर्चत्र्योऽर्चनीयो भवति । द्युक्षो द्युलोकनिवासो गिरां स्तुतीनां राजेश्वर इंद्रो ऽक्षितोतिरक्षीणरक्षश्च भवति ॥

ततुरिर्वीरो नर्यो विचेताः श्रोता हवं गृणत उर्व्यूतिः ।
वसुः शंसो नरां कारुधाया वाजी स्तुतो विदथे दाति वाजं ॥२॥
ततुरिः । वीरः । नर्यः । विऽचेताः । श्रोता । हवं । गृणतः । उर्विऽऊतिः ।
वसुः । शंसः । नरां । कारुऽधायाः । वाजी । स्तुतः । विदथे । दाति । वाजं ॥२॥

वाज्यन्नवानिंद्रो विदथे यज्ञेऽस्माभिः स्तुतः सन् वाजमन्नं दाति । अस्मभ्यं ददाति । कीदृश इंद्रः । ततुरिः शत्रूणां हिंसको वीरो विक्रांतो नर्यो नरहितो विचेता विविक्तज्ञानो हवमस्मदीयं स्तोत्रं श्रोता गृणतः स्तुवतः स्तोतृजनस्योर्व्यूतिर्विस्तृतरक्षो वसुर्वासयिता नरां नृणां स्तोतृजनानां शंसः शंसनीयः कारुधायाः कारूणां स्तोतॄणां धारयिता । एवंभूत इंद्रो वाजं ददातीति संबंधः ॥

अक्षो न चक्र्योः शूर बृहन्प्र ते मह्ना रिरिचे रोदस्योः ।
वृक्षस्य नु ते पुरुहूत वया व्यूतयो रुरुहुरिंद्र पूर्वीः ॥३॥
अक्षः । न । चक्र्योः । शूर । बृहन् । प्र । ते । मह्ना । रिरिचे । रोदस्योः ।
वृक्षस्य । नु । ते । पुरुऽहूत । वयाः । वि । ऊतयः । रुरुहुः । इंद्र । पूर्वीः ॥३॥

हे शूर विक्रांतेंद्र बृहन् महान् ते त्वदीयो मह्ना महिमा रोदस्योर्द्यावापृथिव्योः प्र रिरिचे । अतिरिच्यते । द्यावापृथिवीभ्यामित्यर्थः । अत्र दृष्टांतः । चक्र्योश्चक्रयोरक्षो न । रथसंबंध्यक्षो यथा चक्राभ्यां बहिर्गतस्तद्वत् । हे पुरुहूत बहुभिराहूतेंद्र त्वदीयाः पूर्वीर्बह्व्य ऊतयो रक्षा वि रुरुहुः । विशेषेण रोहंति । तत्र दृष्टांतः । वृक्षस्य नु । यथा वृक्षस्य वयाः शाखा विरोहंति तद्वत् ॥

शचीवतस्ते पुरुशाक शाका गवामिव स्रुतयः संचरणीः ।
वत्सानां न तंतयस्त इंद्र दामन्वंतो अदामानः सुदामन् ॥४॥
शचीऽवतः । ते । पुरुऽशाक । शाकाः । गवांऽइव । स्रुतयः । संऽचरणीः ।
वत्सानां । न । तंतयः । ते । इंद्र । दामनऽवंतः । अदामानः । सुऽदामन् ॥४॥

हे पुरुशाक बहुकर्मन्निंद्र शचीवतः प्रज्ञावतस्ते त्वदीयाः शाकाः शक्तयः कर्माणि वा सर्वतः संचरंतीति शेषः । तत्र दृष्टांतः । गवामिव धेनूनां स्रुतयो मार्गा यथा संचरणीः सर्वत्र संचारिण्यो भवंति तद्वत् । अपि च

वत्सानां न तंतयः । तंतिर्नाम दीर्घप्रसारिता रज्जुः यत्र नियंतर्विशाखदामभिर्बहवो वत्सा बध्यंते । यथा तंतयो बहूनां वत्सानां बधका हे सुदामन् शोभनदानेंद्र तथा ते त्वदीयाः शाखा दामन्वतो बंधनवतो बहूनां शत्रूणां बंधका अदामानः स्वयमन्यैरबद्धाः ॥

अन्यद्द्य कर्वरमन्यदु श्वोऽसंच्च सन्मुहुराचक्रिरिंद्रः ।
मित्रो नो अत्र वरुणश्च पूषार्यो वशस्य पर्येतास्ति ॥ ५ ॥
अन्यत् । अद्य । कर्वरं । अन्यत् । ऊं इति । श्वः । असंत् । च । सत् । मुहुः । आऽचक्रिः । इंद्रः ।
मित्रः । नः । अत्र । वरुणः । च । पूषा । अर्यः । वशस्य । परिऽएता । अस्ति ॥ ५ ॥

अयमिंद्रोऽद्यास्मिन्दिवसेऽन्यत्कर्वरं । कर्मनामैतत् । कर्म करोति । अन्यदु अन्यदेवोक्तविलक्षणमेव कर्म श्वः परस्मिन्दिने करोति । एतदेव विव्रियते । असच्चाशुभमशनिपातनादिकं सत् वर्षणादिकं शोभनं कर्म च । यद्वा । त्रिशिरसो विश्वरूपस्य वधादिकमसत्कर्म लोकोपद्रवकारिणो वृत्रादेरसुरस्य वधादिरूपं सत्कर्म च मुहुः पुनः पुनरसाविंद्र आचक्रिः कर्ता भवति । एवं परस्परविलक्षणं कर्म स्वमहिम्ना पुनः पुनरावर्तयन् प्रतिदिवसमन्यदेव परेषामसाधारणं कर्म करोतीत्यर्थः । एवंविध इंद्रोऽत्रास्मिन्यज्ञे नोऽस्माकं वशस्य कामयितव्यस्य फलस्य स्वर्गादेः पर्येतास्ति । परिगमयिता भवतु ॥ अस्तेर्लेटि रूपं ॥ मित्रोऽहरभिमानी देवो वरुणो रात्र्यभिमानी पूषा पोषको देवोऽर्यः प्रेरकः सर्वेषां चेंद्रेण नियम्यमाना अस्मदीयस्य कामस्य परिगमयितारः संतु । यद्वा । मित्रादयोऽप्यत्र स्वप्राधान्येनाभिधीयंते । मित्रादय इंद्रः प्रत्येकमस्मदीयस्य कामस्य पर्येतारः । तथा बृहद्देवतायामुक्तं । प्रीतये ऽन्यदिति त्वेतं वैश्वदेव्यामृचां स्मृत इति ॥ ॥ १७ ॥

वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरिंद्रानयंत यज्ञैः ।
तं त्वाभिः सुष्टुतिभिर्वाजयंत आजिं न जग्मुर्गिर्वाहो अश्वाः ॥ ६ ॥
वि । त्वत् । आपः । न । पर्वतस्य । पृष्ठात् । उक्थेभिः । इंद्र । अनयंत । यज्ञैः ।
तं । त्वा । आभिः । सुस्तुतिऽभिः । वाजयंतः । आजिं । न । जग्मुः । गिर्वाहः । अश्वाः ॥ ६ ॥

हे इंद्र त्वत्त्वत्सकाशादुक्थेभिरुक्थैः शस्त्रैर्यज्ञैर्हविर्भिश्च स्तोतारः कामानात्मनो व्यनयंत । विविधं प्रापयंति । तत्र दृष्टांतः । पर्वतस्याद्रेः पृष्ठादुपरिभागादापो न अप उदकानि यथा तद्वत् । अपि च हे गिर्वाहो गीर्भिः स्तुतिरूपाभिर्वाग्भिर्वहनीयेंद्र तं प्रसिद्धं त्वा त्वां वाजयंतो बलिनं कुर्वंतः । यद्वा । वाजमन्नमिच्छंतो भरद्वाजाः स्तोतार आभिः पूर्वोक्ताभिः सुष्टुतिभिः शोभनाभिः स्तुतिभिर्जग्मुः । प्रापुः । क्षिप्रगमने दृष्टांतः । अश्वा वाहा आजिं न संग्रामं यथा शीघ्रं प्रापुस्तद्वत् ॥

न यं जरंति शरदो न मासा न द्याव इंद्रमवकर्शयंति ।
वृद्धस्य चिद्वर्धतामस्य तनूः स्तोमेभिरुक्थैश्च शस्यमाना ॥ ७ ॥
न । यं । जरंति । शरदः । न । मासाः । न । द्यावः । इंद्रं । अवऽकर्शयंति ।
वृद्धस्य । चित् । वर्धतां । अस्य । तनूः । स्तोमेभिः । उक्थैः । च । शस्यमाना ॥ ७ ॥

शरदः संवत्सरा यमिंद्रं न जरंति न जरयंति नापक्षीणयंति । तथा मासाश्च नापक्षीणयंति । तथा द्यावो दिवसाश्च यमिंद्रं नावकर्शयंति नाल्पीभावयंति वृद्धस्य चित् प्रवृद्धस्याप्यस्येंद्रस्य तनूः शरीरं स्तोमेभिरस्मदीयैः स्तोत्रैरुक्थैश्च शस्त्रैश्च शस्यमाना स्तूयमाना सती वर्धतां । प्रवृद्धा भवतु ॥

न वीळवे नमते न स्थिराय न शर्धते दस्युजूताय स्तवान् ।
अज्ञा इंद्रस्य गिरयश्चिदृष्वा गंभीरे चिद्भवति गाधमस्मै ॥ ८ ॥
न । वीळवे । नमते । न । स्थिराय । न । शर्धते । दस्युऽजूताय । स्तवान ।
अज्राः । इंद्रस्य । गिरयः । चित् । ऋष्वाः । गंभीरे । चित् । भवति । गाधं । अस्मै ॥ ८ ॥

स्तवानस्माभिः स्तूयमान इंद्रो वीळवे दृढगात्राय यजमानाय न नमते । न वशीभवति । स्थिराय युद्धेऽविचलिताय च न नमते । शर्धते उत्सहमानाय दस्युजूताय कर्मवर्जितैः प्रेरिताय यजमानाय न वशीभवति । यद्यपि स्तोतारो बहुगुणाः संति तथापींद्रस्तेभ्यो दस्युसहितेभ्यो न वशीभवतीत्यर्थः । अपि च ऋष्वा महांतो गिरयश्चित्पर्वता अपींद्रस्याज्राः सुगमनाः क्षेपणीया भवंति । गभीरे चिदगाधेऽपि स्थानेऽस्मा इंद्राय गाधमेव स्थानं विषयो भवति ॥

गंभीरेण न उरुणामत्रिन्प्रेषो यंधि सुतपावन्वाजान् ।
स्था ऊ षु ऊर्ध्व ऊती अरिषण्यन्नक्तोर्व्युष्टौ परितक्म्यायां ॥ ९ ॥
गंभीरेण । नः । उरुणा । अमत्रिन । प्र । इषः । यंधि । सुतऽपावन । वाजान ।
स्थाः । ऊं इति । सु । ऊर्ध्वः । ऊती । अरिषण्यन । अक्तोः । विऽउष्टौ । परिऽतक्म्यायां ॥ ९ ॥

हे अमत्रिन । अमत्रं बलं । तद्वन् हे सुतपावन सुतस्य सोमस्य पातरिंद्र गंभीरेण केनापि दुरवगाहेनोरुणा विस्तीर्णेन मनसा नोऽस्मभ्यमिषोऽन्नानि वाजान्बलानि च प्र यंधि । प्रयच्छ । किंचाक्तो रात्रेर्व्युष्टौ विवासेऽह्नि परितक्म्यायां रात्रौ हे इंद्र त्वमूती अस्माकं रक्षार्थं हे इंद्र अरिषण्यन्नहिंसंस्त्वमूर्ध्व उद्युक्तः स्था ऊ षु । सुष्ठु तिष्ठैव ॥

सचस्व नायमवसे अभीक इतो वा तमिंद्र पाहि रिषः ।
अमा चैनमरण्ये पाहि रिषो मदेम शतहिमाः सुवीराः ॥ १० ॥
सचस्व । नायं । अवसे । अभीके । इतः । वा । तं । इंद्र । पाहि । रिषः ।
अमा । च । एनं । अरण्ये । पाहि । रिषः । मदेम । शतऽहिमाः । सुऽवीराः ॥ १० ॥

हे इंद्र त्वं नाय कर्मणां स्तुतीनां च नेतारमभीके संग्रामेऽवसे रक्षणाय सचस्व । सेवस्व । इतो वास्मात्संनिकृष्टाच्च रिषः शत्रोरमुतो विप्रकृष्टाच्छत्रोश्च । वाशब्दोऽनुक्तेन विवक्षितेन समुच्चयः । हे इंद्र तं स्तोतारं पाहि । रक्ष । तथामा च गृहे च । अमेति गृहनाम । अरण्ये कानने च रिषः शत्रोः पाहि । तं रक्ष । तदनंतरं सुवीराः शोभनपुत्रा वयं शतहिमाः शतसंवत्सराणि मदेम । हृष्याम ॥ ॥ १८ ॥

या त ऊतिरिति नवर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं । तथा चानुक्रांतं । या ते नवेति ॥ पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनीदं सूक्तं निष्केवल्यनिविद्धानं । सूत्रितं च । या त ऊतिरवमेति मध्यंदिनः । आ॰ ७ ६. । इति ॥

या त ऊतिरवमा या परमा या मध्यमेंद्र शुष्मिन्नस्ति ।
ताभिरू षु वृत्रहत्येऽवीर्न एभिश्च वाजैर्महान्न उग्र ॥ १ ॥
या । ते । ऊतिः । अवमा । या । परमा । या । मध्यमा । इंद्र । शुष्मिन् । अस्ति ।
ताभिः । ऊं इति । सु । वृत्रऽहत्ये । अवीः । नः । एभिः । च । वाजैः । महान् । नः । उग्र ॥ १ ॥

हे शुष्मिन् बलवन्निंद्र ते त्वदीया योतिर्या रक्षावमाधमास्ति । या परमोत्कृष्टास्ति । या मध्यमास्ति ताभिरूतिभिर्वृत्रहत्ये युद्धे नोऽस्मान् सु अत्यंतमवीः । पालय । किंच हे उग्रोद्गूर्णेंद्र महांस्त्वमेभिर्भोज्यसाधनैर्वाजैरन्नैश्च नोऽस्मान् संयोजयेति शेषः ॥

आभिः स्पृधो मिथतीररिषण्यन्नमित्रस्य व्यथया मन्युमिंद्र ।
आभिर्विश्वा अभियुजो विषूचीरार्याय विशोऽव तारीर्दासीः ॥२॥

आभिः । स्पृधः । मिथतीः । अरिषण्यन् । अमित्रस्य । व्यथय । मन्युं । इंद्र ।
आभिः । विश्वाः । अभिऽयुजः । विषूचीः । आर्याय । विशः । अव । तारीः । दासीः ॥२॥

हे इंद्र आभिरस्मदीयाभिः स्तुतिभिर्मिथतीः शत्रुसैन्यानि हिंसतीः स्पृधोऽस्मदीयाः सेना अरिषण्यन् हिंसन् । पालयन्नित्यर्थः । अमित्रस्य शत्रोर्मन्युं संग्रामादिषु विद्यमानं कोपं व्यथय । नाशय । अपि चाभिः स्तुतिभिरवाभियुजोऽभियोक्त्रीर्विषूचीः सर्वतो विद्यमाना दासीः कर्मणामुपक्षपयित्रीर्विश्वाः सर्वा विशः प्रजा आर्याय यज्ञादिकर्मकृते यजमानायाव तारीः । विनाशय ॥

इंद्र जामय उत येऽजामयोऽर्वाचीनासो वनुषो युयुज्रे ।
त्वमेषां विथुरा शवांसि जहि वृष्ण्यानि कृणुही पराचः ॥३॥

इंद्र । जामयः । उत । ये । अजामयः । अर्वाचीनासः । वनुषः । युयुज्रे ।
त्वं । एषां । विथुरा । शवांसि । जहि । वृष्ण्यानि । कृणुहि । पराचः ॥३॥

हे इंद्र जामयो ज्ञातिरूपाः समीपस्था ये शत्रवः । उतापि चाजामयो दूरदेशे स्थिता ये शत्रवोऽर्वाचीनासोऽस्मदभिमुखा वनुषो हिंसंतो युयुज्रे उद्युक्ता भवंति एषामुभयविधानां शत्रूणां संबंधीनि शवांसि बलानि विथुरा विथुराणि हीनानि त्वं कुर्विति शेषः । तथा वृष्ण्यान्येषां वीर्याणि जहि । नाशय । किंच पराच उभयविधान् शत्रून्पराचः पराङ्मुखान् कृणुहि । कुरु ॥

शूरो वा शूरं वनते शरीरैस्तनूरुचा तरुषि यत्कृण्वैते ।
तोके वा गोषु तनये यदप्सु वि क्रंदसी उर्वरासु ब्रवैते ॥४॥

शूरः । वा । शूरं । वनते । शरीरैः । तनूऽरुचा । तरुषि । यत् । कृण्वैते इति ।
तोके । वा । गोषु । तनये । यत् । अपऽसु । वि । क्रंदसी इति । उर्वरासु । ब्रवैते इति ॥४॥

हे इंद्र शूरस्त्वदनुगृहीतो वीरः शरीरैरंगैः शूरं वा वीरमपि वनते । हंति । वेत्ययमपीत्यस्यार्थे वर्तते । यद्वा । वेत्यनेन विकल्पाभिधायकेनाशूरो वा त्वदनुगृहीतः सन् शूरं वनते । कदा वनत इत्यत आह । तनूरुचा शरीरेण शोभमानौ परस्परविरोधिनौ तरुषि युद्धे यद्यदा कृण्वैते संग्रामं कुर्वाते । यद्यदा च तोके वा पुत्रनिमित्ते वा गोषु निमित्तभूतासु वा तनये पौत्रे निमित्तभूते वाप्सूदकेषु निमित्तेषु उर्वरासु सर्वसस्याढ्यासु भूमिषु निमित्तासु क्रंदसी क्रंदमानावाक्रोशंतौ वि ब्रवैते विवदेते । हे इंद्र पुत्रादिलाभजयस्त्वदनुगृहीतस्य भवतीत्यर्थः ॥

नहि त्वा शूरो न तुरो न धृष्णुर्न त्वा योधो मन्यमानो युयोध ।
इंद्र नकिष्ट्वा प्रत्यस्त्येषां विश्वा जातान्यभ्यसि तानि ॥५॥

नहि। त्वा। शूरः। न। तुरः। न। धृष्णुः। न। त्वा। योधः। मन्यमानः। युयोध।
इंद्र। नकिः। त्वा। प्रति। अस्ति। एषां। विश्वा। जातानि। अभि। असि। तानि ॥५॥

हे इंद्र त्वा त्वया सह शूरो विक्रांतजनो नहि युयोध। न युध्यते। तथा तुरोऽन्येषां शत्रूणां हिंसको ऽतस्त्वया न युयोध। धृष्णुर्धर्षको न युयोध। मन्यमानो युद्धे क्रुध्यन् योधो भटस्त्वा त्वया न युयोध। हे इंद्र एषां शूरादीनां मध्ये कश्चन त्वा तव नकिः प्रत्यस्ति। प्रतिनिधिर्नास्ति। विश्वा विश्वानि जातानि प्रादुर्भूतानि तानि शूरादीनि त्वमभ्यसि। अभिभवसि ॥ ॥१९॥

स पत्यत उभयोर्नृम्णमयोर्यदी वेधसः समिथे हवंते।
वृत्रे वा महो नृवति क्षये वा व्यचस्वंता यदि वितंतसैते ॥६॥
सः। पत्यते। उभयोः। नृम्णं। अयोः। यदि। वेधसः। संऽइथे। हवंते।
वृत्रे। वा। महः। नृऽवति। क्षये। वा। व्यचस्वंता। यदि। वितंतसैते इति ॥६॥

अयोरनयोरुभयोर्मध्ये स जनो नृम्णं धनं पत्यते। ईष्टे। कयोर्मध्ये क ईष्ट इत्येतदुभयमाह। यदि यस्य जनस्य। यदीति निपातो यस्यार्थे वर्तते। समिथे यज्ञे वेधसः कर्मणां विधातार ऋत्विजो हवंते इंद्रं स्तुवंति स ईष्ट इति संबंधः। महो महति प्रभूते वृत्रे वा निरोधे निमित्ते वा नृवति परिचारकमनुष्ययुक्ते क्षये वा गृहनिमित्ते वा व्यचस्वंता यदि यौ जनौ। यदीति यावित्यर्थे वर्तते। वितंतसैते वियुध्येते तयोर्मध्य इति संबधः॥ तसिरुपक्षयकर्मणो विपूर्वाद्वितंतसैते इति भवति। यद्वा। तंतस इति धातुः कंड्वादिषु पठ्यते तस्मादिदं रूपमिति ॥

अध स्मा ते चर्षणयो यदेजानिंद्र त्रातोत भवा वरूता।
अस्माकासो ये नृतमासो अर्य इंद्र सूरयो दधिरे पुरो नः ॥७॥
अध। स्म। ते। चर्षणयः। यत्। एजान्। इंद्र। त्राता। उत। भव। वरूता।
अस्माकासः। ये। नृऽतमासः। अर्यः। इंद्र। सूरयः। दधिरे। पुरः। नः ॥७॥

अध स्मापि च हे इंद्र ते त्वदीयाश्चर्षणयः पुरुषा यद्यदेजान एजेयुर्भीत्या कंपेयुः त्वं तेषां त्राता पालको भव। उतापि च वरूता संभक्ता भव। अस्माकासोऽस्मदीया नृतमासो नेतृतमा ये मनुष्या हे इंद्र त्वामर्यो ऽरयो। प्रापयितार इत्यर्थः। तेषां त्राता भव। हे इंद्र सूरयो ये स्तोतारो नोऽस्मान्पुरो दधिरे पुरश्चक्रिरे तेषां च त्राता भवति ॥

साकमेधेषु माहेंद्रामिष्टाविंद्रस्य वृत्रघ्नो याज्या। सूचितं च। अनु ते दायि मह इंद्रियाय विश्वकर्मन्हविषा वावृधानः। आ॰ २. १८। इति ॥ अनुक्रीनाम्न्येकाहे निष्केवल्य एषेव सूक्तमुखीया। सूचितं च। अनु ते दायि मह इंद्रियाय कथो नु ते परि चराणि विद्वानिति द्वे। आ॰ ९. ५.। इति ॥

अनु ते दायि मह इंद्रियाय सत्रा ते विश्वमनु वृत्रहत्ये।
अनु क्षत्रमनु सहो यजत्रेंद्र देवेभिरनु ते नृषह्ये ॥८॥
अनु। ते। दायि। महे। इंद्रियाय। सत्रा। ते। विश्वं। अनु। वृत्रऽहत्ये।
अनु। क्षत्रं। अनु। सहः। यजत्र। इंद्र। देवेभिः। अनु। ते। नृऽसह्ये ॥८॥

हे इंद्र महे महति ते तुभ्यमिंद्रियायैश्वर्यार्थमनु दायि। अन्वदायि। अनुदीयते स्म। वृत्रहत्ये वृत्रवधे

निमित्ते ते तुभ्यं विश्वं समस्तं सत्रा सत्यमनु दायि। कः किमनु दायीति तदुभयमाह। येन विश्वं बिभर्ति तत्क्षत्रं बलमनु दायि। येन शत्रूनभिभवति तद्गुणविशिष्टं सहो बलमनु दायि। हे यजत्र यजनीयेंद्र ते तुभ्यं नृषह्ये युद्धे देवेभिः सर्वैर्देवैस्तत्सर्वमनु दायि ॥

एवा नः स्पृधः समजा समत्स्विंद्र रारंधि मिथतीरदेवीः ।
विद्याम वस्तोरवसा गृणंतो भरद्वाजा उत त इंद्र नूनं ॥९॥
एव । नः । स्पृधः । सं । अज । समत्ऽसु । इंद्र । ररंधि । मिथतीः । अदेवीः ।
विद्याम । वस्तोः । अवसा । गृणंतः । भरत्ऽवाजाः । उत । ते । इंद्र । नूनं ॥९॥

हे इंद्र एवैवं स्तुतस्त्वं नोऽस्मदीयाः स्पृधः शत्रुसेनाः समत्सु संग्रामेषु समज। शत्रुवधार्थं प्रेरय। किंच मिथतीर्हिंसतीरदेवीरासुरीः सेना ररंधि। अस्मदर्थं वशीकुरु। उतापि च हे इंद्र ते गृणतस्त्वा स्तुवतो भरद्वाजा वयमवसान्नेन सह वस्तोर्वासस्य। निवासमित्यर्थः। नूनमवश्यं विद्याम। लभेमहि ॥ ॥२०॥

श्रुधी न इंद्रेत्यष्टर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं। तथा चानुक्रम्यते। श्रुधी नोऽष्टाविति। विनियोगो लैंगिकः ॥

श्रुधी नं इंद्र ह्वयामसि त्वा महो वाजस्य सातौ वावृषाणाः ।
सं यद्विशोऽयंत शूरसाता उग्रं नोऽवः पार्ये अहन्दाः ॥१॥
श्रुधि । नः । इंद्र । ह्वयामसि । त्वा । महः । वाजस्य । सातौ । ववृषाणाः ।
सं । यत् । विशः । अयंत । शूरऽसातौ । उग्रं । नः । अवः । पार्ये । अहन् । दाः ॥१॥

हे इंद्र ववृषाणाः सोमैस्त्वा सिंचंतो वयं स्तोतारो महो महतो वाजस्यान्नस्य सातौ लाभार्थं त्वा त्वा ह्वयामसि। आह्वयामः। हे इंद्र त्वं नोऽस्माकं तदाह्वानं श्रुधि। शृणु। यद्यदा विशो जनाः शूरसातौ युद्धे समयंत संगच्छंते तदा पार्येऽतिमऽहन्नहनि दिवसे नोऽस्मभ्यमुग्रमुद्गूर्णमवो रक्षणं दाः। अदाः। प्रयच्छ ॥

त्वां वाजी हवते वाजिनेयो महो वाजस्य गध्यस्य सातौ ।
त्वां वृत्रेष्विंद्र सत्पतिं तरुत्रं त्वां चष्टे मुष्टिहा गोषु युध्यन् ॥२॥
त्वां । वाजी । हवते । वाजिनेयः । महः । वाजस्य । गध्यस्य । सातौ ।
त्वां । वृत्रेषु । इंद्र । सत्ऽपतिं । तरुत्रं । त्वां । चष्टे । मुष्टिऽहा । गोषु । युध्यन् ॥२॥

वाजी हविर्लक्षणान्नवान्वाजिनेयो वाजिन्याः पुत्रो भरद्वाजो हे इंद्र त्वा गध्यस्य सर्वैः प्राप्यस्य महो महतो वाजस्यान्नस्य सातौ लाभे निमित्ते हवते। स्तौति। अपि च हे इंद्र सत्पतिं सज्जनानां पालकं तरुत्रं दुर्जनानां तारकं त्वा वृत्रेषूपद्रवेषु निमित्तेषु भरद्वाजो हवते। मुष्टिहा मुष्टिबलेन शत्रूणां हंता गोषु निमित्तभूतासु युध्यन् शत्रुभिः सह युद्धं कुर्वन् भरद्वाजस्त्वा चष्टे। पश्यति। प्रतिपालयते ॥

त्वं कविं चोदयोऽर्कसातौ त्वं कुत्साय शुष्णं दाशुषे वर्क् ।
त्वं शिरो अमर्मणः पराहन्नतिथिग्वाय शंस्यं करिष्यन् ॥३॥
त्वं । कविं । चोदयः । अर्कऽसातौ । त्वं । कुत्साय । शुष्णं । दाशुषे । वर्क् ।
त्वं । शिरः । अमर्मणः । परा । अहन् । अतिथिऽग्वाय । शंस्यं । करिष्यन् ॥३॥

हे इंद्र त्वमर्कसातावन्नलाभार्थं कविं भार्गवमृषिं चोदयः। अचोदयः। प्रेरय। किंच हे इंद्र त्वं दाशुषे हविर्दत्तवते कुत्साय शुष्णमसुरं वर्कः। छेदितवानसि॥ वर्गिति वृणक्तेश्छेदनार्थस्य लुङि रूपं॥ तथा त्वमतिथिग्वायातिथीनामभिगंत्रे दिवोदासाय शंस्य स्तुत्यं सुखं करिष्यन् अमर्मणो मर्महीनमात्मानं मन्यमानस्य शंबरस्य शिरः शीर्षं पराहन्। अवधीः॥

त्वं रथं प्र भरो योधमृष्वमावो युध्यंतं वृषभं दशद्युं।
त्वं तुग्रं वेतसवे सचाहन्त्वं तुजिं गृणंतमिंद्र तूतोः॥४॥
त्वं। रथं। प्र। भरः। योधं। ऋष्वं। आवः। युध्यंतं। वृषभं। दशऽद्युं।
त्वं। तुग्रं। वेतसवे। सचा। अहन्। त्वं। तुजिं। गृणंतं। इंद्र। तूतोरिति तूतोः॥४॥

हे इंद्र त्वं वृषभसंज्ञकाय राज्ञे योधं युद्धसाधनमृष्वं महांतं रथं प्र भरः। प्रापयः। अपि च युध्यंतं शत्रुभिः सह युद्धं कुर्वंतं दशद्युं दश दिवसा युध्यतो यस्य गतास्तं वृषभमेतदाख्यं राजानमावः। युद्धादपीपलः। किंच त्वं वेतसवे एतन्नाम्ने राज्ञे सचा सहायभूतः सन् तुग्रमसुरमहन्। हतवानसि। वेतसुर्नाम कश्चिदसुरः। अत्र तस्मादन्योऽसावुच्यते। यद्वा। वेतसव इति तृतीयार्थे चतुर्थी। वेतसुनासुरेण सहितं तुग्रं हतवानसि। तथा च मंत्रांतरे श्रूयते। अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रंधयं। ऋसं० १०. ४९. ४.। इति। हे इंद्र त्वं गृणंतं त्वा स्तुवंतं तुजिमेतदाख्यं राजानं तूतोः। अवर्धयः॥

त्वं तदुक्थमिंद्र बर्हणा कः प्र यच्छता सहस्रा शूर दर्षि।
अव गिरेर्दासं शंबरं हन्प्रावो दिवोदासं चित्राभिरूती॥५॥
त्वं। तत्। उक्थं। इंद्र। बर्हणा। करिति कः। प्र। यत्। शता। सहस्रा। शूर। दर्षि।
अव। गिरेः। दासं। शंबरं। हन्। प्र। आवः। दिवःऽदासं। चित्राभिः। ऊती॥५॥

हे इंद्र बर्हणा बर्हणः शत्रूणां हिंसकस्त्वमुक्थं प्रशस्यं तत्कर्म कः। अकरोः। किं तत्कर्मेत्युच्यते। हे शूर वीरेंद्र त्वं शता शतानि सहस्रा सहस्राणि च शंबरस्यानुचरान् भटान्प्र दर्षि। विदारितवानसि। तथा च निगमांतरं। अध्वर्यवो यः शतं शंबरस्य। ऋसं० २. १४. ६.। इति। तथा त्वं दासं यज्ञादिकर्मणामुपक्षपयितारं गिरेः पर्वतान्निर्गतं शंबरमसुरमव हन्। अवावधीः। तथापि श्रूयते। यः शंबरं पर्वतेषु क्षियंतं। ऋसं० २. १२. ११.। इति। किंच चित्राभिर्विचित्राभिरूती ऊतिभी रक्षाभिर्दिवोदासं राजानं प्रावः। प्रकर्षेण पालयसि स्म॥ ॥२१॥

त्वं श्रद्धाभिर्मंदसानः सोमैर्दभीतये चुमुरिमिंद्र सिष्वप्।
त्वं रजिं पिठीनसे दशस्यन्षष्टिं सहस्रा शच्या सचाहन्॥६॥
त्वं। श्रद्धाभिः। मंदसानः। सोमैः। दभीतये। चुमुरिं। इंद्र। सिस्वप्।
त्वं। रजिं। पिठीनसे। दशस्यन्। षष्टिं। सहस्रा। शच्या। सचा। अहन्॥६॥

हे इंद्र श्रद्धाभिः श्रद्धापुरःसरमादरातिशयेनानुष्ठितैः कर्मभिर्मंदसानो मोदमानः। यच्छ्रद्धया युक्तं कर्म तत्सारवद्भवति। तथा च श्रूयते। यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति। छा० उ० १. १. १०.। इति। सोमैश्च मदसानस्त्वं दभीतये एतन्नामकाय राजर्षये चुमुरिमेतदाख्यमसुरं सिष्वप्। अस्वापयः। अवधीरित्यर्थः। किंच हे इंद्र त्वं पिठीनसे एतन्नामकाय रजिमेतदाख्यां कन्यां वा राज्यं वा दशस्यन् प्रयच्छन् शच्या प्रज्ञया षष्टिं षष्टिसंख्याकानि सहस्रा भटानां सहस्राणि सचा सह युगपदेवाहन्। अवधीः॥

अहं चन तत्सूरिभिरानश्यां तव ज्याय इंद्र सुम्नमोजः ।
त्वया यत्स्तवंते सधवीर वीरास्त्रिवरूथेन नहुषा शविष्ठ ॥ ७॥
अहं । चन । तत् । सूरिऽभिः । आनश्यां । तव । ज्यायः । इंद्र । सुम्नं । ओजः ।
त्वया । यत् । स्तवंते । सधऽवीर । वीराः । त्रिऽवरूथेन । नहुषा । शविष्ठ ॥ ७॥

हे सधवीर वीरैः सहित शविष्ठ बलवत्तमेंद्र वीराः स्तोतारस्त्रिवरूथेन । त्रीणि वरूथान्यावरकाणि भुवनानि यस्य तेन । नहुषा शत्रूणां बंधकेन त्वया दत्तं यत्सुम्नं सुखमोजो बलं च स्तवंते स्तुवंति हे इंद्र तव त्वया दत्तं ज्यायोऽतिशयेन प्रशस्यं तत्सुम्नमोजोऽहं चनाहमपि भरद्वाजो सूरिभिर्मदीयैः स्तोतृभिः सहानश्यां । प्राप्नुयां ॥

वयं ते अस्यामिंद्र द्युम्नहूतौ सखायः स्याम महिन प्रेष्ठाः ।
प्रातर्दनिः क्षत्रश्रीरस्तु श्रेष्ठो घने वृत्राणां सनये धनानां ॥ ८॥
वयं । ते । अस्यां । इंद्र । द्युम्नऽहूतौ । सखायः । स्याम । महिन । प्रेष्ठाः ।
प्रातर्दनिः । क्षत्रऽश्रीः । अस्तु । श्रेष्ठः । घने । वृत्राणां । सनये । धनानां ॥ ८॥

हे महिन पूजनीयेंद्र ते त्वदर्थं सखायः स्तोतारो वयमस्यां द्युम्नहूतावस्मिन्धननिमित्ते स्तोत्रे प्रेष्ठा अतिशयेन प्रियाः स्याम । भवेम । प्रातर्दनिः । प्रतर्दनो नाम राजा । तस्य पुत्रः क्षत्रश्रीस्तन्नामको मम याज्यो राजा श्रेष्ठोऽस्तु । सर्वेषामुत्कृष्टो भवतु । किमर्थं । वृत्राणां शत्रूणां घने वधाय च धनानां वसूनां सनये संभजनाय च श्रेष्ठोऽस्त्विति संबंधः ॥ ॥ २२ ॥

किमस्य मद इत्यष्टर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं । अनुक्रांतं च । किमस्याद्या चायमानस्याभ्यावर्तिनो दानस्तुतिः । भरद्वाज ऋषिः । त्रिष्टुप् छंदः । अत्यायास्तु दानस्तुतिरूपत्वात्तया तेनोच्यत इति न्यायेन दानमेव देवता ॥ विनियोगो लैंगिकः ॥

किमस्य मदे किम्वस्य पीताविंद्रः किमस्य सख्ये चकार ।
रणा वा ये निषदि किं ते अस्य पुरा विविद्रे किमु नूतनासः ॥ १॥
किं । अस्य । मदे । किं । ऊं इति । अस्य । पीतौ । इंद्रः । किं । अस्य । सख्ये । चकार ।
रणाः । वा । ये । निऽसदि । किं । ते । अस्य । पुरा । विविद्रे । किं । ऊं इति । नूतनासः ॥ १॥

भरद्वाज ऋषिः फलविलंबनासहिष्णुः सन् अनयेंद्रमाक्षिपति । अस्य सोमस्य मदे सतींद्रः किं चकार । कृतवान् । किमु किंचास्य सोमस्य पीतौ पाने सति किं चकार । अस्य सोमस्य सख्ये सखित्वे किं चकार । पानात्पूर्वमिंद्रः सोमेन सह वसतीत्यर्थः । अस्य सोमस्य निषदि गृहे रणा वा ये स्तोतारश्च संति ते स्तोतारः पुरा पूर्वं हे इंद्र ते त्वत्तः किं विविद्रे । किं लेभिरे । नूतनासो नूतना इदानींतनाः स्तोतारश्च किमु लेभिरे ॥

सदस्य मदे सद्वस्य पीताविंद्रः सदस्य सख्ये चकार ।
रणा वा ये निषदि सत्ते अस्य पुरा विविद्रे सदु नूतनासः ॥ २॥
सत् । अस्य । मदे । सत् । ऊं इति । अस्य । पीतौ । इंद्रः । सत् । अस्य । सख्ये । चकार ।
रणाः । वा । ये । निऽसदि । सत् । ते । अस्य । पुरा । विविद्रे । सत् । ऊं इति । नूतनासः ॥ २॥

एवमाक्षिप्त इंद्रस्तस्मा ऋषय ईप्सितं धनं प्रददौ । तदनंतरमृषिरिंद्रसकाशात्संपूर्णकामः सन् पुरा यान्युपालंभप्रतिपादकानि वाक्यान्युवोचेदानीं तानि निराकरोति । इंद्रोऽस्य सोमस्य मदे सत् शुभं कर्म चकार । अस्य सोमस्य पीतौ पाने सत् शुभं कर्म चकार । अस्य सख्ये सत् शुभं चकार । ये त्वा वा स्तोतारस्ते निषदि गृहे । यज्ञगृह इत्यर्थः । पुरा पूर्वं हे इंद्र ते त्वत्तः सत् शुभं कर्म विविद्रे । लेभिरे । नूतनास इदानीतनाः स्तोतारः सद् शुभमेव कर्म लेभिरे ॥

नहि नु ते महिमनः समस्य न मघवन्मघवत्त्वस्य विद्म ।
न राधसोराधसो नूतनस्येंद्र नकिर्ददृश इंद्रियं ते ॥३॥

नहि । नु । ते । महिमनः । समस्य । न । मघऽवन् । मघवत्ऽत्वस्य । विद्म ।
न । राधसःऽराधसः । नूतनस्य । इंद्र । नकिः । ददृशे । इंद्रियं । ते ॥३॥

हे मघवन्धनवन्निंद्र ते त्वदीयस्य समस्य समस्तस्य महिमनो महिम्नो महिमानं नहि विद्म । वयं न जानीमः ॥ नुशब्दः पूरणः ॥ तथा मघवत्त्वस्य त्वदीयस्य धनिकत्वस्य च वयं न जानीमः । नूतनस्य स्तुत्यस्य राधसो राधसस्त्वदीयं सर्वं धनं च न जानीमः ॥ सर्वत्र द्वितीयार्थे षष्ठी ॥ हे इंद्र ते त्वदीयमिंद्रियं सामर्थ्यं नकिर्ददृशे । केनापि न दृश्यते ॥

एतत्त्यत्त इंद्रियमचेति येनावधीर्वरशिखस्य शेषः ।
वज्रस्य यत्ते निहतस्य शुष्मात्स्वनाच्चिदिंद्र परमो ददार ॥४॥

एतत् । त्यत् । ते । इंद्रियं । अचेति । येन । अवधीः । वरऽशिखस्य । शेषः ।
वज्रस्य । यत् । ते । निऽहतस्य । शुष्मात् । स्वनात् । चित् । इंद्र । परमः । ददार ॥४॥

हे इंद्र येन वीर्येण वरशिखस्य । वरशिखो नाम कश्चिदसुरः । तस्य शेषः शेषांसि पुत्रान् । शेष इत्यपत्यनामैतत् । अवधीः अहिंसीः ते त्वदीयमेतत्त्यत्तदिदमिंद्रियं वीर्यमचेति । अस्माभिरज्ञायि । हे इंद्र यद्यस्माच्छुष्माद्बलान्निहतस्य प्रेरितस्य त्वदीयवज्रस्य स्वनाच्चित् ध्वनेरेव परमो वरशिखस्य पुत्राणां मध्ये बलाद्याधिक्येनोत्कृष्टः कश्चित्पुत्रो ददार अदीर्यत ॥

वधीदिंद्रो वरशिखस्य शेषोऽभ्यावर्तिने चायमानाय शिक्षन् ।
वृचीवतो यद्धरियूपीयायां हन्पूर्वे अर्धे भियसापरो दर्त् ॥५॥

वधीत् । इंद्रः । वरऽशिखस्य । शेषः । अभिऽआवर्तिने । चायमानाय । शिक्षन् ।
वृचीवतः । यत् । हरिऽयूपीयायां । हन् । पूर्वे । अर्धे । भियसा । अपरः । दर्त् ॥५॥

पूर्वोक्तमेवार्थमनया विवृणोति । अयमिंद्रश्चायमानाय चयमानस्य राज्ञः पुत्रायाभ्यावर्तिन एतन्नामकाय राज्ञे शिक्षन् ईप्सितानि वसूनि प्रयच्छन् वरशिखस्यासुरस्य शेषः पुत्रान्वधीत् । अवधीत् । अहिंसीत् । वरशिखस्य पुत्रान् कथमवधीदित्युच्यते । यद्यदायमिंद्रो हरियूपीयायां । हरियूपीया नाम काचिन्नदी काचिन्नगरी वा । तस्याः पूर्वेऽर्धे प्राग्भागे स्थितान् वृचीवतः । वृचीवान् नाम वरशिखस्य कुलोत्पन्नः पूर्वः । तद्गोत्रजान्वरशिखस्य पुत्रान् हन् अवधीत् तदापरोऽपरभागे स्थितो वरशिखस्य श्रेष्ठः पुत्रो भियसा भीत्या दर्त् । दीर्णोऽभूत् ॥ ॥२३॥

त्रिंशच्छतं वर्मिण इंद्र साकं यव्यावत्यां पुरुहूत श्रवस्या ।
वृचीवंतः शरवे पत्यमानाः पात्रा भिंदाना न्यर्थान्यायन् ॥६॥

त्रिंशत्ऽशतं । वर्मिणः । इंद्र । साकं । यव्याऽवत्यां । पुरुऽहूत । श्रवस्या ।
वृचीवंतः । शरवे । पत्यमानाः । पात्रा । भिंदानाः । निऽअर्थानि । आयन् ॥६॥

इदानीमुक्तमेवार्थं विवृणोति । हे पुरुहूत बहुभिराहूतेंद्र श्रवस्या श्रवस्यया । श्रवोऽन्नं यशो वा । तद्वाञ्छया युद्धे त्वा जित्वान्नं प्राप्स्याम यशो वा प्राप्स्यामीति कामयमानाः शरवे हिंसार्थं । त्वां हिंसितु मित्यर्थः । पत्यमाना अभिपततोऽभिगच्छंतः पात्रा पात्राणि यज्ञसाधनानि भिंदाना भिंदंतो वर्मिणः कवच भूतास्त्रिंशच्छत त्रिंशदधिकशतसंख्याका वृचीवंतो वरशिखस्य पुत्राः साकं युगपदेव यव्यावत्यां पूर्वोक्तायां हरियूपीयायां न्यर्थान्यर्थशून्यान्यायन् । अगच्छन् । विनाशं प्राप्नुवन्नित्यर्थः ॥

यस्य गावावरुषा सूयवस्यू अंतरू षु चरतो रेरिहाणा ।
स सृंजयाय तुर्वशं परादाद्वृचीवंतो दैववाताय शिक्षन् ॥७॥
यस्य । गावौ । अरुषा । सुयवस्यू इति सुऽयवस्यू । अंतः । ऊं इति । सु । चरतः । रेरिहाणा ।
स । सृंजयाय । तुर्वशं । परा । अदात् । वृचीवंतः । दैवऽवाताय । शिक्षन् ॥७॥

अरुषारुषौ रोचमानौ सुयवस्यू शोभनतृणानीच्छंतौ रेरिहाणा लेलिहानौ पुनः पुनर्घासमास्वादयंतौ । यद्वा । गतिविशेषं कुर्वंतौ । यस्येंद्रस्य संबंधिनौ गावावश्वावंतर्द्यावापृथिव्योर्मध्येऽंतरिक्षे चरतो गच्छतः ॥ उ सु इतीमौ पूरणौ ॥ स इंद्रः सृंजयायैतन्नामकाय राज्ञे तुर्वशं राजानं परादात् । प्रददौ । किं कुर्वन् । वृचीवतो वारशिखान् दैववाताय देववातवंशोत्पन्नायाभ्यावर्तिने राज्ञे शिक्षन् वशीकुर्वन् । तेषां धनानि प्रयच्छन्निति वा ॥

द्वयाँ अग्ने रथिनो विंशतिं गा वधूमंतो मघवा मह्यं संराट् ।
अभ्यावर्ती चायमानो ददाति दूणाशेयं दक्षिणा पार्थवानां ॥८॥
द्वयान् । अग्ने । रथिनः । विंशतिं । गाः । वधूऽमंतः । मघऽवा । मह्यं । संऽराट् ।
अभिऽआवर्ती । चायमानः । ददाति । दुःऽनशा । इयं । दक्षिणा । पार्थवानां ॥८॥

अधुना भरद्वाजः स्वस्मा अभ्यावर्तिना दत्तं धनजातमनेन प्रकथयति । हे अग्ने मघवा धनवान् प्रभूतदानो वा सम्राट् राजसूययाजी चायमानश्चयमानस्य पुत्रोऽभ्यावर्त्येतदाख्यो राजा रथिनो रथसहितान्वधूमतः स्त्रीयुक्तान् द्वयान्मिथुनभूतान् विंशतिं विंशतिसंख्याकान् गाः पशून्मह्यं ददाति । प्रायच्छत् । पार्थवानां पृथोर्वंशजस्याभ्यावर्तिनो राज्ञः संबंधिनी ॥ पूजार्थं बहुवचनं ॥ इयं दक्षिणा दूर्णशा केनापि नाशयितुमशक्या भवति ॥ ॥२४॥

आ गाव इत्यष्टर्चं पंचमं सूक्तं । अत्रेयमनुक्रमणिका । आ गावो गव्यं द्वितीयैंद्री वान्त्यश्च पादोऽत्यानुष्टुप् जागतमृचो द्वितीयादिरिति । भरद्वाज ऋषिः । इंद्रो यज्वन इत्याद्यमृचो जागतः । उपेदमित्यत्यानुष्टुप् शिष्टास्त्रतस्त्रिष्टुभः । कृत्स्नस्य गौर्देवता द्वितीयायाः सूक्तांत्यपादस्य च विकल्पेनेंद्रो देवता ॥ गवामुपस्थान एतत्सूक्तं । सूत्रितं च । आगावीयमेकं । आ० गृ० २ १०.७ । इति ॥

आ गावो अग्मन्नुत भद्रमक्रन्त्सीदंतु गोष्ठे रणयंत्वस्मे ।
प्रजावतीः पुरुरूपा इह स्युरिंद्राय पूर्वीरुषसो दुहानाः ॥१॥
आ । गावः । अग्मन् । उत । भद्रं । अक्रन् । सीदंतु । गोऽस्थे । रणयंतु । अस्मे इति ।
प्रजाऽवतीः । पुरुऽरूपाः । इह । स्युः । इंद्राय । पूर्वीः । उपसः । दुहानाः ॥१॥

गाव आगमन्। अस्मदीयं गृहमागच्छंतु। उतापि च भद्रं भजनीयं शुभमक्रन्। कुर्वंतु। तथा गोष्ठेऽस्मदीये गवां स्थाने सीदंतु। उपविशंतु। तदनंतरमस्मे अस्मासु रणयंतु। रमंतां। अपि चेहास्मिन् गोष्ठे पुरुरूपा नानावर्णा गावः प्रजावतीः प्रजावत्यः संततिसहिताः पूर्वीर्बह्व्य इंद्रायेंद्रार्थमुषस उषःकालान् प्रति दुहाना दोहमानाः स्युः। भवेयुः॥

इंद्रो यज्वने पृणते च शिक्षत्युपेद्ददाति न स्वं मुषायति।
भूयोभूयो रयिमिदस्य वर्धयन्नभिन्ने खिल्ये नि दधाति देवयुं॥२॥
इंद्रः। यज्वने। पृणते। च। शिक्षति। उप। इत्। ददाति। न। स्वं। मुषायति।
भूयःऽभूयः। रयिं। इत्। अस्य। वर्धयन्। अभिन्ने। खिल्ये। नि। दधाति। देवऽयुं॥२॥

इंद्रो यज्वने यजनशीलाय पृणते च स्तुतिभिः प्रीणयित्रे च स्तोत्रे शिक्षति। अपेक्षितं धनं ददाति। न केवलं सकृदेव दानमपि तु सर्वदेत्याह। उपेद्ददाति। उपेत्य सर्वदा ददात्येव। यज्वनः स्तोतुश्च स्वं स्वभूतं धनं न मुषायति। कदाचिदपि नापहरति। अपि चास्यैवंविधस्य रयिं धनमात्मना दत्तं भूयो भूयः पुनःपुनर्वर्धयन्नित् वृद्धिं प्रापयन्नेव देवयुं देवमिंद्रमात्मन इच्छंतं तं जनमभिन्ने शत्रुभिरभेद्ये खिल्ये। खिलमप्रतिहतं स्थानं। तदेव खिल्यं॥ स्वार्थिको यत्॥ अन्यैर्गंतुमशक्ये स्थले नि दधाति। निक्षिपति। निवासयतीत्यर्थः॥

दैवीनां हविःषु न ता नशंति न ता अर्वेति गोदेवताया याज्यापुरोनुवाक्ये। आ॰ ६. १४॥ गोस्तोमेऽपि मरुत्वतीयनिष्केवल्ययोरेते सूक्तमुखीये। सूत्रितं च। न ता अर्वा रेणुककाटो अश्नुते न ता नशंति न दभाति तस्करः। आ॰ ९. ५.। इति॥

न ता नशंति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति।
देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह॥३॥
न। ताः। नशंति। न। दभाति। तस्करः। न। आसां। आमित्रः। व्यथिः। आ। दधर्षति।
देवान्। च। याभिः। यजते। ददाति। च। ज्योक्। इत्। ताभिः। सचते। गोऽपतिः। सह॥३॥

ता गावो न नशंति। अस्मत्सकाशान्न नश्यंतु। किंच तस्करश्चोरोऽपि न दभाति। अस्मदीया गा न हिंस्यात्। तथामित्रोऽमित्रस्य शत्रोः संबंधि व्यथिः शस्त्रमासामिमा गा ना दधर्षति। नाक्रमतु। गोपतिरेवंभूतानां गवां स्वामी यजमानो याभिर्गोभिर्देवांश्चेंद्रादीनुद्दिश्य यजते यजनं करोति। या गा इंद्रार्थं ददाति च प्रयच्छति च ताभिस्तादृशीभिर्गोभिः सह ज्योगित् चिरकालमेव सचते। संगच्छतां॥

न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुप यंति ता अभि।
उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि चरंति यज्वनः॥४॥
न। ताः। अर्वा। रेणुऽककाटः। अश्नुते। न। संस्कृतऽत्रं। उप। यंति। ताः। अभि।
उरुऽगायं। अभयं। तस्य। ताः। अनु। गावः। मर्तस्य। वि। चरंति। यज्वनः॥४॥

रेणुककाटो रेणोः पार्थिवस्य रजस उद्भेदकः॥ कटिर्भेदनकर्मा॥ अर्वा युद्धार्थमागतोऽश्वो ता गा नाश्नुते। न प्राप्नुयात्। तथा ता गावः संस्कृतत्रं विशसनादिसंस्कारं नाभ्युप यंति। माभिगच्छंतु। अपि च ता गावो यज्वनो यागशीलस्य तस्य मर्तस्य मनुष्यस्योरुगायं विस्तीर्णगमनमभयं भयवर्जितं प्रदेशमनूद्दिश्य वि चरंति। विशेषेण गच्छंतु॥

गावो भगो गाव इंद्रो मे अच्छान् गावः सोमस्य प्रथमस्य भक्षः ।
इमा या गावः स जनास इंद्र इच्छामीद्धृदा मनसा चिदिंद्रं ॥५॥
गावः । भगः । गावः । इंद्रः । मे । अच्छान । गावः । सोमस्य । प्रथमस्य । भक्षः ।
इमाः । याः । गावः । सः । जनासः । इंद्रः । इच्छामि । इत् । हृदा । मनसा । चित् । इंद्रं ॥५॥

गाव एव मह्यं भगो धनं भवतु । इंद्रश्च मे मह्यं गावो गा अच्छान । यच्छतु । गावः प्रथमस्य हविषा श्रेष्ठस्य सोमस्य भक्षो भक्षणं भवतु । अभिषुतस्य हि सोमस्य गव्यैराज्यादिना संश्रयणत्वात् । हे जनासो जना इमा एवंभूता या गावः संति सः । ता इत्यर्थः । ता एव गाव इंद्रो भवति । दधिघृतादिद्रव्यैरिंद्रस्याप्यायनत्वात् । एवंभूतमिंद्रं हृदा श्रद्धायुक्तेन मनसा चित् ॥ चिदित्यप्यर्थे ॥ इच्छामीत् । कामय एव । साधनभूताभिर्गोभिरेवंभूतमिंद्रं यष्टुमिच्छामीत्यर्थः ॥

यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकं ।
भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु ॥६॥
यूयं । गावः । मेदयथ । कृशं । चित् । अश्रीरं । चित् । कृणुथ । सुऽप्रतीकं ।
भद्रं । गृहं । कृणुथ । भद्रऽवाचः । बृहत् । वः । वयः । उच्यते । सभासु ॥६॥

हे गावो यूयं मेदयथ । आप्यायनं कुरुथेत्यर्थः । तथा कृशं चित् क्षीणमप्यश्रीरं चिदमंगलमपि सुप्रतीकं शोभनांगं कृणुथ । कुरुथ । हे भद्रवाचः कल्याणध्वन्युपेता गावोऽस्मदीयं गृहं भद्रं कल्याणं कृणुथ । गोभिरुपेतं कुरुथ । सभासु यागपरिषत्सु हे गावो युष्माकं बृहन्महद्वयोऽन्नमुच्यते । सर्वैर्दीयत इत्यर्थः ॥

प्रजावतीः सूयवसं रिशंतीः शुद्धा अपः सुप्रपाणे पिबंतीः ।
मा वः स्तेन ईशत माघशंसः परि वो हेती रुद्रस्य वृज्याः ॥७॥
प्रजाऽवतीः । सुऽयवसं । रिशंतीः । शुद्धाः । अपः । सुऽप्रपाने । पिबंतीः ।
मा । वः । स्तेनः । ईशत । मा । अघऽशंसः । परि । वः । हेतिः । रुद्रस्य । वृज्याः ॥७॥

हे गावो यूयं प्रजावतीः प्रजावत्यो वत्साभियुक्ता भवतेति शेषः । सूयवसं शोभनतृणं रिशंती रिशंत्यो भक्षणार्थं हिंसंत्यो भवत । सुप्रपाणे सुखेन पातव्ये तटाकादौ शुद्धा निर्मला अप उदकानि पिबंतीः पिबंत्यश्च भवत । वो युष्मान् स्तेनस्तस्करो मेशत । मेशिष्ट । ईश्वरो मा भूत् । तथाप्यघशंसो व्याघ्रादिः शत्रुर्मेशत । अपि च वो युष्मान् रुद्रस्य कालात्मकस्य परमेश्वरस्य हेतिरायुधं च परि वृज्याः । परिवृणक्तु । परिहरतु ॥

उपेदमुपपर्चनमासु गोषूप पृच्यतां । उप ऋषभस्य रेतस्युपेंद्र तव वीर्ये ॥८॥
उप । इदं । उपऽपर्चनं । आसु । गोषु । उप । पृच्यतां । उप । ऋषभस्य । रेतसि । उप ।
इंद्र । तव । वीर्ये ॥८॥

आसु गोष्विदमुपपर्चनमाप्यायनमुप पृच्यतां । संपृच्यतां । हे इंद्र तव वीर्ये त्वदीयवीर्यनिमित्तं ऋषभस्य गवां गर्भमादधानस्य वृषभस्य रेतसीदमुपपर्चनमाप्यायनं । गोषु ह्याप्यायितासु सतीषु तत्संबंधिक्षीरादिहविर्द्वारेणेंद्र आप्यायितो भवतीत्यर्थः । उपेति पुनर्वचनं पादभेदाना पूरणार्थमिति ॥ ॥२५॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके षष्ठोऽध्यायः समाप्तः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथ सप्तमोऽध्याय आरभ्यते। षष्ठस्य मंडलस्य तृतीयेऽनुवाके पंच सूक्तानि व्याकृतानि। इंद्रं व इति षड्टच षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं। अनुक्रम्यते च। इंद्रं षडिति। गतो विनियोगः॥

इंद्रं वो नरः सख्याय सेपुर्महो यंतः सुमतये चकानाः।
महो हि दाता वज्रहस्तो अस्ति महामु रणवमवसे यजध्वं ॥१॥
इंद्रं। वः। नरः। सख्याय। सेपुः। महः। यंतः। सुऽमतये। चकानाः।
महः। हि। दाता। वज्रऽहस्तः। अस्ति। महां। ऊं इति। रणवं। अवसे। यजध्वं ॥१॥

हे यजमाना वो युष्माकं संबंधिनो नरो नेतार ऋत्विजः सख्याय सखिभावार्थमिंद्रं सेपुः। परिचरंति स्पृशंति वा। कथंभूताः। महो महांति स्तोत्राणि यंत उपयतः प्राप्नुवंतः। कुर्वंत इत्यर्थः। तथा सुमतये। सुमतिः शोभनानुग्रहात्मिका तदीया बुद्धिः। तां चकानाः कामयमानाः॥ क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानसंज्ञा। चकाना इति कामयतेश्छांदसं रूपं॥ यद्वा। महो महत्कर्म यंतोऽनुतिष्ठंतः सुमतये सुमतिं शोभनां स्तुतिं चकानाः शब्दयतः॥ कै गै शब्दे इत्यस्माल्लिटः कानचि रूपं॥ हि यस्माद्वज्रहस्तो वज्रपाणिरिंद्रो महो महतो धनस्य दातास्ति भवति तस्माद्रणवं रमणीयं महाम् महांतमेवावसे रक्षणाय यजध्वं। हविर्भिः पूजयत॥

आ यस्मिन्हस्ते नर्या मिमिक्षुरा रथे हिरण्यये रथेष्ठाः।
आ रश्मयो गभस्त्योः स्थूरयोराध्वन्नश्वासो वृषणो युजानाः ॥२॥
आ। यस्मिन्। हस्ते। नर्याः। मिमिक्षुः। आ। रथे। हिरण्यये। रथेऽस्थाः।
आ। रश्मयः। गभस्त्योः। स्थूरयोः। आ। अध्वन्। अश्वासः। वृषणः। युजानाः ॥२॥

यस्मिन्निंद्रे नर्या नृभ्यो हिता राय आ मिमिक्षुः आसिच्यंते आपूर्यंते॥ व्यत्ययेन कर्मणि कर्तृप्रत्ययः॥ इंद्रे कुर्वंति चेत। हस्ते तदीये बाहौ। यद्वा। एतत्समानाधिकरणमिंद्रस्य विशेषणं। हस्ते हंतर्यस्मिन्निंद्र इत्यर्थः। उक्तं यास्केन। हस्तो हंतेः प्राशुर्हनने। नि० १ ७.। इति। यद्वा। ईदृशे यस्मिन्निंद्रे वर्तमाना राय आ मिमिक्षुः आसिंचंति आपूरयंति स्तोतॄन्। यश्चेंद्रो रथेष्ठा रथे स्थाता तत्स्वभावः सन् हिरण्यये सुवर्णमये रथ आ तिष्ठति। यद्वा। रथेष्ठा रथेऽवस्थिता रायो धनानि हिरण्मये रथे तिष्ठन् य इंद्र आ सिंचति अभिवर्षति। यस्य च स्थूरयोः स्थूलयोर्विस्तृतयोर्गभस्त्योः। बाहुनामैतत। बाह्वो रश्मयोऽभीशव आ सिच्यंते आयम्यंते। यस्य चाश्वासोऽश्वा वृषणः सेक्तारो युवानो युजाना रथे युज्यमाना अध्वन्नध्वनि मार्गे आ मिमिक्षुः आसिंचंति आपूरयंति। आगच्छंतीत्यर्थः। तमिंद्रं स्तुम इति शेषः॥

श्रिये ते पादा दुव आ मिमिक्षुर्धृष्णुर्वज्री शवसा दक्षिणावान्।
वसानो अत्कं सुरभिं दृशे कं स्व१र्ण नृतविषिरो बभूथ ॥३॥
श्रिये। ते। पादा। दुवः। आ। मिमिक्षुः। धृष्णुः। वज्री। शवसा। दक्षिणऽवान्।
वसानः। अत्कं। सुरभिं। दृशे। कं। स्वः। न। नृतो इति। इषिरः। बभूथ ॥३॥

हे इंद्र श्रिये ऐश्वर्यार्थं ते त्वदीययोः पादा पादयोर्दुवः परिचरणानि मिमिक्षुः। आसिंचंति। समर्पयंति।

भरद्वाजः सपर्यति ॥ व्यत्ययेन बहुवचनं ॥ यद्वा । ते तव पादौ श्रिये श्रयितुं सेवितुं दुवः परिचरणमाविवासति । अनुतिष्ठति । यस्त्वं शवसा बलेन धृष्णुः शत्रूणां धर्षको वज्री वज्रवान् दक्षिणावान् । दक्षिणा स्तोतृभ्यो दातव्यं धनं । तद्वान् हे सुक्रतो नितरिंद्र स त्वं सुरभि प्रशस्तमत्कं सततगमनशीलमात्मीयं रूपं दृशे सर्वेषां दर्शनार्थं वसानः आच्छादयन् स्वर्णं सूर्यं इव इषिरो गंतव्यो गमनीयो वा बभूथ । भवसि । कामिति पूरकः ॥

स सोम आमिश्लतमः सुतो भूद्यस्मिन्पक्तिः पच्यते संति धानाः ।
इंद्रं नरः स्तुवंतो ब्रह्मकारा उक्था शंसंतो देववाततमाः ॥४॥

सः । सोमः । आमिश्लऽतमः । सुतः । भूत् । यस्मिन् । पक्तिः । पच्यते । संति । धानाः ।
इंद्रं । नरः । स्तुवंतः । ब्रह्मऽकाराः । उक्था । शंसंतः । देववातऽतमाः ॥४॥

यः सोमो वक्ष्यते स सोमः सुतोऽभिषुतः सन् आमिश्लतम आभिमुख्येन मिश्रतमो भूत् । इंद्रेणात्यर्थं संगच्छते । यस्मिन् सोमेऽभिषुते सति पक्तिः पक्तव्यः पुरोडाशादिः पच्यते । भृष्टयवा धानाः । ताश्च संति हविरर्थं संस्कृता भवंति । यस्मिंश्च सोमेऽभिषुते नरो नेतारो ब्रह्मकारा ब्रह्मणोऽन्नस्य हविर्लक्षणस्य कर्तार ऋत्विज इंद्रं स्तोत्रैः स्तुवंत उक्थोक्थानि शस्त्राणि च शंसंत उच्चारयंतो देववाततमा देवानतिशयेनोपगता भवंति स सोम इंद्रेण संमिश्रितोऽभूदित्यन्वयः ॥

न ते अंतः शवसो धाय्यस्य वि तु बाबधे रोदसी महित्वा ।
आ ता सूरिः पृणति तूतुजानो यूथेवाप्सु समीजमान ऊती ॥५॥

न । ते । अंतः । शवसः । धायि । अस्य । वि । तु । बाबधे । रोदसी इति । महिऽत्वा ।
आ । ता । सूरिः । पृणति । तूतुजानः । यूथाऽइव । अपऽसु । संऽईजमानः । ऊती ॥५॥

हे इंद्र ते तवास्योक्तगुणस्य शवसो बलस्यांतोऽवसानं न धायि । अत्र केवलोऽपि दधातिरवपूर्वार्थो द्रष्टव्यः । नावाधायि । अस्माभिर्नाज्ञायीत्यर्थः । यद्बलं रोदसी द्यावापृथिव्यौ महित्वा महत्त्वेन तु क्षिप्रं वि बाबधे । यस्माद्बलाद्द्यावापृथिव्यौ बिभीत इत्यर्थः । ता तद्बलं सूरिः स्तोता तूतुजानस्त्वरितः सन् ऊती ऊत्या तर्पकेण हविषा समीजमानः सम्यग्यजन् आ पृणाति । आपूरयति । तत्र दृष्टांतः । यूथेवाप्सूदकेषु गवां यूथानीव यथा गोपालोऽपः पाययन्नद्भिस्तर्पयति तद्वत् ॥

एवेदिंद्रः सुहव ऋष्वो अस्तूती अनूती हिरिशिप्रः सत्वा ।
एवा हि जातो असमात्योजाः पुरू च वृत्रा हनति नि दस्यून् ॥६॥

एव । इत् । इंद्रः । सुऽहवः । ऋष्वः । अस्तु । ऊती । अनूती । हिरिऽशिप्रः । सत्वा ।
एव । हि । जातः । असमातिऽओजाः । पुरु । च । वृत्रा । हनति । नि । दस्यून् ॥६॥

एवैवमुक्तेन प्रकारेण ऋष्वो महानिंद्रः सुहवोऽस्तु सुखेनाह्वातव्यो भवतु । इदिति पूरणः । हिरिशिप्रः । शिप्रे हनू नासिके वा । हरितवर्णे शिप्रे यस्य तादृश इंद्र ऊती ऊत्यागमनेनानूती अनूत्यानागमनेन वा सत्वा गमयिता भवति धनानां । स्वयमागतोऽनागतोऽपि स्तोतृभ्यो धनं प्रयच्छतीत्यर्थः । एवा ह्येव हि जातः प्रादुर्भूतोऽयमिंद्रोऽसमात्योजा असमात्यमसमानमनुपममुत्कृष्टतरमोजो बलं यस्य तादृशः सन् पुरु पुरूणि बहूनि च वृत्रा वृत्राण्यावरकाणि रक्षःप्रभृतीनि हनति । हिनस्तु । तथा दस्यूनुपक्षपयितॄन् शत्रूंश्च नि हंतु ॥ ॥१॥

भूय इदिति पंचर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं । भूयः पंचेत्यनुक्रांतं ॥ अग्निष्टोमे माध्यंदिनसवनेऽच्छावाकशस्त्र एतत्सूक्तं शंसनीयं । सूत्रितं च । उदिद्ध्यस्य रिच्यते भूय इत् । आ॰ ५ १६ । इति ॥ महाव्रतेऽपि निष्केवल्य एतत्सूक्तं । तथैव पंचमारण्यके सूत्रितं । भूय इद्वावृधे वीर्याय नूनामु त्वा । ऐ॰ आ॰ ५ १ ६ । इति ॥

भूय इद्वावृधे वीर्यायँ एको अजुर्यो दयते वसूनि ।
प्र रिरिचे दिव इंद्रः पृथिव्या अर्धमिदस्य प्रति रोदसी उभे ॥१॥
भूयः । इत् । ववृधे । वीर्याय । एकः । अजुर्यः । दयते । वसूनि ।
प्र । रिरिचे । दिवः । इंद्रः । पृथिव्याः । अर्धं । इत् । अस्य । प्रति । रोदसी इति । उभे इति ॥१॥

अयमिंद्रो भूय इद्बहुतरमेव वावृधे । प्रवृद्धोऽभूत । किमर्थं । वीर्याय वीरकर्माणि वृत्रवधादीनि कर्तुं । एको मुख्योऽजुर्यो जरयितुमशक्यः स चेंद्रो वसूनि धनानि दयते । स्तोतृभ्यो ददाति । तथा दिवो द्युलोकात्पृथिव्या भूमेश्चायमिंद्रः प्र रिरिचे । अतिरिच्यते । किंचास्येंद्रस्योभे रोदसी द्यावापृथिव्यावर्धमिदर्धमेव प्रति । अस्येंद्रस्यार्धो भागो द्यावापृथिव्योः प्रतिनिधिर्भवतीत्यर्थः ॥

अधा मन्ये बृहदसुर्यमस्य यानि दाधार नकिरा मिनाति ।
दिवेदिवे सूर्यो दर्शतो भूद्वि सद्मान्युर्विया सुक्रतुर्धात् ॥२॥
अध । मन्ये । बृहत् । असुर्यं । अस्य । यानि । दाधार । नकिः । आ । मिनाति ।
दिवेऽदिवे । सूर्यः । दर्शतः । भूत् । वि । सद्मानि । उर्विया । सुऽक्रतुः । धात् ॥२॥

अधाधुनास्येंद्रस्य बृहन्महदसुर्यमसुरहननकुशलं बलं मन्ये । स्तौमि ॥ मन्यतिः स्तुतिकर्मा ॥ स चेंद्रो यानि कर्माणि दाधार धारयति तानि नकिरा मिनाति । न कश्चिदपि हिनस्ति । कानि पुनस्तानि । उच्यते । दिवेदिवे प्रतिदिनं वृत्रेणावृतः सूर्यो दर्शतो दर्शनीयो भूत । भवति । आवरकस्यासुरस्य वधेन सूर्यं प्रकाशितवानित्येकं कर्म । सुक्रतुः शोभनकर्मा स इंद्रः सद्मानि भुवनान्युर्वियोरूणि विस्तीर्णानि वि धात । व्यधात । अकार्षीत । इदमपरं कर्म । एतदादीनि बहूनि कर्माणि कृतवानित्यर्थः ॥

अद्या चिन्नू चित्तदपो नदीनां यदाभ्यो अरदो गातुमिंद्र ।
नि पर्वता अद्मसदो न सेदुस्त्वया दृळ्हानि सुक्रतो रजांसि ॥३॥
अद्य । चित् । नु । चित् । तत् । अपः । नदीनां । यत् । आभ्यः । अरदः । गातुं । इंद्र ।
नि । पर्वताः । अद्मऽसदः । न । सेदुः । त्वया । दृळ्हानि । सुक्रतो इति सुऽक्रतो । रजांसि ॥३॥

हे इंद्र अद्या चिदद्यापि नू चित्पुरापि तव नदीनां संबंधिकं तदपः कर्म वर्तते । आभ्यो नदीभ्यो गातुं मार्गमरदः प्रवहनार्थं व्यलिखः इति यत्कर्म तत्सर्वदानुपक्षीणं समवर्तत इत्यर्थः । अपि च त्वदाज्ञया पर्वता गिरयो नि षेदुः । निषण्णाः । उत्पतनं परित्यज्य क्वचिदेव स्थाने निश्चल्येनोपविष्टा बभूवुः । अद्मसदो न । अद्यादनीयमन्नं । तदर्थं सीदतः पुरुषा इव । यथा ते भोजनार्थं निश्चल्येनासते तथेत्यर्थः । अतः कारणात् हे सुक्रतो शोभनकर्मन्निंद्र त्वया रजांसि सर्वे लोका दृळ्हानि दृंहितानि स्थिरीकृता आसन् ॥

सत्यमित्तन्न त्वावाँ अन्यो अस्तींद्र देवो न मर्त्यो ज्यायान् ।
अहन्नहिं परिशयानमर्णोऽवासृजो अपो अच्छा समुद्रं ॥४॥
सत्यं । इत् । तत् । न । त्वाऽवान् । अन्यः । अस्ति । इंद्र । देवः । न । मर्त्यः । ज्यायान् ।
अहन् । अहिं । परिऽशयानं । अर्णः । अव । असृजः । अपः । अच्छ । समुद्रं ॥४॥

हे इंद्र वक्ष्यमाणं तत्सत्यमित्सत्यमेव नानृतं । त्वावान् त्वत्सदृशोऽन्यो देवो नास्ति । त्वत्सदृशोऽन्यो मर्त्यो मनुष्योऽपि नैव विद्यते । ज्यायानधिकोऽपि देवो मनुष्यो वा न खल्वस्ति । इति यदुच्यते तत्सत्यमेवेत्यर्थः । अपि च त्वमर्णं उदकं परिशयानं परिवृत्य शयानमहिं मेघमहन् । अवधीः । हत्वा च समुद्रमंतरिक्षं जलधिं वा तस्याभिमुख्येनापि उदकान्यवासृजः । अवाङ्मुखतया विसृष्टवानसीत्यर्थः ॥

त्वमपो वि दुरो विषूचीरिंद्र दृळ्हमरुजः पर्वतस्य ।
राजाभवो जगतश्चर्षणीनां साकं सूर्यं जनयन्द्यामुषासं ॥५॥
त्वं । अपः । वि । दुरः । विषूचीः । इंद्र । दृळ्हं । अरुजः । पर्वतस्य ।
राजा । अभवः । जगतः । चर्षणीनां । साकं । सूर्यं । जनयन् । द्यां । उषसं ॥५॥

हे इंद्र त्वं दुरो वृत्रेणावृता अपो विषूचीर्विविधमंचत्यो यथा सर्वतः प्रसृता भवंति तथा व्यसृजः । यतस्त्वं पर्वतस्य पर्ववतो मेघस्य दृळ्हं दृढमपां बंधकप्रदेशमरुजः अभांक्षीः । अपि च त्वं जगतः संबंधिनीनां चर्षणीनां प्रजानां राजाभवः । अधिपतिर्भवसि । किं कुर्वन् । सूर्यं द्यां द्युलोकमुषसं च तमसा प्रावृतमेतत्त्रितयं साकं युगपदेव जनयन् प्रादुर्भावयन् । प्रकाशयन्नित्यर्थः ॥ ॥२॥

अभूरेक इति पंचर्चमष्टमं सूक्तं भरद्वाजस्य सुहोत्रस्यार्षं । उपांत्या शक्करी शिष्टाश्चतस्रस्त्रिष्टुभः । इंद्रो देवता । अनुक्रम्यते च । अभूरेकः सुहोत्रस्तु चतुर्थी शक्करीति ॥ महाव्रतस्य निष्केवल्य इदमादीन्यष्ट सूक्तानि शंसनीयानि । तथा पंचमारण्यके । अभूरेको रयिपते रयीणामित्यष्टौ सूक्तानि । ऐ॰ आ॰ ५. २. २. । इति ॥ पृष्ठ्यस्य षष्ठेऽहनि निष्केवल्य इदं सूक्तं निविद्धानं । सूत्रितं च । एंद्र याह्युप नः प्र घा न्वस्याभूरेक इति निष्केवल्यं । आ॰ ८. १. । इति ॥ विश्वजिति माध्यंदिनेऽच्छावाकशस्त्रे सामसूक्ताख्यमेतच्छंसनीयं । सूत्रितं च । अभूरेको रयिपते रयीणामिति साममूक्तानि । आ॰ ८. ७. ॥

अभूरेको रयिपते रयीणामा हस्तयोरधिथा इंद्र कृष्टीः ।
वि तोके अप्सु तनये च सूरेऽवोचंत चर्षणयो विवाचः ॥१॥
अभूः । एकः । रयिऽपते । रयीणां । आ । हस्तयोः । अधिथाः । इंद्र । कृष्टीः ।
वि । तोके । अपऽसु । तनये । च । सूरे । अवोचंत । चर्षणयः । विऽवाचः ॥१॥

हे रयिपते धनस्य पालकेंद्र एकः प्रधानभूतस्त्वं रयीणां धनानां स्वाम्यभूः । भवसि । यद्वा । रयीणां रयिपत इति संबंधः । एको रयिशब्दोऽनुवादो यथा गवामसि गोपतिरेक इंद्र । ऋग्सं॰ ७. ९८. ६. । इति । तदानीमेको मुख्यस्त्वं भवसीति योजनीयं । अपि च हे इंद्र त्वं हस्तयोरात्मीययोर्बाह्वोः कृष्टीः प्रजा आधिथाः । आधत्से । सर्वं जगत्तवाज्ञया वर्तत इत्यर्थः । किंच चर्षणयो मनुष्यास्तोके पुत्रेऽप्स्वुदकेषु सूरे शत्रूणां प्रेरके तनये पौत्रेषु चैतेषु निमित्तभूतेषु सत्सु विवाचो विशिष्टाः स्तुतीर्व्यवोचंत । विविधं ब्रुवंति ॥

त्वद्भियेंद्र पार्थिवानि विश्वाच्युता चिच्च्यावयंते रजांसि ।
द्यावाक्षामा पर्वतासो वनानि विश्वं दृळ्हं भयते अज्मन्ना ते ॥२॥
त्वत् । भिया । इंद्र । पार्थिवानि । विश्वा । अच्युता । चित् । च्यवयंते । रजांसि ।
द्यावाक्षामा । पर्वतासः । वनानि । विश्वं । दृळ्हं । भयते । अज्मन् । आ । ते ॥२॥

हे इंद्र त्वत्त्वत्तो भिया भयेन विश्वा विश्वानि व्यापकानि पार्थिवानि पृथिव्यंतरिक्षनाम । तत्र भवानि रजांस्युदकान्यच्युता चित् च्यावयितुमशक्यान्यपि च्यावयंते । मेघाः प्रच्यावयंति । वर्षंतीत्यर्थः । अपि च हे इंद्र

ते तदा अज्मन्नागमने सति द्यावाक्षामा द्यावापृथिव्यौ पर्वतासो गिरयो वनानि वृक्षाश्च भयं प्राप्नुवंति । किं बहुना विश्वं सर्वं दृळ्हं स्थिरं प्राणिजातं भयते । बिभेति ॥

त्वं कुत्सेनाभि शुष्णमिंद्राशुषं युध्य कुयवं गविष्टौ ।
दश प्रपित्वे अध सूर्यस्य मुषायश्चक्रमविवे रपांसि ॥३॥

त्वं । कुत्सेन । अभि । शुष्णं । इंद्र । अशुषं । युध्य । कुयवं । गोऽइष्टौ ।
दश । प्रऽपित्वे । अध । सूर्यस्य । मुषायः । चक्रं । अविवेः । रपांसि ॥३॥

हे इंद्र त्वं कुत्सेन सहाशुषं शोषयितुमशक्यं प्रबलं शुष्णं सर्वस्य शोषकमेतत्संज्ञमसुरमभि युध्य । अभ्ययुध्यः । कुत्सस्य साहाय्यार्थं तेनासुरेण सह युद्धं कृतवानसीत्यर्थः । तथा गविष्टौ । गावो बाणा इष्यंते गच्छंतीति गविष्टिः संग्रामः । तस्मिन्कुयवमेतत्संज्ञमसुरं च दश । अदशः । हिंसितवानसि ॥ दन्श दशन इत्येतस्माच्छांदसे लोटि रूपं ॥ अधापि च प्रपित्वे प्रपतने युद्धे सूर्यस्य चक्रं रथावयवभूतं मुषायः । अमुष्णाः । तदाप्रभृति सूर्यस्य रथ एकचक्रोऽभूत् । तथा चाम्नातं । सप्त युंजंति रथमेकचक्रं । ऋग्वे० १ १६४.२ । इति । एतच्छाख्यस्य कांड्याः सूर्येण सह युद्धे तत्साहाय्यार्थमागत इंद्रः सूर्यस्य चक्रमपहृतवानित्याख्यातं । सूरश्चक्रं प्र वृहज्जात ओजसा । ऋग्वे० १ १३०.९. । इति च निगमांतरं । अपि च रपांसि पापकारीणि रक्षःप्रभृतीन्यविवेः । अस्माल्लोकादगमयः । अवधीरित्यर्थः ॥

त्वं शतान्यव शंबरस्य पुरो जघंथाप्रतीनि दस्योः ।
अशिक्षो यत्र शच्या शचीवो दिवोदासाय सुन्वते सुतक्रे भरद्वाजाय गृणते वसूनि ॥४॥

त्वं । शतानि । अव । शंबरस्य । पुरः । जघंथ । अप्रतीनि । दस्योः ।
अशिक्षः । यत्र । शच्या । शचीऽवः । दिवःऽदासाय । सुन्वते । सुतऽक्रे । भरत्ऽवाजाय ।
गृणते । वसूनि ॥४॥

हे इंद्र त्वं शतानि शतसंख्यानि दस्योरुपक्षपयितुरसुरस्य शंबरस्यैतत्संज्ञस्य पुरः पुरीरप्रतीनि ॥ लिंगव्यत्ययः ॥ केनाप्यप्रतिगता अव जघंथ । अवाहन । हे शचीवः प्रज्ञावन् हे सुतक्र अभिषुतेन सोमेन क्रीतेंद्र यत्र यस्मिन्काले सुन्वते सोमाभिषवं कुर्वते दिवोदासाय शच्या प्रज्ञयाशिक्षो धनानि प्रादाः गृणते स्तुवते भरद्वाजाय च वसूनि प्रादाः तस्मिन्काले शांबरीः पुरोऽव जघंथेत्यन्वयः ॥

स सत्यसत्वन्महते रणाय रथमा तिष्ठ तुविनृम्ण भीमं ।
याहि प्रपथिन्नवसोप मद्रिक्प्र च श्रुत श्रावय चर्षणिभ्यः ॥५॥

सः । सत्यऽसत्वन् । महते । रणाय । रथं । आ । तिष्ठ । तुविऽनृम्ण । भीमं ।
याहि । प्रऽपथिन् । अवसा । उप । मद्रिक् । प्र । च । श्रुत । श्रवय । चर्षणिऽभ्यः ॥५॥

हे सत्यसत्वन् । सत्याः सत्वानो भटा यस्य स तथोक्तः । हे तुविनृम्ण । तुवि बहुलं नृम्णं धनं यस्य स तथोक्तः । हे तादृशेंद्र स त्वं महते रणाय संग्रामाय तदर्थं भीमं भयंकरमात्मीयं रथमा तिष्ठ । हे प्रपथिन् प्रकृष्टमार्गेंद्र अवसा रक्षणेन सह तेन च रथेनोप याहि आगच्छ मद्रिक् मदभिमुखः । तथा हे श्रुत विश्रुतेंद्र चर्षणिभ्यः प्रजाभ्यः प्र श्रावय च । अस्मान् प्रख्यापय च । सर्वासु प्रजासु मध्येऽस्मान्प्रख्यातान् कुर्वित्यर्थः ॥ ॥३॥

अपूर्व्येति पचर्चं नवमं सूक्तं ऐंद्रमैंद्रं ॥ द्वितीये छांदोमिकेऽहनि निष्केवल्य एतत्सूक्तं । सूत्रितं च । अपूर्व्या पुरुतमानि तां सु ते कीर्तिं । आ० ८ ७ । इति ॥ महाव्रतेऽपि निष्केवल्येऽस्य सूक्तस्य विनियोग उक्तः ॥

अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय।
विरप्शिने वज्रिणे शंतमानि वचांस्यासा स्थविराय तक्षं ॥१॥
अपूर्व्या। पुरुऽतमानि। अस्मै। महे। वीराय। तवसे। तुराय।
विऽरप्शिने। वज्रिणे। शंऽतमानि। वचांसि। आसा। स्थविराय। तक्षं॥१॥

अपूर्व्यापूर्व्याणि पूर्वैरकृतानि नूतनानि पुरुतमानि बहुतमानि शंतमानि सुखकृत्तमानि वचांसि स्तुतिरूपाणि वाक्यान्यासास्येनास्मा इंद्राय तक्षं। अतक्षं। करोमि। कीदृशाय। महे महते वीराय विविधशत्रूणां मारयित्रे तवसे तवस्विने बलवते तुराय त्वरमाणाय विरप्शिने विशेषेण स्तुत्याय वज्रिणे वज्रवते स्थविराय प्रवृद्धाय॥

स मातरा सूर्येणा कवीनामवासयद्रुजदद्रिं गृणानः।
स्वाधीभिर्ऋक्वभिर्वावशान उदुस्रियाणामसृजन्निदानं ॥२॥
सः। मातरा। सूर्येण। कवीनां। अवासयत्। रुजत्। अद्रिं। गृणानः।
सुऽआधीभिः। ऋक्वऽभिः। वावशानः। उत्। उस्रियाणां। असृजत्। निऽदानं ॥२॥

स इंद्रो मातरा मातरौ दिवं च पृथिवीं च कवीनां क्रांतदर्शिनामंगिरसामर्थाय सूर्येणावासयत्। प्राकाशयत्। किं कुर्वन्। अद्रिं गवामदर्शनाय वलेन स्थापितं पर्वतं रुजन्भंजन्। यद्वा। कवीनामंगिरसामिति तृतीयार्थे षष्ठी। अंगिरोभिर्गृणानः स्तूयमान इति संबंधः। अपि च स्वाधीभिः शोभनध्यानैर्ऋक्वभिः स्तोतृभिरंगिरोभिर्वावशानः पुनः पुनः काम्यमानः सन् उस्रियाणां वलस्य भृत्यैः पणिभिरपहृतानां गवां निदानं बंधनमुदसृजत्। अमोचयत्॥

स वह्निभिर्ऋक्वभिर्गोषु शश्वन्मितज्ञुभिः पुरुकृत्वा जिगाय।
पुरः पुरोहा सखिभिः सखीयन्दृळ्हा रुरोज कविभिः कविः सन् ॥३॥
सः। वह्निऽभिः। ऋक्वऽभिः। गोषु। शश्वत्। मितज्ञुऽभिः। पुरुऽकृत्वा। जिगाय।
पुरः। पुरःऽहा। सखिऽभिः। सखिऽयन्। दृळ्हाः। रुरोज। कविऽभिः। कविः। सन् ॥३॥

पुरुकृत्वा बहुकर्मकृत्स इंद्रो वह्निभिर्हविषां वोढृभिर्ऋक्वभिः स्तोतृभिः शश्वत्सर्वदा मितज्ञुभिः संकोचितजानुभिरंगिरोभिः सह गोषु निमित्तभूतेषु जिगाय। असुरान् जितवान्। जित्वा च पुरोहा पुरां हंता स इंद्रः सखिभिः समानख्यानैः कविभिः क्रांतप्रज्ञैरंगिरोभिः सह सखीयन् सखित्वमात्मन इच्छन् कविः सन् स्वयमपि क्रांतप्रज्ञो भवन् दृळ्हाः स्थिराः पुर आसुरीः पुरी रुरोज॥

स नीव्याभिर्जरितारमच्छा महो वाजेभिर्महद्भिश्च शुष्मैः।
पुरुवीराभिर्वृषभ क्षितीनामा गिर्वणः सुविताय प्र याहि ॥४॥
सः। नीव्याभिः। जरितारं। अच्छ। महः। वाजेभिः। महत्ऽभिः। च। शुष्मैः।
पुरुऽवीराभिः। वृषभ। क्षितीनां। आ। गिर्वणः। सुविताय। प्र। याहि ॥४॥

हे वृषभ कामानां वर्षक हे गिर्वणो गिरा स्तुत्या संभजनीयेंद्र स त्वं महो महद्भिर्वाजेभिर्वाजैरन्नैर्महद्भिः

शुभ्रैर्बलैश्च सह क्षितीनां प्रजानां मध्ये जरितारं स्तोतारमच्छाभिमुख्येन नीव्याभिर्नव्याभिर्नवतराभिः पुरुवीराभिः पुरूणां बहूनां वीरयित्रीभिर्वडवाभिरा प्र याहि। आगच्छ। किमर्थं। सुविताय शोभनाय। सुखप्राप्त्यर्थमित्यर्थः॥

स सर्गेण शवसा तक्तो अत्यैरप इंद्रो दक्षिणतस्तुराषाट्।
इत्था सृजाना अनपावृदर्थं दिवेदिवे विविषुरप्रमृष्यं॥५॥
सः। सर्गेण। शवसा। तक्तः। अत्यैः। अपः। इंद्रः। दक्षिणतः। तुराषाट्।
इत्था। सृजानाः। अनपऽवृत्। अर्थं। दिवेऽदिवे। विविषुः। अप्रऽमृष्यं॥५॥

तुराषाट् तुराणां हिंसकानां सोढाभिभविता स इंद्रः सर्गेण सर्वदोद्युक्तेन शवसा बलेनात्यैरश्वैः सततगामिभिस्तेजोभिर्वा तक्तः संगतः सन् दक्षिणतो दक्षिणायनेऽप उदकानि विसृजतीति शेषः। इत्थेत्यमनेन प्रकारेण सृजानाः सृज्यमानास्ता आपोऽर्थं गतव्यमप्रमृष्यमन्यैरक्षोभ्य समुद्रं दिवे दिवे प्रतिदिनमनपावृत् अपावर्तनं पुनरागमनं यथा न भवति तथा विविषुः। व्याप्नुवंति॥ अर्तेस्थन्प्रत्ययांतस्य रूपमर्थमिति॥ ॥४॥

य ओजिष्ठ इति पंचर्चं दशमं सूक्तं शुनहोत्रस्यार्षं त्रैष्टुभमैंद्रं। अनुक्रम्यते च। य ओजिष्ठः शुनहोत्रस्त्वेति॥ महाव्रतेऽपि निष्केवल्य उक्तो विनियोगः॥

य ओजिष्ठ इंद्र तं सु नो दा मदो वृषन्त्स्वभिष्टिर्दास्वान्।
सौवश्व्यं यो वनवत्स्वश्वो वृत्रा समत्सु सासहदमित्रान्॥१॥
यः। ओजिष्ठः। इंद्र। तं। सु। नः। दाः। मदः। वृषन्। सुऽअभिष्टिः। दास्वान्।
सौवश्व्यं। यः। वनवत्। सुऽअश्वः। वृत्रा। समत्ऽसु। ससहत्। अमित्रान्॥१॥

हे वृषन् कामानां वर्षयितरिंद्र त्वं यः पुत्र ओजिष्ठ ओजस्वितमो बलवत्तमो मदस्तव मादयिता। स्तुतिभिः स्तोतेत्यर्थः। स्वभिष्टिः शोभनाभ्येषणो दास्वान्। हविषां दानं दाः। तद्वान्। एवंगुणविशिष्टं तं पुत्रं नोऽस्मभ्यं सु सुष्ठु दाः। देहि। यः पुत्रः स्वश्वः सन् समत्सु संग्रामेषु सौवश्व्यं शोभनाश्वत्वं समूह वनवत् हिंस्यात्। तथा वृत्रा वृत्रान् वारयितॄनमित्रान् शत्रूंश्च सासहत् अत्यर्थमभिभवेत् तं दा इत्यन्वयः॥

त्वां हीं३द्रावसे विवाचो हवंते चर्षणयः शूरसातौ।
त्वं विप्रेभिर्वि पणीँरशायस्त्वोत इत्सनिता वाजमर्वा॥२॥
त्वां। हि। इंद्र। अवसे। विऽवाचः। हवंते। चर्षणयः। शूरऽसातौ।
त्वं। विप्रेभिः। वि। पणीन्। अशायः। त्वाऽऊतः। इत्। सनिता। वाजं। अर्वा॥२॥

हे इंद्र त्वां हि त्वामेव विवाचो विविधाः स्तुतिरूपा वाचो येषां तादृशाश्चर्षणयो मनुष्याः शूरसातौ शूरैः संभजनीये संग्रामेऽवसे रक्षणार्थं हवंते। आह्वयंति। किंच त्वं विप्रेभिर्विप्रैर्मेधाविभिरंगिरोभिः सार्धं पणीन्। बलस्यानुचरा असुराः पणयः। तान्व्यशायः। विशेषेणाशाययः। हतवानित्यर्थः। अतस्त्वोत इत् त्वयोतो रक्षित एव सनिता संभक्ता पुरुषो वाजमन्नमर्वाभिगता भवति॥

त्वं ताँ इंद्रोभयाँ अमित्रान्दासा वृत्राण्यार्या च शूर।
वधीर्वनेव सुधितेभिरत्कैरा पृत्सु दर्षि नृणां नृतम॥३॥

त्वं । तान् । इंद्र । उभयान् । अमित्रान् । दासा । वृत्राणि । आर्या । च । शूर ।
वधीः । वनाऽइव । सुऽधितेभिः । अत्कैः । आ । पृत्ऽसु । दर्षि । नृणां । नृऽतम ॥ ३ ॥

हे इंद्र त्वं तानुभयानुभयविधानमित्रान् शत्रून्वधीः । अहिंसीः । के त उभयविधाः । दासोपक्षपयितॄन्कर्मविरोधिनो वलप्रभृतीनसुरान् ॥ सुपा सुलुगिति शस आकारः ॥ आर्याण्यार्याणि कर्मानुष्ठातृत्वेन श्रेष्ठानि वृत्राण्यावरकाणि विश्वरूपादीनि च तानुभयविधान् हे शूर त्वं हतवानित्यर्थः । नृणां नेतॄणां मध्ये नृतमातिशयेन नेतर्हे इंद्र पृत्सु संग्रामेषु सुधितेभिः सुष्ठु निहितैरत्कैरात्मीयैरायुधैरा दर्षि । अन्यानपि शत्रूनादृणासि । विदारयसि । तत्र दृष्टांतः । वनेव वनानीव । यथा वृक्षजातानि कुठारादिभिश्छिनत्ति तद्वत् ॥

स त्वं न इंद्राकवाभिरूती सखा विश्वायुरविता वृधे भूः ।
स्वर्षाता यद्ध्वयामसि त्वा युध्यंतो नेमधिता पृत्सु शूर ॥ ४ ॥
सः । त्वं । नः । इंद्र । अकवाभिः । ऊती । सखा । विश्वऽआयुः । अविता । वृधे । भूः ।
स्वःऽसाता । यत् । ह्वयामसि । त्वा । युध्यंतः । नेमऽधिता । पृत्ऽसु । शूर ॥ ४ ॥

हे इंद्र स तादृशस्त्वमकवाभिरकुत्सिताभिरूती ऊतिभी रक्षाभिर्नोऽस्माकं वृधे वर्धनायाविता रक्षिता भूः । भव । तथा विश्वायुः सर्वतो गंता त्वमस्माकं सखा च भव । नेमधिता । नेमशब्दोऽर्धवाची । उक्तं च । त्वो नेम इत्यर्धस्य । नि॰ ३ २० । इति । अर्धाः कतिपयाः पुरुषा धीयंते प्राप्यंते नेमधितयः संग्रामाः । तादृशेषु पृत्सु पृतनासु संग्रामेषु युध्यंतो युद्धं कुर्वंतो वयं स्वर्षाता स्वः सुष्ठरणीयं धनं तस्य संभजनार्थं हे शूर त्वा यद्यदा ह्वयामसि आह्वयामः तदानीं त्वमविता सखा च भवेत्यर्थः ॥

नूनं न इंद्रापराय च स्या भवा मृळीक उत नो अभिष्टौ ।
इत्था गृणंतो महिनस्य शर्मन्दिवि ष्याम पार्ये गोषतमाः ॥ ५ ॥
नूनं । नः । इंद्र । अपराय । च । स्याः । भव । मृळीकः । उत । नः । अभिष्टौ ।
इत्था । गृणंतः । महिनस्य । शर्मन् । दिवि । स्याम । पार्ये । गोसऽतमाः ॥ ५ ॥

हे इंद्र त्वं नूनमद्य नोऽस्माकं स्याः । अस्मदीयो भव । अपराय चापरस्मिन्नन्यस्मिन्नपि कालेऽस्मदीयो भव । उतापि च त्वं नोऽस्माकमभिष्टावभिगमने सति मृळीकः सुखयिता भव । इत्थेत्थमनेन प्रकारेण गृणंतः स्तुवंतो वयं गोषतमाः महिनस्य महतस्तव संबंधिनि दिवि द्योतमाने पार्ये दुःखस्य पारके शर्मन् शर्मणि सुखे स्याम । वर्तमाना भवेम ॥ ॥ ५ ॥

सं च त्वे जग्मुरिति पंचर्चमेकादशं सूक्तं शुनहोत्रस्यार्षं । सं च त्वे इत्यनुक्रांतं ॥ तृतीये छंदोमिकेऽहनीदमादिके द्वे सूक्ते । सूत्रितं च । सं च त्वे जग्मुरिति सूक्ते । आ॰ ८ ७ । इति ॥ महाव्रतेऽपि निष्केवल्य उक्तो विनियोगः ॥

सं च त्वे जग्मुर्गिर इंद्र पूर्वीर्वि च त्वद्यंति विभ्वो मनीषाः ।
पुरा नूनं च स्तुतय ऋषीणां पस्पृध्र इंद्रे अध्युक्थार्का ॥ १ ॥
सं । च । त्वे इति । जग्मुः । गिरः । इंद्र । पूर्वीः । वि । च । त्वत् । यंति । विऽभ्वः । मनीषाः ।
पुरा । नूनं । च । स्तुतयः । ऋषीणां । पस्पृध्रे । इंद्रे । अधि । उक्थऽअर्का ॥ १ ॥

हे इंद्र ते त्वयि पूर्वीर्बह्व्यो गिरः स्तुतयश्च सं जग्मुः । संगच्छंते । त्वत्त्वत्तो विभ्वो विभवो विस्तृता मनीषाः स्तोतृणां मतयश्च वि यंति । विविधं निर्गच्छंति । शेषः परोक्षकृतः । पुरा पूर्वस्मिन्काले नूनमद्य च ऋषीणामतींद्रियार्थदर्शिनां भरद्वाजादीनां स्तुतयः स्तोत्राणींद्रेऽध्यधिकं पस्पृध्रे । अस्पर्धंत । अहमहमिकयेंद्रस्य स्तवने त्वरिता बभूवुरित्यर्थः । तथोक्थार्का । उक्थं शस्त्रं । तद्रूपाण्यर्काण्यर्चनसाधनानि स्तोत्राणि च पस्पृध्रे । अस्पर्धंत ॥

पुरुहूतो यः पुरुगूर्त ऋभ्वाँ एकः पुरुप्रशस्तो अस्ति यज्ञैः ।
रथो न महे शवसे युजानो३ऽस्माभिरिंद्रो अनुमाद्यो भूत् ॥२॥

पुरुऽहूतः । यः । पुरुऽगूर्तः । ऋभ्वा । एकः । पुरुऽप्रशस्तः । अस्ति । यज्ञैः ।
रथः । न । महे । शवसे । युजानः । अस्माभिः । इंद्रः । अनुऽमाद्यः । भूत् ॥२॥

पुरुहूतो बहुभिराहूतः पुरुगूर्तो बहुभिरुद्यमित ऋभ्वा महानेकः प्रधानभूत एवंगुणविशिष्टो य इंद्रो यज्ञैर्यष्टृभिः पूर्वपर्यजनसाधनैः स्तोत्रैर्वा पुरुप्रशस्तोऽस्ति बहुधा प्रशस्तः स्तुतो भवति स इंद्रो रथो न रथ इव महे महते शवसे बलाय तदर्थं युजानोऽस्मत्स्तुतिभिर्युज्यमानः सन् अस्माभिः स्तोतृभिरनुमाद्यो भूत् । सर्वदा स्तुत्यो भवतु ॥

न यं हिंसंति धीतयो न वाणीरिंद्रं नक्षंतीदभि वर्धयंतीः ।
यदि स्तोतारः शतं यत्सहस्रं गृणंति गिर्वणसं शं तदस्मै ॥३॥

न । यं । हिंसंति । धीतयः । न । वाणीः । इंद्रं । नक्षंति । इत् । अभि । वर्धयंतीः ।
यदि । स्तोतारः । शतं । यत् । सहस्रं । गृणंति । गिर्वणसं । शं । तत् । अस्मै ॥३॥

यमिंद्रं धीतयः कर्माणि परिचरणानि न हिंसंति न बाधंते । वाणीर्वाण्यः स्तुतयश्च यं न बाधंते । दातुमसमर्थः पुरुषोऽन्यकृतैः परिचरणैः स्तुतिभिश्च भृशं खिद्यतेऽस्य चेंद्रस्य बहुधनत्वाद्दातृत्वाच्च तस्मिन्प्रयुज्यमानानि परिचरणानि स्तोत्राणि च बाधकानि नाभूवन्नित्यर्थः । किं तर्हीत्यत आह । तमिंद्रं वर्धयंतीर्वर्धयंत्योऽभि नक्षंति । अभिगच्छंति । अपि च गिर्वणसं गिरा संभक्तारमिंद्रं शतं शतसंख्याकाः स्तोतारो यदि गृणंति स्तुवंति । यद्यदि च सहस्रं सहस्रसंख्याकाः स्तोतारः स्तुवंति तत्सर्वं स्तोत्रमस्मा इंद्राय शं सुखकरं भवति ॥

अस्मा एतद्दिव्य१र्चेव मासा मिमिक्ष इंद्रे न्ययामि सोमः ।
जनं न धन्वन्नभि सं यदापः सत्रा वावृधुर्हवनानि यज्ञैः ॥४॥

अस्मै । एतत् । दिवि । अर्चाऽइव । मासा । मिमिक्षः । इंद्रे । नि । अयामि । सोमः ।
जनं । न । धन्वन् । अभि । सं । यत् । आपः । सत्रा । ववृधुः । हवनानि । यज्ञैः ॥४॥

एतदेतस्मिन्दिवि दिवसे सौत्येऽहन्यर्चेवार्चनसाधनेन स्तोत्रेणेव मासा मानेनेंद्राय त्वा वृत्रघ्न इत्यादिमंत्रसाध्येन युक्तो मिमिक्षो वसतीवर्येकधनाख्याभिरद्भिरासिक्तः सोमोऽस्मै ॥ विभक्तिव्यत्ययः ॥ अस्मिन्निंद्रे न्ययामि । नियतोऽभूत् । यद्वा । अस्मा इंद्रायैतत्स्तोत्रं ब्रवाणीति शेषः । दिवि द्युलोकेऽर्चेवार्कः सूर्य इव मासा । लुप्तोपममेतत् । माति परिच्छिनत्तीति मासश्चंद्रमाः । स इव मिमिक्षो वृष्ट्युदकानां सेक्ता य इंद्रो वर्ततेऽस्मिन्निंद्रेऽभिषुतः सोमो नियम्यते स्म । किंच तमिंद्रं यज्ञैर्यजनसाधनैः पुरोडाशादिभिर्हविर्भिः सार्धं हवनानि स्तोत्राणि सत्रा सह वावृधुः । अवर्धयन् । तत्र दृष्टांतः । धन्वन्धन्वनि मरुदेशेऽभि अभिमुखं सं यत् सम्यग्यत्यो गच्छंत्य आपो जनं प्राणिनमिव । यथा मरुदेशे उपलभ्यमाना आपः प्राणिनं वर्धयंति तद्वत् ॥

अस्मा एतन्मह्यांगूषमस्मा इंद्राय स्तोत्रं मतिभिरवाचि ।
असद्यथा महति वृत्रतूर्य इंद्रो विश्वायुरविता वृधश्च ॥५॥
अस्मै । एतत् । महि । आंगूषं । अस्मै । इंद्राय । स्तोत्रं । मतिऽभिः । अवाचि ।
असत् । यथा । महति । वृत्रऽतूर्ये । इंद्रः । विश्वऽआयुः । अविता । वृधः । च ॥५॥

अस्मा इंद्राय महि महदेतदांगूषं स्तोत्रं मतिभिः स्तोतृभिरवाचि । उक्तमभूत् । अस्मा इंद्राय स्तोत्रमिति पुनरुक्तिरादरार्था । विश्वायुः सर्वत्र गतः स इंद्रो महति प्रभूते वृत्रतूर्ये संग्रामे यथा येन प्रकारेणास्माकमविता रक्षको वृधो वर्धयिता चासत् भवेत् तथावाचीत्यन्वयः ॥ ॥ ६ ॥

कदा भुवन्निति पंचर्चं द्वादशं सूक्तं नरस्यार्षं त्रैष्टुभमैंद्रं । तथा चानुक्रांतं । कदा नरस्त्विति ॥ तृतीये छंदोमे महाव्रते च निष्केवल्य उक्तो विनियोगः ॥

कदा भुवन्रथक्षयाणि ब्रह्म कदा स्तोत्रे सहस्रपोष्यं दाः ।
कदा स्तोमं वासयोऽस्य राया कदा धियः करसि वाजरत्नाः ॥१॥
कदा । भुवन् । रथऽक्षयाणि । ब्रह्म । कदा । स्तोत्रे । सहस्रऽपोष्यं । दाः ।
कदा । स्तोमं । वासयः । अस्य । राया । कदा । धियः । करसि । वाजऽरत्नाः ॥१॥

हे इंद्र ब्रह्म ब्रह्माणि स्तोत्राण्यस्मदीयानि रथक्षयाणि रथनिवासानि कदा कस्मिन्काले भुवन् । भवेयुः । रथेऽवस्थितं त्वा कदा प्राप्नुवंतीत्यर्थः । कदा कस्मिन्काले स्तोत्रे स्तुवते मह्यं सहस्रपोष्यं सहस्रसंख्याकपुरुषपोषकं गोसमूहं पुत्रं वा दाः । कदा चास्य मम स्तोतुः स्तोमं स्तोत्रं राया धनेन वासयः । व्यापयः । धियः कर्माणि चाग्निहोत्रादीनि वाजरत्ना वाजरत्नैः रमणीयाः कदा कस्मिन्काले करसि कुर्याः । एवं स्तोता फलस्य विलंबमसहमान इंद्रमनया पृष्टवान् ॥

कर्हि स्वित्तदिंद्र यन्नृभिर्नॄन्वीरैर्वीरान्नीळयासे जयाजीन् ।
त्रिधातु गा अधि जयासि गोष्विंद्र द्युम्नं स्वर्वद्धेह्यस्मे ॥२॥
कर्हि । स्वित् । तत् । इंद्र । यत् । नृऽभिः । नॄन् । वीरैः । वीरान् । नीळयासे । जय । आजीन् ।
त्रिऽधातु । गाः । अधि । जयासि । गोषु । इंद्र । द्युम्नं । स्वःऽवत् । धेहि । अस्मे इति ॥२॥

फलस्य विलंबमसहमान ऋषिरनयापीदं पृच्छति । हे इंद्र कर्हि स्वित्कदा खलु तद्भवेत् । नृभिरस्मदीयैः पुरुषैर्नॄन् शत्रुपुरुषान् तथा वीरैरस्मदीयैः पुत्रैर्वीरान् शत्रुपुत्रांश्च यन्नीळयासि त्वं संश्लेषयेः सया जयेः ॥ नीळयतिः संश्लेषणकर्मा ॥ ईदृशे युद्धे यत्संश्लेषणं तत्कदा भवेदिति वितर्कः । अपि चास्मदर्थं त्वमाजीन् संग्रामान् कदा जय । जयेः । कदा च गोष्वभिगतेषु शत्रुषु विद्यमानास्त्रिधातु त्रिधातूनां क्षीरदधिघृतानां त्रयाणां धारयित्रीर्गा अधि जयासि । अधिकं जयेः । हे इंद्र त्वं स्वर्वत् व्याप्तिमत् द्युम्नं धनमस्मे अस्मासु कदा धेहि । धारयेः ॥

कर्हि स्वित्तदिंद्र यज्जरित्रे विश्वप्सु ब्रह्म कृणवः शविष्ठ ।
कदा धियो न नियुतो युवासे कदा गोमघा हवनानि गच्छाः ॥३॥
कर्हि । स्वित् । तत् । इंद्र । यत् । जरित्रे । विश्वऽप्सु । ब्रह्म । कृणवः । शविष्ठ ।
कदा । धियः । न । निऽयुतः । युवासे । कदा । गोऽमघा । हवनानि । गच्छाः ॥३॥

अनयापि कतिचित प्रश्नाः क्रियंते। हे इंद्र कर्हि स्वित्कदा खलु तद्भवेत। हे शविष्ठ बलवत्तमेंद्र त्वं जरित्रे स्तोत्रे विश्वप्स् बहुविधरूपं ब्रह्मान्न कृणवः करोषीति यत तत्कदा भवेदिति वितर्कः। कदा च धियः कर्माणि। नेति समुच्चये। नियुतः स्तुतीश्च युवासे। आत्मनि योजयेः। कदा च त्वं गोमघा गोमघानि गवा दातॄणि ॥ मंहतेर्दानार्थस्य रूपमुत्तरपदं ॥ हवनानि स्तोत्राणि गच्छाः। अभिगच्छेः ॥

स गोमंघा जरित्रे अश्वश्चंद्रा वाजश्रवसो अधि धेहि पृक्षः।
पीपिहीषः सुदुघामिंद्र धेनुं भरद्वाजेषु सुरुचो रुरुच्याः ॥४॥
सः। गोऽमंघाः। जरित्रे। अश्वऽचंद्राः। वाजऽश्रवसः। अधि। धेहि। पृक्षः।
पीपिहि। इषः। सुऽदुघां। इंद्र। धेनुं। भरत्ऽवाजेषु। सुऽरुचः। रुरुच्याः ॥४॥

हे इंद्र स त्वं जरित्रे स्तोत्रे गोमघा गवां दात्रीरश्वश्चंद्रा अश्वैराह्लादयंतीर्वाजश्रवसो वाजैर्बलैः प्रसिद्धा एवंभूताः पृक्षोऽन्नानि भरद्वाजेषु भरद्वाजपुत्रेष्वस्मास्वधि धेहि। धारय। तथेषस्तान्यन्नानि सुदुघां शोभनदोग्ध्री धेनुं गा च हे इंद्र पीपिहि। प्यायय। अपि च ता इषो गाश्च सुरुचः शोभनदीप्तयो यथा भवंति तथा त्वं रुरुच्याः। दीपयेः। शोभनदीप्तियुक्ताश्च ताः संत्वित्यर्थः ॥

तमा नूनं वृजनमन्यथा चिच्छूरो यच्छक्र वि दुरो गृणीषे।
मा निररं शुक्रदुघस्य धेनोरांगिरसान्ब्रह्मणा विप्र जिन्व ॥५॥
तं। आ। नूनं। वृजनं। अन्यथा। चित। शूरः। यत्। शक्र। वि। दुरः। गृणीषे।
मा। निः। अरं। शुक्रऽदुघस्य। धेनोः। आंगिरसान। ब्रह्मणा। विप्र। जिन्व ॥५॥

हे इंद्र त्व नूनमद्यतनं वृजनं बाधकमस्मदीयं शत्रुमन्यथा चिदन्यथैव प्रकारेण योजय। येन प्रकारेण सर्वे जीवंति तद्भिन्नतमं प्रकारं मरणाख्यं प्रापयेत्यर्थः। आकारः पूरकः। हे शक्र सर्वकार्येषु शक्तेंद्र शूरः शौर्योपेतो वि दुरो विशेषेण दारयिता शत्रूणां। यद्वा। दुरो द्वाराणि शत्रुसंबंधीनि वि घटयस्व यद्यस्माद्गृणीषे अस्माभिः स्तूयसे तस्मात्कारणात शुक्रदुघस्य शुक्राणां निर्मलानां दोग्धुरिंद्रस्य धेनोर्वाचः स्तोत्रात्मा निररं। मा निर्गच्छेयं। यद्वा। शुक्रस्य पयसो दोग्ध्या धेनोस्त्वया दत्ताया गोः सकाशान्मा निर्गच्छेयं ॥ अरमित्याव्यातम् गतावित्यस्य रूपं ॥ सा सर्वदास्मासु निवसत्वित्यर्थः। हे विप्र प्राज्ञेंद्र आंगिरसानंगिरोगोत्रजानस्मान ब्रह्मणान्नेन जिन्व। प्रीणय ॥ ॥ ८ ॥

सत्रा मदास इति पंचर्चं त्रयोदशं सूक्तं नरस्यार्षं त्रैष्टुभमैंद्रं। सत्रेत्यनुक्रांतं ॥ पृष्ठ्यस्य पंचमेऽहनि निष्केवल्य एतत्सूक्तं शस्यं। सूत्रितं च। प्रेद ब्रह्मेंद्रो मदाय सत्रा मदास इति निष्केवल्यं। आ० ८ १२। इति ॥ विश्वजिति माध्यंदिनसवने प्रशास्तुः शस्त्र इदं साममूक्ताख्यं शंसनीयं। सूत्रितं च। सत्रा मदासो यो जात एवाभूरेक इति साममूक्तानि। आ० ८ ७। इति ॥ महाव्रतेऽपि निष्केवल्य उक्तो विनियोगः ॥

सत्रा मदासस्तव विश्वजन्याः सत्रा रायोऽध ये पार्थिवासः।
सत्रा वाजानामभवो विभक्ता यद्देवेषु धारयथा असुर्यं ॥१॥
सत्रा। मदासः। तव। विश्वऽजन्याः। सत्रा। रायः। अध। ये। पार्थिवासः।
सत्रा। वाजानां। अभवः। विऽभक्ता। यत्। देवेषु। धारयथाः। असुर्यं ॥१॥

हे इंद्र तव त्वदीया मदासः सोमपानजनिता मदाः सत्रा। सत्यनामैतत। सत्यं विश्वजन्याः सर्वजनहिता भवंति। यद्वा। सत्रेति महन्नाम। महांतस्तव सदा इति योज्यं। अधापि च पार्थिवासः पृथिव्युपलक्षितं

लोकत्रये भवास्त्वदीया ये रायो धनसमूहाः संति तेऽपि सत्रा सत्यं विश्वजनहिता भवतीत्यन्वयः । किंच त्वं वाजानामन्नाना सत्रा सत्यं विभक्ता दाताभवः । भवसि । यद्वा । सत्रा महता वाजानामिति योज्यं । यद्यस्मात्त्वं देवेषु मध्येऽसुर्यं बलं धारयथा अतः कारणात्त्वमेव करोषीत्यर्थः ॥

अनु प्र येजे जन ओजो अस्य सत्रा दधिरे अनु वीर्याय ।
स्यूमगृभे दुधयेऽर्वते च क्रतुं वृंजंत्यपि वृत्रहत्ये ॥ २ ॥
अनु । प्र । येजे । जनः । ओजः । अस्य । सत्रा । दधिरे । अनु । वीर्याय ।
स्यूमऽगृभे । दुधये । अर्वते । च । क्रतुं । वृंजंति । अपि । वृत्रऽहत्ये ॥ २ ॥

अस्येंद्रस्योजो बलं जनो यजमानोऽनु प्र येजे । संततं प्रकर्षेण यजते । पूजयति । अपि च तमिंद्रं वीर्याय वीरकर्म कर्तुं सत्रा सत्यमनु दधिरे । पुरोदधिरे यजमानाः । यद्वा । सत्रा महांतमिंद्रमिति योज्यं । अपि च स्यूमगृभे स्यूमः स्यूतानविच्छेदेन वर्तमानान शत्रून गृह्णते दुधये । दुधिर्हिंसाकर्मा । तेषां हिंसकायार्वते शत्रूणामभिगंत्रे च तस्मा इंद्राय क्रतुं कर्म परिचरणात्मकं वृंजंति । निष्पादयंति । किमर्थं । वृत्रहत्ये वृत्रस्य वारकस्य शत्रोर्हननर्निमित्तं ॥

तं सध्रीचीरूतयो वृष्ण्यानि पौंस्यानि नियुतः सश्चुरिंद्रं ।
समुद्रं न सिंधव उक्थशुष्मा उरुव्यचसं गिर आ विशंति ॥ ३ ॥
तं । सध्रीचीः । ऊतयः । वृष्ण्यानि । पौंस्यानि । निऽयुतः । सश्चुः । इंद्रं ।
समुद्रं । न । सिंधवः । उक्थऽशुष्माः । उरुऽव्यचसं । गिरः । आ । विशंति ॥ ३ ॥

तमिंद्रमूतयो मरुतः सध्रीचीः सहांचत्यः संगता भूत्वा सश्चुः । सचंते । सेवंते । यद्वा । ऊतयस्तर्पकाण्यन्नानि सह वर्तमानानि भूत्वा सेवंते । तथा वृष्ण्यानि वीर्याणि पौंस्यानि बलानि च नियुतो रथे युज्यमाना वडवाश्च तमिंद्रं सेवंते । अपि चोक्थशुष्माः । उक्थं शस्त्रं । तदेव बलं यासां तादृशा गिरः स्तुतयश्चोरुव्यचसं विस्तीर्णव्याप्तिकं तमिंद्रमा विशंति । प्रविशंति । तत्र दृष्टांतः । समुद्रं न सिंधवः । यथा स्यंदनशीला नद्यः समुद्रमा विशंत्याविश्य च विभक्ततया न दृश्यंते एवं सर्वा अपि स्तुतय इंद्रेणैकीभवंतीत्यर्थः ॥

स रायस्खामुप सृजा गृणानः पुरुश्चंद्रस्य त्वमिंद्र वस्वः ।
पतिर्बभूथासमो जनानामेको विश्वस्य भुवनस्य राजा ॥ ४ ॥
सः । रायः । खां । उप । सृज । गृणानः । पुरुऽचंद्रस्य । त्वं । इंद्र । वस्वः ।
पतिः । बभूथ । असमः । जनानां । एकः । विश्वस्य । भुवनस्य । राजा ॥ ४ ॥

हे इंद्र गृणानः स्तूयमानः स त्वं रायो धनस्य खां । नदीनामैतत् । अत्र तत्सदृशां धारां लक्ष्यते । धारामुप सृज । विमुंच । अस्माभिः संयोजयेत्यर्थः । कीदृशस्य धनस्य । पुरुश्चंद्रस्य बहूनामाह्लादकस्य वस्वो निवासकस्य । अपि चासमोऽनुपमः सर्वोत्कृष्टस्त्वं जनानां सर्वेषां प्राणिनां पतिरधिपतिर्बभूथ । तथा विश्वस्य सर्वस्य भुवनस्य भूतजातस्यैकोऽसाधारणो राजेश्वरश्च बभूविथ ॥

स तु श्रुधि श्रुत्या यो दुवोयुर्द्यौर्न भूमाभि रायो अर्यः ।
असो यथा नः शवसा चकानो युगेयुगे वयसा चेकितानः ॥ ५ ॥

सः । तु । श्रुधि । श्रुत्या । यः । दुवःऽयुः । द्यौः । न । भूम । अभि । रायः । अर्यः ।
असः । यथा । नः । शवसा । चकानः । युगेऽयुगे । वयसा । चेकितानः ॥५॥

हे इंद्र श्रुत्या श्रुत्यानि श्रोतव्यानि स्तोत्राणि तु क्षिप्रं श्रुधि । शृणु । यस्त्वं दुवोयुरस्मदीयं परिचरणमात्मन इच्छन् अर्यः अरेः संबंधीनि रायो धनानि भूम बहुतराणि द्यौर्न सूर्य इवाभि भवसि स त्वं श्रुधीत्यन्वयः । अपि च शवसात्मीयेन बलेन स्तोतव्येन युक्तश्चकानः स्तूयमानो युगे युगे काले काले वयसा हविर्लक्षणेनान्नेन चेकितानः प्रज्ञायमानस्त्वं यथा येन प्रकारेण नोऽस्माकमसाधारणोऽसि तथासः । स्याः ॥ ॥८॥

अर्वाग्रथमिति पचर्चं चतुर्दशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं । अर्वाग्रथमित्यनुक्रांतं ॥ महाव्रते निष्केवल्य उक्तो विनियोगः ॥

अर्वाग्रथं विश्ववारं त उग्रेंद्र युक्तासो हरयो वहंतु ।
कीरिश्चिद्धि त्वा हवते स्वर्वानृधीमहि सधमादस्ते अद्य ॥१॥
अर्वाक् । रथं । विश्वऽवारं । ते । उग्र । इंद्र । युक्तासः । हरयः । वहंतु ।
कीरिः । चित् । हि । त्वा । हवते । स्वःऽवान् । ऋधीमहि । सधऽमादः । ते । अद्य ॥१॥

हे उग्रोद्गूर्णबलेंद्र युक्तासो रथेन युक्ता हरयोऽश्वास्ते त्वदीयं विश्ववारं विश्वैर्वरणीयं रथमर्वागस्मदभिमुखं वहंतु । आनयंतु । हि यस्मात् स्वर्वान् । स्वः सुष्ठु अरणीयं गुणजातं । तद्वान् कीरिश्चित् स्तोता भरद्वाज ऋषिस्त्वा त्वां हवते आह्वयति तस्मात्कारणात्त्वदीयं रथमभिमुखं वहंत्वित्यर्थः । वयं चाद्येदानीं ते त्वया सधमादः सह मादंत ऋधीमहि । समृद्धा भवेम ॥

तृतीये पर्यायेऽच्छावाकस्य प्रो द्रोण इत्येषा शस्त्रयाज्या । सूत्रितं च । प्रो द्रोणे हरयः कर्माग्मन्निति याज्या । आ० ६.४ । इति ॥

प्रो द्रोणे हरयः कर्माग्मन्पुनानास ऋज्यंतो अभूवन् ।
इंद्रो नो अस्य पूर्व्यः पपीयाद्द्युक्षो मदस्य सोम्यस्य राजा ॥२॥
प्रो इति । द्रोणे । हरयः । कर्म । अग्मन् । पुनानासः । ऋज्यंतः । अभूवन् ।
इंद्रः । नः । अस्य । पूर्व्यः । पपीयात् । द्युक्षः । मदस्य । सोम्यस्य । राजा ॥२॥

हरयो हरितवर्णाः सोमा नः कर्मास्मदीयं यज्ञं प्रो अग्मन् । प्रकर्षेण गच्छंति । प्राप्नुवंति । प्राप्य च पुनानासः पूयमाना द्रोणे द्रोणकलशे ऋज्यंत ऋजु गच्छंतोऽभूवन् । भवंति । पूर्व्यः पुरातनो द्युक्षो दीप्तनिवासभूतो द्युस्थानो वा मदस्य मदकरस्य सोम्यस्य सोमस्य राजेश्वर एवंभूत इंद्रश्चास्येमं सोमं पपीयात् । पिबतु ॥

आसस्राणासः शवसानमच्छेंद्रं सुचक्रे रथ्यासो अश्वाः ।
अभि श्रव ऋज्यंतो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ॥३॥
आऽसस्राणासः । शवसानं । अच्छ । इंद्रं । सुऽचक्रे । रथ्यासः । अश्वाः ।
अभि । श्रवः । ऋज्यंतः । वहेयुः । नु । चित् । नु । वायोः । अमृतं । वि । दस्येत् ॥३॥

आसस्राणासः परितो गच्छंतो रथ्यासो रथे युक्ता अश्वा ऋज्यंत ऋजुगमनाः संतः सुचक्रे शोभनचक्रे रथेऽवस्थितं शवसानं बलमिवाचरंतमिंद्रं श्रवः श्रवणीयमस्मदीयं हविरच्छाभिमुख्येनाभि वहेयुः । आवहेयुः ।

नु चिदिति निपातो निषेधेऽत्र वर्तते। अमृतममरणहेतुभूतं सोमलक्षणं हविर्वायोर्हेतोर्नु इदानीं नु चित नैव वि दस्येत। क्षयं न प्राप्नुयात्। पात्रे गृहीतः सोमो वायुना शुष्यति ततः पूर्वमेव तत्पानार्थमश्वा इंद्रमभिवहेयुरित्यर्थः॥

वरि॑ष्ठो अस्य॒ दक्षि॑णामिय॒र्तींद्रो॑ म॒घोनां॑ तुविकू॒र्मित॑मः।
यया॑ वज्रिवः परि॒यास्यंहो॑ म॒घा च॑ धृष्णो॒ दय॑से॒ वि सू॒रीन् ॥४॥
वरि॑ष्ठः। अ॒स्य॒। दक्षि॑णां। इ॒य॒र्ति॒। इंद्रः॑। म॒घोनां॑। तु॒वि॒कू॒र्मिऽत॑मः।
यया॑। व॒ज्रि॒ऽवः॒। प॒रि॒ऽयासि॑। अंहः॑। म॒घा। च॒। धृ॒ष्णो॒ इति॑। दय॑से। वि। सू॒रीन् ॥४॥

वरिष्ठ उरुतमस्तुविकूर्मितमोऽतिशयेन बहुविधकर्मेंद्रो मघोनां मघवतां हविर्लक्षणधनोपेतानां मध्येऽस्य यजमानस्य दक्षिणां यज्ञे दातव्यामियर्ति। प्रेरयति। यद्वा। मघोनामित्यस्येत्यनेन समानाधिकरणं॥ वचनव्यत्ययः॥ मघोनो हविष्मतोऽस्य यजमानस्येत्यर्थः। शेषः प्रत्यक्षकृतः। हे वज्रिवो वज्रवन्निंद्र यया दक्षिणया दत्तयांहः पापं यज्ञसंबंधि परियासि विनाशयसि हे धृष्णो धर्षक मघा मघानि धनानि सूरीन् स्तोतॄन् पुत्रांश्च तया च दक्षिणया वि दयसे प्रयच्छसि तादृशीं दक्षिणां प्रेरयसीत्यर्थः॥

इंद्रो॒ वाज॑स्य॒ स्थवि॑रस्य दा॒तेंद्रो॑ गी॒र्भिर्व॑र्धतां वृ॒द्धम॑हाः।
इंद्रो॑ वृ॒त्रं हनि॑ष्ठो अस्तु॒ सत्वा ता सू॒रिः पृ॑णति॒ तूतु॑जानः ॥५॥
इंद्रः॑। वाज॑स्य। स्थवि॑रस्य। दा॒ता। इंद्रः॑। गीः॒ऽभिः। व॒र्ध॒तां॒। वृ॒द्धऽम॑हाः।
इंद्रः॑। वृ॒त्रं। हनि॑ष्ठः। अ॒स्तु॒। सत्वा॑। आ। ता। सू॒रिः। पृ॒ण॒ति॒। तूतु॑जानः ॥५॥

अयमिंद्रः स्थविरस्य वाजस्यान्नस्य बलस्य वा दाता भवतु। स चेंद्रो वृद्धमहाः प्रवृद्धतेजस्कः सन् गीर्भिरस्मदीयाभिः स्तुतिभिर्वर्धतां। सत्वा शत्रूणां शातयिता स इंद्रो वृत्रमावरकं शत्रुं हनिष्ठो हंतृतमोऽस्तु। भवतु। अपि च सूरिः प्रेरकः स इंद्रस्तूतुजानस्त्वरमाणस्ता तानि धनान्या पृणाति। अस्मभ्यं प्रयच्छतु॥ ॥९॥

अपादित इति पंचर्चं पंचदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं। अपादित्यनुक्रांतं॥ महाव्रते निष्केवल्य उक्तो विनियोगः॥

अपा॑दि॒त उदु॑ नश्चि॒त्रत॑मो म॒हीं भ॑र्षद्द्यु॒मती॒मिंद्र॑हूतिं।
पन्य॑सीं धी॒तिं दैव्य॑स्य॒ याम॒ञ्जन॑स्य रा॒तिं व॑नते सु॒दानुः॑ ॥१॥
अपा॑त्। इ॒तः। उत्। ऊं॒ इति॑। नः॒। चि॒त्रऽत॑मः। म॒हीं। भ॒र्ष॒त्। द्यु॒ऽमतीं॑। इंद्र॑ऽहूतिं।
पन्य॑सीं। धी॒तिं। दैव्य॑स्य। याम॑न्। जन॑स्य। रा॒तिं। व॒न॒ते॒। सु॒ऽदानुः॑ ॥१॥

चित्रतमश्चायनीयतम आश्चर्यतमो वा स इंद्रो नोऽस्मदीयादितोऽस्माद्यज्ञादस्माद्दपात्। सोमं पिबतु। यद्वा। इतोऽस्मात्कर्तॄणोंऽस्मानपात्। पातु। रक्षतु। उदु इत्येतौ पूरणौ। तथा महीं महतीं द्युमतीं दीप्तिमतीमिंद्रहूतिमिंद्रस्य स्तुतिं भर्षत्। स इंद्रो बिभर्तु। धारयतु। दैव्यस्य देवसंबंधिनो जनस्य यामन् यामनि यज्ञे क्रियमाणां पन्यसीं स्तुत्यतमां धीतिं परिचरणरूपां क्रियां रातिं दातव्यं हविश्च सुदानुः शोभनदान इंद्रो वनते। संभजतु॥

दू॒राच्चि॒दा व॑सतो अस्य॒ कर्णा॒ घोषा॒दिंद्र॑स्य तन्यति ब्रुवा॒णः।
एय॑मेनं दे॒वहू॑तिर्ववृत्यान्म॒द्र्य१॒॑गिंद्र॑मि॒यमृ॒च्यमा॑ना ॥२॥

दूरात् । चित् । आ । वसतः । अस्य । कर्णा । घोषात् । इंद्रस्य । तन्यति । ब्रुवाणः ।
आ । इयं । एनं । देवऽहूतिः । ववृत्यात् । मद्र्यक् । इंद्रं । इयं । ऋच्यमाना ॥२॥

अस्येंद्रस्य कर्णा कर्णौ दूराच्चित दूरदेशादप्या वसतः । स्तोत्रश्रवणार्थमागच्छतः । इंद्रस्य घोषाद्घोषणीयात्स्तोत्राद्धेतोर्ब्रुवाणः स्तुवन् स्तोता तन्यति । शब्दं करोति । यद्वा । सर्वत्र विस्तारयति । देवहूतिर्देवस्येंद्रस्याह्वानकर्त्रीयं स्तुतिश्च ऋच्यमाना स्तयं प्रेर्यमाणा सत्येनमिंद्रं मद्र्यक् मदभिमुखमा ववृत्यात् । आवर्तयतु । पुनरियमिति पूरणः ॥

तं वो धिया परमया पुराजामजरमिंद्रमभ्यनूष्यर्कैः ।
ब्रह्मा च गिरो दधिरे समस्मिन्महांश्च स्तोमो अधि वर्धदिंद्रे ॥३॥
तं । वः । धिया । परमया । पुराऽजां । अजरं । इंद्रं । अभि । अनूषि । अर्कैः ।
ब्रह्म । च । गिरः । दधिरे । सं । अस्मिन् । महान् । च । स्तोमः । अधि । वर्धत् । इंद्रे ॥३॥

हे इंद्र तं तादृशमिंद्रं वस्त्वा ॥ व्यत्ययेन बहुवचनं ॥ परमयोत्कृष्टतमया धिया स्तुत्यार्कैरर्चनसाधनैर्हविर्भिः सार्धमभ्यनूषि । अभिष्टौमि । कीदृशं । पुराजां पूर्वस्मिन्काले जातं चिरंतनमजरं जरारहितं नित्यं । अतः कारणादस्मिन्निंद्रे ब्रह्म ब्रह्माणि हविर्लक्षणान्यन्नानि गिरः स्तुतयश्च सं दधिरे । संधीयंते । संश्लिष्यंते । महान् प्रवृद्धः स्तोमश्चाधि वर्धत । अधिकं वर्धते ॥

वर्धाद्यं यज्ञ उत सोम इंद्रं वर्धाद्ब्रह्म गिर उक्था च मन्म ।
वर्धाहैनमुषसो यामन्नक्तोर्वर्धान्मासाः शरदो द्याव इंद्रं ॥४॥
वर्धात् । यं । यज्ञः । उत । सोमः । इंद्रं । वर्धात् । ब्रह्म । गिरः । उक्था । च । मन्म ।
वर्ध । अह । एनं । उषसः । यामन् । अक्तोः । वर्धान् । मासाः । शरदः । द्यावः । इंद्रं ॥४॥

यमिंद्रं यज्ञो यागो वर्धात् वर्धयति । उतापि च तत्साधनभूतः सोमश्च यमिंद्रं वर्धयति । तथा ब्रह्म हविर्लक्षणमन्नं च पुरोडाशादिकं यमिंद्रं वर्धात् वर्धयति । गिरः स्तोत्राणि मन्म मननीयान्युक्थोक्थशस्त्राणि च य वर्धयति एनमिंद्रमुषसश्चाक्तो रात्रेर्यामन् यामनि गमने सति वर्ध । वर्धयति । मासाः शरदः संवत्सराश्च द्यावो दिवसाश्चैनमिंद्रं वर्धान् । वर्धयंति ॥

एवा जज्ञानं सहसे असामि वावृधानं राधसे च श्रुताय ।
महामुग्रमवसे विप्र नूनमा विवासेम वृत्रतूर्येषु ॥५॥
एव । जज्ञानं । सहसे । असामि । ववृधानं । राधसे । च । श्रुताय ।
महां । उग्रं । अवसे । विप्र । नूनं । आ । विवासेम । वृत्रऽतूर्येषु ॥५॥

हे विप्र मेधाविन्निंद्र एवैव जज्ञानं प्रादुर्भवंतं सहसे शत्रूणामभिभवार्थमसामि बहुलं वावृधानं वर्धमानं महां महांतमुग्रमुद्गूर्णबलं त्वा नूनमद्य वृत्रतूर्येषु श्रुताय विश्रुताय राधसे धनाय चावसे रक्षणाय चा विवासेम । परिचरेम ॥ ॥१०॥

मद्रस्य कवीरिति पंचर्चं षोडशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं । मंद्रस्येत्यनुक्रांतं ॥ गतो विनियोगः ॥

मंद्रस्यं कविर्दिव्यस्य वह्नेर्विप्रमंन्मनो वचनस्य मध्वः ।
अपा नस्तस्य सचनस्य देवेषो युवस्व गृणते गोअंग्राः ॥१॥

मंद्रस्यं । कवेः । दिव्यस्यं । वह्नेः । विप्रऽमन्मनः । वचनस्यं । मध्वः ।
अपाः । नः । तस्यं । सचनस्यं । देव । इषः । युवस्व । गृणते । गोऽअंग्राः ॥१॥

मंद्रस्य मोदनस्य मदकरस्य वा कविर्विक्रांतस्य दिव्यस्य दिवि भवस्य वह्नेर्वोढुर्विप्रमन्मनः । विप्रा मेधाविनो मन्मनः स्तोतारो यस्य स तथोक्तः । तस्य वचनस्य वचनीयस्य स्तुत्यस्य तस्य सर्वत्र प्रसिद्धस्य सचनस्य सेव्यस्य एवंभूतस्य मध्वो मधुनः सोमस्य ॥ क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥ एवंभूतं नोऽस्मदीयं सोमं हे इंद्र त्वमपाः । पिब । अपि च हे देव द्योतमानेंद्र गृणते स्तुवते ॥ तृतीयार्थे चतुर्थी ॥ स्तुवता मया गोअग्राः । गावोऽग्रे प्रमुखे यासां तादृशा इषोऽन्नानि युवस्व । संयोजय ॥

अयमुंशानः पर्यद्रिमुस्रा ऋतधीतिभिर्ऋतयुग्युंजानः ।
रुजदरुंग्णं वि वलस्य सानुं पणींर्वचोभिरभि योधदिंद्रः ॥२॥

अयं । उशानः । परिं । अद्रिं । उस्राः । ऋतधीतिऽभिः । ऋतऽयुक् । युजानः ।
रुजत् । अरुंग्णं । वि । वलस्यं । सानुं । पणीन् । वचःऽभिः । अभि । योधत् । इंद्रः ॥२॥

अयमिंद्रोऽद्रिं वलेन गोपिधानाय निर्मितं शिलोच्चयं परि परितः पर्वतसमीपे विद्यमाना उस्रा गा उशानः कामयमान ऋतधीतिभिः सत्यकर्मभिरंगिरोभिर्युंजानः संगच्छमान ऋतयुक् ऋतेन तत्कृतेन स्तोत्रेण युक्तश्च भूत्वा वलस्यासुरस्य स्वभूतं सानुमुच्छ्रितं पर्वतमरुग्णमन्यैरभग्नं वि रुजत् । व्यभांक्षीत् । किंच पणीन्वलानुचरानेतत्संज्ञानसुरांश्च वचोभिः स्तुतिरूपैर्युधः सतर्जनैर्वा वाक्यैरेव वायमिंद्रोऽभि योधत् । अभ्ययुध्यत ॥

अयं द्योतयदद्युतो व्य१क्तून्दोषा वस्तोः शरद इंदुरिंद्र ।
इमं केतुमंदधुर्नू चिदह्नां शुचिंजन्मन उपसंश्चकार ॥३॥

अयं । द्योतयत् । अद्युतः । वि । अक्तून् । दोषा । वस्तोः । शरदः । इंदुः । इंद्र ।
इमं । केतुं । अदधुः । नु । चित् । अह्नां । शुचिऽजन्मनः । उषसः । चकार ॥३॥

हे इंद्र त्वया नियम्यमानः पीयमानो वायमिंदुः सोमोऽद्युतोऽद्योतमानानक्तून् । अक्तुरिति रात्रिनाम । अत्र च तत्संबंधात्पक्षमासादयो लक्ष्यंते । पक्षमासादीन् तथा दोषा रात्रिं वस्तोर्दिवसं शरदः संवत्सरांश्च वि द्योतयत् । व्यदीपयत् । कृत इत्यत आह । न चित् पुरा देवा इमं सोमं चंद्रात्मना नभसि वर्तमानमह्नां दिवसानां केतुं प्रज्ञापकं यस्माददधुः व्यदधुः अकुर्वन् तस्मादनेन पक्षमासादयः सर्वे प्रकाश्यंते । चंद्रगत्यधीनत्वात्तिथिविभागानां । अपि चायं सोम उषस उषःकालान् शुचिजन्मन आत्मीयेन तेजसा शुद्धोदयान् चकार । करोति ॥

अयं रोचयदरुचो रुचानो३यं वासयद्व्यृ१तेनं पूर्वीः ।
अयमीयत ऋतयुग्भिरश्वैः स्वर्विदा नाभिना चर्षणिप्राः ॥४॥

अयं । रोचयत् । अरुचः । रुचानः । अयं । वासयत् । वि । ऋतेनं । पूर्वीः ।
अयं । ईयते । ऋतयुक्ऽभिः । अश्वैः । स्वःऽविदा । नाभिना । चर्षणिऽप्राः ॥४॥

अयमिंद्रो रुचानो रोचमानः सूर्यात्मना दीप्यमानोऽरुचः प्रकाशरहितान् तमसा मलीमसान् सर्वाँल्लोकानरोचयत । प्रकाशयति । तथा पूर्वीर्बह्वीरुषसश्चायमिंद्र ऋतेन सत्यभूतेन सर्वत्र गमनशीलेन वा तेजसा विवासयत । व्यापयति । तत्रत्यानि तमांसि निवर्तयतीत्यर्थः । तथा ऋतयुग्भिर्ऋतेन स्तोत्रेण युज्यमानैरश्वैर्नाभिना संनद्धेन स्वर्विदा सुष्ठुरणीयस्य धनस्य लंभकेन रथेन चर्षणिप्राश्चर्षणीनां मनुष्याणां कामैः पूरयिता सन् अयमेवेंद्र ईयते । गच्छति ॥

नू गृणानो गृणते प्रत्न राजन्निषः पिन्व वसुदेयाय पूर्वीः ।
अप ओषधीरविषा वनानि गा अर्वतो नॄनृचसे रिरीहि ॥५॥
नु । गृणानः । गृणते । प्रत्न । राजन् । इषः । पिन्व । वसुऽदेयाय । पूर्वीः ।
अपः । ओषधीः । अविषाः । वनानि । गाः । अर्वतः । नॄन् । ऋचसे । रिरीहि ॥५॥

हे प्रत्न पुरातन राजन् राजमानेंद्र गृणानः स्तूयमानस्त्वं वसुदेयाय वसूनि धनानि त्वया देयानि यस्मै तादृशाय गृणते स्तुवते पूर्वीर्बह्वीरिषोऽन्नानि नु क्षिप्रं पिन्व । सिंच । प्रयच्छेत्यर्थः । किंच ऋचसेऽर्चयित्रे स्तोत्रेऽपो वृष्टिलक्षणान्युदकान्योषधीर्व्रीह्यादीन् अविषा विषरहितानि रक्षकाणि वा वनानि वृक्षजातानि चूतपनसादीनि गा अर्वतोऽश्वान्नॄन्मनुष्यांश्च कर्मकरान् रिरीहि । देहि ॥ ॥११॥

इंद्र पिबेति पंचर्चं सप्तदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं । इंद्र पिबेत्यनुक्रांतं ॥ गतः सूक्तविनियोगः ॥ प्रथमे रात्रिपर्यायेऽच्छावाकस्याद्या शस्त्रयाज्या । सूत्रितं च । इंद्र पिब तुभ्यं सुतो मदायेति याज्या । आ० ६. ४. । इति ॥

इंद्र पिब तुभ्यं सुतो मदायाव स्य हरी वि मुचा सखाया ।
उत प्र गाय गण आ निषद्याथा यज्ञाय गृणते वयो धाः ॥१॥
इंद्र । पिब । तुभ्यं । सुतः । मदाय । अव । स्य । हरी इति । वि । मुच । सखाया ।
उत । प्र । गाय । गणे । आ । निऽसद्य । अथ । यज्ञाय । गृणते । वयः । धाः ॥१॥

हे इंद्र तं सोमं पिब यः सोमस्तुभ्यं मदाय मदार्थं सुतोऽभिषुतः । यतस्त्वया सोमः पातव्योऽतः कारणात्सखाया समानख्यानौ मित्रभूतौ वा हरी अश्वाववस्य । अवस्थापय । तदनंतरं वि मुच । रथाद्विमुंच । उतापि च गणेऽस्मत्स्तोतृसंघ आ आभिमुख्येन निषद्योपविश्य प्र गाय । अस्माभिः कृतं स्तोत्रमुपश्लोकय । अथानंतरं यज्ञाय यजमानाय गृणते स्तुवते वयोऽन्नं धाः । देहि ॥

द्वितीये रात्रिपर्यायेऽच्छावाकस्यास्य पिबेति शस्त्रयाज्या । सूत्रितं च । अस्य पिबेति याज्या । आ० ६. ४. । इति ॥

अस्य पिब यस्य जज्ञान इंद्र मदाय क्रत्वे अपिबो विरप्शिन् ।
तमु ते गावो नर आपो अद्रिरिंदुं समह्यन्पीतये समस्मै ॥२॥
अस्य । पिब । यस्य । जज्ञानः । इंद्र । मदाय । क्रत्वे । अपिबः । विऽरप्शिन् ।
तं । ऊं इति । ते । गावः । नरः । आपः । अद्रिः । इंदुं । सं । अह्यन् । पीतये । सं । अस्मै ॥२॥

हे इंद्र अस्येमं सोमं पिब । हे विरप्शिन् महन् जज्ञानो जायमान एव त्वं यस्य यं सोममपिबः पूर्वं पीतवानसि । किमर्थं । मदाय हर्षाय क्रत्वे कर्मणे वृत्रवधादिलक्षणं वीर्यकर्म कर्तुं च । तमु तादृशमेवेंदुं सोमं

गावो गवि भवाः श्रपणसाधनाः क्षीरादयो नरो नेतारोऽध्वर्यव आपो वसतीवर्याख्या अद्रिरभिषवार्थो ग्रावा एते सर्वेऽस्मा अस्मा इंद्रस्य ते तव पीतये पानार्थं समह्मन्। समगमयन्॥ हि गतावित्यस्माल्लुङि तद्रूप। पुनः समिति पूरकः॥

समिद्धे अग्नौ सुत इंद्र सोम आ त्वा वहंतु हरयो वहिष्ठाः।
त्वायता मनसा जोहवीमींद्रा याहि सुविताय महे नः ॥३॥
संऽइद्धे। अग्नौ। सुते। इंद्र। सोमे। आ। त्वा। वहंतु। हरयः। वहिष्ठाः।
त्वाऽयता। मनसा। जोहवीमि। इंद्र। आ। याहि। सुविताय। महे। नः ॥३॥

अग्नौ समिद्धे दीप्ते सोमे सुतेऽभिषुते सति हे इंद्र त्वा त्वां वहिष्ठा वोढृतमा हरयोऽश्वा आ वहंतु। इम यज्ञं प्रत्यानयंतु। अहं च त्वायता त्वा कामयमानेन मनसा जोहवीमि। पुनः पुनराह्वयामि। हे इंद्र त्वं नोऽस्माकं महे महते सुविताय कल्याणाया याहि। आगच्छ॥

आ याहि शश्वदुशता ययाथेंद्र महा मनसा सोमपेयं।
उप ब्रह्माणि शृणव इमा नोऽथा ते यज्ञस्तन्वे३ वयो धात् ॥४॥
आ। याहि। शश्वत्। उशता। ययाथ। इंद्र। महा। मनसा। सोमऽपेयं।
उप। ब्रह्माणि। शृणवः। इमा। नः। अथ। ते। यज्ञः। तन्वे। वयः। धात् ॥४॥

हे इंद्र पुरा शश्वद्बहुकृत्वो ययाथ। सोमपानार्थं यज्ञं गतवानसि। अतः कारणादुशतास्मान्कामयमानेन महा महता मनसा सह सोमपेयं सोमः पीयते यस्मिन् तादृशमस्मदीयं यज्ञमा याहि। अभिगच्छ। आगत्य च ब्रह्माणि स्तोत्राणीमिदानीं प्रयुज्यमानानि नोऽस्मदीयान्युप शृणवः। उपशृणु। अथानंतरं यज्ञो यजमानस्ते तव तन्वे शरीराय त्वच्छरीरपोषणार्थं वयोऽन्नं सोमात्मकं धात्। ददातु॥

यदिंद्र दिवि पार्ये यदृधग्यद्वा स्वे सदने यत्र वासि।
अतो नो यज्ञमवसे नियुत्वान्त्सजोषाः पाहि गिर्वणो मरुद्भिः ॥५॥
यत्। इंद्र। दिवि। पार्ये। यत्। ऋधक्। यत्। वा। स्वे। सदने। यत्र। वा। असि।
अतः। नः। यज्ञं। अवसे। नियुत्वान्। सऽजोषाः। पाहि। गिर्वणः। मरुत्ऽभिः ॥५॥

हे इंद्र पार्ये पारगे दूरदेशे दिवि द्युलोकाख्ये यद्यदि त्वं वर्तसे। यदि वा ऋधक्। एतत्पृथक्शब्देन समानार्थं। पृथगन्यस्मिन्देशे वर्तसे। यद्वा स्वे स्वकीये सदने गृहे। अथवा किमनेन विशेषणेन यत्र यस्मिन्देशेऽसि भवसि अतोऽस्मात्स्थानादागत्य हे गिर्वणो गिरा संभजनीयेंद्र नियुत्वान्। नियुतोऽश्वाः। तद्वान्मरुद्भिः सजोषाः सह प्रीयमाणस्त्वं नोऽस्माकमवसे रक्षणाय यज्ञमस्मदीयं यागं पाहि। रक्ष। यद्वा। यज्ञं यजनसाधनमस्मदीयं सोममवसे तर्पणाय पाहि। पिब॥ ॥१०॥

अर्हंत्सान इति पंचर्चमष्टादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं। अनुक्रांतं च। अर्हंत्सान इति॥ गतो विनियोगः॥

अहेळमान उप याहि यज्ञं तुभ्यं पवंत इंदवः सुतासः।
गावो न वज्रिन्त्स्वमोको अच्छेंद्रा गहि प्रथमो यज्ञियानां ॥१॥

अहेळमानः । उप । याहि । यज्ञं । तुभ्यं । पवंते । इंदवः । सुतासः ।
गावः । न । वज्रिन । स्वं । ओकः । अच्छ । इंद्र । आ । गहि । प्रथमः । यज्ञियानां ॥१॥

हे इंद्र अहेळमानोऽक्रुध्यंस्त्वं यज्ञमस्मदीयमुप याहि । उपगच्छ । यतः कारणात्तुभ्यं त्वदर्थं सुतासोऽभिषुता इंदवः सोमाः पवंते पूयंते दशापवित्रेण शोध्यंते । हे वज्रिन वज्रवन्निंद्र गावो न गावः स्वकीयं गोष्ठमिव स्व स्वकीयमोकः स्थानं द्रोणकलशादिलक्षणमच्छाभिमुख्येन । प्राप्नुवंतीति शेषः । अतः कारणात हे इंद्र यज्ञियानां यज्ञार्हाणां देवानां मध्ये प्रथमो मुख्यस्त्वमा गहि । आगच्छ ॥

या ते काकुत्सुकृता या वरिष्ठा यया शश्वत्पिबसि मध्व ऊर्मिं ।
तया पाहि प्र ते अध्वर्युरस्थात्सं ते वज्रो वर्ततामिंद्र गव्युः ॥२॥
या । ते । काकुत । सुऽकृता । या । वरिष्ठा । यया । शश्वत । पिबसि । मध्वः । ऊर्मिं ।
तया । पाहि । प्र । ते । अध्वर्युः । अस्थात । सं । ते । वज्रः । वर्ततां । इंद्र । गव्युः ॥२॥

हे इंद्र या ते तव काकुज्जिह्वा सुकृता सुष्ठु धात्रा निर्मिता । या च वरिष्ठोरुतमा विस्तीर्णतमा । यया च मध्वो मधुनः सोमस्योर्मिं रसं शश्वद्बहुकृत्वः पिबसि तया जिह्वयास्मदीयं सोम पाहि । पिब । तदर्थमध्वर्युरध्वरस्य नेता ऋत्विग्गृहीतसोमः सन प्रास्थात । हविर्धानादुत्तरवेदिदेशं प्रत्यगमत । अपि च हे इंद्र गव्युः शत्रुसंबंधिनीर्गा आत्मन इच्छन ते त्वदीयो वज्रः सं वर्तता । शत्रुभिः संगतो भवतु । तान हंत्वित्यर्थः ॥

एष द्रप्सो वृषभो विश्वरूप इंद्राय वृष्णे समकारि सोमः ।
एतं पिब हरिवः स्थातरुग्र यस्येशिषे प्रदिवि यस्ते अन्नं ॥३॥
एषः । द्रप्सः । वृषभः । विश्वऽरूपः । इंद्राय । वृष्णे । सं । अकारि । सोमः ।
एतं । पिब । हरिऽवः । स्थातः । उग्र । यस्य । ईशिषे । प्रऽदिवि । यः । ते । अन्नं ॥३॥

द्रप्सो द्रवणशीलो वृषभः कामानां वर्षिता विश्वरूपो बहुविधरूपोपेत ईदृग्विध एष सोमो वृष्णे कामानां वर्षित्र इंद्रायेंद्रस्य पानार्थं समकारि । अभिषवादिभिः संस्कृतोऽभूत । हे हरिवः । हरी अश्वौ । तद्वन हे स्थातः सर्वेषामधिष्ठातरुग्रोद्गूर्णबलेंद्र एतमीदृशं सोम पिब । यस्य सोमस्य प्रदिवि ॥ जातावेकवचनं ॥ प्रभूतेषु दिवसेषु प्रगतेष्वहःसु वेशिषे त्वमेवेश्वरो भवसि । यश्च सोमस्ते तवान्नमन्नत्वेन परिकल्पित एतं पिबेत्यन्वयः ॥

सुतः सोमो असुतादिंद्र वस्यानयं श्रेयाञ्चिकितुषे रणाय ।
एतं तितिर्व उप याहि यज्ञं तेन विश्वास्तविषीरा पृणस्व ॥४॥
सुतः । सोमः । असुतात । इंद्र । वस्यान । अयं । श्रेयान । चिकितुषे । रणाय ।
एतं । तितिर्वः । उप । याहि । यज्ञं । तेन । विश्वाः । तविषीः । आ । पृणस्व ॥४॥

हे इंद्र सुतोऽभिषुतोऽयं सोमोऽसुतादकृताभिषवात्सोमादन्यदीयाद्वस्यान वसीयान वसुमत्तरः प्रशस्यतरः । तथा चिकितुषे विदुषेऽभिज्ञाय तुभ्यं रणाय रमणीयाय तदर्थं श्रेयान श्रेष्ठश्च भवति । त्वामतिशयेन रमयितेत्यर्थः । हे तितिर्वः शत्रूणां तरितरिंद्र यजनसाधनमेतं सोममुप याहि । उपागच्छ । तेन च सोमेन विश्वास्तविषीः सर्वाणि बलान्या पृणस्व । आपूरय ॥

ह्वयामसि त्वेंद्र याह्यर्वाङरं ते सोमस्तन्वे भवाति ।
शतक्रतो मादयस्वा सुतेषु प्रास्माँ अव पृतनासु प्र विक्षु ॥ ५ ॥
ह्वयामसि । त्वा । आ । इंद्र । याहि । अर्वाङ् । अरं । ते । सोमः । तन्वे । भवाति ।
शतक्रतो इति शतऽक्रतो । मादयस्व । सुतेषु । प्र । अस्मान् । अव । पृतनासु ।
प्र । विक्षु ॥ ५ ॥

हे इंद्र त्वा त्वां ह्वयामसि । आह्वयामः । अतः कारणात्त्वमर्वाङस्मदभिमुखः सन् आ याहि । आगच्छ । अस्मदीयः सोमश्च ते तन्वे तव शरीरायारं पर्याप्तं भवाति । भवतु । त्वदीयं शरीरं यथाभिलाषं तर्पयत्वित्यर्थः । हे शतक्रतो बहुविधकर्मन्निंद्र त्वं च सुतेष्वभिषुतेष्वस्मदीयेषु सोमेषु मादयस्व । तृप्यस्व ॥ मद तृप्तियोगे ॥ तदनंतरं पृतनासु संग्रामेष्वस्मान्प्राव । प्रकर्षेण रक्ष । न केवलं पृतनासु किंतु विक्षु सर्वासु प्रजास्वस्मान्प्राव । प्ररक्ष ॥ ॥ १३ ॥

प्रत्यस्मा इति चतुर्ऋचमेकोनविंशं सूक्तं भरद्वाजस्यार्षमैंद्रं । चतुर्थी बृहती शिष्टा अनुष्टुभः । तथा चानुक्रांतं । प्रत्यस्मै चतुष्कमानुष्टुभं बृहत्यंतमिति ॥ प्रातःसवने ऽच्छावाकस्येदमनुशंसनीयमानसूक्तं । सूत्रितं च । प्रत्यस्मा इत्युन्नीयमानायानूच्य । आ० ५. ७. । इति ॥

प्रत्यस्मै पिपीषते विश्वानि विदुषे भर । अरंगमाय जग्मयेऽपश्चाद्दघ्वने नरे ॥ १ ॥
प्रति । अस्मै । पिपीषते । विश्वानि । विदुषे । भर । अरंऽगमाय । जग्मये । अपश्चातऽदघ्वने । नरे ॥ १ ॥

हे अध्वर्यो अस्मा इंद्राय प्रति भर । अभिहर । सोमं प्रयच्छेत्यर्थः । कीदृशायेंद्राय । पिपीषते पातुमिच्छते विश्वानि सर्वाणि वेद्यानि विदुषे जानतेऽरंगमाय पर्याप्तगमनाय जग्मये यज्ञेषु गमनशीलायापश्चाद्दघ्वने ॥ दघिर्गतिकर्मा ॥ अपश्चाद्गमनाय सर्वेषामग्रगामिने नरे नेत्रे यज्ञानां ॥

तृतीये स्वरसाम्नि निष्केवल्य एमेनमिति स्तोत्रियस्तृचः । सूत्रितं च । एमेनं प्रत्येतनेत्यायो वा सर्वेषां । आ० ८. ५. । इति ॥

एमेनं प्रत्येतन सोमेभिः सोमपातमं । अमत्रेभिर्ऋजीषिणमिंद्रं सुतेभिरिंदुभिः ॥ २ ॥
आ । ईं । एनं । प्रतिऽएतन । सोमेभिः । सोमऽपातमं । अमत्रेभिः । ऋजीषिणं ।
इंद्रं । सुतेभिः । इंदुऽभिः ॥ २ ॥

हे अध्वर्यवः सोमेभिः सोमैः करणभूतैः सोमपातममतिशयेन सोमस्य पातारमेनमिंद्रमा ईमभिमुखं प्रत्येतन । प्रतिगच्छत । ईमिति निपातोऽनर्थकः । कीदृशमिंद्रं । अमत्रेभिरमत्रैः सोमपात्रैर्ग्रहचमसादिभिर्ऋजीषिणं । ऋजीषं शत्रूणामपार्जकं बलं । तद्वंतं । यद्वा । ऋजीषिणमित्युत्तरत्र संबध्नीयं । सुतेभिरभिषुतैरिंदुभिः सोमैर्ऋजीषिणं । गतसारः सोम ऋजीषः । तद्वंतं । अथवामत्रेभिरमत्रैर्मात्रैरपरिमितैरभिषुतैः सोमैर्ऋजीषिणं ॥ ऋजेर्गत्यर्थाद्भावसाधन ऋजीषशब्दः । ततो मत्वर्थीय इनिः ॥ संगतमित्यर्थः । एवंभूतमिंद्रं प्रतिगच्छतेत्यन्वयः । अन्य आह । अमत्रेभिर्ग्रहचमसादिगतैरभिषुतैः सोमैर्ऋजीषिणं बलवंतमेनमिंद्रं प्रतिगच्छतेति ॥

यदी सुतेभिरिंदुभिः सोमेभिः प्रतिभूषथ । वेदा विश्वस्य मेधिरो धृषत्तंतमिदेषते ॥ ३ ॥
यदि । सुतेभिः । इंदुऽभिः । सोमेभिः । प्रतिऽभूषथ । वेद । विश्वस्य । मेधिरः । धृषत् ।
तंऽतं । इत् । आ । ईषते ॥ ३ ॥

हे अध्वर्यवः सुतेभिरभिषुतैरिंदुभिरुंदनशीलैर्द्रवैर्वा सोमेभिः सोमैर्यदि प्रतिभूषथ इंद्रं प्रति यूयं प्रतिगच्छथ ॥ भू प्राप्तावित्यस्यैतद्रूपं ॥ तदानीं मेधिरो मेधावी । मेधो यज्ञस्तद्वान्वा । स इंद्रो विश्वस्य विश्वं सर्वं भवदीय कामं वेद । वेत्ति । जानाति । ज्ञात्वा च धृषत् शत्रूणां धर्षकः सन् तं तमित्तं तं काममेवैषते । प्रापयति ॥

अस्माअस्मा इदंधसोऽध्वर्यो प्र भरा सुतं ।
कुवित्समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्परत् ॥४॥
अस्मैऽअस्मै । इत् । अंधसः । अध्वर्यो इति । प्र । भर । सुतं ।
कुवित् । समस्य । जेन्यस्य । शर्धतः । अभिऽशस्तेः । अवऽस्परत् ॥४॥

अस्मा अस्मा इत अस्मा एवेंद्राय नान्यस्मै हे अध्वर्यो त्वमंधसः सोमलक्षणस्यान्नस्य सुतमभिषुतं रसं प्र भर । संप्रहर । प्रयच्छेति यावत । स चेंद्रः समस्य सर्वस्य जेन्यस्य जेतव्यस्य शर्धत उत्सहमानस्य शत्रोरभिशस्तेरभिशंसनात तत्कृताद्धिंसनात्कुविद्बहुशोऽवस्परत । अस्मान्पालयतु ॥ ॥१४॥

यस्य त्यदिति चतुर्ऋचं विंशं सूक्तं भरद्वाजस्यार्षमौष्णिहमैंद्रं । अनुक्रम्यते च । यस्यौष्णिहमिति ॥ महाव्रतेऽपि निष्केवल्येऽस्यौष्णिहतृचाशीतावेतत्सूक्तं । तथैव पंचमारण्यके सूत्रितं । यस्य त्यच्छंबरं मद इति त्रयस्तृचा गायत्र्यः । ऐ॰ आ॰ ५. २ ५ । इति ॥

यस्य त्यच्छंबरं मदे दिवोदासाय रंधयः । अयं स सोम इंद्र ते सुतः पिब ॥१॥
यस्य । त्यत् । शंबरं । मदे । दिवःऽदासाय । रंधयः । अयं । सः । सोमः । इंद्र । ते ।
सुतः । पिब ॥१॥

हे इंद्र यस्य सोमस्य मदे पानेन जनिते हर्षे सति शंबरमसुरं दिवोदासाय राज्ञे रंधयः अहिंसीः । यद्वा । वशीकृतवानसि ॥ रध्यतिर्वशगमने । नि॰ ६ ३२ । इति यास्कः ॥ त्यदिति क्रियाविशेषणं । त्यत्तत्प्रसिद्धं यथा भवति तथारधय इत्यर्थः । हे इंद्र सोऽयं सोमस्ते त्वदर्थं सुतोऽभिषुतः । अतस्तं पिब ॥

यस्य तीव्रसुतं मदं मध्यमंतं च रक्षसे । अयं स सोम इंद्र ते सुतः पिब ॥२॥
यस्य । तीव्रऽसुतं । मदं । मध्यं । अंतं । च । रक्षसे । अयं । सः । सोमः । इंद्र । ते ।
सुतः । पिब ॥२॥

हे इंद्र त्वं यस्य सोमस्यावयवभूतं तीव्रसुतं । तीक्ष्णं सुतमभिषवो यस्य स तीव्रसुतः प्रातःसवनिकः । तं मदं मदकरं सोमरसं मध्यं माध्यंदिनसवनगतमंतं तृतीयसवनगतं च सोमरसं रक्षसे रक्षसि सोऽयं सोमस्त्वदर्थमभिषुतस्तं पिबेति ॥

यस्य गा अंतरश्मनो मदे दृळ्हा अवासृजः । अयं स सोम इंद्र ते सुतः पिब ॥३॥
यस्य । गाः । अंतः । अश्मनः । मदे । दृळ्हाः । अवऽअसृजः । अयं । सः । सोमः ।
इंद्र । ते । सुतः । पिब ॥३॥

यस्य सोमस्य मदे मदकरे रसे पीते सत्यश्मनो वलासुरेण निहितस्य पर्वतस्यांतर्मध्ये विद्यमाना दृळ्हा दृढापिधानाश्च गाः पणिभिरपहृता अवासृजः वलस्य बंधनाद्व्यसृजः स सोम इत्यादि गतं ॥

यस्य॑ मंदा॒नो अंध॑सो॒ माघो॑नं दधि॒षे शवः॑। अ॒यं स सोमं इंद्र ते सु॒तः पिब॑ ॥४॥

यस्य॑। मंदा॒नः। अंध॑सः। माघो॑नं। द॒धि॒षे। शवः॑। अ॒यं। सः। सोमः॑। इंद्र॑। ते॒। सु॒तः। पिब॑ ॥४॥

हे इंद्र त्वं यस्यांधसः सोमलक्षणस्यान्नस्य पानेन मंदानो मंदमानो हृष्टः सन् माघोनमैंद्रं शवो ऽसाधारणं बलं दधिषे धारयसि। येन सोमेन तवेंद्रत्वं जातमित्यर्थः। सोऽयं सोमः सुतोऽभिषुतस्तं पिब ॥ ॥१५॥ ॥३॥

चतुर्थेऽनुवाके षट् सूक्तानि। तत्र यो रयिव इति चतुर्विंशत्यृचं प्रथमं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षमैंद्रं। आदितः षडनुष्टुभः सप्तम्यष्टमीनवम्यो विराजोऽष्टम्येकैव वा विराट् शिष्टास्त्रिष्टुभः। तथा चानुक्रांतं। यो रयिवश्चतुर्विंशतिः शंयुर्बार्हस्पत्यो ह्यादौ षळनुष्टुभस्तिस्रश्च विराजो मध्यमैव वासामिति ॥ गतः सूक्तविनियोगः ॥

यो र॑यिवो र॒यिंत॑मो॒ यो द्यु॒म्नैर्द्यु॒म्नव॑त्तमः। सोमः॑ सु॒तः स इं॑द्र॒ तेऽस्ति॑ स्वधापते॒ मदः॑ ॥१॥

यः। र॒यि॒ऽवः॒। र॒यिंऽत॑मः। यः। द्यु॒म्नैः। द्यु॒म्नव॑त्ऽतमः। सोमः॑। सु॒तः। सः। इं॒द्र॒। ते॒। अस्ति॑। स्व॒धा॒ऽप॒ते॒। मदः॑ ॥१॥

हे रयिवो धनवन्निंद्र यः सोमो रयिंतमोऽतिशयेन रयिमान् धनवान्। यश्च द्युम्नैर्दीप्तिमद्भिर्यशोभिर्द्युम्नवत्तमोऽतिशयेन यशस्वी हे स्वधापते स्वधाया अन्नस्य सोमलक्षणस्य पालकेंद्र स सोमोऽभिषुतः सन् ते तव मदो मदकरोऽस्ति। भवति ॥

यः श॒ग्मस्तु॑विशग्म ते रा॒यो दा॒मा म॑ती॒नां।
सोमः॑ सु॒तः स इं॑द्र॒ तेऽस्ति॑ स्वधापते॒ मदः॑ ॥२॥

यः। श॒ग्मः। तु॒वि॒ऽश॒ग्म॒। ते॒। रा॒यः। दा॒मा। म॒ती॒नां।
सोमः॑। सु॒तः। सः। इं॒द्र॒। ते॒। अस्ति॑। स्व॒धा॒ऽप॒ते॒। मदः॑ ॥२॥

हे तुविशग्म बहुसुखेंद्र यः शग्मः सुखकरस्ते त्वदीयो यः सोमो मतीनां स्तोतॄणां रायो धनस्य दामा दाता भवति हे स्वधापत इंद्र स सोमोऽभिषुतस्तव मदकरो भवति ॥

येन॑ वृ॒द्धो न शव॑सा तु॒रो न स्वाभि॑रू॒तिभिः॑।
सोमः॑ सु॒तः स इं॑द्र॒ तेऽस्ति॑ स्वधापते॒ मदः॑ ॥३॥

येन॑। वृ॒द्धः। न। शव॑सा। तु॒रः। न। स्वाभिः॑। ऊ॒तिऽभिः॑।
सोमः॑। सु॒तः। सः। इं॒द्र॒। ते॒। अस्ति॑। स्व॒धा॒ऽप॒ते॒। मदः॑ ॥३॥

इमौ नशब्दौ समुच्चयार्थौ। येन पीतेन सोमेन वृद्धो न प्रवृद्धश्च सन् स्वाभिरूतिभिरात्मीयैर्मरुद्भिः साधं शवसा बलेन तुरः शत्रूणां हिंसकश्च भवसि स सोम इत्यादि पूर्ववत् ॥

पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रउगशस्त्रे त्यमु व इत्यैंद्रस्तृचः। सूत्रितं च। त्यमु वो अप्रहणमुप त्य वृत्रहन् रिपुं। आ० ७.११। इति ॥

त्यमु वो अप्रहणं गृणीषे शवसस्पतिं । इंद्रं विश्वासाहं नरं मंहिष्ठं विश्वचर्षणिं ॥४॥

त्यं । ऊं इति । वः । अप्रऽहनं । गृणीषे । शवसः । पतिं । इंद्रं । विश्वऽसहं । नरं ।
मंहिष्ठं । विश्वऽचर्षणिं ॥४॥

हे ऋत्विग्यजमाना वो युष्मदर्थं त्यमु तमेवेंद्रं गृणीषे । स्तौमि । यद्वा । वो यूयं गृणीषे । गृणीत । स्तुत ॥ वचनव्यत्ययः ॥ कीदृशमिंद्रं । अप्रहणमप्रहंतारं भक्तानामनुग्राहकं शवसो बलस्य पतिं पालकं विश्वासाहं विश्वस्य शत्रोरभिभवितारं नरं नेतारं मंहिष्ठं दातृतमं विश्वचर्षणिं सर्वस्य द्रष्टारं ॥

यं वर्धयंतीद्गिरः पतिं तुरस्य राधसः । तमिन्न्वस्य रोदसी देवी शुष्मं सपर्यतः ॥५॥

यं । वर्धयंति । इत । गिरः । पतिं । तुरस्य । राधसः । तं । इत् । नु । अस्य । रोदसी इति ।
देवी इति । शुष्मं । सपर्यतः ॥५॥

गिरः स्तुतय इंद्रसंबंधिनं यमित यमेव शुष्मं बलं वर्धयंति । कीदृशं । पतिमीश्वरं । कस्य । तुरस्य हिंसकस्य शत्रो राधसो धनस्य । शत्रुधनानामपहर्तारमित्यर्थः । अस्येंद्रस्य तमित्तमेव शुष्मं शोषकं बलं देवी देवनशीले रोदसी द्यावापृथिव्यौ नु क्षिप्रं सपर्यतः । परिचरतः ॥ ॥१६॥

तद्व उक्थस्य बर्हणेंद्रायोपस्तृणीषणि । विपो न यस्योतयो वि यद्रोहंति सक्षितः ॥६॥

तत् । वः । उक्थस्य । बर्हणा । इंद्राय । उपऽस्तृणीषणि । विपः । न । यस्य । ऊतयः ।
वि । यत् । रोहंति । सऽक्षितः ॥६॥

हे स्तोतारो वो युष्मदीयस्योक्थस्य स्तोत्रस्य तद्बर्हणा बहुत्वं माहात्म्यमिंद्रायेंद्रार्थमुपस्तृणीषणि । उपस्तरणीय । उपेत्य विस्तरणीय । इंद्रो यथा स्तोत्रस्य माहात्म्यं जानीयात् तथा विस्तारयत इत्यर्थः । यस्येंद्रस्योतयो रक्षा विपो न मेधाविन इव भवंति । सर्वकार्यकुशला इत्यर्थः । यद्वा नेति पूरकः । विपो विप्रस्य मेधाविनो यस्येंद्रस्येति योज्यं । यद्यस्मिन्निंद्रे सक्षितः समाननिवासाः संहता ऊतयो वि रोहंति प्रादुर्भवंति तस्मा इंद्रायेत्यर्थः ॥

अविदद्दक्षं मित्रो नवीयान्पपानो देवेभ्यो वस्यो अचैत् ।
ससवान्स्तौलाभिर्धौतरीभिरुरुष्या पायुरभवत्सखिभ्यः ॥७॥

अविदत् । दक्षं । मित्रः । नवीयान् । पपानः । देवेभ्यः । वस्यः । अचैत् ।
ससऽवान् । स्तौलाभिः । धौतरीभिः । उरुष्या । पायुः । अभवत् । सखिऽभ्यः ॥७॥

स इंद्रो दक्षं कर्मसु समर्थं प्रवृद्धं वा यष्टारमविदत् । जानाति । कीदृशः । मित्रो मित्रभूतो नवीयान्नवतरः कल्याणतरः स्तुत्यतरो वा । स च पपानः सोमं पिबन् देवेभ्यः स्तोतृभ्यो वस्यो वसीयः श्रेष्ठं धनमचैत् । चिनोति उपचितं करोति । ददातीति यावत् । अपि च ससवान् । सस्रमित्यन्ननाम । हविर्लक्षणान्नोपेतः स इंद्रः स्तौलाभिः स्थूलाभिः प्रवृद्धाभिर्धौतरीभिः कंपनकारिणीभिर्वडवाभिरीदृशीभिर्मरुद्भिर्वा युक्तः सन् सखिभ्यः स्तोतृभ्य उरुष्य रक्षणेच्छयागत्य पायुरभवत् । रक्षको भवति । यद्वा । ससवानिति सनतेः क्वसौ रूपं । स्तौलाभिर्धौतरीभिः ससवान् संभजमान इति संबंधः ॥

ऋतस्य पथि वेधा अपायि श्रिये मनांसि देवासो अक्रन् ।
दधानो नाम महो वचोभिर्वपुर्दृशये वेन्यो व्यावः ॥८॥

ऋतस्य । पथि । वेधाः । अपायि । श्रिये । मनांसि । देवासः । अक्रन् ।
दधानः । नाम । महः । वचःऽभिः । वपुः । दृशये । वेन्यः । वि । आवः ॥८॥

ऋतस्य यज्ञस्य पथि मार्गे वेधा विधाता सर्वस्य द्रष्टा सोमोऽपायि । इंद्रेण पीतोऽभूत । यद्वा । वेधा विधातेंद्रोऽपायि । सोमं पिबत् ॥ व्यत्ययेन कर्तरि चिण् ॥ तस्मिन् सोमे इंद्रस्य मनांसि श्रिये श्रयितुं देवाः स्तोतार ऋत्विजोऽक्रन् । कर्माणि कुर्वंति । स चेंद्रो नाम शत्रूणां नामकं महो महदात्मीयं वपुः शरीरं दधानो धारयन् वचोभिः स्तुतिभिर्वेन्यो वननीयः संभजनीयश्च सन् दृशये दर्शनार्थं व्यावः । विवृणोतु । प्रकाशयतु । अनुकूलं तेज इति शेषः । यद्वा । वेन्य इति वेनतेः कांतिकर्मणो रूपं वपुरिति च रूपनाम । वेन्यः कमनीयो वपुर्भास्वरं रूपं दृशये दर्शनार्थं व्यावः विवृणोतु वचोभिः स्तूयमानः सन् ॥

द्युमत्तमं दक्षं धेह्यस्मे सेधा जनानां पूर्वीररातीः ।
वर्षीयो वयः कृणुहि शचीभिर्धनस्य सातावस्माँ अविड्ढि ॥९॥
द्युमत्ऽतमं । दक्षं । धेहि । अस्मे इति । सेध । जनानां । पूर्वीः । अरातीः ।
वर्षीयः । वयः । कृणुहि । शचीभिः । धनस्य । सातौ । अस्मान् । अविड्ढि ॥९॥

हे इंद्र द्युमत्तमं दीप्तिमत्तमं दक्षं बलमस्मे अस्मासु धेहि । धारय । जनानां स्तोतॄणामस्माकं पूर्वीर्बह्वीररातीः शत्रुसेनाः सेध । निषेध । निवारय । अपि चास्माकं वर्षीयो वृद्धतरं वयोऽन्नं शचीभिरात्मीयाभिः प्रज्ञाभिः कृणुहि । कुरु । तथा धनस्य सातौ संभजनेऽस्मानविड्ढि । गमय । यद्वा । धनस्य संभजनार्थमस्मान्रक्ष ॥

इंद्र तुभ्यमिन्मघवन्नभूम वयं दात्रे हरिवो मा वि वेनः ।
नकिरापिर्ददृशे मर्त्यत्रा किमंग रध्रचोदनं त्वाहुः ॥१०॥
इंद्र । तुभ्यं । इत् । मघऽवन् । अभूम । वयं । दात्रे । हरिऽवः । मा । वि । वेनः ।
नकिः । आपिः । ददृशे । मर्त्यऽत्रा । किं । अंग । रध्रऽचोदनं । त्वा । आहुः ॥१०॥

हे मघवन् धनवन्निंद्र दात्रे कामानां दात्रे तुभ्यमित् तुभ्यमेव वयं शेषभूता अभूम । यद्वा । त्वदर्थमेव दात्रे हविषां दाने वर्तमाना अभूम । हे हरिवो हरिवन्निंद्र अत कारणात्त्वा वि वेनः । मा विगतकामो भूः । अस्मान् सर्वदा कामयस्व ॥ वेनतिः कांतिकर्मा ॥ मर्त्यत्रा मर्त्येषु मनुष्येषु मध्य आपिर्बंधुस्त्वत्तोऽन्यः कश्चिदपि नकिर्ददृशे । नैव दृश्यते । किमनेन विशेषकथनेन । अंग हे इंद्र त्वा त्वां रध्रचोदनं रध्रस्य राधकस्य समृद्धस्य धनस्य चोदनं चोदयितारमाहुः कथयंति पुराजाः ॥ ॥११॥

मा जस्वने वृषभ नो ररीथा मा ते रेवतः सख्ये रिषाम ।
पूर्वीष्ट इंद्र निष्षिधो जनेषु जह्यसुष्वीन्प्र वृहापृणतः ॥११॥
मा । जस्वने । वृषभ । नः । ररीथाः । मा । ते । रेवतः । सख्ये । रिषाम ।
पूर्वीः । ते । इंद्र । निःऽसिधः । जनेषु । जहि । असुस्वीन् । प्र । वृह । अपृणतः ॥११॥

हे वृषभ कामानां वर्षितरिंद्र जस्वने ॥ जसिरुपक्षयकर्मा ॥ उपक्षपयित्रे राक्षसादये नोऽस्मान् मा ररीथाः । मा दाः । रेवतो धनवतस्तव सख्ये सखित्वे वर्तमाना वयं मा रिषाम । हिंसिता मा भूम । हे इंद्र ते त्वदीयाः पूर्वीर्बह्वीर्निष्षिधो निःषेधा निवारणानि जनेषु शत्रुषु निहिताः संति । यद्वा । निष्षिधो निष

धार्या रज्जवः। ताः शत्रुजनेषु तव बह्व्यो विद्यंते। अतः कारणादसुष्वीनमभिषोतृनयजमानान् जहि। मारय। अपृणतो हवींष्यप्रयच्छतश्च प्र वृह। उन्मूलय ॥ पृण दान इति धातुः ॥

उदभ्राणीव स्तनयन्नियर्तींद्रो राधांस्यश्व्यानि गव्या।
त्वमसि प्रदिवः कारुधाया मा त्वादामान आ दभन्मघोनः ॥१२॥
उत। अभ्राणिऽइव। स्तनयन। इयर्ति। इंद्रः। राधांसि। अश्व्यानि। गव्या।
त्वं। असि। प्रऽदिवः। कारुऽधायाः। मा। त्वा। अदामानः। आ। दभन। मघोनः ॥१२॥

अभ्राणीव स्तनयन गर्जयन पर्जन्यो यथा मेघानुद्गमयत्येवमिंद्रोऽश्व्यान्यश्वसंबंधीनि गव्या गव्यानि गोसंबधीन्येतत्समूहद्वयरूपाणि राधांसि धनान्युदियर्ति। उदीरयति। उद्गमयति स्तोतृभ्यो दातुं। उत्तरार्धः प्रत्यक्षकृतः। हे इंद्र प्रदिवः पुराणस्त्वं कारुधायाः कारूणां स्तोतृणां धारयितासि। भवसि। तादृशं त्वा त्वा मघोनो धनवंतः कृपणा अदामानो हविषामदातारो मा आ दभन। मा हिंसिषुः। यद्वा वचनव्यत्ययः। मघवानं धनवंतं त्वामिति संबंधः ॥

अध्वर्यो वीर प्र महे सुतानामिंद्राय भर स ह्यस्य राजा।
यः पूर्व्याभिरुत नूतनाभिर्गीर्भिर्वावृधे गृणतामृषीणां ॥१३॥
अध्वर्यो इति। वीर। प्र। महे। सुतानां। इंद्राय। भर। सः। हि। अस्य। राजा।
यः। पूर्व्याभिः। उत। नूतनाभिः। गीःऽभिः। ववृधे। गृणतां। ऋषीणां ॥१३॥

हे वीर हविषां विशेषेण प्रेरयितरध्वर्यो महे महतेऽस्मा इंद्राय सुतानां ॥ कर्मणि षष्ठी ॥ सुतानभिषुतान सोमान प्र भर। प्रहर। प्रगमय। स हि खल्विंद्रोऽस्य सोमस्य राजा स्वामी भवति। य इंद्रः पूर्व्याभिः पूर्वकालं कृताभिरुतापि च नूतनाभिरिदानीं क्रियमाणाभिर्गृणतां स्तुवतामृषीणां संबंधिनीभिर्गीर्भिरुभयविधाभिः स्तुतिभिर्वावृधे वर्धते। स इंद्रो यस्मात्सोमस्य राजा तस्मादस्मै सोमः प्रदेय इत्यर्थः ॥

प्रथमे रात्रिपर्याये मैत्रावरुणस्यास्य मद इति शस्त्रयाज्या। सूत्रितं च। अस्य मदे पुरु वर्पांसि विद्वानिति याज्या। आ० ६ ४। इति ॥

अस्य मदे पुरु वर्पांसि विद्वानिंद्रो वृत्राण्यप्रती जघान।
तमु प्र होषि मधुमंतमस्मै सोमं वीराय शिप्रिणे पिबध्यै ॥१४॥
अस्य। मदे। पुरु। वर्पांसि। विद्वान। इंद्रः। वृत्राणि। अप्रति। जघान।
तं। ऊं इति। प्र। होषि। मधुऽमंतं। अस्मै। सोमं। वीराय। शिप्रिणे। पिबध्यै ॥१४॥

अस्य सोमस्य पानेन मदे हर्षे सति विद्वानभिज्ञ इंद्रः पुरु पुरूणि बहूनि वर्पांस्यावरकाणि वृत्राणि शत्रूनप्रति स्वयमन्यैरप्रतिगतः सन जघान। हतवान। यद्वा। वर्प इति रूपनाम। बहूनि वर्पांस्यसुरमायया निर्मितानि रूपाणि विद्वान जानन्निंद्रो वृत्राण्यावरकाणि रक्षःप्रभृतीनीतः पूर्वमन्यैरप्रतिगतानि जघान। हतवान। मधुमंतं माधुर्यवत तमु तमेव सोमं शिप्रिणे शोभनहनुकायास्मै वीराय शत्रूणां वीरयित्र इंद्राय पिबध्यै पातुं प्र होषि। हे अध्वर्यो प्रजुहुधि ॥

द्वितीये रात्रिपर्याये मैत्रावरुणस्यैव पाता सुतमिति शस्त्रयाज्या। सूत्रितं च। पाता सुतमिंद्रो अस्तु सोमं हंता वृत्रमिति याज्या। आ० ६ ४। इति ॥

पाता सुतमिंद्रो अस्तु सोमं हंता वृत्रं वज्रेण मंदसानः ।
गंता यज्ञं परावतश्चिदच्छा वसुर्धीनामविता कारुधायाः ॥१५॥
पाता । सुतं । इंद्रः । अस्तु । सोमं । हंता । वृत्रं । वज्रेण । मंदसानः ।
गंता । यज्ञं । पराऽवतः । चित् । अच्छ । वसुः । धीनां । अविता । कारुऽधायाः ॥१५॥

अयमिंद्रः सुतमभिषुतं सोमं पातास्तु । साधु पाता भवतु ॥ साधुकारिणि तृन् । अत एव न लोकाव्ययेति षष्ठीप्रतिषेधात् द्वितीया । एवं हंतेत्यादावपि द्रष्टव्यं ॥ तेन च सोमेन मंदसानो माद्यन् वज्रेणायुधेन वृत्रमावरकं शत्रुं हंतास्तु । भवतु । एतदुभयार्थं परावतश्चित् दूरदेशादपि यज्ञमच्छास्मदीयं यज्ञमभि गंता भवतु । दूरदेशस्थोऽपि शीघ्रमस्मदीयं सोमपानायागच्छत्वित्यर्थः । कीदृश इंद्रः । वसुः सर्वेषां निवासयिता धीनां ध्यातॄणां स्तोतॄणां कर्मणां वाविता रक्षिता कारुधायाः कारूणां कर्तॄणां यजमानानां धारयिता ॥ ॥१५॥

तृतीये रात्रिपर्याये प्रशास्तुरिदं त्यदिति शस्त्रयाज्या । सूत्रितं च । इदं त्यत्पात्रमिंद्रपानमिति याज्या । आ० ६. ४ । इति ॥

इदं त्यत्पात्रमिंद्रपानमिंद्रस्य प्रियममृतमपायि ।
मत्सद्यथा सौमनसाय देवं व्य१स्मद्द्वेषो युयवद्व्यंहः ॥१६॥
इदं । त्यत् । पात्रं । इंद्रऽपानं । इंद्रस्य । प्रियं । अमृतं । अपायि ।
मत्सत् । यथा । सौमनसाय । देवं । वि । अस्मत् । द्वेषः । युयवत् । वि । अंहः ॥१६॥

पात्रं पातव्यमिंद्रपानमिंद्रस्य पानार्हमिंद्रस्य प्रियमनुकूलं त्यत्तदिदं सोमात्मकममृतमपायि । इंद्रः पिबतु ॥ व्यत्ययेन कर्तरि चिण् ॥ यद्वा । एतदमृतमपायि । इंद्रेण पीयतां । यथा येन प्रकारेण पीतः सोमः सौमनसाय सुमनस्त्वाय देवमिंद्रं मत्सत् मादयेत्तथा पीयतामित्यर्थः । स पीतसोम इंद्रो द्वेषो द्वेष्टॄनस्मदस्मत्तो वि युयवत् । वियोजयतु । अंहः पापं चास्मत्तो वियोजयतु ॥

एना मंदानो जहि शूर शत्रूंजामिमजामिं मघवन्नमित्रान् ।
अभिषेणाँ अभ्या३देदिशानान्पराच इंद्र प्र मृणा जही च ॥१७॥
एना । मंदानः । जहि । शूर । शत्रून् । जामिं । अजामिं । मघऽवन् । अमित्रान् ।
अभिऽसेनान् । अभि । आऽदेदिशानान् । पराचः । इंद्र । प्र । मृण । जहि । च ॥१७॥

हे मघवन् धनवन् शूर शौर्यवन्निंद्र एनेनैतेन प्रकृतेनानेन सोमेन मंदानो मदमानो माद्यन् जामिं भ्रातिमजामिं तद्भिन्नं वर्णमेवमुभयविधानमित्रानस्मत्प्रतिकूलाचरणपरान् शत्रून् जहि । हिंसितान्कुरु । किंचाभिषेणान् अस्मान्प्रत्यभिगताः सेना येषां तादृशानस्मदभिमुखमादेदिशानानायुधानि पुनः पुनरादिशतो विसृजतः शत्रूंश्च हे इंद्र पराचः प्र मृण । ते यथा पराङ्मुखा भवंति तथा बाधस्व । तदनंतरं तान् जहि च ॥

आसु ष्मा णो मघवन्निंद्र पृत्स्व१स्मभ्यं महि वरिवः सुगं कः ।
अपां तोकस्य तनयस्य जेष इंद्र सूरीन्कृणुहि स्मा नो अर्धं ॥१८॥
आसु । स्म । नः । मघऽवन् । इंद्र । पृतऽसु । अस्मभ्यं । महि । वरिवः । सुऽगं । करिति कः ।
अपां । तोकस्य । तनयस्य । जेषे । इंद्र । सूरीन् । कृणुहि । स्म । नः । अर्धं ॥१८॥

हे मघवन् धनवन्निंद्र नोऽस्मदीयास्वासु पृत्सु पृतनासु संग्रामेष्वस्मभ्यं महि महत्सुगं सुखेन प्राप्यं वरिवो धनं कः। कुरु। स्मेति पूरणः। अपि च हे इंद्र अपामाप्तव्यानां धनानां वोदकानां वा तोकस्य पुत्रस्य तनयस्य पौत्रस्य च जेषे जयार्थं सूरीन् स्तोतृन् नोऽस्मानर्धमर्धान् समृद्धान् कृणुहि। कुरु। यद्वा। अर्धकारिणः शत्रूणां खर्डयितृन् कुरु। स्मेति पूरकः ॥

आ त्वा हरयो वृषणो युजाना वृषरथासो वृषरश्मयोऽत्याः।
अस्मत्रांचो वृषणो वज्रवाहो वृष्णे मदाय सुयुजो वहंतु ॥१९॥
आ। त्वा। हरयः। वृषणः। युजानाः। वृषऽरथासः। वृषऽरश्मयः। अत्याः।
अस्मत्रांचः। वृषणः। वज्रऽवाहः। वृष्णे। मदाय। सुऽयुजः। वहंतु ॥१९॥

हे इंद्र त्वा त्वां हरयोऽश्वा वृष्णे वर्षित्रे मदाय मदकराय सोमायेदृशं सोमं पाययितुमा वहंतु। कीदृशा अश्वाः। वृषणः कामानां वर्षितारो युजानाः स्वयमेव रथे युज्यमाना वृषरथासः। वृषा कामाभिवर्षको रथो येषां ते तथोक्ताः। वृषरश्मयः। वर्षितारो रश्मयः प्रग्रहा येषां तादृशाः। अत्याः सततगामिनोऽस्मत्रांचोऽस्मान्प्रत्यंचंतो गच्छंतो वृषणो नित्यतरुणा वज्रवाहो वज्रादीन्यायुधानि वहंतः सुयुजः शोभनयोजनाः ॥

आ ते वृषन्वृषणो द्रोणमस्थुर्घृतप्रुषो नोर्मयो मदंतः।
इंद्र प्र तुभ्यं वृषभिः सुतानां वृष्णे भरंति वृषभाय सोमं ॥२०॥
आ। ते। वृषन्। वृषणः। द्रोणं। अस्थुः। घृतऽप्रुषः। न। ऊर्मयः। मदंतः।
इंद्र। प्र। तुभ्यं। वृषऽभिः। सुतानां। वृष्णे। भरंति। वृषभाय। सोमं ॥२०॥

हे वृषन् कामानां वर्षितरिंद्र वृषणः सेक्तारो युवानस्त्वदीया अश्वा घृतप्रुषो नोर्मयो घृतमुदकं सिंचतः सामुद्रास्तरंगा इव मदंतो हृष्यंतो मत्ताः संतस्ते त्वदीयं द्रोणं द्रुममयं रथमास्थुः। आतिष्ठंत। अतस्त्वमागच्छंतीति भावः। कुत इत्यत आह। हे इंद्र वृष्णे यूने नित्यतरुणाय वृषभाय कामानां वर्षयित्रे तुभ्यं वृषभिः कामाभिवर्षकैर्ग्रावभिः सुतानामभिषुतानां सोमानां मध्ये त्वद्भागरूप सोमं यस्मादध्वर्यवः प्र भरंति प्रहरंति होमार्थं प्रणयंति तस्मादागच्छेत्यर्थः ॥ ॥१९॥

वृषासि दिवो वृषभः पृथिव्या वृषा सिंधूनां वृषभः स्तियानां।
वृष्णे त इंदुर्वृषभ पीपाय स्वादू रसो मधुपेयो वराय ॥२१॥
वृषा। असि। दिवः। वृषभः। पृथिव्याः। वृषा। सिंधूनां। वृषभः। स्तियानां।
वृष्णे। ते। इंदुः। वृषभ। पीपाय। स्वादुः। रसः। मधुऽपेयः। वराय ॥२१॥

हे इंद्र त्वं दिवो द्युलोकस्य वृषासि। हविर्भिः सेक्ता भवसि। पृथिव्या भूमेश्च वृषभः कामानां वर्षिता। सिंधूनां स्यंदनशीलानां च नदीनां वृषा वर्षेण पूरयितासि। तथा स्तियानां संघीभूतानां स्थावरजंगमात्मनां प्राणिनां वृषभः कामानां वर्षिता भवसि। यद्वा। स्तियाः संघीभूता आपः। तासां वर्षितासि। वृषभ कामानां वर्षकेंद्र वराय श्रेष्ठाय वृष्णे सेक्त्रे ते तुभ्यं त्वदर्थं स्वादुर्मधुरो रसो रसनीयः प्रशस्यो रसवान्वा रसात्मको वा मधुपेयो मधुवत्पातव्य इंदुः सोमः पीपाय। प्यायते। वर्धते। अतस्त्वमागत्य तं सोमं पिबेति भावः ॥

अयं देवः सहसा जायमान इंद्रेण युजा पणिमस्तभायत्।
अयं स्वस्य पितुरायुधानींदुरमुष्णादशिवस्य मायाः ॥२२॥

अयं । देवः । सहसा । जायमानः । इंद्रेण । युजा । पणिं । अस्तभायत् ।
अयं । स्वस्य । पितुः । आयुधानि । इंदुः । अमुष्णात् । अशिवस्य । मायाः ॥ २२ ॥

देवो द्योतमानोऽयमिंदुः सोम इंद्रेण युजा सख्या सह जायमानः प्रादुर्भवन् पणिं वणिजं गवामादातारं बलाख्यमसुरं । यद्वा । पणीनां स्वामित्वात्पणिरित्युच्यते । तमसुरं सहसा बलेनास्तभायत् । अस्तभ्नात् । न्यरुधत् । अपि च स्वस्य धनस्य गोरूपस्य पितुः पालयितुरशिवस्यासुखकरस्य बलस्यायुधानि वज्रादीन्यमुष्णात् । अपाहरत् । तदीया मायाश्चामुष्णात् । हे इंद्र त्वत्सख्यबलादेतत्सर्वं सोमः कृतवान् अतस्तव महिमा केन वर्णयितुं शक्यत इतींद्रस्तुतिः ॥

अयमकृणोदुषसः सुपत्नीरयं सूर्ये अदधाज्ज्योतिरंतः ।
अयं त्रिधातु दिवि रोचनेषु त्रितेषु विंददमृतं निगूळ्हं ॥ २३ ॥

अयं । अकृणोत् । उषसः । सुऽपत्नीः । अयं । सूर्ये । अदधात् । ज्योतिः । अंतरिति ।
अयं । त्रिऽधातु । दिवि । रोचनेषु । त्रितेषु । विंदत् । अमृतं । निऽगूळ्हं ॥ २३ ॥

अयं सोम उषस उषःकालान् सुपत्नीः शोभनः पतिः पालकः सूर्यो यासामुषसां तादृशीरकृणोत् । अकरोत् । अयमेव सूर्ये सूर्यमंडलेऽन्तर्मध्ये ज्योतिस्तेजोऽदधात् । निहितवान् । त्रिधातु सवनत्रयरूपेण त्रिप्रकारमयं लतारूपः सोमो दिवि द्युलोके रोचनेषु रोचमानेषु त्रितेषु तृतीये स्थाने ततेषु विस्तृतेषु देवेषु निगूळ्हं नितरां गूढमदृश्यतया वर्तमानममृतममृतत्वकारणं पीयूषं विंदत् । अविदत् । अलभत । हे इंद्र त्वत्साहाय्यादेतमेव सोमः कृतवानितींद्रस्य स्तुतिरधिगंतव्या । यद्वा । इदंशब्देनेंद्र एव परामृश्यते । अयमिंद्र उषसः शोभनपतिका अकरोत् । अयमेव सूर्येऽन्तर्ज्योतिरदधात् । दिवि द्युलोके रोचमानेषु त्रिस्थानगतेषु देवेषु मध्येऽयमेवेंद्रस्त्रिधातु सवनत्रयात्मना त्रिप्रकारं निगूढं पात्रैः संवृतममृतममरणहेतुभूतं सोममविंदत् । अलभत ॥

अयं द्यावापृथिवी वि ष्कभायदयं रथमयुनक्सप्तरश्मिं ।
अयं गोषु शच्या पक्वमंतः सोमो दाधार दशयंत्रमुत्सं ॥ २४ ॥

अयं । द्यावापृथिवी इति । वि । स्कभायत् । अयं । रथं । अयुनक् । सप्तऽरश्मिं ।
अयं । गोषु । शच्या । पक्वं । अंतरिति । सोमः । दाधार । दशऽयंत्रं । उत्सं ॥ २४ ॥

अयं सोमो द्यावापृथिवी दिवं च पृथिवीं च वि ष्कभायत् । विविधमस्थापयत् । अपि चायं सोमः सूर्यस्य च रथं सप्तरश्मिं सप्त रश्मिभिः किरणैरुपेतं सप्ताश्वं सप्तचक्रं वायुनक् । अयोजयत् । तथायं सोमो गोष्वंतर्मध्ये पक्वं निष्पन्नं शच्या प्रज्ञया संकल्परूपयोत्समुत्सरणशीलं पयो दाधार । धारयति । दशयंत्रं । उत्सस्य हेतुगर्भविशेषणमेतत् । उत्सरणहेतुभूतैर्दशभिश्चक्षुःश्रोत्रादिभिर्यंत्रैरुपायैर्युक्तं । इदं च पदं वैस्तिकेन सत्रांतरेण व्याख्यायते । चक्षुश्च श्रोत्रं च मनश्च वाक्च प्राणापानौ देह इदं शरीरं । द्वौ प्रत्यंचावनुलोमौ विसर्गावेतं तं मन्ये दशयंत्रमुत्समिति । यद्वा । अयमिंद्रो द्यावापृथिवी वि ष्कभायत् । स्वे स्वे स्थाने स्थिते अकरोत् । अयमेव सप्तरश्मिं सूर्यस्य रथमयुनक् । अयमेवेंद्रो गोष्वंतः शच्यात्मीयेन कर्मणा पक्वं पयो धारयति । एवंभूतेंद्रार्थं सोमो दशयंत्रं दशसंख्याकैरैंद्रवायवादिभिर्ग्रहैर्यंत्रैर्नियंत्रितैर्गृहीतैरुपेतमुत्समुत्सरणशीलं रसं दाधार । धारयति । प्रातःसवन ऐंद्रवायवादयो दश ग्रहा गृह्यंते । तथा च ब्राह्मणं । नव प्रातर्ग्रहा गृह्यंते नवभिर्बहिष्पवमाने स्तुवते स्तुते स्तोमे दशमं गृह्णाति । ऐ० ब्रा० ३ १. । इति । अन्यत्राम्नातं । दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णातीति । तदभिप्रायेणेदं दशयंत्रमिति विशेषणं ॥ ॥ २० ॥

य आनयदिति त्र्यस्त्रिंशदृचं द्वितीयं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षं । पूर्वतमामिल्यपातिनिचृतं त्रयः सप्तकाः पादनिचृत् मध्यमः षट्कश्चेदतिनिचृदित्युक्तलक्षणात् त्र्यस्त्रिंश्यनुष्टुप् शिष्टा गायत्र्यः । अधि बृबुः पणी

नामित्यस्मिन्नंत्ये तृचे वृबुर्नाम तक्षा स्तूयते। अतः स तृचस्तद्देवताकः। शिष्टास्त्रिंशदैंद्र्यः। तथा चानुक्रांतं। य आनयत्त्रयस्त्रिंशद्गायत्रं प्रकृतममर्तानिचृदंत्यानुष्टुप् तृचोऽंत्ये वृबुस्तक्षा देवतमिति॥ महाव्रतेऽपि निष्केवल्येऽत्य तृचवर्जमेतत्सूक्तं। तथैव पंचमारण्यके। य आनयत्परावत इति तिस्र उत्तमा उद्धरति। ऐ० आ० ५.२.५.। इति॥

य आनयत्परावतः सुनीती तुर्वशं यदुं। इंद्रः स नो युवा सखा ॥१॥

यः। आ। अनयत्। पराऽवतः। सुऽनीती। तुर्वशं। यदुं। इंद्रः। सः। नः। युवा। सखा ॥१॥

य इंद्रस्तुर्वशं यदुं चैतत्संज्ञौ राजानौ शत्रुभिर्दूरदेशे प्रक्षिप्तौ सुनीती सुनीत्या शोभनेन नयनेन परावतस्तस्माद्दूरदेशादानयत आनीतवान् युवा तरुणः स इंद्रो नोऽस्माकं सखा भवतु॥

अविप्रे चिद्वयो दधदनाशुना चिदर्वता। इंद्रो जेता हितं धनं ॥२॥

अविप्रे। चित्। वयः। दधत्। अनाशुना। चित्। अर्वता। इंद्रः। जेता। हितं। धनं ॥२॥

अविप्रे चित्। विप्रः स्तोता। तद्विलक्षणेऽपि पुरुषे वयोऽन्नं दधत्। इंद्रो धारयति। किमु वक्तव्यं स्तोतरि धारयतीति। स इंद्रोऽनाशुना चित् अशीघ्रगमनेनाप्यर्वताश्वेन हितं शत्रुषु निहितं स्थापितं धनं जेता जयशीलो भवति॥ जयतेस्ताच्छीलिकस्तृन्। अतो न लोकाव्ययेति षष्ठीप्रतिषेधः॥

महीरस्य प्रणीतयः पूर्वीरुत प्रशस्तयः। नास्य क्षीयंत ऊतयः ॥३॥

महीः। अस्य। प्रऽनीतयः। पूर्वीः। उत। प्रऽशस्तयः। न। अस्य। क्षीयंते। ऊतयः ॥३॥

अस्येंद्रस्य प्रणीतयः प्रकृष्टा नीतयः प्रापणानि महीर्मह्यो महत्यो भवंति। उतापि च प्रशस्तयः प्रकृष्टाः स्तुतयः स्तोतृभिः क्रियमाणाः पूर्वीर्बह्व्यो भवंति। तथास्येंद्रस्योतयो रक्षा न क्षीयंते। नापचीयंते। किंतु सर्वदा वर्धंत एव॥

सखायो ब्रह्मवाहसेऽर्चत प्र च गायत। स हि नः प्रमतिर्मही ॥४॥

सखायः। ब्रह्मऽवाहसे। अर्चत। प्र। च। गायत। सः। हि। नः। प्रऽमतिः। मही ॥४॥

हे सखायः समानख्यानाः स्तोतारो ब्रह्मवाहसे ब्रह्मभिर्मंत्रैर्वहनीयाय प्राप्तव्यायेंद्रायार्चत। शस्त्राणि शंसत। प्र गायत च स्तोत्राणि। स हि स खल्विंद्रो नोऽस्माकं मही महती प्रमतिः प्रकृष्टा बुद्धिः। ईदृश्या बुद्धेः प्रदातेत्यर्थः॥

त्वमेकस्य वृत्रहन्नविता द्वयोरसि। उतेदृशे यथा वयं ॥५॥

त्वं। एकस्य। वृत्रऽहन्। अविता। द्वयोः। असि। उत। ईदृशे। यथा। वयं ॥५॥

हे वृत्रहन् वृत्राणां शत्रूणां हंतरिंद्र त्वमेकस्य स्तोतुर्द्वयोश्च स्तोत्रोरविता रक्षितासि। सर्वेषां स्तोतॄणां रक्षको भवसीत्यर्थः। उतापि चेदृशे जनेऽप्यविता भवसि यथा यादृशा वयं त्वया रक्षिता बहुविधपुत्रपौत्रा अभूम। ईदृशस्यापि जनस्य त्वमेव रक्षको नान्य इत्यर्थः॥ ॥२१॥

नयसीद्वति द्विषः कृणोष्युक्थशंसिनः। नृभिः सुवीर उच्यसे ॥६॥

नयसि। इत्। ऊं इति। अति। द्विषः। कृणोषि। उक्थऽशंसिनः। नृऽभिः।
सुऽवीरः। उच्यसे ॥६॥

हे इंद्र त्वमेव द्विषो द्वेष्टॄनति नयसि। अस्मान्नयसि। तारयसि। उ इति पूरकः। तथोक्थशंसिन

उक्थानि शस्त्राणि शंसतः स्तोतॄनस्मान्रक्षणोषि । समृद्धान्करोषि । यस्मात्त्वं नृभिः स्तोतृभिः नेतृभिः पुरुषैः सुवीरः शोभनवीरैः पुत्रपौत्रादिभिः स्तोतृभ्यो दातव्यैरूपेत इत्युच्यसे स्तूयसे अतस्तानप्यस्मभ्यं प्रयच्छेति शेषः ॥

ब्रह्माणं ब्रह्मवाहसं गीर्भिः सखायमृग्मियं । गां न दोहसे हुवे ॥७॥

ब्रह्माणं । ब्रह्मऽवाहसं । गीःऽभिः । सखायं । ऋग्मियं । गां । न । दोहसे । हुवे ॥७॥

ब्रह्माणं परिवृढं ब्रह्मवाहसं ब्रह्मभिः स्तोत्ररूपैर्मंत्रैर्वहनीयं सखायमस्माकं सखिभूतमृग्मियं । ऋग्मा ऋचः । तदर्हं । स्तुत्यर्हमित्यर्थः । एवंभूतमिंद्रं दोहसे दोग्धुं गां न गामिव गीर्भिः स्तुतिभिर्हुवे । आह्वयाम्यस्मदीयान्कामान्दोग्धुं ॥

यस्य विश्वानि हस्तयोरूचुर्वसूनि नि द्विता । वीरस्य पृतनाषहः ॥८॥

यस्य । विश्वानि । हस्तयोः । ऊचुः । वसूनि । नि । द्विता । वीरस्य । पृतनाऽसहः ॥८॥

वीरस्य वीर्यवतः पृतनाषहः । पृतनाः शत्रुसेनाः । तासामभिभवितुर्यस्येंद्रस्य हस्तयोर्बाह्वोर्विश्वानि सर्वाणि द्विता द्विप्रकाराणि दिव्यपार्थिवरूपेण द्वेधा वर्तमानानि वसूनि विद्यंत इति न्यूचुः ऋषयो नितरां वदंति तमिंद्रं हुव इति पूर्वत्र संबंधः ॥

वि दृळ्हानि चिदद्रिवो जनानां शचीपते । वृह माया अनानत ॥९॥

वि । दृळ्हानि । चित् । अद्रिऽवः । जनानां । शचीऽपते । वृह । मायाः । अनानत ॥९॥

हे अद्रिवः । आदृणात्यनेनेत्यद्रिर्वज्रः । तद्वन् शचीपते इंद्र जनानां शत्रूणां दृळ्हानि चित् दृढानि स्थिराण्यपि पुराणि बलानि वा वि वृह । विभिंधि । विविधमुन्मूलयेत्यर्थः । हे अनानत अप्रह्वीभूत सर्वोत्कृष्टेंद्र मायाश्च शत्रुभिर्निर्मिता वि वृह । विनाशय ॥

तमु त्वा सत्य सोमपा इंद्र वाजानां पते । अहूमहि श्रवस्यवः ॥१०॥

तं । ऊं इति । त्वा । सत्य । सोमऽपाः । इंद्र । वाजानां । पते । अहूमहि । श्रवस्यवः ॥१०॥

हे सत्य अवितथस्वभाव सोमपाः सोमस्य पातर्हे वाजानां पते अन्नानां पालयितरेवंभूत हे इंद्र श्रवस्यवः श्रवोऽन्नमात्मन इच्छंतो वयं तमु त्वा तादृशं त्वामेवाहूमहि । आह्वयामः । स्तुम इत्यर्थः ॥ ॥२०॥

तमु त्वा यः पुरासिथ यो वा नूनं हिते धने । हव्यः स श्रुधी हवं ॥११॥

तं । ऊं इति । त्वा । यः । पुरा । आसिथ । यः । वा । नूनं । हिते । धने । हव्यः ।
सः । श्रुधि । हवं ॥११॥

हे इंद्र तमु त्वा तमेव त्वां स्तुम इति शेषः । यस्त्वं पुरा पूर्वस्मिन्काले हव्यो ह्वातव्य आसिथ बभूविथ धनलाभार्थं । यो वा यश्च त्वं हिते शत्रुषु निहिते धने निमित्तभूते सति नूनमद्यापि हव्यो ह्वातव्यो बभूविथ स त्वमस्मदीयं हवं स्तोत्रं श्रुधि । शृणु ॥

धीभिरर्वद्भिरर्वतो वाजाँ इंद्र श्रवाय्यान् । त्वया जेष्म हितं धनं ॥१२॥

धीभिः । अर्वतऽभिः । अर्वतः । वाजान् । इंद्र । श्रवाय्यान् । त्वया । जेष्म । हितं । धनं ॥१२॥

हे इंद्र धीभिः स्तुतिभिस्त्वद्विषयाभिः प्रीतेन त्वयानुगृहीता वयमर्वद्भिरस्मदीयैरश्वैरर्वतः शत्रुसंबंधिनोऽश्वान् श्रवाय्यान् श्रवणीयान् प्रशस्यान् वाजानन्नानि च हितं शत्रुषु निहितं धनं च जेष्म । त्वदनुग्रहाज्जयेम ॥

अभूरु वीर गिर्वणो महाँ इंद्र धने हिते । भरे वितंतसाय्यः ॥ १३ ॥

अभूः । ऊं इति । वीर । गिर्वणः । महान् । इंद्र । धने । हिते । भरे । वितंतसाय्यः ॥ १३ ॥

हे वीर विविधमीरयितः शत्रूणां हे गिर्वणो गीर्भिर्वननीयेंद्र हिते शत्रुषु निहिते धने निमित्तभूते सति महान् प्रवृद्धस्त्वं भरे संग्रामे वितंतसाय्यः शत्रूणां जेताभूः ॥ तंतस इति धातुर्जयार्थः कंड्वादौ पठ्यते । तस्माद्बहुलग्रहणादौणादिकः कर्तर्याय्यप्रत्ययः ॥

या त ऊतिरमित्रहन्मक्षूजवस्तमासति । तया नो हिनुही रथं ॥ १४ ॥

या । ते । ऊतिः । अमित्रऽहन् । मक्षुजवःऽतमा । असति । तया । नः । हिनुहि । रथं ॥ १४ ॥

हे अमित्रहन् अमित्राणां शत्रूणां हंतरिंद्र ते त्वदीया मक्षुजवस्तमातिशयेन शीघ्रजवा योतिर्गतिरसति अस्ति तया गत्या नोऽस्माकं रथं हिनुहि । प्रेरय । शत्रुजयार्थं शीघ्रं गमय ॥

स रथेन रथीतमोऽस्माकेनाभियुग्वना । जेषि जिष्णो हितं धनं ॥ १५ ॥

सः । रथेन । रथिऽतमः । अस्माकेन । अभिऽयुग्वना । जेषि । जिष्णो इति । हितं । धनं ॥ १५ ॥

हे जिष्णो जयशीलेंद्र रथीतमोऽतिशयेन रथी महारथः स त्वमस्माकेनास्मदीयेनाभियुग्वनाभियोक्त्रा शत्रूणामभिभवित्रा रथेन हितं शत्रुषु निहितं धनं जेषि । अस्मदर्थं जय ॥ ॥ २३ ॥

य एक इत्तमु ष्टुहि कृष्टीनां विचर्षणिः । पतिर्जज्ञे वृषक्रतुः ॥ १६ ॥

यः । एकः । इत् । तं । ऊं इति । स्तुहि । कृष्टीनां । विऽचर्षणिः । पतिः । जज्ञे । वृषऽक्रतुः ॥ १६ ॥

विचर्षणिर्विशेषेण सर्वस्य द्रष्टा वृषक्रतुर्वर्षकर्मा य इंद्र एक इदेक एव कृष्टीनां प्रजानां पतिरधिपतिर्जज्ञे अजायत नान्यः कश्चित् तमु तमेवेंद्रं हे स्तोतः स्तुहि ॥

यो गृणतामिदासिथापिरूती शिवः सखा । स त्वं न इंद्र मृळय ॥ १७ ॥

यः । गृणतां । इत् । आसिथ । आपिः । ऊती । शिवः । सखा । सः । त्वं । नः । इंद्र । मृळय ॥ १७ ॥

हे इंद्र यस्त्वमूती ऊत्या रक्षया शिवः सुखकरोऽत एव सखा मित्रभूतश्च सन् गृणतामित् स्तुवतामस्माकमेवापिर्बंधुरासिथ पुरा बभूविथ स तादृशस्त्वं नोऽस्मानिदानीं मृळय । सुखय ॥

धिष्व वज्रं गभस्त्यो रक्षोहत्याय वज्रिवः । सासहीष्ठा अभि स्पृधः ॥ १८ ॥

धिष्व । वज्रं । गभस्त्योः । रक्षःऽहत्याय । वज्रिऽवः । ससहीष्ठाः । अभि । स्पृधः ॥ १८ ॥

हे वज्रिवो वज्रवन्निंद्र गभस्त्योरात्मीययोर्हस्तयोर्वज्रं कुलिशं धिष्व । धारय । किमर्थं । रक्षोहत्याय रक्षसां हननार्थं । धृत्वा च स्पृधः स्पर्धमाना अभि अभिगंत्रीरासुरीः सेनाः ससहीष्ठाः । अत्यर्थमभिभव ॥

प्रत्नं रयीणां युजं सखायं कीरिचोदनं । ब्रह्मवाहस्तमं हुवे ॥ १९ ॥

प्रत्नं । रयीणां । युजं । सखायं । कीरिऽचोदनं । ब्रह्मऽवाहःऽतमं । हुवे ॥ १९ ॥

प्रत्नं चिरंतनं सर्वेषामाद्यं रयीणां धनानां युजं योजयितारं दातारं सखायं मित्रभूतं कीरिचोदनं कीरीणां स्तोतॄणां चोदयितारं ब्रह्मवाहस्तममतिशयेन ब्रह्मभिर्मंत्रैर्वहनीयमेवंविधमिंद्रं हुवे । आह्वयामि ॥

स हि विश्वानि पार्थिवाँ एको वसूनि पत्यते । गिर्वणस्तमो अध्रिगुः ॥ २० ॥
सः । हि । विश्वानि । पार्थिवा । एकः । वसूनि । पत्यते । गिर्वणःऽतमः । अध्रिऽगुः ॥ २० ॥

स हि स खल्विंद्रो विश्वानि सर्वाणि पार्थिवा पृथिव्यां भवानि वसूनि धनान्येक एव पत्यते ईष्टे नान्यः कश्चित् । पत्यतिरैश्वर्यकर्मा । कीदृश इंद्रः । गिर्वणस्तमोऽतिशयेन गीर्भिः स्तुतिभिः संभजनीयोऽध्रिगुरधृतगमनः । अप्रतिहतगतिरित्यर्थः ॥ ॥ २४ ॥

स नो नियुद्भिरा पृण कामं वाजेभिरश्विभिः । गोमद्भिर्गोपते धृषत् ॥ २१ ॥
सः । नः । नियुत्ऽभिः । आ । पृण । कामं । वाजेभिः । अश्विऽभिः । गोमत्ऽभिः ।
गोऽपते । धृषत् ॥ २१ ॥

हे गोपते गवां पालयितः स त्वं नोऽस्माकं कामं नियुद्भिर्वडवाभिर्धृषत् धृष्टं दारिद्र्यनाशनसमर्थं यथा भवति तथा आ पृण । आपूरय । यद्वा धृषदितींद्रविशेषणं । शत्रूणां धर्षकस्त्वमित्यर्थः । तथा गोमद्भिर्बहुभिर्गोभिर्युक्तैरश्विभिर्बहुभिरश्वैरुपेतैर्वाजैरन्नैश्चास्मदीयं काममापूरय ॥

तद्वो गाय सुते सचा पुरुहूताय सत्वने । शं यद्गवे न शाकिने ॥ २२ ॥
तत् । वः । गाय । सुते । सचा । पुरुऽहूताय । सत्वने । शं । यत् । गवे । न । शाकिने ॥ २२ ॥

हे स्तोतारो वो यूयं सुतेऽभिषुते सोमे सति पुरुहूताय बहुभिर्यजमानैराहूताय सत्वने शत्रूणां सादयित्रे धनानां वा सनित्रे दात्र इंद्राय तत्स्तोत्रं सचा सह संहता भूत्वा गाय । गायत । यत्स्तोत्रं शाकिने शक्तिमत इंद्राय शं सुखकरं भवति गवे न । यथा गवे यवसं सुखकरं तद्वदित्यर्थः ॥

न घा वसुर्नि यमते दानं वाजस्य गोमतः । यत्सीमुप श्रवद्गिरः ॥ २३ ॥
न । घ । वसुः । नि । यमते । दानं । वाजस्य । गोऽमतः । यत् । सीं । उप । श्रवत् । गिरः ॥ २३ ॥

वसुर्वासयिता स इंद्रो गोमतो बहुभिर्गोभिर्युक्तस्य वाजस्यान्नस्य बलस्य वा दानं प्रदानं न घ न खलु नि यमते । नियच्छति । उपरतं करोति । यद्यदि सीमिमाः गिरोऽस्मदीयाः स्तुतीरुप श्रवत् उपशृणुयात् । स्तोत्रश्रवणे सति सर्वदा ददातीत्यर्थः ॥

कुवित्सस्य प्र हि व्रजं गोमंतं दस्युहा गमत् । शचीभिरप नो वरत् ॥ २४ ॥
कुवित्ऽसस्य । प्र । हि । व्रजं । गोऽमंतं । दस्युऽहा । गमत् । शचीभिः । अप ।
नः । वरत् ॥ २४ ॥

कुवित्सस्य । कुविद्बहुशः स्यति हिनस्तीति कुवित्सो नाम कश्चित् । तस्य स्वभूतं गोमंतं बहुभिर्गोभिर्युक्तं व्रजं गोष्ठं दस्युहा दस्यूनामुपक्षपयितृणां हंतेंद्रः प्र गमत् । प्रकर्षेण गच्छति । हि यस्मादेवं तस्मात् शचीभिरात्मीयैः कर्मभिः प्रज्ञाभिर्वा नोऽस्माकं ता गा अप वरत् । निगूढास्ता अपावृणोत् ॥

इमा उ त्वा शतक्रतोऽभि प्र णोनुवुर्गिरः । इंद्र वत्सं न मातरः ॥ २५ ॥
इमाः । ऊं इति । त्वा । शतक्रतो इति शतऽक्रतो । अभि । प्र । नोनुवुः । गिरः ।
इंद्र । वत्सं । न । मातरः ॥ २५ ॥

हे शतक्रतो बहुविधकर्मन् बहुविधप्रज्ञ वेंद्र त्वा त्वामभीमा अस्मदीया गिरः स्तुतयः प्र णोनुवुः। प्रकर्षेण पुनः पुनर्गच्छंति। नौतिरत्र गतिकर्मा। तत्र दृष्टांतः। वत्सं न मातरः। यथा मातरो गावो गृहे वर्तमानं वत्सं शीघ्रमभिगच्छंति तद्वत्। यद्वा। अस्मदीया वाचस्त्वामभि नोनुवुः। अभितः शब्दयंति। स्तुवंति। यथा गावो वत्समभिलक्ष्य हंभारवं कुर्वंति तद्वत्॥ ॥२५॥

दुणाशं सख्यं तव गौरसि वीर गव्यते। अश्वो अश्वायते भव॥२६॥

दुःऽनशं। सख्यं। तव। गौः। असि। वीर। गव्यते। अश्वः। अश्वऽयते। भव॥२६॥

हे इंद्र तव त्वदीयं सख्यं सखित्वं दुणाशं दुर्णाशं नाशयितुमशक्यं। अतिदृढमित्यर्थः। अतो हे वीर वीरयितरिंद्र गव्यते गामात्मन इच्छते त्वं गौरसि। गवां प्रदाता भवसि। उपचारात्कारणे कार्यशब्दः। तथाश्वायतेऽश्वानात्मन इच्छतेऽश्वो भव। अश्वप्रदो भवसि॥

स मंदस्वा ह्यंधसो राधसे तन्वा महे। न स्तोतारं निदे करः॥२७॥

सः। मंदस्व। हि। अंधसः। राधसे। तन्वा। महे। न। स्तोतारं। निदे। करः॥२७॥

हे इंद्र स तादृशस्त्वमंधसः सोमस्य पानेन हृष्टया तन्वात्मीयेन शरीरेण मंदस्व। मोदस्व। किमर्थं। महे महते राधसे धनार्थं। हि पूरणः। अपि च त्वदीयं स्तोतारं निदे निंदकाय तस्य वशं न करः। न कुर्याः॥

इमा उ त्वा सुतेसुते नक्षंते गिर्वणो गिरः। वत्सं गावो न धेनवः॥२८॥

इमाः। ऊं इति। त्वा। सुतेऽसुते। नक्षंते। गिर्वणः। गिरः। वत्सं। गावः। न। धेनवः॥२८॥

हे गिर्वणो गीर्भिर्वननीयेंद्र सुते सुते सोमेऽभिषुतेऽभिषुते सतीमा अस्मदीया गिरः स्तुतयस्त्वा त्वां नक्षंते। व्याप्नुवंति। धेनवो दोग्ध्र्यो गावो न गाव इव वत्सं। यथा शीघ्रं वत्सं व्याप्नुवंति तद्वत्॥

पुरूतमं पुरूणां स्तोतॄणां विवाचि। वाजेभिर्वाजयतां॥२९॥

पुरुऽतमं। पुरूणां। स्तोतॄणां। विऽवाचि। वाजेभिः। वाजऽयतां॥२९॥

हे इंद्र पुरुतम पुरूणां बहूनां शत्रूणां तमयितारं ग्लपयितारं त्वां पुरूणां बहूनां स्तोतॄणामस्माकं स्तुतिः प्राप्नोत्विति शेषः। कीदृशानां। विवाचि विविधाः स्तुतिशस्त्रात्मिका वाचो यस्मिन्यज्ञे तस्मिन्वाजेभि-र्वाजैर्हविर्लक्षणैरन्नैर्वाजयतां वाजवंतं बलवंतं वा त्वां कुर्वतां॥

अस्माकमिंद्र भूतु ते स्तोमो वाहिष्ठो अंतमः। अस्मान्राये महे हिनु॥३०॥

अस्माकं। इंद्र। भूतु। ते। स्तोमः। वाहिष्ठः। अंतमः। अस्मान्। राये। महे। हिनु॥३०॥

हे इंद्र वाहिष्ठो वोढृतमोऽस्माकं स्तोमः स्तोत्रं ते तवांतमोऽतिकतमो भूतु। भवतु। त्वं चास्मान्महे महते राये धनाय हिनु। प्रेरय॥

अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात्। उरुः कक्षो न गांग्यः॥३१॥

अधि। बृबुः। पणीनां। वर्षिष्ठे। मूर्धन्। अस्थात्। उरुः। कक्षः। न। गांग्यः॥३१॥

बृबुर्नाम पणीनां तक्षा। तत्सकाशाल्लब्धधनो भरद्वाजस्तदीयं दानमनेन तृचेनास्तौत्। एतच्च मनुना स्मर्यते। भरद्वाजः क्षुधार्तस्तु सपुत्रो विजने वने। बह्वीर्गाः प्रतिजग्राह बृबोस्तक्ष्णो महायशाः। म० १०. १०७। इति॥ पणनात्पणयो वणिज एतत्संज्ञा असुरा वा। तेषां तक्षा बृबुर्वर्षिष्ठे मूर्धन्मूर्धनि मूर्धवदुच्छ्रिते स्थले

ऽध्यस्थात् अधिष्ठितोऽभूत् गांग्यो गंगायाः कूल उन्नते भवः कक्षो न कक्ष इवोर्वुविस्तीर्णः सन्। जातितो हीनोऽपि दातृत्वात्सर्वत्र श्रेष्ठो भवतीत्यर्थः ॥

यस्य॑ वा॒योरि॑व द्र॒वद्भ॒द्रा रा॒तिः स॑ह॒स्रिणी॑। स॒द्यो दा॒नाय॒ मंह॑ते ॥३२॥

यस्य॑। वा॒योःऽइ॑व। द्र॒वत्। भ॒द्रा। रा॒तिः। स॒ह॒स्रिणी॑। स॒द्यः। दा॒नाय॑। मंह॑ते ॥३२॥

वायोरिव द्रवत् क्षिप्रगामिनो यस्य बृबोर्भद्रा कल्याणी सहस्रिणी सहस्रसंख्यायुक्ता रातिर्दानं सद्यः स्तुतिसमय एव दानाय दानकामाय याचमानाय मह्यं मंहते अपरिमितं धनं ददाति तं बृबुमित्युत्तरस्यामृचि संबंधः ॥

तत्सु नो॒ विश्वे॑ अ॒र्य आ सदा॑ गृणंति का॒रवः॑। बृ॒बुं स॑हस्र॒दात॑मं सू॒रिं स॑हस्र॒सात॑मं ॥३३॥

तत्। सु। नः॒। विश्वे॑। अ॒र्यः। आ। सदा॑। गृ॒णंति॒। का॒रवः॑। बृ॒बुं। स॒ह॒स्र॒ऽदात॑मं।
सू॒रिं। स॒ह॒स्र॒ऽसात॑मं ॥३३॥

तत् तं बृबुं नोऽस्मदीया विश्वे सर्वेऽर्यः स्तुतीनामीरयितारः कारवः स्तोतारः सदा सु सुष्ठु गृणंति। अभिगृणंति। अभिष्टुवंति। कीदृशं। सहस्रदातमसतिशयेन सहस्रसंख्यस्य धनस्य दातारं सूरिं प्राज्ञं यद्वा प्रेरयितारं सहस्रसातमसतिशयेन सहस्रसंख्यस्य स्तोत्रस्य धनस्य वा संभक्तारं ॥ ॥२६॥

त्वामिद्धीति चतुर्दशर्चं तृतीयं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षमैंद्रं। प्रथमातृतीयाद्या अयुजो बृहत्यो द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः। तथा चानुक्रांतं। त्वामिद्धि पंचोना प्रागाथमिति ॥ सूक्तविनियोगो लैंगिकः। यदि ज्योतिःष्टोमो बृहत्पृष्ठः स्यात्तदानीं निष्केवल्यस्याद्यः प्रगाथः स्तोत्रियः। सूत्रितं च। यदु वै बृहत्त्वामिद्धि हवामहे। आ० ५ १५। इति ॥ महाव्रतेऽपि निष्केवल्येऽयं प्रगाथः शंसनीयः। तथैव पंचमारण्यके सूत्रितं त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहतः स्तोत्रियानुरूपौ। ऐ० आ० ५ २ २। इति ॥

त्वामिद्धि हवा॑महे सा॒ता वाज॑स्य का॒रवः॑।
त्वां वृ॒त्रेष्विं॑द्र॒ सत्प॑तिं॒ नर॒स्त्वां काष्ठा॒स्वर्व॑तः ॥१॥
त्वां। इत्। हि। हवा॑महे। सा॒ता। वाज॑स्य। का॒रवः॑।
त्वां। वृ॒त्रेषु॑। इं॒द्र॒। सत्ऽप॑तिं। नरः॑। त्वां। काष्ठा॑सु। अर्व॑तः ॥१॥

कारवः स्तोतारो वयं वाजस्यान्नस्य साता सातौ संभजने निमित्तभूते सति हे इंद्र त्वामिद्धि त्वामेव हवामहे। स्तुतिभिराह्वयामः। हे इंद्र सत्पतिं सतां पालयितारं श्रेष्ठं त्वां नरोऽन्येऽपि मनुष्या वृत्रेष्वावरकेषु शत्रुषु सत्सु हवंते। आह्वयंति तज्जयार्थं। अपि चार्वतोऽश्वस्य संबंधिनीषु काष्ठासु यत्राश्वः क्रांत्वा तिष्ठति तासु काष्ठासु संग्रामेषु युद्धकामाश्च त्वामेवाह्वयंति। अतो वयं त्वामेवाह्वयाम इत्यर्थः ॥

स त्वं न॑श्चित्र वज्रहस्त धृष्णु॒या म॒हः स्त॑वा॒नो अ॑द्रिवः।
गामश्वं॑ र॒थ्य॑मिंद्र॒ सं कि॑र स॒त्रा वाजं॒ न जि॒ग्युषे॑ ॥२॥
सः। त्वं। नः॒। चि॒त्र॒। व॒ज्र॒ऽह॒स्त॒। धृ॒ष्णु॒ऽया। म॒हः। स्त॒वा॒नः। अ॒द्रि॒ऽवः॒।
गां। अश्वं॑। र॒थ्यं॑। इं॒द्र॒। सं। कि॒र॒। स॒त्रा। वाजं॑। न। जि॒ग्युषे॑ ॥२॥

हे चित्र चायनीय वज्रहस्त वज्रबाहो अद्रिवो वज्रवन्। यद्वा। आदृणात्यनेनेत्यद्रिर्गावाणः। तद्वन्। एवंभूतः धृष्णुया धृष्णुः शत्रूणां धर्षयिता महो महान् स तादृशस्त्वं स्तवानोऽस्माभिः स्तूयमानः सन् गां रथ्यं रथव

हननमश्वं च सं किर । सम्यक् प्रयच्छ । जिग्युषे जितवते पुरुषाय भोगार्थं सत्रा महत्प्रभूतं वाजं नान्नमिव । यथा शत्रून् जितवते भोगार्थं बह्वन्नं प्रयच्छसि तद्वत् ॥

महाव्रते निष्केवल्ये यः सत्राहेत्यादिसूक्तशेषः शंसनीयः । सूत्र्यते हि । यः सत्राहा विचर्षणिरिति शेषोऽयं त अस्तु हर्यत इति सूक्ते । ऐ० आ० ५. २ ४ । इति ॥ चातुर्विंशिकेऽहनि माध्यंदिनसवने यः सत्राहेति प्रगाथो वैकल्पिकोऽनुरूपः । सूत्रितं च । यः सत्राहा विचर्षणिः स्वादोरित्था विषूवतः । आ० ७. ४. । इति ॥

यः सत्राहा विचर्षणिरिंद्रं तं हूमहे वयं ।
सहस्रमुष्क तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥३॥
यः । सत्राऽहा । विऽचर्षणिः । इंद्रं । तं । हूमहे । वयं ।
सहस्रऽमुष्क । तुविऽनृम्ण । सत्ऽपते । भव । समत्ऽसु । नः । वृधे ॥३॥

य इंद्रः सत्राहा महतां शत्रूणां हंता विचर्षणिर्विशेषेण सर्वस्य द्रष्टा तमिंद्रं वयं हूमहे । स्तुतिपदैराह्वयामः । उत्तरार्धः प्रत्यक्षकृतः । हे सहस्रमुष्क सहस्रशेफ । यां कां च स्त्रियं संभवन्निंद्रो भोगलोलुपतया स्वशरीरे पर्वणि पर्वणि शेफान् ससर्जेति कौषीतकिभिराम्नातं । तदभिप्रायेणेदं संबोधनं । हे तुविनृम्ण बहुधन सत्पते सतां पालयितरिंद्र समत्सु संग्रामेषु नोऽस्माकं वृधे वर्धनाय भव ॥

बाधसे जनान्वृषभेव मन्युना घृषौ मीळ्ह ऋचीषम ।
अस्माकं बोध्यविता महाधने तनूष्वप्सु सूर्ये ॥४॥
बाधसे । जनान् । वृषभाऽइव । मन्युना । घृषौ । मीळ्हे । ऋचीषम ।
अस्माकं । बोधि । अविता । महाऽधने । तनूषु । अपऽसु । सूर्ये ॥४॥

हे ऋचीषम ऋचा सम ऋग्यादृशं रूपं प्रतिपादयति तादृग्रूपेंद्र घृषौ शत्रूणां घर्षके बाधके मीळ्हे संग्रामे जनानस्मदीयान् शत्रून् वृषभेव वृषभेणेव बलवता मन्युना क्रोधेन बाधसे । बाधस्व । तथा महाधने महतो धनस्य निमित्तभूते संग्रामे चास्माकमविता रक्षिता बोधि । बुध्यस्व । रक्षितृत्वेनात्मानं जानीहि । रक्षको भवेति यावत् । किमर्थं । तनूषु तनयेष्वप्सूदकेषु सूर्ये च लब्धव्येषु सत्स्वेतेषां लाभार्थं । सूर्यस्य लाभः संदर्शनं । तदर्थमित्यर्थः ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिन इंद्र ज्येष्ठं न आ भरेति प्रगाथो वैकल्पिकोऽनुरूपः । सूत्रितं च । इंद्र ज्येष्ठं न आ भरा त्वा सहस्रमा शतं । आ० ७ ४ । इति ॥

इंद्र ज्येष्ठं न आ भराँ ओजिष्ठं पपुरि श्रवः ।
येनेमे चित्र वज्रहस्त रोदसी ओभे सुशिप्र प्राः ॥५॥
इंद्र । ज्येष्ठं । नः । आ । भर । ओजिष्ठं । पपुरि । श्रवः ।
येन । इमे इति । चित्र । वज्रऽहस्त । रोदसी इति । आ । उभे इति । सुऽशिप्र । प्राः ॥५॥

हे इंद्र ज्येष्ठं प्रशस्यतममोजिष्ठमोजस्वितममतिशयेन बलकरं पपुरि पूरकं श्रवोऽन्नं नोऽस्मभ्यमा भर । आहर । प्रयच्छ । हे चित्र चायनीय वज्रहस्त वज्रबाहो हे सुशिप्र शोभनहनुक एवंभूत हे इंद्र येनान्नेनेमे परिदृश्यमाने उभे रोदसी द्यावापृथिव्यावा प्रा आपूरयसि तदन्नमा भरेत्यन्वयः ॥ ॥२१॥

त्वामुग्रमवसे चर्षणीसहं राजन्देवेषु हूमहे ।
विश्वा सु नो विथुरा पिब्दना वसोऽमित्रान्सुषहान्कृधि ॥६॥
त्वां । उग्रं । अवसे । चर्षणिऽसहं । राजन् । देवेषु । हूमहे ।
विश्वा । सु । नः । विथुरा । पिब्दना । वसो इति । अमित्रान् । सुऽसहान् । कृधि ॥६॥

हे राजन् राजमानेंद्र देवेषु देवानां मध्ये उग्रमुद्गूर्णबलं चर्षणीसहं चर्षणीनां शत्रुभूतानां प्रजानामभिभवितारं त्वामवसे रक्षणाय हूमहे । आह्वयामः । त्वं विश्वा सर्वाणि पिब्दना पिब्दनानि रक्षांसि । पिहितमप्यर्थं शब्दयत इति पिब्दनानि । पृषोदरादिः । तानि सु सुष्ठु विथुरा व्यथितानि बाधितानि कुरु । हे वसो वासकेंद्र नोऽस्मदीयानमित्रान् शत्रूंश्च सुषहान् सुखेनाभिभवितुं शक्यान् कृधि । कुरु ॥

यदिंद्र नाहुषीष्वाँ ओजो नृम्णं च कृष्टिषु ।
यद्वा पंच क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥७॥
यत् । इंद्र । नाहुषीषु । आ । ओजः । नृम्णं । च । कृष्टिषु ।
यत् । वा । पंच । क्षितीनां । द्युम्नं । आ । भर । सत्रा । विश्वानि । पौंस्या ॥७॥

हे इंद्र नाहुषीषु । नहुष इति मनुष्यनाम । तत्संबंधिनीषु कृष्टिषु प्रजासु । आकारः समुच्चये । यदोजो बलं नृम्णं धनं च विद्यते । यद्वा यच्च पंच पंचानां क्षितीनां । निषादपंचमाश्चत्वारो वर्णाः पंच क्षितयः । तेषां स्वभूतं द्युम्नं द्योतमानमन्नं तत्सर्वमस्मभ्यमा भर । आहर । प्रयच्छ । तथा सत्रा महांति विश्वानि सर्वाणि पौंस्यानि बलानि चास्मभ्यमाहर ॥

यद्वा तृक्षौ मघवन्द्रुह्यावा जने यत्पूरौ कच्च वृष्ण्यं ।
अस्मभ्यं तद्रिरीहि सं नृषाह्येऽमित्रान्पृत्सु तुर्वणे ॥८॥
यत् । वा । तृक्षौ । मघऽवन् । द्रुह्यौ । आ । जने । यत् । पूरौ । कत् । च । वृष्ण्यं ।
अस्मभ्यं । तत् । रिरीहि । सं । नृऽसह्ये । अमित्रान् । पृत्ऽसु । तुर्वणे ॥८॥

हे मघवन् धनवन्निंद्र तृक्षौ एतत्संज्ञे राजनि यद्वा यच्च बलं विद्यते द्रुह्यावा द्रुह्यौ चैतत्संज्ञे च जने यद्बलमस्ति । पूरावेतत्संज्ञे नृपे च यत्कच्च यत्किंचन वृष्ण्यं वीर्यं विद्यते तत्सर्वमस्मभ्यं स्तोतृभ्यः सं सम्यग्रिरीहि । प्रयच्छ । कदा । नृसह्ये नृभिर्योद्धृभिः सोढव्ये युद्धे प्रवृत्ते । किमर्थं । पृत्सु पृतनासु संग्रामेष्वमित्रान् शत्रून् तुर्वणे तुर्वितुं हिंसितुं ॥

चातुर्विंशिकेऽहनि निष्केवल्ये इंद्र त्रिधात्विति बार्हतस्य सामप्रगाथः शंसनीयः । सूत्रितं च । इंद्र त्रिधातु शरणं त्वमिंद्र प्रतूर्तिषु । आ० ७. ३ । इति ॥

इंद्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥९॥
इंद्र । त्रिऽधातु । शरणं । त्रिऽवरूथं । स्वस्तिऽमत् ।
छर्दिः । यच्छ । मघवत्ऽभ्यः । च । मह्यं । च । यवय । दिद्युं । एभ्यः ॥९॥

हे इंद्र त्रिधातु त्रिप्रकारं त्रिभूमिकं त्रिवरूथं त्रयाणां शीतातपवर्षाणां वारकं स्वस्तिमदविनाशयुक्तं

छर्दिश्छदिष्मदाच्छादनयुक्तमेवंगुणविशिष्टं शरणं गृहं मघवद्भ्यः। मघं हविर्लक्षणं धनं। तद्वद्भ्यस्त्वास्मदीयेभ्यो मह्यं भरद्वाजाय च यच्छ। देहि। अपि चैभ्यः सकाशाद्दिद्युं शत्रुप्रेरितं द्योतमानमायुधं यवय। पृथक्कुरु॥

ये गव्यता मनसा शत्रुमादभुरभिप्रघ्नंति धृष्णुया।
अध स्मा नो मघवन्निंद्र गिर्वणस्तनूपा अंतमो भव ॥१०॥
ये। गव्यता। मनसा। शत्रुं। आऽदभुः। अभिऽप्रघ्नंति। धृष्णुऽया।
अध। स्म। नः। मघऽवन्। इंद्र। गिर्वणः। तनूऽपाः। अंतमः। भव ॥१०॥

ये जना गव्यता शत्रूणां गा इच्छता मनसा युक्ताः संतः शत्रुं शातयितारं वैरिणमादभुः अहिंसिषुः। ये च धृष्णुया धृष्णवो धृष्टाः संतोऽस्मानभिलक्ष्य प्रघ्नंति प्रकर्षेण हिंसंति हे मघवन् धनवन् गिर्वणो गिरां संभक्तरिंद्र अध स्मास्मिन्काले तेभ्यः सकाशात् नोऽस्माकं तनूपास्तनूनां शरीराणां रक्षिता सन् अंतमोऽतिकतमो भव॥ ॥२८॥

अध स्मा नो वृधे भवेंद्र नायमवा युधि।
यदंतरिक्षे पतयंति पर्णिनो दिद्यवस्तिग्ममूर्धानः ॥११॥
अध। स्म। नः। वृधे। भव। इंद्र। नायं। अव। युधि।
यत्। अंतरिक्षे। पतयंति। पर्णिनः। दिद्यवः। तिग्मऽमूर्धानः ॥११॥

हे इंद्र अध स्म तदानीं नोऽस्माकं वृधे वर्धनाय भव। अपि च नायं योऽस्माकं नयो नेता युधि युद्धे तमप्यव। रक्ष। तदित्युक्तं कदेत्यत आह। पर्णिनः पत्रवंतस्तिग्ममूर्धानस्तीक्ष्णास्या दिद्यवो दीप्ता बाणा यद्यदांतरिक्षे व्योम्नि पतयंति शत्रुभिर्विसृष्टाः पतंति तदानीं वृधे भवेत्यन्वयः॥

यत्र शूरासस्तन्वो वितन्वते प्रिया शर्म पितॄणां।
अध स्मा यच्छ तन्वे३ तने च छर्दिरचित्तं यावय द्वेषः ॥१२॥
यत्र। शूरासः। तन्वः। विऽतन्वते। प्रिया। शर्म। पितॄणां।
अध। स्म। यच्छ। तन्वे। तने। च। छर्दिः। अचित्तं। यवय। द्वेषः ॥१२॥

यत्र यस्मिन्काले शूरासः शूराः शौर्यवंतो योद्धारस्तन्वः स्वकीयानि शरीराणि वितन्वते विस्तारयंति स्वामिनो जयाय शत्रूणां पुरतो दर्शयंति। तथास्मिन्काले प्रिया प्रियाणि शर्म शर्माणि स्थानानि पितॄणां जनकानां संबंधीनि। तैरर्जितानीति यावत्। एतानि च वितन्वते शत्रूणां पुरस्ताद्विस्तारयंति। परित्यजंतीति यावत्। अध स्मास्मिन्काले तन्वे शरीराय तने तनयाय च छर्दिश्छादनमायुधानां निवारकं कवचमचित्तं शत्रुभिरज्ञातं यथा भवति तथा यच्छ। प्रयच्छ। शत्रुज्ञानात्पूर्वमेव देहीत्यर्थः। अपि च द्वेषो द्वेष्टॄन् शत्रून्यावय। तेभ्यो वियोजय॥

यदिंद्र सर्गे अर्वतश्चोदयासे महाधने।
असमने अध्वनि वृजिने पथि श्येनाँ इव श्रवस्यतः ॥१३॥
यत्। इंद्र। सर्गे। अर्वतः। चोदयासे। महाऽधने।
असमने। अध्वनि। वृजिने। पथि। श्येनान्ऽइव। श्रवस्यतः ॥१३॥

हे इंद्र महाधने जेतव्यस्य महतो धनस्य निमित्तं महति संग्रामे सर्गे उद्योगे सत्यसमने विषमेऽध्वनि मार्गेऽर्वतोऽस्मदीयानश्वान्यदा चोदयासि प्रेरयसि । वृजिने कुटिले पथि मार्गेऽतिरिक्तलक्षणे श्रवस्यतः श्रवोऽन्नमामिषरूपमात्मन इच्छतः श्येनानिव यथामिषार्थिनः श्येना अतिरिक्तं शीघ्रं गच्छंति तथास्मदीयानश्वान्यदा त्वं शीघ्रं गमयसि तदानीमस्माकं तन्वे तनयाय च छर्दिर्यच्छेति पूर्वस्यामृचि संबंधः ॥

सिंधूँरिव प्रवण आशुया यतो यदि क्लोशमनु ष्वणि ।
आ ये वयो न वर्वृतत्यामिषि गृभीता बाह्वोर्गवि ॥१४॥
सिंधून्ऽइव । प्रवणे । आशुऽया । यतः । यदि । क्लोशं । अनु । स्वनि ।
आ । ये । वयः । न । वर्वृतति । आमिषि । गृभीताः । बाह्वोः । गवि ॥१४॥

उक्तस्यैवार्थस्यातिशयप्रतिपादनार्थेयं । प्रवणे निम्नदेशे सिंधूनिव स्यंदमाना नदीरिवाशुयाशु शीघ्रं यतो गच्छतोऽश्वान् हे इंद्र यदि चोदयसि प्रेरयसि । कदा । क्लोशमनु । क्लोश इति भयनाम । भयमनुलक्ष्य स्वनि स्वने आक्रोशे सति । कीदृशास्तेऽश्वाः । बाह्वोर्बाहुमूलयोर्गृभीताः कक्ष्यया बद्धा येऽश्वा गवि गोरूपे धने जेतव्ये सत्या वर्वृतति पुनः पुनरावर्तंते । आमिष्यामिषे मांसे ग्रहीतव्ये सति वयो न यथा श्येनादयः पक्षिणः पुनः पुनरावर्तंते तद्वत् । एवंभूतानश्वान् भयेन क्रोशे सति यदा त्वं प्रेरयसि तदानीमस्मदीयेभ्यश्छर्दिः प्रयच्छेति संबंधः । यद्यप्यृषिर्युद्धे प्रसक्तिर्नास्ति तथापि राजपुरोहितत्वेन राजकीयानां पुरुषाणां जयः प्रार्थ्यत इति न कश्चिद्विरोधः ॥ ॥२०॥

स्वादुरित्येकत्रिंशदृचं चतुर्थं सूक्तं भरद्वाजपुत्रस्य गर्गस्यार्षं । प्रस्तोक इत्येषा त्रिष्टुप् दशाश्वानित्यनुष्टुप् दश रथानिति गायत्री महि राध इति द्विपदा द्व्येकादशका युजाना इत्येषा बृहती दिवस्पृथिव्या इति जगती शिष्टास्त्रिष्टुभः । आदितः पंचानामृचां सोमो देवता । अगव्यूति क्षेत्रमित्यर्धर्चप्रथमपादे देवा उत्तरस्य भूमिस्तृतीयस्य बृहस्पतिश्चतुर्थस्येंद्रः । प्रस्तोक इत्याद्याश्चतस्रः सृंजयपुत्रस्य राज्ञो दानस्तुतिरूपत्वात्तद्देवताकाः । वनस्पते वीड्वंग इत्याद्यास्तृचो रथदेवत्यः । उप श्वासयेति तृचो दुंदुभिदेवत्यः । समश्वपर्णा इत्यर्धर्च इंद्रः । शिष्टा इंद्रदेवताकाः । तथा चानुक्रांतं । स्वादुरेकात्रिंशद्गर्गः पंचादौ सौम्योऽगव्यूत्यर्धर्चो लिंगोक्तदेवतः प्रस्तोक इति त्रिष्टुबनुष्टुब्गायत्री द्विपदा सार्धयस्य प्रस्तोकस्य दानस्तुतिः परो तृचो रथदुंदुभिदेवत्यावेंद्र्योऽत्योऽर्धर्चो युजानो बृहती दिवस्पृथिव्या जगती ॥ आग्निमारुते आदितश्चतस्रः शंसनीयाः । सूत्रितं च । स्वादुष्किलायमिति चतस्रो मध्यं चाह्नानं । आ० ५ २० । इति ॥

स्वादुष्किलायं मधुमाँ उतायं तीव्रः किलायं रसवाँ उतायं ।
उतो न्वस्य पपिवांसमिंद्रं न कश्चन सहत आहवेषु ॥१॥
स्वादुः । किल । अयं । मधुऽमान् । उत । अयं । तीव्रः । किल । अयं । रसऽवान् । उत । अयं ।
उतो इति । नु । अस्य । पपिऽवांसं । इंद्रं । न । कः । चन । सहते । आऽहवेषु ॥१॥

अयमभिषुतः सोमः स्वादुरास्वादनीयः किल भवति । उतापि च मधुमान्माधुर्यवानयं सोमो भवति । तथायं सोमस्तीव्रः किल मदोत्पादने तीक्ष्णः खलु भवति । उतापि चायं सोमो रसवान् सारवानयं भवति । अनेन वाक्यचतुष्टयेन सोमस्य माधुर्यातिशयत्वं च प्रतिपादितं । उतो अपि चास्य सोमस्य ॥ द्वितीयार्थे षष्ठी ॥ इमं सोमं पपिवांसं पीतवंतमिंद्रमाहवेषु संग्रामेषु न कश्चन न कोऽपि सहते । अभिभवति । नु इति पूरकः ॥

अयं स्वादुरिह मदिष्ठ आस यस्येंद्रो वृत्रहत्ये ममाद ।
पुरूणि यश्च्यौत्ना शंबरस्य वि नवतिं नव च देह्योऽ३ हन् ॥२॥

अयं । स्वादुः । इह । मदिष्ठः । आस । यस्य । इंद्रः । वृत्रऽहत्ये । ममाद ।
पुरूणि । यः । च्यौत्ना । शंबरस्य । वि । नवतिं । नव । च । देह्यः । हन ॥२॥

इहास्मिन्यज्ञेऽयं सोमः स्वादुरास्वादितः पीतः सन् मदिष्ठोऽतिशयेन मदयितास । बभूव । यस्य सोमस्य पानेनेंद्रो वृत्रहत्ये वृत्रहननकाले ममाद मत्तो बभूव । यः सोमः शंबरस्यासुरस्य पुरूणि बहूनि च्यौत्ना च्यावनानि बलानि जघान । तथा देह्यो दिग्धा उपचिता आसुरीः पुरीः तदीयान् देहान् वा नवतिं नव च नवोत्तरनवतिसंख्याका यः सोमो वि हन व्यहन् अयं सोम इति प्रथमपादेन संबंधः ॥

अयं मे पीत उदियर्ति वाचमयं मनीषामुशतीमजीगः ।
अयं षळुर्वीरमिमीत धीरो न याभ्यो भुवनं कच्चनारे ॥३॥
अयं । मे । पीतः । उत् । इयर्ति । वाचं । अयं । मनीषां । उशतीं । अजीगरिति ।
अयं । षट् । उर्वीः । अमिमीत । धीरः । न । याभ्यः । भुवनं । कत् । चन । आरे ॥३॥

अयं सोमः पीतः सन् मे मम वाचमुदियर्ति । उद्गमयति । अयमेव सोम उशतीं कांतां मनीषां बुद्धिमुदजीगः । उद्गारयति । प्रकाशयति ॥ गॄ निगरणे इत्यस्माण्ण्यंताल्लुङि चङि रूपं ॥ अपि चायं धीरो धीमान् सोमः षळुर्वीः षण्मोर्वीरंहसस्पांतु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्चेति प्रतिपादिता द्युपृथिव्याद्याः षडमिमीत । निर्मितवान् । याभ्य उर्वीभ्य आरे दूरे विप्रकृष्टे देशे कच्चन किंचन भुवनं भूतजातं न भवति अपि त्वास्वेव सर्वं भूतजातं वर्तते तादृशीरुर्वीर्निर्मितवान् ॥

अयं स यो वरिमाणं पृथिव्या वर्ष्माणं दिवो अकृणोदयं सः ।
अयं पीयूषं तिसृषु प्रवत्सु सोमो दाधारोर्व१न्तरिक्षं ॥४॥
अयं । सः । यः । वरिमाणं । पृथिव्याः । वर्ष्माणं । दिवः । अकृणोत् । अयं । सः ।
अयं । पीयूषं । तिसृषु । प्रवतऽसु । सोमः । दाधार । उरु । अंतरिक्षं ॥४॥

स खल्वयं सोमो यः पृथिव्या वरिमाणमुरुत्वं विस्तृतत्वमकृणोत् अकरोत् । तथायं सोमो दिवो द्युलोकस्य वर्ष्माणं संहतत्वं दृढत्वमकृणोत् अकरोत् । अयं सोमः स हि भवति । अपि चायं सोमस्तिसृष्वोषधीष्वप्सु गोषु च प्रवत्सु प्रकृष्टास्वितासु पीयूषं रसं दाधार । धारयति । तथोरु विस्तीर्णमंतरिक्षं च धारयति । तथा च मंत्रांतरं । त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः । त्वमा ततंथोर्वंतरिक्षं । ऋ० सं० १ ९१. २२ । इति ॥

अयं विदच्चित्रदृशीकमर्णः शुक्रसद्मनामुषसामनीके ।
अयं महान्महता स्कंभनेनोद्यामस्तभ्नाद्वृषभो मरुत्वान् ॥५॥
अयं । विदत् । चित्रऽदृशीकं । अर्णः । शुक्रऽसद्मनां । उषसां । अनीके ।
अयं । महान् । महता । स्कंभनेन । उत् । द्यां । अस्तभ्नात् । वृषभः । मरुत्वान् ॥५॥

अयं सोमश्चित्रदृशीकं विचित्रदर्शनं यद्वाश्चर्यत्वेन दर्शनीयमर्णः सर्वस्य प्रेरकं सौरं ज्योतिर्विदत् । लंभयति । कस्मिन्काले । शुक्रसद्मनां शुक्रं निर्मलमंतरिक्षं सद्म सदनं यासां तासामुषसामनीके प्रमुखे । उषःकाल इत्यर्थः । अपि च महान् प्रवृद्धोऽयं सोमो महता प्रवृद्धेन स्कंभनेन स्तंभनसाधनेन मध्यवर्तिनांतरिक्षेण द्यां द्युलोकमुदस्तभ्नात् । ऊर्ध्वमस्थापयत् । यथाधो न पतति तथांतरिक्षं तस्याधारत्वेन कृतवानित्यर्थः । कीदृशः सोमः । वृषभो वृष्टेर्जनयिता । सोमाहुत्या हि वृष्टिर्जन्यते । मरुत्वान्मरुद्भिर्युक्तः ॥ ॥३०॥

धृषत्पिब कलशे सोममिंद्र वृत्रहा शूर समरे वसूनां ।
माध्यंदिने सवन आ वृषस्व रयिस्थानो रयिमस्मासु धेहि ॥ ६ ॥
धृषत् । पिब । कलशे । सोमं । इंद्र । वृत्रऽहा । शूर । संऽअरे । वसूनां ।
माध्यंदिने । सवने । आ । वृषस्व । रयिऽस्थानः । रयिं । अस्मासु । धेहि ॥ ६ ॥

हे शूर शौर्यवन्निंद्र वृत्रहा वृत्राणामावरकाणां शत्रूणां हंता त्वं वसूनां धनानां समरे संग्रामे निमित्तभूते सति कलशे द्रोणकलशेऽवस्थितं सोमं धृषत् धृष्टं यथा भवति तथा पिब । अपि च माध्यंदिने सवने आ वृषस्व । आसिंचस्व । जठरं सोमेन पूरय । सर्वेंद्रं हि माध्यंदिनं सवनं । किंच रयिस्थानो रयीणां धनानां स्थानभूतस्त्वं रयिं धनमस्मासु धेहि । धारय ॥

इंद्र प्र णः पुरएतेव पश्य प्र नो नय प्रतरं वस्यो अच्छ ।
भवा सुपारो अतिपारयो नो भवा सुनीतिरुत वामनीतिः ॥ ७ ॥
इंद्र । प्र । नः । पुरएताऽइव । पश्य । प्र । नः । नय । प्रऽतरं । वस्यः । अच्छ ।
भव । सुऽपारः । अतिऽपारयः । नः । भव । सुऽनीतिः । उत । वामऽनीतिः ॥ ७ ॥

हे इंद्र त्वं पुरएतेव पुरतो गंतेव नोऽस्मान् प्र पश्य । प्रकर्षेणावलोकय । यथा मार्गरक्षकः स्वयं पुरतो गच्छन्ननुगच्छतो रक्षणीयान् पथिकान्पश्यति तथा पश्येत्यर्थः । तथा वस्यो वसीयः श्रेष्ठं धनमच्छाभिमुख्येन प्रतरं प्रकृष्टतरमतिशयेन प्र णय । अस्मान्प्रापय । तथा सुपारः सुष्ठु पारयिता दुःखेभ्यस्तारयिता भव । तथा नोऽस्मान् स्तोतॄनतिपारयः । शत्रूनतिक्रामय । सुनीतिः शोभननयनश्चास्माकं भव । उतापि च वामनीतिर्वामानां वननीयानां धनानां नेता भव । यद्वा । अस्मदर्थं श्रेष्ठप्रापणो भव ॥

ऐंद्रे पशावुरुं न इत्येषा वपाया याज्या । सूत्रितं च । उरुं नो लोकमनु नेषि विद्वान् प्र ससाहिषे पुरुहूत शत्रून् । आ॰ ३. ७ । इति ॥ होत्रकैः सदःप्रसर्पणसमयेऽप्येषा जप्या । सूत्रितं च । उरुं नो लोकमनु नेषि विद्वानिति जपंतः । आ॰ ५. ३ । इति ॥ चातुर्विंशिकेऽहन्यहर्गणेषु च द्वितीयादिष्वहःसु माध्यंदिनसवनेऽच्छावाकस्यैषा चारंभणीया । सूत्रितं च । उरुं नो लोकमनु नेषि विद्वानिति कद्वत्य आरंभणीयाः । आ॰ ७. ४. । इति ॥

उरुं नो लोकमनु नेषि विद्वान्त्स्वर्वज्ज्योतिरभयं स्वस्ति ।
ऋष्वा त इंद्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहंता ॥ ८ ॥
उरुं । नः । लोकं । अनु । नेषि । विद्वान् । स्वःऽवत् । ज्योतिः । अभयं । स्वस्ति ।
ऋष्वा । ते । इंद्र । स्थविरस्य । बाहू इति । उप । स्थेयाम । शरणा । बृहंता ॥ ८ ॥

हे इंद्र विद्वान् जानंस्त्वमुरुं विस्तीर्णं लोकं स्थानं स्वर्गाख्यं नोऽस्माननु नेषि । अनुगमय । तथा स्वर्वत् स्ववदभयं भयरहितं ज्योतिश्च स्वस्ति क्षेमेणानु नेषि । अस्माननुगमय । हे इंद्र स्थविरस्य स्थूलस्य वृद्धस्य ते तव संबंधिनावृष्वा दर्शनीयौ बृहंता महांतौ बाहू त्वदीयौ हस्तौ शरणा शरणौ रक्षकौ रक्षकतयोप स्थेयाम । उपतिष्ठेम । सेवेमहि ॥

वरिष्ठे न इंद्र वंधुरे धा वहिष्ठयोः शतावन्नश्वयोरा ।
इषमा वक्षीषां वर्षिष्ठां मा नस्तारीन्मघवन्रायो अर्यः ॥ ९ ॥

वरिष्ठे । नः । इंद्र । वंधुरे । धाः । वहिष्ठयोः । शतऽवन् । अश्वयोः । आ ।
इषं । आ । वक्षि । इषां । वर्षिष्ठां । मा । नः । तारीत् । मघऽवन् । रायः । अर्यः ॥ ९ ॥

हे इंद्र वरिष्ठ उरुतमे विस्तीर्णतमे वंधुरे आत्मीये रथे नोऽस्मान् धाः । धेहि । धारय । अपि च हे शतावन् शतसंख्यधनेंद्र वहिष्ठयोर्वोढृतमयोः । आकारः समुच्चये । अश्वयोरा त्वदीययोरश्वयोश्चास्मान् धारय । तथेषामन्नानां मध्ये वर्षिष्ठां वृद्धतमामिषमन्नमा वक्षि । अस्मदर्थमावह । आनय । हे मघवन् धनवन्निंद्र अर्यो धनस्य स्वाम्यन्यः कश्चिन्नोऽस्माकं रायो धनानि मा तारीत् । मा हिंसीत् ॥

इंद्रं मृळ मह्यं जीवातुमिच्छ चोदय धियमयसो न धारां ।
यत्किं चाहं त्वायुरिदं वदामि तज्जुषस्व कृधि मा देववंतं ॥ १० ॥
इंद्र । मृळ । मह्यं । जीवातुं । इच्छ । चोदय । धियं । अयसः । न । धारां ।
यत् । किं । च । अहं । त्वाऽयुः । इदं । वदामि । तत् । जुषस्व । कृधि । मा । देवऽवंतं ॥ १० ॥

हे इंद्र मृळ । मृळय । अस्मान् सुखय । जीवातुं जीवनौषधं च मह्यं दातुमिच्छ । तथा धियं बुद्धिं चोदय । स्तुतिविषयां कर्मविषयां वा प्रेरय । तीक्ष्णीकुरु । अयसो न धारामयोमयस्य खड्गादेर्धारामिव । सा यथा सूक्ष्मा तद्वत्सूक्ष्मविषयां धियं चोदयेत्यर्थः । किंच त्वायुस्त्वामात्मन इच्छन् इदमिदानीं यत्किंचनाहं वदामि समीचीनमसमीचीनं वा तज्जुषस्व । मा मां च देववंतं रक्षकदेवरूपेतं कृधि । कुरु ॥ ॥ ३१ ॥

आयुष्कामेष्ट्यामिंद्रस्य त्रातारमित्यनुवाक्या । सूत्रितं च । त्रातारमिंद्रमवितारमिंद्रं मा ते अस्यां सहसावन्परिष्टौ । आ० २. १०. । इति ॥

त्रातारमिंद्रमवितारमिंद्रं हवेहवे सुहवं शूरमिंद्रं ।
ह्वयामि शक्रं पुरुहूतमिंद्रं स्वस्ति नो मघवा धात्विंद्रः ॥ ११ ॥
त्रातारं । इंद्रं । अवितारं । इंद्रं । हवेऽहवे । सुऽहवं । शूरं । इंद्रं ।
ह्वयामि । शक्रं । पुरुऽहूतं । इंद्रं । स्वस्ति । नः । मघऽवा । धातु । इंद्रः ॥ ११ ॥

त्रातारं शत्रुभ्यः पालयितारमिंद्रमाह्वयामि । तथावितारं कामैस्तर्पयितारमिंद्रमाह्वयामि । हवे हवे सर्वेष्वाह्वानेषु सुहवं सुखेनाह्वातुं शक्यं शूरं शौर्यवंतं शक्रं सर्वकार्येषु शक्तं पुरुहूतं पुरुभिर्बहुभिः पालनार्थमाहूतमेवंविधमिंद्रं ह्वयामि । आह्वयामि । एवमाहूतो मघवा धनवान् स इंद्रः स्वस्त्यविनाशं नोऽस्मभ्यं धातु । ददातु । यद्वा । अस्माकं विदधातु ॥

इंद्रः सुत्रामा स्ववाँ अवोभिः सुमृळीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥ १२ ॥
इंद्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृळीकः । भवतु । विश्वऽवेदाः ।
बाधतां । द्वेषः । अभयं । कृणोतु । सुऽवीर्यस्य । पतयः । स्याम ॥ १२ ॥

सुत्रामा सुष्ठु त्राता स्ववान्धनवान् स इंद्रोऽवोभी रक्षणैः सुमृळीकः सुष्ठु सुखयिता भवतु । तथा च विश्ववेदाः सर्वधनः सर्वविद्वान्वा स इंद्रो द्वेषो द्वेष्टॄन् शत्रून् बाधतां । हिनस्तु । अभयं भयरहितं चास्माकं कृणोतु । करोतु । वयं च तत्प्रसादात्सुवीर्यस्य शोभनवीर्यस्य पतयः स्याम । भवेम ॥

तस्य॑ व॒यं सु॑म॒तौ य॒ज्ञिय॒स्यापि॑ भ॒द्रे सौ॑मन॒से स्या॑म ।
स सु॒त्रामा॒ स्ववाँ॒ इंद्रो॑ अ॒स्मे आ॒राच्चि॒द्द्वेषः॑ सनु॒तर्यु॑योतु ॥ १३ ॥
तस्य॑ । व॒यं । सु॒ऽम॒तौ । य॒ज्ञिय॑स्य । अपि॑ । भ॒द्रे । सौ॒म॒न॒से । स्या॒म॒ ।
सः । सु॒ऽत्रामा॑ । स्व॒ऽवा॑न् । इंद्रः॑ । अ॒स्मे इति॑ । आ॒रात् । चि॒त् । द्वेषः॑ । स॒नु॒तः । यु॒यो॒तु॒ ॥ १३ ॥

यज्ञियस्य यज्ञार्हस्य सुमतौ शोभनायामनुग्रहात्मिकायां बुद्धौ वयं स्याम । तद्विषयभूता भवेम । तथा भद्रे कल्याणे सौमनसे सुमनसो भावेऽपि तदीये स्याम । भवेम । स इंद्रोऽस्मास्वनुग्रहात्मिकां बुद्धिं सौमनस्यं च करोत्वित्यर्थः । सुत्रामा सुष्ठु त्राता स्ववान्धनवान् स इंद्रश्चास्मे अस्मत्त आराच्चित् दूरदेश एव द्वेषो द्वेष्टॄन् सनुतः । अंतर्हितनामैतत् । अंतर्हितान्युयोतु । पृथक्करोतु ॥

अव॒ त्वे इं॑द्र प्र॒वतो॒ नोर्मिर्गिरो॒ ब्रह्मा॑णि नि॒युतो॑ धवंते ।
उ॒रू न राधः॒ सव॑ना पु॒रूण्य॒पो गा व॑ज्रिन्युवसे॒ समिं॑दून् ॥ १४ ॥
अव॑ । त्वे इति॑ । इं॒द्र॒ । प्र॒ऽवतः॑ । न । ऊ॒र्मिः । गिरः॑ । ब्रह्मा॑णि । नि॒ऽयुतः॑ । ध॒वं॒ते॒ ।
उ॒रु । न । राधः॑ । सव॑ना । पु॒रूणि॑ । अ॒पः । गाः । व॒ज्रि॒न् । यु॒व॒से॒ । सं । इंदू॑न् ॥ १४ ॥

हे इंद्र त्वे त्वां नियुतः स्तोतृगिर उक्थात्मिका वाचो ब्रह्माणि सामरूपाणि स्तोत्राणि चाव धवंते । अवगच्छंति । तत्र दृष्टांतः । ऊर्मिर्जलसंघः प्रवतो न प्रवणदेशानिव । यथोन्नतात्स्थलान्निम्नदेशं शीघ्रं गच्छति तद्वत् । नशब्दः समुच्चये । उरूणि बहु राधो राधांसि च हविर्लक्षणानि धनानि पुरूणि बहूनि सवना सवनानि बहवोऽभिषुताः सोमाश्च त्वामेवाभिगच्छंति । हे वज्रिन् वज्रवन्निंद्र अपो वसतीवर्याख्या गा गोविकारान् शृतदध्यादीन् श्रपणार्थानिंदून् सोमांश्च स युवसे । सम्यक् मिश्रयसि । त्वा यष्टु वसतीवरीभिरभिषुत्य तं सोममाशिरादिभिः श्रपणद्रव्यैः संस्कुर्वतीत्यर्थः ॥

क ईं॑ स्तवत्कः पृ॑णा॒त्को य॑जाते॒ यदु॒ग्रमिन्म॒घवा॑ वि॒श्वहावे॑त् ।
पादा॑विव प्र॒हर॑न्न॒न्यम॑न्यं कृ॒णोति॒ पूर्व॒मप॑रं॒ शची॑भिः ॥ १५ ॥
कः । ई॒म् । स्त॒व॒त् । कः । पृ॒णा॒त् । कः । य॒जा॒ते॒ । यत् । उ॒ग्रं । इत् । म॒घऽवा॑ । वि॒श्वहा॑ । अवे॑त् ।
पादौ॑ऽइव । प्र॒ऽहर॑न् । अ॒न्यंऽअ॑न्यं । कृ॒णोति॑ । पूर्वं॑ । अप॑रं । शची॑भिः ॥ १५ ॥

कः स्तोतैनमिंद्रं स्तवत् । स्तुयात् । स्तोतुं शक्नुयात् । को वा पृणात् । एनं प्रीणयेत् । कश्च यजाते । एनं हविर्भिर्यजेत । यद्यस्मादयं मघवा धनवानिंद्र उग्रमिदुद्गूर्णमेव विश्वहा सर्वदावेत् आत्मानं वेत्ति जानाति सर्वदोग्र एव भवति तस्मात्कारणात् न कोऽप्येनं स्तोतुं प्रीणयितुं यष्टुं वा शक्नोतीति भावः । स्तोताऽपि स्तुत्या देरविषय इत्याह यस्मादयमिंद्रः शचीभिरात्मीयाभिः प्रज्ञाभिः पूर्वं प्रथमभाविनं मंत्रं स्तोतारमपरं पश्चाद्भाविनं चान्यमन्यं परस्परव्यतिहारेण कृणोति करोति । यः प्रथमभावी मुख्यः स्तोता तं जघन्यं करोति यश्च जघन्यः स्तोता तं मुख्यं करोति । तत्र दृष्टांतः । प्रहरन् पादाविव । यथा पादौ प्रहरन् मार्गे प्रक्षिपन् पुरुषः पूर्वं पादमपरं करोत्यपरं च पूर्वं तद्वत् । अतोऽपि कारणादिंद्रः स्तुत्यादेरविषय इति भावः । एतदादिकेन पंचर्चेनेंद्रस्यातिस्वातंत्र्यं प्रतिपाद्यते ॥ ॥ ३० ॥

शृ॒ण्वे वी॒र उ॒ग्रमु॑ग्रं दमा॒यन्न॒न्यम॑न्यमतिनेनी॒यमा॑नः ।
ए॒ध॒मा॒न॒द्विळु॒भय॑स्य॒ राजा॑ चोष्कू॒यते॒ विश॒ इंद्रो॑ मनु॒ष्या॑न् ॥ १६ ॥

शृण्वे । वीरः । उग्रंऽउग्रं । दमऽयन् । अन्यंऽअन्यं । अतिऽनेनीयमानः ।
एधमानऽद्विट् । उभयस्य । राजा । चोष्कूयते । विशः । इंद्रः । मनुष्यान् ॥१६॥

अयमिंद्रो वीरो वीर्यवानिति शृण्वे । श्रूयते । किं कुर्वन् । उग्रमुग्रमुद्गूर्णमुद्गूर्णं बलिनं शत्रुं प्रति दमायन् । दमः दमनं । बाधनमिच्छन् । अन्यमन्यं प्रथमं नेतव्यमन्यं पश्चान्नेतव्यं चान्यं पूर्वमपरं परस्परव्यतिहारेण स्तोतॄन् अतिनेनीयमानोऽत्यंतं पुनः पुनर्नयन् । अपि चैधमानद्विट् एधमानानां वर्धमानानाममुन्वतां द्वेष्टोभयस्य दिव्यस्य पार्थिवस्य च धनस्य राजेश्वरोऽयमिंद्रो विशो निवशयितॄन् स्वस्य परिचारकान्मनुष्यान् चोष्कूयते । रक्षणार्थं पुनः पुनराह्वयति ॥

परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति ।
अनानुभूतीरवधून्वानः पूर्वीरिंद्रः शरदस्तर्तरीति ॥१७॥
परा । पूर्वेषां । सख्या । वृणक्ति । विऽतर्तुराणः । अपरेभिः । एति ।
अननुऽभूतीः । अवऽधून्वानः । पूर्वीः । इंद्रः । शरदः । तर्तरीति ॥१७॥

अयमिंद्रः पूर्वेषां पूर्वभाविनां प्रशस्तानां कर्मणां कुर्वतां पुरुषाणां सख्या सखित्वानि परा वृणक्ति । वर्जयति । अपि च वितर्तुराणस्तान् हिंसन् अपरेभिरपरैरमुख्यैरप्रशस्तैरपि कर्मानुष्ठातृभिरेति । सख्यं प्राप्नोति । तथानानुभूतीरपरिचरणाः प्रजा अवधून्वानः परित्यजन् पूर्वीर्बह्वीः शरदः संवत्सरानयमिंद्रस्तर्तरीति । भृशमतिक्रामति । स्तोतृभिः सह सख्यं कुर्वन् चिरकालं वसतीत्यर्थः ॥

रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इंद्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥१८॥
रूपंऽरूपं । प्रतिऽरूपः । बभूव । तत् । अस्य । रूपं । प्रतिऽचक्षणाय ।
इंद्रः । मायाभिः । पुरुऽरूपः । ईयते । युक्ताः । हि । अस्य । हरयः । शता । दश ॥१८॥

अयमिंद्रः प्रतिरूपो रूपाणां प्रतिनिधिः सन् रूपं रूपं तत्तदग्न्यादिदेवतास्वरूपं बभूव । प्राप्नोति ॥ भू प्राप्ताविति धातुः ॥ इंद्रः स्वमाहात्म्येन तत्तद्देवतारूपो भवतीत्यर्थः । अस्य चेंद्रस्य तत्प्राप्तमग्न्यादिदेवतास्वरूपं प्रतिचक्षणाय प्रतिनियतदर्शनायायमग्निरयं विष्णुरयं रुद्र इत्येवमसंकीर्णदर्शनाय भवति । अपि चायमिंद्रो मायाभिः ॥ माया इति ज्ञाननामैतत् ॥ ज्ञानैरात्मीयैः संकल्पैः पुरुरूपो बहुविधशरीरः सन् ईयते । बहून्यजमानान् गच्छति । ननु द्वावेवास्याश्वावेकश्च रथः कथमनेन युगपद्बहून् गच्छतीत्यत आह । अस्येंद्रस्य हरयोऽश्वा युक्ता रथे योजिताः शता दश सहस्रसंख्याका अपरिमिताः संति । हि यस्मादेवं तस्माद्बहुशरीराणि स्वीकृत्य युगपद्विष्वक्स्थितान् यजमानान् गच्छतीत्यर्थः ॥ अन्ये मन्यंते । इदि परमैश्वर्य इत्यस्य धातोरर्थानुगमादिंद्रः परमात्मा । स चाकाशवत्सर्वगतः सदानंदरूपः । स एवोपाधिभिरंतःकरणैः प्रतिशरीरमवच्छिन्नः सन् जीवात्मेति व्यपदिश्यते । स एवानादिमायाशक्तिभिर्वियदादिजगदात्मना विवर्तते शब्दादिविषयहरणशीला इंद्रियवृत्तयश्च तेनैव संबद्धाः । एतत्सर्वं तस्य परमात्मनो यद्वास्तवं रूपं तस्य दर्शनार्थमिति । अयमर्थोऽनया प्रतिपाद्यते । रूपं रूपं । रूप्यत इति रूपं शरीरादि । प्रतिशरीरं चिद्रूपः सर्वगतः परमात्मा प्रतिरूपः प्रतिबिंबरूपः सन् सर्वाणि शरीराणि बभूव । प्राप्नोत । तच्च प्राप्तं प्रतिबिंबरूपमस्य परमात्मनः प्रतिचक्षणाय प्रतिनियताकारस्य दर्शनाय भवति । स चेंद्रः परमेश्वरो मायाभिर्मायाशक्तिभिः पुरुरूपो वियदादिभिर्बहुविधरूपैरुपेतः सन् ईयते । चेष्टते । एतदप्यस्य परमात्मनः प्रतिचक्षणाय भवति । अस्य च दश शता सहस्रसंख्याका हरय इंद्रियवृत्तय युक्ता विषयग्रहणायोद्युक्ताः संति । तदप्यस्य वास्तवरूपस्य दर्शनाय भवतीति । एवं स्थूलसूक्ष्मशरीरयोर्वियदादिमहाप्रपंचस्य च तत्त्वज्ञानहेतुत्वमनया प्रत्यपादीति ॥

युजानो हरिता रथे भूरि त्वष्टेह राजति ।
को विश्वाहा द्विषतः पक्ष आसत उतासीनेषु सूरिषु ॥१९॥
युजानः । हरिता । रथे । भूरि । त्वष्टा । इह । राजति ।
कः । विश्वाहा । द्विषतः । पक्षः । आसते । उत । आसीनेषु । सूरिषु ॥१९॥

हरिता हरितावश्वौ रथे युजानो युंजन् त्वष्टा दीप्त इंद्र इह त्रैलोक्ये भूरि भूरिषु बहुषु प्रदेशेषु राजति । दीप्यते । उतापि च सूरिषु स्तोतृष्वस्मादृशेष्वासीनेषु सत्सु विश्वाहा सर्वदेंद्रादन्यः को नाम द्विषतः शत्रोः पक्षः पाचको बाधकः सन् आसते । आस्ते । इंद्र एव सर्वदा शत्रून्बाधत इत्यर्थः । यद्वा । पक्ष इति सकारात् समीपवचनं । इंद्रादन्यः को नाम द्विषतः शत्रोः समीपे आसते । आस्ते । इंद्र एव निर्भयः सन् शत्रुसमीपे स्थातुं शक्नोतीति भावः ॥

अगव्यूति क्षेत्रमागन्म देवा उर्वी सती भूमिरंहूरणाभूत् ।
बृहस्पते प्र चिकित्सा गविष्टावित्था सते जरित्र इंद्र पंथां ॥२०॥
अगव्यूति । क्षेत्रं । आ । अगन्म । देवाः । उर्वी । सती । भूमिः । अंहूरणा । अभूत् ।
बृहस्पते । प्र । चिकित्स । गोऽइष्टौ । इत्था । सते । जरित्रे । इंद्र । पंथां ॥२०॥

अत्रोक्तं । अरण्ये निर्जने गर्गो देवान् भूमिं बृहस्पतिं । इंद्रं चास्तौत्तस्मात्कार्यमृचा मार्गच्युतोऽर्चयेत् ॥ अगव्यूतीत्यत्र देवान् पादे भूमिमथोत्तरे । बृहस्पतिं तृतीये तु इंद्र एवोत्तमे स्मृत इति च ॥ हे देवा अगव्यूति गोचरं गोसंचाररहितं निर्जनं क्षेत्रं देशमागन्म । आगता स्मः । अतो मा रक्षतेति शेषः । उर्वी विस्तीर्णा सती भूमिरंहूरणा । अंहव आहंतारो दस्यवः । तेषां रमणा रमयित्र्यभूत् । भवति । अस्मानतः सापि रक्षतु । हे बृहस्पते त्वं गविष्टौ गवामन्वेषणे उपायं प्र चिकित्स । प्रवदय । इत्थमनेन प्रकारेण सते भवते दुःखमनुभवते जरित्रे स्तोत्रे मह्यं हे इंद्र पथां पंथानं मार्गं प्र चिकित्स । प्रज्ञापय ॥ ॥३३॥

दिवेदिवे सदृशीरन्यमर्धं कृष्णा असेधदप सद्मनो जाः ।
अहन्दासा वृषभो वस्नयंतोदव्रजे वर्चिनं शंबरं च ॥२१॥
दिवेऽदिवे । सऽदृशीः । अन्यं । अर्धं । कृष्णाः । असेधत् । अप । सद्मनः । जाः ।
अहन् । दासा । वृषभः । वस्नऽयंता । उदऽव्रजे । वर्चिनं । शंबरं । च ॥२१॥

अयमिंद्रः सद्मनः सदनात्स्वकीयादंतरिक्षैकदेशात्स्थानाज्जा जायमानः सूर्यात्मना प्रादुर्भवन् सदृशीः समरूपाः कृष्णाः कृष्णवर्णा रात्रीर्दिवेदिवे प्रतिदिवसमपासेधत् । निवर्तयति । किमर्थं । अन्यमर्धमहरर्धमपरं भागं प्रकाशयितुं । अहोरात्रात्मकस्य दिवसस्य हि रात्रिरेको भागः । अपि च वृषभो वर्षयिता स इंद्रो दासा दासावुपक्षपयितारौ यज्ञकर्मणां वस्नयंता । वस्नं निवासहेतुभूतं धनं । तदिच्छंता वर्चिनं शंबरं चैतन्नामकावसुरावुदव्रजे । उदकानि व्रजंत्यस्मिन्नित्युदव्रजो देशविशेषः । तस्मिन्नहन् । हतवान् ॥

प्रस्तोक इन्नु राधसस्त इंद्र दश कोशयीर्दश वाजिनोऽदात् ।
दिवोदासादतिथिग्वस्य राधः शांबरं वसु प्रत्यग्रभीष्म ॥२२॥
प्रऽस्तोकः । इत् । नु । राधसः । ते । इंद्र । दश । कोशयीः । दश । वाजिनः । अदात् ।
दिवःऽदासात् । अतिथिऽग्वस्य । राधः । शांबरं । वसु । प्रति । अग्रभीष्म ॥२२॥

एतदाद्यासु चतसृषु सृंजयपुत्रस्य प्रस्तोकस्य राज्ञो दानस्तुतिः। स एव दिवोदासोऽश्वथोऽतिथिग्व इति चाख्यायते। हे इंद्र ते तव राधस आराधयितुः स्तोतुः ॥ चतुर्थ्यर्थे षष्ठी ॥ त्वां स्तुवते मह्यं गर्गाय प्रस्तोको राजा दश कोशयीः सुवर्णपूर्णान्दशसंख्याकान् कोशान्दश वाजिनोऽश्वांश्च नु क्षिप्रमदात्। प्रायच्छत्। इदिति पूरणः। वयं च तस्माद्दिवोदासादेतत्संज्ञात्प्रस्तोकाद्वसु धनं प्रत्यग्रभीष्म। प्रतिगृहीतवंतः। कीदृशं। अतिथिग्वस्य तस्यैव प्रस्तोकस्य स्वभूतं राधो राधकं शांबरं शंबरादसुरादागतं। शंबरं हत्वा त्वया दत्तं तदीयमित्यर्थः ॥

दशाश्वान्दश कोशान्दश वस्त्राधिभोजना।
दशो हिरण्यपिंडान्दिवोदासादसानिषं ॥२३॥
दश। अश्वान्। दश। कोशान्। दश। वस्त्रा। अधिऽभोजना।
दशो इति। हिरण्यऽपिंडान्। दिवःऽदासात्। असानिषं ॥२३॥

दश दशसंख्याकानश्वान् दशसंख्याकान् हिरण्यपूर्णान् कोशानधिभोजना। भोजनमिति धननाम। अधिकं धनं येषां मूल्यं। तादृशानि दशसंख्यानि वस्त्राणि च दशो दश च दशसंख्याकांश्च हिरण्यपिंडान् सुवर्णपिंडानेतान् सर्वान्दिवोदासात्प्रस्तोकादहमसानिषं। समभजं। लब्धवानस्मि ॥

दश रथान्प्रष्टिमतः शतं गा अथर्वभ्यः। अश्वथः पायवेऽदात् ॥२४॥
दश। रथान्। प्रष्टिऽमतः। शतं। गाः। अथर्वऽभ्यः। अश्वथः। पायवे। अदात् ॥२४॥

दश दशसंख्याकान् प्रष्टिमतः। प्रष्टिस्त्रिपद आधारः। तद्वद्वहंतीति प्रष्टयोऽश्वाः। तद्युक्तान्रथान् शतं शतसंख्याका गाश्चाथर्वभ्योऽथर्वगोत्रेभ्य ऋषिभ्यः पायवे भरद्वाजपुत्रायैतत्संज्ञायास्मद्भ्रात्रे चाश्वथोऽश्ववानेतत्संज्ञः प्रस्तोकोऽदात्। दत्तवान् ॥

महि राधो विश्वजन्यं दधानान्भरद्वाजान्त्सार्ञ्जयो अभ्ययष्ट ॥२५॥
महि। राधः। विश्वऽजन्यं। दधानान्। भरत्ऽवाजान्। सार्ञ्जयः। अभि। अयष्ट ॥२५॥

विश्वजन्यं सर्वजनहितं महि महद्राधो धनं दधानान्धारयतो भरद्वाजान् भरद्वाजपुत्रानस्मान् सार्ञ्जयः सृंजयपुत्रः प्रस्तोकोऽभ्ययष्ट। अपूजयत ॥ ॥३४॥

वनस्पत इत्येषा रथारोहणे विनियुक्ता। सूत्रितं च। वनस्पते वीड्वंगो हि भूया इत्येतयान्यान्यपि वानस्पत्यानि। आ॰ गृ॰ २. ६. ५.। इति ॥

वनस्पते वीड्वंगो हि भूया अस्मत्सखा प्रतरणः सुवीरः।
गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥२६॥
वनस्पते। वीळुऽअंगः। हि। भूयाः। अस्मत्ऽसखा। प्रऽतरणः। सुऽवीरः।
गोभिः। संऽनद्धः। असि। वीळयस्व। आऽस्थाता। ते। जयतु। जेत्वानि ॥२६॥

हे वनस्पते वनस्पतिविकार रथ त्वं वीड्वंगो दृढावयवो भूयाः। भव। अस्मत्सखा वयं सखायो यस्य स तादृशश्च भव। प्रतरणः प्रवर्धयिता सुवीरः शोभनैर्वीरैः शूरभटैः पुत्रादिभिर्वा युक्तश्च भव। अपि च त्वं गोभिर्गोविकारैश्चर्मभिः संनद्धोऽसि। सम्यग्बद्धो भवसि। तादृशस्त्वं वीळयस्व। अस्मान्दृढीकुरु। ते तवास्थाता त्वय्यवस्थितो रथी च जेत्वानि जेतव्यानि शत्रुसैन्यानि जयतु ॥

दिवस्पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः ।
अपामोज्मानं परि गोभिरावृतमिंद्रस्य वज्रं हविषा रथं यज ॥२७॥
दिवः । पृथिव्याः । परि । ओजः । उत्ऽभृतं । वनस्पतिऽभ्यः । परि । आऽभृतं । सहः ।
अपां । ओज्मानं । परि । गोभिः । आऽवृतं । इंद्रस्य । वज्रं । हविषा । रथं । यज ॥२७॥

दिवो द्युलोकात्पृथिव्या भूमेश्चोद्भृतमुद्धृतं सारत्वेनोपात्तं यदोजो बलमस्ति तद्रूपं । वनस्पतिविकारत्वा द्रथस्य । वनस्पतयो हि पृथिव्याः सारभूताः ते च द्युसंबंधिभिरुदकैः प्रवृद्धाः । अतो रथस्य लोकद्वयसारत्वमुपपन्नं ॥ परि पंचम्यर्थानुवादी ॥ अपि च वनस्पतिभ्यो वृक्षेभ्यः । परि पूर्ववत् । आभृतमाहृतं सहो बलरूपमपामुदकानामोज्मानं प्रेरकं । यद्वा । ओज्मा वेगः । अपां वेग इव वेगवंतं गोभिर्गोविकारैश्चर्मभिः परि परित आवृतमावेष्टितमिंद्रस्य वज्रं वज्रैकदेशं । श्रूयते हि । इंद्रो वृत्राय वज्रमुदयच्छत स त्रेधा व्यभवत् वज्रस्तृतीयं रथस्तृतीयं यूपस्तृतीयमिति । एवंगुणविशिष्टं रथं हविषा पुरोडाशादिना हे अध्वर्यो यज ॥ नूनमेषोत्तरा च रथदेवत्यस्य हविषो याज्यानुवाक्ये लिंगादवगंतव्ये ॥

इंद्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः ।
सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥२८॥
इंद्रस्य । वज्रः । मरुतां । अनीकं । मित्रस्य । गर्भः । वरुणस्य । नाभिः ।
सः । इमां । नः । हव्यऽदातिं । जुषाणः । देव । रथ । प्रति । हव्या । गृभाय ॥२८॥

यो रथ इंद्रस्य वज्र उक्तप्रकारेण वज्रैकदेशो मरुतामेतत्संज्ञानां देवगणानामनीकमग्रभूतं तद्वदग्रगामी मित्रस्याहरभिमानिनो देवस्य गर्भो गर्भवदंतर्वर्तमानः । अहनि हि रथः संचरति । वरुणस्य राज्यभिमानिदेवस्य नाभिर्नाभिस्थानीयः । नाभिर्यथा देहमध्ये निश्चलत्वेनावतिष्ठते तद्वद्रात्रौ क्वचिदेव स्थितः । हे देव द्योतमान रथ य उक्तगुणः स तादृशस्त्वमिमां नोऽस्मदीयां हव्यदातिं हविर्दानवतीं यागक्रियां जुषाणः सेवमानः सन् हव्या हव्यान्यस्मदीयानि हवींषि प्रति गृभाय । प्रतिगृहाण ॥

परेण तृचेन संग्रामे दुंदुभिरभिमर्शनीयः । सूत्रितं च । उप श्वासय पृथिवीमुत द्यामिति तृचेन दुंदुभिमभिमृशेत् । आ० गृ० ३.१२.१७. । इति ॥

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुंदुभे सजूरिंद्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ॥२९॥
उप । श्वासय । पृथिवीं । उत । द्यां । पुरुऽत्रा । ते । मनुतां । विऽस्थितं । जगत् ।
सः । दुंदुभे । सऽजूः । इंद्रेण । देवैः । दूरात् । दवीयः । अप । सेध । शत्रून् ॥२९॥

हे दुंदुभे पृथिवीमुतापि च द्यां दिवमुप श्वासय । आत्मीयेन जयघोषेणाश्वासय । यथा लोकद्वयं त्वदीयेन शब्देनापूरितं भवति तादृशं शब्दं कुर्वित्यर्थः । अपि च विष्ठितं विशेषेण स्थितं जगत् स्थावरं जंगमं चोभयविधं प्राणिजातं ते त्वदीयं शब्दं पुरुत्रा बहुधा मनुतां । मन्यतां । जानातु । हे दुंदुभे स त्वमिंद्रेणान्यैर्देवैश्च सजूः सह दूराद्दवीयो दूरादपि दूरतरं शत्रूनस्मदीयानप सेध । अपगमय । अत्र निरुक्तं । दुंदुभिरिति शब्दानुकरणं द्रुमो भिन्न इति वा दुंदुभ्यतेर्वा स्याच्छब्दकर्मणः । नि० ९.१२ । इत्यादि ॥

आ क्रंदय बलमोजो न आ धा निः ष्टनिहि दुरिता बाधमानः ।
अप प्रोथ दुंदुभे दुच्छुना इत इंद्रस्य मुष्टिरसि वीळयस्व ॥ ३० ॥
आ । क्रंदय । बलं । ओजः । नः । आ । धाः । निः । स्तनिहि । दुःऽइता । बाधमानः ।
अप । प्रोथ । दुंदुभे । दुच्छुनाः । इतः । इंद्रस्य । मुष्टिः । असि । वीळयस्व ॥ ३० ॥

हे दुंदुभे आ क्रंदय । अस्मच्छत्रून्रोदय । बलं सेनारूपमोजः शरीरबलं च नोऽस्मभ्यमा धाः । आधेहि । प्रयच्छ । तथा दुरिता दुरितानि दुर्गमनानि बाधमानो हिंसंस्त्वं निः स्तनिहि । नितरां शब्दं कुरु ॥ स्तन शब्द इति धातुः ॥ हे दुंदुभे दुच्छुना अस्मद्दुःखहेतुभूतं शुनं सुखं यासां तादृशीः शत्रुसेना इतोऽस्मत्स्थानादप प्रोथ । बाधस्व । त्वं चेंद्रस्य मुष्टिरसि । मुष्टिरिव शत्रूणां हंता भवसि । अतोऽस्मान्वीळयस्व । दृढीकुरु ॥

आमूरज प्रत्यावर्तयेमाः केतुमद्दुंदुभिर्वावदीति ।
समश्वपर्णाश्चरंति नो नरोऽस्माकमिंद्र रथिनो जयंतु ॥ ३१ ॥
आ । अमूः । अज । प्रतिऽआवर्तय । इमाः । केतुऽमत् । दुंदुभिः । वावदीति ।
सं । अश्वऽपर्णाः । चरंति । नः । नरः । अस्माकं । इंद्र । रथिनः । जयंतु ॥ ३१ ॥

अस्याः पूर्वार्धो दुंदुभिदेवत्य उत्तरार्धश्चैंद्रः । यद्वा । उभावप्यर्धर्चावैंद्रौ । हे इंद्र अमूः शत्रुषु स्थितास्ता गा आज । अस्मान्प्रत्यागमय । इमा अस्मदीया गाः शत्रुभिर्जिघृक्षिताः प्रत्यावर्तय । प्रतिनिवर्तय । अयं च दुंदुभिः केतुमत् प्रज्ञानवत् यथा सर्वैर्ज्ञायते तथा वावदीति । भृशं शब्दं करोति । अश्वपर्णा अश्वपतना अश्ववाहाश्च नोऽस्मदीयाश्च नरः पुरुषाः सं चरंति । शत्रुभिर्युध्यमाना वर्तंते । तथा सति हे इंद्र अस्माकं रथिनो रथारूढाः पुरुषाः शत्रून् जयंतु ॥ ॥ ३५ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके सप्तमोऽध्यायः समाप्तः ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथाष्टमाध्याय आरभ्यते । षष्ठमंडलस्य चतुर्थेऽनुवाके चत्वारि सूक्तानि व्याख्यातानि । यज्ञायज्ञेति द्वाविंशत्यृचं पंचमं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षं । अत्रानुक्रम्यते । यज्ञाद्वा द्व्यधिका शंयुस्तृणपाणिकं पृश्निसूक्तं प्रगाथां बृहती महासतोबृहती महाबार्हतबार्हतौ प्रगाथाविलयोद्यः काकुभः प्रगाथः पुरउष्णिग्बृहत्यतिजगतीति मारुत्योऽत्यास्तिस्रो वासां लिंगोक्तदेवताः काकुभः प्रगाथः पुरउष्णिग्बृहतीति पांच्यो बृहती महाबृहती यवमध्यात्यानुष्टुब्व्यावाभूम्योर्वा पृश्निर्वेति । यज्ञायज्ञा व इत्येषा बृहती । तृतीयो द्वादशक इति तल्लक्षणसद्भावात् । द्वितीया सतोबृहती । अयुजौ जागतौ सतोबृहतीत्युक्तलक्षणोपेतत्वात् । तृतीयाचतुर्थी बृहतीसतोबृहत्यौ पंचमी बृहती षष्ठी महासतोबृहती । अष्टाक्षरास्त्रयः पादा द्वादशाक्षरा द्वौ पादौ सा महासतोबृहती । सप्तमी महाबृहती । अष्टाक्षराश्चत्वारः पादा एको द्वादशाक्षरः सा महाबृहती । अष्टमी महासतोबृहती । अष्टिमस्त्रयो द्वौ जागतौ सा महासतोबृहती । नवमी बृहती दशमी सतोबृहती । एता दशापि द्वेवत्याः । एकादशी ककुप् । मध्यमो यदि द्वादशाक्षर उभयतोऽष्टकौ द्वौ पादौ सा ककुप् । द्वादशी

सतोबृहती त्रयोदशी पुरउष्णिक्। आद्यौ जागतौ द्वितीयतृतीये गायत्र्यौ सा पुरउष्णिक्। चतुर्दशी बृहती पंचदश्यतिजगती द्वापञ्चाशदक्षरा। एकादश्याद्याः पञ्च मरुद्देवताकाः। त्रयोदश्यादीनां तिसृणां लिंगोक्ता इन्द्रादयो वा देवताः। षोडशी ककुप् सप्तदशी सतोबृहत्यष्टादशी पुरउष्णिगेकोनविंशी बृहती। षोडश्यादीनां चतसृणां पूषा देवता। विंशी बृहत्येकविंशी यवमध्या महाबृहती। आद्या द्वावष्टकौ तृतीयो द्वादशकश्चतुर्थप-ञ्चमावष्टकौ सा यवमध्या महाबृहती। विंश्येकविंश्योः पृश्निसूक्तमित्युक्तत्वान्मरुतां माता पृश्निर्देवता। द्वावि-श्यनुष्टुप्। सा चापि पृश्निदेवत्या द्यावाभूमिदेवत्या वा॥ सूक्तविनियोगो लैंगिकः। आग्निमारुते यज्ञायज्ञा व इत्यय स्तोत्रियप्रगाथः। सूत्रितं च। यज्ञायज्ञा वो अग्नये देवो वो द्रविणोदा इति प्रगाथौ स्तोत्रियानुरूपौ। आ° ५ २० । इति॥

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषं॥१॥
यज्ञाऽयज्ञा। वः। अग्नये। गिराऽगिरा। च। दक्षसे।
प्रऽप्र। वयं। अमृतं। जातऽवेदसं। प्रियं। मित्रं। न। शंसिषं॥१॥

हे स्तोतारो वो यूयं यज्ञायज्ञा यज्ञे यज्ञे सर्वेषु यागेषु दक्षसे प्रवृद्धायाग्नये गिरागिरा स्तुतिरूपया वाचा वाचा स्तोत्रं कुरुतेति शेषः। चशब्दो भिन्नक्रमो व इत्यस्मात्परो द्रष्टव्यः। यूयं च स्तोत्रं कुरुत। वयमपि तमग्निं प्र शंसिष॥ प्रसमुपोदः पादपूरणे इति प्रशब्दस्य द्विरुक्तिः पादपूरणार्था। व्यत्ययेनैकवचनं। शंसतेर्लुङ्॥ प्रशंसाम। कीदृशं। अमृतं मरणरहितं जातवेदसं जातानां वेदितारं जातप्रज्ञं जातधनं वा मित्रं न सखिभूतमिव प्रियमनुकूलं॥ यद्वा। व्यत्ययेन त्वमित्यस्य वमादेशः। अग्नये इति च कर्मणि चतुर्थी। क्रियाग्रहणमपि कर्तव्यमिति कर्मणः संप्रदानत्वात्। चशब्दश्चणिति निपातश्चेदर्थे वर्तते। दक्षसे इति च दक्षवृद्धिकर्मणोऽन्तर्भावितण्यर्थाल्लेटि रूपं। चणा योगात् निपातैर्यद्यदिहन्तेति निघातप्रतिषेधः॥ तत्रायमर्थः। हे स्तोतस्त्वं यज्ञे यज्ञे इममग्निं गिरा गिरा स्तुत्या दक्षसे च वर्धयसि चेत् वयमप्यमृतत्वादिगुणकं तं प्रशंसाम॥

ऊर्जो नपातं स हिनायमस्मयुर्दाशेम हव्यदातये।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनां॥२॥
ऊर्जः। नपातं। सः। हिन। अयं। अस्मऽयुः। दाशेम। हव्यऽदातये।
भुवत्। वाजेषु। अविता। भुवत्। वृधः। उत। त्राता। तनूनां॥२॥

ऊर्जोऽन्नस्य बलस्य वा नपातं पुत्रं प्र शंसिषमित्यनुषंगात् प्रशंसामेत्यर्थः। हिनेति निपातद्वयसमुदायो हीत्यस्यार्थे। स खल्वयमग्निरस्मयुरस्मान्कामयमानो भवति। वयं च हव्यदातये हव्यानां हविषां देवेभ्यो दात्रे तस्मा अग्नये दाशेम। हवींषि दद्याम। स चाग्निर्वाजेषु संग्रामेष्ववितां रक्षिता वृधो वर्धकश्चास्माकं भुवत्। भवतु। उतापि च तनूनां तनयानामस्मत्पुत्राणां च त्राता रक्षिता भवतु॥

वृषा ह्यग्ने अजरो महान्विभास्यर्चिषा।
अजस्रेण शोचिषा शोशुचच्छुचे सुदीतिभिः सु दीदिहि॥३॥
वृषा। हि। अग्ने। अजरः। महान्। विऽभासि। अर्चिषा।
अजस्रेण। शोचिषा। शोशुचत्। शुचे। सुदीतिऽभिः। सु। दीदिहि॥३॥

हे अग्ने वृषा वर्षिता कामानां वृष्टेः कर्ता वाजरो जरारहितो महान् गुणैरधिक एवंभूतस्त्वमर्चिषा दीप्त्या विभासि हि। विशेषेण प्रकाशसे खलु। हे शुचे दीप्तासि अजस्रेणाविच्छिन्नेन शोचिषा तेजसा शोशुचत भृशं दीप्यमानस्त्वं सुदीतिभिः सुदीप्तिभिः सु दीदिहि। सुष्ठुस्मान्दीपय। प्रकाशय॥

महो देवान्यजसि यक्ष्यानुषक्तव क्रत्वोत दंसना।
अर्वाचः सीं कृणुह्यग्नेऽवसे रास्व वाजोत वंस्व॥४॥
महः। देवान्। यजसि। यक्षि। आनुषक्। तव। क्रत्वा। उत। दंसना।
अर्वाचः। सीं। कृणुहि। अग्ने। अवसे। रास्व। वाजा। उत। वंस्व॥४॥

हे अग्ने त्वं महो महतो देवान्यजसि। यजमानानां यज्ञे हविर्भिः पूजयसि। अतोऽस्माकमपि यज्ञ आनुषक् अनुषक्तं संततं यथा भवति तथा यक्षि। तान्देवान्यज। तदर्थं तव क्रत्वा प्रज्ञयोतापि च दंसना कर्मणा च। सीमिति परिग्रहार्थीयः। तान् सर्वान्देवानर्वाचोऽस्मदभिमुखान् कृणुहि कुर्ववसेऽस्मद्रक्षणार्थं। तथा वाजा वाजान् हविर्लक्षणान्यन्नानि रास्व। तेभ्यो देवेभ्यो देहि। उतापि च त्वमपि वंस्व। तुभ्यं प्रत्तानि हवींषि संभजस्व॥

यमापो अद्रयो वना गर्भमृतस्य पिप्रति।
सहसा यो मथितो जायते नृभिः पृथिव्या अधि सानवि॥५॥
यं। आपः। अद्रयः। वना। गर्भं। ऋतस्य। पिप्रति।
सहसा। यः। मथितः। जायते। नृऽभिः। पृथिव्याः। अधि। सानवि॥५॥

आपो वसतीवर्याख्या अद्रयो ग्रावाणो वना वनानि काष्ठानि च ऋतस्य यज्ञस्योदकस्य वा गर्भं गर्भवदंतर्वर्तमानं यमग्निं पिप्रति पूरयंति। यद्वा। आपः समुद्रिया अद्रयो मेघा वनान्यरण्यानि च ऋतस्य गर्भं वाडववैद्युतदावरूपेण वर्तमानं यमग्निं पिप्रति पूरयंति। यश्चाग्निर्नृभिर्नेतृभिर्ऋत्विग्भिः सहसा बलेन मथितः सन् पृथिव्या अधि भूमेरुपरि सानवि समुच्छ्रित उत्कृष्टे देवयजनदेशे जायते प्रादुर्भवति स त्वं वर्धस्वेत्यन्वयः। यद्वा। यः पप्राविल्यनया संबंधः॥ ॥१॥

आ यः पप्रौ भानुना रोदसी उभे धूमेन धावते दिवि।
तिरस्तमो ददृश ऊर्म्यास्वा श्यावास्वरुषो वृषा श्यावा अरुषो वृषा॥६॥
आ। यः। पप्रौ। भानुना। रोदसी इति। उभे इति। धूमेन। धावते। दिवि।
तिरः। तमः। ददृशे। ऊर्म्यासु। आ। श्यावासु। अरुषः। वृषा। आ। श्यावाः।
अरुषः। वृषा॥६॥

योऽग्निर्भानुना दीप्त्योभे रोदसी द्यावापृथिव्यावा पप्रौ आपूरयति स धूमेन दिव्यंतरिक्षे धावते। गच्छति। धूमो हि मेघात्मना परिणतः सन् अंतरिक्षे गच्छति। कार्यकारणयोरभेदविवक्षया तद्गमनमग्नावुपचर्यते। अपि चायमरुष आरोचमानो वृषा वर्षिता कामानामग्निः श्यावासु श्याववर्णासु कृष्णासूर्म्यासु। रात्रिनामैतत्। निशासु तमोऽंधकारं तिरस्कृत्या समताद्दृशे। दृश्यते। श्यावाः श्याववर्णा रात्रीश्चा तिष्ठति। अरुषो वृषेति पुनरुक्तिरादरार्था पादपूरणार्था वा॥

बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा ।
भरद्वाजे समिधानो यविष्ठ्य रेवन्नः शुक्र दीदिहि द्युमत्पावक दीदिहि ॥७॥
बृहत्ऽभिः । अग्ने । अर्चिऽभिः । शुक्रेण । देव । शोचिषा ।
भरत्ऽवाजे । सम्ऽइधानः । यविष्ठ्य । रेवत् । नः । शुक्र । दीदिहि । द्युऽमत् । पावक ।
दीदिहि ॥७॥

हे देव दानादिगुणयुक्त यविष्ठ्य युवतम शुक्र दीप्ताग्ने शुक्रेण निर्मलेन शोचिषा तेजसा भरद्वाजेऽस्मत्पितरि समिधानः समिध्यमानस्त्वं बृहद्भिर्महद्भिरर्चिभिस्तेजोभिर्नोऽस्मदर्थं रेवद्धनयुक्तं यथा भवति तथा दीदिहि। दीप्यस्व। तथा पावक हे शोधकाग्ने द्युमत् द्योतमानेन च युक्तं यथा भवति तथा दीदिहि। दीप्यस्व॥

विश्वासां गृहपतिर्विशामसि त्वमग्ने मानुषीणां ।
शतं पूर्भिर्यविष्ठ पाह्यंहसः समेद्धारं शतं हिमाः स्तोतृभ्यो ये च ददति ॥८॥
विश्वासां । गृहऽपतिः । विशां । असि । त्वं । अग्ने । मानुषीणां ।
शतं । पूःऽभिः । यविष्ठ । पाहि । अंहसः । सम्ऽएद्धारं । शतं । हिमाः । स्तोतृऽभ्यः ।
ये । च । ददति ॥८॥

हे अग्ने त्वं मानुषीणां मनोरपत्यभूतानां विश्वासां सर्वासां विशां प्रजानां गृहपतिरसि। गृहस्वामी भवसि। हे यविष्ठ युवतमाग्ने अतस्त्वं शतं हिमाः शतं हेमन्तान् संवत्सरान् समेद्धारं त्वा सम्यगिद्धं कृतवन्तं मां शतं शतेन शतसंख्याकैः पूर्भिः पालकैरंहसः पापाद्दाहतुः शत्रोर्वा पाहि। रक्ष। ये च स्तोतृभ्यो ददति धनं तव समिन्धनस्य कर्तारं प्रयच्छन्ति तांश्च पाहि॥

त्वं नश्चित्र ऊत्या वसो राधांसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥९॥
त्वं । नः । चित्रः । ऊत्या । वसो इति । राधांसि । चोदय ।
अस्य । रायः । त्वं । अग्ने । रथीः । असि । विदाः । गाधं । तुचे । तु । नः ॥९॥

हे वसो वासकाग्ने चित्रो दर्शनीयस्त्वमूत्या रक्षया सह राधांसि धनानि नोऽस्मभ्यं चोदय। प्रेरय। अस्य सर्वत्र लोके परिदृश्यमानस्य रायो धनस्य त्वं रथीरसि। रंहिता नेता भवसि। अतः कारणादस्मभ्यं धनानि प्रेरयेत्यर्थः। अपि च नोऽस्माकं तुचे। अपत्यनामैतत्। अपत्यायापतनस्त्रणभूताय पुत्रादये गाधं प्रतिष्ठां तु क्षिप्रं विदाः। लंभय॥

पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
अग्ने हेळांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च ॥१०॥
पर्षि । तोकं । तनयं । पर्तृऽभिः । त्वं । अदब्धैः । अप्रयुत्वऽभिः ।
अग्ने । हेळांसि । दैव्या । युयोधि । नः । अदेवानि । ह्वरांसि । च ॥१०॥

हे अग्ने त्वमदब्धैः केनाप्यहिंसितैरप्रयुत्वभिः । यौतिरत्र पृथग्भावार्थः । अपृथग्भूतैः संहतैः पर्तृभिः पालनसाधनैस्तोकं पुत्रं तनयं पौत्रं च पर्षि । पालय । दैव्या देवसंबंधीनि च हेळांसि क्रोधानस्मत्तो युयोधि । पृथक्कुरु । अदेवानि मनुष्यसंबंधीनि च ह्रुरांसि हिंसनानि चास्मत्तः पृथक्कुरु ॥ ॥२॥

आ सखायः सबर्दुघां धेनुमजध्वमुप नव्यसा वचः । सृजध्वमनपस्फुरां ॥११॥
आ । सखायः । सबःऽदुघां । धेनुं । अजध्वं । उप । नव्यसा । वचः । सृजध्वं । अनपऽस्फुरां ॥११॥

हे सखायः समानख्याना अध्वर्यवः सबर्दुघां । सबरिति पयसो नाम । अमरणहेतुभूतस्य पयसो दोग्ध्रीं धेनुं गामाजध्वं । अभिगच्छत । प्राप्नुत । केन साधनेन । नव्यसा नवीयसा नवतरेण वचा वचसाह्वानरूपेण शब्देन । तदनंतरमनपस्फुरां । स्फुरतिर्वधकर्मा । अनपबाध्यां तां धेनुमुप सृजध्वं । वत्सेनोपसृष्टां कुरुत । मरुद्देवत्यत्वात् मरुतां यागाय पयो दोग्धुमिति शेषः । अथवा मरुतां माता पृश्न्याख्या माध्यमिका वाग्धेनुः । हे सखायः स्तोतारः सबर्दुघां मरुज्जननहेतुभूतस्य पयसो दोग्ध्रीं धेनुं पृश्निं नव्यसा नवतरेण वचसा स्तोत्रेणोपाजध्वं । उपागच्छत । अनपस्फुरामनपबाधनीयां तां सृजध्वं । बंधनाद्विसृजत । मुंचत । ईदृशी महती धेनुर्मरुतां माता किमु वक्तव्यं तेषां माहात्म्यमिति मरुत्स्तुतिः ॥

या शर्धाय मारुताय स्वभानवे श्रवोऽमृत्यु धुक्षत ।
या मृळीके मरुतां तुराणां या सुम्नैरेवयावरी ॥१२॥
या । शर्धाय । मारुताय । स्वऽभानवे । श्रवः । अमृत्यु । धुक्षत ।
या । मृळीके । मरुतां । तुराणां । या । सुम्नैः । एवऽयावरी ॥१२॥

या धेनुरमृत्युमरणहेतु श्रवोऽन्नं पयोलक्षणं मारुताय मरुत्संघाय धुक्षत अधुक्षत । कीदृशाय । शर्धाय प्रसहनशीलाय स्वभानवे स्वायत्तदीप्तये । या च तुराणां क्षिप्रकारिणां मरुतां मृळीके सुखे तत्परा वर्तते । या च सुम्नैः सुखहेतुभूतैरेवयावरी एवैर्गंतृभिरश्वैर्मध्यमस्थानैरुदकैर्वा सह यात्यन्येषामपि सुखार्थं वृष्टिजलैः सह गच्छती तां धेनुमुपाजध्वमिति पूर्वत्रान्वयः । अत्रापि पूर्ववन्मरुत्स्तुतिरधिगंतव्या ॥

भरद्वाजायाव धुक्षत द्विता । धेनुं च विश्वदोहसमिषं च विश्वभोजसं ॥१३॥
भरत्ऽवाजाय । अव । धुक्षत । द्विता । धेनुं । च । विश्वऽदोहसं । इषं । च । विश्वऽभोजसं ॥१३॥

हे मरुतो भरद्वाजायास्मभ्यं द्विता द्वितयमेव धुक्षत । किं तद्द्वितयं । धेनुं च गां चेषं चान्नं च । कीदृशीं धेनुं । विश्वदोहसं विश्वस्य व्याप्तस्य बहुलस्य दोग्ध्रीं । कीदृशमन्नं । विश्वभोजसं सर्वेषां भोगपर्याप्तं ॥

तं व इंद्रं न सुक्रतुं वरुणमिव मायिनं ।
अर्यमणं न मंद्रं सृप्रभोजसं विष्णुं न स्तुष आदिशे ॥१४॥
तं । वः । इंद्रं । न । सुऽक्रतुं । वरुणंऽइव । मायिनं ।
अर्यमणं । न । मंद्रं । सृप्रऽभोजसं । विष्णुं । न । स्तुषे । आऽदिशे ॥१४॥

हे मरुद्गण तं तादृशं वस्त्वां स्तुषे । स्तौमि । किमर्थं । आदिशे आदेशनाय धनानामतिसर्जनाय प्रदानाय ।

कीदृशं त्वां । इंद्र नेंद्रमिव सुक्रतुं सुकर्माणं वरुणमिव मायिनं मायावंतं प्रज्ञावंतमर्यमणं नार्यमणमिव भद्रं स्तुत्यं विष्णुं न विष्णुमिव सप्रभोजसं प्रख्याधनं । यदा त्वस्या लिंगोक्तदेवतास्तदानीं नवशब्दो चशब्दार्थे द्रष्टव्यो ॥

त्वेषं शर्धो न मारुतं तुविष्वण्यनर्वाणं पूषणं सं यथा शता ।
सं सहस्रा कारिषच्चर्षणिभ्य आँ आविर्गूळ्हा वसू करत्सुवेदा नो वसू करत् ॥१५॥
त्वेषं । शर्धः । न । मारुतं । तुविऽस्वनि । अनर्वाणं । पूषणं । सं । यथा । शता ।
सं । सहस्रा । कारिषत् । चर्षणिऽभ्यः । आ । आविः । गूळ्हा । वसु । करत् ।
सुऽवेदा । नः । वसु । करत् ॥१५॥

नेति संप्रत्यर्थे । न संप्रतीदानीं त्वेषं दीप्तं तुविष्वणिं बहुस्वनमनर्वाणमप्रत्यृतं शत्रुभिरनभिगतं पूषणं पोषकं मारुतं मरुत्संघरूपमीदृशं शर्धो बलं स्तौमीति शेषः । स च मरुद्गणो यथा येन प्रकारेण शता शतसंख्याकानि धनानि सं सहैव चर्षणिभ्यो मनुष्येभ्योऽस्मभ्यं कारिषत् कुर्यात् । आकारः समुच्चये । यथा वा सहस्रा सहस्रसंख्याकानि धनानि च सं सहैव कारिषत् कुर्यात् तथा स्तौमीति पूर्वेणान्वयः । अपि च स मरुद्गणो गूळ्हा गूढानि संवृतानि वसु वसूनि धनान्याविष्करत् । अस्मभ्यमाविष्करोतु । तथा वसु वसूनि धनानि सुवेदा सुलभानि च नोऽस्माकं करत् करोतु । यदा तु लिंगादियं पौष्णी तदा मारुतं शर्ध इव त्वेषं पूषणं पोषकं मतस्तं देवं स्तौमीति योजनीयं ॥

आ मा पूषन्नुप द्रव शंसिषं नु ते अपिकर्ण आघृणे । अघा अर्यो अरातयः ॥१६॥
आ । मा । पूषन् । उप । द्रव । शंसिषं । नु । ते । अपिऽकर्णे । आघृणे । अघाः ।
अर्यः । अरातयः ॥१६॥

हे पूषन् मा मामा द्रव । रक्षणार्थमभिगच्छ । हे आघृणे आगतदीप्ते अघा आहन्तारोऽर्योऽरीन् अभिगन्तारोऽरातयः शत्रुभूताः प्रजा उप द्रव । बाधस्व ॥ उपपूर्वो द्रवतिर्बाधायां वर्तते । यथा प्रजा पर्जन्यः शमानस्योपदद्राव । तै° म° १ । ५ । १४ । इति ॥ अहं च ते तवापिकर्णे कर्णाविपर्गते समीपदेशे स्थितः सन् नु क्षिप्रं शंसिषं । प्रशंसामि ॥ ॥ ३ ॥

मा काकंबीरमुद्वृहो वनस्पतिमशस्तीर्वि हि नीनशः ।
मोत सूरो अह एवा चन ग्रीवा आदधते वेः ॥१७॥
मा । काकंबीरं । उत् । वृहः । वनस्पतिं । अशस्तीः । वि । हि । नीनशः ।
मा । उत । सूरः । अहरिति । एव । चन । ग्रीवाः । आऽदधते । वेरिति वेः ॥१७॥

ऋषिः पूषपार्श्वसमाश्रितमात्मानं बहुपक्ष्याश्रयवनस्पतित्वेन रूपयन् तस्यानुग्रहमाशास्ते । हे पूषन् मा काकंबीरं काकानां भर्तारं वनस्पतिं वृक्षं मोद्वृहः । उद्वृहः । मा बाधस्व । पूषपार्श्वादिभिः सर्वाभिमतरूपैतं सर्वैश्च बहुभिराश्रितं मां मा हिंसीरित्यर्थः । हिशब्दश्चार्थे । अशस्तीरशंसनीया अप्रशंसनीयस्य दुष्टस्य कीर्तयितारो वा शत्रुभूताः प्रजा वि नीनशो हि । विनाशय च । उतापि च सूरः प्रेरकः शत्रुरेवं मा हृः । अस्मान्मा हार्षीत् ॥ एवमित्यभिमंत्रधादाख्यातस्योदात्तत्वात्तच्छ्रुतावपि यच्छब्दतदाकांक्षाध्याह्रियते ॥ ग्रीवाः । गिरत्यन्तरवस्था पर्यति बध्नतीति ग्रीवा दामानि । यथा व्याधा वेः पक्षिणो हरणार्थं ग्रीवा दामानि जालरूपाण्यादधते भूम्यां निदधते तत्र निहितः पक्षिणो हरत्येवमस्मान् बधनोपायैः शत्रुर्मा हार्षीदित्यर्थः ॥

दृतेरिव तेऽवृकमस्तु सख्यं । अच्छिद्रस्य दधन्वतः सुपूर्णस्य दधन्वतः ॥१८॥

दृतेःऽइव । ते । अवृकं । अस्तु । सख्यं । अच्छिद्रस्य । दधनऽवतः । सुऽपूर्णस्य ।
दधनऽवतः ॥१८॥

हे पूषन् ते तव सख्यं सखित्वमवृकं बाधकरहितं सर्वदैकरूपेण वर्तमानमस्माकमस्तु । सर्वदा भवतु । दृतेरिव । यथा दृतेस्त्वदीयं सख्यमविच्छिन्नं तद्वत् । कीदृशो दृतिः । अच्छिद्रस्य छिद्ररहितस्य संश्लिष्टस्य दधन्वतो दधिमतः सुपूर्णस्य दध्ना सुष्ठु पूरितस्य । पुनर्दधन्वत इति दध्नोऽधिकत्वद्योतनार्थः । ईदृशो दृतिः सर्वदा पूष्णो रथे वर्तते । स इव वयमपि तव सखायो भवेमेत्युपिराशास्ते ॥

परो हि मर्त्यैरसि समो देवैरुत श्रिया ।
अभि ख्यः पूषन्पृतनासु नस्त्वमवा नूनं यथा पुरा ॥१९॥

परः । हि । मर्त्यैः । असि । समः । देवैः । उत । श्रिया ।
अभि । ख्यः । पूषन् । पृतनासु । नः । त्वं । अव । नूनं । यथा । पुरा ॥१९॥

हे पूषन् मर्त्यैर्मर्त्येभ्यो मनुष्येभ्यः परः परस्तात्स्थितोऽसि । श्रिया संपदा देवैरुत सर्वैर्देवैश्च समः समानोऽसि । अतस्त्वं पृतनासु संग्रामेषु नोऽस्मानभि ख्यः । अभिपश्यानुग्रहदृष्ट्या विलोकय । यथा पुरा येन प्रकारेण पूर्वकालीनान्पुरुषानरक्षिथ एव नूनमद्येदानीमव । अस्मान्रक्ष ॥

वामी वामस्य धूतयः प्रणीतिरस्तु सूनृता ।
देवस्य वा मरुतो मर्त्यस्य वेजानस्य प्रयज्यवः ॥२०॥

वामी । वामस्य । धूतयः । प्रऽनीतिः । अस्तु । सूनृता ।
देवस्य । वा । मरुतः । मर्त्यस्य । वा । ईजानस्य । प्रऽयज्यवः ॥२०॥

हे धूतयः कंपयितारः प्रयज्यवः प्रकर्षेण यष्टव्या मरुतः सा सूनृता प्रियसत्यात्मिका माध्यमिका युष्मदीया वाक् प्रणीतिरस्तु । अस्मदर्थं धनानां प्रणेत्री भवतु । देवस्य वा मर्त्यस्य मनुष्यस्य वेजानस्येष्टवत उभयविधस्य पुरुषस्य वामी प्रशस्ता या वाक् वामस्य वननीयस्य धनस्य प्रणीतिः प्रणेत्री सा सूनृतेत्यन्वयः । प्रणीतिरस्त्वस्मदर्थं ॥

सद्यश्चिद्यस्य चर्कृतिः परि द्यां देवो नैति सूर्यः ।
त्वेषं शवो दधिरे नाम यज्ञियं मरुतो वृत्रहं शवो ज्येष्ठं वृत्रहं शवः ॥२१॥

सद्यः । चित् । यस्य । चर्कृतिः । परि । द्यां । देवः । न । एति । सूर्यः ।
त्वेषं । शवः । दधिरे । नाम । यज्ञियं । मरुतः । वृत्रऽहं । शवः । ज्येष्ठं । वृत्रऽहं । शवः ॥२१॥

यस्य च मरुद्गणस्य चर्कृतिः कर्म सद्यश्चित्सद्य एव द्यां पर्येति परिगच्छति दिव्यंतरिक्षे परितो वर्तते देवो न देवो द्योतमानः सूर्य इव तादृग्गणात्मका मरुतस्त्वेषं दीप्तं नाम शत्रूणां नमयितृ यज्ञियं यज्ञार्हं शवो बलं दधिरे । अधारयन् । तच्च शवो बलं वृत्रहं वृत्रादेरसुरस्य हंतृ भवति । तच्च वृत्रहं शवो ज्येष्ठं सर्वेभ्यः प्रशस्ततमं भवति ॥

सकृद्ध द्यौरजायत सकृद्भूमिरजायत ।
पृश्न्या दुग्धं सकृत्पयस्तदन्यो नानु जायते ॥२२॥
सकृत् । ह । द्यौः । अजायत । सकृत् । भूमिः । अजायत ।
पृश्न्याः । दुग्धं । सकृत् । पयः । तत् । अन्यः । न । अनु । जायते ॥२२॥

सकृद्ध सकृदेव द्यौरजायत । उदपद्यत । सकृदुत्पन्नैव स्थिता भवति । न पुनस्तस्या नष्टायामन्या तत्सदृशी द्यौर्जायते । भूमिश्च सकृदेवाजायत । पृश्न्या मरुतां मातुर्गोः पयश्च सकृदेकवारमेव दुग्धं यस्मात्पयसो मरुतो जज्ञिरे । पृश्न्यै वै पयसो मरुतो जाताः । तै० सं० २. २. ११. ४ । इति तैत्तिरीयकं । यथा द्यावापृथिव्यौ सकृदेवोत्पद्येते एवं पृश्निरपि सकृद्दुग्धेनैव पयसा मरुतोऽजीजनत् । तत्ततः परमन्यः पदार्थो नानु जायते । तत्सदृशो नोत्पद्यते ॥ ॥४॥

स्तुषे जनमिति पञ्चदशर्चं षष्ठं सूक्तं भारद्वाजस्य ऋजिश्वन आर्षं वैश्वदेवं । अन्त्या षट्पञ्चाशदक्षरा शक्करी शिष्टास्त्रिष्टुभः । तथा चानुक्रांतं । स्तुषे पंचोना ऋजिश्वा ह वैश्वदेवं ह शक्कर्यंतमिति ॥ व्यूळ्हे दशरात्रे पंचमेऽहनीदं वैश्वदेवनिविद्धानं । सूत्रितं च । ऋभुर्विभ्वा स्तुषे जनमिति वैश्वदेवं । आ० ८. ८. । इति । आद्या महानाम्नीव्रते जप्या ॥

स्तुषे जनं सुव्रतं नव्यसीभिर्गीर्भिर्मित्रावरुणा सुम्नयंता ।
त आ गमंतु त इह श्रुवंतु सुक्षत्रासो वरुणो मित्रो अग्निः ॥१॥
स्तुषे । जनं । सुऽव्रतं । नव्यसीभिः । गीःऽभिः । मित्रावरुणा । सुम्नऽयंता ।
ते । आ । गमंतु । ते । इह । श्रुवंतु । सुऽक्षत्रासः । वरुणः । मित्रः । अग्निः ॥१॥

सुव्रतं सुकर्माणं जनं दैव्यं जनं देवसंघं नव्यसीभिर्नवतराभिर्गीर्भिः स्तुतिभिः स्तुषे । अहं स्तुवे । तथा मित्रावरुणा । मित्रः प्रमीतेस्त्रायको वरुणः पापान्निवारयिता । एतावपि देवौ स्तौमि । कीदृशौ । सुम्नयंता सुम्नं सुखं स्तोतृणामिच्छंतौ । सुक्षत्रासः शोभनबलास्ते वरुणादयः सर्वे देवा इहास्मिन्यज्ञ आ गमंतु । आगच्छंतु । ते तादृशाः श्रुवंतु । अस्मदीयाः स्तुतीः शृण्वंतु च । अत्र मित्रादीनां परिगणनमुपलक्षणं सूक्तस्य सर्वदेवताप्रतिपादकत्वात् । अत एव पूर्वं जनमिति सामान्यनिर्देशः ॥

विशोविश ईड्यमध्वरेष्वदृप्तक्रतुमरतिं युवत्योः ।
दिवः शिशुं सहसः सूनुमग्निं यज्ञस्य केतुमरुषं यजध्यै ॥२॥
विशःऽविशः । ईड्यं । अध्वरेषु । अदृप्तऽक्रतुं । अरतिं । युवत्योः ।
दिवः । शिशुं । सहसः । सूनुं । अग्निं । यज्ञस्य । केतुं । अरुषं । यजध्यै ॥२॥

विशो विशः सर्वस्याः प्रजाया अध्वरेषु यज्ञेष्वीड्यमस्तुतिभिः स्तुत्यमदृप्तक्रतुं दर्परहितकर्माणममूढप्रज्ञं वा युवत्योर्द्यावापृथिव्योररतिमभिगंतारमर्यं स्वामिनं दिवो द्युलोकस्य शिशुं पुत्रं । दिवस्परि प्रथमं जज्ञे अग्निः । ऋग्वे० १०. ४५. १. । इति निगमः । यद्वा । दिवः स्तोतुः पुत्रभूतं । तथापि निगमो भवति । त्वं पुत्रो भवसि यस्तेऽविधत् । ऋग्वे० २. १. ९. । इति । सहसो बलस्य सूनुं पुत्रं यज्ञस्य यागस्य केतुं प्रज्ञापकमरुषमारोचमानमेवंगुणकमग्निं यजध्यै यष्टुं । स्तुषे इत्यनुषज्यते । स्तुषे । स्तुवे ॥

अरुषस्य दुहितरा विरूपे स्तृभिरन्या पिपिशे सूरो अन्या ।
मिथस्तुरा विचरंती पावके मन्म श्रुतं नक्षत ऋच्यमाने ॥३॥

अरुषस्य । दुहितरा । विरूपे इति विऽरूपे । स्तृऽभिः । अन्या । पिपिशे । सूरः । अन्या ।
मिथःऽतुरा । विचरंती इति विऽचरंती । पावके इति । मन्म । श्रुतं । नक्षतः ।
ऋच्यमाने इति ॥३॥

इयमहोरात्रयोः स्तुतिः । अरुषस्यारोचमानस्य सूर्यस्य दुहितरा दुहितरौ । सूर्येण ह्यहोरात्रयोर्विभागः क्रियते । अतस्तदधीनात्मलाभत्वात्तस्य दुहितराविल्युच्येते । विरूपे शुक्लकृष्णतया नानारूपे । तयोरन्यैका रात्रिः स्तृभिर्नक्षत्रैः पिपिशे । पिश्यते । संश्लिष्यते ॥ पिश अवयव इति धातुः ॥ अन्याहरात्मिका दुहिता सूरः सूर्येण पिपिशे । संश्लिष्यते । ते च नक्षत्रैः सूर्येण चालंकृते भवत इत्यर्थः । मिथस्तुरा परस्परं बाधयंत्यौ । अहा रात्रिर्निवर्त्यते रात्र्या चाहरिति परस्परं बाधः । अत एव विचरंती विविधं पृथक्चरंत्यौ पावके सर्वस्य शोधयित्र्यौ । एवंभूते अहश्च रात्रिश्च ऋच्यमाने अस्माभिः स्तूयमाने सत्यौ श्रुतं श्रोतव्यं मन्म मननीयं स्तोत्रमस्मत्कृतं नक्षतः । व्याप्नुतः ॥

प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारं रथप्रां ।
द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥४॥

प्र । वायुं । अच्छ । बृहती । मनीषा । बृहत्ऽरयिं । विश्वऽवारं । रथऽप्रां ।
द्युतत्ऽयामा । निऽयुतः । पत्यमानः । कविः । कविं । इयक्षसि । प्रयज्यो इति
प्रऽयज्यो ॥४॥

बृहती महती मनीषास्मदीया स्तुतिर्वायुमच्छाभिमुख्येन प्र गच्छतु ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ कीदृशं वायुं । बृहद्रयिं महाधनं विश्ववारं विश्वैर्वरणीयं संभजनीयं रथप्रां रथस्यात्मीयस्य प्रातारं पूरयितारं । यद्वा । स्तोतॄणां रथं धनैः पूरयितारं । अथ प्रत्यक्षस्तुतिः । हे प्रयज्यो प्रकर्षेण यष्टव्य वायो द्युतद्यामा प्रदीप्तयानो नियुत आत्मीयरथयोज्या वडवास्ताः पत्यमानोऽभिपतन्नभिगच्छन् । यद्वा । पत्यतिरैश्वर्यकर्मा । तासां वडवानामीश्वरः कविः क्रांतदर्शी । एवंभूतस्त्वं कविं मेधाविनं स्तोतारमियक्षसि । धनेन पूजय ॥

स मे वपुश्छदयदश्विनोर्यो रथो विरुक्मान्मनसा युजानः ।
येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥५॥

सः । मे । वपुः । छदयत । अश्विनोः । यः । रथः । विरुक्मान् । मनसा । युजानः ।
येन । नरा । नासत्या । इषयध्यै । वर्तिः । याथः । तनयाय । त्मने । च ॥५॥

अश्विनोः स्वभूतः स रथो मे मदीयं वपुः शरीरं छदयत । छादयतु । तेजसाच्छादयतु । यो रथो विरुक्मान् विरोचनवान् विशेषेण दीप्यमानो मनसा मनोव्यापारमात्रेण युजानोऽश्वैः संप्रयुज्यमानो भवति । हे नरा नेतारौ हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वाश्विनौ येन रथेन वर्तिः स्तोतृगृहं तनयाय पुत्राय त्मने आत्मने च स्तोत्रे चेषयध्यै कामान्प्रापयितुं याथो गच्छथः स रथ इति पूर्वत्रान्वयः ॥ ॥५॥

पर्जन्यवाता वृषभा पृथिव्याः पुरीषाणि जिन्वतमप्यानि ।
सत्यश्रुतः कवयो यस्य गीर्भिर्जगतः स्थातर्जगदा कृणुध्वं ॥६॥

पर्जन्यवाता । वृषभा । पृथिव्याः । पुरीषाणि । जिन्वतं । अप्यानि ।
सत्यऽश्रुतः । कवयः । यस्य । गीःऽभिः । जगतः । स्थातः । जगत् । आ । कृणुध्वं ॥ ६ ॥

हे पर्जन्यवाता पर्जन्यवायू वृषभा वृष्टेः कर्तारौ पृथिव्याः । अंतरिक्षनामैतत् । अंतरिक्षादप्यान्याप्यान्यानि पुरीषाणि पूरकाण्युदकानि जिन्वतं । प्रेरयतं । उत्तरोऽर्धर्चो मारुतः । हे सत्यश्रुतः सत्यस्य स्तोत्रस्य श्रोतारः कवयो मेधाविनो मरुतो यस्य स्तोतुर्गीर्भिः स्तुतिभिर्यूयं स्तुता भवथ तस्य स्तोतुर्जगत्स्थावरजंगमात्मकं सर्वं प्राणिजातमा कृणुध्वं । आभिमुख्येन कुरुत । हे जगतः स्थातः । गणाभिप्रायमेकवचनं । स्थावरजंगमात्मकस्य जगतोऽवस्थापका हे मरुद्गणेति योज्यं ॥

अन्वारंभणीयायां सारस्वतस्य हविषो याज्या पावीरवीत्येषा । सूत्रितं च । पावीरवी कन्या चित्रायुः पीपिवांसं सरस्वतः । आ० २ ८ । इति ॥ एकादशिने सारस्वते पशावप्येष पुरोडाशस्य याज्या । सूत्रितं च । पावीरवी कन्या चित्रायुर्यस्ते स्तनः शशयो यो मयोभूः । आ० ३ ७ । इति ॥ आग्निमारुते शस्त्रेऽप्येषा । सूत्रितं च । राकामहमिति द्वे पावीरवी कन्या चित्रायुः । आ० ५ २०. । इति ॥

पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसत् ॥ ७ ॥
पावीरवी । कन्या । चित्रऽआयुः । सरस्वती । वीरऽपत्नी । धियं । धात् ।
ग्नाभिः । अच्छिद्रं । शरणं । सऽजोषाः । दुःऽआधर्षं । गृणते । शर्म । यंसत् ॥ ७ ॥

पावीरवी शोधयित्री कन्या कमनीया चित्रायुश्चित्रगमना चित्रान्ना वा वीरपत्नी । वीरः प्रजापतिः पतिर्यस्यास्तादृशी । यद्वा । वीराणां पालयित्री । एवंभूता सरस्वती धियमस्मदीयं कर्म यज्ञाख्यं धात् । दधातु । धारयतु । ददातु वा । शब्देन प्रतिपादितो ह्यर्थोऽनुष्ठीयते । अपि च ग्नाभिर्देवपत्नीभिः सजोषाः सह प्रीयमाणा । यद्वा । ग्ना गायत्र्यादीनि छंदांसि । छंदांसि वै ग्ना इति श्रुतेः । तैः सह प्रीयमाणा गृणते स्तुवते मह्यमच्छिद्रं छिद्ररहितं दुराधर्षं शत्रुभिः शीतवातादिभिश्च धर्षितुमशक्यं शरणं गृहं शर्म सुखं च यंसत् । प्रयच्छतु ॥

एकादशिने पौष्णे पशौ पथस्पथ इति हविषो याज्या । सूत्रितं च । पथस्पथः परिपतिं वचस्या बृहस्पते या परमा परावदिति द्वे । आ० ३ ७ । इति ॥

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कं ।
स नो रासच्छुरुधश्चंद्राग्रा धियंधियं सीषधाति प्र पूषा ॥ ८ ॥
पथःऽपथः । परिऽपतिं । वचस्या । कामेन । कृतः । अभि । आनट् । अर्कं ।
सः । नः । रासत् । शुरुधः । चंद्रऽअग्राः । धियंऽधियं । सीसधाति । प्र । पूषा ॥ ८ ॥

पथस्पथः सर्वस्य मार्गस्य परिपतिमधिपतिमर्कमर्चनीयं पूषणं कामेन काम्यमानेन फलेन कृतो वशीकृतः स्तोता वचस्या स्तुत्याभ्यानट् । अभ्यश्नुतां । प्राप्नोतु । स च पूषा नोऽस्मभ्यं शुरुधः शुचो रोधयित्रीर्गाश्चंद्राग्राः चंद्रमिति हिरण्यनाम । हिरण्यप्रमुखा यद्वा स्वर्णशृंगा रासत् । ददातु ॥ रा दाने । लेट्यडागमः ॥ तथा धियं धियं सर्वमस्मदीयं कर्म स पूषा प्र सीषधाति । प्रसाधयतु ॥

त्वाष्ट्रे पशौ प्रथमभाजमिति हविषो याज्या । सूत्रितं च । प्रथमभाजं यशसं वयोधां सीमापूषणा जनना रयीणां । आ० ३. ८. । इति ॥

प्रथमभाजं यशसं वयोधां सुपाणिं देवं सुगभस्तिमृभ्वं ।
होता यक्षद्यजतं पस्त्यानामग्निस्त्वष्टारं सुहवं विभावा ॥ ९ ॥
प्रथमऽभाजं । यशसं । वयःऽधां । सुऽपाणिं । देवं । सुऽगभस्तिं । ऋभ्वं ।
होता । यक्षत् । यजतं । पस्त्यानां । अग्निः । त्वष्टारं । सुऽहवं । विभाऽवा ॥ ९ ॥

प्रथमभाजं प्रथम उत्पत्तिकाल एव विभक्तारं जंतूनां । यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्र जायते । तै॰ सं॰ १. ५. ९ १. । इति श्रुतेः । यशसं यशस्विनं वयोधां वयसोऽन्नस्य हविर्लक्षणस्य धातारं धारयितारं यद्वा स्तोतृभ्योऽन्नप्रदं सुपाणिं । हस्तस्य मणिबंधादूर्ध्वप्रदेशः पाणिः । शोभनपाणिकं देवं दानादिगुणयुक्तं सुगभस्तिं । गभस्तिरिति बाहुनाम । शोभनदोर्दंडमृभ्वमुरु भासमानं महांतं वा पस्त्यानां । पस्त्यमिति गृहनाम । तत्स्थानां यजतं यष्टव्यं । गृहस्थैर्यजनीयमित्यर्थः । सुहवं सुखेन ह्वातुं शक्यं । एवंभूतं त्वष्टारं होता देवानामाह्वाता विभावा दीप्यमानोऽग्निर्यक्षत् । यजतु । अनेन हविषा यजतु ॥

भुवनस्य पितरं गीर्भिराभी रुद्रं दिवा वर्धया रुद्रमक्तौ ।
बृहंतमृष्वमजरं सुषुम्नमृधग्घुवेम कविनेषितासः ॥ १० ॥
भुवनस्य । पितरं । गीःऽभिः । आभिः । रुद्रं । दिवा । वर्धय । रुद्रं । अक्तौ ।
बृहंतं । ऋष्वं । अजरं । सुऽसुम्नं । ऋधक् । हुवेम । कविना । इषितासः ॥ १० ॥

भुवनस्य भूतजातस्य पितरं पालयितारं रुद्रं । रुद्रःस्व । तद्द्रावयितारमीश्वरमाभिर्गीर्भिः स्तुतिभिर्दिवाह्नि हे स्तोतर्वर्धय । अक्तौ रात्र्यां च तमेव रुद्रं स्तुतिभिर्वर्धय । वयं च कविना प्राज्ञेन रुद्रेणेषितासः प्रेरिताः संतो बृहंतं महांतमृष्वं दर्शनीयमजरं जरारहितं सुषुम्नं शोभनसुखमेवगुणविशिष्टं रुद्रमृधक् ऋद्धं समृद्धं यथा भवति तथा हुवेम । स्तवाम ॥ ॥ ६ ॥

आ युवानः कवयो यज्ञियासो मरुतो गंत गृणतो वरस्यां ।
अचित्रं चिद्धि जिन्वथा वृधंत इत्था नक्षंतो नरो अंगिरस्वत् ॥ ११ ॥
आ । युवानः । कवयः । यज्ञियासः । मरुतः । गंत । गृणतः । वरस्यां ।
अचित्रं । चित् । हि । जिन्वथ । वृधंतः । इत्था । नक्षंतः । नरः । अंगिरस्वत् ॥ ११ ॥

हे युवानो नित्यतरुणाः कवयः प्राज्ञा यज्ञियासो यज्ञार्हा एवभूता हे मरुतो गृणतः स्तुवतो वरस्या वरणीयां स्तुतिं प्रत्या गत । आगच्छत । अपि च हे नरो नेतारो मरुत इत्थेत्थमनेन प्रकारेण वृधंतो वर्धमानाः । यद्वा । इत्थामुत्रांतरिक्षे नक्षंतो व्याप्नुवतोऽंगिरस्वत् । अंगिरसो गमनशीला रश्मयः । ते यथा शीघ्रं नभस्तलं व्याप्नुवंति तद्वत् । यद्वा । ऋषय एवांगिरसः । तद्वच्छीघ्रगामिनः । एवभूता यूयमचित्रं चित् । ओषधिवनस्पतिभिर्निर्विद्धो देशोऽचित्रं । तद्विलक्षणमोषध्यादिभिर्वियुक्तमपि देशं जिन्वथ । वृष्ट्या तर्पयथ । हीति पूरणः ॥

प्र वीराय प्र तवसे तुरायाजा यूथेव पशुरक्षिरस्तं ।
स पिस्पृशति तन्वि श्रुतस्य स्तृभिर्न नाकं वचनस्य विपः ॥ १२ ॥
प्र । वीराय । प्र । तवसे । तुराय । अज । यूथाऽइव । पशुऽरक्षिः । अस्तं ।
सः । पिस्पृशति । तन्वि । श्रुतस्य । स्तृऽभिः । न । नाकं । वचनस्य । विपः ॥ १२ ॥

वीराय विक्रांताय विविधशत्रूणामीरकाय वा मरुद्गणाय प्राज । हे स्तोतः स्तुतिं प्रगमय । तथा तवसे बलिने तुराय क्षिप्रगमनाय च तस्मै गणाय प्राज । तत्र दृष्टांतः । पशुरक्षिः पशुपालको यूथेव । स यथा गोयूथानि सायंकालेऽस्तं गृहं शीघ्रं गमयति तद्वत् शीघ्रं स्तुतिं प्रेरयेत्यर्थः । स च मरुद्गणो वचनस्य वक्तुर्विप्रो विप्रस्य मेधाविनः स्तोतुः श्रुतस्य ॥ क्रियाग्रहणमपि कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥ श्रुतं श्रोतव्यं स्तोत्रं तन्व्यात्मीये शरीरे पिस्पृशाति । स्पर्शयतु । संश्लेषयतु । तत्स्तोत्रं हृद्गतं भवत्वित्यर्थः । स्पर्शने दृष्टांतः । स्तृभिर्न नाकं । यथा नक्षत्रैर्नाकमंतरिक्षं स्पर्शयति संश्लेषयति तद्वत् ॥

यो रजांसि विममे पार्थिवानि त्रिश्चिद्विष्णुर्मनवे बाधिताय ।
तस्य ते शर्मन्नुपदद्यमाने राया मदेम तन्वा३ तना च ॥१३॥

यः । रजांसि । विऽममे । पार्थिवानि । त्रिः । चित् । विष्णुः । मनवे । बाधिताय ।
तस्य । ते । शर्मन् । उपऽदद्यमाने । राया । मदेम । तन्वा । तना । च ॥१३॥

यो विष्णुर्बाधितायासुरैर्हिंसिताय मनवे प्रजापतये तदर्थं पार्थिवानि पृथिव्याः संबंधीनि रजांसि लोकान् । त्रीँल्लोकानिति यावत् । त्रिर्विममे । चिदित्यवधारणे । त्रिभिरेव विक्रमणैः परिमितवान् हे विष्णो तस्य तादृशस्य ते तव ॥ तृतीयार्थे षष्ठी ॥ ईदृशेन त्वयोपदद्यमानेऽस्मभ्यं दीयमाने शर्मन् शर्मणि गृहे सुखे वा वर्तमानाः संतो वयं राया धनेन तन्वा रोगादिरहितेन शरीरेण च तना तनयेन पुत्रेण च मदेम । मोदेम । हृष्टा भवेम ॥

तन्नोऽहिर्बुध्न्यो अद्भिरर्कैस्तत्पर्वतस्तत्सविता चनो धात् ।
तदोषधीभिरभि रातिषाचो भगः पुरंधिर्जिन्वतु प्र राये ॥१४॥

तत् । नः । अहिः । बुध्न्यः । अत्ऽभिः । अर्कैः । तत् । पर्वतः । तत् । सविता । चनः । धात् ।
तत् । ओषधीभिः । अभि । रातिऽसाचः । भगः । पुरंऽधिः । जिन्वतु । प्र । राये ॥१४॥

बुध्न्यः । बुध्नमंतरिक्षं । तत्र भवोऽहिः । एत्यंतरिक्ष इत्यहिः । उक्तं च । अहिरयनादेत्यंतरिक्षे । नि॰ २ १७ । इति । एतत्पदद्वयाभिधेयो देवोऽर्कैरर्चनसाधनैर्मंत्रैः स्तूयमानः सन् नोऽस्मभ्यं तत् लोके प्रसिद्धं चनोऽन्नमद्भिरुदकैः सार्धं धात् । दधातु । विदधातु । प्रयच्छतु । पर्वतः पूरयिता ॥ पर्व पूरणे इति धातुः ॥ यद्वा । पर्ववद्गिरिः पर्वतः । तद्वान् । पर्वतस्य गिरेः शत्रुरिति वा पर्वतः । स च तच्चनो दधातु । तथा सविता प्रेरको देवश्च तच्चनो दधातु । अपि च रातिषाचः । रातिं दानं सचंते सेवंत इति रातिषाचो विश्वे देवाः । ते चौषधीभिः । ओषः पाक आसु धीयत इत्योषधयस्ताभिः । ताभिः सार्धं तदन्नमभि प्रयच्छंतु । तथा पुरंधिर्बहुधीर्बहुप्रज्ञो वा बहुकर्मा वा भगो भजनीय एतत्संज्ञो देवश्च राये धनार्थं प्र जिन्वतु । अस्मान्प्रेरयतु ॥

नू नो रयिं रथ्यं चर्षणिप्रां पुरुवीरं मह ऋतस्य गोपां ।
क्षयं दाताजरं येन जनान्त्स्पृधो अदेवीरभि च क्रमाम विश आदेवीरभ्य१श्नवाम ॥१५॥

नु । नः । रयिं । रथ्यं । चर्षणिऽप्रां । पुरुऽवीरं । महः । ऋतस्य । गोपां ।
क्षयं । दात । अजरं । येन । जनान् । स्पृधः । अदेवीः । अभि । च । क्रमाम । विशः ।
आऽदेवीः । अभि । अश्नवाम ॥१५॥

हे सर्वे देवा नोऽस्मभ्यं रयिं धनं क्षयं गृहं च दात । प्रयच्छत । कीदृशं रयिं । रथ्यं रथसंबंधिनं । रथयुक्तमित्यर्थः । चर्षणिप्रां । चर्षणयो मनुष्याः । तेषां पूरयितारं पुरुवीरं । वीर्याज्जायंत इति वीराः पुत्रादयः ।

बहुभिर्वीरैरुपेत। महो महत ऋतस्य यज्ञस्य गोपां रक्षकं। दक्षिणारूपेण धनेन हि यज्ञो रक्ष्यते। मृतो यज्ञस्त्वदक्षिण इति वचनात। कीदृशं क्षयं। अजर जरारहितं। येन रयिणा क्षयेण च जनान शत्रून स्पृधः स्पर्धमाना अदेवीरदेवसंबंधिनीरासुरीः सेनाश्चाभि क्रमाम अभिभवेम। तथादेवीः। आगता देवा यासु हविःस्वीकारार्थं ता आदेव्यः। तादृशीश्च विशः प्रजा यज्ञानुष्ठायिनीर्येन धनेन गृहेण चाभ्यश्नवाम अभि प्राप्नवाम तादृशं धनं गृहं च देहीत्यन्वयः॥ ॥१॥ ॥४॥

पचमेऽनुवाके द्वादश सूक्तानि। तत्र हुवे व इति पचदशर्चं प्रथमं सूक्तमृजिश्वन आर्षं बहुदेवताकं त्रैष्टुभं। हुवे व इत्यनुक्रांतं॥ गतः सूक्तविनियोगः॥

हुवे वो देवीमदितिं नमोभिर्मृळीकाय वरुणं मित्रमग्निं।
अभिक्षदामर्यमणं सुशेवं त्रातृन्देवान्त्सवितारं भगं च॥१॥
हुवे। वः। देवीं। अदितिं। नमःऽभिः। मृळीकाय। वरुणं। मित्रं। अग्निं।
अभिऽक्षदां। अर्यमणं। सुऽशेवं। त्रातृन। देवान। सवितारं। भगं। च॥१॥

हे देवा वो युष्माकं मातरं देवीं द्योतमानामदितिमखंडनीयामदीनां वा एतत्संज्ञां देवतां मृळीकाय सुखार्थं नमोभिर्नमस्कारैः स्तोत्रैर्वा हुवे। ह्वयामि। स्तौमि। तथा वरुणं वारकं मित्रं प्रमीतेस्त्रायकं देवमग्निं चैताश्च देवान्नमोभिर्हुवे। तथाभिक्षदा। क्षदिर्हिंसाकर्मा। अभिक्षत्तारं शत्रूणां हिंसितारं सुशेवं सुसुखम-र्यमणं च नमोभिर्हुवे। सवितारं भगं च नमोभिर्हुवे। किं बहुना त्रातृन पालयितृन सर्वान्देवान्नमोभिः स्तोत्रैर्हुवे। स्तौमि॥

सुज्योतिषः सूर्य दक्षपितॄननागास्त्वे सुमहो वीहि देवान।
द्विजन्मानो य ऋतसापः सत्याः स्वर्वंतो यजता अग्निजिह्वाः॥२॥
सुऽज्योतिषः। सूर्य। दक्षऽपितृन। अनागाःऽत्वे। सुऽमहः। वीहि। देवान।
द्विऽजन्मानः। ये। ऋतऽसापः। सत्याः। स्वःऽवंतः। यजताः। अग्निऽजिह्वाः॥२॥

हे सुमहः शोभनदीप्ते सूर्य सर्वस्य प्रेरक दक्षपितृन। दक्षः पितामहो येषा ते दक्षपितरः। पितृशब्दो हि सामान्येन पूर्वपुरुषत्वमात्रं ब्रूते। यथाहं पितृन्त्सुविदत्रा अवित्सि। ऋग्वे॰ १० १५ ३। इति। एषां दक्षपितृत्वं चादितिर्ह्यजनिष्टेति। ऋग्वे॰ १० ७२.५। मंत्रादवगम्यते। ईदृशान सुज्योतिषः शोभनज्योतिष्कान्देवाननागास्त्वेऽनपराधत्वे वीहि। कामयस्व। यथास्माकमपराधं ते न कुर्वंति तथा कुर्या इत्यर्थः। ये देवा द्विजन्मानो द्वयोर्लोकयोर्जायमानाः प्रादुर्भवंत ऋतसाप ऋतं यज्ञं स्पृशतः सत्या अवितथाः सत्यवादिनो वा स्वर्वंतो धनवंतो यजता यष्टव्या अग्निजिह्वाः। अग्निर्जिह्वास्थानीयो येषां ते। एवंभूता ये देवाः संति तान्देवान्वीहीत्यन्वयः॥

उत द्यावापृथिवी क्षत्रमुरु बृहद्रोदसी शरणं सुषुम्ने।
महस्करथो वरिवो यथा नोऽस्मे क्षयाय धिषणे अनेहः॥३॥
उत। द्यावापृथिवी इति। क्षत्रं। उरु। बृहत। रोदसी इति। शरणं। सुसुम्ने इति सुऽसुम्ने।
महः। करथः। वरिवः। यथा। नः। अस्मे इति। क्षयाय। धिषणे इति। अनेहः॥३॥

उतापि च हे द्यावापृथिवी द्यावापृथिव्यावुरु विस्तीर्णं क्षत्रं बलं करथः। कुरुतं। तथा रोदसी द्यावापृ-

थिव्यौ सुसुम्ने सुसुखे यथा बृहन्महदुरूणां गृहं च करथः। कुरुतं। महो महद्वरिवो धनं नोऽस्माकं यथा स्यात्तथा कुरुतमित्यर्थः। अपि च हे धिषणे धारयित्र्यौ द्यावापृथिव्यावनेहः पापराहित्यं यास्म अस्माकं क्षयाय निवासार्थं कुरुत॥

आ नो रुद्रस्य सूनवो नमन्तामद्या हूतासो वसवोऽधृष्टाः।
यदीमर्भे महति वा हितासो बाधे मरुतो अह्वाम देवान्॥४॥
आ। नः। रुद्रस्य। सूनवः। नमन्ता। अद्य। हूतासः। वसवः। अधृष्टाः।
यत्। ईं। अर्भे। महति। वा। हितासः। बाधे। मरुतः। अह्वाम। देवान्॥४॥

रुद्रस्य सूनवः पुत्रा मरुतोऽद्यास्मिन्काले हूतास आहूताः संतो नोऽस्मानस्मत्या नमता। आनता भवतु। आगच्छतु। कीदृशाः। वसवो वासयितारोऽधृष्टा अन्यैरहिंसिताः। यद्यदेमनान्मरुतो देवानर्भेऽल्पे महति प्रभूते वा बाधे संग्रामे हितासो निहिताः स्थिताः सतो वयमह्वाम आह्वयाम तदानीमवश्यमित्यन्वयः॥

मिम्यक्ष येषु रोदसी नु देवी सिषक्ति पूषा अभ्यर्धयज्वा।
श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजन्ते अध्वनि प्रविक्ते॥५॥
मिम्यक्ष। येषु। रोदसी। नु। देवी। सिसक्ति। पूषा। अभ्यर्धऽयज्वा।
श्रुत्वा। हवं। मरुतः। यत्। ह। याथ। भूम। रेजन्ते। अध्वनि। प्रऽविक्ते॥५॥

येषु मरुत्सु रोदसी रुद्रस्य पत्नी देवी द्योतमाना माध्यमिका वाक् मिम्यक्ष नु क्षिप्रं सङ्गच्छते। तथाभ्यर्धयज्वा स्तोतॄनभ्यर्धयन् समृद्धान्कुर्वन्यो यजति धनेन पूजयति तादृशः पूषा पोषको देवश्च सिषक्ति यान्मरुतः सेवते। अभ्यर्धयज्वाभ्यर्धयन्यजति। नि० ६. ६। इति यास्कः। हे मरुतस्ते यूयं हवमस्मदीयमाह्वानं श्रुत्वा यत् यदा खलु याथ आगच्छथ तदानीमध्वनि मार्गे प्रविक्ते गमनार्थं पृथक्कृते सति तत्र विद्यमानानि भूम भूतजातानि रेजन्ते। कम्पन्ते। तथा च मन्त्रान्तरं। प्र वेपयन्ति पर्वतान्वि विञ्चन्ति वनस्पतीन्। ऋ०सं० १. ३९. ५। इति॥ ॥८॥

अभि त्यं वीरं गिर्वणसमर्चेन्द्रं ब्रह्मणा जरितर्नवेन।
श्रवदिद्धवमुप च स्तवानो रासद्वाजाँ उप महो गृणानः॥६॥
अभि। त्यं। वीरं। गिर्वणसं। अर्च। इन्द्रं। ब्रह्मणा। जरितः। नवेन।
श्रवत्। इत्। हवं। उप। च। स्तवानः। रासत्। वाजान्। उप। महः। गृणानः॥६॥

हे जरितः स्तोतस्त्वं तं प्रसिद्धं वीरं वीर्यवन्तं विशेषेण शत्रूणामीरकं वा गिर्वणसं गिरा संभक्तारमेवंविधमिन्द्रं नवेनाभिनवेन शोभनेन ब्रह्मणा स्तोत्रेणाभ्यर्च। अभिपूजय। स च स्तवानः स्तूयमानः सन् हवमस्मदीयं स्तोत्रमुप श्रवदित्। उपशृणुयादेव। अपि च गृणानः स्तूयमान इन्द्रो महो महतः प्रभूतान्वाजानन्नानि चोप रासत्। प्रदद्यात्। यत एवमतः स्तुहीत्यर्थः॥

ओमानमापो मानुषीरमृक्तं धात तोकाय तनयाय शं योः।
यूयं हि ष्ठा भिषजो मातृतमा विश्वस्य स्थातुर्जगतो जनित्रीः॥७॥

ओमानं । आपः । मानुषीः । अमृक्तं । धात । तोकाय । तनयाय । शं । योः ।
यूयं । हि । स्थ । भिषजः । मातृऽतमाः । विश्वस्य । स्थातुः । जगतः । जनित्रीः ॥७॥

हे आपो मानुषीर्मनुष्यहिता यूयममृक्तमहिंसितमोमानं । अवति रक्षतीत्योमा रक्षकमन्नं । तोकाय पुत्राय तनयाय तत्पुत्राय च धात । धत्त । प्रयच्छत । तथा शं शमनमुपद्रवाणां योर्यावनं पृथक्करणं च पृथक्कर्तव्यानां धत्त । प्रयच्छत । कुत इत्यत आह । हि यस्माद्यूयं मातृतमा मातृभ्योऽप्यधिका भिषजः स्थ भवथ तस्माद्दातेत्यन्वयः । कथं मातृभ्योऽप्यधिकं भैषज्यमस्तीत्यत आह । विश्वस्य सर्वस्य स्थातुः स्थावरस्य जगतो जंगमस्य जनित्रीर्जनयित्र्यो भवथ । अतो यूयं भिषजः स्थ ॥

आ नो देवः सविता त्रायमाणो हिरण्यपाणिर्यजतो जगम्यात् ।
यो दत्रवाँ उषसो न प्रतीकं व्यूर्णुते दाशुषे वार्याणि ॥८॥
आ । नः । देवः । सविता । त्रायमाणः । हिरण्यऽपाणिः । यजतः । जगम्यात् ।
यः । दत्रऽवान् । उषसः । न । प्रतीकं । विऽऊर्णुते । दाशुषे । वार्याणि ॥८॥

त्रायमाणो रक्षन् हिरण्यपाणिः सुवर्णहस्तो हितरमणीयपाणिर्वा यजतो यष्टव्य एवंभूतः सविता प्रेरको देवो नोऽस्मानाा जगम्यात् । आगच्छतु । यो देवो दत्रवान्धनवानुषसो न प्रतीकमुषसः प्रमुखमिव दाशुषे हवींषि दत्तवते यजमानाय वार्याणि वरणीयानि धनानि व्यूर्णुते विवृणोति प्रकाशयति स सवितेत्यन्वयः ॥

उत त्वं सूनो सहसो नो अद्या देवाँ अस्मिन्नध्वरे ववृत्याः ।
स्यामहं ते सदमिद्राता तव स्यामग्नेऽवसा सुवीरः ॥९॥
उत । त्वं । सूनो इति । सहसः । नः । अद्य । आ । देवान् । अस्मिन् । अध्वरे । ववृत्याः ।
स्यां । अहं । ते । सदं । इत् । रातौ । तव । स्यां । अग्ने । अवसा । सुऽवीरः ॥९॥

उतापि च हे सहसः सूनो बलस्य पुत्राग्ने त्वमद्यास्मिन्काले नोऽस्मदीयेऽस्मिन्नध्वरे यागे देवान्यष्टव्यानिन्द्रादीना ववृत्याः । आवर्तय । आगमय । अपि चाहं ते तव रातौ धनस्य दाने सदमित्सर्वदैव वर्तमानः स्यां । भवेयं । तथा हे अग्ने तवावसा त्वदीयेन रक्षणेन सुवीरः शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेतश्च स्यां । भवेयं ॥

उत त्या मे हवमा जग्म्यातं नासत्या धीभिर्युवमंग विप्रा ।
अत्रिं न महस्तमसोऽमुमुक्तं तूर्वतं नरा दुरितादभीके ॥१०॥
उत । त्या । मे । हवं । आ । जग्म्यातं । नासत्या । धीभिः । युवं । अंग । विप्रा ।
अत्रिं । न । महः । तमसः । अमुमुक्तं । तूर्वतं । नरा । दुःऽइतात् । अभीके ॥१०॥

उतापि च हे विप्रा प्राज्ञौ नासत्या सत्यस्वभावौ सत्यस्य नेतारौ वा हे अश्विनौ त्या तौ प्रसिद्धौ युवं युवां धीभिः परिचरणैः कर्मभिरुपेतं मे मदीयं हवं स्तोत्रमंग क्षिप्रमा जग्म्यातं । आगच्छतं । आगत्य च महो महतस्तमसोऽसुरकृतादन्धकारादत्रिं न यथात्रिमृषिममुमुक्तं मोचितवन्तौ स्थः हे नरा नेतारावश्विनौ तथास्मानप्यभीकेऽभ्यक्ते प्राप्ते संग्रामे दुरितादुःखात् शत्रुकृतात्तूर्वतं । अस्मांस्तारयत ॥ ॥ ९ ॥

ते नो रायो द्युमतो वाजवतो दातारो भूत नृवतः पुरुक्षोः ।
दशस्यन्तो दिव्याः पार्थिवासो गोजाता अप्या मृळता च देवाः ॥११॥

ते । नः । रायः । द्युऽमतः । वाजऽवतः । दातारः । भूत । नृऽवतः । पुरुऽक्षोः ।
दशस्यन्तः । दिव्याः । पार्थिवासः । गोऽजाताः । अप्याः । मृळत । च । देवाः ॥११॥

हे देवास्ते यूयं द्युमतो दीप्तिमतो वाजवतो बलयुक्तस्य नृवतो नृभिः पुत्रादिभिरुपेतस्य पुरुक्षोर्बहुभिः कीर्तनीयस्य रायो धनस्य नोऽस्मभ्यं दातारो भूत । भवत । अपि च दशस्यन्तः कामान्प्रयच्छन्तो दिव्या दिवि भवा आदित्याः पार्थिवासः पृथिव्या भवा वसवो गोजाताः । गौः पृश्निर्माध्यमिका वाक् । तत उत्पन्ना मरुतोऽप्या अप्स्वन्तरिक्षे भवा रुद्राश्चेति सर्वे यूयमस्मान्मृळत । सुखयत ॥

ते नो रुद्रः सरस्वती सजोषा मीळ्हुष्मन्तो विष्णुर्मृळन्तु वायुः ।
ऋभुक्षा वाजो दैव्यो विधाता पर्जन्यावाता पिप्यतामिषं नः ॥१२॥

ते । नः । रुद्रः । सरस्वती । सऽजोषाः । मीळ्हुष्मन्तः । विष्णुः । मृळन्तु । वायुः ।
ऋभुक्षाः । वाजः । दैव्यः । विऽधाता । पर्जन्यावाता । पिप्यताम् । इषम् । नः ॥१२॥

मीळ्हुष्मन्तो वर्षणवन्तस्ते देवा नोऽस्मान्मृळन्तु । मृळयन्तु । सुखयन्तु । के त इति चेदुच्यन्ते । रुद्रः सरस्वती च सजोषाः सह प्रीयमाणा विष्णुर्वायुश्च ऋभुक्षाः । ऋभुर्विभ्वा वाज इति त्रयः सौधन्वनाः । तेषामाद्य ऋभुश्च वाजोऽन्तिमश्च । उपलक्षणमेतत् । विभ्वा च । दैव्यो देवेभ्यो हितो विधाता प्रजापतिश्च । अपि च पर्जन्यावाता पर्जन्यश्च वायुश्चोभौ नोऽस्मभ्यमिषमन्नं पिप्यताम् । वर्धयताम् ॥

उत स्य देवः सविता भगो नोऽपां नपादवतु दानु पप्रिः ।
त्वष्टा देवेभिर्जनिभिः सजोषा द्यौर्देवेभिः पृथिवी समुद्रः ॥१३॥

उत । स्यः । देवः । सविता । भगः । नः । अपाम् । नपात् । अवतु । दानु । पप्रिः ।
त्वष्टा । देवेभिः । जनिऽभिः । सऽजोषाः । द्यौः । देवेभिः । पृथिवी । समुद्रः ॥१३॥

उतापि च स्य स यः प्रेरकतया सर्वत्र प्रख्यातः स सविता देवो भगश्चापां नपान्नापो मेघस्थानां पुत्रो माध्यमिकोऽग्निः स च नोऽस्मानवतु । रक्षतु । कीदृशोऽपां नपात् । दानु दातव्यं धनं पप्रिः पाता पूरयिता ॥ प्रा पूरण इत्यस्मादादृगमहन इति किनो लिड्वद्भावान्न लोकाव्ययेति षष्ठीप्रतिषेधः ॥ तथा देवेभिर्देवैर्जनिभिस्तत्पत्नीभिश्च सजोषाः सहप्रीतिस्त्वष्टा च देवेभिर्देवैः सह प्रीयमाणा द्यौश्च समुद्रः सह प्रीयमाणा पृथिवी चैताश्च सर्वा देवता अस्मानवतु ॥

आग्निमारुत उत नोऽहिरित्येषा । सूत्रितं च । उत नोऽहिर्बुध्न्यः शृणोतु देवानां पत्नीरुशतीरवन्तु नः । आ० ५ २०। इति ॥

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः ।
विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥१४॥

उत । नः । अहिः । बुध्न्यः । शृणोतु । अजः । एकऽपात् । पृथिवी । समुद्रः ।
विश्वे । देवाः । ऋतऽवृधः । हुवानाः । स्तुताः । मन्त्राः । कविऽशस्ताः । अवन्तु ॥१४॥

उतापि चाहिर्बुध्न्यो नोऽस्माकं स्तोत्रं शृणोतु । अजो जन्मरहितः । एकोऽसहाय एव पतति गच्छतीत्येकपात् । एतत्पदद्वयाभिधेयो देवश्च पृथिवी समुद्रश्चास्मदीयं स्तोत्रं शृणोतु । अपि च ऋतावृध ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितारो हुवाना अस्माभिराहूयमानाः पूर्वैरृषिभिश्च स्तोत्रैः स्तुता मन्त्रा मननीया गृह

भाषितव्या मंत्रप्रतिपाद्या वा कविशस्ताः कविभिर्मेधाविभिर्ऋषिभिः शस्त्रैः शंसिता ईदृशा विश्वे देवा अवंतु। अस्मान्रक्षंतु ॥

एवा नपातो मम तस्य धीभिर्भरद्वाजा अभ्यर्चंत्यर्कैः ।
ग्ना हुतासो वसवोऽधृष्टा विश्वे स्तुतासो भूता यजत्राः ॥१५॥

एव । नपातः । मम । तस्य । धीभिः । भरत्ऽवाजाः । अभि । अर्चंति । अर्कैः ।
ग्नाः । हुतासः । वसवः । अधृष्टाः । विश्वे । स्तुतासः । भूत । यजत्राः ॥१५॥

एवैवं योऽहं देवान् स्तुतवान् तस्य मम ऋजिश्वनो नपातः पुत्रा भरद्वाजा भरद्वाजगोत्रजाः सुहोत्रादयो धीभिः स्तोत्रैरर्कैरर्चनसाधनैरभ्यर्चंति। अभिष्टुवंति। हे यजत्रा यष्टव्या देवा हुतासः पुरोडाशादिभिर्हविर्भिर्हुतास्तर्पिता वसवो निवासयितारोऽधृष्टाः केनाप्यहिंसिता एवंभूता विश्वे ते सर्वे यूयं ग्ना देवपत्न्यश्च स्तुतासो भूत। तैः सुहोत्रादिभिः स्तुता भवत ॥ ॥१०॥

उदु त्यदिति षोडशर्चं द्वितीयं सूक्तमृजिश्वन आर्षं वैश्वदेवं। त्रयोदश्याद्यास्तिस्र उष्णिहः षोडश्यनुष्टुप् शिष्टास्त्रिष्टुभः। तथा चानुक्रांतं। उदु त्यत्षोळशा त्र्युष्णिगनुष्टुबंतमिति ॥ गतः सूक्तविनियोगः ॥

उदु त्यच्चक्षुर्महि मित्रयोराँ एति प्रियं वरुणयोरदब्धं ।
ऋतस्य शुचि दर्शतमनीकं रुक्मो न दिव उदिता व्यद्यौत् ॥१॥

उत् । ऊं इति । त्यत् । चक्षुः । महि । मित्रयोः । आ । एति । प्रियं । वरुणयोः । अदब्धं ।
ऋतस्य । शुचि । दर्शतं । अनीकं । रुक्मः । न । दिवः । उत्ऽइता । वि । अद्यौत् ॥१॥

त्यत्तत्प्रसिद्धं चक्षुः प्रकाशकं महि महद्विस्तृतं मित्रयोर्वरुणयोः प्रियं। मित्रशब्दो वरुणशब्दश्चेतरेतरयोर्गाम्मिश्रावरुणावुभावप्याचष्टे। मित्रावरुणयोः प्रियमदब्धं रक्षोभिरहिंसितं शुचि शुद्धं निर्मलं दर्शतं दर्शनीयं। एवंभूतमृतस्यादित्यस्यानीकं तेज आ सर्वेषामभिमुखमुदेति। उद्गच्छति। उदितोदिता सूर्यस्योदये सत्युदितं तत्तेजो दिवोंऽतरिक्षस्य रुक्मो न भूषणमिव व्यद्यौत्। विद्योतते। प्रकाशते ॥

वेद यस्त्रीणि विदथान्येषां देवानां जन्म सनुतरा च विप्रः ।
ऋजु मर्तेषु वृजिना च पश्यन्नभि चष्टे सूरो अर्य एवान् ॥२॥

वेद । यः । त्रीणि । विदथानि । एषां । देवानां । जन्म । सनुतः । आ । च । विप्रः ।
ऋजु । मर्तेषु । वृजिना । च । पश्यन् । अभि । चष्टे । सूरः । अर्यः । एवान् ॥२॥

यः सूर्यस्त्रीणि त्रिसंख्यानि विदथानि वेदितव्यानि स्थानानि त्रींल्लोकान्वेद वेत्ति जानाति। एषामेतल्लोकत्रयवर्तिनां देवानां वसुरुद्रादित्यात्मनां सनुतः। अंतर्हितनामैतत्। अंतर्हितमप्रज्ञायमानं जन्म जननं च यो विप्रो मेधावी सूर्यो वेत्ति। आकारः पूरकः। स सूरः सूर्यो मर्तेषु मनुष्येषु विद्यमानान्यृजून्यृजूनि शोभनानि कर्माणि वृजिना वृजिनान्यशोभनानि कर्माणि च पश्यन् साक्षितया जानन् अभि चष्टे। अभितः सर्वं जगत्प्रकाशयति। तथार्यः स्वामी भूत्वैवान् प्राप्तव्यान् कामांश्च मनुष्येषु प्रकाशयति ॥

स्तुष उ वो मह ऋतस्य गोपानदितिं मित्रं वरुणं सुजातान् ।
अर्यमणं भगमदब्धधीतीनच्छा वोचे सधन्यः पावकान् ॥३॥

स्तुषे । ऊं इति । वः । महः । ऋतस्य । गोपान । अदितिं । मित्रं । वरुणं । सुऽजातान ।
अर्यमणं । भगं । अदब्धऽधीतीन । अच्छं । वोचे । सऽधन्यः । पावकान ॥ ३ ॥

हे देवा महो महत ऋतस्य यज्ञस्य गोपान रक्षकान्वो युष्मान स्तुषे । स्तुवे । उ इति पूरणः । तानेव देवानाह । अदितिमदीना देवमातर मित्र वरुणं चैतान सुजातान शोभनजननानर्यमणं भग चादब्धधीती नहिंसितकर्मणः सधन्यो धनसहितान पावकान विश्वस्य शोधकान । ईदृशान सर्वान्देवानच्छ वोचे । अभिप्र वीमीत्यर्थः ॥

रिशादसः सत्पतीरदब्धान्महो राज्ञः सुवसनस्य दातॄन ।
यूनः सुक्षत्रान्क्षयतो दिवो नॄनादित्यान्याम्यदितिं दुवोयु ॥ ४ ॥
रिशादसः । सत्ऽपतीन । अदब्धान । महः । राज्ञः । सुऽवसनस्य । दातॄन ।
यूनः । सुऽक्षत्रान । क्षयतः । दिवः । नॄन । आदित्यान । यामि । अदितिं । दुवःऽयु ॥ ४ ॥

रिशादसो रिशतां हिंसकानाममितॄन चेप्तॄन यद्वा रिशानां हिंसकानामत्तॄन भक्षयितॄन सत्पतीन सतां पालयितॄनदब्धानहिंसितान्महो महतो राज्ञो राजमानानीश्वरान्वा सुवसनस्य शोभननिवासस्य दातॄन यूनो नित्यतरुणान सुक्षत्रान शोभनधनान शोभनबलान्वा क्षयतः सर्वत्र निवसतः । यद्वा । क्षयतिरैश्वर्यकर्मा । ईशानान दिवो द्युलोकस्य नॄन्नेतॄनादित्यानदितेः पुत्रान । ईदृशान सर्वान्देवान्दुवोयु ॥ सुप्तविभक्तिकमेतत ॥ दुवोयु दुवोऽस्मदीयं परिचरणं कामयमानामदितिं देवमातरं च यामि । प्राप्नोमि । यद्वा । यामि । याचामि ॥

द्यौ३ष्पितः पृथिवि मातरध्रुगग्ने भ्रातर्वसवो मृळता नः ।
विश्व आदित्या अदिते सजोषा अस्मभ्यं शर्म बहुलं वि यंत ॥ ५ ॥
द्यौः । पितरिति । पृथिवि । मातः । अध्रुक । अग्ने । भ्रातः । वसवः । मृळत । नः ।
विश्वे । आदित्याः । अदिते । सऽजोषाः । अस्मभ्यं । शर्म । बहुलं । वि । यंत ॥ ५ ॥

हे पितः पितृस्थानीय द्यौर्द्युलोक हे मातर्मातृस्थानीयेऽध्रुगद्रोग्धि पृथिवि हे भ्रातर्भ्रातृस्थानीयाग्ने हे वसवो वासयितारो देवास्ते सर्वे यूय नोऽस्मान्मृळत । सुखयत । हे विश्व आदित्याः सर्वेऽदितिपुत्रा देवा हे अदिते यूय सजोषाः संगता भूत्वास्मभ्यं बहुलमधिकं शर्म सुखं विस्तृत वा गृह वि यंत । प्रयच्छत ॥ ॥ ११ ॥

मा नो वृकाय वृक्ये समस्मा अघायते रीरधता यजत्राः ।
यूयं हि ष्ठा रथ्यो नस्तनूनां यूयं दक्षस्य वचसो बभूव ॥ ६ ॥
मा । नः । वृकाय । वृक्ये । समस्मै । अघऽयते । रीरधत । यजत्राः ।
यूयं । हि । स्थ । रथ्यः । नः । तनूनां । यूयं । दक्षस्य । वचसः । बभूव ॥ ६ ॥

हे यजत्रा यष्टव्या देवा नोऽस्मान्वृकाय हिंसकाय स्तेनाय वृक्ये तस्य स्त्रियै च मा रीरधत । मा वशं नेष्ट । मा वशीकुरुत । यद्वा । वृकोऽरण्यश्वा तस्य स्त्री वृकी । अपि च समस्मै सर्वस्मा अघायतेऽघमनर्थमस्माकमिच्छते शत्रुजनायास्मान्मा वशं नयत । यूय हि यूयं खलु नोऽस्माकं तनूनां शरीराणां रथ्यो नेतारः स्थ । भवथ । यूयमेव दक्षस्यास्मदीयस्य बलस्य वचसो वाक्यस्य च नेतारो बभूव । अतः कारणादस्मान्मा रीरधतेत्यन्वयः ॥

मा व एनो अन्यकृतं भुजेम मा तत्कर्म वसवो यच्चयध्वे ।
विश्वस्य हि क्षयथ विश्वदेवाः स्वयं रिपुस्तन्वं रीरिषीष्ट ॥७॥
मा । वः । एनः । अन्यऽकृतं । भुजेम । मा । तत् । कर्म । वसवः । यत् । चयध्वे ।
विश्वस्य । हि । क्षयथ । विश्वऽदेवाः । स्वयं । रिपुः । तन्वं । रिरिषीष्ट ॥७॥

हे देवा वो युष्माकं स्वभूता वयमन्यकृतमन्यैः शत्रुभिः कृतमुत्पादितमेनः पापं मा भुजेम । मा भुंक्ष्महि । हे वसवो वासयितारो देवा यद्येन कृतेन पापेन चयध्वे अस्मान्बाधध्वे ॥ चयतिर्हिंसाकर्मा ॥ तच्च पापं मा कर्म । मा कार्ष्म ॥ करोतेर्माङि लुङि मंत्रे घसेति च्लेर्लुक् ॥ हे विश्वदेवाः सर्वे देवा विश्वस्य सर्वस्य जगतो यूयं हि क्षयथ । ईश्वरा भवथ । अतः कारणादस्मदीयो रिपुः शत्रुस्तन्वं स्वशरीरं स्वयमेव रिरिषीष्ट । हिंस्यात् । यथैव भवति तथा कुरुतेति भावः ॥

नम इदुग्रं नम आ विवासे नमो दाधार पृथिवीमुत द्यां ।
नमो देवेभ्यो नम ईश एषां कृतं चिदेनो नमसा विवासे ॥८॥
नमः । इत् । उग्रं । नमः । आ । विवासे । नमः । दाधार । पृथिवीं । उत । द्यां ।
नमः । देवेभ्यः । नमः । ईशे । एषां । कृतं । चित् । एनः । नमसा । आ । विवासे ॥८॥

आस्तां तावद्देवानां माहात्म्यं तदीयो नमस्कारोऽपीत्थंमहाभाग इति ब्रुवाणः कर्मातिकन्यायेन देवान् स्तौति । नम इत् नमस्कार एवोग्रमुद्गूर्णबलं सर्वोत्कृष्टं । तेन हि सर्वं लभ्यते । अतो नमो नमस्कारमा विवासे । परिचरामि । नमो नमस्कार एव पृथिवीमुत द्यां द्युलोकं च दाधार । धारयति । द्यावापृथिव्यौ प्राणिभिर्नमस्क्रियमाणे सत्यौ तदुपभोगाय चिरकालमवतिष्ठेते । अतो देवेभ्य ईदृशं नमः करोमि । एषां देवानां नमो नमस्कार ईशे । ईष्टे । अतस्तेन ते वशीकृताः । कृतं चित्कृतमप्याचरितमप्येनः पापं नमसा नमस्कारेण विवासे । विवासो वर्जनं । वर्जयामि । विनाशयामि ॥

ऋतस्य वो रथ्यः पूतदक्षानृतस्य पस्त्यसदो अदब्धान् ।
ताँ आ नमोभिरुरुचक्षसो नॄन्विश्वान्व आ नमे महो यजत्राः ॥९॥
ऋतस्य । वः । रथ्यः । पूतऽदक्षान् । ऋतस्य । पस्त्यऽसदः । अदब्धान् ।
तान् । आ । नमःऽभिः । उरुऽचक्षसः । नॄन् । विश्वान् । वः । आ । नमे । महः । यजत्राः ॥९॥

हे यजत्रा यष्टव्या देवा वो युष्मदीयस्य ऋतस्य यज्ञस्य रथ्यो रंहितॄन्नेतॄन् पूतदक्षान् शुद्धबलानृतस्य यज्ञस्य पस्त्यसदो यज्ञसंवर्धिनि पस्त्ये देवयजनलक्षणे गृहे सीदतो निषण्णानदब्धानृचःप्रभृतिभिरहिंसितानुरुचक्षसो बहुद्रष्टॄन्नेतॄन्महो महतस्तान्विश्वान् सर्वान् वो युष्मानाभिमुख्येन क्रियमाणैर्नमोभिर्नमस्कारैरा नमे । आनतोऽस्मि ॥

ते हि श्रेष्ठवर्चसस्त उ नस्तिरो विश्वानि दुरिता नयंति ।
सुक्षत्रासो वरुणो मित्रो अग्निर्ऋतधीतयो वक्मराजसत्याः ॥१०॥
ते । हि । श्रेष्ठऽवर्चसः । ते । ऊं इति । नः । तिरः । विश्वानि । दुःऽइता । नयंति ।
सुऽक्षत्रासः । वरुणः । मित्रः । अग्निः । ऋतऽधीतयः । वक्मराजऽसत्याः ॥१०॥

ये देवा वक्ष्यमाणगुणास्ते हि ते खलु ऋतप्रवर्चसः प्रशस्यतमदीप्तयो भवंति। अतस्त उ त एव नोऽस्माकं विश्वानि सर्वाणि दुरिता पापानि तिरस्तिरोहितानि यथा भवंति तथा नयंति। नयंतु। विनाशयंत्वित्यर्थः। ये वरुणादयो देवाः सुक्षत्रासः शोभनबलाः शोभनधना वा ऋतधीतयः सत्यकर्माणो वरुणराजसत्या। वरुण वचनं स्तोत्रं। तस्य राजान ईशाना वरुणराजानः स्तोतारः। तेषु सत्या अवितथाः। एवभूता ते होत्यन्वयः॥ ॥१२॥

तें न इंद्रः पृथिवी क्षामं वर्धन्पूषा भगो अदितिः पंच जनाः।
सुशर्माणः स्ववसः सुनीथा भवंतु नः सुत्रात्रासः सुगोपाः ॥११॥
ते। नः। इंद्रः। पृथिवी। क्षामं। वर्धन। पूषा। भगः। अदितिः। पंच। जनाः।
सुऽशर्माणः। सुऽअवसः। सुऽनीथाः। भवंतु। नः। सुऽत्रात्रासः। सुऽगोपाः ॥११॥

ते देवा नोऽस्माकं क्षाम निवासभूमिं वर्धन। वर्धयतु। के ते। इंद्रः पृथिवी च पूषा च भगश्चादितिर दीना देवमाता च पंच जना देवमनुष्याणां गंधर्वाप्सरसा। ए॰ ब्रा॰ ३ ३१। इत्यादिब्राह्मणोक्ता देवमनुष्या दयश्च ते च नोऽस्मदर्थं सुशर्माणः सुसुखाः स्ववसः शोभनान्नाः सुनीथाः सुप्रापणाश्च भवतु। अस्मभ्यं शोभन सुखादिकं प्रयच्छत्विति भावः। तथा सुत्रात्रासः सुष्ठु त्रातारः सुगोपाः शोभनगोपायितारश्च भवतु। उपस्थितेभ्यः शत्रुभ्यो रक्षणं त्राणं। तेषामुत्पत्तिनिरोधेन रक्षणं गोपनं॥

नू सद्मानं दिव्यं नंशि देवा भारद्वाजः सुमतिं याति होता।
आसानेभिर्यजमानो मियेधैर्देवानां जन्म वसूयुर्ववंद ॥१२॥
नु। सद्मानं। दिव्यं। नंशि। देवाः। भारतऽवाजः। सुऽमतिं। याति। होता।
आसानेभिः। यजमानः। मियेधैः। देवानां। जन्म। वसुऽयुः। ववंद ॥१२॥

अनया ऋषिरात्मानं परोक्षवदाह। हे देवा भारद्वाजो भरद्वाजगोत्रजो होता स्तोतायमृषिर्दिव्यं दिवि भव सद्मानं सदनं स्थानं नु क्षिप्रं नंशि। व्याप्नोतु। तथा सुमतिं शोभनां मतिं युष्मदीयामनुग्रहबुद्धिं च याति। याचते। यातिर्याच्ञाकर्मा। तदर्थमासानेभिरासीनैः सत्रासन कुर्वद्भिर्मियेधैर्मेध्यैर्मेधार्हैरन्यैर्यजमानैः सार्धं यजमानो यागं कुर्वन्नयमृषिर्वसूयुर्वसूनि धनान्यात्मन इच्छन् देवानां जन्म जनं संघं ववंद। वंदते। स्तौति॥

दशरात्रस्य चतुर्थेऽहनि प्रउगशस्त्रेऽप त्यं वृजिनमित्येषा। वैश्वदेवस्तृचः। सूत्रितं च। अप त्यं वृजिनं रिपुमंविरमे नदीतम इत्यानुष्टुभं प्रउगं। आ॰ ७ ११। इति॥

अप त्यं वृजिनं रिपुं स्तेनमग्ने दुराध्यं। दविष्ठमस्य सत्पते कृधी सुगं ॥१३॥
अप। त्यं। वृजिनं। रिपुं। स्तेनं। अग्ने। दुःऽआध्यं। दविष्ठं। अस्य। सतऽपते।
कृधि। सुऽगं ॥१३॥

हे अग्ने त्वं त्यं तं प्रसिद्धं वृजिनं कुटिलं रिपुं पापकारिणं दुराध्यं दुःखस्याध्यातारं दुष्टाभिप्रायमेवभूतं स्तेनं हिंसकं दविष्ठं दूरतममपास्य। अपक्षिप॥ असु क्षेपण इति धातुः॥ हे सत्पते सतां पालयितरस्माकं सुगं शोभनेन गंतव्यं सुखं कृधि। कुरु। अत्र सर्वैर्देवात्मकस्याग्नेः स्तवनाद्विश्वदेवत्वं॥

ग्रावाणः सोम नो हि कं सखित्वनाय वावशुः।
जही न्यत्रिणं पणिं वृको हि षः ॥१४॥

ग्रावाणः । सोम । नः । हि । कं । सखिऽत्वनाय । वावशुः ।
जहि । नि । अत्रिणं । पणिं । वृकः । हि । सः ॥१४॥

हे सोम नोऽस्मदीया इमे ग्रावाणोऽभिषवार्थाः पाषाणास्तव सखित्वनाय सख्यार्थं वावशुः । कामयंते । कमिति पूरकः । हि यस्मादर्थे । यस्मादेवं तस्मात्त्वं पणिं वणिजमदातारमत्रिणमदनशीलं राक्षसादिकं नि जहि । विनाशय । स पणिर्वृको हि । आदानपरः खलु । सर्वदास्मत्तोऽपहरणशीलः । अतस्त्वं जहीत्यर्थः ॥ वृक वृक आदान इति धातुः ॥

यूयं हि ष्ठा सुदानव इंद्रज्येष्ठा अभिद्यवः । कर्ता नो अध्वन्ना सुगं गोपा अमा ॥१५॥
यूयं । हि । स्थ । सुऽदानवः । इंद्रऽज्येष्ठाः । अभिऽद्यवः । कर्त । नः । अध्वन् । आ ।
सुऽगं । गोपाः । अमा ॥१५॥

हे सुदानवः शोभनदाना देवा यूयं हि ष्ठ । यूयं खलु प्रभवथ । समृद्धाः स्थ । इंद्रज्येष्ठाः । इंद्रो ज्येष्ठो मुख्यो येषां ते । अभिद्यवोऽभिगतदीप्तयस्ते यूयमध्वन्नध्वनि मार्गे नोऽस्माकममा सहैव गोपा गोपायितारो रक्षितारः संतः सुगं सुखं । आकारः समुच्चये । सुखं च कर्त । कुरुत ॥

प्रवासादागमनेऽपि पंथामित्येषा यजमानेन जप्या । सूत्रितं च । अपि पंथामगन्महीति प्रत्येत्य समित्पाणिः । आ॰ २ ५. । इति ॥

अपि पंथामगन्महि स्वस्तिगामनेहसं ।
येन विश्वाः परि द्विषो वृणक्ति विंदते वसु ॥१६॥
अपि । पंथां । अगन्महि । स्वस्तिऽगां । अनेहसं ।
येन । विश्वाः । परि । द्विषः । वृणक्ति । विंदते । वसु ॥१६॥

पंथां पंथानं मार्गमप्यगन्महि । अपिगताः प्राप्ताः स्मः । कीदृशं । स्वस्तिगां सुखेन गंतव्यमनेहसं पापरहितं । येन पथा गच्छन् विश्वाः सर्वा द्विषो द्वेष्ट्रीः प्रजाः परि वृणक्ति परिवर्जयति बाधते वसु धनं च विंदते लभते तादृशं पंथानमित्यर्थः ॥ ॥१३॥

न तद्दिवेति सप्तदशर्चं तृतीयं सूक्तमृजिश्वन आर्षं वैश्वदेवं । आदितः षट् त्रिष्टुभः सप्तम्याद्याः षट् गायत्र्यस्त्रयोदशी त्रिष्टुप् चतुर्दशी जगती शिष्टास्तिस्रस्त्रिष्टुभः । तथा चानुक्रांतं । न तच्चूना सप्तम्याद्याः षड्गायत्र्यश्चतुर्दशी जगतीति ॥ गतो विनियोगः ॥

न तद्दिवा न पृथिव्यानु मन्ये न यज्ञेन नोत शमीभिराभिः ।
उब्जंतु तं सुभ्वः पर्वतासो नि हीयतामतियाजस्य यष्टा ॥१॥
न । तत् । दिवा । न । पृथिव्या । अनु । मन्ये । न । यज्ञेन । न । उत । शमीभिः । आभिः ।
उब्जंतु । तं । सुऽभ्वः । पर्वतासः । नि । हीयतां । अतिऽयाजस्य । यष्टा ॥१॥

अतियाजो नाम कश्चिदृषिरस्मादृजिश्वन उत्कृष्टः स्यामहमिति बुद्ध्या देवानयष्टुराम । ऋषिस्तदीयं यजनं निराचष्टानया ॥ न तदतियाजस्य ऋषेस्तद्यजनं दिवा द्युलोकेन तत्रत्येन देवगणेन युक्तमित्यहं नानु मन्ये । अनुमतिं न करोमि । न च पृथिव्या पार्थिवेनापि देवगणेन युक्तमिति नानु मन्ये । न च यज्ञेन मयानुष्ठितेन सदृशं तदित्यहं नानु मन्ये । उतापि चाभिः शमीभिरन्यैरपि मया कृतैरेभिः कर्मभिः सदृशमित्यपि

नानु मन्ये । मया वशीकृता देवास्तदीयं यजनं नांगीकुर्वंति स चानभिमतत्वात्तस्य यष्टुमपि न शक्नोतीति भावः । अपि च तमृषिं मुम्बः मुष्टु भवतः पर्वतासः पर्वता इंद्रेण प्रहिताः संत उब्जंतु । हिंसंतु ॥ उब्जिर्हिं साकर्मा ॥ तथा तस्यातियाजस्य ऋजिश्वनोऽप्यतिशयेनाहं देवान्यजामीति बुद्ध्या यज्ञस्य कर्तुर्यष्टा याजकः स नि हीयतां । नितरां हीनो भवतु ॥

अतिं वा यो मरुतो मन्यते नो ब्रह्म वा यः क्रियमाणं निनित्सात् ।
तपूंषि तस्मै वृजिनानि संतु ब्रह्मद्विषमभि तं शोचतु द्यौः ॥२॥
अतिं । वा । यः । मरुतः । मन्यते । नः । ब्रह्म । वा । यः । क्रियमाणं । निनित्सात् ।
तपूंषि । तस्मै । वृजिनानि । संतु । ब्रह्मऽद्विषं । अभि । तं । शोचतु । द्यौः ॥२॥

हे मरुतो यः पुरुषो नोऽस्मानति मन्यते अतीत्य स्वस्याधिक्यं मन्यते अस्मत्तोऽपि स्वयमधिक इति बुध्यते । अस्माभिः क्रियमाणं ब्रह्म स्तोत्रं वा यो निनित्सात् निंदितुमिच्छेत् तस्मै पुरुषाय तपूंषि तेजांसि वृजिनानि बाधकानि संतु । भवंतु । ब्रह्मद्विषं तं शत्रुं द्यौरादित्यश्चाभि शोचतु । अभितपतु । अभिदहतु ॥

किमंग त्वा ब्रह्मणः सोम गोपां किमंग त्वाहुरभिशस्तिपां नः ।
किमंग नः पश्यसि निद्यमानान्ब्रह्मद्विषे तपुषिं हेतिमस्य ॥३॥
किं । अंग । त्वा । ब्रह्मणः । सोम । गोपां । किं । अंग । त्वा । आहुः । अभिशस्तिऽपां । नः ।
किं । अंग । नः । पश्यसि । निद्यमानान् । ब्रह्मऽद्विषे । तपुषिं । हेतिं । अस्य ॥३॥

किमंगेति प्रसिद्धिद्योतकौ निपातौ । हे सोम त्वा त्वां खलु ब्रह्मणो मंत्रस्य कर्मणो वा ब्राह्मणजातेर्वा गोपां गोपायितारमाहुः । कथयंति पुराविदः । तथा नोऽस्माकमभिशस्तिपामभिशंसकेभ्यः पालयितारं त्वामेव खल्वाहुः । यद्वा । अंगेत्यभिमुखीकरणे । अंग हे सोम किंकारणं त्वा ब्रह्मणो गोपामाहुः । किंकारणं वा त्वामस्माकमभिशस्तिपामाहुः । निद्यमानान् परैर्दूष्यमाणान्नोऽस्मानंग हे सोम किंकारणं पश्यसि । त्वामेव सर्वे ब्रह्मणो रक्षकं शत्रुभ्यः पालकं च कथयंति अतोऽस्मान् परैर्निंद्यमानानुपेक्षितुं नोचितं तवानुचितं । अतो ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे तस्मै तपुषिं तापकं हेतिमायुधमस्य । क्षिप । प्रेरय ॥

अवंतु मामुषसो जायमाना अवंतु मा सिंधवः पिन्वमानाः ।
अवंतु मा पर्वतासो ध्रुवासोऽवंतु मा पितरो देवहूतौ ॥४॥
अवंतु । मां । उषसः । जायमानाः । अवंतु । मा । सिंधवः । पिन्वमानाः ।
अवंतु । मा । पर्वतासः । ध्रुवासः । अवंतु । मा । पितरः । देवऽहूतौ ॥४॥

जायमानाः प्रादुर्भवंत्य उषसो मामवंतु । रक्षंतु । तथा पिन्वमाना वर्धमानाः सिंधवः स्यंदनशीला नद्यश्च मा मामवंतु । तथा ध्रुवासो निश्चलाः पर्वतासः पर्वताश्च मा मामवंतु । तथा देवहूतौ । देवानां हूतिराह्वानमस्मिन्निति देवहूतिर्यागः । तत्र विद्यमानाः पितरः पितृदेवताश्च मामवंतु ॥

विश्वदानीं सुमनसः स्याम पश्येम नु सूर्यमुच्चरंतं ।
तथा करद्वसुपतिर्वसूनां देवाँ ओहानोऽवसागमिष्ठः ॥५॥

विश्वऽदानीं । सुऽमनसः । स्याम । पश्येम । नु । सूर्यं । उत्ऽचरंतं ।
तथा । करत । वसुऽपतिः । वसूनां । देवान् । ओहानः । अवसा । आऽगमिष्ठः ॥५॥

हे देवा विश्वदानी सर्वदा वयं सुमनसः स्याम । शोभनमनस्का भवेम । नुशब्दः समुच्चये । उच्चरंतमुद्यंतं सूर्यं सर्वदा पश्येम च । वसूनां वसुपतिरुत्कृष्टधनाधिपतिरग्निर्देवानवसास्मदीयेन हविषाह्वानो वहन् प्रापयन् आगमिष्ठ आगंतृतम एवंगुणविशिष्टः सन् तथा करत । अस्मान् तथाविधानुक्तप्रकारान्करोतु ॥ ॥१४॥

इंद्रो नेदिष्ठमवसागमिष्ठः सरस्वती सिंधुभिः पिन्वमाना ।
पर्जन्यो न ओषधीभिर्मयोभुरग्निः सुशंसः सुहवः पितेव ॥६॥
इंद्रः । नेदिष्ठं । अवसा । आऽगमिष्ठः । सरस्वती । सिंधुऽभिः । पिन्वमाना ।
पर्जन्यः । नः । ओषधीभिः । मयःऽभुः । अग्निः । सुऽशंसः । सुऽहवः । पिताऽइव ॥६॥

अयमिंद्रो नेदिष्ठमंतिकतमं यथा भवति तथावसा रक्षणेन सार्धमागमिष्ठ आगंतृतमोऽस्तु । सिंधुभिः स्यंदनैरुदकैः पिन्वमाना वर्धमाना नदीरूपा सरस्वती चागंतृतमा भवतु । ओषधीभिः सार्धं पर्जन्यश्च नोऽस्माकं मयोभुः सुखस्य भावयिता भवतु । अग्निश्च पितेव पुत्रस्य जनक इव सुशंसः सुखेन शंसनीयः सुहवः सुखेनाह्वातव्यश्च भवतु ॥

आग्रयणे वैश्वदेवस्य चरोर्विश्वे देवास आ गतेत्यनुवाक्या । सूत्रितं च । विश्वे देवास आ गत ये के च ज्मा महिनो अहिमायाः । आ० २. ९. । इति ॥

विश्वे देवास आ गत शृणुता म इमं हवं । एदं बर्हिर्नि षीदत ॥७॥
विश्वे । देवासः । आ । गत । शृणुत । मे । इमं । हवं । आ । इदं । बर्हिः । नि । सीदत ॥७॥

हे विश्वे देवासः सर्वे देवा आ गत । आगच्छत । आगत्य च मे मदीयमिमं हवमिदमाह्वानं शृणुत । श्रुत्वा चेदमास्तीर्णं बर्हिरा नि षीदत । आस्तीर्णे बर्हिषि निषण्णा भवत ॥

यो वो देवा घृतस्नुना हव्येन प्रतिभूषति । तं विश्व उप गच्छथ ॥८॥
यः । वः । देवाः । घृतऽस्नुना । हव्येन । प्रतिऽभूषति । तं । विश्वे । उप । गच्छथ ॥८॥

हे देवा वो युष्मान्यो जनो घृतस्नुना घृतप्रक्षरणेन हव्येन हविषा प्रतिभूषति परिचरति तं जनं विश्वे सर्वे यूयमुप गच्छथ । उपगता भवथ ॥

उप नः सूनवो गिरः शृण्वंत्वमृतस्य ये । सुमृळीका भवंतु नः ॥९॥
उप । नः । सूनवः । गिरः । शृण्वंतु । अमृतस्य । ये । सुऽमृळीकाः । भवंतु । नः ॥९॥

अमृतस्य मरणरहितस्य प्रजापतेर्ये सूनवः पुत्रास्ते देवा नोऽस्माकं गिरः स्तुतीरुप शृण्वंतु । नोऽस्माकं सुमृळीकाः सुष्ठु मृडयितारः सुखयितारश्च भवंतु ॥

विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषंतां युज्यं पयः ॥१०॥
विश्वे । देवाः । ऋतऽवृधः । ऋतुऽभिः । हवनऽश्रुतः । जुषंतां । युज्यं । पयः ॥१०॥

ऋतावृध ऋतस्य यज्ञस्य वर्धका ऋतुभिः कालविशेषैर्हवनश्रुतो हवनस्य स्तोत्रस्य श्रोतारस्तस्मिंस्तस्मिन्या-

गकाले स्तूयमाना ईदृशा विश्वे सर्वे देवा युज्यं योग्यं पय आमिक्षारूपं जुषंतां । सेवंतां । श्रूयते हि । तस्मै पयसि दध्यानयति सा वैश्वदेव्यामिक्षेति ॥ ॥१५॥

स्तोत्रमिंद्रो मरुद्गणस्त्वष्टृमान्मित्रो अर्यमा । इमा हव्या जुषंत नः ॥११॥

स्तोत्रं । इंद्रः । मरुत्ऽगणः । त्वष्टृऽमान् । मित्रः । अर्यमा । इमा । हव्या । जुषंत । नः ॥११॥

मरुद्गणो मरुतो गणभूताः परिजनभूता यस्य तादृश इंद्रस्त्वष्टृमान् त्वष्टृसहितो मित्रोऽर्यमा च नोऽस्माकं स्तोत्रमिमा हव्यमानि हवींषि च जुषत । सेवतां ॥

इमं नो अग्ने अध्वरं होतर्वयुनशो यज । चिकित्वान्दैव्यं जनं ॥१२॥

इमं । नः । अग्ने । अध्वरं । होतः । वयुनऽशः । यज । चिकित्वान् । दैव्यं । जनं ॥१२॥

हे होतर्देवानामाह्वातरग्ने दैव्य देवसंबंधिन जन संघ यजनीय चिकित्वान् जानंस्त्वं नोऽस्मदीयमिममध्वरं हिंसारहितं यज्ञं वयुनशो ज्ञानक्रमेण यथानुपूर्व्या देवा वृद्धिस्थाः तथा यज । यागं कुरु ॥

वैश्वदेवशस्त्रस्य विश्वे देवा इति याज्या । सूत्रितं च । आश्रुत्य त्विति शस्त्वा जपित्वा विश्वे देवाः शृणुतेमं हवं म इति याज्या । आ० ५ १८ । इति ॥ वैश्वदेवे पशावप्येषैव याज्या । सूत्रितं च । विश्वे देवाः शृणुतेमं हवं मे ये के च ज्मा महिनो अहिमायाः । आ० ३ ७ । इति ॥

विश्वे देवाः शृणुतेमं हवं मे ये अंतरिक्षे य उप द्यवि ष्ठ ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वं ॥१३॥

विश्वे । देवाः । शृणुत । इमं । हवं । मे । ये । अंतरिक्षे । ये । उप । द्यवि । स्थ ।
ये । अग्निऽजिह्वाः । उत । वा । यजत्राः । आऽसद्य । अस्मिन् । बर्हिषि । मादयध्वं ॥१३॥

हे विश्वे देवा मे मदीयमिमं हवमाह्वानं शृणुत । ये यूयमंतरिक्षे स्थ अंतरिक्षलोके वर्तमाना भवथ । ये चोप तत्समीपस्थे भूर्लोके भवथ । ये च द्यवि द्युलोके स्थ । ये चाग्निजिह्वाः । अग्निर्जिह्वास्थानीयो येषां । यद्वा । अग्नेर्जिह्वा । तया पोष्यमाणत्वादग्निजिह्वा इत्युच्यंते । उत वापि वा ये यजत्रा यजनीयाः ते सर्वे यूयमास्तीर्णेऽस्मिन्बर्हिष्यासद्योपविश्य मादयध्वं । सोमेनात्मानं तर्पयथ ॥

विश्वे देवा मम शृण्वंतु यज्ञिया उभे रोदसी अपां नपाच्च मन्म ।
मा वो वचांसि परिचक्ष्याणि वोचं सुम्नेष्विद्वो अंतमा मदेम ॥१४॥

विश्वे । देवाः । मम । शृण्वंतु । यज्ञियाः । उभे इति । रोदसी इति । अपां । नपात् । च । मन्म ।
मा । वः । वचांसि । परिऽचक्ष्याणि । वोचं । सुम्नेषु । इत् । वः । अंतमाः । मदेम ॥१४॥

यज्ञिया यज्ञार्हा विश्वे देवा मम मदीयं मन्म मननीयं स्तोत्रं शृण्वंतु । निशम्यावधारयंतु । तथोभे रोदसी द्यावापृथिव्यावपां नपात् मध्यमस्थानोऽग्निश्चास्मदीयं स्तोत्रं शृण्वतु । अथ प्रत्यक्षकृतः । हे देवा वो युष्मभ्यं परिचक्ष्याणि वर्जनीयानि वचांसि स्तोत्राणि मा वोचं । मा ब्रवीमि । अपि तु समीचीनानि । अतो वो युष्माकमंतमा अंतिकतमाः संतो वयं सुम्नेष्वित् युष्माभिर्दत्तेषु सुखेष्वेव वर्तमानाः मदेम । मोदेम ॥

आग्रयणे वैश्वदेवस्य ये के च ज्मेति याज्या । सूत्रितं च । विश्वे देवास आ गत ये के च ज्मा महिनो अहिमायाः । आ० २ ९ । इति ॥ वैश्वदेवपुरोडाशस्यैषैव याज्या । सूत्रमुदाहृतं ॥

ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे ।
ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यंतु देवाः ॥१५॥
ये । के । च । ज्मा । महिनः । अहिऽमायाः । दिवः । जज्ञिरे । अपां । सधऽस्थे ।
ते । अस्मभ्यं । इषये । विश्वं । आयुः । क्षपः । उस्राः । वरिवस्यंतु । देवाः ॥१५॥

महिनो महांतोऽहिमायाः । माया प्रज्ञानाम । आहंतप्रज्ञाः । एवंभूता ये के चन देवा ज्मा । पृथिवीनामैतत । ज्मायां पृथिव्यां जज्ञिरे प्रादुर्बभूवुः । ये के चन दिवो द्युलोकाज्जज्ञिरे । ये के चनापां सधस्थे महांतरिक्षे जज्ञिरे ते सर्वे देवा अस्मभ्यमिषये । इष्यत इतीषिः पुत्रादिः । तस्मै च विश्वं सर्वमायुरन्नं जीवनं वा क्षपः सर्वा रात्रीरुस्राः सर्वाण्यहानि च सर्वदा नैरंतर्येण वरिवस्यतु । प्रयच्छतु ॥

अग्नीपर्जन्याववतं धियं मेऽस्मिन्हवे सुहवा सुष्टुतिं नः ।
इळामन्यो जनयद्गर्भमन्यः प्रजावतीरिष आ धत्तमस्मे ॥१६॥
अग्नीपर्जन्यौ । अवतं । धियं । मे । अस्मिन । हवे । सुऽहवा । सुऽस्तुतिं । नः ।
इळां । अन्यः । जनयत् । गर्भं । अन्यः । प्रजाऽवतीः । इषः । आ । धत्तं । अस्मे इति ॥१६॥

हे अग्नीपर्जन्यौ मे मदीयं धियं कर्म यज्ञलक्षणमवतं । गच्छतं रक्षतं वा । हे सुहवा सुखेन ह्वातुं शक्याव स्मिन्हवे यज्ञे नोऽस्मदीयां सुष्टुतिं शोभनां स्तुतिं च रक्षतं । यद्वा । अनुवृत्तोऽवतिः श्रवणार्थः । अवतं । शृणुतं । युवयोर्मध्येऽन्यः पर्जन्य इळामन्नं जनयत । जनयति । वृष्ट्या ह्योषधिवनस्पतयो जायंते तेभ्यश्चान्नं जायते । अन्योऽग्निर्गर्भं जनयति । पुरुषेण भुक्तमन्नं जाठरेणाग्निना पक्वं सत रेतोरूपेण परिणमते तदेव योषित्सु गर्भो भवति । अतो युवां प्रजावतीः प्रजाभिर्युक्ता इषोऽन्नान्यस्मे अस्मास्वा धत्तं । अवस्थापयतं ॥

स्तीर्णे बर्हिषि समिधाने अग्नौ सूक्तेन महा नमसा विवासे ।
अस्मिन्नो अद्य विदथे यजत्रा विश्वे देवा हविषि मादयध्वं ॥१७॥
स्तीर्णे । बर्हिषि । संऽइधाने । अग्नौ । सुऽउक्तेन । महा । नमसा । आ । विवासे ।
अस्मिन । नः । अद्य । विदथे । यजत्राः । विश्वे । देवाः । हविषि । मादयध्वं ॥१७॥

हे विश्वे देवा बर्हिषि दर्भपुंजे वेद्यां स्तीर्णे सत्यग्नौ च समिधाने समिद्धे सत्यनेन सूक्तेन स्तोत्रेण च महा महता नमसा नमस्कारेण चा विवासे । पर्यचरं । हे यजत्रा यजनीया विश्वे देवा अद्यास्मिन्दिने नोऽस्मदीयेऽस्मिन्विदथे यज्ञे हविषि ॥ तृतीयार्थे सप्तमी ॥ हविषास्माभिर्दत्तेन मादयध्वं । तृप्यध्वं ॥ ॥१६॥

वयमु त्वेति दशर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं पौष्णं । यां पूषन्नित्यनुष्टुप् शिष्टा गायत्र्यः । तथा चानुक्रांतं । वय दश पौष्णं तन्गायत्रं वै यां पूषन्ननुष्टुबंति ॥ अर्थार्थिभिः प्रवसद्भिरेतज्जप्यं । सूत्रितं च । वयमु त्वा पथस्पत इत्यर्थचर्या चरिष्यन् । आ० गृ० ३. ७ ८. । इति । जपेदिति शेषः ॥

वयमु त्वा पथस्पते रथं न वाजसातये । धिये पूषन्नयुज्महि ॥१॥
वयं । ऊं इति । त्वा । पथः । पते । रथं । न । वाजऽसातये । धिये । पूषन । अयुज्महि ॥१॥

हे पथस्पते मार्गस्य पालयितः पूषन् धिये कर्मार्थं वाजसातयेऽन्नस्य लाभाय च वयं रथं न युद्धे रथमिव त्वा त्वामयुज्महि । युज्महि । अस्मदभिमुखं कुर्मः । उ इति पूरकः ॥

अभि नो नर्यं वसु वीरं प्रयतदक्षिणं। वामं गृहपतिं नय ॥२॥

अभि। नः। नर्यं। वसु। वीरं। प्रयतऽदक्षिणं। वामं। गृहऽपतिं। नय ॥२॥

हे पूषन् नर्यं नृभ्यो हितं वसु धनमभि प्रापय वीरं दारिद्र्यस्य विशेषेणेरयितारं गमयितारं प्रयतदक्षिणं पूर्वमन्येभ्योऽपि दत्तधनं। यद्वा। प्रयतं शुद्धं दक्षिणं धनं यस्य तादृशं। वामं वननीयमेवंविधं गृहपतिं गृहस्य नोऽस्मान्नय। प्रापय ॥

अदित्संतं चिदाघृणे पूषन्दानाय चोदय। पणेश्चिद्वि म्रदा मनः ॥३॥

अदित्संतं। चित्। आघृणे। पूषन्। दानाय। चोदय। पणेः। चित्। वि। म्रद। मनः ॥३॥

हे आघृणे आगतदीप्ते पूषन् अदित्संतं चित् दातुमनिच्छंतमपि पुरुषं दानायास्मद्दानार्थं चोदय। प्रेरय। पणेश्चिद्वणिजोऽपि वार्धुषिकस्य लुब्धस्यापि मनो हृदयं वि म्रद। दानार्थं मृदू कुरु ॥

वि पथो वाजसातये चिनुहि वि मृधो जहि। साधंतामुग्र नो धियः ॥४॥

वि। पथः। वाजऽसातये। चिनुहि। वि। मृधः। जहि। साधंतां। उग्र। नः। धियः ॥४॥

हे उग्रोद्गूर्णबल पूषन् पथो मार्गान् वाजसातयेऽन्नलाभाय वि चिनुहि। शोधितान्कुरु। यैः पथिभिर्गता धनं लभेमहि तादृशान्पथः पृथक्कुर्वित्यर्थः। मृधो बाधकान् तस्करादींश्च वि जहि। बाधस्व। तथा नोऽस्माकं धियः कर्माण्यन्नलाभार्थं क्रियमाणानि साधंतां। सिध्यंतु। सफलानि भवंतु ॥

परि तृंधि पणीनामारया हृदया कवे। अथेमस्मभ्यं रंधय ॥५॥

परि। तृंधि। पणीनां। आरया। हृदया। कवे। अथ। ईं। अस्मभ्यं। रंधय ॥५॥

हे कवे प्राज्ञ पूषन् पणीनां वणिजां लुब्धानां हृदया हृदयानि कठिनान्यारया। सूक्ष्मलोहाग्रो दंडः प्रतोदः स्त्वारेति चाख्यायते। तया परि तृंधि। परिविध्य। तद्गत काठिन्यमपनयेत्यर्थः। अथानंतरमीमेनान्पणीनस्मभ्यं रंधय। वशीकुरु ॥ ॥१२॥

वि पूषन्नारया तुद पणेरिच्छ हृदि प्रियं। अथेमस्मभ्यं रंधय ॥६॥

वि। पूषन्। आरया। तुद। पणेः। इच्छ। हृदि। प्रियं। अथ। ईं। अस्मभ्यं। रंधय ॥६॥

हे पूषन् आरया प्रतोदेन पणेर्वणिजो हृदयं वि तुद। विविध्य। तस्य पणेर्हृदि हृदये प्रियमस्मभ्यमनुकूलं धनमिच्छ। दातव्यमितीच्छां जनय। अथानंतरमस्मभ्यमीमेनान्रंधय। वशीकुरु ॥

आ रिख किकिरा कृणु पणीनां हृदया कवे। अथेमस्मभ्यं रंधय ॥७॥

आ। रिख। किकिरा। कृणु। पणीनां। हृदया। कवे। अथ। ईं। अस्मभ्यं। रंधय ॥७॥

हे कवे प्राज्ञ पूषन् पणीनां वणिजां हृदया हृदयान्या रिख। आलिख। आलिख्य च किकिरा कीर्णानि प्रशिथिलानि कृणु। कुरु। मृदूनि कुर्वित्यर्थः। अन्यद्गतं ॥

यां पूषन्ब्रह्मचोदनीमारां बिभर्ष्याघृणे।
तया समस्य हृदयमा रिख किकिरा कृणु ॥८॥

यां। पूषन्। ब्रह्मऽचोदनीं। आरां। बिभर्षि। आघृणे।
तया। समस्य। हृदयं। आ। रिख। किकिरा। कृणु ॥८॥

हे आघृण आगतदीप्ते पूषन् ब्रह्मचोदनीं ब्रह्मणोऽन्नस्य प्रेरयित्रीं यामारां बिभर्षि हस्ते धारयसि तया समस्य सर्वस्य लुब्धजनस्य हृदयमा रिख । आलिख । किकिरा किकिराणि कीर्णानि प्रशिथिलानि च कृणु । कुरु ॥

या ते अष्ट्रा गोओपशाघृणे पशुसाधनी । तस्यास्ते सुम्नमीमहे ॥९॥

या । ते । अष्ट्रा । गोऽओपशा । आघृणे । पशुऽसाधनी । तस्याः । ते । सुम्नं । ईमहे ॥९॥

हे आघृण आगतदीप्ते पूषन् ते त्वदीया याष्ट्रारा गोओपशा । उपशेरत इत्योपशाः । गाव ओपशा यस्यास्तादृशी । अत एव पशुसाधनी पशूनां साधयित्री भवति ते त्वदीयायास्तस्याः संबंधि सुम्नं सुखमीमहे । याचामहे ॥

उत नो गोषणिं धियमश्वसां वाजसामुत । नृवत्कृणुहि वीतये ॥१०॥

उत । नः । गोऽसनिं । धियं । अश्वऽसां । वाजऽसां । उत । नृऽवत् । कृणुहि । वीतये ॥१०॥

उतापि च हे पूषन् गोषणिं गवां सनित्रीमश्वसामश्वानां सनित्रीं वाजसां वाजानामन्नानां सनित्रीमुतापि च नृवत नृवतीं यद्वा नृणां वनित्री दात्रीमेवभूतां धियं बुद्धिं कर्म वा नोऽस्माकं वीतये खादनायोपभोगार्थं कृणुहि । कुरु ॥ ॥१८॥

सं पूषन्निति दशर्चं पंचमं सूक्तं भरद्वाजस्यार्षं पौष्णं गायत्रं । सं पूषन्नित्यनुक्रांतं ॥ नष्टधनमन्विच्छता पूर्वपंक्तिजप्यं । सूत्रितं च । सं पूषन्विदुषेति नष्टमधिजिगमिषन्मूळ्हो वा । आ० गृ० ३. ७. ९. । इति ॥

सं पूषन्विदुषा नय यो अंजसानुशासति । य एवेदमिति ब्रवत् ॥१॥

सं । पूषन् । विदुषा । नय । यः । अंजसा । अनुऽशासति । यः । एव । इदं । इति । ब्रवत् ॥१॥

हे पूषन् पोषक देव विदुषा जानता तेन जनेन सं नय अस्मान् संगमय यो विद्वानंजसा ऋजुमार्गेणानुशासति अनुशास्ति नष्टद्रव्यप्राप्त्युपायमुपदिशति । यश्चैवमिदं नष्टं भवदीयं धनमिति ब्रवत् ब्रवीति । नष्टं धनं दर्शयतीत्यर्थः । तेन विदुषेत्यन्वयः ॥

सम् पूषणा गमेमहि यो गृहाँ अभिशासति । इम एवेति च ब्रवत् ॥२॥

सं । ऊं इति । पूषणा । गमेमहि । यः । गृहान् । अभिऽशासति । इमे । एव । इति ।
च । ब्रवत् ॥२॥

पूष्णानुगृहीताः वयं सं गमेमहि तेन जनेन संगच्छेमहि यो जनो गृहान् येषु गृहेष्वस्मदीया नष्टाः पशवस्तिष्ठंति तान् गृहानभिशासति अभिशास्ति आभिमुख्येन बोधयति । यश्चेमे त्वदीया नष्टाः पशव एवैवं तिष्ठंतीति च ब्रवत् ब्रूयात् ॥

पूष्णश्चक्रं न रिष्यति न कोशोऽव पद्यते । नो अस्य व्यथते पविः ॥३॥

पूष्णः । चक्रं । न । रिष्यति । न । कोशः । अव । पद्यते । नो इति । अस्य । व्यथते । पविः ॥३॥

पूष्णः पोषकस्य देवस्य चक्रमायुधं न रिष्यति । न विनश्यति । अस्य चक्रस्य कोशश्च नाव पद्यते । न हीयते । अस्य पविर्धारा च नो नैव व्यथते । कुंठीभवति । तेन चक्रेण चोरान्हत्वास्मदीयं धनं प्रकाशयेति भावः ॥

यो अस्मै हविषाविधन्न तं पूषापि मृष्यते । प्रथमो विंदते वसु ॥४॥

यः । अस्मै । हविषा । अविधत् । न । तं । पूषा । अपि । मृष्यते । प्रथमः । विंदते । वसु ॥४॥

यो यजमानोऽस्मै पूष्णे हविषा चरुपुरोडाशादिनाविधत परिचरति तं यजमानं पूषा नापि मृष्यते । अपिशब्द ईषदर्थे । ईषदपि न हिनस्ति । स च प्रथमो मुख्यः सन् वसु धनं विंदते । लभते ॥

पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजं सनोतु नः ॥५॥

पूषा । गाः । अनु । एतु । नः । पूषा । रक्षतु । अर्वतः । पूषा । वाजं । सनोतु । नः ॥५॥

पूषा पोषको देवो नोऽस्मदीया गा अन्वेतु । रक्षणार्थमनुगच्छतु । स च पूषार्वतोऽश्वान्रक्षतु चोरेभ्यः । तथा वाजमन्नं च नोऽस्मभ्यं पूषा सनोतु । प्रयच्छतु ॥ ॥१९॥

पूषन्ननु प्र गा इहि यजमानस्य सुन्वतः । अस्माकं स्तुवतामुत ॥६॥

पूषन् । अनु । प्र । गाः । इहि । यजमानस्य । सुन्वतः । अस्माकं । स्तुवतां । उत ॥६॥

हे पूषन् सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य गाः पशूननु प्रेहि । रक्षणार्थमनुगच्छ । उतापि च स्तुवतां त्वद्विषयं स्तोत्रं कुर्वतामस्माकं गाश्चानुगच्छ ॥

माकिर्नेशन्माकीं रिषन्माकीं सं शारि केवटे । अथारिष्टाभिरा गहि ॥७॥

माकिः । नेशत् । माकीं । रिषत् । माकीं । सं । शारि । केवटे । अथ । अरिष्टाभिः ।
आ । गहि ॥७॥

हे पूषन् अस्मदीयं गोधनं माकिर्नेशत् । मा नश्यतु । माकिर्माकीमित्येतौ प्रतिषेधमात्रे वर्तेते । माकीं रिषत् । मा व्याघ्रादिभिर्हिंस्यतां । माकीं मा च केवटे कूपे सं शारि । संशीर्णं भूत् । कूपपातेनापि हिंसितं मा भवतु । अथैवं सत्यरिष्टाभिरहिंसिताभिर्गोभिः सहा गहि । सायंकाल आगच्छ ॥

शृण्वंतं पूषणं वयमिर्यमनष्टवेदसं । ईशानं राय ईमहे ॥८॥

शृण्वंतं । पूषणं । वयं । इर्यं । अनष्टऽवेदसं । ईशानं । रायः । ईमहे ॥८॥

अस्मत्स्तोत्राणि शृण्वंतमिर्यं दारिद्र्यस्य प्रेरकमनष्टवेदसमविनष्टधनमीशानं सर्वस्येश्वरमेवंविधं पूषणं देवं वयं रायो धनानीमहे । याचामहे ॥

चातुर्मास्येषु वैश्वदेवे पर्वणि पौष्णस्य हविषः पूषन्तव व्रत इत्येषानुवाक्या । सूत्रितं च । वाममद्य सवितर्वाममु श्वः पूषन्तव व्रते वयं । आ० २ १६ । इति ॥

पूषन्तव व्रते वयं न रिष्येम कदा चन । स्तोतारस्त इह स्मसि ॥९॥

पूषन् । तव । व्रते । वयं । न । रिष्येम । कदा । चन । स्तोतारः । ते । इह । स्मसि ॥९॥

हे पूषन् पोषक तव त्वदीये व्रते कर्मणि वर्तमाना वयं कदा चन कदाचिदपि न रिष्येम । हिंसिता न भवेम । तादृशाश्च वयमिहास्मिन्कर्मणि ते तव स्तोतारः स्मसि । स्मः । भवामः ॥

परि पूषा परस्ताद्धस्तं दधातु दक्षिणं । पुनर्नो नष्टमाजतु ॥१०॥

परि । पूषा । परस्तात् । हस्तं । दधातु । दक्षिणं । पुनः । नः । नष्टं । आ । अजतु ॥१०॥

पूषा पोषको देवः परस्तात्परस्मिन्देशे मुसंचारादन्यस्मिन् चोरव्याघ्रादिभिरुपेते देशे गच्छतो गोधनस्य निवारणाय स्वकीयं दक्षिणं हस्तं परि दधातु। परिधानं निवारकं करोतु। नोऽस्मदीयं नष्टं च गोधनं पुनराजतु। आगच्छतु। आगमयतु॥ ॥२०॥

एहि वामिति षडृचं षष्ठं सूक्तं भरद्वाजस्यार्षं गायत्रं पौष्णं। अनुक्रम्यते च। एहि वां षडिति॥ गतो विनियोगः॥

एहि वां विमुचो नपादाघृणे सं सचावहै। रथीर्ऋतस्य नो भव॥१॥

आ। इहि। वां। विऽमुचः। नपात्। आघृणे। सं। सचावहै। रथीः। ऋतस्य। नः। भव॥१॥

हे विमुचो नपात्। विमुंचति सृष्टिकाले स्वमकाशात्सर्वाः प्रजा विसृजतीति विमुक् प्रजापतिः। तस्य पुत्राघृण आगतदीप्ते पूषन् वां। वाति गच्छति स्तुतिं प्राप्नोतीति वा स्तोता॥ वा गतिगंधनयोरित्यस्मादातो मनिन्निति विच्॥ वा गंतारं स्तोतारं मामेहि। आगच्छ। आवां च सं सचावहै। समयाव। संगच्छावहै। तादृशस्त्वं नोऽस्माकमृतस्य यज्ञस्य रथी रंहिता नेता भव। तथा सति तत्रत्यं हविस्त्वयापि लभ्यत इत्यर्थः॥

रथीतमं कपर्दिनमीशानं राधसो महः। रायः सखायमीमहे॥२॥

रथिऽतमं। कपर्दिनं। ईशानं। राधसः। महः। रायः। सखायं। ईमहे॥२॥

रथीतममतिशयेन रथिनं। यद्वा। अतिशयेन रंहितारं नेतारं कपर्दिनं। कपर्दश्चूडा। तद्वंतं। राध्नोत्यनेनेति राधो धनं। महो महतो राधसो धनस्येशानं स्वामिनं सखायमस्माकं मित्रमेवंविधं पूषणं रायो धनानीमहे। याचामहे॥

रायो धारास्याघृणे वसो राशिरजाश्व। धीवतोधीवतः सखा॥३॥

रायः। धारा। असि। आघृणे। वसोः। राशिः। अजऽअश्व। धीवतःऽधीवतः। सखा॥३॥

हे आघृण आगतदीप्ते पूषन् रायो धनस्य धारासि। प्रवाहो भवसि। स्तोतृभ्यो बहु धनं नैरंतर्येण प्रयच्छसीत्यर्थः। अजाश्व। अजाश्छागा एवाश्वा अश्वकार्यापन्ना यस्य तादृश पूषन् वसोर्वसुनो धनस्य राशिः संघश्च भवसि। धनसंघश्च त्वय्येव निवसतीत्यर्थः। धीवतो धीवतः सर्वस्य स्तोत्रवतः पुरुषस्य सखा मित्रभूतश्च भवसि॥

पूषणं न्व१जाश्वमुप स्तोषाम वाजिनं। स्वसुर्यो जार उच्यते॥४॥

पूषणं। नु। अजऽअश्वं। उप। स्तोषाम। वाजिनं। स्वसुः। यः। जारः। उच्यते॥४॥

अजाश्वं छागवाहनं वाजिनमन्नवंतं बलवंतं वा पूषणं पोषकं देवं नु अद्योप स्तोषाम। उपस्तवाम। यः पूषा स्वसुरुषसो जार उपपतिरित्युच्यते तं पूषणमित्यन्वयः॥

मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः। भ्रातेंद्रस्य सखा मम॥५॥

मातुः। दिधिषुं। अब्रवं। स्वसुः। जारः। शृणोतु। नः। भ्राता। इंद्रस्य। सखा। मम॥५॥

मातुर्निर्मात्र्या रात्रेर्दिधिषुं पतिं पूषणमब्रवं। स्तौमि। स्वसुरुषसो जारश्च पूषा नोऽस्माकं स्तोत्राणि शृणोतु। इंद्रस्य भ्राता सहजातः पूषा मम स्तोतुः सखा मित्रभूतोऽस्तु॥

आजासः पूषणं रथे निशृंभास्ते जनश्रियं। देवं वहंतु बिभ्रतः॥६॥

आ। अजासः। पूषणं। रथे। निऽशृंभाः। ते। जनऽश्रियं। देवं। वहंतु। बिभ्रतः॥६॥

अजासोऽजाश्छागा शिशुभा निश्रथ्य संबध्य हर्तारस्ते पूष्णो वाहनतया प्रसिद्धाश्छागा जनश्रिय। जन स्तोतृसंघ श्रयति गच्छतीति जनश्रीः। त पूषणं देव रथं बिभ्रतो धारयत आ वहतु। आनयंतु ॥ ॥२१॥

य एनमिति षड्च सप्तमं सूक्तं भरद्वाजस्यार्षं पौष्णं। अत्यानुष्टुबादौ पंच गायत्र्यः। तथा चानुक्रांतं। य एनमंत्यानुष्टुबिति ॥ गतो विनियोगः ॥

य एनमादिदेशति करंभादिति पूषणं। न तेन देव आदिशे ॥१॥

यः। एनं। आऽदिदेशति। करंभऽअत्। इति। पूषणं। न। तेन। देवः। आऽदिशे ॥१॥

यः स्तोतेनं पूषणं पोषकं करंभात्करंभाणां घृतमिश्राणां यवसक्तूनामत्तेत्यादिदेशति अभिष्टौति तेन पूषणान्यो देवो नादिशे। आदेष्टव्यः स्तोतव्यो न भवति। पूषा एव सर्वस्याभिमतस्य धनस्य लाभात देवतांतरं न स्तौतीत्यर्थः ॥

उत घा स रथीतमः सख्या सत्पतिर्युजा। इंद्रो वृत्राणि जिघ्नते ॥२॥

उत। घ। सः। रथिऽतमः। सख्या। सतऽपतिः। युजा। इंद्रः। वृत्राणि। जिघ्नते ॥२॥

उत घापि च स यः शत्रूणां हंतृत्वेन प्रसिद्धस्तादृशो रथीतमोऽतिशयेन रथी महारथः सत्पतिः सतां पालयितैवंगुण इंद्रः सख्या मित्रभूतेन पूष्णा युजा सहायभूतेन युक्तः सन वृत्राणि शत्रून जिघ्नते। हंति। इंद्रस्याप्ययमेव साहाय्यकारीत्यर्थः ॥

उतादः परुषे गवि सूरश्चक्रं हिरण्ययं। न्यैरयद्रथीतमः ॥३॥

उत। अदः। परुषे। गवि। सूरः। चक्रं। हिरण्ययं। नि। ऐरयत। रथिऽतमः ॥३॥

उतापि च सूरः प्रेरको रथीतमोऽतिशयेन रथी नेतृतमो वा पूषा परुषे परुष्मति पर्ववति भास्वति वा गवि। गच्छतीति गौरादित्यः। तस्मिन हिरण्यये हिरण्मये सुवर्णनिर्मितमदस्तद्रथस्य चक्रं न्यैरयत। नितरां प्रेरयति स्म ॥

यदद्य त्वा पुरुष्टुत ब्रवाम दस्र मंतुमः। तत्सु नो मन्म साधय ॥४॥

यत्। अद्य। त्वा। पुरुऽस्तुत। ब्रवाम। दस्र। मंतुऽमः। तत्। सु। नः। मन्म। साधय ॥४॥

हे पुरुष्टुत बहुभिर्यजमानैः स्तुत दस्र दर्शनीय मंतुमो ज्ञानवन पूषन अद्येदानीं यद्वहिरण्यं त्वा त्वां ब्रवाम स्तवाम नोऽस्माकं मन्म मननीयं तद्धनं सु साधय। उत्पादय ॥

इमं च नो गवेषणं सातये सीषधो गणं। आरात्पूषन्नसि श्रुतः ॥५॥

इमं। च। नः। गोऽएषणं। सातये। सीसधः। गणं। आरात्। पूषन्। असि। श्रुतः ॥५॥

हे पूषन नोऽस्माकं सातये लाभायेमं च गणं मनुष्यसंघं गवेषणं गवामेषयितारं सीषधः। साधय। हे पूषन आरात दूरदेशेऽपि त्वं श्रुतो विश्रुतः प्रख्यातोऽसि। भवसि ॥

आ ते स्वस्तिमीमह आरेअघामुपावसुं। अद्या च सर्वतातये श्वश्च सर्वतातये ॥६॥

आ। ते। स्वस्तिं। ईमहे। आरेऽअघां। उपऽवसुं। अद्य। च। सर्वऽतातये।
श्वः। च। सर्वऽतातये ॥६॥

हे पूषन् ते त्वदीयां त्वया देयां स्वस्ति कल्याणीं रक्षामारिअघां। आरे दूरे ऽघं पापं यस्यास्तादृशीं। उपावसुमुपगतधनां। ईदृशीं स्वस्तिमद्य चास्मिंश्च काले सर्वतातये। सर्वैर्ऋत्विग्भिस्तायत इति सर्वतातिर्यज्ञः। तदर्थं। यद्वा। सर्वेषां भोगानां विस्ताराय। श्वश्च परस्मिन्नपि दिने सर्वतातये सर्वदा सर्वतात्यर्थमीमहे। अभियाचामहे॥ ॥२२॥

इंद्रा नु पूषणेति षड्टचमष्टमं सूक्तं भरद्वाजस्यार्षं गायत्रमैंद्रापौष्णं। अनुक्रांतं च। इंद्रा न्विंद्रं चेति॥ गतो विनियोगः॥

इंद्रा नु पूषणा वयं सख्याय स्वस्तये। हुवेम वाजसातये ॥१॥
इंद्रा। नु। पूषणा। वयं। सख्याय। स्वस्तये। हुवेम। वाजऽसातये ॥१॥

इतरेतरयोगादिंद्रपूषन्शब्दयोरुभयत्र द्विवचनं। इंद्रापूषणा देवौ नु अद्य च वयं स्वस्तये सख्याय शोभनाय सखित्वाय वाजसातये वाजस्यान्नस्य बलस्य वा सातये संभजनाय च हुवेम। आह्वयाम। स्तवाम॥

सोममन्य उपासदत्पातवे चम्वोः सुतं। करंभमन्य इच्छति ॥२॥
सोमं। अन्यः। उप। असदत्। पातवे। चम्वोः। सुतं। करंभं। अन्यः। इच्छति ॥२॥

चम्वोरभिषवणफलकयोः सुतमभिषुतं सोममन्योऽनयोरेकतर इंद्रः पातवे पातुमुपासदत्। उपसीदति। उपगच्छति। अन्य एकतरः पूषा करंभं घृतमिश्रं सक्त्वात्मकं हविर्भक्षयितुमिच्छति॥

अजा अन्यस्य वह्नयो हरी अन्यस्य संभृता। ताभ्यां वृत्राणि जिघ्नते ॥३॥
अजाः। अन्यस्य। वह्नयः। हरी इति। अन्यस्य। संऽभृता। ताभ्यां। वृत्राणि। जिघ्नते ॥३॥

अनयोरिंद्रापूष्णोरन्यस्यैकस्य पूष्णोऽजाश्छागा वह्नयो वाहका अश्वाः। अन्यस्यापरस्येंद्रस्य संभृता संभृतौ सम्यक् पुष्टौ हरी एतत्संज्ञावश्वौ वाहकौ। स चेंद्रस्ताभ्यां वृत्राणि शत्रून् जिघ्नते। हंति॥

यदिंद्रो अनयद्रितो महीरपो वृषंतमः। तत्र पूषाभवत्सचा ॥४॥
यत्। इंद्रः। अनयत्। रितः। महीः। अपः। वृषन्ऽतमः। तत्र। पूषा। अभवत्। सचा ॥४॥

यद्यदा वृषंतमोऽतिशयेन वर्षितेंद्रो रितो गंत्रीर्महीर्महतीरपो वृष्ट्युदकान्यनयत् इमं लोकं प्रापयति तत्र तदानीं पूषा पोषको देवः सचाभवत्। अस्येंद्रस्य सहायो भवति॥

तां पूष्णः सुमतिं वयं वृक्षस्य प्र वयामिव। इंद्रस्य चा रभामहे ॥५॥
तां। पूष्णः। सुऽमतिं। वयं। वृक्षस्य। प्र। वयांऽइव। इंद्रस्य। च। आ। रभामहे ॥५॥

पूष्णः पोषकस्य देवस्येंद्रस्य च तां प्रसिद्धां सुमतिं कल्याणीं मतिमनुग्रहबुद्धिं वृक्षस्य महीरुहस्य प्र वया प्रकृष्टां दृढां शाखामिव वयमा रभामहे। अवलंबामहे। आश्रयामह इत्यर्थः॥

उत्पूषणं युवामहेऽभीशूँरिव सारथिः। मह्या इंद्रं स्वस्तये ॥६॥
उत्। पूषणं। युवामहे। अभीशून्ऽइव। सारथिः। मह्यै। इंद्रं। स्वस्तये ॥६॥

पूषणं पोषकं देवमिंद्रं च मह्यै महत्यै स्वस्तये रक्षार्थमुद्युवामहे। उद्योजयामः। उद्योजनमाकर्षणं। तत्र दृष्टांतः। सारथिः सूतोऽभीशूनिव। अभीशून्रश्मीनश्वबंधनार्थान्यथाकर्षति तद्वत्॥ ॥२३॥

शुक्रं त इति चतुर्ऋचं नवमं सूक्तं भरद्वाजस्यार्षं पौष्णं। द्वितीया जगती शिष्टास्त्रिष्टुभः। तथा चानुक्रांतं।

शुक्रं चतुष्कं द्वितीया जगतीति ॥ वैश्वदेवे पर्वणि वैश्वदेवस्य हविषः शुक्रं त इति याज्या । सूचितं च । शुक्रं ते अन्यद्यजतं ते अन्यदित्यिह वः स्वतवसः । आ० २. १६. । इति ॥ एकादशिनस्य पौष्णस्य पशोर्वपाया एषैव याज्या । सूचितं च । शुक्रं ते अन्यद्यजतं ते अन्यत्प्रपथे पथामजनिष्ट पूषा । आ० ३. ७. । इति ॥ अभाभिष्टवेऽप्येषा । सूचितं च । शुक्रं ते अन्यद्यजतं ते अन्यदपश्यं गोपामनिपद्यमानं । आ० ४. ६ । इति ॥

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥१॥
शुक्रं । ते । अन्यत् । यजतं । ते । अन्यत् । विषुरूपे इति विषुऽरूपे । अहनी इति । द्यौःऽइव । असि ।
विश्वाः । हि । मायाः । अवसि । स्वधाऽवः । भद्रा । ते । पूषन् । इह । रातिः । अस्तु ॥१॥

हे पूषन् ते तव शुक्रं शुक्लवर्णमन्यदेकमहर्भवति वासरात्मकं । तथा ते तव संबंधि यजतं । यजिरत्र सगति करणे वर्तते । यजनीयं प्रकाशेन संगमनीयं स्वतः कृष्णवर्णमन्यदेकमहर्भवति रात्र्याख्यं । इत्थं विषुरूपे शुक्ल कृष्णतया नानारूपे अहनी तव महिम्ना निष्पद्येते । यद्वा । हे पूषन् त्वदीयमन्यदेकं रूपं शुक्रं निर्मलं दिवसस्योत्पादकं । त्वदीयमन्यदेकं रूपं यजतं केवलं यजनीयं न प्रकाशकं रात्रेरुत्पादकं । अत एव विषुरूपे विषमरूपे अहनी अहश्च रात्रिश्च भवतः । अहोरात्रयोर्निर्माणे सूर्य एव कर्ता कथमस्य प्रसक्तिरिति तत्राह । द्यौरिवासि । यथा द्यौरादित्यः प्रकाशयिता तथा त्वं प्रकाशकोऽसि । कुत इत्यत आह । हे स्वधावोऽन्नवन्पूषन् विश्वाः सर्वा मायाः प्रज्ञा हि यस्मात्कारणादवसि रक्षसि अतः कारणात्त्वं सूर्य इव भवसीत्यर्थः । तादृशस्य ते तव भद्रा कल्याणी रातिर्दानमिहास्मास्वस्तु । भवतु ॥ यास्कस्त्वाह । शुक्रं ते अन्यल्लोहितं ते अन्यद्यजतं यज्ञियं ते अन्यदिति वा विषमरूपे अहनी कर्मणा द्यौरिव चासि । सर्वाणि च प्रज्ञानान्यवस्यन्नवन् । नि० १२. १७. । इति ॥

अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः ।
अष्ट्रां पूषा शिथिरामुद्वरीवृजत्संचक्षाणो भुवना देव ईयते ॥२॥
अजऽअश्वः । पशुऽपाः । वाजऽपस्त्यः । धियंऽजिन्वः । भुवने । विश्वे । अर्पितः ।
अष्ट्रां । पूषा । शिथिरां । उत्ऽवरीवृजत् । संऽचक्षाणः । भुवना । देवः । ईयते ॥२॥

अजाश्वश्छागवाहनः पशुपाः पशूनां पालयिता वाजपस्त्यः । वाजा अन्नानि पस्त्ये गृहे यस्य तादृशः । धियंजिन्वः । धियः स्तोतारः कर्माणि वा । तेषां प्रीणयिता विश्वे विश्वस्मिन् सर्वस्मिन् भुवने लोकेऽर्पितः प्रजापतिना पोषकत्वेन स्थापितः । अत एवंभूतः पूषा पोषको देवोऽष्ट्रामारां स्वहस्तगतां शिथिरां शिथिलां सतीमुद्वरीवृजत् उद्यच्छन् भुवना भुवनानि सर्वान् लोकान् भूतजातानि वा संचक्षाणः संपश्यन् सूर्यात्मना प्रकाशयन् ईयते । नभसि गच्छति ॥

पौष्णस्य पशोर्वपापुरोडाशयोर्यास्ते पूषन्नित्यादिके द्वे क्रमेणानुवाक्ये । सूत्रितं च । यास्ते पूषन्नावो अन्तः समुद्र इति द्वे पूषमा आशा अनु वेद सर्वाः । आ० ३. ७ । इति ॥

यास्ते पूषन्नावो अंतः समुद्रे हिरण्ययीरंतरिक्षे चरंति ।
ताभिर्यासि दूत्यां सूर्यस्य कामेन कृत श्रव इच्छमानः ॥३॥

यांः । ते । पूषन् । नावः । अंतरिति । समुद्रे । हिरण्ययीः । अंतरिक्षे । चरंति ।
ताभिः । यासि । दूत्यां । सूर्यस्य । कामेन । कृत । श्रवः । इच्छमानः ॥३॥

हे पूषन् ते त्वदीया या हिरण्ययीर्हिरण्मय्यो हितरमणीया नावः समुद्रे उदधावंतर्मध्येऽंतरिक्षे नभसि चरंति संचरंति ताभिर्नौभिः सूर्यस्य दूत्यां यासि । गच्छसि । कदाचिद्देवैः सार्धं सूर्येऽसुरवधार्थं प्रस्थिते सति तस्य भार्या स्वभर्तारं संजातोत्सुक्या बभूव तां प्रति सूर्यः पूषणं प्राहैषीत् तेन चात्र पूषा स्तूयते । अपि च त्वं श्रवो हविर्लक्षणमन्नमिच्छमान इच्छन् कामेन पश्वादिविषयेण स्तोतृभिः कृतो वशीकृतोऽसि ॥

पूषा सुबंधुर्दिव आ पृथिव्या इळस्पतिर्मघवा दस्मवर्चाः ।
यं देवासो अददुः सूर्यायै कामेन कृतं तवसं स्वंचं ॥४॥
पूषा । सुऽबंधुः । दिवः । आ । पृथिव्याः । इळः । पतिः । मघऽवा । दस्मऽवर्चाः ।
यं । देवासः । अददुः । सूर्यायै । कामेन । कृतं । तवसं । सुऽअंचं ॥४॥

पूषा पोषको देवो दिव आ द्युलोकस्य च पृथिव्याश्च सुबंधुः शोभनो बंधुर्भवति । तथेळस्पतिरिळाया अन्नस्य पतिर्मघवा । मघमिति धननाम । तद्वान् । यद्वा । मंहतेर्दानकर्मणो भावसाधनो मघशब्दः । दानवान् दस्मवर्चाः । वर्च इति रूपनाम । दस्म दर्शनीयं वर्चो यस्य तादृशः । यं पूषणं देवासः सर्वे देवाः सूर्यायै सूर्यस्य पत्न्यै यद्वा सावित्र्यै सूर्याख्याया अश्विनोर्वरणायाददुः दत्तवंतः । पुत्रः पितराववृणीत पूषा । ऋग्वे० १०. ८५. १४. । इति हि श्रूयते । कीदृशं पूषणं । कामेन पश्वादिविषयेण कृतं स्तोतृभिर्वशीकृतं तवसं बलवंतं प्रवृद्धं वा स्वंचं स्वंचनं सुष्ठु गच्छंतं । एवंविधं यं पूषणमददुः स पूषा सुबंधुरित्यन्वयः ॥ ॥२४॥

प्र नु वोचेति दशर्चं दशमं सूक्तं भरद्वाजस्यार्षमिंद्राग्निदेवताकं । सप्तम्याद्यास्तिस्रोऽनुष्टुभः शिष्टाः षट् बृहत्यः । तथा चानुक्रांतं । प्र नु दशेंद्राग्नं तु बार्हतं चतुरनुष्टुबंतमिति ॥ गतो विनियोगः ॥

प्र नु वोचा सुतेषु वां वीर्या३ यानि चक्रथुः ।
हतासो वां पितरो देवशत्रव इंद्राग्नी जीवथो युवं ॥१॥
प्र । नु । वोच । सुतेषु । वां । वीर्या । यानि । चक्रथुः ।
हतासः । वां । पितरः । देवऽशत्रवः । इंद्राग्नी इति । जीवथः । युवं ॥१॥

हे इंद्राग्नी यानि वीर्या वीर्याणि वीरकर्माणि चक्रथुः कृतवंतौ युवां सुतेष्वभिषुतेषु सोमेष्वस्मद्यज्ञे वां युवयोस्तानि वीर्याणि नु क्षिप्रं प्र वोच । प्रवोचं । प्रब्रवीमि । तदेव वीर्यं दर्शयति । हे इंद्राग्नी देवशत्रवः । देवाः शत्रवः शातयितारो येषां तादृशाः । असुराः पितरो हिंसकाः ॥ पीयतिर्हिंसाकर्मा । तस्यैतद्रूपं ॥ ईदृशा असुरा वां युवाभ्यां हतासो हता आसन् । युवं युवां तु जीवथः । जीवंतौ भवथः । असुरैर्न बाधितावित्ति यावत् ॥

वळित्था महिमा वामिंद्राग्नी पनिष्ठ आ ।
समानो वां जनिता भ्रातरा युवं यमाविहेहमातरा ॥२॥
वट् । इत्था । महिमा । वां । इंद्राग्नी इति । पनिष्ठः । आ ।
समानः । वां । जनिता । भ्रातरा । युवं । यमौ । इहेहऽमातरा ॥२॥

हे इंद्राग्नी वां युवयोर्महिमा महत्त्वमित्थमनेन प्रकारेण बट सत्यं। युष्मद्विषयं यन्माहात्म्यं प्रति पाद्यते तत्सर्वं यथार्थमित्यर्थः। पनिष्ठ आ पनिष्ठः स्तुत्यतमश्च प्रजापतिः समान एक एव वां युवयोर्जनिता जनयिता। अतो युवं युवां भ्रातरा भ्रातरौ स्थः। अपि च यमा यमलौ सहोत्पन्नाविहेहमातरा। इह चेह च सर्वत्र माता ययोस्तादृशौ स्थः। अदितिर्ह्येनयोर्माता सैव विस्तीर्णा भूमिरितीहेहमातराविति श्रूयते ॥

ओकिवांसा सुते सचाँ अश्वा सप्ती इवादने।

इंद्रा न्व१ग्नी अवसेह वज्रिणा वयं देवा हवामहे ॥३॥

ओकिऽवांसा। सुते। सचा। अश्वा। सप्ती इवेति सप्ती ऽइव। आदने।

इंद्रा। नु। अग्नी इति। अवसा। इह। वज्रिणा। वयं। देवा। हवामहे ॥३॥

हे इंद्राग्नी सुतेऽभिषुते सोमे युवां सचा सहौकिवांसौकिवांसौ समवेतौ सगतौ भवत ॥ उच समवाय इत्यस्यैतद्रूपं ॥ तत्र दृष्टांतः। आदने भक्षणीये घासे सप्ती इवाश्वा सर्पणशीलावश्वाविव। नु अद्य वयं तादृशाविंद्राग्नी इहास्मिन्यज्ञेऽवसा रक्षणेन हेतुना हवामहे। आह्वयामहे ॥ इंद्रे तरयोगादिंद्रशब्देऽग्निशब्दे च द्विवचनं ॥ कीदृशाविंद्राग्नी। वज्रिणा वज्रिणावायुधोपेतौ देवा दानादिगुणयुक्तौ ॥

य इंद्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा।

जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥४॥

यः। इंद्राग्नी इति। सुतेषु। वां। स्तवत्। तेषु। ऋतऽवृधा।

जोषऽवाकं। वदतः। पज्रऽहोषिणा। न। देवा। भसथः। चन ॥४॥

हे ऋतावृधा ऋतस्य सत्यस्य यज्ञस्य वा वर्धयिताराविंद्राग्नी सुतेष्वभिषुतेषु सोमेषु यः स्तोता वां युवां स्तवत् कुत्सितं स्तुयात् तेषु सोमेषु मध्ये जोषवाकं वदतो जोषं जोषयितव्यं प्रीतिहेतुत्वेन कर्तव्यं स्वयमप्रीतिकरं तादृशं वाकं वाक्यं वदतस्तस्य स्तोतुः सोमं हे पज्रहोषिणा पज्रः प्रार्जितः प्रसिद्धो होषो घोषः स्तोत्रं ययोस्तादृशौ हे देवा देवौ युवां न भसथः। न भक्षयथः। चनेति पादपूरणः ॥ अत्र निरुक्तं। जोषवाकमित्यविज्ञाततनामधेयं जोषयितव्यं भवति। य इंद्राग्नी सुतेषु वां सोमेषु स्तौति तेष्वृतस्य वर्धयितारौ न तस्याश्नीथः। योऽयं जोषवाकं वदति विजजपः प्रार्जितहोषिणा देवा न तस्याश्नीथः। नि० ५. २२। इति ॥

इंद्राग्नी को अस्य वां देवौ मर्तश्चिकेतति।

विषूचो अश्वान्युयुजान ईयत एकः समान आ रथे ॥५॥

इंद्राग्नी इति। कः। अस्य। वां। देवौ। मर्तः। चिकेतति।

विषूचः। अश्वान्। युयुजानः। ईयते। एकः। समाने। आ। रथे ॥५॥

हे देवौ द्योतमानाविंद्राग्नी वां युवयोरस्येदं कर्म को मर्तो मनुष्यश्चिकेतति। जानीयात्। न कोऽपीत्यर्थः। किं तत्कर्म। विषूचो नानाञ्चतो गच्छतोऽश्वान्समाने उभयार्थे एकस्मिन्रथे युवयोरेक इंद्रः सर्वात्मना वर्तमानो युयुजानस्तादृशानश्वान्योजयन्नेयते। सर्वं जगदभिगच्छति। यद्वा। विषूचो नानारूपानश्वान्व्यापकान्समाने एकरूपे रथे संवत्सरात्मके युयुजानो योजयन्युवयोरेकः सूर्यात्मेंद्र एयते। आगच्छति। एतद्युवयोः कर्म को यथावज्जानीयादित्यर्थः ॥ ॥२५॥

इंद्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः।

हित्वी शिरो जिह्वया वावदच्चरत्त्रिंशत्पदा न्यक्रमीत ॥६॥

इंद्राग्नी इति । अपात् । इयं । पूर्वा । आ । अगात् । पत्ऽवतीभ्यः ।
हित्वी । शिरः । जिह्वया । वावदत् । चरत् । त्रिंशत् । पदा । नि । अक्रमीत् ॥६॥

हे इंद्राग्नी अपात्पादरहितेयमुषाः पद्वतीभ्यः पादयुक्ताभ्यः सुप्ताभ्यः प्रजाभ्यः पूर्वा प्रथमभाविनी सत्यागात । आगच्छति । तथा प्राणिना शिरो हित्वी प्रेरयित्री । यद्वा । शिरो हित्वा त्यक्त्वा स्वयमशिरस्का सती । जिह्वया प्राणिस्थया तदीयेन वागिंद्रियेण वावदत् भृशं शब्दं कुर्वतो चरत । एवं चरंत्युषास्त्रिंशत्पदान्यवयवभूतान् त्रिंशन्मुहूर्तान्यक्रमीत । एकेन दिवसेनातिक्रामति । एतच्च युवयोः कर्म । तत्को जानीयादिति पूर्ववान्वयः ॥

इंद्राग्नी आ हि तन्वते नरो धन्वानि बाह्वोः ।
मा नो अस्मिन्महाधने परा वर्क्तं गविष्टिषु ॥७॥
इंद्राग्नी इति । आ । हि । तन्वते । नरः । धन्वानि । बाह्वोः ।
मा । नः । अस्मिन् । महाऽधने । परा । वर्क्तं । गोऽइष्टिषु ॥७॥

हे इंद्राग्नी नरो योद्धारो मनुष्या बाह्वोर्हस्तयोर्धन्वानि धनूंष्या तन्वते हि । आततज्यानि कुर्वते हि । युवां चास्मिन्महाधने जेतव्येन महाधनेनोपेते संग्रामे गविष्टिषु गवामन्वेषणेषु नोऽस्मान मा परा वर्क्तं । मा परित्यजत ॥

इंद्राग्नी तपंति माघा अर्यो अरातयः । अप द्वेषांस्या कृतं युयुतं सूर्यादधि ॥८॥
इंद्राग्नी इति । तपंति । मा । अघाः । अर्यः । अरातयः । अप । द्वेषांसि । आ । कृतं ।
युयुतं । सूर्यात् । अधि ॥८॥

हे इंद्राग्नी अघा आहंत्र्योऽर्योऽभिगंत्र्योऽरातयः शत्रुसेना मा तपति । मां बाधते । ता अपा कृतं । अपाकुरुतं । तथा द्वेषांसि द्वेष्टृन् शत्रून् सूर्यादधि । अधिः पंचम्यर्थानुवादकः । सूर्यदर्शनाद्युयुतं । पृथक्कुरुतं च । यथा ते सूर्यं न पश्यंति तथा कुरुतं । मारयतमित्यर्थः ॥

इंद्राग्नी युवोरपि वसु दिव्यानि पार्थिवा ।
आ न इह प्र यच्छतं रयिं विश्वायुपोषसं ॥९॥
इंद्राग्नी इति । युवोः । अपि । वसु । दिव्यानि । पार्थिवा ।
आ । नः । इह । प्र । यच्छतं । रयिं । विश्वायुऽपोषसं ॥९॥

हे इंद्राग्नी युवोर्युवयोर्दिव्यानि दिवि भवानि पार्थिवा पृथिव्यां भवानि लोकद्वयसंबंधीनि वसु वसून्यपि हिताभि युवयोरेव वर्तंते । अतः कारणादिहास्मिन्यज्ञे नोऽस्मभ्यं रयिं धनमा इभि प्र यच्छतं । कीदृशं रयिं । विश्वायुपोषसं । आयव इति मनुष्यनाम । सर्वेषां मनुष्याणां पोषणाय पर्याप्तं । यद्वा । सर्वस्यायुषः पोषणे शक्तं ॥ छांदसो वर्णलोपः ॥

इंद्राग्नी उक्थवाहसा स्तोमेभिर्हवनश्रुता ।
विश्वाभिर्गीर्भिरा गतमस्य सोमस्य पीतये ॥१०॥
इंद्राग्नी इति । उक्थऽवाहसा । स्तोमेभिः । हवनऽश्रुता ।
विश्वाभिः । गीःऽभिः । आ । गतं । अस्य । सोमस्य । पीतये ॥१०॥

हे उक्थवाहसोक्थैः स्तुतिभिर्वहनीयौ हे हवनश्रुता हवनस्याह्वानस्य श्रोतारौ एवंभूतौ हे इंद्राग्नी स्तोमेभिः स्तोत्रैर्विश्वाभिः सर्वाभिर्गीर्भिः शस्त्ररूपाभिर्वाग्भिश्च हेतुभूताभिरा गतं । आगच्छतं । किमर्थं । अस्यास्मदीयस्य सोमस्य पीतये पानार्थं ॥ ॥२६॥

श्नथद्वृत्रमिति पंचदशर्चमेकादशं सूक्तं भरद्वाजस्यार्षमैंद्राग्नं । आद्यास्तिस्रस्त्रिष्टुभस्ततुर्थ्याद्या नव गायत्र्य स्त्रयोदशी त्रिष्टुप् चतुर्दशी बृहती पंचदश्यनुष्टुप् । तथा चानुक्रांतं । श्नथत्पंचोना गायत्र्यं तु त्रिस्त्रिष्टुबादि त्रिष्टुब्बृहत्यनुष्टुबंतमिति ॥ गतः सूक्तविनियोगः ॥ वरुणप्रघासेष्वैंद्राग्नस्य हविषः श्नथदित्येषा याज्या । सूत्रितं च । इंद्राग्नी अवसा गतं श्नथद्वृत्रमुत सनोति वाजं । आ० २. १७. । इति ॥

श्नथद्वृत्रमुत सनोति वाजमिंद्रा यो अग्नी सहुरी सपर्यात् ।
इरज्यंता वसव्यस्य भूरेः सहस्तमा सहसा वाजयंता ॥१॥
श्नथत् । वृत्रं । उत । सनोति । वाजं । इंद्रा । यः । अग्नी इति । सहुरी इति । सपर्यात् ।
इरज्यंता । वसव्यस्य । भूरेः । सहःऽतमा । सहसा । वाजऽयंता ॥१॥

स पुरुषो वृत्रमावरकं शत्रुं श्नथत् । हिनस्ति । उतापि च वाजमन्नं बलं वा सनोति । लभते । यः पुरुषः सहुरी शत्रूणामभिभविताराविंद्राग्नी सपर्यात् परिचरेत् ॥ इतरेतरयोगादुभयत्र पूर्ववद्विवचनं ॥ कीदृशा विंद्राग्नी । भूरेः प्रभूतस्य वसव्यस्य वसुसमूहस्य । यद्वा ॥ स्वार्थिको यत् ॥ धनस्येरज्यंतेशानौ स्वामिनौ ॥ इरज्यतिरैश्वर्यकर्मा ॥ सहसा बलेन सहस्तमातिशयेनाभिभवितारौ शत्रूणां वाजयंता वाजं हविर्लक्षणमन्न मात्मन इच्छंतौ । यद्वा । वाजं स्तोतृभ्यो दातव्यमन्नं कामयमानौ ॥

ता योधिष्टमभि गा इंद्र नूनमपः स्वरुषसो अग्न ऊळ्हाः ।
दिशः स्वरुषस इंद्र चित्रा अपो गा अग्ने युवसे नियुत्वान् ॥२॥
ता । योधिष्टं । अभि । गाः । इंद्र । नूनं । अपः । स्वः । उषसः । अग्ने । ऊळ्हाः ।
दिशः । स्वः । उषसः । इंद्र । चित्राः । अपः । गाः । अग्ने । युवसे । नियुत्वान् ॥२॥

हे इंद्र हे अग्ने ता तौ युवां गा अप उदकानि स्वः सूर्यमुषस उषःकालान् ऊळ्हाः पणिभिरपहृता एतान् गवादीनभिलक्ष्य योधिष्टं । तैरसुरैर्युद्धं कृतवंतौ । नूनमिति पादपूरणार्थः । हे इंद्र त्वं दिशः प्राच्याद्याः स्वः सूर्यमुषसश्च चित्राश्चायनीया अप उदकानि च गाश्च पणिभिरपहृतानेतान्युवसे । अनेन लोकेनायोजयः । यद्वा । असुरैरावृतान्दिगादीनसुरवधेनावरणमपनीय पृथक्कृतवानसीत्यर्थः । हे अग्ने नियुत्वान् नियुद्भि रश्वैर्युक्तः संस्त्वमप्येवमकार्षीरित्यर्थः ॥

ऐंद्राग्नस्य पशोर्वपाया आ वृत्रहणेत्यनुवाक्या । सूत्रितं च । आ वृत्रहणा वृत्रहभिः शुष्मैरा भरतं शिक्षतं वज्रबाहू । आ० ३. ७. । इति ॥

आ वृत्रहणा वृत्रहभिः शुष्मैरिंद्र यातं नमोभिरग्ने अर्वाक् ।
युवं राधोभिरकवेभिरिंद्राग्ने अस्मे भवतमुत्तमेभिः ॥३॥
आ । वृत्रऽहना । वृत्रहऽभिः । शुष्मैः । इंद्र । यातं । नमःऽभिः । अग्ने । अर्वाक् ।
युवं । राधःऽभिः । अकवेभिः । इंद्र । अग्ने । अस्मे इति । भवतं । उत्ऽतमेभिः ॥३॥

हे वृत्रहणा वृत्रस्यासुरस्य हंतारौ हे इंद्र हे अग्ने वृत्रहभिर्वृत्रस्य हंतृभिर्वृत्रहननानिमित्तैः शुष्मैर्बलैर्नमोभिरस्मभ्यं दातव्यैरन्नैश्च सार्धमर्वागस्मदभिमुखमा यातं । आगच्छतं । हे इंद्र हे अग्ने युवं युवामकवेभिरकुत्सितैर्महद्भिरुत्तमेभिरुत्कृष्टतमै राधोभिर्धनैः सहास्मे अस्मासु भवतं । आविर्भवतं ॥

चातुर्विंशिकेऽहनि प्रातःसवनेऽच्छावाकशस्त्रे ता हुवे इति षडहस्तोत्रियस्तृचः । सूत्रितं च । ता हुवे ययोरिदमिति वामस्य मन्मनः । आ॰ ७.२. । इति ॥ पृष्ठ्याभिप्लवषडहयोः स्तोमवृद्धौ ता हुव इत्याद्या नवर्च आवापार्थाः । सूत्रितं च । ता हुवे ययोरिदमिति नवेयं वामस्य मन्मन इत्येकादश । आ॰ ७.५. । इति ॥

ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतं । इंद्राग्नी न मर्धतः ॥४॥

ता । हुवे । ययोः । इदं । पप्ने । विश्वं । पुरा । कृतं । इंद्राग्नी इति । न । मर्धतः ॥४॥

ता तौ तादृशाविंद्राग्नी हुवे । आह्वये । ययोरिंद्राग्न्योः पुरा पूर्वस्मिन्काले कृतं विश्वं सर्वमिदं पूर्वाभ्युक्तं कीर्तितं वीर्यं पप्ने पन्यते ऋषिभिः स्तूयते । ताविंद्राग्नी हुव इत्यन्वयः । तौ चेंद्राग्नी न मर्धतः । स्तोतॄन्न हिंस्तः । अतोऽस्मानप्याहूतौ रक्षतामिति भावः ॥ मर्धतिर्हिंसाकर्मा ॥

उग्रा विघनिना मृध इंद्राग्नी हवामहे । ता नो मृळात ईदृशे ॥५॥

उग्रा । विऽघनिना । मृधः । इंद्राग्नी इति । हवामहे । ता । नः । मृळातः । ईदृशे ॥५॥

उग्रावुद्गूर्णबलावत एव मृधः शत्रून्विघनिना विघनिनौ विशेषेण हतवंताविंद्राग्नी हवामहे । आह्वयामहे । तौ चेंद्राग्नी ईदृशेऽस्मिन संग्रामे नोऽस्मान्मृळातः । सुखयतां । यद्वा ॥ मृळतिरुपदयाकर्मा ॥ नोऽस्माकं मृळातः । उपदयां कुरुतां ॥ ॥२७॥

हतो वृत्राण्यार्या हतो दासानि सत्पती । हतो विश्वा अप द्विषः ॥६॥

हतः । वृत्राणि । आर्या । हतः । दासानि । सत्पती इति सत्ऽपती । हतः । विश्वाः ।
अप । द्विषः ॥६॥

ताविंद्राग्नी आर्यावार्यैः कर्मानुष्ठातृभिः कृतानि वृत्राण्युपद्रवजातानि हतः । हिंस्तः । तथा सत्पती सतां पालयितारावंद्राग्नी दासानि । दासाः कर्महीनाः शत्रवः । तैः कृतानि चोपद्रवजातानि हतः । अपि च विश्वाः सर्वा द्विषो द्वेष्ट्रीः शत्रुभूताः प्रजा अप हतः । विनाशयतः । अतोऽस्माकमप्येवमेव कुरुतामिति भावः ॥

चातुर्विंशिकेऽहनि प्रातःसवनेऽच्छावाकशस्त्र इंद्राग्नी युवामिति षडहस्तोत्रियस्तृचः । सूत्रितं च । इंद्राग्नी युवामिमे यज्ञस्य हि स्थ ऋत्विजेत्यच्छावाकस्य । आ॰ ७.२. । इति ॥

इंद्राग्नी युवामिमे३ऽभि स्तोमा अनूषत । पिबतं शंभुवा सुतं ॥७॥

इंद्राग्नी इति । युवां । इमे । अभि । स्तोमाः । अनूषत । पिबतं । शंऽभुवा । सुतं ॥७॥

हे इंद्राग्नी युवामिमे स्तोमाः स्तोतारोऽभ्यनूषत । अभिष्टुवंति । हे शंभुवौ सुखस्य भावयितारावंद्राग्नी सुतमभिषुतमस्मदीयं सोमं पिबतं ॥

या वां संति पुरुस्पृहो नियुतो दाशुषे नरा । इंद्राग्नी ताभिरा गतं ॥८॥

या । वां । संति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा । इंद्राग्नी इति । ताभिः । आ । गतं ॥८॥

हे नरा नेताराविंद्राग्नी वां युवयोः स्वभूताः पुरुस्पृहः पुरुभिर्बहुभिः स्पृहणीया दाशुषे हवींषि दत्तवते यजमानार्थमुत्पन्ना या नियुतोऽश्वाः संति हे इंद्राग्नी ताभिर्नियुद्भिरा गतं । आगच्छतं ॥

ताभिरा गच्छतं नरोपेदं सवनं सुतं । इंद्राग्नी सोमपीतये ॥९॥

ताभिः । आ । गच्छतं । नरा । उप । इदं । सवनं । सुतं । इंद्राग्नी इति । सोमऽपीतये ॥९॥

हे नरा नेताराविंद्राग्नी। सुषुतेऽभिषुयत इति सवनः सोमः। इदं सवनमिमं सोमं सुतमभिषुतमुप प्रति। यद्वा। इदं प्रातःसवनमुपास्मिन् सवने सुतमभिषुतं सोमं प्रति ताभिर्नियुद्भिरा गच्छतं। किमर्थं। सोमपीतये तस्य सोमस्य पानार्थं॥

तमी॑ळिष्व॒ यो अ॒र्चिषा॒ वना॒ विश्वा॑ परि॒ष्वज॑त्। कृ॒ष्णा कृ॒णोति॑ जि॒ह्वया॑ ॥१०॥

तं। ई॒ळि॒ष्व॒। यः। अ॒र्चिषा॑। वना॑। विश्वा॑। प॒रि॒ऽस्वज॑त्। कृ॒ष्णा। कृ॒णोति॑। जि॒ह्वया॑ ॥१०॥

हे स्तोतस्तमग्निमीळिष्व स्तुहि योऽग्निरर्चिषा ज्वालारूपेण तेजसा विश्वा सर्वाणि वनारण्यानि परिष्वजत् परिष्वजति परितो वेष्टयति। यश्च तानि वनानि जिह्वया ज्वालया दग्ध्वा कृष्णा कृष्णवर्णानि कृणोति करोति॥ ॥२६॥

य इ॒द्ध आ॑वि॒वास॑ति सु॒म्नमिंद्र॑स्य॒ मर्त्यः॑। द्यु॒म्नाय॑ सु॒तरा॑ अ॒पः ॥११॥

यः। इ॒द्धे। आ॒ऽवि॒वास॑ति। सु॒म्नं। इंद्र॑स्य। मर्त्यः॑। द्यु॒म्नाय॑। सु॒ऽतराः॑। अ॒पः ॥११॥

यो मर्त्यो मनुष्य इद्धे दीप्तेऽग्नौ सुम्नं सुखकरं हविरिंद्रस्येंद्राग्न्योराविवासति परिचरति प्रयच्छति॥ चतुर्थ्यर्थे षष्ठी॥ तस्य मर्त्यस्य द्युम्नाय द्योतमानायान्नाय तदर्थं सुतराः सुखेन तरणीया अप उदकानि वृष्ट्यात्मकानींद्रः करोतीति शेषः॥

ता नो॒ वाज॑वती॒रिष॑ आ॒शून्पि॑पृत॒मर्व॑तः। इंद्र॑म॒ग्निं च॒ वोळ्ह॑वे ॥१२॥

ता। नः॒। वाज॑ऽवतीः। इषः॑। आ॒शून्। पि॒पृ॒तं। अर्व॑तः। इंद्रं॑। अ॒ग्निं। च॒। वोळ्ह॑वे ॥१२॥

हे इंद्राग्नी ता तौ युवां वाजवतीरन्नवतीरिषः इष्यमाणा वृष्टीः। यद्वा। वाजो बलं। तद्वतीरिषोऽन्नान्याशून् शीघ्रगानर्वतोऽश्वांश्च नोऽस्मभ्यं पिपृतं। पूरयतं। प्रयच्छतं। किमर्थं। इंद्रमग्निं च युवां वोळ्हवे वोढुं हविर्भिः प्रापयितुं॥

ऐंद्राग्नस्य पशोर्हविषोऽनुवाक्योभा वामित्येषा। सूत्रितं च। उभा वामिंद्राग्नी आहुवध्यै शुचिं नु स्तोमं नवजातमद्य। आ० ३.८। इति॥

उ॒भा वा॑मिंद्राग्नी आहु॒वध्या॑ उ॒भा राध॑सः स॒ह मा॑द॒यध्यै॑।
उ॒भा दा॒तारा॑वि॒षां र॑यी॒णामु॒भा वाज॑स्य सा॒तये॑ हुवे वां ॥१३॥

उ॒भा। वां॒। इं॒द्रा॒ग्नी॒ इति॑। आ॒ऽहु॒वध्यै॑। उ॒भा। राध॑सः। स॒ह। मा॒द॒यध्यै॑।
उ॒भा। दा॒तारौ॑। इ॒षां। र॒यी॒णां। उ॒भा। वाज॑स्य। सा॒तये॑। हु॒वे॒। वां॒ ॥१३॥

हे इंद्राग्नी उभोभौ संहत्य वर्तमानौ वां युवां हुवे। आह्वयामि। किमर्थं। आहुवध्या आभिमुख्येन होतुं। तथोभोभौ युवामाहूय राधसो राधसा साधकेन हविषा सह युगपदेव मादयध्यै मादयितुं तर्पयितुं। अन्येषु देवेषु सत्स्वाव्योरेवाह्वाने किं कारणमिति चेदुच्यते। उभोभौ तौ युवामिषामन्नानां रयीणां धनानां च दातारौ स्थः। अतः कारणादुभोभौ वां युवां वाजस्यान्नस्य सातये संभजनाय हुवे। आह्वये॥

आ नो॒ गव्ये॑भि॒रश्व्यै॒र्वस॒व्यै३॑रुप॑ गच्छतं।
सखा॑यौ दे॒वौ स॒ख्याय॑ शं॒भुवें॑द्राग्नी ता ह॑वामहे ॥१४॥

आ । नः । गव्येभिः । अश्व्यैः । वसव्यैः । उप । गच्छतं ।
सखायौ । देवौ । सख्याय । शंऽभुवा । इंद्राग्नी इति । ता । हवामहे ॥१४॥

हे इंद्राग्नी गव्येभिर्गोसमूहैरश्व्यैरश्वसमूहैर्वसव्यैर्वसुसमूहैश्च सार्धं नोऽस्मानाभिमुख्येनोपा गच्छतं । शेषः परोक्षकृतः । सखायौ समानख्यानौ देवौ दानादिगुणयुक्तौ शंभुवा शंभुवौ सुखस्य भावयितारौ ता तादृशाविंद्राग्नी सख्याय सखित्वार्थं वयं हवामहे । आह्वयामहे ॥

इंद्राग्नी शृणुतं हवं यजमानस्य सुन्वतः । वीतं हव्यान्या गतं पिबतं सोम्यं मधु ॥१५॥
इंद्राग्नी इति । शृणुतं । हवं । यजमानस्य । सुन्वतः । वीतं । हव्यानि । आ । गतं ।
पिबतं । सोम्यं । मधु ॥१५॥

हे इंद्राग्नी सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य हवमाह्वानं स्तोत्रं शृणुतं । श्रुत्वा च तदीयानि हव्यानि हवींषि वीत । कामयेथां । कामयित्वा चा गतं । आगच्छतं । आगत्य च सोम्यं सोमात्मकं मधु पिबत ॥ ॥२९॥

इयमददादिति चतुर्दशर्चं द्वादशं सूक्तं भरद्वाजस्यार्षं सरस्वतीदेवताकं । आदितस्तिस्रो जगत्यस्त्रयोदश्यपि जगती चतुर्दशी त्रिष्टुप् शिष्टा गायत्र्यः । तथा चानुक्रांतं । इयं पञ्चोना सारस्वतं त्रिजगत्यादि जगतीत्रिष्टुबंतमिति ॥ अत्र शौनकः । इयमित्येतदाद्यं तु सूक्तं सारस्वतं जपेत् । द्विजः प्रातः शुचिर्भूत्वा वाग्मी भवति बुद्धिमान् । ऋग्वि॰ २. २३. । इति ॥ पार्ष्ठिके षष्ठेऽहनि प्रउग इयमददादिति सारस्वतस्तृचः । सूत्रितं च । इयमददाद्रभसमृणच्युतमिति प्रउग । आ॰ ८ १. । इति ॥

इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।
या शश्वंतमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥१॥
इयं । अददात् । रभसं । ऋणऽच्युतं । दिवःऽदासं । वध्रिऽअश्वाय । दाशुषे ।
या । शश्वंतं । आऽचखाद । अवसं । पणिं । ता । ते । दात्राणि । तविषा । सरस्वति ॥१॥

इयं सरस्वती रभसं वेगवंतमृणच्युतं वैदिकस्य देवर्षिपितृसंबंधिनो लौकिकस्य च ऋणस्य च्यावयितारं दिवोदासमेतन्नामकं पुत्रं दाशुषे हवींषि दत्तवते वध्र्यश्वायैतत्संज्ञाय ऋषयेऽददात् । दत्तवती । या सरस्वती शश्वंतं बहुलं पणिं पणनशीलं वणिजमदातृजनमवसं केवलं स्वात्मन एव तर्पकमाचखाद आजघान सेयमददादित्यन्वयः । अथ प्रत्यक्षीकृत्य स्तौति । हे सरस्वति देवि ता तानि पुत्रदानादीनि ते त्वदीयानि दात्राणि दानानि तविषा तविषाणि महांति भवंति ॥

इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥२॥
इयं । शुष्मेभिः । बिसखाःऽइव । अरुजत् । सानु । गिरीणां । तविषेभिः । ऊर्मिऽभिः ।
पारावतऽघ्नीं । अवसे । सुवृक्तिऽभिः । सरस्वतीं । आ । विवासेम । धीतिऽभिः ॥२॥

सरस्वती देवतारूपेण नदीरूपेण च वर्तते । देवतारूपा स्तुता । अधुनानया नदीरूपां सरस्वतीं स्तौति । इयं नदीरूपा सरस्वती शुष्मैः शोषकैरात्मीयैर्बलैस्तविषेभिर्महद्भिरूर्मिभिस्तरंगैर्गिरीणां पर्वतानां तीरसंबंधीना सानु सानून्यरुजत् । भनक्ति । बिसखा इव । बिसं खनतीति बिसखाः । स यथा बिसार्थं पंकं रुजति

तद्वत्। तां सरस्वतीं पारावतघ्नीं परावति दूरदेशे विद्यमानस्यापि वृक्षादेर्हंत्री सुवृक्तिभिः स्तुतिभिर्धीतिभिः कर्मभिश्चावसे रक्षणार्थमा विवासेम। परिचरेम। यद्वा। पारावतघ्नी पारावारे पारार्वाची तीरे। तयोर्घातिनी। उक्तं च। पारावतघ्नी पारावारघातिनी। नि० २ २४। इति ॥

सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः।
उत क्षितिभ्योऽवनीरविंदो विषमेभ्यो अस्रवो वाजिनीवति ॥३॥

सरस्वति। देवऽनिदः। नि। बर्हय। प्रऽजां। विश्वस्य। बृसयस्य। मायिनः।
उत। क्षितिऽभ्यः। अवनीः। अविंदः। विषं। एभ्यः। अस्रवः। वाजिनीऽवति ॥३॥

हे सरस्वति देवनिदो देवानां निंदकानसुरानिन्न बर्हय। न्यबर्हयः। अवधीः। तथा विश्वस्य व्याप्तस्य मायिनो मायाविनो बृसयस्य। बृसय इति त्वष्टुर्नामधेयं। त्वष्टुः प्रजां पुत्रं वृत्रासुरं च न्यवधीः। त्वत्साहाय्यादिंद्रो हतवानित्यर्थः। उतापि च हे वाजिनीवति अन्नवति सरस्वति त्वं क्षितिभ्यो मनुष्येभ्योऽवनीरसुरैरपहृता भूमीरविंदः। अलंभयः। एभ्यो मनुष्येभ्यो विषमुदकं चास्रवः। अक्षारयः। यद्वा। क्षितयोऽसुरजनाः। तेभ्यः सकाशादवनीर्भूमीरविंदः। लब्धवानसि। तान्हंतुमेभ्यश्चासुरेभ्यो विषं मृतिहेतुभूतं गरलमस्रवः ॥

प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवतु ॥४॥

प्र। नः। देवी। सरस्वती। वाजेभिः। वाजिनीऽवती। धीनां। अवित्री। अवतु ॥४॥

देवी दानादिगुणयुक्ता वाजिनीवती। वाजोऽन्नं यस्याः क्रियायां सा वाजिनी। तद्युक्ता। धीनां ध्यातॄणां स्तोतॄणामवित्री रक्षित्री। एवंभूता सरस्वती वाजेभिरन्नैर्नोऽस्मान्प्रावतु। प्रकर्षेण तर्पयतु ॥

यस्त्वा देवि सरस्वत्युपब्रूते धने हिते। इंद्रं न वृत्रतूर्ये ॥५॥

यः। त्वा। देवि। सरस्वति। उपऽब्रूते। धने। हिते। इंद्रं। न। वृत्रऽतूर्ये ॥५॥

हे देवि सरस्वति यः स्तोता वृत्रतूर्ये संग्रामे धने हिते निहिते निमित्तभूते सतींद्रं न इंद्रमिव त्वामुपब्रूते स्तौति तं रक्षेति शेषः ॥ ॥३०॥

त्वं देवि सरस्वत्यवा वाजेषु वाजिनि। रदा पूषेव नः सनिं ॥६॥

त्वं। देवि। सरस्वति। अव। वाजेषु। वाजिनि। रद। पूषाऽइव। नः। सनिं ॥६॥

हे देवि दानादिगुणयुक्ते हे वाजिनि। वाजो बलमन्नं वा। तद्युक्ते। हे सरस्वति त्वं वाजेषु संग्रामेष्ववास्मान्रक्ष। अपि च नोऽस्मभ्यं पूषेव पोषको देव इव सनिं संभजनीयं धनं रद। विलिख। प्रयच्छेति यावत् ॥

उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः। वृत्रघ्नी वष्टि सुष्टुतिं ॥७॥

उत। स्या। नः। सरस्वती। घोरा। हिरण्यऽवर्तनिः। वृत्रऽघ्नी। वष्टि। सुऽस्तुतिं ॥७॥

उतापि च स्या सा प्रसिद्धा सरस्वती घोरा शत्रूणां भयकारिणी हिरण्यवर्तनिः। वर्ततेऽनेनेति वर्तनी रथः। हिरण्मयो वर्तनिर्यस्याः सा तथोक्ता। वृत्रघ्नी वृत्राणां शत्रूणां हंत्री। एवंभूता सा सरस्वती नोऽस्मदीयां सुष्टुतिं शोभनां स्तुतिं वष्टि। कामयतां ॥

यस्या अनंतो अह्रुतस्त्वेषश्चरिष्णुरर्णवः। अमश्चरति रोरुवत् ॥८॥

यस्याः। अनंतः। अह्रुतः। त्वेषः। चरिष्णुः। अर्णवः। अमः। चरति। रोरुवत् ॥८॥

यस्याः सरस्वत्या अमो बलमनंतोऽपर्यंतोऽपरिमितोऽह्रुतोऽहिंसितोऽकुटिलो वा त्वेषो दीप्तश्चरिष्णुश्चरणशीलः । सर्वत्राप्रतिहतगतिरित्यर्थः । अर्णव उदकवान् । उदकप्रद इत्यर्थः । एवंभूतः सन् रोरुवत् भृशं शब्दं कुर्वन् चरति वर्तते सा नो विश्वा इत्युत्तरत्र संबंधः ॥

**सा नो॒ विश्वा॒ अति॒ द्विषः॒ स्वसॄ॑र॒न्या ऋ॒ताव॑री । अत॒न्नहे॑व॒ सूर्यः॑ ॥९॥**

**सा । नः॒ । विश्वाः॑ । अति॑ । द्विषः॑ । स्वसॄः॑ । अ॒न्याः । ऋ॒त॒ऽव॑री । अत॑न् । अहा॑ऽइव । सूर्यः॑ ॥९॥**

सा सरस्वती नोऽस्मान्विश्वाः सर्वा द्विषो द्वेष्ट्रीः प्रजा अति नयतु । अतितारयतु । तथा स्वसॄः स्वयंसारिणीः सहोत्पन्ना वा ऋतावरीः । ऋतमित्युदकनाम । तद्युक्ता अन्याश्च नदीरस्मानति नयतु । यद्वा ॥ जस्येव वा छंदसीति पूर्वसवर्णदीर्घः ॥ उदकवत्यः स्वसारो भगिन्योऽन्या गंगाद्या नद्यश्चास्मान् शत्रूनति नयंतु । तत्र दृष्टांतः । सूर्यः सर्वस्य प्रेरक आदित्योऽतन् सततं गच्छन् अहेवाहानीव । यथाहानि शीघ्रमतिनयति तद्वत् ॥

दशरात्रे तृतीयेऽहनि प्रउग उत नः प्रियेति सारस्वतमृचः । सूत्रितं च । उत नः प्रिया प्रियास्वित्याश्विनं प्रउग । आ० ७. १० । इति ॥ पवित्रेष्ट्यामुत नः प्रियेति सारस्वतस्य हविषोऽनुवाक्या । सूत्रितं च । उत नः प्रिया प्रियास्विमा जुह्वाना युष्मदा नमोभिः । आ० २ १२ । इति ॥

**उ॒त नः॑ प्रि॒या प्रि॒यासु॑ स॒प्तस्व॑सा॒ सुजु॑ष्टा । सर॑स्वती॒ स्तोम्या॑ भूत् ॥१०॥**

**उ॒त । नः॒ । प्रि॒या । प्रि॒यासु॑ । स॒प्तऽस्व॑सा । सुऽजु॑ष्टा । सर॑स्वती । स्तोम्या॑ । भू॒त् ॥१०॥**

उतापि च नोऽस्माकं प्रियासु प्रियाणां मध्ये प्रिया प्रियतमा सप्तस्वसा । गायत्र्यादीनि सप्त छंदांसि स्वसारो यस्यास्तादृशी । नदीरूपायास्तु गंगाद्याः सप्त नद्यः स्वसारः । सुजुष्टा सुष्ठु पुरातनैर्ऋषिभिः सेविता । एवंभूता सरस्वती देवी स्तोम्या भूत् । स्तोतव्या भवतु ॥ ॥३१॥

**आ॒प॒प्रुषी॒ पार्थि॑वान्यु॒रु रजो॑ अं॒तरि॑क्षं । सर॑स्वती नि॒दस्पा॑तु ॥११॥**

**आ॒ऽप॒प्रुषी॑ । पार्थि॑वानि । उ॒रु । रजः॑ । अं॒तरि॑क्षं । सर॑स्वती । नि॒दः । पा॒तु ॥११॥**

पार्थिवानि पृथिव्याः संबंधीन्युरूण्युरूणि विस्तीर्णानि रजो रजांसि लोकानंतरिक्षमंतरा यांत नभश्चापप्रुषी स्वतेजसा पूरितवती सरस्वती देवी निदो निंदकाच्छत्रोः पातु । अस्मान्रक्षतु ॥

**त्रि॒ष॒धस्था॑ स॒प्तधा॑तुः॒ पंच॑ जा॒ता व॒र्धयं॑ती । वाजे॑वाजे॒ हव्या॑ भूत् ॥१२॥**

**त्रि॒ऽस॒धस्था॑ । स॒प्तऽधा॑तुः । पंच॑ । जा॒ता । व॒र्धयं॑ती । वाजे॑ऽवाजे । हव्या॑ । भू॒त् ॥१२॥**

त्रिषधस्था त्रिषु लोकेषु सहावतिष्ठमाना त्रिलोकव्यापिनी सप्तधातुः । सप्त धातवोऽवयवा गायत्र्याद्या गंगाद्या वा यस्याः सा तथोक्ता । पंच जाता जातानि निषादपंचमांश्चतुरो वर्णान् गंधर्वादीन्वा वर्धयंत्यभिवृद्धान्कुर्वती । ईदृशी सरस्वती वाजे वाजे युद्धे युद्धे सर्वेषु युद्धेषु हव्या भूत् । ह्वातव्या भवति ॥

**प्र या म॑हि॒म्ना म॒हिना॑सु॒ चेकि॑ते द्यु॒म्नेभि॑र॒न्या अ॒पसा॑म॒पस्त॑मा ।**

**रथ॑ इव बृह॒ती वि॒भ्वने॑ कृ॒तोप॒स्तुत्या॑ चिकि॒तुषा॒ सर॑स्वती ॥१३॥**

**प्र । या । म॒हि॒म्ना । म॒हिना॑ । आ॒सु॒ । चेकि॑ते । द्यु॒म्नेभिः॑ । अ॒न्याः । अ॒पसा॑म् । अ॒पःऽत॑मा ।**

**रथः॑ऽइव । बृ॒ह॒ती । वि॒ऽभ्वने॑ । कृ॒ता । उ॒प॒ऽस्तुत्या॑ । चि॒कि॒तुषा॑ । सर॑स्वती ॥१३॥**

महिम्ना माहात्म्येन महिना महती द्युम्नेभिर्द्युम्नैर्द्योतमानैर्यशोभिरन्नैर्वा युक्ता सत्यास्वासां नदीनां देवतानां वा मध्ये या सरस्वती प्र चेकिते प्रकर्षेण ज्ञायते । या चान्या अन्यासां ॥ सुपां सुलुगिति षष्ठीबहुव-

चनस्य जस ॥ अपसां वेगवतीनां नदीनां मध्येऽपस्तमा वेगवत्तमा। या च रथ इव विभ्वने विभुत्वाय बृहती परिवृढा गुणैरधिका कृता प्रजापतिना निर्मिता सा सरस्वती चिकितुषा जानता स्तोत्रोपस्तुत्या। उपस्तोतव्या भवति ॥

सरस्वत्यभि नो नेषि वस्यो माप स्फरीः पयसा मा न आ धक्।
जुषस्व नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म ॥१४॥

सरस्वति। अभि। नः। नेषि। वस्यः। मा। अप। स्फरीः। पयसा। मा। नः। आ। धक्।
जुषस्व। नः। सख्या। वेश्या। च। मा। त्वत्। क्षेत्राणि। अरणानि। गन्म ॥१४॥

हे सरस्वति नोऽस्मान्वस्यो वसीयः प्रशस्तं वसु धनमभि नेषि। अभिप्रापय। माप स्फरीः। अपकृष्टान्मा कार्षीः ॥ स्फारो वृद्धिः। उपसर्गवशात्तद्विपरीतं वर्तते ॥ तथा पयसोदकेनाधिकेन नोऽस्मान्मा आ धक्। नाभिदह। न बाधस्व। अपि च नोऽस्माकं सख्या सख्यानि सखिकर्माणि वेश्या प्रवेशनानि च जुषस्व। सेवस्व। वयं च त्वत्सकाशादरणान्यरमणानि निकृष्टानि क्षेत्राणि मा गन्म। मा प्राप्नवाम। अपि तु रमणीयान्येव ॥ ॥३२॥ ॥५॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टकेऽष्टमोऽध्यायः समाप्तः ॥

ओं

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथ पंचमाष्टके प्रथमोऽध्याय आरभ्यते । षष्ठमंडलस्य पंचमेऽनुवाके चतुर्दश सूक्तानि । तत्र स्तुषे नरेत्येकादशर्चं प्रथमं सूक्तं । अत्रेयमनुक्रमणिका । स्तुष एकादशाश्विनं त्विति । मद्दन्द्रष्टा बार्हस्पत्यो भरद्वाज ऋषिः । अनुक्तत्वात्त्रिष्टुप् । अश्विनौ देवता ॥ प्रातरनुवाक आश्विने क्रताविन्दमादिके द्वे सूक्ते । आश्विनशस्त्रे चैतदेव । सूत्रितं च । स्तुषे नरेति सूक्ते । आ० ४. १५ । इति ॥

स्तुषे नरा दिवो अस्य प्रसंताश्विना हुवे जरमाणो अर्कैः ।
या सद्य उस्रा व्युषि ज्मो अंतान्युयूषतः पर्युरू वरांसि ॥१॥

स्तुषे । नरा । दिवः । अस्य । प्रऽसंता । अश्विना । हुवे । जरमाणः । अर्कैः ।
या । सद्यः । उस्रा । विऽउषि । ज्मः । अंतान् । युयूषतः । परि । उरू । वरांसि ॥१॥

दिवो द्युलोकस्य नरा नेतारावस्य भुवनस्य प्रसंता प्रभवतावीश्वरावश्विनाश्विनावश्वैरन्वितौ स्तुषे प्रगीतमंत्रसाध्यैः स्तोत्रैः स्तौमि अर्कैरर्चनीयमंत्रसाध्यैः शस्त्रैर्जरमाणः स्तुतिं कुर्वन्हुवे । आह्वयामि । कीदृशावित्यपेक्षायां । या यौ सद्य एवोस्रा शत्रूणां निवारकौ व्युषि व्युष्टौ निशायाः समाप्तौ ज्मः पृथिव्या अंतान् पर्यंतानुरूणि वरांसि रूपस्यावरकाणि तमांसि च परि परितो युयूषतः पृथक्कुरुतः । अथवा वरांसि तेजांसि तमोनिवारणात्परि युयूषतः । विस्तारयतः ॥

ता यज्ञमा शुचिभिश्चक्रमाणा रथस्य भानुं रुरुचू रजोभिः ।
पुरू वरांस्यमिता मिमानापो धन्वान्यति याथो अज्रान् ॥२॥

ता । यज्ञं । आ । शुचिऽभिः । चक्रमाणा । रथस्य । भानुं । रुरुचुः । रजःऽभिः ।
पुरु । वरांसि । अमिता । मिमाना । अपः । धन्वानि । अति । याथः । अज्रान् ॥२॥

किंच ता तौ प्रसिद्धावश्विनौ यज्ञमस्मदीयं यागमा चक्रमाणावभिक्रममाणौ शुचिभिर्निर्मलै रजोभिः स्वीयैस्तेजोभिः । रजो रजतेर्ज्योती रज उच्यते । नि० ४. १९ । इति यास्केनोक्तत्वात् । रथस्य स्वकीयस्य रथस्य भानुं दीप्तिं रुरुचुः । रोचयतः । अपि च पुरू बहूनि वरांसि तमोनिवारकाणि तेजांस्यमितापरिमितानि मिमाना निर्मिमाणावप उद्दिश्य धन्वानि मरुप्रदेशानज्रान्स्वकीयानश्वानति याथः । अतिक्रामयथः ॥

ता ह त्यद्वर्तिर्यदरध्रमुग्रेत्था धियं ऊहथुः शश्वदश्वैः ।
मनोजवेभिरिषिरैः शयध्यै परि व्यथिर्दाशुषो मर्त्यस्य ॥३॥

ता । ह । त्यत् । वर्तिः । यत् । अरध्रं । उग्रा । इत्था । धियः । ऊहथुः । शश्वत् । अश्वैः ।
मनःऽजवेभिः । इषिरैः । शयध्यै । परि । व्यथिः । दाशुषः । मर्त्यस्य ॥ ३ ॥

ता ह तौ खलूग्रावश्विनौ युवां यदरध्रमसमृद्धं त्यद्वर्तिर्यजमानस्य तद्गृहं समर्धयितुं गच्छथः । किंच त्येत्थ धियः स्तोतॄन्निरपरिरपणीयैः कामैर्मनोजवेभिर्मनोवेगैरश्वैः स्वीयैरश्वैः शश्वत्सर्वदोहथुः । स्वर्गं प्रापयथः । मर्त्यस्य मनुष्यस्य दाशुषो यजमानस्य व्यथिर्हिंसकः परि शयध्यै परिशयनाय दीर्घनिद्रायै युवाभ्यां क्रियतां ॥

ता नव्यसो जरमाणस्य मन्मोप भूषतो युयुजानसप्ती ।
शुभं पृक्षमिषमूर्जं वहंता होता यक्षत्प्रत्नो अध्रुग्युवाना ॥ ४ ॥
ता । नव्यसः । जरमाणस्य । मन्म । उप । भूषतः । युयुजानसप्ती इति युयुजानऽसप्ती ।
शुभं । पृक्षं । इषं । ऊर्जं । वहंता । होता । यक्षत् । प्रत्नः । अध्रुक् । युवाना ॥ ४ ॥

ता तावश्विनौ ययुजानसप्ती रथे युज्यमानाश्वौ शुभं शोभनं पृक्षमन्नं । पयः पृक्ष इत्यन्ननामसु पाठात । इष पुष्टिमूर्जं रसं च वहंता वहंतौ नव्यसो नवतरस्य जरमाणस्य स्तुतिं कुर्वतो मन्म मननीयं स्तोत्रमुप भूषतः । उपगच्छतः । यद्वा । स्तोत्रसमीपे भवतः । किंच युवाना नित्यतरुणौ तौ होता देवानामाह्वाताध्रुगद्रोग्धा प्रियः प्रत्नः पुराणोऽपियक्षत । यजतु ॥

ता वल्गू दस्रा पुरुशाकतमा प्रत्ना नव्यसा वचसा विवासे ।
या शंसते स्तुवते शंभविष्ठा बभूवतुर्गृणते चित्रराती ॥ ५ ॥
ता । वल्गू इति । दस्रा । पुरुशाकऽतमा । प्रत्ना । नव्यसा । वचसा । आ । विवासे ।
या । शंसते । स्तुवते । शंऽभविष्ठा । बभूवतुः । गृणते । चित्रराती इति चित्रऽराती ॥ ५ ॥

या यौ शंसते शस्त्रैः स्तुतिं कुर्वते स्तुवते स्तोत्रैः स्तुतिं कुर्वते जनाय शंभविष्ठातिशयेन सुखस्य भावयितारावतिशयेन सुखस्वरूपौ वा गृणते स्तोत्रशस्त्रव्यतिरिक्तलौकिकस्तुतिभिः स्तुवते च चित्रराती विचित्रदानौ बभूवतुः ता तौ वल्गू वलनशीलौ रुचिरौ वा पुरुशाकतमातिशयेन बहुकर्माणौ बहुसहायौ वा प्रत्ना प्रत्नौ पुराणौ । प्रत्नं प्रदिव इति पुराणनामसु पाठात । दस्रा दर्शनीयावश्विनौ नव्यसा नवतरेण वचसा स्तुत्या आ विवासे । परिचरामि ॥ ॥ १ ॥

ता भुज्युं विभिरद्भ्यः समुद्रात्तुग्रस्य सूनुमूहथू रजोभिः ।
अरेणुभिर्योजनेभिर्भुजंता पतत्रिभिरर्णसो निरुपस्थात् ॥ ६ ॥
ता । भुज्युं । विऽभिः । अत्ऽभ्यः । समुद्रात् । तुग्रस्य । सूनुं । ऊहथुः । रजःऽभिः ।
अरेणुऽभिः । योजनेभिः । भुजंता । पतत्रिऽभिः । अर्णसः । निः । उपऽस्थात् ॥ ६ ॥

ता तावश्विनौ युवां तुग्रस्य सूनुं भुज्युं भुज्युनामकं समुद्रमध्ये मग्नावं भुजता रक्षंतावरेणुभी रेणुरहितैरांतरिक्षै रजोभिर्मार्गैर्योजनेभी रथयुक्तैः पतत्रिभिः पतनवद्भिर्विभिरश्वैरर्णसो जलस्योपस्थादयोनेः समुद्राद्भ्यो निरूहथुः । निरगमयतं । समुद्रादद्भ्य इति प्रयोगो मातुर्गृहाद्गच्छतीतिवत ॥

वि जयुषा रथ्या यातमद्रिं श्रुतं हवं वृषणा वध्रिमत्याः ।
दशस्यंता शयवे पिप्यथुर्गामिति च्यवाना सुमतिं भुरण्यू ॥ ७ ॥

वि । जयुषा । रथ्या । यातं । अद्रिं । श्रुतं । हवं । वृषणा । वध्रिऽमत्याः ।
दशस्यंता । शयवे । पिप्यथुः । गां । इति । च्यवाना । सुऽमतिं । भुरण्यू इति ॥ ७ ॥

रथ्या हे रथारूढावश्विनौ जयुषा जयशीलेन रथेनाद्रिं मार्गे स्थितं पर्वतं वि यातं । व्यबाधेथां । यातिरत्र वधकर्मा । तथा च निगमांतरं । विभिंदुना नासत्या रथेन वि पर्वताँ अजरयू अयातं । ऋग्सं॰ ८ ११६ २० । इति । वृषणा कामानां वर्षितारौ वध्रिमत्याः पुत्रार्थिन्या हवमाह्वानं श्रुतं । शृणुतं । दशस्यंता स्तोतृभ्यः कामान् प्रयच्छंतौ शयवे यूयं स्तुवते गां निवृत्तप्रसवां पिप्यथुः । क्षीरेणाप्याययतं । तथा च निगमांतरं । शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गां । ऋग्सं॰ १ ११६ २२ । इति । इतीत्थं सुमतिं सुष्टुतिं च्यवाना गच्छंतौ भुरण्यू सर्वत्र गंतारौ यज्ञस्य भर्तारौ वा भवतं ॥

यद्रोदसी प्रदिवो अस्ति भूमा हेळो देवानामुत मर्त्यत्रा ।
तदादित्या वसवो रुद्रियासो रक्षोयुजे तपुरघं दधात ॥ ८ ॥
यत् । रोदसी इति । प्रऽदिवः । अस्ति । भूम । हेळः । देवानां । उत । मर्त्यऽत्रा ।
तत् । आदित्याः । वसवः । रुद्रियासः । रक्षःऽयुजे । तपुः । अघं । दधात ॥ ८ ॥

रोदसी हे द्यावापृथिव्यौ हे आदित्या हे वसवो रुद्रियासो हे रुद्रपुत्रा मरुतो मर्त्यत्रा मर्त्येष्वश्विनोः परिचारकेषु देवानां यो हेळः क्रोधो भूम महानस्ति तद्धेळस्तत्प्रतापकं रक्षोयुजे रक्षोभिर्युक्ताय रक्षसां स्वामिने प्रेरकाय वाघमाहृत्य दधात । कुरुत । अथवा रक्षोयुजे रक्षोभिर्युक्ताय यजमानेऽघमाहृत्य कुरुत ॥

य ईं राजानावृतुथा विदधद्रजसो मित्रो वरुणश्चिकेतत् ।
गंभीराय रक्षसे हेतिमस्य द्रोघाय चिद्वचस आनवाय ॥ ९ ॥
यः । ईं । राजाना । ऋतुऽथा । विऽदधत् । रजसः । मित्रः । वरुणः । चिकेतत् ।
गंभीराय । रक्षसे । हेतिं । अस्य । द्रोघाय । चित् । वचसे । आनवाय ॥ ९ ॥

यो नरो रजसः समस्तस्य लोकस्य । लोका रजांस्युच्यंत इति यास्केनोक्तत्वात् । राजानावीश्वरावश्विना वृतुथा काले काले विदधत् परिचरति तं मित्रो वरुणश्च चिकेतत् । जानीयात् । मित्रवरुणप्रभृतयो देवा एनं विदुरित्यर्थः । किंचायं परिचारको गंभीराय महाबलाय रक्षसे राक्षसाय हेतिं घातकमायुधमस्य । अस्यति । क्षिपति ॥ प्रथमपुरुषस्य मध्यमपुरुषेण व्यत्ययः ॥ द्रोघायाभिद्रोहात्मकायानवाय मनुष्यसंबंधिने वचसे चित् वचनायैव हेतिमस्यति । मनुष्याणामभिद्रोहायैनमास्कंदतीति ॥

अंतरश्चक्रस्तनयाय वर्तिर्द्युमता यातं नृवता रथेन ।
सनुत्येन त्यजसा मर्त्यस्य वनुष्यतामपि शीर्षा ववृक्तं ॥ १० ॥
अंतरः । चक्रः । तनयाय । वर्तिः । द्युऽमता । आ । यातं । नृऽवता । रथेन ।
सनुत्येन । त्यजसा । मर्त्यस्य । वनुष्यतां । अपि । शीर्षा । ववृक्तं ॥ १० ॥

हे अश्विनावंतरैरनिकृष्टैरश्वैर्युक्तेन द्युमता दीप्तिमता नृवता नेत्रा सारथिना युक्तेन । यद्वा । अश्वयुक्तेन । पतंगा नर इत्यश्वनामसु पाठात् । रथेन वर्तिरस्मदीयं गृहं तनयाय तनयं दातुमा यातं । अपि च सनुत्येन तिरोहितेन त्यजसा क्रोधेन । हणिस्त्यज इति क्रोधनामसु पाठात् । मर्त्यस्य मनुष्यस्य वनुष्यतां बाधमानानां । वनुष्यतिर्हंतिकर्मेति यास्केनोक्तत्वात् । शीर्षा शिरांस्यपि ववृक्तं । प्रवृक्तं ॥

आ परमाभिरुत मध्यमाभिर्नियुद्भिर्यातमवमाभिरर्वाक्।
दृळ्हस्य चिद्गोमतो वि व्रजस्य दुरो वर्तं गृणते चित्रराती ॥११॥
आ। परमाभिः। उत। मध्यमाभिः। नियुत्ऽभिः। यातं। अवमाभिः। अर्वाक्।
दृळ्हस्य। चित्। गोऽमतः। वि। व्रजस्य। दुरः। वर्तं। गृणते। चित्रराती इति चित्रऽराती ॥११॥

हे अश्विनौ परमाभिरुत्कृष्टाभिरुतापि च मध्यमाभिरनुत्कृष्टाभिरवमाभिर्निकृष्टाभिश्च नियुद्भिर्वाहैरर्वागस्मदभिमुखमा यातं। दृळ्हस्य चिद्दृढापिधानस्यापि गोमतो गोयुक्तस्य व्रजस्य गोष्ठस्य दुरो द्वाराणि वि वर्तं। विवृणुतं। किंच गृणते स्तुवते मह्यं चित्रराती विचित्रदानौ भवतं ॥ ॥३॥

क्व त्येत्येकादशर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षं। अत्रेयमनुक्रमणिका। क्व त्यैकपदांतं त्रैष्टुभमिति। आ वां सुम्न इत्येकादश्येकपदा त्रिष्टुप् शिष्टास्त्रिष्टुभः। आश्विनं त्वित्युक्तत्वादस्यापि सूक्तस्याश्विनौ देवता॥ प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छंदसि विनियोगः॥

क्व१त्या वल्गू पुरुहूताद्य दूतो न स्तोमोऽविदन्नमस्वान्।
आ यो अर्वाङ्नासत्या ववर्त प्रेष्ठा ह्यसथो अस्य मन्मन् ॥१॥
क्व। त्या। वल्गू इति। पुरुऽहूता। अद्य। दूतः। न। स्तोमः। अविदत्। नमस्वान्।
आ। यः। अर्वाक्। नासत्या। ववर्त। प्रेष्ठा। हि। असथः। अस्य। मन्मन् ॥१॥

क्व कुत्र स्थितौ वल्गू रुचिरौ पुरुहूता बहुभिराहूतौ त्या तावश्विनौ नमस्वान्हविषा युक्तः। नम आयुरित्यन्ननामसु पाठात्। स्तोमः पंचदशादिः स्तोमोऽद्य दूतो न प्रेरितो दूत इवाविदत्। विदत। यः स्तोमोऽर्वागस्मदभिमुखं नासत्याश्विनावा ववर्त आवर्तयत्। हे अश्विनौ युवामस्य स्तोतुर्मन्मन् स्तोत्रे प्रेष्ठा हि प्रियतमौ ह्यसथः। भवथः॥

अरं मे गंतं हवनायास्मै गृणाना यथा पिबाथो अंधः।
परि ह त्यद्वर्तिर्याथो रिषो न यत्परो नांतरस्तुतुर्यात् ॥२॥
अरं। मे। गंतं। हवनाय। अस्मै। गृणाना। यथा। पिबाथः। अंधः।
परि। ह। त्यत्। वर्तिः। याथः। रिषः। न। यत्। परः। न। अंतरः। तुतुर्यात् ॥२॥

हे अश्विनौ युवां मे मदीयायास्मै हवनायाह्वानायारं पर्याप्तं गंतं। गच्छतं। गृणाना स्तूयमानावंधः सोमं यथा पिबाथः पिबतं। रिषो हिंसकस्य शत्रोस्त्यद्वर्तिस्तद्गृहं परि याथः परितो याथः यद्वर्तिः परो विप्रकृष्टो न तुतुर्यात् न हिंस्यात्। अंतरः संनिकृष्टोऽपि न तुतुर्यात्। यद्वा। त्यद्वर्तिस्तदस्मदीयं गृहं रिषो हिंसकात्परि याथ। त्यद्वर्तिः परो विप्रकृष्टोऽतरः संनिकृष्टोऽपि न तुतुर्यात्। अयं भावः। यथास्मदीयं गृहं दूरस्थः संनिकृष्टोऽपि न हिंस्यात्तथा रक्षां कुरुथ इति॥

अकारि वामंधसो वरीमन्नस्तारि बर्हिः सुप्रायणतमं।
उत्तानहस्तो युवयुर्ववंदा वां नक्षंतो अद्रय आंजन् ॥३॥
अकारि। वां। अंधसः। वरीमन्। अस्तारि। बर्हिः। सुप्रऽअयनतमं।
उत्तानऽहस्तः। युवयुः। ववंद। आ। वां। नक्षंतः। अद्रयः। आंजन् ॥३॥

यां युवयोरर्थेऽध्मः सोमस्य वरीमन् विस्तृतेऽभिषवादौ यत्कृत्यमस्ति तदकारि । कृतं । सुप्रायणतमं मृदुतमं बर्हिरस्तारि । स्तीर्णं । उत्तानहस्तः कृताञ्जलिर्युवयोर्युवां कामयमानो होता वषट् । स्तौति । यौ युवां गच्छतो व्याप्नुवतः ॥ तृष पृष नश गताविति धातुः ॥ अद्रयो ग्रावाण आजन् । सोमरसमा समंताद्व्यक्तीकृतवंतः ॥

ऊर्ध्वो वामग्निरध्वरेष्वस्थात्प्र रातिरेति जूर्णिनी घृताची ।
प्र होता गूर्तमना उराणोऽयुक्त यो नासत्या हवीमन् ॥४॥
ऊर्ध्वः । वां । अग्निः । अध्वरेषु । अस्थात् । प्र । रातिः । एति । जूर्णिनी । घृताची ।
प्र । होता । गूर्तऽमनाः । उराणः । अयुक्त । यः । नासत्या । हवीमन् ॥४॥

अग्निर्वा युवयोर्यज्ञार्थमूर्ध्वोऽस्थात् । उदतिष्ठत् । अध्वरेषु यज्ञेषु प्रीति । सोमिद्ध आहवनीय गच्छति च । रातिर्धेन हविर्जूर्णिनी प्रगामिनी । जूर्णिर्जवतेर्वा । नि० ६ ४ । इति यास्केनोक्तत्वात् । घृताची घृतेनाक्ता । उपस्तीर्णाभिघारितेत्यर्थः । किंच होतारागा उरु कुर्वाणः प्र गूर्तमनाः प्रकर्षेणोद्युक्तमना भवति यो होता नासत्यावश्विनौ हवीमन्नाह्वाने स्तोत्रे वायुक्त योजयति ॥

अधि श्रिये दुहिता सूर्यस्य रथं तस्थौ पुरुभुजा शतोतिं ।
प्र मायाभिर्मायिना भूतमत्र नरा नृतू जनिमन्यज्ञियानां ॥५॥
अधि । श्रिये । दुहिता । सूर्यस्य । रथं । तस्थौ । पुरुऽभुजा । शतऽऊतिं ।
प्र । मायाभिः । मायिना । भूतं । अत्र । नरा । नृतू इति । जनिमन् । यज्ञियानां ॥५॥

पुरुभुजा हे पुरुभुजौ बहूना रक्षकौ वामश्विनौ युवयोः शतोतिं बहुरक्षक बहुगमन वा रथ सूर्यस्य दुहिता सूर्या श्रिये श्रयितुमधि तस्थौ । अध्यतिष्ठत् । अपि च यज्ञियाना देवानामत्र जनिमन्नस्मिन् जन्मनि प्रादुर्भावे मायाभिः प्रज्ञानैः । शची मायेति प्रज्ञानामसु पाठात् । मायिनौ प्रज्ञावंतौ नरा नेतारौ नृतू नृत्यंतौ भूत । भवत । यद्वा । हे मायिनौ प्राज्ञौ नरा नेतारौ नृतू नृत्यंतावश्विनौ यज्ञियाना देवानामत्र जनिमन् जन्मनि प्रादुर्भावे प्र भूत प्राज्ञतममग्न्यादिक देव मायाभिः प्रज्ञानैः कौशलैर्वा जितवंतौ स्थ इत्यर्थः । अयमर्थः प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्सूर्यां सावित्रीं । ऐ० ब्रा० ४ ७ । इत्यादिना स्पष्टीकृतः ॥ ॥३॥

युवं श्रीभिर्दर्शताभिराभिः शुभे पुष्टिमूहथुः सूर्यायाः ।
प्र वां वयो वपुषेऽनु पप्तन्नक्षद्वाणी सुष्टुता धिष्ण्या वां ॥६॥
युवं । श्रीभिः । दर्शताभिः । आभिः । शुभे । पुष्टिं । ऊहथुः । सूर्यायाः ।
प्र । वां । वयः । वपुषे । अनु । पप्तन् । नक्षत् । वाणी । सुऽस्तुता । धिष्ण्या । वां ॥६॥

हे अश्विनौ युवं युवां दर्शताभिर्दर्शनीयाभिराभिः श्रीमतां परिदृश्यमानाभिः श्रीभिर्लक्ष्मीभिः कांतिभिर्वा सूर्याया युवयोः पत्न्याः शुभे शोभनार्थं पुष्टिं पुर्तिमूहथुः । प्रापयथः । किंच वां युवां वयोऽश्वा वपुषे शोभार्थं प्रानु पप्तन् । प्रकर्षेणान्वपतन् । अपि च हे धिष्ण्या स्तुत्यर्हावश्विनौ वां युवां सुष्टुता वाक्स्तुतिरूपा स्तुतिर्नक्षत । व्याप्नोति ॥

आ वां वयोऽश्वासो वहिष्ठा अभि प्रयो नासत्या वहंतु ।
प्र वां रथो मनोजवा असर्जीषः पृक्ष इषिधो अनु पूर्वीः ॥७॥

आ। वां। वयः। अश्वासः। वहिष्ठाः। अभि। प्रयः। नासत्या। वहंतु।
प्र। वां। रथः। मनःऽजवाः। असर्जि। इषः। पृक्षः। इषिधः। अनु। पूर्वीः ॥७॥

हे नासत्यौ वां युवां वयो गंतारो वहिष्ठा वोढृतमा अश्वासोऽश्वाः प्रयः सोमरूपमन्नमभ्या वहंतु। प्रापयंतु। वां युवयोर्मनोजवा मनोवेगो रथः पृक्षः संपर्चनीया इषिध एषणीयाः पूर्वीर्बह्वीरिष्योऽन्नानि सोमाननु प्रासर्जि। विसृष्टः ॥

पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसक्रां।
स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन ॥८॥
पुरु। हि। वां। पुरुऽभुजा। देष्णं। धेनुं। नः। इषं। पिन्वतं। असक्रां।
स्तुतः। च। वां। माध्वी इति। सुऽस्तुतिः। च। रसाः। च। ये। वां। अनु। रातिं। अग्मन ॥८॥

पुरुभुजा हे पुर्णभुजौ बहुपालकौ वा वां युवयोर्देष्णं दातव्यं धनं पुरु बहु हि भवति। अतः कारणान्नोऽस्मभ्यं धेनुं प्रीणयित्रीमसक्रा मत्तोऽन्यत्रासंक्रमणीं। असंक्रामसंक्रमणीं। नि० ६. २९। इति यास्कनोक्तत्वात। इषमन्नं पिन्वतं। प्रयच्छतं। यद्वा। इषमेषणीयां धेनुमित्यन्वयः। किंच वा स्तुतः। स्तुवंतीति स्तुतः स्तोतारः। संति। माध्वी मदयितारावश्विनौ सुष्टुतिः शोभना स्तुतिश्च स्तोतृषु भवति। रसाः सोमरसाश्च संति। ये रसा वां युवयो रातिं दानमनुदिश्याग्मन देवयजनं प्राप्ताः। अयं भावः। सुष्टुतिं श्रुत्वा देवयजनं प्राप्तान सोमरसान पीत्वा स्तोतृभ्यः कामान्प्रयच्छतमिति शेषः ॥

उत मे ऋज्रे पुरयस्य रघ्वी सुमीळ्हे शतं पेरुके च पक्का।
शांडो दाद्धिरणिनः स्मद्दिष्टीन्दश वशासो अभिषाच ऋष्वान ॥९॥
उत। मे। ऋज्रे इति। पुरयस्य। रघ्वी इति। सुऽमीळ्हे। शतं। पेरुके। च। पक्का।
शांडः। दात्। हिरणिनः। स्मत्ऽदिष्टीन। दश। वशासः। अभिऽसाचः। ऋष्वान ॥९॥

उतापि च पुरयस्य पुरयनामकस्य स्वभूते ऋज्रे ऋजुगमने रघ्वी क्षिप्रगामिन्यौ वडवे मेऽश्विनोः स्तुतिं कुर्वतो ममाभूतां। सुमीळ्हे राज्ञि विद्यमानाः संतः शतं गावो ममाभुवन। पेरुके राज्ञि विद्यमानानि पक्का पक्कान्यन्नानि ममासन। शांडश्च राजा हिरणिनो हिरण्यवतः स्मद्दिष्टीन प्रशस्तदर्शनान्रथानश्वान्वा दश दशसंख्याकान्वशासोऽनुगुणानभिषाचः शत्रूणामभिभावुकानृष्वान्दर्शनीयान्पुरुषानश्विनोः स्तोतृभ्यो दात। ददातु ॥

सं वां शता नासत्या सहस्राश्वानां पुरुपंथा गिरे दात्।
भरद्वाजाय वीर नू गिरे दाद्धता रक्षांसि पुरुदंससा स्युः ॥१०॥
सं। वां। शता। नासत्या। सहस्रा। अश्वानां। पुरुऽपंथाः। गिरे। दात्।
भरत्ऽवाजाय। वीर। नु। गिरे। दात्। हता। रक्षांसि। पुरुऽदंससा। स्युरिति स्युः ॥१०॥

नासत्या हे अश्विनौ वा युवयोर्गिरे। गृणातीति गीः स्तोता। तस्मा अश्वानां शता शतानि सहस्रा सहस्राणि पुरुपंथाः पुरुपंथा नाम राजा सं दात। संददाति। वीरं हे वीरावश्विनौ॥ द्विवचनस्य लुक्॥ गिरे युवयोः स्तोत्रे भरद्वाजाय मह्यमपि नु क्षिप्रं दात्। ददातु। किंच हे पुरुदंससा बहुकर्माणावश्विनौ युवयोरनुग्रहाद्रक्षांसि हता हतानि स्युः ॥

आ वां सुम्ने वरिमन्त्सूरिभिः ष्यां ॥११॥
आ । वां । सुम्ने । वरिमन् । सूरिऽभिः । स्यां ॥११॥

हे अश्विनौ वरिमन्नित्युरुत्वे सुम्ने वां युवाभ्यां दत्ते सुखावहे धने । जनायं सुम्नमिति सुखनामसु पाठात् । सूरिभिर्विद्वद्भिः पुत्रादिभिः सह समन्तात्स्यां । भवेयं ॥ ॥४॥

उदु श्रिय इति षड़्च तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमुषोदेवताकं । अनुक्रम्यते च । उदु श्रिये षळुषस्या त्विति ॥ प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चैतदादिके द्वे सूक्ते । सूत्र्यते हि । उदु श्रिय इति सूक्ते । आ॰ ४.१४. । इति ॥

उदु श्रिय उषसो रोचमाना अस्थुरपां नोर्मयो रुशंतः ।
कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥१॥
उत् । ऊं इति । श्रिये । उषसः । रोचमानाः । अस्थुः । अपां । न । ऊर्मयः । रुशंतः ।
कृणोति । विश्वा । सुऽपथा । सुऽगानि । अभूत् । ऊं इति । वस्वी । दक्षिणा । मघोनी ॥१॥

रोचमाना दीप्यमाना रुशंतः शुक्लवर्णाः । रुशदिति वर्णनाम । नि॰ २ २०. । इति यास्कः । उषसः श्रिये शुगतः शोभायै जगद्व्याप्तुं वापामूर्मयो न उदकसंबाधिनस्तरंगा इवोदस्थुः । उत्तिष्ठंति । अनंतरमेकवचनागम. उषा विश्वा विश्वानि स्थानानि सुपथा सुमार्गाणि सुगानि सुखेन गम्यानि कृणोति । करोति । अपि च मघोनी धनवत्युषा वस्वी प्रशस्ता दक्षिणा समर्धयित्री चाभूत् ॥

भद्रा ददृक्ष उर्विया वि भास्युत्ते शोचिर्भानवो द्यामपप्तन् ।
आविर्वक्षः कृणुषे शुंभमानोषो देवि रोचमाना महोभिः ॥२॥
भद्रा । ददृक्षे । उर्विया । वि । भासि । उत् । ते । शोचिः । भानवः । द्यां । अपप्तन् ।
आविः । वक्षः । कृणुषे । शुंभमाना । उषः । देवि । रोचमाना । महःऽभिः ॥२॥

हे उषो देवि भद्रा कल्याणी ददृक्षे । दृश्यसे । उर्विया विस्तीर्णा च वि भासि । ते तव शोचिः शोचिषः ॥ षसो लुक् ॥ दीप्यमाना भानवो रश्मयो द्यामंतरिक्षमुदपप्तन् । उत्पतंति । किंच हे उषो देवि महोभिस्तेजोभिः शुंभमाना शोभमाना रोचमाना दीप्यमाना वक्षस्त्वदीयं रूपमाविष्कृणुषे । प्रकटीकरोषि ॥

वहंति सीमरुणासो रुशंतो गावः सुभगामुर्विया प्रथानां ।
अपेजते शूरो अस्तेव शत्रून्बाधते तमो अजिरो न वोळ्हा ॥३॥
वहंति । सीं । अरुणासः । रुशंतः । गावः । सुऽभगां । उर्विया । प्रथानां ।
अप । ईजते । शूरः । अस्ताऽइव । शत्रून् । बाधते । तमः । अजिरः । न । वोळ्हा ॥३॥

अरुणासो लोहितवर्णा रुशंतो दीप्यमाना गावो रश्मयः किरणा गाव इति रश्मिनामसु पाठात् । सुभगामुर्वियोर्वी विस्तीर्णा प्रथाना प्रथमाना सीमेनामुषोदेवतां वहंति । सेयमुषोदेवता शूरोऽस्तेव वीरः क्षेप्तेव शत्रून् तमोऽपेजते । अपगमयति । वोळ्हा सेनाया अजिरो न क्षिप्रगामी शत्रून्यथा बाधते तथा तमांसि बाधते च ॥

सुगोत ते सुपथा पर्वतेष्ववाते अपस्तरसि स्वभानो ।
मा न आ वह पृथुयामन्नृष्वे रयिं दिवो दुहितरिषयध्यै ॥४॥

सुऽगा । उत । ते । सुऽपथा । पर्वतेषु । अवाते । अपः । तरसि । स्वभानो इति स्वऽभानो ।
मा । नः । आ । वह । पृथुऽयामन् । ऋष्वे । रयिं । दिवः । दुहितः । इषयध्यै ॥४॥

हे उषो देवि पर्वतेषूत दुर्गेष्वप्यवाते गमनसाधनरहिते देशे सुपथा सुपथानि मार्गाणि सुगा सुगानि सुखेन गम्यानि ते तव भवंति । स्वभानो हे स्वप्रकाशेऽपोऽंतरिक्षमाकाशं । आप इत्यंतरिक्षनामसु पाठात् । सामुद्रिकीरपो वा तरसि । पृथुयामन् पृथुरथ ऋष्वे दर्शनीये दिवो दुहितरंतरिक्षसुते हे उषो देवि सा त्वमिषयध्या एषणीयं रयिं धनं नोऽस्मभ्यमा वह ॥

सा वह योक्षभिरवातोषो वरं वहसि जोषमनु ।
त्वं दिवो दुहितर्या ह देवी पूर्वहूतौ मंहना दर्शता भूः ॥५॥

सा । आ । वह । या । उक्षऽभिः । अवाता । उषः । वरं । वहसि । जोषं । अनु ।
त्वं । दिवः । दुहितः । या । ह । देवी । पूर्वऽहूतौ । मंहना । दर्शता । भूः ॥५॥

हे उषः सा त्वं वरं धनं मह्यमा वह । या त्वमवाताप्रतिगता जोषं प्रीतिमनूक्षभिरनडुद्भिरश्वैर्वा स्तोतृभ्यो वरं वहसि । किंच हे दिवो दुहितरंतरिक्षसुते या त्वं देवी द्योतमाना पूर्वहूतौ प्रथमाह्वाने प्रातरनुवाके मंहना पूजनीया भवसि सा त्वं दर्शता दर्शनीया भूरिति योजना । या दर्शता भूरित्यन्वये यद्वृत्तेन सामानाधिकरण्यात् भूरित्यस्य निघातो न स्यात् ॥

उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ ।
अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥६॥

उत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये । पितुऽभाजः । विऽउष्टौ ।
अमा । सते । वहसि । भूरि । वामं । उषः । देवि । दाशुषे । मर्त्याय ॥६॥

हे उषो देवि ते तव व्युष्टौ सत्या वयश्चित्पक्षिणोऽपि वसतेर्निवासस्थानादुदपप्तन् । उत्पतंति । ये पितुभाजो हविषां संभक्तारोऽन्नस्योपार्जका वा । पितुरित्यन्ननामसु पाठात् । नरः तेऽपि चोत्पतंति । किंच हे उषो देवि त्वममा समीपे संते वर्तमानाय दाशुषे हविषा प्रदात्रे मर्त्याय भूरि प्रभूतं वामं धनं वहसि ॥ ॥५॥

एषा स्येति षडृचं चतुर्थं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं । अनुक्रम्यते च । एषा स्येति । उपस्यं त्विति पूर्वसूक्त उक्तत्वादिदमप्युषोदेवताकं ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

एषा स्या नो दुहिता दिवोजाः क्षितीरुच्छंती मानुषीरजीगः ।
या भानुना रुशता राम्यास्वज्ञायि तिरस्तमसश्चिदक्तून् ॥१॥

एषा । स्या । नः । दुहिता । दिवःऽजाः । क्षितीः । उच्छंती । मानुषीः । अजीगरिति ।
या । भानुना । रुशता । राम्यासु । अज्ञायि । तिरः । तमसः । चित् । अक्तून् ॥१॥

एषा स्या सा दिवोजा दिवो जाता अत एव दुहिता दिवः पुत्र्युषा नोऽस्मदर्थमुच्छंती तमांसि वर्जयंती

चितीः प्रजा मानुषीरजीगः । उद्गिरति । जीगर्तिर्गिरतिकर्मा वा । नि० ६ ८ । इति यास्कः । प्रकाशयतीति यावत् । या रुशता दीप्यमानेन भानुना युक्ता राम्यासु याम्यासु रात्रिषु ॥ रेफयकारयोर्व्यत्ययः ॥ अक्तून्तरंश्चादितेजांसि तमसांसि तमांसि च तिरस्तिरस्कुर्वत्यदर्शि दृश्यते ॥

वि तद्ययुररुणयुग्भिरश्वैश्चित्रं भांत्युषसश्चंद्ररथाः ।
अग्रं यज्ञस्य बृहतो नयंतीर्वि ता बांधंते तम ऊर्म्यायाः ॥२॥
वि । तत् । ययुः । अरुणयुक्ऽभिः । अश्वैः । चित्रं । भांति । उषसः । चंद्रऽरथाः ।
अग्रं । यज्ञस्य । बृहतः । नयंतीः । वि । ताः । बाधंते । तमः । ऊर्म्यायाः ॥२॥

चंद्ररथाः कांतरथाः । चंद्रश्चंदतेः कांतिकर्मणः । नि० ११ ५ । इति यास्कः । ता उषसस्तत्तदानीं प्रातःकाले बृहतो बृंहणशीलस्य यज्ञस्याग्रं मुखं नयंतीः संपादयंत्योऽरुणयुग्भिररुणवर्णयुक्तैरश्वैर्वि ययुः । विस्तीर्णं यांति । चित्रं यथा भवति तथा भांति च । ऊर्म्याया रात्रेः । ऊर्म्येति रात्रिनामसु पाठात् । तमो वि बाधंते । सम्यगपनयंति च ॥

श्रवो वाजमिषमूर्जं वहंतीर्नि दाशुष उषसो मर्त्याय ।
मघोनीर्वीरवत्पत्यमाना अवो धात विधते रत्नमद्य ॥३॥
श्रवः । वाजं । इषं । ऊर्जं । वहंतीः । नि । दाशुषे । उषसः । मर्त्याय ।
मघोनीः । वीरऽवत् । पत्यमानाः । अवः । धात । विधते । रत्नं । अद्य ॥३॥

हे उषसो दाशुषे हविषां दात्रे मर्त्याय श्रवः कीर्तिं वाजं बलमिषमन्नमूर्जं रसं च वहंतीर्वहंत्यो यूयं मघोनीर्धनवत्यः पत्यमाना गच्छंत्योऽद्य विधते परिचरते मह्यं वीरवत्पुत्रपौत्रादिसहितमवोऽन्नं । सिनमव इत्यन्ननामसु पाठात् । रत्नं धनं च । रात्रं रत्नमिति धननामसु पाठात् । नि धात । नितरां धत्त ॥

इदा हि वो विधते रत्नमस्तीदा वीराय दाशुष उषासः ।
इदा विप्राय जरते यदुक्था नि ष्म मावंते वहथा पुरा चित् ॥४॥
इदा । हि । वः । विधते । रत्नं । अस्ति । इदा । वीराय । दाशुषे । उषसः ।
इदा । विप्राय । जरते । यत् । उक्था । नि । स्म । माऽवंते । वहथ । पुरा । चित् ॥४॥

हे उषस इदा हीदानीमेव वो युष्माकं विधते परिचरते दातुं रत्नं धनमस्ति । इदा हीदानीमेव वीराय प्रेरयित्रे हविषां दाशुषे यजमानाय दातुं वो रत्नमस्ति । इदा हीदानीमेव विप्राय प्राज्ञाय जरते स्तुवते दातुं वो रत्नमस्ति । यद्यस्मिन्विप्र उक्थोक्थनामकानि स्तोत्राणि विशंति मावंते मत्सदृशाय यजमानाय तद्रत्नं नि वहथ । पुरा चित् पुरापि रत्नं मह्यं दत्त ॥

इदा हि त उषो अद्रिसानो गोत्रा गवामंगिरसो गृणंति ।
व्यर्केण बिभिदुर्ब्रह्मणा च सत्या नृणामभवद्देवहूतिः ॥५॥
इदा । हि । ते । उषः । अद्रिसानो इत्यद्रिऽसानो । गोत्रा । गवां । अंगिरसः । गृणंति ।
वि । अर्केण । बिभिदुः । ब्रह्मणा । च । सत्या । नृणां । अभवत् । देवऽहूतिः ॥५॥

हे उषोऽद्रिमानो आदृतमानो ते तव प्रसादाद्धिद्वा हि सद्य एव गवां गोत्रा संघानंगिरसो गृणंति। उत्सृजंति। तथा च निगमांतरं। गवां गोत्रमुदसृजो यदंगिरः। ऋग्वे॰ २. २३. १८.। इति। अर्केणार्चनीयेन ब्रह्मणा स्तोत्रेण वि बिभिदुः। तमांसि विदारयंति च। नृणां नेतॄणां तेषामंगिरसां देवहूतिर्देवविषया स्तुतिः सत्या सत्यफलाभवत्॥

उच्छा दिवो दुहितः प्रत्नवन्नो भरद्वाजवद्विधते मघोनि।
सुवीरं रयिं गृणते रिरीह्युरुगायमधि धेहि श्रवो नः॥६॥
उच्छ। दिवः। दुहितरिति। प्रत्नऽवत्। नः। भरद्वाजऽवत्। विधते। मघोनि।
सुऽवीरं। रयिं। गृणते। रिरीहि। उरुऽगायं। अधि। धेहि। श्रवः। नः॥६॥

हे दिवो दुहितरुषः प्रत्नवत्पुरातनेभ्य इव नोऽस्मदर्थमुच्छ। तमांसि वर्जय। हे मघोनि भरद्वाजवद्विधते परिचरते। भरद्वाजवदिति वचनादन्योऽयमस्ति भरद्वाजः। तथा च ब्राह्मणं। प्राणो वै भरद्वाजवदिति। गृणते स्तुतिं कुर्वते मह्यं सुवीरं कल्याणपुत्रपौत्रादियुक्तं रयिं धनं रिरीहि। देहि। किंच नोऽस्मभ्यमुरुगायं बहुभिर्गातव्यं श्रवोऽन्नमधि धेहि। अधिकं प्रयच्छ॥ ॥६॥

वपुर्नु तदित्येकादशर्चं पंचमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं मारुतं। तथा चानुक्रम्यते। वपुर्न्वेकादश मारुतमिति॥ व्यूळ्हे दशरात्रे पंचमेऽहन्याग्निमारुत इदं सूक्तं मारुतनिविद्धानं। सूत्रितं च। हविष्पातं वपुर्नु तत्। आ॰ ८. ८.। इति॥ वैश्वदेवे पर्वणि मारुतसप्तकपालस्य प्र चित्रमर्कमिति याज्या। प्र चित्रमर्कं गृणते तुरायेति नवानुयाज्याः। आ॰ २. १६। इति॥ एकादशिने मारुते पशौ प्र चित्रमर्कमित्येषैव याज्या। सूत्रितं च। प्र चित्रमर्कं गृणते तुरायारा इवेदचरमा अहेव। आ॰ ३. ७.। इति॥

वपुर्नु तच्चिकितुषे चिदस्तु समानं नाम धेनु पत्यमानं।
मर्तेष्वन्यद्दोहसे पीपाय सकृच्छुक्रं दुदुहे पृश्निरूधः॥१॥
वपुः। नु। तत्। चिकितुषे। चित्। अस्तु। समानं। नाम। धेनु। पत्यमानं।
मर्तेषु। अन्यत्। दोहसे। पीपाय। सकृत्। शुक्रं। दुदुहे। पृश्निः। ऊधः॥१॥

तत्प्रसिद्धं समानमेकरूपं। मरुतः सर्वदा समानरूपाः। तथा च निगमांतरं। अज्येष्ठासो अकनिष्ठास एते। ऋग्वे॰ ५. ६०. ५। इति। नाम स्थिराणामपि नामकं धेनु प्रीणयितृ पत्यमानं सर्वदा गच्छद्वपुर्मरुतां रूपं चिकितुषे विदुषे स्तोत्रे नु क्षिप्रमस्तु। प्रादुर्भवतु। चिदिति पूरकं। किंच तद्रूपं मर्त्येषु मर्त्यलोकेऽन्यद्दोषधिवनस्पत्यादिकं दोहसे कामान्दोग्धुं पीपाय। आप्याययति। किंच मरुतामेव निर्देशात्पृश्निरंतरिक्षं सकृत्संवत्सरस्य वर्षासु शुक्रं शुक्लवर्णमूधः उदकं दुदुहे। क्षरति॥

ये अग्नयो न शोशुचन्निधाना द्विर्यत्त्रिर्मरुतो वावृधंत।
अरेणवो हिरण्ययास एषां साकं नृम्णैः पौंस्येभिश्च भूवन्॥२॥
ये। अग्नयः। न। शोशुचन्। इधानाः। द्विः। यत्। त्रिः। मरुतः। ववृधंत।
अरेणवः। हिरण्ययासः। एषां। साकं। नृम्णैः। पौंस्येभिः। च। भूवन्॥२॥

ये मरुत इधाना अग्नयो न समिध्यमाना अग्नय इव शोशुचन् दीप्यंते। यद्ये मरुतो द्विर्द्विगुणं त्रिस्त्रिगुणं च ववृधंत इच्छानुरूपं वर्धंते॥ संहितायां दीर्घश्छांदसः॥ एषां मरुतां रथा अरेणवो रेणुरहिता हिरण्य-

यासो हिरण्मयालंकारांश्च भवति । ते मरुतो मुम्णीधिभिः पौंस्यैर्बलैश्च साकं सार्धं भुवन् । प्रादुर्भवंति । तथा च निगमांतरं । ये पृषतीभिर्ऋष्टिभिः । ऋग्वे० १ ३७ २ । इति ॥

रुद्रस्य ये मीळ्हुषः संति पुत्रा यांश्चो नु दाधृविर्भरध्यै ।
विदे हि माता महो मही षा सेत्पृश्निः सुभ्वे३ गर्भमाधात् ॥३॥

रुद्रस्य । ये । मीळ्हुषः । संति । पुत्राः । यान् । चो इति । नु । दाधृविः । भरध्यै ।
विदे । हि । माता । महः । मही । सा । सा । इत् । पृश्निः । सुऽभ्वे । गर्भं । आ । अधात् ॥३॥

मीळ्हुषः सेक्तू रुद्रस्य पुत्रा ये मरुतः संति दाधृविर्धारयित्री पृश्निरंतरिक्षं यांश्चो नु यांश्च मरुतो नु भरध्यै भर्तुं क्षमा भवति । विदे हि सर्वज्ञाता हि महो महतामेषां माता सा पृश्निर्मही महती । किंच सा पृश्निः सुभ्वे सुष्ठु सम्यक् भवनाय गर्भमुदकमाधात् । आदधाति ॥

न य ईषंते जनुषोऽया न्व१ंतः संतोऽवद्यानि पुनानाः ।
निर्यद्दुह्रे शुचयोऽनु जोषमनु श्रिया तन्वमुक्षमाणाः ॥४॥

न । ये । ईषंते । जनुषः । अया । नु । अंतरिति । संतः । अवद्यानि । पुनानाः ।
निः । यत् । दुह्रे । शुचयः । अनु । जोषं । अनु । श्रिया । तन्वं । उक्षमाणाः ॥४॥

ये प्रसिद्धा मरुतो जनुषो जनान् स्तोतॄन्प्रत्ययायैन गमनसाधनेन नेषंते न गच्छंति । किं तेषां रक्षणीयत्वाभावाद्गमनाभावो नेत्याह । अंतः सतः सर्वेषां हृदि वर्तमाना एवावद्यानि पापानि पुनानाः शोधयंत । तथा च निगमांतरं । प्राणा वै मरुतः स्वापयः । ऐ० ब्रा० ३ १६ । इति । अतः सर्वप्राणिनां हृदि वर्तमानत्वात्तेषां गमनं नास्तीति । अध्यात्मं प्राणरूपेणावस्थानं दर्शितं भवति शीघ्रगामित्वं तु तेषामाधिदैवतरूपेणेति द्रष्टव्यं । यद्यदा शुचयो दीप्यमाना मरुतो जोषमनु स्तोतॄणां काममनु निर्दुह्रे नितरां दुहंत्युदकं । तथा श्रिया दीप्त्या त्वनुगतास्तन्वमात्मीयं शरीरं प्रकाशयंत उक्षमाणा भूमिं सिंचंतो भवंति । यद्वा । तन्वं विस्तीर्णं यथा भवति तथोक्षमाणा भूमिं सिंचंतो भवंतीत्यर्थः ॥

मक्षू न येषु दोहसे चिदया आ नाम धृष्णु मारुतं दधानाः ।
न ये स्तौना अयासो मह्ना नू चित्सुदानुरव यासदुग्रान् ॥५॥

मक्षु । न । येषु । दोहसे । चित् । अयाः । आ । नाम । धृष्णु । मारुतं । दधानाः ।
न । ये । स्तौनाः । अयासः । मह्ना । नु । चित् । सुऽदानुः । अव । यासत् । उग्रान् ॥५॥

येषु प्रसिद्धेषु मरुत्सु धृष्णु धर्षकं मारुतं नाम मरुत्संबंधकं शस्त्रमादधाना उच्चारयंतोऽयाः उपगंतारः स्तोतारो मक्षु क्षिप्रं दोहसे कामान्दोग्धुं क्षमा भवंति । नेति संप्रत्यर्थे । ये स्तौनाः स्तेनाः स्तैर्गोहिता वा स्तोतॄधनानामपहर्तारोऽयासो गंतारो भवंति । मह्ना महत्त्वेन युक्ताश्च भवंति उग्रानेतान्क्रुद्धान् सुदानुः शोभनदानो यजमानोऽव यासत् । अवयजते । अपगतक्रोधान् करोति । नेति संप्रत्यर्थे ॥ ॥ ५ ॥

त इदुग्राः शवसा धृष्णुषेणा उभे युजंत रोदसी सुमेके ।
अध स्मैषु रोदसी स्वशोचिरामवत्सु तस्थौ न रोकः ॥६॥

ते। इत्। उग्राः। शवसा। धृष्णुऽसेनाः। उभे इति। युजंत। रोदसी इति। सुमेके इति सुऽमेके।

अध। स्म। एषु। रोदसी। स्वऽशोचिः। आ। अमवत्ऽसु। तस्थौ। न। रोकः ॥६॥

ते मरुत उग्राः शवसा बलेन वेगेन युक्ता धृष्णुषेणा धर्षकसेनाः सुमेके सुरूपे उभे रोदसी द्यावापृथिव्यौ युजत। योजयंति। वृष्ट्या पृथिवीं तर्पयंतीत्यभिप्रायः। अध अधापि चैषु येषु मरुत्सु रोदसी रुद्रस्य पत्नी माध्यमिकी वाक् स्वशोचिः स्वदीप्तिर्वर्तते ऽमवत्सु बलवत्सु तेषु रोको दीप्तिर्बाधको वा ना तस्थौ। न तिष्ठति। न निःसरत्येवेत्यर्थः ॥

अनेनो वो मरुतो यामो अस्त्वनश्वश्चिद्यमजत्यरथीः।
अनवसो अनभीशू रजस्तूर्वि रोदसी पथ्या याति साधन ॥७॥
अनेनः। वः। मरुतः। यामः। अस्तु। अनश्वः। चित्। यं। अजति। अरथीः।
अनवसः। अनभीशुः। रजःऽतूः। वि। रोदसी इति। पथ्याः। याति। साधन ॥७॥

हे मरुतो वो युष्माकं संबंधी यामो रथोऽनेनः पापरहितं यथा भवति तथास्तु। प्रादुर्भवतु। किंच यं याममरथीः। रथिः सारथिः। न रथिररथीः। असारथिरपि स्तोताजति प्रेरयति स रथोऽनश्वश्चिदश्वरहितोऽप्यनवसः पथ्यदनरहितोऽनभीशुः पाशरहितोऽपि रजस्तूरुदकस्य प्रेरकः साधन स्तोतॄणां कामान् साधयन् रोदसी द्यावापृथिव्यौ पथ्याः पथोऽतरिक्षमार्गान् वि याति। विविधं गच्छति ॥

नास्य वर्ता न तरुता न्वस्ति मरुतो यमवथ वाजसातौ।
तोके वा गोषु तनये यमप्सु स व्रजं दर्ता पार्ये अध द्योः ॥८॥
न। अस्य। वर्ता। न। तरुता। नु। अस्ति। मरुतः। यं। अवथ। वाजऽसातौ।
तोके। वा। गोषु। तनये। यं। अप्ऽसु। सः। व्रजं। दर्ता। पार्ये। अध। द्योः ॥८॥

हे मरुतो वाजसातौ संग्रामे यमवथ रक्षथ अस्य जनस्य वर्ता प्रेरको नास्ति। अस्य तरुता नु हिंसिता च नास्ति। अथापि च तोके पुत्रे तनये पौत्रे धने वा गोषु वाप्सु वा निमित्तभूतेषु यमवथ स पार्ये संग्रामे द्योर्दीप्तस्यापि विजिगीषोर्वा शत्रोर्व्रजं गवां संघं दर्ता दारयिता भवति ॥

प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वं।
ये सहांसि सहसा सहंते रेजते अग्ने पृथिवी मखेभ्यः ॥९॥
प्र। चित्रं। अर्कं। गृणते। तुराय। मारुताय। स्वऽतवसे। भरध्वं।
ये। सहांसि। सहसा। सहंते। रेजते। अग्ने। पृथिवी। मखेभ्यः ॥९॥

हे अग्ने गृणते शब्दं कुर्वते स्तूयमानाय वा तुराय त्वरिताय स्वतवसे स्वभूतबलाय मारुताय मरुतां गणाय चित्रं दर्शनीयमर्कमन्नं हविः। स्वधार्क इत्यन्ननामसु पाठात्। प्र भरध्वं। त्वत्सहायभूता ऋत्विजस्त्वं च सर्वे यूयं प्रभरत ॥ यथा लोके बहुर्त्विककार्यकरेषु मुख्यमेकं संबोध्य यूयमेवं कुरुतेति प्रार्थना तद्वदत्रापि मुख्यमग्निमेकमेव संबोध्य प्रभरध्वमिति बहुवचनप्रयोगः ॥ ये मरुतः सहांसि शत्रूणां बलानि सहसा बलेन सहंते अभिभवंति मखेभ्यो मंहनीयेभ्यो मरुद्भ्यो भयात्पृथिवी रेजते। कंपते ॥ मारुतायेति तद्धितवृत्तावंतर्भूता-

नामपि मरुतां बुद्ध्या प्रविभागात य इति प्रत्ययमर्शः। यथा महाभाष्ये। अथ शब्दानुशासनं। केषां शब्दानां। म० १.१.१.। इति। यथा वा लोके। राजपुरुष इत्युक्ते कस्य राज्ञ इति ॥

त्विषीमंतो अध्वरस्येव दिद्युत्तृषुच्यवसो जुह्वो३ नाग्नेः।
अर्चत्रयो धुनयो न वीरा भ्राजज्जन्मानो मरुतो अधृष्टाः ॥१०॥
त्विषिऽमंतः। अध्वरस्यऽइव। दिद्युत्। तृषुऽच्यवसः। जुह्वः। न। अग्नेः।
अर्चत्रयः। धुनयः। न। वीराः। भ्राजत्ऽजन्मानः। मरुतः। अधृष्टाः ॥१०॥

मरुतोऽध्वरस्येव यज्ञस्येव दिद्युत द्योतमानास्तृषुच्यवसः क्षिप्रगमना अग्नेर्जुह्वो न रश्मय इव त्विषीमंतो दीप्तिमंतोऽर्चत्रयोऽर्चनीया धुनयो न सपत्नान्कंपयंत इव वीराः शूरा भ्राजज्जन्मानो दीप्तशरीरा अधृष्टाः परैरनभिभूताश्च भवंति ॥

तं वृधंतं मारुतं भ्राजदृष्टिं रुद्रस्य सूनुं हवसा विवासे।
दिवः शर्धाय शुचयो मनीषा गिरयो नाप उग्रा अस्पृध्रन् ॥११॥
तं। वृधंतं। मारुतं। भ्राजत्ऽऋष्टिं। रुद्रस्य। सूनुं। हवसा। आ। विवासे।
दिवः। शर्धाय। शुचयः। मनीषाः। गिरयः। न। आपः। उग्राः। अस्पृध्रन् ॥११॥

तं प्रसिद्धं वृधंतं वर्धमानं भ्राजदृष्टिं भ्राजमानर्ष्टिं रुद्रस्य सूनुं पुत्रं मारुतं मरुद्गणं हवसा स्तोत्रेणा विवासे। परिचरामि। किंच दिवः स्तोतुः शुचयो निर्मला मनीषाः स्तुतय उग्रा उद्गूर्णाः शर्धाय मारुताय बलाय। तृचः शर्ध इति बलनामसु पाठात्। आप आप्नुवंतो गिरयो न मेघा इव। गिरिर्व्रज इति मेघनामसु पाठात्। अस्पृध्रन्। अस्पर्धंत ॥ ॥८॥

विश्वेषां व इत्येकादशर्चं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं मैत्रावरुणं। तथा चानुक्रम्यते। विश्वेषां मैत्रावरुणमिति ॥ सूक्तविनियोगो लैंगिकः ॥ मैत्रावरुणे पशावा यातं मित्रावरुणेति पशुपुरोडाशस्यानुवाक्या। सूत्रितं च। आ यातं मित्रावरुणा सुशस्त्या नो मित्रावरुणा हव्यजुष्टिं। आ० ३.८। इति ॥ व्यूळ्हे दशरात्रे सप्तमेऽहनि प्रउगशस्त्रे प्र यद्वामिति मैत्रावरुणस्तृतीयस्तृचः। सूत्रितं च। प्र यद्वां मित्रावरुणा स्पूर्धन्ना गोमता नासत्या रथेन। आ० ८.९.। इति ॥

विश्वेषां वः सतां ज्येष्ठतमा गीर्भिर्मित्रावरुणा वावृधध्यै।
सं या रश्मेव यमतुर्यमिष्ठा द्वा जनाँ असमा बाहुभिः स्वैः ॥१॥
विश्वेषां। वः। सतां। ज्येष्ठऽतमा। गीःऽभिः। मित्रावरुणा। ववृधध्यै।
सं। या। रश्माऽइव। यमतुः। यमिष्ठा। द्वा। जनान्। असमा। बाहुऽभिः। स्वैः ॥१॥

विश्वेषां सतां मध्ये ज्येष्ठतमा ज्येष्ठतमौ मित्रावरुणौ वो वां गीर्भिः स्तुतिभिर्ववृधध्यै वर्धयितुं प्रवृत्तोऽस्मि। या यौ द्वा द्वौ सहितावसमा विषमौ। त्रिरश्वि इति चतुर्थ्यर्थे इत्यः। ऋग्वे० १.११७.२। इति निगमांतरेणा मास्य दर्शितं। यमिष्ठा यंतृतमौ स्वैरात्मीयैर्बाहुभी रश्मेव रश्मिनेवाश्वान् जनान् स यमतुः संयच्छतः। बाहुभिरिति बहुवचनं पूजार्थं ॥

इयं मद्वां प्र स्तृणीते मनीषोप प्रिया नमसा बर्हिरच्छ।
यंतं नो मित्रावरुणावधृष्टं छर्दिर्यद्वां वरूथ्यं सुदानू ॥२॥

इयं। मत्। वां। प्र। स्तृणीते। मनीषा। उप। प्रिया। नमसा। बर्हिः। अच्छ।
यंतं। नः। मित्रावरुणा। अधृष्टं। छर्दिः। यत्। वां। वरूथ्यं। सुदानू इति सुऽदानू ॥२॥

हे मित्रावरुणौ वां युवां मत् ममेयं मनीषा स्तुतिः प्र स्तृणीते। प्रच्छादयति। प्रिया हे प्रियौ युवां नमसान्नेन हविषा सहोप गच्छति च। युवयोर्बर्हिर्यज्ञमच्छाभिगच्छति च। हे मित्रावरुणौ नोऽस्मभ्यमधृष्टमनभिभूतं छर्दिर्गृहं यंतं। प्रयच्छतं। हे सुदानू शोभनदानौ वां युवयोः संबंधि युवाभ्यां देयं यद्गृहं वरूथ्यं शीतयातातपानां वारयितृ भवति ॥

आ यातं मित्रावरुणा सुशस्त्युप प्रिया नमसा हूयमाना।
सं यावप्नःस्थो अपसेव जनाञ्छ्रुधीयतश्चिद्यतथो महित्वा ॥३॥
आ। यातं। मित्रावरुणा। सुऽशस्ति। उप। प्रिया। नमसा। हूयमाना।
सं। या। अप्नःऽस्थः। अपसाऽइव। जनान्। श्रुधिऽयतः। चित्। यतथः। महिऽत्वा ॥३॥

हे मित्रावरुणौ सुशस्ति शोभनशंसनं नमसान्नेन हविषा स्तोत्रेण वा हूयमाना स्तूयमानौ प्रिया विश्वस्य प्रियावुपा यातं। उपागच्छतं। यौ महित्वा महत्त्वेन युक्तौ युवां श्रुधीयतः श्रुधिमन्नं यशो वात्मन इच्छतो जनान् अप्नःस्थः कर्मण्यधिकृतः पुरुषः। अप्नोऽप्न इति कर्मनामसु पाठात्। अपसेव कर्मणेव सं यतथः संयच्छथः ॥

अश्वा न या वाजिना पूतबंधू ऋता यद्गर्भमदितिर्भरध्यै।
प्र या महि महांता जायमाना घोरा मर्ताय रिपवे नि दीधः ॥४॥
अश्वा। न। या। वाजिना। पूतबंधू इति पूतऽबंधू। ऋता। यत्। गर्भं। अदितिः। भरध्यै।
प्र। या। महि। महांता। जायमाना। घोरा। मर्ताय। रिपवे। नि। दीधरिति दीधः ॥४॥

या यावश्वा नाश्वाविव वाजिना वाजिनौ बलिनौ पूतबंधू पूतस्तोत्रावृता सत्यौ च। यत् यौ गर्भं गर्भभूतावदितिर्देवी भरध्यै बभार। किंच या यौ जायमाना जायमानावेव महि महतो महांता महत्तरौ प्रभूतौ मित्रावरुणौ मर्ताय मर्त्याय रिपवे हिंसकाय घोरा घोरौ घातकौ नि दीधः निदधारादितिः स्तोदरे ॥

विश्वे यद्वां मंहना मंदमानाः क्षत्रं देवासो अदधुः सजोषाः।
परि यद्भूथो रोदसी चिदुर्वी संति स्पशो अदब्धासो अमूराः ॥५॥
विश्वे। यत्। वां। मंहना। मंदमानाः। क्षत्रं। देवासः। अदधुः। सऽजोषाः।
परि। यत्। भूथः। रोदसी इति। चित्। उर्वी इति। संति। स्पशः। अदब्धासः। अमूराः ॥५॥

विश्वे सर्वे देवासो देवाः सजोषाः परस्परं प्रीतियुक्ता यद्यौ वां युवां मंहना महत्त्वेन मंदमानाः स्तुवंतः क्षत्रं बलमदधुः धत्तवंतः। किंच यद्यौ युवामुर्वी विस्तीर्णे रोदसी द्यावापृथिव्यौ परि भूथः परिभवथः तयोर्युवयोरदब्धासोऽहिंसिता अमूरा अमूढाः स्पशो रश्मयश्चरा वा संति ॥ ॥९॥

ता हि क्षत्रं धारयेथे अनु द्यून्दृंहेथे सानुमुपमादिव द्योः।
दृळ्हो नक्षत्र उत विश्वदेवो भूमिमातान्द्यां धासिनायोः ॥६॥

ता। हि। क्षत्रं। धारयेथे इति। अनु। द्यून्। दृंहेथे इति। सानुं। उपमात्ऽइव। द्योः।
दृळ्हः। नक्षत्रः। उत। विश्वऽदेवः। भूमिं। आ। अतान्। द्यां। धासिना। आयोः॥६॥

ता तौ मित्रावरुणौ युवामनु द्यून् दिवसे दिवसे क्षत्रं बलं धारयेथे हि। द्योरंतरिक्षस्य सानुं समुच्छ्रितप्रदेशं मेघं सूर्यं वा दृंहथे। दृढीकुरुत। उपमादिव। उपमीयंते प्रक्षिप्यंत इत्युपमात्स्थूणा। सा यथा वंशं धारयति तद्वदित्यर्थः। दृंळ्हो युवाभ्यां दृढीकृतश्च मेघो नक्षत्रोऽंतरिक्षं व्याप्नुवान् उतापि च विश्वदेवः सूर्यो भूमिं द्यां दिवं चायोर्मनुष्यस्य। द्रुह्यव आयव इति मनुष्यनामसु पाठात्। धासिनान्नेन हविषा। स्रुत धासिरित्यन्ननामसु पाठात्। आप्यायितः सन् आतान्। आतनोति युवाभ्यां दृढीकृत एव॥

ता विग्रं धैथे जठरं पृणध्या आ यत्सद्म सभृतयः पृणंति।
न मृष्यंते युवतयोऽवाता वि यत्पयो विश्वजिन्वा भरंते॥७॥
ता। विग्रं। धैथे इति। जठरं। पृणध्यै। आ। यत्। सद्म। सऽभृतयः। पृणंति।
न। मृष्यंते। युवतयः। अवाताः। वि। यत्। पयः। विश्वऽजिन्वा। भरंते॥७॥

ता तौ मित्रावरुणौ युवां विग्रं प्राज्ञं यजमानं। विप्रो विग्र इति मेधाविनामसु पाठात्। धैथे धारयथो जठरमुदरं पृणध्यै सोमेन पूरयितुं। यद्यदा सभृतयः सह भ्रियमाणा ऋत्विजः सद्म यज्ञसदनमा पृणंति आपूरयंति। विश्वजिन्वा हे विश्वजिन्वानौ यद्यदा पयो जलं भवद्भ्यां प्रहितं तदा युवतयो नद्यो दिशो वा न मृष्यंते। रजसा नाभिभूयंते। अवाता अशुष्काश्च वि भरंते। बिभ्रति धारयंति॥

ता जिह्वया सदमेदं सुमेधा आ यद्वां सत्यो अरतिर्ऋते भूत्।
तद्वां महित्वं घृतान्नावस्तु युवं दाशुषे वि चयिष्टमंहः॥८॥
ता। जिह्वया। सदं। आ। इदं। सुऽमेधाः। आ। यत्। वां। सत्यः। अरतिः। ऋते। भूत्।
तत्। वां। महिऽत्वं। घृतऽअन्ना। अस्तु। युवं। दाशुषे। वि। चयिष्टं। अंहः॥८॥

ता तौ मित्रावरुणौ युवां सुमेधाः प्राज्ञो जिह्वया वाचा सदं सर्वदेदं जलमा याचते। आ इत्युपसर्गदर्शनाद्योग्यक्रियाध्याहाराद्याचत इत्यध्याह्रियते। पूर्वस्यामृचि जलस्य प्रकृतत्वात् वृष्टौ विपरिवर्तमानं जलमिदंशब्देन परामृश्यते। यद्यदा वां युवयोररतिरभिगंता ऋते यज्ञे सत्यो मायारहित आ भूत् आभवति हे घृतान्नौ तन्महित्वमपचितप्रदातृत्वलक्षणं वा युवयोरस्तु। किंच युवं युवां दाशुषे दाशुषो यजमानस्य॥ षष्ठ्यर्थे चतुर्थी॥ अंहः पापं वि चयिष्टं। विनाशयतमित्यर्थः॥

प्र यद्वां मित्रावरुणा स्पूर्धन्प्रिया धाम युवधिता मिनंति।
न ये देवास ओहसा न मर्ता अयज्ञसाचो अप्यो न पुत्राः॥९॥
प्र। यत्। वां। मित्रावरुणा। स्पूर्धन्। प्रिया। धाम। युवऽधिता। मिनंति।
न। ये। देवासः। ओहसा। न। मर्ताः। अयज्ञऽसाचः। अप्यः। न। पुत्राः॥९॥

हे मित्रावरुणौ वां युवयोः प्रिया प्रियाणि धाम धामानि कर्माणि युवधिता युवाभ्यां विहितानि यद्येऽयजंतो जनाः स्पूर्धन् स्पर्धमानाः प्र मिनंति हिंसंति। ये च देवासो देवा ओहसा वहनसाधनेन स्तोत्रेण न युज्यंते। मर्ता मनुष्याश्चोहसा न युज्यंते। ये चाप्यः। अपः कर्म। तद्वंतोऽयज्ञसाचो न यज्ञयुक्ताः।

वृथाकर्माणि कुर्वत इत्यर्थः । ये च न पुत्राः । पुणंतीति पुत्राः । न पुत्रा अपृणंत इत्यर्थः । तान् सर्वान्वि चयिष्टमित्यनुषज्यते ॥

वि यद्वाचं कीस्तासो भरंते शंसंति के चिन्निविदो मनानाः ।
आद्वां ब्रवाम सत्यान्युक्था नकिर्देवेभिर्यतथो महित्वा ॥१०॥
वि । यत् । वाचं । कीस्तासः । भरंते । शंसंति । के । चित् । निऽविदः । मनानाः ।
आत् । वां । ब्रवाम । सत्यानि । उक्था । नकिः । देवेभिः । यतथः । महिऽत्वा ॥१०॥

यद्यदा कीस्तासो मेधाविन उद्गातारः । उशिजः कीस्तास इति मेधाविनामसु पाठात । वाचं स्तुतिं वि भरंते पृथक् उच्चारयंति तदा के चिद्धोतृचा मनाना अग्न्यादीन स्तुवंतो निविदः शंसंति । आत्तथा सति त्वां युवाभ्यां सत्यान्युक्थानि स्तोत्राणि वयं ब्रवाम । महित्वा महत्त्वेन देवेभिरन्यैर्देवैः सह नकिर्यतथः । न गच्छथः ॥

अवोरित्था वां छर्दिषो अभिष्टौ युवोर्मित्रावरुणावस्कृधोयु ।
अनु यद्गावः स्फुरानृजिप्यं धृष्णुं यद्रणे वृषणं युनजन् ॥११॥
अवोः । इत्था । वां । छर्दिषः । अभिष्टौ । युवोः । मित्रावरुणा । अस्कृधोयु ।
अनु । यत् । गावः । स्फुरान् । ऋजिप्यं । धृष्णुं । यत् । रणे । वृषणं । युनजन् ॥११॥

हे मित्रावरुणाववोरवतोर्वा युवयोरभिष्टावभिगमने छर्दिषो गृहाय सुखाय वा ॥ चतुर्थ्यर्थे षष्ठी ॥ युवामभिगतेषु स्तोतृषु युवोर्युवयोः संबंधि युवाभ्यां देयं तद्गृहादिकमस्कृधोय्वविच्छिन्नं भवति । तथा च यास्कः । अस्कृधोयुरकृध्वायुः । कृध्विति ह्रस्वनाम निकृत्तं भवति । नि० ६. ३. । इति । इत्था सत्यमेव । कदा मित्रावरुणयोरभिगमनमित्यत आह । यद्यदा गावः स्तुतयोऽनु स्फुरान् अनुस्फुरेयुः । यदा च ऋजिप्यमृजुगामिनं धृष्णुं शत्रूणां धर्षकं वृषणं कामानां वर्षितारं सोमं रणे रमणे यज्ञे युनजन् यजमाना युंज्युः ॥ ॥१०॥

अष्टौ वामित्येकादशर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रावरुणं । तथा चानुक्रम्यते । अष्टौ वामैंद्रावरुणमुपांत्ये जगत्याविति । प्र सम्राज इंद्रावरुणा सुतपाविमित्येते जगत्यौ शिष्टास्त्रिष्टुभः । इंद्रावरुणौ देवता ॥ आभिप्लविकेषूक्थ्येषु तृतीयसवने होत्रकशस्त्रेषु स्तोमवृद्धौ मैत्रावरुणस्येदमावापार्थं सूक्तं । सूत्रितं च । अष्टौ वा यज्ञो युवा नरा । आ० ७. ९. । इति ॥ तृतीयसवन इंद्रावरुणा सुतपाविमं सुतमिति प्रशास्तुः प्रस्थितयाज्या । सूत्रितं च । इंद्रावरुणा सुतपाविमं सुतमिंद्रश्च सोमं पिबतं बृहस्पते । आ० ५. ५. । इति ॥ उक्थ्ये तृतीयसवन इंद्रावरुणा मधुमत्तमस्येति मैत्रावरुणस्य शस्त्रयाज्या । सूत्रितं च । इंद्रावरुणा मधुमत्तमस्येति याज्या । आ० ६ १. । इति ॥

अष्टौ वां यज्ञ उद्यतः सजोषा मनुष्वद्वृक्तबर्हिषो यजध्यै ।
आ य इंद्रावरुणाविषे अद्य महे सुम्नाय मह आववर्तत् ॥१॥
अष्टौ । वां । यज्ञः । उत्ऽयतः । सऽजोषाः । मनुष्वत् । वृक्तऽबर्हिषः । यजध्यै ।
आ । यः । इंद्रावरुणौ । इषे । अद्य । महे । सुम्नाय । महे । आऽववर्तत् ॥१॥

महे महनीयौ हे इंद्रावरुणौ वां युवयोरर्थे अष्टौ क्षिप्रः । तथा च यास्कः । अष्टौति क्षिप्रनामाशु अष्टौति । नि० ६. १२ । यज्ञः सोमः सजोषा ऋत्विग्भिः सहितोऽथवा समतादुद्यतः प्रवृत्तः । यः सोमो मनुष्वत मनोरिव वृक्तबर्हिषः स्तीर्णबर्हिषो यजमानस्येषेऽन्नार्थं महे महते सुम्नाय सुखाय च यजध्यै यष्टुं वामाववर्तत आवर्तयति ॥

ता हि श्रेष्ठा देवताता तुजा शूराणां शविष्ठा ता हि भूतं ।
मघोनां मंहिष्ठा तुविशुष्म ऋतेन वृत्रतुरा सर्वसेना ॥२॥
ता । हि । श्रेष्ठा । देवऽताता । तुजा । शूराणां । शविष्ठा । ता । हि । भूतं ।
मघोनां । मंहिष्ठा । तुविऽशुष्मा । ऋतेन । वृत्रऽतुरा । सर्वऽसेना ॥२॥

हे इंद्रावरुणौ ता तौ प्रसिद्धौ युवां श्रेष्ठा श्रेष्ठौ देवताता देवताती यज्ञे । देवतातिरिति यज्ञनामसु पाठात् । तुजा धनानां प्रेरकौ हि भूतं भवतं । किंच ता तौ हि युवां शूराणां मध्ये शविष्ठातिशयेन बलवंतौ भूतं । किंच मघोनां दानवतां मंहिष्ठा दातृतमौ तुविशुष्मा बहुबलावृतेन सत्येन वृत्रतुरा शत्रूणां हिंसकौ सर्वसेना कृत्स्नसेनौ च भूतमिति ॥

ता गृणीहि नमस्येभिः शूषैः सुम्नेभिरिंद्रावरुणा चकाना ।
वज्रेणान्यः शवसा हंति वृत्रं सिषक्त्यन्यो वृजनेषु विप्रः ॥३॥
ता । गृणीहि । नमस्येभिः । शूषैः । सुम्नेभिः । इंद्रावरुणा । चकाना ।
वज्रेण । अन्यः । शवसा । हंति । वृत्रं । सिसक्ति । अन्यः । वृजनेषु । विप्रः ॥३॥

हे भरद्वाज नमस्येभिः स्तुत्यैः शूषैर्बलैः । शूषमिति बलनामसु पाठात् । सुम्नेभिः सुखैश्च सर्वेषां कामानां स्तोतॄन् कामयतिः शब्दकर्मा । तस्य लिटः कानचि रूपमिदं ॥ ता ताविंद्रावरुणौ गृणीहि । स्तुहि । अन्यस्तयोरन्य इंद्रो वृत्रं वृत्रनामकमसुरं वज्रेण हंति । अन्यो वरुणो विप्रः प्राज्ञो वृजनेषु स्तोतॄणामुपद्रवेषु रक्षितुं शवसा बलेन सिषक्ति । संगच्छते ॥

ग्नाश्च यन्नरश्च वावृधंत विश्वे देवासो नरां स्वगूर्ताः ।
प्रैभ्य इंद्रावरुणा महित्वा द्यौश्च पृथिवि भूतमुर्वी ॥४॥
ग्नाः । च । यत् । नरः । च । ववृधंत । विश्वे । देवासः । नरां । स्वऽगूर्ताः ।
प्र । एभ्यः । इंद्रावरुणा । महिऽत्वा । द्यौः । च । पृथिवि । भूतं । उर्वी इति ॥४॥

नरां नृणां मनुष्याणां मध्ये ग्नाश्च स्त्रियश्च । मेना ग्ना इति स्त्रीणां । नि० ३ २१ । इति यास्कवचनात् । नरश्च पुरुषाश्च विश्वे सर्वे देवासो देवाः ॥ देवास इत्यत्र पुमान् स्त्रियेत्येकशेषात् देव्यश्च देवाश्च देवास इति निर्देशः पूर्ववन्निर्देशः ॥ स्वगूर्ताः स्वयमुद्यता यद्यदा ववृधंत स्तुतिभिर्वर्धयंते तदा हे इंद्रावरुणौ महित्वा महत्त्वयुक्तावेभ्यः स्तोतृभ्यः प्र भूतं । प्रभवतं । हे द्यौः पृथिवि चोभे उर्वी विस्तीर्णे युवामेभ्यः प्र भूतमित्यनुषंगः ॥

स इत्सुदानुः स्ववाँ ऋतावेंद्रा यो वां वरुण दाशति त्मन् ।
इषा स द्विषस्तरेद्दास्वान्वंसद्रयिं रयिवतश्च जनान् ॥५॥
सः । इत् । सुऽदानुः । स्वऽवान् । ऋतऽवा । इंद्रा । यः । वां । वरुण । दाशति । त्मन् ।
इषा । सः । द्विषः । तरेत् । दास्वान् । वंसत् । रयिं । रयिऽवतः । च । जनान् ॥५॥

हे इंद्रेंद्रा वरुणा हे वरुणौ ॥ इतरेतरयोगादुभयत्र द्विवचनप्रयोगः । वरुणेत्यत्र संहिताया ह्रस्वश्छांदसः ॥ वां युवाभ्यां यो यजमानस्त्मन् आत्मनैव दाशति हवींषि ददाति स इत् स एव सुदानुः शोभनदानो

भवति। स्ववान धनवांश्च ऋतावान यज्ञवांश्च भवति। किंच स दास्वान दानवान द्विषो द्वेष्टृरिषान्नेन अयअर्ध्येन सह तरत। प्राप्नोत। अपि च रयिं धनं रयिवतो धनवतो जनान पुत्रांश्च वंसत। संभजेत ॥ ॥११॥

यं युवं दाश्वध्वराय देवा रयिं धत्थो वसुमंतं पुरुक्षुं।
अस्मे स इंद्रावरुणावपि ष्यात्प्र यो भनक्ति वनुषामशस्तीः ॥६॥
यं। युवं। दाशुऽअध्वराय। देवा। रयिं। धत्थः। वसुऽमंतं। पुरुऽक्षुं।
अस्मे इति। सः। इंद्रावरुणौ। अपि। स्यात्। प्र। यः। भनक्ति। वनुषां। अशस्तीः ॥६॥

देवा देवौ स्तूयमानौ हे इंद्रावरुणौ युवं युवां दाश्वध्वराय दत्तहविष्काय वसुमंतं धनानुबंधिनं पुरुक्षु बह्वन्नं पूर्णयशस्कं वा यं यादृशं रयिं धनं धत्थः प्रयच्छथः। योऽपि च वनुषां हिंसकानामशस्तीरकीर्तीः। शत्रुकृतान्ययशांसीत्यर्थः। प्र भनक्ति प्रभजति स तादृशो रयिरस्मे अस्मासु स्यात। भूयात ॥

उत नः सुत्रात्रो देवगोपाः सूरिभ्य इंद्रावरुणा रयिः ष्यात।
येषां शुष्मः पृतनासु साह्वान्प्र सद्यो द्युम्ना तिरते ततुरिः ॥७॥
उत। नः। सुऽत्रात्रः। देवऽगोपाः। सूरिऽभ्यः। इंद्रावरुणा। रयिः। स्यात्।
येषां। शुष्मः। पृतनासु। सह्वान। प्र। सद्यः। द्युम्ना। तिरते। ततुरिः ॥७॥

उतापि चेंद्रावरुणा हे इंद्रावरुणौ सूरिभ्यः स्तोतृभ्यो नोऽस्मभ्यं सुत्रात्रः सुरक्षो देवगोपाः। देवा गोपा गोप्तारो यस्य स तथाविधः। रयिर्धनं स्यात। भूयात। किंच येषामस्माकं शुष्मो बलं पृतनासु युद्धेषु साह्वान शत्रूणामभिभविता ततुरिर्हिंसकश्च सन द्युम्ना यशांसि सद्य एव प्र तिरते सम्यक्तिरस्कुर्यात ॥

नू न इंद्रावरुणा गृणाना पृंक्तं रयिं सौश्रवसाय देवा।
इत्था गृणंतो महिनस्य शर्धोऽपो न नावा दुरिता तरेम ॥८॥
नु। नः। इंद्रावरुणा। गृणाना। पृंक्तं। रयिं। सौश्रवसाय। देवा।
इत्था। गृणंतः। महिनस्य। शर्धः। अपः। न। नावा। दुःऽइता। तरेम ॥८॥

हे इंद्रावरुणाविंद्रावरुणौ गृणाना स्तूयमानौ युवां नोऽस्मभ्यं सौश्रवसाय। सुश्रवसो भावः सौश्रवसं। तस्मै सुश्रवस्त्वाय रयिं धनं नु क्षिप्रं पृंक्त। प्रयच्छतं। किंच हे देवा देवौ महिनस्य महतोर्युवयोः शर्धो बलमित्थंत्थ गृणंतः स्तुवंतो वयं दुरिता दुरितानि नावापो न उदकानीव तरेम ॥

प्र सम्राजे बृहते मन्म नु प्रियमर्च देवाय वरुणाय सप्रथः।
अयं य उर्वी महिना महिव्रतः क्रत्वा विभात्यजरो न शोचिषा ॥९॥
प्र। संऽराजे। बृहते। मन्म। नु। प्रियं। अर्च। देवाय। वरुणाय। सऽप्रथः।
अयं। यः। उर्वी इति। महिना। महिऽव्रतः। क्रत्वा। विऽभाति। अजरः। न।
शोचिषा ॥९॥

हे स्तोतः सम्राजे आज्ञया राज्ञां शासकाय बृहते परिवृढाय देवाय द्योतमानाय वरुणाय प्रियं मनोहरं सप्रथः सर्वतः पृथु। तथा च यास्कः। सप्रथाः सर्वतः पृथुः। नि० ६. ७.। इति। मन्म स्तोत्रं नु अद्य प्रार्च।

प्रोष्ठारय । अयं यो योऽय वरुणो महिना महिम्ना युक्तो महिव्रतो महाकर्मा क्रत्वा प्रज्ञया च युक्तः शोचिषा तेजसा युक्तोऽजरो न जरारहितश्चोर्वी विस्तीर्णे द्यावापृथिव्यौ विभाति विभासयति॥

इंद्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता ।
युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये ॥१०॥

इंद्रावरुणा । सुतऽपौ । इमं । सुतं । सोमं । पिबतं । मद्यं । धृतऽव्रता ।
युवोः । रथः । अध्वरं । देवऽवीतये । प्रति । स्वसरं । उप । याति । पीतये ॥१०॥

इंद्रावरुणा हे इंद्रावरुणौ सुतपौ सुतस्य सोमस्य पातारौ युवां मद्यं मदकरं सुतमभिषुतमिमं सोमं पिबतं । किंच हे धृतव्रता धृतकर्माणौ युवोर्युवयो रथोऽध्वरमुद्दिश्य देववीतये देवानां पानार्थं पीतये युवयोरपि सोमपानार्थं स्वसरं मार्गं प्रत्युप याति ॥

इंद्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथां ।
इदं वामंधः परिषिक्तमस्मे आसद्यास्मिन्बर्हिषि मादयेथां ॥११॥

इंद्रावरुणा । मधुमत्ऽतमस्य । वृष्णः । सोमस्य । वृषणा । आ । वृषेथां ।
इदं । वां । अंधः । परिऽसिक्तं । अस्मे इति । आऽसद्य । अस्मिन् । बर्हिषि । मादयेथां ॥११॥

इंद्रावरुणा हे इंद्रावरुणौ वृषणा कामानां वर्षितारौ युवां मधुमत्तमस्यातिशयेन मधुमतो रसवतो वृष्णो वर्षितुः सोमस्य सोममा वृषेथां । अश्नीतं । तथा च शतपथब्राह्मणं । यथाभागमावृषायेथामिति यथाभागमश्नीतमित्येवैतदाह । २ ४ ३. २०. । इति । वां युवयोरर्थमिदमंधः सोमरूपमन्नमस्मे अस्माभिः परिषिक्तं पात्रेषु । अत आसद्योपविश्यास्मिन्बर्हिषि यज्ञे मादयेथां सोमपानं इति शेषः ॥ ॥१२॥

सं वां कर्मणेत्यष्टर्चमष्टमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रावैष्णवं । अनुक्रम्यते च । सं वामष्टावैंद्रावैष्णवमिति ॥ उक्थ्ये तृतीयसवनेऽच्छावाकशस्त्र एतत्सूक्तं । सूत्र्यते हि । सं वां कर्मणेंद्राविष्णू मदपती मदानामिति याज्या । आ० ६ १ । इति ॥ सोमातिरेके प्रातःसवने नैमित्तिके शस्त्रे परिहृते सति गाणगारिमते सं वामिति तस्य शस्त्रयाज्या । सूचितं च । ऐंद्राविष्णव्येति गाणगारिर्दैवतप्रधानत्वात्सं वां कर्मणा समिषा हिनोमि । आ० ६ ७ । इति ॥ सोमातिरेके माध्यंदिनसवने या विश्वासामित्येषा शस्त्रयाज्या । सूचितं च । या विश्वासां जनितारा मतीनामिति याज्या । आ० ६ ७ । इति ॥ उक्थ्ये तृतीयसवनेऽच्छावाकस्येंद्राविष्णू मदपती इति शस्त्रयाज्या । सूत्रं तूदाहृतं ॥ तृतीयसवनेऽच्छावाकस्येंद्राविष्णू पिबतमिति प्रस्थितयाज्या । सूचितं च । इंद्राविष्णू पिबतं मध्वो अस्येत्युक्त सोमममहते जातवेदसे । आ० ५ ५ । इति ॥

सं वां कर्मणा समिषा हिनोमींद्राविष्णू अपसस्पारे अस्य ।
जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयंता ॥१॥

सं । वां । कर्मणा । सं । इषा । हिनोमि । इंद्राविष्णू इति । अपसः । पारे । अस्य ।
जुषेथां । यज्ञं । द्रविणं । च । धत्तं । अरिष्टैः । नः । पथिऽभिः । पारयंता ॥१॥

हे इंद्राविष्णू वां युवां कर्मणा स्तोत्रेणेषा हविषा च सं हिनोमि । सम्यक् प्रेरयामि । अपसः कर्मणोऽस्योक्थ्यस्य पारे समाप्तौ यज्ञं जुषेथां । सेवेथां । किंचारिष्टैरनुपद्रवैः पथिभिर्मार्गैर्नोऽस्मान्पारयंता पारं नयंतौ युवां द्रविणं धनं धत्तं । अस्मभ्यं दत्तं ॥

या विश्वासां जनितारा मतीनामिंद्राविष्णू कलशा सोमधाना।
प्र वां गिरः शस्यमाना अवंतु प्र स्तोमासो गीयमानासो अर्कैः ॥२॥
या। विश्वासां। जनितारा। मतीनां। इंद्राविष्णू इति। कलशा। सोमऽधाना।
प्र। वां। गिरः। शस्यमानाः। अवंतु। प्र। स्तोमासः। गीयमानासः। अर्कैः ॥२॥

या यौ प्रसिद्धाविंद्राविष्णू विश्वासां सर्वासां मतीनां स्तुतीनां जनितारा जनितारौ ॥ जन जनन इत्यस्माद्धातोस्तृचीदं रूपं। यद्वा। जनी प्रादुर्भाव इत्यस्माद्धातोरेव तृचि जनिता मंत्र इति निपातनाणिलोपः ॥ कलशा कलशौ सोमधाना सोमस्य निधानभूतौ च स्यातां। अथ प्रत्यक्षस्तुतिः। हे इंद्राविष्णू वां युवां शस्यमाना उच्चार्यमाणाः शस्त्ररूपा गिरो वाचः प्रावंतु। प्राप्नुवंतु। अर्कैः स्तोतृभिर्गीयमानासो गीयमानाः स्तोमासः स्तोमाः स्तोत्राणि च प्रावंतु। प्राप्नुवंतु ॥

इंद्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना।
सं वामंजंत्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास उक्थैः ॥३॥
इंद्राविष्णू इति। मदपती इति मदऽपती। मदानां। आ। सोमं। यातं। द्रविणो इति। दधाना।
सं। वां। अंजंतु। अक्तुऽभिः। मतीनां। सं। स्तोमासः। शस्यमानासः। उक्थैः ॥३॥

हे इंद्राविष्णू मदानां सोमानां मदपती स्वामिनौ। मदपती इत्यत्र मदशब्दोऽनुवादः। द्रविणो द्रविणानि धनान्यपि ॥ द्रविणा उ इति पदद्वयमेकीभूय द्रविणो इति पदं निष्पन्नं ॥ दधाना ददानौ युवां सोममभ्या यातं। मतीनां स्तोतॄणां स्तोमासः स्तोत्राण्युक्थैः शस्त्रैः सार्धं शस्यमानास उच्चार्यमाणा वा युवामक्तुभिस्तेजोभिः समंजंतु। समर्धयतु। सं समिति द्विरुक्तिरादरार्था ॥

आ वामश्वासो अभिमातिषाह इंद्राविष्णू सधमादो वहंतु।
जुषेथां विश्वा हवना मतीनामुप ब्रह्माणि शृणुतं गिरो मे ॥४॥
आ। वां। अश्वासः। अभिमातिऽसहः। इंद्राविष्णू इति। सधऽमादः। वहंतु।
जुषेथां। विश्वा। हवना। मतीनां। उप। ब्रह्माणि। शृणुतं। गिरः। मे ॥४॥

हे इंद्राविष्णू वां युवामभिमातिषाहोऽभिमातीनां हिंसकानामभिभवितारः सधमादः सह माद्यंतोऽश्वाः सोऽश्वा आ वहंतु। मतीनां स्तोतॄणां विश्वा विश्वानि सर्वाणि हवना हवनानि स्तोत्राणि जुषेथां। सेवेथां। तदर्थं मे मदीयानि ब्रह्माणि स्तोत्राणि गिरः शस्त्ररूपा वाचश्चोप शृणुत ॥

इंद्राविष्णू तत्पनयाय्यं वां सोमस्य मद उरु चक्रमाथे।
अकृणुतमंतरिक्षं वरीयोऽप्रथतं जीवसे नो रजांसि ॥५॥
इंद्राविष्णू इति। तत्। पनयाय्यं। वां। सोमस्य। मदे। उरु। चक्रमाथे इति।
अकृणुतं। अंतरिक्षं। वरीयः। अप्रथतं। जीवसे। नः। रजांसि ॥५॥

हे इंद्राविष्णू वां युवयोस्तत्कर्म पनयाय्यं स्तुत्यं। किं तत्कर्मेत्यत आह। सोमस्य मदे सति यदुरु विस्तीर्णं

चक्रमाथे विचक्रमाथे। यद्यपि विष्णोरेव विक्रमस्तथाप्येककार्यत्वादुभयोरित्युच्यते। यस्मादंतरिक्षं वरीय उरुतरमुत्तगुणं अकृणुतं। यदपि च रजांसि लोकान् सर्वान्। लोका रजांस्युच्यंत इति यास्कः। नोऽस्माकं जीवसे जीवनायाप्रथतं अप्रथयतं॥

इंद्रा॑विष्णू ह॒विषा॑ वावृधा॒नाग्रा॑द्वाना॒ नम॑सा रातहव्या।

घृता॑सुती॒ द्रवि॑णं धत्तम॒स्मे स॑मु॒द्रः स्थः॑ क॒लशः॑ सोम॒धानः॑ ॥६॥

इंद्रा॑विष्णू॒ इति॑। ह॒विषा॑। व॒वृ॒धा॒ना। अ॒ग्र॒ऽअ॒द्वा॒ना। नम॑सा। रा॒त॒ऽह॒व्या।

घृता॑सुती॒ इति॑ घृत॑ऽआसुती। द्रवि॑णं। ध॒त्तं। अ॒स्मे इति॑। स॒मु॒द्रः। स्थः। क॒लशः॑।

सो॒म॒ऽधानः॑ ॥६॥

घृतासुती घृतान्नाविंद्राविष्णू युवां हविषा सोमेन वावृधाना वर्धमानावग्राद्वाना सोमाख्यस्य शुक्रस्याग्रे भक्षयितारौ नमसा नमस्कारेण रातहव्या दत्तहविष्कौ यजमानैरस्मे अस्मभ्यं द्रविणं धनं धत्तं। प्रयच्छतं। किंच युवां समुद्र उदधिरिव स्थः। भवथः। यतः सोमधानः सोमनिधानः कलशो भवथः॥

इंद्रा॑विष्णू॒ पिब॑तं॒ मध्वो॑ अ॒स्य सोम॑स्य दस्रा ज॒ठरं॑ पृणेथां।

आ वा॒मंधां॑सि मदि॒राण्य॑ग्म॒न्नुप॒ ब्रह्मा॑णि शृणु॒तं हवं॑ मे ॥७॥

इंद्रा॑विष्णू॒ इति॑। पिब॑तं। मध्वः॑। अ॒स्य। सोम॑स्य। द॒स्रा। ज॒ठरं॑। पृ॒णे॒थां।

आ। वा॒ं। अंधां॑सि। म॒दि॒राणि॑। अ॒ग्म॒न्। उप॑। ब्रह्मा॑णि। शृ॒णु॒तं। हवं॑। मे॒ ॥७॥

दस्रा हे दर्शनीयाविंद्राविष्णू युवां मध्वोऽस्य मदकरमिमं सोमस्य सोमं पिबतं। किंच जठरमुदरं पृणेथां। सोमेन पूरयेथां। हे इंद्राविष्णू वां युवां मदिराणि मदकराण्यंधांसि सोमात्मकान्यन्नान्याग्मन्। अभिगच्छंतु। मे मदीयानि ब्रह्माणि स्तोत्राणि हवं मदीयमाह्वानं चोप शृणुतं॥

उ॒भा जि॑ग्यथु॒र्न परा॑ जयेथे॒ न परा॑ जिग्ये कत॒रश्च॒नैनोः॑।

इंद्र॑श्च विष्णो॒ यदप॑स्पृधेथां त्रे॒धा स॒हस्रं॒ वि तदै॑रयेथां ॥८॥

उ॒भा। जि॒ग्य॒थुः॒। न। परा॑। ज॒ये॒थे॒ इति॑। न। परा॑। जि॒ग्ये॒। क॒त॒रः। च॒न। ए॒नोः॒।

इंद्रः॑। च॒। वि॒ष्णो॒ इति॑। यत्। अप॑स्पृधेथां। त्रे॒धा। स॒हस्रं॑। वि। तत्। ऐ॒र॒ये॒थां॒ ॥८॥

हे इंद्राविष्णू उभोभौ युवां जिग्यथुः। शत्रूनजैष्टं। न परा जयेथे। न पुनः कदाचन पराजयेथे। एनोरेनयोर्युवयोर्मध्ये कतरश्चनैकतरोऽपि न परा जिग्ये। न पराजैष्ट। हे विष्णो इंद्रश्च त्वं च युवां यद्यदा प्रत्यपस्पृधेथां असुरैः सहास्पर्धिषाथां त्रेधा लोकवेदवागात्मना त्रिधा स्थितं सहस्रमसितं तद्वि तदैरयेथां। व्यक्रमेथामित्यर्थः॥ तथा च ब्राह्मणं। उभा जिग्यथुरित्यच्छावाकस्योभौ हि तौ जिग्यतुर्न परा जयेथे न परा जिग्ये इति न हि तयोः कतरश्चन पराजिग्य इंद्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामितींद्रश्च ह वै विष्णुश्चासुरैर्युयुधाते तान् ह स्म जित्वोचतुः कल्पामहा इति ते ह तथेत्यसुरा ऊचुः सोऽब्रवीदिंद्रो यावदेवायं विष्णुस्त्रिर्विक्रमते तावदस्माकमथ युष्माकमितरदिति स इमाँल्लोकान्विचक्रमेऽथो वेदानथो वाचं तदाहुः किं तत्सहस्रमितीमे लोका इमे वेदा अथो वागिति ब्रूयादैरयेथामैरयेथा। ऐ० ब्रा० ६. १५। इति॥ यद्वा। तत्सहस्रं गवां सहस्रं त्रेधा व्यैरयेथामित्यर्थः॥ ॥१३॥

घृतवती भुवनानामिति षड़्चं नवमं सूक्तं भरद्वाजस्यार्षं जागतं द्यावापृथिवीदेवताकं। तथा चानुक्रम्यते। घृतवती षट् द्यावापृथिवीयं जागतमिति॥ आभिप्लविके पंचमेऽहनि वैश्वदेवशस्त्र आद्यमृचौ द्यावापृथिव्यनि-

विद्यानार्थः । सूत्रितं च । घृतवती भुवनानामभिश्रियेयं द्र ऋभुभिर्वाजवद्भिरिति तृचौ । आ० ७. ७. । इति ॥ बृहस्पतिसवेऽपि वैश्वदेवशस्त्र एष तृचः । सूत्रितं च । आ० ९. ५ ॥ आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्रे घृतेन द्यावापृथिवी इति तिस्रो द्यावापृथिव्यानिविद्धानार्थाः । सूत्रितं च । घृतेन द्यावापृथिवी इति तिस्रोऽनश्वो जातः । आ० ७ ७. । इति ॥

घृतवंती भुवंनानामभिश्रियोर्वी पृथ्वी मंधुदुघे सुपेशंसा ।
द्यावांपृथिवी वरुंणस्य धर्मंणा विष्कंभिते अजरे भूरिरेतसा ॥१॥

घृतवंती इति घृतऽवंती । भुवंनानां । अभिऽश्रियां । उर्वी इति । पृथ्वी इति ।
मधुदुघे इति मधुऽदुघे । सुऽपेशंसा ।
द्यावांपृथिवी इति । वरुंणस्य । धर्मंणा । विस्कंभिते इति विऽस्कंभिते । अजरे इति ।
भूरिऽरेतसा ॥१॥

द्यावापृथिवी हे द्यावापृथिव्यौ घृतवती दीप्तिमत्यावुदकवत्यौ वा । वमं घृतमित्युदकनामसु पाठात् । भवत इति शेषः । भुवनानां भूतानामभिश्रियाभिश्रयणीये भवत इति सर्वत्रानुसंबंधनीयं । उर्वी विस्तीर्णे पृथ्वी बहुकार्यरूपेण प्रथिते च मधुदुघे मधुन उदकस्य दोग्ध्र्यौ सुपेशसा सुरूपे वरुणस्य सर्वस्य नियामकस्य धर्मणा धारणेन विष्कभिते पृथग्धारिते अजरे नित्ये भूरिरेतसा बहुरेतस्के बहुकार्ये वा भवतः । अन माचात् द्यावापृथिव्योः स्तुतिप्रसंगाद्वरुणस्येति द्रष्टव्यं ॥

असंश्चंती भूरिंधारे पयंस्वती घृतं दुंहाते सुकृते शुचिंव्रते ।
राजंती अस्य भुवंनस्य रोदसी अस्मे रेतः सिंचतं यन्मनुंर्हितं ॥२॥

असंश्चंती इति । भूरिंधारे इति भूरिंऽधारे । पयंस्वती इति । घृतं । दुहाते इति ।
सुऽकृते । शुचिंव्रते इति शुचिंऽव्रते ।
राजंती इति । अस्य । भुवंनस्य । रोदसी इति । अस्मे इति । रेतः । सिंचतं । यत् ।
मनुःऽहितं ॥२॥

असश्चंती असज्यमाने व्युदस्यत्यौ वा भूरिधारे बहुधारे । दिवो वृष्टिधाराः पृथिव्याश्चाहुत्युन्नतरसधाराः । एवमुभयोरपि बहुधारत्वं । पयस्वती उदकवत्यौ । तथा च यास्कः । असज्यमाने इति वा व्युदस्यत्याविति वा बहुधारे उदकवत्यौ । नि० ५ २. । इति । शुचिव्रते शुचिकर्मणे द्यावापृथिव्यौ सुकृते शोभनकारिणे यजमानाय घृतं सस्यादिसमृद्धिहेतुदकं दुहाते । अथ प्रत्यक्षस्तुतिः । रोदसी हे द्यावापृथिव्यावस्य भुवनस्य भूतजातस्य राजंती । ईशाने युवामस्मे अस्मासु रेतः प्रजननसमर्थं वीर्यं सिंचतं । यद्रेतो मनुर्हितं मनुष्येभ्यो हितं ॥

यो वामृजवे क्रमंणाय रोदसी मर्तो ददाशं धिषणे स साधति ।
प्र प्रजाभिर्जायते धर्मंणस्परि युवोः सिक्ता विषुंरूपाणि सव्रंता ॥३॥

यः । वां । ऋजवे । क्रमंणाय । रोदसी इति । मर्तः । ददाशं । धिषणे इति । सः । साधति ।
प्र । प्रऽजाभिः । जायते । धर्मंणः । परि । युवोः । सिक्ता । विषुंऽरूपाणि । सऽव्रंता ॥३॥

धिषणे धृष्टे सर्वस्य भुवनस्य निवासभूते वा हे रोदसी वां युवाभ्यां यो मर्तो मर्त्य ऋजवे क्रमणाय कुवर्योः सुखगमनाय ददाश हवींषि ददाति स मर्त्यः साधति । कामान् साधयति । किंच प्रजाभिः पुत्रपौत्रादिभिः प्र जायते । प्रवृद्धो भवति । धर्मणः कर्मणः पर्युपरि युवोर्युवयोः सिक्ता सिक्तानि रेतांसि विषुरूपाणि नानावर्णानि सव्रता समानकर्माणि भूतानि जायते ॥

घृतेन द्यावापृथिवी अभीवृते घृतश्रिया घृतपृचा घृतावृधा ।
उर्वी पृथ्वी होतृवूर्ये पुरोहिते ते इद्विप्रा ईळते सुम्नमिष्टये ॥४॥

घृतेन । द्यावापृथिवी इति । अभिवृते इत्यभिऽवृते । घृतऽश्रिया । घृतऽपृचा ।
घृतऽवृधा ।
उर्वी इति । पृथ्वी इति । होतृऽवूर्ये । पुरोहिते इति पुरःऽहिते । ते इति । इत् ।
विप्राः । ईळते । सुम्नं । इष्टये ॥४॥

द्यावापृथिवी द्यावापृथिव्यौ घृतेनोदकेनाभिवृते आवृते भवतः । घृतश्रियोदकं श्रयन्त्यौ च घृतपृचा घृतसंपृक्ते च घृतावृधा घृतं वर्धयन्त्यौ चोर्वी विस्तीर्णे पृथ्वी प्रथिते च भवतः । होतृवूर्ये यज्ञे पुरोहिते यजमानैः पुरस्कृते च भवतः । विप्राः प्राज्ञाः स्तोतारस्ते इत् द्यावापृथिव्यावेविष्टये यज्ञाय । होत्राइष्टिरिति यज्ञनामसु पाठात् । सुम्नं सुखमीळते । याचन्ते । सुखे सति हि यागाः प्रवर्तन्ते ॥

मधु नो द्यावापृथिवी मिमिक्षतां मधुश्चुता मधुदुघे मधुव्रते ।
दधाने यज्ञं द्रविणं च देवता महि श्रवो वाजमस्मे सुवीर्यं ॥५॥

मधु । नः । द्यावापृथिवी इति । मिमिक्षतां । मधुऽश्चुता । मधुदुघे इति मधुऽदुघे ।
मधुव्रते इति मधुऽव्रते ।
दधाने इति । यज्ञं । द्रविणं । च । देवता । महि । श्रवः । वाजं । अस्मे इति । सुऽवीर्यं ॥५॥

मधुश्चुतोदकस्य क्षारयित्र्यौ मधुदुघे उदकदोग्ध्र्यौ मधुव्रते उदकार्थकर्माणौ देवता देवताभूते अस्मे अस्मासु यज्ञं द्रविणं धनं च महि महत् श्रवो यशो वाजमन्नं सुवीर्यं सुवीरत्वं च दधाने ददत्यौ द्यावापृथिवी द्यावापृथिव्यौ नोऽस्मान्मधु मधुना ॥ तृतीयैकवचनस्य लुक् ॥ मिमिक्षतां । सिंचतः ॥

ऊर्जं नो द्यौश्च पृथिवी च पिन्वतां पिता माता विश्वविदा सुदंससा ।
संरराणे रोदसी विश्वशंभुवा सनिं वाजं रयिमस्मे समिन्वतां ॥६॥

ऊर्जं । नः । द्यौः । च । पृथिवी । च । पिन्वतां । पिता । माता । विश्वऽविदा । सुऽदंससा ।
संरराणे इति संऽरराणे । रोदसी इति । विश्वऽशंभुवा । सनिं । वाजं । रयिं । अस्मे इति ।
सं । इन्वतां ॥६॥

पिता वीर्यस्य सेक्तृत्वेन पितृभूता द्यौश्च माता धारकत्वेन मातृभूता पृथिवी चोभे नोऽस्मभ्यमूर्जमन्नं पिन्वतां । पूरयतां । किंच विश्वविदा विश्वं जानत्यौ विश्वस्य वेदयित्र्यौ वा सुदंससा सुकर्माणौ संरराणे परस्परोपकार्योपकारकभावेन सह रममाणे विश्वशंभुवा सर्वस्य भावयित्र्यौ रोदसी द्यावापृथिव्यावस्मे अस्मासु सनिं संभजनीयं पुत्रादिकं वाजं बलं रयिं धनं च समिन्वतां । संप्रयच्छतां ॥ ॥१४॥

उदु ष्य देव इति षड्टचं दशमं सूक्तं भरद्वाजस्यार्षं सवितृदेवताकं। आद्यास्तिस्रो जगत्यश्चतुर्थ्याद्यास्तिस्रस्त्रिष्टुभः। तथा चानुक्रांतं। उदु ष्य सावित्रं त्रिचिष्टुबंतमिति ॥ सूक्तविनियोगो लैंगिकः। चातुर्विंशिकेऽहनि वैश्वदेवशस्त्र आद्यस्तृचः सावित्रसूक्तस्थान आवपनीयः। सूत्रितं च। उदु ष्य देवः सविता हिरण्ययेति तिस्रस्तं हि शाव:पृथिवी। आ० ७. ४.। इति ॥ बृहस्पतिसवेऽपि वैश्वदेवशस्त्रे सावित्रसूक्तस्थान एष तृचः। सूत्रितं च। उदु ष्य देवः सविता हिरण्ययेत्यनुत्तिष्ठत। आ० ९. ५.। इति ॥ व्यूळ्हे पंचमेऽहनि वैश्वदेवशस्त्र उदु ष्य देवः सविता दमूना इति तृचः सावित्रनिविद्धानार्थः। सूत्रितं च। उदु ष्य देवः सविता दमूना इति तिस्रः। आ० ८. ८.। इति ॥ वैश्वदेवपर्वणि सावित्रद्वादशकपालस्य वाममद्येति याज्या। सूत्रितं च। वाममद्य सवितर्वाममु श्वः पुपन्तव व्रतं वयं। आ० २. १६.। इति ॥

उदु ष्य देवः सविता हिरण्यया बाहू अयंस्त सवनाय सुक्रतुः।
घृतेन पाणी अभि प्रुष्णुते मखो युवा सुदक्षो रजसो विधर्मणि ॥१॥
उत्। ऊं इति। स्यः। देवः। सविता। हिरण्यया। बाहू इति। अयंस्त। सवनाय। सुऽक्रतुः।
घृतेन। पाणी इति। अभि। प्रुष्णुते। मखः। युवा। सुऽदक्षः। रजसः। विऽधर्मणि ॥१॥

देवो द्योतमानः सुक्रतुः सुकर्मा स्य स प्रसिद्धः सविता हिरण्यया हिरण्मयावात्मीयौ बाहू सवनाय सुवनाय दानाय वोदयंस्त। उद्यच्छति। किंच मखो मंहनीयो युवा नित्यतरुणः सुदक्षः सुप्रज्ञो रजसो लोकस्योदकस्य वा विधर्मणि विधारणे स्थितो घृतेनोदकेन पूर्णौ स्वौ पाणी अभि प्रुष्णुते। अभिप्रेरयति ॥

देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने।
यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः ॥२॥
देवस्य। वयं। सवितुः। सवीमनि। श्रेष्ठे। स्याम। वसुनः। च। दावने।
यः। विश्वस्य। द्विऽपदः। यः। चतुःऽपदः। निऽवेशने। प्रऽसवे। च। असि। भूमनः ॥२॥

तस्य देवस्य सवितुः प्रेरकस्य सवीमनि प्रसवेऽनुज्ञाने। तथा च यास्कः। सवीमनि प्रसवे। नि० ६. ७.। इति। श्रेष्ठेऽतिशयेन प्रशस्ते वसुनो धनस्य दावने दाने च स्याम। समर्था भूयास्म। यस्त्वं विश्वस्य सर्वस्य द्विपदो निवेशने स्थितौ प्रसवे च स्वतंत्रोऽसि। यस्त्वं भूमनो भूरश्चतुष्पदो निवेशने प्रसवे च स्वतंत्रोऽसि ॥

अदब्धेभिः सवितः पायुभिष्ट्वं शिवेभिरद्य परि पाहि नो गयं।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशंस ईशत ॥३॥
अदब्धेभिः। सवितरिति। पायुऽभिः। त्वं। शिवेभिः। अद्य। परि। पाहि। नः। गयं।
हिरण्यऽजिह्वः। सुविताय। नव्यसे। रक्ष। माकिः। नः। अघऽशंसः। ईशत ॥३॥

हे सवितरदब्धेभिरहिंसितैः पायुभिस्तेजोभी रक्षणसाधनैर्वा शिवेभिः सुखकारिभिर्नोऽस्माकं गयं गृहं धनं वा। गयः कृदर इति गृहनामसु मीळ्हं गय इति धननामसु पाठात्। अद्य परि पाहि। रक्ष। हिरण्यजिह्वो हितरमणीयवाक् त्वं। तथा च यास्कः। हिरण्यं कस्मादित्युपक्रम्य हितरमणं भवतीति वा। नि० २. १०.। इति। सुविताय सुखाय नव्यसे नवतराय भव। रक्ष। अस्मान्पालय च। नोऽस्माकमघशंसोऽनर्थमाशंसमानः शत्रुर्माकिरीशत। मेशत ॥

उदु ष्य देवः सविता दमूना हिरण्यपाणिः प्रतिदोषमस्थात् ।
अयोहनुर्यजतो मंद्रजिह्व आ दाशुषे सुवति भूरि वामं ॥४॥
उत् । ऊं इति । स्यः । देवः । सविता । दमूनाः । हिरण्यऽपाणिः । प्रतिऽदोषं । अस्थात् ।
अयःऽहनुः । यजतः । मंद्रऽजिह्वः । आ । दाशुषे । सुवति । भूरि । वामं ॥४॥

देवो द्योतमानो दमूना दममना दानमना वा। तथा च यास्कः । दमूना दममना वा दानमना वा दांतमना वा । नि० ४ ४ । इति । हिरण्यपाणिर्हिरण्मयपाणिरयोहनुर्हिरण्मयहनुः । कनममय इति हिरण्यनामसु पाठात । यजतो यष्टव्यो मंद्रजिह्वो मोदमानवाक् स्य स सविता प्रतिदोषं प्रतिरात्रं रात्रेरवसाने ऽवसाने उदस्थात् । उत्तिष्ठतु । यो दाशुषे यजमानाय मह्यं भूरि प्रभूतं वामं वननीयं संभजनीयमन्नं । वामं वननीयं । नि० ६ ३१ । इति यास्कः । आ सुवति प्रेरयति ॥

उदू अयाँ उपवक्तेव बाहू हिरण्यया सविता सुप्रतीका ।
दिवो रोहांस्यरुहत्पृथिव्या अरीरमत्पतयत्कच्चिदभ्वं ॥५॥
उत् । ऊं इति । अयान् । उपवक्ताऽइव । बाहू इति । हिरण्यया । सविता । सुऽप्रतीका ।
दिवः । रोहांसि । अरुहत् । पृथिव्याः । अरीरमत् । पतयत् । कत् । चित् । अभ्वं ॥५॥

सवितोपवक्तेवास्माकमधिवक्तेव हिरण्यया हिरण्मयौ सुप्रतीका शोभनावयवौ बाहू उदयान् । उदयच्छतु । योऽयं पृथिव्याः पृथिवीपर्यंताद्दिवोऽतरिक्षस्य रोहांस्युच्छ्रितप्रदेशानरुहत रोहति । पतयत् गच्छत् कच्चित यत्किंचिदभ्वं महत्सर्वं वस्तुजातं तिरोहितमरीरमत रमयति च ॥

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥६॥
वामं । अद्य । सवितः । वामं । ऊं इति । श्वः । दिवेऽदिवे । वामं । अस्मभ्यं । सावीः ।
वामस्य । हि । क्षयस्य । देव । भूरेः । अया । धिया । वामऽभाजः । स्याम ॥६॥

हे सवितरस्मभ्यं वामं धनमद्य सावीः । सुव । श्वः वामं धनं प्रसुव । किं बहुना । दिवे दिवे प्रतिदिनं वामं धनं प्रसुव । हे देव हि यस्मात् क्षयस्य निवासभूतस्य भूरेः प्रभूतस्य वामस्य दातासि अतो वयमयानया धिया स्तुत्या वामभाजो धनवतः स्याम । भूयास्म ॥ ॥१५॥

इंद्रासोमा महीति पंचर्चमेकादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमिंद्रासोमदेवताकं । इंद्रासोमा पंचेंद्रासोममित्यनुक्रांतं ॥ सूक्तविनियोगो लैंगिकः ॥

इंद्रासोमा महि तद्वां महित्वं युवं महानि प्रथमानि चक्रथुः ।
युवं सूर्यं विविदथुर्युवं स्वर्विश्वा तमांस्यहतं निदश्च ॥१॥
इंद्रासोमा । महि । तत् । वां । महिऽत्वं । युवं । महानि । प्रथमानि । चक्रथुः ।
युवं । सूर्यं । विविदथुः । युवं । स्वः । विश्वा । तमांसि । अहतं । निदः । च ॥१॥

इंद्रासोमा हे इंद्रासोमौ वां युवयोस्तन्महित्वं महत्त्वं महि महत् । किं तदित्यत आह । युवं युवां महानि महांति प्रथमानि प्रतमानि मुख्यानि वा भूतानि । प्रथम इति मुख्यनाम प्रतमो भवति । नि० २ २२ । इति

ास्कः । चक्रथुः । अकार्ष्ट । किंच युवं युवां सूर्यं (विविदथुः । अलंभयतं च जगात । युवं युवां स्वरुदकं च विविदथुः । हेम स्वरित्युदकनामसु पाठात । अपि च विश्वा विश्वानि तमांसि निदस्य निदितृनसुरांश्चाहतं । प्रहिंस्तं ॥

इंद्रासोमा वासयथ उषासमुत्सूर्यं नयथो ज्योतिषा सह ।
उप द्यां स्कंभथुः स्कंभनेनाप्रथतं पृथिवीं मातरं वि ॥२॥
इंद्रासोमा । वासयथः । उषसं । उत् । सूर्यं । नयथः । ज्योतिषा । सह ।
उप । द्यां । स्कंभथुः । स्कंभनेन । अप्रथतं । पृथिवीं । मातरं । वि ॥२॥

इंद्रासोमा हे इंद्रासोमावुषसं वासयथः । विवासयथ । उषसं व्युच्छंतीं कारयथ इत्यर्थः । किंच सूर्यं ज्योतिषा तेजसा सहोन्नयथः । अपि च द्यां दिवं स्कंभनेन स्तंभनहेतुनांतरिक्षेण मध्ये स्थापितेनोप स्कंभथुः । अस्तंभयत । मातरं विश्वस्य मातृभूतां पृथिवीं व्यप्रथतं । व्यप्रथयतं ॥

इंद्रासोमावहिमपः परिष्ठां हथो वृत्रमनु वां द्यौरमन्यत ।
प्रार्णांस्यैरयतं नदीनामा समुद्राणि पप्रथुः पुरूणि ॥३॥
इंद्रासोमा । अहिं । अपः । परिऽस्थां । हथः । वृत्रं । अनु । वां । द्यौः । अमन्यत ।
प्र । अर्णांसि । ऐरयतं । नदीनां । आ । समुद्राणि । पप्रथुः । पुरूणि ॥३॥

हे इंद्रासोमावहिं जगत आहंतारमपो मेघस्थान्युदकानि परिष्ठां परिवृत्य स्थितं वृत्रमसुरं हथः । हत । तदानीं द्यौर्वां युवामन्वमन्यत । किंच नदीनामर्णांस्युदकानि प्रैरयत । पुरूणि बहूनि । पुर्विति बहुनामसु पाठात । समुद्राण्युदकस्थानान्या पप्रथुः । उदकैरापूरयत च । अथवा समुद्रतीत्युदकान्येव समुद्राणि । तानि रसेनापूरयतमित्यर्थः । तथा च यास्कः । समुद्रः कस्मात्समुद्द्रवत्यस्मादापः समभिद्रवत्येनमापः संमोदंतेऽस्मिन्भूतानि समुदको भवति समुनत्तीति वा । नि॰ २ १० । इति ॥

इंद्रासोमा पक्वमामास्वंतर्नि गवामिद्दधथुर्वक्षणासु ।
जगृभथुरनपिनद्धमासु रुशच्चित्रासु जगतीष्वंतः ॥४॥
इंद्रासोमा । पक्वं । आमासु । अंतः । नि । गवां । इत् । दधथुः । वक्षणासु ।
जगृभथुः । अनपिऽनद्धं । आसु । रुशत् । चित्रासु । जगतीषु । अंतरिति ॥४॥

इंद्रासोमा हे इंद्रासोमावामास्वपक्वासु गवां वक्षणासूधःस्वंतर्मध्ये पक्वं पयो नि दधथुः । किंच चित्रासु नानावर्णास्वासु जगतीषु गोषु । इळा जगतीति गोनामसु पाठात । अंतर्मध्येऽनपिनद्धं केनाप्यबद्धं रुशत् शुक्लवर्णं पयो जगृभथुः । यथा पृथिव्यां स्वयं न क्षरति तथा धारितवंतावित्यर्थः । इदिति पूरकः ॥

इंद्रासोमा युवमंग तरुत्रमपत्यसाचं श्रुत्यं रराथे ।
युवं शुष्मं नर्यं चर्षणिभ्यः सं विव्यथुः पृतनाषाहमुग्रा ॥५॥
इंद्रासोमा । युवं । अंग । तरुत्रं । अपत्यऽसाचं । श्रुत्यं । रराथे इति ।
युवं । शुष्मं । नर्यं । चर्षणिऽभ्यः । सं । विव्यथुः । पृतनाऽसहं । उग्रा ॥५॥

इंद्रासोमा हे इंद्रासोमौ युवं युवां तरुत्रं तारकमपत्यमाचं सतामयुक्तं श्रुत्यं श्रवणीयं रयिं धनमंग क्षिप्रं रराथे। अस्मभ्यं धत्थः। किंचोग्रा हे उद्गूर्णाविंद्रासोमौ युवं युवां नृर्य नृभ्यो हितं पृतनासहं शत्रुसेनाभिभवितृकं शुष्मं बलं चर्षणिभ्यो मनुष्येभ्यः। कृष्टयश्चर्षणय इति मनुष्यनामसु पाठात्। स विव्यथुः। समतनुत। परिवेष्टयथो वा ॥ ॥१६॥

यो अद्रिभिदिति तृचं द्वादशं सूक्तं बार्हस्पत्यं भरद्वाजस्यार्षं त्रैष्टुभं। तथा चानुक्रांतं। यो अद्रिभित्तृच बार्हस्पत्यमिति॥ आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे स्तोमातिशंसनार्थमिदं सूक्तं। सूत्र्यते हि। यो अद्रिभिदच्छा न इति सूक्ते। आ० ७. ९॥ वाजपेये बार्हस्पत्ये पशौ बृहस्पतिः समजयद्वसूनीति ... ला-मीकृतं अजिर इत्याय। आ० ९. ९। इति॥

यो अद्रिभित्प्रथमजा ऋतावा बृहस्पतिरांगिरसो हविष्मान्।
द्विबर्हज्मा प्राघर्मसत्पिता न आ रोदसी वृषभो रोरवीति ॥१॥
यः। अद्रिऽभित्। प्रथमऽजाः। ऋतऽवा। बृहस्पतिः। आंगिरसः। हविष्मान्।
द्विबर्हऽज्मा। प्राघर्मऽसत्। पिता। नः। आ। रोदसी इति। वृषभः। रोरवीति ॥१॥

यो बृहस्पतिरद्रिभित्पाणिभिरवरोधितानां गवां निरोधकानां शिलोच्चयानां भेत्ता मेघानां विदारको वा। अद्रिर्ग्रावेति मेघनामसु पाठात्। प्रथमजाः प्रजापतेर्वीर्यात्प्रथमं जात ऋतावा सत्यवान् उदकवान्वांगिरसः पश्चाज्जातः। तथा च निगमः। येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्यदङ्गाराः पुनरवशांता उददीप्यंत तद्बृहस्पतिरभवत्। ऐ० ब्रा० ३. ३४। इति। हविष्मान् यज्ञभागवान् द्विबर्हज्मा द्वयोर्लोकयोर्वृहितगमनः प्राघर्मसत् प्रकर्षेण दीप्तस्थाने वर्तमानो नोऽस्माकं पिता पालयिता भवति स बृहस्पतिर्वृषभो वर्षकः सन् रोदसी द्यावापृथिव्यावा रोरवीति। अभिगर्जति॥

जनाय चिद्य ईवत उ लोकं बृहस्पतिर्देवहूतौ चकार।
घ्नन्वृत्राणि वि पुरो दर्दरीति जयञ्छत्रूँरमित्रान्पृत्सु साहन् ॥२॥
जनाय। चित्। यः। ईवते। ऊं इति। लोकं। बृहस्पतिः। देवऽहूतौ। चकार।
घ्नन्। वृत्राणि। वि। पुरः। दर्दरीति। जयन्। शत्रून्। अमित्रान्। पृत्ऽसु। सहन् ॥२॥

अपि च यो बृहस्पतिर्देवहूतौ यज्ञे वर्तमानायैवत उपगच्छते सोमं जनाय लोकं स्थानं चकार करोति। चिदिति पूरणः। स वृत्राण्यावरकाणि तमांसि प्रतिनिवारयन् पृत्सु युद्धेषु शत्रून् जयन् अमित्रान् सहन् अभिभवन् पुर आसुरीः पुरीर्वि दर्दरीति। भृशं विदारयति॥

बृहस्पतिः समजयद्वसूनि महो व्रजान्गोमतो देव एषः।
अपः सिषासन्त्स्व१रप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥३॥
बृहस्पतिः। सं। अजयत्। वसूनि। महः। व्रजान्। गोऽमतः। देवः। एषः।
अपः। सिसासन्। स्वः। अप्रतिऽइतः। बृहस्पतिः। हंति। अमित्रं। अर्कैः ॥३॥

देवो द्योतमान एष प्रसिद्धो बृहस्पतिर्वसूनि पणीनामसुराणां वलस्य वा धनानि महो महतो गोमतो गोसहितान् व्रजांश्च समजयत्। तथा च निगमः। बृहस्पतिर्गोवपुषो वलस्य निर्मज्जानं न पर्वणो जभार। ऋ० सं० १०. ६८. ९। इति। इयमित्थं पणयो वरीय उस्रावो यत् मिनतीरायतन। बृहस्पतिर्वा अविदन्निगूळ्हाः

सोमो ग्रावाण ऋषयश्च विप्राः । ऋ॒सं॰ १०. १०८. ११. । इति । किंच बृहस्पतिरप्रतीतः केनाप्यप्रतिगतः सिषासन् संभक्तुकामः स्वः स्वर्गस्थामित्रममुरमर्कैरर्चनसाधनैर्मंत्रैर्हंति । अर्को मंत्रो भवति यदनेनार्चंति । नि॰ ५ ४ । इति यास्कः ॥ ॥११॥

सोमारुद्रेति चतुर्ऋचं त्रयोदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं सोमारुद्रदेवताकं । अनुक्रम्यते च । सोमारुद्रा चतुष्कं सोमारौद्रमिति ॥ विनियोगो लैंगिकः ॥

सोमारुद्रा धारयेथामसुर्यं१ प्र वामिष्टयोऽरमश्नुवंतु ।
दमेदमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥१॥
सोमारुद्रा । धारयेथां । असुर्यं । प्र । वां । इष्टयः । अरं । अश्नुवंतु ।
दमेऽदमे । सप्त । रत्ना । दधाना । शं । नः । भूतं । द्विऽपदे । शं । चतुःऽपदे ॥१॥

सोमारुद्रा हे सोमारुद्रावसुर्यमसुरसंबंधि बलमस्मासु धारयेथां । किंच दमे दमे सर्वेष्वग्निगृहेष्विष्टयो यज्ञा वां युवामरमलं पर्याप्तं प्राश्नुवंतु । प्रकर्षेण व्याप्नुवंतु । अपि च युवां सप्त रत्ना रत्नानि दधाना धारयंतौ नोऽस्मभ्यं शं सुखकरौ सुखरूपौ वा भूतं । भवतं । द्विपदेऽस्मदीयाय पुत्रादये चतुष्पदे पश्वादये च शं भूतं । भवतं ॥

सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि संतु ॥२॥
सोमारुद्रा । वि । वृहतं । विषूचीं । अमीवा । या । नः । गयं । आऽविवेश ।
आरे । बाधेथां । निःऽऋतिं । पराचैः । अस्मे इति । भद्रा । सौश्रवसानि । संतु ॥२॥

सोमारुद्रा हे सोमारुद्रौ नोऽस्माकं गयं गृहं गृहगतं प्राणिजातं वा यामीवा यो रोग आविवेश तां विषूचीं विष्वक् सर्वतो गच्छंतीममीवा वि वृहतं । वियोजयतं । अपि च निर्ऋतिमलक्ष्मीं पराचैः पराग्यथा भवति तथारे दूरे बाधेथां । निवारयतं । अस्मे अस्माकं भद्रा भद्राणि सौश्रवसान्यन्नानि यशांसि च संतु । भवंतु । सुश्रवसो भावः सौश्रवसं । श्रवोऽन्नं यशश्च ॥

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तं ।
अव स्यतं मुंचतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥३॥
सोमारुद्रा । युवं । एतानि । अस्मे इति । विश्वा । तनूषु । भेषजानि । धत्तं ।
अव । स्यतं । मुंचतं । यत् । नः । अस्ति । तनूषु । बद्धं । कृतं । एनः । अस्मत् ॥३॥

हे सोमारुद्रा सोमारुद्रौ युवं युवामस्मे अस्माकं तनूष्वंगेष्वेतानि प्रसिद्धानि विश्वा सर्वाणि भेषजानि धत्तं । धारयतं । किंच नोऽस्माकं तनूष्वंगेष्वस्माभिः कृतं बद्धं च यदेनः पापमस्ति विद्यते तत्पापमव स्यतं । क्षपयतं । क्षययतं । शिथिलबंधं कुरुतमित्यर्थः । अस्मदस्मत्तो मुंचतं च ॥

तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृळतं नः ।
प्र नो मुंचतं वरुणस्य पाशाद्गोपायतं नः सुमनस्यमाना ॥४॥

तिग्मऽआयुधा । तिग्महेती इति तिग्मऽहेती । सुऽशेवौ । सोमारुद्रौ । इह । सु । मृळतं । नः ।

प्र । नः । मुंचतं । वरुणस्य । पाशात् । गोपायतं । नः । सुऽमनस्यमाना ॥४॥

हे सोमारुद्रौ तिग्मायुधौ दीप्तधनुष्कौ तिग्महेती तीक्ष्णशरौ सुशेवौ शोभनसुखप्रदौ सुमनस्यमाना शोभनं मनः स्तोतॄणामिच्छंतौ सुमनस्यमानौ स्तूयमानौ सुमनसौ वा सन्तौ युवामिह लोके नोऽस्मान् सु अत्यंत मृळतं । सुखयतं । नोऽस्मान्वरुणस्य पाशात्प्र मुंचतं । नोऽस्मान् गोपायतं । आपद्भ्यो रक्षतं च ॥ ॥१८॥

जीमूतस्येत्येकोनविंशत्यृचं चतुर्दशं सूक्तं भारद्वाजस्य पायोरार्षं । अनुक्रम्यते च । जीमूतस्यैकोना पायुर्भारद्वाजः संग्रामांगान्यृक्शोऽभितुष्टाव वर्म धनुर्ज्यामार्त्नी इषुधिं जगत्यर्धे सारथिमर्धे रश्मीनश्वान् रथं रथगोपाञ्जगत्या लिंगोक्तदेवता द्वाभ्यामिषुं प्रतोदं हस्तघ्नं द्वाभ्यामिषुः पंच पंक्त्यादयो लिंगोक्तदेवताः संग्रामाशिषोऽन्त्याऽनुष्टुब्जगती आन्त्याक्राति च द्वे द्वे इति । रथे तिष्ठन् ब्राह्मणास इति षष्ठीदशम्यौ जगत्यावंत्या यो नः स्व अरणोऽनुष्टुब्जगती आ जंघंत्यास्याः कावसृष्टा यो नः स्व इति पंचानुष्टुभौ यत्र बाणा इति पंक्तिः शिष्टास्त्रिष्टुभः । आद्यया वर्म स्तूयते द्वितीयया धनुस्तृतीयया ज्या चतुर्थ्यार्त्नी पंचम्येषुधिः । अतः पंचानां वर्माद्या देवताः । षष्ठ्याः पूर्वार्धेन सारथिः स्तूयते । अतः सोऽर्धस्तद्देवताकः । उत्तरार्धेन रश्मयः स्तूयंते । सप्तम्यास्त्वश्वा अष्टम्या रथो नवम्या रथगोपाः । अतस्तास्तद्देवताकाः । ब्राह्मणास इत्यस्यां ब्राह्मणपितृसोम्यद्यावापृथिवीपूषणो लिंगोक्तदेवताः । एकादशीद्वादश्याविषुस्तुतिरूपत्वादिषुदेवताके । त्रयोदश्याः प्रतोदः । चतुर्दश्या हस्तघ्नः । पंचदशीषोडश्याविषुदेवताके । सप्तदश्या युद्धभूमिब्रह्मणस्पत्यदितिरूपा लिंगोक्तदेवताः । अष्टादश्याः कवचमर्म वरुणा देवताः । अन्त्याया देवा ब्रह्म च देवताः ॥ युद्धेऽनेन सूक्तेन राजानं संनाहयेत् । तथा चाश्वलायनः । संग्रामे समुपोढे राजानं संनाहयेदा त्वाहार्षमंतरेधीति पश्चाद्रथस्यावस्थाय जीमूतस्येव भवति प्रतीकमिति कवच प्रयच्छेत उत्तरया धनुरुत्तरां वाचयेत्स्वयं चतुर्थीं जपेत्पंचम्येषुधिं प्रयच्छेदभिप्रवर्तमाने षष्ठीं सप्तम्याष्टमीमिषूनवेक्षमाणं वाचयेदहिरिव भोगैः पर्येति बाहुमिति तलं नह्यमानं । गृ० ३.१२ । इति । तथा अवसृष्टा परा पतेतीषून्विसर्जयेद्यत्र बाणाः संपतंतीति युध्यमानेषु जपेत्संशिष्याद्वा । गृ० ३.१२ । इति ॥ अध्यायोपाकरणोत्सर्जनयोर्मंडलाद्यहोमे यो नः स्व इत्येषा । आ० गृ० ३.५ ॥

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥१॥

जीमूतस्यऽइव । भवति । प्रतीकं । यत् । वर्मी । याति । सऽमदां । उपऽस्थे ।
अनाविद्धया । तन्वा । जय । त्वं । सः । त्वा । वर्मणः । महिमा । पिपर्तु ॥१॥

समदां संग्रामाणामुपस्थे उपस्थाने सति यद्यदाय राजा वर्मी कवची याति तदा लोहमयेन वर्मणा नद्धस्य राज्ञः प्रतीकं रूपं जीमूतस्येव मेघस्येव भवति । मेघस्य यादृशं रूपं तादृशमस्य भवतीत्यर्थः । हे राजन् त्वमनाविद्धया शत्रुभिरबाधितया तन्वा शरीरेण शत्रून् जय । वर्मणः स तादृशो महिमा त्वां त्वां पिपर्तु । पालयतु ॥

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥२॥

धन्वना । गाः । धन्वना । आजिं । जयेम । धन्वना । तीव्राः । सऽमदः । जयेम ।
धनुः । शत्रोः । अपऽकामं । कृणोति । धन्वना । सर्वाः । प्रऽदिशः । जयेम ॥२॥

धन्वना धापेन गाः शत्रूणां जयेम। वयं वशीकरवाम। धन्वनाजिं संग्रामं च जयेम। धन्वना तीव्राः उद्गताः समदोऽत्यंतं मदवतीः शत्रुसेनाश्च जयेम। तथा च यास्कः। समदः समदो वात्तेः संमदो वा मत्तेः। नि० ९ १७। इति। धनुः शत्रोरपकामं कामस्यापायं कृणोति। करोतु। किंच धन्वना वयं सर्वाः प्रदिशः सर्वासु दिक्षु वर्तमानान् शत्रून् जयेम। प्रदिक्शब्दो लक्षणया तत्स्थेषु पुरुषेषु वर्तते मंचाः क्रोशंतीतिवत्। धन्वञ्शब्दस्य जयतेश्चावृत्तिरादरार्था ॥

वक्ष्यंतीवेदा गनीगंति कर्णं प्रियं सखायं परिषस्वजाना।
योषेव शिंक्ते वितताधि धन्वञ्ज्या इयं समने पारयंती ॥३॥

वक्ष्यंतीऽइव। इत्। आ। गनीगंति। कर्णं। प्रियं। सखायं। परिऽसस्वजाना।
योषाऽइव। शिंक्ते। विऽतता। अधि। धन्वन्। ज्या। इयं। समने। पारयंती ॥३॥

पूर्वत्र ऋग्द्वयेन कवचधनुषी स्तुते। अत्र ज्यास्तुतिः। इयं ज्या समने संग्रामे धन्वन् धन्वनि। अधीति सप्तम्यर्थानुवादः। वितता विस्तृता पारयंती पारं नयंती प्रियं प्रियकरं वाक्यं वक्ष्यतीव कर्णं धन्विनो राज्ञः कर्णप्रदेशमा गनीगंति। आगच्छति। इदिति पूरणः। योषा नारी सखायं पतिमिव परिषस्वजानेयं परिष्वजमाना शिंक्ते। शब्दायते च। तथा च यास्कः। वक्ष्यतीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिंक्ते शब्दं करोति वितताधि धनुषि ज्येयं समने संग्रामे पारयंती पारं नयंती। नि० ९.१८। इति ॥

ते आचरंती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे।
अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरंती अमित्रान् ॥४॥

ते इति। आचरंती इत्याऽचरंती। समनाऽइव। योषा। माताऽइव। पुत्रं। बिभृतां। उपऽस्थे।
अप। शत्रून्। विध्यतां। संविदाने इति संऽविदाने। आर्त्नी इति। इमे इति। विस्फुरंती
इति विऽस्फुरंती। अमित्रान् ॥४॥

अत्र धनुष्कोट्योः स्तुतिः। ते धनुष्कोट्यौ समनेव समनस्केव योषा पतिसमीपं न त्यजति तद्वदाचरंती अभितश्चरंत्यौ उपस्थ उपस्थाने मातेव पुत्रं यथा माता पुत्रं धारयति तद्वद्बिभृतां। राजानं धारयेतां। किंचेमे धनुष्कोट्यौ संविदाने संजानाने विसंवादरहिते आर्त्नी गच्छंत्यौ ॥ ऋ गताविति धातोश्चुर्यगिभ्यां निरिति बाहुलकात् निप्रत्ययो धातोरार्तभावश्च। ततः कृदिकारादक्तिनः। पा० ४ १ ४५। इति ङीष्। द्विवचनस्य पूर्वसवर्णः ॥ अस्य राज्ञोऽमित्रान् विष्फुरंती विहिंसंत्यौ शत्रूंश्चाप विध्यतां। तथा च यास्कः। ते आचरंत्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्नत्यावमित्रान्। नि० ९ ४०। इति ॥

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य।
इषुधिः संकाः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥५॥

बह्वीनां। पिता। बहुः। अस्य। पुत्रः। चिश्चा। कृणोति। समना। अवऽगत्य।
इषुऽधिः। संकाः। पृतनाः। च। सर्वाः। पृष्ठे। निऽनद्धः। जयति। प्रऽसूतः ॥५॥

इषुधिरत्र स्तूयते। इषुधिर्बह्वीनामिषूणां पिता भवति। रक्षणहेतुत्वात्पितेत्युच्यते। इषुशब्दस्योभयलिंगत्वाद्बह्वीनामिति प्रयोगः। अस्येषुधेः पुत्र इषवो बहुर्भवति। बहव इषवो ह्येषुधौ निधीयंते। इषूणां निधानत्वादिषुधिः। तथा च यास्कः। इषुधिरिषूणां निधानं। नि० ९.१३। इति। चिश्चा कृणोति। चिश्चेति शब्दो-

गुह्णाति। रथेषु ध्रियमाणोऽयमिषुधिर्बह्वीनामिषूणां पिता। चिश्चाशब्दं करोति। किंचेषुधिः पृष्ठे निनद्धो धन्विनो राज्ञः पृष्ठभागे बद्धः सन् युद्धान्यवगत्य प्राप्य प्रसूतः प्रसुवन्॥ कर्तरि निष्ठा॥ इषून्प्रेरयन् संकाः। सह कायंति शब्दायंत इति संकाः पृतनाः। सर्वाः सेना जयति॥ ॥१९॥

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छंति रश्मयः॥६॥
रथे। तिष्ठन्। नयति। वाजिनः। पुरः। यत्रऽयत्र। कामयते। सुऽसारथिः।
अभीशूनां। महिमानं। पनायत। मनः। पश्चात्। अनु। यच्छंति। रश्मयः॥६॥

अत्र पूर्वार्धे सारथिस्तुतिरुत्तरार्धेऽभीशूनां स्तुतिः। सुषारथिः शोभनसारथी रथे तिष्ठन् पुरः पुरस्ताद्वर्तमानान्वाजिनोऽश्वान्यत्र यत्र नेतुं कामयते तत्र तत्र नयति। ... रश्मयोऽश्वपीडाभ्यां व्याप्य वर्तमानाः पाशाः पश्चात्-रथस्य पृष्ठभागे विद्यमाना अश्वान मनः सारथेर्मनोऽनुसृत्यमनु यच्छंति। नियच्छंति। तेषामभीशूनां रश्मीनां महिमानं महत्त्वं पनायत। हे जनाः स्तुत। तथा च यास्कः। रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतो यत्र यत्र कामयते सुषारथिः कल्याणसारथिरभीशूनां महिमानं पूजयत मनः पश्चात्सतोऽनुयच्छंति रश्मयः। नि० ९. १६। इति॥

तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयंतः।
अवक्रामंतः प्रपदैरमित्रान् क्षिणंति शत्रूँरनपव्ययंतः॥७॥
तीव्रान्। घोषान्। कृण्वते। वृषऽपाणयः। अश्वाः। रथेभिः। सह। वाजयंतः।
अवऽक्रामंतः। प्रऽपदैः। अमित्रान्। क्षिणंति। शत्रून्। अनपऽव्ययंतः॥७॥

अत्राश्वस्तुतिः। अश्वा वृषपाणयः पांसूनां वर्षकखुरा रथेभी रथैः सह वाजयंतो वेगमाचरंतस्तीव्रानुच्चतरान्घोषान् शब्दान् कृण्वते। कुर्वते। किंचानपव्ययंतोऽपलायमाना अमित्रान् हिंसकान् शत्रून् प्रपदैः पादाग्रैरवक्रामंतः क्षिणंति। हिंसंति॥

रथवाहनं हविरस्य नाम यत्रायुधं निहितमस्य वर्म।
तत्रा रथमुप शग्मं सदेम विश्वाहा वयं सुमनस्यमानाः॥८॥
रथऽवाहनं। हविः। अस्य। नाम। यत्र। आयुधं। निऽहितं। अस्य। वर्म।
तत्र। रथं। उप। शग्मं। सदेम। विश्वाहा। वयं। सुऽमनस्यमानाः॥८॥

अस्य राज्ञो रथवाहनं शत्रून् जित्वा रथेनोह्यमानं धनं हविर्भवति। अपिर्हविरिव वर्धकं भवतीत्यर्थः। नामेति संभृतिः। यत्र रथेऽस्य राज्ञ आयुधं धनुःशरादिकं वर्म कवचं च निहितं भवति तत्र तं॥ तत्रेत्यव्ययस्य सर्वविभक्तिकत्वात्॥ शग्मं सुखकरं विश्वाहा सर्वदा सुमनस्यमानाः सुखमनसो भवंतो वयं पायवो भरद्वाजा उप सदेम। उपगच्छेम॥

स्वादुषंसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवंतो गभीराः।
चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः॥९॥

स्वादुऽसंसदः । पितरः । वयःऽधाः । कृच्छ्रेऽश्रितः । शक्तिऽवंतः । गभीराः ।
चित्रऽसेनाः । इषुऽबलाः । अमृध्राः । सतःऽवीराः । उरवः । व्रातऽसहाः ॥९॥

अर्थ रथगोपस्तुतिः । पितरो रथस्य पालयितारः स्वादुसंसदः शत्रूणां स्वादून्यन्नै संसीदंतः शत्रूणामन्नमवसादयंतो वा वयोधा अन्नस्य दातारः कृच्छ्रेश्रित आपदि श्रयंतः शक्तीवंतः । शक्तिरायुधविशेषः । तद्वंतः । शक्तीवंतः शक्तीहस्ता इति यावत् । यद्वा शक्तिर्बलं । तद्वंतः । गभीरा अप्रधृष्याश्चित्रसेना दर्शनीयसेना इषुबला बाणबला अमृध्रा हिंसितुमशक्याः सतोवीराः प्राप्तवीर्याः । तथा च यास्कः । तिरः सत इति प्राप्तस्य तिरस्कीर्णं भवति सतः संसृतं भवति । नि० ३ २०. । इति । उरवो महांतो व्रातसाहाः समूहानामभिभवितारो भवंतीति ॥

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा ।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंस ईशत ॥१०॥
ब्राह्मणासः । पितरः । सोम्यासः । शिवे इति । नः । द्यावापृथिवी इति । अनेहसा ।
पूषा । नः । पातु । दुःऽइतात् । ऋतऽवृधः । रक्ष । माकिः । नः । अघऽशंसः । ईशत ॥१०॥

ब्राह्मणासो हे ब्राह्मणाः पितर ऋतावृध ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितारः सोम्यासः सोमार्हाः सोमसंपादिनो वा । तथा च यास्कः । सोम्याः सोमसंपादिनः । नि० ११. १८. । इति । नोऽस्मान्रक्षत । रक्षेत्युपरितनमेकवचनांतं सत्यपि व्यवधाने बहुवचनांततया विपरिणतं सद्च संबध्यतेऽध्याहारस्यातिजघन्यत्वात् । किंचानेहसापापे द्यावापृथिवी द्यावापृथिव्यौ नोऽस्माकं शिवे सुखकर्तौ भवतां । पूषा पोषको देवोऽपि नोऽस्मान्दुरिताद्दुष्कृतात्पातु । रक्षतु । नोऽस्माकमघशंसः पापशंसः शत्रुरपि माकिरीशत । मैशिष्ट ॥ ॥२०॥

सुपर्णं वस्ते मृगो अस्या दंतो गोभिः संनद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवंति तत्रास्मभ्यमिषवः शर्म यंसन ॥११॥
सुऽपर्णं । वस्ते । मृगः । अस्याः । दंतः । गोभिः । संऽनद्धा । पतति । प्रऽसूता ।
यत्र । नरः । सं । च । वि । च । द्रवंति । तत्र । अस्मभ्यं । इषवः । शर्म । यंसन ॥११॥

अस्यामृचीषवः स्तूयंते । सुपर्णं शोभनं वाजं वस्ते । इयमिषुर्धारयति । अस्या इषोर्मृगो मृगावयवः शृंग दंतो भवति । इषवः काश्चिच्छृंगमुखा भवंति हि । अथवास्या दंतो मृगः शत्रून्मृगयमाणो भवति । किंच गोभि गोविकारैः स्नायुभिः संनद्धा सम्यग्बद्धा । अथवा गौरिति ज्यानाम । तया संबद्धा । अत्र वचनव्यत्ययः । तथा च निगमः । वृक्षे वृक्षे नियता मीमयद्गौः । ऋग्वे० १०. २७. २२. । इति । अस्यायमर्थः । वृक्षे वृक्षे धनुषि धनुषि गौर्ज्या नियता मीमयत् शब्दं करोतीति । तथा च यास्कः । वृक्षे वृक्षे धनुषि धनुषि । वृक्षो व्रश्चनाद्वृत्वा वा तिष्ठतीति वा । वा क्षियतेर्निवासकर्मणः । नियता मीमयद्गौः शब्दं करोति । मीमयतिः शब्दकर्मा । नि० २. ६. । इति । प्रसूता प्रेरिता सती पतति । यत्र युद्धे नरः सं च सह च वि च पृथक्च द्रवंति चरंति तत्रास्मभ्यमिषवः शराः शर्म सुखं यंसन । प्रयच्छंतु । तथा च यास्कः । सुपर्णं वस्त इति वाजानभिप्रेत्य मृगमयोऽस्या दंतो मृगयतेर्वा गोभिः संनद्धा पतति प्रसूतेति व्याख्यातं । यत्र नराः संद्रवंति च विद्रवंति च तत्रास्मभ्यमिषवः शर्म शरणं प्रयच्छंतु । नि० ९. १९. । इति ॥

ऋजीते परि वृंग्धि नोऽश्मा भवतु नस्तनूः ।
सोमो अधि ब्रवीतु नोऽदितिः शर्म यच्छतु ॥१२॥

ऋजीते । परि । वृङ्धि । नः । अश्मा । भवतु । नः । तनूः ।
सोमः । अधि । ब्रवीतु । नः । अदितिः । शर्म । यच्छतु ॥१२॥

ऋजीते । ऋजु गच्छतीत्यृजीतिरिषुः । हे इषो नोऽस्मान्परि वृङ्धि । परितो वर्जय । नोऽस्माकं तनूः शरीरमश्मा भवतु । अश्मवदभेद्या दृढा भवतु । किंच नोऽस्मभ्यं सोमोऽधि ब्रवीतु । पक्षपातेन ब्रवीतु । अदितिरपि शर्म सुखं यच्छतु ॥

आ जंघंति सान्वेषां जघनाँ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥१३॥
आ । जंघंति । सानु । एषां । जघनान् । उप । जिघ्नते ।
अश्वऽअजनि । प्रऽचेतसः । अश्वान् । समत्ऽसु । चोदय ॥१३॥

अश्वाजन्यश्वानां चोदिके कशे यया त्वया प्रचेतसः प्रकृष्टज्ञाना अश्विनः सारथयो एषामश्वानां सानूनि सक्थीन्या जंघंति आघ्नंति । जघनान् जघनानि चोप जिघ्नते उपजिघ्नंति सा त्वं समत्सु संग्रामेष्वश्वान् चोदय । प्रेरय । तथा च यास्कः । आघ्नंति सान्वेषां सरणानि सक्थीनि । सक्थि सचतेरासक्तोऽस्मिन्कायः । जघनानि चोपघ्नंति । जघनं जंघन्यतेः । अश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदय । नि० ९.२०. । इति ॥

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ॥१४॥
अहिःऽइव । भोगैः । परि । एति । बाहुं । ज्यायाः । हेतिं । परिऽबाधमानः ।
हस्तऽघ्नः । विश्वा । वयुनानि । विद्वान् । पुमान् । पुमांसं । परि । पातु । विश्वतः ॥१४॥

अथ धन्विनः प्रकोष्ठे बध्यमानस्य हस्तघ्नस्य स्तुतिः । हस्तघ्नः । हस्ते हस्तसमीपे वर्तमाने प्रकोष्ठे स्थितः सन् ज्यया हन्यत इति हस्तघ्नः ॥ घञर्थे कविधानमिति कः ॥ ज्याया हेतिं ज्याहननकृतां हिंसां परिबाधमानो निवारयन् भोगैः शरीरेण ॥ वचनव्यत्ययः ॥ अहिरिव सर्प इव बाहुं प्रकोष्ठं । लक्षणया बाहुशब्दः प्रकोष्ठे वर्तते । पर्येति । परिवेष्टयति । किंच विश्वा विश्वानि वयुनानि ज्ञानानि ज्ञातव्यानि । माया वयुनमिति तन्नामसु पाठात् । विद्वान् जानन् पुमान्पौरुषोपेतः स्वयं पुमांसं धन्विनं विश्वतः सर्वतः परि पातु । रक्षति । तथा च यास्कः । अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात्परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रज्ञानन्पुंमना भवति पुंस्तेर्वा । नि० ९.१५. । इति ॥

आलाक्ता या रुरुशीर्ष्ण्यथो यस्या अयो मुखं ।
इदं पर्जन्यरे [illegible] देव्यै बृहन्नमः ॥१५॥
[illegible] शीर्ष्णी । अथो इति । यस्याः [illegible]
[illegible] । देव्यै । बृहत् [illegible]

अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।
गच्छामित्रान्प्र पद्यस्व मामीषां कं चनोच्छिषः ॥१६॥
अवऽसृष्टा । परा । पत । शरव्ये । ब्रह्मऽसंशिते ।
गच्छ । अमित्रान् । प्र । पद्यस्व । मा । अमीषां । कं । चन । उत् । शिषः ॥१६॥

ब्रह्मसंशिते मंत्रेण तीक्ष्णीकृते शरव्ये हिंसाकुशल इषो त्वमवसृष्टा विप्रा परा पत । परागच्छ । इतो देशाद्गच्छ च । अमित्रान्हिंसकान्प्र पद्यस्व । प्राप्नुहि च । अमीषाममित्राणां मध्ये कं चन कंचिदपि नोच्छिषः । अवशिष्टं मा कुरु ॥

यत्र बाणाः संपतंति कुमारा विशिखा इव ।
तत्रा नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥१७॥
यत्र । बाणाः । संऽपतंति । कुमाराः । विशिखाःऽइव ।
तत्र । नः । ब्रह्मणः । पतिः । अदितिः । शर्म । यच्छतु । विश्वाहा । शर्म । यच्छतु ॥१७॥

यत्र युद्धे कुमारा विशिखा इव मुंडिता इव बाणाः संपतंति तत्र नोऽस्मभ्यं ब्रह्मणस्पतिः शर्म सुखं विश्वाहा सर्वदा यच्छतु । अदितिश्च शर्म यच्छतु । द्विरुक्तिरादरार्था ॥

मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्तां ।
उरोर्वरीयो वरुणस्ते कृणोतु जयंतं त्वानु देवा मदंतु ॥१८॥
मर्माणि । ते । वर्मणा । छादयामि । सोमः । त्वा । राजा । अमृतेन । अनु । वस्तां ।
उरोः । वरीयः । वरुणः । ते । कृणोतु । जयंतं । त्वा । अनु । देवाः । मदंतु ॥१८॥

हे राजन् ते त्वदीयानि मर्माणि । येषु स्थानेषु विद्धः सद्यो म्रियते तानि मर्माणि । वर्मणा कवचेन छादयामि । सोमो राजा त्वा त्वामनु मर्मच्छादनानंतरममृतेन वस्तां । आच्छादयतु । किंच वरुणोऽपि ते तुभ्यमुरोर्वरीय उरुतर सुखं कृणोतु । करोतु । जयंतं त्वा त्वा देवाः सर्वेऽप्यनु मदंतु । अनुहृष्यंतु ॥

यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति ।
देवास्तं सर्वे धूर्वंतु ब्रह्म वर्म ममांतरं ॥१९॥
यः । नः । स्वः । अरणः । यः । च । निष्ट्यः । जिघांसति ।
देवाः । तं । सर्वे । धूर्वंतु । ब्रह्म । वर्म । मम । अंतरं ॥१९॥

...अरणोऽरममाणो यश्च निष्ट्यस्तिरोभूतो दूरे स्थि... ...ंसति हंतुं
सोमो अधि ब्रव... ...ब्रह्म मंत्रो ममांतरं शरीरं शिवा... ॥१२॥

...ख्याः षष्ठ मंडले